धर्मो विश्वस्य जगतः प्रतिष्ठा

प्राज्ञ पाठशाला मण्डल ग्रन्थ माला

# मीमांसाकोषः

## तृतीयो भागः

( उ – ज )

संपादकः

केवलानन्दसरस्वती

विजया दशमी गुरुवासरः शकः १८७६.

Printed by M. S. Sathe, at the Prajna Press, 815 Gangapuri, Wai
&
Published by V. G. Joshi, for Prajna Pathashala Mandal, Wai, Dist. N. Satara.

Price Rs. 40

# प्रकाशकस्य निवेदनम्

अस्मद्गुरुचरणैः केवलानन्दसरस्वतीभिः संपादितस्यास्य पूर्वमीमांसाकोपस्य तृतीयभागेन प्रकाश्यमानेन गीर्वाणवाणीप्रणयिनां तत्त्वदर्शनप्राणानां षट्तर्क्यामान्वीक्षिक्यां कृतपरिश्रमाणां विशेषतः मीमांसातर्कलाघवे प्रणिहितमनसां परिणतप्रज्ञानां चेतांसि समुल्लासमनुभवेयुरित्याशास्महे । गुरुचरणानां खलु वलीपलितवतामायुषः अष्टसप्ततितमां शरदं प्रविष्टानामपि योगानुष्ठानलब्धसमाधिवैभवेन स्मृतिः धिषणा शरीरसंपत्तिश्च संप्रत्यपि प्रभवत्येव गम्भीरस्य मीमांसार्णवस्य तलमवगाहितुम् । एतस्मादेव हेतोः अनुमंस्यामहे यत् प्रचिकाशयिषितानां समग्राणामष्टानां भागानां प्रकाशनं गुरुचरणानां समक्षमेव निर्वर्तयितुं शक्ष्यामः इति ।

अस्य भागस्य मुद्रणार्थं मुंबईविद्यापीठेन पञ्च शतानि रूप्यकाणि दत्त्वा वयमुपकृता इति तस्यानुग्रहं नितरामभिनन्दामः ।

विजया दशमी
शकः १८७६

लक्ष्मणशास्त्री जोशी, तर्कतीर्थः
अध्यक्षः प्राज्ञपाठशालामण्डलस्य
मुख्यसंपादकश्च धर्मकोशस्य

# अनुक्रमणिका

ॐ नमो गुरुभ्यः ।

शबरकुमारिलगुरवो मण्डनभवदेवपार्थसारथयः ।
अन्ये च विश्वमान्या जयन्ति संत्रायमाणास्ते ॥

# प्रस्तावः

मीमांसाकोषस्यायं तृतीयो भागः प्रकाश्यते । तस्यादौ 'उपांशुयाजे ध्रौवाज्यस्य विधानम्' इत्यधिकरणं क्रमप्राप्तम् । अन्ते च 'ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम्' इति लघुसिद्धान्तः ।

मीमांसाकोषोऽयं न शब्दकोषो न वा वाक्यकोषः, किन्तु विषयकोषोऽयम् । मीमांसाशास्त्रस्य आकरग्रन्थेषु प्रकरणग्रन्थेषु च ये प्रतिपादिता विषयाः, तेषां वर्णक्रमेणात्र रचना कृता भवति । वर्णक्रमेण रचना च स्थूलदृष्ट्या च सूक्ष्मदृष्ट्या चेति द्वेधा संभवति । तत्राद्या वाचकानां विषयोपलम्भाय सुज्ञेया भवति, द्वितीया तु किञ्चिदिव क्लिष्टा । तत्र प्रथमे द्वितीये च भागे स्थूलदृष्टिरेव स्वीकृताऽऽसीत् । तृतीयभागेऽप्यस्मिन् आदौ सैव स्वीकृता । अन्ते तु कियतिचित् प्रविभागे द्वितीया दृष्टिः स्वीकृता । इत उत्तरं च द्वितीयैव स्वीकारिष्यते शुद्धत्वात् तस्याः । तच्च स्पष्टत्वार्थं किञ्चिदिवोदाह्रियते– 'जैमिनेः परतन्त्रापत्तेः' इत्यादिरेको बिन्दुः, 'जैमिनेः परतन्त्रत्वापत्तेः' इत्यपरो बिन्दुः । अत्रोभयत्रापि 'जैमिनेः परत' इत्यक्षराणि समानान्येवेति नात्र विचार्यम्, अग्रे तु 'न्त्राप' इत्येकत्र 'न्त्रत्वाप' इत्यपरत्र । एवं सति अनयोः क्रमश्चिन्तनीयः । तत्र 'त्र' इति ह्रस्वमक्षरम्, 'त्रा' इति च दीर्घम् । ह्रस्वं पूर्वं दीर्घमुत्तरम् इति च स्थूलः क्रमः । तथा च 'तन्त्रत्वापत्तेः' इति बिन्दुः पूर्वं निवेशनीयः 'तन्त्रापत्तेः' इति तु पश्चात् इति सुगमः पन्थाः । सूक्ष्मदृष्ट्या तु विचारे 'तन्त्रापत्तेः' 'तन्त्र+आपत्तेः' इति शब्दभेदः, द्वितीये तु 'तन्त्र+त्व+आपत्तेः' इति शब्दभेदः । सति चैवं 'तन्त्रापत्तेः' इति पूर्वं निवेश्यम् 'तन्त्रत्वापत्तेः' इति पश्चात् इति मतिरस्माकम् । यथा वा 'अवघातन्यायः' इति 'अवघातादिधर्माः' इति च द्वौ बिन्दू । अत्र 'अवघा' इत्यक्षराणि समानान्येव । ततः परं त–ह्रस्वः, ता–दीर्घः इति स्थूलदृष्ट्या आदौ 'अवघातन्यायः' इति बिन्दुं निवेश्य परस्तात् 'अवघातादिधर्माः' इति बिन्दुर्निवेशनीयः इति स्थूला पद्धतिः । परन्तु 'अवघात–आदि' इति पदभेदात् आकारस्य च नकारात् प्राचीनत्वात् आदौ 'अवघातादिधर्माः' इति बिन्दुर्निवेश्यः, ततः परम् 'अवघातन्यायः' इति । इति दिक् ।

मीमांसाकोषोऽयं यद्यपि विषयकोषः, तथापि शतसहस्रादिसंख्यत्वात् भूयिष्ठानां विषयाणां परस्परमसंबद्धत्वात् यथायथं वर्णक्रमेणैव ते निवेशनीया इति दुरपह्नवो वर्णक्रमः, इति वर्णक्रमं स्वीकृत्यैव रचना कर्तव्या। तत्र रीतिद्वैविध्ये इदानीमेवोक्ता द्वितीया रीतिरेव तृतीयभागान्ते स्वीकृता, चतुर्थादिभागेषु च सैव स्वीकरिष्यते शुद्धत्वात् इत्युक्तमेव। वाचकानां तु अत्र किञ्चित् स्खलितमिव स्यात् तथापि शुद्धत्वपक्षपातेन किञ्चित् कष्टं स्वीकरिष्यन्ति सहृदया इति आशास्महे।

**अधिकरणादिसंख्या**—तृतीये ऽस्मिन् भागे भाष्याधिकरणानि १६४, संकर्षाधिकरणानि २१, केवलानन्दीवृत्त्यधिकरणानि १२६, तौतातिकाधिकरणानि ५, न्यायाः ३०९, लघुसिद्धान्ताश्च ३७१०।

अथ प्रथमभागमारभ्य भाष्याधिकरणानि ४५६, संकर्षाधिकरणानि १४७, केवलानन्दीवृत्त्यधिकरणानि २८३, तौतातिकाधिकरणानि २०, न्यायाः ६२६, लघुसिद्धान्ताश्च ९३२३ इति।

मुद्रितशोधनविषये च धर्मकोशकार्यनिर्वाहकाः **श्रीरङ्गनाथशास्त्री जोशी** महाशयाः भूयसा साह्यकमाचरन्तीति कृतज्ञा वयम्। इत्यलम्।

**विजया दशमी**
**गुरुवासरः शकः १८७६.**

**स्वामी केवलानन्दसरस्वती**

# ग्रन्थादिसंक्षेपाक्षराणि तद्विवरणं च।

**अद्वैत**— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता मोहमय्यां निर्णयसागरे १९१७ सने मुद्रिता।

**आचारमयूखः**— श्री ज. र. घारपुरे प्रकाशितः।

**आपस्तम्बाचार्यः**— प्रसिद्धः कल्पसूत्रकारः।

**आभरणम्**— शांकरशारीरकभाष्यस्य टीका। अध्याय-पाद-सूत्राङ्काः। क्वचित् तृतीयोऽङ्कः अधिकरणस्य।

**आर्षेयब्राह्मणम्**— सामवेदीयम्।

**आश्व. गृ**— आश्वलायनगृह्यसूत्रम्। तत्रत्या नारायणवृत्तिश्च।

**इ०**— इत्यादि।

**उपदेशसाहस्री**— श्रीशंकराचार्यप्रणीता। रामतीर्थः टीकाकारः। प्रकरणश्लोकाङ्कौ। गद्यं पद्यं च।

**ऋजु**—ऋजुविमला नाम शाबरभाष्यव्याख्यानरूपायाः प्राभाकरीयबृहत्याः टीका श्रीशालिकनाथप्रणीता। चौखम्बासीरीज् १९२९ सने मुद्रिता।

**ऋसं**— ऋग्वेदसंहिता। मण्डलम्, सूक्तम्, ऋक् इत्यङ्कत्रयम्।

**ऐब्रासा**— ऐतरेयब्राह्मणस्य सायणभाष्यम्। अध्याय-खण्ड-सूत्राणामङ्काः। आनन्दाश्रम १९३० सने मुद्रितम्।

**कठोप**— कठोपनिषत्।

**कणादसूत्रम्**— वैशेषिकदर्शनम्। अध्याय-आह्निक-सूत्राणामङ्काः।

**कणिका**— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रप्रणीता। काशी मेडिकल् हॉलमुद्रणालये १९०७ सने मुद्रिता।

**कर्क**— कर्काचार्यः, कात्यायनश्रौतसूत्रस्य भाष्यकारः।

**कल्पतरुः**— भामत्याः टीका। अमलानन्दसरस्वतीप्रणीतः, १९१७ सने मोहमय्यां निर्णयसागरे मुद्रितः। अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम्।

**कस्तूरि**—कस्तूरिरङ्गाचार्यविरचिता जैमिनिसूत्रवृत्तिः। सन १९०८ सने मैसूरनगरे मुद्रिता। सा च भाट्टदीपिका पुस्तके एव मुद्रिता।

**कातीयसूत्रम्**— कात्यायनश्रौतसूत्रम्।

**काशीखण्डः**— स्कन्दपुराणान्तर्गतः। रामानन्दः टीकाकारः। अध्याय-श्लोकाङ्कौ।

**कु. कुतूहलम्**— अध्वरमीमांसाकुतूहलवृत्तिः श्रीवासुदेवदीक्षितविरचिता । श्रीरङ्ग-वाणी-विलासे मुद्रिता । अध्यायः, पादः, अधिकरणम्, सूत्रम् इत्यङ्कचतुष्टयम् ।

**के**— केवलानन्दसरस्वती । तत्कृता जैमिनिसूत्रवृत्तिश्च ।

**कैयटः**— व्याकरणमहाभाष्यस्य टीकाकारः । काश्यां भाष्यसाहित्येन मुद्रितः ।

**कौ**— मीमांसाकौस्तुभः खण्डदेवप्रणीतः । चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः, अधिकरणम्, सूत्रम् इत्यङ्कचतुष्टयम्, पृष्ठाङ्कश्च ।

**कौषीतकिब्राह्मणम्**— पुण्यपत्तने आनन्दाश्रमे १९११ सने मुद्रितम् ।

**चन्द्रिका**— अद्वैतसिद्धेः टीका ब्रह्मानन्दी नाम । निर्णयसागरे मुद्रिता ।

**टुप्**— टुप्टीका नाम वार्तिकं कुमारिलभट्टप्रणीतम्, पुण्यपत्तने आनन्दाश्रमे शाबरभाष्येण सह १९३३ सनादौ मुद्रितम् ।

**तत्त्व**— तत्त्वप्रकाशिका शेखरटीकायाः भूतेः टीका । २००२ संवति काश्यां मुद्रिता ।

**तन्त्ररत्नम्**— टुप्टीकायाः पार्थसारथिप्रणीता टीका । लिखिता । अध्यायः, पादः, अधिकरणम्, सूत्रं चेति अङ्कचतुष्टयम् ।

**तैसं**— तैत्तिरीयसंहिता । काण्डम्, प्रपाठकः, अनुवाकः इत्यङ्कत्रयम् ।

**तैसंसा**— तैत्तिरीयसंहितायाः सायणभाष्यम् ।

**तौता**— तौतातिकमततिलकः भवदेवप्रणीतः मीमांसासूत्रवृत्तिरूपः अधिकरणरचनात्मकः । काश्यां मुद्रितः ।

**द्र०**— द्रष्टव्यम् ।

**नीतिमयूखः**— श्री ज. र. घारपुरे प्रकाशितः । पृष्ठाङ्कः ।

**नृ. पू. भा**— नृसिंहपूर्वतापिन्याः भाष्यं शाङ्करम् ।

**न्यायनि**— न्यायनिर्णयः नाम शांकरशारीरकभाष्यस्य टीका आनन्दगिरिप्रणीता । अध्याय-पाद-सूत्राङ्काः ।

**न्या. माला**— न्यायरत्नमाला पार्थसारथिमिश्रप्रणीता । चौखम्बायां मुद्रिता ।

**न्या. सू**— न्यायदर्शनसूत्रम् । अध्यायः, आह्निकम्, सूत्रम् इति त्रयोऽङ्काः ।

**पं**— पङ्क्तिः ।

**पराक्रमः**— उपक्रमपराक्रमः अप्पय्यदीक्षितप्रणीतः । लिखितः । पत्रम्, पृष्ठम् इत्यङ्कद्वयम् ।

**परि**— परिभाषा । क्रमाङ्कः ।

**परिभाषेन्दुः**— परिभाषेन्दुशेखरः नागेशप्रणीतः । काश्यां २००२ संवति मुद्रितः ।

**परिमलः**— भामत्याष्टीकायाः कल्पतरोः टीका । अप्पय्यदीक्षितविरचितः । मोहमय्यां निर्णयसागरे १९१७ सने मुद्रितः ।



**पा**— पाणिनिः । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् ।

**पृ**— पृष्ठम् ।

**प्र. पञ्जिका**—प्रकरणपञ्जिका श्रीशालिकनाथप्रणीता । काश्यां विद्याविलासयन्त्रालये १९०४ सने मुद्रिता ।

**प्र. वि**— प्रभाकरविजयः नन्दीश्वरविरचितः । कलकत्तायां १९२६ सने मुद्रितः ।

**प्रा. मयूखः**— प्रायश्चित्तमयूखः । ज. र. घारपुरे प्रकाशितः । पृष्ठाङ्कः ।

**बाल**— बालमीमांसाप्रकाशः शंकरभट्टप्रणीतः । काश्यां विद्याविलासमुद्रणालये १९०२ सने मुद्रितः ।

**बिन्दुः**— न्यायबिन्दुः तत्सदुपाख्यवैद्यनाथप्रणीतः मुंबई गुजरातीमुद्रणालये १९१५ सने मुद्रितः ।

**बृहती**— शाबरभाष्यस्य प्रभाकरमतानुसारिणी टीका । नव्यप्राभाकरमतमत्र । चौखम्बायां १९२९ सने मुद्रिता ।

**बृहस्पतिः**— बृहस्पतिस्मृतिः ।

**ब्रह्म**— ब्रह्मसूत्रम् । अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम् । अङ्कचतुष्टये सति तृतीयोऽङ्कः अधिकरणस्य ।

**भट्टसोमेश्वरः**— तन्त्रवार्तिकटीकायाः न्यायसुधायाः कर्ता ।

**भा**— शाबरभाष्यम्, आनन्दाश्रमे मुद्रितम् । अध्यायः, पादः, अधिकरणम्, सूत्रम् इत्यङ्कचतुष्टयम् । क्वचित् पृष्ठाङ्कः अधिकः ।

**भाट्ट**— भाट्टदीपिका नव्यमीमांसकखण्डदेवप्रणीता । मैसूर १९०८ सने मुद्रिता । अध्यायः, पादः, अधिकरणमिति अङ्कत्रयम् ।

**भामती**— श्रीवाचस्पतिमिश्रप्रणीता शांकरशारीरकभाष्यस्य टीका । मुंबई निर्णयसागरे १९१७ सने मुद्रिता ।

**भाट्टालंकारः**— न्यायमीमांसाप्रकाशस्य टीका अनन्तदेवविरचिता । चौखम्बायां १९२१ सने मुद्रितः ।

**भूतिः**— परिभाषेन्दुशेखरस्य टीका श्रीतात्याशास्त्रीपटवर्धनप्रणीता । काश्यां २००२ संवति मुद्रिता ।

**मणि**— भाट्टचिन्तामणिः गागाभट्टविरचितः । तर्कपादमात्रम् । चौखम्बायां १९०० सने मुद्रितः ।

**मण्डन**— मण्डनमिश्रकृता मीमांसाऽनुक्रमणी । चौखम्बायां १९२९ सने मुद्रिता ।

**माघ**— माघकविकृतं शिशुपालवधं नाम महाकाव्यम् । सर्गः, श्लोकः इत्यङ्कद्वयम् ।

**मीन्या**— मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीतः । चौखम्बायां १९२० सने मुद्रितः ।

**मीमांसाजीवरक्षा**— प्राभाकरमतानुसारिणी शालिकनाथप्रणीता। प्रकरणपञ्जिकापुस्तके अन्ते काश्यां १९०४ सने मुद्रिता।

**मुरारिः**— अङ्गत्वनिरुक्तिकर्ता। आनन्दाश्रमीये मीमांसादर्शने तृतीये भागे अन्ते १९३१ सने मुद्रिता।

**मेधातिथिः**— मनुस्मृतेः भाष्यकारः।

**याज्ञ**— याज्ञवल्क्यस्मृतिः। अध्यायः, श्लोकः इति द्वौ अङ्कौ।

**रत्न**— तन्त्ररत्नम्। पार्थसारथिमिश्रप्रणीतम्। टुप्टीकावार्तिकस्य टीका। लिखिता। अध्यायः, पादः, अधिकरणम्, सूत्रम् इत्यङ्कचतुष्टयम्।

**रत्नप्रभा**— शांकरशारीरकभाष्यस्य टीका गोविन्दसरस्वतीप्रणीता। अध्यायपादसूत्राङ्काः।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता। चौखम्बायां १८९८ सने मुद्रितः।

**रसायन**— विधिरसायनम् अप्पय्यदीक्षितप्रणीतम्। चौखम्बायां १९०१ सने मुद्रितम्।

**रहस्य**— भाट्टरहस्यं श्रीखण्डदेवप्रणीतम्। शाब्दबोधविषयकम्। काञ्चीनगरे मुद्रितम्।

**वा**— तन्त्रवार्तिकम् आचार्यकुमारिलभट्टविरचितं शाबरभाष्यस्य विवरणात्मकम्। पुण्यपत्तने आनन्दाश्रमे भाष्येण सह १९३१ सने मुद्रितम्।

**वाक्यार्थ**— वाक्यार्थमातृकावृत्तिः शालिकनाथप्रणीता। प्रकरणपञ्जिकापुस्तके एव अन्ते १९०३ सने मुद्रिता।

**वि. विस्तर**— जैमिनीयन्यायमालाविस्तरः सायणमाधवाचार्यप्रणीतः। पुण्यपत्तने आनन्दाश्रमे १९१६ सने मुद्रितः। अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम्।

**विट्ठल**— विट्ठलेशी अद्वैतसिद्धेः चन्द्रिकाटीकायाः टीका। निर्णयसागरे १९१६ सने मुद्रिता।

**विवि**— विधिविवेकः मण्डनाचार्यप्रणीतः। काश्यां मेडिकल्हॉलमुद्रणालये १९०७ सने मुद्रितः।

**वृ**— मीमांसासूत्रवृत्तिः सुबोधिनी नाम रामेश्वरसूरिविरचिता। काश्यां मेडिकल्हॉलमुद्रणालये १९२३ सने मुद्रिता।

**वैजयन्ती**— महादेवकृता सत्याषाढश्रौतसूत्रवृत्तिः। पुण्यपत्तने आनन्दाश्रमे १९०७ सने मुद्रिता।

**वैद्यनाथ**— शाबरभाष्यीयतर्कपादस्य टीकाकारः। आनन्दाश्रमे १९२९ सने मुद्रिता वैद्यनाथी नाम।

**वै. सार. कारिका**— वैयाकरणभूषणसारस्था कारिका।

**व्यवहारमयूखः**— श्री ज. र. घारपुरे प्रकाशितः।



**शंकर**— शंकरभट्टकृतः मीमांसासारसंग्रहः। काश्यां विद्याविलासमुद्रणालये प्रकरणपञ्जिकापुस्तकान्ते १९०४ सने मुद्रितः।

**शांभा**— शांकरं भाष्यम्। अध्यायः, पादः, सूत्रम् इत्यङ्कत्रयम्। चतुरङ्कत्वे तु तृतीयोऽङ्कः अधिकरणस्य।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता। निर्णयसागरे १९५१ सने मुद्रिता। अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम्।

**शेखर**— परिभाषेन्दुशेखरः नागेशप्रणीतः। काश्यां २००२ संवति मुद्रितः भूल्यादिसहितः।

**श्राद्धमयूखः**— श्री ज. र. घारपुरे प्रकाशितः।

**श्रीकर**— ब्रह्मसूत्रभाष्यकारः शैवमतानुसारी।

**श्लोवा**— श्लोकवार्तिकम् आचार्यकुमारिलभट्टविरचितम्। तर्कपादः। चौखम्बायां १८९८ सने मुद्रितम्।

**संकर्ष**— संकर्षकाण्डम्। भास्करभट्टप्रणीता भाट्टचन्द्रिका भाट्टदीपिका वा वृत्तिः। काश्यां मेडिकल्हॉलमुद्रणालये १८९४ सने मुद्रिता।

**संक्षेपशारीरकम्**— रामतीर्थकृतटीकासहितम्। अध्यायः, श्लोकः इति अङ्कद्वयम्।

**संग्रहः**— न्यायसंग्रहः। लिखितः।

**सत्या. श्रौ**— सत्याषाढीयं श्रौतसूत्रम्। आनन्दाश्रमे १९०७ सने मुद्रितम्।

**सना. ध. प्र.**— सनातनधर्मप्रदीपः। श्रीकुकरमुण्डेकरमहाराजप्रेरितैः म. म. अनन्तकृष्णशास्त्रिभिः प्रणीतः।

**समयमयूखः**— श्री ज. र. घारपुरे प्रकाशितः।

**सा**— जीवानन्दविद्यासागरैः कलकत्तायां मुद्रितं शाबरभाष्यम्।

**साहस्री**— भुवनेशलौकिकन्यायसाहस्री। मुंबई वेङ्कटेश्वरे १८३० शके मुद्रिता। साहस्र्यां यो न्यायक्रमाङ्को निवेशितः स एवास्माभिः प्रदर्श्यते।

**सु. सुधा**— न्यायसुधा तन्त्रवार्तिकस्य टीका। भट्टसोमेश्वरविरचिता राणकापरपर्याया चौखम्बायां मुद्रिता।

# शुद्धिपत्रकम्

मीमांसाकोषस्य प्रथमे भागे ४५४ पृष्ठे '卐 अन्त्यलोपाधिकरणम् । एकत्रिके क्रतौ' इत्यादि मुद्रितम् । तत्र ' * अन्त्यलोपाधिकरणम् । कपालन्यायो द्रष्टव्यः' इति वाचनीयम् । '卐 एकत्रिके क्रतौ इत्यारभ्य च ४५५ पृष्ठे ' 卐 अन्त्यलोपापवादाधिकरणम् । ' इत्यस्मात् प्राक्तनं सर्वमधिकरणम् इत उद्धृत्य तृतीये भागे १२७२ पृष्ठे द्वितीयस्तम्भे १०–१२ इति पङ्क्तित्रयस्थाने ग्राह्यम् । अनवधानेन विपर्यासोऽयं समजनि ।

किञ्च 'कारणादभ्यावृत्तिः' ( ५।२।१।३ ) इति सूत्रं भाष्यकारैर्द्वेधा व्याख्यातम् 'पदार्थानुसमयन्यायः' इतिशीर्षकयुक्तप्रथमाधिकरणगुणसूत्रत्वेन च 'काण्डानुसमयन्यायः' इतिशीर्षकयुक्तद्वितीयाधिकरणसूत्रत्वेन चेति । तत्र 'कारणादभ्यावृत्तिः' इति सूत्रस्था टुप्टीका तु प्रथमाधिकरणे एव संग्रहीतव्या न द्वितीयाधिकरणे । अस्माभिस्तु काण्डानुसमयन्यायाख्ये द्वितीयाधिकरणे मुद्रितेति अयुक्तमभूत् । पदार्थानुसमयन्यायस्तु वर्णक्रमेण आगमिष्यति । तत्रेयं टुप्टीका द्रष्टव्या ।

भूयांस्येव च प्रतिभागमशुद्धान्यभवन् । तथापि तृतीयभागे अन्तिमे प्रविभागे अशुद्धन्यूनतैव । इत उत्तरं तु अशुद्धं न भविष्यति इत्याशास्महे । तथापि 'यदभावि न तद् भावि, भावि चेन्न तदन्यथा' इत्याभाणकं स्मारयित्वा तृतीयभागस्य शुद्धिपत्रकमेव निवेश्यते ।

इदं चावधेयम्, प्रथमभागे 'अतिक्रमाधिकरणम्' गतम् । तत्र सूत्रद्वयेनैकमधिकरणं भाष्यानुसारेण निवेशितम् । विस्तरे तु 'कर्मार्थे तु' इतिसूत्रेण त्रयोदशम् 'व्यपदेशाच्च' इतिसूत्रेण तु चतुर्दशमधिकरणम् इति विभागः कृतः । तदनुसारेण, अस्माभिः अस्मिंस्तृतीये भागे "ज्योतिष्टोमे उपरवेषु 'किमत्र" इत्यादिकं शीर्षकं निवेश्य 'व्यपदेशाच्च' इत्येतदेव सूत्रं तदीयं भाष्यं वार्तिकं चातिक्रमाधिकरणस्थमेव निवेश्य वि–मण्डन–शंकरग्रन्थाः पूर्वतो भिन्ना निवेशिताः । तेन वि–मण्डन–शंकरग्रन्था अलुप्ता भवेयुः, विषयस्पष्टता च स्यात् । इति ।

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १२१० | २ | २९ | स्तुतरेपि | स्तुतेरपि |
| १२३१ | ,, | १ | भूतानि ब्राह्मण | भूतानि आर्षाणि नित्यानीत्येके मन्यन्ते । कुतः ? स्मृत्युपदेशाभ्याम् । एवं हि स्मरन्ति 'मन्त्रभूतानि एतानि आर्षाणि नित्यानि' इति । उपदिशन्ति च एवंविधमेव शिष्येभ्यः । ननु यदेव स्मरन्ति, तदेव उपदिशन्ति । बाढम् । अयमस्य उपदेशो वर्ण्यते, ऊहश्चिकीर्षितः इति ब्राह्मण |



| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १२४५ | २ | २२ | ' तद्वचन | तद्वचन |
| ,, | ,, | ३३ | सारी | सारी , |
| १२५४ | ,, | ३१ | श्रति | श्रुति |
| १२५५ | १ | ३३ | भति | भृति |
| १२५८ | २ | ३४ | निवृत्तिः | निर्वृत्तिः |
| १२७२ | १ | २२ | वर्चो अभ्या | वर्चः अभ्या |
| १२८२ | ,, | शीर्षणि | पञ्चावत्तैव वपा | एकप्रसरताभङ्गभयेन |
| १२८४ | ,, | ३५ | बोधक | बोधैक |
| १२८९ | ,, | १७ | पूर्वस्य पा० | पूर्वस्य । पा० |
| ,, | २ | २६ | क्रतुसयोगात् | क्रतुसंयोगात् |
| १२९८ | १ | १० | श्रतिः | श्रुतिः |
| १३०१ | ,, | १ | स्यात् । इत्यत्र | स्यात् इत्यत्र |
| १३०७ | २ | २५ | याजोषु | याजेषु |
| १३०८ | १ | ६ | बभ्रः | बभ्रुः |
| १३०९ | २ | ३१ | सिद्धान्तः । | सिद्धान्तः । के. |
| १३१६ | ,, | ६ | एन्द्र | ऐन्द्र |
| १३१८ | १ | ९ | एन्द्र | ऐन्द्र |
| ,, | २ | २३ | चतर्धा | चतुर्धा |
| १३२० | ,, | ३१ | त्वात् । सद्य | त्वात् सद्य |
| १३२२ | ,, | १० | पाष्ण | पौष्ण |
| १३२८ | १ | ३३ | टु | टुप् |
| १३३१ | ,, | ५ | धर्माधमा | धर्माधर्मा |
| ,, | ,, | ६ | समद्धर्तुं | समुद्धर्तुं |
| १३३५ | २ | ९ | आत्पत्ति | औत्पत्ति |
| १३४१ | १ | ११ | सिद्ध | सिद्धे |
| ,, | ,, | १६ | शतः | शृतः |
| १३४४ | २ | १४ | आदु- | औदु- |
| १३४६ | १ | २१ | दश | दर्श |
| ,, | २ | ५ | ग्रमि | ग्रमि |
| १३५७ | १ | २४ | यथाकपालं | यथा कपालं |
| १३६२ | ,, | १९ | करञ्जाकादि | करञ्जकादि |
| ,, | २ | २८ | ़़ | टुप् |
| १३६३ | ,, | ३ | साधक | । साधक |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १३७७ | १ | ९ | तात्पयतो | तात्पर्यतो |
| १३८१ | ,, | ३ | असितिष्ठ | आसितिष्ठ |
| १३८५ | ,, | ३२ | सिद्ध | सिद्धं |
| १३९३ | ,, | २६ | वा. पृ. | ( वा. पृ. |
| ,, | २ | १४ | भावनाया | भावनया |
| १३९७ | ,, | २० | जहोति | जुहोति |
| १४०६ | १ | १५ | यप्रत्यये छान्दस- | ऋहलोर्ण्यत् इति |
| | | | त्वाभ्युपगमेन | ण्यत्प्रत्यये |
| १४२६ | ,, | ३४ | ( पञ्चमं | पञ्चमं |
| १४२८ | २ | १० | सवर्षो- | सर्वेषा- |
| १४४० | १ | १७ | * कार्म्यं | * काम्यं |
| ,, | २ | १५ | कर्तन्यानि | कर्तव्यम् |
| १४४३ | ,, | ३१ | कशादे | कुशादे |
| १४४८ | १ | ६ | मनपा | मनुपा |
| १४५३ | २ | ,, | वस्तुविल | वस्तु विल |
| १४५६ | ,, | ८ | प्रत्यार्था | प्रत्ययार्था |
| १४६२ | १ | २३ | * कस्मै | * कस्मै |
| ,, | ,, | २६ | ,, | ,, |
| १४६३ | ,, | ३५ | तप्रश्ना | तत्प्रश्ना |
| १४७० | ,, | २८ | समासः | समासैः |
| ,, | ,, | ३४ | लक्षणा | लक्षणो |
| १४७१ | ,, | ५ | विधित्वे , | विधित्वे |
| ,, | २ | ३ | यथाथ | यथार्थे |
| १४७२ | ,, | ८ | प्रातप्र | प्रतिप्र |
| ,, | ,, | ३१ | दिष्टन | दिष्टेन |
| १४७८ | १ | ३४ | पूरो | पुरो |
| १४८८ | २ | ३२ | केन् | * केन् |
| १४९१ | ,, | १३ | मुपनयं | मुपनयनं |
| १४९२ | १ | ११ | अग्निषो | अग्नीषो |
| ,, | ,, | १४ | कादा | कादौ |
| १४९३ | ,, | शीर्षणि | कमुतिक | कैमुतिक |
| १४९५ | ,, | २५ | साम | नाम |



| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १४९८ | १ | २७ | ऽन्तभावो | ऽन्तर्भावो |
| ,, | २ | ६ | प्रयाजाना | प्रयाजादीना |
| १४९९ | १ | १५ | प्राप्ते । | प्राप्ते |
| १५०० | २ | ३५ | कत्व त्रेणा | कत्वमात्रेणा |
| १५०३ | ,, | १० | श्रत्या | श्रुत्या |
| १५१३ | ,, | ६ | चान्वयः । | चान्वयः । के. |
| १५२३ | १ | २६ | एक्य | ऐक्य |
| १५४८ | ,, | १३ | प्रगाथाः । | प्रगाथाः |
| १५५१ | ,, | १ | च्छदः | च्छन्दः |
| १६०७ | २ | १० | भवेत् । | भवेत् ।, |
| १६२५ | ,, | ११ | वृहत् सामा | वृहत्सामा |
| १६२७ | १ | २७ | शात् तथा | शात् । तथा |
| १६३८ | ,, | ७ | चकत्व | चैकत्व |
| १६४२ | ,, | ५ | ममाप्तेः | समाप्तेः |
| १६५९ | २ | १८ | दशरावे | दशशरावे |
| १६७१ | १ | ४ | क्रिया | क्रया |
| ,, | २ | २५ | मास्या | मासी |
| ,, | ,, | २६ | स्यायाम् | स्याम् |
| १६७९ | ,, | १४ | योगात् | ऽयोगात् |
| १६८१ | १ | १५ | एवेत्यत्र | एवात्र |
| ,, | ,, | २३ | धुवा | ध्रुवा |
| १६८३ | ,, | २५ | इति न्याय | इति पूर्वपक्षन्यायः |
| ,, | २ | २२ | द्यर्थ | द्यर्थे |
| १६८४ | ,, | ३१ | प्राज | प्राजा |
| १६९१ | १ | ७ | । ' सा | सा ।' |
| १६९२ | ,, | १७ | धिद्य | धिर्द्यं |
| १७१३ | ,, | ११ | दिश्यति | दिशति |
| १७२३ | ,, | २० | प्रतिति | प्रमिति |
| १७६४ | ,, | १९ | त्वादप्र | त्वाद्यप्र |
| १७६५ | २ | २ | तज्जानि | तज्ज्ञनि |
| १७७० | १ | १८ | विनः, तेभ्यो | विनस्तेभ्यो |
| १७७४ | २ | १९ | न्यायः । | न्यायः |
| १७८१ | ,, | ६ | वेदज्यो | वेदे ज्यो |

| पृष्ठम् | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १७८५ | १ | ८–९ | ३।२।१६।३९(३८वि.) | ३।२।१७।३८वि. |
| ,, | ,, | १६ | तो नै | तोऽनै |
| १७९६ | २ | १६ | भूद्रुषा- | भूद्रुषा |
| १७९९ | ,, | ९ | चमिसि | चमसि |

एवमुपलब्धानि अशुद्धानि शोधितानि। अन्यान्यपि कदाचित् कानिचित् स्युः। तानि विपश्चिद्भिः शोध्यानीति संप्रार्थ्यते।

---

# अधिकरणशीर्षकाणि *

मीमांसाकोषे तावत् अधिकरणशीर्षकाणि वर्णक्रमेण निवेशितान्येव, अत्र तु पाठक्रमेणेति विशेषः। यान्येव तु तत्र वर्णक्रमेण, तान्येवात्र पाठक्रमेण। इत्थमुभयथा निवेशे च वाचकानां भूयानुपकारः स्यादिति कल्पनाऽस्माकम्। शीर्षकेषु च कानिचित् पारिभाषिकाणि स्युः, कानिचिच्च अधिकरणार्थबोधकानि स्युः। उभयान्यपि यद्यपि अधिकरणार्थबोधकान्येव तथापि पारिभाषिकेषु क्लेशेन अर्थबोधः, इतरेषु तु क्लेशाभाव इति विशेषः। ननु तर्हि पारिभाषिकाणि नैवात्र निवेशयितव्यानि, सत्यम्। तथापि मीमांसायामेव आकरग्रन्थेषु प्रकरणेषु च तत्रतत्र पारिभाषिकाण्येव अधिकरणनामानि उद्दिश्यन्ते, धर्मशास्त्रादिषु च पारिभाषिकैरेव व्यवहारः। तस्मात् पारिभाषिकाणि अवश्यं निवेशयितव्यानि। केषांचिदधिकरणानां च पारिभाषिकं नाम नोपलभ्यते, तत्र अपारिभाषिकमेव निवेशनार्हमिति उभयथा समावेशः।

अत्र च तत्तदध्यायतत्तत्पादविषयप्रदर्शनम् अध्यायपादसंगतिप्रदर्शनं च करिष्यते। अधिकरणसंगतिप्रदर्शनं च कोषे एव भविष्यति।

मीमांसाया वेदोपाङ्गभूताया अध्यायास्तावत् विंशतिः। तत्र अन्तिममध्यायचतुष्टयं ब्रह्ममीमांसा नाम शास्त्रान्तरमिति भगवत्पूज्यपादसिद्धान्तः। अत एव संकर्षकाण्डान्ते 'विद्यतेऽन्यकालत्वाद् यथा याज्यासंप्रैषो यथा याज्यासंप्रैषः' इति द्विरुक्तिः। नैतादृशी च पदादिद्विरुक्तिः षोडशलक्षण्याम्। ब्रह्ममीमांसायां तु प्रथमद्वितीयतृतीयेषु अध्यायसमाप्तिद्योतकः पदाभ्यासः, चतुर्थे च शास्त्रसमाप्तिद्योतकः सूत्राभ्यासः प्रसिद्धः। अस्याः धर्ममीमांसायास्तु अध्यायाः षोडश। तत्र प्रथमे द्वादशाध्यायाः द्वादशलक्षणी नाम। उत्तरे चत्वारोऽध्यायाः संकर्षकाण्डं संकर्षणकाण्डं वा। द्वादशलक्षण्यां च तृतीयषष्ठदशमाध्यायानां प्रत्येकमष्टावष्टौ चरणाः, शेषेषु चत्वारश्चत्वारः। संकर्षकाण्डेऽपि प्रत्यध्यायं चत्वारश्चत्वार एव चरणाः। तत्र द्वादशलक्षण्यां वर्णकादिसंकलनया ९३३ अधिकरणानि, संकर्षे च ३४२। संकलनेन १२७५ अधिकरणानि। श्रीशंकरभट्टैस्तु स्वीये मीमांसासारसंग्रहे नाम श्लोकात्मके प्रकरणे द्वादशलक्षण्यामेव सहस्राधिकरणानि प्रदर्शितानि। अत एव च शारीरकमीमांसाटीकायां न्यायनिर्णयाख्यायां श्रीमदानन्दगिरिभिः 'न्यायसाहस्री' इति द्वादशलक्षणी निर्दिष्टा।

द्वादशानामध्यायानां नामानि च न्यायविस्तरप्रस्तावनायां सायणमाधवाचार्यैः सार्धश्लोकेन निर्दिष्टानि यथा– 'प्रमाण–भेद–शेषत्व–प्रयुक्ति–क्रमसंज्ञकाः। अधिकारोऽतिदेशश्च सामान्येन–विशेषतः। ऊहो–बाधश्च–तन्त्रं च–प्रसङ्गश्चोदिताः क्रमात्॥' इति। प्रथमेऽध्याये धर्मविषयकाणां प्रमाणानां निरूपणम्। द्वितीये कर्मभेदाभेदयोर्निरूपणम्। तृतीये शेषत्वस्य शेषशेषिभावस्य, चतुर्थे प्रयुक्तेः प्रयोज्यप्रयोजकभावस्य, पञ्चमे क्रमस्य, षष्ठे अधिकारस्य, सप्तमे सामान्येन अतिदेशस्य, अष्टमे विशेषतः अतिदेशस्य, नवमे ऊहस्य, दशमे बाधस्य, एकादशे तन्त्रस्य तन्त्रावापस्य, द्वादशे च प्रसङ्गस्य निरूपणं कृतम्। इति कृत्वा अध्यायानां प्रमाणादीनि नामानि प्रमाणलक्षणम्, भेदलक्षणम्, इत्यादि।

* द्वादशलक्षणीस्थानामधिकरणानां शीर्षकाणि पाठक्रमेण प्रदर्शनार्थं किञ्चिट्टिप्पणं लिखितमस्माभिः। तदत्रैव मीमांसाकोषस्य तृतीये भागे मुद्राप्यते। वस्तुतो यद्यपीदं सर्वकोशान्ते प्रकाशयितव्यमित्यत्र नास्ति संदेहः, तथापि नातिचिरादेव वयसः अष्टसप्ततितमे संवत्सरे प्रविशतो मे सर्वमीमांसाकोषावसानप्रतीक्षाकरणं न साधीयः, इति इदानीमेव तन्मुद्रणं निश्चितम्। नातो हेतुविशेषचिन्तने मनः खेदनीयम्।

प्रथमेऽध्याये प्रमाणलक्षणं कृतम् । तत्र विध्यर्थवादमन्त्रस्मृतयः तत्त्वतो निर्णीताः, गुणविधिः नामधेयं परीक्षितम् । संदिग्धानामर्थानां वाक्यशेषात् अर्थाच्च अध्यवसानमुक्तम् । भा. २।१।१।१.

प्रमाणलक्षणं तावत् चोदनालक्षणाश्रयणस्य विध्यादितत्त्वनिर्णीतिः प्रमाणेनैव स्थिता । समस्तो हि प्रथमः पादः चोदनासूत्रपरिकरः । तत्र च धर्मस्य चोदनालक्षणत्वमुक्तम् । श्रुतिमूलत्वं विज्ञानस्य स्मृतिप्रामाण्ये तत्त्वम् । नामधेयस्य चोदनान्तर्गतत्वात् प्रमाणत्वम् । संदिग्धार्थनिर्णये वाक्यशेषसामर्थ्ययोः प्रामाण्यम् । इत्येवं समस्तमध्यायं प्रमाणलक्षणमाचक्षते । वा. २।१।१।१ पृ. ३७० । प्रथमाध्यायप्रतिपादितो हि प्रमाणविवेकविध्यर्थवादमन्त्रस्मृतिगुणविधिनामधेयवाक्यशेषार्थकृतसंदिग्धविधिनिर्णयप्रविभागः प्रत्येकं भेदादिलक्षणेषु भेदेनैवोपलक्ष्यते । वा. ३।१।१ पृ. ६४९.

'विध्यर्थवादस्मृतयो नाम चेति चतुर्विधम् । प्रथमाध्यायगैः पादैश्चतुर्भिर्मानमीरितम् ॥' प्रथमे पादे विधिरूपं मानमीरितम् । द्वितीये अर्थवादमन्त्ररूपं मानमुक्तम् । तृतीये स्मृतिराचारश्च । चतुर्थे उद्भिच्चित्राऽऽदिनामरूपं मानं निरूपितम् । वि. प्रस्तावना श्लो. १३ । 'विधिः साक्षान्मितिर्धर्मे, तस्य शेषोऽर्थवादगीः । वेदमूला स्मृतिर्, नाम वाक्यांशोऽमीष्वतः क्रमः ॥' २७ । 'प्रमाणमुपजीव्यत्वात् प्रथमेऽध्याय ईरितम् ।' २।१।१.

### अथ अधिकरणशो निवेश्यते

१।१।१।१ अथातो धर्मजिज्ञासा । अत्र यद्यपि 'शास्त्रारम्भप्रतिज्ञा' इति शीर्षकं संभवत्येव तथापि सूत्रेणैव निर्देशो युक्तः ।

१।१।२।२ धर्मलक्षणम् ।

१।१।३।३ धर्मविषयकप्रमाणपरीक्षा–प्रतिज्ञा ।

१।१।४।४ प्रत्यक्षसूत्रम् ।

१।१।५।५ औत्पत्तिकसूत्रम् । अत्र (१) वैदिकचोदनानां स्वतःप्रामाण्यम् । (२) शब्दार्थसंबन्धस्य नित्यत्वम् । तस्यानित्यत्वे तु वेदस्य कृतकत्वं प्रसज्येत । (३) वृत्तिकारमतेन तृतीयादिसूत्रत्रयस्य अर्थान्तरप्रतिपादनम् । (४–५) निरालम्बनशून्यवादयोर्निरासः । अन्यथा स्वर्गादेरवास्तवत्वे स्वर्गादिफलककर्मप्रतिपादकवेदस्य प्रामाण्यं न स्यात् । (६–१०) अनुमान–शब्द–उपमान–अर्थापत्ति–अनुपलब्धीनां प्रामाण्यम् । तच्च वाक्यार्थज्ञानोपयोगि व्यवहारोपयोगि च । (११) स्फोटवादः । वाक्यवाक्यार्थभूतकार्याणामभावे वेदवाक्यात् धर्मप्रमितिर्न स्यात् । अतः वर्णपदवाक्यातिरिक्तवैयाकरणसिद्धान्तभूतस्य स्फोटात्मकशब्दस्य निरासः । (१२) आकृतिवादः । अनित्यव्यक्तेः पदवाच्यत्वे नित्यवेदाप्रामाण्यप्रसङ्गात् नित्या आकृतिरेव पदवाच्या इति साधितम् । (१३) अपोहवादनिरासः । गोभिन्नभेद एव गोत्वमपोहरूपमिति बौद्धाः । तथात्वे च वेदस्याप्रामाण्यप्रसङ्गः । अतः अपोहनिरासः । (१४) वनवादः । अत्र वनादिवत् परमाण्वादिपुञ्जात्मक एवावयवी, नार्थान्तरम् इति मतं पुञ्जस्य अप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् संगतिग्रहासंभवेन तन्मूलकवेदाप्रामाण्यावहम्, इति वेदप्रामाण्यसिद्ध्यर्थमेव वनादिदृष्टान्तवैधर्म्योपपादनेन निरस्तम् । (१५) संबन्धाक्षेपनिरासः– पदपदार्थसंबन्धाक्षेपनिरासः । संकेतस्य ईश्वरकृतत्वे स्वीकृते वेदाप्रामाण्यप्रसङ्गात् वेदप्रामाण्यायैव ईश्वरादिसर्वज्ञनिरासोऽत्र कृतः । (१६) चित्राऽऽक्षेपनिरासः । तया च कर्मान्यवहितोत्तरमेव फलालाभेऽपि कर्मानुष्ठानेन प्रतिबन्धनिरासे ऐहिकप्रयत्नेन पश्वादिफललाभस्य सिद्धिः । (१७) आत्मवादः । शरीरभिन्नः परलोकगामी आत्मा नास्ति इति आक्षेपस्य निरासोऽत्र कृतः । तेन पारलौकिके कर्मणि प्रवृत्तेः सिद्धिः । एवं सप्तदश पदार्था औत्पत्तिकसूत्रे भाष्यश्लोकवार्तिकयोः प्रतिपादिताः ।

१।१।६।६–२३ शब्दनित्यत्वाधिकरणम् । 'अनित्यवर्णसमुदायात्मकस्य वेदस्यापि अनित्यत्वात् उत्पादकाधीनत्वेन धर्मे न प्रमाणता' इत्याक्षेपस्य निरासोऽत्र कृतः । वर्णानां नित्यतया तत्समुदायात्मकस्य पदस्यापि नित्यत्वात् तस्य कारणाभावात् स्वत एव प्रामाण्यम् इत्युक्तमत्र ।

१।१।७।२४–२६ वाक्याधिकरणम् । कारणासंभवात् चोदनानां धर्मप्रमोत्पादनाशक्तिः इत्याशङ्क्य पदार्थकरणत्वप्रतिपादनेन चोदनाप्रामाण्यं प्रतिपादितमत्र । पदार्थमूलतया च वाक्यार्थप्रामाण्यम् ।

१।१।८।२७–३२ अपौरुषेयत्वाधिकरणम् ।

**अथ द्वितीये पादे** अर्थवादमन्त्ररूपं मानमीरितम् इति वि. । उपजीवकत्वं पादसंगतिः । अप्रामाण्यप्रसञ्जकत्रिप्रकारकपुरुषसंस्पर्शाभावप्रतिपादकतया प्रथमपादस्य उपजीव्यत्वात् तदानन्तर्यमस्य विचारस्य इति पादयोः संगतिः । सोम. '**सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः । विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते ॥**' सामान्यतः प्रामाण्ये सिद्धे अधुना विभज्य विनियोगः प्रतिपाद्यते । अवधृतप्रामाण्यस्य वा वेदस्य इदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य यथाविभागं धर्मे प्रति उपयोगः प्रतिपाद्यते । वा. १।२।१।१ पृ. १०५.

१।२।१।१–१८ अर्थवादाधिकरणम् ।

१।२।२।१९–२५ औदुम्बराधिकरणम् । फलबोधकनिगदा अपि स्तावकत्वेन धर्मे प्रमाणम् ।

१।२।३।२६–३० हेतुवन्निगदाधिकरणम् ।

१।२।४।३१–४५ मन्त्राधिकरणम् ।

**अथ तृतीये पादे** पौरुषेयीषु स्मृतिषु आचारेषु च वैदिकपरिगृहीतेषु चिन्ता । स्मृतीनामप्रामाण्येऽपि चोदनाप्रामाण्यं न विहन्यते, तथापि किंलक्षणो धर्मः इति जिज्ञासाऽधिकारात् स्मृतिप्रामाण्यं लक्षणे संगतम् । शा. कृत्स्नस्य वेदस्य प्रामाण्यचिन्ताऽनन्तरं तन्मूलकतया प्रमाणत्वात् स्मृत्यादीनां प्रामाण्यं विचार्यते इत्यानन्तर्यम् । **सोम.** एवं तावत् विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रति उपयोगः साधितः । इदानीं पौरुषेयीषु स्मर्यमाणावधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिषु अनिबद्धेषु चाचारेषु चिन्ता । वा. १।३।१।१ पृ. १५९.

१।३।१।१–२ स्मृत्यधिकरणम् । । भाष्यकारीयाधिकरणाक्षेपः । वा. पृ. १८७.

१।३।२।३–४ विरोधाधिकरणम् । बाह्यग्रन्थानामप्रामाण्यम् । वा. पृ. १९४–१९६.

१।३।३।५–७ शिष्टाकोपाधिकरणम् । भाष्यकारोक्तोदाहरणाक्षेपः । वा. पृ. २१८ । शाक्यादिवचसामप्रामाण्यम् । वा. पृ. २०१ । सदाचारप्रामाण्यम् । वा. पृ. २०३–२१६ । भाष्यकारोक्तोदाहरणाद्याक्षेपः । वा. पृ. २१८.

१।३।४।८–९ यववराहाधिकरणम् । आर्यम्लेच्छप्रयोगविप्रतिपत्तिबलाबलम् । वा. पृ. २१९–२२० । स्मृत्याचारविरोधे बलाबलम् । वा. पृ. २२०–२२१ । लोकवाक्यशेषयोर्विरोधे बलाबलम् । वा. पृ. २२१ । त्रिवृच्चर्वाश्ववालाधिकरणम् । वा. पृ. २२१.

१।३।५।१० पिकनेमाधिकरणम् ।

१।३।६।११–१४ कल्पसूत्राधिकरणम् ।

१।३।७।१५–२३ होलाकाऽधिकरणम् ।

१।३।८।२४–२९ व्याकरणाधिकरणम् ।

१।३।९।३० लोकवेदाधिकरणम् ।

१।३।९।३०–३५ आकृत्यधिकरणम् ।

**अथ चतुर्थः पादः ।** चतुर्थे उद्भिच्चित्राऽऽदिनामरूपं मानमीरितम् । वि., नामधेयपादोऽयम् ।

१।४।१।१ नामधेयप्रामाण्यम् । वि.

१।४।१।१–२ उद्भिदधिकरणम् ।

१।४।२।२–३ चित्राऽधिकरणम् ।

१।४।३।४ तत्प्रख्यन्यायः ।

१।४।४।५ तद्व्यपदेशन्यायः ।

१।४।५।६–८ वाजपेयाधिकरणम् ।

१।४।६।९ आग्नेयाधिकरणम् ।

१।४।७।१० बर्हिराज्याधिकरणम् ।

१।४।८।११ प्रोक्षण्यधिकरणम् ।

१।४।९।१२ निर्मन्थ्याधिकरणम् ।

१।४।१०।१३–१६ वैश्वदेवाधिकरणम् ।

१।४।११।१७–२२ जातेष्टिन्यायः ।

अर्थवादप्रसङ्गात् तदुपकारिगुणवादविधिलक्षणं तत्र नोक्तमिदानीमभिधीयते । अथवा गौण्या वृत्तेरिह निमित्तमभिधीयते । वा. । इयं तत्सिद्धिपेटिका । अस्यां पेटिकायाम् अधिकरणानि षट् । तानि यथा—

१।४।१२–१।२३–१ तत्सिद्ध्यधिकरणम् । वि. १३.

१।४।१२–२।२३–२ ज्यात्यधिकरणम् । वि. १४.

१।४।१२–३।२३–३ सारूप्याधिकरणम् । वि. १५.

१।४।१२–४।२३–४ प्रशंसाऽधिकरणम् । वि. १६.

१।४।१२–५।२३–५ भूमाधिकरणम् । वि. १७.

१।४।१२–६।२३–६ लिङ्गसमवायन्यायः। वि. १८.

१।४।१३।२४ अक्ताधिकरणम् ।

१।४।१४।२५ शक्त्यधिकरणम् ।

**अथ द्वितीयाध्यायार्थः** । प्रथमाध्याये प्रमाणलक्षणं वृत्तम् । अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्ते भिन्नानि अभिन्नानि चेति । एष एवार्थो वर्णनीयो नान्यः । एष एव चाध्यायसंबन्धः । तदिह षड्विधः कर्मभेदो वक्ष्यते शब्दान्तरम् , अभ्यासः, संख्या , गुणः, प्रक्रिया , नामधेयमिति । वक्ष्यमाणमनुसंकीर्त्यते प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते इति , श्रोतुश्च बुद्धिः समाधीयते । तदेतत् '**नानाकर्मलक्षणम्**' इति अध्यायमाचक्षते । एतत् तात्पर्येण, अतोऽन्यत् उपोद्घातप्रसक्तानुप्रसक्तं चेति । भा. २।१।१।१ पृ. ३७०.

वा— (पृ. ३७१) ननु प्रधानाप्रधानचिन्ता तृतीयचतुर्थयोर्विषयः, कथमत्रोपन्यस्यते । **केचिदाहुः** । इह द्रव्यकर्मणोः, उत्तरत्र तु कर्मणामेव गुणप्रधानत्वविचारादपौनरुक्त्यमिति । **तदयुक्तम्** । 'द्रव्यगुणसंस्कारेषु' (३।१।३।३) इत्यत्र सर्वाभिधानात् । तेन एवं वाच्यम्, '**लक्षणार्थोऽत्र तत्त्वेन भेदः शब्देतरादिभिः। तमन्वपूर्वभेदोऽपि, प्राधान्यं तत्प्रसिद्धये ॥**' कर्मभेदस्तावत् औत्सर्गिको लक्षणार्थः, तदपवादत्वेन अभेदः । तदनुनिष्पादिनौ तु अपूर्वभेदाभेदौ । तत्र प्रतिकर्मभेदमपूर्वभेदप्रसक्तौ तृतीयसिद्धः प्रधानाप्रधानविचारः पुनरपवादत्वेन आरप्स्यते । सत्यपि अवहन्त्यादीनां शब्दान्तरादिभिर्भेदे कर्माकाङ्क्षितदृष्टप्रयोजनपर्यवसानात् न क्रियाजन्यापूर्वान्तरोत्पत्तिः । यत्तु नियमापूर्वम्, तत् क्रियाकृतं न भवति इति न तया व्यपदिश्यते । तेन यत्रैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वम्, तत्रैव तद्भेदनिमित्तापूर्वभेदसिद्धिः । अस्य च विवेकार्थं यत् गुणप्रधानलक्षणं वक्ष्यते तदपवादार्थम् 'धर्ममात्रे तु' (२।१।४।९) 'स्तुतशस्त्रयोः' (२।१।५।१३) इति चाधिकरणद्वयं प्रस्तोष्यते । ततश्च आख्यातद्वैविध्ये विचारिते प्रसङ्गात् तृतीयं प्रकारम् अभिधायकत्वं प्रतिपादयितुं मन्त्रप्रस्तावः (२।१।६।३०–३१)। तल्लक्षणादीनि तु प्रसक्तानुप्रसक्तेन यावत्पादसमाप्ति । ततः शब्दान्तराभ्यासाभ्यां भेदमुक्त्वा पौर्णमास्यधिकरणेन अभ्यासापवादः करिष्यते समुदायानुवादत्वात् । ततः तदपवादार्थम् उपांशुयाज–आघाराग्निहोत्र–पशुसोमाधिकरणानि। ततः संख्या–संज्ञा–गुणैः भेदः। तावच्च गुणगतो विचारो यावत् प्रकरणान्तराधिकरणम्। (२।२।१०–१३। २४–२९, २।३।१–१०।१–२३)। ततः तन्न्यायानुवृत्तिः आ शाखाऽन्तराधिकरणात् (२।३।११–१४।२४–२८, २।४।१।१–७)। तत्र च षट्कातिरिक्तभेदकारणव्युदासः, संज्ञाऽभ्यासगुणप्रक्रियाणां च आशङ्कानिवृत्तिः इत्येतावान् भेदलक्षणार्थः । एष एव चार्थः अवश्यं वक्तव्यः अङ्गाङ्गित्वाद्यवधारणार्थम् । न चान्यस्य इदानीमवसरोऽस्ति इत्ययमेवाध्यायसंबन्धः। कुतः? '**शेषशेष्यादयः सर्वे कर्मभेदनिबन्धनाः । कार्ये ज्ञातेऽधिकारः स्यादुपदेशेऽतिदेशधीः ॥**' प्राक् तावत् प्रमाणलक्षणात् वेदार्थविचारात्मकत्वात् न कस्यचित् भेदलक्षणादेः प्रस्तावः इति उत्तरकालमारम्भः । तत्रापि शेषशेषित्वं प्रयोजकाप्रयोजकत्वं क्रमश्च भिन्नानां भवति इति न भेदलक्षणात् प्रागारभ्यते । तथा अधिकारः कर्मस्वरूपे अवधारिते तद्योग्यतया शक्यो निरूपयितुम् इति पश्चापि लक्षणानि प्रतीक्षते । तथा उत्तरः षट्कः अतिदेशविषयत्वात् उपदेशज्ञानाधीनसिद्धिः समस्तः समस्तं पूर्वषट्कमपेक्षते। ततश्च परिशेषसिद्धोऽयं भेदलक्षणस्य संबन्धः इति आरभ्यते ।

**सोम**— प्रमाणनिरूपणानन्तरं धर्मस्वरूपविशेषस्य प्रथमं जिज्ञासितत्वात् तदर्थं भेदनिरूपणमेव कर्तव्यम्, न तु विनियोगादिनिरूपणम् । भावनाभेद एवाध्यायार्थः। अपूर्वभेदधात्वर्थभेदौ तु तत्र फलतया गुणतया च अन्यथासिद्धौ । २।१।१.

**वि**— 'उपोद्घातः कर्मभेदमानं तस्यापवादगीः । प्रयोगभेद इत्येते द्वितीयाध्यायपादगाः ॥' द्वितीयाध्यायस्य प्रथमे पादे आख्यातमेव अपूर्वबोधकम् अपूर्वसद्भावश्च इत्यादिकः कर्मभेदचिन्तोपयुक्त उपोद्घातो वर्णितः । द्वितीये धातुभेदपुनरुक्त्यादिभिः कर्मभेदः । तृतीये



रथंतरादीनां कर्मभेदप्रामाण्यापवादः। चतुर्थे नित्यकाम्ययोः प्रयोगयोर्भेदः ।

**भाट्ट**— एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते । यद्यपि च तदपि एतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव , तथापि एकत्वानेकत्वादिरूपेण अबुद्धत्वात् इह तेन रूपेण निरूप्यते । अत्र च शब्दान्तरादिषट्प्रमाणकभावनाभेद एवाध्यायार्थः । धात्वर्थभेदस्तु तत्सिद्ध्यर्थः क्वाचित्को निरूप्यते। अपूर्वभेदोऽपि फलत्वेन इति न तौ अध्यायार्थौ ।

**अथ द्वितीयाध्यायस्य प्रथमपादार्थः** उपोद्घातः प्रसक्तानुप्रसक्तं च । **भा.** २।२।१ । उपोद्घातः धात्वर्थकरणत्वम् । तच्च स्तुतशस्त्राधिकरणान्तैः (१–५) अधिकरणैः सपरिकरं विचारितम् । तत्प्रसक्तं मन्त्रगताख्याताविधायकत्वम् (६)। तदनुप्रसक्तं मन्त्रलक्षणादि (७–१८)। **सोम.** २।१।१ '। द्वितीयादिदशमान्तानामध्यायानां संगतिः, सामान्यशास्त्रस्य विशेषशास्त्रातिरिक्तविषयत्ववत् बाधेन अतिदेशस्य बाधितेतरविषये संकोचकरणेन बाधनिरूपणस्यापि विशेषातिदेशनिरूपणात्मकतया दशमान्तैरेव उपदेशातिदेशसंस्थितिः । **सोम.** ११।१।१.

२।१।१।१ प्रतिपदाधिकरणम् ।

२।१।१।१–४ भावार्थाधिकरणम् ।

२।१।२।५ अपूर्वाधिकरणम् ।

२।१।३।६–८ तानिद्वैधाधिकरणम् ।

२।१।४।९–१२ संमार्गाधिकरणम् ।

२।१।४।१२ सूत्रे भाष्यवार्तिकयोः सक्तुन्यायः ।

२।१।५।१३–२९ स्तुतशस्त्राधिकरणम् । अत्रैव इन्द्रमहेन्द्राधिकरणम् ।

२।१।६।३०–३१ विधिमन्त्राधिकरणम् ।

२।१।७।३२ मन्त्रलक्षणम् ।

२।१।८।३३ ब्राह्मण–( वेदभागः– )लक्षणम् ।

२।१।९।३४ ऊहप्रवरनामधेयानां नास्ति मन्त्रत्वम् ।

२।१।१०।३५ ऋग्लक्षणम् ।

२।१।११।३६ सामलक्षणम् ।

२।१।१२।३७ यजुर्लक्षणम् ।

२।१।१३।३८–४५ निगदाधिकरणम् ।

२।१।१४।४६ एकवाक्यताऽधिकरणम् ।

२।१।१५।४७ वाक्यभेदाधिकरणम् ।

२।१।१६।४८ अनुषङ्गाधिकरणम् ।

२।१।१७।४९ व्यवेताननुषङ्गाधिकरणम् ।

**अथ द्वितीयाध्यायस्य द्वितीयः पादः** । प्रसक्तानुप्रसक्तादौ गते अधुना शब्दान्तरादिभिः भेदो लक्षणार्थोऽभिधीयते । वा. २।२।१।१। उपोद्घातः पूर्वस्य पादस्यार्थः, अस्य तु कर्मभेदः इति पादभेदो द्रष्टव्यः । **सोम.**

२।२।१।१ शब्दान्तराधिकरणम् ।

२।२।२।२ अभ्यासाधिकरणम् ।

२।२।३।३–८ पौर्णमासीन्यायः ।

२।२।४।९–१२ उपांशुयाजाधिकरणम् ।

२।२।५।१३–१६ आघाराग्निहोत्राधिकरणम् ।

२।२।६।१७–२० पशुसोमाधिकरणम् ।

२।२।७।२१ संख्याऽधिकरणम् ।

२।२।८।२२ संज्ञाऽधिकरणम् ।

२।२।९।२३ गुणन्यायः ।

२।२।१०।२४ गुणप्रत्युदाहरणम् ।

२।२।११।२५–२६ इन्द्रियकामाधिकरणम् ।

२।२।१२।२७ रेवत्यधिकरणम् ।

२।२।१३।२८–२९ सौभराधिकरणम् ।

**अथ द्वितीयाध्यायस्य तृतीयः पादः । सोम**– पूर्वस्मिन् पादे कर्मभेदः प्रतिपादितः । अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः । २।३।१.

२।३।१।१–२ रथंतराधिकरणम् ।

२।३।२।३ अवेष्ट्यधिकरणम् ।

२।३।३।४ आधानाधिकरणम् ।

२।३।४।५–११ दाक्षायणयज्ञाधिकरणम् ।

२।३।५।१२–१५ आलम्भनिर्वापन्यायः ।

२।३।६।१६–१७ वत्सालम्भाधिकरणम् ।

२।३।७।१८ चरूपधानाधिकरणम् ।

२।३।८।१९ त्वाष्ट्रपात्नीवताधिकरणम् ।

२।३।९।२० अंशवदाभ्याधिकरणम् ।

२।३।१०।२१–२३ अग्न्यधिकरणम् ।

२।३।११।२४ प्रकरणान्तरन्यायः ।

२।३।१२।२५ फलसंस्कार्याधिकरणम् ।

२।३।१३।२६ प्रकरणान्तरप्रत्युदाहरणन्यायः ।

२।३।१४।२७-२९ आग्नेयस्तुत्यर्थताऽधिकरणम् ।

**अथ द्वितीयाध्यायस्य चतुर्थे पादे** प्रयोगभेदः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वम् । पूर्वपादे कर्मभेदे सहायत्वेन उक्तानुपादेयसमभिव्याहारेण प्रयोगभेदव्युत्पादनात् आनन्तर्यम् । **सोम.** २।४।१.

२।४।१।१-७ यावज्जीवाधिकरणम् ।

२।४।२।८-३३ शाखाऽन्तराधिकरणम् ।

**अथ तृतीयोऽध्यायः** । नानाकर्मलक्षणं वृत्तम्, अनन्तरं शेषलक्षणं वर्तयिष्यामः । कः शेषः, केन हेतुना शेषः, कथं च विनियुज्यते इति । श्रुत्यादीनि च विनियोगे कारणानि इति वक्ष्यते, तेषां च बलवदबलवत्ता । एतत् तात्पर्येण, अन्यत् उपोद्घातादिना । **भा.** ३।१।१।१.

**वा**--तत्र ' कः शेषः ' इति स्वरूपाभिधानप्रतिज्ञा । ' केन हेतुना ' इति येनासौ शेष इत्युच्यते । तस्य च कारकहेतोः तद्धर्मस्यैव लक्षणं वक्ष्यते इति प्रतिज्ञायते । तथा विनियोगप्रकारज्ञानं क्व शेषिणि कः शेषः, कतमेन प्रमाणेन, कतमत् प्रमाणान्तरं बाधित्वा विना बाधेन वा विनियुज्यते । तथा विनियोजकश्रुत्यादिषट्कस्वरूपज्ञानम्, तेषां बलाबलज्ञानं च । तत्र प्रथमे पादे तावत् श्रुतिविनियोगः किञ्चिच्च प्रासङ्गिकम् । द्वितीयपादादौ लिङ्गविनियोगः । तृतीयपादादौ तदेव प्रमाणद्वयमुपन्यस्य उपक्रमोपसंहारद्वारेण एकवाक्यत्वेन सिद्धान्तस्थापनात् विनाऽपि वाक्यग्रहणेन ' प्रायदर्शनात् ' ( ३।३।१।२ ) इति वाक्यविनियोगमुक्त्वा प्रकरणक्रमसमाख्याभिः विनियोगः सूत्रोपबद्ध एव वक्ष्यते ( ३।३।४-५-६ अधि० ) । ततो बलाबलाधिकरणम् ( ३।३।७।१४ ) । ततः परं च श्रुतिलिङ्गवाक्यानां प्रकरणेन सह विरोधाविरोधचिन्ता तावत्, यावत् ' तुल्यः सर्वेषां पशुविधिः ' इति । ( ३।३।८।१५-३।४।१-१७, ३।५।१-२०, ३।६।१-६, तुल्यः सर्वेषाम् इति तु ३।६।७।१८ ) । ' ततश्चतुर्णाम् ( श्रुतिलिङ्गवाक्यप्रकरणानाम् ) क्रमेण सह पुनः सैव चिन्ता यावत् शास्त्रफलं प्रयोक्तरि ' इति (३।६।७-१६,३।७।१-७ शास्त्रफलम् इति तु ३।७।८)। ततः उपोद्घातपूर्वकं पञ्चभिः सह समाख्यायाः विरोधाविरोधविषयविचारेण अध्यायपरिसमाप्तिः । ' एतत् तात्पर्येण अन्यत् उपोद्घातादिना उपोद्घातप्रसक्तानुप्रसक्तेः इति वक्ष्यमाणमनुसंकीर्त्यते । प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते । सर्वं चैतत् शेषलक्षणप्रतिज्ञयैव पिण्डीकृतं प्रतिज्ञातम्, इति न भेदेन सूत्रितम् । **वा.** पृ. ६४७-६५३.

**सोम**-- हेतुहेतुमद्भावः अध्याययोः संगतिः । शेषत्ववत् शेषित्वस्यापि अवश्यविज्ञेयतया शेषशेषिभावस्यैव अध्यायार्थत्वम् । ३।१।१, तृतीये विनियोगव्यापारः व्युत्पाद्यः विनियोगविधिप्रवृत्तेः उत्पत्तिविधिप्रवृत्तिपूर्वकत्वात् द्वितीयतृतीययोः पौर्वापर्यम् । ५।१।१.

**वि**— ' श्रुतिर्लिङ्गं च वाक्यादि विरोधः प्रतिपत्तयः । अनारभ्योक्तिबह्वर्थस्वाम्यर्था अष्टपादगाः ॥ ' प्रथमे पादे शेषत्वबोधकानां श्रुतिलिङ्गादीनां मध्ये श्रुतिर्विचारिता । द्वितीये लिङ्गम् । तृतीये वाक्यप्रकरणादि । चतुर्थे निवीतोपवीतादिषु अर्थवादत्वविधित्वादिनिर्णयहेतुः श्रुत्यादेः परस्परविरोधसद्भावः । पञ्चमे प्रतिपत्तिकर्माणि । षष्ठे अनारभ्याधीतानि । सप्तमे बहुप्रधानोपकारकप्रयाजादीनि । अष्टमे याजमानानि । प्रस्तावनायां श्लो. १५, ' द्वितीये कर्मणां भेदे सिद्धे भिन्नक्रियास्वयम् । बुभुत्सितः शेषशेषिभावोऽतोऽत्राभिधीयते ॥ ' ३।१.

**भाट्ट**— षट्प्रमाणके भेदे निरूपिते संप्रति शेषिनिरूपितं शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां च तत् संभवति नाभिन्नानाम्, इति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोः मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता, तथापि अङ्गत्वसामानाधिकरण्येन हेतुतामादायैव संगत्युपपत्तौ अवच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चित् विरोधः । अंशे एव हेतुत्वम् अंशान्तरस्य तु तत्प्रसङ्गान्निरूपणम् इत्यपि वा बोध्यम् । अङ्गत्वमेव चाध्यायार्थः । अङ्गित्वं तु अर्थात् । तदपि च श्रुत्यादिषट्कप्रमाणकम्, अतिदेशप्रमाणकस्य इहाविचार्यत्वात् । तच्च अनेकप्रकारं विचार्यते । अङ्गत्वलक्षणम्, शेषपदशक्यताऽवच्छेदकम्, अङ्गाङ्गितयोरवच्छेदकम्, श्रुत्यादीनि षट् अङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलम्, विरोधश्च क्वास्ति क्व नास्ति इत्यादि ।



**तृतीयाध्यायस्य प्रथमे पादे** श्रुतेः प्राबल्यात् श्रुतिविनियोगप्रकारः प्राधान्येन प्रतिपाद्यते । **सोम.** ३।१।१.

३।१।१।१ शेषलक्षणप्रतिज्ञा ।

३।१।२।२ शेषत्वनिर्वचनम् । **भा**– इह सूत्रे शेषस्य लक्षणं येन च हेतुना शेष इत्युच्यते, तदुभयमाख्यायते । **शा**– अनेन सूत्रेण शेषस्वरूपं हेतुश्च श्रुत्यर्थाभ्यामुच्यते । श्रुत्या हेतुरुच्यते परार्थत्वात् शेष इति, स्वरूपं तु अर्थात् ।

३।१।३।३-६ बादर्यधिकरणम् । **वा**– एवं चतुःसूत्रेणाधिकरणेन समस्तः शेषत्वविषयः प्रतिपादितः ।

३।१।४।७-१० तेषामर्थाधिकरणम् । **वा**– उक्तः सहेतुः सविषयश्च शेषः । इदानीं कथं च विनियुज्यते इत्ययमंशो विचार्यते । तत्र त्रिषु अधिकरणेषु क्रमेण संस्कारद्रव्यगुणानां विनियोगः कथ्यते । तत्रापि किल प्रथमे लिङ्गेन, द्वितीये वाक्येन, तृतीये तु श्रुत्या विनियोग इति केचित् । तत्तु आचार्यः ( शबराचार्यः ) नेच्छति । श्रुतिविनियोग एवात्र पादे, लिङ्गादिविनियोगस्तु द्वितीयादिपादात् प्रभृति भविष्यति इत्युक्तम् ।

३।१।५।११ द्रव्याधिकरणम् ।

३।१।६।१२ अरुणाऽधिकरणम् ।

३।१।७।१३-१५ ग्रहन्यायः । **वा**– एवं यथासंयोगं शेषविनियोगः स्थितः । इदानीं तद्विशेषचिन्ता । संस्कारचिन्ता सप्तमे, द्रव्यचिन्ता अष्टमे, गुणचिन्ता नवमे ।

३।१।८।१६-१७ चमसाधिकरणम् ।

३।१।९।१८ आनर्थक्यतदङ्गन्यायः ।

३।१।१०।१९-२० अभिक्रमणाधिकरणम् । **वा**– एवं संस्कारद्रव्यगुणा विचारिताः । इदानीं यत् कर्म कर्मसंबन्धित्वेन श्रूयमाणमर्थात् संस्कारत्वं प्रतिपत्स्यते, तद् विचार्यते ।

३।१।११।२१ उपवीताधिकरणम् । **वा**— सिद्धे कर्मणां कर्मसमवाये अधुना अवान्तरप्रकरणमहाप्रकरणयोः कतरद् विनियोजकमिति उपवीतमुदाहृतम् ।

३।१।१२।२२ वारणाधिकरणम् । **वा**– आनर्थक्यात् तदङ्गेषु इत्यस्यापवाद आरभ्यते ।

३।१।१३।२३ वार्त्रघ्न्य (ध्नी– अ) धिकरणम् । **वा**– यथासंयोगं निवेशार्थमारम्भः । क्रमविनियोगोऽत्र । **सु**– यज्ञावचरवाक्येन पात्राणां प्रकरणात् आधानाङ्गत्वबाधे अभिहिते अनुवाक्यानामपि क्रमावगताज्यभागाङ्गत्वबाधस्य प्रसक्तस्य अपवादायैतदधिकरणम् ।

३।१।१४।२४-२५ आनन्तर्याधिकरणम् । **वा**– क्रमविनियोगः अनन्तरमवस्थितः । इदानीं तदपवादः क्रियते ।

३।१।१५।२६-२७ उपसंहारन्यायः । **वा**– यथासंयोगं धर्मव्यवस्था उक्ता । स तु संयोगः किमेकदेशेनापि भवति, उत समस्तेनैव इति विचारः ।

**अथ तृतीयाध्यायस्य द्वितीयः पादः** । **वा**– इदानीं लिङ्गविनियोगः प्रस्तूयते । तत्सिद्धिसूत्रे तु सिद्धे गौणे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तित्वं च व्याख्यातम्, इत्ययं विचारः अर्थात् पूर्वं प्रत्येतव्यः । **सोम**— श्रुतिविनियोगलिङ्गविनियोगरूपार्थभेदात् पादभेदः । लिङ्गस्य श्रुतिकल्पकतया विनियोजकत्वेन लिङ्गविनियोगस्य श्रुतिविनियोगोपजीवकत्वात् प्रबलश्रुतिविनियोगविचारानन्तरं तदपेक्षया दुर्बललिङ्गविनियोगविचारस्य अवसरप्राप्तत्वात् पादयोः आनन्तर्यम् ।

३।२।१।१-२ बर्हिर्न्यायः ।

३।२।१।२ सूत्रे पूषानुमन्त्रणमन्त्रन्यायः ।

३।२।२।३-४ ऐन्द्रीन्यायः ।

३।२।३।५-९ आह्वानाधिकरणम् । **वा**--- एवं तावत् मुख्यं कार्यं मन्त्राणामिति सापवादमवस्थितम् । अतःपरमेतद्विचार्यते ( अधिकरणचतुष्टयेन ) क उत्सर्गस्य विषयः को वा अपवादस्येति । **सु**—को लिङ्गस्य विषयः, को वा वाक्यस्येति विचार्यते ।

३।२।४।१० उत्थानवाग्विसर्गाधिकरणम् ।

३।२।५।११-१५ सूक्तवाकन्यायः । **वा**-- ऐन्द्राधिकरणस्यापवादः । **सु**– सूक्तवाकस्य वचनविनियोज्यत्वात् प्रसक्तापवादविषयत्वस्यापि उत्सर्गविषयतैव इत्यभिधानार्थमिदमधिकरणम्, आपवादिकी तु अवान्तरसंगतिः ।

३।२।६।१६-१९ सूक्तवाकविभागन्यायः । **वा**– अधिकारमुपजीवयन् विचारयति । **सु**– पूर्वोक्तापवाद-

समर्थनाय इदमधिकरणम् । **सोम–** कालार्थसंयोगे निभज्यविनियोगस्याप्राप्तेः अङ्गाङ्गित्वमुपजीव्य अयं निचारः प्रवर्तते ।

३।२।७।२० लिङ्गक्रमसमाख्यानाधिकरणम् । **सु–** श्रुतेर्लिङ्गसापेक्षत्वे पूर्वाधिकरणेनोक्ते प्रसङ्गात् लिङ्गस्यापि जघन्यप्रमाणापेक्षत्वमभिधीयते ।

३।२।८।२१–२४ आग्नेयीन्यायः । **सु–** लिङ्गस्य सामान्यसंबन्धसापेक्षस्य विनियोजकत्वे अभिहिते प्रसङ्गात् लिङ्गवत्याः श्रुतेरपि सामान्यसंबन्धापेक्षया विनियोजकत्वमभिधीयते ।

३।२।९।२५–२६ लिङ्गसमाख्यानाधिकरणम् । **सु–** लिङ्गश्रुत्योः सामान्यान्वयसिद्ध्यर्थापेक्षत्वात् दुर्बलक्रमप्रकरणाद्यनुरोधात् संकोचलक्षणे बाधे अनन्तराधिकरणद्वयेनोक्ते अत्रापि सामान्यान्वयादिसिद्ध्यै भक्षानुवाकसमाख्यापेक्षलिङ्गबाधस्य प्रसक्तस्यापवादः ।

३।२।१०।२७ गुणाभिधानाधिकरणम् । **सु–** पूर्वापवादोऽयम् ।

३।२।११।२८–२९, ३९, ४४ इन्द्रपीताधिकरणम् । **सु–** मन्द्रादिमन्त्रो भक्षणे विनियुज्यते इत्युक्ते प्रसङ्गात् किमैन्द्रसोमभक्षणेष्वेव विनियुज्यते, सर्वेषु वा सोमभक्षणेषु इति चिन्तार्थम् आ पादसमाप्तेः एकमधिकरणम् ( अन्तरागर्भिणीत्वेन तु मध्ये अनेकान्यपि अधिकरणानि ) ।

३।२।१२।३०–३२ पुनरभ्युन्नीताधिकरणम् । **वा–** क्त्वाचिन्तया ऊहविषयत्वं चिन्तयति । **सु–** निष्कर्षसामर्थ्यात्मकलिङ्गहेतुकविशेषचिन्ताऽऽत्मकमिदम् ।

३।२।१३।३३–३४ पूर्वदेवताऽनुपलक्षणाधिकरणम् । **वा–** पूर्वापवादार्थमारम्भः ।

३।२।१४।३५–३६ त्वष्ट्रधिकरणम् ।

३।२।१५।३७ त्रिंशदधिकरणम् । **वा—** अधिकरणातिदेशोऽयम् ।

३।२।१६।३८ अनुवषट्काराधिकरणम् ।

३।२।१६।३९ ( वि. ) ज्योतिष्टोमे अनैन्द्राणाममन्त्रकं भक्षणम् ।

३।२।१७।४०–४१ ऐन्द्राग्नसोमभक्षणममन्त्रकम् ।

३।२।१८।४२–४३ छन्दोऽधिकरणम् । **सु––** पूर्वाधिकरणोक्तसापेक्षसमासायोगापवादार्थमधिकरणम् ।

**अथ तृतीयाध्यायस्य तृतीयः पादः ।** **वा—** एवं लिङ्गविनियोगमुपवर्ण्य वाक्यविनियोगः प्रस्तूयते । **सु––** वाक्यस्य लिङ्गद्वारा श्रुतिकल्पनेन विनियोगहेतुत्वात् लैङ्गिकविनियोगप्रकारचिन्तनानन्तरं वाक्यीयविनियोगप्रकारचिन्ता । **कौ––** लिङ्गकल्पकप्रमाणगम्यविनियोगोपयोगिचिन्तनं पादार्थः । तानि च ( प्रमाणानि ) वाक्यप्रकरणस्थानसमाख्यारूपाणि, न तु श्रुतिलिङ्गे अपि ।

३।३।१।१–८ उपक्रमाधिकरणम् । **वा–** व्यवधारणकल्पनया अन्यतरपक्षावधारणं कार्यमित्यारभ्यते । **कौ–** वाक्यगम्यविनियोगोपयोगि– उद्देश्यताऽवच्छेदकविचारणमत्र ।

३।३।२।९ गुणमुख्यव्यतिक्रमन्यायः ।

३।३।३।१० ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः । **वा–** इदानीं यानि वेदान्तरेषु श्रूयन्ते प्रधानानि, तानि केन ( वेदेन ) उपदेष्टव्यानि इति विचार्यते ।

३।३।४।११ प्रकरणाधिकरणम् । **वा–** एवं तावत् श्रुतिलिङ्गवाक्यानि प्रधानज्ञेयसंकीर्णविविक्तविषयाणि प्रत्युदाहरणं व्याख्यातानि । इदानीं बलाबलचिन्ता प्रत्यासन्ना, इति उत्तराण्यपि त्रीणि प्रमाणानि स्वरूपेण विनियोगसामर्थ्येन च दर्शयति । तत्र प्रकरणं विनियोगाज्ञानसंशयविपर्ययाणामन्यतमेन उपन्यस्यति ।

३।३।५।१२ क्रमाधिकरणम् ( क्रमस्यैव स्थानमिति नामान्तरम् ) ।

३।३।६।१३ समाख्याऽधिकरणम् ।

३।३।७।१४ बलाबलाधिकरणम् । अत्र विस्तरे ७ श्रुतिलिङ्गाधिकरणम्, ८ लिङ्गवाक्याधिकरणम्, ९ वाक्यप्रकरणाधिकरणम्, १० प्रकरणक्रमाधिकरणम्, ११ क्रमसमाख्याऽधिकरणम्, द्वादशं च बाधयोग्यताऽधिकरणम् इति पृथगेव अधिकरणानि उपन्यस्तानि ।

श्रुतिलिङ्गाधिकरणम् । भा. पृ. ८२१ आरभ्य ।

श्रुतिवाक्ययोः । वा. पृ. ८३५, ८३८ ।

श्रुतिप्रकरणयोः । वा. पृ. ८३५, ८३८ ।

श्रुतिक्रमयोः । वा. ८३६, ८३८ ।

श्रुतिसमाख्ययोः । वा. पृ. ८३६, ८३८ ।



लिङ्गवाक्ययोः । भा. पृ. ८४७–८५२, वा. ८३८ ।

लिङ्गप्रकरणयोः । वा. पृ. ८३६, ८३९ ।

लिङ्गक्रमयोः । वा. पृ. ८३६, ८३९ ।

लिङ्गसमाख्ययोः वा. पृ. ८३६, ८३९ ।

वाक्यप्रकरणयोः । भा. पृ. ८५१–८५५, वा. ८३९ ।

वाक्यक्रमयोः । वा. पृ. ८३७, ८३९ ।

वाक्यसमाख्ययोः । वा. पृ. ८३७, ८३९ ।

प्रकरणक्रमयोः । भा. पृ. ८५४–८५५ । वा. ८५४, ८३९ ।

प्रकरणसमाख्ययोः । वा. पृ. ८३९ ।

क्रमसमाख्ययोः । भा. पृ. ८५५–८५८ । वा. ८५५, ८४० ।

श्रुत्योः विरोधोदाहरणम् । वा. पृ. ८४० ।

लिङ्गयोः । वा. पृ. ८४० ।

वाक्ययोः । वा. पृ. ८४० ।

प्रकरणयोः । वा. पृ. ८४० ।

क्रमयोः । वा. पृ. ८४० ।

समाख्ययोः । वा. पृ. ८४० ।

श्रुतिलिङ्गादिषु क्वचित् विपरीतोऽपि बाध्यबाधकभावः । वा. पृ. ८४१ ।

बाधस्वरूपविचारः । भा. पृ. ८५८–८६२, वा. ।

लिङ्गवाक्यादीनां प्राबल्यदौर्बल्ये बीजम् । वा. पृ. ८३१–८३५ ।

३।३।८।१५–१६ अहीनाधिकरणम् ।

३।३।९।१७–१९ द्वित्वबहुत्वाधिकरणम् । **वा––** पूर्ववदेव विचारः । एतावत्तु भिद्यते, पूर्वत्र प्रधानान्तरेण प्रकृतासमर्थशब्दाभिधेयेन सह संबन्ध आसीत्, इह तु गुणेन सह यजमानद्वित्वादिना कथञ्चिदाशङ्कितप्रकृतसंबन्धेन ।

३।३।१०।२०–२३ जाघनीन्यायः । **वा—** उत्कर्षबुद्धेरपवादः प्रस्तूयते । **सु—** निमित्तत्वेन उद्देश्यभूतयोः द्वित्वबहुत्वयोः प्रकृतकर्मसंयोगात् तत्संयुक्तानां पत्नीसंयाजानामपि उत्कर्षे प्रसक्तमपवदितुं चिन्तैषा इति विरोधाविरोधचिन्ताफलभूतोत्कर्षानुत्कर्षचिन्तैषा ।

३।३।११।२४–३१ संतर्दनाधिकरणम् । **वा–** इह वाक्यप्रकरणयोर्विरोधाविरोधचिन्ता ।

३।३।१२।३२–३३ प्रवर्ग्यन्यायः ।

३।३।१३।३४ पौष्णपेषणाधिकरणम् । **वा–** संतर्दनादिन्यायेनैव वाक्यप्रकरणविरोधे सति विकृत्यर्थत्वं सिद्धम् । उत्तरविवक्षाऽर्थं प्रारभ्यते ।

३।३।१४।३५–३८ पौष्णं पेषणं चरावेव ।

३।३।१५।३९–४९ पौष्णं पेषणं पूषमात्रदेवत्ये चरौ ।

**अथ तृतीयाध्यायस्य चतुर्थः पादः ।** **वा—** स एव श्रुत्यादित्रितयस्य प्रकरणेन सह विरोधाविरोधविचारः । **सोम––** अत्र प्रकरणेन क्रत्वर्थत्वं प्रायेण प्रतिपाद्यते इति पादान्तरत्वमित्याहुः ।

३।४।१।१–९ निवीताधिकरणम् । **सोम–** यद्यपि विध्यर्थवादचिन्ता अस्मिन्नध्याये न संगता गतार्था च, तथापि अध्यायसंगतायाः मनुष्यधर्मत्वादिचिन्तायाः क्त्वाचिन्तात्वस्फोरणार्थं तदुपन्यासः ।

**वि.** ३।४।२।१०–११ षट्सूत्री । उपवीतस्य दर्शपूर्णमासाङ्गता ।

**वि.** ३।४।३।१२ षट्सूत्री–उपवीतस्य विधिः ।

**वि.** ३।४।४।१३–१४ षट्०उपवीतोदग्रत्वयोरनुवादः ।

**वि.** ३।४।५।१५ षट्०– उपरिधारणन्यायः ।

३।४।२।१० दिग्विभागाधिकरणम् ।

३।४।३।११ परुषिदिताधिकरणम् ।

३।४।४।१२–१३ अनृतवदनवर्जनन्यायः ।

३।४।४।१२–१३ कर्त्रधिकरणम् ( इदं भाष्यवार्तिकयोः प्रासङ्गिकम्, न स्वतन्त्रम् ) ।

३।४।५।१४–१६ जञ्जभ्यमानाधिकरणम् । **वा–** इदानीं लिङ्गवाक्याभ्यां सह प्रकरणं विरुध्यते, न विरुध्यते इति विचार्यते । **सु–** तीर्थस्नानोदाहरणे लिङ्गवाक्याभ्याम्, मन्त्रोदाहरणे तु वाक्येनैव । शुद्धक्रतुधर्मत्वापवादोऽत्र ।

३।४।६।१७ अवगोरणन्यायः ।

३।४।७।१८–१९ संवादाधिकरणम् ।

३।४।८।२०–२४ हिरण्यधारणन्यायः । **वा–** इदानीम् अप्रकरणाधीतानि श्रुतिलिङ्गवाक्यानि प्रकरणसमवायं गच्छन्ति, न वा इति विचार्यते ।

३।४।९।२५–२७ जयादिन्यायः । शा– क्रत्वर्थपुरुषार्थविचारप्रसङ्गात् पूर्वाधिकरणे अनारभ्यवादः प्रस्तुतः, तत्प्रस्तावादेव अनारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते ।

३।४।१०।२८–२९ अश्वप्रतिग्रहेष्टिः । वा– लौकिकवैदिकप्रधानसंबन्धविचारप्रसङ्गात् यत्र निमित्तानां लौकिकवैदिकत्वाशङ्का, तानि विचार्यन्ते । शा– अनारभ्यवादस्यैव क्रत्वर्थपुरुषार्थत्वविचारः ।

३।४।११।३०–३१ अश्वप्रतिग्रहेष्ट्यधिकरणम् । इष्टिर्दातुरेव । सोम– प्रसक्तानुप्रसक्तमिदम् ।

३।४।१२।३२–३३ वमनाधिकरणम् ।

३।४।१३।३४–३६ सोमेन्द्रश्रुरुः यजमानपानन्यापदि ।

३।४।१४।३७–४१ सर्वप्रदानाधिकरणम् । शा– वमनस्य हविःशेषविषयत्वात् तत्प्रसङ्गात् हविःशेषो हृदयमागतः इति अतःप्रभृति आ पञ्चमपादपरिसमाप्तेः हविःशेषविषया कथा वर्तिष्यते । प्रथमं तावत् (उपोद्घातत्वेन) शेषसद्भाव एव प्रतिपाद्यते ।

३।४।१५।४२–४५ स्विष्टकृदधिकरणम् ।

३।४।१६।४६–४७ प्रथमोपस्थितन्यायः ।

३।४।१७।४८–५१ चतुर्धाकरणाधिकरणम् ।

**अथ तृतीयाध्यायस्य पञ्चमः पादः । सोम–** शेषकार्याणि सर्वेभ्यः कर्तव्यानि इति पूर्वपादोक्तस्यापवादः अत्र प्राधान्येन क्रियते इति पादान्तरत्वमानन्तर्यम् (पादयोः) **चेत्येके । सर्वप्रदानाधिकरणे** सामान्यतः शेषसद्भावे उक्ते तद्विशेषचिन्तनात् पादान्तरत्वमानन्तर्यं **चेत्यन्ये ।**

३।५।१।१–१२ उपांशुयाजद्रव्यादाज्यात् स्विष्टकृदिडं नावदातव्यम् ।

३।५।२।१३ साकंप्रस्थायीयाधिकरणम् । वा– अमावास्यायां नित्यं स्विष्टकृदिडं ( स्विष्टकृत् इडा च अनयोः समाहारः । समाहारपदार्थस्तु न विवक्षितः । के. ) सांनाय्यादवदीयते, तद्गुणविकारश्च साकंप्रस्थायीयः, अत इहापि अवदातव्यमित्येतावता विशेषेण अतुल्यत्वाशङ्कायामतिदेशः क्रियते ।

३।५।३।१४–१५ सौत्रामण्यां शेषकार्यं नास्ति ।

३।५।४।१६–१७ सर्वपृष्ठेष्टिः ( शेषकार्यं तन्त्रेण ) । वा– इदानीं सत्सु शेषकार्येषु तद्विशेषश्चिन्त्यते । यद्यपि अयमेकादशानुगुणो विचारः, तथापि अत्र शेषकार्यप्रसङ्गात् शेषशेषिविचारात्मकत्वाच्च क्रियते ।

३।५।५।१८ ऐन्द्रवायवन्यायः । वा– 'सोमेऽवचनाद् भक्षो न विद्यते' ( ३।५।१९ ) इति सामान्येन भक्षविचारं कृत्वा विशेषविचारोऽयं कर्तव्य आसीत् । यत्तु प्रथमतरं क्रियते, तत् पूर्वाधिकरणापवादत्वेन शीघ्रतरोपस्थानात् ।

३।५।६।१९–२१ ज्योतिष्टोमे सोमशेषभक्षविधानात् अस्ति सोमभक्षः ।

३।५।७।२२ ज्योतिष्टोमे चमसिनां सोमशेषभक्षः ।

३।५।८।२३–२६ उद्गातृचमसभक्षाधिकरणम् । वा– इदानीं वषट्कारहोमाभिषवभक्षान् अनुक्त्वैव प्रसङ्गात् समाख्याभक्षविशेषानुसरणमेव तावत् करोति । ( स्मृतस्य उपेक्षाऽनर्हत्वं प्रसङ्गः ) ।

३।५।९।२७–३० ग्रावस्तुतोऽपि हारियोजने सोमभक्षः । सर्वशब्दन्यायः । वा– गतः समाख्याभक्षः, इदानीं वाचनिकमेवानुगच्छति ।

३।५।१०।३१ ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम् ।

३।५।११।३२ ज्योतिष्टोमे होमाभिषवौ सोमभक्षे निमित्तान्तरम् ।

३।५।१२।३३–३५ ज्योतिष्टोमे सोमभक्षनिमित्तानां समुच्चयः ।

३।५।१३।३६–३९ ज्योतिष्टोमे एकपात्रे बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः । वा– एकस्मिन् पात्रे अनेको भक्षयिता साधितः । इदानीं तद्गताः क्रमादिविशेषाः प्रतिपाद्यन्ते ।

३।५।१४।४० ज्योतिष्टोमे एकपात्रे अनेकैः सोमभक्षणे अनुज्ञाप्यैव भक्षयितव्यम् ।

३।५।१५।४१ ज्योतिष्टोमे एकपात्रे सोमभक्षे अनुज्ञापनाऽनुज्ञे वैदिकमन्त्रेणैव ।



३।५।१६।४२ ज्योतिष्टोमे सोमभक्षे अनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः ।

३।५।१७।४३ ज्योतिष्टोमे सोमभक्षः अनुज्ञापूर्वकः एकपात्राणामेव ।

३।५।१८।४४–४६ ऋतुयाजेषु स्वयं याज्यापाठे यजमानस्य वषट्कारनिमित्तोऽस्ति भक्षः ।

३।५।१९।४७–५१ फलचमसाधिकरणम् ।

३।५।२०।५२ दशपेयन्यायः ।

**अथ तृतीयाध्यायस्य षष्ठः पादः । सु–** अस्मिन् पादे अनारभ्याधीतानामङ्गत्वविचारः प्राधान्येन क्रियते इति पादान्तरत्वम् । हिरण्यभरण– ( ३।४।८ ) जयादि– ( ३।४।९ ) अश्वप्रतिग्रहेष्टि– ( ३।४।१०–११ ) पानव्यापच्चीनाम् ( ३।४।१२ ) अनारभ्याधीतानां विचारे प्रस्तुते वमनस्य हविःशेषविषयत्वात् तत्प्रसङ्गागतहविःशेषविषयविचारसमाप्तौ पुनः अनारभ्यविचारस्यैव बुद्धौ विपरिवर्तनात् आनन्तर्यं च ।

३।६।१।१–८ अनारभ्याधिकरणम् । वा– अनारभ्याधीतानां प्रकृतिलिङ्गसंयुक्तानां प्रकरणसंबन्धे सति किं प्रकृतिप्रकरणसंबन्धः, उत सर्वार्थता इति विचारः ।

३।६।२।९ सामिदश्यन्यायः । वा– अपवादाधिकरणमेतत् । तत्र पूर्वाधिकरणेनैव सामिधेनीसामिदश्यवादस्य प्रकृत्यर्थत्वे प्रकरणाधीतेन पाञ्चदश्येन सह विकल्प इति विशेषाशङ्कां निवर्तयति ।

३।६।३।१० गोदोहनाधिकरणम् ।

३।६।४।११–१३ पवमानेष्टिन्यायः । वा– अनारभ्यवादप्रस्तावेन अग्न्याधेयस्य प्रथमं तावत् अनारभ्यवादत्वमेव प्रतिपाद्यते ।

३।६।५।१४–१५ आधानं सर्वकर्मार्थम् ।

३।६।६।१६–१७ आधाने पवमानेष्टयः न पवमानेष्टिसंस्कृतेऽग्नौ, किन्तु केवलाधानसंस्कृते एव ।

३।६।७।१८–२७ पशुधर्माधिकरणम् । वा– इदानीं स्थानस्य प्रकरणेन सह पूर्वैश्च विरोधाविरोधौ चिन्त्येते । अत्र तु अविरोधः साधितः ।

३।६।८।२८–२९ दर्शे शाखाऽऽहरणादयो धर्मा दोहद्वयार्था एव, न केवलं सायंदोहार्थाः । वा– एवमविरोधं दर्शयित्वा विरोधं दर्शयति ।

३।६।९।३० ग्रहधर्माधिकरणम् । वा– ग्रहधर्माणां प्रातःसवनस्य च समानदेशे समाम्नानमनुष्ठानं च इत्यनेन अतुल्यत्वाशङ्कायां तुल्यत्वमापाद्यते ।

३।६।१०।३१ रशनाऽधिकरणम् ।

३।६।११।३२–३४ अंशवदाभ्ययोरपि सादनादयो ग्रहधर्माः सन्ति । वा– प्रसङ्गात् प्रकरणविरोधाविरोधौ विचार्येते । शा– अतः परं प्रासङ्गिकी कथा ।

३।६।१२।३५ चित्रिण्यादयोऽपि अग्न्यङ्गम् ।

३।६।१३।३६ सोमधर्मासमानविधित्वाधिकरणम् । वा– अधिकरणद्वयेन ( १०–११ ) कार्यप्रयुक्तत्वात् धर्माणां साधारण्यमुक्तम् । इदानीं फलचमसस्यापि सोम धर्मविधिः साधारणः इति प्राप्ते अभिधीयते ।

३।६।१४।३७–३९ प्रतिनिधावपि मुख्यधर्माणामनुष्ठानम् ।

३।६।१५।४० प्रतिनिधेः श्रुतस्यापि मुख्येन समानविधित्वम् । वा– यदि अशास्त्रलक्षणत्वात् नीवाराणां कार्यापत्तिर्नास्ति, पूतीकानां तर्हि शास्त्रलक्षणत्वात् अनित्यत्वाच्च फलचमसवत् कार्यापत्तिप्रसङ्गः इति प्राप्ते अभिधीयते ।

३।६।१६।४१–४७ संस्थाऽधिकरणम् ।

**अथ तृतीयाध्यायस्य सप्तमः पादः । सोम–** वाक्यप्रकरणविरोधाविरोधविचार एव अत्रानुवर्तते । एकप्रकरणगताङ्गप्रधानानां समानासमानविधानत्वविचारः प्राधान्येन क्रियते इति पादान्तरत्वम्, अनारभ्यविचारानन्तर्यं च । **वि–** सप्तमे पादे बहुप्रधानोपकारकप्रयाजादीनि विचारणीयानि ।

३।७।१।१–५ वेदिबर्हिर्धर्मन्यायः ।

३।७।२।६ स्वामियुक्ताधिकरणम् ।

३।७।३।७,९ चिकीर्षान्यायः ।

३।७।४।८,१० अभिमर्शनाधिकरणम् ।

३।७।५।११–१२ दीक्षादक्षिणन्यायः ।

३।७।६।१३–१४ यूपवेदिन्यायः ।

३।७।७।१५–१७ ज्योतिष्टोमे 'उत यत् सुन्वन्ति' इत्यादिना श्रुतेन वाक्येन सामिधेन्यनुवचनार्थे हविर्धानदेशो लक्ष्यते ।

३।७।८।१८–२० शास्त्रफलाधिकरणम् । वा– अतः परं समाख्यायाः सर्वैः सह विरोधाविरोधचिन्ता वर्तिष्यते। तत्र प्रथमं तावत् उपोद्घातः क्रियते । सु– अष्टमनवमयोः उपोद्घातः, दशमादिषु अष्टादशान्तेषु प्रसक्तानुप्रसक्तविचारः ।

३।७।९।२१–२४ ऋत्विजः कर्तव्यानुसारिसंख्यया वरीतव्याः ।

३।७।१०।२५ चमसाध्वर्युपृथक्त्वन्यायः ।

३।७।११।२६ चमसाध्वर्युबहुत्वन्यायः ।

३।७।१२।२७ चमसाध्वर्युदशत्वन्यायः ।

३।७।१३।२८–२९ पशौ अग्नीषोमीये शमिता ऋत्विग्भ्यो न भिन्नः ।

३।७।१४।३० उपगातारः ऋत्विग्यजमानेभ्यो न भिन्नाः ।

३।७।१५।३१ ज्योतिष्टोमे सोमविक्रयी ऋत्विग्भ्यो भिन्नः ।

३।७।१६।३२–३५ ऋत्विक्शब्दः यागीयसर्वकर्मकरेषु न प्रवर्तते, किन्तु सप्तदशस्वेव ।

३।७।१७।३६–३७ ऋत्विङ्नियमो दक्षिणाभिः ।

३।७।१८।३८ ऋत्विजः स्वामिसप्तदशाः ज्योतिष्टोमे ।

३।७।१९।३९ ( सूत्रांशः ) अध्वर्य्वादीनां समाख्यया नियतपदार्थकर्तृत्वम् ।

३।७।१९।३९–४० अग्निराहवनीयादिः सर्वप्रकृतिविकृत्यर्थः । वा– एवं कर्तृभेदं प्रतिपाद्य इदानीं समाख्यायाः पूर्वैः सह विरोधाविरोधचिन्ता । शास्त्रफलं प्रयोक्तरि ( ३।७।८।१८ ) इत्यादिना प्रवृत्तस्य उपोद्घातस्य प्रसक्तानुप्रसक्तस्य च समाप्त्या प्राप्तावसरोऽयं विचारः ।

३।७।२०।४१–४२ ऋत्विजामनियतपदार्थकर्तृत्वमपि विशेषसमाख्यया ।

३।७।२१।४३–४५ प्रैषानुवचनाधिकरणम् । सु– प्रैषेषु अनुवचनेषु च मैत्रावरुणोपदेशात् समाख्याबाधे दृष्टान्तिते प्रसङ्गात् सर्वेषु प्रैषेषु चानुवचनेषु च बाधः, केषुचिद्वा इति चिन्ता ।

३।७।२२।४६–४९ चमसाध्वर्यवः अध्वर्योरन्यत्र व्यापृतत्वे चमसहोमेषु कर्तारः । सु– अत्र विशेषसमाख्यायाः सामान्यसमाख्याबाधकत्वस्य अपवादः ।

३।७।२३।५०–५१ श्येनवाजपेययोः प्राकृताङ्गेषु नानाकर्तृकत्वम् । सु– विशेषसमाख्याया अपि सामान्यसमाख्यासापेक्षत्वात् दौर्बल्ये अभिहिते प्रसङ्गात् औपदेशिक्या अपि प्रयोगवचनाश्रयायाः समाख्यायाः आतिदेशिकसमाख्याऽपेक्षत्वात् दौर्बल्याभिधानम् ।

**अथ तृतीयाध्यायस्याष्टमः पादः** । सोम— अस्मिन् पादे पूर्वोक्तसमाख्यानिबन्धनाध्वर्य्वादिकर्तृकत्वापवादेन स्वामिकर्तृकता प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः । वि– अष्टमे पादे याजमानानि विचारितानि ।

३।८।१।१–२ ऋत्विजां परिक्रयः स्वामिकर्म, न ऋत्विक्कर्म ।

३।८।१।२ वि. । अग्निचयने स्वयमातृण्णोपधाने वरदानमध्वर्योः कर्म ।

३।८।२।३–८ वपनाधिकरणम् ।

३।८।३।९–११ तपोऽधिकरणम् । वा–तपसो दुःखकरत्वात् कर्ता गुणभूतः समाख्यया नियम्यते इत्याशङ्कां निवर्तयति ।

३।८।४।१२ लोहितोष्णीषाधिकरणम् ।

३।८।५।१३–१४ काण्डाधिकरणम् ।

३।८।६।१५–१६ आशीरधिकरणम् ।

३।८।७।१७ द्व्याम्नाताधिकरणम् ।

३।८।८।१८ क्लृप्त्यधिकरणम् ।

३।८।९।१९–२१ दर्शपूर्णमासयोर्द्वादश द्वंद्वानि आध्वर्यवाणि, न याजमानानि ।

३।८।१०।२२ परिव्याणाधिकरणम् । सु– एकस्य कर्तुः द्वयोर्मन्त्रयोः प्राप्तयोर्विरोधे को ग्राह्य इति विचार्यते ।

३।८।११।२३ प्रैषाधिकरणम् ।

३।८।१२।२४–२५ दर्शपूर्णमासादौ प्रैषा आध्वर्यवाः ।

३।८।१३।२६–२८ वर्चोन्यायः ।



३।८।१४।२९ ( विस्तरानुसारेण ) ज्योतिष्टोमे उपरवेषु 'किमत्र, भद्रम्, तन्नौ सह' इति श्रुतं फलमृत्विजोऽपि ।

३।८।१४।२९–३० अतिक्रमाधिकरणम् ।

३।८।१५।३१ द्रव्यसंस्कारन्यायः । वा– गतः समाख्याविरोधाविरोधविचारः सर्वश्च श्रुत्यादिविरोधाविरोधविचारः प्रकृताविव विकृतावपि द्रष्टव्यः ।

३।८।१६।३२ यूपावटस्तरणबर्हिर्न्यायः ।

३।८।१७।३३ विधृतिपवित्राधिकरणम् ।

३।८।१८।३४ पुरोडाशकपालाधिकरणम् ।

३।८।१९।३५–३६ उपांशुत्वाधिकरणम् ।

३।८।२०।३७–३९ दृतिनवनीताधिकरणम् ।

३।८।२१।४०–४२ दृतिनवनीतं श्येने सर्वेषामेवाङ्गानाम्, न सुत्याकालीनानामेव ।

३।८।२२।४३–४४ मांसाधिकरणम् ।

**अथ चतुर्थोऽध्यायः।** भा– क्रत्वर्थपुरुषार्थौ जिज्ञास्येते कः क्रत्वर्थः कः पुरुषार्थ इति । वि– 'प्रधानस्य प्रयोक्तृत्व, मप्रधानप्रयोक्तृता ।, फलचिन्ता, जघन्याङ्गचिन्तेत्येते चतुर्थगाः ॥' भाट्ट– सिद्धे शेषिनिरूपिते शेषत्वे प्रयोजकनिरूपितं प्रयोज्यत्वमिदानीं निरूप्यते । प्रयोज्यत्वं क्वचित् क्रत्वर्थपुरुषार्थविचारद्वारेण, क्वचित् अन्यद्वारेण, क्वचित् साक्षादेव निरूप्यते इति प्रयोज्यत्वमेवाध्यायार्थः । क्रत्वर्थपुरुषार्थत्वं तु तृतीयसिद्धमपि उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यते ।

**अथ चतुर्थस्य प्रथमे पादे** प्रधानप्रयोक्तृत्वं विचारितम् ।

४।१।१।१ क्रत्वर्थपुरुषार्थजिज्ञासाऽधिकरणम् ।

४।१।२।२ वर्णकं १ क्रत्वर्थपुरुषार्थलक्षणम् ।

वि. वर्णकं २ फलं न विधेयम् ।

वि. वर्णकं ३ गोदोहनवर्णकम् ।

२ वेदिस्तरणादेः पुरुषार्थत्वम् ।

३ द्रव्यार्जनवर्णकम् ।

४।१।३।३–६ प्रजापतिव्रताधिकरणम् ।

४।१।४।७–१० यज्ञायुधाधिकरणम् ।

४।१।५।११–१५ पश्वेकत्वाधिकरणम् ।

४।१।६।१६–१८ लिङ्गाधिकरणम् ।

४।१।७।१९ आश्रयिन्यायः ।

४।१।८।२०–२२ प्रयुक्तिविचारप्रतिज्ञा। भा– अतिक्रान्तस्तृतीयाध्यायविषयः । अतः प्रभृति द्रव्याणां कर्मणां च अर्थे प्रयोजने समवैषम्यं वक्ष्यते । आमिक्षावाजिनयोर्वैषम्यम्, क्रयपांसूनां वैषम्यम् । दण्डस्य मैत्रावरुणधारणे यजमानधारणे च साम्यम् । एवं तत्रतत्र द्रष्टव्यं साम्यं वैषम्यं च ।

४।१।९।२३–२४ आमिक्षा तप्ते पयसि दध्यानयनस्य प्रयोजिका, न वाजिनम् ।

४।१।१०।२५ अक्षाभ्यञ्जनन्यायः ।

४।१।११।२६ पुरोडाशकपालन्यायः ।

४।१।१२।२७ शकृल्लोहिताधिकरणम् ।

४।१।१३।२८–३२ उत्तरार्धन्यायः ।

४।१।१४।३३–३९ प्रयाजशेषाभिघारणन्यायः ।

४।१।१५।४०–४१ आज्यसमानयनाधिकरणम् ।

४।१।१६।४२–४५ दर्शपूर्णमासयोः जौहवाज्यं प्रयाजार्थम् ( औपभृताज्यं च प्रयाजानुयाजार्थम् )।

४।१।१७।४६–४८ उपभृति चतुर्गृहीतयोर्द्वयं विधेयम्, न तु अष्टगृहीतमेकम् ।

**अथ चतुर्थस्य द्वितीयः पादः ।** सोम– पूर्वस्मिन् पादे साक्षाद्यागसाधनहविरादेः प्रयोक्तृता चिन्तिता, इह तु पारंपर्येण तत्साधनस्वर्वादेः इति पादान्तरत्वमानन्तर्यं चेत्याहुः ।

४।२।१।१–६ स्वरुः अग्नीषोमीये पशौ छेदनादेर्न प्रयोजकः ।

४।२।२।७ शाखावादः ।

४।२।३।८–९ उपवेषाधिकरणम् ।

४।२।४।१०–१३ शाखाप्रहरणाधिकरणम् । के– इत आरभ्य पञ्च अधिकरणानि प्रतिपत्तिपेटिका ।

४।२।५।१४–१५ निनयनन्यायः ।

४।२।६।१६–१८ दण्डदानन्यायः ।

४।२।७।१९ कृष्णविषाणाप्रासनाधिकरणम् ।

४।२।८।२०–२२ अवभृथे ऋजीषादिनयनं प्रतिपत्तिकर्म ।

४।२।९।२३–२४ कर्तृदेशकालविधयो नियमार्थाः ।

४।२।१०।२५ द्रव्येषु गुणश्रुतिः नियमविधानार्था ।

४।२।११।२६ अवघातादिसंस्कारविधिर्नियमविधिः ।

४।२।१२।२७ यागलक्षणम् । भा– शेषविनियोग उक्तः, प्रधानलक्षणमुच्यते । किं तत् प्रधानम् ? यस्यैते शेषा इति ।

४।२।१३।२८ होमलक्षणम् ।

( अधिकेन सूत्रेण सुबोधिनीमण्डनाभ्यां पृथगधिकरणं कृतम् । तत्र च दानलक्षणम् । भाष्यवाक्यं तत् इति परे ) ।

४।२।१४।२९–३० आतिथ्योपसदग्नीषोमीयपशूनां बर्हिरेकमेव ।

**अथ चतुर्थस्य तृतीयः पादः ।** सोम—'क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रे प्रथमोपात्तक्रत्वर्थपदसूचिता क्रतुप्रयुक्तिः पादद्वयेन विचारिता । इदानीं चरमोपात्तपुरुषार्थपदसूचितफलप्रयुक्तिर्विचार्यते ।

४।३।१।१–३ पर्णमयीन्यायः ( फलश्रुतिरर्थवादः ) ।

४।३।२।४ नैमित्तिकानि न नित्यत्वप्रयुक्तानि ।

४।३।३।५–७ संयोगपृथक्त्वन्यायः

४।३।४।८–९ व्रताधिकरणम् ।

४।३।५।१०–१२ विश्वजिदादि सफलम् ।

४।३।६।१३–१४ विश्वजिदादि एकफलकम् ।

४।३।७।१५–१६ विश्वजिन्न्यायः ।

४।३।८।१७–१९ रात्रिसत्रन्यायः ।

४।३।९।२०–२४ स्ववाक्यश्रुतफलानां कर्मणां न स्वर्गः फलम् ।

४।३।१०।२५–२६ दर्शपूर्णमासन्यायः ।

४।३।११।२७–२८ योगसिद्ध्यधिकरणम् ।

वर्णकं २ ऐहिकामुष्मिकत्वम् ( पुत्रवृष्ट्यादेः फलस्य ) ।

४।३।१२।२९–३१ बृहस्पतिसवन्यायः ।

४।३।१३।३२–३५ वैमृधन्यायः ।

४।३।१४।३६ अनुयाजानाम् 'आग्निमारुतादूर्ध्वं कर्तव्याः' इति कालो विधीयते ।

४।३।१५।३७ ज्योतिष्टोमः दर्शपूर्णमासोत्तरं कर्तव्यः इति कालार्थः संयोगः ।

४।३।१६।३८–३९ वर्णकं १ फलसंयोगाधिकरणम् ।

वर्णकं २ जातेष्टिः जातकर्मानुष्ठानोत्तरं कर्तव्या ।

वर्णकं ३ जातेष्टिः पत्न्याः भाण्डस्पर्शानर्हत्वापगमे पौर्णमास्यादौ स्वकाले कर्तव्या ।

४।३।१७।४०–४१ अग्निचयनाद्यङ्गभूताः सौत्रामण्यादयः स्वकाले एव कर्तव्याः, न तु चयनाद्यनन्तरमेव प्रयोगमध्ये ।

**अथ चतुर्थस्य चतुर्थः पादः ।** सोम– पूर्वस्मिन् पादे फलप्रयुक्तिर्विचारिता । इदानीं फलप्रयुक्त्यपवादः प्राधान्येन विचार्यते इति पादान्तरत्वमानन्तर्यं च ।

४।४।१।१–२ राजसूयन्यायः ।

४।४।२।३–४ विदेवनाधिकरणम् ।

४।४।३।५–६ सौम्यत्वाष्ट्रवैष्णवानां पुरोडाशानामुपसत्कालिकत्वम् ।

४।४।४।७ आमनहोमन्यायः ।

४।४।५।८–११ दधिग्रहाधिकरणम् ।

४।४।६।१२–१३ अग्निचयने संवत्सरमुख्यधारणाभावे वैश्वानरेष्टिः ।

४।४।७।१४–१८ चित्यधिकरणम् ।

४।४।८।१९–२१ पिण्डपितृयज्ञाधिकरणम् ।

४।४।९।२२–२४ रशनाऽधिकरणम् ।

४।४।१०।२५–२८ स्वर्व–( रु–अ )धिकरणम् ।

४।४।११।२९–३८ इज्याऽधिकरणम् ।

४।४।१२।३९–४१ सोमयागप्राधान्याधिकरणम् ।

**अथ पञ्चमोऽध्यायः ।** भा— इहेदानीं क्रमनियमलक्षणमुच्यते । तत् श्रुति– अर्थ–पाठ–प्रवृत्ति–काण्ड–मुख्यैर्वक्ष्यते, श्रुत्यादीनां च बलाबलम् । वा—(पृ. ६५१) **'प्रयोजकवशौ चेष्टौ ( च–इ ) मुख्यप्रावृत्तिकौ क्रमौ । चतुर्थलक्षणादूर्ध्वं क्रमोऽतश्चिन्तयिष्यते ॥'** सोम–चतुर्थपञ्चमयोर्हेतुहेतुमद्भावः । यद्यपि उभयत्रापि प्रयोगविधिव्यापार एव व्युत्पाद्यः, तथापि चतुर्थे केषामङ्गानां प्रयोगविधिः प्रयोजक इति प्रयोज्यविशेषविचारः, इह तु किंक्रमविशिष्टं प्रयोगं विधत्ते इति तद्विधेयक्रमविशेषविचारः इत्यर्थभेदात् अध्यायभेदः । प्रयोगविधिप्रवृत्तिहेतुभूतयोः प्रयोज्यपरत्वक्रमविशेषपरत्वावधारणयोः परस्परं हेतुहेतुमद्भावात् तदवधारणार्थयोरध्याययोः पौर्वापर्यम् । वि–'द्वितीयादित्रये प्रोक्तं भेदशेषप्रयुक्तिभिः । अनुष्ठेय,–



मनुष्ठानक्रमः पञ्चम ईर्यते ॥ श्रुत्यादिभिः क्रम, स्तस्य विशेषो, वृद्ध्यवर्धने ।, श्रुत्यादेर्बलिता चेति पञ्चमाध्यायपादगाः ॥'

**अथ पञ्चमस्य प्रथमः पादः ।**

५।१।१।१ श्रौतक्रमाधिकरणम् ।

वर्णकं २ क्रमधर्मः चोदनालक्षण एव ।

वर्णकं ३ श्रुत्या क्रमो विधीयते ।

५।१।२।२ अर्थक्रमाधिकरणम् ।

५।१।३।३ दर्शपूर्णमासयोः याजमानानां प्रयाजाद्यनुमन्त्रणमन्त्राणां क्रमो न नियामकः ।

५।१।४।४–७ पाठक्रमाधिकरणम् ।

५।१।५।८–१२ प्रावृत्तिकक्रमन्यायः ।

५।१।६।१३ स्थानक्रमाधिकरणम् ।

वर्णकं २ साद्यस्के सवनीयमालभ्य इतरयोरालम्भ इति साहित्यम् ।

५।१।७।१४ मुख्यक्रमाधिकरणम् ।

५।१।८।१५ पाठक्रमः मुख्यक्रमापेक्षया बलीयान् ।

५।१।९।१६ पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् ।

५।१।१०।१७–१८ अध्वरकल्पान्यायः ।

५।१।११।१९–२२ साकमेधीयन्यायः ।

५।१।१२।२३–२४ तदादितदन्तन्यायः ।

५।१।१३।२५–२६ ज्योतिष्टोमे प्रोक्षणादय ऐष्टिकाः पूर्वमनुष्ठेयाः प्रचरणीहोमादयः सौमिकास्तु पश्चात् ।

५।१।१४।२७ यूपकर्मन्यायः ।

५।१।१५।२८ दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ।

५।१।१६।२९ वेदिकरणन्यायः ।

५।१।१७।३०–३४ सांतपनीयान्यायः ।

५।१।१८।३५ उक्थ्यस्तोत्राणामुत्कर्षे षोडशिस्तोत्रस्यापि उत्कर्षः ।

**अथ पञ्चमस्य द्वितीयः पादः ।** सोम—पूर्वस्मिन् पादे श्रुत्यादिभिः प्रमाणैः क्रमो निरूपितः । इह तु यथायथं पूर्वोक्तप्रमाणावगम्यं क्रमं स्वीकुर्वन् प्रयोगविधिः अनुष्ठेयानुष्ठातृस्वरूपनिरूपणन्यायोपबृंहणेन क्वचित् पदार्थानुसमयं गृह्णाति, क्वचित् काण्डानुसमयमिति श्रुत्यादिप्रमाणगम्यस्यैव क्रमस्य विशेषपर्यवसानव्युत्पादनात् पादान्तरत्वमानन्तर्यं च ।

५।२।१।१–२ पदार्थानुसमयन्यायः ।

५।२।२।३ काण्डानुसमयन्यायः ।

५।२।३।४–५ समुदायानुसमयन्यायः ।

५।२।४।६ अवदानादिप्रदानान्तानुसमयन्यायः ।

५।२।५।७–९ ज्योतिष्टोमे यूपैकादशिनीपक्षे अञ्जनादिपरिव्याणान्तेन काण्डेन अनुसमयः कर्तव्यः ।

५।२।६।१०–१२ वाजपेये प्राजापत्यपशुषु दैवतावदानादिना अनुसमयः ।

५।२।७।१३–१५ कृष्णाजिनास्तरणन्यायः ।

५।२।८।१६ पात्रभेदन्यायः ।

५।२।९।१७–२० उपहोमन्यायः ।

५।२।१०।२१ विदेवनादीनामभिषेकात् प्रागपकर्षः ।

५।२।११।२२ सावित्रहोमन्यायः ।

५।२।१२।२३ अग्निचयने रुक्मप्रतिमोचनादि दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम् ।

**अथ पञ्चमस्य तृतीयः पादः ।** सोम— एवं पादद्वयेन नानापदार्थाश्रितः क्रमश्चिन्तितः । अस्मिन् पादे अभ्यासाश्रितः क्रमश्चिन्त्यते इति पादान्तरत्वम् । भिन्नपदार्थाश्रितक्रमापेक्षया आवृत्तिनिबन्धनक्रमस्य सूक्ष्मत्वात् आनन्तर्यं च । वि— प्रस्तावनायां १७, पञ्चप्रयाजादीनामावर्तनेन ऐकादश्यमित्यादिर्वृद्धिः, अदाभ्यग्रहचित्रिण्योरनावृत्तिः इत्यादिर्वृद्ध्यभावश्च निरूप्यते ।

५।३।१।१–२ प्रयाजैकादशत्वन्यायः ।

५।३।२।३ अग्निचयने उपसदां षट्त्वं तिसृणां स्वस्थानविवृद्ध्या संपादनीयम् ।

५।३।३।४–६ दर्शपूर्णमासयोः सामिधेनीसंख्यायां काम्यविवृद्धौ आगन्तूनामन्ते निवेशः । वा— स्थिते ह्येतस्मिन् दण्डकलितवत् आवृत्तिः स्वस्थानविवृद्धिर्वा इति चिन्ता अवतरति ।

५।३।४।७–१२ अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थं बहिष्पवमाने आगमितानां तृचानां पर्यासोत्तरं निवेशः ।

५।३।५।१३–१४ अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थे माध्यंदिनार्भवपवमानयोः आगमितानां साम्नां गायत्रीछन्दस्के तृचे आवापः ।

५।३।६।१५–१६ प्रदेष्टकाधिकरणम् । वा– औपोद्घातिकमिदम् ।

५।३।७।१७–१९ अग्निचयने चित्रिण्यादीनामिष्टकानां मध्यमचितौ उपधानम् ।

५।३।८।२० अग्निचयने चित्रिण्यादीनामनारभ्याधीतानामिष्टकानां लोकम्पृणातः प्रागुपधानम् ।

५।३।९।२१–२५ आधानेन पवमानेष्टिभिश्च संस्कृतेषु अग्निषु कर्माणि कर्तव्यानि ।

५।३।१०।२६–२८ अग्निचयने अग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानम् ।

५।३।११।२९–३१ ज्योतिष्टोमे दीक्षणीयेष्टया दीक्षासिद्धिः, न तु दण्डादिमात्रेण, अतो दीक्षणीयाऽन्ते दीक्षितधर्मानुष्ठानम् ।

५।३।१२।३२–३६ काम्येष्टिन्यायः ।

५।३।१३।३७–३८ अग्निष्टोमस्य यज्ञेषु प्राथम्यम् ।

५।३।१४।३९–४२ अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालमनुष्ठानम् ।

५।३।१५।४३–४४ अग्निष्टोमविकाराणामेकानेकस्तोमकानामपि अग्निष्टोमोत्तरमनुष्ठानम् ।

**अथ पञ्चमस्य चतुर्थः पादः । सोम—** इह श्रुत्यादिक्रमविषयकप्रमाणानां बलाबलं चिन्त्यते । पूर्वे तु कश्चिद् विचारः प्रासङ्गिकः इति पादान्तरत्वमानन्तर्यं च ।

५।४।१।१ क्रमकोपाधिकरणम् ।

५।४।२।२–४ दर्शे आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा सांनाय्यस्य तत् कर्तव्यम् ।

५।४।३।९–१० आधानस्य इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः ।

५।४।४।११–१४, १७–१८ उत्कर्षाधिकरणम् ।

५।४।५।१५–१६ आधानस्य सोमपूर्वत्वे सोमकालस्य बाधः, नाधानकालस्य ।

५।४।६।१९–२१ उपांशुयाजस्य सोमोत्तरं नोत्कर्षः विष्णुप्रजापतिदेवत्यस्य प्रागपि संभवात् ।

५।४।७।२२–२४ ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनां सद्यस्कालता ।

५।४।८।२५ अग्नीषोमीयपुरोडाशविकाराणां सांनाय्यविकाराणां च सोमोत्तरकालता ।

५।४।९।२६ सोमविकाराणां दर्शपूर्णमासाभ्यां प्राक् नानुष्ठानम् ।

**अथ षष्ठोऽध्यायः ।** वा— अधिकारलक्षणमिदम् । अधिकरोति यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यते इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकालमारभ्यते । ३।१।१।१. वा—( ६।१।१ ) अयमवसरोऽध्यायस्य । कथम् ? भेदाभेदशेषशेषिप्रयोज्यप्रयोजकैवंक्रमयुक्तैः कर्मभिः कोऽधिक्रियते इति विचारस्य अयमेवावसरः । **सोम—** द्वितीयाद्यध्यायचतुष्टयस्य अनुष्ठेयवर्गनिरूपणात्मकतया अनुष्ठेयनिरूपणाधीने अधिकारनिरूपणे हेतुत्वात् द्वितीयाद्यध्यायचतुष्टयानन्तरम् अधिकारलक्षणारम्भो युक्तः । अधिकारविशेषश्च अध्यायार्थः नाधिकारसद्भावमात्रम् । अधिकारप्रमेयव्युत्पादनपरमधिकारलक्षणम् ।

**अथ षष्ठाध्यायस्य प्रथमः पादः । सोम–** ( ६।२।१ ) अत्र स्वर्गकामनिषादस्थपतीष्टयादिभिः अधिकारिनरोपस्थापकशब्दैः अधिकारो निरूपितः ।

६।१।१।१–३ स्वर्गकामाधिकरणम् । वा— औपोद्घातिकमिदम् । फलवत्त्वे अवगते क एतैरधिक्रियते इति युक्तो विचारः । अफलत्वे च विचारानुपपत्तिः । **सोम–** अधिकारसद्भावमात्रं प्रथमाधिकरणप्रतिपाद्यम् । **के–** देशविशेषो वा सुखमेव वा प्रीतिपदवाच्यं स्वर्गपदार्थः इत्यपि विचारितमत्र ।

६।१।२।४–५ तिर्यगधिकरणम् ।

६।१।३।६–१६, १९–२१ अधिकारः क्रतुषु स्त्रिया अपि ।

६।१।४।१७–१८ सहाधिकाराधिकरणम् । दंपत्योः सहाधिकारः ।

६।१।५।२२–२३ द्रव्याधानाधिकरणम् ।

६।१।६।२४ केशश्मश्रुन्यायः ।

६।१।७।२५–३८ अपशूद्राधिकरणम् ।

६।१।८।३९–४० अधिकारः कर्मसु द्रव्यरहितस्यापि ।



६।१।९।४१ अधिकारः अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैकल्यस्यापि ।

६।१।१०।४२ अधिकारो नास्ति कर्मणि अप्रतिसमाधेयाङ्गवैकल्यस्य ।

६।१।११।४३ त्र्यार्षेयाधिकरणम् ।

६।१।१२।४४–५० रथकाराधिकरणम् ।

६।१।१३।५१–५२ निषादस्थपतिन्यायः ।

**अथ षष्ठाध्यायस्य द्वितीयः पादः । सोम–** इह आख्यातेन अधिकारो निरूप्यते । आख्यातं च अनवगतसंख्यामात्रप्रतिपादकम्, तद्द्वारा नरप्रतीतिर्विलम्बिता इति पादान्तरत्वमानन्तर्यं चेत्याहुः । वि– द्वितीये पादे अधिकारिधर्मा उक्ताः ।

६।२।१।१–२ प्रयोजनाधिकरणम् ।

६।२।२।३–१३ अधिकारो दर्शपूर्णमासादौ एकस्यैव कर्तुः स्त्रीसद्वितीयस्य ।

६।२।३।१४–१६ शिष्टगर्हाऽधिकरणम् ।

६।२।४।१७–१९ तक्षाधिकरणम् ।

६।२।५।२०–२१ कलञ्जभक्षणप्रतिषेधन्यायः ।

६।२।६।२२–२३ अधिकारः स्मार्तादिकर्मसु उपनीतस्यैव ।

६।२।७।२४–२७ अग्निहोत्रन्यायः ।

६।२।८।२८–२९ तेषामौत्पत्तिकत्वाधिकरणम् ।

६।२।९।३० क्रत्वर्थानां नैमित्तिकानां निमित्तावृत्तौ आवृत्तिः, यथा भेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः ।

६।२।१०।३१ गुर्वनुगमनादीनां निमित्तावृत्तौ आवृत्तिः ।

६।२।११।३२ वर्णकं १ सोमविद्याप्रजाधिकरणम् ।
वर्णकं २ ऋणत्रयापाकरणं क्षत्रियवैश्ययोरपि नित्यम् ।

**अथ षष्ठाध्यायस्य तृतीयः पादः । सोम—** नित्ये यथाशक्ति अङ्गोपसंहारसमर्थस्याधिकारः अस्मिन् पादे व्युत्पाद्यते । स च पूर्वपादद्वयोक्तकाम्यनित्यनैमित्तिकाधिकारनिरूपणाधीननिरूपणः इति पादान्तरत्वमानन्तर्यं च ।

६।३।१।१–७ यथाशक्त्यधिकरणम् ।

६।३।२।८–१० सर्वशक्त्यधिकरणम् ।

६।३।३।११–१२ द्रव्यभेदेऽपि कर्म न भिद्यते ।

**शा—** अतः परं अतिप्रसङ्गनिराकरणेन नैमित्तिके स्थापितस्य यथाशक्तिप्रयोगस्य शेषत्वेन प्रतिनिधिविचाराः प्रस्तोष्यन्ते । तदुपोद्घातत्वेन तु इदं चिन्त्यते ।

६।३।४।१३–१७ प्रतिनिधिन्यायः । इत आरभ्य पादसमाप्तिपर्यन्तं प्रतिनिधिपेटिका ।

६।३।५।१८–१९ देवताऽग्निशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न ग्राह्यः ।

६।३।६।२० प्रतिनिधित्वं प्रतिषिद्धस्य माषादेर्द्रव्यस्य नास्ति ।

६।३।७।२१ प्रतिनिधिर्न भवति स्वामिनः ।

६।३।८।२२ सत्रे कस्यचित् स्वामिनो मरणे प्रतिनिधिर्भवति ।

६।३।९।२३–२५ सत्रे स्वामिस्थले प्रतिनिहितस्य न स्वामित्वम् ।

६।३।१०।२६ सत्रे प्रतिनिहितस्य स्वामिधर्मत्वं भवति ।

६।३।११।२७ सदृशन्यायः ।

६।३।१२।२८–३० वैकल्पिकन्यायः ।

६।३।१३।३१ पूतीकाः सोमस्य प्रतिनिधिः श्रौतः ।

६।३।१४।३२ प्रतिनिध्यपचारे मुख्यसदृशस्यैव प्रतिनिधित्वम् ।

६।३।१५।३३–३४ प्रतिनिधेः श्रुतस्यापचारे मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वम्, न तु प्रतिनिधिसदृशस्य ।

६।३।१६।३५ मुख्यानुग्रहन्यायः ।

६।३।१७।३६–३७ प्रतिनिधिना प्रधानकार्ये निष्पादिते ततो मुख्यद्रव्यलाभेऽपि प्रतिनिधिनैव समापनम् ।

६।३।१८।३८ द्रव्यसंस्कारविरोधाधिकरणम् ।

६।३।१९।३९ मुख्ये कार्यासमर्थे लब्धेऽपि प्रतिनिधेः कार्यसमर्थस्य सत उपादानम् ।

६।३।२०।४०–४२ मुख्यस्य अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहसमर्थस्य सतः उपादानम् ।

**अथ षष्ठाध्यायस्य चतुर्थः पादः । सोम—** चतुर्थपञ्चमयोः पादयोः प्रायश्चित्ताधिकारो विचार्यते । तत्र चतुर्थे पादे द्रव्यापचारनिमित्तकप्रायश्चित्ताधिकारः

प्राधान्येन प्रतिपाद्यते । स च पूर्वपादोक्तद्रव्यापचारानुषङ्गागतः इति पादान्तरत्वमानन्तर्यं च ।

६।४।१।१-२ अवत्तनाशे प्रतिनिधिमाज्यमवदाय यष्टव्यम् ।

६।४।२।३ नाशाधिकरणम् ।

६।४।३।४-९ दर्शपूर्णमासादौ इडाऽऽदिशेषभक्षणमृत्विजामेव ( यजमानस्य च )।

६।४।४।१०-१६ दर्शपूर्णमासयोः कपालादेरेकदेशभेदनादावपि प्रायश्चित्तम् ।

६।४।५।१७-२१ क्षामेष्टिन्यायः ।

६।४।६।२२-२३ आर्तिन्यायः ।

६।४।७।२४-२५ ज्योतिष्टोमे होमाभिषवौ सहितौ एकं भक्षनिमित्तम् ।

६।४।८।२६-२७ अग्निहोत्रे उभयाग्निनाशे पुनराधानं प्रायश्चित्तम् ।

६।४।९।२८-२९ दर्शपूर्णमासयोः हविरार्तौ पञ्चशराव ओदनः कर्मान्तरम्, न सांनाय्यस्य प्रतिनिधिः ।

६।४।१०।३०-३१ दर्शस्याङ्गं हविरार्तिनिमित्तकः पञ्चशरावयागः ।

६।४।११।३२-३३ सत्रसंकल्पानन्तरं सत्रमकुर्वतः सत्रफलार्थतया विश्वजिद्विधानम् ।

६।४।१२।३४-४० दर्शपूर्णमासयोर्व्रते वत्साद्युपलक्षितकालस्य विधानम् ।

६।४।१३।४१-४३ दर्शे वत्सापाकरणकालेन व्रतसंयोगः असंनयत्पक्षेऽपि ।

६।४।१४।४४-४८ दर्शे शाखाप्रहरणं प्रस्तरप्रहरणकाले ।

**अथ षष्ठाध्यायस्य पञ्चमः पादः । सोम—** तृतीयपादोक्तद्रव्यापचारानुषङ्गागतद्रव्यापचारनिमित्तकप्रायश्चित्ताधिकारनिरूपणानन्तरं परिशिष्टकपालाद्यपचारनिमित्तकप्रायश्चित्ताधिकारनिरूपणात् पादान्तरत्वमानन्तर्यं च ।

६।५।१।१-९ अभ्युदितेष्ट्यधिकरणम् ।

६।५।२।१०-११ अभ्युदितेष्टौ उपांशुयाजेऽपि देवताऽपनयः ।

६।५।३।१२-१५ अभ्युदितेष्ट्यनुष्ठानं दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्रोदये ।

६।५।४।१६-१७ अभ्युदितेष्टौ दर्शप्रवृत्त्युतरं निर्वापात् प्रागपि चन्द्राभ्युदये वैकृतीभ्य एव देवताभ्यो निर्वापः ।

६।५।५।१८-२० अभ्युदितेष्टौ अर्धनिर्वापोत्तरं चन्द्राभ्युदये अवशिष्टनिर्वापः तूष्णीं कर्तव्यः ।

६।५।६।२१-२४ अभ्युदितेष्टिरूपं चन्द्राभ्युदयनिमित्तकं प्रायश्चित्तं असंनयतोऽपि भवति ।

६।५।७।२५-२७ सत्राय प्रवृत्तमात्रस्य साम्युत्थाने विश्वजिद्विधानम् ।

६।५।८।२८-२९ द्वादशाहे दीक्षा द्वादशैव ।

६।५।९।३०-३७ गवामयनस्य दीक्षा माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे, न चैत्र्याः ।

६।५।१०।३८-३९ दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः ।

६।५।११।४०-४१ ज्योतिष्टोमोत्कर्षे प्रतिहोमा नानुष्ठेयाः ।

६।५।१२।४२ उदवसानीयोत्कर्षेऽपि प्रतिहोमानां नानुष्ठानम् ।

६।५।१३।४३ प्रतिहोमपक्षे सायमग्निहोत्रमारभ्यानुष्ठानम् ।

६।५।१४।४४ षोडशिसंस्थायां प्रातरग्निहोत्रमारभ्य प्रतिहोमानामनुष्ठानम् ।

६।५।१५।४५-४७ भेदनादिनिमित्तकहोमाः दर्शपूर्णमासाङ्गम् ।

६।५।१६।४८ व्यापन्नं नाम आर्याणामभोज्यम् । ( अभोज्यतां प्राप्तम् ) ।

६।५।१७।४९-५० अपच्छेदयौगपद्येऽपि प्रायश्चित्तम् ।

६।५।१८।५१-५३ अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः ।

६।५।१९।५४ अपच्छेदन्यायः ।

६।५।२०।५५ उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानम् ।



६।५।२१।५६ उद्गात्रपच्छेदविशिष्टस्यैव अह्नः अहर्गणे आवृत्तिः, न तु सर्वस्याहर्गणस्य ।

**अथ षष्ठाध्यायस्य षष्ठः पादः । सोम—** पूर्वेषु पादेषु प्रकृतिषु अधिकारः प्राधान्येन निरूपितः, इह तु विकृत्यधिकारः प्राधान्येन निरूप्यते इति पादान्तरत्वमानन्तर्यं च ।

६।६।१।१-११ अधिकारः सत्रे समानकल्पानामेव ( कल्पः प्रयोगः ) ।

६।६।२।१२-१५ अधिकारः कुलाययज्ञे भिन्नकल्पयोरपि ।

६।६।३।१६-२३ अधिकारः सत्रे ब्राह्मणानामेव ।

६।६।४।२४-२६ अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव ।

६।६।५।२७-३२,३५ अधिकारः सारस्वतभिन्नसत्रेषु आहिताग्नीनामेव ।

६।६।६।३३-३४ अधिकारः सत्रे संपादितसाधारणपात्राणामेव यजमानानाम् ।

६।६।७।३६-३९ अधिकारः अध्वरकल्पाऽऽदिषु श्रुतसामिधेनीसाप्तदश्यासु विकृतिषु वर्णत्रयस्यापि ।

**अथ षष्ठाध्यायस्य सप्तमः पादः । सोम—** पूर्वेषु पादेषु एकपदार्थालोचनात् अविशेषतः प्रसक्तस्याधिकारस्य पदान्तरवाक्यान्तरादिबलात् व्यवस्था कथिता । इह तु यत्पदपर्यालोचनात् अविशेषतः प्रसक्तिः, तत्पदबलादेव विशेषे व्यवस्थाप्यते इति पादान्तरत्वम्, अस्य सूक्ष्मत्वात् आनन्तर्यं च । वि– सप्तमे पादे देयविचारः ।

६।७।१।१-२ सर्वस्वदानन्यायः ।

६।७।२।३ विश्वजिति सर्वस्वदाने महाभूमिर्न देया ।

६।७।३।४ विश्वजिति अश्वादयः केसरिणो न देयाः ।

६।७।४।५ विश्वजिति विद्यमानस्यैव सर्वस्वस्य दानम् ।

६।७।५।६ विश्वजिति धर्मार्थसेवकः शूद्रो न देयः ।

६।७।६।७ विश्वजिति दक्षिणाकाले विद्यमानस्यैव सर्वस्वस्य दानम् ।

६।७।७।८-१३ विश्वजिति दक्षिणार्थनिर्दिष्टो भाग एव सर्वो देयः ।

६।७।८।१४-१७ अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम् ।

६।७।९।१८-२० अधिकारो नास्ति विश्वजिति द्वादशशतन्यूनधनस्य ।

६।७।१०।२१-२२ अपरिमिताधिकरणम् ।

६।७।११।२३-२५ आधाने दक्षिणानामपरिमितत्वं सहस्रादधिकम् ।

६।७।१२।२६-३० परकृतिपुराकल्पाधिकरणम् ।

६।७।१३।३१-४० अधिकारः विश्वसृजामयने मनुष्याणामेव संवत्सरशब्दस्य दिवसपरत्वात् ।

**अथ षष्ठाध्यायस्य अष्टमः पादः । सोम—** चतुर्होतृहोमादिषु आहिताग्नेर्नास्त्यधिकारः इत्येवमधिकरणापवादोऽत्र प्राधान्येन व्युत्पाद्यते इति पादान्तरत्वमानन्तर्यं च । वि– अष्टमे पादे लौकिकाग्नौ उपनयनहोमः स्थपतीष्टिः इत्येवमादिः अग्निविचारः ।

६।८।१।१-१० अधिकारः चतुर्होतृहोमेषु अनाहिताग्नेरेव ।

६।८।२।११-१९ उपनयनहोमाधिकरणम् ।

६।८।३।२०-२१ निषादस्थपतीष्टिः लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु ।

६।८।४।२२ अवकीर्णिपश्वधिकरणम् ।

६।८।५।२३-२४ उदगयनादिकाले उपनयनादिकर्माणि कर्तव्यानि ।

६।८।६।२५ पित्र्यकर्मणामपरपक्षादिः कालः ।

६।८।७।२६-२७ ज्योतिष्टोमे भृतिवननं सोमक्रयश्च नित्यौ ।

६।८।८।२८ ज्योतिष्टोमादिषु पयोव्रतादीनि नित्यानि ।

६।८।९।२९ ज्योतिष्टोमे अपररात्रे व्रतं न नित्यम् ।

६।८।१०।३०-४३ छागन्यायः ।

**अथ सप्तमोऽध्यायः । भा–** सप्तमे तावत् सन्ति धर्माः ( ऐन्द्राग्नादिषु ) इत्युच्यते । टुप्– १०।१।१ सप्तमेन अतिदेशसत्ता व्याख्याता ।

**सोम—** यथाप्रकरणं दर्शपूर्णमासादिषु धर्मव्यवस्थायां साधितायां धर्माकाङ्क्षेषु सौर्यादिषु अतिदेशेन धर्मप्राप्त्यर्थं सप्तमः ।

**अथ सप्तमाध्यायस्य प्रथमः पादः। वि–**प्रथमे पादे ' समानमितरत् श्येनेन ' इत्यादिप्रत्यक्षवचनातिदेशः ।

७।१।१।१–१२ अतिदेशन्यायः ।

७।१।२।१३–१६ अतिदेश इषौ श्येनीयविशेषधर्माणाम् ।

७।१।३।१७–२१ अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डस्य ।

७।१।४।२२ अतिदेशः साकमेधीयैन्द्राग्नैककपाल्योः वारुणप्राघासिकसार्थवादविधिकाण्डस्य ।

७।१।५।२३ अतिदेशः साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्माणाम् ।

**अथ सप्तमाध्यायस्य द्वितीयः पादः। सोम—** प्रतीतिवचनत्वविचारस्य अतिदेशार्थत्वेन तन्मुखेन अतिदेशस्यैव विचार्यत्वात् द्वितीयपादस्य अध्यायसंगतिः । प्रथमपादे आद्याधिकरणे पारिप्लवविचारानन्तरं तत्सापेक्षश्येनादिवचनातिदेशो विचारितः। इदानीं तन्निरपेक्षो वचनातिदेशो निरूप्यते इति पादान्तरत्वमानन्तर्यं च ।

७।२।१।१–२१ रथंतराधिकरणम् ( द्वितीयम् )।

**अथ सप्तमाध्यायस्य तृतीयः पादः। सोम––** प्रत्यक्षवचनस्य प्रथमं बुद्धौ आरोहात् तन्निमित्तमतिदेशं पादद्वयेन विचार्य कल्पनीयवचनत्यर्थतया ततो विलम्बितो नामधेयातिदेशः तृतीये प्रस्तूयते ।

७।३।१।१–४ मासाग्निहोत्रन्यायः ।

७।३।२।५–६ अतिदेशो न प्रायणीयनाम्ना ।

७।३।३।७–१२ अतिदेशः विश्वजिति षडहगतधर्माणाम् ।

७।३।४।१३–१६ अतिदेशः वरुणप्रघासावभृथे अवभृथनाम्ना सौमिकावभृथधर्माणाम् ।

७।३।५।१७ निष्कासावभृथन्यायः ।

७।३।६।१८ वैष्णवन्यायः ।

७।३।७।१९ निर्मन्थ्यन्यायः ।

७।३।८।२०–२३ प्रणयनाधिकरणम् ।

७।३।९।२४–२६ चातुर्मास्येषु अग्निप्रणयनं मध्यमयोरेव पर्वणोः ।

७।३।१०।२७ स्वरसामैककपालामिक्षाधिकरणम् ।

७।३।११।२८–२९ अनोवासोन्यायः ।

७।३।१२।३०–३२ गर्गत्रिरात्रे आज्यदोहस्तोत्रकाले लौकिकाग्नेरुपनिधानम् ।

७।३।१३।३३–३४ अतिदेशो न उपशये यूपसंस्काराणाम् ।

७।३।१४।३५–३६ अग्निचयने पृष्ठैरुपतिष्ठते इति पृष्ठशब्दः ऋग्द्रव्यवाचकः ।

**अथ सप्तमाध्यायस्य चतुर्थः पादः। सोम––** प्रत्यक्षवचननिमित्तातिदेशविचारानन्तरं कल्प्यश्रुतिकतया ततो विलम्बितनामधेयनिमित्तातिदेशं विचार्य अनन्तरं कृत्स्नस्य वचनस्यैव कल्प्यतया नामापेक्षयाऽपि विलम्बितेन चोदनालिङ्गानुमितशब्देन अतिदेशो विचार्यते इति पादान्तरत्वमानन्तर्यं च ।

७।४।१।१ अतिदेशः सौर्यादौ इतिकर्तव्यतायाः ।

७।४।२।२–१२ विध्यन्ताधिकरणम् ।

७।४।३।१३–२० अतिदेशः गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्माणाम् ।

**अथ अष्टमोऽध्यायः। भा–** एवं तावत् सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम्। अथेदानीं वृत्तात् सामान्यातिदेशलक्षणादनन्तरं विशेषलक्षणं वक्ष्यामः ।

**सोम–** अस्मात् कर्मणः इमे पदार्थाः अत्र भवन्ति इति अतिदेशविशेषसिद्ध्यर्थमष्टमः ७।१।१ । सामान्यतो निरूपणानन्तरं तद्धेतुको विशेषातिदेशो निरूप्यते इति हेतुहेतुमद्भावः संगतिरध्याययोः ८।१।१ । **भाट्ट–** तदेवं त्रिविधोऽतिदेशो निरूपितः। तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता वृत्ता। चोदनालिङ्गस्य तु सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थम् अष्टम आरभ्यते ।

**अथ अष्टमाध्यायस्य प्रथमः पादः। वि–** प्रथमे पादे स्पष्टेन लिङ्गेन अतिदेशविशेषः। (प्रस्तावनायाम्)।

८।१।१।१ अतिदेशविशेषप्रतिपादनप्रतिज्ञा ।

८।१।२।२ अतिदेशो धर्माणां सादृश्यविशेषेण नियतप्रकृतितः ।

८।१।३।३–१० अतिदेशो न सोमे ऐष्टिकधर्माणाम्।
वि. वर्णकं २ इष्ट्यग्निहोत्रसोमानां मूलप्रकृतिता ।



८।१।४।११ अतिदेशः ऐन्द्राग्नादिविकृतौ दार्शपौर्णमासिकधर्माणाम् ।

८।१।५।१२ अग्नीषोमीये पशौ दार्शिको विध्यन्तः ।

८।१।६।१३ दैक्षन्यायः ।

८।१।७।१४ अतिदेशः ऐकादशिनेषु पशुषु सवनीयपशुधर्माणाम् ।

८।१।८।१५ अतिदेशः पशुगणेषु ऐकादशिनपशुधर्माणाम् ।

८।१।९।१६ अतिदेशः उद्भिदादिषु अव्यक्तयागेषु सौमिकधर्माणाम् ।

८।१।१०।१७ अतिदेशः अहर्गणेषु (अहीनात्मक–) द्वादशाहधर्माणाम् ।

८।१।११।१८ अतिदेशः संवत्सरसत्रेषु गवामयनधर्माणाम् ।

८।१।१२।१९ अतिदेशः निकायिनामुत्तरेषु पूर्वनिकायिधर्माणाम् ।

८।१।१३।२०–२२ अतिदेशो न फलनियमकर्तृसमुदायानां दार्शपौर्णमासिकानाम् ।

८।१।१४।२३–२५ अतिदेशो न विकृतौ प्राकृतकाम्यगुणानाम् ।

८।१।१५।२६ अतिदेशः सौर्ये चरौ आग्नेयद्वयधर्माणां विकल्पेन ।

८।१।१६।२७–३१ अतिदेशः सौर्ये चरौ आग्नेयस्यैव धर्माणाम्।

८।१।१७।३२–३४ अतिदेशः ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशधर्माणाम्।

८।१।१८।३५–३९ अतिदेशः कृष्णलचरौ आग्नेयधर्माणाम् ।

८।१।१९।४०–४१ अतिदेशः चित्रेष्टौ मधूदकयोः उपांशुयाजधर्माणाम् ।

**अथ अष्टमाध्यायस्य द्वितीये पादे** अस्पष्टैर्लिङ्गैरतिदेशः ।

८।२।१।१–९ अतिदेशः वाजिनसुराग्रहयोः ऐष्टिकधर्माणाम् ।

८।२।२।१०–१४ अग्नीषोमीयः पशुः सांनाय्यविकारः ।

८।२।३।१५–१८ अग्नीषोमीयपशोः पयोविकारत्वम्, न दधिविकारत्वम् ।

८।२।४।१९–२४ अतिदेशः वैश्वदेव्यामिक्षायां सांनाय्यपयोधर्माणाम् ।

८।२।५।२५–२९ अतिदेशः सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थया ।

८।२।६।३०–३३ अतिदेशः पञ्चदशरात्रे कुण्डपायिनामयने च सत्रात्मकद्वादशाहधर्माणाम् ।

**अथ अष्टमेऽध्याये तृतीये पादे** प्रबलेन लिङ्गेन द्विदैवत्यत्वादिना अतिदेशः प्रतिपाद्यते । **वि.** प्रस्तावना २०.

८।३।१।१–२ अतिदेशः अध्वरकल्पागताग्नावैष्णवादौ अग्नीषोमीयादिपुरोडाशधर्माणाम् ।

८।३।२।३–५ जनकसप्तरात्रन्यायः ।

८।३।३।६–७ अतिदेशः षट्त्रिंशद्रात्रे षडहधर्माणाम् ।

८।३।४।८–९ अतिदेशः शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्माणाम् ।

८।३।५।१०–११ अतिदेशः शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यादिस्तोत्राणाम् ।

८।३।६।१२–३६ बृहस्पतिसवादौ दाशतयीभ्यः उत्पन्नगायत्रीणामानयनम् ।

**अथ अष्टमेऽध्याये चतुर्थे पादे** दर्विहोमेषु अतिदेशः अपोद्यते । **वि.** प्रस्तावना २०.

८।४।१।१,५–९ दर्विहोमन्यायः ।

८।४।२।२–३ दर्विहोमशब्दः स्मार्तानां वैदिकानां च कर्मणां नामधेयम् । अन्तरागर्भिणी ।

८।४।३।४ दर्विहोमशब्दः होमानामेव नामधेयम्, न यागानाम् । अन्तरागर्भिणी ।

८।४।४।१०–२८ दर्विहोमा अपूर्वाः ।

**अथ नवमोऽध्यायः। भा–** इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः मन्त्रसामसंस्कारविषयः। स इह प्राधान्येन वक्ष्यते। अन्यदपि किञ्चित् उपोद्घातेन

प्रसङ्गेन च । सोम– अतिदेशसिद्ध्यनन्तरमतिदिष्टपदार्थविषयतया तत्सापेक्ष ऊहो हेतुहेतुमद्भावसंगत्या चिन्त्यते ।

**अथ नवमाध्यायस्य प्रथमः पादः ।** टुप्— प्रथमे पादे प्रकृत्यूहः प्रायेण चिन्तितः ।

९।१।१।१ अग्निहोत्रादीनां धर्मा अपूर्वप्रयुक्ताः ।

वर्णकं १ अवघातादिधर्मा अपूर्वप्रयुक्ताः ।

९।१।२।२–३ हन्तिपिष्यधिकरणम् ।

वर्णकं १ दीक्षणीयावाङ्नियमन्यायः ।

९।१।३।४–५ फलदेवताऽधिकरणम् ।

९।१।४।६–१० देवताऽधिकरणम् ।

९।१।५।११–१९ द्रव्यसंख्याहेतुसमुदायन्यायः ।

९।१।६।२०–२२,२५ अग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्म उपांशुत्वं तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् ।

९।१।७।२३–२४ प्रणीताधर्मन्यायः ।

९।१।८।२६–२८ हिरण्यशकलाधिकरणम् ।

९।१।९।२९–३२ अहर्गणे द्वादशाहे उत्तमाहवर्जे पत्नीसंयाजान्तत्वम् ।

९।१।१०।३३ दर्शपूर्णमासयोः सामिधेनीषु त्रिरभ्यासः प्रथमोत्तमस्थानधर्मः, न तु प्रवोवाजादिऋग्विशेषधर्मः ।

९।१।११।३४–३५ आरम्भणीयान्यायः । दर्शपूर्णमासावृत्तावपि आरम्भणीयायाः आदौ सकृदेवानुष्ठानम्, न तु प्रत्यावृत्ति ।

वर्णकं १ अन्वारम्भणीया पुरुषस्य आरम्भयोग्यतां संपादयति ।

९।१।१२।३६–३७ देवस्यत्वेतिमन्त्रन्यायः । ( सवित्रादिपदानां नोहः ) । टुप्— उपोद्घातप्रसक्तानुप्रसक्तादि वृत्तम् । इदानीमूहश्चिन्त्यते ।

९।१।१३।३८–३९ ऊहः अग्निशब्दस्य विकृतौ निर्वापमन्त्रे ।

वर्णकं १ धान्याधिकरणम् ।

९।१।१४।४० यज्ञपत्यधिकरणम् ।

९।१।१५।४१ आयुरादिफलन्यायः ।

९।१।१६।४२–४४ अग्निष्टुति सुब्रह्मण्यानिगदे हरिवदादिपदानां नोहः ।

वर्णकं १ ऊहो न सद्यस्क्रे सोमक्रयसाधने साण्डे पुंस्त्वेऽपि ज्योतिष्टोमगतमन्त्रस्य तस्यै शृतम् इत्यादेः ।

९।१।१७।४५–४९ मेध्यधिकरणम् ।

९।१।१८।५०–५३ गिरापदस्य इरापदेन बाधः ज्योतिष्टोमे यज्ञायज्ञीये ।

९।१।१९।५४–५८ गिरापदस्थानापन्ने इरापदे गानं कर्तव्यं ज्योतिष्टोमे यज्ञायज्ञीये ।

**अथ नवमाध्यायस्य द्वितीयः पादः ।** सोम— अस्मिन् पादे ( ९।२।९।३१ आरभ्य ) सामोहश्चिन्त्यते । सामोपोद्घातस्य अवान्तरसंगतिलोमेन पूर्वपादे एव प्रक्रान्ततया आनन्तर्यं च ।

९।२।१।१–२ सामशब्दो रथंतरादिशब्दाश्च गीतिवाचकाः ।

वर्णकं १ ऊहग्रन्थः पौरुषेयः ।

९।२।२।३–१३ साम्नामृक्संस्कारकर्मत्वेन प्राधान्यं नास्ति ।

९।२।३।१४–२० तृचे गेयं साम प्रत्यृचं समापनीयम् ।

९।२।४।२१–२२ साम एकं समानच्छन्दस्के एव तृचे गेयम् ।

९।२।५।२३–२४ उत्तरयोर्गायति इति उत्तराशब्देन उत्तराग्रन्थस्थयोर्द्वयोर्ऋचोर्ग्रहणम् ।

वर्णकं १ ( २१–२४ ) त्रैशोकाधिकरणम् ।

९।२।६।२५–२८ ज्योतिष्टोमे बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरेव गानम् ।

वर्णकं २ ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानम् ।

वर्णकं ३ ज्योतिष्टोमे अनुष्टुभो गायत्र्योश्च प्रग्रथनेन संपादिते आनुष्टुभे तृचे श्वावाश्वान्धीगवसाम्नोर्गानम् ।

वर्णकं ४ गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानम् ।

९।२।७।२९ ( सूत्रांशः ) गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानां विकल्पः ।

९।२।८।२९–३० साम्नैव स्तोतव्यम् ।



वर्णकं १ अयं सहस्रमानव इति ऋचा प्रगीतयैव द्वादशाहस्य दशमेऽहनि आहवनीयोपस्थानम् ।

वर्णकं २ ऋग्यजुर्मन्त्राणां कर्मणि तानस्वरेणैव प्रयोगः । तान एकश्रुतिः ।

९।२।९।३१–३२ सामोहन्यायः । टुप्– 'आम्नातादन्यत्' ( ९।१।१८।५० ) इत्यारभ्य औपोद्घातिकं वृत्तं प्रासङ्गिकं च । प्रकृतमिदानीमभिधीयते । सामोहः प्रतिज्ञातः, सोऽभिधीयते ।

९।२।१०।३३–३७ स्तोभाधिकरणम् ।

९।२।११।३८ स्तोभलक्षणम् ।

९।२।१२।३९ ऊहः स्थानिधर्माणां प्रतिनिधौ । टुप्— अनेनाधिकरणेन कार्यापत्तिः प्रतिपाद्यते ।

९।२।१३।४०–४२ परिधौ यूपधर्मानुष्ठानाक्षेपस्य समाधानम् ।

९।२।१४।४३–४४ अभ्युदितेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानम् ।

९।२।१५।४५–४६ बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकाले अनुष्ठानम् ।

९।२।१६।४७ कण्वरथंतरे अविरुद्धानां बृहद्रथंतरधर्माणां समुच्चयो वैश्यस्तोमे ।

९।२।१७।४८–४९ बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था ।

९।२।१८।५०–५५ पार्वणन्यायः ।

९।२।१९।५६–५७ पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् ।

९।२।२०।५८–५९ दर्शपूर्णमासयोः प्रयाजा आरादुपकारकाः समिदादिपदानां नामधेयत्वात् ।

**अथ नवमाध्यायस्य तृतीयः पादः ।** सोम— प्रथमे पादे मन्त्रोहमध्ये एव अवान्तरसंगतिलोमेन सामोहोपोद्घातप्रसक्त्या सोपोद्घातं सामोहविचारं तत्संगतसंस्कारोहविचारं च परिसमाप्य इदानीं स एव मन्त्रोहः प्रस्तूयते इत्यानन्तर्यम् । न चैवं प्रथमपादसंबन्धिनो मन्त्रोहस्यैवात्रापि विचारे कथं पादभेद इति वाच्यम् । मन्त्रोहावान्तरभेदमादाय पादभेदोपपत्तेः । प्रायेण प्रथमपादे प्रकृत्यूहो विचारितः । अत्र पादे तु प्रायेण वचनोहश्चिन्त्यते । प्रकृत्यूहस्तु अल्पशः इति प्रायेण प्रकृतिवचनोहविचारात्मकत्वात् प्रथमतृतीययोर्भेदः ।

९।३।१।१–२, ४–८ मन्त्रोहन्यायः ।

९।३।२।३ मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदोहः ।

९।३।३।९ अग्नीषोमीये पशौ यागसमाप्त्युत्तरं लौकिके यूपस्पर्शे प्रायश्चित्तम् ।

९।३।४।१०–१४ पाशन्यायः ।

९।३।५।१५–२० पाशाधिकरणम् ।

९।३।६।२१ पत्नीसंनहनन्यायः ।

९।३।७।२२ ऊहो न 'पत्नीं संनह्य' इत्यत्र वचनस्य द्विबहुपत्नीके विकृतिप्रयोगे ।

९।३।८।२३ अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे न विकारः ।

९।३।९।२४–२७ ऊहो न व्रीहिमन्त्रस्य नीवाराणां व्रीहिप्रतिनिधित्वेऽपि ।

९।३।१०।२८–२९ अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानां पशुगणे ऊहो न ।

९।३।११।३०–३२ एकधाऽधिकरणम् ।

९।३।१२।३३–४१ मेधपत्यधिकरणम् ।

९।३।१३।४२–४३ अध्रिगुप्रैषगतस्य मेधपतिशब्दस्य एकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः ।

९।३।१४।४४ अध्रिगुप्रैषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य एकादशिन्यामूहः ।

**अथ नवमाध्यायस्य चतुर्थः पादः ।** सोम— येषामवान्तरकार्ये संदिग्धम्, तेषां मन्त्राणामूहः अस्मिन् पादे विचार्यते । तादृशमन्त्रोहश्च मन्त्रगतपदावान्तरकार्यनिरूपणपूर्वकनिरूपणीयत्वेन विलम्बोपस्थितिकः इत्यानन्तर्यं च । ज्योतिष्मत्यादिविचारस्तु प्रासङ्गिकः ।

९।४।१।१–१६ अध्रिगुप्रैषे पशुगणे समस्तवङ्क्रीयत्ताप्रकाशनार्थे समासेन वचनम् ।

९।४।२।१७–२१ अश्वमेधे अध्रिगुप्रैषे अश्ववङ्क्रीयत्ताप्रकाशनार्थे वैशेषिकमन्त्रकरणपक्षे त्रयाणां पशूनामर्थे

षडशीतिरेषां वङ्क्तयः इति समासवचनम्। चतुस्त्रिंशन्मन्त्रतत्प्रतिषेधन्यायः।

९।४।३।२२ अध्रिगुप्रैषगतेन उरूकशब्देन वपाऽभिधानम्।

९।४।४।२३–२४ अध्रिगुप्रैषगतेन प्रशसाशब्देन बाह्वोः प्रशंसा।

९।४।५।२५–२७ अध्रिगुप्रैषगताः श्येनशलाऽऽदिशब्दाः कृत्स्नोद्धरणप्रकाशकाः।

९।४।६।२८ ज्योतिष्मतीष्ट्यधिकरणम्।

९।४।७।२९–३० अग्निचयने धार्याग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम्।

९।४।८।३१ अग्निहोत्रार्थोद्धरणमन्त्रस्य दर्शपूर्णमासार्थोद्धरणकाले नानुष्ठानम्।

९।४।९।३२–४० आदित्यपयोऽधिकरणम्।

९।४।१०।४१–४२ अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानम्।

९।४।११।४३–४४ दधिपयसोः पशुकामेष्टौ प्रदेयधर्मा नानुष्ठेयाः।

९।४।१२।४५–५० ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु श्रयणार्थेषु पयआदिषु प्रदेयधर्मा न कर्तव्याः।

९।४।१३।५१–५५ आरण्यन्यायः।

९।४।१४।५६–६० पात्नीवते पशौ 'आज्येन शेषं संस्थापयति' इति वाक्येन कर्मान्तरं विदधाति।

अथ दशमोऽध्यायः। टुप्— दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषयत्ताचिन्ता। ७।१।१, दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ चोदकप्राप्तानां प्रत्यक्षविहितानां च पदार्थानाम् इयत्ता चिन्तिता। ११।१।१। सोम— अत्र बाधाभ्युच्चययोः नाध्यायार्थत्वम् अध्यायभेदापत्तेः। किन्तु आज्ञादिमानमेकमेव अध्यायार्थः इति न भेदप्रसक्तिरित्याहुः। वस्तुतस्तु बाध एवाध्यायार्थः। तस्य चैकत्वात् नाध्यायभेदप्रसङ्गः। बाधापवादतया च अभ्युच्चयचिन्तनोपपत्तिः।

**अथ दशमाध्यायस्य प्रथमे पादे** बाधहेतुः द्वारलोपो निरूपितः। वि.

१०।१।१।१–३ विकृतौ लुप्तार्थानां प्राकृतानामङ्गानां बाधः।

वर्णकं १ अवघातस्य कृष्णलचरौ बाधः।

वर्णकं २ वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य आवाहनस्य बाधः।

१०।१।२।४ आरम्भणीयायाः ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयाऽऽदिविकृतौ बाधः।

१०।१।३।५ आरम्भणीयायाः राजसूयगतानुमत्यादीष्टौ बाधः।

१०।१।४।६–८ आरम्भणीयान्यायः।

१०।१।५।९ यूपाहुतिन्यायः।

१०।१।६।१०–१३ स्थाण्वाहुतिन्यायः।

१०।१।७।१४–१५ दर्शपूर्णमासयोः पञ्चमः प्रयाजः आज्यभागादिदेवतासंस्कारार्थः।

१०।१।८।१६–१८ आग्नेयाज्यभागन्यायः।

१०।१।९।१९–३५ पशुपुरोडाशन्यायः।

१०।१।१०।३६–४६ चरुशब्दवाच्येनौदनेन सौर्ययागे प्राकृतहविषो बाधः।

१०।१।११।४७–५१ सौर्यचरोः पाकः स्थाल्यामेव।

१०।१।१२।५२–५३ सौर्ये चरौ पेषणस्य बाधः।

१०।१।१३।५४ सौर्ये चरौ संयवनस्य बाधः।

१०।१।१४।५५ सौर्ये चरौ संवपनस्य बाधः।

१०।१।१५।५६ सौर्ये चरौ संतापनस्य बाधः।

१०।१।१६।५७ सौर्ये चरौ उपधानस्य बाधः।

१०।१।१७।५८ सौर्ये चरौ प्रथनश्लक्ष्णीकरणयोर्बाधः।

१०।१।१८।५९ सौर्ये चरौ भस्मसहितानामङ्गाराणामध्यारोपस्य बाधः।

१०।१।१९।६० सौर्ये चरौ अवज्वलनस्य बाधः।

१०।१।२०।६१ सौर्ये चरौ व्युद्धरणस्य बाधः।

**अथ दशमाध्यायस्य द्वितीयः पादः। सोम**— पूर्वस्मिन् पादे द्वारलोपनिबन्धनो बाधो व्युत्पादितः। अस्मिन् पादे तदपवादः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः। वि— पूर्वं संक्षेपेणोक्तस्य द्वारलोपस्य इह बहुभिरुदाहरणैर्विस्तारः।



१०।२।१।१–२ कृष्णलेषु मुख्यपाकासंभवात् औष्ण्यरूपः पाकः कार्यः।

१०।२।२।३–१३ कृष्णलचरौ उपस्तरणाभिघारणयोर्बाधः।

१०।२।३।१४–१७ कृष्णलचरौ भक्षाणां न बाधः चुरचुराकारेण तत्संभवात्।

१०।२।४।१८ कृष्णलचरौ ब्रह्मभक्षाः युगपत् परिहरणीयाः।

१०।२।५।१९–२० कृष्णलचरौ सर्वे शेषभक्षाः पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः।

१०।२।६।२१ कृष्णलचरौ युगपदुपहूताः सर्वे भक्षाः ब्रह्मणा तत्तद्भक्षकाले एव भक्षणीयाः।

१०।२।७।२२ कृष्णलचरौ चतुर्धाकरणस्य बाधः।

१०।२।८।२३–२९ दक्षिणान्यायः।

१०।२।९।३०–३४ इडाऽऽदिभक्षाः शेषप्रतिपत्त्यर्थाः।

१०।२।१०।३५ वरणं सत्रे नास्ति।

१०।२।११।३६–३९ सत्रे ऋत्विक्परिक्रयस्य बाधः।

१०।२।१२।४०–४१ उदवसानीयन्यायः।

१०।२।१३।४२,४४ पृष्ठशमनीयन्यायः।

१०।२।१४।४३ पृष्ठशमनीये सत्रिभ्योऽन्येऽपि ऋत्विजः, न तु त एव।

१०।२।१५।४५–४६ सारस्वते सत्रे दक्षिणादानमदृष्टार्थम्।

१०।२।१६।४७ दार्शपौर्णमासिकपत्नीसंयाजगतकपालाग्निहोमनिमित्तकवैश्वानरेष्टौ द्वेष्याय दानमदृष्टार्थम्।

१०।२।१७।४८–४९ अस्थियज्ञस्य जीवतामधिकारः।

१०।२।१८।५० अस्थियज्ञस्य मृताधिकारित्वपक्षे जप–संस्कार–इष्टीनां लोपः।

१०।२।१९।५१ अस्थियज्ञस्य मृताधिकारित्वपक्षे क्रत्वर्थानामनुष्ठानम्।

१०।२।२०।५२ अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानां नानुष्ठानम्।

१०।२।२१।५३–५५ अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकान्तर्गतायुरादिफलप्रकाशकभागस्य नानुष्ठानम्।

१०।२।२२।५६–५७ अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया अनुष्ठीयमानानां गुणकामानां नानुष्ठानम्।

१०।२।२३।५८–५९ सर्वस्वारः यजमानमरणोत्तरमपि समापनीयः।

१०।२।२४।६० सर्वस्वारे यजमानमरणोत्तरं क्रत्वर्थं कर्तव्यम्, इतरन्न कर्तव्यम्।

१०।२।२५।६१–६२ सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गतायुराशासनादेर्न बाधः।

१०।२।२६।६३ ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः सत्रे न बाधः।

१०।२।२७।६४ गुणलोपन्यायः।

१०।२।२८।६५–६८ संख्यामुष्टिन्यायः।

१०।२।२९।६९ धेनुवत्सर्षभाधिकरणम्।

१०।२।३०।७० द्रव्यस्य गुणेन न बाधः।

१०।२।३१।७१ खलेवाल्यां प्राकृतस्य खादिरत्वस्य चित्रेष्टौ च तण्डुलानां व्रीहियवान्यतरजन्यत्वस्य नियमो नास्ति।

१०।२।३२।७२–७३ खलेवाल्यां तक्षणजोषणादिधर्माणां बाधः।

१०।२।३३।७४ खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम्।

१०।२।३४।७५ महापितृयज्ञे धानासु अवघातस्य न बाधः।

**अथ दशमाध्यायस्य तृतीयः पादः। सोम**— पूर्वत्र पादद्वये बाधः प्राधान्येन व्युत्पादितः। इह तु विकृतौ श्रुतेन प्राकृतस्य अबाधः प्राधान्येन व्युत्पाद्यते इति पादान्तरत्वमानन्तर्यं च।

१०।३।१।१–१२ अग्नीषोमीयपश्वादौ प्रयाजादिषु एकादशत्वादिगुणविधिः।

१०।३।२।१३–१७ हिरण्यगर्भमन्त्रन्यायः।

१०।३।३।१८–२२ चातुर्मास्येषु सौमिकेषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधः।

१०।३।४।२३–२९ अग्निचयने श्रुतानां दीक्षाऽऽहुतिमन्त्राणां सौमिकदीक्षाऽऽहुतिमन्त्रैः समुच्चयः ।

१०।३।५।३०–३३ नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकादिदक्षिणाया बाधः ।

१०।३।६।३४ आग्रयणे उपदिष्टवासोवत्सदक्षिणया अतिदिष्टान्वाहार्यदक्षिणाया बाधः ।

१०।३।७।३५ आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः ।

१०।३।८।३६ आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः ।

१०।३।९।३७ आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः ।

१०।३।१०।३८ आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः ।

इत उत्तरमधिकरणत्रयं करिष्यमाणविकृतिगतदक्षिणाविचारस्य उपोद्घातरूपम् ।

१०।३।११।३९–४९ दक्षिणाऽधिकरणम् ।

१०।३।१२।५०–५२ ज्योतिष्टोमे द्वादशशतगोरूपदक्षिणा सदस्यसहितेभ्यः षोडशभ्य ऋत्विग्भ्यो विभज्य देया ।

१०।३।१३।५३–५५ ज्योतिष्टोमे द्वादशशतदक्षिणायाः अर्धिनस्तृतीयिनः पादिनः इति समाख्याऽनुरोधेन विभागः कर्तव्यः ।

१०।३।१४।५६–५८ धेनुन्यायः ।

१०।३।१५।५९,६२ सोमापहारादौ एकादिगोदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्याया एव बाधः, न तु अश्वादीनाम् ।

१०।३।१६।६०–६१ अन्तरागर्भिणी । त्रिवत्साधिकरणम् ।

१०।३।१७।६३–६४ प्राकाशन्यायः ।

१०।३।१८।६५–६७ श्यावाश्वाधिकरणम् ।

१०।३।१९।६८–७३ ऋतपेये विहितया सोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः ।

१०।३।२०।७२–७३ ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः ।

१०।३।२१।७४–७५ यजुर्युक्ताधिकरणम् ।

**अथ दशमाध्यायस्य चतुर्थः पादः । सोम**— पूर्वपादे बाधापवादत्वेन अबाधो व्युत्पादितः । इह तु अभ्युच्चयो व्युत्पाद्यते । इति पादान्तरत्वमानन्तर्यं चेत्याहुः ।

१०।४।१।१–२ नारिष्ठहोमादीनामातिदेशिकानां नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः समुच्चयः ।

वर्णकं १ शरन्यायः ।

वर्णकं २ रथाघोषाधिकरणम् ।

१०।४।२।३–५ ग्रहसमुच्चयन्यायः ।

१०।४।३।६ वाजपेयोपदिष्टैः प्राजापत्यैः पशुभिः आतिदेशिकानां क्रतुपशूनां समुच्चयः ।

१०।४।४।७ सांग्रहणेष्टौ उपदिष्टैरामनहोमैः आतिदेशिकानामनूयाजानां समुच्चयः ।

१०।४।५।८–९ उपगानकर्त्रीभिः पत्नीभिः आतिदेशिकोपगानकर्तॄणामृत्विजां गवामयनगते महाव्रते समुच्चयः ।

१०।४।६।१०–१२ अञ्जनाभ्यञ्जने सत्रे गौग्गुलवादिना नवनीतस्य समुच्चयः ।

१०।४।७।१३–१५ महाव्रते तार्प्यादिभिः प्राकृताहतवाससः समुच्चयः ।

१०।४।८।१६–१७ महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयः ।

१७ वर्णकं १ कौत्सकाण्ववसिष्ठस्यजनित्रादिसामभिः विकृतिविशेषे प्राकृतसाम्नां बाधः ।

१०।४।९।१८–१९ कौत्सादिन्यायः ।

१०।४।१०।२० विवृद्धस्तोमकक्रतुषु उपदिष्टैः सामभिः प्राकृतसाम्नां न बाधः, अविवृद्धस्तोमकक्रतुषु च उपदिष्टैः सामभिः प्राकृतसाम्नां बाधः ।

१०।४।११।२१–२२ विवृद्धाविवृद्धस्तोमकक्रतुषु माध्यंदिनार्भवपवमानस्तोत्रयोरेव साम्नामावापोद्वापौ ( विवृद्धत्वे आवापः, अविवृद्धत्वे उद्वापः ) ।

१०।४।१२।२३–२४ विधिशब्दाधिकरणम् ।

१०।४।१३।२५ देवतानां विधिगतशब्देनैव प्रकाशनं सौर्यादिविकृतौ आवाहनादिनिगमेषु ।

१०।४।१४।२६–२९ पावकाग्निन्यायः ।



१०।४।१५।३०–३१ पवमानेष्टिषु आज्यभागयोः गुणवाचकपदरहितस्यैव देवतापदस्याभिधानं कर्तव्यम् ।

१०।४।१६।३२–३३ अनुबन्ध्यावनस्पतियागयोर्निगमेषु विधिगत– उस्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोः अभिधानम् ।

१०।४।१७।३४–३५ अवभृथे स्विष्टकृद्यागीयनिगमेषु सर्वेष्वेव अग्नीवरुणयोर्वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे ।

१०।४।१८।३६–३७ अग्नीषोमीयपशुपुरोडाशस्विष्टकृति त्यागे निगमेषु च स्विष्टकृच्छब्दलोपः ।

१०।४।१९।३८ अनुयाजस्य तृतीयस्य अग्निस्विष्टकृद्देवत्यस्य शेषसंस्कारार्थावापिकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वं दर्शपूर्णमासयोः ।

१०।४।२०।३९–४२ दर्शपूर्णमासयोः याज्यापुरोऽनुवाक्याऽनुवचनं देवतासंस्कारार्थम् ।

१०।४।२१।४३ मनोतान्यायः ।

१०।४।२२।४४–४७ कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य ‘पुनानः सोम धारया’ इति स्वयोनौ एव गानम् ।

१०।४।२३।४८–४९ कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य स्वोत्तरायामेव ‘दुहान ऊधर्दिव्यम्’ इत्यस्यामेव गानम् ।

१०।४।२४।५० अग्निष्टुति स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेव अविकारेण प्रयोगः ।

१०।४।२५।५१–६० पृषदाज्याधिकरणम् ।

**अथ दशमाध्यायस्य पञ्चमः पादः । सोम**-- प्राकृतस्य पदार्थस्य बाधनिरूपणानन्तरं पदार्थैकदेशबाधो निरूप्यते इति पादान्तरत्वमानन्तर्यं च ।

१०।५।१।१–६ कपालन्यायः । अन्त्यलोपाधिकरणम् ।

१०।५।२।७–९ एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे आद्ये एव तृचे गानम् । ( इदमधिकरणम् अनवधानेन मी. कोषस्य प्रथमे भागे ४५४–५५ पृष्ठयोर्मुद्रितम् । तत्र द्रष्टव्यम् ) ।

१०।५।३।१०–११ एकत्रिके क्रतौ एकस्या एव ऋचः त्रिरभ्यासेन त्रिकस्तोमधूर्गानम् ।

१०।५।४।१२–१३ द्विरात्रन्यायः ।

१०।५।५।१४ अन्त्यलोपापवादाधिकरणम् ।

१०।५।६।१५–२५ अतिरात्रे एकविंशादौ काम्ये अधिकसंख्यापूरणमप्राकृतानां साम्नामागमेन कर्तव्यम् ।

१०।५।७।२६ विवृद्धस्तोमके क्रतौ बहिष्पवमाने सामाभ्यासः ।

१०।५।८।२७–३३ दर्शपूर्णमासयोः सामिधेनीनां काम्यसंख्यायाः विवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणम्, नाभ्यासेन ।

१०।५।९।३४–४१ षोडशिग्रहो ज्योतिष्टोमाङ्गम् ।

१०।५।१०।४२–४३, ४५–४८ षोडशिनः आग्रयणपात्रादेव ग्रहणम् ।

१०।५।११।४४ अन्तरागर्भिणी । ज्योतिष्टोमे तृतीयसवने एव षोडशिनो ग्रहणम् ।

१०।५।१२।४९–५२ अग्निष्टोमोक्थ्ययोः षोडशी गृहीतश्चेत् सस्तुतशस्त्र एव ।

१०।५।१३।५३–५४ अङ्गिरसां द्विरात्रे षोडशिग्रहस्य उपसंहारः ( इति वृत्तिकारमतम् । वर्णकं १–षोडश्युत्तर इत्यस्य वैखानससामविध्यर्थत्वादत्वमिति भाष्यमतम् ) ।

१०।५।१४।५५–५७ नानाऽहीनेषु प्रत्यहीनं चतुर्थे दिवसे षोडशिनो ग्रहणम् ।

१०।५।१५।५८ आग्रयणाग्रतायाः विषुवति निवेशः ।

वर्णकं १ जगत्सामाधिकरणम् ।

१०।५।१६।५९–६१ उपवत्यग्रवत्योः नैमित्तिकयोः प्राकृत्योः पृष्ठप्रतिपदोः संसवादिविकृतौ नानुष्ठानम् ।

१०।५।१७।६२–६४ ऐन्द्रवायवस्य ग्रहस्य मैत्रावरुणादिग्रहापेक्षया पूर्वमनुष्ठानम् ।

१०।५।१८।६५–६६ ऐन्द्रवायवस्य ग्रहस्य कामसंयोगेऽपि पाठप्राप्ते स्वस्थाने एवानुष्ठानम्, न तु सर्वादितः ।

१०।५।१९।६७–६९ काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षः ।

१०।५।२०।७०–७२ अग्रतायाः काम्याया विधौ शुक्रादिग्रहस्य ऐन्द्रवायवादिग्रहापेक्षया पूर्वं प्रतिकर्षः, न तु उपांशोः प्राक् ।

१०।५।२१।७३–७४ ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः ।

१०।५।२२।७५–७६ ग्रहाग्रतासु सादनापकर्षेऽपि प्रदानस्य नापकर्षः ।

१०।५।२३।७७–७८ द्वादशाहे त्र्यनीकायां प्रथमद्वितीययोः अह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणात् यागानतिधित्वम् ।

१०।५।२४।७९–८२ द्वादशाहो व्यूढः समूढस्य विकारः ।

१०।५।२५।८३–८७ त्र्यनीकाऽधिकरणम् ।

१०।५।२६।८८ द्वादशाहे व्यूढे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमो नार्थानाम् ।

अथ दशमाध्यायस्य षष्ठः पादः । सोम— स्वाध्यायप्राप्तैकर्च्यस्य बाधो विध्यन्तरात् इति पादान्तरता । यद्वा सामविषये बाधः प्राधान्येनात्र चिन्त्यते इति पादान्तरता । पूर्वत्र वचनबलात् अयथास्वाध्यायत्वेऽपि इह यथास्वाध्यायस्थमेव इत्युत्थानात् पादान्तरसंगतिश्चेत्याहुः । वस्तुतस्तु एकाहाहर्गणात्मकसोमयागविषयो बाधोऽत्र व्युत्पाद्यते इति पादान्तरत्वं बोध्यम् ।

१०।६।१।१–२ रथंतरादिसाम्नां तृचे गानम् ।

१०।६।२।३ रथंतरगाने 'स्वर्दृशं प्रति वीक्षेत' इति वीक्षणे स्वर्दृक्पदपाठकालस्य विधानम् ।

१०।६।३।४–५ गवामयने पृष्ठ्ये षडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैव अनुष्ठानम् ।

१०।६।४।६–१२ ऐकादशिनाः पशवो द्वादशाहे प्रायणीये पञ्च उदवसानीये षट् इति विभज्यानुष्ठेयाः ।

१०।६।५।१३–१४ विश्वजिति षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव होतुः पृष्ठस्तोत्रार्थे निवेशः ।

१०।६।६।१५–२१ उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरूपादिसाम्नां होतुः पृष्ठे एव निवेशः, न तु कृत्स्ने क्रतौ ।

१०।६।७।२२–२३ अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वम् ।

१०।६।८।२४–२६ संसवादौ उभयसामके क्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः ।

१०।६।९।२७–२८ गवामयने पृष्ठ्यषडहान्ते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम् ।

१०।६।१०।२९–३० गवामयनादौ पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वशनम्, न तु प्रतिषडहान्तम् ।

१०।६।११।३१ गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ मध्वशनादेरपि आवृत्तिः ।

१०।६।१२।३२–३३ द्वादशाहे सत्रात्मके सत्रिभिः मधुभक्षणं कर्तव्यं क्रत्वर्थत्वात् ।

१०।६।१३।३४–४४ मानससंज्ञको ग्रहः द्वादशाहदशमाहाङ्गम् ।

१०।६।१४।४५–५० सत्रे यजमाना बहवः ।

१०।६।१५।५१–५९ सत्रे यजमाना एव ऋत्विजः ।

१०।६।१६।६०–६१ सत्रत्वमासनोपायिचोदनत्वम्, अहीनत्वं तु यजतिचोदनत्वे सति अहर्गणसाध्यत्वम् ।

१०।६।१७।६२–६८ पौण्डरीके गवायुतस्य अश्वसहस्रस्य च सकृद् दानम् ।

१०।६।१८।६९–७२ पौण्डरीके गवायुतस्य अश्वसहस्रस्य च दक्षिणायाः प्रत्यहं विभज्य वेद्योर्मध्येन उत्तरस्यां दिशि नयनम् ।

१०।६।१९।७३–७६ सोमारौद्रेष्टौ सामिधेनीकार्ये मानवीनामृचामेकादशानामेव दाशतयीभ्यः समानयनम् ।

१०।६।२०।७७ ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये ।

१०।६।२१।७८ अहर्गणे प्रत्यहं सोमोपावहरणार्थं पृथक् वासः उत्पादनीयम् ।

१०।६।२२।७९ उपावहरणाधिकरणम् ।

अथ दशमाध्यायस्य सप्तमः पादः । सोम— सोमयागविषयकबाधव्युत्पादनानन्तरं प्रायेण तदङ्गभूतेषु पश्वादिषु मध्यपूर्वार्धादिबाधो विचार्यते इति पादान्तरत्वमानन्तर्यं च । गृहमेधीयविचारस्तु अवान्तरसंगत्या ।

१०।७।१।१–२ अग्नीषोमीये पशौ प्रत्यङ्गं हविर्भेदः ।

१०।७।२।३–९ हृदयादिन्यायः ।



१०।७।३।१०–११ अग्नीषोमीये पशौ स्विष्टकृत् अनिज्याशेषैः त्रिभिरङ्गैः कर्तव्यः ।

१०।७।४।१२–१६ अध्यूध्नीन्यायः ।

१०।७।५।१७ वनिष्ठु–अधिकरणम् ।

१०।७।६।१८–१९ अग्नीषोमीये पशौ मैत्रावरुणस्य अस्ति भक्षः ।

१०।७।७।२०–२१ अग्नीषोमीये पशौ मैत्रावरुणस्य एक एव भागः ।

१०।७।८।२२–२३ अग्नीषोमीये पशौ प्रतिप्रस्थातुः भक्षो नास्ति ।

१०।७।९।२४–३३ गृहमेधीयाज्यभागन्यायः ।

१०।७।१०।३४ गृहमेधीये यावदुक्तं कर्तव्यम् ।

१०।७।११।३५–३७ गृहमेधीये आज्यभागपुनःश्रवणस्य परिसंख्याऽर्थत्वमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वस्वजातीयप्रतिपत्त्यन्तराणां विशेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनम् ।

१०।७।१२।३८–३९ ज्योतिष्टोमे प्रायणीया शंय्वन्तैव, आतिथ्या च इडाऽन्तैव ।

१०।७।१३।४०–४२ ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडाऽन्ता ।

१०।७।१४।४३–४६ उपसन्न्यायः ।

१०।७।१५।४७–५० अवभृथः सौमिकः अपूर्वः ।

१०।७।१६।५१–५७ वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानां खादिरादीनां मध्ये अन्यतमपुनःश्रुतौ नियमविधित्वम् ।

१०।७।१७।५८–६० काम्यासु विकृतिषु उपदिष्टैर्द्रव्यदेवताऽऽदिभिः प्राकृतद्रव्यदेवताऽऽदीनां बाधः ।

१०।७।१८।६१–६३ खादिरत्वस्य प्राकृतस्य सोमापौष्णे पशौ श्रूयमाणेन औदुम्बरत्वेन बाधः ।

१०।७।१९।६४–७१ सोमारौद्रादियागे श्रूयमाणैः शुक्लादिगुणविशिष्टव्रीहिभिः प्राकृतयवानां बाधः ।

१०।७।२०।७२–७३ अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तत्वम् ।

अथ दशमाध्यायस्य अष्टमः पादः । सोम— बाधस्य त्रैविध्यकथनात् अस्पष्टयोः अर्थलोपप्रत्याम्नाननिबन्धनबाधयोर्निरूपणानन्तरम् अतिस्पष्टस्य प्रतिषेधनिबन्धनबाधस्य अस्मिन् पादे प्राधान्येन निरूपणम् । इति पादान्तरत्वमानन्तर्यं च ।

१०।८।१।१–४ पर्युदासन्यायः ।

१०।८।२।५ पाशुकाज्यभागन्यायः ।

१०।८।३।६ नातिरात्रे इत्यत्र नशब्दः प्रतिषेधार्थक एव, न पर्युदासार्थकः, न वा अर्थवादः ।

१०।८।४।७ जर्तिलयवागून्यायः ।

१०।८।५।८ त्र्यम्बकाधिकरणम् ।

१०।८।६।९–११ उपवादाधिकरणम् ।

१०।८।७।१२–१५ नदीक्षिताधिकरणम् ।

१०।८।८।१६ ज्योतिष्टोमादौ वर्त्मादिना विशेषविहितेन आहवनीयस्य सामान्यविहितस्य बाधः ।

१०।८।९।१७–१९ वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य अनारभ्याधीतसाप्तदश्येन उपसंहारः ।

१०।८।१०।२०–२२ दर्विहोमेषु क्वचित् स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारश्रवणेन नोपसंहारः ।

१०।८।११।२३–२८ अग्न्यतिग्राह्याधिकरणम् । अग्न्यतिग्राह्याणां विकृतौ अतिदेशः ।

१०।८।१२।२९–३२ उपस्तरणादिविधिन्यायः ।

१०।८।१३।३३–३४ उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविषः एव चतुरवत्तसंपत्तिः ।

१०।८।१४।३५–४६ दर्शपूर्णमासयोरसोमयाजिनः पुरोडाशद्वयश्रवणमनुवादः ।

१०।८।१५।४७–४८ उपांशुयाजे ध्रौवाज्यस्य विधानम् ।

१०।८।१६।४९–५० उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवताऽन्यतमदेवतानियमः ।

१०।८।१७।५१–६१ उपांशुयाजे वैकल्पिकी विष्ण्वादिर्देवता पौर्णमासीकालश्च ।

१०।८।१८।६२–७१ उपांशुयाजः एकपुरोडाशायामपि पौर्णमास्याम् ।

अथ एकादशोऽध्यायः । भा–इदानीं तन्त्रावापलक्षणं निर्वर्तयिष्यामः । शा— संप्रति उपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गात् एकादशे तन्त्रावापचिन्तया चिन्त्यते । उपदिष्टातिदिष्टपदार्थेयत्ताऽवधारणाधीनं च प्रयोगेयत्ताऽवधारणमिति तदुत्तरकालमारम्भः । तदिह

एकप्रयोगवचनचोदितानां संहत्यकारिणां बहूनां कर्मणां साधारणाङ्गभाजामङ्गानुष्ठानं किं तन्त्रेण, उतावृत्त्या ( आवापेन ) इति चिन्ता लक्षणार्थः । सोम— प्रकृतौ विकृतिषु च अनुष्ठेयपदार्थेयत्ता अवधारयितुं शक्यते नान्यथा । ततश्च न परिमाणप्रसङ्गमात्रात् इह निरूपणम्, किन्तु बाधाध्यायफलभूतपदार्थेयत्ताऽवधारणहेतुतया फलयोः हेतुहेतुमद्भावादपि, इति न पूर्वषट्के अस्य विचारस्य प्रसक्तिः । फलतन्त्रं पदार्थतन्त्रम् अनुष्ठानतन्त्रं चेति त्रिविधमपि तन्त्रमध्यायार्थः । यद्यपि उपदेशातिदेशसाधारणं तन्त्रम्, तथापि बाधस्य अङ्गपरिमाणं फलम्, तन्त्रस्य प्रयोगपरिमाणम् । तथा च दशमे अङ्गपरिमाणफलके बाधे निरूपिते प्रयोगपरिमाणफलकं तन्त्रं परिमाणफलकत्वसामान्यात् एकादशे चिन्त्यते । वि– अथ एकादशस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः ।

११।१।१।१–४ तन्त्रन्यायः ।

११।१।२।५–१० अङ्गानां समुच्चितानामेव एकोपकारकत्वम् ।

११।१।३।११–१९ अङ्गानां समुच्चितानामेव प्रधानोपकारकत्वं काम्येषु ।

११।१।४।२०–२६ कृषिन्यायः ।

११।१।५।२७ अवघातादिक्रियाणाम् अदृष्टार्थानां प्रयोजननिष्पत्तिपर्यन्तमभ्यासः । ( इदमेव न्यायस्य स्वरूपम् ) ।

११।१।६।२८ अग्निचयने सर्वौषधावघातस्य नाभ्यासः ।

११।१।७।२९–३७ फलभूमाधिकरणम् ।

११।१।८।३८–४६ कपिञ्जलाधिकरणम् ।

११।१।९।४७–५३ उत्तरागोदोहाधिकरणम् ।

११।१।१०।५४–६७ दर्शपूर्णमासयोः आग्नेयादिप्रधानभेदेऽपि देशकालकर्तॄणामेकत्वात् आघाराद्यङ्गानां तन्त्रेणानुष्ठानम् ।

११।१।११।६८–७१ आग्नेयपशुद्वयन्यायः ।

**अथ एकादशस्य द्वितीयः पादः ।** सोम– पूर्वस्मिन् पादे केवलप्रधानार्थानामनुष्ठानतन्त्रता विचारिता । इह तु अङ्गप्रधानार्थानां देशानां तन्त्रता प्राधान्येन विचार्यते इति पादान्तरत्वम् । अनुष्ठानतन्त्रतानिर्वाहकत्वात् देशादितन्त्रतायाः आनन्तर्यं च बोध्यम् ।

११।२।१।१–२, ८–१२ आग्नेयादिप्रधानानां एकदेशकालकर्तृकत्वं दर्शपूर्णमासचातुर्मास्यादौ ।

११।२।२।३–७ अङ्गप्रधानयोः एकदेशकालकर्तृकत्वम् ।

११।२।३।१३–१९ इष्टिराजसूयाधिकरणम् ।

११।२।३।१९ पशुतन्त्रविप्रकर्षन्यायः । ( २।२।५।१६ पृ. ५०६ इत्यत्र वार्तिके उल्लिखितोऽयम् ) ।

११।२।४।२०–२४ अध्वरकल्पान्यायः ( २ ) ।

११।२।५।२५ वसाहोमन्यायः ।

११।२।६।२६ ऐकादशिनपशुवसाहोमानां तन्त्रभेदः ।

११।२।७।२७–३० यूपैकादशिन्यां यूपाहुतीनां तन्त्रम् ।

११।२।८।३१–३४ अवभृथः साङ्गः अप्सु अनुष्ठेयः ।

११।२।९।३५–४३ वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थं पृथगङ्गानुष्ठानम् ।

११।२।१०।४४–४८ वरुणप्रघासेषु अध्वर्युभिन्नानां कर्तॄणां तन्त्रम् ।

११।२।११।४९–५० वरुणप्रघासेषु पत्नीसंयाजानां द्विरावृत्तिः ।

११।२।१२।५१–५३ प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रम् ।

११।२।१३।५४–५६ पञ्चशारदीयाधिकरणम् ।

११।२।१४।५७–६२ अभिषेचनीयदशपेययोः भिन्नं तन्त्रम् ।

११।२।१५।६३–६६ अवभृथधर्मककर्मान्तरस्य वरुणप्रघासेषु विधानम् ।

११।२।१६।६७–६९ उदयनीयानिर्वापाधिकरणम् ।

**अथ एकादशस्य तृतीयः पादः ।** सोम— पूर्वस्मिन् पादे कालादीनामङ्गप्रधानादिषु तन्त्रता प्राधान्येन निरूपिता । इदानीं तदपवादतया क्वचित् अङ्गप्रधानयोर्भिन्नकालत्वं प्रस्तुत्य भिन्नदेशकालानामङ्गानां तन्त्रत्वं व्युत्पाद्यते इति पादान्तरत्वमानन्तर्यं च ।

११।३।१।१ अङ्गप्रधानयोः वचनबलात् भिन्नदेशकालकर्तृकत्वमपि ।

११।३।२।२ आधानं सर्वकर्मणां तन्त्रम्, न तु प्रतिकर्म पृथक् ।



११।३।३।३–४ यूपन्यायः ।

११।३।४।५–९ अग्निष्टोमे पशुत्रयार्थयूपसंस्काराणां तन्त्रम् ।

११।३।५।१०–१४ अग्निष्टोमे पशुत्रयार्थः स्वरुः तन्त्रम् ।

११।३।६।१५–१६ अहर्गणे अन्त्यदिने एव कृष्णविषाणायाश्चात्वाले प्रासनम् ।

११।३।७।१७ राजसूये नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः ।

११।३।८।१८ अग्नीषोमीये पशौ वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः ।

११।३।९।१९–२२ अग्निचयने प्रधानादौ अग्नियोगः, प्रधानान्ते च अग्निविमोकः ।

११।३।१०।२३ अहर्गणे उपसत्कालीनसुब्रह्मण्याऽऽह्वानं तन्त्रम् ।

११।३।११।२४–३४ अहर्गणे सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य प्रत्यहमावृत्तिः ।

११।३।१२।३५ देशपात्रादीनामुपयुक्तानां प्रयोगान्तरे उपादानेऽपि न दोषः ।

११।३।१३।३६–४४ यज्ञपात्राणां यावज्जीवं धारणं नियतम् ।

११।३।१४।४५–४७ यज्ञपात्राणां धारणमाधानमारभ्यैव ।

११।३।१५।४८–५४ वाजपेये सर्वसोमोत्तरं प्राजापत्याङ्गप्रचारः ।

११।३।१६।५५ आग्निमारुतादूर्ध्वं अनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतानामपि उत्कर्षः ।

**अथ एकादशाध्याये चतुर्थः पादः ।** सोम–– पादत्रयेण यत्र देशकालकर्तॄणां भेदाभेदौ स्फुटौ, तद्विषयकतन्त्रावापौ विचारितौ । इदानीं यत्र भेदाभेदौ न स्फुटौ किन्तु दक्षिणातदभावादिना उन्नेयौ, तद्विषयकौ तन्त्रावापौ चिन्त्येते इति पादान्तरत्वमानन्तर्यं च । वि– चतुर्थे पादे आवापः उदाहरणबाहुल्येन प्रपञ्च्यते ।

११।४।१।१–३ राजसूये पृथग्दक्षिणायुक्तानामाग्नावैष्णवादीनां भेदेनाङ्गानुष्ठानम् ।

११।४।२।४–८ राजसूयोपक्रमे वृतानामेव ऋत्विजां समाप्तिपर्यन्तता ।

११।४।३।९–१२ अवेष्टेः ब्राह्मणादिकर्तृकायाः राजसूयात् भिन्नतन्त्रता ।

११।४।४।१३–१६ आधाने पवमानहविषां काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रम्, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम् ।

११।४।५।१७–२५ द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वम्, तेन षट्त्रिंशाहत्वम् ।

११।४।६।२६–२९ द्वादशाहे सुत्याकालीनानामङ्गानामावृत्तिः ।

११।४।७।३०–३२ द्वादशाहे उपसत्कालीनसुब्रह्मण्याऽऽह्वाने विवृद्धसुत्याहानुपलक्षणम् ।

११।४।८।३३ तन्त्रं कुम्भीशूलवपाश्रपणीनां वाजपेयगतप्राजापत्यपश्वङ्गादिश्रपणार्थम् ।

११।४।९।३४–३९ ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीनां तन्त्रम् ।

११।४।१०।४०–४१ तन्त्रं न कुम्भीशूलवपाश्रपणीनां नानाजातीयेषु पशुषु पाकवैषम्यात् ।

११।४।११।४२–४४ अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालचतुष्कभेदः ।

११।४।१२।४५ अवघातन्यायः ।

११।४।१३।४६ नानाबीजन्यायः ।

११।४।१४।४७–४८ निर्वापन्यायः ।

११।४।१५।४९–५० वेदिप्रोक्षणन्यायः ।

११।४।१६।५१–५२ कण्डूयनमन्त्रस्य एककाले अङ्गभेदेनापि कण्डूत्पत्तौ सकृत् प्रयोगः ज्योतिष्टोमे ।

११।४।१७।५३ ज्योतिष्टोमे रात्रिगतकृत्स्ननिद्राऽर्थं आदौ सकृदेव मन्त्रः अवान्तरनिद्राभेदेऽपि, एवं नदीतरणे अभिवर्षणे अमेध्यदर्शने च ।

११।४।१८।५४ ज्योतिष्टोमे दीक्षितस्य संकल्पितप्रयाणसमाप्तिपर्यन्तमादौ सकृदेव प्रयाणमन्त्रपाठः ।

११।४।१९।५५–५६ उपरवन्यायः ।

११।४।२०।५७–५९ हविष्कृतः अध्रिगोः पुरोऽनुवाक्यामनोतयोश्च आवृत्तिः ।

**अथ द्वादशोऽध्यायः।** भा– अधुना प्रसङ्गलक्षणं व्याख्यायते। टुप्– तन्त्रावापेण ईदृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादश आरभ्यते। अन्यादृशी इयत्ता प्रसङ्गेन भवति। सोम—यद्यपि तन्त्रप्रसङ्गयोर्न हेतुहेतुमद्भावः, तथापि प्रसङ्गनिरूपणं तन्त्रनिरूपणमपेक्षते। ततश्च प्रयाजादीनामगृह्यमाणविशेषतया एकदेशकालकर्तृकानेकप्रधानोपकारकत्वलक्षणतन्त्रव्युत्पादनस्य गृह्यमाणविशेषस्थलेऽपि एकस्यानेकोपकारकत्वसंभावनाद्वारा प्रसङ्गनिरूपणहेतुत्वात् युक्तमानन्तर्यम्। वस्तुतस्तु देशाद्यभेदं विना प्रसङ्गोऽपि न संभवति इति देशादितन्त्रतायाः प्रसङ्गोपजीव्यत्वात् साक्षादपि तन्त्रप्रसङ्गयोरपि हेतुहेतुमद्भावः संभवतीति ध्येयम्।

**अथ द्वादशाध्यायस्य प्रथमः पादः।**

१२।१।१।१–६ पशुपुरोडाशाधिकरणम्।

१२।१।२।७ पौरोडाशिकाज्यभागन्यायः।

१२।१।३।८–९ सौमिकवेदिन्यायः।

१२।१।४।१०–११ प्रसङ्गः न ज्योतिष्टोमे सवनीयपुरोडाशादिषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनाम्।

१२।१।५।१२ अग्नीषोमीयपशुपुरोडाशश्रपणं शालामुखीये, न तु शामित्रे।

१२।१।६।१३ कुण्डपायिनामयने प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणम्।

१२।१।७।१४–१६ ज्योतिष्टोमे इष्ट्यादौ हविर्धानशकटाभ्यां भिन्ने शकटे हविर्निर्वापः।

१२।१।८।१७ जागरणन्यायः।

१२।१।९।१८ वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा मन्त्राः अध्वर्योः पृथगुच्चारणीयाः।

१२।१।१०।१९ अग्न्यन्वाधानं ज्योतिष्टोमे दीक्षणीयाऽऽदिषु न कार्यम्।

१२।१।११।२०–२३ ज्योतिष्टोमे प्रायणीयाऽऽदिषु दार्शिकं व्रतं नानुष्ठेयं प्रसङ्गात् सिद्धेः।

१२।१।१२।२४–२८ अग्न्यन्वाधानं ज्योतिष्टोमे दीक्षणीयाऽऽदिषु देवतापरिग्रहार्थमपि न कर्तव्यम्।

१२।१।१३।२९ प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन सौमिकेष्टिपशुषु पत्नीसंनहनस्य।

१२।१।१४।३० आरण्यभोजनन्यायः।

१२।१।१५।३१–३२ प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकव्रतभक्षेण।

१२।१।१६।३३ सौमिकदक्षिणान्यायः।

१२।१।१७।३४ प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया।

१२।१।१८।३५–४२ होतृवरणं दार्शिकं ज्योतिष्टोमे।

१२।१।१९।४३–४४ आतिथ्याबर्हिःप्रोक्षणन्यायः।

१२।१।२०।४५ अग्नीषोमीये पशौ आतिथ्याबर्हिषः स्तरणकाले स्तरणमन्त्रस्यावृत्तिः।

१२।१।२१।४६–४७ संनहनहरणमन्त्राधिकरणम्।

**अथ द्वादशाध्यायस्य द्वितीयः पादः।** सोम—पूर्वस्मिन् पादे यदीयतन्त्रमध्ये यन्निपतति तदीयाङ्गानां तत्र प्रसङ्ग इति तन्त्रमध्यगतस्थलीयः प्रसङ्गो व्युत्पादितः। इदानीं तन्त्रमध्यपाताभावस्थलीयः प्रसङ्गः प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वम्। तन्त्रमध्यपाते सति प्रसङ्गो झटित्युपतिष्ठते तदभावे तु विलम्बेन इत्यानन्तर्यं च।

१२।२।१।१–७ विहाराधिकरणम्।

१२।२।२।८–१० सवनीये पशौ पशुपुरोडाशः कर्तव्यः।

१२।२।३।११ सवनीयपुरोडाशेषु हविष्कृदाह्वानाभावः।

१२।२।४।१२–१३ हविष्कृदाह्वानं तार्तीयसवनिकपुरोडाशेषु न कर्तव्यम्।

१२।२।५।१४–१८ निशीष्टिन्यायः।

१२।२।६।१९–२१ आरम्भणीयायाः दर्शपूर्णमासविकृतिषु सौर्यादिषु पुनरनुष्ठानम्।

१२।२।७।२२ भूयोऽनुग्रहन्यायः।

१२।२।८।२३–२४ आग्नावैष्णवन्यायः।

१२।२।९।२५ अङ्गगुणविरोधन्यायः।

१२।२।१०।२६ चातुर्मास्येषु पाशुकेषु परिधौ यूपपरिध्युभयधर्माणामविरुद्धानामनुष्ठानम्।

१२।२।११।२७–२९ चातुर्मास्येषु पाशुकेषु परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः।



१२।२।१२।३०–३२ सवनीयादिन्यायः।

१२।२।१३।३३ प्रकृतिविकृत्योः समानतन्त्रत्वे विकृतितन्त्रेण प्रकृतेः प्रसङ्गसिद्धिः। क्त्वाचिन्ता।

१२।२।१४।३४ आग्रयणेष्टिन्यायः।

१२।२।१५।३५ आग्रयणे ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमो नास्ति। आग्रयणेष्टिन्यायः। (द्वितीयः)।

**अथ द्वादशाध्यायस्य तृतीयः पादः।** सोम—इदानीं विकल्पसमुच्चयमुखेन प्रसङ्गकथा प्रस्तूयते। अत्र च पादे समुच्चयः प्राधान्येन प्रतिपाद्यते। ततश्च प्रसङ्गापवादनिरूपणपर्यवसानात् पादान्तरत्वमानन्तर्यं च। अस्फुटविषयविकल्पसमुच्चयचिन्ता अत्र पादे।

१२।३।१।१–२ अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः समुच्चयः।

१२।३।२।३–८ अनुनिर्वाप्याधिकरणम्।

१२।३।३।९ समुच्चयो भिन्नकार्याणां गुणानामेकस्मिन् कर्मणि।

१२।३।४।१०–१५ विकल्पाधिकरणम्।

१२।३।५।१६ प्रायश्चित्तानां दोषनिर्घातार्थानां विकल्पः।

१२।३।६।१७ समुच्चयाधिकरणम्।

१२।३।७।१८–१९ अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगः।

१२।३।८।२०–२२ भाषास्वराधिकरणम्।

१२।३।९।२३–२४ क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकः स्वरः प्रयोक्तव्यः।

१२।३।१०।२५ करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः।

१२।३।११।२६–२७ अग्निचयने वसोर्धारायां मन्त्रान्तेन कर्मादिसंनिपातः।

१२।३।१२।२८ आघारे मन्त्रान्तेन कर्मादिसंनिपातः।

१२।३।१३।२९ करणमन्त्राणामेकार्थानां विकल्पः।

१२।३।१४।३० अग्निचयने संख्यया विहितानां मन्त्राणां समुच्चयः।

१२।३।१५।३१–३५ मन्त्राणां ब्राह्मणविनियुक्तानां विकल्पः।

१२।३।१६।३६–३८ हौत्रमन्त्राणां समुच्चयः।

**अथ द्वादशाध्यायस्य चतुर्थः पादः।** सोम—अस्फुटविषयकविकल्पसमुच्चयचिन्ताऽनन्तरं स्फुटविषये तच्चिन्तनात् पादान्तरत्वमानन्तर्यं च।

१२।४।१।१–२ जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयः।

१२।४।२।३–४ ऐन्द्राबार्हस्पत्ये कर्मणि याज्याऽनुवाक्यायुगलद्वयस्य विकल्पः।

१२।४।३।५–७ सोमक्रयन्यायः।

१२।४।४।८ उपयजगुदसमुच्चयन्यायः।

१२।४।५।९ आधाने दक्षिणानां संख्यासु विकल्पः।

१२।४।६।१०–१६ ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनां विकल्पः।

१२।४।७।१७–२५ अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येनाग्निना उख्यस्याग्नेर्बाधः।

१२।४।८।२६–२७ अग्निचयनप्रकरणे श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्याग्नेः आहवनीयत्वं नास्ति।

१२।४।९।२८–२९ अग्निचयने श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्याग्नेः आधानादिसंस्काराणां लोपः।

१२।४।१०।३०–३१ अग्निचयनगतस्य उख्यस्याग्नेः नित्यं न धारणम्।

१२।४।११।३२ सत्राहीनयोः शुक्रान्वारम्भादीनामेकतमयजमानकर्तृकत्वम्।

१२।४।१२।३३ अहीने शुक्रान्वारम्भादि केनचिद्यजमानेन कर्तव्यम्।

१२।४।१३।३४ सत्रे शुक्रान्वारम्भादौ नियोगतो गृहपतिकर्तृकत्वम्।

१२।४।१४।३५–४१ सत्रे यजमानसंस्काराः सर्वयजमानार्थाः।

१२।४।१५।४२–४७ अधिकारः आर्त्विज्ये ब्राह्मणस्यैव।

# संकर्षकाण्डीयाधिकरणशीर्षकाणां पाठक्रमः ।

[ अधुनैव पूर्वं द्वादशलक्षणीस्थाधिकरणशीर्षकाणि पाठक्रमेणोपन्यस्तानि । इदानीं न्यूनतापरिहाराय संकर्षकाण्डस्थाधिकरणशीर्षकाणां पाठक्रमेणैवोपन्यासः क्रियते । एतानि शीर्षकाणि लिखितसंकर्षकाण्डपुस्तके आदौ उपलब्धानि । तान्येव क्वचिदक्षरपरिवर्तनेन क्वचिन्न्यूनतापूरणेन च परिष्कृत्य उपन्यस्यन्ते । त्रयोदशादयश्चत्वारोऽध्यायाश्च एकद्वित्रिचतुरङ्कैरेवास्माभिरत्र प्रदर्शयिष्यन्ते इति ज्ञेयम् । तथा च अध्यायपादाधिकरणप्रदर्शकास्त्रयोऽङ्का अत्र भविष्यन्ति । षोडशलक्षण्या अधिकरणशीर्षकाणि वर्णक्रमेणापि परस्तान्निवेक्ष्यन्ते । ]

१।१।१ अनुवषट्कारविधिः ।

१।१।२ अनुवषट्कारस्य द्रव्यं पूर्वेष्टशेष एव ।

१।१।३ अनुवषट्कारस्य प्रतिशेषमावृत्तिः ।

१।१।४ प्राजापत्यपशुषु उत्कर्षे यूपोन्मोचनप्रभृति माध्यंदिने एव ।

१।१।५ 'अग्निं चित्वा' इति विहितः सौत्रामणी क्रतोरङ्गम्, न चित्यङ्गम् ।

१।१।६ अग्निचयने तिसृधन्वदानं ब्राह्मणायैव ।

१।१।७ अग्निं चिन्वानाय दक्षिणादानं क्रत्वङ्गम् ।

१।१।८ अग्निचेतृदक्षिणया न क्रतुदक्षिणाबाधः ।

१।१।९ प्राजापत्यपशूनां सवनीयपशूनां च शामित्रोऽग्निस्तन्त्रम् ।

१।१।१० परिवप्यहोमयोः 'अभितः पुरोडाशौ' इति पूर्वोत्तरकालवादः ।

१।१।११ 'वाग् वै हविष्कृत्' इति वाचो हविष्कृत्त्वमर्थवादः ।

१।१।१२ शमिता एक एव ।

१।१।१३ शमिता ऋत्विगेव, न भिन्नः ।

१।१।१४ शमिता अध्वर्युगणस्थ एव ।

१।१।१५ अध्वर्युगणस्थेनैव पशुसंज्ञपनं कर्तव्यम् ।

१।२।१ संनहनादौ यजमानस्यैव पत्नी, नाध्वर्योः ।

वर्णकं १ यजमानस्य सर्वासां पत्नीनां संनहनं दर्शादौ ।

१।२।२ विषमकर्ममन्त्रन्यायः ( एकस्मिन् कर्मणि शाखाऽऽदिभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः ) !

१।२।३ भूयोमन्त्राधिकरणम् ( एकस्मिन् कर्मणि भूयोमन्त्रसत्त्वे मन्त्रस्य विकल्पेन ग्रहणम् ) ।

१।२।४ सांनाय्ये पुरोडाशविधिवाक्यं दारुपात्रस्तुत्यर्थम् ।

१।२।५ वैमृधो भिन्नतन्त्र एव, न समानतन्त्रः ।

१।२।६ वैमृधो यज्ञपबन्धात् अनित्य एव ।

१।२।७ वैमृधारम्भः आधानानन्तरपौर्णमास्यामेवेति न नियमः ।

१।२।८ अभ्युदितेष्टिप्राप्तौ तां कृत्वा केवलदर्शोऽपि पुनः कार्यः ।

१।२।९ पिण्डपितृयज्ञः दर्शदिनेऽपि स्वकाले एव ।

१।२।१० पिण्डपितृयज्ञः सिनीवालीकुह्वोः संनिपाते उत्तरस्मिन् दिने कार्यः ।

१।२।११ पिण्डपितृयज्ञहोमो दक्षिणाग्नौ, नाहवनीये ।

१।२।१२ पिण्डपितृयज्ञे अनाहिताग्नेरप्यधिकारः ।

१।२।१३ पिण्डपितृयज्ञः अनाहिताग्नेः औपासनाग्नौ स्यात् ।

१।२।१४ पिण्डपितृयज्ञे अनाहिताग्निना अतिप्रणीतः औपासनो वा उपस्थेयः ।

१।२।१५ पिण्डपितृयज्ञे उपस्थानमन्त्रस्थगार्हपत्यपदस्य लोपः । ( अनाहिताग्नेरिदम् ) ।

१।२।१६ 'अमावास्यामभिचरन्' इत्यनेन अभिचारोद्देशेन अग्नीषोमीयमात्रहविर्विधिः, पौर्णमासीमित्यत्र पौर्णमासीसमुदायविधिः ।

१।२।१७ 'अग्नीषोमीयेण यजेत पौर्णमासीमभिचरन्' इति न प्राकृतानुवादः।

१।३।१ साकंप्रस्थायीये दोहयोरेव सह प्रदानम्।

१।३।२ साकंप्रस्थायीये दारुपात्रैरेव होमः, न कुम्भीभिः।

१।३।३ साकंप्रस्थायीये 'कुम्भीभिः' इति सायंप्रातर्होमयोरनुवादः।

१।३।४ साकंप्रस्थायीये उपस्तरणाभिघारणे स्विष्टकृच्च नास्ति।

१।३।५ साकंप्रस्थायीये प्रैषत्रयं 'महेन्द्रायानुब्रूहि, आश्रावय, इन्द्रं यज' इति यथाकालं विभज्य प्रयोक्तव्यम्।

१।३।६ दाक्षायणयज्ञे दर्शस्यैवावृत्तिः।

१।३।७ दाक्षायणयज्ञे द्विरेव आवृत्तिर्नियता।

१।३।८ दाक्षायणयज्ञे पाठितानि अन्तरालव्रतानि न प्राकृतानि।

१।३।९ दाक्षायणयज्ञे गुणविकाराणां प्रथमप्रयोगे एव विकल्पः।

१।३।१० यूपविरोहणे प्रायश्चित्तं प्रकृतावपि।

१।३।११ अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणान्तरविधिः।

१।३।१२ अग्निचित्कर्तृके सोमे उत्तरवेदिपुराणाग्निद्वयस्यैव एकविंशतिलोकंपृणानां च समुच्चयः।

१।३।१३ अग्निचितः केवलसोमयागे एव एकविंशतिलोकंपृणाभिश्चितिः गुणविधिः।

१।३।१४ अग्नीषोमीये पशावेव प्लक्षशाखाया विनियोगः।

१।३।१५ 'बर्हिः स्तृणीहि' इति प्रैषः सोमार्थः।

१।३।१६ 'यथाभागं व्यावर्तेथाम्' इत्यत्र पिण्डावेव संबोध्यौ।

१।३।१७ 'इदमग्नेरिदमग्नीषोमयोः' इति विभक्तयोरेव पिण्डयोः देवतानिर्देशः।

१।३।१८ पुरोडाशगणे 'यथाभागं व्यावर्तध्वम्' इत्यूहः कार्यः।

१।३।१९ पुरोडाशगणेऽपि उत्तमयोः पिण्डयोः यथाप्रकृति 'यथाभागं व्यावर्तेथाम्' इति प्रयोगः।

१।३।२० पुरोडाशगणे देवतानिर्देशः अन्त्ययोः पिण्डयोः देवताज्ञानार्थः, न सर्वेषाम्।

१।३।२१ अधिवपनकालेऽपि समन्त्रक एव विभागः।

१।३।२२ चरुपुरोडाशोभयसत्त्वे चरूणां पुरोडाशानां चेति द्वौ राशी युगपत् कर्तव्यौ।

१।३।२३ चरुपुरोडाशोभयसत्त्वे राशिद्वये देवतानिर्देशः समुच्चित्य कार्यः।

१।३।२४ सर्वपृष्ठायां न हविर्विभागमन्त्रावृत्तिः।

१।४।१ वाजिनम् उपसेचनार्थं यागार्थात् पृथङ् नोत्पाद्यम्।

१।४।२ वाजिनानुवषट्कारस्यैव स्विष्टकृद्यागत्वात् आमिक्षायागस्विष्टकृतोर्न बाधः।

१।४।३ अनुवषट्कारयागः पूर्वोत्पन्नशेषादेव कार्यः, सकृदवदानादि न कार्यम्।

१।४।४ यूपे विशाखे (शाखाद्वयवति) नियोजनस्थानस्यैव भेदः।

१।४।५ यूपे विशाखेऽपि यूपधर्मः शाखयोर्भेदेन कार्यः।

१।४।६ यूपे विशाखता उपरादूर्ध्वं कतिपयाङ्गुलपरिमितभागे एव, न तु नाभिदघ्नादूर्ध्वम्।

१।४।७ यूपे विशाखे 'दिवमग्रेण' इत्यत्र 'दिवमग्राभ्याम्' इत्यूहः कार्यः।

१।४।८ यूपादौ पञ्चारत्नित्वादि परिमाणं उपरं वर्जयित्वा ज्ञेयम्।

१।४।९ यूपादौ अरत्न्यादिपरिमाणं यजमानगतमेव।

१।४।१० अग्निचयने चितिमानेषु यजमानगतमेव मानं ग्राह्यम्।

१।४।११ निर्वापे मुष्टिपरिमाणम् अध्वर्योरेव।

१।४।१२ 'अग्निष्ठे रशना वासयति' इति रशनासंस्कारः।

१।४।१३ अग्निष्ठे द्वाभ्यांद्वाभ्यामेव क्रमेण परिव्याणमेकादशिन्याम्।

१।४।१४ यूपैकादशिन्यामपि रशनाद्वयेन युगपत् परिव्याणम्।



१।४।१५ यूपैकादशिन्याम् 'युवा सुवासाः' इति हौत्रमन्त्रस्तन्त्रम्।

१।४।१६ यूपे 'एकयूपं मिनोति' इति संख्याविधिः।

१।४।१७ यूपानामग्निष्ठभिन्नानां मानं सौत्येऽहनि।

१।४।१८ यूपैकादशिनीसमानमुत्कृष्टं सत् तन्त्रमेव।

१।४।१९ यूपैकादशिन्यामग्निष्ठरशने यूपरशनाश्च तन्त्रम्।

१।४।२० यूपैकादशिन्यादौ अग्निष्ठभिन्ना यूपाः उदग्दक्षिणा मातव्याः।

१।४।२१ यूपैकादशिन्यादौ रथाक्षमात्राणि यूपान्तरालानि।

१।४।२२ यूपैकादशिन्यां 'वेदिसंमितान् विमिनोति' इत्यस्य रशनामानेन न विकल्पः।

१।४।२३ यूपैकादशिन्यां दशमैकादशयोर्व्यत्ययः अग्निकोणे दशमः, ऐशानकोणे चैकादशः इति।

१।४।२४ यूपैकादशिन्यामुपराणां दैर्घ्येण साम्यम्, न तिर्यक्त्वेन।

१।४।२५ यूपैकादशिन्यामेकादशपशुयोजनं कापेय्या पद्धत्या अहीनेषु उत्कृष्यते, इतरा पद्धतिस्तु प्रकृतौ।

२।१।१ इष्टकाश्चयनसाधनीभूता मृन्मय्य एव।

२।१।२ इष्टकाः अश्रिमत्य एव कार्याः।

२।१।३ इष्टकाः समचतुरस्राः कार्याः।

२।१।४ इष्टकाः पशुशीर्षाद्युपधाने अन्तरालपूरणार्थे न विधेयाः।

२।१।५ 'इष्टकासु सर्वान् वर्णान्' इति रेखावादः।

२।१।६ इष्टकाः पक्वा एव ग्राह्याः।

२।१।७ इष्टकापाकः निर्मन्थ्येन लौकिकेनाग्निना।

२।१।८ इष्टकाशब्दात् दूर्वादिषु नेष्टकाधर्माः।

२।१।९ इष्टकाधर्माः सिकतासु न भवन्ति।

२।१।१० इष्टकाधर्माः चरुसर्वौषधेषु न भवन्ति।

२।१।११ इष्टकाधर्मा नैर्ऋतीषु न भवन्ति।

२।१।१२ अग्निचयने 'सहस्रं चिन्वीत' इति सहस्रशब्दः न क्रतुपरः।

२।१।१३ अग्निचयने 'सहस्रं चिन्वीत' इति सहस्रशब्दः इष्टकापर एव।

२।१।१४ अनिचयने 'सहस्रस्य प्रमा असि' इति मन्त्रः सर्वचित्यङ्गम्।

२।१।१५ इष्टकोपधाने मन्त्राधिक्ये चयनान्तरप्रयोगे अवशिष्टमन्त्राणामुपयोगः।

२।१।१६ इष्टकासंख्यापूरणं लोकंपृणाभिः मन्त्रन्यूनत्वे।

२।१।१७ अग्निचयने चितिशब्दो न प्रस्तरपरः, किन्तु तदवयवपरः।

२।१।१८ इष्टकोपधाने 'प्राचीरुपदधाति' इति रीत्यपवर्गवादः।

२।१।१९ इष्टकोपधाने 'प्राचीं, प्रतीचीम्' इति कर्तृमुखवादः।

२।१।२० अग्निचयने कूर्मचितौ 'प्राञ्चम्' इति कर्तृमुखवादः, 'प्रत्यञ्चम्' इति तु कूर्ममुखवादः।

२।१।२१ अग्निचयने 'पुरस्तादन्याः प्रतीचीः पश्चादन्याः प्राचीः' इति विधी अपवर्गनियमार्थौ।

२।१।२२ अग्निचयने 'वृषभमुपदधाति' इति 'त्वामग्ने वृषभम्' इति मन्त्रोपधेयेष्टकापरो वृषभशब्दः।

२।१।२३ इष्टका एव प्राणशब्दघटितमन्त्रोपधेयाः 'प्राणभृत उपदधाति' इत्यत्र।

२।१।२४ अग्निचयने 'घृतेष्टका उपदधाति' इति घृतपूर्णघटोपधानम्।

२।१।२५ अग्निचयने चतुरस्राणामिष्टकानामेव 'मण्डलेष्टका उपदधाति' इति नामान्तरम्।

२।१।२६ अग्निचयने चितिसमुदायस्यैव वेदिधर्माः, न तु तदाधारभूमेः।

२।१।२७ अग्निचयनमुपसद्दिनेष्वेव, न तु ततः पूर्वम्।

२।१।२८ इष्टकानिर्माणं दीक्षोत्तरमेव।

२।१।२९ अग्निचयनविशिष्टे क्रतौ एकादिदीक्षापक्षाणां न बाधः।

२।१।३० अग्निचयनं त्रिवारमेव कर्तव्यमिति न नियमः, चतुर्थाद्याहारसंभवात्।

२।१।३१ अग्निचयने चतुर्थाद्याहारेषु त्रिषाहस्राधिका संख्या स्यात्।

२।१।३२ अग्निचयने 'यद्दषीणामाग्नेयम्, तेन संवत्सरमग्निं चिन्वीत' इति दाशतयीभ्य आग्नेयमन्त्रा आहार्याः ।

२।१।३३ अग्निचयने सांवत्सरिके दाशतयीभ्य आहृतानामाग्नेयीनां याज्ञसेनीभिर्न समुच्चयः ।

२।१।३४ अग्निचयनाङ्गत्वं दाशतयीभ्य आनीतानां सर्वासामेव आग्नेयीनाम् 'यद्दषीणामाग्नेयम्' इत्यनेन ।

२।१।३५ अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतैराग्नेयसूक्तैरेव प्रतिसूक्तमुपधानम्, न प्रत्यृचम् (सूक्तपाठमात्रमेवेदं न तु इष्टकोपधानमिति मन्तव्यम् । के.) ।

२।१।३६ अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतानामाग्नेयसूक्तानां चयनातिरिक्ते उपस्थानादौ नोपयोगः । (तत्तद्दिने नोपयोगः । दिनान्तरे तु उपयोगः स्यादिति भाति । के.) ।

२।१।३७ अग्निचयने सांवत्सरिके 'गायत्रचितं चिन्वीत ब्रह्मवर्चसकामः' इत्यादि तत्तत्फलकामुकानामेव, अकामानां तु तदितरच्छन्दस्का एव ऋचः (गायत्र्यः इतरा वा इच्छया ग्राह्या इति भाति । के.) ।

२।१।३८ इष्टकाविशेष एव 'सशिरस्क एवाग्निश्चेतव्यः' इति शिरःशब्देन ग्राह्यः, न तु पक्षिशिरः ।

२।१।३९ अग्निचयने सुपर्णाकृतिर्न नित्या, तद्बोधकमन्त्रास्तु अर्थवादः ।

२।१।४० अग्निचयने श्येनाकृतिः काम्यैव (नित्येति याज्ञिकाः) ।

२।१।४१ अग्निचयने लोकंपृणामन्त्रेणोपधानं सूददोहसा च अभिमन्त्रणम्, न तु द्वाभ्यां मिलित्वा उपधानम् ।

२।२।१ अग्नीषोमीयादिपशुत्रयार्थः शूलस्तन्त्रम् ।

२।२।२ समिद्–बर्हिर्–वनस्पत्यादीनामलौकिकानां देवतात्वम् ।

२।२।३ पार्वणहोमौ विकृतिषु न भवतः ।

२।२।४ ज्योतिष्टोमे यजमानमन्त्राणां न परिसंख्या ।

२।२।५ अवदानं चतुरवत्तं विना वचनं सर्वहोमेष्वेव ।

२।२।६ अवदानं पञ्चावत्तं आमदग्न्यादीनाम् ।

२।२।७ अवदाने पञ्चावत्ते पञ्चममौषधस्यैव ।

२।२।८ अवदाने पञ्चावत्ते पञ्चममवदानमभिघारणात् प्रागेव ।

२।२।९ अवदाने पञ्चावत्ते तृतीयं पश्चार्धादुत्तरार्धाद्वा ।

२।२।१० वनस्पतियागे नोपस्तरणाभिघारणे ।

२।२।११ अवदाने 'पूर्वपूर्वाण्यवद्येत्' इति न देशकालपरत्वम् ।

२।२।१२ 'षोडशाज्यानि गृह्णाति' इति समस्तसंख्या ।

२।२।१३ 'सप्तदशाज्यानि पशुकामस्य' इति काम्यध्रुवाज्यपञ्चत्वाभिप्रायम् ।

२।२।१४ अवदानं त्रैधातवीयायां सहैव ।

२।२।१५ नानाप्रदानाधिकरणम् (भिन्नगुणकदेवताभेदे प्रदानभेदः) ।

२।२।१६ अवदानं प्राकृतमेककपाले वैश्वानर्यो वपायां च नातिदिश्यते ।

२।२।१७ पाशुकेषु सर्वेष्वङ्गेषु प्रत्यभिघारणम् ।

२।२।१८ अवदानं पशौ दैवतस्विष्टकृतयोः समकालम् ।

२।३।१ प्रजापतिः सप्तदशो दृष्टार्थ एव ।

२।३।२ अग्न्यादिदेवतापदयोगेऽपि न सप्तदशप्रजापतित्वभङ्गः ।

२।३।३ अनुयाजेषु 'देवान् यज' इति प्रैषः त्रितयसाधारणः ।

२।३।४ अनुयाजेषु एकादशसु चत्वारो बर्हिषो विकाराः, चत्वारो नराशंसस्य, नवम एकादशश्च स्विष्टकृतः ।

२।३।५ अनुयाजो दशमः बर्हिर्विकारः ।

२।३।६ प्रयाजेषु पाशुकेषु आद्याश्चत्वारः प्राकृतानां चतुर्णां क्रमेण विकाराः, पञ्चमादिषु षट्सु त्रयस्त्रयः चतुर्थपञ्चमयोर्विकाराः, अन्त्यश्चान्त्यस्य ।

२।३।७ अनुयाजाः पाशुकाः प्राकृतस्य प्रथमस्य प्रैषस्य विकारः ।



२।३।८ प्रैषः 'अजैदग्निः' इत्यतः पृथक् 'उप प्रेष्य होतः' इति ।

२।३।९ प्रैषः 'अजैदग्निः' इति अध्वर्योर्मैत्रावरुणं प्रति ।

२।३।१० प्रैषः 'उक्थशा यज सोमस्य' इति शस्त्रवन्मात्रे निवेश्यते ।

२।३।११ प्रैषः 'उक्थशा यज सोमानाम्' इति शस्त्रवत्स्वपि चमसैर्ग्रहैश्च युगपद्धूयमानेष्वेव सोमेषु निवेश्यः ।

२।३।१२ 'पुरोऽध्वर्युर्विभजति' इति देशवाद एव ।

२।३।१३ प्रैषान् मैत्रावरुण एव ब्रूयात् ऋतुयाजेषु ।

२।३।१४ 'होतर्यज, प्रशास्तर्यज' इति वक्तृविकल्पः ।

२।३।१५ अनुवषट्कारे आश्रावणादीनां प्रतिषेधः ।

२।४।१ यजतिचोदनासु प्रक्षेपान्तत्वम् ।

२।४।२ अश्रुतदेवताकेषु मन्त्रवर्णादिना देवताविधिः ।

२।४।३ सामिधेनीनां नाहुतिमन्त्ररूपत्वम् ।

२।४।४ अग्निचयने अज्यानीहोमेषु मान्त्रवर्णिकी देवता ।

२।४।५ चित्रेष्टौ 'अग्ने गोभिर्न' इत्यादिभिः पुष्टिमन्त्रैरेव होमः ।

२।४।६ दर्विहोमेषु वचनाभावे सकृद्गृहीतमेव नित्यम् ।

२.४।७ आहुतिगणे प्रत्याहुति सकृद् ग्रहणम् ।

२।४।८ दर्विहोमेषु प्रतिहोमं समिधमाधायैव होमः ।

२।४।९ पाकयज्ञशब्दः नाहुतिपर्यायः ।

२।४।१० पाकयज्ञशब्दः दर्विहोममात्रवाचकः ।

२।४।११ पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः ।

२।४।१२ पाकयज्ञेषु 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति धर्मा भवन्ति (अग्निहोत्रे इदम्) ।

२।४।१३ वैश्वदेवपर्वणि 'प्राचीनप्रवणे यजेत' इति विहारदेशोपदेशः ।

२।४।१४ 'पदे जुहोति, वर्त्मनि जुहोति' इति आहवनीयापवादः ।

२।४।१५ त्र्यम्बकेषु चतुष्पथ–एकोल्मुकयोः समुच्चयः ।

२।४।१६ 'अवभृथेन पत्यञ्चश्चरन्ति' इति कर्तृगर्भविहारविधानम् ।

२।४।१७ होमे पुरस्तात्स्वाहाकारा अपि मन्त्राः करणम् ।

२।४।१८ 'स्वाहाकृतमिन्द्राय जुहोमि' इत्यादौ स्वाहाशब्दो न प्रदानार्थः ।

२।४।१९ 'वषट् ते विष्णो' इति वषट्शब्दः न होमार्थः ।

२।४।२० वनस्पतियागयाज्यायां न देवतोपलक्षणम् ।

२।४।२१ 'चित्तं च चित्तिश्च' इत्यादौ न चतुर्थ्या विपरिणामः ।

२।४।२२ 'चित्ताय स्वाहा, चित्तये स्वाहा' इत्यादिभिः शाखाऽन्तरीयमन्त्रैः 'चित्तं च स्वाहा' इत्यादीनां विकल्पः ।

२।४।२३ अग्निचयने भूतेष्टकोपधानं प्राकरणिकमन्त्रैरेव ।

२।४।२४ अग्निचयने भूतेष्टकानामुपधानं राजसूयगतमन्त्रैरेव इति पक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैः कर्तव्यम् ।

२।४।२५ अनुवाक्यासु प्रैषांशस्योद्धारः ऋतुग्रहेषु ।

२।४।२६ राष्ट्रभृद्धोमेषु 'ताभ्यः स्वाहा' इत्येव द्वितीयोद्वितीयो मन्त्रः ।

२।४।२७ आध्वरिकाहुतीनां दीक्षाऽऽहुतिभिः समुच्चयः ।

२।४।२८ 'भुवनस्य पते' इत्यादयो दशाहुतयः रथमुखे स्युः ।

२।४।२९ 'भूतं भव्यं भविष्यद् वषट् स्वाहा नमः' इत्यादौ न मन्त्रभेदः ।

३।१।१ दर्शपूर्णमासशब्दौ सूर्याचन्द्रमसोः संनिकर्षविप्रकर्षवचनौ ।

३।१।२ पर्वसंधिः तन्त्रमध्ये ग्रहीतव्यः ।

३।१।३ दर्शपूर्णमासयागस्य परेद्युरनुष्ठानेऽपि दिवैव अनुष्ठानम् ।

३।१।४ अमावास्यायां प्रागुदयाद् यागस्योपक्रमः ।

३।१।५ सद्यस्कालताऽपि साङ्गप्रधानस्य ।

३।१।६ सोमे सुत्या संधिदिने एव ।

३।१।७ क्षामवत्यादीनां तन्त्रमध्ये प्राप्तौ उत्कर्षः ।

३।१।८ आग्रयणमेकस्मिन्नपि संवत्सरे सस्यभेदेन भिन्नमेव कार्यम् ।

३।१।९ भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः ।

३।१।१० आग्रयणाकरणे ग्राम्यधान्यभक्षणनिषेधः ।

३।१।११ आग्रयणाकरणेऽपि शाकप्राचीनौषधीनां भक्षणं यथाकामम् ।

३।१।१२ आग्रयणाकरणेऽपि शमीधान्यभक्षस्य न निषेधः ।

३।१।१३ आग्रयणस्य आधानोत्तरमेव प्राप्तौ तद्-करणे नवान्नभक्षणप्रतिषेधः ।

३।१।१४ आग्रयणं नवान्नबुभुक्षाऽभावेऽपि कर्तव्यम् ।

३।१।१५ व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः इति प्रकृतौ द्रव्यविधिः ।

३।१।१६ आग्रयणेषु न द्रव्यविकल्पः, नापि कर्म-विकल्पः ।

३।१।१७ आग्रयणेषु तत्तत्सस्योत्पत्तिकालविधिः, न चान्द्रादिसंवत्सरविधिः ।

३।१।१८ चातुर्मास्येषु चान्द्रो मासः स्वीकार्यः ।

३।१।१९ चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे मध्ये मासस्यैवोत्सर्गः, न तु संवत्सरस्य ।

३।१।२० चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे इव यावज्जीवाभ्यासपक्षोऽपि विज्ञायते ।

३।१।२१ चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तावपि वैश्वानरपार्जन्य–पञ्चहोतृहोमानां सकृदेवानुष्ठानम् ।

३।१।२२ चातुर्मास्येषु ‘ यदि प्रावृषि यजेत सक्रुदुपस्तीर्य द्विरभिघारयेत् ’ इत्यत्र वरुणप्रघासग्रहणम् ।

३।१।२३ चातुर्मास्येषु वैश्वदेवेन गवां प्रभूतपयस्कत्वे वसन्ते यजेत ।

३।१।२४ चातुर्मास्यानां पशुकामप्रयोगे सहस्रपशु-प्राप्तिपर्यन्तं वैश्वदेवमेव अभ्यस्य अथ स्वस्वकाले वरुणप्रघासादीनि पर्वाणि अनुतिष्ठेत् ।

३।१।२५ कुण्डपायिनामयने ‘ मासं दर्शपूर्णाभ्यां यजेत ’ इति प्रत्यहं यागः ।

३।२।१ आधाने मथितोऽग्निः गार्हपत्यार्थ एव ।

३।२।२ आधाने आहवनीयः गार्हपत्यात् प्रणीय आधीयते ।

३।२।३ आधाने सभ्यावसथ्यौ लौकिकाग्निरूपौ , न तु आहवनीयात् प्रणेतव्यौ ।

३।२।४ आधाने दक्षिणाग्निर्निर्मन्थ्यः, गार्हपत्याद्वा प्रणेतव्यः ।

३।२।५ आहवनीयधारणं गतश्रीत्रितयभिन्नस्य न नित्यम् ।

३।२।६ आहवनीयादेः कर्मापवर्गेऽपि न पुनरा-धानम् ।

३।२।७ आहवनीयादेः प्रतिकर्म गार्हपत्यादुद्धरणमेव, न तु मथनम् ( उद्धरणपक्षे इदम् ) ।

३।२।८ आहवनीयः गार्हपत्यादुद्धृत्यैव उपस्थेयः ।

३।२।९ अग्निरुद्धृतः अपवृत्ते कर्मणि लौकिकः संपद्यते ।

३।२।१० अग्निः ज्योतिष्टोमे तदपवर्गे एव लौकिकः स्यात् , न तु दीक्षणीयाऽऽद्यपवर्गे ।

३।२।११ अग्निः औत्तरवेदिकः शालामुखीयस्य एकदेश एव, न कृत्स्नः ।

३।२।१२ ज्योतिष्टोमे औत्तरवेदिकप्रणयनोत्तरं शाला-मुखीयः गार्हपत्यः संपद्यते , प्राचीनगार्हपत्यश्च प्राजहितो भवति ।

३।२।१३ ज्योतिष्टोमे गार्हपत्यकर्माणि शालामुखीये एव ।

३।२।१४ ज्योतिष्टोमे शालामुखीयादेव आग्नीध्रीय-प्रणयनम् ।

३।२।१५ ज्योतिष्टोमे धिष्ण्यविहरणं आग्नीध्रीयादेव ।

३।२।१६ ज्योतिष्टोमे तृतीयसवने द्विर्धिष्ण्यविहरणम् ।

३।२।१७ ज्योतिष्टोमे तृतीयसवने एव आज्येन व्याघारणम् ।

३।२।१८ ज्योतिष्टोमे पूर्वयोः सवनयोः आज्येन सोमेन वा व्याघारणम् ।



३।२।१९ ज्योतिष्टोमे सोमेन धिष्ण्यव्याघारणं परि-प्लुपात्रेणैव ।

३।२।२० ज्योतिष्टोमे वैसर्जनहोमेषु आज्यमेव न सोमः ।

३।२।२१ ज्योतिष्टोमे ‘ स वैव स्यात् ’ इति प्राज-हितवादः ।

३।२।२२ शालामुखीयो निरूढादिष्वपि भवति ।

३।२।२३ पशौ प्रथमेष्टिपक्षे इष्ट्यर्थं प्रणीत एव आहवनीयः पश्वर्थमपि धार्यः ।

३।२।२४ अग्निहोत्रहोमः सायंतनः पशुयागदिनेऽपि नौत्तरवेदिके , दैवात् पशुकर्मण उत्कर्षे तु औत्तरवेदिके एव ।

३।२।२५ अग्निहोत्रपाकः पशोः द्व्यहकालत्वे प्राजहिते एव ।

३।२।२६ पशौ पुरोडाशस्य श्रपणं शालामुखीये एव ।

३।२।२७ पशुः सद्यस्कालः, न द्व्यहकालः ।

३।२।२८ पशौ वरुणप्रघासेषु च शालामुखीयोऽस्ति ।

३।२।२९ सोमापवर्गे शालामुखीयस्यैव समारोपः ।

३।२।३० सोमापवर्गे गतश्रियः शालामुखीयवत् आहवनीयस्यापि समारोपः ।

३।२।३१ अग्निहोत्राभावेऽपि दीक्षितस्य अन्यत्र गमने प्राप्ते अग्निः समारोप्यैव नेयः ।

३।२।३२ अग्निभेदेऽपि अरणिभेदो नावश्यकः ।

३।२।३३ उख्यस्य प्रत्यक्षमेव नयनात् न समारोपः ।

३।२।३४ अग्निचयने समारोप्यैव अन्यत्राग्निनयनम् ।

३।२।३५ अग्नेः आत्मसमारोपेऽपि अरण्योरेव प्रत्य-वरोह्य मथनं कार्यम् ।

३।२।३६ अग्नेः आत्मसमारोपपक्षेऽपि अरण्योरेव उपावरोहणम् ।

३।३।१ अतिग्राह्याणां समानविधित्वम् ।

३।३।२ अतिग्राह्याः प्रकृतौ अग्निष्टोमेऽपि , न विश्वजित्येव ।

३।३।३ अतिग्राह्यनिषेधः पृष्ठ्यषडहोक्थ्ये एव ।

३।३।४ अतिग्राह्याणां पृष्ठ्यषडहोक्थ्येषु विकल्पः, न पर्युदासः ।

३।३।५ अतिग्राह्याणां पूर्वत्र्यहे उत्तरत्र्यहे च व्यवस्थितविकल्पः ।

३।३।६ अतिग्राह्यः पृष्ठ्ये षडहे वैराजस्तोत्राय आग्नेयो गृह्यते , नात्र देवताविधिः ।

३।३।७ अतिग्राह्याणां माहेन्द्रग्रहानन्तरमेव होमः, न तु सह ।

३।३।८ दधिग्रहयागः अंशवदाभ्यानन्तरमेव, न तु प्राक् ( इदं ३।३।१४ अधिकरणेन विरुद्धम् । वक्ष्यमाण-मेव तु युक्तम् , नेदम् ) ।

३।३।९ दधिग्रहविकारः आज्यसोमग्रहौ कर्मान्तरम् ।

३।३।१० दधिग्रहो नित्यः काम्यश्च संयोग-पृथक्त्वेन ।

३।३।११ दधिग्रहविकारे सोमग्रहे न सोमधर्मः ।

३।३।१२ दधिग्रहविकारे सोमग्रहे सोमधर्माभावेऽपि अभिषवस्याक्षेपः ।

३।३।१३ अभिषवे एव ‘ तिस्रो यह्वस्य समिधः ’ इति मन्त्रः प्रयोज्यः ।

३।३।१४ अंशवदाभ्ययोः दधिग्रहानन्तरं यागः । ( इदं ३।३।८ अधिकरणेन विरुद्धम्, परन्तु युक्तम् ) ।

३।३।१५ अंशवदाभ्यग्रहौ संयोगपृथक्त्वेन काम्यौ नित्यौ च ।

३।३।१६ अतिरात्रे रात्रिपर्यायेषु ग्रहचमसानां समुच्चयः ।

३।३।१७ पृश्निप्राणग्रहा अपि ग्रहा एव ।

३।३।१८ प्राणभृदिष्टकामन्त्रा एव प्राणग्रहार्थाः ।

३।३।१९ पृश्निप्राणग्रहमन्त्रा न यागार्थाः, किन्तु सोममानार्थाः ।

३।३।२० पृश्निग्रहमन्त्राणाम् अनारभ्याधीतानामपि द्वादशाहे प्रायणीयोदयनीययोः दशमेऽहनि च निवेशः ।

३।४।१ ‘ आर्षेयं वृणीते ’ इति यजमानपूर्वजा एव ऋषयः ।

३।४।२ आर्षेयाणां नामानि अपत्यप्रत्ययान्तानि संबुद्ध्यन्तानि ।

३।४।३ आर्षेयत्रयस्यैव वरणम् , इतरे अर्थवादाः ।

३।४।४ प्रवरेषु अध्वर्युवशात् होतुरपि आनुपूर्वीनियमः ।

३।४।५ त्र्यार्षेयमिश्रब्राह्मणानां मनुवत्कल्पः ।

३।४।६ निषादरथकारयोरपि आर्षेयवरणमस्ति ।

३।४।७ राजोपेतब्राह्मणोपेतयोरपि जातिप्रयुक्तप्रवरत्वम् ।

३।४।८ प्रवरवरणे द्विगोत्राणाम् एकतो द्वौ अन्यत एकः इति त्रयः ।

३।४।९ अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्तॄणामेव वरणम् ।

३।४।१० अग्नीषोमीये पशौ सप्तानामपि वरणं लौकिक्या वाचा ।

३।४।११ 'ऋतुप्रैषादिभिर्वृणीते' इति येषां शाखायां वचनम्, तेषां तैरेव मन्त्रैर्वरणम् ।

३।४।१२ अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्त्रनुवादः, न वरणान्तरम् ।

३।४।१३ निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोर्वरणम् ।

३।४।१४ सोमार्थे वरणम् औपवसथ्येऽहनि ।

४।१।१ व्याहृति– हिंकार– दशहोतृ– सामिधेनीनां न्यायात् क्रमः ।

४।१।२ 'अन्तराऽनूच्यम्' इति मध्यमस्य स्वरस्य विधिः ।

४।१।३ 'अन्तर्वेद्यन्यः पादः' इति लक्षणया देशविधिः ।

४।१।४ सामिधेनीषु आद्योत्तमयोः त्रिरावृत्त्या संख्यापूरणम्, नागमः ।

४।१।५ सामिधेनीषु आद्योत्तमयोरनवानविधिः तृतीये वचने एव ।

४।१।६ सामिधेनीनां सर्वासामेव सांतत्यविधिः ।

वर्णकं २ देवता वैषशब्देनैव ध्यातव्या ।

४।१।७ सामिधेनीषु उत्तरार्धपूर्वार्धयोः संधानं कार्यम् ।

४।१।८ सामिधेनीषु पठिते एव आद्यान्त्ये ऋचौ राथंतरी बार्हती च, न तु सामयोनी ।

४।१।९ सामिधेनीषु 'त्रिर्विगृह्णाति' इति विग्रहः 'तं त्वा समिद्भिरङ्गिरः' इत्यस्यामेव ऋचि ।

४।१।१० सामिधेनीषु 'समिद्वती घृतवती चानूच्येते' इति 'तं त्वा समिद्भिः' इत्येव ग्राह्या ।

४।१।११ सामिधेनीषु प्रणवविधानम् ऋगक्षरस्थाने एव ।

४।१।१२ सामिधेनीषु प्रणवविधानम् अन्त्ये ऋगक्षरे एव टेः स्थाने ।

४।१।१३ सामिधेनीषु प्रणवशब्दार्थस्य ओङ्कारस्यैव विधानम्, न तु 'प्र ण व' इति शब्दस्य ।

४।२।१ सामिधेनीषु 'त्रींस्तृचाननुब्रूयात्' इति त्रिस्त्रिरुक्तौ प्रथमोत्तमौ द्वौ तृचौ, 'अग्न आ याहि' इत्यादिश्च तृतीयः ।

४।२।२ सामिधेनीषु 'सर्वाणि च्छन्दांसि अनुब्रूयात्' इति गायत्रीत्रिष्टुब्जगत्य एव सर्वाणि च्छदांसि ।

४।२।३ बहुयाजी नाम सोमयाजी एव ।

४।२।४ निविदामनवानत्वं वाचनिकमेव, न संतानः ।

४।२।५ वरणधर्मः ऊर्ध्वज्ञुत्वादिर्होतुरेव, न सर्वेषामृत्विजाम् ।

४।२।६ प्रवरो होतुरेव पूर्वः, अध्वर्योरुत्तरः ।

४।२।७ आवाहननिगदे 'आवह देवान्' इति ऊह्यमानानां सर्वदेवानामेव वादः ।

४।२।८ 'अग्निमग्न आवह' इति संबोध्योऽग्निः आहवनीयः ।

४।२।९ 'अग्निं होत्रायावह' इत्युक्तोऽग्निः आहवनीयादन्यः ।

४।२।१० अग्निः स्विष्टकृत् गार्हपत्याधिष्ठाता देवताविशेष एव ।

४।२।११ अग्नेः स्विष्टकृत आवाहनं हव्यवहनार्थमेवेति तत्रैव 'अग्निं होत्राय' इति निगदः ।

४।२।१२ 'स्वं महिमानमावह' इति गार्हपत्यवादः ।

४।२।१३ 'अतूर्तो होता तूर्णिर्हव्यवाट्' इति आहवनीयवादः ।

४।२।१४ 'आ चाग्ने देवान् वह' इति आहवनीयवादः ।

४।२।१५ 'स्वाहाऽग्निं होत्राज्जुषाणाः' इति स्विष्टकृद्वादः ।



४।२।१६ 'अग्निर्होत्रेणेदं हविरजुषत' इति गार्हपत्यवादः ।

४।२।१७ स्विष्टकृद्याज्यानिगदे 'अयाडग्निरग्नेः' इति गार्हपत्यस्यैव वादः ।

४।२।१८ 'अग्निर्देवो होता देवान् यक्षत्' इति आहवनीयवादः ।

४।२।१९ 'अग्निर्होता वेत्तु' इति स्रुगादापननिगदे आहवनीयवादः ।

४।३।१ स्रुगादापनमन्त्रे 'इमे वयम्, स्मो वयम्' इति पाठौ, कर्मान्तरे सावकाशत्वात् नानयोर्विकल्पः ।

४।३।२ वौषड्वषडादीनां ब्राह्मणादिषु व्यवस्थया प्रयोगः ।

४।३।३ याज्यावषट्कारयोः समुच्चयः संतानं च ।

४।३।४ 'अवगूर्य वषट् करोति' इत्यनयोर्याज्याव्यवायेऽपि पौर्वापर्यम् ।

४।३।५ वषट्कारे 'यं कामयेत प्रमायुकः स्यात्' इति स्वर्गकामविधेरर्थवादः ।

४।३।६ देवताध्यानं वषट्कारात् प्राक् 'तां ध्यायेद् वषट्करिष्यन्' इति लट्प्रयोगात् ।

वर्णकं २ देवता वैषशब्दरूपैव ध्यातव्या ।

४।३।७ वषट्कारे प्राणापाननिमेषाणां प्रतिशाखमुपसंहारः ।

४।३।८ अनुवाक्यातः पूर्वं वाग्व्यवहारवादः अनुवाक्योत्तरं वाग्यमस्थैर्यार्थः ।

४।३।९ 'स्वाहा देवा आज्यपाः' इति प्रयाजानुयाजदेवतावादः ।

४।३।१० ऋग्जुषाणाधिकरणम् ( आज्यभागयोः ऋग्जुषाणयाज्ययोर्विकल्पः ) ।

४।३।११ 'गायत्री पुरोऽनुवाक्या भवति' इत्येवमादिलक्षणानि अनुपदिष्टयाज्याऽनुवाक्यासु विकृतिषु नेयानि ।

४।३।१२ दर्शपूर्णमासयोः त्रिष्टुभौ संयाज्ये काम्ये नित्ये च संयोगपृथक्त्वेन ।

४।३।१३ 'अयाड् देवानामाज्यपानाम्' इति प्रयाजानुयाजोभयदेवतावादः ।

४।३।१४ अनुयाजेषु सर्वेषु अनवानत्वम्, नोत्तमे एव ।

४।३।१५ उपांशुयाजपत्नीसंयाजेषु देवतापदयाज्याऽनुवाक्ययोरेव उपांशुत्वम् ।

४।३।१६ आज्येडा पत्नीसंयाजाङ्गमेव ।

४।३।१७ इडाऽऽदिपदाभ्यासनिषेधपरं 'प्राचीं पराचीम्' इति वाक्यद्वयम् ( यदिडोपहूतेति तत् पराची, यदुपहूतेडेति तत् प्रतीची ) ।

४।३।१८ 'चतुरुपह्वयते' इति 'इडोपहूता' इतिपदविषयमेव ।

४।३।१९ सूपावसानाऽधिकरणम् ( 'सूपावसाना, सूपचरणा' इति प्रकृतावेव निवेशः ) ।

४।३।२० 'आशास्तेऽयं यजमानः' इति नित्यं निर्देशः, 'यन्न निर्दिशेत्' इति नित्यानुवादः ।

४।३।२१ सूक्तवाके असोमयाजिनां नामद्वयग्रहणम् ।

४।३।२२ सूक्तवाके यजमाननामनिर्देशे नामद्वयग्रहणम् ( व्यावहारिकं नाक्षत्रं चेति ), सोमयाजिनस्तु तृतीयमपि ( सोमयाजी इति ) ।

४।४।१ 'पृथुपाजवत्यौ धाय्ये, अनुपदावाज्यभागौ' इत्यनारम्यवादाः विकृतौ उत्कर्षणीयाः ।

४।४।२ आज्यभागौ विकृतिषु सद्वन्तौ वा प्राकृतौ वा ।

४।४।३ अगस्त्यस्यकयाशुभीयादौ एकादशैव सामिधेन्यः ।

४।४।४ 'न बृहत्या वषट् कुर्यात्' इति अक्षरन्यूहनविध्यर्थवादः ।

४।४।५ महापितृयज्ञे तिसृणामृचां द्वे एव पुरोऽनुवाक्ये, तृतीया याज्या ।

४।४।६ महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः ।

४।४।७ गृहमेधीये सामिधेनीनिषेधेऽपि नावाहनबाधः ।

४।४।८ वाजिने परप्रयुक्तद्रव्यत्वात् नावाहनम् ।

४।४।९ देवता समानाऽपि अन्येन व्यवहिता चेत् भेदेनावाहनं प्रदानं च ।

४।४।१० पशौ उत्तमप्रयाजार्थमपि स्रुगादापनप्रैषस्य आवृत्तिः ।

# अकाराद्यनुक्रमेणाधिकरणशीर्षकाणि

[ इतः परं द्वादशलक्षणीस्थानि अधिकरणशीर्षकाणि संकर्षकाण्डचतुर्लक्षणीस्थानि अधिकरणशीर्षकाणि च एकीकृत्य वर्णक्रमेण निवेक्ष्यन्ते । तत्र पूर्वं पाठक्रमोपन्यस्तानि शीर्षकाण्येव सन्ति, परन्तु तत्रत्यप्रधानशब्दान् प्राथम्येन उपन्यस्य तदनुसारेण शेषपदानि यथायथं विपरिवर्त्य पूर्वसंख्यापेक्षया द्वित्रगुणेन वर्धयित्वा निवेक्ष्यन्ते, न केवलं प्राचीनानामेव यथालिखितरूपेणैवेति ध्येयम् । एवं सति नानारीत्या यथेच्छं अधिकरणलाभः स्यात् । संकर्षकाण्डस्य अध्यायचतुष्टयं यद्यपि वस्तुतः १३–१६ इत्येवाङ्काः प्रदर्शनीयाः, तथापि अस्माभिः १–२–३–४ इत्यङ्कैरेव अध्यायनिर्देशः कृतः । यत्र 'संकर्ष.' इति अङ्कादौ निवेशः तत् शीर्षकं संकर्षकाण्डस्थम्, तत्र च अध्यायपादाधिकरणाङ्का निवेशिताः । 'संकर्ष' इतिपदरहित-केवलाङ्कनिवेशे तु द्वादशलक्षणीस्थं शीर्षकमिति ज्ञेयम् । तत्र च अध्यायपादाधिकरणाङ्कत्रयमेव निर्दिष्टं न सूत्राङ्का निवेशिताः ।

अत्रत्यवर्णक्रमे तु तृतीयभागप्रस्तावे प्रदर्शितरीतिद्वये प्रथमैव रीतिः सरलवर्णक्रमरूपैव स्वीकृता, न तु द्वितीया शास्त्रीया रीतिरित्यवधेयम् । ]

अंश्वदाभ्यग्रहौ संयोगपृथक्त्वेन काम्यौ नित्यौ च । संकर्ष. ३।३।१५.

अंश्वदाभ्ययोरपि सादनादयो ग्रहधर्माः सन्ति । ३।६।११.

अंश्वदाभ्ययोर्दधिग्रहानन्तरं यागः । ( इदं ३।३।८ अधिकरणेन विरुद्ध भाति ) । संकर्ष. ३।३।१४.

अंश्वदाभ्यादयो ग्रहाः क्रतुशेषत्वात् धाराग्रहेभ्यः पूर्वं सकृदेव कर्तव्याः । चित्रिण्यादय इष्टकाश्च अग्निशेषत्वात् सकृदेवोपधातव्याः । ५।३।६.

अंश्वदाभ्याधिकरणम् ( अंश्वदाभ्यग्रहयोर्ज्योतिष्टोमार्थता ) । २।३।९.

अंश्वदाभ्यानन्तरमेव दधिग्रहयागः न तु प्राक् । ( इदं ३।३।१४ अधिकरणेन विरुद्धं भाति ) । संकर्ष. ३।३।८.

अक्ताधिकरणम् । ( अक्ताः शर्करा इति घृतेनेति वाक्यशेषात् ज्ञेयम् ) । १।४।१३.

अक्षाभ्यञ्जनन्यायः । ( एकहायनीनयनं न अक्षाभ्यञ्जनप्रयुक्तम् ) । ४।१।१०.

अगस्त्यस्यकयाशुमीयादावे ( दौ ए ) कादशैव सामिधेन्यः । संकर्ष. ४।४।३.

अग्निं चित्वेति सौत्रामणी क्रतोरङ्गम्, न चित्यङ्गम् । संकर्ष. १।१।५.

अग्निं चिन्वानाय दक्षिणादानं क्रत्वङ्गम् । संकर्ष. १।१।७.

'अग्निं होत्रायावह' इत्युक्तोऽग्निः आहवनीयादन्यः । संकर्ष. ४।२।९.

अग्निः शालामुखीयः औत्तरवेदिकप्रणयनोत्तरं गार्हपत्यः संपद्यते । संकर्ष. ३।२।१२.

अग्निः स्विष्टकृत् गार्हपत्याधिष्ठाता देवताविशेष एव । संकर्ष. ४।२।१०.

अग्निचयन ( ने ) उपसदां षट्त्वं तिसृणां स्वस्थानविवृद्धया संपादनीयं न तु दण्डकलितवत् । ५।३।२.

अग्निचयन ( ने ) उपसदां षट्त्वसंख्या सर्वसंपाद्या । ५।३।१.

अग्निचयनं त्रिवारमेव कर्तव्यमिति न नियमः चतुर्थाद्याहारसंभवात् । संकर्ष. २।१।३०.

अग्निचयनगतनिर्मन्थ्ये अग्नीषोमीयपशुगतनिर्मन्थ्यधर्माणां नातिदेशः । ७।३।७.

अग्निचयनगतस्य उख्यस्याग्नेः नित्यं न धारणम् । १२।४।१०.



अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येनाग्निना उख्यस्याग्नेर्बाधः । १२।४।७.

अग्निचयनगतो निर्मन्थ्यशब्दः लौकिकनिर्मथनजन्याग्निवाचकः योगरूढः । १।४।९.

अग्निचयनप्रकरणे पठ्यमानानां बीजवपनार्थानामाधूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तये केषांचिदेव उपादानम्, न प्रथमानामेव । १०।५।५.

अग्निचयनप्रकरणे श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्याग्नेः आहवनीयत्वं नास्ति । १२।४।८.

अग्निचयनमुपसद्दिनेष्वेव, न तु ततः पूर्वम् । संकर्ष २।१।२७.

अग्निचयनविशिष्टे क्रतौ एकादिदीक्षापक्षाणां न बाधः । संकर्ष. २।१।२९.

अग्निचयनस्य अतिग्राह्याणां च विकृतिषु अतिदेशः । १०।८।११.

अग्निचयनादा(दौ अ) वनुनिर्वाप्येषु देवसुवां हविरादिषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः । १२।३।२.

अग्निचयनाद्यङ्गभूताः सौत्रामण्यादयः स्वकाले एव कर्तव्याः, न तु चयनाद्यनन्तरमेव प्रयोगमध्ये । ४।३।१७.

अग्निचयनेऽकामिनः उख्योऽग्निर्नित्यः, कामिनस्तु वृक्षाग्रजन्यादिः काम्यः इति व्यवस्थितो विकल्पः । १२।४।७.

अग्निचयनेऽग्निचिद्व्रतानां क्रत्वन्ते अनुष्ठानम्, न तु चयनमात्रान्ते । ५।३।१०.

अग्निचयने चतुर्थाद्याहारेषु त्रिषाहस्राधिका संख्या स्यात् । संकर्ष. २।१।३१.

अग्निचयने चरुमुपदधाति इति नैवारचरोः उपधानमात्रं विधीयते । २।३।७.

अग्निचयने चितिमानेषु यजमानगतमेव मानं ग्राह्यम् । संकर्ष. १।४।१०.

अग्निचयने चित्रिण्यादीनामनारभ्याधीतानामिष्टकानां लोकंपृणातः प्रागुपधानम् । ५।३।८.

अग्निचयने चित्रिण्यादीनामनारभ्याधीतानामिष्टकानां सकृदेवोपधानम् । ५।३।६.

अग्निचयने चित्रिण्यादीनामिष्टकानां मध्यमचितावुपधानम् । ५।३।७.

अग्निचयनेऽज्यानीहोमेषु मान्त्रवर्णिकी देवता । संकर्ष. २।४।४.

अग्निचयने तिसृधन्वदानं ब्राह्मणायैव । संकर्ष. १।१।६.

अग्निचयने धार्याग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम् । ९।४।७.

अग्निचयनेऽनुनिर्वाप्येषु देवसुवां हविःषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः । १२।३।२.

अग्निचयने 'निवेशनः संगमनः' इति मन्त्रः गार्हपत्योपस्थाने विनियोक्तव्यः । ३।२।२.

अग्निचयने पृष्ठैरुपतिष्ठते इति पृष्ठशब्दः ऋग्द्रव्यवाचकः । ७।३।१४.

अग्निचयने प्रधानादौ अग्नियोगः प्रधानान्ते च अग्निविमोकः ( इति भाष्यमतम् । साङ्गप्रधानादौ अग्नियोगः साङ्गप्रधानान्ते अग्निविमोक इति वार्तिकमतम् ) । ११।३।९.

अग्निचयने प्रोक्षणविकर्षणे सकृदनुष्ठेये । ९।१।८.

अग्निचयने भूतेष्टकानामुपधानं राजसूयमन्त्रैरेव इतिपक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैः कर्तव्यम् । संकर्ष. २।४।२४.

अग्निचयने भूतेष्टकोपधानं प्राकरणिकमन्त्रैरेव । संकर्ष. २।४।२३.

अग्निचयने 'यदृषीणामाग्नेयम्, तेन संवत्सरमग्निं चिन्वीत' इति दाशतयीभ्यः आग्नेयमन्त्रा आहार्याः । संकर्ष. २।१।३२.

अग्निचयने रुक्मप्रतिमोचनादि दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम् । ५।२।१२.

अग्निचयने वसोर्धारायां मन्त्रान्ते कर्मादिसंनिपातः । १२।३।११.

अग्निचयने 'वृषभमुपदधाति' इति वृषभशब्दः 'त्वामग्ने वृषभम्' इति मन्त्रोपधेयेष्टकापरः । संकर्ष. २।१।२२.

अग्निचयने श्येनाकृतिः काम्यैव । संकर्ष. २।१।४०.

अग्निचयने श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्यस्याग्नेः आधानादिसंस्काराणां बाधः । १२।४।९.

अग्निचयने श्रुतानां दीक्षाऽऽहुतिमन्त्राणां सौमिकदीक्षाऽऽहुतिमन्त्रैः समुच्चयः । १०।३।४.

अग्निचयने षष्ठी चितिर्नैमित्तिकी । ४।४।७.

अग्निचयने संख्यया विहितानां मन्त्राणां समुच्चयः । १२।३।१४.

अग्निचयने संवत्सरमुख्यधारणाभावे वैश्वानरेष्टिः । ४।४।६.

अग्निचयने समारोप्यैव अन्यत्राग्निनयनम् । संकर्ष. ३।२।३४.

अग्निचयने सर्वौषधावघातस्य नाभ्यासः । ११।१।६.

अग्निचयने ‘ सहस्रं चिन्वीत ’ इति सहस्रशब्दो न क्रतुपरः, किन्तु स्थण्डिलपरः । संकर्ष. २।१।१२.

अग्निचयने ‘ सहस्रस्य प्रमा असि ’ इति मन्त्रः सर्वचित्यङ्गम् । संकर्ष. २।१।१४.

अग्निचयने सांवत्सरिके ‘ गायत्रचितं चिन्वीत ब्रह्मवर्चसकामः ’ इत्यादि तत्तत्फलकामुकानामेव । अकामानां तु तदितरच्छन्दस्का एव ऋचः । संकर्ष. २।१।३७.

अग्निचयने सांवत्सरिके दाशतयीभ्यः आहृतानामाग्नेयीनां याज्ञसेनीभिः न समुच्चयः । संकर्ष. २।१।३३.

अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतानामाग्नेयसूक्तानां चयनातिरिक्ते उपस्थानादौ नोपयोगः ( तद्दिने, दिनान्तरे तु स्यादेव इति वक्तव्यम् । के. ) । संकर्ष. २।१।३६.

अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतैः सूक्तैरेव प्रतिसूक्तमुपधानम्, न प्रत्यृचम् । संकर्ष. २।१।३५.

अग्निचयने सावित्रहोमोत्तरं दीक्षणीया कर्तव्या । ५।२।११.

अग्निचयने सुपर्णाकृतिर्न नित्या, बोधकमन्त्रास्तु अर्थवादः । संकर्ष. २।१।३९.

अग्निचयने स्वयमातृण्णोपधाने वरदानमध्वर्योः कर्म । वि. ३।८।२.

अग्निचयने हिरण्यशकलैः प्रोक्षणं सकृत् कर्तव्यम् । ९।१।८.

अग्निचितः केवलसोमयागे एव एकविंशतिलोकंपृणामिश्रितिः गुणविधिः । संकर्ष. १।३।१३.

अग्निचित्कर्तृकसोमे उत्तरवेदिपुराणाग्निद्वयस्यैव एकविंशतिलोकंपृणानां च समुच्चयः । संकर्ष. १।३।१२.

अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणान्तरविधिः । संकर्ष. १।३।११.

अग्निचिद्व्रतानां क्रत्वन्ते अनुष्ठानम्, न तु चयनमात्रान्ते । ५।३।१०.

अग्निचेतृदक्षिणया क्रतुदक्षिणायाः न बाधः । संकर्ष. १।१।८.

अग्निनयनमन्यत्र समारोप्यैव अग्निचयने । संकर्ष. ३।२।३४.

अग्निप्रणयनं चातुर्मास्येषु मध्यमयोरेव पर्वणोः । ७।३।९.

अग्निभेदेऽपि अरणिभेदो नावश्यकः । संकर्ष. ३।२।३२.

‘अग्निमग्न आवह’ इति संबोध्योऽग्निः आहवनीयः । संकर्ष. ४।२।८.

अग्नियोगः प्रधानादौ, अग्निविमोकः प्रधानान्ते अग्निचयने ( इति भाष्यम् । साङ्गप्रधानादौ साङ्गप्रधानान्ते च इति वार्तिकम् ) । ११।३।९.

अग्निराहवनीयादिः सर्वप्रकृतिविकृत्यर्थः । ३।७।१९.

अग्निरुद्धृतोऽप्रवृत्ते कर्मणि लौकिकः संपद्यते । संकर्ष. ३।२।९.

अग्निरौत्तरवेदिकः शालामुखीयस्य एकदेश एव, न कृत्स्नः । संकर्ष. ३।२।११.

अग्निर्ज्योतिष्टोमिकः तदपवर्गे एव लौकिकः संपद्यते, न तु दीक्षणीयाऽऽद्यपवर्गेऽपि । संकर्ष. ३।२।१०.

‘ अग्निर्देवो होता देवान् यक्षत् ’ इति आहवनीयवादः । संकर्ष. ४।२।१८.

‘ अग्निर्होता वेत्तु ’ इति स्रुगादापननिगदे आहवनीयवादः । संकर्ष. ४।२।१९.

‘ अग्निर्होत्रेणेदं हविरजुषत ’ इति गार्हपत्यवादः । संकर्ष. ४।२।१६.



अग्निविहरणादिमन्त्रविनियोगाधिकरणम् । ( ‘ उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर, व्रतं कृणुतेति वाचं विसृजते ’ इति कालार्थः संयोगः ) । ३।२।४.

अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रियानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वम् । १०।६।७.

अग्निष्टुति सुब्रह्मण्यानिगदे हरिवादिपदानां नोहः । ९।१।१६.

अग्निष्टुति स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेव अविकारेण प्रयोगः । १०।४।२४.

अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालमनुष्ठानम् । ५।३।१४.

अग्निष्टोमविकाराणामेकानेकस्तोमकानामपि अग्निष्टोमोत्तरमनुष्ठानम् । ५।३।१५.

अग्निष्टोमस्य यज्ञेषु प्राथम्यम् । ५।३।१३.

अग्निष्टोमे त्रयाणां पशूनां यूपस्तन्त्रम् । ११।३।३.

अग्निष्टोमे पशुत्रयार्थः स्वरुस्तन्त्रम् । ११।३।५.

अग्निष्टोमे पशुत्रयार्थयूपसंस्काराणां तन्त्रम् । ११।३।४.

अग्निष्टोमेऽपि अतिग्राह्याः, न विश्वजित्येव । संकर्ष. ३।३।२.

अग्निष्टोमे साग्निचित्ये सावित्रहोमादयः दीक्षणीयायाः प्राक् कर्तव्याः । ५।२।११.

अग्निष्टोमोक्थ्ययोः षोडशी गृहीतश्चेत् सस्तुतशस्त्र एव । १०।५।१२.

अग्निष्ठभिन्नानां यूपानां मानं सौत्येऽहनि । संकर्ष. १।४।१७.

अग्निष्ठभिन्ना यूपाः यूपैकादशिन्यादौ उदग्दक्षिणा मातव्याः । संकर्ष. १।४।२०.

अग्निष्ठरशने यूपरशनाश्च तन्त्रं यूपैकादशिन्याम् । संकर्ष. १।४।१९.

‘ अग्निष्ठे ऐकादशिना रशनाः परिवीय वासयति ’ इति रशनासंस्कारः । संकर्ष. १।४।१२.

अग्निष्ठे द्वाभ्यांद्वाभ्यामेव क्रमेण परिव्याणम् । संकर्ष. १।४।१३.

अग्निसंमार्गाधिकरणम् । ( संमार्गो गुणकर्म ) । २।१।४.

अग्निसंमार्गो गुणकर्म । २।१।४.

अग्निसंस्कारश्चयनम् । २।३।१०.

अग्निहोत्र( त्रे ) उभयाग्निनाशे पुनराधानं प्रायश्चित्तम् । ६।४।८.

अग्निहोत्रं यावज्जीवं कार्यम् । २।४।१.

अग्निहोत्रन्यायः (विहितकाले एव कर्तव्यं, न सर्वदा) । ६।२।७.

अग्निहोत्रपाकः पशोर्ह्यहकालत्वे प्राजहिते एव । संकर्ष. ३।२।२५.

अग्निहोत्रशब्दः कर्मनामधेयम् । १।४।३.

अग्निहोत्रशब्दो धर्मानतिदिशति । ७।३।१.

अग्निहोत्रहवणीन्यायः ( अग्निहोत्रहवण्यभावेऽपि पवमानेष्टिषु निर्वापोऽनुष्ठेयः । १०।२।२७.

अग्निहोत्रहोमः सर्वहोमानां प्रकृतिः । वि. ८।१।३ वर्णकं २.

अग्निहोत्रहोमः सायंतनः पशुयागदिनेऽपि नोत्तरवेदिके, दैवात् पशुकर्मण उत्कर्षे तु औत्तरवेदिके एव । संकर्ष. ३।२।२४ ( २४–२७ ).

अग्निहोत्रहोमस्य नोत्कर्षः सांतपनीयोत्कर्षेऽपि । ५।१।१७.

अग्निहोत्रादिकर्मणां निमित्तावृत्त्या आवृत्तिः । ६।२।८.

अग्निहोत्रादिकर्माणि विहितकाले एव कर्तव्यानि, न सातत्येन । ६।२।७.

अग्निहोत्रादीनां धर्मा अपूर्वप्रयुक्ताः । ९।१।१.

अग्निहोत्रादीनामप्युत्कर्षः दीक्षोत्कर्षे । ६।५।१०.

अग्निहोत्रादौ दध्यादि काम्यं नित्यं च । ४।३।३.

अग्निहोत्राभावेऽपि दीक्षितस्य अन्यत्र गमने प्राप्ते समारोप्यैव अग्निर्नेतव्यः । संकर्ष. ३।२।३१.

अग्निहोत्रार्थोद्धरणमन्त्रस्य दर्शपूर्णमासार्थोद्धरणकाले नानुष्ठानम् । ९।४।८.

अग्निहोत्रेष्टिसोमधर्माणामपूर्वार्थत्वात् ऊहविचारः कर्तव्यः । वि. ९।१।१ वर्णकं १.

अग्नीधः प्राकृतकृत्स्नेडाभक्षस्य वनिष्ठुना निवृत्तिः अग्नीषोमीये पशौ । १०।७।५.

अग्नीवरुणयोर्वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे अवभृथे स्विष्टकृद्यागीयनिगमेषु। १०।४।१७.

अग्नीषोमीयः पशुः छाग एव । ६।८।१०.

अग्नीषोमीयः पशुः सांनाय्यगतपयोविकारः । ८।२।३.

अग्नीषोमीयः पशुः सांनाय्यविकारः । ८।२।२.

अग्नीषोमीयदेशे स्तरणार्थम् आतिथ्याबर्हिषि संनह्य आह्रियमाणे संनहनहरणमन्त्रयोर्नावृत्तिः । १२।१।२१.

अग्नीषोमीयपशुगतनिर्मन्थ्यधर्माणां अग्निचयनगतनिर्मन्थ्ये नातिदेशः । ७।३।७.

अग्नीषोमीयपशुधर्माणां सवनीये पशौ अतिदेशः । ८।१।६.

अग्नीषोमीयपशुपुरोडाशश्रपणं शालामुखीये, न तु शामित्रे । १२।१।५.

अग्नीषोमीयपशुपुरोडाशस्विष्टकृति त्यागे निगमेषु च स्विष्टकृच्छब्दलोपः । १०।४।१८.

अग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्मे उपांशुत्वं तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् । ९।१।६.

अग्नीषोमीयपश्वादौ प्रयाजादिषु एकादशत्वादिगुणविधिः । १०।३।१.

अग्नीषोमीयपुरोडाशधर्माणामतिदेशः अध्वरकल्पागताग्नावैष्णवे । ८।३।१.

अग्नीषोमीयपुरोडाशविकाराणां सांनाय्यविकाराणां च सोमोत्तरकालता । ५।४।८.

अग्नीषोमीयसवनीययोः समानविधित्वपपक्षे अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य न विकारः । ९।३।८.

अग्नीषोमीयादिपशुत्रयार्थः शूलः तन्त्रम् । संकर्ष. २।२।१.

अग्नीषोमीयार्थाः पशुधर्माः । ३।६।७.

'अग्नीषोमीयेण यजेत अमावास्यामभिचरन्' इत्यनेन अभिचारोद्देशेन अग्नीषोमीयहविर्विधिः। संकर्ष. १।२।१६.

'अग्नीषोमीयेण यजेत पौर्णमासीमभिचरन्' इत्यनेन अभिचारोद्देशेन अग्नीषोमीयहविर्विधिः । संकर्ष. १।२।१७.

अग्नीषोमीये पशावेव प्लक्षशाखायाः विनियोगः । संकर्ष. १।३।१४.

अग्नीषोमीये पशौ अग्नीधः प्राकृतकृत्स्नेडाभक्षस्य वनिष्ठुना निवृत्तिः । १०।७।५.

अग्नीषोमीये पशौ अध्यूध्न्या होतुः कृत्स्नेडाभक्षस्य निवृत्तिः । १०।७।४.

अग्नीषोमीये पशौ आतिथ्याबर्हिषः स्तरणकाले स्तरणमन्त्रस्यावृत्तिः । १२।१।२०.

अग्नीषोमीये पशौ दार्शिको विध्यन्तः । ८।१।५.

अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्विकल्पः । ९।३।५०.

अग्नीषोमीये पशौ प्रतिप्रस्थातुर्भक्षो नास्ति । १०।७।८

अग्नीषोमीये पशौ प्रत्यङ्गं हविर्भेदः । १०।७।१.

अग्नीषोमीये पशौ प्रयाजानूयाजार्थपात्रयोर्भेदः । ५।२।८.

अग्नीषोमीये पशौ प्रयाजान्तापकर्षः, सवनीयपशौ च अनूयाजादेरुत्कर्षः तदादितदन्तन्यायात् । ५।१।१२.

अग्नीषोमीये पशौ मैत्रावरुणस्य अस्ति भक्षः । १०।७।६.

अग्नीषोमीये पशौ मैत्रावरुणस्य एक एव भागः । १०।७।७.

अग्नीषोमीये पशौ यागसमाप्त्युत्तरं लौकिके यूपस्पर्शे प्रायश्चित्तम् । ९।३।३.

अग्नीषोमीये पशौ यूपनिखनने 'अर्धमन्तर्वेदि अर्धं बहिर्वेदि' इति उभयोपलक्षितदेशविशेषस्य विधानम् । ३।७।६.

अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तत्वम्। १०।७।२०.

अग्नीषोमीये पशौ वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः । ११।३।८.

अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्तॄणामेव वरणम् । संकर्ष. ३।४।९.

अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्त्रनुवादः, न वरणान्तरम् । संकर्ष. ३।४।१२.

अग्नीषोमीये पशौ सप्तानामपि वषट्कर्तॄणां वरणं लौकिकया वाचा । संकर्ष. ३।४।१०.



अग्नीषोमीये पशौ समुच्चितयोः प्रैषानुवचनयोः मैत्रावरुणः कर्ता । तत्र आध्वर्यवहौत्रसमाख्यायाः बाधः । ३।७।२०.

अग्नीषोमीये पशौ स्वरुः छेदनादेर्न प्रयोजकः । ४।२।१.

अग्नीषोमीये पशौ स्विष्टकृत् अनिज्याशेषैः त्रिभिरङ्गैः कर्तव्यः । १०।७।३.

अग्नेः स्विष्टकृतः आवाहनं हव्यवहनार्थमेव इति तत्रैव 'अग्निं होत्राय' इति निगदः । संकर्ष. ४।२।११.

अग्नेरात्मसमारोपेऽपि प्रत्यवरोहः अरण्योरेव, ततो मथनम् । संकर्ष. ३।२।३५.

अग्नेर्न प्रतिनिधिः ( वचनाभावे ) । ६।३।५.

अग्न्यतिग्राह्याधिकरणम् ( अग्निचयनस्य अतिग्राह्याणां च विकृतिषु अतिदेशः ) । १०।८।११.

अग्न्यधिकरणम् ( अग्निसंस्कारश्रयनम् ) । २।३।१०.

अग्न्यन्वाधानं ज्योतिष्टोमे दीक्षणीयाऽऽदिषु न कार्यम् । १२।१।१०.

अग्न्यन्वाधानं दीक्षणीयाऽऽदिषु देवतापरिग्रहार्थमपि न कर्तव्यम् । १२।१।१२.

अग्न्यादिदेवतापदयोगेऽपि न सप्तदशप्रजापतित्वभङ्गः । संकर्ष. २।३।२.

अग्न्योरुभयोर्नाशे पुनराधानं प्रायश्चित्तम् । ६।४।८.

अग्रतायाः काम्याया विधौ शुक्रादिग्रहस्य ऐन्द्रवायवादिग्रहापेक्षया पूर्वं प्रतिकर्षः, न तु उपांशोः प्राक् । १०।५।२०.

अङ्गगुणविरोधन्यायः ( ज्योतिष्टोमे सुत्या पर्वणि कार्या, दीक्षा तु अपर्वणि ) । १२।२।९.

अङ्गप्रधानयोः एकदेशकालकर्तृकत्वम् । ११।२।२.

अङ्गप्रधानयोः वचनबलात् भिन्नदेशकालकर्तृकत्वमपि । ११।३।१.

अङ्गानां प्राकृतानां लुप्तार्थानां विकृतौ बाधः । १०।१।१.

अङ्गानां भेदेनानुष्ठानं अध्वरकल्पायां संघत्रये । ११।२।४.

अङ्गानां समुच्चितानामेव एकोपकारकत्वम् । ११।१।२.

अङ्गानां समुच्चितानामेव प्रधानोपकारकत्वं काम्येषु । ११।१।३.

अङ्गिरसां द्विरात्रे षोडशिग्रहस्य उपसंहारः इति वृत्तिकारमतम् । 'षोडश्युत्तरे' इत्यस्य वैखानससामविध्यर्थवादत्वमिति भाष्यमतम् । १०।५।१३.

अङ्गेषु पाशुकेषु सर्वेषु प्रत्यभिघारणम् । संकर्ष. २।२।१७.

अजद्रव्यस्य प्राकृतस्य द्यावापृथिव्यादौ प्रत्यक्षधेनुवत्सर्षभशब्दोपदिष्टगोद्रव्येण बाधः । १०।२।२९.

अजद्रव्यस्य प्राकृतस्य वायव्यपशौ श्वेतगुणेन न बाधः । १०।२।३०.

'अजैदग्निः' इति प्रैषः अध्वर्योः मैत्रावरुणं प्रति । संकर्ष. २।३।९.

'अजैदग्निः' इति प्रैषः 'उप प्रेष्य होतः' इति प्रैषात् भिन्न एव । संकर्ष. २।३।८.

अञ्जनाभ्यञ्जने सत्रे गौग्गुलवादिना नवनीतस्य समुच्चयः । १०।४।६.

अतिक्रमाधिकरणम् (अतिक्रममन्त्रप्रोक्तं फलं आर्त्विजम् ) । ३।८।१४.

अतिग्राह्यः पृष्ठ्ये षडहे 'वैराजस्तोत्राय आग्नेयो गृह्यते' इति नात्र देवताविधिः । संकर्ष. ३।३।६.

अतिग्राह्याः प्रकृतौ अग्निष्टोमेऽपि, न विश्वजित्येव । संकर्ष. ३।३।२.

अतिग्राह्याणां उक्थ्ये निषेधः पृष्ठ्योक्थ्ये एव । संकर्ष. ३।३।३.

अतिग्राह्याणां त्रयाणां समानविधित्वम्। संकर्ष ३।३।१.

अतिग्राह्याणां पूर्वत्र्यहे उत्तरत्र्यहे च व्यवस्थितविकल्पः । संकर्ष. ३।३।५.

अतिग्राह्याणां पृष्ठ्योक्थ्येषु विकल्पो न पर्युदासः । संकर्ष. ३।३।४.

अतिग्राह्याणां माहेन्द्रस्तोत्रानन्तरमेव होमः, न तु सह । संकर्ष ३।३।७.

अतिग्राह्याणां विकृतिषु अतिदेशः । १०।८।११.

अतिदेशः अग्निचयनस्य अतिग्राह्याणां च विकृतिषु । १०।८।११.

अतिदेशः अग्नीषोमीये पशौ सांनाय्यगतपयोधर्माणाम् । ८।२।३.

अतिदेशः अग्नीषोमीये पशौ सांनाय्यधर्माणाम् । ८।२।२.

अतिदेशः अध्वरकल्पागताग्नावैष्णवादौ अग्नीषोमीयादिपुरोडाशधर्माणाम् । ८।३।१.

अतिदेशः अहर्गणेषु अहीनात्मकद्वादशाहधर्माणाम् । ८।१।१०.

अतिदेशः आग्नेयपुरोडाशधर्माणां शुचिदेवताके हविषि । वि. ८।३।१.

अतिदेशः इषौ श्येनीयधर्माणाम् । ७।१।२.

अतिदेशः उद्भिदादिषु अव्यक्तयागेषु सौमिकधर्माणाम् । ८।१।९.

अतिदेशः ऐकादशिनेषु पशुषु सवनीयपशुधर्माणाम् । ८।१।७.

अतिदेशः ऐन्द्राग्नादिविकृतौ दार्शपौर्णमासिकधर्माणाम् । ८।१।४.

अतिदेशः ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशधर्माणाम् । ८।१।१७.

अतिदेशः कुण्डपायिनामयनगते अग्निहोत्रे नित्याग्निहोत्रधर्माणाम् । ७।३।१.

अतिदेशः कृष्णलचरौ आग्नेयपुरोडाशधर्माणाम् । ८।१।१८.

अतिदेशः गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्माणाम् । ७।४।३.

अतिदेशः गवामयनगतस्वरसामधर्माणाम् अष्टरात्रगतस्वरसामद्वये । ७।३।१०.

अतिदेशः चित्रेष्टिगतमधूदकयोः उपांशुयाजधर्माणाम् । ८।१।१९.

अतिदेशः जनकसप्तरात्रे द्वादशाहिकसप्ताहधर्माणां क्रमेण । ८।३।२.

अतिदेशः दार्शपौर्णमासिकपुरोडाशधर्माणाम् ऐन्द्रे एकादशकपाले, न तु सांनाय्यधर्माणाम् । वि. ८।१।१७.

अतिदेशः दार्शिकधर्माणामग्नीषोमीये पशौ । ८।१।५.

अतिदेशः धर्माणां साहश्यविशेषेण नियतप्रकृतितः । ८।१।२.

अतिदेशः न अग्निचयनगतनिर्मन्थ्ये अग्नीषोमीयपशुगतनिर्मन्थ्यधर्माणाम् । ७।३।७.

अतिदेशः न उपशये यूपसंस्काराणाम् । ७।३।१४.

अतिदेशः न चातुर्मास्यगताग्निप्रणयने सौमिकाग्निप्रणयनधर्माणाम् । ७।३।८.

अतिदेशः न पार्वणहोमयोर्विकृतौ । ९।२।१८.

अतिदेशः न प्राकृतावदानधर्मस्य एककपाले वैश्वानर्यां वपायां च । संकर्ष. २।२।१६.

अतिदेशः न प्रायणीयनाम्ना । ७।३।२.

अतिदेशः न फलनियमकर्तृसमुदायानां दार्शपौर्णमासिकानाम् । ८।१।१३.

अतिदेशः न राजसूयगतवैष्णवे आतिथ्यागतवैष्णवधर्माणाम् । ७।३।६.

अतिदेशः न विकृतौ प्राकृतकाम्यगुणानाम् । ८।१।१४.

अतिदेशः न सोमे ऐष्टिकधर्माणाम् । ८।१।३.

अतिदेशः निकायिनामुत्तरेषु पूर्वनिकायिधर्माणाम् । ८।१।१२.

अतिदेशः पञ्चदशरात्रे कुण्डपायिनामयने च सत्रात्मकद्वादशाहधर्माणाम् । ८।२।६.

अतिदेशः पशुगणेषु ऐकादशिनपशुधर्माणाम् । ८।१।८.

अतिदेशः योनिगतानां स्तोभानामुत्तरयोर्ऋचोः । ९।२।१०.

अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डस्य । ७।१।३.

अतिदेशः वरुणप्रघासगतैककपालधर्माणां साकमेधीयैककपाले । ७।१।५.

अतिदेशः वरुणप्रघासावभृथे अवभृथनाम्ना सौमिकावभृथधर्माणाम् । ७।३।४.



अतिदेशः वाजिनसुराग्रहयोः ऐष्टिकधर्माणाम् । ८।२।१.

अतिदेशः विश्वजिति षडहगतपृष्ठानाम् । ७।३।३.

अतिदेशः वैश्वदेवपर्वगतैककपालधर्माणां आग्रयणगतद्यावापृथिव्यैककपाले । ७।३।१०.

अतिदेशः वैश्वदेव्यामिक्षायां सांनाय्यपयोधर्माणाम् । ८।२।४.

अतिदेशः शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्माणाम् । ८।३।४.

अतिदेशः शतोक्थ्यादौ ज्योतिष्टोमिकोक्थ्यादिस्तोत्राणाम् । ८।३।५.

अतिदेशः षट्त्रिंशद्रात्रे षडहधर्माणाम् । ८।३।३.

अतिदेशः संवत्सरसत्रेषु गवामयनधर्माणाम् । ८।१।११.

अतिदेशः सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थया । ८।२।५.

अतिदेशः सवनीये पशौ अग्नीषोमीयधर्माणाम् । ८।१।६.

अतिदेशः सांनाय्यपयोधर्माणामाग्नेये पयसि । वि. ८।१।१७.

अतिदेशः साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्माणाम् । ७।१।५.

अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः वारुणप्राघासिकसार्थवादविधिकाण्डस्य । ७।१।४.

अतिदेशः सौर्यादौ इतिकर्तव्यतायाः । ७।४।१.

अतिदेशः सौर्यादौ वैदिकस्यैव विध्यन्तस्य । ७।४।२.

अतिदेशः सौर्ये चरौ आग्नेयद्वयधर्माणाम् । ८।१।१५.

अतिदेशः सौर्ये चरौ आग्नेयस्यैव धर्माणाम् । ८।१।१६.

अतिदेशन्यायः । ७।१।१.

अतिदेशविशेषप्रतिपादनप्रतिज्ञा । ८।१।१.

अतिप्रणीतः औपासनो वा पिण्डपितृयज्ञे अनाहिताग्निना उपस्थेयः । संकर्ष. १।२।१४.

अतिरात्रे एकविंशादौ काम्ये अधिकसंख्यापूरणमप्राकृतानां साम्नामागमेन कर्तव्यम् । १०।५।६.

अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थे बहिष्पवमाने आगमितानां तृचानां पर्यासोत्तरं निवेशः । ५।३।४.

अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थे माध्यंदिनार्भवपवमानयोः आगमितानां साम्नां गायत्रीछन्दस्के तृचे आवापः । ५।३।५.

अतिरात्रे रात्रिपर्यायेषु ग्रहचमसानां समुच्चयः । संकर्ष. ३।३।१६.

'अतूर्तो होता तूर्णिर्हव्यवाट्' इति आहवनीयवादः। संकर्ष. ४।२।१३.

अथातो धर्मजिज्ञासा । १।१।१.

अदाभ्यग्रहः काम्यो नित्यश्च । संकर्ष. ३।३।१५.

अदाभ्यस्यापि सादनादयो ग्रहधर्माः । ३।६।११.

अदितिचरुश्रपणार्थे पयसि प्रदेयधर्मा नानुष्ठेयाः प्रायणीये । ९।४।९.

अधिकारः अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैकल्यस्यापि । ६।१।९.

अधिकारः अध्वरकल्पाऽऽदिषु श्रुतसामिधेनीसादृश्यासु विकृतिषु वर्णत्रयस्यापि । ६।६।७.

अधिकारः अश्वियज्ञस्य जीवताम् । १०।२।१७.

अधिकारः आर्त्विज्ये ब्राह्मणस्यैव । १२।४।१५.

अधिकारः कर्मसु द्रव्यरहितस्यापि । ६।१।८.

अधिकारः कलञ्जादिभक्षणनिषेधेषु नरकाद्भीतस्य । ६।२।५.

अधिकारः काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैव । ६।३।२.

अधिकारः कुलाययज्ञे भिन्नकल्पयोरपि । ६।६।२.

अधिकारः क्रतुषु स्त्रिया अपि । ६।१।३.

अधिकारः चतुर्होतृहोमेषु अनाहिताग्नेरेव । ६।८।१.

अधिकारः दर्शपूर्णमासादौ एकस्यैव पुंसः स्त्रीसद्वितीयस्य । ६।२।२.

अधिकारः नास्ति अप्रतिसमाधेयाङ्गवैकल्यस्य । ६।१।१०.

अधिकारः नास्ति विश्वजिति द्वादशशतन्यूनधनस्य । ६।७।९.

अधिकारः पिण्डपितृयज्ञे अनाहिताग्नेरपि । संकर्ष. १।२।१२.

अधिकारः विश्वसृजामयने मनुष्याणामेव, संवत्सरशब्दस्य दिवसपरत्वात् । ६।७।१३.

अधिकारः सत्रे प्रत्येकं कृत्स्नेनार्थिनाम् । ६।२।१.

अधिकारः सत्रे ब्राह्मणानामेव । ६।६।३.

अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव । ६।६।४.

अधिकारः सत्रे संपादितसाधारणपात्राणामेव यजमानानाम् । ६।६।६.

अधिकारः सत्रे समानकल्पानामेव ( कल्पः प्रयोगः, न तु सूत्रम् ) । ६।६।१.

अधिकारः सारस्वतभिन्नसत्रेषु आहिताग्नीनाम् इष्टप्रथमयज्ञानाम् । ६।६।५.

अधिकारः स्मार्तादिकर्मसु उपनीतस्यैव । ६।२।६.

अधिकारन्यायः (कर्मानुष्ठानाधिकारस्तत्तत्फलेच्छोः ) । ६।१।१.

अधिवपनकालेऽपि समन्त्रक एव विभागः । संकर्ष. १।३।२१.

अध्यूध्नीन्यायः ( अग्नीषोमीये पशौ अध्यूध्न्या होतुः कृत्स्नेडाभक्षस्य निवृत्तिः ) । १०।७।४.

अध्रिगुप्रैषगतस्य एकवचनान्तस्य मेधपतिशब्दस्य एकादशिन्यां बहुवचनान्तेन ऊहः । ९।३।१४.

अध्रिगुप्रैषगतस्य ' प्रास्मै ' इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे न विकारः । ९।३।८.

अध्रिगुप्रैषगतस्य मेधपतिशब्दस्य एकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः । ९।३।१३.

अध्रिगुप्रैषगताः श्येनशलाऽऽदिशब्दाः कृत्स्नोद्धरणप्रकाशकाः । ९।४।५.

अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानां पशुगणे ऊहो न । ९।३।१०.

अध्रिगुप्रैषगतेन उरूकशब्देन वपाऽभिधानम् । ९।४।३.

अध्रिगुप्रैषगतेन प्रशसाशब्देन बाह्वोः प्रशंसा । ९।४।४.

अध्रिगुप्रैषस्य सारस्वत्यां मेष्यां बाधः । कृत्वाचिन्ता । ९।१।१७.

अध्रिगुप्रैषे अश्वमेधे अश्ववङ्क्रीयत्ताप्रकाशनार्थे वैशेषिकमन्त्राकरणपक्षे त्रयाणां पशूनामर्थे षडशीतिरेषां वङ्क्रय इति समासवचनम् । ९।४।२.

अध्रिगुप्रैषे एकधाशब्दस्य पशुगणे यावत्वचमभ्यासः । ९।३।११.

अध्रिगुप्रैषे पशुगणे समस्तवङ्क्रीयत्ताप्रकाशनार्थे समासेन वचनम् ( 'द्विपञ्चाशदनयोः, अष्टसप्ततिरेषाम् ' इत्यादिरीत्या ) । ९।४।१.

अध्रिगुप्रैषे मेधपतिशब्दस्य द्विपश्वादिविकृतौ देवताऽनुसारेण वचनोहः कर्तव्यः । ९।३।१२.

अध्रिगुमन्त्रस्य आवृत्तिः वाजपेये क्रतुपशूनां प्राजापत्यपशूनां च । ११।४।२०.

अध्वरकल्पागताग्नावैष्णवादौ अग्नीषोमीयादिपुरोडाशधर्माणामतिदेशः । ८।३।१.

अध्वरकल्पाऽऽदिषु श्रुतसामिधेनीसाप्तदश्यासु अधिकारः वर्णत्रयस्यापि । ६।६।७.

अध्वरकल्पान्यायः ( अध्वरकल्पायां संघत्रये अङ्गानां भेदेनानुष्ठानम् ) । ११।२।४.

अध्वरकल्पान्यायः ( बार्हस्पत्यचरुधर्मा आग्नेयविकारत्वात् पूर्वे कार्याः ) । ५।१।१०.

अध्वर्युगणस्थ एव शमिता । संकर्ष. १।१।१४.

अध्वर्युगणस्थेनैव पशुसंज्ञपनं कार्यम् । संकर्ष. १।१।१५.

अध्वर्युभिन्नानां कर्तॄणां वरुणप्रघासेषु तन्त्रम् । ११।२।१०.

अध्वर्योरन्यत्र व्यापृतत्वे चमसहोमेषु चमसाध्वर्यवः कर्तारः । ३।७।२२.

अध्वर्योरेव मुष्टिपरिमाणं निर्वापे । संकर्ष. १।४।११.

अध्वर्य्वादीनां समाख्यया नियतपदार्थकर्तृत्वम् । ३।७।१९ ( ३९ सूत्रांशः ).

' अनड्वाहौ युनक्ति ' इति द्वित्वं विवक्षितं ज्योतिष्टोमे । ४।१।५.

अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगः । १२।३।७.

अनवानत्वं निविदां वाचनिकमेव, न संतानः । संकर्ष. ४।२।४.



अनवानत्वमनुयाजेषु सर्वेष्वेव, नोत्तमे एव । संकर्ष. ४।३।१४.

अनारम्याधिकरणम् । ( अनारम्याधीतं प्रकृत्यर्थम् । अनारम्याधीतन्यायः । अनारम्यन्यायः । अनारम्यवादन्यायः । ) ३।६।१.

अनारम्याधीतसाप्तदश्येन वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य उपसंहारः । १०।८।९.

अनारम्याधीतस्वाहाकारश्रवणेन दर्विहोमादौ क्वचित् स्वाहाकारपुनःश्रवणस्य नोपसंहारः । १०।८।१०.

अनाहिताग्निना पिण्डपितृयज्ञे अतिप्रणीतः औपासनो वा उपस्थेयः । संकर्ष. १।२।१४.

अनाहिताग्नेः पिण्डपितृयज्ञः औपासनाग्नौ स्यात् । संकर्ष. १।२।१३.

अनाहिताग्नेः पिण्डपितृयज्ञे उपस्थानमन्त्रस्थगार्हपत्यपदलोपः । संकर्ष. १।२।१५.

अनाहिताग्नेरपि पिण्डपितृयज्ञे अधिकारः । संकर्ष. १।२।१२.

अनाहिताग्नेरेव चतुर्होतृहोमेषु अधिकारः । ६।८।१.

अनुज्ञापनानुज्ञे एकपात्रे सोमभक्षे वैदिकमन्त्रेणैव । ३।५।१५.

अनुज्ञापूर्वकं सोमभक्षणमेकपात्राणामेव । ३।५।१७.

अनुज्ञापूर्वकमेव सोमभक्षणं एकपात्रे अनेकैः सोमभक्षणे । ३।५।१४.

अनुनिर्वाप्याधिकरणम् ( अग्निचयनादौ अनुनिर्वाप्येषु देवसुवां हविरादिषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः ) । १२।३।२.

अनुपादेयगुणानां कर्मान्तरत्वसाधकत्वं नास्ति । २।३।१३.

अनुबन्ध्यायामनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः । १२।३।२.

अनुबन्ध्यावनस्पतियागयोर्निगमेषु विधिगत–उस्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोः अभिधानम् । १०।४।१६.

अनुमत्यादीष्टौ राजसूयगतायां आरम्भणीयायाः बाधः । १०।१।३.

अनुयाजस्य तृतीयस्य अग्निस्विष्टकृद्देवत्यस्य शेषसंस्कारार्थावापिकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वं दर्शपूर्णमासयोः । १०।४।१९.

अनुयाजाः आग्निमारुतादूर्ध्वं कर्तव्याः इति कालो विधीयते । ४।३।१४.

अनुयाजाः पाशुकाः प्राकृतस्य साधारणस्य प्रथमस्य प्रैषस्य विकारः । २।३।७.

अनुयाजानामामनहोमैः समुच्चयः सांग्रहणीष्टौ । १०।४।४.

अनुयाजीयदेवताप्रकाशनार्थे प्राकृतावाहनमन्त्रस्य अविकारेणैव प्रयोगः चातुर्मास्येषु । १०।४।२५.

अनुयाजेषु ' देवान् यज ' इति प्रैषः त्रितयसाधारण एव । संकर्ष. २।३।३.

अनुयाजेषु येयजामहस्य पर्युदासः । १०।८।१.

अनुयाजेषु सर्वेषु अनवानत्वम्, नोत्तमे एव । संकर्ष. ४।३।१४.

अनुयाजेष्वेकादशसु चत्वारो बर्हिषो विकाराः, चत्वारो नराशंसस्य, नवम एकादशश्च स्विष्टकृतः । संकर्ष. २।३।४.

अनुयाजो दशमो बर्हिर्विकारः । संकर्ष. २।३।५.

अनुवषट्कारयागः पूर्वोपात्तशेषादेव । संकर्ष. १।४।३.

अनुवषट्कारविधिः । संकर्ष. १।१।१.

अनुवषट्कारस्य द्रव्यं पूर्वेष्टशेष एव । संकर्ष. । १।१।२.

अनुवषट्कारस्य प्रतिशेषमावृत्तिः । संकर्ष. १।१।३.

अनुवषट्काराधिकरणम् ( अनुवषट्कारदेवता अग्निः सोमे भक्षमन्त्रे नोपलक्षणीयः ) । ३।२।१६.

अनुवषट्कारे आश्रावणादीनां प्रतिषेधः । संकर्ष. २।३।१५.

अनुवाक्ययोर्द्वयोरपि प्रत्येकं प्रणवः महापितृयज्ञे । संकर्ष. ४।४।६.

अनुवाक्यातः पूर्वं वाग्व्यवहारवादः अनुवाक्योत्तरं वाग्यमस्यैवार्थः । संकर्ष. ४।३।८.

अनुवाक्यासु याज्यासु च गायत्रीपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतिषु यथायथं समुच्चयः । संकर्ष. ४।३।११.

अनुषङ्गाधिकरणम् ( पूर्ववाक्यगतपदानुषङ्गेण उत्तरवाक्यपूर्तिः 'या ते अग्ने हराशया' इत्यादौ )। २।१।१६.

अनुष्ठानसादेश्यरूपक्रमात् पशुधर्माणामग्नीषोमीयाङ्गत्वम्। ३।३।५.

अनृतवदनवर्जनन्यायः ( दर्शपूर्णमासप्रकरणे अनृतवदननिषेधः क्रत्वर्थः )। ३।४।४.

अनैन्द्राणाममन्त्रकं भक्षणम्। वि. ३।२।१६.

अनैन्द्राधिकरणम् ( अनैन्द्रसोमभक्षणेऽपि समन्त्रकत्वम् )। ३।२।१.

अनोवासोन्यायः ( अनोवासःशब्दौ जातिवचनौ, सिद्धयोरेव तयोर्दानम् )। ७।३।१.

'अन्तराऽनूच्यम्' इति सामिधेनीपाठे मध्यमस्य स्वरस्य विधिः, न तु व्याहृतिहिंकारयोर्मध्यभागस्य विधिः। संकर्ष. ४।१।२.

अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषः यूपाङ्गम्। ३।७।६.

'अन्तर्वेद्यन्यः पादः' इति लक्षणया सामिधेनीकाले देशविधिः। संकर्ष. ४।१।३.

अन्तेनिवेशन्यायः ( नारिष्ठहोमानामन्ते उपहोमाः )। ५।२।९.

अन्त्यलोपाधिकरणम् ( प्राकृतैकदेशग्रहणे प्राथमिकानां ग्रहणम्, अन्त्यानां लोपः )। १०।५।१.

अन्त्यलोपापवादाधिकरणम् ( अग्निचयनप्रकरणे पठ्यमानानां बीजवपनार्थानाम् आधूननार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तये केषांचिदेव उपादानम्, न प्रथमानामेव )। १०।५।५.

अन्वारम्भणीया पुरुषस्य आरम्भयोग्यतां संपादयति। ९।१।११ वर्णकं १.

अन्वारम्भणीयाविषयकम् आरम्भणीयाशब्दे द्रष्टव्यम्।

अन्वाहार्यदक्षिणायाः अतिदिष्टायाः आग्रयणे उपदिष्टवासोवत्सदक्षिणया बाधः। १०।३।६.

अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया प्रसङ्गसिद्धिः। १२।१।१६.

अन्वाहार्यधर्माः आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः कर्तव्याः। १०।३।७.

अन्वाहार्यस्थानापन्नयोरपि वासोवत्सयोः अभिघारणस्य बाधः आग्रयणे। १०।३।१०.

अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः आग्रयणे। १०।३।८.

अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः आग्रयणे। १०।३।९.

अपच्छेदन्यायः ( अपच्छेदपौर्वापर्ये परनिमित्तकं प्रायश्चित्तमनुष्ठेयम् )। ६।५।१९.

अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः। ६।५।१८.

अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्। ६।५।१७.

अपरपक्षादिः पित्र्यकर्मणां कालः। ६।८।६.

अपरिमितत्वं दक्षिणायाः सहस्रादधिकत्वमाधाने। ६।७।११.

अपरिमिताधिकरणम् ( अपरिमितत्वं पूर्वोक्तात् संख्याऽन्तरम् आधाने )। ६।७।१०.

अपशवो वै अन्ये गोअश्वेभ्यः इति गोअश्वानां स्तुतिः। १।४।१२–४. वि. १६.

अपशूद्राधिकरणम् ( शूद्रभिन्नानां त्रैवर्णिकानां श्रौते अधिकारः )। ६।१।७.

अपां प्रणयने गोदोहनादिपात्रं काम्यम्। ३।६।३.

अपूर्वं धर्माणां प्रयोजकं निमित्तं च। ९।१।१ वर्णकं ३.

अपूर्वप्रयुक्तः प्रणीतावाग्यमः। ९।१।७.

अपूर्वप्रयुक्तमुपांशुत्वम्– अग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्म उपांशुत्वं तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम्। ९।१।६.

अपूर्वप्रयुक्ताः अग्निहोत्रादीनां धर्माः। ९।१।१.

अपूर्वप्रयुक्ताः अवघातादिधर्माः। ९।१।१ वर्णकं २.

अपूर्वप्रयुक्ताः प्रयाजादिधर्माः। ७।१।१.

अपूर्वप्रयुक्ताः प्रोक्षणादयो धर्माः, न तु द्रव्यसंख्याहेतुसमुदायप्रयुक्ताः। ९।१।५.

अपूर्वप्रयुक्ताः फलदेवताप्रकाशका मन्त्राः। ९।१।३.



अपूर्वप्रयुक्तो दीक्षणीयायामुच्चावचध्वनिः। ९।१।२ वर्णकं २.

अपूर्वबोधकम् आख्यातपदमेव। २।१।१.

अपूर्वस्यैव फलप्रदत्वेन देवतानां धर्मप्रयोजकत्वं नास्ति। वि. ९।१।४.

अपूर्वाधिकरणम् ( कर्मजन्यमपूर्वं स्वीकर्तव्यम् )। २।१।२.

अपौरुषेयत्वाधिकरणम्। १।१।८.

अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मसु नाधिकारः। ६।१।१०.

अभिक्रमणाधिकरणम् ( 'अभिक्रामं जुहोति' इति अभिक्रमणं प्रयाजमात्राङ्गम् )। ३।१।१०.

अभिघारणात् प्रागेव पञ्चावत्ते पञ्चममवदानम्। संकर्ष. २।२।८.

अभिघारणानभिघारणस्य त्र्यम्बकपुरोडाशेषु मीमांसा अर्थवादः। १०।८।५.

अभिचारोद्देशेनाग्नीषोमीयहविर्विधिः 'अग्नीषोमीयेण यजेत पौर्णमासीमभिचरन्' इति। संकर्ष. १।२।१७.

अभिचारोद्देशेनाग्नीषोमीयहविर्विधिः 'अग्नीषोमीयेण यजेतामावास्यामभिचरन्' इति। संकर्ष. १।२।१६.

अभिमर्शनाधिकरणम् ( हविरभिमर्शनमङ्गप्रधानार्थम् )। ३।७।४.

अभिवर्षणभेदेऽपि सकृदेव मन्त्रप्रयोगो दीक्षितस्य। ११।४।१७.

अभिषवे ( सोमस्य ) एव 'तिस्रो यह्वस्य समिधः' इति मन्त्रः प्रयोज्यः। संकर्ष. ३।३।१३.

अभिषेचनीयदशपेययोर्भिन्नं तन्त्रम्। ११।३।१४.

अभ्यासः काम्यानां कर्मणां पुनःपुनः कामनाऽनुरोधेन कृषिवत्। ११।१।४.

अभ्यासाधिकरणम् ( समिधो यजति, तनूनपातं यजति इत्यादौ यजतिपदाभ्यासः कर्मभेदकः )। २।२।२.

अभ्यासो न अग्निचयने सर्वौषधावघातस्य। ११।१।६.

अभ्यासो न प्रयाजादीनामङ्गानामेकस्मिन् प्रयोगे। ११।१।७.

अभ्यासोऽवघातादिक्रियाणां दृष्टार्थानां प्रयोजननिष्पत्तिपर्यन्तम्। ११।१।५.

अभ्युदितेष्टाव( ष्टौ अ )र्धनिर्वापोत्तरं चन्द्राभ्युदये अवशिष्टनिर्वापः तूष्णीं कर्तव्यः। ६।५।५.

अभ्युदितेष्टा( ष्टौ उ )वुपांशुयाजस्य लोपः दर्शे। उपांशुयाजाभावे तु क्रत्वाचिन्ता। वि. ६।५।२.

अभ्युदितेष्टा( ष्टौ उ )वुपांशुयाजेऽपि देवताऽपनयः। ६।५।२.

अभ्युदितेष्टिप्राप्तौ तां कृत्वा केवलदर्शोऽपि पुनः कार्यः। संकर्ष. १।२।८.

अभ्युदितेष्टिरूपं चन्द्राभ्युदयनिमित्तकं प्रायश्चित्तम् असंनयतोऽपि भवति। ६।५।६.

अभ्युदितेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानम्। ९।२।१४.

अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानम्। ९।४।१०.

अभ्युदितेष्टौ दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्राभ्युदये वैकृतीभ्य एव देवताभ्यो निर्वापः। ६।५।४.

अभ्युदितेष्ट्यधिकरणम् ( अभ्युदितेष्टौ नैमित्तिको देवताऽपनयः )। ६।५।१.

अभ्युदितेष्ट्यनुष्ठानं दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्रोदये। ६।५।३.

अमावास्यातन्त्रस्य निशीष्टौ प्रसङ्गः। १२।२।५.

अमावास्यायां प्रागुदयात् यागस्योपक्रमः। संकर्ष. ३।१।४.

अमेध्यानामनेकेषामेकदा दर्शनेऽपि दीक्षितस्य सकृदेव मन्त्रप्रयोगः। ११।४।१७.

अयं सहस्रमानवः ( साम.४५८ ) इति ऋचा प्रगीतयैव द्वादशाहे दशमेऽहनि मानसस्तोत्रात् प्राक् आहवनीयोपस्थानम्। ९।२।८ वर्णकं १.

'अयाड् देवानामाज्यपानाम्' इति प्रयाजानुयाजोभयदेवतावादः। संकर्ष. ४।३।१३.

अरणिभेदोऽग्निभेदेऽपि नावश्यकः। संकर्ष. ३।२।३२.

अरण्योरेव अग्नेः प्रत्यवरोहः आत्मसमारोपपक्षेऽपि। संकर्ष. ३।२।३६.

अरत्न्यादिपरिमाणं यूपादौ यजमानगतमेव । संकर्ष. १।४।९.

अरुणाऽधिकरणम् ( अरुणया पिङ्गाक्ष्या इति आरुण्यं क्रयसाधनम् ) । ३।१।६.

अर्कग्रहेणैन्द्रवायवादीनां समुच्चयः विषुवति । १०।४।२.

अर्थक्रमः पाठक्रमाद् बलवान् । ५।४।१.

अर्थक्रमाधिकरणम् । ५।१।२.

अर्थवादाधिकरणम् । १।२।१.

अवकीर्णिपश्वधिकरणम् (अवकीर्णिपशुर्लौकिकेऽग्नौ) । ६।८।४.

'अवगूर्य वषट् करोति' इत्यनयोर्याज्यान्यवायेऽपि पौर्वापर्यम् । संकर्ष. ४।३।४.

अवगोरणनिषेधस्य दर्शपूर्णमासप्रकरणे श्रुतस्य केवल-पुरुषार्थतया प्रकरणादुत्कर्षः । ३।४।६.

अवगोरणन्यायः ( अवगोरणस्य प्रकरणादुत्कर्षः ) । ३।४।६.

अवघातन्यायः ( दर्शपूर्णमासयोः अवघातमन्त्रस्य सकृत् प्रयोगः ) । ११।४।१२.

अवघातमन्त्रन्यायः ( अवघातन्यायः) । ११।४।१२.

अवघातमन्त्रावृत्तिर्नानाबीजेष्टौ प्रतिबीजम् । ११।४।१३.

अवघातस्य कृष्णलचरौ बाधः । १०।१।१ वर्णकं १.

अवघातस्य धानासु न बाधो महापितृयज्ञे । १०।२।३४.

अवघातादिक्रियाणामदृष्टार्थानां प्रयोजननिष्पत्तिपर्यन्त-मभ्यासः । ११।१।५.

अवघातादिधर्मा अपूर्वप्रयुक्ताः । ९।१।१ वर्णकं २.

अवघातादिसंस्कारविधिर्नियमविधिः । ४।२।११.

अवज्वलनस्य बाधः सौर्ये चरो । १०।१।१९.

अवत्तनाशे प्रतिनिधिमाज्यमवदाय यष्टव्यम् ६।४।१.

अवदानं चतुरवत्तं विनावचनं दर्विहोमेष्वेव । संकर्ष. २।२।५.

अवदानं त्रैधातवीयायां सहैव । संकर्ष. २।२।१४.

अवदानं पञ्चावत्तं जामदग्न्यादीनाम् । संकर्ष. २।२।६.

अवदानं पशौ देवतास्विष्टकृतयोः समकालमेव । संकर्ष. २।२।१८.

अवदानं प्राकृतमेककपाले, वैश्वानर्याम्, वपायां च । ( तत्र सकृदेव ग्रहणम् ) । संकर्ष. २।२।१६.

अवदानं वाजिनस्य नास्ति परप्रयुक्तद्रव्यत्वात् । संकर्ष. ४।४।८.

अवदानादिप्रदानान्तानुसमयन्यायः (दर्शपूर्णमासयोः)। ५।२।४.

अवदाने पञ्चावत्ते तृतीयं पश्चार्धादुत्तरार्धाद्वा । संकर्ष. २।२।९.

अवदाने पञ्चावत्ते पञ्चममभिघारणात् प्रागेव । संकर्ष. २।२।८.

अवदाने पञ्चावत्ते पञ्चममौषधस्यैव । संकर्ष. २।२।७.

अवदाने 'पूर्वपूर्वाण्यवद्येत्' इति न देशकालपरत्वम्, किन्तु कर्मपरत्वम् । संकर्ष. २।२।११.

अवभृथ( थे ) आप एव संमार्जनीयाः, नाग्निः । २।१।४.

अवभृथ( थे ) ऋजीषादिनयनं प्रतिपत्तिकर्म । ४।२।८.

अवभृथः साङ्गोऽप्सु अनुष्ठेयः । ११।२।८.

अवभृथः सौमिकः अपूर्वः । १०।७।१५.

अवभृथधर्मककर्मान्तरस्य वरुणप्रघासेषु विधानम् । ११।२।१५.

अवभृथशब्दो धर्मानतिदिशति । ७।३।४.

अवभृथे 'प्रत्यञ्चोऽवभृथेन चरन्ति' इति कर्तृगर्भ-विहारविधानम् । संकर्ष. २।४।१६.

अवभृथे स्विष्टकृद्यागीयनिगमेषु अग्नीवरुणयोर्वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे । १०।४।१७.

अवभृथोत्कर्षे दीक्षाया अनुवृत्तत्वात् होमादि-निषेधानुवृत्त्या प्रतिहोमाभावः । वि. ६।५।१२.

अवहननादीनां व्रीह्यादिष्वेवानुष्ठानम् इति धर्म-व्यवस्था । ३।१।४.

अवेष्टेरन्नाद्यफलकत्वम् । २।३।१३.

अवेष्टेर्ब्राह्मणादिकर्तृकायाः राजसूयात् भिन्नतन्त्रता । ११।४।३.



अवेष्ट्यधिकरणम् ( अवेष्टिः क्रत्वन्तरम् ) । २।३।२.

अशक्तानामन्धादीनां न कर्माधिकारः । ६।१।२.

अशक्तिकृताङ्गत्यागन्यायः ( नित्ये कर्मणि कस्य चिदङ्गस्य अशक्त्या अकरणेऽपि न दोषः ) । ६।३।१.

अश्वदानन्यायः ( अश्वदाने वैदिके वारुणी इष्टिः ) । ३।४।१०.

अश्वप्रतिग्रहेष्टिः ( वैदिकेऽश्वदाने ) । ३।४।१०.

अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालचतुष्कभेदः । ११।४।११.

अश्वप्रतिग्रहेष्ट्यधिकरणम् ( दातुः ) । ३।४।११.

अश्वमेधत्रैधातवीयायां दीक्षणीयायां नास्त्यूहः । वि. ९।१।२ वर्णकं २.

अश्वमेधेऽध्रिगुप्रैषेऽश्ववङ्क्रीयत्ताप्रकाशनार्थे वैशेषिक-मन्त्राकरणपक्षे त्रयाणां पशूनामर्थे षडशीतिरेषां वङ्क्रयः इति समासवचनम् । ९।४।२.

अश्वमेधे परस्वद्यागे आरण्यपशुषु पर्यग्निकरणान्ताङ्ग-रीतिविधानेन तदुत्तराङ्गप्रतिषेधः । ९।४।१३.

अश्वमेधे सवनीयपशुत्रयार्थे अध्रिगुप्रैषे अश्वविषये 'चतुस्त्रिंशद्वाजिनः' इति मन्त्रस्य विकल्पः । वि. ९।४।२.

अश्वमेधे सौवर्णराजताभ्यां महिमग्रहाभ्यामैन्द्रवाय-वादिग्रहाणां समुच्चयः । १०।४।२.

अश्वसहस्रादिप्रतिग्रहे पुरोडाशधर्माणां काण्डानु-समयः । ५।२।२.

अष्टरात्रगतस्वरसामद्वये गवामयनगतस्वरसामधर्माणा-मतिदेशः । ७।३।१०.

अष्टरात्रगतेऽपि विश्वजिति सर्वस्वदानम् । ६।७।८.

अष्टरात्रगते विश्वजिति वत्सत्वगहतवाससोः समुच्चयः । १२।३।१.

अष्टाकपालादिवाक्यानि जातेष्टिप्रकरणगतानि द्वादश-कपालस्यार्थवादः । १।४।११.

असंनयतोऽपि चन्द्राभ्युदयनिमित्तकं अभ्युदितेष्टिरूपं प्रायश्चित्तं भवति । ६।५।६.

असंनयत्पक्षेऽपि दर्शे वत्सापाकरणकालेन व्रतसंयोगः । ६।३।१३.

असंबद्धपदव्यवायन्यायः ( असंबद्धपदेन व्यवधाने पूर्वस्य पदस्य उत्तरत्र नानुषङ्गः ) । २।१।१७.

अस्थियज्ञस्य जीवतामधिकारः । १०।२।१७.

अस्थियज्ञस्य मृताधिकारित्वपक्षे क्रत्वर्थानामनुष्ठानम् । १०।२।१९.

अस्थियज्ञस्य मृताधिकारित्वपक्षे गुणकामानां नानु-ष्ठानम् । १०।२।२०.

अस्थियज्ञस्य मृताधिकारित्वपक्षे जपसंस्कारेष्टीनां लोपः । १०।२।१८.

अस्थियज्ञस्य मृताधिकारित्वपक्षे सूक्तवाकान्तर्गतायु-राविफलप्रकाशकभागस्य नानुष्ठानम् । १०।२।२१.

अस्थियज्ञस्य मृताधिकारित्वपक्षे होतृकामनया अनु-ष्ठीयमानानां गुणकामानां नानुष्ठानम् । १०।२।२२.

अहतश्वाससस्ताप्यादिभिः समुच्चयो महाव्रते । १०।४।७.

अहर्गणे उद्गात्रपच्छेदविशिष्टस्यैवाह्नः आवृत्तिः, न तु सर्वस्याहर्गणस्य । ६।५।२१.

अहर्गणे उपसत्कालीनसुब्रह्मण्याऽऽह्वानं तन्त्रम् । ११।३।१०.

अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाले एव पृथ-क्पृथग् वासोऽन्तरमुत्पादनीयम् । १०।६।२२.

अहर्गणे द्वादशाहे उत्तमाहवर्जं पत्नीसंयाजान्तत्वम् । ९।१।९.

अहर्गणेऽन्त्यदिने एव कृष्णविषाणायाश्चात्वाले प्रासनम् । ११।३।६.

अहर्गणे प्रत्यहं सोमोपावहरणार्थे पृथग् वासः उत्पादनीयम् । १०।६।२१.

अहर्गणेषु अहीनात्मकद्वादशाहधर्माणामतिदेशः । ८।१।१०.

अहर्गणे सुत्याकालीनसुब्रह्मण्याऽऽह्वानस्य प्रत्यह-मावृत्तिः । ११।३।११.

अहीनत्वं यजतिचोदनत्वे सति अहर्गणसाध्यत्वम् । १०।६।१६.

अहीनाधिकरणम् ( अहीनस्य उपसदो द्वादश ) । ३।३।८.

अहीने शुक्रान्वारम्भणादि केनचिद् यजमानेन कर्तव्यम् । १२।४।१२.

अहीनेषु यूपैकादशिन्यां पशुनियोजनं कापेय्या पद्धत्या, इतरा तु पद्धतिः प्रकृतौ । संकर्ष. १।४।२५.

अहीनेष्वहीनात्मकद्वादशाहधर्माणामतिदेशः।८।२।५.

आकृत्यधिकरणम् (आकृतिः शब्दार्थः, न व्यक्तिः)। १।३।९.

आख्यातपदमेव अपूर्वबोधकम् । २।१।१.

आग्नावैष्णवन्यायः ( प्रधानेषु समसंख्येषु सहानुष्ठीयमानेषु धर्मविरोधे प्रथमपठितधर्मोऽनुग्राह्यः)। १२।२।८.

आग्नावैष्णवादीनां पृथग्दक्षिणायुक्तानां भेदेन राजसूये अङ्गानुष्ठानम् । ११।४।१.

आग्निमारुतादूर्ध्वमनुयाजोत्कर्षेण उत्कृष्यमाणे सूक्तवाके सवनीयपुरोडाशदेवतानामपि उत्कर्षः। ११।३।१६.

आग्नीध्रप्रणयनं शालामुखीयादेव ज्योतिष्टोमे । संकर्ष. ३।२।१४.

आग्नीध्रीयादेव धिष्ण्यविहरणं ज्योतिष्टोमे । संकर्ष. ३।२।१५.

आग्नीध्रोपस्थाने प्रकृतस्यैवाग्नेयीमन्त्रस्य विनियोगः । ३।२।८.

आग्नेयचतुर्धाऽधिकरणन्यायः ( उपसंहारन्यायः ) । ३।१।१५.

आग्नेयद्विरुक्तिः ऐन्द्राग्नस्तुत्यर्था । २।३।१४.

आग्नेयपशुद्वयन्यायः ( कृष्णग्रीवयोः प्रथमतृतीययोः पश्वोः भेदेनानुष्ठानम् )। ११।१।११.

आग्नेयपुरोडाशद्वयधर्माणामतिदेशः सौर्ये चरौ । ८।१।१५.

आग्नेयपुरोडाशधर्माणामतिदेशः ऐन्द्रे पुरोडाशे । ८।१।१७.

आग्नेयपुरोडाशधर्माणामतिदेशः कृष्णलचरौ । ८।१।१८.

आग्नेयपुरोडाशधर्माणामतिदेशः शुचिदेवताके हविषि । वि. ८।३।१.

आग्नेयपुरोडाशस्य अवदानादिप्रदानान्तं कृत्वा सांनाय्यस्य तत् कर्तव्यम् । ५।४।२.

आग्नेयपुरोडाशस्यैव धर्माणामतिदेशः सौर्ये चरौ । ८।१।१६.

आग्नेयस्तुत्यर्थताऽधिकरणम् ( आग्नेयद्विरुक्तिः ऐन्द्राग्नस्तुत्यर्था ) । २।३।१४.

आग्नेयाज्यभागन्यायः ( आग्नेय आज्यभागः आरादुपकारकः ) । १०।१।८.

आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वं दर्शपूर्णमासचातुर्मास्यादौ । ११।२।१.

आग्नेयादीष्टीनां कर्मान्तरत्वम् । २।३।१२.

आग्नेयाधिकरणम् ( आग्नेयद्विरुक्तिः ऐन्द्राग्नस्तुत्यर्था ) । २।३।१४.

आग्नेयाधिकरणम् ( आग्नेयशब्दो देवताविधायकः, न नामधेयम् ) । १।४।६.

आग्नेयाष्टाकपालादेः द्व्यवदानमात्रस्य होमः । ३।४।१४.

आग्नेयीन्यायः ( आग्नीध्रोपस्थाने प्रकृताग्नेयीमन्त्रस्यैव विनियोगः ) । ३।२।८.

आग्नेये पयसि सांनाय्यपयोधर्माणामतिदेशः । वि. ८।१।१७.

आग्नेयोऽतिग्राह्यः पृष्ठ्ये षडहे 'वैराजस्तोत्राय गृह्यते' इति नात्र देवताविधिः । संकर्ष. ३।३।६.

आग्नेयो ब्राह्मणः इति आग्नेयशब्दः ब्राह्मणस्य स्तावकः उभयोः प्रजापतिमुखजन्यत्वात् । १।४।१२–२. वि. १४.

आग्रयणं नवान्नबुभुक्षाऽभावेऽपि कर्तव्यम् । संकर्ष. ३।१।१४.

आग्रयणगतद्यावापृथिव्यैककपाले वैश्वदेवपर्वगतैककपालधर्माणामतिदेशः । ७।३।१०.

आग्रयणपात्रादेव षोडशिनो ग्रहणम् । १०।५।१०.

आग्रयणमेकस्मिन्नपि संवत्सरे सस्यभेदेन भिन्नमेव कर्तव्यम् । संकर्ष. ३।१।८.

आग्रयणाकरणे ग्राम्यधान्यभक्षणनिषेधः । संकर्ष. ३।१।१०.

आग्रयणाकरणे नवान्नभक्षणनिषेधः आधानोत्तरमेव । संकर्ष. ३।१।१३.



आग्रयणाकरणेऽपि शमीधान्यभक्षणस्य न निषेधः । संकर्ष. ३।१।१२.

आग्रयणाकरणेऽपि शाक( प्राचीन– )पक्वौषधीनां भक्षणं यथाकामम् । संकर्ष. ३।१।११.

आग्रयणाग्रतायाः विषुवति निवेशः । १०।५।१५.

आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वत्से पाकस्य बाधः । १०।३।८.

आग्रयणे अन्वाहार्यस्थानापन्नेऽपि वाससि पाकस्य बाधः । १०।३।९.

आग्रयणे उपदिष्टवासोवत्सदक्षिणया अतिदिष्टान्वाहार्यदक्षिणाया बाधः । १०।३।६.

आग्रयणे ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमो नास्ति । १२।२।१५.

आग्रयणे दक्षिणारूपयोर्वासोवत्सयोः प्राकृतान्वाहार्यधर्माः कर्तव्याः । १०।३।७.

आग्रयणे वासोवत्सयोः अन्वाहार्यस्थानापन्नयोरपि अभिघारणस्य बाधः । १०।३।१०.

आग्रयणेषु तत्तत्सस्योत्पत्तिकालविधिः, न चान्द्रादिसंवत्सरविधिः । संकर्ष. ३।१।१७.

आग्रयणेषु न द्रव्यविकल्पः, नापि कर्मविकल्पः । संकर्ष. ३।१।१६.

आग्रयणेष्टिन्यायः ( आग्रयणे जघन्यद्यावापृथिव्यानुरोधेन मुख्यस्य ऐन्द्राग्नादेरपि विशेषाभावात् प्रसूनबर्हिषो नियमः ) । १२।२।१४.

आघारशब्दः कर्मनामधेयम् । १।४।३.

आघाराग्निहोत्राधिकरणम् ( आघाराग्निहोत्रवाक्यमपूर्वकर्मविधायकम् ) । २।२।५.

आघाराग्निहोत्राधिकरणम् (कर्मनामधेयम्) । १।४।३.

आघारादीनामाग्नेयाद्यङ्गत्वम् । ४।४।११.

आघारे उत्तरे हिरण्यगर्भमन्त्रस्य निवेशः वायव्यपशौ । १०।३।२.

आघारे मन्त्रान्तेन कर्मादिसंनिपातः । १२।३।१२.

आचमनं पदार्थत्वात् प्रबलम्, तत्क्रमो गुणत्वाद् दुर्बलः । १।३।३.

मी. को. १०

'आ चाग्ने देवान् वह' इति आहवनीयवादः । संकर्ष. ४।२।१४.

आज्यदोहस्तोत्रकाले लौकिकाग्नेरुपनिधानं गर्गत्रिरात्रे । ७।३।१२.

आज्यभागः आग्नेयः आरादुपकारकः । १०।१।८.

आज्यभागपुनःश्रवणेन गृहमेधीयस्य अपूर्वत्वम् । १०।७।९.

आज्यभागप्रतिषेधस्य सोमे नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधस्यार्थवादत्वम् । १०।८।२.

आज्यभागयोः ऋग्जुषाणयाज्ययोर्विकल्पः । संकर्ष. ४।३।१०.

आज्यभागयोः गुणवाचकपदरहितस्यैव देवतापदस्याभिधानं पवमानेष्टिषु कर्तव्यम् । १०।४।१५.

आज्यभागाङ्गता वार्त्रघ्नीवृधन्वत्योरनुवाक्ययोः । ३।१।१३.

आज्यभागौ पशुपुरोडाशे कर्तव्यौ । १२।१।२.

आज्यभागौ विकृतिषु सद्वन्तौ वा प्राकृतौ वा इति विकल्पः । संकर्ष. ४।४।२.

आज्यमेव वैसर्जनहोमेषु, न सोमो ज्योतिष्टोमे । संकर्ष. ३।२।२०.

आज्यसमानयनाधिकरणम् ( प्रयाजार्थमाज्यसमानयनमौपभृताज्यस्य प्रयोजकम् ) । ४।१।१५.

आज्यसोमग्रहौ दधिग्रहविकारः कर्मान्तरम् । संकर्ष. ३।३।९.

आज्येडा पत्नीसंयाजाङ्गमेव । संकर्ष. ४।३।१६.

'आज्येन यूपमनक्ति' इति आज्यं लौकिकम्, न संस्कृतम् । ३।८।१६.

आज्येन व्याघारणं तृतीयसवने एव ज्योतिष्टोमे । संकर्ष. ३।२।१७.

'आज्येन शेषं संस्थापयति' इति वाक्यं कर्मान्तरं विदधाति पात्नीवते पशौ । ९।४।१४.

आज्येन सोमेन वा व्याघारणं ज्योतिष्टोमे पूर्वयोः सवनयोः । संकर्ष. ३।२।१८.

आतिथ्या इडाऽन्ता ज्योतिष्टोमे । १०।७।१२.

आतिथ्या पूर्वेडाऽन्ता ज्योतिष्टोमे । १०।७।१३.

आतिथ्याबर्हिःप्रोक्षणन्यायः ( आतिथ्याबर्हिःप्रोक्षणादिना उपसदग्नीषोमीयबर्हिःप्रोक्षणादेः प्रसङ्गसिद्धिः ) । १२।१।१९.

आतिथ्याबर्हिषः उपसदग्नीषोमीययोः स्तरणकाले स्तरणमन्त्रस्य आवृत्तिः । १२।१।२०.

आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्तरणार्थे संनह्य आह्रियमाणे संनहनहरणमन्त्रयोः नावृत्तिः । १२।१।२१.

आतिथ्यावैष्णवधर्माणां राजसूयगतवैष्णवे नातिदेशः । ७।३।६.

आतिथ्योपसदग्नीषोमीयपशूनां बर्हिरेकमेव । ४।२।१४.

आत्मसमारोपपक्षेऽपि अरण्योरेव प्रत्यवरोहः । संकर्ष. ३।२।३६.

आत्मसमारोपेऽपि अग्नेः प्रत्यवरोहः अरण्योरेव, ततो मथनम् । संकर्ष. ३।२।३५.

आदित्यपयोऽधिकरणम् ( अदितिचरुश्रपणार्थे पयसि प्रदेयधर्मा नानुष्ठेयाः ) । ९।४।९.

आदित्यो यूपः इति आदित्यशब्दः यूपस्य स्तावकः तेजस्वित्वसारूप्यात् । १।४।१२–३ वि. १५.

आधानं न पवमानेष्ट्यर्थम् । ३।६।४.

आधानं सर्वकर्मणां तन्त्रम्, न तु प्रतिकर्म पृथक् । ११।३।२.

आधानं सर्वकर्मार्थम् । ३।६।५.

आधानमारभ्यैव यज्ञपात्राणां धारणम् । ११।३।१४.

आधानस्य सोमपूर्वत्वे सोमकालस्य बाधः, नाधानकालस्य । ५।४।५.

आधानस्येष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः । ५।४।३.

आधानाधिकरणम् ( वसन्ते ब्राह्मणोऽग्नीनादधीत इत्यादिना वसन्तादिकालविशिष्टमाधानं विधीयते ) । २।३।३.

आधाने आहवनीयः गार्हपत्यात् प्रणीय आधीयते । संकर्ष. ३।२।२.

आधाने एकस्यैव पुरुषस्याधिकारः । ६।१।५.

आधाने गानस्योपांशुता । ३।३।२.

आधाने दक्षिणाग्निः निर्मन्थ्यः गार्हपत्याद्वा । संकर्ष. ३।२।४.

आधाने दक्षिणानां संख्यासु विकल्पः । १२।४।५.

आधाने दक्षिणानामपरिमितत्वं पूर्वोक्तात् संख्याऽन्तरम् । ६।७।१०.

आधाने दक्षिणानामपरिमितत्वं सहस्रादधिकत्वम् । ६।७।११.

आधानेन पवमानेष्टिभिश्च संस्कृतेषु अग्निषु कर्माणि कर्तव्यानि । ५।३।९.

आधाने निन्दावादेन विहितसामगानप्रतिषेधात् सामविकल्पः । १०।८।६.

आधाने पवमानहविषां काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रम्, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम् । ११।४।४.

आधाने पवमानेष्टयः न पवमानेष्टिसंस्कृतेऽग्नौ, किन्तु केवलाधानसंस्कृते एव । ३।६।६.

आधाने ब्राह्मणस्यापि इष्टिसोमपूर्वत्वयोर्विकल्पः । ५।४।४.

आधाने मथितोऽग्निः गार्हपत्यार्थ एव । संकर्ष. ३।२।१.

आधाने सभ्यावसथ्यौ लौकिकाग्निरूपौ, न तु आहवनीयात् प्रणीतौ । संकर्ष. ३।२।३.

आधानोत्तरमेव आग्रयणस्य प्राप्तौ तदकरणे नवान्नभक्षणनिषेधः । संकर्ष. ३।१।१३.

आधूननार्थानां अग्निचयनप्रकरणे पठ्यमानानां बहूनां मन्त्राणां मध्ये केषांचिदेव सप्तानामेव ग्रहणं, न प्रथमानामेव । १०।५।५.

आध्वरिकाहुतीनां दीक्षाऽऽहुतिभिः समुच्चयः । संकर्ष. २।४।२७.

आध्वर्यवाः प्रैषाः । ३।८।१२.

आध्वर्यवादिसमाख्यया अध्वर्य्वादीनां नियतपदार्थकर्तृत्वम् । ३।७।१९।३९ सूत्रांशः.

आध्वर्यवे याजमाने च काण्डे आम्नाता मन्त्रा द्वयोरपि । ३।८।७.



आनन्तर्याधिकरणम् ( सूत्रपदानुसारात् शीर्षकम् । हस्तावनेजनादीनां कृत्स्नप्राकरणिकाङ्गता ) । ३।१।१४.

आनर्थक्यतदङ्गन्यायः ( प्रधाने अनर्थकं तदङ्गे अवतरति ) । ३।१।९.

आन्वीगवसाम्नो गानम् अनुष्टुभो गायत्र्योश्च प्रग्रथनेन संपादिते आनुष्टुभे तृचे । ज्योतिष्टोमे । ९।२।६ वर्णकं ३.

आमनहोमन्यायः ( सांग्रहण्यङ्गम् ) । ४।४।४.

आमनहोमैः अनूयाजानां समुच्चयः सांग्रहणीष्टौ । १०।४।४.

आमिक्षा तप्ते पयसि दध्यानयनस्य प्रयोजिका, न वाजिनम् । ४।१।९.

आमिक्षायां वैश्वदेवपर्वगतायां सांनाय्यपयोधर्माणामतिदेशः । ८।२।४.

आमिक्षायागस्विष्टकृतोर्न बाधः । संकर्ष. १।४।२.

आमिक्षाशब्दो धर्मातिदेशकः । ७।३।१०.

आमिक्षासु सर्वासु वैश्वदेवपर्वगतमैत्रावरुण्यामिक्षाधर्माणामतिदेशः । ७।३।१०.

आयुराद्विफलन्यायः ( 'यजमान आयुराशास्ते' इत्यत्र सत्रे 'यजमाना आयुराशासते' इत्यूहः ) । ९।१।१५.

आरण्यन्यायः ( आरण्यपशुषु पर्यग्निकरणान्ताङ्गरीतिविधानेन तदुत्तराङ्गप्रतिषेधः अश्वमेधे परस्वद्यागे ) । ९।४।१३.

आरण्यभोजनन्यायः ( आरण्याशनस्य प्राकृतस्य प्रायणीयाऽऽदिषु सौमिकपयोव्रतादिना प्रसङ्गसिद्धिः ) । १२।१।१४.

आरम्भणीयान्यायः ( आरम्भणीयायां आरम्भणीयाया बाधः ) । १०।१।४.

आरम्भणीयान्यायः ( आरम्भणीयायाः दर्शपूर्णमासावृत्तावपि आदौ सकृदेवानुष्ठानम्, न तु प्रत्यावृत्ति ) । ९।१।११.

आरम्भणीयायाः ज्योतिष्टोमाद्यङ्गभूतदीक्षणीयाऽऽदिविकृतौ बाधः । १०।१।२.

आरम्भणीयायाः दर्शपूर्णमासविकृतिषु सौर्यादिषु पुनरनुष्ठानम् । १२।२।६.

आरम्भणीयायाः राजसूयगतानुमत्यादीष्टौ बाधः । १०।१।३.

आराटुपकारकः आग्नेय आज्यभागः । १०।१।८.

आर्तिन्यायः ( एकहविरार्तावपि पञ्चशरावनिर्वापः ) । ६।४।६.

आर्त्विज्ये अधिकारः ब्राह्मणस्यैव । १२।४।१५.

आर्भवपवमाने विवृद्धस्तोमकक्रतुषु साम्नामावापः, अविवृद्धस्तोमकक्रतुषु तु उद्वापः । १०।४।११.

आर्यम्लेच्छविप्रतिपत्तिबलाबलम् । १।३।४ वा. पृ. २१९.

'आर्षेयं वृणीते' इति यजमानपूर्वजा एव ऋषयः । संकर्ष. ३।४।१.

आर्षेयत्रयस्यैव वरणम्, इतरे अर्थवादाः । संकर्ष. ३।४।३.

आर्षेयवरणं निपादरथकारयोरपि । संकर्ष. ३।४।६.

आर्षेयाणां नामानि अपत्यप्रत्ययान्तानि संबुद्ध्यन्तानि । संकर्ष. ३।४।२.

आलम्भनिर्वापन्यायः ( आलभेत, निर्वपेत् इति यागविधिः ) । २।३।५.

आवसथ्योऽग्निः लौकिकरूपः, न तु आहवनीयात् प्रणीतः । संकर्ष. ३।२।३.

आवाहननिगदे 'आवह देवान्' इति ऊह्यमानानां सर्वेषामेव देवानां वादः । संकर्ष. ४।२।७.

आवाहनस्य बाधो न सामिधेनीनिषेधेऽपि गृहमेधीये । संकर्ष. ४।४।७.

आवाहनादिनिगदेषु देवतानां विधिगतशब्देनैव प्रकाशनं कर्तव्यम् । १०।४।१३.

आवृत्तिः प्रतिशेषमनुवषट्कारस्य । संकर्ष. १।१।३.

'आशास्तेऽयं यजमानः' इति नित्यं निर्देशः । 'यत्र निर्दिशेत्' इति नित्यानुवादः । संकर्ष. ४।३।२०.

आशीरधिकरणम् ( 'आयुर्दा अग्नेऽसि' इत्याद्य आशीर्मन्त्राः याजमानाः ) । ३।८।६.

आश्रयिन्यायः ( आश्रयिकर्मणां दृष्टादृष्टार्थता ) । ४।१।७.

आश्ववाल: प्रस्तर: इति दर्भमयत्वम् । १।३।४ वा. पृ. २२१.

आश्विनग्रहो दशमो गृह्यते, तृतीयो हूयते ज्योतिष्टोमे । ५।४।१.

आसनोपायिचोदनत्वं सत्रत्वम् । १०।६।१६.

आहवनीय: गार्हपत्यात् प्रणीय आधीयते आधाने । संकर्ष. ३।२।२.

आहवनीयत्वं नास्ति अग्निचयनप्रकरणे श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्यस्याग्नेः । १२।४।८.

आहवनीयधारणं गतश्रीत्रितयभिन्नस्य न नित्यम् । संकर्ष. ३।२।९.

आहवनीयस्य उपस्थानादि गार्हपत्यादुद्धृतस्यैव कार्यम् । संकर्ष. ३।२।८.

आहवनीयस्य प्रतिकर्म गार्हपत्यादुद्धरणमेव, न तु मथनम् । संकर्ष. ३।२।७.

आहवनीयस्यापि शालामुखीयवत् समारोप: गतश्रियः सोमापवर्गे । संकर्ष. ३।२।३०.

आहवनीयादिरग्निः सर्वप्रकृतिविकृत्यर्थः । ३।७।१९.

आहवनीयादेः कर्मापवर्गेऽपि न पुनःपुनराधानम् । संकर्ष. ३।२।६.

आहवनीयापवादः 'पदे जुहोति' 'वर्त्मनि जुहोति' इति । संकर्ष. २।४।१४.

आहवनीयोपस्थानं 'अयं सहस्रमानवः' ( साम. ४५८ ) इति ऋचा प्रगीतयैव द्वादशाहे दशमेऽहनि मानसस्तोत्रात् प्राक् । ९।२।८ वर्णकं १.

आहुतिगणे प्रत्याहुति सकृत् हविर्ग्रहणम् । संकर्ष. २।४।७.

आह्वानाधिकरणम् ( हविष्कृदेहि इति मन्त्र आह्वानाङ्गम् )। ३।२।३.

इज्याऽधिकरणम् (आघारादीनामङ्गत्वम् )।४।४।११.

इडाऽऽदिभक्षाः शेषप्रतिपत्त्यर्थाः । १०।२।९.

इडाऽऽदिशेषभक्षणमृत्विजामेव यजमानस्य च । ६।४।३.

इडानिगदे विकृतौ यज्ञपतिशब्दस्य नोहः । ९।१।१४.

'इदमग्नेः, इदमग्नीषोमयोः' इति विभक्तयोरेव पिण्डयोः देवतानिर्देशः । संकर्ष. १।३।१७.

इन्द्रपीताधिकरणम् (इन्द्रपीतस्येतिपदं ऐन्द्रसोमभक्षणे विनियोक्तव्यम् )। ३।२।११.

इन्द्रमहेन्द्राधिकरणम् (इन्द्रमहेन्द्रौ भिन्नौ)।२।१।५.

इन्द्रियकामाधिकरणम् ( इन्द्रियरूपकामाय दधि विधीयते, न कर्मान्तरम् )। २।२।११.

'इमे वयम्, स्मो वयम्' इति स्रुगादापनमन्त्रे पाठयोर्न विकल्पः, कर्मान्तरे सावकाशत्वात् । संकर्ष. ४।३।१.

इरापदे गिरापदस्थानापन्ने गानं कर्तव्यं यज्ञायज्ञीये । ९।१।१९.

इषौ यागे श्येनीयधर्माणामतिदेशः । ७।१।२.

इष्टका अग्निचयने अभ्रिमत्य एव कार्याः । संकर्ष. २।१।२.

इष्टका अग्निचयने पक्का एव ग्राह्याः । संकर्ष. २।१।६.

इष्टका अग्निचयने पशुशीर्षाद्युपधाने अन्तरालपूरणार्थं न विधेयाः । संकर्ष. २।१।४.

इष्टका अग्निचयने समचतुरस्रा एव कार्याः । (बौधायनपद्धत्येदम् )। संकर्ष. २।१।३.

इष्टका एव प्राणशब्दघटितमन्त्रोपधेयाः 'प्राणभृत उपदधाति' इत्यत्र, अग्निचयने । संकर्ष. २।१।२३.

इष्टकाः चयनसाधनीभूता मृन्मय्य एव । संकर्ष. २।१।१.

इष्टकाधर्मा अग्निचयने नैर्ऋतीषु इष्टकासु न भवन्ति । संकर्ष. २।१।११.

इष्टकाधर्माः सिकतासु न कर्तव्याः अग्निचयने । संकर्ष. २।१।९.

इष्टकाधर्माश्चरुसर्वौषधेषु न कार्याः अग्निचयने । संकर्ष. २।१।१०.

इष्टकाधर्मांश्चित्रिण्यादीनामपि । ३।६।१२.

इष्टकानां चतुरस्राणामेव 'मण्डलेष्टका उपदधाति' इति नामान्तरम् । संकर्ष. २।१।२५.



इष्टकानिर्माणं दीक्षोत्तरमेव अग्निचयने । संकर्ष. २।१।२८.

इष्टकापर एव 'सहस्रं चिन्वीत' इति सहस्रशब्दः अग्निचयने । संकर्ष. २।१।१३.

इष्टकापाकः निर्मन्थ्येन लौकिकेन अग्निचयने । संकर्ष. २।१।७.

इष्टकाविशेष एव अग्निचयने 'सशिरस्क एवाग्निश्चेतव्यः' इति शिरःशब्देन ग्राह्यः, न तु पक्षिशिरः । संकर्ष. २।१।३८.

इष्टकाशब्दात् दूर्वाऽऽदिषु न इष्टकाधर्माः अग्निचयने । संकर्ष. २।१।८.

इष्टकासंख्यापूरणं लोकंपृणाभिः मन्त्रन्यूनत्वे अग्निचयने । संकर्ष. २।१।१६.

इष्टकासु 'सर्वान् वर्णान्' इति रेखावादः अग्निचयने । संकर्ष. २।१।५.

इष्टकोपधाने 'पुरस्तादन्याः प्रतीचीः, पश्चादन्याः प्राचीः' इति विधी अपवर्गनियमार्थौ । संकर्ष. २।१।२१.

इष्टकोपधाने 'प्राचीं, प्रतीचीं' इति कर्तुर्मुखवादः । संकर्ष. २।१।१९.

इष्टकोपधाने 'प्राचीरुपदधाति' इति रीत्यपवर्गवादः । संकर्ष. २।१।१८.

इष्टकोपधाने मन्त्राधिक्ये चयनान्तरप्रयोगे अवशिष्टमन्त्राणामुपयोगः । संकर्ष. २।१।१५.

इष्टिराजसूयाधिकरणम् ( दर्शपूर्णमासराजसूयचातुर्मास्येषु संवभेदेन प्रयोगभेदे अङ्गानामावृत्तिः )। ११।२।३.

इष्टीनां विकृतिरूपाणामैन्द्राग्नादीनां सद्यस्कालता । ५।४।७.

इष्टय(ष्टि अ)ग्निहोत्रसोमानां मूलप्रकृतिता । वि. ८।१।३ वर्णकं २.

ईषाऽधिकरणम् (उदाहरणवाक्यस्य ईषापदघटितत्वात् शीर्षकम् । आलभेत निर्वपेत् इति यागविधिः ) । २।३।५.

'उक्थशा यज सोमस्य' इति प्रैषः शस्त्रवन्मात्रे निवेश्यते । संकर्ष. २।३।१०.

'उक्थशा यज सोमानाम्' इति प्रैषः शस्त्रवत्स्वपि चमसैर्ग्रहैश्च युगपद्धूयमानेष्वेव सोमेषु निवेश्यः । संकर्ष. २।३।११.

उक्थ्यस्तोत्राणामुत्कर्षे षोडशिस्तोत्रस्यापि उत्कर्षः । ५।१।१८.

उक्थ्यादिक्रतौ बहुव्रीहिपदनिर्दिष्टानां वैरूपादिसाम्नां होतुः पृष्ठे एव निवेशः, न तु कृत्स्ने क्रतौ । १०।६।६.

उक्थ्येऽतिग्राह्यनिषेधः पृष्ठ्योक्थ्ये एव । संकर्ष. ३।३।३.

उक्थ्येषु पृष्ठ्यगतेषु अतिग्राह्याणां विकल्पः, न पर्युदासः । संकर्ष. ३।३।४.

उक्थ्ये षोडशी गृहीतश्चेत् सस्तुतशस्त्र एव । १०।५।१२.

उक्थ्योपहव्ययोर्यागयोः औपदेशिकाश्वदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः । १०।३।१८.

उख्यस्य प्रत्यक्षमेव नयनात् दीक्षितस्य अन्यत्र गमने प्राप्तेऽपि न समारोपः । संकर्ष. ३।२।३३.

उख्यस्याग्नेः अग्निचयनगतस्य नित्यं न धारणम् । १२।४।१०.

उख्यस्याग्नेः अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येनाग्निना बाधः । १२।४।७.

'उत यत् सुन्वन्ति' इति वाक्येन सामिधेन्यनुवचनार्थं हविर्धानदेशो लक्ष्यते । ३।७।७.

उत्करेण प्राकृतवाजिनासादनानुवादेन विहितेन वेदेर्बाधः चातुर्मास्येषु सौमिकेषु । १०।३।३.

उत्कर्षः क्षामवत्यादीनां तन्त्रमध्ये प्राप्तौ । संकर्ष. ३।१।७.

उत्कर्षाधिकरणम् ( अग्नीषोमीयं पौर्णमासं हविः सोमात् परस्तात् उत्कृष्टव्यं ब्राह्मणेन )। ५।४।४.

उत्तरयोर्ऋचोर्योनिगतानां स्तोभानामतिदेशः । ९।२।१०.

'उत्तरयोर्गायति' इति उत्तराशब्देन उत्तराग्रन्थस्थयोर्द्वयोर्ऋचोर्ग्रहणम् । ९।२।५.

उत्तरागोदोहाधिकरणम् । उत्तराधिकरणन्यायः ।

उत्तरान्यायः ( सांनाय्यार्थे तिसृभ्योऽधिकाः सर्वा गावो दोग्धव्याः ) । ११।१।९.

उत्तरार्धन्यायः ( पुरोडाशः न स्विष्टकृत्प्रयुक्तः । शीर्षकं तु 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्युदाहरणवाक्यानुसारात् ) । ४।१।१३.

'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' इति उत्थानाग्निविहरणयोः कालार्थः संयोगः । ३।२।४.

उत्थानवाग्विसर्गाधिकरणम् ( उत्थानवाग्विसर्गयोः कालार्थः संयोगः। उत्थानवाग्विसर्गयोः कालो विधीयते ) । ३।२।४.

उदके हविषि चित्रेष्टिगते उपांशुयाजधर्माणामतिदेशः । ८।१।१९.

उदगयनादिकाले उपनयनादिकर्माणि कर्तव्यानि । ६।८।५.

उदयनीयानिर्वापाधिकरणम् ( प्रायणीयनिष्कासे उदयनीयस्य निर्वापः उदयनीयस्य संस्कारः, नार्थकर्म नापि प्रतिपत्तिः ) । ११।२।१६.

उदवसानीयन्यायः ( उदवसानीयस्य सत्रानङ्गत्वात् दक्षिणादानं ऋत्विक्परिक्रयार्थम् ) । १०।२।१२.

उदवसानीयोत्कर्षे अग्निहोत्रहोमः प्रतिहोमो वा न कार्यः । वि. ६।५।१३.

उदवसानीयोत्कर्षेऽपि प्रतिहोमानां नानुष्ठानम् । ६।५।१२.

उदुम्बराधिकरणम् ( उदाहरणवाक्यगतपदानुसारि शीर्षकम् ) । १।२।२.

उद्गातृचमसभक्षाधिकरणम् ( उद्गातृचमसः उद्गातृभिरेव भक्षणीयः । ससुब्रह्मण्यानामिति भाष्यम्, अपसुब्रह्मण्यानामिति वार्तिकम् ) । ३।५।८.

उद्गात्रपच्छेदविशिष्टस्यैवाहः अहर्गणे आवृत्तिर्न तु सर्वस्याहर्गणस्य । ६।५।२१.

उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे ( पूर्वकालीनप्रतिहर्त्रपच्छेदनिमित्तकं) सर्वस्वदानम् । ६।५।२०.

उद्धरणमन्त्रस्य अग्निहोत्रार्थस्य दर्शपूर्णमासार्थोद्धरणकाले नानुष्ठानम् । ९।४।८.

उद्भिदधिकरणम् ( उद्भिद्–शब्दः कर्मनामधेयम् ) । १।४।१.

उद्भिदादिषु अन्यक्रतुयागेषु सौमिकधर्माणामतिदेशः । ८।१।९.

उपक्रमाधिकरणम् ( उपक्रमानुसारेण उपसंहारस्य नेयत्वात् ऋगादिशब्दा वेदबोधकाः ) । ३।३।१.

उपगातारः ऋत्विग्यजमानेभ्यो न भिन्नाः । ३।७।१४.

उपगानकर्त्रीभिः पत्नीभिः आतिदेशिकोपगानकर्तॄणामृत्विजां गवामयने महाव्रते समुच्चयः । १०।४।५.

उपधानस्य सौर्ये चरौ बाधः । १०।१।१६.

उपनयनहोमाधिकरणम् ( उपनयनहोमो लौकिकेऽग्नौ ) । ६।८।२.

उपनयनादिकर्माणि उदगयनादिकाले कर्तव्यानि । ६।८।५.

उपनीतस्यैव स्मार्तादिकर्मसु अधिकारः । ६।२।६.

उपभृति चतुर्गृहीतयोर्द्वयं विधेयम्, न तु अष्टगृहीतमेकम् । ४।१।१७.

उपयाजगुदसमुच्चयन्यायः ( पशुगणे उपयाजसाधनानां गुदानां समुच्चयः ) । १२।४।४.

उपरं वर्जयित्वा पञ्चारत्नित्वादि यूपस्य परिमाणं ज्ञेयम् । संकर्ष. १।४।८.

उपरवन्यायः ( उपरवमन्त्रस्य प्रत्युपरवखननमावृत्तिर्ज्योतिष्टोमे ) । ११।४।१९.

उपरवेषु 'किमत्र, भद्रम्, तन्नौ सह' इति श्रुतं फलमृत्विजोऽपि । वि. ३।८।१६. भा. ३।८।१४।२९.

उपरिधारणन्यायः ( स्रुग्दण्डोपरि समिद्धारणस्य प्रेताग्निहोत्रे श्रुतस्य दैवे कर्मणि विधिः, न तु अधस्तात्समिद्धारणार्थवादता ) । वि. ३।४।५. वा. पृ. ८९७.

'उपरि हि देवेभ्यो धारयति' इति स्रुग्दण्डोपरि समिद्धारणं विधीयते । वि. ३।४।५. वा. पृ. ८९७.

उपवत्यप्रवत्योः नैमित्तिकयोः प्राकृत्योः पृष्ठप्रतिपदोः संस्वादिविकृतौ नानुष्ठानम् । १०।५।१६.

उपवादाधिकरणम् ( आधाने निन्दावादेन विहितसामगानप्रतिषेधात् सामविकल्पः । सौत्रपदानुसारेण शीर्षकम् । उपवादो निन्दा ) । १०।८।६.



उपवासन्यायः ( तपोऽधिकरणम् ) । ३।८।३.

उपवीतस्य दर्शपूर्णमासाङ्गता । वि. ३।४।२. वा. पृ. ८९५.

उपवीतस्य विधिः । वि. ३।४।३. वा. पृ. ८९६.

उपवीताधिकरणम् । ( उपवीतं दर्शपूर्णमासाङ्गम् ) । ३।१।११.

उपवीतोदग्रत्वयोः प्रेताग्निहोत्रे श्रुतयोः प्राचीनावीतस्तुत्यर्थता । वि. ३।४।४. वा. पृ. ८९७.

उपवेषाधिकरणम् (उपवेषो न शाखाछेदनप्रयोजकः) । ४।२।३.

उपशये यूपधर्माणां नातिदेशः । ७।३।१४.

उपसंहारः अनारभ्याधीतसाप्तदश्येन वैमृधादौ सामिधेनीसाप्तदश्यपुनःश्रवणस्य । १०।८।९.

उपसंहारन्यायः ( तं चतुर्धा कृत्वा, आग्नेयं चतुर्धा करोति इति वाक्ययोरुपसंहारेण आग्नेयपुरोडाशस्यैव चतुर्धाकरणम् ) । ३।१।५.

उपसंहारो न दर्विहोमादौ क्वचित् स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारश्रवणेन । १०।८।१०.

उपसत्कालिकत्वं सौम्यत्वाष्ट्रवैष्णवानां पुरोडाशानाम् । ४।४।३.

उपसत्कालीनसुब्रह्मण्याऽऽह्वानं तन्त्रमहर्गणे । ११।३।१०.

उपसत्कालीनसुब्रह्मण्याऽऽह्वाने विवृद्धसुत्याहानुपलक्षणं द्वादशाहे । ११।४।७.

उपसत्सु आतिथ्याबर्हिषः स्तरणकाले स्तरणमन्त्रस्यावृत्तिः । १२।१।२०.

उपसदग्नीषोमीयबर्हिःप्रोक्षणादेः आतिथ्याबर्हिःप्रोक्षणादिना प्रसङ्गसिद्धिः । १२।१।१९.

उपसदां षट्त्वमग्निचयने तिसृणां स्वस्थानविवृद्ध्या संपादनीयम्, न तु दण्डकलितवत् । ५।३।२.

उपसद्दिनेष्वेव अग्निचयनम्, न तु ततः पूर्वम् । संकर्ष. २।१।२७.

उपसन्न्यायः (उपसदिष्टिः अपूर्वा) । १०।७।१४.

उपसेचनार्थे यागार्थात् पृथक् वाजिनं नोत्पाद्यम् । संकर्ष. १।४।१.

उपस्तरणादिविधिन्यायः ( उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तसंपत्तिः ) । १०।८।१२.

उपस्तरणाभिघारणयोर्बाधः कृष्णलेषु । १०।२।२.

उपस्तरणाभिघारणयोर्लोपेऽपि उपांशुयाजे हविषैव चतुरवत्तसंपत्तिः । १०।८।१३.

उपस्तरणाभिघारणे वनस्पतियागे न भवतः । संकर्ष. २।२।१०.

उपस्तरणाभिघारणे स्विष्टकृच्च साकंप्रस्थायीये नास्ति । संकर्ष. १।३।४.

उपस्थानमतिप्रणीतस्य औपासनस्य वा अनाहिताग्निना पिण्डपितृयज्ञे कर्तव्यम् । संकर्ष. १।२।१४.

उपस्थानमन्त्रस्थगार्हपत्यपदलोपः अनाहिताग्नेः पिण्डपितृयज्ञे । संकर्ष. १।२।१५.

उपस्थानाद्यधिकारः पुंस एव, न स्त्रियाः । ६।१।६.

उपस्थानाद्या( दि, आ )हवनीयस्य गार्हपत्यादुद्धृतस्यैव कार्यम् । संकर्ष. ३।२।८.

उपह्व्ये यागे औपदेशिकश्वेताश्वेन प्राकृतकृत्स्नक्रतुदक्षिणायाः बाधः । १०।३।१८.

उपहोमन्यायः ( उपहोमाः पश्चात्, नारिष्ठहोमाः पूर्वम् ) । ५।२।९.

उपांशुत्वं काम्येष्टिषु प्रधानार्थम् । ३।८।१९.

उपांशुत्वमग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्मः तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् । ९।१।६.

उपांशुत्वमुपांशुयाजे पत्नीसंयाजेषु च देवतापद–आश्रुत–प्रत्याश्रुत–प्रणव–वषट्कारभिन्नेषु मन्त्रेष्वेव । संकर्ष. ४।३।१५.

उपांशुत्वाधिकरणम् ( उपांशुत्वं काम्येष्टिषु प्रधानार्थम् ) । ३।८।१९.

उपांशुयाजः एकपुरोडाशायामपि पौर्णमास्याम् । १०।८।१८.

उपांशुयाजद्रव्यादाज्यात् स्विष्टकृदिडं नावदातव्यम् । ३।५।१.

उपांशुयाजधर्माणामतिदेशः चित्रेष्टिगतमधूदकयोः । ८।१।१९.

उपांशुयाजस्य दर्शपूर्णमासतन्त्रगतदेवताऽन्यतमदेवतानियमः । १०।८।१६.

उपांशुयाजस्य सोमोत्तरं नोत्कर्षः, विष्णुप्रजापतिदेवत्यत्वस्य प्रागपि संभवात् । ५।४।६.

उपांशुयाजाधिकरणम् । ( 'उपाशुयाजं यजति' इति यजतिपदं अपूर्वयागविधायकम् )। २।२।४.

उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविषैव चतुरवत्तसंपत्तिः । १०।८।१३.

उपांशुयाजे ध्रौवाज्यस्य विधानम् ! १०।८।१५.

उपांशुयाजे पत्नीसंयाजेषु च आश्रुतप्रत्याश्रुतप्रणववषट्कारादिभिन्नेष्वेव मन्त्रेषु उपांशुत्वम् । संकर्ष. ४।१।१५.

उपांशुयाजेऽपि देवताऽपनयः अभ्युदितेष्टौ । ६।५।२.

उपांशुयाजे वैकल्पिकी विष्ण्वादिर्देवता पौर्णमासीकालश्च । १०।८।१७.

उपावहरणं सोमस्य वाससा कर्तव्यं ज्योतिष्टोमे । १०।६।२०.

उपावहरणाधिकरणम् ( अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाले एव पृथक्पृथग् वासोऽन्तरमुत्पादनीयम् )। १०।६।२२.

उरूकशब्देन अध्रिगुप्रैषगतेन वपाऽभिधानम् । ९।४।३.

ऊहः अग्निपदस्य विकृतौ निर्वापमन्त्रे। ९।१।१३.

ऊहः अध्रिगुप्रैषगतस्यैकवचनान्तस्य मेधपतिशब्दस्य बहुवचनान्तेन एकादशिन्याम् । ९।३।१४.

ऊहः । 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यत्र पुरोडाशसादनमन्त्रे 'नीवाराणां मेध' इति ऊहः कर्तव्यः । वि. ९।३।१.

ऊहः कार्यः पुरोडाशगणे 'यथाभागं व्यावर्तध्वम्' इति । संकर्ष. १।३।१८.

ऊहः कार्यः यूपे विशाखे 'दिवमग्रेण' इत्यत्र 'दिवमग्राभ्याम्' इति । संकर्ष. १।४।७.

ऊहः । द्विपश्वादिविकृतौ अध्रिगुप्रैषे मेधपतिशब्दस्य देवताऽनुसारेण वचनोहः कर्तव्यः । ९।३।१२.

ऊहः 'धान्यमसि' इत्यत्र 'मांसमसि' इति शाक्त्यानामयने । ९।१।१३ वर्णकं १.

ऊहः पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोः द्विवचनान्तेन । ९।३।४.

ऊहः वैकृतद्रव्यादिवाचकपदस्य सौर्यादिविकृतौ अतिदिष्टे मन्त्रे । ९।३।१.

ऊहः सौर्यचर्वादौ अगन्मोज्ज्वितिमन्त्रयोः, दर्शपूर्णमासयोरपूर्वार्थत्वात् । वि. ९।१।३.

ऊहः स्थानिधर्माणां प्रतिनिधौ । ९।२।१२.

ऊहः हरितपदस्थाने रक्तपदस्य मौद्गे चरौ बर्हिःस्तरणमन्त्रे । ९।३।२०.

ऊहग्रन्थः पौरुषेयः । ९।२।१ वर्णकं १.

ऊहप्रवरनामधेयानां नास्ति मन्त्रत्वम् । २।१।९.

ऊहसिद्धिः तत्तद्धर्माणामपूर्वार्थत्वात् । वि. ९।१।१ वर्णकं १–२.

ऊहो न अग्निष्टुति सुब्रह्मण्यानिगदे हरिवादिपदानाम्। ९।१।१६.

ऊहो न अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे । ९।३।८.

ऊहो न अश्वमेधत्रैधातवीयायां दीक्षणीयायाम् । वि. ९।१।२ वर्णकं २.

ऊहो न कर्तव्यः पाशुकचातुर्मास्येषु मध्यमे परिधौ 'परिधयेऽज्यमानाय' इति । वि. ९।२।१३.

ऊहो न दर्शपूर्णमासयोर्द्विबहुपत्नीके यागे 'पत्नीं संनह्य' इत्यत्र एकवचनस्य । ९।३।६.

ऊहो न निर्वापमन्त्रगतानां सवित्रादिपदानाम् । ९।१।१२.

ऊहो न 'पत्नीं संनह्य' इत्यत्र वचनस्य द्विबहुपत्नीके विकृतिप्रयोगे । ९।३।७.

ऊहो न पशुगणे अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानाम् । ९।३।१०.

ऊहो न वायव्यादिपशौ मनोतामन्त्रस्य ( त्वं ह्यग्ने प्रथमः' इत्यत्र 'त्वं हि वायो प्रथमः' इति )। १०। ४।२१.



ऊहो न विकृतौ इडानिगदे यज्ञपतिशब्दस्य । ९।१।१४.

ऊहो न व्रीहिमन्त्रस्य नीवाराणां व्रीहिप्रतिनिधित्वे । ९।३।९.

ऊहो न साद्यस्के सोमक्रयसाधने षाण्डे पुंस्त्वेऽपि ज्योतिष्टोमगतमन्त्रस्य 'तस्यै शृतम्' इत्यादेः । ९।१।६ वर्णकं १.

ऋक्संस्कारकर्मत्वेन साम्नां प्राधान्यं नास्ति । ९।२।२.

ऋग्जुषाणाधिकरणम् ( आज्यभागयोः ऋग्जुषाणयाज्ययोर्विकल्पः )। संकर्ष. ४।३।१०.

ऋग्द्रव्यवाचकः पृष्ठशब्दः 'पृष्ठैरुपतिष्ठते' इति । ७।३।१४.

ऋग्यजुर्मन्त्राणां कर्मणि तानस्वरेणैव प्रयोगः । तान एकश्रुतिः । ९।२।८ वर्णकं २.

ऋग्लक्षणम् । २।१।१०.

ऋजीषादिनयनं प्रतिपत्तिः अवभृथे । ४।२।८.

ऋणत्रयापाकरणं क्षत्रियवैश्ययोरपि नित्यम्। ६।२।११.

ऋतपेये विहितया सोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः । १०।३।१९.

ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः ब्रह्मभिन्नपुरुषाणां च निवृत्तिः । १०।३।२०.

'ऋतुप्रैषादिभिर्वृणीते' इति येषां शाखायां वचनम्, तेषां तैरेव मन्त्रैः वषट्कर्तॄणां वरणम् । संकर्ष. ३।४।११.

ऋतुयाजेषु प्रैषान् मैत्रावरुण एव ब्रूयात् । संकर्ष. २।३।१३.

ऋतुयाजेषु स्वयं याज्यापाठे यजमानस्य वषट्कारनिमित्तोऽस्ति भक्षः । ३।५।१८.

ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः सत्रे न बाधः । १०।२।२६.

ऋतुयाज्यासु प्रैषांशस्योद्धारः । संकर्ष. २।४।२५.

ऋत्विक्परिक्रयस्य सत्रे बाधः । १०।२।११.

ऋत्विक्परिक्रयार्थं दक्षिणादानमुदवसानीये, तस्य सत्रानङ्गत्वात् । १०।२।१२.

ऋत्विक्शब्दः यागीयसर्वकर्मकरेषु न प्रवर्तते, किन्तु सप्तदशस्वेव । ३।७।१६.

ऋत्विक्संस्काराः सर्वेषामृत्विजाम् । ३।८।४.

ऋत्विगानत्यर्थं दक्षिणादानम् । १०।२।८.

ऋत्विगेव शमिता, न भिन्नः । संकर्ष १।१।११.

ऋत्विग्भ्यः सोमविक्रयी भिन्नः । ३।७।१५.

ऋत्विग्यजमानेभ्य उपगातारो न भिन्नाः । ३।७।१४.

ऋत्विङ्नियमो दक्षिणाभिः । ३।७।१७.

ऋत्विजः कर्तव्यानुसारिसंख्यया वरीतव्याः । ३।७।९.

ऋत्विजः सोमे सप्तदश । ३।७।१६.

ऋत्विजः स्वामिसप्तदशाः ज्योतिष्टोमे । ३।७।१८.

ऋत्विजां परिक्रयः स्वामिकर्म, न ऋत्विक्कर्म । ३।८।१.

ऋत्विजां राजसूयोपक्रमे वृतानामेव समाप्तिपर्यन्तता। ११।४।२.

ऋत्विजामनियतपदार्थकर्तृत्वमपि विशेषसमाख्यया । ३।७।२०.

ऋत्विजामुपगाने पत्नीनां समुच्चयः महाव्रते । १०।४।५.

ऋषीणां कर्माधिकारो नास्ति । ६।१।२.

एककपालशब्दो धर्मातिदेशकः । ७।३।१०.

एककपाले प्राकृतावदानधर्मस्य नातिदेशः । संकर्ष. २।२।१६.

एककार्याणां गुणानामेकस्मिन् कर्मणि विकल्पः । १२।३।४.

एकत्रिके ऋता ( तौ ए ) वेकस्या एव ऋचः त्रिरभ्यासेन त्रिकस्तोमधूर्गानम् । १०।५।३.

एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे आद्ये एव तृचे गानम् ( इदमधिकरणं अनवधानेन मीमांसाकोषस्य प्रथमे भागे ४५४–५५ पृष्ठयोर्मुद्रितम्, तत्र द्रष्टव्यम् )। १०।५।२.

एकदेवताकपशुगणे वसाहोमानां तन्त्रम् । ११।२।५.

एकधाऽधिकरणम् (पशुगणे अध्रिगुप्रैषे एकधाशब्दस्य यावत्त्वचमभ्यासः )। ९।३।११.

एकवाक्यताऽधिकरणम् ( एकवाक्यत्वलक्षणम् )। २।१।१४.

एकहविरार्तावपि पञ्चशरावनिर्वापः प्रायश्चित्तम् । ६।४।६.

एकहायनीनयनं न अक्षाभ्यञ्जनप्रयुक्तम् । ४।१।१०.

ऐकादशिनपशुधर्माणामतिदेशः पशुगणेषु । ८।१।८.

ऐकादशिनपशुवसाहोमानां तन्त्रभेदः । ११।२।६.

ऐकादशिनाः पशवो द्वादशाहे प्रायणीये पञ्च उदयनीये षट् इति विभज्यानुष्ठेयाः । १०।६।४.

ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनां विकल्पः । १२।४।६.

ऐकादशिनेषु पशुषु कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।९.

ऐकादशिनेषु पशुषु सवनीयपशुधर्माणामतिदेशः । ८।१।७.

ऐन्द्र( न्द्रे ) एकादशकपाले दार्शपौर्णमासिकपुरोडाशधर्माणामतिदेशः, न तु ऐन्द्रस्य सांनाय्यस्य । वि. ८।१।१७.

ऐन्द्रवायवन्यायः ( ऐन्द्रवायवग्रहस्य द्विर्भक्षणम् ) । ३।५।५.

ऐन्द्रवायवस्य ग्रहस्य कामसंयोगेऽपि पाठप्राप्ते एव स्वस्थाने अनुष्ठानम्, न तु सर्वादितः । १०।५।१८.

ऐन्द्रवायवस्य ग्रहस्य मैत्रावरुणादिग्रहापेक्षया पूर्वमनुष्ठानम् । १०।५।१७.

ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणात् समानविधित्वं द्वादशाहे त्र्यनीकायां प्रथमद्वितीययोरह्नोः । १०।५।२३.

ऐन्द्रवायवादिपात्रेषु प्रकृतपुरोडाशशकलादीनामेव निधानम् । ३।८।१८.

ऐन्द्राग्नवैश्वदेवयोर्द्यावापृथिव्यानुरोधेन वैश्वदेविकतन्त्रनियमो नास्ति आग्रयणे । १२।२।१५.

ऐन्द्राग्नसोमभक्षणममन्त्रकम् । ३।२।१७.

ऐन्द्राग्नस्तुत्यर्था आग्नेयद्विरुक्तिः । २।३।१४.

ऐन्द्राग्नादिविकृतौ दार्शपौर्णमासिकधर्माणामतिदेशः । ८।१।४.

ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनां सद्यस्कालता । ५।४।७.

ऐन्द्राबार्हस्पत्ये कर्मणि याज्याऽनुवाक्यायुगलद्वयस्य विकल्पः । १२।४।२०.

ऐन्द्रीन्यायः ( ऐन्द्या ऋचा गार्हपत्यमुपतिष्ठते ) । ३।२।२.

ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशधर्माणामतिदेशः । ८।१।१७.

ऐष्टिकशेषभक्षाणां सौमिकव्रतादिभक्षणेन न प्रसङ्गसिद्धिः । १२।१।१५.

ऐहिकामुष्मिकत्वम् ( पुत्रवृष्ट्यादेः फलस्य ) । ४।३। ११ वर्णकं २.

औत्पत्तिकसूत्रम् । १।१।५.

औदुम्बराधिकरणम् ( उदाहरणवाक्यगतपदानुसारि शीर्षकम् ) । १।२।२.

औदुम्बरेण सोमापौष्णे पशौ यूपार्थे विहितेन प्राकृतस्य खादिरस्य बाधः । १०।७।१८.

औपवसथ्येऽहनि सोमार्थे वरणम् । संकर्ष. ३।४।१४.

औपासनाग्नौ अनाहिताग्नेः पिण्डपितृयज्ञः स्यात् । संकर्ष. १।२।१३.

कण्डूयनमन्त्रस्य एककाले अङ्गभेदेनापि कण्डूत्पत्तौ सकृत् प्रयोगः ज्योतिष्टोमे । ११।४।१६.

कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य 'पुनानः सोम धारया' इति स्वयोनौ एव गानम् । १०।४।२२.

कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य स्तोत्तरायामेव ' दुहान ऊधर्दिव्यम् ' इत्यस्यां गानम् । १०।४।२३.

कण्वरथंतरे अविरुद्धानां बृहद्रथंतरधर्माणां समुच्चयो वैश्यस्तोमे । ९।२।१६.

कपालं न तुषोपवापप्रयुक्तम् । ४।१।११.

कपालचतुष्कभेदः प्रतिपुरोडाशमश्वप्रतिग्रहेष्टौ । ११।४।११.

कपालन्यायः ( विकृतौ प्राकृतैकदेशग्रहणे प्राथमिकानामेव ग्रहणम् ) । १०।५।१.

कपालादेरेकदेशभेदनादावपि प्रायश्चित्तम् । ६।४।४.



कपिञ्जलाधिकरणम् ( बहुवचनस्य त्रित्वे पर्यवसानम् ) । ११।१।८.

' कपिञ्जलानालभते ' इति बहुत्वं विवक्षितमश्वमेधे । ४।१।९.

करणमन्त्रप्रकाश्यं कर्मोपयोगिफलं ऋत्विग्गामि । ३।८।१४.

करणमन्त्रप्रकाश्यं फलं याजमानम् । ३।८।१३.

करणमन्त्राणामेककार्याणां विकल्पः । १२।३।१३.

करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः । १२।३।१०.

कर्तृगर्भविहारविधानमवभृथे 'प्रत्यञ्चोऽभृथेन चरन्ति' इति । संकर्ष. २।४।१६.

कर्तृदेशकालविधयो नियमार्थाः । ४।२।९.

कर्त्रधिकरणम् । ३।४।४. ( इदं भाष्यवार्तिकयोः प्रासङ्गिकम् । कर्ता नाख्यातवाच्यः )

कर्मकालीनो मन्त्रप्रयोगः अनध्यायादावपि । १२।३।७.

कर्मजन्यमपूर्वं स्वीकर्तव्यम् । २।१।२.

कर्मणां सर्वेषामाधानं तन्त्रम्, न तु प्रतिकर्म पृथक् । ११।३।२.

कर्मणि एकस्मिन् भूयोमन्त्रसत्त्वे मन्त्रस्य विकल्पेन ग्रहणम् । संकर्ष. १।२।३.

कर्मणि एकस्मिन् शाखाभेदेन मन्त्रनानात्वे विकल्पेन विनियोगः । संकर्ष. १।२।२.

कर्मणि समाप्ते उद्धृतोऽग्निः लौकिकः संपद्यते । संकर्ष. ३।२।९.

कर्मनामधेयम् अर्थावच्छेदकत्वेन धर्मे प्रमाणम् । १।४।१ वर्णकं १.

कर्मप्रारम्भो मन्त्रान्ते करणमन्त्रेषु । १२।३।१०.

कर्मभूयस्त्वाधिकरणन्यायः ( त्र्यनीकाऽधिकरणम् ) । १०।५।२५.

कर्मसु यजमानेन त्यागः स्वयं कर्तव्यः, इतरत् ऋत्विग्द्वारा । ३।७।८.

कर्मसु व्याकरणसिद्धाः साधवः शब्दा एव प्रयोज्याः । १।३।८.

कर्मादिसंनिपातो मन्त्रान्तेन अग्निचयने वसोर्धारायाम् । १२।३।११.

कर्मादिसंनिपातो मन्त्रान्तेन आघारे । १२।३।१२.

कर्मार्थफलाधिकरणम् ( कर्मसिद्ध्यर्थस्य अङ्गफलस्य ऋत्विग्गामित्वम् ) । ३।८।१४.

कलञ्जन्यायः ( कलञ्जं न भक्षणीयम् ) । ६।२।५.

कलञ्जभक्षणनिषेधन्यायः । ६।२।५.

कल्पसूत्राधिकरणम् ( कल्पसूत्रं वेदाविरोधे धर्मे प्रमाणम् ) । १।३।६.

कांस्यभोजिन्यायः ( कांस्यपात्रभोजननियमवतः शिष्यस्यानुरोधेन नियमरहितस्य गुरोरपि कांस्यपात्रग्रहणम् ) । १२।२।१४.

काण्डाधिकरणम् ( गुणकामा याजमानाः ) । ३।८।५.

काण्डानुसमयन्यायः ( अश्वसहस्रादिप्रतिग्रहे पुरोडाशधर्माणां काण्डानुसमयः ) । ५।२।२.

कापेय्या पद्धत्या पशुनियोजनं यूपैकादशिन्यामहीनेषु, इतरा पद्धतिस्तु प्रकृतौ । संकर्ष. १।४।२५.

काम्यं नित्यस्य बाधकम् । ३।६।३.

काम्यकर्मणः प्रारब्धस्य श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । ६।३।४.

काम्यगुणानां प्राकृतानां विकृतौ नातिदेशः । ८।१।१४.

काम्ययाज्याऽनुवाक्याकाण्डस्य काम्यमात्राङ्गता । ३।२।७.

काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षः । १०।५।१९.

काम्यानां कर्मणां कामनाऽनुरोधेन पुनःपुनरभ्यासः कृषिवत् । ११।१।४.

काम्यानामनुष्ठाने पाठक्रमो न नियामकः । ५।३।१२.

काम्यासु विकृतिषु उपदिष्टैर्द्रव्यदेवताऽऽदिभिः प्राकृतद्रव्यदेवताऽऽदीनां बाधः । १०।७।१७.

काम्येषु समुच्चितानामेवाङ्गानां प्रधानोपकारकत्वम् । ११।१।३.

काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः । ६।३।२.

काम्येष्टिन्यायः ( काम्यानुष्ठाने पाठक्रमो न नियामकः ) । ५।३।१२.

काम्येष्टिषु उपांशुत्वं प्रधानार्थम् । ३।८।१९.

कालवादः । 'परिवप्यहोमयोः अमितः पुरोडाशौ' इति पूर्वोत्तरकालवादः । संकर्ष. १।१।१०.

कालविधिर्दर्शपूर्णमासादौ नियमार्थः । ४।२।९.

कुण्डपायिनामयनगतः अग्निहोत्रशब्दः नित्याग्निहोत्रधर्मान् अतिदिशति । ७।३।१.

कुण्डपायिनामयने आध्वर्यवं परिव्याणकरणमन्त्रं होता ब्रूयात् । ३।८।१०.

कुण्डपायिनामयने प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणम् । १२।१।६.

कुण्डपायिनामयने 'मासं दर्शपूर्णमासाभ्यां यजेत' इति प्रत्यहं यागः । संकर्ष. ३।१।२५.

कुण्डपायिनामयने मासाग्निहोत्रादिकं कर्मान्तरं प्रकरणान्तरगतत्वात् । २।३।११.

कुण्डपायिनामयने सत्रात्मकद्वादशाहधर्माणामतिदेशः । ८।२।६.

कुम्भीशूलवपाश्रपणीनां तन्त्रं न नानाजातीयेषु पशुषु पाकवैषम्यात् । ११।४।१०.

कुम्भीशूलवपाश्रपणीनां तन्त्रं वाजपेयगतप्राजापत्यपशवङ्गादिश्रपणार्थम् । ११।४।८.

कुम्भीशूलवपाश्रपणीनां तन्त्रमैकादशिनेषु पशुषु । ११।४।९.

कुलाययज्ञे अधिकारः मित्रकल्पयोरपि । ६।६।२.

कुलायादौ प्रतिपदोरुत्कर्षः ( युवं हि स्थः, एते असृग्रमिन्दवः ) । ३।३।९.

कूर्मचितौ अग्निचयने प्राङ्मिति कर्तुर्मुखवादः, प्रत्यङ्मिति तु कूर्ममुखवादः । संकर्ष. २।१।२०.

कृषिन्यायः ( काम्यानां कर्मणां कामनाऽनुरोधेन पुनःपुनरभ्यासः कृषिवत् ) । ११।१।४.

कृष्णग्रीवयोः प्रथमतृतीययोः पश्वोः भेदेनानुष्ठानम् । ११।१।११.

कृष्णलचरौ अवघातस्य बाधः । १०।१।१ वर्णकं १.

कृष्णलचरौ आग्नेयपुरोडाशधर्माणामतिदेशः । ८।१।१८.

कृष्णलचरौ चतुर्धाकरणस्य बाधः । १०।२।७.

कृष्णलचरौ ब्रह्मभक्षाः युगपत् परिहरणीयाः । १०।२।४.

कृष्णलचरौ भक्षाणां न बाधः चुरचुषाकारेण तत्संभवात् । १०।२।३.

कृष्णलचरौ युगपदुपहुताः सर्वे भक्षाः ब्रह्मणा तत्तद्भक्षणकाले एव भक्षणीयाः । १०।२।६.

कृष्णलचरौ सर्वे शेषभक्षाः पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः । १०।२।५.

कृष्णलेषु मुख्यपाकासंभवात् औष्ण्यरूपः पाकः कार्यः । १०।२।१.

कृष्णलेषूपस्तरणाभिघारणयोर्बाधः । १०।२।२.

कृष्णविषाणाप्रासनाधिकरणम् ( प्रतिपत्तिः ) । ४।२।७.

कृष्णविषाणायाश्चात्वाले प्रासनं अहर्गणे अन्त्यदिने एव । ११।३।६.

कृष्णाजिनास्तरणन्यायः ( नानाबीजेषु ) । ५।२।७.

क्लृप्त्यधिकरणम् ( क्लृप्तिमन्त्राणां वाचनं ज्ञानवतः एव वाजपेये ) । ३।८।८.

केशश्मश्रुन्यायः ( केशश्मश्रुमतः पुरुषस्यैव आधाने अधिकारः, तस्यैव विहितवपनस्य संभवात् ) । ६।१।६.

केसरिणः अश्वादयः विश्वजिति न देयाः । ६।७।३.

कौण्डपायिनामयने इति कुण्डपायिनामयने इतिशब्दे द्रष्टव्यम् ।

कौत्सकाण्ववसिष्ठस्यजनित्रादिसामभिः विकृतिविशेषे प्राकृतसाम्नां बाधः । १०।४।८ वर्णकं १.

कौत्सादिन्यायः ( विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः तत्तत्समसंख्याकप्राकृतसाम्नां बाधः ) । १०।४।९.

क्रतुपशूनां प्राजापत्यपशूनां च शामित्रोऽग्निस्तन्त्रम् । संकर्ष. १।१।९.

क्रतुपशूनां प्राजापत्यैः पशुभिः समुच्चयो वाजपेये । १०।४।३.

क्रतौ ब्राह्मणप्रोक्तानां मन्त्राणां भाषिकः स्वरः प्रयोक्तव्यः । १२।३।९.

क्रत्वर्थे यजमानमरणोत्तरं कर्तव्यम्, इतरत्र कर्तव्यं सर्वस्वारे । १०।२।२४.



क्रत्वर्थपुरुषार्थजिज्ञासाऽधिकरणम् । ४।१।१.

क्रत्वर्थपुरुषार्थलक्षणम् । ४।१।२ वर्णकं १.

क्रत्वर्थानां नैमित्तिकानां निमित्तावृत्तौ आवृत्तिः यथा भेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः । ६।२।९.

क्रत्वर्थानामनुष्ठानम् अक्षियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१९.

क्रमकोपाधिकरणम् ( पाठक्रमात् श्रुत्यर्थक्रमौ बलवन्तौ ) । ५।४।१.

क्रमयोर्विरोधे । ३।३।७. वा. पृ. ८४०.

क्रमश्चोदनालक्षण एव । ५।१।१ वर्णकं २.

क्रमसमाख्ययोर्विरोधे । ३।३।७. भा. पृ. ८५५. वा. पृ. ८४०,८५५.

क्रमसमाख्याऽधिकरणम् । वि. ३।३।११.

क्रमाधिकरणम् ( क्रमोऽपि विनियोजकं प्रमाणम् ) । ३।३।५.

क्रमो न्यायात् व्याहृति–हिंकार–दशहोतृ–सामिधेनीनाम् । संकर्ष. ४।१।१.

क्रियायाः न प्रतिनिधिः । ६।३।५.

क्षत्रियवैश्ययोरपि ऋणत्रयापाकरणं नित्यम् । ६।२।११.

क्षामवत्यादीनां तन्त्रमध्ये प्राप्तौ उत्कर्षः । संकर्ष. ३।१।७.

क्षामेष्टिन्यायः ( सर्वपुरोडाशक्षामे प्रायश्चित्तम् ) । ६।४।५.

क्षौमाधिकरणम् ( अग्नीनादधानयोर्दम्पत्योर्वसने क्षौमत्वविधानम् ) । ६।१।६.

खदिरत्वादीनां वैकल्पिकानां प्राकृतानां मध्ये अन्यतमपुनःश्रुतौ नियमविधित्वं वाजपेयादिविकृतौ । १०।७।१६.

खदिरालाभेन कदरे संस्कृते पुनः खदिरलाभे खदिरः संस्कृत्य ग्राह्यः, संस्कृतोऽपि कदरस्त्याज्यः । वि. ६।३।१७.

खदिरे लब्धेऽपि पशुनियोजनासमर्थे सति नियोजनसमर्थः कदर एवोपादेयः । वि. ६।३।२०.

खलेवाल्यां तक्षणजोषणादिधर्माणां बाधः । १०।२।३२.

खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम् । १०।२।३३.

खलेवाल्यां प्राकृतस्य खादिरत्वस्य चित्रेष्टौ च तण्डुलानां व्रीहियवान्यतरजन्यत्वस्य नियमो नास्ति । १०।२।३१.

खलेवाल्यां यूपाहुतेर्बाधः । १०।१।५.

खादिरत्वस्य प्राकृतस्य खलेवाल्यां नियमो नास्ति । १०।२।३१.

खादिरत्वस्य प्राकृतस्य सोमापौष्णे पशौ यूपार्थे श्रूयमाणेन औदुम्बरेण बाधः । १०।७।१८.

गतश्रियः सोमापचर्गे शालामुखीयवत् आहवनीयस्यापि समारोपः । संकर्ष. ३।२।३.

गर्गत्रिरात्रे आज्यदोहस्तोत्रकाले लौकिकाग्नेरुपनिधानम् । ७।३।१२.

गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्माणामतिदेशः । ७।४।३.

गवामयनगतप्रायणीये द्वादशाहगतप्रायणीयधर्माणां नातिदेशः । ७।३।२.

गवामयनगतस्वरसामधर्माणाम् अष्टरात्रगतस्वरसामद्वये अतिदेशः । ७।३।१०.

गवामयनधर्माणां सांवत्सरिकसत्रेषु अतिदेशः । ८।१।११.

गवामयनस्य दीक्षा माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे, न चैत्र्याः । ६।५।९.

गवामयनादौ पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वाद्यशनम्, न तु प्रतिषडहान्तम् । १०।६।१०.

गवामयने न्यनीकायाः स्वस्थानविवृद्ध्या अभ्यासः, न तु दण्डकलितवत् । १०।५।२५.

गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानम् । ९।२।६ वर्णकं ४.

गवामयने पृष्ठ्यषडहान्ते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम् । १०।६।९.

गवामयने पृष्ठ्ये षडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैव अनुष्ठानम् । १०।६।३.

गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ मध्वशनादेरपि आवृत्तिः । १०।६।११.

गानं कर्तव्यं गिरापदस्थानापन्ने इरापदे ज्योतिष्टोमे यज्ञायज्ञीये । ९।१।१९.

गायत्रच्छन्दसः इत्यादिपदानामनेकच्छन्दस्के सोमे विनियोगः । ३।२।१८.

'गायत्री पुरोऽनुवाक्या भवति' इत्येवमादिलक्षणानि अनुपदिष्टयाज्यासु विकृतिषु नेयानि । संकर्ष. ४।३।११.

गार्हपत्यकर्माणि शालामुखीये एव ज्योतिष्टोमे । ३।२।१३.

गार्हपत्यन्यायः ( ऐन्द्या गार्हपत्यमुपतिष्ठते )। ३।२।२.

गार्हपत्याद्यग्निषु लौकिककर्मणां नानुष्ठानम् । १२।२।१.

गार्हपत्यार्थ एव मथितोऽग्निराधाने । संकर्ष. ३।२।१.

गार्वीधुकयवाग्वाः निषेधः पयोहोमविध्यर्थवादः । १०।८।४.

गिरापदस्थानापन्ने इरापदे गानं कर्तव्यं ज्योतिष्टोमे यज्ञायज्ञीये । ९।१।१९.

गिरापदस्य इरापदेन बाधः ज्योतिष्टोमे यज्ञायज्ञीये । ९।१।१८.

गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानां विकल्पः । ९।२।७.

गुणकर्माणि प्रधानकर्माणि चेति कर्माणि द्विविधानि । २।१।३.

गुणकामाधिकरणम् ( दध्नेन्द्रियकामस्य जुहुयात् इति इन्द्रियफलाय दधिगुणो विधीयते, न तु कर्मान्तरम् )। २।२।११.

गुणकामानां नानुष्ठानम् अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२०.

गुणकामानां होतृकामनया अनुष्ठीयमानानां नानुष्ठानम् अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।२२.

गुणकामा याजमानाः । ३।८।५.

गुणन्यायः ( गुणभेदः कर्मभेदकः )। २।२।९.

गुणप्रत्युदाहरणम् ( दध्ना जुहोति पयसा जुहोति इति अग्निहोत्रे वैकल्पिकं द्रव्यं विधीयते, न कर्मान्तरम् )। २।२।१०.

गुणभेदः कर्मभेदकं प्रमाणम् । २।२।९.

गुणमुख्यव्यतिक्रमन्यायः ( गुणस्य मुख्यस्य च अतिक्रमे प्राप्ते गुणः अतिक्रमितव्यः, न मुख्यः )। ३।३।२.

गुणलोपन्यायः ( पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि निर्वापोऽनुष्ठेयः )। १०।२।२७.

गुणाभिधानाधिकरणम् ( मन्द्राभिभूतिरित्यादिर्भक्षयाभ्यन्त एको मन्त्रः )। ३।२।१०.

गुदानामुपयाजसाधनानां समुच्चयः पशुगणे । १२।४।४.

गुर्वनुगमनादीनां निमित्तावृत्तौ आवृत्तिः । ६।२।१०.

गृहपतिकर्तृकत्वं शुक्रान्वारम्भादेः सत्रे । १२।४।१३.

गृहमेधीय ( ये ) आज्यभागपुनःश्रवणस्य परिसंख्याऽर्थत्वमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां विशेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनम् । १०।७।११.

गृहमेधीयन्यायः । ( गृहमेधीयस्य आज्यभागपुनःश्रवणेन अपूर्वत्वम् ) । गृहमेधीयाज्यभागन्यायः । १०।७।९.

गृहमेधीये यावदुक्तं स्विष्टकृदादि कर्तव्यम् । १०।७।१०.

गृहमेधीये सामिधेनीनिषेधेऽपि नावाहनबाधः । संकर्ष. ४।४।७.

गोदोहनवर्णकम् । वि. ४।१।२ वर्णकं ३.

गोदोहनादिगुणकामानां दर्शपूर्णमासगतानां विकृतौ नातिदेशः । ८।१।१४.

गोदोहनाधिकरणम् ( गोदोहनपात्रमपां प्रणयने काम्यम् )। ३।६।३.

गौग्गुलवादितैलेन नवनीतस्य समुच्चयः अञ्जनाभ्यञ्जने सत्रे । १०।४।६.

गौणमुख्याधिकरणम् ( गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः )। ३।२।१.

ग्रहचमसानां समुच्चयः अतिरात्रे रात्रिपर्यायेषु । संकर्ष. ३।३।१६.

ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः ग्रहाग्रतासु । १०।५।२१.

ग्रहधर्माः सवनत्रयार्थाः । ३।६।९.



ग्रहधर्माः सादनादयः अंश्वदाभ्ययोरपि । ३।६।११.

ग्रहधर्माधिकरणम् ( सवनत्रयार्थता )। ३।६।९.

ग्रहधर्मा न फलचमससाधारणाः । ३।६।१३.

ग्रहन्यायः ( ग्रहम् इत्येकत्वं न विवक्षितम् )। ३।१।७.

ग्रहसंमार्जनाधिकरणम् ( ग्रहाणां सर्वेषां संमार्जनम् )। ३।१।७.

ग्रहसमुच्चयन्यायः ( बृहस्पतिसवादिविकृतौ औपदेशिकैर्बार्हस्पत्यादिग्रहैः आतिदेशिकानामैन्द्रवायवादिग्रहाणां समुच्चयः )। १०।४।२.

ग्रहाग्रतासु ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः । १०।५।२१.

ग्रहाग्रतासु सादनापकर्षेऽपि प्रदानस्य नापकर्षः । १०।५।२२.

ग्रहेष्टकाधिकरणम् ( ग्रहा इष्टकाश्च सकृत् कार्याः )। ५।३।६.

ग्रहैकत्वन्यायः ( ग्रहमित्येकत्वं न विवक्षितम् )। ३।१।७.

ग्राम्यधान्यभक्षणनिषेधः आग्रयणाकरणे ( नवान्नभक्षणनिषेधः )। संकर्ष. ३।१।१०.

ग्रावस्तुतोऽपि हारियोजने सोमभक्षः । ३।५।९.

'घृतं देवानां, मस्तु पितॄणाम्' इत्यादिरर्थवादः । ३।४।३.

'घृतेष्टका उपदधाति' इति घृतपूर्णघटोपधानमग्निचयने । संकर्ष. २।१।२४.

चतुरवत्तसंपत्तिः उपस्तरणाभिघारणाभ्यां सहैव । १०।८।१२.

चतुरवत्तसंपत्तिः उपांशुयाजे उपस्तरणाभिघारणयोर्लोपेऽपि हविषैव । १०।८।१३.

चतुरुपह्वयते इति इडोपहूतेतिपदविषयमेव । संकर्ष. ४।३।१८.

चतुर्गृहीतद्वयाधिकरणम् ( उपभृति ) । ४।१।१७.

चतुर्धाकरणस्य बाधः कृष्णलचरौ । १०।२।७.

चतुर्धाकरणाधिकरणम् ( उपसंहारन्यायः ) । ३।१।१५.

चतुर्धाकरणाधिकरणम् ( चतुर्धाकरणं भक्षार्थम् )। ३।४।१७.

चतुर्होतृहोमेषु अधिकारः अनाहिताग्नेरेव । ६।८।१.

चतुष्पथैकोल्मुकयोः समुच्चयः त्र्यम्बकेषु । संकर्ष. २।४।१५.

चतुस्त्रिंशन्मन्त्रतत्प्रतिषेधन्यायः । ९।४।२.

चमसहोमेषु चमसाध्वर्यवः कर्तारः अध्वर्योरन्यत्र व्यापृतत्वे । ३।७।२२.

चमसाधिकरणम् ( चमसा न संमार्जनीयाः ) । ३।१।८.

चमसाध्वर्युदशत्वन्यायः । ३।७।१२.

चमसाध्वर्युपृथक्त्वन्यायः । ३।७।१०.

चमसाध्वर्युबहुत्वन्यायः । ३।७।११.

चमसिनामेव सोमशेषभक्षः । ३।५।७.

चयनमग्निसंस्कारविशेषः । २।३।१०.

चयनाङ्गत्वं दाशतयीभ्य आनीतानां सर्वासामेव आग्नेयीनाम् । संकर्ष. २।१।३४.

चरुपुरोडाशद्वयसत्त्वे चरूणां पुरोडाशानां चेति द्वौ राशी युगपत् कर्तव्यौ । संकर्ष. १।३।२२.

चरुपुरोडाशोभयसत्त्वे राशिद्वये देवतानिर्देशः समुच्चित्य कर्तव्यः । संकर्ष. १।३।२३.

चरुशब्दः ओदनवाची । १।३।४ वा. पृ. २२१.

चरुशब्दवाच्येन ओदनेन सौर्ययागे प्राकृतहविषो बाधः । १०।१।१०.

चरूपधानाधिकरणम् ( अग्निचयने चरुमुपदधाति इति नैवारचरोः उपधानमात्रं विधीयते )। २।३।७.

चरौ इष्टकाधर्माः अग्निचयने न कर्तव्याः । संकर्ष. २।१।८.

चरौ सप्तदशशरावे मुष्टिलोपेन चतुःसंख्याऽनुग्रहः कर्तव्यो वाजपेये । १०।२।२८.

चातुर्मास्यगताग्निप्रणयने सौमिकाग्निप्रणयनधर्माणां नातिदेशः । ७।३।८.

चातुर्मास्यानां पशुकामप्रयोगे सहस्रपशुप्राप्तिपर्यन्तं वैश्वदेवमेव अभ्यस्य अथ वरुणप्रघासादीनि पर्वाणि अनुतिष्ठेत् । संकर्ष. ३।१।२४.

चातुर्मास्येषु चान्द्रो मासः स्वीकार्यः । संकर्ष. ३।१।१८.

चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षः इव यावज्जीवपक्षोऽपि विज्ञायते । संकर्ष. ३।१।२०.

चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे मध्ये मासस्यैवोत्सर्गः, न तु संवत्सरस्य । संकर्ष. ३।१।१९.

चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तावपि वैश्वानरपार्जन्यपञ्चहोतृहोमानां सकृदेवानुष्ठानम् । संकर्ष. ३।१।२१.

चातुर्मास्येषु पाशुकेषु परिधौ यूपधर्मः पशुबन्धनं कर्तव्यम् । वि. ९।२।१२.

चातुर्मास्येषु पाशुकेषु परिधौ यूपपरिव्युमयधर्माणामविरुद्धानामनुष्ठानम् । १२।२।१०.

चातुर्मास्येषु पाशुकेषु परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः । १२।२।११.

चातुर्मास्येषु पाशुकेषु स्वविष्टे मध्यमे परिधौ अविरुद्धा यूपधर्माः कर्तव्याः, यूपाञ्जनप्रैषे च ( ' परिधयेऽज्यमानाय ' ) इति ऊहः न कर्तव्यः । वि. ९।२।१३.

चातुर्मास्येषु ' यदि प्रावृषि यजेत सकृदुपस्तीर्य द्विरभिघारयेत् ' इत्यत्र वरुणप्रघासग्रहणम् । संकर्ष. ३।१।२२.

चातुर्मास्येषु सौमिकेषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधः । १०।३।३.

चातुर्मास्येष्वग्निप्रणयनं मध्यमयोरेव पर्वणोः । ७।३।९.

चातुर्मास्येष्वनुयाजीयदेवताप्रकाशनार्थे प्राकृतावाहनमन्त्रस्य अविकारेणैव प्रयोगः । १०।४।२५.

चात्वाले कृष्णविषाणायाः प्रासनम् अहर्गणे अन्त्यदिने एव । ११।३।६.

चान्द्रो मास एव स्वीकार्यश्चातुर्मास्येषु । संकर्ष. ३।१।१८.

चिकीर्षान्यायः ( सौमिकवेदिः चिकीर्षितसाङ्गप्रधानार्था ) । ३।७।३.

चितिशब्दः अग्निचयने न प्रस्तरपरः, किन्तु तदवयवपरः । संकर्ष. २।१।१७.

चितिसमुदायस्यैव वेदिधर्माः, न तु तदाधारभूमेः । संकर्ष. २।१।२६.

' चित्तं च चित्तिश्च ' इत्यादौ न चतुर्थ्या विपरिणामः । संकर्ष. २।४।२१.

' चित्ताय स्वाहा , चित्तये स्वाहा ' इत्यादिभिः शाखाऽन्तरमन्त्रैः ' चित्तं च स्वाहा ' इत्यादीनां विकल्पः । संकर्ष. २।४।२२.

चित्यधिकरणम् ( षष्ठी चितिर्नैमित्तिकी ) । ४।४।७.

चित्राऽऽज्याधिकरणम् । चित्राऽधिकरणम् ( चित्राशब्दः कर्मनामधेयम् ) । १।४।२.

चित्रिण्यादय इष्टकाः सकृदेवोपधातव्याः । ५।३।६.

चित्रिण्यादयोऽपि अग्न्यङ्गम् । ३।६।१२.

चित्रिण्यादीनामिष्टकानां मध्यमचितावुपधानम् । ५।३।७.

चित्रिण्यादीनामिष्टकानां लोकंपृणातः प्रागुपधानम् । ५।३।८.

चित्रेष्टिगतमधूदकयोः उपांशुयाजधर्माणामतिदेशः । ८।१।१९.

चित्रेष्टौ 'अग्ने गोभिर्न' इत्यादिभिः पुष्टिमन्त्रैरेव होमः । संकर्ष. २।४।५.

चित्रेष्टौ तण्डुलानां व्रीहियवान्यतरजन्यत्वस्य नियमो नास्ति । १०।२।३१.

चोदकः प्रयोगवचनाद् बलीयान् । ५।१।१०.

चोदनासूत्रम् । १।१।२.

छन्दोऽधिकरणम् ( गायत्रच्छन्दसः इत्यादिपदानामनेकछन्दस्के सोमे विनियोगः ) । ३।२।१८.

छागन्यायः । छागपशुन्यायः । ( अग्नीषोमीयः पशुश्छाग एव ) । ५।८।१०.

जगत्सामाधिकरणम् ( जगतीछन्दस्कायामृचि यस्य साम उत्पन्नम् , स जगत्सामा ) । १०।५।१५ वर्णकं १.

जञ्जभ्यमानाधिकरणम् ( जृम्भायां सत्यां दक्षक्रतुमन्त्रपाठः क्रतुयुक्तपुरुषधर्मः ) । ३।४।५.

जनकसप्तरात्रन्यायः ( द्वादशाहिकसप्ताहधर्माणां क्रमेणातिदेशः ) । ८।३।२.



जपसंस्कारेष्टीनां लोपः अस्थियज्ञस्य मृताधिकारित्वपक्षे । १०।२।१८.

जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयः । १२।४।१.

जपादिमन्त्रेषु क्रतौ मन्त्रसमाम्नायसिद्धस्वर एव प्रयोक्तव्यः, न भाषिकस्वरः । १२।३।८.

जयादिन्यायः । जयाभ्यातानाधिकरणम् ( जयाभ्यातानराष्ट्रभृद्धोमाः वैदिकेष्वेव कर्मसु ) । ३।४।९.

जर्तिलगावीधुकाधिकरणम् । जर्तिलयवागून्यायः ( जर्तिलादियवाग्वाः निषेधः पयोहोमविध्यर्थवादः ) । १०।८।४.

जागरणन्यायः ( सौमिकेन दीक्षाजागरणेन दार्शिकजागरणस्य न प्रसङ्गः ) । १२।१।८.

जाघनीनां विकल्पः ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु । १२।४।६.

जाघनीन्यायः ( जाघन्या पत्नीः संयाजयन्ति ) । ३।३।१०.

जातेष्टिः पत्न्याः भाण्डस्पर्शानर्हत्वापगमे पौर्णमास्यादौ स्वकाले कर्तव्या । ४।३।१६ वर्णकं ३.

जातेष्टिः पुत्रगतपूतत्वादिफलप्रयुक्ता । ४।३।१६.

जातेष्टिन्यायः ( अष्टाकपालादिवाक्यानि अर्थवादः ) । १।४।११.

जातेष्टिर्जातकर्मानुष्ठानोत्तरं कर्तव्या । ४।३।१६ वर्णकं २.

जात्यधिकरणम् ( आग्नेयो ब्राह्मणः इति आग्नेयशब्दः ब्राह्मणस्य स्तावकः उभयोः प्रजापतिमुखजन्यत्वात् ) । १।४।१२–२. वि. १४.

जामदग्न्यादीनां पञ्चावत्तमवदानम् । संकर्ष. २।२।६.

जृम्भायां सत्यां दक्षक्रतुमन्त्रपाठः क्रतुयुक्तपुरुषधर्मः । ३।४।५.

ज्योतिः विश्वज्योतिः सर्वज्योतिः इति भिन्ना संज्ञा कर्मभेदकं प्रमाणम् । २।२।८.

ज्योतिरादीनामेकाहकाण्डपठितानां ये धर्माः, तेषामतिदेशः गवामयनगतज्योतिरादिषु । ७।४।३.

ज्योतिष्टोमः दर्शपूर्णमासोत्तरं कर्तव्यः इति कालार्थः संयोगः । ४।३।१५.

ज्योतिष्टोमः प्रतिफलं पृथगनुष्ठेयः । ४।३।११.

ज्योतिष्टोमः सर्वसोमानां विकृतिः । वि. ८।१।३ वर्णकं २.

ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः । ३।३।२.

ज्योतिष्टोमादिषु पयोव्रतादीनि नित्यानि । ६।८।८.

ज्योतिष्टोमादौ दक्षिणादानं ऋत्विगानत्यर्थम् । १०।२।८.

ज्योतिष्टोमादौ वर्त्मादिना विशेषविहितेन आहवनीयस्य सामान्यविहितस्य बाधः । १०।८।८.

ज्योतिष्टोमे अनुयाजोत्कर्षेऽपि पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः । ५।१।१५.

ज्योतिष्टोमे अनुष्टुभो गायत्र्योश्च प्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानम् । ९।२।६ वर्णकं ३.

ज्योतिष्टोमे अनैन्द्राणाममन्त्रकं भक्षणम् । वि. ३।२।१६.

ज्योतिष्टोमे अपररात्रे व्रतं न नित्यम् । ६।८।९.

ज्योतिष्टोमे अपवृक्ते तदीयोऽग्निर्लौकिकः संपद्यते, न तु दीक्षणीयाद्यपवर्गेऽपि । संकर्ष. ३।२।१०.

ज्योतिष्टोमे अवभृथे स्विष्टकृद्यागीयनिगमेषु अग्नीवरुणयोर्वचनं सस्विष्टकृच्छन्दकमेव कर्तव्यम् । १०।४।१७.

ज्योतिष्टोमे अवभृथोत्कर्षे दीक्षितधर्माणां दानहोमादिप्रतिषेधानामपि उत्कर्षः । वि. ६।५।११.

ज्योतिष्टोमे आश्विनग्रहः दशमो गृह्यते तृतीयो हूयते । ५।४।१.

ज्योतिष्टोमे इष्ट्यादौ हविर्धानशकटाभ्यां भिन्ने शकटे हविर्निर्वापः । १२।१।७.

ज्योतिष्टोमे ' उत यत् सुन्वन्ति ' इत्यादिना श्रुतेन वाक्येन सामिधेन्यनुवचनार्थं हविर्धानदेशो लक्ष्यते । ३।७।७.

ज्योतिष्टोमे उदवसानीयोत्कर्षे अग्निहोत्रहोमः प्रतिहोमो वा न कार्यः । वि. ६।५।१३.

ज्योतिष्टोमे उपरवेषु ' किमत्र , भद्रम् , तन्नौ सह ' इति मन्त्रोक्तं फलम् अध्वर्युयजमानयोरुभयोः । वि. ३।८।१६. भा. ३।८।१४।२९.

ज्योतिष्टोमे एकपात्रे अनेकैः सोमभक्षणे अनुज्ञाप्यैव भक्षयितव्यम् । ३।५।१४.

ज्योतिष्टोमे एकपात्रे बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः । ३।५।१३.

ज्योतिष्टोमे एकपात्रे सोमभक्षे अनुज्ञापनानुज्ञे वैदिकमन्त्रेणैव । ३।५।१५.

ज्योतिष्टोमे ऐन्द्रवायवादिपात्रेषु प्रकृतपुरोडाशकपालादीनामेव निधानम् । ३।८।१८.

ज्योतिष्टोमे औत्तरवेदिकाग्निप्रणयनोत्तरं शालामुखीयः गार्हपत्यत्वमापद्यते । संकर्ष. ३।२।१२.

ज्योतिष्टोमे कण्डूयनमन्त्रस्य एककाले अङ्गभेदेनापि कण्डूत्पत्तौ सकृत् प्रयोगः । ११।४।१६.

ज्योतिष्टोमे गार्हपत्यकर्माणि शालामुखीये एव । संकर्ष. ३।२।१३.

ज्योतिष्टोमे चमसिनां सोमशेषभक्षः । ३।५।७.

ज्योतिष्टोमे तृतीयसवने एव आज्येन न्याघारणम् । संकर्ष. ३।२।१७.

ज्योतिष्टोमे तृतीयसवने एव षोडशिनो ग्रहणम् । १०।५।११.

ज्योतिष्टोमे दक्षिणान्तर्गतगोष्वेव द्वादशशतसंख्याया निवेशः । १०।३।११.

ज्योतिष्टोमे दधिग्रहो नित्यः । ४।४।५.

ज्योतिष्टोमे दार्शिकं होतृवरणं कर्तव्यम् । १२।१।१८.

ज्योतिष्टोमे दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम् । १२।१।१२.

ज्योतिष्टोमे दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं न कार्यम् । १२।१।१०.

ज्योतिष्टोमे दीक्षणीयेष्ट्या दीक्षासिद्धिर्न तु दण्डादिमात्रेण । अतो दीक्षणीयाऽन्ते दीक्षितधर्मानुष्ठानम् । ५।३।११.

ज्योतिष्टोमे दीक्षितस्य संकल्पितप्रयाणसमाप्तिपर्यन्तमादौ सकृदेव प्रयाणमन्त्रपाठः । ११।४।१८.

ज्योतिष्टोमे द्वादशशतगोरूपदक्षिणा सदस्यसहितेभ्यः षोडशभ्यः ऋत्विग्भ्यो विभज्य देया । १०।३।१२.

ज्योतिष्टोमे द्वादशशतदक्षिणायाः अर्धिनः तृतीयिनः पादिनः इति समाख्याऽनुरोधेन विभागः कर्तव्यः । १०।३।१३.

ज्योतिष्टोमे द्विर्धिष्ण्यविहरणं तृतीयसवने । संकर्ष. ३।२।१६.

ज्योतिष्टोमे धिष्ण्यविहरणम् आग्नीध्रीयादेव । संकर्ष. ३।२।१५.

ज्योतिष्टोमे पूर्वयोः सवनयोः आज्येन सोमेन वा न्याघारणम् । संकर्ष. ३।२।१८.

ज्योतिष्टोमे प्रत्युपरवखननमुपरवमन्त्रस्यावृत्तिः । ११।४।१९.

ज्योतिष्टोमे प्रायणीयाऽऽदिषु दार्शिकं व्रतं नानुष्ठेयम् । १२।१।११.

ज्योतिष्टोमे प्रायणीयाऽऽदिषु सौमिकपयोव्रतादिना दार्शिकस्य आरण्यभोजनस्य प्रसङ्गसिद्धिः । १२।१।१४.

ज्योतिष्टोमे प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडाऽन्ता । १०।७।१३.

ज्योतिष्टोमे प्रायणीया शंय्वन्तैव, आतिथ्या च इडान्तैव । १०।७।१२.

ज्योतिष्टोमे प्रोक्षणादय ऐष्टिकाः पूर्वमनुष्ठेयाः, प्रचरणीहोमादयः सौमिकास्तु पश्चात् । ५।१।१३.

ज्योतिष्टोमे बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे रौरवयौधाजयसाम्नोर्गानम् । ९।२।६ वर्णकं २.

ज्योतिष्टोमे बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितयोः ककुभोरेव गानम् । ९।२।६.

ज्योतिष्टोमे भृतिवननं सोमक्रयश्च नित्यौ । ६।८।७.

ज्योतिष्टोमे मैत्रावरुणादिग्रहेषु श्रयणार्थेषु पयआदिषु प्रदेयधर्मा न कर्तव्याः । ९।४।१२.

ज्योतिष्टोमे यज्ञायज्ञीये इरापदे गिरापदधर्मः आयीभावादिः कर्तव्यः । वि. ९।२।१२.

ज्योतिष्टोमे याजमानमन्त्राणां न परिसंख्या । संकर्ष. २।२।४.

ज्योतिष्टोमे यूपैकादशिनीपक्षे अञ्जनादिपरिव्याणान्तेन काण्डेन अनुसमयः कर्तव्यः । ५।२।५.



ज्योतिष्टोमे राजन्यवैश्ययोर्यजमानयोः फलचमसः होमभक्षयोः । ३।५।१९.

ज्योतिष्टोमे रात्रिगतकृत्स्ननिद्राऽर्थम् आदौ सकृदेव मन्त्रः अवान्तरनिद्राभेदेऽपि, एवं नदीतरणे अभिवर्षणे अमेध्यदर्शने च । ११।४।१७.

ज्योतिष्टोमे वषट्कारोऽपि पृथक् सोमभक्षकारणम् । ३।५।१०.

ज्योतिष्टोमे वैसर्जनहोमेषु आज्यमेव, न सोमः । संकर्ष. ३।२।२०.

ज्योतिष्टोमे शालामुखीयादेव आग्नीध्रप्रणयनम् । संकर्ष. ३।२।१४.

ज्योतिष्टोमे श्रुतम् अभिषवणफलकयोः संतर्दनं दीर्घसोमसंस्थासु निविशते । ३।३।११.

ज्योतिष्टोमे श्रुतं देवानामित्यादि नवनीतेनाभ्यङ्क्ते इति विधेरर्थवादः । ३।४।३.

ज्योतिष्टोमे श्रुतं 'यत् पूर्णं तन्मनुष्याणाम्' इत्यादि 'अधः उपमन्थति' इति विधेरर्थवादः । ३।४।३.

ज्योतिष्टोमे श्रुतो दिग्विभागः प्राचीनवंशविधेरर्थवादः। ३।४।२.

ज्योतिष्टोमे सदोनीचमानादौ वृष्ट्यादिकामना याजमानी, नार्त्विजी । ३।८।५.

ज्योतिष्टोमे सप्तमपदग्रहणादि सोमक्रयण्यानयनस्य न प्रयोजकम् । ४।१।१०.

ज्योतिष्टोमे सवनीयपुरोडाशेषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनां न प्रसङ्गः । १२।१।४.

ज्योतिष्टोमे सुत्या पर्वणि कार्या, दीक्षा तु अपर्वणि । १२।२।९.

ज्योतिष्टोमे सोमभक्षनिमित्तानां समुच्चयः । ३।५।१२.

ज्योतिष्टोमे सोमभक्षेऽनुज्ञायाः याचने दाने च अर्थानुसारेण मन्त्रक्रमः । ३।५।१६.

ज्योतिष्टोमे सोमभक्षोऽनुज्ञापूर्वकः एकपात्राणामेव । ३।५।१७.

ज्योतिष्टोमे सोमविक्रयी ऋत्विग्भ्यो भिन्नः । ३।७।१५.

ज्योतिष्टोमे सोमशेषभक्षविधानात् अस्ति सोमभक्षः । ३।५।६.

ज्योतिष्टोमे सोमस्य मानमुपावहरणं च वाससा कर्तव्ये। १०।६।२०.

ज्योतिष्टोमे सोमेन धिष्ण्यन्याघारणं परिप्लुपात्रेण । संकर्ष. ३।२।१९.

ज्योतिष्टोमे स्वामिसप्तदशा ऋत्विजः । ३।७।१८.

ज्योतिष्टोमे होमाभिषवौ सहितौ एकं भक्षनिमित्तम् । ६।४।७.

ज्योतिष्टोमे होमाभिषवौ सोमभक्षे समुच्चयेन निमित्तान्तरम् । ३।५।११.

ज्योतिष्टोमोक्थ्यादिस्तोत्राणामतिदेशः शतोक्थ्यादौ । ८।३।५.

ज्योतिष्टोमोत्कर्षे प्रतिहोमा नानुष्ठेयाः । ६।५।११.

ज्योतिष्मतीष्टेर्नानुष्ठानम् अग्निचयने धार्याग्निनाशेऽपि। ९।४।७.

ज्योतिष्मतीष्ट्यधिकरणम् ( दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम् ) । ९।४।६.

ज्वलद्वृक्षाग्राद्याहृतस्य अग्निचयनप्रकरणे श्रुतस्य काम्यस्याग्नेः आधानादिसंस्काराणां बाधः । १२।४।९.

'तं चतुर्धा कृत्वा, आग्नेयं चतुर्धा करोति' इति वाक्ययोरुपसंहारेण आग्नेयपुरोडाशस्यैव चतुर्धाकरणम् । ३।१।१५.

तक्षणजोषणादियूपधर्माणां खलेवाल्यां बाधः । १०।२।३२.

तक्षशास्त्रम् । तक्षस्मृतिः । तक्षाधिकरणम् ( आरब्धलौकिककर्मणः समाप्तिर्न नियता ) । ६।२।४.

तण्डुलानां व्रीहियवान्यतरजन्यत्वस्य चित्रेष्टौ नियमो नास्ति । १०।२।३१.

तत्प्रख्यन्यायः (आघाराग्निहोत्रशब्दौ कर्मनामधेयम्)। १।४।३.

तत्सिद्ध्यधिकरणम् ( यजमानः प्रस्तरः इति यजमानशब्दः प्रस्तरस्य स्तावकः उभयोः कर्मसिद्धिहेतुत्वात् ) । १।४।१२-१. वि. १३.

तथाकामाधिकरणम् ( गुणकामा याजमानाः ) । ३।८।५.

तदागमन्यायः ( 'तदागमे हि तद् दृश्यते' इति सूत्रानुसारात् शीर्षकम् । पश्वेकत्वं विवक्षितम् ) । ४।१।५.

तदादितदन्तन्यायः । तदाद्युत्कर्षतदन्तापकर्षन्यायः ( अग्नीषोमीये पशौ प्रयाजान्तापकर्षः सवनीयपशौ अनूयाजादेरुत्कर्षः ) । ५।१।१२.

तद्भूताधिकरणम् ( वेदवाक्यं धर्मप्रत्यायकम् । शीर्षकं तु सौत्रपदानुसारि ) । १।१।७.

तद्व्यपदेशन्यायः ( श्येनादिशब्दः कर्मनामधेयम् ) । १।४।४.

तन्त्रम् अध्वर्युभिन्नानां कर्तॄणां वरुणप्रघासेषु । ११।२।१०.

तन्त्रम् आधानं सर्वकर्मणाम्, न तु प्रतिकर्म पृथक् । ११।३।२.

तन्त्रम् उपसत्कालीनं सुब्रह्मण्याऽऽह्वानमहर्गणे । ११।३।१०.

तन्त्रं कुम्भीशूलवपाश्रपणीनां वाजपेयगतप्राजापत्य-पश्वङ्गादिश्रपणार्थम् । ११।४।८.

तन्त्रं कुम्भीशूलवपाश्रपणीनामैकादशिनेषु पशुषु । ११।४।९.

तन्त्रं न कुम्भीशूलवपाश्रपणीनां नानाजातीयेषु पशुषु पाकवैषम्यात् । ११।४।१०.

तन्त्रं न प्रधानैरपृथक्कालानामङ्गानां द्वादशाहे । ११।४।६.

तन्त्रं पशुत्रयार्थयूपसंस्काराणामग्निष्टोमे । ११।३।४.

तन्त्रं यूपः अग्निष्टोमे पशूनां त्रयाणाम् । ११।३।३.

तन्त्रं यूपाहुतीनां यूपैकादशिन्याम् । ११।२।७.

तन्त्रं यूपैकादशिनीमानमुत्कृष्टं सत् । संकर्ष. १।४।१८.

तन्त्रं यूपैकादशिन्यामग्निष्ठरशने यूपरशनाश्च । संकर्ष. १।४।१९.

तन्त्रं वसाहोमानामेकदेवताके पशुगणे । ११।२।५.

तन्त्रं शामित्रोऽग्निः प्राजापत्यपशूनां सवनीयपशूनां च वाजपेये । संकर्ष. १।१।९.

तन्त्रं शूलः अग्नीषोमीयादिपशुत्रयार्थः । संकर्ष. २।२।१.

तन्त्रं स्वरुः पशुत्रयार्थः अग्निष्टोमे । ११।३।५.

तन्त्रं हौत्रमन्त्रः 'युवा सुवासाः' इति यूपैकादशिन्यां परिव्याणे । संकर्ष. १।४।१५.

तन्त्रन्यायः ( दर्शपूर्णमासादिषु आग्नेयादीनां समुदितानामेकस्वर्गफलकत्वम् ) । ११।१।१.

तन्त्रभेदः भिन्नदेवताके पशुगणे । ११।२।६.

तन्त्रेण शेषकार्यं सर्वपृष्ठेष्टौ । ३।५।४.

तपोऽधिकरणम् ( उपवासरूपं तपो याजमानम् ) । ३।८।३.

तानस्वरेणैव ऋग्यजुर्मन्त्राणां कर्मणि प्रयोगः । तान एकश्रुतिः । ९।२।८ वर्णकं २.

तानिद्वैधाधिकरणम् ( गुणकर्माणि प्रधानकर्माणि चेति कर्माणि द्विविधानि ) । २।१।३.

तार्प्यादिभिः अहतवाससः समुच्चयो महाव्रते । १०।४।७.

तिर्यगधिकरणम् ( तिरश्चां न कर्माधिकारः ) । ६।१।२.

तिसृधन्वदानमग्निचयने ब्राह्मणायैव । संकर्ष. १।१।६.

'तिस्र आहुतीर्जुहोति' इति संख्या कर्मभेदकं प्रमाणम् । २।२।७.

'तिस्रो यह्वस्य समिधः' इति मन्त्रः अभिषवे ( सोमस्य ) एव प्रयोज्यः । संकर्ष. ३।३।१३.

तुषोपवापन्यायः ( तुषोपवापः कपालस्य न प्रयोजकः ) । ४।१।११.

तृचे गेयं साम प्रत्यृचं समापनीयम् । ९।२।३.

तृचे रथंतरादिसाम्नां गानम् । १०।६।१.

तृतीयमवदानं पञ्चावत्ते पश्चार्धादुत्तरार्धाद्वा । संकर्ष. २।२।९.

तृतीयसवनगतपुरोडाशेषु सौम्यचरु–आश्विनद्विकपाले च भेदेन हविष्कृदाह्वानं न कर्तव्यम् । १२।२।४.

तृतीयसवने एव ज्योतिष्टोमे षोडशिनो ग्रहणम् । १०।५।११.

तेषामर्थाधिकरणम् ( सूत्रगतपदानुसारि शीर्षकमिदम् ) । ३।१।४.



तेषामौत्पत्तिकत्वाधिकरणम् ( इदं सौत्रपदानुसारि । अग्निहोत्रादिकर्मणां निमित्तानुरोधेन आवृत्तिः ) । ६।२।८.

त्यागातिरिक्तस्य ऋत्विक्कर्मत्वम् । ३।७।८.

त्यागावाहनादिषु देवतानिष्ठगुणवाचिपदस्यापि प्रयोगः पवमानेष्ट्यादिषु । १०।४।१४.

त्रिंशदधिकरणम् ( पात्नीवतसोमभक्षमन्त्रे त्रयस्त्रिंशतां देवानां नोपलक्षणम् ) । ३।२।१५.

त्रिकस्तोमधूर्गानम् एकस्या एव ऋचः त्रिरभ्यासेन एकत्रिके क्रतौ । १०।५।३.

त्रिवत्साधिकरणम् ( साद्यस्के विहितेन त्रैवार्षिकेण पुंगवेन प्राकृतसर्वक्रयद्रव्यस्य बाधः ) । १०।३।१६.

त्रिवृच्चर्वाश्ववालाधिकरणम् । १।३।४ वा. पृ. २२१.

त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य अग्निष्टुति श्रुतस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वम् । १०।६।७.

त्रिवृत्–शब्दः ऋङ्नवकवाची । १।३।४ वा. पृ. २२१.

त्रैधातवीयायामवदानं सहैव । संकर्ष. २।२।१४.

त्रैवर्णिकभिन्नस्यापि निषादस्य रौद्रेष्ट्यधिकारः । ६।१।१३.

त्रैशोकाधिकरणम् ( त्रैशोकसाम्नः उत्तराग्रन्थपठितयोर्बृहत्योरेव गानम् ) । ९।२।५ वर्णकं १.

त्र्यनीकाऽधिकरणम् ( गवामयने त्र्यनीकायाः स्वस्थानविवृद्धया अभ्यासः, न तु दण्डकलितवत् ) । १०।५।२५.

त्र्यनीकायां प्रथमद्वितीययोरह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणात् समानविधित्वं द्वादशाहे । १०।५।२३.

त्र्यम्बकाधिकरणम् ( त्र्यम्बकपुरोडाशेषु अभिघारणानभिघारणमीमांसा अर्थवादः ) । १०।८।५.

त्र्यम्बकेषु चतुष्पथैकोल्मुकयोः समुच्चयः । संकर्ष. २।४।१५.

त्र्यार्षेयभिन्नब्राह्मणानां मनुवत् कल्पः । संकर्ष. ३।४।५.

त्र्यार्षेयाधिकरणम् ( प्रवरत्रयवत एव दर्शाद्यधिकारः ) । ६।१।११.

त्वष्ट्रधिकरणम् ( पात्नीवतसोमभक्षमन्त्रे त्वष्टा नोपलक्षणीयः ) । ३।२।१४.

त्वाष्ट्रपात्नीवताधिकरणम् ( त्वाष्ट्रपात्नीवतस्य पशोः पर्यग्निकरणान्तत्वम् ) । २।३।८.

दंपत्योः सहाधिकारः । ६।१।४.

दक्षिणया अग्निं चिन्वानाय दत्तया क्रतुदक्षिणायाः न बाधः । संकर्ष. १।१।८.

दक्षिणविहारे क्रियमाणमारुत्यर्थे पृथगङ्गानुष्ठानम् । ११।२।९.

दक्षिणविहारे प्रतिप्रस्थात्रा मन्त्राः अध्वर्योः पृथगुच्चार्याः वरुणप्रघासेषु । १२।१।९.

दक्षिणाः प्रधानार्थाः । ३।७।५.

दक्षिणाकाले विद्यमानस्यैव सर्वस्वस्य दानं विश्वजिति । ६।७।६.

दक्षिणाग्निः निर्मन्थ्यः गार्हपत्याद्वा प्रणीयते । संकर्ष. ३।२।४.

दक्षिणाग्नौ पिण्डपितृहोमः, नाहवनीये । संकर्ष. १।२।११.

दक्षिणादानं स्वामिकर्म । ३।८।१.

दक्षिणादानमग्निं चिन्वानाय क्रत्वङ्गम् । संकर्ष. १।१।७.

दक्षिणादानमदृष्टार्थं सारस्वते सत्रे । १०।२।१५.

दक्षिणादानमृत्विक्परिक्रयार्थमुदवसानीये सत्रानङ्गत्वात् । १०।२।१२.

दक्षिणा द्वादशशतगोरूपा ज्योतिष्टोमे सदस्यसहितेभ्यः षोडशभ्यः ऋत्विग्भ्यः विभज्य देया । १०।३।१२.

दक्षिणाऽधिकरणम् (ज्योतिष्टोमे दक्षिणाऽन्तर्गतगोष्वेव द्वादशशतसंख्याया निवेशः ) । १०।३।११.

दक्षिणानां संख्यासु विकल्पः आधाने । १२।४।५.

दक्षिणानामपरिमितत्वमाधाने पूर्वोक्तात् सहस्रादधिकत्वम् । ६।७।११.

दक्षिणान्यायः ( आनत्यर्था दक्षिणा ) । १०।२।८.

दक्षिणाभिः ऋत्विङ्नियमः । ३।७।१७.

दक्षिणायाः द्वादशशतगोरूपायाः ज्योतिष्टोमे अर्धिनः तृतीयिनः पादिनः इति समाख्यानुरोधेन विभागः कर्तव्यः । १०।३।१३.

दक्षिणार्थनिर्दिष्टो भाग एव विश्वजिति सर्वो देयः। ६।७।७.

दण्डदानन्यायः । दण्डन्यायः । दण्डप्रदानाधिकरणम् ( मैत्रावरुणाय दण्डदानमर्थकर्म ) । ४।२।६.

दधिग्रहयागः अंशवदाभ्यानन्तरमेव, न तु प्राक् ( इदं ३।३।१४ अधिकरणेन विरुद्धम्, अयुक्तं च भवति )। संकर्ष. ३।३।८.

दधिग्रहविकारः आज्यसोमग्रहौ कर्मान्तरम्। संकर्ष. ३।३।९.

दधिग्रहविकारे सोमग्रहे न सोमधर्मः । संकर्ष. ३।३।११.

दधिग्रहविकारे सोमग्रहे सोमधर्माभावेऽपि अभिषवस्य आक्षेपः। संकर्ष. ३।३।१२.

दधिग्रहाधिकरणम् ( दधिग्रहः ज्योतिष्टोमे नित्यः ) । ४।४।५.

दधिग्रहो नित्यः काम्यश्च संयोगपृथक्त्वेन । संकर्ष. ३।३।१०.

दधिन्यायः ( संयोगपृथक्त्वम् ) । ४।३।३.

दधिपयसोः पशुकामेष्टौ प्रदेयधर्मा नानुष्ठेयाः । ९।४।११.

दधिपयसोः प्रणीताधर्माणामनुष्ठानमभ्युदितेष्टौ । ९।२।१४.

दधिशृतयोः अभ्युदितेष्टौ प्रदेयधर्मानुष्ठानम् । ९।४।१०.

'दध्ना जुहोति, पयसा जुहोति' इति अग्निहोत्रे वैकल्पिकं द्रव्यं विधीयते, नात्र गुणभेदात् कर्मभेदः। २।२।१०.

'दध्नेन्द्रियकामस्य जुहुयात्' इति इन्द्रियरूपकामाय दधिगुणो विधीयते, न कर्मान्तरम्। २।२।११.

दधिमन्त्रो मध्यवर्ती मध्यवर्तिनः उपांशुयाजस्याङ्गं यथासंख्यपाठात्। ३।३।५.

दर्विहोमन्यायः ( दर्विहोमशब्दः कर्मनामधेयम् )। ८।४।१.

दर्विहोममात्रवाचकः पाकयज्ञशब्दः । संकर्ष. २।४।१०.

दर्विहोमशब्दः स्मार्तानां वैदिकानां च कर्मणां नामधेयम्। ८।४।२.

दर्विहोमशब्दो होमानामेव नामधेयं न यागानाम् । ८।४।३.

दर्विहोमाः अपूर्वाः। ८।४।४.

दर्विहोमेषु क्वचित् स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारश्रवणेन नोपसंहारः। १०।८।१०.

दर्विहोमेषु प्रतिहोमं समिधमाधायैव होमः । संकर्ष. २।४।८.

दर्विहोमेषु वचनाभावे सकृद्गृहीतमेव हविः । संकर्ष. २।४।६.

दर्विहोमेष्वेव विनावचनमवदानं चतुरवत्तम् । संकर्ष. २।२।५.

दर्शधर्माणामग्नीषोमीये पशौ अतिदेशः। ( दार्श— दार्शिक इति अग्रे द्रष्टव्यम् )। ८।१।५.

दर्शपूर्णमासगतपुरोडाशधर्माणामतिदेशः ऐन्द्रे एकादशकपाले, न तु सांनाय्यधर्माणाम्। वि. ८।१।१७.

दर्शपूर्णमासगतानां फलनियमकर्तृसमुदायानां नातिदेशः। ८।१।१३.

दर्शपूर्णमासचातुर्मास्यादौ आग्नेयादिप्रधानानामेकदेशकालकर्तृकत्वम्। ११।२।१.

दर्शपूर्णमासतन्त्रगतदेवताऽन्यतमदेवतानियमः उपांशुयाजस्य। १०।८।१६.

दर्शपूर्णमासधर्माणां सोमे नातिदेशः। ८।१।३.

दर्शपूर्णमासधर्माणामैन्द्राग्नादिविकृतौ अतिदेशः । ८।१।४.

दर्शपूर्णमासन्यायः ( दर्शपूर्णमासौ स्वर्गकामार्थौ )। ४।३।१०.

दर्शपूर्णमासप्रकरणे श्रुतस्य मलवद्वासःसंवादनिषेधस्य केवलपुरुषार्थतया प्रकरणादुत्कर्षः। ३।४।७.

दर्शपूर्णमासयागस्य परेद्युरनुष्ठानेऽपि दिवैव अनुष्ठानम्। संकर्ष. ३।१।३.

दर्शपूर्णमासयोः अगन्मोज्जितिमन्त्रयोः अपूर्वप्रयुक्तत्वेन सौर्यचर्वादौ ऊहः। वि. ९।१।३.



दर्शपूर्णमासयोः अवघातमन्त्रस्य सकृत् प्रयोगः । ११।४।१२.

दर्शपूर्णमासयोः असोमयाजिनः पुरोडाशद्वयश्रवणमनुवादः। १०।८।१४.

दर्शपूर्णमासयोः आग्नेयमवदाय हुत्वा पश्चात् अग्नीषोमीयादेरवदानहोमौ इति अवदानादिप्रदानान्तानुसमयः। ५।२।४.

दर्शपूर्णमासयोः आग्नेयाग्नीषोमीयपुरोडाशयोः मुष्टिकपालोपधानावदानेषु समुदायानुसमयः। ५।२।३.

दर्शपूर्णमासयोः आग्नेयादिप्रधानभेदेऽपि देशकालकर्तॄणामेकत्वात् आघाराद्यङ्गानां तन्त्रेणानुष्ठानम् । ११।१।१०.

दर्शपूर्णमासयोः आग्नेयाष्टाकपालादेः द्व्यवदानमात्रस्य होमः। ३।४।१४.

दर्शपूर्णमासयोः कपालादेरेकदेशभेदनादावपि प्रायश्चित्तम्। ६।४।४.

दर्शपूर्णमासयोः जौहवाज्यं प्रयाजार्थम् ( औपभृताज्यं च प्रयाजानुयाजार्थम् )। ४।१।१६.

दर्शपूर्णमासयोः तुषोपवापः पुरोडाशकपालस्य न प्रयोजकः। ४।१।११.

दर्शपूर्णमासयोः तृतीयस्यानुयाजस्य शेषसंस्कारार्थाभावात् प्रापकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वम् । १०।४।१९.

दर्शपूर्णमासयोः त्रिष्टुभौ संयाज्ये काम्ये नित्ये च संयोगपृथक्त्वेन। संकर्ष. ४।३।१२.

दर्शपूर्णमासयोः द्रव्यविधिः 'व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेत आ यवेभ्यः' इति। संकर्ष. ३।१।१५.

दर्शपूर्णमासयोः द्वादश द्वंद्वानि आध्वर्यवाणि, न याजमानानि। ३।८।९.

दर्शपूर्णमासयोः द्विबहुपत्नीके यागे 'पत्नीं संनह्य' इत्यत्र एकवचनस्य नोहः। ९।३।६.

दर्शपूर्णमासयोः पञ्चमः प्रयाजः आज्यभागादिदेवतासंस्कारार्थः। १०।१।७.

दर्शपूर्णमासयोः पत्नीसंयाजेषु जाघनी द्रव्यम्। सा च आज्येन विकल्प्यते। ३।३।१०.

दर्शपूर्णमासयोः पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य अनुष्ठानम्। ९।२।१९.

दर्शपूर्णमासयोः पुरोडाशस्य सर्वस्य दाहे पुनरिष्टिः कर्तव्या ( सैव क्षामेष्टिः )। ६।४।५.

दर्शपूर्णमासयोः प्रयाजशेषेण हविरभिघारणार्थे शेषधारणतत्पात्रे पृथङ् न कर्तव्ये। ४।१।१४.

दर्शपूर्णमासयोः प्रयाजा आरादुपकारकाः समिदादिपदानां नामधेयत्वात्। ९।२।२०.

दर्शपूर्णमासयोः प्रोक्षणासादनादि कर्म नाध्वर्योः, किन्तु अग्नीधः। वि. ३।८।१२.

दर्शपूर्णमासयोः याजमानानां प्रयाजाद्यनुयाजमन्त्राणां क्रमो न नियामकः। ५।१।३.

दर्शपूर्णमासयोः याज्यापुरोऽनुवाक्याऽनुवचनं देवतासंस्कारार्थम्। १०।४।२०.

दर्शपूर्णमासयोः वत्सोपावसर्जनोखाऽधिश्रयणादीनि द्वादश द्वंद्वानि अध्वर्योः कर्म, न यजमानस्य। ३।८।९.

दर्शपूर्णमासयोः व्रते वत्साद्युपलक्षितकालस्य विधानम्। ६।४।१२.

दर्शपूर्णमासयोः श्रुतं निवीतप्राचीनावीतवाक्यम् उपवीतविधेरर्थवादः। ३।४।१.

दर्शपूर्णमासयोः श्रुतं 'यो विदग्धः' इत्यादि 'अविदहता श्रपयितव्यः' इत्यस्य विधेरर्थवादः। ३।४।३.

दर्शपूर्णमासयोः श्रुतस्य 'मयि दक्षक्रतू' इति मन्त्रः क्रतुयुक्तजञ्जभ्यमानपुरुषसंस्कारः । ३।४।५.

दर्शपूर्णमासयोः श्रुतोऽनृतवदननिषेधः क्रत्वर्थत्वेन विधीयते। ३।४।४.

दर्शपूर्णमासयोः सामिधेनीनां काम्यसंख्याया विवृद्धौ प्रथमोत्तमे त्रिरभ्यस्य अवशिष्टानामृचामागमेन संख्यायाः पूरणम्, नाभ्यासेन। १०।५।८.

दर्शपूर्णमासयोः सामिधेनीषु त्रिरभ्यासः प्रथमोत्तमस्थानधर्मः, न तु प्रवोवाजादिऋग्विशेषधर्मः। ९।१।१०.

दर्शपूर्णमासयोः स्विष्टकृत् हविःसंस्कारापूर्वोभयार्थः। वि. ४।१।७.

दर्शपूर्णमासयोः हविरभिमर्शनमङ्गप्रधानोभयार्थम् । ३।७।४.

दर्शपूर्णमासयोः हविरार्तौ पञ्चशराव ओदनः कर्मान्तरम्, न सांनाय्यस्य प्रतिनिधिः। ६।४।९.

दर्शपूर्णमासयोरन्त्यः प्रयाजः देवतासंस्कारापूर्वोभयार्थः। ४।१।७.

दर्शपूर्णमासयोरेव इडानिगदे 'सूपावसाना सूपवचना' इत्यस्य निवेशः। संकर्ष. ४।३।१९.

दर्शपूर्णमासराजसूयचातुर्मास्येषु संघभेदेन प्रयोगभेदे अङ्गानामावृत्तिः। ११।२।३.

दर्शपूर्णमासविकृतिषु सौर्यादिषु आरम्भणीयायाः पुनरनुष्ठानम्। १२।२।६.

दर्शपूर्णमासशब्दौ सूर्याचन्द्रमसोः संनिकर्षविप्रकर्षवचनौ। संकर्ष. ३।१।१.

दर्शपूर्णमासादाविडाऽऽदिशेषभक्षणम् ऋत्विजामेव (यजमानस्य च)। ६।४।३.

दर्शपूर्णमासादावेकस्यैव कर्तुः स्त्रीसद्वितीयस्य अधिकारः। ६।२।२.

दर्शपूर्णमासादीनां सर्वफलकत्वेऽपि प्रतिफलं पृथगनुष्ठानम्। ४।३।११.

दर्शपूर्णमासादौ निर्वापाद्यङ्गमन्त्राणामावृत्तिः। ११।४।१४.

दर्शपूर्णमासादौ प्रैषा आध्वर्यवाः। ३।८।१२.

दर्शपूर्णमासानुष्ठानात् प्राक् सोमविकाराणां नानुष्ठानम्। ५।४।९.

दर्शपूर्णमासार्थमग्नेरुद्धरणममन्त्रकम्। वि. ९।४।९.

दर्शपूर्णमासार्थोद्धृताग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम्। ९।४।६.

दर्शपूर्णमासावृत्तावपि आरम्भणीयायाः आदौ सकृदेवानुष्ठानम्, न तु प्रत्यावृत्ति। ९।१।११.

दर्शपूर्णमासेष्टिः सर्वेष्टामिष्टीनां प्रकृतिः। वि. ८।१।३ वर्णकं २.

दर्शपूर्णमासेष्टिधर्माणामतिदेशो वाजिनसुराग्रहयोः। ८।२।१.

दर्शप्रवृत्त्युत्तरं निर्वापात् प्राक् चन्द्राभ्युदये अभ्युदितेष्टौ वैकृतीभ्य एव देवताभ्यो निर्वापः। ६।५।४.

दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्रोदये अभ्युदितेष्ट्यनुष्ठानम्। ६।५।३.

दर्शभ्रान्त्या यागारम्भे कृते चन्द्रोदये सति नैमित्तिकं दर्शप्रयोगमनुष्ठाय पुनः स्वकाले दर्शप्रयोगोऽनुष्ठातव्यः। वि. ६।५।१.

दर्शे पूर्वेद्युर्वेदेरपकर्षेऽपि हविरभिवासनान्तस्य नापकर्षः। ५।१।१६.

दर्शे वत्सापाकरणकालेन व्रतसंयोगः असंनयत्पक्षेऽपि। ६।३।१३.

दर्शे शाखाप्रहरणं प्रस्तरप्रहरणकाले। ६।४।१४.

दर्शे शाखाऽऽहरणादयो धर्मा दोहद्वयार्था एव, न केवलं सायंदोहार्थाः। (दार्शपौर्णमासिक इत्यादौ पुनर्द्रष्टव्यम्) ३।६।८.

दशपेयन्यायः (दशपेये राजन्यचमसभक्षणं ब्राह्मणानामेव)। ३।५।२०.

दशपेयस्य अभिषेचनीयात् भिन्नं तन्त्रम्। ११।२।१४.

दाक्षायणयज्ञाधिकरणम्। २।३।४.

दाक्षायणयज्ञे गुणविकाराणामैच्छिको विकल्पः प्रथमप्रयोगे एव। १।३।९.

दाक्षायणयज्ञे दर्शस्यैव, तत्रापि सांनाय्यस्यैवावृत्तिः। संकर्ष. १।३।६.

दाक्षायणयज्ञे पठितानि 'नानृतं वदेत्, न मांसमश्नीयात्, न स्त्रियमुपेयात्, (ऋतौ भार्यामुपेयात्) नास्य पल्पूलनेन वासः पल्पूलयेयुः' इति व्रतानि प्राकृतसमानान्यपि यागान्तरालकालेऽपि कर्तव्यानि, न तु प्रकृतिवत् यागदिनमात्रकर्तव्यानि। संकर्ष. १।३।८.

दाक्षायणयज्ञे सांनाय्यस्य द्विरेव आवृत्तिर्नियता। संकर्ष. १।३।७.

दाक्षिणाग्निकहोमानपकर्षाधिकरणम्। ५।१।१५.

दानलक्षणम् (भाष्ये)। ४।२।१३.

दारुपात्रैरेव होमः साकंप्रस्थायीये, न कुम्भीभिः। संकर्ष. १।३।२.

दार्शपौर्णमासिकपत्नीसंयाजगतकपालामिहोमनिमित्तिकवैश्वानरेष्टौ द्वेष्याय दानमदृष्टार्थम्। १०।२।१६.



दार्शिकं होतृवरणं ज्योतिष्टोमे कर्तव्यम्। १२।१।१८.

दार्शिकजागरणस्य सौमिकेन दीक्षाकालीनजागरणेन न प्रसङ्गः। १२।१।८.

दार्शिकपात्राणां जुह्वादीनां सवनीयपुरोडाशेषु सौमिकपात्रैर्ग्रहचमसैर्न प्रसङ्गः। १२।१।४.

दिग्विभागाधिकरणम् (ज्योतिष्टोमे श्रुतो दिग्विभागः प्राचीनवंशविधेरर्थवादः)। ३।४।२.

दीक्षणीयाऽऽदिधर्माणामग्निष्टोमाङ्गता। ३।६।१६.

दीक्षणीयाऽऽदिविकृतौ आरम्भणीयाया बाधः। १०।१।२.

दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम्। १२।१।१२.

दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं न कार्यम्। १२।१।१०.

दीक्षणीयाऽऽदिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया प्रसङ्गसिद्धिः। १२।१।१६.

दीक्षणीयाऽऽदिषु दार्शिकं होतृवरणं कर्तव्यम्। १२।१।१८.

दीक्षणीयाऽऽदीनां सोमयागाङ्गता। ४।४।१२.

दीक्षणीयाऽधिकरणम् (अङ्गगुणविरोधन्यायः)। १२।२।९.

दीक्षणीयाऽन्ते दीक्षितधर्मानुष्ठानम्। ५।३।११.

दीक्षणीयावाङ्नियमन्यायः (दीक्षणीयायां उच्चावचध्वनिः अपूर्वप्रयुक्तः)। ९।१।२ वर्णकं २.

दीक्षा गवामयनस्य माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे, न चैत्र्याः प्राक्। ६।५।९.

दीक्षाणां क्रमविशेषनियमो द्वादशाहे। ५।१।१ वर्णकं १.

दीक्षादक्षिणन्यायः (दीक्षा दक्षिणाश्च प्रधानार्थाः)। ३।७।५.

दीक्षा द्वादशैव द्वादशाहे। ६।५।८.

दीक्षासु यूपमात्रापकर्षः ज्योतिष्टोमे। ५।१।१४.

दीक्षाऽऽहुतिभिः आध्वरिकाहुतीनां समुच्चयः। संकर्ष. २।४।२७.

दीक्षाऽऽहुतिमन्त्राणां अग्निचयने श्रुतानां सौमिकदीक्षाऽऽहुतिमन्त्रैः समुच्चयः। १०।३।४.

दीक्षितकर्तृकत्वस्य पुरुषार्थदानपाकहोमेषु पर्युदासः। १०।८।७.

दीक्षितधर्मानुष्ठानं दीक्षणीयाऽन्ते। ५।३।११.

दीक्षितस्य अन्यत्र गमने प्राप्ते अग्निहोत्राभावेऽपि समारोप्यैव अग्निर्नेतव्यः। संकर्ष. ३।२।११.

दीक्षितस्य अन्यत्र गमने प्राप्तेऽपि उख्यस्य प्रत्यक्षमेव नयनात् न समारोपः। संकर्ष. ३।२।१३

दीक्षितस्य निन्द्राभेदेऽपि, नदीतरणे अनेकस्रोतस्त्वेऽपि, अभिवर्षणभेदेऽपि, अनेकामेध्यदर्शनेऽपि च सकृत्सकृदेव तत्तन्मन्त्रपाठः। ११।४।१७.

दीक्षितस्य संकल्पितप्रयाणसमाप्तिपर्यन्तमादौ सकृदेव प्रयाणमन्त्रपाठः। ११।४।१८.

दीक्षोत्कर्षे अग्निहोत्रादीनामपि उत्कर्षः। ६।५।१०.

दीक्षोत्तरमेव इष्टकानिर्माणमग्निचयने। संकर्ष. २।१।२८.

दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वेन द्वादशाहस्य षट्त्रिंशदहत्वम्। ११।४।५.

दृतिनवनीतं श्येने सर्वेषामेवाङ्गानाम्, न सुत्याकालीनानामेव। ३।८।२१.

दृतिनवनीताधिकरणम् (श्येने दृतिनवनीतमङ्गानामेव)। ३।८।२०.

दृष्टमूलकस्मृतेर्धर्मे न प्रामाण्यम्। वि. १।३।३.

देवतागतगुणभेदे प्रदानभेदः। संकर्ष. २।२।१४.

देवताऽग्निशब्दक्रियाणामपचारेऽपि प्रतिनिधिर्न ग्राह्यः। ६।३।५.

देवतात्वं समिद्बर्हिर्वनस्पत्यादीनामलौकिकानाम्। संकर्ष. २।२।२.

देवताऽधिकरणम् (देवता विग्रहवत्यो न सन्ति)। ९।१।४.

देवताध्यानं वषट्कारात् प्राक् 'तां ध्यायेत् वषट् करिष्यन्' इति लृट्प्रयोगात्। संकर्ष. ४।३।६.

देवतानां विधिगतशब्देनैव प्रकाशनं सौर्यादिविकृतौ आवाहनादिनिगमेषु। १०।४।१३.

देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः पवमानेष्ट्यादिषु । १०।४।१४.

देवतापदस्य गुणवाचकपदरहितस्यैव पवमानेष्टिषु आज्यभागयोः अभिधानं कर्तव्यम् । १०।४।१५.

देवतापरिग्रहार्थमपि अग्न्यन्वाधानं दीक्षणीयाऽऽदिषु न कर्तव्यम् । १२।१।१२.

देवताप्रकाशका मन्त्रा अपूर्वप्रयुक्ताः । ९।१।३.

देवताप्रकाशनं यागादौ विधिगतशब्देनैव कार्यम् । १०।४।१२.

देवता मान्त्रवर्णिकी अज्यानीहोमेषु । संकर्ष. २।४।४.

देवता वैधशब्दरूपैव ध्यातव्या । संकर्ष. ४।३।६ वर्णकं २.

देवता वैधशब्देनैव ध्यातव्या । संकर्ष. ४।१।६ वर्णकं २.

देवताश्रवणाभावे मन्त्रवर्णादिना देवताविधिः । संकर्ष. २।४।२.

देवतासंस्कारार्थे याज्यापुरोऽनुवाक्याऽनुवचनं दर्शपूर्णमासादौ । १०।४।२०.

देवता समानाऽपि अन्येन व्यवहिता चेत् भेदेनावाहनं प्रदानं च । संकर्ष. ४।४।९.

देवतास्विष्टकृतयोरवदानं पशौ समकालमेव । संकर्ष. २।२।१८.

देवतोपलक्षणं न भवति वनस्पतियागयाज्यायाम् । संकर्ष. २।४।२०.

देवसुवां हविरादिषु अग्निचयने अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः । १२।३।२.

देवस्यत्वेति मन्त्रन्यायः ( सवित्रादिपदानां नोहः ) । ९।१।१२.

देवानां न कर्माधिकारः । ६।१।२.

देविकाहविरधिकरणम् ( अनुबन्ध्यायां अनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः ) । १२।३।२.

देशकालकर्तृभेदोऽपि अङ्गप्रधानयोर्वचनबलात् । ११।३।१.

देशकालकर्त्रैक्यं दर्शपूर्णमासचातुर्मास्यादौ आग्नेयादिप्रधानानाम् । ११।२।१.

देशकालकर्त्रैक्यमङ्गप्रधानयोः । ११।२।२.

देशपात्रादीनामुपयुक्तानां प्रयोगान्तरे उपादानेऽपि न दोषः । ११।३।१२.

देशविधिर्दर्शपूर्णमासादौ नियमार्थः । ४।२।९.

दैक्षन्यायः ( अग्नीषोमीयपशुधर्माणां सवनीये पशौ अतिदेशः ) । ८।१।६.

दोहयोरेव सहप्रदानं साकंप्रस्थायीये । संकर्ष. १।३।१.

द्यावापृथिव्यादौ प्रत्यक्षधेनुवत्सादिशब्दोपदिष्टगोद्रव्येण प्राकृताजद्रव्यस्य बाधः । १०।२।२९.

द्रव्यकर्मसंयोगन्यायः ( इदं सौत्रपदानुसारि ) । ६।१।१.

द्रव्यदेवतादिभिः काम्यासु विकृतिषु उपदिष्टैः प्रकृतद्रव्यदेवताऽऽदीनां बाधः । १०।७।१७.

द्रव्यन्यायः । द्रव्यसंख्यान्यायः । द्रव्यसंख्याहेतुसमुदायन्यायः ( प्रोक्षणादयो धर्माः द्रव्यादिप्रयुक्ता न भवन्ति , किन्तु अपूर्वप्रयुक्ताः ) । ९।१।५.

द्रव्यभेदेऽपि कर्म न भिद्यते । ६।३।३.

द्रव्यसंस्कारन्यायः ( सौत्रपदानुसारि शीर्षकम् । वेदिधर्माः बर्हिर्धर्माश्च अङ्गप्रधानोभयार्थाः) । ३।८।१५.

द्रव्यसंस्कारविरोधाधिकरणम् ( विरोधे द्रव्यस्यैवोपादानम् ) । ६।३।१८.

द्रव्यस्य गुणेन न बाधः । १०।२।३०.

द्रव्याधिकरणम् ( स्फ्यादि द्रव्यम् उत्पत्तिवाक्यानुसारात् तस्मिंस्तस्मिन् पदार्थे उपयोक्तव्यम् ) । ३।१।५.

द्रव्यार्जनवर्णकम् । ४।१।२ वर्णकं ३.

द्रव्येषु गुणश्रुतिः नियमविधानार्था । ४।२।१०.

द्वंद्वानि द्वादश आध्वर्यवाणि , न याजमानानि दर्शपूर्णमासयोः । ३।८।९.

द्वादशाहस्य अहीनात्मकस्य धर्माणामहर्गणेषु अतिदेशः । ८।१।१०.

द्वादशाहिकधर्माणामतिदेशः शतोक्थ्यादिसंस्थागणेषु । ८।३।४.

द्वादशाहिकसप्ताहधर्माणामतिदेशः क्रमेण जनकसप्तरात्रे । ८।३।२.

द्वादशाहे उपसत्कालीनसुब्रह्मण्याऽऽह्वाने विवृद्धसुत्याहानुपलक्षणम् । ११।४।७.



द्वादशाहे चतुर्थेऽहनि ‘विश्वाः पृतनाः’ इत्यतिजगत्यामुत्पन्नं त्रैशोकं साम उत्तरयोर्बृहत्योरेव गेयम् । वि. ९।२।५.

द्वादशाहे त्र्यनीकायां प्रथमद्वितीययोरह्नोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः पुनःश्रवणात् समानविधित्वम् । १०।५।२३.

द्वादशाहे दशमेऽहनि मानसस्तोत्रात् प्राक् ‘अयं सहस्रमानवः’ ( साम. ४५८ ) इति ऋचा प्रगीतयैव आहवनीयोपस्थानम् । ९।२।८ वर्णकं १.

द्वादशाहे दीक्षाणां क्रमविशेषनियमः । ५।१।१ वर्णकं १.

द्वादशाहे दीक्षा द्वादशैव । ६।५।८.

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशदिनसाध्यत्वेन षट्त्रिंशाहत्वम् । ११।४।५.

द्वादशाहे प्रधानैरपृथक्कालानामङ्गानां तन्त्रं न । ११।४।६.

द्वादशाहे प्रायणीये पञ्च उदयनीये षट् इति विभज्य ऐकादशिनाः पशवोऽनुष्ठेयाः । १०।६।४.

द्वादशाहे व्यूढे भक्षपवमानपरिधिकपालमन्त्रगतानां गायत्र्यादिशब्दानामेव व्यतिक्रमः , नार्थानाम् । १०।५।२६.

द्वादशाहे सत्रात्मके सत्रिभिः मधुभक्षणं कर्तव्यं क्रत्वर्थत्वात् । १०।६।१२.

द्वादशाहे सुत्याकालीनानामङ्गानामावृत्तिः । ११।४।६.

द्वादशाहो व्यूढः समूढस्य विकारः । १२।५।२४.

द्वादशोपसत्ताऽधिकरणम् ( द्वादशोपसत्ता अहीनाङ्गम् ) । ३।३।८.

द्विगोत्राणां प्रवरवरणे एकतो द्वौ अन्यत एकः इति त्रयः । संकर्ष. ३।४।८.

द्वित्वबहुत्वाधिकरणम् ( द्विबहुयजमानके कुलायादौ ‘युवं हि स्थः , एते असृग्रमिन्दवः’ इति प्रतिपदोरुत्कर्षः ) । ३।३।९.

द्विपश्वादिविकृतौ देवताऽनुसारेण अध्रिगुप्रैषे मेधपतिशब्दस्य वचनोहः कर्तव्यः । ९।३।१२.

द्विरात्रन्यायः ( द्विरात्राद्यहर्गणेषु द्वादशाहिकदशाहधर्माणामनुष्ठानम् ) । १०।५।४.

द्व्याधानाधिकरणम् ( सौत्रपदानुसारि इदम् । द्वयोः पुरुषयोः आधाने न सहाधिकारः ) । ६।१।५.

द्व्याम्नाताधिकरणम् ( आध्वर्यवे याजमाने च काण्डे आम्नाता मन्त्रा द्वयोरपि ) । ३।८।७.

धनरहितस्यापि कर्मस्वधिकारः । ६।१।८.

धर्मजिज्ञासाऽधिकरणम् । १।१।१.

धर्मलक्षणम् । १।१।२.

धर्मविषयकप्रमाणपरीक्षा–प्रतिज्ञा । १।१।३.

धर्माणां प्रयोजकं निमित्तं चापूर्वम् । ९।१।१ वर्णकं ३.

धर्मे प्रत्यक्षाद्यप्रामाण्यम् । १।१।४.

धानासु अवघातस्य महापितृयज्ञे न बाधः । १०।२।३४.

धान्याधिकरणम् । ( शाक्त्यानामयने ‘धान्यमसि धिनुहि’ इत्यत्र ‘मांसमसि धिनुहि’ [ वस्तुतस्तु ‘तरसमसि धिनुहि’ इति केवलः ] इत्यूहः ) । ९।१।१३ वर्णकं १.

धार्याग्निनाशेऽपि अग्निचयने ज्योतिष्मतीष्टेर्नानुष्ठानम् । ९।४।७.

धिष्ण्यविहरणं तृतीयसवने द्विवारं ज्योतिष्टोमे । संकर्ष. ३।२।१६.

धिष्ण्यविहरणमाग्नीध्रीयादेव ज्योतिष्टोमे । संकर्ष. ३।२।१५.

धिष्ण्यव्याघारणं सोमेन परिप्लुपात्रेण । संकर्ष. ३।२।१९.

धेनुन्यायः ( भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिकद्वादशशतदक्षिणायाः बाधः ) । १०।३।१४.

धेनुवत्सर्षभाधिकरणम् ( द्यावापृथिव्यादौ प्रत्यक्षधेनुवत्सादिशब्दोपदिष्टगोद्रव्येण प्राकृताजद्रव्यस्य बाधः ) । १०।२।२९.

ध्रुवायां पञ्चाज्यग्रहणं पशुकामस्य । संकर्ष. २।२।१३.

ध्रौवाज्यस्य उपांशुयाजे विधानम् । १०।८।१५.

नक्षत्रेष्टिन्यायः ( नक्षत्रेष्टिषु नारिष्ठहोमा उपहोमेभ्यः पूर्वम् ) । ५।२।९.

नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः नारिष्ठहोमादीनामतिदिष्टानां समुच्चयः । १०।४।१.

नदीक्षिताधिकरणम् ( पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य पर्युदासः ) । १०।८।७.

नदीतरणे अनेकस्रोतस्त्वेऽपि आदौ सकृदेव दीक्षितस्य तरणमन्त्रप्रयोगः । ११।४।१७.

'न बृहत्या वषट् कुर्यात्' इति अक्षरन्यूहनविध्यर्थवादः सर्वपृष्ठायाम् । संकर्ष. ४।४।४.

नवनीतस्य गौग्गुलवादितैलेन समुच्चयः अञ्जनाभ्यञ्जनाख्ये सत्रे । १०।४।६.

'नवनीतेनाभ्यङ्क्ते' इति विधेः ज्योतिष्टोमे श्रुतं देवानामित्यादि अर्थवादः । ३।४।३.

नवान्नबुभुक्षाऽभावेऽपि आग्रयणं कर्तव्यमेव । संकर्ष. ३।१।१४.

नवान्नभक्षणनिषेधः आधानोत्तरमेव आग्रयणप्राप्तौ तदकरणे । संकर्ष. ३।१।१३.

नातिरात्रे इत्यत्र नशब्दः प्रतिषेधार्थक एव न पर्युदासार्थकः न वा अर्थवादः । १०।८।३.

नानाप्रदानाधिकरणम् ( भिन्नगुणदेवताभेदे प्रदानभेदः ) । संकर्ष. २।२।१५.

नानाबीजन्यायः ( नानाबीजेष्टौ प्रतिबीजम् अवघातमन्त्रावृत्तिः ) । ११।४।१३.

नानाबीजेषु कृष्णाजिनास्तरणादितण्डुलप्रक्षालननिनयनान्तेनानुसमयः । ५।२।७.

नानाबीजेष्टौ अन्त्यबीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गः राजसूये । ११।३।७.

नानाऽहीनेषु प्रत्यहीनं चतुर्थे दिवसे षोडशिनो ग्रहणम् । १०।५।१४.

नामधेयं दर्विहोमशब्दः श्रौतस्मार्तकर्मणाम् । ८।४।२.

नामधेयं दर्विहोमशब्दो होमानामेव, न यागानाम् । ८।४।३.

नामधेयन्यायः । नामधेयप्रामाण्यम् ( कर्मनामधेयं धर्मे प्रमाणम् ) । १।४।१ वर्णकं १.

नारिष्ठन्यायः ( नारिष्ठहोमा उपहोमेभ्यः पूर्वम् ) । ५।२।९.

नारिष्ठहोमादीनामातिदेशिकानां नक्षत्रेष्ट्यादौ उपदिष्टैरुपहोमादिभिः समुच्चयः । १०।४।१.

नाशाधिकरणम् ( शेषकार्यार्थावत्तनाशे शेषकार्यलोपः ) । ६।४।२.

निकायिनां पूर्वेषां ये धर्मास्तेषामतिदेशः उत्तरेषु निकायिषु । ८।१।१२.

निगदाधिकरणम् ( निगदाः यजुर्विशेषः ) । २।१।१३.

नित्यकर्मणः श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । ६।३।४.

नित्यस्य काम्यं बाधकम् । ३।६।३.

नित्याग्निहोत्रधर्माणां कुण्डपायिनामयनगते अग्निहोत्रे अतिदेशः । ७।३।१.

नित्ये यथाशक्ति अङ्गानुष्ठानम् । ६।३।१.

निनयनन्यायः ( प्रणीतानिनयनं प्रतिपत्तिः ) । ४।२।५.

निमित्तपरीष्ट्यधिकरणम् । १।१।३.

नियमविधिरवघातादिसंस्कारविधिः । ४।२।११.

निरूढपशुबन्धे होतृमैत्रावरुणयोर्द्वयोर्द्वयोर्वरणम् । संकर्ष. ३।४।१३.

निरूढादिपशुष्वपि शालामुखीयो भवति । संकर्ष. ३।२।२२.

निर्मन्थ्यन्यायः ( निर्मन्थ्यशब्दो धर्मान् नातिदिशति ) । ७।३।७.

निर्मन्थ्याधिकरणम् ( निर्मन्थ्यशब्दो यौगिकः अग्निविशेषबोधकः ) । १।४।९.

निर्मन्थ्येन लौकिकेन अग्निचयने इष्टकापाकः । संकर्ष. २।१।७.

निर्वापः अग्निहोत्रहवण्यभावेऽपि कर्तव्यः पवमानेष्टिषु । १०।२।२७.

निर्वापन्यायः । निर्वापमन्त्रन्यायः ( दर्शपूर्णमासादौ निर्वापाद्यङ्गमन्त्राणामावृत्तिः ) । ११।४।१४.

निर्वापमन्त्रगतसवित्रादिपदानां नोहः । ९।१।१२.

निर्वापमन्त्रगताग्निपदस्य विकृतौ ऊहः । ९।१।१३.



निर्वापालम्भन्यायः ( निर्वपेत् आलभेत इति यागविधिः ) । २।३।५.

निर्वापे मुष्टिपरिमाणमध्वर्योरेव । संकर्ष. १।४।११.

निविदधिकरणम् ( प्रतिष्ठाकामस्य एकविंशतिसामिधेन्यनुवचनं दर्शपूर्णमासप्रयोगान्तर्गतम् । शीर्षकं तु निविद्भिर्व्यवधानात् ) । ३।१।११.

निविदामनवानत्वं वाचनिकमेव, न संतानः । संकर्ष. ४।२।४.

निवीताधिकरणम् ( निवीतप्राचीनावीतवाक्यं दर्शपूर्णमासप्रकरणे श्रुतम् उपवीतविधेरर्थवादः ) । ३।४।१.

निवीतेन श्येने उपदिष्टेन अतिदिष्टस्य उपवीतस्य समुच्चयः । १०।४।१.

निशीष्टिन्यायः ( निशीष्टौ अमावास्यातन्त्रस्य प्रसङ्गः ) । १२।२।५.

निषादरथकारयोरपि आर्षेयवरणमस्ति । संकर्ष. ३।४।६.

निषादस्थपतिन्यायः ( रौद्रेष्ट्यामधिकारः ) । ६।१।१३.

निषादस्थपतीष्टिः लौकिकेष्वग्निषु स्यात्, न संस्कृतेषु । ६।८।३.

निषेधातिक्रमे पुरुषस्य प्रत्यवायः । ६।२।५.

निष्कासावभृथन्यायः ( वरुणप्रघासावभृथस्य तुषनिष्कासद्रव्यकत्वम् ) । ७।३।५.

नीवाराणाम् । 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यत्र पुरोडाशसादनमन्त्रे 'नीवाराणां मेध' इत्यूहः कर्तव्यः । वि. ९।३।१.

नीवाराणां व्रीहिप्रतिनिधित्वे व्रीहिमन्त्रस्य ऊहो न । ९।३।९.

नैमित्तिकानि न नित्यत्वप्रयुक्तानि । ४।३।२.

नैमित्तिके पुनराधाने श्रुतदक्षिणया सामान्यविहितैकाऽऽदिदक्षिणाया बाधः । १०।३।५.

नैर्ऋतीषु इष्टकासु इष्टकाधर्मा न कर्तव्याः अग्निचयने । संकर्ष. २।१।११.

पञ्चदशरात्रे सत्रात्मकद्वादशाहधर्माणामतिदेशः । ८।२।६.

पञ्चशराव ओदनः हविरार्तौ विहितः कर्मान्तरम्, न सांनाय्यस्य प्रतिनिधिः । ६।४।९.

पञ्चशरावन्यायः ( एकहविरार्तावपि पञ्चशरावनिर्वापः ) । ६।४।६.

पञ्चशरावयागो हविरार्तिनिमित्तकः दर्शस्याङ्गम् । ६।४।१०.

पञ्चशारदीयाधिकरणम् ( पञ्चशारदीये उक्षवाक्ये कर्मशेषप्रतिषेधात् प्रतिसंवत्सरं भिन्नानामेवोक्ष्णामानयनम् ) । ११।२।१३.

पञ्चावत्तत्वं वपायामिव सर्वेष्वङ्गेषु अग्नीषोमीये पशौ । १०।७।२०.

पञ्चावत्तमवदानं जामदग्न्यादीनाम् । संकर्ष. २।२।६.

पञ्चावत्ते अवदाने तृतीयं पश्चार्धादुत्तरार्धाद्वा । संकर्ष. २।२।९.

पञ्चावत्ते अवदाने पञ्चममभिघारणात् प्रागेव । संकर्ष. २।२।८.

पञ्चावत्ते अवदाने पञ्चममौषधस्यैव । संकर्ष. २।२।७.

'पत्नीं संनह्य' इत्यत्र वचनस्य नोहः द्विबहुपत्नीके विकृतिप्रयोगे । ९।३।७.

पत्नीभिरुपगानकर्त्रीभिः ऋत्विजामुपगाने समुच्चयो महाव्रते । १०।४।५.

पत्नीसंनहनन्यायः ( दर्शपूर्णमासयोर्द्विबहुपत्नीके यागे 'पत्नीं संनह्य' इत्यत्र एकवचनस्य नोहः । ९।३।६.

पत्नीसंनहनेन सौमिकेन प्रसङ्गसिद्धिः सौमिकेष्टिपश्वादिषु पत्नीसंनहनस्य दार्शिकस्य । १२।१।१३.

पत्नीसंयाजगतकपालाभिहोमनिमित्तकवैश्वानरेष्टौ द्वेष्याय दानमदृष्टार्थम् । १०।२।१६.

पत्नीसंयाजन्यायः ( पत्नीसंयाजेषु पशुजाघनी हविः । सा च आज्येन विकल्प्यते दर्शपूर्णमासयोः ) । ३।३।१०.

पत्नीसंयाजाङ्गमेव आज्येडा । संकर्ष. ४।३।१६.

पत्नीसंयाजानां वरुणप्रघासेषु द्विरावृत्तिः । ११।२।११.

पत्नीसंयाजान्तत्वमुत्तमाहवर्जमहर्गणे द्वादशाहे । ९।१।९.

पत्नीसंयाजेषु जाघनीनां विकल्पः ऐकादशिनादिपशुगणेषु । १२।४।६.

पत्नीसंयाजेष्वाश्रुतप्रत्याश्रुतप्रणववषट्कारभिन्नमन्त्रेष्वेव उपांशुत्वम् । संकर्ष. ४।३।१५.

पत्न्यधिकरणम् ( दंपत्योः सहाधिकारः ) । ६।१।४.

पत्न्याः यावदुक्तमधिकारः । ६।१।६.

पदकर्मन्यायः । पदन्यायः ( पदपांसवः न एकहायनीनयनप्रयोजकाः ) । ४।१।१०.

पदार्थप्राबल्याधिकरणम् ( पदार्थः प्रबलः, गुणो दुर्बलः । आचमनं प्रबलम्, तत्क्रमो दुर्बलः ) । १।३।३.

पदार्थानां शक्तिमालोच्य कर्मसु विनियोगः । १।४।१४.

पदार्थानुसमयन्यायः । ५।२।१.

'पदे जुहोति, वर्त्मनि जुहोति' इति आहवनीयापवादः । संकर्ष. २।४।१४.

पयआदिषु मैत्रावरुणादिग्रहेषु श्रयणार्थेषु प्रदेयधर्मा नानुष्ठेयाः ज्योतिष्टोमे । ९।४।१२.

पयसि अदितिचरुश्रपणार्थे प्रदेयधर्मा नानुष्ठेयाः प्रायणीये । ९।४।९.

पयसि आग्नेये सांनाय्यपयोधर्माणामेवातिदेशः । वि. ८।१।१७.

पयोधर्माणां सांनाय्यगतानामतिदेशः वैश्वदेवपर्वगतामिक्षायाम् । ८।२।४.

पयोव्रतादि ज्योतिष्टोमे अपररात्रे न नित्यम् । ६।८।९.

पयोव्रतादीनां क्रत्वर्थता । ४।३।४.

पयोव्रतादीनि ज्योतिष्टोमे नित्यानि । ६।८।८.

परकृतिपुराकल्पाधिकरणम् । ६।७।१२.

परप्राबल्यन्यायः ( अपच्छेदन्यायः ) । ६।५।१९.

परिक्रयः ऋत्विजां स्वामिकर्म । ३।८।१.

परिगृहीतद्रव्यापचारे वैकल्पिकद्रव्यान्तरस्य न प्रतिनिधित्वं यथा व्रीह्यपचारे यवानाम् । ६।३।१२.

परिधयो यत्र बाणवन्तः, तत्र बाणवन्त एव संमार्ष्टव्याः । २।१।४.

परिधिना प्राकृतपशुनियोजनानुवादेन विहितेन यूपस्य बाधः सौमिकेषु चातुर्मास्येषु । १०।३।३.

परिधौ मध्यमे अविरुद्धा यूपधर्माः कर्तव्याः पाशुकचातुर्मास्येषु । वि. ९।२।१३.

परिधौ यूपधर्मानुष्ठानाक्षेपस्य समाधानम् । ९।२।१३.

परिधौ यूपपरिध्युभयधर्माणामविरुद्धानां चातुर्मास्येषु पाशुकेषु अनुष्ठानम् । १२।२।१०.

परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः चातुर्मास्येषु पाशुकेषु । १२।२।११.

परिप्लुपात्रेण सोमेन धिष्ण्यव्याघारणं ज्योतिष्टोमे । संकर्ष. ३।२।१९.

परिमाणं यूपस्य पञ्चारत्नित्वादि उपरं वर्जयित्वा ज्ञेयम् । संकर्ष. १।४।८.

परिवप्यहोमयोः 'अभितः पुरोडाशौ' इति पूर्वोत्तरकालवादः । संकर्ष. १।१।१०.

परिव्याणं रशनाद्वयेन युगपत् यूपैकादशिन्यामपि । संकर्ष. १।४।१४.

परिव्याणमग्निष्ठे द्वाभ्यांद्वाभ्यामेव रशनाभ्यां क्रमेण । संकर्ष. १।४।१३.

परिव्याणाधिकरणम् ( परिव्याणकरणमन्त्रमाध्वर्यवं कुण्डपायिनामयने होता ब्रूयात् ) । ३।८।१०.

परिसंख्या न भवति याजमानमन्त्राणां ज्योतिष्टोमे । संकर्ष. २।२।४.

परिसंख्या पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य । १०।७।२.

परुषिदिताधिकरणम् ( परुषिदितमित्यादिवाक्यमनुवादकम् । परुषिदितादि पिण्डपितृयज्ञे श्रुतं समूलबर्हिर्विधेरर्थवादः ) । ३।४।३.

पर्णतान्यायः ( प्रकृत्यर्थता ) । ३।६।१.

पर्णतान्यायः । पर्णमयीन्यायः । ( फलश्रुतिरर्थवादः ) । ४।३।१.

पर्युदासः पुरुषार्थदानपाकहोमेषु दीक्षितकर्तृकत्वस्य । १०।८।७.

पर्युदासन्यायः ( अनुयाजमहापितृयज्ञयोः येयजामहहोतृवरणयोः पर्युदासः ) । १०।८।१.

पर्यूहणादिसंस्काराणां खलेवाल्यामनुष्ठानम् । १०।२।३३.

पर्वसंधिः तन्त्रमध्ये ग्रहीतव्यः । संकर्ष. ३।१।२.



पवमानहविषां काम्यप्रयोगे प्रथमस्य तन्त्रभेदः उत्तरयोस्तन्त्रम्, ब्रह्मवर्चसकामत्वे नित्यप्रयोगे च त्रयाणामपि तन्त्रम् । ११।४।४.

पवमानेष्टयः केवलाधानसंस्कृतेऽग्नौ । ३।६।६.

पवमानेष्टिन्यायः ( पवमानेष्ट्यर्थे नाधानम् ) । ३।६।४.

पवमानेष्टिष्वग्निहोत्रहवण्यभावेऽपि निर्वापोऽनुष्ठेयः । १०।२।२७.

पवमानेष्टिष्वाज्यभागयोः गुणवाचकपदरहितस्यैव देवतापदस्याभिधानं कर्तव्यम् । १०।४।१५.

पवमानेष्ट्यादिषु देवतानिष्ठगुणवाचिपदस्यापि त्यागादौ प्रयोगः । १०।४।१४.

पशुः सद्यस्कालः, न द्व्यहकालः । संकर्ष. ३।२।२७.

पशुकामस्य चातुर्मास्यप्रयोगे सहस्रपशुप्राप्तिपर्यन्तं वैश्वदेवमेवाभ्यस्य अथ वरुणप्रघासादीनि पर्वाणि अनुतिष्ठेत् । संकर्ष. ३।१।२४.

पशुकामस्य ध्रुवायां पञ्चाज्यग्रहणम् । संकर्ष. २।२।१३.

पशुकामेष्टौ दधिपयसोः प्रदेयधर्मा नानुष्ठेयाः । ९।४।११.

पशुगण ( णे ) उपयाजसाधनानां गुदानां समुच्चयः । १२।४।४.

पशुगण( णे ) एकदेवताके वसाहोमानां तन्त्रम् । ११।२।५.

पशुगणेऽध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षुरादिपदानां नोहः । ९।३।१०.

पशुगणेऽध्रिगुप्रैषे एकधाशब्दस्य यावद्वचनमभ्यासः । ९।३।११.

पशुगणेऽध्रिगुप्रैषे समस्तवङ्क्रीसत्ताप्रकाशनार्थे समासेन वचनम् । ९।४।१.

पशुगणे भिन्नदेवताके वसाहोमानां तन्त्रभेदः । ११।२।६.

पशुगणेष्वैकादशिनपशुधर्माणामतिदेशः । ८।१।८.

पशुगणेष्वैकादशिनादिषु पत्नीसंयाजेषु जाघनीनां विकल्पः । १२।४।६.

पशुजाघनीवाक्यन्यायः । ३।३।१०.

पशुतन्त्रविप्रकर्षन्यायः ( पश्वङ्गानां प्रचारस्य वचनात् विप्रकर्षः । २।२।५।१६ पृ. ५०६ इत्यत्र वार्तिके उल्लिखितोऽयम् ) । ११।२।३।१८ ( १९ ).

पशुत्रयार्थः स्वरुस्तन्त्रमग्निष्टोमे । ११।३।५.

पशुत्रयार्थयूपसंस्काराणां तन्त्रमग्निष्टोमे । ११।३।४.

पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ । ९।३।४.

पशुधर्माणामग्नीषोमीयाङ्गत्वम् अनुष्ठानसादेश्यरूपात् क्रमात् । ३।३।५.

पशुधर्माधिकरणम् ( अग्नीषोमीयपश्वर्थता ) । ३।६।७.

पशुपुरोडाश ( शे ) आज्यभागौ कर्तव्यौ । १२।१।२.

पशुपुरोडाशः सवनीये पशावपि कर्तव्यः । १२।२।२.

पशुपुरोडाशतन्त्रस्य प्रसङ्गः अग्निचयने अनुनिर्वाप्येषु देवसुवां हविरादिषु । १२।३।२.

पशुपुरोडाशन्यायः ( पशुपुरोडाशयागः पशुयागीयदेवतासंस्कारकः ) । १०।१।९.

पशुपुरोडाशाधिकरणम् ( पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्यापि उपकारसिद्धेः तदर्थं पृथगङ्गानुष्ठानं न कर्तव्यम् ) । १२।१।१.

पशुयागदिनेऽपि अग्निहोत्रहोमः सायंतनः नौत्तरवेदिके, दैवात् पशुकर्मणः उत्कर्षे तु औत्तरवेदिके एव । संकर्ष. ३।२।२४ ( २४–२७ ).

पशुषु नानाजातीयेषु कुम्भीशूलवपाश्रपणीनां न तन्त्रम्, पाकवैषम्यात् । ११।४।१०.

पशुषु भिन्नदेवताकेषु एकजातीयेषु कुम्भीशूलवपाश्रपणीनां तन्त्रम् । ११।४।९.

पशुसंज्ञपनमध्वर्युगणस्थेनैव कार्यम् । संकर्ष. १।१।१५.

पशुसोमाधिकरणम् ( 'पशुमालभेत, सोमेन यजेत' इति आख्याताभ्यामपूर्वकर्मविधिः ) । २।२।६.

पशूनां त्रयाणां यूपस्तन्त्रमग्निष्टोमे । ११।३।३.

पशोर्द्व्यहकालत्वे प्राजहिते एव अग्निहोत्रपाकः । संकर्ष. ३।२।२५.

पशौ अग्नीषोमीये शमिता ऋत्विग्भ्यो न भिन्नः । ३।७।१३.

पशौ आज्यभागप्रतिषेधः अर्थवादः । १०।८।२.

पशौ उत्तमप्रयाजार्थमपि स्रुगादापनप्रैषस्य आवृत्तिः । संकर्ष. ४।४।१०.

पशौ दैवतस्विष्टकृतयोरवदानं समकालम् । संकर्ष. २।२।१८.

पशौ पुंस्त्वादि लिङ्गं विवक्षितम् । ४।१।१६.

पशौ पुरोडाशस्य श्रपणं शालामुखीये एव । संकर्ष. ३।२।२६.

पशौ प्रथमेष्टिपक्षे इष्ट्यर्थं प्रणीत एव आहवनीयः पश्वर्थमपि धार्यः । संकर्ष. ३।२।२३.

पशौ बहुदेवत्ये अग्निगुप्रैषगतस्य एकवचनान्तस्य मेधपतिशब्दस्य द्विवचनान्तेन विकल्पः । ९।३।१३.

पशौ वरुणप्रघासेषु च शालामुखीयोऽस्ति । संकर्ष. ३।२।२८.

पशौ शकृत्संप्रवेधः लोहितनिरसनं च पश्वालम्भस्य न प्रयोजके । ४।१।१२.

पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या । १०।७।२.

पश्वर्थानुष्ठितप्रयाजादिभिरेव पशुपुरोडाशस्यापि उपकारसिद्धेः तदर्थे पृथगङ्गानुष्ठानं न कर्तव्यम् । १२।१।११.

पश्वेकत्वाधिकरणम् ( पशुना यजेत इत्येकत्वं विवक्षितम् ) । ४।१।५.

पाकः कृष्णलेषु औष्ण्यरूपः कार्यः । १०।२।१.

पाकयज्ञशब्दो दार्विहोममात्रवाचकः । संकर्ष. २।४।१०.

पाकयज्ञशब्दो लौकिकहोमानामेव वाचकः । संकर्ष. २।४।११.

पाकयज्ञेषु ' द्विर्जुहोति , द्विर्निमार्ष्टि , द्विः प्राश्नाति , उत्सृज्य आचामति , निर्लेढि ' इति धर्मा भवन्ति । संकर्ष. २।४।१२.

पाकहोमशब्दो नाहुतिपर्यायः । संकर्ष. २।४।९.

पाञ्चसांवत्सरिकपक्षेऽपि चातुर्मास्येषु । संकर्ष. ३।१।१९.

पाञ्चसांवत्सरिकावृत्तावपि चातुर्मास्येषु वैश्वानरपार्जन्य-चातुर्होतृहोमानां सकृदेवानुष्ठानम् । संकर्ष. ३।१।२१.

पाठक्रमः काम्यानुष्ठाने न नियामकः । ५।३।१२.

पाठक्रमो मुख्यक्रमापेक्षया बलीयान् । ५।१।८.

पाठक्रमात् यथासंख्यरूपात् दधिग्रमन्त्रो मध्यवर्ती मध्यवर्तिनः उपांशुयाजस्याङ्गम् । ३।३।५.

पाठक्रमाधिकरणम् । ५।१।४.

पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् । ५।१।९.

पात्नीवतभक्षणाधिकरणम् ( पात्नीवतग्रहभक्षमन्त्रे पूर्वदेवतानामिन्द्रवाय्वादीनां नोपलक्षणम् ) । ३।२।१३.

पात्नीवतसोमभक्षणे त्रयस्त्रिंशतामनुपलक्षणम् । ३।२।१५.

पात्नीवतसोमभक्षमन्त्रे त्वष्टा नोपलक्षणीयः । ३।२।१४.

पात्नीवताधिकरणम् ( त्वाष्ट्रपात्नीवतस्य पशोः पर्यग्निकरणान्तत्वम् ) । २।३।८.

पात्नीवते पशौ ' आज्येन शेषं संस्थापयति ' इति वाक्यं कर्मान्तरं विदधाति । ९।४।१४.

पात्रन्यायः । पात्रभेदन्यायः ( पशौ प्रयाजानूयाजयोः ) । ५।२।८.

पानव्यापत् ( पीतसोमव्यापत्तौ प्रायश्चित्तम् ) । ३।४।१२.

पार्वणन्यायः ( पार्वणहोमयोर्विकृतौ नातिदेशः ) । ९।२।१८.

पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् । ९।२।१९.

पार्वणहोमौ विकृतिषु न भवतः । संकर्ष. २।२।३.

पावकाग्निन्यायः ( पवमानेष्ट्यादिषु देवतानिष्ठगुणवाचिपदस्यापि यागादौ प्रयोगः ) । १०।४।१४.

पाशन्यायः ( पशुद्वयवत्यां विकृतौ पाशैकत्वपाशबहुत्वाभिधायिनौ मन्त्रौ द्विवचनान्तेन ऊहितव्यौ ) । ९।३।४.

पाशाधिकरणम् ( अग्नीषोमीये पशौ पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्विकल्पः ) । ९।३।५.

पाशुकतन्त्रस्यैव सवनीयपुरोडाशेषु प्रसङ्गः । १२।२।१२.



पाशुकाज्यभागन्यायः ( सोमे आज्यभागप्रतिषेधस्य नित्यानुवादत्वेन पशौ आज्यभागप्रतिषेधस्यार्थवादत्वम् ) । १०।८।२.

पाशुकेषु सर्वेष्वङ्गेषु प्रत्यभिघारणम् । संकर्ष. २।२।७.

पिकनेमाधिकरणम् ( पिकनेमशब्दयोः म्लेच्छप्रसिद्ध्यनुसारेण अर्थो ग्राह्यः आर्यप्रसिद्ध्यभावात् ) । १।३।५.

पिण्डपितृयज्ञ( ज्ञे ) उपस्थानमन्त्रस्यगार्हपत्यपदलोपः ( अनाहिताग्नेरिदम् ) । संकर्ष. १।२।१५.

पिण्डपितृयज्ञः सिनीवालीकुह्वोः संनिपाते उत्तरस्मिन् दिने कार्यः । संकर्ष. १।२।१०.

पिण्डपितृयज्ञहोमो दक्षिणाग्नौ , नाहवनीये । संकर्ष. १।२।११.

पिण्डपितृयज्ञाधिकरणम् ( न दर्शाङ्गम् ) । ४।४।८.

पिण्डपितृयज्ञेऽनाहिताग्निना अतिप्रणीतः औपासनो वा उपस्थेयः । संकर्ष. १।२।१४.

पिण्डपितृयज्ञेऽनाहिताग्नेरपि अधिकारः । संकर्ष. १।२।१२.

पिण्डपितृयज्ञे श्रुतं परुषिदितादि समूलबर्हिर्विधेरर्थवादः । ३।४।३.

पिण्डपितृयज्ञो दर्शदिनेऽपि स्वकाले एव । संकर्ष. १।२।९.

पिण्डपितृयज्ञो न दर्शाङ्गम् । ४।४।८.

पिण्डपितृयज्ञोऽनाहिताग्नेः औपासनाग्नौ स्यात् । संकर्ष. १।२।१३.

पित्र्यकर्मणामपरपक्षादिः कालः । ६।८।६.

पिष्टलेपफलीकरणहोमयोर्दाक्षिणाग्निकयोर्नोत्कर्षः अनुयाजोत्कर्षेऽपि । ५।१।१५.

पुंस एकस्यैव स्त्रीसद्वितीयस्य दर्शपूर्णमासाद्यधिकारः । ६।२।२.

पुनरभ्युन्नीताधिकरणम् ( पुनरभ्युन्नीतसोमभक्षमन्त्रे इन्द्रोऽप्युपलक्षणीयः ) । ३।२।१२.

पुनराधानं प्रायश्चित्तम् अग्निहोत्रे उभयाग्निनाशे । ६।४।८.

पुरोडाशकपालन्यायः ( कपालं न तुषोपवापप्रयुक्तम् ) । ४।१।११.

पुरोडाशगणे देवतानिर्देशः अन्त्ययोः पिण्डयोः देवताज्ञानार्थः, न सर्वेषाम् । संकर्ष. १।३।२०.

पुरोडाशगणेऽपि उत्तमयोः पिण्डयोः यथाप्रकृति ' यथाभागं व्यावर्तेथाम् ' इति प्रयोगः । संकर्ष. १।३।१९.

पुरोडाशगणे ' यथाभागं व्यावर्तध्वम् ' इति ऊहः कार्यः । संकर्ष. १।३।१८.

पुरोडाशद्वयश्रवणमनुवादः दर्शपूर्णमासयोः असोमयाजिनः । १०।८।१४.

पुरोडाशविधिवाक्यं दारुपात्रं च सांनाय्ये स्तुत्यर्थम् । संकर्ष. १।२।५.

पुरोडाशशकलाधिकरणम् ( ऐन्द्रवायवादिपात्रेषु पुरोडाशशकलादिनिधानं प्रकृतेभ्य एव ) । ३।८।१८.

' पुरोऽध्वर्युर्विभजति ' इति देशवादः । संकर्ष. २।३।१२.

पुरोऽनुवाक्यायाः 'अग्ने नय सुपथा' इति कृष्णग्रीवयोः सौम्यव्यवहितयोः आवृत्तिः । ११।४।२०.

पुरोऽनुवाक्ये द्वे महापितृयज्ञे । संकर्ष. ४।४।५.

पूतीकाः सोमस्य प्रतिनिधिः श्रौतः । ६।३।१३.

पूतीकापचारे सोमसदृशस्यैव प्रतिनिधित्वम् , न पूतीकसदृशस्य । ६।३।१५.

पूर्णमासशब्दः सूर्याचन्द्रमसोर्विप्रकर्षवचनः । संकर्ष. ३।१।१.

पूर्णमासे पूर्वमाग्नेयस्य , पश्चात् अग्नीषोमीयस्यानुष्ठानं मन्त्रपाठस्य प्राबल्यात् । ५।१।९.

पूर्णमासे बर्हिःसंपादनकाले व्रतमुपेयात् । ६।४।१२.

पूर्वदेवताऽनुपलक्षणाधिकरणम् ( पात्नीवतग्रहभक्षमन्त्रे पूर्वदेवतानामिन्द्रवाय्वादीनां नोपलक्षणम् ) । ३।२।१३.

पूर्वदौर्बल्यन्यायः ( अपच्छेदन्यायः ) । ६।५।१९.

पूषानुमन्त्रणमन्त्रन्यायः ( पूषानुमन्त्रणमन्त्रः पूषदेवत्ये उत्कर्षणीयः ) । ३।२।१।२.

' पृथुपाजवत्यौ धाय्ये , अनुपदावाज्यभागौ ' इत्यनारभ्यवादाः विकृतौ उत्कर्षणीयाः । संकर्ष. ४।४।१.

पृश्निप्राणग्रहा अपि ग्रहा एव । संकर्ष. ३।३।१७.

पृश्निप्राणग्रहाणाम् अनारभ्याधीतानामपि द्वादशाहे प्रायणीयोदयनीययोः दशमेऽहनि च निवेशः । संकर्ष. ३।३।२०.

पृश्निप्राणमन्त्राः न यागार्थाः, किन्तु सोममानार्थाः । संकर्ष. ३।३।१९.

पृषदाज्याधिकरणम् ( चातुर्मास्येषु अनुयाजीयदेवताप्रकाशनार्थे प्राकृतावाहनमन्त्रस्य अविकारेणैव प्रयोगः ) । १०।४।२५.

पृष्ठशमनीयन्यायः ( पृष्ठशमनीयस्य ऋत्विगन्तरसंपादनेन सत्रकर्तॄणां प्रत्येकं कर्तृत्वम् ) । १०।२।१३.

पृष्ठशमनीये सत्रिभ्योऽन्येऽपि ऋत्विजः, न तु त एव । १०।२।१४.

पृष्ठैरुपतिष्ठते इति पृष्ठशब्दः ऋग्द्रव्यवाचकः । ७।३।१४.

पृष्ठ्यगतेषु उक्थ्येषु अतिग्राह्याणां विकल्पः, न पर्युदासः । संकर्ष. ३।३।४.

पृष्ठ्यषडहस्य विजातीयषडहव्यवधानेन आवृत्तौ मध्वशनादेरपि आवृत्तिर्गवामयने । १०।६।११.

पृष्ठ्यषडहान्ते गवामयनगते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम् । १०।६।९.

पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वाद्यशनम्, न तु प्रतिषडहान्ते गवामयने । १०।६।१०.

पृष्ठ्ये षडहे उपदिष्टेन मध्वशनेन अतिदिष्टस्य पयोव्रतादेः समुच्चयः । १०।४।१.

पृष्ठ्ये षडहे गवामयनगते बृहद्रथंतरयोः प्रत्यहमेकैकस्यैव अनुष्ठानम् । १०।६।३.

पेषणस्य बाधः सौर्ये चरौ । १०।१।१२.

पेषणस्य मन्थे न बाधः महापितृयज्ञे । १०।२।३४.

पौण्डरीकबर्हिषि 'पुण्डरीकैः स्तृणीत रक्तैः' इत्यूहः कर्तव्यो मौद्गे चरौ । वि. ९।३।२.

पौण्डरीके गवायुतस्य अश्वसहस्रस्य च दक्षिणायाः प्रत्यहं विभज्य वेद्योर्मध्येन उत्तरस्यां दिशि नयनम् । १०।६।१८.

पौण्डरीके गवायुतस्य अश्वसहस्रस्य च सकृत् दानम् । १०।६।१७.

पौरोडाशिककर्मार्थे हविष्कृदाह्वाने वाग्विसर्गः कर्तव्यः अग्नीषोमीये पशौ । ११।३।८.

पौरोडाशिकाज्यभागन्यायः ( पशुपुरोडाशे आज्यभागौ कर्तव्यौ ) । १२।१।२.

पौर्णमासीन्यायः ( पौर्णमास्यमावास्याशब्दौ यागत्रिकयोरनुवादकौ ) । २।२।३.

पौर्वापर्यन्यायः । पौर्वापर्यबलीयस्त्वन्यायः ( अपच्छेदन्यायः ) । ६।५।१९.

पौष्णं पेषणं चरावेव । ३।३।१४.

पौष्णं पेषणं पूषमात्रदेवत्ये चरौ । ३।३।१५.

पौष्णपेषणाधिकरणम् ( विकृतौ पौष्णं पेषणम् ) । ३।३।१३.

प्रकरणक्रमयोर्विरोधे । ३।३।७. भा. पृ. ८५४. वा. पृ. ८५४, ८३९.

प्रकरणक्रमाधिकरणम् । वि. ३।३।१०.

प्रकरणयोर्विरोधे । ३।३।७. वा. पृ. ८४०.

प्रकरणसमाख्ययोर्विरोधे । ३।३।७. वा. पृ. ८३९.

प्रकरणाधिकरणम् ( प्रकरणमपि विनियोजकं प्रमाणम् ) । ३।३।४.

प्रकरणान्तरन्यायः ( कुण्डपायिनामयने मासाग्निहोत्रादिकं कर्मान्तरं प्रकरणान्तरगतत्वात् ) । २।३।११.

प्रकरणान्तरप्रत्युदाहरणन्यायः ( अनुपादेयगुणानां कर्मान्तरत्वसाधकत्वं नास्ति ) । २।३।१३.

प्रकृतिविकृत्योः समानतन्त्रत्वे विकृतितन्त्रेण प्रकृतेः प्रसङ्गसिद्धिः । क्त्वाचिन्ता । १२।२।१३.

प्रगीताया एव ऋचः वैकृतापूर्वस्तोत्रसाधनत्वम् । ९।२।८ वर्णकं १.

प्रजापतिः सप्तदशो दृष्टार्थ एव । संकर्ष. २।३।१.

प्रजापतिव्रताधिकरणम् ( व्रतानि पुरुषार्थानि ) । ४।१।३.

प्रजापतिव्रतानि उद्यदादित्यानीक्षणसंकल्पादीनि पुरुषार्थानि । वि. ४।१।३.

प्रजापतिश्सप्तदशत्वस्य अग्न्यादिदेवतायोगेऽपि न भङ्गः । संकर्ष. २।३।२.



प्रणयनाधिकरणम् ( चातुर्मास्यगताग्निप्रणयने सौमिकाग्निप्रणयनधर्माणां नातिदेशः ) । ७।३।८.

प्रणवविधानं सामिधेनीषु अन्त्ये ऋगक्षरे एव टेः स्थाने ( 'अचोऽन्त्यादि टि' पा० १।१।६४ ) । संकर्ष. ४।१।१२.

प्रणवविधानं सामिधेनीषु ऋगक्षरस्थाने एव । संकर्ष. ४।१।११.

प्रणवशब्दवाच्यस्य ओङ्कारस्यैव सामिधेनीषु विधानम्, न तु 'प्र ण व' इति शब्दस्य । संकर्ष. ४।१।१३.

प्रणीताधर्मन्यायः । प्रणीतावाङ्नियमन्यायः ( प्रणीतावाग्यमः तद्देशापूर्वप्रयुक्तः ) । ९।१।७.

प्रणीताधर्माणामनुष्ठानम् अभ्युदितेष्टौ दधिपयसोः । ९।२।१४.

प्रणीतानिनयनं प्रतिपत्तिकर्म । ४।२।५.

प्रतिनिधावपि मुख्यधर्माणामनुष्ठानम् । ३।६।१४.

प्रतिनिधित्वं प्रतिषिद्धस्य माषादेर्द्रव्यस्य नास्ति । ६।३।६.

प्रतिनिधिना प्रधानकार्ये निष्पादिते ततो मुख्यद्रव्यलाभेऽपि प्रतिनिधिनैव समापनम् । ६।३।१७.

प्रतिनिधिन्यायः ( द्रव्यापचारे प्रतिनिधिना समापनम् ) । ६।३।४.

प्रतिनिधिपेटिका । ६।३।४–२०.

प्रतिनिधिर्न भवति स्वामिनः । ६।३।७.

प्रतिनिधेः श्रुतस्यापचारे मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वम्, न तु प्रतिनिधिसदृशस्य । ६।३।१५.

प्रतिनिधेः श्रुतस्यापि मुख्येन समानविधित्वम् । ३।६।१५.

प्रतिनिधौ संस्कारयोग्ये लब्धेऽपि संस्कारायोग्यस्यापि मुख्यस्योपादानम् । ६।३।१८.

प्रतिनिधौ स्वानिधर्माणामूहः । ९।२।१२.

प्रतिनिध्यपचारे मुख्यसदृशस्यैव प्रतिनिधित्वम् । ६।३।१४.

प्रतिपत्तिः चात्वाले कृष्णविषाणाप्रासनम् । ४।२।७.

प्रतिपत्तिः प्रणीतानिनयनम् । ४।२।५.

प्रतिपत्तिः शाखाप्रहरणम् । ४।२।४.

प्रतिपत्तिरवभृथे ऋजीषादिनयनम् । ४।२।८.

प्रतिपदाधिकरणम् ( वाक्यगतं प्रत्येकं पदं नापूर्वबोधकम्, किन्तु एकमेव ) । २।१।१.

प्रतिपदोः कुलायादौ उत्कर्षः ( युवं हि स्थः, एते असृग्रमिन्दवः ) । ३।३।९.

प्रतिपदोः पृष्ठगतयोः उपवत्यग्रवत्योर्नैमित्तिकयोः प्राकृत्योः संसवादिविकृतौ नानुष्ठानम् । १०।५।१६.

प्रतिप्रस्थातुः पशौ भक्षो नास्ति । १०।७।८.

प्रतिप्रस्थात्रा मन्त्राः अध्वर्योः पृथगुच्चारणीयाः वरुणप्रघासेषु दक्षिणविहारे । १२।१।९.

प्रतिष्ठाकामस्य एकविंशतिसामिधेन्यनुवचनं दर्शपूर्णमासप्रयोगान्तर्गतम् । ३।१।११.

प्रतिसमाधेयाङ्गवैकल्यस्याप्यधिकारः कर्मसु । ६।१।९.

प्रतिहोमपक्षे सायमग्निहोत्रमारभ्यानुष्ठानम् । ६।५।१३.

प्रतिहोमाः षोडशिसंस्थायां प्रातरग्निहोत्रमारभ्य कर्तव्याः । ६।५।१४.

प्रतिहोमा नानुष्ठेयाः अवभृथोत्कर्षे दीक्षाया अनुवृत्तत्वात् होमादिनिषेधानुवर्जनात् । वि. ६।५।१२.

प्रतिहोमा नानुष्ठेया ज्योतिष्टोमोत्कर्षे । ६।५।११.

प्रतिहोमो न कार्यः उदवसानीयोत्कर्षे । वि. ६।५।१३.

प्रत्यक्षसूत्रम् । १।१।४.

प्रत्यभिघारणं पाशुकेषु सर्वेष्वङ्गेषु । संकर्ष. २।२।१७.

प्रत्यवरोहः अग्नेः अरण्योरेव आत्मसमारोपपक्षेऽपि । संकर्ष. ३।२।३६.

प्रथनश्लक्ष्णीकरणयोर्बाधः सौर्ये चरौ । १०।१।१७.

प्रथमोपस्थितन्यायः ( प्राथमिकहविःशेषादेव शेषकर्म ) । ३।४।१६.

प्रदानभेदः मित्रगुणकदेवताभेदे । संकर्ष. २।२।१५.

प्रधाने अनर्थकं सत् तदङ्गे अवतरति । ३।१।९.

प्रधानेषु समसंख्येषु सहानुष्ठीयमानेषु धर्मविरोधे प्रथमपठितधर्मोऽनुग्राह्यः । १२।२।८.

प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयसामनुग्रहस्यानुरोधेन अनुष्ठानम् । १२।२।७.

प्रधानेष्वनेकेषु संनिपातिनां पदार्थानुसमयः । ५।२।१.

प्रधानैरपृथक्कालानामङ्गानां तन्त्रं न द्वादशाहे । ११।४।६.

प्रमेयबलाबलन्यायः ( प्रमेयः पदार्थो बलवान्, गुणः अबलः )। १।३।३.

प्रयाजः पञ्चमः आज्यभागदेवतासंस्कारार्थो दर्शपूर्णमासयोः । १०।१।७.

प्रयाजशेषाभिघारणन्यायः ( प्रयाजशेषेण हविरभिघारणार्थे शेषधारणतत्पात्रे पृथङ् न कर्तव्ये )। ४।१।१४.

प्रयाजा आरादुपकारका दर्शपूर्णमासयोः । ९।२।२०.

प्रयाजादिधर्मा अपूर्वप्रयुक्ताः । ७।१।१.

प्रयाजादिषु एकादशत्वादिगुणविधिः अग्नीषोमीयपश्वादौ । १०।३।१.

प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं प्रकरणात् । ३।३।४.

प्रयाजादीनामङ्गानामेकस्मिन् प्रयोगे सकृदनुष्ठानम् । ११।१।७.

प्रयाजानूयाजादीनामेकादशत्वादिसंख्या सर्वसंपाद्या पश्वादौ । ५।३।१.

प्रयाजार्थमाज्यसमानयनम् औपभृताज्यस्य प्रयोजकम्। ४।१।१५.

प्रयाजेषु पाशुकेषु आद्याश्चत्वारः प्राकृतानां चतुर्णां विकारः, पञ्चमादिषु षट्सु त्रयस्त्रयः चतुर्थपञ्चमयोर्विकारः, अन्त्यः अन्त्यस्य । संकर्ष. २।३।६.

प्रयाजैकादशत्वन्यायः (एकादशत्वसंख्या सर्वसंपाद्या)। ५।३।१.

प्रयाजोऽन्त्यः देवतासंस्कारापूर्वोभयार्थः । ४।१।७.

प्रयुक्तिविचारप्रतिज्ञा । ४।१।८.

प्रयोजनाधिकरणम् ( सत्रे प्रत्येकं कृत्स्नफलभोक्तॄणामधिकारः )। ६।२।१.

प्रयोज्यप्रयोजकभावनिरूपणप्रतिज्ञा । ४।१।८.

प्रवरत्रयसंपादनसमर्थस्य दर्शादावधिकारः। ६।१।११.

प्रवरवरणे द्विगोत्राणाम् ‘ एकतो द्वौ अन्यत एकः ’ इति त्रयः । संकर्ष. ३।४।८.

प्रवरेष्वध्वर्युवशात् होतुरपि आनुपूर्वीनियमः । संकर्ष. ३।४।४.

प्रवरो होतुरेव पूर्वः, अध्वर्योरुत्तरः । संकर्ष. ४।२।६.

प्रवर्ग्यन्यायः ( प्रवर्ग्यस्य निषेधः अग्निष्टोमप्रथमप्रयोगे )। ३।३।१२.

प्रवृत्तिक्रमात् मुख्यक्रमो बलीयान्। ५।४।२.

प्रशंसाऽधिकरणम् ( अपशवो वै अन्ये गोअश्वेभ्यः इति गोअश्वानां स्तुतिः )। १।४।१२–४. वि. १६.

प्रशसाशब्देन अध्रिगुप्रैषगतेन बाह्वोः प्रशंसा । ९।४।४.

प्रसङ्गः पशुपुरोडाशतन्त्रस्य अग्निचयने अनुनिर्वाप्येषु देवसुवां हविरादिषु । १२।३।२.

प्रसङ्गः सवनीयपुरोडाशेषु पाशुकतन्त्रस्यैव। १२।२।१२.

प्रसङ्गसिद्धं दार्शिकं व्रतं प्रायणीयाऽऽदिषु सौमिकपयोव्रतादिना । १२।१।११.

प्रसङ्गसिद्धिः प्रकृतेर्विकृतितन्त्रेण प्रकृतिविकृत्योः समानतन्त्रत्वे । कृत्वाचिन्ता । १२।२।१३.

प्रसङ्गसिद्धिः प्राकृतस्य आरण्यभोजनस्य सौमिकपयोव्रतादिना प्रायणीयाऽऽदिषु । १२।१।१४.

प्रसङ्गसिद्धिः सौमिकेन पत्नीसंनहनेन सौमिकेष्टिपशुषु दार्शिकपत्नीसंनहनस्य । १२।१।१३.

प्रसङ्गसिद्धिरुपसदग्नीषोमीयबर्हिःप्रोक्षणस्य आतिथ्याबर्हिःप्रोक्षणेन । १२।१।१९.

प्रसङ्गसिद्धिर्दार्शिकवेदेः सोमाङ्गेष्टिपश्वादिषु सौमिकवेद्या । १२।१।३.

प्रसङ्गसिद्धिर्दीक्षणीयाऽऽदिषु अन्वाहार्यदक्षिणायाः सौमिकदक्षिणया । १२।१।१६.

प्रसङ्गसिद्धिर्न ऐष्टिकशेषभक्षाणां सौमिकव्रतादिभक्षणेन । १२।१।१५.

प्रसङ्गसिद्धिर्नास्ति सौमिकेन दीक्षाकालीनजागरणेन दार्शिकजागरणस्य । १२।१।८.

प्रसङ्गोऽग्निचयने अनुनिर्वाप्येषु देवसुवां हविःषु पशुपुरोडाशतन्त्रस्य । १२।३।२.

प्रसङ्गो न ज्योतिष्टोमे सवनीयपुरोडाशेषु सौमिकपात्रैर्ग्रहचमसैः दार्शिकपात्राणां जुह्वादीनाम् । १२।१।४.

प्रसङ्गो न सोमाङ्गेष्टिगतशेषभक्षाणां सौमिकदक्षिणया। १२।१।१७.



प्रसङ्गोऽनुबन्ध्यायामनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रस्य । १२।३।२.

प्रसङ्गोऽमावास्यातन्त्रस्य निशीष्टौ । १२।२।५.

प्रस्तरप्रहरणकाले शाखाप्रहरणं दर्शे । ६।४।१४.

प्रस्तरप्रहरणन्यायः ( प्रस्तरप्रहरणाङ्गं सूक्तवाकः )। ३।२।५.

प्राकाशन्यायः ( राजसूयगते दशपेये [ अश्वमेधे इति भाष्यम् ] विहिताभ्यां प्राकाशाभ्यां प्राकृताध्वर्युभागमात्रस्य बाधः )। १०।३।१७.

प्राकृतधर्माः विकृत्यपूर्वपदार्थानां नाङ्गम् । ३।८।१६.

प्राचीमाहरति इति शाखावादो न दिग्वादः।४।२।२.

प्राजहितवादः ‘ स वैव स्यात् ’ इति ज्योतिष्टोमे । संकर्ष. ३।२।२१.

प्राजहिते एव अग्निहोत्रपाकः पशोः द्व्यहकालत्वे । संकर्ष. ३।२।२५.

प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणं कुण्डपायिनामयने । १२।१।६.

प्राजापत्यन्यायः (प्राजापत्यपशुधर्माणां पदार्थानुसमयो वाजपेये )। ५।२।१.

प्राजापत्यपशुषु उत्कर्षे यूपोन्मोचनप्रभृति माध्यंदिने एव । संकर्ष. १।१।४.

प्राजापत्यपशुषु दैवतावदानादिना अनुसमयः वाजपेये । ५।२।६.

प्राजापत्यपशूनां सवनीयपशूनां च शामित्रोऽग्निस्तन्त्रम् । संकर्ष. १।१।९.

प्राजापत्यपश्वङ्गप्रचारः वाजपेये सर्वसोमोत्तरम् । ११।३।१५.

प्राजापत्यानां पशूनां ब्रह्मसामकाले आलम्भोत्कर्षमात्रम् । १२।२।१२.

प्राजापत्यैः पशुभिः क्रतुपशूनां समुच्चयो वाजपेये । १०।४।३.

‘ प्राणभृत उपदधाति ’ इत्यत्र प्राणशब्दघटितमन्त्रोपधेया इष्टका एव । संकर्ष. २।१।२३.

प्राणभृदिष्टका मन्त्रा एव प्राणग्रहार्थाः । संकर्ष. ३।३।१८.

प्राणभृन्न्यायः । लिङ्गसमवायन्यायः । ( प्राणभृच्छब्देन इष्टकासमुदायो गृह्यते )। १।४।१२–६. वि. १८.

प्रातरग्निहोत्रमारभ्य प्रतिहोमानामनुष्ठानं षोडशिसंस्थायाम् । ६।५।१४.

प्राथमिकहविःशेषादेव स्विष्टकृदादिशेषकर्मानुष्ठानम् । ३।४।१६.

प्रायणीयनाम्ना नातिदेशः । ७।३।२.

प्रायणीयन्यायः ( प्रायणीयेष्टौ पयसि प्रदेयधर्मा नानुष्ठेयाः )। ९।४।९.

प्रायणीयाऽऽदिषु दार्शिकं व्रतं नानुष्ठेयम्। १२।१।११.

प्रायणीयाऽऽदिषु सौमिकपयोव्रतादिना प्रसङ्गसिद्धिः प्राकृतस्य आरण्यभोजनस्य । १२।१।१४.

प्रायणीयानिष्कासे उदयनीयानिर्वापः उदयनीयासंस्कारः, नार्थकर्म नापि प्रतिपत्तिः । ११।२।१६.

प्रायणीया पूर्वशंय्वन्ता ज्योतिष्टोमे । १०।७।१३.

प्रायणीया शंय्वन्ता ज्योतिष्टोमे । १०।७।१२.

प्रायणीयेष्टौ पयसि प्रदेयधर्मा नानुष्ठेयाः । ९।४।९.

प्रायश्चित्तं कपालादेरेकदेशभेदनादावपि । ६।४।४.

प्रायश्चित्तं पुनराधानं अग्निहोत्रे उभयाग्निनाशे । ६।४।८.

प्रायश्चित्तं यूपविरोहणे प्रकृतावपि । संकर्ष. १।३।१०.

प्रायश्चित्तमग्नीषोमीये पशौ यागसमाप्त्युत्तरं लौकिके यूपस्पर्शे ( यूपसंख्यानुसारेण ‘ एष ते वायो, एतौ ते वायू, एते ते वायवः ’ इति मन्त्रपाठः )। ९।३।३.

प्रायश्चित्तमभ्युदितेष्टिरूपं चन्द्राभ्युदयनिमित्तकम् असंनयतोऽपि भवति । ६।५।६.

प्रायश्चित्तमुद्गातृप्रतिहर्त्रपच्छेदयौगपद्येऽपि। ६।५।१७.

प्रायश्चित्तमेकहविरार्तावपि पञ्चशरावनिर्वापः । ६।४।६.

प्रायश्चित्तानां दोषनिर्घातार्थानां विकल्पः । १२।३।५.

प्रायश्चित्तानामदोषनिर्घातार्थानां समुच्चयः । १२।३।६.

प्रारब्धकाम्यकर्मणः समाप्तिर्नियता । ६।२।३.

प्रावृत्तिकक्रमन्यायः । ५।१।५.

प्रियङ्ग्वधिकरणम् ( प्रियङ्गवः न यवशब्दवाच्याः )। १।३।४.

प्रैषः ' अजैदग्निः ' इत्यध्वर्योः मैत्रावरुणं प्रति । संकर्ष. २।३।९.

प्रैषः ' अजैदग्निः ' इत्यस्मात् ' उप प्रेष्य होतः ' इति पृथगेव । संकर्ष. २।३।८.

प्रैषः ' उक्थशा यज सोमस्य ' इति शस्त्रवन्मात्रे निवेश्यते । संकर्ष. २।३।१०.

प्रैषः ' उक्थशा यज सोमानाम् ' इति शस्त्रवत्स्वपि चमसैर्ग्रहैश्च युगपद्धूयमानेष्वेव सोमेषु निवेश्यः । संकर्ष. २।३।११.

प्रैषः ' देवान् यज ' इति अनुयाजेषु त्रितयसाधारण एव । संकर्ष. २।३।३.

प्रैषः ' बर्हिः स्तृणीहि ' इति सोमार्थः । संकर्ष. १।३।१५.

प्रैषा आध्वर्यवाः । ३।८।१२.

प्रैषाधिकरणम् ( प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वम् ) । ३।८।११.

प्रैषानुवचनाधिकरणम् ( प्रैषानुवचनकर्तृत्वं मैत्रावरुणस्य ) । ३।७।२१.

प्रैषान् मैत्रावरुण एव ब्रूयात् ऋतुयाजेषु । संकर्ष. २।३।१३.

प्रोक्षणादयो धर्मा अपूर्वप्रयुक्ताः, न तु द्रव्यसंख्याहेतुसमुदायप्रयुक्ताः । ९।१।५.

प्रोक्षणादीनां पौरोडाशिकानां सौमिकपदार्थेभ्यः पूर्वभावित्वम् । ५।१।१३.

प्रोक्षण्यधिकरणम् ( प्रोक्षणीशब्दो यौगिकः ) । १।४।८.

प्रोत्साहनमन्त्रा याजमानाः । ३।८।६.

प्लक्षशाखायाः अग्नीषोमीये पशावेव विनियोगः । संकर्ष. १।३।१४.

फलं न विधेयम् । वि. ४।१।२ वर्णकं २.

फलचमसाधिकरणम् ( फलचमसः इज्याविकारः ) । ३।५।१९.

फलदेवताऽधिकरणम् ( फलदेवताप्रकाशका मन्त्रा अपूर्वप्रयुक्ताः ) । ९।१।२.

फल–नियम–कर्तृ–समुदायानां दार्शपौर्णमासिकानामन्यत्र कर्मणि नातिदेशः । ८।१।१३.

फलभूमाधिकरणम् ( सौत्रपदानुसारि शीर्षकमिदम् । प्रयाजादीनामङ्गानामेकस्मिन् प्रयोगे सकृदनुष्ठानम् ) । ११।१।७.

फलविधिवत् निगद्यमानमपि वाक्यं स्तावकमेव । १।२।२.

फलसंयोगाधिकरणम् ( जातेष्टिः पुत्रगतफलप्रयुक्ता ) । ४।१।१६.

फलसंस्कार्याधिकरणम् ( फलसंस्कार्ययोः कर्मभेदकत्वम् ) । २।३।१२.

बर्हिःसंपादनकाले व्रतमुपेयात् पूर्णमासे । ६।४।१२.

बर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदस्योहो मौद्रे चरौ । ९।३।२.

' बर्हिः स्तृणीहि ' इति प्रैषः सोमार्थः । संकर्ष. १।३।१५.

बर्हिराज्याधिकरणम् ( बर्हिराज्यादिशब्दा जातिवाचकाः ) । १।४।७.

बर्हिरादयः अङ्गप्रधानसाधारणाः । ३।७।१.

बर्हिरेकमेव आतिथ्योपसदग्नीषोमीयपशूनाम् । ४।२।१४.

बर्हिर्न्यायः ( बर्हिर्लवनमन्त्रः मुख्यकुशलवने । बर्हिर्लवनमन्त्रस्य लिङ्गेन मुख्ये कुशबर्हिषि विनियोगः ) । ३।२।१.

बर्हिर्न्यायः ( यूपावटस्तरणबर्हिः असंस्कृतम्–लौकिकम् ) । ३।८।१६.

बर्हिर्लवनादि प्रकृतावपि न सर्वार्थम् । ३।८।१७.

बलाबलाधिकरणम् (श्रुतिलिङ्गादीनां पूर्वपूर्वं प्रबलम्) । ३।३।७.

बहिष्पवमाने ऋगागमेन संख्या पूरयितव्या, ( सामाप्यभ्यसितव्यमिति भाष्यम् । एकस्यैव साम्नोऽभ्यास इति भाट्ट. ) विवृद्धस्तोमके क्रतौ । १०।५।७.

बहिष्पवमाने संख्यापूरणार्थम् आगमितानां तृचानां पर्यासोत्तरं निवेशः अतिरात्रे काम्यस्तोमविवृद्धौ । ५।३।४.

बहुयाजी नाम सोमयाजी एव । संकर्ष. ४।२।३.

बहुवचनस्य त्रित्वे पर्यवसानम् । ११।१।८.

बह्वनुग्रहन्यायः ( भूयोऽनुग्रहन्यायः ) । १२।२।७.



बादर्यधिकरणम् ( सूत्रगतबादरिशब्दानुरोधेनेदं नामधेयम् । शेषलक्ष्याधिकरणमिदम् ) । ३।१।३.

बाधः अतिदिष्टान्वाहार्यदक्षिणायाः आग्रयणे उपदिष्टवासोवत्सदक्षिणया । १०।३।६.

बाधः अग्निप्रैषस्य सारस्वत्यां मेष्याम् । कृत्वाचिन्ता । ९।१।१७.

बाधः अवघातस्य कृष्णलचरौ । १०।१।१ वर्णकं १.

बाधः अवज्वलनस्य सौर्ये चरौ । १०।१।१९.

बाधः आधारणस्य अन्वाहार्यस्थानापन्नयोरपि वासोवत्सयोः आग्रयणे । १०।३।१०.

बाधः आतिदेशिकद्वादशशतदक्षिणायाः औपदेशिकैकधेनुदक्षिणया भूसंज्ञकैकाहे । १०।३।१४.

बाधः आधानादिसंस्काराणां अग्निचयनप्रकरणे श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्यस्याग्नेः । १२।४।९.

बाधः आरम्भणीयायाः आरम्भणीयायाम् । १०।१।४.

बाधः आरम्भणीयायाः दीक्षणीयाऽऽदिविकृतौ । १०।१।२.

बाधः आरम्भणीयायाः राजसूयगतानुमत्यादीष्टौ । १०।१।३.

बाधः आहवनीयस्य ज्योतिष्टोमादौ विशेषविहितेन चर्मादिना । १०।८।८.

बाधः उख्यस्याग्नेः अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येनाग्निना । १२।४।७.

बाधः उपधानस्य सौर्ये चरौ । १०।१।१६.

बाधः उपस्तरणाभिघारणयोः कृष्णलेषु । १०।२।२.

बाधः ऋत्विक्परिक्रयस्य सत्रे । १०।२।११.

बाधः कुशानां शरैः सोमारौद्रे यागे । १०।४।१ वर्णकं १.

बाधः कृत्स्नक्रतुदक्षिणायाः ब्रह्मभिन्नपुरुषाणां च ऋतपेये विहितेन ब्रह्मणे देयेन सोमचमसेन । १०।३।२०.

बाधः गिरापदस्य इरापदेन ज्योतिष्टोमे यज्ञायज्ञीये । ९।१।१८.

बाधः गुणकामानामस्थियज्ञस्य मृताधिकारिकत्वपक्षे । १०।२।२०.

बाधः चतुर्धाकरणस्य कृष्णलचरौ । १०।२।७.

बाधः तक्षणजोषणादिधर्माणां खलेवाल्याम् । १०।२।३२.

बाधः तत्तत्समसंख्याकप्राकृतसाम्नां विकृतिविशेषे श्रूयमाणैः कौत्सादिसामभिः । १०।४।९.

बाधः पाकस्य अन्वाहार्यस्थानापन्नेऽपि वत्से आग्रयणे । १०।३।८.

बाधः पाकस्य अन्वाहार्यस्थानापन्नेऽपि वाससि । १०।३।९.

बाधः पेषणस्य सौर्ये चरौ । १०।१।१२.

बाधः प्रथनश्लक्ष्णीकरणयोः सौर्ये चरो । १०।१।१७.

बाधः प्राकृतकृत्स्नक्रतुदक्षिणायाः उक्थोपहव्ययोर्यागयोः औपदेशिकाश्वदक्षिणया । १०।३।१८.

बाधः प्राकृतकृत्स्नक्रतुदक्षिणायाः ऋतपेये विहितया सोमचमसदक्षिणया । १०।३।१९.

बाधः प्राकृतदर्भमन्त्रयोः माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण वाजपेये । १०।४।१ वर्णकं २.

बाधः प्राकृतद्रव्यदेवताऽऽदीनां काम्यासु विकृतिषु उपदिष्टैर्द्रव्यदेवताऽऽदिभिः । १०।७।१७.

बाधः प्राकृतयवानां सोमारौद्रादियागे श्रूयमाणैः शुक्लादिव्रीहिभिः । १०।७।१९.

बाधः प्राकृतयोर्वेदियूपयोः प्राकृतासादननियोजनानुवादेन विहिताभ्यां उत्करपरिधिभ्यां सौमिकेषु चातुर्मास्येषु । १०।३।३.

बाधः प्राकृतसर्वक्रयद्रव्यस्य साद्यस्के विहितेन त्रैवार्षिकेण पुंगवेन । १०।३।१६.

बाधः प्राकृतसाम्नां अविवृद्धस्तोमकक्रतुषु उपदिष्टैः सामभिः । १०।४।१०.

बाधः प्राकृतसाम्नां कौत्सकाण्ववसिष्ठस्यजनित्रादिसामभिः विकृतिविशेषे । १०।४।८ वर्णकं १.

बाधः प्राकृतस्य खादिरस्य सोमापौष्णे पशौ यूपार्थं विहितेन औदुम्बरेण । १०।७।१८.

बाधः प्राकृतहविषः चरुशब्दवाच्येनोदनेन सौर्ययागे । १०।१।१०.

बाधः प्राकृताज्यद्रव्यस्य द्यावापृथिव्यादौ प्रत्यक्षधेनुवत्सादिशब्दोपदिष्टगोद्रव्येण । १०।२।२९.

बाधः प्राकृताध्वर्युभागमात्रस्य राजसूयगते दशपेये विहिताभ्यां प्राकाशाभ्याम्। १०।३।१७.

बाधः भस्मसहितानामङ्गाराणामध्यारोपस्य सौर्ये चरौ। १०।१।१८.

बाधः यूपाहुतेः साद्यस्क्रे खलेवाल्याम्। १०।१।५.

बाधः विकृतौ लुप्तार्थानां प्राकृतानामङ्गानाम्। १०।२।१.

बाधः वैश्वदेवीयदेवताऽऽवाहनकाले विष्णोरुरुक्रमस्य आवाहनस्य। १०।१।१ वर्णकं २.

बाधः न्युद्धरणस्य सौर्ये चरौ। १०।१।२०.

बाधः संतापनस्य सौर्ये चरौ। १०।१।१५.

बाधः संयवनस्य सौर्ये चरौ। १०।१।१३.

बाधः संवपनस्य सौर्ये चरौ। १०।१।१४.

बाधः सामान्यविहितैकादिदक्षिणायाः नैमित्तिके पुनराधाने श्रुतदक्षिणया। १०।३।५.

बाधः सोमापहारादौ एकादिदक्षिणया नित्यप्रयोगीयगोगतद्वादशशतसंख्यायाः, न तु अश्वादीनाम्। १०।३।१५.

बाधः स्वाण्वाहुतेः साद्यस्क्रे। १०।१।६.

बाधयोग्यताऽधिकरणम्। वि. ३।३।१२.

बाधस्वरूपविचारः। ३।३।७. भा. वा. पृ. ८५८.

बाधो न अवघातस्य महापितृयज्ञे धानासु। १०।२।३४.

बाधो न आमिक्षायागस्विष्टकृतः। संकर्ष. १।४।२.

बाधो न एकादिदीक्षापक्षाणां साग्निचित्ये क्रतौ। संकर्ष. २।१।२९.

बाधो न कृष्णलचरौ भक्षाणां चुश्चुषाकारेण तत्संभवात्। १०।२।३.

बाधो न क्रतुदक्षिणायाः अग्निचेतृदक्षिणया। संकर्ष. १।१।८.

बाधो न क्रत्वर्थानामस्थियज्ञस्य मृताधिकारिकत्वपक्षे। १०।२।१९.

बाधो न निर्वापस्य अग्निहोत्रहवण्यभावेऽपि पवमानेष्टिषु। १०।२।२७.

बाधो न पर्यूहणादिसंस्काराणां साद्यस्क्रे खलेवाल्याम्। १०।२।२३.

बाधो न पश्वादिविकृतौ उपदिष्टैरेकादशप्रयाजादिमिरङ्गैः प्राकृतान्तरस्य। १०।३।१.

बाधो न पाकस्य कृष्णलचरौ। १०।२।१.

बाधो न प्राकृतसाम्नां विवृद्धस्तोमकक्रतुषु उपदिष्टैः सामभिः। १०।४।१०.

बाधो न प्राकृताजद्रव्यस्य वायव्यपशौ उपदिष्टश्वेतगुणेन। १०।२।३०.

बाधो न मन्थे पेषणस्य महापितृयज्ञे। १०।२।३४.

बाधो न सत्रे ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः। १०।२।२६.

बाधो न सर्वस्वारे यजमानजीवद्दशायां क्रियमाणप्रायणीयाऽऽदौ सूक्तवाकान्तर्गतायुराशासनादेः। १०।२।२५.

बार्हस्पत्यग्रहेण ऐन्द्रवायवादिग्रहाणां समुच्चयः बृहस्पतिसवे। १०।४।२.

बार्हस्पत्यचरुधर्माः पूर्वम्, पश्चात् सरस्वत्याज्यस्य कर्तव्याः अध्वरकल्पायाम्। ५।१।१०.

बाह्यग्रन्थानामप्रामाण्यम्। १।३।२. वा. पृ. १९४.

बीजवपनार्थानां अग्निचयनप्रकरणे पठ्यमानानां बहूनां मन्त्राणां केषांचिदेव चतुर्दशानाम् उपादानम्, न प्रथमानामेव। १०।५।५.

बृहद्रथंतरधर्माणां व्यवस्थया तत्तत्सामगानकाले अनुष्ठानम्। ९।२।१५.

बृहद्रथंतरधर्माणामविरुद्धानां कण्वरथंतरे समुच्चयो वैश्यस्तोमे। ९।२।१६.

बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः संसवादौ उभयसामके क्रतौ। १०।६।८.

बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानं गवामयने पृष्ठ्ये षडहे। १०।६।३.

बृहद्रथंतरयोः स्वयोन्युत्तराग्रथनेन संपादितयोः ककुभोरेव गानम्। ९।२।६.

बृहद्रथंतरोभयसामके क्रतौ रथंतरादिधर्माणां प्रकृतिवद् व्यवस्था (पृष्ठस्तोत्रे)। ९।२।१७.



बृहस्पतिसवन्यायः (बृहस्पतिसवादेः वाजपेयाङ्गता)। ४।३।१२.

बृहस्पतिसवे औपदेशिकेन बार्हस्पत्यग्रहेण आतिदेशिकानामैन्द्रवायवादिग्रहाणां समुच्चयः। १०।४।२.

बृहस्पतिसवे दाशतयीभ्यः उत्पन्नगायत्रीणामानयनम्। ८।३।६.

ब्रह्मणा युगपदुपहूताः सर्वे भक्षाः तत्तद्भक्षणकाले एव भक्षणीयाः चुश्चुषाकारेण कृष्णलचरौ। १०।२।६.

ब्रह्मणे शेषभक्षाः सर्वे परिहरणीयाः पुरुषान्तरेभ्योऽपनीय कृष्णलचरौ। १०।२।५.

ब्रह्मभक्षाः कृष्णलचरौ युगपत् परिहरणीयाः। १०।२।४.

ब्रह्मसामकाले प्राजापत्यानां पशूनां आलम्भोत्कर्षमात्रम्। १२।२।१२.

ब्रह्मसामगानं गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन। ९।२।६ वर्णकं ४.

ब्राह्मण-(वेदभाग) लक्षणम्। २।१।८.

ब्राह्मणविनियुक्तानां मन्त्राणां विकल्पः। १२।३।१५.

ब्राह्मणस्यापि आधाने इष्टिपूर्वत्वसोमपूर्वत्वयोर्विकल्पः, अग्नीषोमीयहविर्मात्रे तु सोमात् परस्तादुत्कृष्टव्यम्। ५।४।४.

ब्राह्मणस्यैवाधिकारः आर्त्विज्ये। १२।४।१५.

ब्राह्मणादिकर्तृकाया अवेष्टेः राजसूयात् भिन्नतन्त्रता। ११।४।३.

ब्राह्मणानां त्र्यार्षेयभिन्नानां मनुवत् कल्पः। संकर्ष. ३।४।५.

ब्राह्मणानामेव सत्रेऽधिकारः। ६।६।३.

ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकः स्वरः प्रयोक्तव्यः। १२।३।९.

ब्राह्मणोपेतानां क्षत्रियाणां स्वजातिप्रयुक्तं प्रवरवत्त्वम् (ब्राह्मणेन पुत्रत्वेन क्रीताः ब्राह्मणवृत्त्या जीवन्तः क्षत्रियाः ब्राह्मणोपेताः)। संकर्ष. ३।४।७.

भक्षमन्त्रः समन्त्रकेष्वेव भक्षेषु। संकर्ष. ३।१।९.

भक्षाः सर्वे पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः कृष्णलचरौ। १०।२।५.

भक्षाः सर्वे युगपदुपहूताः ब्रह्मणा तत्तद्भक्षणकाले एव भक्षणीयाश्चुश्चुषाकारेण कृष्णलचरौ। १०।२।६.

भक्षाणां न बाधः कृष्णलचरौ चुश्चुषाकारेण तत्संभवात्। १०।२।३.

भक्षाधिकरणम् (भक्षानुवाकस्य यथालिङ्गं विभागः)। ३।२।९.

भक्षेषु समन्त्रकेष्वेव भक्षमन्त्रः। संकर्ष. ३।१।९.

भक्षो नास्ति प्रतिप्रस्थातुः पशौ। १०।७।८.

भक्षोऽस्ति मैत्रावरुणस्य पशौ। १०।७।६.

भावार्थाधिकरणम् (आख्यातपदमेव अपूर्वबोधकम्)। २।१।१.

भाषास्वराधिकरणम् (सौत्रपदानुसारि शीर्षकम्। क्रतौ जपादिमन्त्रेषु मन्त्रसमाम्नायसिद्धस्वर एव प्रयोक्तव्यः, न भाषिकस्वरः)। १२।३।८.

भाषिकः स्वरः क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां प्रयोक्तव्यः। १२।३।९.

भिन्नकार्याणां गुणानामेकस्मिन् कर्मणि समुच्चयः। १२।३।३.

'भुवनस्य पते' इत्यादयः दशाहुतयः रथमुखे स्युः। संकर्ष. २।४।२८.

'भूतं भव्यं भविष्यद् वषट् स्वाहा' इत्यादौ न मन्त्रभेदः। संकर्ष. २।४।२९.

भूतेष्टकोपधानं प्राकरणिकैरेव मन्त्रैः। संकर्ष. २।४।२३.

भूतेष्टकोपधानं राजसूयमन्त्रैरेव इतिपक्षे यथाऽऽम्नातैरेव स्वाहाकारान्तैर्मन्त्रैः कर्तव्यम्। संकर्ष. २।४।२४.

भूमाधिकरणम् (सृजधातुघटितमन्त्राणां बहुत्वात् सृष्टीरुपदधाति इति इष्टकासमुदायो गृह्यते)। १।४।१२–५. वि. १७.

भूयोऽनुग्रहन्यायः (प्रधानेषु सहानुष्ठीयमानेषु धर्मविरोधे भूयसामनुग्रहानुसारेण अनुष्ठानम्)। १२।२।७.

भूयोमन्त्राधिकरणम् (एककर्मणि भूयोमन्त्रसत्त्वे विकल्पेन ग्रहणम्)। संकर्ष. १।२।३.

भूसंज्ञकैकाहे औपदेशिकधेनुदक्षिणया आतिदेशिकद्वादशशतदक्षिणाया बाधः। १०।३।१४.

भृतियाचनं ज्योतिष्टोमे नित्यम् । ६।८।७.

मेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः । ६।२।९.

मेदनादिनिमित्तकहोमाः दर्शपूर्णमासाङ्गम् । ६।५।१५.

भ्राष्ट्राद्यग्निना काम्येन अग्निचयनगतेन उख्यस्याग्नेर्बाधः । १२।४।७.

भ्राष्ट्राद्यग्नेः काम्यस्य अग्निचयनप्रकरणे श्रुतस्य आहवनीयत्वं नास्ति । १२।४।८.

'मण्डलेष्टका उपदधाति' इति चतुरस्राणामेवेष्टकानां नामान्तरम् । संकर्ष. २।१।२५.

मथितोऽग्निः आधाने गार्हपत्यार्थ एव । संकर्ष. ३।२।१.

मधुभक्षणं क्रत्वर्थं सत्रिभिः कर्तव्यम् । १०।६।१२.

मधूदकयोश्चित्रेष्टिगतयोः उपांशुयाजधर्माणामतिदेशः । ८।१।१९.

मध्वशनघृताशनयोर्वैकल्पिकयोः गवामयने पृष्ठ्यषडहान्ते अनुष्ठानम् । १०।६।९.

मध्वशनादेरनुष्ठानं गवामयने पृष्ठ्यषडाहावृत्तौ सर्वषडहान्ते सकृदेव, न तु प्रतिषडहान्ते । १०।६।१०.

मध्वशने घृताशने च वैकल्पिके षडहधर्माः कर्तव्याः । वि. ९।२।१२.

मध्वशनेन पृष्ठ्ये षडहे उपदिष्टेन अतिदिष्टस्य पयोव्रतादेः समुच्चयः । १०।४।१.

मनुवत् कल्पः त्र्यार्षेयभिन्नब्राह्मणानाम् । संकर्ष. ३।४।५.

मनोतान्यायः ( मनोतामन्त्रस्य वायव्यादिपशौ नोहः– 'त्वं ह्यग्ने प्रथमः' इत्यत्र 'त्वं हि वायो प्रथमः' इति नोहः ) । १०।४।२१.

मनोतामन्त्रस्य 'त्वं ह्यग्ने मनोता' इत्यस्य सौम्यव्यवहितयोः कृष्णग्रीवयोरावृत्तिः । ११।४।२०.

मन्त्रगतमाख्यातं न विधायकम् । २।१।६.

मन्त्रप्रयोगः कर्मकालीनः अनध्यायादावपि । १२।३।७.

मन्त्रलक्षणम् । २।१।७.

मन्त्रलक्षणशेषाधिकरणम् ( ऊहप्रवरनामधेयानां न मन्त्रत्वम् ) । २।१।९.

मन्त्रलिङ्गाधिकरणम् ( मन्त्रस्य लिङ्गेन कर्मणि विनियोगः ) । १।२।४.

मन्त्रस्य न प्रतिनिधिः । ६।३।९.

मन्त्राणां ब्राह्मणविनियुक्तानां विकल्पः । १२।३।१५.

मन्त्राणां ब्राह्मणोत्पन्नानां भाषिकः स्वरः प्रयोक्तव्यः । १२।३।९.

मन्त्राणां संख्यया विहितानां समुच्चयः अग्निचयनादौ । १२।३।१४.

मन्त्राणां हौत्राणां समुच्चयः ( याज्याऽनुवाक्ययोः ) । १२।३।१६.

मन्त्राधिकरणम् ( प्रोत्साहनमन्त्रा याजमानाः ) । ३।८।६.

मन्त्राधिकरणम् ( मन्त्रा अनुष्ठेयार्थस्मारकाः ) । १।२।४.

मन्त्रान्ते कर्मप्रारम्भः करणमन्त्रेषु । १२।३।१०.

मन्त्रान्तेन कर्मादिसंनिपातः आघारे । १२।३।१२.

मन्त्रान्तेन कर्मादिसंनिपातो वसोर्धारायामग्निचयने । १२।३।११.

मन्त्रोहन्यायः ( सौर्यादिविकृतौ अतिदिष्टे मन्त्रे वैकृतद्रव्यादिवाचकपदस्योहः ) । ९।३।१.

मन्द्राभिभूतिरित्यादिः भक्षयाम्यन्तः एको मन्त्रः । ३।२।१०.

मलवद्वासःसंवादनिषेधाधिकरणम् ( रजस्वलया संवादस्य निषेधः पुरुषार्थः ) । ३।४।७.

महापितृयज्ञे तिसृणामृचां द्वे एव पुरोनुवाक्ये, तृतीया याज्या । संकर्ष. ४।४।५.

महापितृयज्ञे द्वयोरनुवाक्ययोः प्रत्येकं प्रणवः । संकर्ष. ४।४।६.

महापितृयज्ञे धानासु अवघातस्य न बाधः । १०।२।३४.

महापितृयज्ञे मन्थे पेषणस्य न बाधः । १०।२।३४.

महापितृयज्ञे येयजामहस्य पर्युदासः । १०।८।१.

महाभूमिर्न देया विश्वजिति सर्वस्वदाने । ६।७।२.

महाव्रते तार्प्यादिभिः प्राकृताहतवाससः समुच्चयः । १०।४।७.



महाव्रते शुक्रग्रहेण ऐन्द्रवायवादिग्रहाणां समुच्चयः । १०।४।२.

महाव्रते स्तोत्रान्तरसाधनीभूतैः श्लोकादिसामभिः प्राकृतसाम्नां समुच्चयः । १०।४।८.

महिमग्रहाभ्यामैन्द्रवायवादिग्रहाणां समुच्चयः अश्वमेधे । १०।४।२.

महेन्द्राधिकरणम् ( इन्द्रमहेन्द्रौ भिन्नौ ) । २।१।५.

मांसाधिकरणम् ( धान्यमसि इत्यत्र मांसमसि इत्यूहः शाक्त्यानामयने ) । ९।१।१३ वर्णकं १.

मांसाधिकरणम् ( शाक्त्यानामयने सवनीयपुरोडाशास्तरसमयाः ) । ३।८।२२.

माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे गवामयनदीक्षा कर्तव्या, न चैत्र्याः प्राक् । ६।५।९.

माध्यंदिनपवमानस्तोत्रे आद्ये एव तृचे गानम् एकत्रिके क्रतौ । १०।५।२.

माध्यंदिनार्भवपवमानयोः संख्यापूरणार्थमागमितानां साम्नां गायत्रीछन्दस्के तृचे आवापः अतिरात्रे काम्यस्तोमविवृद्धौ । ५।३।५.

माध्यंदिनार्भवपवमानयोरेव विवृद्धाविवृद्धस्तोमकक्रतुषु साम्नामावापोद्वापौ ( विवृद्धत्वे आवापः, अविवृद्धत्वे उद्वापः ) । १०।४।११.

मानमुपावहरणं च सोमस्य वाससा कर्तव्ये ज्योतिष्टोमे । १०।६।२०.

मानवीनामृचाम् एकादशानामेव सामिधेनीकार्ये दाशतयीभ्यः समानयनं सोमारौद्रेष्टौ । १०।६।१९.

मानससंज्ञको ग्रहः द्वादशाहदशमाहाङ्गम् । १०।६।१३.

माषपाकाधिकरणम् ( माषपाकवाक्यमर्थवादः ) । ६।७।१२.

माषादेः प्रतिषिद्धस्य द्रव्यस्य न प्रतिनिधित्वम् । ६।३।६.

'माषानेव मह्यं पचत' इत्यर्थवादः । ६।७।१२.

मासं 'दर्शपूर्णमासाभ्यां यजेत' इति प्रत्यहं यागः कुण्डपायिनामयने । संकर्ष. ३।१।२५.

मासाग्निहोत्रन्यायः ( अग्निहोत्रादिनाम्ना धर्मातिदेशः ) । ७।३।१.

मासाग्निहोत्रश्रपणं प्राजहितेऽग्नौ कुण्डपायिनामयने । १२।१।६.

माहेन्द्रस्तोत्रानन्तरमेव अतिग्राह्याणां होमः, न तु सह । संकर्ष. ३।३।७.

माहेन्द्रस्तोत्रोपाकरणसाधनतया विहितेन रथदुन्दुभिघोषेण प्राकृतदर्शमन्त्रयोर्बाधो वाजपेये । १०।४।१ वर्णकं २.

मीमांसा अभिघारणानभिघारणस्य त्र्यम्बकपुरोडाशेषु । १०।८।५.

मुख्यक्रमादौपदेशिकात् पाठक्रमः आतिदेशिको बलवान् । ५।१।१०.

मुख्यक्रमाधिकरणम् । ५।१।७.

मुख्यस्य अङ्गनिर्वाहासमर्थस्यापि प्रधाननिर्वाहसमर्थस्य सत उपादानम् । ६।३।२०.

मुख्यानुग्रहन्यायः ( मुख्यद्रव्यापचारे गृहीते प्रतिनिधौ पुनर्मुख्यप्राप्तौ मुख्यस्यैवोपादानम् ) । ६।३।१६.

मुख्ये कार्यासमर्थे लब्धेऽपि प्रतिनिधेः कार्यसमर्थस्य सत उपादानम् । ६।३।१९.

मुष्टिकपालादिषु चतुर्मुष्टिनिर्वापादिसमुदायेन अनुसमयः । ५।२।३.

मुष्टिपरिमाणं निर्वापे अध्वर्योरेव । संकर्ष. १।४।११.

मेधपतिशब्दस्य अध्रिगुप्रैषगतस्य एकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः । ९।३।१३.

मेधपतिशब्दस्यैकवचनान्तस्य अध्रिगुप्रैषगतस्य एकादशिन्यां बहुवचनान्तेन ऊहः । ९।३।१४.

मेधपत्यधिकरणम् ( द्विपश्वादिविकृतौ देवताऽनुसारेण अध्रिगुप्रैषे मेधपतिशब्दस्य वचनोहः कर्तव्यः ) । ९।३।१२.

मेष्यधिकरणम् ( मेष्यां सारस्वत्यां अध्रिगुप्रैषस्य बाधः । क्त्वाचिन्ता ) । ९।१।१७.

मैत्रावरुण एव ऋतुयाजेषु प्रैषान् ब्रूयात् । संकर्ष. २।३।१३.

मैत्रावरुणस्य अग्नीषोमीये पशौ अस्ति भक्षः । १०।७।६.

स्मृतिः प्रमाणं विहितस्य बाधाभावे । १।३।३.

स्मृत्यधिकरणम् । स्मृत्याचारप्रामाण्याधिकरणम् ( स्मृतिर्धर्मे प्रमाणम् ) । १।३।१.

स्मृत्यपेक्षया श्रुतिः प्रबला । १।३।२.

स्रुगादापननिगदे 'अग्निर्होता वेत्तु' इति आहवनीयवादः । संकर्ष. ४।२।१९.

स्रुगादापनप्रैषस्य आवृत्तिः पशौ उत्तमप्रयाजार्थमपि । संकर्ष. ४।४।१०.

स्रुगादापनमन्त्रे 'इमे वयम्, स्मो वयम्' इति पाठौ कर्मान्तरे सावकाशत्वात् न विकल्पः । संकर्ष. ४।३।१.

स्रुचः शमीमय्यो हिरण्मय्यो वा संमार्ष्टन्याः वरुणप्रघासेषु ( स्रुवादिसंमार्गो गुणकर्म ) । २।१।४.

स्रुवाधिकरणम् ( स्रुवत्वादिरत्वविधिः प्रकृतिगामी ) । ३।६।१.

'स्वं महिमानमावह' इति गार्हपत्यवादः । संकर्ष. ४।२।१२.

स्वयमातृण्णोपधाने वरदानमध्वर्योः कर्म अग्निचयने । वि. ३।८।२.

स्वरसामैककपालामिक्षाधिकरणम् ( स्वरसामादिशब्दाः धर्मातिदेशकाः ) । ७।३।१०.

स्वरुः अग्नीषोमीये पशौ छेदनादेर्न प्रयोजकः । ४।२।१.

स्वरुस्तन्त्रं पशुत्रयार्थः अग्निष्टोमे । ११।३।५.

स्वर्गकामाधिकरणम् ( स्वर्गकामस्य ज्योतिष्टोमाद्यनुष्ठाने अधिकारः ) । ६।१।१.

स्वर्व( रु अ )धिकरणम् ( छेदनादेर्न प्रयोजकः ) । ४।२।१.

स्वर्व( रु अ )धिकरणम् ( स्वरुः पश्वङ्गम् ) । ४।४।१०.

स्ववाक्यश्रुतफलानां कर्मणां न स्वर्गः फलम् । ४।३।९.

स्वामिकर्म ऋत्विजां परिक्रयः । ३।८।१.

स्वामिनः कस्यचिन्मरणे सत्रे प्रतिनिधिर्भवति । ६।३।८.

स्वामिनः ( यजमानस्य ) न प्रतिनिधिः । ६।३।७.

स्वामियुक्ताधिकरणम् ( स्वामिसंयुक्ता धर्माः प्रधानार्थाः ) । ३।७।२.

स्वामिसप्तदशा ऋत्विजो ज्योतिष्टोमे । ३।७।१८.

स्वामिस्थले सत्रे प्रतिनिहितस्य न स्वामित्वम् । ६।३।९.

स्वामिस्थले सत्रे प्रतिनिहितस्य स्वामिधर्मा वपनादिसंस्कारा भवन्ति । ६।३।१०.

स्वाहाकार–पुरस्तात्स्वाहाकारोऽपि मन्त्रः होमे करणम् । संकर्ष. २।४।१७.

'स्वाहाकृतमिन्द्राय ते जुहोमि' इत्यादौ स्वाहाशब्दो न प्रदानार्थः । संकर्ष. २।४।१८.

'स्वाहाऽग्निं होत्राज्जुषाणाः' इति स्विष्टकृद्वादः । संकर्ष. ४।२।१५.

'स्वाहा देवा आज्यपाः' इति प्रयाजानुयाजदेवतावादः । संकर्ष. ४।३।९.

स्विष्टकृच्छब्दलोपः अग्नीषोमीयपशुपुरोडाशस्विष्टकृतित्यागे आवाहनादिनिगदेषु च । १०।४।१८.

स्विष्टकृतः आमिक्षायागीयस्य न बाधः । संकर्ष. १।४।२.

स्विष्टकृतोऽग्नेरावाहनं हव्यवहनायैव इति तत्रैव 'अग्निं होत्राय' इति निगदः । संकर्ष. ४।२।११.

स्विष्टकृत् साकंप्रस्थायीये नास्ति । संकर्ष. १।३।४.

स्विष्टकृत् हविःसंस्कारापूर्वोभयार्थः । वि. ४।१।७.

स्विष्टकृदग्निः गार्हपत्याधिष्ठाता देवताविशेष एव । संकर्ष. ४।२।१०.

स्विष्टकृदधिकरणम् ( सर्वेभ्यो हविर्भ्यः ) । ३।४।१५.

स्विष्टकृदनिज्याशेषैः त्रिभिरङ्गैः कर्तव्यः अग्नीषोमीये पशौ । १०।७।३.

स्विष्टकृदादि यावदुक्तं कर्तव्यं गृहमेधीये । १०।७।१०.

स्विष्टकृदादिशेषकर्म प्राथमिकहविःशेषादेव । ३।४।१६.

स्विष्टकृद्यागीयनिगमेषु अग्नीवरुणयोर्वचनं सस्विष्टकृच्छब्दकमेव कर्तव्यं ज्योतिष्टोमे अवभृथे । १०।४।१७.

स्विष्टकृद्याज्यानिगदे 'अयाळग्निरग्नेः' इति गार्हपत्यस्यैव वादः । संकर्ष. ४।२।१७.



हन्तिपिष्यधिकरणम् ( अवहननं पेषणं च अपूर्वप्रयुक्तम् ) । ९।१।२.

हरणमन्त्रस्य नावृत्तिः आतिथ्याबर्हिषि संनह्य अग्नीषोमीयदेशे स्तरणार्थमाह्रियमाणे । १२।१।२१.

हरितपदस्य स्थाने रक्तपदस्य मौद्गे चरौ बर्हिःस्तरणमन्त्रे ऊहः । ९।३।२.

हविरभिमर्शनमङ्गप्रधानोभयार्थम् । ३।७।४.

हविरार्तिनिमित्तकः पञ्चशरावयागो दर्शस्याङ्गम् । ६।४।१०.

हविरार्तिन्यायः ( आर्तिन्यायः ) । ६।४।६.

हविरार्तौ पञ्चशराव ओदनः कर्मान्तरम् , न सांनाय्यस्य प्रतिनिधिः । ६।४।९.

हविर्देवतयोर्विप्रतिपत्तौ हविषा नियमः । वि. ८।१।१७.

हविर्धानशकटाभ्यां भिन्ने शकटे ज्योतिष्टोमे इष्ट्यादौ हविर्निर्वापः । १२।१।७.

हविर्धानस्य दक्षिणस्य देशे सामिधेन्यनुवचनं ज्योतिष्टोमे । ३।७।७.

हविर्विभागमन्त्रावृत्तिः सर्वपृष्ठेष्टौ नास्ति । संकर्ष. १।३।२४.

हविष्कृतः अध्रिगोः पुरोऽनुवाक्यायाः मनोतायाश्च आवृत्तिः ज्योतिष्टोमे । ११।४।२०.

हविष्कृदाह्वानं तार्तीयसवनिकपुरोडाशेषु सौम्यचरुआश्विनद्विकपाले च भेदेन न कर्तव्यम् । १२।२।४.

हविष्कृदाह्वानाभावः सवनीयपुरोडाशेषु । १२।२।३.

हविष्कृदेहि इति मन्त्रः आह्वानाङ्गम् । ३।२।३.

हविष्कृन्मन्त्रस्य सवनत्रयगतपुरोडाशेषु आवृत्तिः ज्योतिष्टोमे । ११।४।२०.

हस्तावनेजनाधिकरणम् ( हस्तावनेजनादीनां कृत्स्नप्रकरणाङ्गता ) । ३।१।१४.

हारियोजनन्यायः ( हारियोजने ग्रावस्तुतोऽपि सोमभक्षः ) । ३।५।९.

हिरण्यगर्भन्यायः ( वायव्यपशौ उत्तराघारे हिरण्यगर्भमन्त्रस्य निवेशः ) । १०।३।२.

हिरण्यदानस्य अदृष्टार्थस्य सत्रे न बाधः । १०।२।२६.

हिरण्यधारणन्यायः ( सुवर्णधारणविधिः पुरुषार्थः ) । ३।४।८.

हिरण्यमालित्वं वाजपेये सर्वेषामेव ऋत्विजाम् , नाध्वर्योरेव । ३।८।४.

हिरण्यशकलाधिकरणम् ( अग्निचयने हिरण्यशकलैः प्रोक्षणं सकृत् कर्तव्यम् ) । ९।१।८.

हृदयादिन्यायः ( पशौ हृदयादीनामेव अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वस्य परिसंख्या ) । १०।७।२.

हेतुवन्निगदाधिकरणम् ( हेतुवत् निगद्यमानमपि वाक्यं स्तावकमेव ) । १।२।३.

'होतर्यज, प्रशास्तर्यज' इति वक्तृविकल्पः । संकर्ष. २।३।१४.

होतुरपि अध्वर्युवशात् प्रवरेषु आनुपूर्वीनियमः । संकर्ष. ३।४।४.

होतुरेव ऊर्ध्वज्ञुत्वादिर्वरणधर्मः, न सर्वेषामृत्विजाम् । संकर्ष. ४।२।५.

होतुरेव प्रवरः पूर्वः, अध्वर्योरुत्तरः । संकर्ष. ४।२।६.

होतुः कृत्स्नेडाभक्षस्य अध्यूघ्न्या निवृत्तिः अग्नीषोमीये पशौ । १०।७।४.

होतुः पृष्ठस्तोत्रार्थे षाडहिकरथंतरादिसाम्नां मध्ये वैरूपस्यैव निवेशः विश्वजिति । १०।६।५.

होतुः प्रथमं भक्षः एकपात्रे बहुभिः सोमभक्षणे । ३।५।१३.

होतृमैत्रावरुणयोर्द्वयोर्वरणं निरूढपशुबन्धे । संकर्ष. ३।४।१३.

होतृवरणं दार्शिकं ज्योतिष्टोमे कर्तव्यम् । १२।१।१८.

होमः चित्रेष्टौ 'अग्ने गोभिर्न' इत्यादिभिः पुष्टिमन्त्रैरेव । संकर्ष. २।४।५.

होमलक्षणम् । ४।२।१३.

होमानां लौकिकानामेव वाचकः पाकयज्ञशब्दः । संकर्ष. २।४।११.

होमाभिषवौ ज्योतिष्टोमे सोमभक्षणे एकं निमित्तम् । ६।४।७.

होमाभिषवौ सोमभक्षे समुच्चित्य निमित्तान्तरम् । ३।५।११.

होमे पुरस्तात्स्वाहाकारोऽपि मन्त्रः करणम् । संकर्ष. २।४।१७.

होमो दर्विहोमेषु प्रतिहोमं समिधमाधायैव । संकर्ष. २।४।८.

होलाकाऽधिकरणम् ( होलाका सर्वलोकधर्मः, न प्राच्यानामेव )। १।३।७.

हौत्रमन्त्राणां समुच्चयः ( याज्याऽनुवाक्ययोः ) १२।३।१६.

हौत्रमाध्वर्यवमौद्गात्रम् इति समाख्यया होतुः अध्वर्योः उद्गातुश्च तत्तत्कर्मभिः संबन्धः । ३।३।६.

---

# मीमांसाकोषः

☧ उपांशुयाजे ध्रौवाज्यस्य विधानम् ॥

**उपांशुयाजमन्तरायजतीति हविर्लिङ्गाश्रुतित्वाद् यथाकामी प्रतीयेत । १०।८।१५।४७ ॥**

**भाष्यम्**-- दर्शपूर्णमासयोराम्नायते ' उपांशुयाजमन्तरा यजति ' इति । तत्र द्रव्यं प्रति संदेहः किमनियमः, उत नियतं किञ्चित् द्रव्यमिति । किं प्राप्तम् ? न किञ्चित् हवीरूपं श्रूयते । तस्मात् यथाकामी प्रतीयेत । तत्रोच्यते । श्रूयते हवीरूपम् ' आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ' इति । तस्मात् आज्यद्रव्यकं स्यात् । उच्यते । एवमपि अनियमः । यत्किञ्चित् आज्यं गृहीत्वा इज्येतेति ।

**ध्रौवाद् वा, सर्वसंयोगात् । ४८ ॥**

**भाष्यम्**-- ध्रौवात् वा आज्यात् इज्येत, न यतः-कुतश्चित् । कुतः ? सर्वसंयोगात् । सर्वयजतिभिर्हि संबद्धं ' सर्वस्मै वा एतद् यज्ञाय गृह्यते, यद् ध्रुवायामाज्यम् ' इति । तस्मात् ध्रौवाज्यात् यजेतेति ।

**सोम**--असोमयाजिनः सांनाय्यबाधवत् उपांशुयाजेऽपि अर्थप्राप्तद्रव्यान्तरस्य न बाधः इत्युत्थितेः **दृष्टान्तसंगतिः** । विस्पष्टतादर्थ्यचतुर्थीबलात् अश्रुतद्रव्यकप्रकृतयागानां द्रव्यापेक्षाबलात् ध्रौवस्य प्रयोजनापेक्षाबलाच्च विधितात्पर्ये निश्चिते वैशब्दो ' यदाग्नेयः' इत्यादौ यच्छब्दवत् न विधिशक्तिप्रतिबन्धकः । **सूत्रार्थस्तु**-द्रव्यं विना यागानुपपत्त्या यजतेर्द्रव्यलिङ्गत्वात् विशेषाश्रवणाच्च ' उपांशुयाजमन्तरा यजति ' इत्यत्र द्रव्ये यथाकामी इति ।

**वि**--' उपांशुयाजे यत्किञ्चिद् द्रव्यमाज्यमुता,-ग्रिमः । विशेषानुक्तितो, मैवं ध्रौवाज्यस्य विधानतः ॥'

**भाट्ट**-- उपांशुयाजे उत्पत्तिवाक्ये द्रव्याविधानेऽपि आक्षेपेण यत्किञ्चिद्द्रव्यप्राप्तौ ' चतुर्ध्रुवायां गृह्णाति ' इति प्रयोजनविशेषासंयुक्तं ध्रौवाज्यं द्रव्यसाकाङ्क्षप्रकृतक्रियामात्रे अधिकाराख्यप्रकरणेन विनियुज्यमानम् आज्यभागादाविव उपांशुयाजेऽपि प्राप्नोति । ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इत्यनन्यशेषभूतात् वचनाच्च वैयर्थ्यबललब्धविधिशक्तिकात् तल्लाभः । न च अत्र यत्र पत्नीसंयाजादौ सामान्यतः आज्यद्रव्यकत्वं प्राप्तम्, तत्र लाघवात् ध्रौवतामात्रविधिरस्त्विति वाच्यम् । तथात्वेऽपि दर्शपूर्णमासप्रकरणपठितचतुर्गृहीतविधिना आज्यभागादाविव उपांशुयाजेऽपि सामान्यात् आज्यद्रव्यस्य प्राप्तत्वात् तत्प्रकृतित्वेन ध्रौवविधानोपपत्तेः, पत्नीसंयाजादौ आज्यस्थाल्याज्यस्य वाचनिकत्वाच्च । न चैवं प्रकरणादेव ध्रौवाज्यस्य उपांशुयाजाद्यर्थत्वसिद्धेः ' सर्वस्मै वै ' इति वाक्यानर्थक्यापत्तिः, प्रकरणात् अयज्ञेष्वपि अलङ्करणादिषु तत्प्राप्तौ तद्व्यावृत्तिफलकत्वेन सार्थक्यात् । अत एवात्र यज्ञोद्देशेन एतच्छब्दार्थभूतध्रौवाज्यस्यैव विधिः, तत्तात्पर्यग्राहकं च 'ध्रुवायामाज्यम्' इति पदम् । अतो न विधेयानेकता । एवं चालङ्करणादौ आज्यस्थाल्याज्यमेव । सर्वथा उपांशुयाजे ध्रौवमेवेति तद्विकारभूतं मधूदकम् आज्यस्य बाधकम् । पूर्वपक्षे तु अनियमात् नियामकमात्रमिति बाधोपयोगिता । पूर्वपक्षस्यातिमन्दत्वेऽपि शिष्यहितार्थमुक्तत्वान्न विरोधः ।

**मण्डन**--' उपांशुः स्याद् ध्रुवाज्यतः । ' १६.

**शंकर**-- 'ध्रौवं चोपांशुयाजके । ' १७.

* उपांशुयाजेऽपि देवताऽपनयः चन्द्राभ्युदितेष्टौ । भा. ६।५।२।१०-११. * **उपांशुयाजे** याज्याऽनुवाक्यायुगलानां क्रमविनियुक्तानामपि देवताकल्पकत्वं दृश्यते । सु. पृ. ४५७.

**उपांशुयाजेऽवचनाद् यथाप्रकृति । ६।५।२। १० ॥**

चन्द्राभ्युदितेष्टौ सांनाय्यपुरोडाशयोः यथा देवताऽपनयः तथा उपांशुयाजे न भवति, किन्तु उपांशुयाजे यथाप्रकृति प्रकृतिवत् अनुष्ठानं स्यात् । तत्र देवताऽपनयस्य अवचनात् । देवताऽपनयस्य अनुक्तत्वात् प्रकृतिवदनुष्ठानम् उपांशुयाजस्य इति पूर्वः पक्षः ।

**अपनयो वा प्रवृत्त्या, यथेतरेषाम् । ११ ॥**

सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । यथा उपांशुयाजात् इतरेषां प्राकृतदेवतानाम् अग्न्यादीनां अपनयः, तथा उपांशुयाजेऽपि अपनयः कर्तव्यः । केन कारणेन ? प्रवृत्त्या । अकाले तन्त्रस्य प्रवृत्तिस्तत्र कारणम् । तच्च उपांशुयाजेऽपि समानम् । तस्मात् उपांशुयाजस्य सर्वथा निवृत्तिरेव । दर्शेऽपि उपांशुयाजोऽस्ति इति पक्षमाश्रित्य इदमुक्तम् । पक्षान्तरे तु दर्शे उपांशुयाजो नास्त्येव । के.

* उपांशुयाजे विहितमुपांशुत्वं आश्रुतप्रत्याश्रुतादिभिन्नमन्त्रेष्वेव । **संकर्ष.** ४।३।१६.

**उपांशुयाजे वैकल्पिकी विष्ण्वादिर्देवता पौर्णमासी कालश्च ॥**

**धर्माद्वा स्यात् प्रजापतिः । १०।८।१७।५१ ॥**

**भाष्यम्**—तान्त्रीणामन्यतमा देवतेत्युक्तम् । तत्र संदेहः किं तान्त्रीषु अनियमः, अथवा प्रजापतिः, अथवाऽग्निः अथवा विष्णुः । अमावास्यायां च उपांशुयाजः, अथवा पौर्णमास्यामुपांशुयाजः, विष्णुश्च देवता । अथवा उभयत्र उपांशुयाजः, देवताविकल्पश्चेति । अथवा पौर्णमास्यामेव उपांशुयाजः, तत्रैव विष्ण्वाद्या देवता इत्येते पक्षाः । किं तावत्प्राप्तम् । प्रजापतिर्देवता । कुतः ? धर्मात् । तस्य ह्युपांशुत्वं धर्मः, 'तस्माद्यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियते' इति । उपांशुयाजनामकत्वाच्च अस्य कर्मण इदमवगम्यते नूनमस्योपांशुत्वं धर्मः इति । आत्मनि साधनेषु च नोच्चैस्त्वेन अस्य संबन्ध इति । तेन प्रजापतिरिति गम्यते । स हि अनुच्चैर्धर्मकः । अन्यस्यां सत्याम् उच्चैस्त्वेन अस्य संबन्धो भवेदिति ।

**देवतायास्त्वनिर्वचनम् , तत्र शब्दस्येह मृदुत्वम् , तस्मादिहाधिकारेण । ५२ ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति प्रजापतिर्देवतेति । तान्त्रीणां मुख्योऽग्निर्देवता स्यात् । प्रजापतेर्देवताया अनिर्वचनं धर्मः तूष्णीम्भावः 'प्रजापतिं मनसा यजेत्' इति । ननु उपांशुत्वं प्रजापतेर्धर्मः 'तस्माद् यत्किञ्चित् प्राजापत्यं क्रियते, उपांश्वेव तत् क्रियते' इति । उच्यते । अनुवादस्वरूपत्वात् अर्थवाद एषः 'प्रजापतिं मनसा यजेत्' इत्यस्य विधेः । इह पुनः उपांशुयाजे तत्र शब्दस्य मृदुत्वम् । तस्मान्न प्रजापतिः, अधिकृतानां मुख्योऽग्निः स्यादिति ।

**विष्णुर्वा स्याद् हौत्राम्नानादमावास्याहविश्च स्याद्, हौत्रस्य तत्र दर्शनात् । ५३ ॥**

**भाष्यम्**— वाशब्दात् पक्षो निवर्त्यते । नैतदेवम् अग्निः स्यादिति । कथं तर्हि ? विष्णुर्देवता स्यात् हौत्राम्नानात् । अमावास्यां प्रकृत्य वैष्णवं हौत्रं समाम्नायते 'इदं विष्णुर्वि चक्रमे, प्र तद्विष्णुः स्तवते वीर्येण' इति । तदेवम् अर्थवद्भवति, यदि विष्णुदेवत्य उपांशुयाजः । एवम् अमावास्यायामाम्नानम् अर्थवद्भवति, यदि अमावास्यायामुपांशुयाजः । तस्मात् अमावास्यायामुपांशुयाजः स्यादिति ।

**अपिवा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगाद् , गुणत्वान्मन्त्रो यथाप्रधानं स्यात् । ५४ ॥**

**भाष्यम्**— यदुक्तं विष्णुर्देवतेति, तत् गृह्यते । न तु अमावास्यायामुपांशुयाज इति । विधायको हि तस्य शब्दः पौर्णमास्याम् 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति । तं मन्त्राम्नानं न शक्नोति अमावास्यामाक्रष्टुम् । उपांशुयाजे मन्त्रस्य विधानात् यत्रोपांशुयाजः, तत्र मन्त्रः इति गम्यते । न यत्र मन्त्रः, तत्रोपांशुयाजः इति । उपांशुयाजस्य हि मन्त्रो विधीयते, न मन्त्रस्य उपांशुयाजः ।

**आनन्तर्यं च सांनाय्यस्य पुरोडाशेन दर्शयत्यमावास्याविकारे । ५५ ॥**

**भाष्यम्**— इतश्च नामावास्यायामुपांशुयाजः । अमावास्याविकारे हि साकम्प्रस्थायीये सांनाय्यस्य



आनन्तर्यं पुरोडाशेन दृश्यते । कथम् ? 'आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन अग्नीधे स्रुचौ प्रदाय सह कुम्भीभिः अभिक्रामन् आह' इति आग्नेयादानन्तर्यं सांनाय्यस्य दर्शयति, नोपांशुयाजस्य । तस्मात् नामावास्यायामुपांशुयाज इति ।

**अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते । ५६ ॥**

**भाष्यम्**-- तुशब्दः पक्षं व्यावर्तयति । नैतदेवम्, पौर्णमास्यामेव उपांशुयाज इति । उभयत्र स्यात्, देवताविकल्पश्च । कुतः ? अविशेषेण हि उपांशुयाजः श्रूयते, 'उपांशुयाजमन्तरा यजति' इति । यदेतत्, 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति देवताविधानमेतत् पौर्णमास्याम् । तस्मादग्नीषोमदेवत्यः पौर्णमास्यामुपांशुयाजः । मन्त्राम्नानात् वैष्णवोऽमावास्यायामिति देवताविकल्पः स्यात् ।

**प्रतिषिध्य विधानाद्वा विष्णुः समानदेशः स्यात् । ५७ ॥**

**भाष्यम्**— न चैतदस्ति, यदुक्तम् उभयत्रोपांशुयाजो देवताविकल्पश्चेति । किं तर्हि ? पौर्णमास्यामेवोपांशुयाजः, तत्रैव च विष्ण्वाद्या देवता इति । कुतः ? प्रतिषिध्य विधानात् । किमिदं प्रतिषिध्य विधानादिति । अमावास्यां वर्जयित्वा पौर्णमास्यां विधानादिति । कथम् ? 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति प्रकृत्य समाम्नायते, 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति' इति । पौर्णमास्यामिति गम्यते । तत्रैव चेदं वचनम्, 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तत्र पौर्णमास्यामेवोपांशुयाजः । तत्रैव च विष्ण्वाद्या देवता इति ।

**तथा चान्यार्थदर्शनम् । ५८ ॥**

**भाष्यम्**-- इतश्च नामावास्यायामुपांशुयाजः । कुतः ? अन्यार्थोऽपि एतमर्थं दर्शयति । कथम् ? चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायामिति । इतरथा अमावास्यायामपि चतुर्दशाहुतयो भवेयुः, त्रयोदशेति नोपपद्यते । तस्मान्नामावास्यायामुपांशुयाज इति ।

**न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासंबन्धात् । ५९ ॥**

**भाष्यम्**—इतश्च नामावास्यायाम् । नहि सकृच्छ्रूयमाणमनङ्गम् उभयत्र भवति । अङ्गं हि प्रधानार्थत्वादुभयत्र स्यात् । प्रधानं चेदं नाङ्गम् । तस्मात् पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत्, असंबन्धात् । नहि प्रधानं प्रधानेन, अङ्गमङ्गेन संबन्धं यातीति ।

**गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति । ६० ॥**

**भाष्यम्**—गुणानां च परार्थत्वात् प्रधानेषु प्रवृत्तौ विधिलिङ्गानि दर्शयति । न प्रधानानाम्, अपरार्थत्वात् । कथम् ? 'अप्सुमन्तावाज्यभागौ यजति' इति, 'एकादश प्रयाजान् यजति, एकादशानुयाजान्' इति । तस्मादपि उपांशुयाजो नामावास्यायामिति ।

**विकारे चाश्रुतित्वात् । ६१ ॥**

**भाष्यम्**— अमावास्याविकारे च साकम्प्रस्थायीये उपांशुयाजो न श्रूयते । कथम् ? 'आज्यभागाभ्यां प्रचर्य आग्नेयेन च पुरोडाशेन अग्नीधे स्रुचौ प्रदाय, सह कुम्भीभिरभिक्रामन्नाह' इति आग्नेयादनन्तरं सांनाय्यं दर्शयति, नोपांशुयाजम् । तस्मादपि नामावास्यायामुपांशुयाज इति ।

शा— ( सिद्धान्तमाह– ) '**विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद् विकल्पिताः । न तु कालद्वये यागः पौर्णमास्यां तु वाक्यतः ॥**' ये तु आश्वलायनाः कालविधिमनिच्छन्तः पर्वद्वयेऽपि उपांशुयाजमाहुः, ते कथमिव 'त्रयोदशामावास्यायाम्' इति लिङ्गं समर्थयेरन् । कालविध्यभावे च पौर्णमासीवाक्येन अनुवादासंभवात् पूर्णमासशब्देनापि न फले विनियुज्येत इति प्राधान्यमुपांशुयाजस्य न स्यात्, आज्यभागादिवत् अङ्गता स्यात्, इत्यास्तां तावत् । तस्मात् पौर्णमासीकालस्य वाचनिकत्वात् प्रधानानुवर्तित्वाच्च देवतानां तिसृणामपि तत्रैव विकल्पः ।

सोम-- पूर्वसिद्धार्थे विशेषविचारात् एकविषयत्वं संगतिः ।

**वि**--( अत्र ५१-५६ सूत्रैः सप्तदशमधिकरणं स्वीकृतम् । तदित्थम् । ) 'कोऽपि देवस्ताग्निकेषु नियतो वा तदापि किम् । प्रजापतिरुताग्निः स्यादग्नीषोमावुताथवा ॥ विष्णुर्यद्वाऽग्निमुत्सृज्य विकल्पं देवतात्रयम् । , कोऽप्यत्रानियमात्, मैवमुपांशुत्वादियन्त्रणात् ॥ प्रजापतिरुपांशुत्वान्न तूष्णीम्भावयोगतः । अग्निर्मुख्यत्वतो मैवं तद्याज्यादेरपाठतः ॥ अग्नीषोमौ तदुक्तेर्नो तत्र कालविधानतः । विष्णुर्याज्यादितस्तन्न प्राजापत्योक्तिबाधनात् ॥ याज्यात्रैविध्यतः प्राप्ता विकल्प्यन्तेऽत्र देवताः । विधिशेषार्थवादेऽपि प्राप्तं त्रयमनूद्यते ॥ '

( अथ ५७-६१ सूत्रैः अष्टादशमधिकरणम् । तदित्थम् । ) ' दर्शादिर्वा तस्य कालो दर्शे एवान्य एव वा । , द्विपुरोडाशसांनिध्यादाद्यो दर्शेऽग्नितोऽग्रतः ॥ विष्णुयाज्योक्तितो युक्तो मध्यमः, पूर्णिमाविधेः । स एव कालो याज्याया उत्कर्षः पूर्णिमादिने ॥ '

**भाट्टे** तु इदमधिकरणं पूर्वाधिकरणेनैकीकृतम् । इदं च ' उपांशुयाजस्य दर्शपूर्णमासतन्त्रगत० ' इति विन्दौ एव द्रष्टव्यम् । के.

**मण्डन**--' पौर्णमास्यां तु सा भवेत् । '

**शंकर**--' पौर्णमास्यां तथैव च । '

* **उपांशुयाजक्रमे** वैष्णवप्राजापत्याग्नीषोमीयाणि याज्यापुरोऽनुवाक्यायुगलानि आम्नायन्ते । तैश्च तुल्यार्थत्वाद् विकल्पमानैः वैकल्पिक्यः एव देवताः प्राप्यन्ते । **वा.**२।२।४।१० पृ.४९५. (तत्र 'इदं विष्णुः, प्र तद्विष्णुः' इति वैष्णवम् । ' प्रजापते न त्वत्, स वेद पुत्रः' इति प्राजापत्यम् । 'आऽन्यं दिवः, अग्नीषोमा यो अद्य वाम्' इत्यग्नीषोमीयम् । **सोम.** १०।८।१७. * **उपांशुयाजगतविष्णुदेवताकयाज्याऽनुवाक्यायुगलस्य** दर्शयाज्याकाण्डात् उत्कर्षः कर्तव्यो दर्शे उपांशुयाजाभावात् । ( दर्शेऽपि उपांशुयाजो वैकल्पिकः इति भाट्ट. । ) **वि.** १०।८।१८

**उपांशुयाजद्रव्यादाज्यात् स्विष्टकृदिडं नावदातव्यम् । स्विष्टकृदादिशेषकार्यं न ध्रौवाज्यात् ॥**

**आज्याच्च सर्वसंयोगात् । ३।५।१।१ ॥**

**भाष्यम्**— स्तो दर्शपूर्णमासौ । तत्र श्रूयते 'उत्तरार्धात् स्विष्टकृते समवद्यति ' इति । तथा, ' इडामुपह्वयति ' इति । तथा अन्यानि प्राशित्रावदानादीनि शेषकार्याणि । तत्र संदेहः किमाज्यादुपांशुयाजद्रव्यात् स्विष्टकृदिडमवदातव्यम्, उत नेति । किं प्राप्तम् ? अवदातव्यमिति । कुतः ? सर्वसंयोगात् । साधारणप्रकरणसमाम्नानात् सर्वेषां शेषकार्याणि । अपिच सर्वसंयोगो भवति, ' सर्वेभ्यो हविर्भ्यः समवद्यति ' इति । तस्मादाज्यादपि शेषकार्याणि क्रियन्ते ।

**वा**— ' सर्वेभ्यो वा कारणाविशेषात् ' ३।५।१ इत्यस्य अतिप्रसक्तस्य अपवादः क्रियते । तमेव तावत् पूर्वं पक्षं स्मारयति । तथा च ' सर्वेभ्यो हविर्भ्यः ' इत्यनुवाद उपपद्यते । निःशेषहविर्विषयत्वात् ।

**कारणाच्च । २ ॥**

**भाष्यम्**— कारणं श्रूयते ' देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीद्वरं वृणै भागो मेऽस्त्विति, वृणीष्वेत्यब्रुवन्, सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यात् ' इति । तुल्यं कारणम् अन्येषां आज्यस्य च अर्थवादे संकीर्त्यते । तस्मादपि आज्यादवदातव्यमिति ।

**वा**— पुराकल्पे च यत् कारणं स्विष्टकृदर्थे अवदाने संकीर्तितम्, तदाज्येऽपि अविशिष्टम् । यत् देवेभ्यो हविरसौ वहति, तस्य तेन भागः प्रार्थितः । आज्यमपि च उपांशुयाजदेवताभ्यः तेनावश्यं वोढव्यम् । अतश्च ततोऽप्यस्य भागेन भवितव्यम् ।

**एकस्मिन् समवत्तशब्दात् । ३ ॥**

**भाष्यम्**--- आदित्ये ( अदितिदेवताके ) चरौ प्रायणीये श्रूयते, ' अग्नये स्विष्टकृते समवद्यति ' इति । आज्यादेकस्माच्च हविषोऽवद्यतीति, मिश्रस्यान्येन हविषा समवद्यतीति । यदि च आज्यादपि स्विष्टकृते अवदीयेत, ततः चोदकेन प्रायणीये आज्यावदाने क्रियमाणे समवद्यति इत्युपपद्यते । इतरथा चरोरेकस्मात् अवद्यतीत्यभविष्यत् ।

**वा**--- एकस्मिन् इति कस्मिंश्चित् कर्मणीत्यर्थः । अथवा युष्मदभिप्रायेण एकस्मिन् हविषि स्विष्टकृति अवदीयमाने सति समवत्तशब्दः अन्यसहितात् अवदीयमानवचनो नावकल्पेत । मत्पक्षे तु आज्यमपि तत्रावदीयते, इति अवकल्पिष्यते । क्व पुनरिदं श्रूयते ? तदभिधीयते ' आदित्यः प्रायणीयः पयसि चरुः ' इत्येको यागश्चोदितः । पुनस्तत्रैवोक्तम् ' आज्यस्यैनं चरुमभिपूर्य आज्यभागाः पथ्यादयश्चतस्रो देवता यष्टव्याः' इति ( अर्थतः श्रुत्यनुवादोऽयम् )। ते च द्रव्यसामान्यात् उपांशुयाजविकाराः चत्वारोऽपि यागाः, आदित्यश्चरुः ( अदितेश्चरुः ) आग्नेयविकारः । तत्र 'अग्नये स्विष्टकृते समवद्यति ' इति श्रूयते । तत् यदि चरोरेकस्य अतिदेशेन स्विष्टकृत् प्राप्तः, ततः अवद्यति इत्येव स्यात् ( न समवद्यति इति ) । यदा तु प्रकृतौ आज्यादपि उपांशुयाजद्रव्यात् स्विष्टकृत्, तदा अत्रापि यष्टव्यः, इत्युभयोः चर्वाज्ययोरवदाने समवत्तशब्दः समर्थितो भवति । तस्मादपि सन्ति आज्ये शेषकार्याणि इति । ( एकस्मादवदानेऽपि अवत्तशब्दः, समवत्तशब्दस्तु अनेकेभ्योऽवदाने एव प्रयुज्यते ) ।



**आज्ये च दर्शनात् स्विष्टकृदर्थवादस्य । ४ ॥**

**भाष्यम्**— ध्रौवे चाज्ये स्विष्टकृदर्थवादो भवति, 'अवदायावदाय ध्रुवां प्रत्यभिघारयति । न हि ततः परामाहुतिं यक्ष्यन् भवति ' इति प्रत्यभिघारणस्य एतत् प्रयोजनं दर्शयति, ततः परामाहुतिं होष्यति, इति । सौविष्टकृते अवत्ते ततः परा आहुतिर्नास्तीति न प्रत्यभिघार्येत । स्विष्टकृदर्थे ध्रुवायां भवति प्रत्यभिघारणमिति दर्शयति ।

**वा**-- ' अवदायावदाय ध्रुवां प्रत्यभिघारयति, स्विष्टकृतेऽवदाय न प्रत्यभिघारयति ' इति ध्रुवात एव अवदायेति प्रतिशब्दात् अदृष्टार्थत्वाच्च अवगम्यते । यदपि स्विष्टकृते अवदीयते, तथापि ध्रुवात एव, येन तदर्थे अवत्ते ध्रुवायाः प्रत्यभिघारणं प्रतिषिध्यते । ' न हि ततः परामाहुतिम् ' इति हेतुवचनात् पूर्वाणि प्रत्यभिघारणानि स्विष्टकृदर्थानि इति दर्शयति । ततश्च 'तत्सामान्यात् इतरेषु तथात्वम् ' ( १।२।२।२३ ) इति सर्वैः शेषकार्यैर्भवितव्यम् ।

**अशेषत्वात्तु नैवं स्यात्, सर्वादानादशेषता । ५ ॥**

**भाष्यम्**-- नैवं ध्रौवाज्यात् स्विष्टकृदिडम् अवदातव्यमिति । कस्मात् ? अशेषत्वात् । कुतो नास्य शेषः ? सर्वादानात् । ( सर्वस्य आदानात् ) ।

**वा**-- सति प्रधानद्रव्यशेषे शेषकार्याणि क्रियन्ते । न च उपांशुयाजहविःशेषो विद्यते । सर्वादानात् । कथं सर्वादानमिति चेत्, तत् उत्तरसूत्रेणाह ।

**साधारण्यान्न ध्रुवायां स्यात् । ६ ॥**

**भाष्यम्**— ननु उपांशुयाजार्थे गृहीते यत् ध्रुवायां शिष्टम्, तत् शेषभूतम् । नैतत्, साधारणं हि तत् उपांशुयाजाय अन्येभ्यश्च प्रयोजनेभ्यः । यावत् आज्येन यष्टव्यम्, तत्तत् आज्यं प्रयोजयति । यस्ययस्य आज्यम्, तस्यतस्य एवं ग्रहीतव्यं संस्कर्तव्यं चेति । तस्मात् साधारणं ध्रौवमाज्यम् । दर्शयति च ' सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम् ' इति । किमतो यद्येवमिति ? यत् साधारणमुपांशुयाजाय अवत्तं ध्रुवायामाज्यम्, तेनान्यानि प्रयोजनानि कार्याणि, न तु तत् प्रतिपाद्यम्, यद्धि कृतप्रयोजनम् आकीर्णकरमवतिष्ठते, तत् प्रतिपादयितव्यमिति । क्व चिच्च यत् प्रतिपादयितव्यम्, तदेवं प्रतिपादयितव्यम् । तस्मान्न ध्रुवायामुपांशुयाजार्थस्य सौविष्टकृतस्य कश्चिच्छेषः प्रतिपादनीयः । यथा यत्रैकस्यामुखायां बहूनामोदनः शृतो भवति, तत्रैकस्मिन् भुक्तवति, न तस्य शिष्टं भृत्येभ्यः प्रतिपादनीयम्, उखायामस्तीति गम्यते । प्रयोजनवद्धि तत् । एवमुपांशुयाजाज्येऽपि द्रष्टव्यमिति ।

**वा**— ध्रुवायां तावन्नोपांशुयाजस्य शेषो विद्यते । ध्रौवस्य असंयुक्तोत्पत्तेः सर्वाज्यकार्यार्थमादानात्, ' सर्वस्मै वा एतद्यज्ञाय गृह्यते ' इति वाक्यात् । तैत्तिरीयाणां तु कतिपयोपस्तरणाभिघारणादिकार्यानुक्रमणात् तन्मध्ये चोपांशुयाजस्यापि संकीर्तनात् तावतां साधारणम् ' उपस्तृणन्नभिघारयन्नाज्यस्य यजन् ' इति वाक्याद्गम्यते । साधारणेषु च परिषद्वनोपहारगोष्ठीभोजनादिषु इयं स्थितिः । यदेकस्य भागे अपयातिते तावन्मात्रमेव तस्य । अवशिष्टं तु तत्समानभाजाम् अवधार्यमाणं न पूर्वशेष इत्येवम् अकृतार्थत्वेन प्रतिपत्तिमपेक्षते । यदा तु सर्वैः समानभाग्भिर्यथायोगमुद्धृता भागा भवन्ति, तदा तस्य साधारण्यानुगुणैव प्रतिपत्त्यपेक्षा भवति । तदिह उपांशुयाजार्थे भागे अपनीते, न कश्चिदपि तदीयः शेषो

विद्यते। शिष्टस्य परस्ताद्ध्राव्युपस्तरणाभिघारणादिगृहीतत्वेन अकृतार्थत्वात्। कृतार्थप्रतिपत्तयश्च शेषकार्याणि न स्वयमेव अकृतप्रयोजनमपि द्रव्यं प्रयुञ्जते। तस्मान्न ध्रुवायां शेषोऽस्ति। यस्तु समस्तकार्यनिर्वृत्त्युत्तरकालं साधारणः शेषो भविष्यति, तस्य समिष्टयजुराख्यं प्रतिपत्त्यन्तरमाम्नातम्। यदा तु इदमपि उपस्तरणादिवदेव अर्थकर्म अवधार्यते, तदा सुतरां शेषाभावः। शक्यं तु तैत्तिरीयवाक्यापेक्षया उत्पत्तौ अन्यसंयोगात् समिष्टयजुषश्च जुहोतिचोदितत्वेन अयज्ञत्वात् प्रतिपत्तित्वमवधारयितुम्। निःशेषत्वेन चासौ अवस्थितेति शेषकार्यान्तराणि न्नाघते। तस्मात् ध्रुवायां तावन्नास्ति शेषः।

**अवत्तत्वाच्च जुह्वाम्, तस्य च होमसंयोगात्। ७॥**

**भाष्यम्**— आह। जुह्वां तर्हि आज्यस्य शेषो भविष्यति चमसवत्। यथा चमसेषु ग्रहेषु च चोदनया इति। तत्र प्रत्याह। ध्रुवायां तावन्नास्ति शेषः, उपांशुयाजस्य साधारणत्वात् इत्युक्तम्। अथ कस्मान्न जुह्वां यच्छिष्टं तेन शेषकार्यम्, यथा होमार्थे चमसे शेषः इति। उच्यते। यज्जुह्वामवत्तं तत्सर्वं होमेन संबद्धम्, तस्मान्न जुह्वां शेषः।

**वा— तत्र एतत् स्यात्**। यत् केवलोपांशुयाजार्थे जुह्वामवत्तं तस्यैव –ग्रहचमसेष्विव सोमस्य– शेषो भविष्यतीति। **तदनुपपन्नम्**। कुतः? तस्य समस्तस्य 'चतुरवत्तं जुहोति' इति होमसंयोगात्। उक्तं हि एतत् (२।३।७।१८) उपधानार्थे चरौ नान्यत्र श्रुतम्, अन्यत्र विनियोक्तव्यमिति। तस्मात् न जुह्वां शेष उपपद्यते।

**चमसवदिति चेत्। ८॥**

**भाष्यम्**— इति पुनर्यदुक्तम्, तत्परिहर्तव्यम्।

**वा**— अथ यदुक्तं चमसवत् सत्यपि होमसंयोगे शेषो भविष्यतीति। तत् परिहर्तव्यम्।

**न, चोदनाविरोधाद्धविःप्रकल्पनत्वाच्च। ९॥**

**भाष्यम्**—नैतदेवम्। कुतः? चोदनाविरोधात्। 'सोमस्याग्ने वीहीत्यनुवषट्करोति' इति तत्र चोदना। अपिच तत्र 'ऐन्द्रवायवं गृह्णाति' इत्येवमादीनि ग्रहणानि न होमसंयुक्तानि, (किन्तु) हविःप्रकल्पनान्येव। इह पुनर्होमसंयोगः, 'चतुर्गृहीतं जुहोति' इति।

**वा**— नैतत् सोमेन तुल्यम्। तत्र हि ग्रहचमसेषु हविःप्रकल्पनमात्रे कृते यथा न सर्वहोमः, तथा 'सोमे अवचनाद्भक्षो न विद्यते' इत्यत्राधिकरणे वक्ष्यामः। तेन चोदनाविरोधं तत्र वक्ष्यमाणं परिहरतां न सर्वहोमो भविष्यति। शेषकार्यान्यार्थदर्शनं च 'सोमस्याग्ने वीहीत्यनुवषट्करोति' इत्यादि, 'सर्वतः परिहारमाश्विनं भक्षयति' इत्यादिचमससमाख्या न च विरोत्स्यते, अन्यथा तद्विरोधः स्यात्। **अथवा** न तत्र असमस्तहोमे सति का चिच्चोदना विरुध्यते इत्यविरोधात् असर्वहोमः, इह तु विरोधः स्यात्। अयमेव चाविरोधो हेतुः, इति सूत्रगमनिका। यथा तु भाष्यकारेण पूर्वं चमसमनुदाहृत्य 'चमसवदिति चेत्' इति सूत्रमुपन्यस्तम्, तथा परिचोदनासूत्रमेव होमसंयोगानैकान्तिकत्वप्रदर्शनार्थं कल्पयित्वा परिहारो वक्तव्यः। तत्र वचनान्तरकृतत्वात् शेषः स्यात्, अत्र 'वचनान्तररहितत्वे सति' इति विशिष्टस्य हेतोः अव्यभिचारात्। **अथवा** 'अवत्तत्वात्तु जुह्वाम्' इत्येतदेव तुशब्दस्थाने चशब्दं कृत्वा पूर्वपक्षवादिप्रत्यवस्थानं व्याचक्षाणैः चमसो दृष्टान्तो दातव्यः! परं च अनुभाषणसूत्रं वक्तव्यम्। एतदुक्तं भवति 'अवत्तत्वात्तु जुह्वां चमसवत् शेषोऽस्तु' (इति)। तस्योत्तरम् 'तस्य च होमसंयोगात्' इति गतार्थम्।

**उत्पन्नाधिकारात् सति सर्ववचनम्। १०॥**

**भाष्यम्**—अथ यदुक्तम्, 'सर्वेभ्यो हविर्भ्यः समवद्यति' इति। उच्यते। उत्पन्नं शेषमधिकृत्य एतदुच्यते, नाविशेषणम्। तस्माद्ये इह शेषाः, तेभ्यः सर्वेभ्यः इति। यथा 'सर्व ओदनो भुक्तः' 'सर्वे ब्राह्मणा भुक्तवन्तः' इति प्रकृतापेक्षः सर्वशब्दः, एवमत्रापीति।

**वा**—यस्तु सर्वेभ्यः इति प्राप्त्यपेक्षः अनुवादः, तत्र यादृशं वयमिह सर्वत्वं पश्यामः, तादृशस्यैवानुवाद इति मन्यामहे। सर्वत्रैव च परमसर्वेण व्यवहाराभावात् अधिकृतापेक्षः सर्वशब्दो गृह्यते, इति न विरोधः। तेन



येषां शेषसद्भावेन प्रतिपत्तिकार्याधिकारोऽस्ति, ये वा विद्यमानत्वेन प्रकृतशेषाः, तेभ्यः सर्वेभ्य इति गम्यते।

**जातिविशेषात् परम्। ११॥**

**भाष्यम्**—अथ यदुक्तम्, प्रायणीये केवले चरौ समवत्तशब्दो नावकल्पते। यदि न तत्र चोदकेन आज्यादपि स्विष्टकृदवदानमिति। उच्यते। असत्यपि आज्यात् शेषकार्ये समवत्तशब्दो जातिविशेषापेक्ष उपपद्यते, ओदनजातिम् आज्यजातिं चापेक्ष्य अनुवादो हि सः। यथासंभवं चानुवादः कल्प्येत।

**वा**— पूर्ववदेव समवद्यतेः अनुवादत्वात् यथासंभवम् आज्येऽपि इति चरौ अवदीयमाने सौक्ष्म्यात् तदवयवस्य अचिकीर्षितमपि अवदानं बलात् भवति। तदेतत् संसृष्टद्रव्यजातिद्वयमपेक्ष्य संशब्दः अनुवादः।

**अन्त्यमरेकार्थे। १२॥**

**भाष्यम्**— अथ यदुक्तम्, स्विष्टकृदर्थे ध्रुवायामभिघारणं दर्शयतीति। न तत् स्विष्टकृदर्थम्, शेषाभावादित्युक्तम्। तस्मादयं तस्यार्थः, न हि तत आहुतिं यक्ष्यन् भवति, इति न रेक्ष्यते। ध्रुवातो यदि आहुतिरपरा होतव्या भवेत्, न च प्रत्यभिघार्येत, ध्रुवा ततः किल रिच्येत। न रेक्ष्यते। अपरस्या आहुतेरभावात् किं प्रत्यभिघारणेनेति।

**वा**— अन्त्यं यत्तु कारणं स्विष्टकृदर्थः अर्थवादः इत्युक्तम्, तत् अस्मत्पक्षेऽपि उपपद्यते एव, अरेकार्थत्वात्। 'स्विष्टकृतेऽवदाय' इति तावत् यतः तस्यावदानं भवति। यादृशं वा संभवति, तादृशम् इति गम्यते। पुरोडाशादिभ्यश्च तस्यावदानम्, ध्रुवातश्च उपस्तरणाभिघारणे। न चतुर्थ्यन्तेन ध्रौवमेव अवदानं संबध्यते। सा हि देवताऽर्थद्रव्यान्तरावदानेऽपि उपस्तरणाभिघारणोपयोगित्वात् प्रत्यभिघारणमपेक्षते एव। तेन प्राक् स्विष्टकृतः परस्तादपि ध्रौवोपयोगोऽस्ति, इति अवत्तेऽवत्ते प्रतिपूरयितव्या। ततः परं तु न किञ्चित् कार्यमिति नार्थः प्रतिपूरणेन। नहि एतत् प्रतिपूरणं पूर्वस्यावदानस्य संस्कारकम्, अदृष्टार्थत्वप्रसङ्गात्। अरेकस्तु उत्तरकार्यार्थः प्रत्यक्षः। तस्मात् अन्तरेणापि स्विष्टकृदर्थत्वं तदवधिरेकार्थत्वेन उपपन्नः अर्थवादः।

**सोम**— शेषकार्याणि सर्वेभ्यः कर्तव्यानि इति पूर्वपादोक्तस्य अत्रापवादः प्राधान्येन प्रतिपाद्यते, इति पादान्तरत्वं आनन्तर्यं **चेत्येके**। सर्वप्रदानाधिकरणे सामान्यतः शेषसद्भावे उक्ते तद्विशेषचिन्तनात् पादान्तरत्वमानन्तर्यं **चेत्यन्ये**। **सूत्रार्थस्तु**— आज्यादपि शेषकार्याणि कर्तव्यानि, तेषामविशेषेण सर्वप्रदानशेषसंयोगादिति।

**वि**— 'उपांशुयाजशेषेण शेषकार्यं भवेन्न वा।, भवेद्धविर्भ्यः सर्वेभ्य इत्युक्त्या प्रापितत्वतः॥, हुताज्यद्रव्यशेषस्तु भाव्युपस्तरणादिकृत्। अतो न प्रतिपत्त्यर्हः शेषकार्यं ततः कथम्?॥' नास्तीत्यर्थः।

**भाट्ट**— उपांशुयाजप्रयाजाज्यभागानुयाजादिद्रव्याणां जौहवादीनां स्विष्टकृदिडादीनि शेषकार्याणि कर्तव्यानि, उत न इति चिन्तायाम्, 'उत्तरार्धात् सकृत्सकृत्समवद्यति' 'सर्वेभ्यो हविर्भ्यः समवद्यति' इत्यादिवचनेभ्यः 'वेद्यां हवींष्यासादयति' इतिवदङ्गप्रधानसाधारणहविरर्थत्वप्रतीतेः कर्तव्यानि। **इति प्राप्ते**, यत्तावदेषां तत्तद्यागेषु असाधारणं प्रयाजानुयाजेषु जौहवाद्येकदेशरूपम् आज्यभागोपांशुयाजेषु च वाचनिकं ध्रौवापादानकं चतुर्गृहीतं, तस्य तत्तद्यज्याक्षिप्तप्रक्षेपरूपविशेषप्रतिपत्तिसत्त्वात्, 'चतुर्गृहीतं जुहोति' इति भाष्यकारोदाहृतोपांशुयाजावान्तरप्रकरणस्थवाक्यादेव तत्सत्त्वाद्वा न सामान्यविहितविद्यमानशेषोपक्षीणस्विष्टकृदादिप्रतिपत्तिग्राहकता। अत एव यत्र प्रयाजशेषाभिघारणादौ विशिष्यैव तद्विधानम्, तत्र अगत्या अवयवशस्तयोः समुच्चयः। न च एवमाग्नेयस्यापि विशिष्य चतुर्धाकरणभक्षणरूपप्रतिपत्तिविधानात् स्विष्टकृदाद्यकरणापत्तिः, तत्र भक्षणस्य कल्प्यत्वेन तस्यापि विलम्बोपस्थितिकत्वेन तुल्यत्वात्। नापि तत्तदपादानभूतध्रौवाज्यात् स्थाल्याज्याद्वा तत्करणम्, तयोः 'सर्वस्मै वा एतत्' इत्यादिवाक्यात् यज्ञादिरूपकरिष्यमाणकार्यार्थत्वस्यापि अवश्यम्भावेन आकीर्णकरत्वाभावात्। न च, आकीर्णकरत्वाभावेऽपि आज्येडावत् मध्ये एव प्रतिपत्तिः, तत्राग्रे स्थाल्याज्यस्य पिष्टलेपफलीकरणादौ उपयोगसत्त्वेऽपि वचनादेव पत्नीसंयाजावयवशेषस्यैव प्रतिपत्त्युपपत्तावपि प्रकृते तादृशवचनाभावेन साधारण-

द्रव्यस्य प्रतिपत्त्ययोग्यत्वात् । न च सर्वकार्यान्ते क्रमं बाधित्वाऽपि प्रयोजनवशेन तत्करणम्, समिद्य्यजुरादिविशिष्टप्रतिपत्त्यन्तरविधानेन तत्र तदप्राप्तेः । अतः शेषाभावान्न शेषकार्याणि ।

**मण्डन**—— ‘ आज्यान्न शेषकार्याणि । ’

**शंकर**—— ‘शेषकार्ये न चाज्यतः।’

* **उपांशुयाजधर्माणामतिदेशः** चित्रेष्टौ मधूदकयोः । **भा.** ८।१।१९।४०–४३.

**उपांशुयाजपत्नीसंयाजेषु देवतापदयाज्यानुवाक्ययोरेव उपांशुत्वम् ॥**

पत्नीसंयाजे उपांशुयाजे च ‘ उपांशु यजति ’ इति विहितमुपांशुत्वं साक्षाद्यागे असंभवात् तदङ्गमन्त्रेषु अविशेषात् सर्वेषु निविशते । इति **प्राप्ते**, प्रैषार्थादिप्रतिपत्त्यर्थत्वेन आश्रुतप्रत्याश्रुतप्रणववषट्कारादिभिन्नमन्त्रेष्वेव वस्तुसामर्थ्यादुपांशुत्वम् । **संकर्ष.** ४।३।१५.

* ‘ **उपांशुयाजमन्तरा** यजति ’ इति यजति पदं विधायकम्, न तु अनुवादकं दर्शपूर्णमासयोः । **वि.** २।२।४. * ‘ उपांशुयाजमन्तरा यजतीति ’ इति सूत्रेण ( १०।८।१५।४७ ) हविर्विशेषाश्रवणेन उपांशुयाजे द्रव्यानियमं पूर्वपक्षयित्वा ‘ ध्रौवाद्वा सर्वसंयोगात् ’ ( ४८ ) इत्यनेन अविहितद्रव्यकेषु ध्रौवविधिः वक्ष्यते । **सु. पृ.** ७२२.

**उपांशुयाजमन्तरायजतीति हविर्लिङ्गाश्रुतित्वात् यथाकामी प्रतीयेत । १०।८।१५।४७ ॥**

दर्शपूर्णमासयोः ‘ उपांशुयाजमन्तरा यजति ’ इति श्रूयते, तत्र हविर्लिङ्गाश्रुतित्वात्, हविर्विशेषस्य किञ्चित् लिङ्गं न श्रूयते । हविर्लिङ्गस्य श्रुतिर्यस्मिन् सः हविर्लिङ्गश्रुतिः । न हविर्लिङ्गश्रुतिः हविर्लिङ्गाश्रुतिः उपांशुयाजः । तादृशत्वात् । तस्मात् ऐच्छिकं किञ्चित् द्रव्यं ग्राह्यम् । ननु ‘ आज्यस्य **नौ** उपांशु पौर्णमास्यां यजन् ’ इति श्रवणात् आज्यं हविर्निश्चेतुं शक्यम् । सत्यम्, तथापि कीदृशम् आज्यम् इति न ज्ञायते । इति यथाकामी स्यात् इति प्रतीयेत । यथा कामयते तथा, यत् किञ्चिदाज्यं प्रतीयेत । इति पूर्वः पक्षः ।

**ध्रौवाद्वा सर्वसंयोगात् । ४८ ॥**

वाशब्दः पूर्वपक्षनिरासाय । उपांशुयाजः ध्रौवात् ध्रुवायां विद्यमानात् आज्यात् प्रतीयते न यतःकुतश्चित् । सर्वसंयोगात् । ‘सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्’ इति सर्वैरेव यागैः ध्रौवाज्यस्य संयोगात् संयोगस्य श्रुतत्वात् । तस्मात् ध्रौवाज्यात् उपांशुयाजः इति सिद्धान्तः । **के.**

* **उपांशुयाजविधिः** एकपुरोडाशायामपि पौर्णमास्याम् । **भा.** १०।८।१८।६२–७१.

* **उपांशुयाजशब्दः** अव्युत्पन्नः । चजोः कु घिण्यतोरिति कुत्वेन भवितव्यम् । **भा.** २।२।४।९. * **उपांशुयाजशब्दस्य** नामधेयता वार्तिककारानभिमता । **सु. पृ.** ७४६.

* **उपांशुयाजसत्त्वम्** अमावास्यायामपि सांख्यायनशाखाऽनुरोधेन । **रत्न.** १२।२।७।२२.

* **उपांशुयाजाग्नेयविकृत्योः** आज्यबार्हस्पत्ययोः बार्हस्पत्यौषधधर्माः चोदकवशात् आज्यधर्मेभ्यः पूर्वं कर्तव्याः, न तु प्रयोगविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहात् मुख्यक्रमेण आज्यधर्माणां प्रथमम् अनुष्ठानम् अध्वरकल्पायाम् । क्लृप्तकल्प्ययोः क्लृप्तं बलवत् । **शा.** ५।१।१०. * **उपांशुयाजाघाराग्निहोत्रपशुसोमाविकरणानि** पौर्णमास्यधिकरणोक्तसमुदायानुवादापवादः । **वा.** २।२।४।९. * **उपांशुयाजाज्यनिर्वापात्** पूर्वम् आग्नीषोमीयपुरोडाशनिर्वापः कार्यः दर्शपूर्णमासयोः मुख्यक्रमस्य पाठक्रमात् दुर्बलत्वात् । **भा.** ५।१।८।१५.

* **उपांशुयाजादौ** याज्याऽनुवाक्यासूक्तवाकादिमन्त्रकल्प्यो देवताविधिः विधियुक्तवाक्यान्तरकल्पनात् । **बाल. पृ.** १२. * **उपांशुयाजाद्यर्थहविर्भ्यः** शेषकार्यं नानुष्ठेयम् । **भा.** ३।५।१।१–१२.

**उपांशुयाजाधिकरणम्** । उपांशुयाजमन्तरा यजति इति विधिः, नानुवादः । उपांशुयाजन्यायः ॥

**पौर्णमासीवदुपांशुयाजः स्यात् । २।२।४।९ ॥**

**भाष्यम्**—— ‘जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति ’ इति । ‘विष्णुरुपांशु



यष्टव्योऽजामित्वाय ’ ‘प्रजापतिरुपांशु यष्टव्योऽजामित्वाय ’ ‘ अग्नीषोमावुपांशु यष्टव्यावजामित्वाय ’ इति । तत्र संदेहः ‘ उपांशुयाजमन्तरा यजति ’ इति किं विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचकः, अथवा अपूर्वस्य यागस्येति । तत उच्यते **पौर्णमासीवदुपांशुयाजो** भवितुमर्हति । कुतः ? नामसंबन्धात् । नामसंबद्धो हि विशिष्टो यागः श्रूयते उपांशुयाजसंज्ञकः । न च द्रव्यदेवते रूपम्, प्रकृताश्च उपांशुगुणकाः यागा विद्यन्ते । तस्मात् समुदायशब्द इति । ननु उपांशुगुणकं यागान्तरम् उपांशुत्वेन रूपेण रूपवत् विधीयते । ( उत्तरम्— ) नैवंजातीयकः शब्दः उपांशुविशिष्टं यागं शक्नोति वक्तुम् । उपांशुयाग इति हि तस्य वक्ता । ‘ चजोः कु घिण्यतोः’ ( चस्य जस्य च कुत्वं स्यात् घिति ण्यति च प्रत्यये परे । पा० ७।३।५२ ) इति कुत्वेन भवितव्यम् । अव्युत्पन्नः पुनः उपांशुयाजशब्दः । तस्मान्न रूपवत् यागान्तरम् । अथापि नामसंयुक्तं यजतिसामान्यमेव, तथापि अनुपदिष्टदेवताद्रव्यरूपं न यागान्तरं प्रतिपद्येमहि । ननु एवं सति प्रकृतानामपि अवाचकः प्राप्नोति । ( उत्तरम्— ) मा भूत् उपांशुयाजशब्दः, यजतिशब्दो भविष्यति । तथा सति उपांशुयाजशब्देऽपि अनुवादत्वात् अनाज्ञस्येऽपि न दोषः ।

**वा**—— इदानीमधिकरणत्रयेण समुदायानुवादापवादः क्रियते । तत्र ‘ उपांशुयाजमन्तरा यजति ’ इति तावत् सकलः प्रागुक्तो न्यायोऽस्ति । कुतः ? ‘ **यागान् विष्ण्वादिसंयुक्तैर्विहितान् रूपवत्तया । अरूपमन्त्रायुक्तमगत्यैवावलम्बते ॥** ’ तेषु तावत् तव्यप्रत्ययेनैकान्तिको विधिः । तत्र यदीदं यागान्तरं कल्प्यते, ततः प्राप्तं रूपाज्ञानम् अदृष्टान्तरकल्पनं च । किञ्च ‘ **अजामिकरणं चैषु प्रत्येकमवगम्यते । जामिदोषेण चोपांशुयाजोपन्यसनं कृतम् ॥** ’ यथोपक्रममुपसंहारात् जाम्युपन्यासस्य, अजामितायाश्च एकविषयत्वात् एते एव विधयो गम्यन्ते । नहि अन्तरालवाक्ये तादृगर्थवादो विधिर्वा स्पष्टो दृश्यते । समुदायानुवादप्रयोजनं च कथं नाम ‘ उपांशु पौर्णमास्यां यजन् ’ इत्यत्र एकीकृतानां कालसंबन्धे सति सर्वेषां प्राधान्यं स्यात् । **ननु उपांशुगुणकम्** इति । कथं द्रव्यदेवताव्यतिरिक्तं रूपत्वेनोच्यते ? **नैष दोषः** । **सर्वथा** येन यागान्तरात् व्यवच्छिन्नो यागो निरूप्यते, तदेव रूपम् । शक्यते च उपांशुत्वेन अयं व्यवच्छिन्नरूपः प्रत्येतुमिति । अत आह— **नैवंजातीयकः शब्दः ...शक्नोति** इति । यदि हि अवयवार्थभेदेन गुणविधिरयं कल्प्येत, ततो याजशब्दस्य घञन्तत्वात् अकृतकुत्वस्य असाधुत्वं स्यात् । अव्युत्पन्ननामधेयत्वे तु नैष प्रसङ्गः । **ननु एवं सति** इति नामधेयत्वेऽपि अवश्यम् ‘ तत्प्रख्यं चान्यशास्त्रम्’ इत्येवम् ‘विष्णुरुपांशु यष्टव्यः’ इत्यादिभिर्विहितम्, तद्गुणयोगमाश्रित्य प्रसिद्धिरत्रास्या । ततश्च तुल्यो दोष इति । तत् परिहरति **मा भूत् उपांशुयाजशब्दः, यजतिशब्दो भविष्यति** इति । विधौ हि अत्यन्तमाज्ञस्येन कार्यम्, नामधेये तु यजिप्राप्तानुवादरूपेण प्रवर्तमाने किञ्चित्सारूप्यानुगमेऽपि अविरोधः ।

**चोदना वाऽप्रकृतत्वात् । १० ॥**

**भाष्यम्**—— कर्मान्तरस्य वाचकः स्यात् उपांशुयाजं यजतीति । कुतः ? प्रकृतानां यागानामभावात् । न चेत् प्रकृता विद्यन्ते, कस्य समुदायं वक्ष्यति । ननु इदानीमेवोक्तं विष्ण्वादिगुणकाः प्रकृता यागा विद्यन्ते इति । न विद्यन्ते । नहि ते विधयो ‘विष्णुरुपांशु यष्टव्यः’ इत्येवमादयः । अर्थवादा हि ते । कथम् ? अस्मिन् वाक्ये विध्यन्तरस्य भावात् । ‘ उपांशुयाजमन्तरा यजति ’ इत्येतदेतस्मिन् वाक्ये विधीयते । यदीमेऽपि विधीयेरन्, भिद्यते तर्हि वाक्यम् । अपिच यागस्य विष्ण्वादीनां च संबन्धोऽत्र गम्यते वाक्ये, न च यागस्य विधानम् । ननु च ‘ उपांशुयाजमन्तरा यजति ’ इत्यत्रापि अन्तरालसंबन्धोऽवगम्यते । बाढम् । स तु विधीयते उपांशुत्वादिसंबधः । एकं हीदं वाक्यं नानेकं विधातुमर्हति । कथम् ? ‘ जामि वा एतद्यज्ञस्य क्रियते’ इत्येवमुपक्रमम् एतद्वाक्यम् अजामित्वाय इत्येवमन्तम् । तस्य मध्ये समाम्नातं विष्ण्वादिवाक्यम् । तेन संबध्यमानं न वाक्यान्तरं भवितुमर्हति । तस्मात् ‘ विष्णुरुपांशु यष्टव्यः ’ इत्येवमादयो न विधयः, किं तर्हि, अर्थवादाः । कः पुनरर्थवादः ? आग्नेयाग्नीषोमीययोर्निरन्तरं क्रियमाणयोः

जामितादोष उक्तः, तं भिषजितुम् ‘ उपांशुयाजमन्तरा यजति ’ इति विहितम् । कथं तेन भिषजिष्यते ? तस्मिन् क्रियमाणे ज्ञायते एव, यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ वेति । ततश्च व्यवधानात् अजामिता अवगम्यते एव । तेनाजामिताऽर्थवादं वक्ष्यामीति विष्ण्वादिसंबन्धोऽनूद्यते, न तु अन्तरालसंबन्धस्य अन्यत् प्रयोजनमस्ति अतो विधानात् । कथं विष्ण्वाद्यो यष्टव्या इत्यवगम्यते ? यष्टव्यान् अयष्टव्यान् वा विष्ण्वादीन् उपांशुयाजाभिष्टवाय संकीर्तयति इति गम्यते । तत्र केचित् तावदाहुः प्राप्ता एवेति । कुतः ? शाखाऽन्तरे विधानादिति । यद्यपि अप्राप्तिः, तथापि उपांशुत्वसामान्यात् प्रजापतिर्देवता विष्णुश्चेति अनुवादावेव, उपांशुधर्माणौ हि विष्णुप्रजापती । तस्मात् ‘ यत् किञ्चित् प्राजापत्यं यज्ञे क्रियते, तदुपांश्वेव क्रियते ’ इत्येवमादिसंकीर्तनात्, मन्त्रसमाम्नानाच्च विष्णुम् अप्राप्तमपि प्राप्तमिव वदेत् । अग्नीषोमयोस्तु विधायकमुदाह्रियते एव ‘ तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ’ इति । तस्मात् यागान्तरम् ।

वा—कर्मचोदना ‘ उपांशुयाजं यजति ’ इति, न समुदायानुवादः । कुतः ? ‘ **प्रकृतानामसद्भावाद् गम्यते नानुवादता । यागो विष्ण्वादिसंयुक्तैर्नहि वाक्यैर्विधीयते ॥** ’ यथा वैश्वानरवाक्ये द्वादशकपालेन उपक्रमोपसंहाराभ्याम् अष्टत्वादयः एकवाक्यतामापद्यमानाः पृथक् विधित्वं न प्रतिपन्नाः, तथा अत्रापि ‘ जामि वा एतत् ’ इति विध्युपक्रमे दोषसंकीर्तनं कस्य चित् विधीयमानस्य आकाङ्क्षितम्, तदपनयनद्वारेण स्तुत्यर्थमिति गम्यते । जामिता च पुरोडाशयोरन्तराले कस्मिंश्चित् अविधीयमाने भवति, इति यत् अन्तरालकालसंयोगेन विधास्यते, तस्य अजामिकरत्वं प्रशंसा, इत्यवधारणात् ‘ उपांशुयाजमन्तरा ’ इत्यस्य स्तुत्यर्हत्वेन ज्ञानात् विष्ण्वादियुक्तेषु च तदपेक्षिताजामिरूपस्तुतिसंकीर्तनात् अनपेक्षितं विधित्वमनादृत्य स्तुत्यर्थता गृह्यते । नहि विष्ण्वादिसंयुक्तेषु अन्तरालकालसंयोगोऽस्ति, येन उपक्रमोक्तया जामितया तद्विधिः तद्गतं वा जामित्वं स्तावकतया अपेक्षितं संबध्येत । अन्तरालकालसंयुक्तस्य पुनः विस्पष्टजाम्युपक्रमवाक्यविधानार्हत्वात् तद्वशेन च इतरेषां स्तावकत्वोपयोगे सति न अनेकादृष्टकल्पनाऽनुबन्धिविध्यभ्युपगमो युक्तः । किञ्च ‘ **विष्ण्वादियागसंबन्धे कृते यागोऽर्थतो भवेत् । उपसर्जनभूतस्य श्रौते चैतन्न युज्यते ॥** ’ कर्मोत्पन्नस्तव्यप्रत्ययः यागोपसर्जनविष्ण्वादिप्रधानः । तत्र अर्थात् निष्कृष्य यागकर्तव्यता कल्पनीया, न चासौ युज्यते, ‘ अन्तरा यजति ’ इत्यनेन प्रत्यक्षप्रधानोपदेशोपपत्तेः । तत्र यद्यपि तावत् विष्ण्वादियुक्तानि पृथक् वाक्यानि भवेयुः, तथापि तस्मिन्नेव अन्तरालविहिते यागे देवतां विदध्युः, न कर्मान्तराणि । न च देवताऽपि एवंविधैः सम्यगभिधीयते । नहि एते संप्रदानं देवतात्वं वा वदन्ति, किं तर्हि ? कर्मोपसर्जनद्रव्यवचनाः । तत्र कर्मशक्तिं प्रधानीकृत्य द्वितीयातुल्यार्थता तावत् लब्धव्या । न च तावता देवतात्वं सिध्यति । त्यागार्थत्वात् हि यजतेः परमार्थतः त्यज्यमानं द्रव्यमेव कर्म भवति । ततः तेन आप्यमाना देवता पश्चात् कर्म संपद्यते । तत्र द्विकर्मलक्षणप्रसक्तौ ‘ समाप्तिः शब्दार्थः ’ इत्यनेन ( ‘ प्रक्रमात्तु नियम्येत ’ ६।२।३।१४ अत्रत्यभाष्योक्तेन ) न्यायेन पूर्वं त्यज्यमानकर्मतिरोधानेन परपूज्यमानकर्माविर्भावात् एककर्मत्वावधारणेन संप्रदानत्वशक्तिम् अभिभूयैव निर्देशो भवति ‘ विष्णुं यजति ’ ‘ विष्णुर्यष्टव्यः ’ इति, न तु तत्र देवतात्वमभिधीयते, किं तर्हि ? कर्मत्वान्यथाऽनुपपत्तिलक्षणयैव गम्यमानं निश्चीयते । ननु च यजतेः देवतापूजात्मकत्वात् तदीयकर्मदेवताशब्दौ पर्यायौ एव, इति न वक्तव्यम् ‘ लक्षणया गम्यते ’ इति । नैष साक्षात् देवतापूजावचनः । कुतः ? ‘ **स्तुतेरपि हि पूजात्वात् ज्ञायते यजिवाच्यता । न वाऽतिथिवदेतस्याः पूज्यतेति च वक्ष्यते** ( देवताऽधिकरणे ) ॥ ’ नहि देवताः स्तुवानः तत्पूजाव्यापृतोऽपि सन् कश्चित् ‘ यजते ’ इत्युच्यते । रूपासमवायित्वाच्च नातिथिवत् देवता पूज्यमानतां प्रतिपद्यते । न च यजिः तत्परः इति नवमे वक्ष्यते । दानेन वा उपाध्यायादिः पूज्यमानोऽपि न कर्म संपद्यमानो दृष्टः ।



एवं तर्हि तद्वदेव नित्यं देवतायाः संप्रदानत्वेनैव निर्देशः प्रसज्यते । नैतस्याः तादृशं संप्रदानत्वमपि अस्ति, प्रतिग्रहीतृत्वाभावात् । अपिच दृश्यते हि क्व चित् संप्रदान- ( त्वेन ) निर्देशः ‘ योऽदाभ्यं गृहीत्वा सोमाय यजते ’ इति । सर्वथा इयं देवता न चान्यैः संप्रदानैस्तुल्या, न च कर्मभिः । असाधारणेन तु ( अत्र आनन्दाश्रमीये ‘ कर्मभिः साधारणैः नैव तु ’ इति पाठः, स न युक्तः । सुधागतपाठस्तु पृ. ७५० अस्माभिर्गृहीतः ) आत्मनः केवलं यजिविषयं कर्म, संप्रदानं वा भवति । तच्च एतस्याः ( देवतायाः ) क्रियासाधनत्वात् सप्तमकारकासंभवाच्च एवं कल्प्यते । नहि देवता शब्दवाच्येन आत्मना धात्वर्थसंबन्धित्वं प्रतिपद्यते । तेन तदुद्देशत्यागांशेन प्रतिग्रहीतृव्यापारात् विनाऽपि कथञ्चित् साकल्यकल्पनया संप्रदानं निर्दिश्यते । यद्वा उद्देशगतमपि आप्यमानत्वं त्यागांशेऽपि अध्यस्य सकलस्य यजेः कर्मत्वेन उच्यते, तेन यत्र संप्रदानत्वनिर्देशः, तत्रैव एतदुक्तं भवति परस्वत्वमिव आपादयितुं तदुद्देशेन द्रव्यं त्यजेत् इति । यत्रापि कर्मनिर्देशः, तत्रैषोऽर्थः ‘ त्यक्तुं द्रव्यं देवतां उद्दिशेत्’ इति । तथा च केवलोद्देशव्यापारेषु त्यक्तृत्वरहितेषु ‘ यज ’ इति प्रैषो भवति । तदेतदुभयमपि लाक्षणिकम् । तत्रापि संप्रदानत्वं त्यागांशव्यभिचारित्वात् असमस्तात्मकत्वात् ( समस्तसंप्रदानत्वाभावात् ) दूषितमपि सत् प्रत्यासन्नतरं देवतात्वस्य, कर्मत्वं तु क्रियान्तरेष्वपि व्याप्यमानत्वसंभवात् सव्यभिचारम्, इति विप्रकृष्टतरं देवतात्वस्य । नहि तत् देवतात्ववत् सकलं यजिं प्रति कर्म इत्यवधार्यते । परमार्थतः पुनः देवताशब्देन तद्धितशब्देन वा देवतात्वमभिधीयते, न कारकविभक्त्या कया चित् । तथा च ‘ **देवतातद्धितोत्पादे नहि पाणिनिना तथा । इदममय इत्येवं तेनक्रीतमिवोदितम् ॥** ’ ये हि विभक्तिवाच्या अर्था भवन्ति तद्विभक्तिसमर्थेभ्य एव तेभ्यः तद्धितविधानं दृश्यते ‘ तद्वहति, तेन क्रीतम्, तस्मै हितम्, तत आगतः, तस्यापत्यम्, तत्र भवः’ इति । न तु देवतायाम् ‘ तस्यै इदम् ’ ‘ तामनेन यजति ’ इति वा निर्देशो दृश्यते । कथं तर्हि ? ‘ साऽस्य देवता ’ इति । तस्मात् नूनम् अनन्यवाच्योऽयमर्थः इति गम्यते । ततश्च स्थितमेतत् ‘ न विष्णुरुपांशु यष्टव्यः इत्यनेन देवताऽपि अभिधीयते ’ इति । तत्र क्लेशेन तं कल्पयित्वा यजिभावना कल्पनीया । ततश्च वरम् अर्थवादत्वमेव आश्रितम् । ‘ अन्तरा यजति ’ इति तु यद्यपि अन्तरालसंबन्धविधिपरत्वात् न स्वरूपविधानार्थम् इत्याशङ्क्यते, तथापि अनन्यगतित्वात् विशिष्टविधानम् । नहि यथा इतरेषाम् अर्थवादत्वेन अर्थवत्ता, तथा इह केन चित् प्रकारेण । ननु च समुदायीकरणेन अर्थवत्ता इत्युक्तम्, यथा च नैतेन अर्थवत्ता, तथा अन्यार्थदर्शनं व्याचक्षाणाः वक्ष्यामः । किञ्च ‘ **अन्तरालेऽनुपादेये कर्म तत्र विधीयते । तादृग् विपरिवृत्तिश्च नेत्युत्पत्तिरपीष्यते ॥** ’ यादृशी हि आख्यातेन स्वप्रधाना पूर्वापरीभूता भावना अन्तरालमनुपादेयं प्रति उपात्ता, न तादृशी ‘ विष्णुर्यष्टव्यः’ इत्यादिभिः उपस्थाप्यते इति नोत्पत्तिविधिकल्पनाभङ्गः । तत्र सत्यपि इतरेषां कर्मविधित्वे कर्मान्तरं स्यात्, न प्रकृतानुवादः इति मत्वा आह– ‘ कर्मान्तरस्य वाचकः स्यात् ’ इति ( भाष्यम् ) । देवतायाः पुनः उपादेयत्वात् कर्मोद्देशेन ( द्देशे न ) विधिः संभवति इति नानुवादबुद्धिरपैति । (अत्र चौखम्बायाम् आनन्दाश्रमे च ‘ कर्मोद्देशेन ’ इति तृतीयान्तमेव मुद्रितम् । तथापि ‘ उद्देश्यत्वेऽपि देवतायाः कर्मकाले शब्दप्रतिपाद्यत्वेन आपाद्यत्वलक्षणोपादेयत्वात् न तदन्वयः कर्मान्तरत्वापादकः ’ इति सुधाग्रन्थात् ‘ कर्मोद्देशे ’ इति सप्तम्यन्तम् ‘ न विधिः संभवति ’ इति नञः उत्तरान्वयं च पश्यामः ) । कर्मविध्यभ्युपगमे तु सत्यपि प्रकृतसद्भावे तद्रूपाणां प्रकृतानामभावात् इत्यभिप्रायः । अथवा यदिदम् आग्नेयादिभ्यः कर्मान्तरं चोद्यते, तस्य ‘ उपांशुयाजं यजति ’ इत्ययं वाचकः स्यात्, नेतरेषाम् । तस्मात् अन्तरालानुपादेयत्ववशेन अस्य ऐकान्तिके कर्मविधित्वे सति इतरैरर्थवादैरेव भवितव्यम् । धात्वर्थे चान्यत्र विदधत् प्रत्ययः संनिकृष्टवृत्तिर्भविष्यति । ‘स तु विधीयते उपांशुत्वादिसंबन्धः ’ इति ( भाष्यम् ) उपांशुयाजशब्दं गुणविधिं मन्यते । यत्तु अवाचकत्वमस्मिन् पक्षे कुत्वप्रसङ्गात् इति, तत्रोच्यते । तुल्यमेतत् त्वत्पक्षे । कुतः ?

**'वाच्यवाचकसंबन्ध इष्टः शब्दार्थयोः पुरा। पश्चाद् विध्यनुवादत्वे स्यातां साधारणाश्रये ॥'** वाच्यवाचकत्वे अवधारिते पश्चात् विधिविधेयत्वम् अनूद्यानुवादकत्वं वा कल्प्यते। तत्र उभयोरपि वाच्यवाचकसंबन्धः साधारणः, इति तद्वतौ गुणादोषावपि साधारणौ। तेन नैको बोधो भवति ( अन्यतरावधारणं न भवति इत्यर्थः )।

स्यादेतत् अनुवादत्वम् अवाचकस्यापि कथञ्चित् दृष्टं न विधित्वम् इति। तदुच्यते। ममापि हि **'यजिना विहिते यागे याज इत्यनुवादभाक्। विधिसंबन्ध्युपांशुत्वं न चैत-( चैत- )दसमञ्जसम् ॥ न च तत्प्रख्यरूपेण नामैतदुपपद्यते। विहितं नह्युपांशुत्वं शास्त्रेणान्येन केन चित् ॥'** न तावत् विष्ण्वादियुक्तेन विहितम्, अर्थवादत्वात्। न 'उपांशु पौर्णमास्याम्' इत्यनेन कालविधिव्यापृतेन, अनेकविध्यशक्तेः। तस्मात् उत्पत्तिस्थेनैव विधीयते। तथाच सूत्रकारो वक्ष्यति 'गुणोपबन्धात्' ( ११ ) इति। जामित्वापनयनं च सर्वप्रकारं द्रव्यतः ( आज्यविधानात् ) स्वरतः ( मध्यमस्वरत्वात् ) देवतातश्च ( विष्णुप्रजापतिपक्षे )।। ज्ञायते एव यथा विष्णुर्यष्टव्यः, प्रजापतिः, अग्नीषोमौ वा इति। यागे चोदिते अवश्यम्भाविन्यां देवतायाम् अनियमप्रसक्तौ के चित् विष्ण्वादयः प्राधान्यप्रसिद्ध्या वैचित्र्यप्रदर्शनार्थं संकीर्तिताः। तेन यद्यपि परमार्थेन न यष्टव्याः, तथापि स्तुतिपरत्वात् उपादानं गुणवादेन कथञ्चित् उच्यते। 'शाखाऽन्तरे विधानात्' प्राप्ताः इति। अनुदाहरणात् अस्फुटम् एवमभिधाय नहि किञ्चित् असाध्यं स्यात्। न च तस्मिन् सति दशमे 'तद्वच्च देवतायां स्यात्' ( १०।८।१६।४९ के. ) इत्यादि विचार्य 'विष्णुर्वा स्याद् हौत्राम्नानात्' (५३ के. ) इत्यादिना मान्त्रवर्णिकत्वं जैमिनिराश्रयिष्यति। 'यद्यपि अप्राप्तिः' इति च इहापि स्वयमेव आशङ्का दर्शिता। यदप्युक्तम् उपांशुधर्मत्वात् प्राप्तौ 'तस्मात् यत् किञ्चित् प्राजापत्यम्' इति (आपात्र आक्षेपोऽयम्), तदप्ययुक्तम्, वचनव्यक्तिविपर्यासात्। नहि एवं वचनम् 'यदुपांशु, तत् प्राजापत्यम्' इति। किं तर्हि? 'यत् प्राजापत्यम्, तदुपांशु' इति। तेन नोपांशुत्वेन प्राजापत्यता लभ्या। 'अग्नीषोमयोस्तु विधायकम् उदाहियते एव' इति ( भाष्यम् )। एतदपि चतुर्थी-तद्धित-मन्त्रवर्णानात्मकत्वात् अविधायकम्। 'यदि हि तौ अग्नीषोमौ अब्रूताम्, ततः अस्माकं किम्' इति हि विजानन्तो यजमानाः 'न वयं देवतायां प्रवर्तिताः' इति कल्पयेयुः। कालविधिपरत्वाच्च न देवताऽपि अनेन शक्या विधातुम्। देवतापरत्वे वा कालविधिपरित्यागात् पौर्णमासीशब्देनापि नानूद्येत, इति पूर्णमासशब्देन अग्रहणात् असति प्रधानत्वे अङ्गत्वप्रसङ्गः। सूत्रकारेण च दशमे अमावास्यायामुपांशुयाजमनिच्छता एतदेव पौर्णमासीकालविधिपरत्वेन उपन्यस्तम्।

( शाखाऽन्तरे इति भाष्यं तावत् समाधातुमारभते-) अत्र समाधिः। मान्त्रवर्णिको देवताविधिः इति स्थितम् ( दशमोपान्त्ये )। उपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीयाणि याज्यापुरोऽनुवाक्यायुगलानि आम्नायन्ते। तैश्च तुल्यार्थत्वात् विकल्पमानैः वैकल्पिक्य एव देवताः प्राप्यन्ते। तदेव हौत्रं शाखाऽऽन्तरमित्याह ( भाष्यकारः )। आध्वर्यवेऽपि तु क चिदस्त्येव याज्याऽनुवाक्याऽऽम्नानं हौत्ररूपेण इति तदभिप्रायं वा शाखान्तरवचनम्। उपांशुधर्मत्वं च अस्यैव द्योतनार्थम्। अन्या हि देवता आनीयमाना आत्मीयं धर्मम् उच्चैष्ट्वं जह्यात्, परधर्ममुपांशुत्वं प्राप्नुयात् इति विरुद्धम्। विष्णुप्रजापत्योस्तु प्रत्यासन्नधर्मकत्वात् अविरोधः। तथा 'अग्नीषोमयोस्तु' इति विधायके देवताविध्यसंभवात् यथासंभवग्रहणेन पौर्णमासीकालस्य विधायके अग्नीषोमानुवादः प्राप्तिमुपोद्बलयति।

**गुणोपबन्धात्। ११ ॥**

**भाष्यम्--** यदुच्यते न ज्ञायते कतमोऽसौ उपांशुयाजसंज्ञको याग इति। यस्यायं गुण उपबद्धः 'उपांशु पौर्णमास्यां यजन्' इति। तस्मान्न दोषः।

**वा--** यस्यायं गुण उपबद्धो दृश्यते कालविधिपरे वाक्ये 'उपांशु पौर्णमास्यां यजन्' इति। न तु एतदेव गुणस्य उत्पत्तिवाक्यम् अयागविधिपरे सति अनेकार्थविधिप्रसङ्गात्। अतः 'उपांशु याजमन्तरा' इत्यनेनैव प्राप्तस्य संकीर्तनमिति।



**प्राये वचनाच्च। १२ ॥**

**भाष्यम्--** प्रधानकर्मप्राये वचनं प्रधानकर्मतामुपोद्बलयति, यथा अग्र्यप्राये लिखितं दृष्ट्वा, भवेदयमग्र्य इति मतिः। तस्मान्न समुदायशब्दः इति।

**वा--** 'हृदयमुपांशुयाजः' इति यज्ञपुरुषस्य प्रधानप्रायेण अवयवेन संस्तवात् प्रधानमिति अवगम्यते। कथं पुनः अप्रधानत्वं पूर्वपक्षे प्रसज्यते? उच्यते। **'त्रयाणां वैष्णवादीनां समुदायेऽवधारिते। अग्नीषोमीय एवैकः पौर्णमास्यां विधीयते ॥'** 'तावब्रूतामग्नीषोमौ' इति योऽग्नीषोमदेवत्यः, स एवैकः कालविशेषसंयुक्तः पूर्णमासग्रहणेन फले चोद्यते। तत्र वैष्णवप्राजापत्ययोः गुणभावात् सकलोपांशुयाजप्राधान्यवचनानुपपत्तिः। ननु तत्रापि वैकल्पिकदोषत्वात् देवतासु यदैव अग्नीषोमीय ( षोम- ) देवत्यः, तदैव प्राधान्यम्, इति नित्यवत् प्रधानत्वसंकीर्तनं नैव घटते। नैष दोषः। **'कालदेवतयोर्नात्र संबन्धोऽयं विधीयते। यत्तु तल्लक्षितं कर्म तदन्यत्रापि विद्यते ॥'** यदि हि अग्नीषोमयोरेव पौर्णमासीसंबन्धः क्रियते, ततो विष्णुप्रजापतिपक्षे न स्यात्। अयं पुनः देवतोपलक्षितस्य यागस्य संबन्धः। सर्वत्र च उपलक्षणापायेऽपि उपलक्ष्यं गृह्यते, यथा वक्ष्यति 'अनपायश्च कालस्य लक्षणं हि पुरोडाशौ' ( १०।८।१७।७० ) इति। न च एकस्यैव कर्मणः कदा चित् प्रधानत्वं कदा चिदङ्गत्वम् इत्युपपद्यते। नानात्वे तु अविरुद्धं स्यात्। न च संभवति तत्। तस्मात् एककर्मत्वाय 'उपांशुयाजमन्तरा यजति' इत्ययमेव विधिः।

**शा--** **'तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात्। ऐकान्तिको विधिर्नात्र वर्तमानापदेशतः ॥'** तस्मात् विष्ण्वादियागानां समुदायानुवादः। इति प्राप्तेऽभिधीयते। **'जामित्वोपक्रमादेकमजामित्वोपसंहृतेः। वाक्यम्, तन्मध्यपाताच्च विष्ण्वादेरर्थवादता ॥ वाक्यशेषानुषङ्गश्च गतौ सत्यां न युज्यते। अनूचीननिमित्तश्च (** पुरोडाशद्वयनिमित्तश्चेति ) **जामिदोषोऽत्र कीर्तितः ॥ तेनान्तरालसंयुक्तो विधिस्तत्रैव निश्चितः। अजामित्वं च तस्यैव प्रशंसेत्यवधारितम् ॥'** तस्मात् ( उपांशुयाजमन्तरा यजति इति) विधिरयम्, न समुदायानुवादः।

**सोम--** दशमे 'अजामिकरणाच्च' इति **सूत्रभाष्ये** जामिता सादृश्यम् इति व्याख्यातम्। सादृश्यस्य दोषपर्यवसायित्वं च एकरूपायाः क्रियायाः पुनःपुनरनुष्ठाने तन्द्रा स्यात् इति तन्द्राऽऽपादकत्वेन बोध्यम्। इदमेव च **न्यायसुधायां** सादृश्यस्य दोषपर्यवसायित्वमुक्तम्। (सौन्दर्यवाचिजामिशब्दलक्षितस्य सादृश्यस्य नैरन्तर्यानुष्ठाने सति आलस्यापादकत्वेन दोषत्वात् तत्कीर्तनस्य च निषेधाश्रुतेः निन्दापर्यवसायित्वायोगात् आकाङ्क्षावशेन अजामित्वकरस्तुत्यर्थत्वावगमात् जामित्वोपन्यासयोः एकवाक्यता अवसीयते **सुधा.** पृ. ७४७ )। **नयविवेके** तु दशमे जामिता सादृश्यम् एकरूपा द्विःक्रियेति, तेन कृताकृताननुसंधिदोषः इति सादृश्यस्य दोषपर्यवसायित्वमुक्तम्।

यथा विद्वद्वाक्ये समुदायानुवादात् आग्नेयादीनां फलसंबन्धः, एवमन्तरावाक्ये समुदायानुवादात् विष्ण्वादियागानामपि कालसंबन्धः इति वा, फलसंबन्धः इति वा प्रत्यवस्थानात् ( दृष्टान्त- ) **संगतिः**। **प्रयोजनं** पूर्वपक्षे विष्ण्वादिदेवत्यास्त्रयो यागाः समुच्चयेनानुष्ठेयाः। सिद्धान्ते तु एक एव विकल्पितविष्ण्वादिदेवत्यः इति। **सूत्रार्थस्तु** 'पौर्णमासीं यजते' इति वाक्यवत् 'उपांशुयाजमन्तरा यजति' इति वाक्यमपि समुदायानुवादः स्यादिति।

**वि--** 'उपांशुयाजमित्येषोऽनुवादोऽथवा विधिः।, विष्ण्वादिवाक्ये विस्पष्टविधेरस्यानुवादता ॥, जामित्वोक्तेरन्तराल उपांशुगुणके विधौ। सत्यर्थवादो विष्ण्वादिस्तद्रूपं श्रौतमन्त्रतः ॥'

**भाट्ट --** तत्रैव 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तरविधिः, अपि तु तव्यप्रत्ययान्तवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदाय-

सिद्ध्यर्थमनुवादः एव । तत्प्रयोजनं च अन्तरालकालविधित्रयाणामेषाम् । 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति कालसंबन्धतात्पर्यग्रहद्वारा फलसंबन्धसिद्धिर्वा । अन्यथा हि अग्नीषोमदेवत्यस्यैव कालसंबन्धात् फलसंबन्धः स्यात् । इति प्राप्ते, उपक्रमोपसंहारयोः एकविषयत्वेनैकवाक्यत्वप्रतीतेर्न तव्यप्रत्ययान्तवाक्यैः कर्मविधिः । अन्तरावाक्ये एव तु कालोपांशुत्वविशिष्टः एककर्मविधिः । तदर्थवादश्चायं पूर्वोत्तरभावेन सर्वोऽपि । अन्यथा वाक्यभेदापत्तेः । अत एव 'तव्यप्रत्ययान्तैर्देवतामात्रविधिः अन्तरालवाक्यस्थकर्मणि' इत्यपास्तम् । न च तत्र देवताऽलाभः । शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्याऽनुवाक्यायुगलानाम् एतद्यागक्रमे समाम्नातानां विकल्पेन तत्तद्देवताकल्पकत्वोपपत्तेः । तस्य च 'तावब्रूताम्' इत्यनेन कालसंबन्धात् फलसंबन्धः । न च उत्पत्तिशिष्टकालसंबन्धानामेव आग्नेयादीनां झटित्युपस्थितत्वेन उत्पन्नशिष्टकालसंबन्धस्योपांशुयाजस्य फलसंबन्धानापत्तिः । अन्यथा पुरोडाशान्तरालकालसंबन्धान्यथाऽनुपपत्त्यैव पौर्णमास्यादिकाललाभेन उपांशुयागस्य फलसंबन्धापत्तौ 'तावब्रूताम्' इत्यस्यापि तत्फलत्वानुपपत्तेरिति वाच्यम् । 'तावब्रूताम्' इत्येतदनन्तरम् 'उपांशुयाजमन्तरा यजति' इति पठितमिति शार्तिकदर्शनात् अस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात् फलसंबन्धोपपत्तेः । अतो नायं समुदायानुवादः इति सिद्धम् । प्रयोजनं स्पष्टम् ।

**मण्डन**— 'स्यादन्तरालवचने यजतेर्विधानम् ।'

**शंकर**— 'अन्तरा यज्विधिर्मतः ।' यज्विधिर्यागविधिः । भावे किन् क्विप् वा ।

* यत्तु साक्षिचैतन्यस्य पूर्वं पश्चादपि गुणोक्तेः तन्मध्यस्थं निर्गुणवाक्यमपि **उपांशुयाजन्यायेन** तदनुगुणतया नेयमिति, तन्न । **अद्वैत.** २।४।४०६.

* **उपांशुयाजाधिकरणं** पौर्णमास्यधिकरणापवादः । **वा.** २।१।१।१ पृ. ३७१. * तावब्रूतामग्नीषोमौ इत्यस्य भिन्नवाक्यत्वे उपांशुयाजविध्येकवाक्यत्वे वा फलसंबन्धसिद्ध्यर्थम् अमावास्याभ्यावृत्त्यर्थं वा कालमात्रविधायकत्वमेव न तु देवताविधायकत्वम्, तस्याः आज्यस्येव प्रमाणान्तरेण संभवत्प्राप्तिकायाः विधिवैयर्थ्यात् इत्युक्तम् **उपांशुयाजाधिकरणे । भाट्ट.** १०।८।१६. * 'विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति शाखाभेदेनोपांशुयाजक्रमे आम्नातैः वैष्णवप्राजापत्याग्नीषोमीययाज्याऽनुवाक्यायुगलैः प्राप्ताः विष्णवाद्या देवताः उपांशुयाजस्तुत्यर्थे कीर्त्यन्ते इत्युक्तम् उपांशुयाजाधिकरणे शास्त्रदीपिकायाम् । देवताविधिसरूपः अर्थवादोऽयम् । **बाल.** पृ. ५३.

* **उपांशुयाजानुमन्त्रणन्यायेन** लिङ्गानुगृहीतक्रम एवात्र प्रकरणात् बलीयान् विज्ञायते । **वा.** ३।६।७।२५.

* **उपांशुयाजानुष्ठानं** प्रथमम्, ततः अग्नीषोमीयानुष्ठानम्, मन्त्रक्रमस्य ब्राह्मणक्रमात् अन्तरङ्गत्वात् । **वृ.** ५।१।९।१६.

* **उपांश्वन्तर्यामग्रहयोः** वषट्कारहोमो नास्ति । **सोम.** २।२।६.

* **उपांश्वादिभ्यः** उत्तरमेव दधिग्रहो ग्राह्यो न पूर्वम् । **संकर्ष.** ३।३।८.

* **उपाकरणं** आग्नेयस्यैव पशोः प्रथमम्, न तु अग्नीषोमीयस्य साद्यस्के । **रत्न.** ५।१।५।११. * उपाकरणम्, पर्यग्निकरणम्, यूपे नियोजनम् इत्यादयः पशुधर्माः । तत्र 'प्रजापतेर्जायमानाः' 'इमं पशुम्' इत्याभ्यामृग्भ्यां पशोरुपस्पर्शनम् उपाकरणम् । दर्भज्वालया त्रिः प्रदक्षिणीकरणं पर्यग्निकरणम् । **वि.** ३।६।७. * उपाकरणं प्रथमतः सवनीयस्य कार्यम् । तदुत्तरं दैक्षस्य, तदुत्तरम् अनूबन्ध्यस्य प्रकृतिदृष्टपौर्वापर्यस्य एव नियामकान्तराभावे नियामकत्वाङ्गीकारात् । साद्यस्के सहपशवालम्भे सवनीयोत्तरम् । **के.** * उपाकरणं सवनीयपशोः आश्विनग्रहोत्तरं द्वितीयरशनया यूपपरिव्याणं कृत्वा कर्तव्यम् । **के.**

* **उपाकरणनियोजनादयः** संस्काराः वाजपेये प्राजापत्यपशुषु कर्तव्याः । तत्र उपाकरणे यः ऐच्छिकः क्रमः स्वीकृतः, स एव नियोजनादिसंस्कारेषु स्वीकर्तव्यः । सोऽयं प्रवृत्तिक्रमो नाम । **वि.** ५।१।५.



* **उपाकरणादीनां** पशुधर्माणाम् अग्नीषोमीयमात्रार्थता । **भा.** ३।६।७।१८–२७.

* **उपाकरणानन्तरमेव** नियोजनम् इति यथाप्रकृति प्राजापत्यपशुषु अनुष्ठानम् । **भाट्ट.** ५।२।१.

* **उपाख्यानानाम्** असत्यत्वेऽपि तत्र अर्थवादानाम् तात्पर्यात् तात्पर्यगोचरीभूते च प्राशस्त्याप्राशस्त्यरूपेऽर्थे सत्यत्वात् नाप्रामाण्यापत्तिः । **सु.** पृ. ५७. * उपाख्यानानां वेदगतानामसत्यत्वेऽपि प्रवर्तकत्वम् । 'लोकेऽपि यां क्रियां फलान्तरयुक्तां मेधादिहेतुत्वेन आप्ता मन्यन्ते, तस्यां कं चित् प्रवर्तयन्तः तदभिप्रेतं सौभाग्यादिफलम् असत्यमपि उपन्यस्य नियुञ्जते । तत्प्रवृत्तश्चेतरोऽपि क्रियाऽऽश्रयं फलं प्राप्नोति । यद्यपि च प्रतिपत्ता जानाति 'नैतदत्र पारमार्थिकं फलं मदभिप्रायानुसारेण एतैरुपन्यस्तम् । सर्वथा तु अपुरुषार्थे मां न प्रवर्तयन्ति, तदसत्यं नामैतत्, किमपि अन्यदवाप्स्यामि' इति ज्ञात्वाऽनुतिष्ठति । एवं वेदेऽपि विधिना तावत् फलमवगमितम् । अर्थवादास्तु असत्येन नाम प्ररोचयन्तु, न तद्वते सत्यासत्यत्वे किञ्चित् दूषयतः, प्रवर्तनमात्रोपकारित्वात् । यत्तु परस्ताद्भविष्यति, तत् विधेरुपरि गतम् इति निश्चित्य नैव विद्वांसो न प्रवर्तन्ते । तस्मात् उपाख्यानानाम् असत्यत्वमतन्त्रम् । **वा.** १।२।१।१० पृ. १२५.

* **उपाख्यानार्थस्वतन्त्रार्थवादकल्प्यः** विधिः एककर्तृकोपाख्यानरूपपरकृतिकल्प्यः, अनेककर्तृकोपाख्यानरूपपुराकल्पकल्प्यश्चेति द्विविधः । तत्र 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति प्रथमः । 'तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति द्वितीयः । **बाल.** पृ. १२.

* **उपादातव्यम्** । यद्धि उपादातव्यम्, नहि तदनुपादाय कश्चित् प्रयोगमारभते । नहि अनुपादाय व्रीहीन् प्रस्तुत्य प्रयोगम्, व्रीहीन् मृगयति । एवं कुर्वाणस्य प्रयोग एव न संवर्तेत । **भा.** ११।३।५।९.

* **उपादानस्य**—कपालोपादानस्य अवघातकालीनतुषोपवापः न प्रयोजकः । **भाट्ट.** ४।१।११.

* **उपादानलक्षणा** एव अजहत्स्वार्था लक्षणा इति आलंकारिकाः । **मणि.** पृ. ७५.

* **उपादानविधानशब्दौ** भिन्नार्थौ । अप्रवृत्तप्रवर्तनं विधानम् । तच्च पुरुषविषयः शब्दव्यापारः । अननुष्ठितस्यानुष्ठानमुपादानम् । तच्च कर्मविषयः पुरुषव्यापारः । **वि.** २।३।१३.

* **उपादीयमानेषु** आकाङ्क्षा उपजायते, न उद्दिश्यमानेषु । **वा.** ३।१।७।१४ पृ. ७२३.

* **उपादेयं** विच्छिन्नप्रकरणस्य कर्मणः संबन्धि, यथा आहवनीयप्रतिपदादि । तस्य प्रदेशान्तरस्थोद्देशेन अपि शक्यं विधानम् । **वा.** २।३।११।२४ पृ. ६१९. * उपादेयम् अनुपादेयेन बाध्यते यथा सांतपनीयोत्कर्षे अग्निप्रणयनं कालेन । **बाल.** पृ. १३२. * **उपादेयः** गुणः तिरोहितकर्मानुवादेन शक्यो विधातुं नानुपादेयः । स हि कुण्डपायिनामयने होमस्येव बलात् कर्मान्तरत्वमापादयति इति स्थितं प्रकरणान्तराधिकरणे । **वा.** ३।६।७।२२ पृ. १०४९.

* **उपादेयक्रियासंबन्धिनामेव** परस्परान्वयः, नोद्देश्यक्रियासंबन्धिनाम् । उक्तं च अग्रिमाधिकरणे (६।४।७) **तन्त्ररत्ने** 'उपादेयानां हि ऐककर्म्यान्नियमः । नोद्देश्यानाम् इति तत्रतत्र क्षुण्णम्' इति । **सोम.** ६।४।६ पृ. ४८६.

* **उपादेयगतं** द्वित्वादि विवक्षितम् । यथा 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति द्वित्वम् । **वि.** १०।२।१४, यथा वा 'चमसाध्वर्यून् वृणीते' इति बहुत्वम् । ३।७।११.

* **उपादेयत्वं** कृतिव्याप्यत्वम् । **बाल.** पृ. ९८. * उपादेयत्वं यजेः अनुष्ठीयमानताऽऽकारः शरीरोपाधिकः । **वि.** १।४।६. * **उपादेयत्वेन** चोदितस्य एकत्वं विवक्षितम् । यथा 'प्रवयसमृषभं दक्षिणां ददाति' इति दक्षिणैक्यमाह । **भा.** ११।२।१०।४६, * उपादेयत्वेन हि अनुवाक्या चोद्यते तत्रैकत्वं विवक्षितम् । ३।१।१३।२३.

* **उपादेयपश्वादिगता** संख्या विवक्षिता । **भाट्ट.** ४।१।५.

* **उपाधिः** । उपाधिज्ञानेन व्याप्तिग्रहप्रतिबन्धः । स च यद्धर्मावच्छिन्नसाध्यव्यापकः तद्धर्मावच्छिन्नसाधनाव्यापकः । भवति 'धूमवान् वह्नेः' इत्यत्र धूमत्वावच्छिन्नव्यापकं तत्साधनवह्नेः अव्यापकम् आर्द्रेन्धनम् । 'स श्यामो मित्रातनयत्वात्' इत्यत्र मित्रातनयत्वावच्छिन्नश्यामत्वव्यापकं शाकपाकजत्वं मित्रातनयत्वाव्यापकम् । 'वायुः चाक्षुषः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र द्रव्यत्वावच्छिन्नचाक्षुषत्वव्यापकम् उद्भूतरूपवत्त्वं तदवच्छिन्नहेतोः अव्यापकं च । एवम् 'ध्वंसो विनाशी जन्यत्वात्' इत्यत्र भावत्वं जन्यत्वावच्छिन्नसाध्यव्यापकं साधनाव्यापकं च । एवं यत्र तादृशो धर्मो नास्ति, तत्र साध्याधिकरणतदनधिकरणान्यतरत्वरूपधर्मो बोध्यः इति । अयं च स्वव्यभिचारेण साधने साध्यव्यभिचारज्ञापनेन व्याप्तिग्रहप्रतिबन्धकः । 'वह्निरनुष्णः कृतकत्वात्' इत्यत्र वह्नीतरत्वम् उपाधिः । अयमेव बाधोन्नीतः इत्युच्यते । प्रसिद्धानुमाने पर्वतेतरत्वं नोपाधिः, साध्यव्यापकत्वग्राहकमानाभावात् । अयं च बाधानुन्नीतः । संदिग्धपक्षेतरत्वं तु नोपाधिः संप्रदायात् इति **केचित्** । अन्ये तु उपाधेः सत्प्रतिपक्षोत्थापनेन दूषकता । वह्निना धूमसाधने आर्द्रेन्धनाभावेन तदभावः साध्यते । इत्थम् 'करका पृथिवी कठिनसंयोगवत्त्वात्' इत्यत्र साधनव्यापकमपि अनुष्णाशीतस्पर्शवत्त्वम् उपाधिः इति आहुः । **मणि.** पृ. ३५.

* **उपाधिज्ञानस्य** साक्षात् प्रतिबन्धकत्वाभावात् । **मणि.** पृ. ४०.

* **उपाध्यायः** प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्तते । **भा.** ३।१।२।२ पृ. ६५९. * **उपाध्यायस्य** निराकाङ्क्षस्य शिष्याकाङ्क्षया आकाङ्क्षोत्थापनम् । **सु.** पृ. ११९७.

* **उपायिचोदनानि,** आसनचोदनानि च सत्राणि । 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहमृद्धिकामा आसीरन्' इति यथा । **वि.** ८।२।५.

* **उपावहरणं** सोमस्य ज्योतिष्टोमे मानवाससैव कुर्वन्ति, न पृथक् वासो गृह्णन्ति । **वि.** १०।६।२०, * उपावहरणं सोमस्य पृथक् कृत्वा ग्रहणम् । अहर्गणे सोमं क्रीत्वा सर्वमेव हविर्धानशकटे स्थापयन्ति । प्रत्यहं च तत्तद्दिनपर्याप्तं सोमं समुदायात् पृथक्कृत्य गृह्णन्ति । तदिदम् उप–अवहरणम् । १०।६।२१. * उपावहरणं हविर्धानशकटात् सोमस्य ग्रावसु अवतारणम् । **सोम.** १०।६।२०. * **उपावहरणवासः** अहर्गणे मानवाससो भिन्नम्, तत्रापि प्रत्यहं पृथक्पृथक् । उत्तमेऽहनि तु मानवाससैवोपावहरणं न वासोऽन्तरेण । **के.** १०।६।२१। ७८. * **उपावहरणवाससां** ग्रावस्तुते दानं विहितम् । **भाट्ट.** १०।६।१९.

⧗ **उपावहरणाधिकरणम्** । अहर्गणे तत्तदहःसंबन्धिसोमोपावहरणकाले एव वासोऽन्तरमुत्पादनीयम् ॥

**मानं प्रत्युत्पादयेत्, प्रकृतौ तेन दर्शनादुपावहरणस्य । १०।६।२२।७९ ॥**

**भाष्यम्**— तत्रैव अहर्गणे चिन्त्यते । उक्तमेतत् अर्थात् वास उत्पाद्यम् इति । तत्र संशयः किं मानं प्रति उत्पाद्यम्, उत उपावहरणं प्रति उत्पाद्यम् इति । किं प्राप्तम्? मानं प्रति उत्पाद्येत । कुतः? प्रकृतौ तेन दर्शनात् उपावहरणस्य । ज्योतिष्टोमे यस्मिन् मीयते, तेनैव उपावहरणं क्रियते । प्रकृतिवच्च विकृतौ । चोदकानुग्रहाय तस्मिन्नेव काले उत्पाद्यमिति ।

**हरणे वा, श्रुत्यसंयोगादर्थाद्धि प्रकृतौ तेन ।८०॥**

**भाष्यम्**—न चैतदस्ति मानं प्रति उत्पाद्यमिति । किं तर्हि? हरणं प्रति उत्पाद्यम् । कथम्? श्रुत्यसंयोगात् । नहि श्रूयते मानं प्रति उत्पाद्यमिति । श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते अत्रैवेति । यस्य चार्थः प्रयोजकः, स प्रयोजनप्रयुक्तत्वात् तत्काल एव न्याय्यो नान्यकाल इति । हरणकाले चानेन प्रयोजनम्, इति हरणे एव न्याय्यमुत्पादयितुमिति । यदुक्तम्, प्रकृतौ माने यद्वासः, तस्य हरणे दर्शनात् इह चोदकानुग्रहाय तत्कालमेव उत्पाद्यमिति, तत् परिहर्तव्यम् । अत्रोच्यते । न श्रूयते तेनैव वाससा उपावहरणं कर्तव्यमिति । किन्तु अर्थात् तेन क्रियते एकत्वादह्नः । नहि तद्वासोऽन्यत्र व्यापृतम् इति तेनैव क्रियते । यच्च अर्थात् कृतम्, न तत् चोदकः प्रापयति, अवाचनिकत्वात् । न चेह तदेव वासः उभयार्थं संभवति, अहर्बहुत्वात् । तस्मात् हरणकाले एव उत्पाद्यमिति ।

**सोम**— चोदकप्राप्तैकत्वबाधेऽपि कालो न बाध्यः इत्युत्थानात् **संगतिः** । अन्तिमेऽहनि तु अनुपपत्त्यभावात् मानवाससैवोपावहरणमिति ।

**वि**— 'तत् किं माने हृतौ वा, ऽऽद्यः प्रकृतावेकतेक्षणात् ।, अर्थात् तदैक्यं तत्रोक्त्या हृतौ स्यात् सार्थकत्वतः ॥'

**भाट्ट**—पूर्वाधिकरणे गतम् ।

**मण्डन**— 'पृथग्वस्त्रमहर्गणे ।' २२. 'हरणार्थं पृथग्वासः ।' २३.

**शंकर**—'अहर्गणे वाससो भिदा ।' २२. 'काले सा त्वाहृतेः कार्या ।' २३. सा वाससो भिदा ।

* **उपावहरणाधिकरणे** 'यस्मिन् काले यत् प्रयोजनमपेक्षते तस्मिन् काले तत् संपादनीयम्' इति लौकिको न्यायो बीजम् । **बृ.** १०।६।२२।८०.

* **उपावहरणार्थं** प्रत्यहं वासोऽन्तरोत्पादनम् (अहर्गणे) तच्च सोमोपावहरणकाले एव । **भा.** १०।६।२२।७९–८०.

* **उपासनात्मकस्य** ज्ञानस्य कर्मणि पुरुषे च दृष्टप्रयोजनाभावात् अदृष्टापेक्षायाम्, श्रुत्याद्यभावेन क्रत्वर्थत्वाभावात् वाक्यशेषोपनीताभ्युदयनिःश्रेयसफलतया रात्रिसत्रवत् पुरुषार्थत्वम् । **रत्नाकरः** संबन्धाक्षेपपरिहारे १०४.

⧗ **उपासनाफलभाजो यजमानस्यैव उपासनकर्तृत्वम् इति न्यायः** (पूर्वपक्षे) । **कल्पतरुः** ३।४।१३।४४ ब्र. सू.

* '**उपास्मै गायता नरः** इति ग्रामकामाय प्रतिपदं कुर्यात्' प्रतिपदो गुणकामस्य विकृतौ नातिदेशः । **भा.** ८।१।१४।२३–२५.

⧗ **उपास्योपासकयोर्भेदाभेदः संभवेत् इतिन्यायेन** सर्ववेदान्तसिद्धान्तः । **श्रीकर.** ३।३।३५ ब्र. सू.

* **उपेक्षात्वं** प्रवृत्तिनिवृत्त्यजनकज्ञानत्वम् । तादृशेन संस्कारानुत्पत्तेः सर्वसंमतत्वात् । उपेक्षाऽन्यत्वं च उपेक्षात्वात्यन्ताभाववत्त्वम् । तेन अंशे उपेक्षाऽऽत्मकस्य अंशे अनुपेक्षाऽऽत्मकस्य 'सुवर्णतृणे' इति ज्ञानस्य आद्यांशेन संस्काराजनकत्वमप्रत्यूहम् । तदंशे उपेक्षात्वाभावसत्त्वात् । **मणि.** पृ. १२, * **उपेक्षात्वानुपेक्षात्वयोः** अविरुद्धयोः एकानुभववृत्तित्वं संभवति । पृ. ३०.

* **उपोद्घातस्य** लक्षणम् 'चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते । प्रसक्तानुप्रसक्तादि प्रस्तुतादुपजायते ॥' वा. २।१।१।१ पृ. ३७२.

⧗ **उपोद्घातन्यायः** । 'प्रतिपाद्यमर्थं बुद्धौ संगृह्य प्रागेव तदर्थम् अर्थान्तरवर्णनम् उपोद्घातः' **न च** सूत्रकारवत् भाष्यकारेणापि विषयप्रयोजनवत्त्वं मुखतो नाभिधेयम् इति **वाच्यम्** । शिष्यानुग्रहाय **उपोद्घातन्यायेन** प्रवर्तनात् । **शारीरकभाष्यवार्तिकम्** पृ. ३१.

* **उपोद्घातपादोऽयं** द्वितीयाध्यायस्य प्रथमः पादः । **सा.** २।१।१७।४९ अन्ते ।

* **उपोषणम्** । दार्शपौर्णमासिके विध्यन्ते सति नियतम् उपोषणं स्यात् । (उपोषणमत्र दर्भादिदाहः समाप्तौ । 'उष दाहे' ।) भा. ८।१।३।९.

⧗ **उभयोरविशेषात् । ९।२।१९।५६ ॥**

दर्शपूर्णमासयोः एकमेव प्रकरणम् । तत्र च द्वावपि पार्वणहोमौ विहितौ । उभयोः प्रकरणे तयोर्विधानात् उभयोरपि यागयोः उभावपि पार्वणहोमौ स्याताम् अविशेषात्, पौर्णमास्यामेवैकः अमावास्यायामेव अपरः इति विशेषस्य वक्तुमशक्यत्वात् । तस्मात् उभयोः उभौ इति पूर्वः पक्षः ।

**यदभीज्या वा, तद्विषयौ । ५७ ॥**

पूर्वपक्षं वाशब्देन निरस्यन् सिद्धान्तमाह । उभयोर्यागयोः उभावपि होमौ न कर्तव्यौ । किन्तु यदभीज्या समुदायम् अभिलक्ष्य या इज्या यः पार्वणहोमः, तद्विषयः सः होमः । आग्नेयाग्नीषोमीयोपांशुयाजसमुदायमुद्दिश्य 'ऋषभं वाजिनम्' इतिमन्त्रकरणको होमः, आग्नेयसांनाय्यसमुदायमुद्दिश्य च 'अमावास्या सुभगा सुशेवा' इति मन्त्रकरणकहोमो विहितः । तस्मात् एकसमुदायविषयक एकः, अपरसमुदायविषयकोऽपरः । नोभौ उभयत्रापि इति सिद्धान्तः । **के.**

* **उभयोर्हविषोर्दधिपयसोर्मध्ये** एकैकस्य नाशेऽपि पञ्चशरावः कर्तव्यः । आर्तिन्यायः । **भा.** ६।४।६।२२–२३.

* **उभयस्मिन्** विवक्ष्यमाणे भिद्येत वाक्यम् । **भा. २।२।१२।२७ पृ. ५५७.**

§ **उभयतःस्पाशा रज्जुः इति न्यायः ।** अयं पक्षद्वयदोषसत्त्वे प्रवर्तते । 'स्पश बाधनस्पर्शनयोः' इति भौवादिकस्य 'स्पश ग्रहणसंश्लेषणयोः' इति चौरादिकस्य वा स्पाशा इति रूपमेतत् टाबन्तम् इति ज्ञेयम् । 'सैषोभयतःस्पाशा रज्जुर्भवति' इति 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति सूत्रभाष्यकैयटयोरुक्तम् । 'उभयतःपाशा रज्जुः' इति सकाररहित–पाशेतिटाबन्तरूपं तु अशुद्धमेव पूर्वोक्तभाष्यविरोधात् । 'पाशो बन्धनशस्त्रयोः' इत्यभिधानात् पाशशब्दस्य पुंस्त्वाच्च । (इदं तु अयुक्तम्, पाशशब्दस्य पुंस्त्वेऽपि उभयतःपाशा इति बहुव्रीहिणा रज्जुविशेषणत्वेन सामासिकपदस्य स्त्रीलिङ्गत्वोपपत्तेः । सादेशस्तु न स्यात् इति वक्तव्यम् । इति **केवलः**) । यथा मृगादिबन्धनार्थम् उभयत्र कृतायां स्पाशायां रज्जौ प्रविष्टो मृगादिः कुतश्चिदपि मार्गात् गन्तुं न शक्नोति तद्वत् । **साहस्री. ४०६.**

* **उभयतोऽतिरात्रत्वमपि** क चित् सत्रत्वलिङ्गम् । **के.**

* **उभयतोदतामश्वादीनां** न दानं विश्वजिति । **भा. ६।७।३।४.** * **उभयतोदतां दानं** प्रतिग्रहो विक्रयश्च अनाचारः उदीच्यानाम् । (उभयतो दन्ता येषां तेषामश्वादीनां दानम्) । **वा. १।३।३।७ पृ. २०४.**

§ **उभयपानात् पृषदाज्ये दध्नोऽपि स्यादुपलक्षणम्, निगमेषु पातव्यस्योपलक्षणात् । १०।४। २५।५१ ॥**

चातुर्मास्येषु 'पृषदाज्येनानुयाजान् यजति' इति श्रुतम् । प्रकृतौ च 'देवानाज्यपानावह' इति आवाहननिगदे पठ्यते । तच्च चोदकेन इह प्राप्तम् । तत्र निर्देशः कथं कर्तव्य इति विचारे पूर्वपक्षमाह । पृषदाज्ये हविषि सति निगमेषु दध्नोऽपि आज्यस्यापि च उपलक्षणं स्यात् 'दध्याज्यपानावह' इति वक्तव्यमित्यर्थः । कुतः ? उभयपानात् उभयोः दध्याज्ययोः देवतोद्देशेन त्यज्यमानत्वेन उभयोः पानात्, पातव्यस्य च प्रकृतौ उपलक्षणात् । अत्रापि उभयोः पातव्यत्वात् उभयोरुपलक्षणं न्याय्यम् । तस्मात् दध्याज्यपान् इति वक्तव्यम् इति पूर्वः पक्षः ।

**न वा परार्थत्वात्, यज्ञपतिवत् । ५२ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्दो व्यावर्तयति । न वा उभयं वक्तव्यम् । परार्थत्वात्, पातॄणामुपलक्षणार्थत्वात् पातव्यस्य द्रव्यस्य । तत्र एकेनोपलक्षितेषु पातृषु अन्येनोपलक्षणं व्यर्थम् । यज्ञपतिवत् यथा प्रकृतौ इडायाम् 'य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इत्यत्र यज्ञपतिः मनुष्याणां होतॄणां प्रशंसार्थः, न स्वार्थे कीर्त्यते इत्यविकारेण प्रयुज्यते तद्वत् । तस्मात् देवानाज्यपान् इत्येव वक्तव्यम्, न दध्याज्यपान् इति ।

**स्याद् वाऽऽवाहनस्य तादर्थ्यात् । ५३ ॥**

दध्नोऽपि उपलक्षणं स्यात् दध्याज्यपान् इति वक्तव्यम् । आवाहनस्य तादर्थ्यात् पातृदेवतास्मरणार्थत्वात् । तत्र पाताऽपि स्मर्तव्यः पेयमपि । तस्मात् चोदकानुग्रहाय पेयान्तरं दधि उपलक्षयितव्यम् । तस्मात् दध्याज्यपान् इति वक्तव्यम् । इति पुनः पूर्वपक्षः ।

**न वा, संस्कारशब्दत्वात् । ५४ ॥**

वाशब्देन शङ्कां निरस्यन् सिद्धान्ती आह । दधि नोपलक्षयितव्यम् । दध्नः संस्कारशब्दत्वात् पृषदाज्यं नाम पृषत्तासंस्कारविशिष्टम् आज्यम् । पृषत्तारूपसंस्कारश्च दध्ना क्रियते । तस्मात् दधि पृषत्तासंस्कारवाचकशब्दबोध्यं भवति । परार्थे दधि, न पातव्यम् । तस्मात् दधि नोपलक्षयितव्यम् ।

**स्याद्वा, द्रव्याभिधानात् । ५५ ॥**

दध्नः उपलक्षणं स्यात् इति पुनः पूर्वपक्षी आह । द्रव्याभिधानात् द्रव्यस्य प्रधानभूतस्य अभिधानात् । 'पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च' इति आज्येन तुल्यतया दधि अभिहितम् । तस्मात् दध्याज्यपान् इति वक्तव्यम् ।

**दध्नस्तु गुणभूतत्वादाज्यपानिगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् । ५६ ॥**

तुशब्देन शङ्कां निरस्यन् सिद्धान्ती आह । आज्यपानिगमाः स्युः । आज्यपाशब्दघटिताः निगमाः आज्यपानिगमाः स्युः । देवानाज्यपानावह इति वक्तव्यम्, न तु 'देवान् दध्याज्यपानावह' इति । दध्नः गुणभूतत्वात् । यत्तु 'पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च'



इति वचनात् तुल्यं दधि आज्येन प्रधानभूतमिति । तत्र । ग्रहणे हि तत् तुल्यमाज्येन, न यागे । यागो हि चित्रेण आज्येन श्रूयते 'पृषदाज्येन यजति' इति । अस्याः श्रुतेः आज्यप्रधानत्वात् दध्नो गुणत्वम्, न प्रधानत्वम् । तस्मात् दध्नः उपलक्षणं न कर्तव्यम् ।

**दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् । ५७ ॥**

चातुर्मास्येषु 'पृषदाज्येनानुयाजान् यजति' इति श्रुतम् । चोदकप्राप्तेषु आवाहनादिनिगमेषु 'देवानाज्यपानावह' इत्यादि वक्तव्यम् इति पूर्वमुक्तम् । इदानीम् 'देवान् दधिपानावह' 'स्वाहा देवान् दधिपान्' इत्यादि वक्तव्यम् इति पक्षमाह । वाशब्देन इतरपक्षं निवर्तयति । दधि प्रधानं स्यात्, न आज्यम् । कुतः ? आज्ये प्रथमान्त्यसंयोगात् । प्रथमः संयोग उपस्तरणम् । अन्त्यः संयोगः अभिघारणम् । उपस्तरणाभिघारणश्रुतिश्च 'यदि वसन्ते यजेत द्विरुपस्तृणीयात् सकृदभिघारयेत्, यदि प्रावृषि यजेत सकृदुपस्तृणीयात् द्विरभिघारयेत्' इति । आभ्याम् उपस्तरणाभिघारणशब्दाभ्यां दधि प्रधानभूतम् आज्यं च तस्य गुणभूतम् इति ज्ञायते । तस्मात् 'देवान् दधिपानावह' इति दध्न एव उपलक्षणं कर्तव्यम् इति ।

**अपिवाऽऽज्यप्रधानत्वाद् गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् । ५८ ॥**

अपिवाशब्दः दधिप्राधान्यपक्षस्य निरासार्थः । न दधिप्रधानं पृषदाज्यम् आज्यप्रधानत्वात् पृषदाज्यस्य । तत्र आज्यमेव प्रधानम्, तस्य विशेषणीभूतः पृषच्छब्दः गुणार्थो व्यपदेशः । आज्यस्य पृषत्तागुणं पृषच्छब्दो व्यपदिशति । स च पृषच्छब्दः संस्कारबोधकः शब्दः । एवं च पृषदाज्यपदार्थस्य आज्यप्रधानत्वात् पृषत् इति व्यपदेशो गुणार्थे सति पृषत् इति संस्कारवाचकः शब्दः भक्त्या स्यात् गौणः स्यात् । किञ्च 'पृषदाज्येन अनुयाजान् यजति' इति आज्यस्यैव यागसंबन्धात् तदेव प्रधानम्, तदेव च प्रयोजनवत् । न च यागे दधि करणं भवितुमर्हति श्रुतिप्राप्ते आज्ये सति प्रत्यर्थिनि । दध्ना तु आज्ये पृषत्ता गुणः संपाद्यते । पृषत्तागुणकं हि आज्यं यागकरणत्वेन श्रूयते । तस्मात् 'उपस्तृणाति अभिघारयति' इति व्यपदेशे गुणार्थे सति उपस्तृणाति इत्यादिः संस्कारशब्दः भक्त्या स्यात् गौणः स्यात् । तस्मात् आज्यपानिगमा एव भवेयुः, न दधिपानिगमाः इति सिद्धान्तः ।

**अपिवाऽऽख्याविकारत्वात्, तेन स्यादुपलक्षणम् । ५९ ॥**

चातुर्मास्येषु आवाहनादिनिगदेषु चोदकप्राप्तेषु 'देवान् पृषदाज्यपानावह' 'स्वाहा देवान् पृषदाज्यपान्' इत्यादि वक्तव्यम् इति पक्षमाह अस्मिन् सूत्रे । अपिवाशब्दः इतरपक्षव्यावृत्त्यर्थः । निगदेषु पृषदाज्यशब्दो वक्तव्यः आख्याविकारत्वात् । आख्यायाः आज्यपदस्य पृषदाज्यशब्दो विकारः । आज्यस्य दधिमिश्रणेन पृषदाज्यं नाम विकारो भवति । आख्याविकारत्वात् आख्येयविकारत्वात् तेन आज्यपदेन पृषदाज्यस्य उपलक्षणं स्यात् । तस्मात् 'देवान् पृषदाज्यपानावह' 'स्वाहा देवान् पृषदाज्यपान्' 'अयाड् देवानां पृषदाज्यपानाम्' 'देवाः पृषदाज्यपाः पृषदाज्यमजुषन्त' इति पठनीयम् इति अन्यः पूर्वपक्षः ।

**न वा स्याद्, गुणशास्त्रत्वात् । ६० ॥**

न वा वक्तव्यम् । वाशब्दः पृषदाज्यशब्दोपलक्षणपक्षव्यावृत्त्यर्थः । पृषदाज्यं न द्रव्यान्तरम् । आज्यशब्दो हि सर्पिषो वाचकः, पृषच्छब्दः चित्रस्य यथा पृषद्रज्जुः पृषन्मृगः इति । तेन पृषदाज्यशब्दः चित्राज्याभिधानं गम्यते । तेन पृषच्छब्दः गुणशास्त्रं गुणशासनं गुणबोधकः । तस्मात् पृषदाज्यपदस्य नोपलक्षणम् । अतः आज्यपानिगमा एव भवेयुः इति सिद्धान्तः । **के.**

* **उभयप्राप्तौ** व्यवस्थाविधिर्यथा वार्त्रघ्नीवृधन्वत्योः आज्यभागक्रमे पाठाल्लिङ्गाच्च उभयप्राप्तेः । **बाल. पृ १८.**

* **उभयवादितुल्यत्वात्** नैकः पर्यनुयोज्यः । **सु. पृ. ७७३.**

* **उभयविधाने** वाक्यभेदः । **भा. १।४।१।२ पृ. ३२५,** * **उभयसंबन्धे** वाक्यं भिद्येत । **२।२। १२।२७ पृ. ५६२.**

* **उभयसामके** संसवादिकृतौ नोपवती प्रतिपत् नाग्नियत्वती, अन्यैव क्रतुनिमित्ता भवितुमर्हति । **भा. १०।**

५।१६।६१, * उभयसामके संसवादिक्रतौ बृहद्रथंतरयोः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः । १०।६।८।२४–२६.

**⧗ उभयसाम्नि चैवमेकार्थापत्तेः।९।२।१७।४८॥**
संसवः गोसवः अपचितिः इति उभयसामानः क्रतवः । प्रकृतौ बृहद्धर्मा रथंतरधर्माश्च विद्यमाना इह चोदकेन प्राप्यन्ते । तत्र किम् उभयसाम्नि क्रतौ उभयधर्माः कर्तव्याः, उत व्यवस्था इति विचारे पूर्वपक्षमाह । उभयसाम्नि बृहद्रथंतरोभयसामके संसवादौ क्रतौ च एवं पूर्वाधिकरणोक्तकण्वरथंतरे इव उभयधर्माः स्युः । एकार्थापत्तेः उभयोरपि बृहद्रथंतरयोः एकस्मिन्नर्थे पृष्ठकार्ये आपत्तेः प्राप्तत्वात् । कण्वरथंतरे संसवादौ चेति चशब्दस्य संबन्धः । एवंशब्देन च उभयधर्मत्वमात्रं ग्राह्यम् ।

**स्वार्थत्वाद्वा व्यवस्था स्यात्, प्रकृतिवत् । ४९ ॥**
संसवगोसवादौ उभयसाम्नि क्रतौ बृहद्रथंतरयोरुभयोर्धर्माः कर्तव्या इति पूर्वपक्षं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । न बृहद्रथंतरयोः संहतयोः उभये धर्माः कर्तव्याः, किन्तु रथंतरे रथंतरधर्माः, बृहति बृहद्धर्माः इति व्यवस्था स्यात् । धर्माणां स्वार्थत्वात् रथंतरधर्माणां रथंतरार्थत्वात्, बृहद्धर्माणां च बृहदर्थत्वात् । साम्नोश्चैते धर्मा न पृष्ठस्य । तस्मात् रथंतरे प्रयुज्यमाने रथंतरधर्माः प्रयोक्तव्याः, बृहति च प्रयुज्यमाने बृहद्धर्माः । अतो धर्माणां व्यवस्था । प्रकृतिवत् प्रकृतौ इव । इति सिद्धान्तः । के.

**⧗ उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात् । १०।५।१६।५९ ॥**
संसवे गोसवे अपचितौ इत्यादिक्रतुषु 'उभे बृहद्रथंतरे कुर्यात्' इति श्रूयते । रथंतरनिमित्तकं बृहन्निमित्तकं च पृथक् कार्ये श्रुतम् । 'उपवतीं रथंतरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रियवतीं बृहत्पृष्ठस्य' इति । 'उपास्मै गायत' इत्युपवती, 'प्रयुजो वाचो अग्रियः' इत्यग्रियवती । एवं सति उभयसाम्नि बृहद्रथंतरोभयसामके संसवादिक्रतौ उपवत्यग्रियवत्योः प्रतिपदोः प्राप्तेः समत्वात् समुच्चयस्य चासंभवात् नैमित्तिकं बृहन्निमित्तकं रथंतरनिमित्तकं च प्रतिपद्ग्रहणं विकल्पेन स्यात् इति पूर्वः पक्षः ।

**मुख्येन वा नियम्येत । ६० ॥**
अथ पक्षान्तरमाह । मुख्येन प्रथमाधीतेन रथंतरेण उपवती प्रतिपत् नियम्येत । मुख्यत्वं विनिगमनायां हेतुः । तस्मादुभयसाम्नि क्रतौ रथंतरनिमित्तिका उपवती प्रतिपत् ग्राह्या । वाशब्दः विकल्पव्यावर्तकः ।

**निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् । ६१॥**
सिद्धान्तमाह । निमित्तविघातात् निमित्तस्य रथंतरस्य बृहतश्च परस्परविघातात् विरोधात् उपवती अग्रियवती च प्रतिपत् ग्रहीतुं न शक्यते । तस्मात् क्रतुयुक्तस्य केवलपृष्ठनिमित्तकस्य मन्त्रस्य कस्य चित् कर्म पठनं स्यात् प्रतिपत्त्वेन इति सिद्धान्तः । वाशब्दः इतरपक्षव्यावर्तकः । के.

**⧗ उभयसाम्नि विश्वजिद्वद् विभागः स्यात् । १०।६।८।२४ ॥**
संसवे गोसवे अपचितौ इति उभयसाम्नि क्रतौ बृहद्रथंतरयोः विभागः स्यात् विश्वजिद्वत् । यथा विश्वजिति सर्वपृष्ठे एकं रथंतरं पृष्ठकार्ये निविशते इतराणि परिसामकार्ये, एवं संसवादावपि अन्यतरत् पृष्ठकार्ये निवेशयितव्यम्, इतरत् परिसामकार्ये इति पूर्वः पक्षः ।

**पृष्ठार्थे वा, तदर्थत्वात् । २५ ॥**
पूर्वपक्षं वाशब्दो व्यावर्तयति । न विभागः साम्नोः । किं तर्हि पृष्ठार्थे पृष्ठस्य कार्ये उभे अपि सामनी स्याताम् । तदर्थत्वात् 'उभे बृहद्रथंतरे कुर्यात्' इति वचनस्य सामस्त्यार्थत्वात् । तस्मात् उभयोरपि ऋक्संस्कारत्वेन विनियोगः । तास्वेव ऋक्षु उभे अपि गातव्ये । इति सिद्धान्तः । समस्तविधानाच्च चोदकबाधो न दोषाय ।

**लिङ्गदर्शनाच्च । २६ ॥**
उभयसाम्नि संसवगोसवादिक्रतौ बृहद्रथंतरयोः उभयोरपि पृष्ठकार्ये एव लिङ्गदर्शनात् । 'महावृक्षौ वै बृहद्रथंतरे निधनेन समाप्येते यन्महावृक्षौ समृच्छयेते न ह्यत्र विभग्नं प्रभग्नम्' इति निधनभेदवचनात् लिङ्गात् एकस्थानता अवगम्यते । तथा 'पूर्वाह्णो वै रथंतरम्, अपराह्णो बृहत्' इत्यपरं लिङ्गम् एकेनाह्ना अभिसंबन्धात् एकस्थानतां दर्शयति । तस्मात् समस्तयोः पृष्ठदेशे निवेशः इति सिद्धान्तः । के.



* **उभयहविरार्तिन्यायः** । 'आर्तिन्यायः' इति झिन्दौ अधिकरणं द्रष्टव्यम् । के. ६।४।६।२२–२३.

* **उभयाकाङ्क्षालक्षणसंबन्धाभावे** हि अन्यतराकाङ्क्षालक्षणः संबन्धो गृह्यते, न संभवे । तस्मात् नष्टाश्वदग्धरथवदेव परस्परनियमः सिद्धः । वा. ३।३।४।११ पृ. ८१८.

* **उभयाग्निनाशे** पुनराधानरूपं प्रायश्चित्तम् । भा. ६।४।८।२६–२७.

**⧗ उभयाभावे विशिष्टाभावः इति न्यायः ।**
अस्य न्यायस्याप्युदाहरणं पक्षता संभवति । तथाहि यत्र सिद्धिरस्ति सिषाधयिषा च नास्ति, तत्र प्रकृतन्यायेन पक्षता न भवति । पक्षताप्रतिबन्धकसिषाधयिषाविरहविशिष्टायाः सिद्धेः सत्त्वात् । सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य असत्त्वादुभयाभावप्रयुक्तविशिष्टाभावः इत्यलमतिविस्तरेण । साहस्री. ५४८.

* **उभयाभिधाने** वाक्यं भिद्येत । 'भिद्येत तर्हि एवं सति वाक्यम्' । भा. १।२।१।७ पृ. ११९.

**⧗ उभयार्थमिति चेत् । ४।३।१३।३२ ॥**
दर्शपूर्णमासयोः प्रकरणे 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति श्रुतम् । तत्र किम् उभयाङ्गं वैमृधः कालार्थः पौर्णमासीसंयोगः, उत अङ्गत्वप्रयोजनाभ्यां संबन्धः इति विचारे पूर्वः पक्षः । वैमृधः उभयार्थे दर्शाङ्गं पौर्णमास्यङ्गं चेति । उभयोः प्रकरणे आम्नानात् । इति चेत् ।

**न, शब्दैकत्वात् । ३३ ॥**
पूर्वसूत्रेण पूर्वपक्षे प्राप्ते तं निषेधति । न उभयाङ्गं वैमृधः । शब्दैकत्वात् अनुनिर्वपति इति विधिशब्दस्य एकत्वात् । नहि एकस्मिन् वाक्ये एकः शब्दः वैमृधस्य दर्शपूर्णमासाभ्यां पौर्णमासीकालेन च संबन्धं विधातुं शक्नोति । तस्मात् नोभयाङ्गं वैमृधः ।

**प्रकरणादिति चेत् । ३४ ॥**
'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति श्रुतो वैमृधयागः प्रकरणात् दर्शपूर्णमासयोः प्रकरणात् उभयार्थ एव स्यात्, न पौर्णमासीमात्राङ्गम् इति पुनः पूर्वपक्षः । इति चेत् ।

**नोत्पत्तिसंयोगात् । ३५ ॥**
सिद्धान्ती निषेधति । न प्रकरणादुभयाङ्गता, किन्तु पौर्णमासीमात्राङ्गता । उत्पत्तिसंयोगात् । उत्पत्त्या उत्पत्तिवाक्येन वैमृधस्य संबन्धात् । एतदेव हि वैमृधस्य उत्पत्तिवाक्यम् । तच्च प्रकरणात् दर्शपूर्णमासाभ्याम् एकवाक्यतामियात् प्रत्यक्षं वा पौर्णमास्या । तत्र प्रत्यक्षसंयोगः प्रकरणात् बलवान् । तस्मात् पौर्णमासीमात्राङ्गं वैमृधः । के.

* **'उरु प्रथस्व'** इत्यादीनां पुरोडाशप्रथनमन्त्राणां निरपेक्षसाधनत्वावगमात् विकल्पः । भा. १२।३।१५। ३१–३५.

* **'उरूकं मन्यमानाः'** इत्यग्निगुप्रैषे उरूकशब्देन वपाऽभिधानम् । उरु विस्तीर्णम् ऊको मेदो यत्र इत्यवयवद्वारा वपायां युक्तः उरूकशब्दः । वि. ९।४।४.

* **उरोबृहती बृहती** । पादेषु अक्षराणि ८।१२। ८।८ । उदा० एतं शंसमिन्द्र (ऋसं. १०।९३।११) । के.

* **'उलपराजिं स्तृणाति'** ऊर्ध्वैस्तृणैः दीर्घे वेदिमध्ये स्तरणम् उलपराजिस्तरणं प्रत्येतव्यम् । वा. २।१।१४।२४ पृ. ७४० । उत्पूर्वस्य लुनातेः कपन्–प्रत्यये धात्वन्तोपसर्गान्तयोः लोपनिपातनात् ककारनकारयोश्च इत्संज्ञत्वेन लोपात् उलपशब्दस्य ऊर्ध्वलवनार्हसुगन्धादिकठिनतृणवाचिता ऊर्ध्वशब्देनोक्ता । तृतीयया उलपैः कृता राजिः इत्यर्थे तृतीयासमासो दर्शितः । रेखाऽपरपर्यायराज्याकारत्ववाचितया राजिशब्दं व्याख्यातुं दीर्घमित्युक्तम् । सु. पृ. १०६७. (ऊर्ध्वलवनं नाम कियन्तं चित् मूलभागं त्यक्त्वा भूमेरुपरि चतुरङ्गुलादिभागे लवनम् । के.) * 'उलपराजिं स्तृणाति' वेद्यामास्तरीतुं संपादितस्तृणसमुदायः उलपराजिः । वि. ३।१।१४.

* **उलूखलम्** एकं तन्त्रेण राजसूये नानाबीजेष्टौ, न तु नाना । भा. ५।२।७।१३–१५. * **उलूखलम् औदुम्बरम्** अग्निचयने उपधानार्थम् । तत्र 'सर्वौषधस्य पूरयित्वाऽवहन्ति' इत्यवहननं संस्कारार्थे सकृदेव कर्तव्यम् अदृष्टफलकत्वात् । वि. ११।१।६. * **उलूखलं** किं तन्त्रम् उत भिन्नम् इति फलसंशयः, किं कृष्णाजिनादयः पृथक् पदार्थाः उत कृष्णाजिनास्तरणादिफली-

करणान्तः एकः पदार्थः इति कृष्णाजिनास्तरणाधिकरणशरीरम् । शा. ५।२।६.

* **उलूखलमुसलयोः** प्रोक्षणं दर्शपूर्णमासयोः अपूर्वप्रयुक्तं न हन्तिपिषिप्रयुक्तम् । भा. ९।१।२।२–३ वर्णक१, * **उलूखलमुसलधर्मः** प्राकृतं प्रोक्षणम् , राजसूये नैर्ऋते चरौ नखेषु भवति । 'नैर्ऋतं चरुं नखावपूतानाम्' इत्युक्तत्वात् । ९।२।१२।४०. * **उलूखलस्थापनं** कृष्णाजिने अवघातपदार्थावयवः । वि. ५।२।७. * **उलूखलादिपात्रेषु** वारणवैकङ्कतत्वविधिः । सु. पृ. १०६२.

* **उल्मुकस्य** च चतुष्पथस्य च न विकल्पः किन्तु चतुष्पथे स्थापिते उल्मुके होमः कर्मविशेषे । **संकर्ष.** २।४।१५.

* **उष्ट्रस्य** दानं प्रतिग्रहो विक्रयश्च अनाचारः उदीच्यानाम् । वा. १।३।३।७ पृ. २०४, * उष्ट्रस्य बालः करभः । ३।४।४।१३ पृ. ९२०, सु. पृ. १४११.

⧗ **उष्ट्रकण्टकभक्षणन्यायः** । यथा उष्ट्रस्य शमीकण्टकवेधजातदुःखकालेऽपि शमीपत्रभक्षणजसुखलेशो भवति , तथा अभीष्टविषयोपार्जनदुःखकाले तदुपार्जितद्रव्यजसुखलेशो यत्रोपदिश्यते, तत्रास्य प्रवृत्तिरिति । **साहस्री.** ४६८.

⧗ **उष्ट्रलगुडताडनन्यायः** । उष्ट्रताडनं तन्मानेनैव लगुडेन क्रियते । तथा तार्किकोत्थापिता शङ्का तन्मतेनैव निराक्रियते । **संग्रहः.**

⧗ **उष्ट्रलगुडन्यायः** । अयं हि स्वमते परेणोद्भाव्यमानानां दूषणानां तन्मते पातनेऽवतरतीति । यथा उष्ट्रेणोह्यमानेनैव लगुडेन तत्प्रहारः, तथा प्रकृतेऽपि । **साहस्री.** १०९.

* उष्ट्रलगुडन्यायः । 'सर्वैरेव प्रमाणैर्बाह्यार्थः उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैः न संभवति इत्युच्यते ' इत्ययं दोषः न केवलं ममानिर्वचनीयवादिनो मते न प्रसरति इत्येतावत् , किन्तु 'अन्तः सत्' इति वादिनो 'बहिः सत्' इति वादिनश्च बौद्धस्य मते वैशेषिकमते इव प्रसरति इति उष्ट्रलगुडन्यायोऽप्यनेन ग्रन्थेन ( भामतीस्थेन ) सूचितः । **परिमलः.** २।२।५।२८ ब्रसू.

* **उष्णिक्** ( छन्दः ) अष्टाविंशत्यक्षरा । पादेषु अक्षराणि ८।८।१२ उदा० य इन्द्र सोम पातमः ( ऋसं. ८।१२।१ ) । किंवा ७।७।७।७ उदा० मंसीमहि त्वा वयम् ( ऋसं. १०।२६।४ ) । के.

* **उष्णिहि** नाम छन्दसि तृतीयः पादो द्वादशाक्षरः, आद्यौ द्वौ पादौ अष्टाक्षरौ । वि. ९।२।६ वर्णकं ३.

* **उष्णिग्गर्भा गायत्री** । पादेष्वक्षराणि ६।७।११ उदा० ता मे अश्व्यानाम् ( ऋसं. ८।२५।२३ ) । के.

* **उस्राशब्देनैव** आनुबन्ध्यायागे निगमेषु द्रव्याभिधानम् । भा. १०।४।१६। ३२–३३.

## ऊ.

* **'ऊ' इति निधनं सौभरे** स्वर्गकामस्य काम्यम् । **वि.** २।२।१३, * **'ऊर्क्' इति निधनं सौभरे** अन्नाद्यकामस्य काम्यम् । २।२।१३.

* **ऊर्णनाभिः** लूताकीटः । 'प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्तते ' तया लालया स तन्तून् प्रसारयति । श्लो. वा. संबन्धाक्षेपपरिहारे ५१ । अत्र शांकरं भाष्यम् 'तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणात् लाला कठिनतामापद्यमाना तन्तुर्भवति ' इति । २।१।२५. ब्रसू.

⧗ **ऊर्णनाभिन्यायः** । यथोर्णनाभिः स्वत ऊर्णा सृजति संहरति च, एवं जगदीश्वरोऽपि सृजति संहरति च । 'यथोर्णनाभिः सृजते गृह्णते च ' 'स यथोर्णनाभिस्तन्तुनोच्चरेत्, यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति ' इत्यादिश्रुतेः । अयं न्यायः एकस्यैव ब्रह्मणोऽभिन्नोपादानत्वे कर्तृत्वे च दृष्टान्तरूपः इति बृहदारण्ये शारीरकसूत्रे ( १।२।२१ ) भाष्ये, अद्वैतकौस्तुभादिषु च स्पष्टः । **साहस्री.** ७६७.

⧗ **ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥** ' इति न्यायः । अयं न्यायोऽर्थवादरूपः प्रत्युत्थानप्रशंसापरः । ( यूनः प्राणाः स्थविरे आयति सति ऊर्ध्वम् उत्क्रामन्ति इव ) । **साहस्री.** ६३२.

* **ऊर्ध्वगानम्** आवृत्तिं विना पाठक्रमेण ऋचां गानम् । तच्च त्रिवृत्स्तोमे । वि. ५।३।४.



* **ऊर्ध्वजान्वासनं** होतृवरणधर्म एव, न सर्वर्त्विग्वरणधर्मः प्रकरणधर्मो वा 'आसीनमूर्ध्वजानुं होतारं वृणीते ' इति विधानात् । **संकर्ष.** ४।२।५.

* **ऊर्ध्वत्वम्** ऋजुत्वं संततत्वम् इत्याघारधर्माणां दर्शपूर्णमासयोः समुच्चयः, न विकल्पः । वि. १२।३।३.

* **ऊर्ध्वबृहती बृहती** । पादेषु अक्षराणि १२।१२।१२ उदा० अध यदिमे ( ऋसं. ९।११०।९ ) । के.

* **ऊर्ध्वमानं** सप्तदशारत्नित्वं वाजपेयपशूनां यूपस्य , न तु षोडशिपात्रस्य । वि. ३।१।९.

⧗ **ऊषरवापितबीजन्यायः** । वैयर्थ्यबोधकोऽयम् । यत्र क्रिया निष्फला तत्रैवावतरतीति स्पष्टार्थः । **साहस्री.** ५६३.

⧗ **ऊषरवृष्टिन्यायः** । ( यथा ऊषरे जायमानाऽपि वृष्टिर्व्यर्था न धान्यजननायालम् । एवं यत्र कर्मादि निष्फलं तत्रायं प्रवर्तते । के. ) **साहस्री.** २९५.

( उत्तरस्मिन् ऊहप्रघट्टके बिन्दुक्रमरचना विषयानुसारेण कृता, न प्राग्वत् इति ज्ञेयम् । तत्र आदौ संगतिः, स्वरूपम्, ऊहभेदाः, यस्य ऊहः, यस्य नोहः । ततः परं च प्राग्वदेव ऊहपदारब्धानां समस्तपदानां निवेशः इति ) ।

* **ऊहः** अतिदेशोपजीव्यत्वात् अतिदेशनिरूपणानन्तरं निरूप्यते । कु. ९।१।१।१. * ऊहः अभ्यासात्मकः भाक्तः अध्रिगुप्रैषे एकधाशब्दस्य । सोऽयम् अभ्यासमात्रेण प्रकृतितोऽन्यथाभावात् ऊहः इति व्यवह्रियते । भाट्ट. ९।३।११. * ऊहः । इदानीम् ऊहलक्षणं वर्तयिष्यामः । त्रिविधश्च ऊहः मन्त्रसामसंस्कारविषयः । स इह प्राधान्येन वक्ष्यते । अन्यदपि किंचिद् उपोद्घातेन प्रसङ्गेन च । भा. ९।१।१।१. * ऊहः द्वारान्तरसंबन्धनिमित्तः अन्यथाभावात्मकः ( प्रयोगविकारात्मकः **सोम.** ) । शा. ९।१।१ पृ. ५७४, * ऊहः नाम प्राकृतस्य प्रयोगस्य अन्यथाभावः । १०।१।१. * ऊहः नाम वितर्कणा । सा च एकरूपा । मन्त्रसामसंस्कारेषु क्रियमाणा सैव सा । न तस्याः कश्चिद्विशेषः । विषयस्तु त्रिविधोऽस्याः । वा. ९।१।१।१ पृ. १६३५. * ऊहः पदान्तरप्रक्षेपः 'अग्नये जुष्टं निर्वपामि ' इत्यत्र सौर्ये चरौ 'सूर्याय जुष्टं निर्वपामि ' इत्यादिः । **वि.** ९।१।९. * ऊहः । यस्य पदार्थस्य यत्पदार्थसंस्कारता उपदेशादवगता, तस्य पदार्थस्य तद्विलक्षणपदार्थसंस्काराय विकृतः पदार्थः ऊहः । कु. ९।१।१।१. * ऊहः विकारेषु उपपद्यते । भा. ३।२।११।२९. * ऊहः । विकृतौ ( सौर्ये चरौ ) भाव्यं ब्रह्मवर्चसम् । तस्य प्रत्यक्षं वाक्यविहितं करणम् । भाव्यमानं धर्मानाकाङ्क्षति करणानुग्रहद्वारेण । न च संनिधाने धर्माः सन्ति । तस्मात् चोदनासामान्यात् आग्नेयधर्माः सौर्येऽतिदिश्यन्ते साकाङ्क्षत्वात् वाक्यस्य । तत्रैषा वचनव्यक्तिः यथा आग्नेये उपकृतं तथा सौर्येऽपि उपकर्तव्यम् । आग्नेये च निर्वापमन्त्रेण भाव्यमानस्य देवता प्रकाशिता । इहापि तथैव प्रकाशयितव्या । न च ऊहादृते शक्यते प्रकाशयितुम् । तस्मादूहः कर्तव्यः । टुप्. ९।१।१।१ पृ. १६३७. * ऊहः सिद्धो भवति अङ्गानाम् अपूर्वप्रयुक्तत्वात् । भा. ९।१।१।१ पृ. १६३६.

* **ऊहः द्विविधः** वाचनिको न्यायगम्यश्च । आद्यो यथा 'असकृदवहन्ति ' इति । द्वितीयस्य तु लक्षणमाहुर्माधवाचार्या अधिकरणमालायाम् 'प्राकृतस्थानपतितपदार्थान्तरकार्यतः । ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः ॥ ' इति ( नवमे प्रस्तावना ) । अत्र कार्यत उपकारात् प्रयोजनत्वेन चास्य हेतुत्वम् , तेन उपकारार्थमित्यर्थः । अत्र च प्राकृतस्थानपतित इत्यनुक्तौ , पदार्थान्तरं व्रीहितो यवाः, तदुपकारार्थं विकृते पदार्थान्तरान्वयादेव अन्यथाभूते प्रोक्षणावघातप्रयोगे अतिव्याप्तिः स्यात्, अत उक्तं प्राकृतस्थानपतितेति । न च व्रीहिस्थानापन्ना यवाः 'प्रत्यक्षविधिना भावे विधानेन विकारतः । स्वशब्दाच्च निषेधानुवादात् तत्कार्यकारिता ॥ ' इति **सोमेश्वर**संगृहीतनवमोक्तस्थानापत्तिप्रमाणपञ्चकाभावात् । अन्यथा वैपरीत्यस्यापि प्रसङ्गाच्च । पदार्थान्तरेत्यनुवादः । तत्रैव हि विकृतत्वं संभवति नान्यत्र, इत्यतः तत्पदकृत्यं न कार्यम् । कार्यतः इत्यनुक्ते 'असकृदवहन्ति ' इति वाचनिके विकृतौ अवघातस्य विकृतप्रयोगे अतिव्याप्तिः स्यात् अत उक्तं कार्यत इति । असौ च वाचनिको न कार्यतः आवृत्तस्यैवावघातस्य तुषविमोकलक्षणकार्यतः प्राप्तेः,

अतो न तत्रातिव्याप्तिरिति । विकृतः इत्यनुक्ते पदार्थान्तरेत्यस्यापि लक्षणाननुप्रवेशोक्तेः वैकृते व्रैहे हविषि अवघातप्रयोगे अतिव्याप्तिः स्यात्, अत उक्तं विकृतः इति । न चासौ अवघातो विकृतः पदार्थान्तरान्वयात् इति नातिव्याप्तिरिति । चतुर्थपादेन तु ऊहशब्दस्य यौगिकत्वं दर्शितम् । तेन कार्यकल्प्यत्वं लब्धम् । इतरांशस्तु रूढिलभ्यः इति योगरूढोऽयं पङ्कजादिशब्दवत् ऊहशब्द इति भावः ।

सोऽयमूहः विभक्तविभागेन एकादशविधः । तद्यथा प्रथमं तावत् त्रिविधः मन्त्रोहः सामोहः संस्कारोहश्चेति । अत्र गोबलीवर्दन्यायेन मन्त्रोहसामोहयोः पृथगुक्तिः तत्साधकनावमिकन्यायभेदात् । नवमद्वितीयपादषोडशाधिकरणे हि सामोहन्याय उक्तः । तदुत्तरपादाद्ये च तदितरमन्त्रोहन्याय उक्त इति । मन्त्रोहोऽपि नवधा । क चित् प्रकृतिमात्रमूह्यते न लिङ्गं वचनं च 'सूर्याय जुष्टम्' इति । क चित् लिङ्गमात्रमूह्यते न प्रकृतिर्वचनं च यथा 'वस्व्यसि रुद्राऽसि' इत्येकहायन्या मन्त्रः साण्डे 'वसुरसि रुद्रोऽसि' इति । क चित् वचनमात्रमूह्यते न प्रकृतिर्लिङ्गं च यथा 'छागस्य वपाया मेदसः' इति मन्त्रः प्राजापत्येषु 'छागानाम्' इति । क चित् प्रकृतिलिङ्गे एव ऊह्येते न लिङ्गं यथा 'अग्नये जुष्टम्' इत्येतत् 'अदित्यै जुष्टम्' इति । क चित् प्रकृतिवचने एवोह्येते न लिङ्गं यथा 'अग्नये जुष्टम्' इत्येतत् 'विश्वेभ्यो देवेभ्यः' इति वैश्वदेवे हविषि । क चित् लिङ्गवचने एवोह्येते न प्रकृतिः, यथा 'प्रास्मा अग्निं भरत' इत्यत्र अस्मैपदं पुंलिङ्गैकवचनम् 'महला आलभेत' इत्यादिषु 'प्राभ्यः' इत्येवं स्त्रीलिङ्गबहुवचनरूपेण । क चित् त्रीण्यपि प्रकृतिलिङ्गवचनानि ऊह्यन्ते, यथा 'आपो देवीः शुद्धाः स्थ' इति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रः । तत्र अप्शब्दः स्त्रीलिङ्गो बहुवचनान्तो 'घृतं प्रोक्षणम्' इति विहिते घृते प्रोक्षणे 'घृत देव शुद्धमसि' इति नपुंसकलिङ्गैकवचनान्तघृतपदोहे सर्वमेवान्यथा भवति । क चित्तु प्राकृतस्यैव सकलस्य पदस्य अभ्यासात्मक ऊहः, यथा पशुगणे 'एकधैकधा' इति । क चित्तु अव्ययसंज्ञकतद्धितान्तपदस्थाने अव्ययसंज्ञकतद्धितान्तान्तरपदरूपम् ऊह्यते, यथा वाजसनेयिनां कर्कमते 'मित्रावरुणौ त्वोत्तरतः' इत्युत्तरपरिधिपरिधानमन्त्रः पित्र्यायाम् 'मित्रावरुणौ त्वा पुरस्तात् परिधत्ताम्' इति । यथा च आहवनीयावेक्षणे 'सूर्यस्त्वा पुरस्तात् पातु' इति प्राकृतो मन्त्रः पित्र्यायाम् 'सूर्यस्त्वा दक्षिणतः पातु' इत्यूह्यते । संप्रदायमते तु अत्र मन्त्रद्वयेऽपि ऊहो नास्तीत्युक्तम् । क चित्तु अतद्धितान्तस्यापि अव्ययस्य स्थाने अतद्धितान्तमपि अव्ययम् ऊह्यते, यथा 'अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने । आदित्यं ज्योतिषां ज्योतिरुत्तमं श्वो यज्ञाय रमतां देवताभ्यः ॥' इत्यन्वाधानमन्त्रे याजमाने सद्यस्कालप्रकृतौ मन्त्रलोपेऽपि सद्यस्कालविकृतौ 'अद्य यज्ञाय रमताम्' इत्यूहः क्रियते । तत्र 'श्वः' इत्यव्ययस्थाने 'अद्य' इत्यव्ययमूह्यते । इत्यूहभेदनिरूपणम् । बाल. पृ. १२६–१२७.

* ऊहः **त्रिविधः**—(१) मन्त्रोहः (२) सामोहः (३) संस्कारोहः इति । तत्र मन्त्रोहः दशविधः—(१) प्रकृतिमात्रोहः (२) लिङ्गमात्रोहः (३) वचनमात्रोहः (४) प्रकृतिलिङ्गोहः (५) प्रकृतिवचनोहः (६) लिङ्गवचनोहः (७) प्रकृतिलिङ्गवचनोहः (८) सकलपदाभ्यासः (९) तद्धितान्ताव्ययपदोहः (१०) अतद्धिताव्ययपदोहः इति । बाल. पृ. १२६–२७.

* ऊहः **अष्टविधः** । (१) क चित् प्रकृतिः ऊह्यते, यथा सूर्याय जुष्टमिति लिङ्गवचनं च तदवस्थम् । (२) क चिल्लिङ्गम् ऊह्यते, यथा 'वस्व्यसि, रुद्राऽसि' इति एकहायन्या मन्त्रः 'वसुरसि, रुद्रोऽसि' इति साण्डे । अत्र प्रकृतिवचने तदवस्थे । (३) क चित् वचनमूह्यते, यथा छागस्य वपाया मेदसः इत्ययं मन्त्रः प्राजापत्येषु छागानां वपायाः इत्येवमूह्यते । अत्र प्रकृतिलिङ्गे तदवस्थे । (४) क चित् प्रकृतिर्लिङ्गं च ऊह्येते, यथा 'अग्नये जुष्टम्' इत्यत्र 'अदित्यै जुष्टम्' इत्यत्र वचनं तदवस्थम् । (५) क चित् प्रकृतिवचने ऊह्येते, यथा 'अग्नये जुष्टम्' इत्यत्र विश्वेभ्यो देवेभ्यो



जुष्टमिति । अत्र लिङ्गं तदवस्थम् । (६) क चित् लिङ्गवचने यथा 'प्रास्मा अग्निं भरत' इत्यत्र 'अस्मै'-पदं पुंलिङ्गैकवचनम्, 'महला आलभेत' इत्यादिषु 'प्राभ्योऽग्निम्' इति स्त्रीलिङ्गबहुवचनरूपेण ऊह्यते । अत्र प्रकृतिस्तदवस्था । (७) क चित् त्रयाणामपि, यथा 'आपो देवीः शुद्धाः स्थ' इति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रः तत्र अप्शब्दः स्त्रीलिङ्गेषु बहुवचनान्तः 'घृतं प्रोक्षणम्' इति विहिते घृते 'घृत देव शुद्धमसि' इति । (८) क चित् तु तदवस्थस्य सकलस्य अभ्यासः । यथा पशुगणे एकधैकधा इति एकधाशब्दः अभ्यस्यते । **टुप्–रत्न.** ९।३।१।१.

* ऊहः **षडङ्गः** । मन्त्रविषय इदानीमूहश्चिन्त्यते । स च षडङ्गः । ये ह्यर्थवन्तो मन्त्राः, मुख्यार्थाभिधायिनश्च, अपूर्वप्रयुक्ताश्च धर्माः, प्रकृतौ समवेतार्थाभिधायिनः, अपरार्थाश्च, यदि चोच्यते प्राकृतस्थानापन्नान्यद्रव्यदेवताका विकृतिरिति। **टुप्.** ९।३।१।१ पृ. १७४३. अत्र **तन्त्ररत्नम्** । (१) अर्थवन्तः अर्थप्रकाशनार्थाः न तु उच्चारणमात्रात् अदृष्टं कुर्वन्ति, (२) मुख्यार्थाभिधायिनः न तु गौणार्थाः, (३) तथा अपूर्वप्रयुक्ताश्च धर्माः न तु अग्न्यादिस्वरूपप्रयुक्ताः, (४) तथा प्रकृतौ समवेतार्थाभिधायिनः न तु सवित्रादिपदवत् असमवेतार्थाः, (५) तथा अपरार्थाश्च न तु यज्ञपतिशब्दवत् परार्थाः, (६) तथा यदि वा प्राकृतस्थानापन्नान्यद्रव्यदेवताका विकृतिः इति ।

**(अथ यस्य ऊहः)**

**ऊहः अग्निशब्दस्य विकृतौ निर्वापमन्त्रे ॥ गुणशब्दस्तथेति चेत् ।** ९।१।१३।३८ वर्णकं १ ॥

**भाष्यम्**— तस्मिन्नेव वाक्ये (देवस्य त्वा इत्यादौ) दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इति समाम्नायते । तत्रायमर्थः सांशयिकः किमग्निशब्दोऽपि विकृतौ नोह्यते, सोऽपि न समवेतवचनः, उत ऊहितव्यः, समवेतवचनो हि स इति । किं प्राप्तम्? एवं चेत्तत्र संशयः, सोऽपि गुणशब्दः तथैव असमवेतवचनः । कुतः? सवित्रादयः अस्मिन् वाक्ये असमवेतवचनाः । यदि अग्निशब्दोऽपि असमवेतवचनः,एवमवैलक्षण्यं भविष्यति । अवैलक्षण्यं च न्याय्यम् । यदि समानं कारणं तेन न्यायेन अवैलक्षण्यमुच्यते । समानं चेह कारणम्, य एषां शब्दानामर्थः, स इह प्रयोगे नास्तीति । 'अग्नये जुष्टं निर्वपामि' इत्यस्यापि योऽर्थः स इह नास्ति । 'अग्नये जुष्टं निर्वपामि' इत्यनेन जुष्टस्य निर्वाप उच्यते । न चेह जुष्टस्य निर्वापोऽस्ति । अजुष्टं चेह निर्वप्तव्यम् । निर्वापेणैव तत् जोष्यते । तस्मान्न समवेतवचनः । तस्यापि अश्रुतार्थस्य वचनम् इतरार्थे प्रयुज्येत निर्वापस्तुत्यर्थेनेति । तस्मात् एतदपि विकृतौ नोहितव्यमिति ।

**टुप्**— 'अग्नये जुष्टं निर्वपामि' इति 'जुषी प्रीतिसेवनयोः' इति (धातुपाठेन) अग्निना यत् द्रव्यं सेवितम्, तत् निर्वप्तव्यम् । न च अग्निना सेवितं द्रव्यमस्ति । तस्मात् अविद्यमानत्वात् तादृशस्य द्रव्यस्य असमवेतवचन इति ।

**न, समवायात् ।** ३९ ॥

**भाष्यम्**—नैतदेवम् । समवेतवचनो हि 'अग्नये जुष्टं निर्वपामि' इति । ननु एतदुक्तं जुष्टस्यात्र निर्वाप उच्यते, न च जुष्टं निर्वप्तव्यमिति । अत्रोच्यते । नैव जुष्टस्य निर्वापः एतेन वाक्येनोच्यते । किं तर्हि? निर्वापेण जुष्टकरणम् अग्नये जुष्टं करोमि इति । एवं हि दृष्टार्थे भवतीति । अतः अतुल्यकारणत्वात् वैलक्षण्यमेव न्याय्यम् । तस्मात् समवेतवचनः अग्निशब्दः ऊहितव्यश्च विकृताविति ।

**टुप्**— समवेतवचनः (अग्निशब्दः ।) कुतः? (न जुष्टस्य निर्वाप उच्यते, किन्तु) निर्वापेण करणभूतेन जुष्टं भावयेत् (इत्युच्यते । स जुष्टो) भाव्यमान एवं भाव्यते अग्निरिदं जोषिष्यते द्रव्यम् (इति) । एवं (देवताविशिष्टः) सेव्यमानः (प्रकाश्यमानः) दृष्टार्थो भवति निर्वापः ।

**शा**— '**तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि । मन्त्रे त्वत्राग्निशब्दो न समवेताभिधायकः ॥**' (तस्मादग्निशब्दो विकृतौ नोहितव्य इति प्राप्ते,) उच्यते '**नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते । निर्वापकरणात् तत्र कीर्त्यते जुष्टभावना ॥**' तस्मात् अग्निशब्दस्य ऊहः ।

**सोम**—पूर्वोक्ते एव मन्त्रे विचारात् **संगतिः** । ननु निष्ठया भूतत्वप्रतीतेः असमवेतवचनत्वं तदवस्थम् इति चेन्न । 'धातुसंबन्धे प्रत्ययाः' इति निष्ठाऽपि (क्तप्रत्ययः) वर्तमानार्थैव । अग्न्युद्देशेन निरुप्यमाणत्वमेव अग्निजुष्टत्वम् इति जोषणस्य वर्तमानत्वोपपत्तिः । यद्वा 'आशंसायां भूतवच्च' इति भविष्यति निष्ठा। **सूत्रार्थस्तु**– जुष्टविशेषणीभूतः अग्निशब्दोऽपि सवित्रादिवत् नोह्यः इति ।

**वि**-- 'तत्राग्निशब्दो नोह्यः स्यादूह्यो वा, स्तावकत्वतः । सवित्रादिवदाद्यो, नो समवेतार्थवर्णनात् ॥' तत्र देवस्यत्वेत्यादिमन्त्रे ।

**भाट्ट**-- तस्मिन्नेव मन्त्रे (देवस्य त्वा इत्यत्र) 'अग्नये जुष्टं निर्वपामि' इत्यत्र अग्निशब्दः समवेतार्थो न वेति चिन्तायाम्, यद्यपि अग्निः यागे समवेतः, तथापि संप्रदानत्वेन श्रुतस्य तस्य निर्वापे यागाद्यतिरिक्ते अनन्वयात् तादर्थ्यचतुर्थीमङ्गीकृत्य जुष्टपदार्थे अन्वयो वाच्यः । तत्र 'जुषी प्रीतिसेवनयोः' इति स्मृत्या जुष्टशब्दस्य सेवनार्थकत्वप्रतीतेः अग्निना सेवितम् इत्यर्थावगमात्, निर्वापावस्थायां च अग्निना सेवनाभावात् भूतकालवाचिक्तप्रत्ययानुपपत्तेः 'अग्नये जुष्टम्' इत्यस्य असमवेतार्थकत्वम् । अतश्च अग्निसेवितकर्मकत्वस्य निर्वापस्तुत्यर्थमुपादानात् सौर्यादावपि तदुपपत्तेः अनूहः । इति प्राप्ते, यद्यपीयं तादर्थ्यचतुर्थी, यद्यपि च जुष्टपदेनैव अन्वयः, तथापि 'अग्नये जुष्टम् अग्निना सेवितं यथा भवति तथा निर्वपामि' इत्यर्थाङ्गीकारेण जुष्टशब्दस्य क्रियाविशेषणत्वमङ्गीकृत्य निर्वापफलप्रकाशनेन इतरदैवत्यहविर्विवेकसंपत्त्यर्थतया निर्वापे देवतासंयोगस्य समवेतार्थत्वम् । इतरथा हि कस्यै देवतायै निरुतम् इति निर्णयानापत्तेः । वस्तुतस्तु तादर्थ्यचतुर्थ्यपि इयं प्रधानान्वयस्य अभ्यर्हितत्वात् क्रियान्वयिन्येव । अग्न्यर्थत्वं च निर्वापस्य विध्यनुरोधात् तदुद्देश्यकत्यागसाधनीभूतद्रव्यसंस्कारकत्वसंबन्धेन, इति न देवताऽर्थत्वापत्तिः । जुष्टपदं तु पूर्ववदेव क्रियाविशेषणम्, भविष्यदर्थो वा क्तप्रत्ययो लाक्षणिकः । अग्नेस्तु तेन पार्ष्ठिक एवान्वयः । देवतासंबन्धकीर्तनप्रयोजनं तु निर्वापे पूर्ववदेव समवेतार्थत्वम् । अस्तु वा इयं संप्रदानचतुर्थी अपि देवतात्वरूपसंप्रदानत्वैकदेशपरा, तथापि देवतायाः ग्रहणे इव निर्वापेऽपि अन्वयः निरुक्तप्रयोजनार्थं न विरुध्यते । जुष्टपदं पूर्ववत् । सर्वथा अग्निपदे समवेतार्थत्वात् ऊहः ।

**मण्डन**— 'अग्न्यादिशब्दो ध्रुवमूहितव्यः ।'

**शंकर**-- 'निर्वापमन्त्रेऽग्न्यूहः स्यात् ।' २०.

* ऊहः **ऐन्द्राग्नपदस्य** अग्निपदस्थाने ऐन्द्राग्नैकादशकपाले । **भा.** ९।३।१।१–२, ४–८, * ऊहः **तद्देवतापदानां** चित्रेष्टिनिर्वापमन्त्रे । ९।३।१।१–२, ४–८, * ऊहः **द्विवचनस्य** एकवचनबहुवचनयोः स्थाने द्विपाशिकायां विकृतौ पाशमन्त्रगतपाशशब्दे । ९।३।४।१०–१४, * ऊहः **धान्यशब्दस्य** दर्शपूर्णमासस्थपेषणमन्त्रगतस्य विकृतौ शाक्त्यानामयने 'मांसमसि' इति । धान्याधिकरणमिदम् । ९।१।१३।३८–३९ वर्णकं २, * ऊहः **नीवारपदस्य** व्रीहिपदस्थाने 'इन्द्राय मरुत्वते नैवारमेकादशकपालम्' इत्यादौ 'स्योनं ते०' इति मन्त्रे। ९।३।१।१–२, ४–८. * ऊहः **फलचमसपदस्य** सोमपदस्य स्थाने कर्तव्यो भवति । 'इन्द्राय त्वा वसुमते सोमं गृह्णामि' इत्यत्र असमानविधानपक्षे । **वा.** ३।६।१३।३६. * ऊहः **बहुवचनस्य** मेधपतिप्रातिपदिकात् परस्य एकवचनस्य स्थाने, द्विवचनस्य च स्थाने पश्वेकादशिन्याम् । **भा.** ९।३।१४।४४, * ऊहः **यजमानशब्दस्य** सूक्तवाकगतस्य द्विबहुकर्तृके विकृतियागे । ९।१।१५।४१.

**卐 ऊहः रक्तपदस्य हरितपदस्थाने मौद्गे चरौ प्राकृतबर्हिःस्तरणमन्त्रे 'पुण्डरीकैः स्तृणीत रक्तैः' इति ॥**

**जातिनैमित्तिकं यथास्थानम् । ९।३।२।३ ॥**

**भाष्यम्**– इदमामनन्ति 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति । तत्रेदं विधीयते 'पौण्डरीकाणि बर्हींषि भवन्ति' इति । अस्ति प्रकृतौ मन्त्रः 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुया शयाना । दर्भैः स्तृणीत हरितैः सुपर्णैर्निष्का इमे यजमानस्य ब्रध्ने' इति । इह चोदकेन प्राप्तः । अत्र दर्भैरिति जातिशब्दः । हरितैरिति नैमित्तिको गुणशब्दः । तत्र संशयः किं जातिशब्द



ऊहितव्यः नैमित्तिकः अविकारेण प्रयोक्तव्यः, उत उभावपि यथास्थानमूहितव्यौ, जातिशब्दः स्तरणे, नैमित्तिकः स्तरणसाधने द्रव्ये इति । तत एवं तावत् परीक्ष्यं किमयं हरितशब्दो हरितगुणविवक्षया प्रयुज्यते, उत स्तरणद्रव्यगुणाभिधित्सयेति । कश्चात्र विशेषः ? यदि दर्भाणां हरितगुणसंबन्धो वक्तव्यः, व्यक्तमसौ अदृष्टोऽर्थः । तदा पुण्डरीकाणामपि अदृष्टायैव हरितसंबन्धो वचनीयो भवतीत्यविकारेण प्रयोक्तव्यः । अथ स्तरणद्रव्यगुणविवक्षया प्रयुज्यते, तत्र पुण्डरीकाणामपि स्वगुणो वक्तव्यो भविष्यति । तदेतत् द्वयमपि हरितशब्दादवगम्यते । किं नु विवक्षितमिति संशयः । किं तावत् प्राप्तम् । अविकारेण प्रयोक्तव्य इति । तत एतत् तावच्चिन्त्यते हरितगुणविवक्षया प्रयुज्यते इति । कुतः ? हरितशब्दस्य मन्त्रे भावात् । नहि योयो द्रव्यगुणः सोऽवश्यवचनीयो भवति । यस्ययस्य तु वाचको मन्त्रे शब्दोऽस्ति, स गुणो वक्तव्य इति गम्यते । हरितगुणस्य वाचको मन्त्रोऽस्ति । तस्मात् हरितगुणो वक्तव्य इति । ननु स एव स्तरणद्रव्यगुणस्य वाचकः । नेत्याह । नहि असौ स्तरणद्रव्यगुणः इत्यनेन कारणेन हरितशब्देनोच्यते । कथं तर्हि ? हरितत्वयोगात् हरितशब्देनोच्यते । स एव हारित्यं श्रुत्या अभिदधाति, लक्षणया स्तरणद्रव्यगुणम् । श्रुतिश्च लक्षणाया ज्यायसी । तस्मात् हरितगुणविवक्षया प्रयुज्यते, विकृतौ नोहितव्य इति । **एवं प्राप्ते, ब्रूमः** । जातिशब्दो नैमित्तिकश्चोभावपि ऊहितव्यौ । तत एतत् वर्ण्यते । स्तरणद्रव्यस्य गुणविवक्षया प्रयुज्यते इति । यद्यपि हारित्यं श्रुत्या हरितशब्दोऽभिवदति, तथापि हरितगुणवचनमनर्थकम् । अदृष्टं हि तत्र कल्पनीयं स्यात् । तच्चाशक्यं दृष्टे संभवति । स्तरणद्रव्यगुणं तु लक्षणया अभिवदति । तद्वचने तु दृष्टं प्रयोजनं स्तरणद्रव्यप्रत्यायनम् । एवं चेत् इहापि स्तरणद्रव्यस्य पुण्डरीकस्य गुणः प्रत्याययितव्यः । तस्मात् तद्वाचक ऊहितव्यो रक्तशब्द इति ।

**शा**-- प्रकृतौ अस्ति बर्हिषि मन्त्रः 'दर्भैः स्तृणीत हरितैः' इति । तत्र दर्भशब्दस्थाने पुण्डरीकपदमूहितव्यं पूर्वेणैव न्यायेन । हरितपदस्थानेऽपि रक्तपदमूहितव्यम्, नेति संशयः ।

**सोम**-- द्रव्यवाचकशब्दोहमुपजीव्य तद्विशेषगुणवाचकशब्दोहविचारात् **संगतिः** । अत्र दर्भपदेनैव अभिधानसिद्धेः हरितपदे नोहः इति पूर्वपक्षः, गुणद्वारेणापि द्रव्यप्रकाशकत्वात् ऊहः इति सिद्धान्तः । **सूत्रार्थस्तु**– जातिशब्दो दर्भशब्दो द्रव्ये नैमित्तिकः, गुणशब्दो गुणे च यथास्थानम् ऊहितव्यौ इति ।

**वि**-- 'हरितोक्तिः पौण्डरीके न त्याज्या त्यज्यतेऽथवा ।, नादृष्टार्थत्वतो, नैवं गुणिद्रव्यस्य भासनात् ॥'

**भाट्ट**-- मौद्गे चरौ 'पौण्डरीकाणि बर्हींषि भवन्ति' इति श्रुतम् । तत्र बर्हिःपदेन तत्कार्याणि हविरासादनवेदिस्तरणहोतृषदनपवित्रकरणादीनि लक्षयित्वा तदुद्देशेन पुण्डरीकाणि विधीयन्ते । जन्यत्वसंबन्धार्थकश्च तद्धितः । तत्र वेदिस्तरणे प्रकृतिप्राप्ते 'स्तृणीत बर्हिः० ब्रध्ने' (भाष्ये द्र०) इति मन्त्रः अवश्यं बर्हिःपदे दर्भपदे चोहितव्य एव । हरितपदेऽपि ऊहितव्यो न वेति चिन्तायाम्, गुणस्य प्रकृतौ अविहितत्वेन तत्प्रकाशकपदस्य असमवेतार्थत्वात् अनूहः । कथञ्चित् मान्त्रवर्णिकगुणविधिकल्पनया वा समवेतार्थकत्वेऽपि इह पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वात् दर्भपदस्थाने ऊहितेन पुण्डरीकपदेनैव गुणप्रकाशनोपपत्तेः, न पुनः पदान्तरेण प्रकाशनापेक्षा । अतो हरितपदलोप एव, न तु तत्स्थाने पदान्तरप्रक्षेपः । इति प्राप्ते, विधौ श्रुतस्य पुण्डरीकपदस्य गुणविशिष्टपद्मवाचित्वेऽपि प्रकृतौ दर्भादिपदस्य जातिमात्रवाचित्वात् तन्मन्त्रप्रकाशनार्थं जातिमात्रवाचकस्य पद्मादिपदस्यैव दर्भादिपदस्थाने ऊहितव्यत्वात् प्रकृताविव पदान्तरेण गुणप्रकाशनार्थं हरितपदस्थाने पुण्डरीकपदशक्यगुणवाचिपदान्तरोहः आवश्यक एव । तच्च यद्यपि 'पुण्डरीकं सिताम्भोजम्' इति त्रिकाण्डीस्मरणात् सितपदं प्रसज्यते, तथापि 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति वेदे (छाउ. १।६) प्रयोगात् 'पुण्डरीकाक्षः' इत्यादौ रक्ताम्भोजे एव शास्त्रस्थानां पुण्डरीकपदप्रयोगाच्च रक्ताम्भोजस्यैव विधेयत्वेन रक्तपदमेव ऊहितव्यम् । शास्त्रदीपिकायां तु दर्भपदस्थाने पुण्डरीकपदोहं वदतः पार्थसारथेः रक्तगुणस्यापि तेनैव प्रकाशनात् न रक्तपदोहः सिध्येत् इति ध्येयम् । ( मन्त्रे

दर्भहरितपदयोः गुणगुणिवाचकयोः पृथक् पाठात् पुण्डरीकरक्तपदयोः द्वयोरपि ऊह आवश्यक एव । रक्तपदसाहित्याच्च पुण्डरीकपदस्य विशिष्टवाचकत्वेन विशेष्यमात्रपरत्वस्वीकारात् पार्थसारथ्युक्तिर्युक्तैव । के. )

**मण्डन**— 'ऊहस्तथा स्याद्धरितादिशब्दे ।'

**शंकर**— 'पुण्डरीके च दर्भवान् ।' मन्त्रः ऊह्यः ।

* ऊहः **विश्वदेवपदस्य** अग्निपदस्थाने सांग्रहणीष्टौ । भा. ९।३।१।१–२,४–८, * ऊहः **स्थानिधर्माणां** प्रतिनिधौ । ९।२।१२।३९.

**( अथ यस्य नोहः )**

* ऊहः न **आवाहनमन्त्राणां** प्राकृतानामनुयाजदेवताप्रकाशनार्थे चातुर्मास्येषु । भा. १०।४।२५। ५१–६०, * ऊहः न **ऋचि** 'पूयति वा एतदृचोऽक्षरं यदेनदूहति, तस्मादृचं नोहेत्' ( ऋचः एतदक्षरं पूयति दुष्यति, यत् एनत् अक्षरम् ऊहति ) इति ऋगक्षरोहपर्युदासः । भाट्ट. ९।३।१.

**ऊहः न एकवचनस्य पत्नीं संनह्य इत्यत्र द्विबहुपत्नीके विकृतिप्रयोगे ॥**

**विकृतौ चापि तद्वचनात् ॥ ९।३।७।२१ ॥**

**भाष्यम्**— अथेदानीं विकृतौ पत्नीशब्दश्चिन्त्यते किं द्विपत्नीके बहुपत्नीके च प्रयोगे ऊहितव्यो नेति । किं प्राप्तम् ? द्विवाची बहुवाची वा पत्नीशब्दो द्विवचनं बहुवचनं चोपाददानः प्रकृतौ समाम्नानेन बाधितः । इह समाम्नानाभावात् ते उपादातुमर्हतीति । **एवं प्राप्ते, ब्रूमः** । विकृतावपि अविकारेण प्रयोक्तव्यः इति । कुतः ? तद्वचनात् । यत् प्रकृतौ तत् विकृतौ कर्तव्यमिति तद्वचनम् । प्रकृतौ चैकत्वमविवक्षितम् । इहापि द्वित्वं बहुत्वमेकत्वं च न विवक्षितव्यमिति । तस्मादविकारः । अथवा, तदेव विवक्षितम् । तदनेकपत्नीकेऽपि अविरुद्धम्, इत्यविकार एवावसीयते ।

**सोम**— पूर्ववैषम्येण उत्थानात् **संगतिः । सूत्रार्थस्तु**—विकृतावपि अविकारः, तद्वचनत्वात् पत्नीमात्रवचनेन एकवचनस्याविवक्षितत्वात् इति ।

**वि**— 'ऊह्यो नो वैष विकृता, वृद्धोऽपाठेन पाशवत् ।, नादृष्टच्छान्दसत्वाभ्यां पाशे छान्दसता नहि ॥'

**भाट्ट**— एवं प्रकृतावेव समवेतार्थकत्वेन द्विबहुपत्नीकप्रयोगयोरपि मन्त्रस्याविकारे सिद्धे विकृतौ द्विबहुपत्नीकप्रयोगयोरपि प्रत्येकव्यक्तिगतत्वेनैव एकवचनस्य प्रयोगोपपत्तेर्नोहः । न च एवमनेकपाशिकायां विकृतावपि एकवचनान्तस्य पाशमन्त्रस्य ऊहानापत्तिः, एकवचनस्य प्रत्येकव्यक्तिगतत्वेनोपपत्तेः इति वाच्यम् । प्रकृतौ पाशस्यैकत्वेन तद्गतैकवचनस्य अपूर्वसाधनव्यक्तिपरिच्छेदकीभूतसंख्याप्रकाशकत्वेन विकृतावपि तादृशसंख्याप्रकाशनार्थम् ऊहावश्यम्भावात् । प्रकृते त्वेकवचनस्य प्रमाणान्तरानवधृतपत्न्यनेकत्वावरुद्धप्रयोगविषयेऽपि पाशाधिकरणन्यायेन प्रवृत्त्यवगतेः न परिच्छेदकीभूतसंख्याप्रकाशकत्वमिति वैषम्यम् ।

**मण्डन**— 'नोहः प्रयोज्यो विकृतौ च पत्न्याम् ।'

**शंकर**—'विकृतावप्यसौ नोह्यः ।' असौ पत्नीमन्त्रः ।

* ऊहः न **चक्षुरादिपदानां** पशुगणे अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकानाम् । भा. ९।३।१०।२८–२९, * ऊहः न **पत्नीशब्दस्य** प्रैषमन्त्रगतस्य द्विबहुपत्नीके दर्शपूर्णमासप्रयोगे । ९।३।६।२०. * ऊहः न **प्रकृतौ** । 'प्रकृतौ चोहाभावात्' । वा. ९।२।११।२८. * ऊहः न **मनोतामन्त्रस्य** वायव्यादिपशौ । भा. १०।४।२१।४३, * ऊहः न **यज्ञपतिशब्दस्य** इडोपाह्वानमन्त्रगतस्य बहुयाजमानके विकारे असमवेतार्थकत्वात्तस्य । ९।३।१२।३३–४१, * ऊहः न **वचनस्य** 'प्रास्मै' इत्यत्र अध्रिगुप्रैषे सवनीयपशूनाम् अग्नीषोमीयेण समानविधित्वपक्षे । ९।३।८।२३.

**ऊहः न व्रीहिमन्त्रस्य नीवाराणां व्रीहिप्रतिनिधित्वेऽपि ॥**

**प्रतिनिधौ चाविकारात् । ९।३।९।२४ ॥**

**भाष्यम्**— अस्ति प्रतिनिधिः श्रुते द्रव्ये अपचरति 'आगमो वा चोदनाऽर्थाविशेषात्' इति । स च सदृशः 'सामान्यं तच्चिकीर्षा' इति । तद्यदा व्रीहिषु अपचरत्सु नीवारा उपादीयन्ते प्रतिनिधित्वेन, तदा व्रीहिमन्त्रो यः समाम्नातः 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति, तं प्रति संदेहः



किं नीवारेषु व्रीहिशब्दस्य ऊहेन प्रयोगः, उत अविकारेणेति । किं प्राप्तम् ? अविकारेण व्रीहिशब्दः प्रयुज्यमानः कार्यवतो नीवारान् न शक्नोति प्रकाशयितुमिति तेषु प्रकाशयितव्येषु नीवारशब्दः प्रयोक्तव्यो भवति । तस्मादूहः कर्तव्य इति । **एवं प्राप्ते, ब्रूमः** । प्रतिनिधौ चाविकारात् । प्रतिनिधौ चेति किम् ? ऊहो न कर्तव्य इत्यनुकृष्यते । किमेवं भविष्यति ? एवमविकारो भविष्यति । तत्र आर्षमनुग्रहीष्यते । तस्मादनूहः ।

**अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ।२४॥**

**भाष्यम्**— न चैतदस्ति अनूह इति । एवमनूहो भवेत्, यदि तस्मिन् मन्त्रे व्रीहिशब्दः अनाम्नातः स्यात् । अभावाच्चेतरस्य, यदि च नेदं द्रव्यान्तरं नीवाराख्यं स्यात् । न चेदुभयमस्ति । तस्मादभिधानसिद्धये ऊहितव्यो नीवारशब्द इति ।

**तादर्थ्याद्वा तदाख्यं स्यात्, संस्कारैरविशिष्टत्वात् । २५ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति, नैतदस्ति ऊह इति । अविकारेण प्रयोगः । कुतः ? तादर्थ्यात् । तादर्थ्यं व्रीह्यर्थता नीवाराणाम् । ये व्रीहौ प्रोक्षणादयः संस्काराः, ते तल्लक्षितेषु विशेषेषु कर्तव्याः । तेषां च विशेषाणां के चित् नीवारेषु विद्यन्ते । तदर्थेन प्रोक्षणादयः संस्काराः क्रियन्ते । संस्कारैः अविशिष्टश्चायं व्रीहिशब्दो यथा अन्येषु व्रीहिलक्षितेषु भवति, एवमेतेष्वपि नीवारेषु । तस्मादविकारेण प्रयोक्तव्य इति ।

**उक्तं च तत्त्वमस्य । २६ ॥**

**भाष्यम्**— कथं पुनर्ज्ञायते, योयो व्रीहिगतो विशेषः, स नीवारेष्विति । उक्तं च तत्त्वमस्य । उक्तोऽस्य विशेषस्य तद्भावः षष्ठेऽध्याये, 'सामान्यं तच्चिकीर्षा' ( ६।३।११।२७ ) इति । तस्मादप्यविकारः ।

**टुप्**— व्रीह्याकृतिव्यक्तिसादृश्यानां च व्याख्यानं तत्रैवोक्तम् । 'व्रीहीणां मेध' इत्यस्य प्रैयङ्गवादिषु कथं प्रयोग इति चेत् । यदि व्रीहीणां विकारस्तत ऊहः, यदि यवानाम्, ततोऽनभिधानमेव । **इति प्राप्ते, ब्रूमः** । कण्वरथंतरवदेतत् ( प्रैयङ्गवं हविः ) उभयविकारम्, उभयधर्माणां ग्राहकमिति ।

**सोम**— 'प्रास्मै' इत्येकवचनस्य अविवक्षितत्वात् अनूहेऽपि व्रीहिशब्दस्य विवक्षितत्वात् ऊहः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**– प्रतिनिधौ च अविकारमाश्रित्यैव मन्त्रः प्रयोक्तव्य इति ।

**वि**— 'व्रीहिप्रतिनिधावूहो व्रीहीणामिति नास्ति वा ।, अर्थादूहो, न सादृश्यादंशानां साधनत्वतः ॥'

**भाट्ट**— यत्र तु अवयवसादृश्येन प्रतिनिधिनियमः यथा नीवारपूतीकादौ, तत्र व्रीह्यादिशास्त्रेणैव नीवारादिगतव्रीह्यवयवसमानजातीयावयवानामपि साधनत्वावगतेः संस्कारविधीनां मुख्यद्रव्यसमानविधानत्वस्य तृतीये स्थापितत्वात् 'व्रीहीणां मेध' इतिमन्त्रोऽपि अविकारेणैव प्रवर्तते, न तु नीवाराणामित्येवमूहितव्यः । एवं सोमपदघटितमन्त्रा अपि, प्रतिनिधौ मुख्यस्थानापरप्रतिदेशे प्रमाणाभावात् । न च नीवारगतव्रीह्यवयवादौ व्रीहित्वजातौ प्रमाणाभावेन तत्र कथं व्रीहिपदप्रयोगः, पुरोडाशप्रकृतित्वस्य षष्ठ्यर्थत्वेन व्रीहिपदवाच्यव्रीहित्वजातेः प्रकृतित्वायोगे व्रीहिपदेन लक्षणया व्रीहित्वसाधनताऽऽक्षिप्तसाधनताकत्वसंबन्धेन व्रीह्यवयविनः इव तदवयवानामपि उपादानेन नीवारगतव्रीह्यवयवानामपि प्रकाशनोपपत्तेः । 'व्रीहिभिर्यजेत' इत्यनेन व्रीहित्वजातेः साधनता शब्देनोच्यते तदाश्रयावयविनः तदवयवानां च साधनत्वम् अर्थादाक्षिप्यते इत्युक्तं तृतीये । वस्तुतः पुरोडाशस्य व्रीह्यवयवतण्डुलप्रकृतित्वस्यैव सत्त्वेन व्रीहिपदेन व्रीह्यवयवानामेव लक्षणाच्च । सोमत्वादिकं तु अवयवावयविवृत्तिजातिरिति पूतीकगतसोमावयवेष्वपि सा अस्त्येव । पूतीकगतविजातीयावयवबाहुल्यात्तु सा नाभिव्यज्यते । अतस्तत्रापि **नोहः** । यदि हि नीवारत्वादिना नीवाराणां प्रतिनिधौ साधनत्वं भवेत्, तदा तेषां साङ्गप्रधानकरणासंभवे कर्मविध्याक्षिप्तानां संस्कारविध्युत्तरप्रवृत्तिकतया समानविधानत्वाभावात् भवेदप्यूहः । वस्तुतस्तु तदाऽपि नीवारेषु व्रीहिधर्मातिदेशे प्रमाणाभावः । सत्यपि व्रीहिकार्यापन्नत्वे लौकिकधर्मग्रहणेनैव तेषां निराकाङ्क्षत्वात् यूपावटास्तरणबर्हिषीव अतिदेशकल्पनाऽनुपपत्तेः, अन्यथा यूपावटास्तरणेऽपि बर्हिःसाध्यत्वसादृश्यादतिदेशापत्तेः । फलचमसे तु 'तमस्मै भक्षं प्रयच्छेत्' इति लिङ्गादेव

अतिदेशः इति वैषम्यम् । यदि तु द्रव्यमात्रासंभवे कर्मविधिमात्रालोचनयैव संस्कारविधिभ्यः पूर्वमेव नीवाराणां साधनत्वावगमः इति विभाव्यते , तर्हि तेषां प्रोक्षणादिधर्मांशे समानविधानत्वेऽपि ' व्रीहीणां मेध ' इतिमन्त्रस्य यवप्रयोगे इव नीवारप्रयोगेऽपि लोपो भवेत्, न तूहः । इयमेव च द्वयी गतिः यत्र नावयवघटितसादृश्येन प्रतिनिधिः, यथा अवघातप्रतिनिधितया नखविलुञ्छनादौ तत्र सर्वथैव धर्माणां लोपः, ' अधिषवणमसि वानस्पत्यम् ' इत्यादिमन्त्रमात्रलोपो वा । प्रकृते तु नीवारपूतीकादीनाम् अवयवघटितसादृश्येन प्रतिनिधित्वात् द्रव्यशास्त्रेणैव साधनत्वावगतेः संस्काराणामिव व्रीह्यादिपदघटितमन्त्रस्यापि अनूहेन प्राप्त्यविघातः । तदेतदपि तार्तीयाधिकरणस्य प्रयोजनमात्रकथनम् ।

**मण्डन**-- ' न मन्त्रमूहेत् प्रतिनिध्युपात्ते । '

**शंकर**-- ' अनूहश्च प्रतिनिधौ । ' ९. ' प्रियङ्गावूहनित्यता । ' १०. इदं वार्तिकानुसारेण ।

* ऊहः न **समानप्रकरणे** संभवति असति वचने अन्यार्थानामभिधानात् । **भा.** ३।२।११।२८, * ऊहः न **सवित्रादिपदानां** निर्वापमन्त्रगतानां विकृतौ । ९।१।१२।३६.

**ऊहः न साद्यस्के सोमक्रयसाधने साण्डे पुंस्त्वेऽपि ज्योतिष्टोमगतसोमक्रयणीगतमन्त्रस्य ' तस्यै शृतं ' इत्यादेः ॥**

**असंयोगात् तदर्थेषु तद्विशिष्टं प्रतीयेत । ९।१।१६।४२ वर्णकं २ ॥**

**भाष्यम्**-- अथेदम् अन्यदुदाह्रियते । अस्ति साद्यस्कः । तत्रेदं समामनन्ति ' साण्डस्त्रिवत्सः ( त्रिवर्ष इत्यर्थः ) सोमक्रयणः' इति । अस्ति तु प्रकृतौ एकहायनी क्रयार्था । तत्रेदम् आम्नायते ' इयं गौः, तया ते क्रीणामि तस्यै शृतम् , तस्यै शरः, तस्यै दधि , तस्यै मस्तु , तस्यै आतञ्चनम्, तस्यै नवनीतम्, तस्यै घृतम् , तस्यै आमिक्षा, तस्यै वाजिनम् ' इति । तदिह ( साण्डे ) चोदकेन प्राप्तम् । तत्र संदेहः किं गोशब्दस्थाने ( साण्डशब्दस्य ) ऊहं कृत्वा अवशिष्टानां पदानामविकारः, उत सर्वेषामूहः इति । किं प्राप्तम् ? गोपदार्थविशिष्टमेव ऊहवचनं स्यात्, ' तस्यै शृतम् ' इत्येवमादीनामविकारः असंयोगात् शृतादिभिरर्थैः । तेषाम् एकहायन्यामेकहायनीत्वादेव । नहि एकहायनी दुग्धे ( दुग्धे दुहाते दुहते ) । तस्यां समवेतं वदन्त्येते । तस्मात् साण्डेऽपि अविकारेण प्रयोक्तव्या इति ।

**कर्माभावादेवमिति चेत् । ४३ ॥**

**भाष्यम्**— इति चेत् एवं भवान्मन्यते , नैकहायन्यामेते समवेतानर्थान् अभिवदन्तीति । भवेदेतदेवम् , यद्येकहायन्या इमे गुणा न भवेयुः, कालान्तरे तु तस्या उपपद्यन्ते, न तु साण्डस्य । भविष्यत्कालवचना अप्येते प्ररोचनार्था भवन्ति । तस्यै शृतं भविष्यति ; तस्मात् नाविकारेण प्रयोक्तव्या इति ।

**न, परार्थत्वात् । ४४ ॥**

**भाष्यम्**-- नैतदेवम् अविकारेण प्रयोक्तव्या इति । असमवेतवचना ह्येते, नैकहायन्यां भवन्ति एकहायनीत्वादेव । अथोच्यते , कालान्तरे भविष्यन्तीति , साण्डेऽपि कालान्तरे भवितुमर्हन्ति । साण्डादपि हि या धेनुर्जनिष्यते, सा धोक्ष्यते इति । तस्मादविकारेण प्रयोक्तव्या इति ।

**सोम**— यद्यपि सिद्धान्तेऽपि ' तस्यै शृतं तस्यै-दधि ' इत्येवंरूपो लिङ्गोहोऽस्त्येव , तथापि किं लिङ्गवत् शृतादीनामपि ऊहः, उत न शृतादीनामूहः किन्तु लिङ्गमात्रस्य इति संशयो बोध्यः । अत एव भाष्ये ' किं गोशब्दस्य स्थाने ऊहं कृत्वा अवशिष्टानां पदानामविकारः, उत सर्वेषामूहः ' इति संशय उक्तः । गोशब्दस्य स्थाने इत्यस्य गोशब्दवाचकतच्छब्दस्य स्थाने इत्यर्थः । तच्छब्दमात्रविशिष्टे ऊहः स्यादित्यर्थः । इत्यस्मदुक्तरीत्यैव **क्षीरसागरवासिनाऽपि** भाष्यं व्याख्यातम् । त्रिवत्सः त्रिवर्षः इति **याज्ञिकैर्व्याख्यातम्** ।

**वि**— ' ऊह्यम् ' तस्यै शृतम् ' नो वा, भाविवृत्त्या समन्वयात् । एकाब्दायां साण्ड ऊहो , नोहः साम्यात् स्तुतिर्द्वयोः ॥ '

**भाट्ट**-- देवताऽधिकरणगतार्थत्वादिनैव वा वर्णकान्तरम् । साद्यस्के ' त्रिवत्सः साण्डः सोमक्रयणः ' इति सोमक्रयसाधनतया विहिते त्रिवत्से अतिदेशप्राप्ते ' इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै दधि तस्यै



मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम् ' इत्येकहायनीमन्त्रे स्त्रीलिङ्गांशे पुंलिङ्गोहस्तु अविवाद एव । शृतादिपदेष्वपि किम् ' तस्य शुक्रम् , तस्य बलम् , तस्य युद्धम् , तस्य जयः, तस्य हुम्भारवः, तस्य पलायनम् , तस्य लीला , तस्य भारोद्वहनम् ' इत्येवम् ऊहितव्यो न वेति संदेहे , ' शृतम् ' इत्यादौ ' छिन्द्धि ' इत्यादिवत् अवश्याध्याहार्ये क्रियापदे यद्यपि ' अस्ति ' इति नाध्याहर्तुं शक्यते एकहायन्यवस्थायां शृतादेरभावात् , तथापि ' भविष्यति ' इत्यध्याहर्तव्यम् , ततश्च भविष्यत्तायाः समवेतत्वात् विक्रेत्रानमनार्थत्वेन च दृष्टार्थत्वात् त्रिवत्सेऽपि विक्रेत्रानतिहेतुत्रिवत्सगुणप्रकाशनार्थे कर्तव्य एवोहः । इति प्राप्ते, भविष्यत्ताया अपि मरणवन्ध्यात्वादिना नियतत्वाभावात् ' संभवि ' इत्येव पदं प्रकृतौ अध्याहार्यम् , तच्च गोस्तावकं विक्रेत्रानमनार्थं वेत्यन्यदेतत् । उभयथाऽपि त्रिवत्से अविकृतस्यैव प्रयोगादनूहः । शक्यते हि साण्डात् या गौर्जनिष्यते तस्या जायमानं शृतादि साण्डीयमिति व्यपदेष्टुम् । तस्मात् संभावनाया विकृतावपि संभवादनूह एव ।

**मण्डन**-- ' तस्यैशृतादौ न भवेत्तथोहः । ' १८.

**शंकर**-- ' साण्डे क्रयमनौ तथा । ' मनौ मन्त्रे । तथा नोहः । २४.

* ऊहः न **स्तोत्रशस्त्रमन्त्राणां** प्राकृतानाम् अग्निष्टुति । **भा.** १०।४।२४।४९, * ऊहः न **हरिवदादिपदानां** ज्योतिष्टोमगतसुब्रह्मण्यानिगदस्थानां अग्निष्टुति सुब्रह्मण्यानिगदे । याज्ञिकास्तु ऊहं कुर्वन्ति । ९।१।१६। ४२-४४. * **ऊहस्य** विकृतिमात्रविषयतया दशमे वक्ष्यमाणत्वात् । **कु.** ३।२।११।२५.

**ऊहग्रन्थः पौरुषेयः ॥**

**सामानि मन्त्रमेके , स्मृत्युपदेशाभ्याम् । ९।२।१।१ वर्णकं २ ॥**

**भाष्यम्**— एवं वा । इदं संदिह्यते योऽयम् ऊहो नाम ' कयानश्चित्र आभुवत् ' इति ( काया नश्चायित्रा आभूवात् इति ) किमयमपि आर्षो नित्यः, उत पुरुषप्रणीतः इति । किं प्राप्तम् ? एतानि ऊहसामानि मन्त्रभूतानि ब्राह्मणमुपदिशन्ति । चिकीर्षित इति च इष्ट उच्यते । इच्छायां हि सन् विधीयते । यदि चायम् अपुरुषबुद्धिपूर्वको वेदतुल्यस्तत इष्टः । अथ पुरुषप्रणीतः ततो न प्रमाणम् । यज्ञे चाचिकीर्षितो न प्रयोक्तव्यः । चिकीर्षित इति च शब्दो भवति ! तस्मान्नित्य ऊह इति ।

**तदुक्तदोषम् । २ ॥**

**भाष्यम्**— तदेतदुक्तदोषं भवद्वचनम् । भवतैव हेतुं वर्णयता अस्योक्तो दोषः, ऊहश्चिकीर्षित इति । ऊहश्चिकीर्षित इत्यनित्ये एतद्भवति । यदुक्तम्, इष्टे चिकीर्षितशब्दो भवति, इच्छायां हि सन् विधीयते इति । उच्यते । सत्यम् इष्टं कर्तुम् , यद्धि क्रियते , तत्कर्तुमिष्टं भवतीति । तस्मादनित्य ऊहः । यदुक्तम् , स्मृतेर्नित्यतेति । नैषा स्मृतिः प्रमाणम् । दृष्टमूला ह्येषा । भवति हि वचनम् ,' कवतीषु रथंतरं गायति ' इति । तस्मादतिदेशवचनात् न्यायेनैवं गातव्यमिति वाचनिकं प्रथमं विज्ञानम् । तत एषा स्मृतिः । तस्मादप्रमाणम् , कृत्रिम ऊह इति । किं भवति **प्रयोजनम्** ? न्यायविरुद्धमपि प्रमाणं यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः न्यायविरुद्धमप्रमाणम् ।

**टुप्**— ( भाष्योक्तं सिद्धान्तमाक्षिपति– ) ' तदुक्तदोषम् ' इत्येतदयुक्तम् । कथम् ? ' कवतीषु रथंतरं गायति ' इति कवत्यस्तावत् न कृतकाः । रथंतरमपि नैव कृतकम् । यदपि अतिदेशवाक्यम् ' कवतीषु रथंतरं गायति ' इति, तदपि नैव कृतकम् । तस्मात् ऊहग्रन्थे न किंचित् कृतकम् ( पश्यामः ) । अत्रोच्यते । रथंतरगीतौ कवतीषु गीयमानायां पुरुषस्य गीतिक्रियां प्रति यः प्रथमः प्रयत्नः, स कृतकः । समाम्नायेन ( तावत् ) अभिवत्यां रथंतरगीतिर्दृष्टा अतिदेशसामर्थ्यात्तु अन्यासु ( कवत्यादिषु ) क्रियते । यथा प्रयाजानां नित्यानामपि यदनुष्ठानं तत् कृतकम्, एवमिहापि ( कवतीषु रथंतरस्यानुष्ठानं विधिवशात् पुरुषेण स्वयं क्रियते, न तु आम्नानसिद्धम् ) ।

**सोम**— **सूत्रार्थस्तु**– सामानि ऊहसामानि मन्त्रभूतानि आर्षाणि इत्येके मन्यन्ते इति ।

वि--'ऊहग्रन्थोऽपौरुषेयः पौरुषेयोऽथवा,ऽग्रिमः। वेदसामसमानत्वाद्, विधिसार्थत्वतोऽन्तिमः॥'

भाट्ट--अथवा योऽयमूहो नाम ग्रन्थविशेषः सामगैः पठयते, स किं पौरुषेय उतापौरुषेय इति चिन्तायाम्,कर्तृस्मरणाभावरूपवेदापौरुषेयत्वहेतोः अत्रापि तुल्यत्वात्। इतरथा तस्यानैकान्तिकत्वेन वेदस्यापि अपौरुषेयत्वानापत्तेः। स्वाध्यायानध्यायपरिपालनस्य च तुल्यत्वात्, ऊह इति समाख्यायाश्च रूढत्वेनापि नेतुं शक्यत्वात्। इतरथा कर्तृस्मरणाभावेऽपि समाख्याबलेन पौरुषेयत्वाङ्गीकरणे काठकादिसमाख्यया वेदस्यापि पौरुषेयत्वापत्तेः अपौरुषेय ऊहग्रन्थः। इति प्राप्ते, 'ऊह वितर्के' इति स्मृत्या तर्कप्रभवत्वरूपयोगेनैव समाख्योपपत्तौ रूढत्वे प्रमाणाभावात्। ऊहग्रन्थे च योनिग्रन्थे योन्युत्पन्नस्यैव साम्नो 'यद्योन्यां गायति, तदुत्तरयोर्गायति' इत्यादिना अतिदिष्टस्य न्यायेनोत्तरादौ पठनीयस्य सौकर्यार्थे पाठात्। अस्यापि वेदत्वे सर्वासामाम्नानसिद्धतया योनित्वप्रसङ्गेन योन्युत्तरादिविभागस्य अतिदेशशास्त्रस्य च वैयर्थ्यापत्तेः पौरुषेयत्वमेव। अत एव बलवत्पौरुषेयत्वसाधकप्रमाणान्तराभावविशिष्टकर्तृस्मरणाभावः एव पौरुषेयत्वाभावसाधकः इति नानैकान्तिकता। यद्यपि च तत्रस्था ऋचः सामानि च स्वरूपेण अपौरुषेयाण्येव, तथापि उत्तराऽऽदिषु न्यायसिद्धातिदिष्टसामरचनाप्रकारः पौरुषेयः। अत एव स्वाध्यायानध्यायादिपरिपालनम् ऋगादिविषयत्वादन्यथासिद्धम्। कर्तृस्मरणाभावस्तु मूलश्रुतिकल्पनाऽभावादपि उपपद्यते। मन्वादिस्मृतिषु हि मन्वादिवैशिष्ट्येन श्रुतिकल्पनाऽर्थं कर्तृस्मरणमावश्यकम्। प्रकृते तु न्यायमूलकत्वात् तदभावेऽपि न का चित् क्षतिः। अत एव सन्न्यायविरोधे अस्याप्रामाण्यम्, न तु अन्यस्मृतिवत् मूलभूतश्रुतिकल्पनया न्यायस्यैव आभासीकरणम्। अत एवाग्रे सामोहन्यायविचारोऽपि संगच्छते।

मण्डन--'सामोहः क्रियते नृभिः।'

शंकर--'ऊहग्रन्थो न नित्यः स्यात्।'

* ऊहज्ञानार्थमध्येयं व्याकरणम् इति वैयाकरणाः ('रक्षा-ऊह-आगम-लघु-असंदेहाः प्रयोजनम्' इति महाभाष्यम्)। तत्राह मीमांसावार्तिककारः 'ऊहार्थमपि शब्दानां न व्याकरणमर्थवत्। ऊहस्याप्यन्यतः सिद्धेरूह्यानूह्यविभागवत्॥' १।३।८।२४ पृ. २६३। यथा ऊह्यानूह्यविभागः मीमांसासिद्धत्वात् न व्याकरणापेक्षः, तथा ऊहस्वरूपमपि लोकवेदसिद्धत्वात् इत्यर्थः। सु. पृ. २७९.

* ऊहप्रमाणं स्थानापत्तिर्नाम एकम्। मणि. पृ.१३.

* ऊहप्रयोजकम् एकादशविधं निरूप्यते। तदुक्तम् 'मुख्यदृष्टार्थता स्वार्थसमवेतार्थताऽऽदिभिः। प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः॥ विकारेऽप्यनिषिद्धोहाः कार्यापन्नेषु पञ्चधा। अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति नः॥' इति। तत्र एवमेकादश प्रयोजकान्युक्तानि। १ मुख्यार्थत्वम्, २ दृष्टार्थत्वम्, ३ स्वार्थत्वम्, ४ समवेतार्थत्वम्, ५ शब्दस्वरूपाविवक्षा आदिशब्दस्वार्थः। ६ कार्यमुखोऽतिदेशः, ७ विकृतिगतत्वम्, ८ अनिषिद्धोहत्वम्, ९ कार्यापत्तिः, १० अर्थान्तरत्वम्, ११ अपूर्वार्थत्वं च धर्माणाम् इति। तानि चैतानि एकादशापि प्रयोजकानि ऋग्यजुर्मन्त्रोहे एवापेक्षितानि, न साममन्त्रसंस्कारोहयोः। तत्र तु अष्टावेव प्रयोजकानि १ दृष्टार्थत्वम्, २ शब्दस्वरूपाविवक्षा, ३ कार्यमुखोऽतिदेशः, ४ विकृतिगतत्वम्, ५ कार्यापत्तिः, ६ अर्थान्तरत्वम्, ७ अनिषिद्धोहत्वम्, ८ अपूर्वार्थत्वं च धर्माणामिति। एतच्च 'मन्त्राः' इत्यनेन सूचितम्। अत्र एकादशानामपि मुख्यार्थत्वादीनाम् ऊहप्रयोजकत्वसिद्धयै एकैकव्यतिरेकेऽपि ऊहाभावं नवमाधिकरणेषूक्तं दशमाद्यसिद्धं च। कार्यमुखातिदेशस्य ऊहप्रयोजकत्वमुच्यते। तथाहि (१) 'इयं गौः तया क्रीणामि तस्यै शृतम्' इत्यादौ सोमक्रयार्थैकहायनीप्रकाशनार्थे मन्त्रे क्षीरादिवाचिनां शृतादिशब्दानां विक्रेत्रानमनार्थत्वात् दृष्टार्थत्वेऽपि, क्रयसाधनस्तुत्यर्थत्वाच्च स्वार्थत्वेऽपि कालान्तरे चैकहायन्यामपि क्षीरादिसंभवात् समवेतार्थत्वेऽपि एकहायन्यवस्थायाम् उच्यमानस्य क्षीरादिमत्त्वस्य मुख्यत्वाभावात् औपचारिकस्य क्षीरादिमत्त्वस्य साण्डोत्पादयिष्यमाणधेनुद्वारेण साण्डेऽपि उपपत्तेः ऊहाभावात् मुख्येत्युक्तम्। (२) 'पत्नीम्' इत्येकवचनस्य विद्यमानार्थत्वेन



मुख्यत्वेऽपि संनहनीयपत्नीसंख्याप्रकाशनाच्च स्वार्थत्वेऽपि, एकत्वस्य च अनेकपत्नीप्रयोगेऽपि पत्नीत्वसामान्ये समवायात् समवेतार्थत्वेऽपि प्रकृतौ अपूर्वसाधनीभूतपत्नीव्यक्तिपरत्वात् सामान्यसंख्याप्रकाशनस्य अदृष्टार्थत्वेन ऊहाभावात् दृष्टार्थता इत्युक्तम्। (३) इडोपाह्वानमन्त्रे 'यज्ञपतिं वर्धान्' इति यज्ञपतिशब्दस्य यजमाने मुख्यत्वेऽपि तत्प्रोत्साहनार्थत्वेन दृष्टार्थत्वासंभवेऽपि यजमानस्य च कर्मसमवायात् समवेतार्थत्वेऽपि इडास्तुत्यर्थवृद्धिविशेषणत्वात् स्वार्थत्वाभावेन ऊहाभावात् स्वार्थ इत्युक्तम्। (४) 'इन्द्रागच्छ हरिव आगच्छ' इति सुब्रह्मण्यामन्त्रे हरिवच्छब्दस्य हरिवत्त्वलक्षणे गुणे मुख्यत्वेऽपि तस्य च 'इन्द्राय हरिवते धानाः' इति सवनीयहविरादिषु देवतात्वान्तर्गतेः तत्प्रकाशनार्थत्वेन दृष्टार्थत्वेऽपि वक्ष्यमाणेन्द्रप्रकाशनाच्च स्वार्थत्वेऽपि वस्तुवृत्त्या ऐन्द्रे हरिवत्त्वासमवायात् समवेतार्थत्वाभावेन ऊहाभावात् समवेतार्थता इत्युक्तम्। (५) सत्स्वपि मुख्यत्वादिषु अर्थप्रकाशनवत् शब्दस्वरूपस्यापि आदरे सति अर्थान्तरयुक्तायां विकृतौ ऐन्द्रीवत् गौणत्वोपपत्तेः ऊहासंभवात् 'प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् (९।३।१।१) इत्येतदधिकरणसिद्धशब्दस्वरूपानादरसूचनाय आदिशब्दः। (६) ननु प्रकृतौ मन्त्राणां मुख्यत्वादिरूपेण प्रयोगेऽपि विकृतौ अर्थान्तरयुक्तायाम् अतिदेशेन प्राप्तानां तदीयद्रव्यदेवताऽऽदिप्रकाशनासामर्थ्येन प्राकृतकार्यार्थत्वायोगात् अतिदेशबलात् कार्यान्तरकल्पनैव स्यात् नोहेन प्राकृतकार्यसामर्थ्यकल्पना इत्याशङ्क्य विकारेषु कार्यातिदेशतो गताः इत्युक्तम्। प्राकृतकार्यनैरपेक्ष्येण पदार्थातिदेशे शास्त्रातिदेशे वा कार्यान्तरकल्पना युज्येत वैकृतभावनाऽऽकाङ्क्षावशात्तु करणोपकारलक्षणात् कार्यद्वारस्यैव अतिदेशस्य दशमाद्ये वक्ष्यमाणत्वात् न कार्यान्तरकल्पना इत्याशयः। (७) यद्यपि प्रकृतौ व्रीहिमन्त्रे मुख्यदृष्टार्थतास्वार्थत्वसमवेतार्थत्वव्रीहिस्वरूपा विवक्षाः सन्ति, यवेषु व्रीहिकार्ययागसाधनताऽप्यस्ति, तथापि व्रीहियवविध्योः युगपद्यागानुवादेन प्रवृत्तेः व्रीहिकार्ये सत् यवैः साध्यते इति विनिगमनाविरहात् अनवगतेः लैङ्गिकोपदेशेनेव कार्यापत्तिमुख्यातिदेशेनापि अप्राप्तेः व्रीहिमन्त्रानूहः इति अतिदेशविकृतिशब्दाभ्यां सूचितम्। (८) मुख्यत्वादिदशप्रयोजकसत्त्वेऽपि 'पूयति वा एतद्वचोऽक्षरं यदेनदूहति तस्मादृचं नोहेत्' इति निषेधात् अनूहं प्राकृतयाज्याऽनुवाक्याऽऽदौ वक्तुम् 'अनिषिद्धोहाः' इत्युक्तम्। (९) कार्यद्वारा अतिदेशेऽपि कार्यान्तरार्थे व्रीह्यादौ यूपावटस्तरणवर्हिर्न्यायेन मन्त्रप्राप्तेरेव अभावेन ऊहाभावात् 'प्राकृते कार्यमापन्नेषु' इत्युक्तम्। (१०) प्राकृतकार्यार्थेष्वपि वैकृतव्रीहिषु अर्थान्तरत्वाभावेन अविकृतस्यैव व्रीहिमन्त्रस्य प्रयोगोपपत्तेः ऊहाभावात् 'अर्थान्तरेषु' इत्युक्तम्। (११) ननु कार्यद्वारकेऽपि अतिदेशे व्रीह्यादिकार्यापन्नेष्वपि च नीवारेषु व्रीह्यादिप्रकाश्याभावेन व्रीहिमन्त्रस्यैव अप्राप्तेः नोहः स्यात् इत्याशङ्क्य 'अपूर्वार्थद्वारेण' इत्युक्तम्। स्वरूपप्रयुक्तत्वनिरासेन अपूर्वप्रयुक्तत्वस्य नवमाद्ये वक्ष्यमाणत्वात् नीवारादिषु व्रीह्यादिस्वरूपाभावेऽपि व्रीह्यादिलक्षितापूर्वसाधनत्वसद्भावात् तद्द्वारेण अस्ति प्राप्तिः इत्याशयः।

कार्यापत्तिश्च पञ्चधा विभक्तविभागात् प्रमाणपञ्चकप्रमेयत्वाच्च। तद्यथा- क्व चित् प्रत्यक्षानुमानाभ्याम्। शाब्दात्तु त्रेधा। क्व चित् प्रत्यक्षादेव स्वशब्दात्, क्व चित्तु प्रतिषेधेन स्वशब्दानुमानम् अनुमिताच्च स्वशब्दात् कार्यापत्तिः, क्व चित्तु अभावेन प्रतिषेधानुमानं प्रतिषेधाच्च स्वशब्दानुमानं तेन अनुमितानुमानलब्धात् स्वशब्दात् कार्यापत्तिः इति। तत्र (१) 'नैवारश्चरुः' इति विकारतद्धितेन नीवाराणां चरुप्रकृतित्वोक्तेः प्रत्यक्षसहकृतविधिना प्रदेयप्रकृतित्वलक्षणव्रीहिकार्यापत्तिरवसीयते। (२) 'नखावपूतानां चरुः' इत्यादौ न प्रत्यक्षेण कार्यापत्तिः, नहि निर्लुञ्चनावघातयोः प्रत्यक्षेण ऐक्यं गम्यते, येन प्रत्यक्षतो नखानामुलूखलमुसलकार्यापत्तिः स्यात्। किन्तु अवपवनस्य वैतुष्यं फलं प्रत्यक्षेण दृष्ट्वा अनुमानं भवति 'नूनम् उलूखलमुसलकार्ये नखा वर्तन्ते' इति। अतोऽत्र अनुमानेन कार्यापत्तिः। (३) 'परिधौ पशुं नियुञ्जन्ति' इत्यत्र तु स्वशब्देनैव परिधिः सप्तम्या यूपकार्ये नियोजने प्राकृते अधिकरणत्वेन यूपवत् विधीयते। नह्ययम् अप्राकृतनियोजनान्तरविधिः गौरवात्।

( ४ ) ' न गिरागिरेति ब्रूयात् ' इति गिरापदकार्यं लक्षयति । प्रतिषिद्धे हि गिरापदे तत्कार्यं साधनाभिलाषि लक्ष्यते । तत्र च लक्षिते इरापदस्य साध्याभिलाषिणो विधिः । नहि इरापदं कार्यप्रतिपादकशब्दादृते तत्साधनत्वेन शक्यं विधातुम् । नहि अशाब्देन शाब्दस्य एकवाक्यता भवति इति । तस्मादत्र स्वशब्दानुमानम् । परिधौ तु आम्नात एव स्वशब्दः इति विशेषः । ( ५ ) ' जुहूषा एतर्हि वाग् भवति , यर्हि पृष्ठ्यः षडहः संतिष्ठते ' इत्यत्र संस्थया प्रतिषेधो लक्ष्यते, नहि संस्थितः कर्तव्यो भवति इति । प्रतिषेधेन च पूर्ववत् कार्यं लक्ष्यते । तस्मिन् लक्षिते मध्वशनघृताशने विधीयेते । एवमत्र लक्षितलक्षणया स्वशब्दः । तदिदं मधुघृताशनोदाहरणं वार्तिककृता दूषितम् । संस्था हि समाप्तिः, नचाभूतस्य संस्था , संस्थितस्य वा अभावः । तेन लिङ्गवाक्याभ्यां कृतषडहस्य पुंसः संस्कारके अवगम्यमाने मधुघृताशने कथं षडहफलार्थे स्यातामिति । तस्मात् अत्रोदाहरणं मृग्यम् इत्युक्तम् । तत्तु वयं ब्रूमः । षष्ठे ( ६।४।११ ) उक्तम् ' सत्रायागूर्य विश्वजिता यजेत ' इत्यत्र आगोरणशब्दोक्ते सत्रसंकल्पे विहिते विश्वजित् सत्रमकुर्वतो भवति , न कुर्वतः इति । तेन इदमभावे विधानस्योदाहरणमिति । इति एकादशविधस्य ऊहप्रयोजकस्य निरूपणम् । बाल. पृ. १२७–१३०.

**ऊहप्रवरनामधेयानां नास्ति मन्त्रत्वम् ॥**

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः । २।१।९।३४ ॥**

**भाष्यम्**-– ऊहप्रवरनामधेयेषु संशयः मन्त्राः, उत नेति । अभिधायकत्वात् मन्त्राः । इति प्राप्ते , ब्रूमः । अनाम्नातेषु मन्त्रत्वं न स्यादभिधायकेष्वपि । नाभिधायकत्वं मन्त्रत्वे हेतुः, किं तर्हि ? अभियुक्तप्रयोगः । ये अभियुक्तैर्मन्त्रा इति नोच्यन्ते , न ते मन्त्राः । नचैवमादयो मन्त्रसमाम्नाये सन्ति । तस्मादमन्त्राः । **प्रयोजनं** मन्त्रे भ्रष्टे यत् प्रायश्चित्तम् , अमन्त्रेषु तन्न ।

**वा**— सूर्याय जुष्टं निर्वपामि , इत्यूहः । तथा यत्र यजमानस्य आर्षेयं व्रियते स प्रवरः । यच्च यजमानतत्पुत्रादीनां नामग्रहणं तन्नामधेयम् , यथा सुब्रह्मण्यायाम् ' देवदत्तो यजते ' इत्यादि । तेषामपि ' तच्चोदकेषु ' इत्यस्माल्लक्षणात् मन्त्रमध्यपाताच्च मन्त्रत्वप्राप्तौ उच्यते , **' स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम् । ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम् ॥ '**

किं पुनरेकस्मिन् पदे ऊह्यमाने समस्तस्यैवामन्त्रत्वम् , ऊहितपदमात्रस्यैव वेति । समस्तस्यैव । इति प्राप्तम् । कुतः ? **' स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते । मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते ॥ '** संप्रदायकालावगतरूपान्यत्वं चेत् केन चिदप्यंशेन जातं न शक्यते मन्त्रत्वं प्रत्यभिज्ञातुम् । अथ एकदेशेऽपि तत्सद्भावाभ्युपगमः, ततः सर्वत्रैव मन्त्रपदाविशेषात् मन्त्रत्वप्रसङ्गः । ( पूर्वपक्षप्रयोजनमाह– ) तस्मात् एकवर्णापायेऽपि मन्त्रत्वाभावात् समस्ततत्कार्यनिवृत्तिः । ( एतदेव प्रपञ्चयति– ) ततश्च यथैव तद्विनाशे सर्वावयववर्तिनि प्रायश्चित्ताभावः, एवं मन्त्रच्छन्दोविषयत्वेन यावन्तः शब्दविशेषाः स्मर्यन्ते , तैर्न भवितव्यम् इत्येकपदतदवयवोहे तन्मन्त्रगतसर्वच्छान्दसापोद्धारेण लौकिकशब्दप्रयोगः कर्तव्यः इति । ( तस्य ऊहवतो वाक्यस्य न केवलम् ऊहितावयवमात्रवर्तिनि निमित्तांशे मन्त्रभ्रंशनिमित्तप्रायश्चित्ताभावः, किन्तु सर्वावयववर्तिनि इति एकं तावत् प्रयोजनम् । ' मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ' ( पा० ३।२।७१ । ' श्वेतवहादीनां डस् पदस्येति वक्तव्यम् ' यत्र पदत्वं भावि , तत्र ण्विनः अपवादः डस् वक्तव्य इत्यर्थः । श्वेतवाः श्वेतवाहौ श्वेतवाहः । उक्थानि उक्थैर्वा शंसति उक्थशा यजमानः, उक्थशासौ उक्थशासः । पुरो दाश्यते दीयते खण्डयते इति पुरोडाः इत्यादिना यावन्तः ' श्वेतवाः उक्थशाः पुरोडाः ' इत्यादयो मन्त्रविषयत्वेन , ' हृग्रहोर्भश्छन्दसि ' इत्यादिना च आम्नातवेदाख्यच्छन्दोविषयत्वेन ' आऽन्यं दिवो मातरिश्वा जभार ' ' इमामगृभ्णन् ' इत्यादयो यावन्तः शब्दविशेषाः स्मर्यन्ते , तेषामभावात् ' श्वेतवाहः, उक्थशंसः, पुरोडाशः, जहार , अगृह्णन् ' इत्यादिः लौकिकः प्रयोगः कार्यः । इति द्वितीयं प्रयोजनमुक्तम् । ( सिद्धान्तमाह– ) अत्र ब्रूमः । तावन्मात्रमेव अमन्त्रः इति । कुतः ? **' आकृतीनामभिव्यक्तिर्या कथञ्चिन्निरूपिता ।**



**नासाववयवाधिक्यविनाशेषु विनश्यति ॥ '** नहि गोर्गडुनि जाते विषाणे वा भग्ने गोत्वं तिरोधीयते , तदभिव्यक्तिसमर्थावयवान्तरसद्भावात् । कियत्यपि संस्थाने ध्रियमाणे सर्वा विज्ञायन्ते । सा चेयं मन्त्राकृतिर्विशिष्टस्वरवर्णानुपूर्व्याद्यभिव्यक्ता न किञ्चिद्विकारदर्शने नश्यतीति प्रत्यक्षमुपलभामहे । तथाहि , **' यत्र वर्णविकारो वा वर्णलोपोऽपि वा स्मृतः । स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते ॥ '** यत्र वचनात् वर्णलोपं विकारं वा कृत्वा प्रयोगः ' ऐरं कृत्वोद्गेयम् ' इत्यादौ , यत्र च स्वाध्यायकालदृष्टत्रैस्वर्यादिपरित्यागेन ऐकश्रुत्यं नियुज्यते , न तत्र कस्य चित् मन्त्रबुद्धिरपैति । **स्यादेतत्** , वचनसामर्थ्यादिह नापैतीति । **तदयुक्तम्** । वचनेन हि प्रयोक्तव्यमेतदुच्यते न मन्त्रत्वं न नश्यतीति । नहि वचनविनियुक्तानां व्रीह्यादीनां मन्त्रत्वं भवति , अतश्च अमन्त्राणामेव सतां वचनाद्विनियोग इत्यापद्यते । न चार्हति भवितुममन्त्रत्वम् , मन्त्रत्वप्रत्यभिज्ञानात् । अतश्च अत्रापि कामम् इरापदादीनामेव अमन्त्रत्वं भवतु , न सकलस्य वाक्यस्य । ( सिद्धान्तमाह– ) न च तेषामपि समस्तवेदालोचनेन मन्त्रत्वनिरूपणात् इह गिरापदवान् मन्त्रः इह इरापदवान् , इह त्रैस्वर्यवान् , इहैकश्रुतिमानिति हि आदित एवावधार्यते । **यद्येवम्** , ऊहादीनामपि मन्त्रत्वप्रसङ्गः । तत्रापि हि प्रकृतिविकृत्यालोचनेन शक्यमेवं निरूपयितुम् इह अग्निपदवान् निर्वापमन्त्रः, इह सूर्यादिपदवानिति । **नैतत् समानम्** । कुतः **' यत्र वैदिकमन्यत्वं तत्र मन्त्रत्वमिष्यते । न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम् ॥ '** वैदिकं हि आलोच्य एवमवधारणा भवति , इहेदृशो मन्त्र इहेदृश इति । सूर्यादिपदप्रयोगस्तु कार्यवशेन न्यायात् कल्प्यते , न च मन्त्रत्वं न्यायगम्यमिति वैषम्यम् ।

**ननु** चातिदेशोऽपि वेदप्रकार एवेति सर्वमूहादिकं वैदिकम् , इतरथा हि अप्रमाणकमेव स्यात् । न हि अङ्गाङ्गिभावः प्रत्यक्षानुमानादिगम्यः । तस्मात् सूर्येरापदयोरविशेष इति । **अत्रोच्यते** । सत्यम् , ऊहस्यापि नावैदिकत्वम् । अत एव ' अनाम्नातेष्वमन्त्रत्वम् ' इत्युच्यते । वेदभागो हि कश्चित् प्रत्यक्षः श्रूयते , कश्चिदनुमानादिगम्यः । प्रत्यक्षश्रुतश्च आम्नात इत्युच्यते । तत्र यथा इरापदादीनां विनियोगः श्रूयते नैवं सूर्यपदादीनाम् । **ननु** ' सौर्यं चरुम् ' इत्येतदेव श्रुतिसमवायित्वात् देवतायाः सूर्यपदस्य विनियोजकं श्रूयते । **नैतन्मन्त्रे** सूर्यपदस्य प्रक्षेपं ब्रवीति, हविषस्त्यागकालमात्रे तदुच्चारणाभिधानात् । यस्तु मन्त्रेषु तत्प्रक्षेपः, सोऽतिदेशकृतो भविष्यति । न चातिदेशवचनन्यायलभ्यत्वादेव आम्नायते । तस्मादनाम्नातविनियोजकत्वात् अमन्त्रत्वं सूर्यपदादीनाम् ।

नन्वेवं सति प्रवरनामधेययोः प्रत्यक्षोपदेशात् मन्त्रत्वप्रसङ्गः । स्यादेवम् , यदि तत्स्वरूपमाम्नायेत, वचनार्थं तु ज्ञात्वा अनाम्नातयोरेव प्रवरनाम्नोः प्रयोगान्न मन्त्रत्वनिरूपणायाम् अन्तर्गतिः । एवं तर्हि यत्रापि सर्वनामयुक्तमन्त्राम्नाने सति तस्य स्थाने अन्यपदप्रक्षेपः क्रियते , तत्रापि अमन्त्रता स्यात् । तथा नामेति **के चित्** । ( स्वमतेन परिहरति— ) अथवा विशेषाणामानन्त्यात् अयुगपत्कालत्वाच्च आम्नातुमशक्तेः स्वरूपस्य सर्वनामप्रकारेण आम्नानमस्त्येव इत्यशून्यस्थानत्वान्मन्त्रस्य शक्यमेवं निरूपणं कर्तुम् , यदत्र पदं निवेक्ष्यते तद्वानयं मन्त्र इति । इतरथा हि सर्वनाम्नामप्रयोगार्हत्वात् यदि विशेषाम्नानमेवैतत् तेनोपायेनेति न गृह्यते , ततः तदंशन्यूनत्वात् मन्त्रस्वरूपस्य व्यर्थमेव सर्वनामाम्नानं स्यात् । प्रवरनामधेयवदेव तु विधानात् तदवकाशस्थपदप्रयोगः कल्प्यते । तस्मादेवमादीनि आम्नातान्येवेति मन्त्रधर्मैः संबध्येरन् । न तु प्रवरादीनां मन्त्रपाठकाले कश्चिदपि संस्पर्शः । न च ब्राह्मणेन रूपं दर्शितम् , येन प्रवचनलक्षणत्वात् मन्त्रत्वाध्यवसानं भवेत् । ( चिन्तान्तरसिद्धान्तमुपसंहरति– ) अतश्च विकृतिषु अभिधानार्षचोदकाभ्यां सकले मन्त्रे प्रापिते यावन्मात्रम् अर्थाभावात् व्यावर्त्य अन्यत् प्रक्षिप्यते तावन्मात्रमेव लौकिकम् । अवशिष्टं तु तथा प्राप्तमेव कृत्वाकाङ्क्षितप्रत्यभिज्ञायमानमन्त्रत्वं चेति न प्रायश्चित्तच्छान्दसप्रयोगैर्वर्जनीयमिति सिद्धम् ।

**सु**— वेदस्य ( मन्त्रब्राह्मणयोर्वेदनामधेयम् इति ) द्वैराश्यनियमे सति ऊहादेरपि अनुमानादिगम्यवेद-

त्वाभ्युपगमात् विधिप्रयोजनत्वाभावेन च ब्राह्मणत्वाभावात् मन्त्रत्वप्रसङ्गे पठयमानवेदविषयत्वं द्वैराश्यनियमस्य वक्तुम् इदमधिकरणम् ।

**सोम**— तच्चोदकसूत्रादापाततः प्रसक्तं मन्त्रत्वमपोद्यते इति **संगतिः** । 'अग्नये जुष्टं निर्वपामि' इत्यादिमन्त्रे सौर्यादिविकृतिषु 'सूर्याय जुष्टम्' इत्येवं प्रक्षिप्यमाणं सूर्यादिपदम् इह ऊहशब्देन विवक्षितम् । तथा 'अग्निर्देवो होता' इति मन्त्रे 'युवनाश्ववत् अम्बरीषवत् अङ्गिरोवत्' इति प्रक्षिप्यमाणं यजमानार्षेयं प्रवरः । सुब्रह्मण्यानिगदे 'सूरभट्टशर्मणः पुत्रो यजते, सोमनाथयज्वशर्मणः पौत्रः यजते, सूरेश्वरयज्वशर्मणो नप्ता यजते, मैरंमदायाः पुत्रो यजते' इत्येवं प्रक्षिप्यमाणानि यजमानपित्रादीनां नामधेयानि नामधेयशब्देन विवक्षितानि । ( पितापुत्रीयायाः सुब्रह्मण्यायाः विशिष्ट एकदेशो योऽयं सोमनाथदीक्षितेन उदाहृतः स किल स्वानुष्ठितसोमयागगत एवेति ज्ञेयम् । अर्थवादपादगतसमाप्तिसंकल्पादिदं स्पष्टं भवतीति। **के.**) **प्रयोजनं** पूर्वपक्षे ऊहभ्रेषे मन्त्रभ्रेषप्रायश्चित्तम्, सिद्धान्ते तु न तत्प्रायश्चित्तम् । **सूत्रार्थस्तु**— अनाम्नातेषु ऊहादिषु अमन्त्रत्वम् । यतः आम्नातेष्वेव मन्त्रब्राह्मणविभागः इति । **न्यायसुधायां** तु ऊहादेरनुमानगम्यस्य वेदत्वमभ्युपगम्य पठयमानवेदविषयत्वं द्वैराश्यनियमस्य वक्तुम् एतदधिकरणमित्युक्तम् । **तदयुक्तम्** । तथा सति अनुमानादिगम्यवेदस्य ब्राह्मणत्वाभावात् 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यादौ लिङ्गाद्यनुमितस्य वेदस्य ब्राह्मणत्वाभावेन अतिदेशाभावप्रसङ्गात्, ऊहादेरनुमानगम्यस्य वेदत्वाङ्गीकारे 'इषे त्वा' इत्यादौ 'छिनद्मि' इत्यादिपदाध्याहारस्यापि अनुमानादिगम्यत्वेन तस्यापि वेदत्वप्रसङ्गात् । तस्मात् 'अर्थाद्वा कल्पनैकदेशत्वात्' ( १।४।१४।२५ ) इतिन्यायेन कल्प्यमानस्य शब्दस्य न वेदत्वम् । किन्तु तदर्थस्य वेदतात्पर्यविषयत्वमात्रेण तत्रतत्र ग्रन्थकाराणां वेदत्वव्यवहारः । एवं च लिङ्गादिकल्प्यस्य ब्राह्मणत्वावश्यम्भावात् 'आम्नातेषु हि विभागः स्यात्' इति सौत्रो हेतुः प्रायिकाभिप्रायो द्रष्टव्यः ।

**वि**—'ऊहप्रवरनाम्नां किं मन्त्रताऽस्त्यथवा नहि ।, मन्त्रास्तदेकवाक्यत्वात्, न तल्लक्षणवर्जनात् ॥'

**भाट्ट**— ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थमुच्चार्यत्वे मन्त्रपदैकवाक्यत्वे च स्वरूपेण वेदे अपठितत्वात् अभियुक्तप्रसिद्ध्यविषयत्वेन नैषां मन्त्रत्वम् । अतश्च नैषां भ्रेषे मन्त्रभ्रेषनिमित्तं प्रायश्चित्तम् । अपि तु अङ्गभ्रेषनिमित्तकमेव ।

**मण्डन**—'नोहादयो मन्त्रगतास्तु मन्त्राः ।'

**शंकर**—'ऊहादेश्चाप्यमन्त्रत्वम् ।' १२.

* **ऊहलक्षणम्** 'अवघातादिधर्मा अपूर्वप्रयुक्ताः' इति त्रिन्दौ भाट्टे आदित एव परिष्कृतं द्रष्टव्यम् । * ऊहलक्षणं नवमेऽध्याये वर्तयिष्यामः । **भा.** ९।१।१।१.

* **ऊहसाधनेषु** मुख्यत्वं परिगणितमाचार्यैः ( पार्थसारथिभिः ) । 'मुख्ये दृष्टार्थता स्वार्थसमवेतार्थताऽऽदिभिः । प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः ॥ विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा । अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते ॥' इति । **सोम.** ३।२।१.

**ऊहापोहन्यायः** । अन्यथाश्रुतस्य शब्दस्य अन्यथालिङ्गवचनादिभेदेन विपरिणमनम् ऊहः । उक्तं च **महाभाष्ये** 'ऊहः खल्वपि न सर्वैर्लिङ्गैः, न च सर्वाभिर्विभक्तिभिः वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः' इति । अत्र **कैयटो** यथा "तत्र अग्नेर्मन्त्रोऽस्ति 'अग्नये त्वा जुष्टं निर्वपामि' इति । सौर्ये चरौ मन्त्र ऊह्यते 'सूर्याय त्वा जुष्टं निर्वपामि' इति" । 'अपूर्वोत्प्रेक्षणम् ऊहः' इति जैमिनिः । 'अध्याहारस्तर्क ऊहः' इत्यमरः । तर्कनिराकरणम् अपोहः, अपगत ऊहः इत्यर्थः । इमौ द्वौ मिलित्वा यत्र स्तः, तत्रायं न्यायः प्रवर्तते । यथा ऊहापोहकुशलोऽयं जनः, ऊहापोहकौशलहीनश्चायम् इति । **साहस्री.** ९२०.

---

## ऋ.

* **ऋक्** एका एकं स्वतन्त्रं वाक्यं भवति । न ऋग्द्वयाद्यात्मकम् एकं वाक्यं भवति । तदाहुः शबराचार्याः— एकैका ऋक् कृत्स्नेन पदग्रामेण कां चित् स्तुतिम् अभिनिर्वर्तयति । न ऋगन्तरेण सह कं चिदर्थं



संस्तौति । न च ऋक्समुदायेन कश्चिदर्थः ( संभूय ) स्तूयते । इति ( ९।२।३।१७ ) । **के.**

* **ऋचः** एकविंशत्रिणवत्रयस्त्रिंशादिषु आगमयितव्याः, ताः काण्डक्रमेणैव न तु अनियमेन । **भा.** ५।१।६।१३. * ऋचः ता एव काश्चित् त्रिष्वपि वेदेषु पठ्यन्ते, तथा यजूंषि । **वा.** ३।३।१।१ पृ. ८०४. * 'ऋचः सामानि यजूंषि' इति प्रकृत्य 'एषा त्रय्येव विद्या' इति वेदेषु लक्षणायाः संमतत्वात् त्रैविद्योऽयं ब्राह्मणः इति वेदत्रये लक्षणा लोकसंमता । **पराक्रमः.** ४।२. * पादैरर्थेन चोपनिबद्धा वृत्तबद्धा मन्त्राः **ऋचः** । **वि.** २।१।१०. * **ऋचा** 'अयं सहस्रमानवः' इत्यनया प्रगीतयैव द्वादशाहस्य दशमेऽहनि आहवनीयोपस्थानम् । **भा.** ९।२।८।३०–३१ वर्णकं २, * **ऋग्भिर्युक्तं** रथं होत्रे ददाति वाजपेये, नान्यत्, न चान्यस्मै । १०।३।२१।७५, * **ऋचः** अध्ययनं सामार्थे गम्यते । नहि अन्तरेण ऋचं सामनिर्वृत्तिर्भवति, अन्तरेण तु साम ऋक् निर्वर्त्यते । ९।२।८।३१ वर्णकं २, * ऋचः एकस्या एव त्रिरभ्यासेन त्रिकस्तोमधूर्गानम् एकत्रिके क्रतौ । १०।५।३।१०–११, * ऋचः संस्कारकर्म साम गुणभूतम् । ९।२।२।३–१३, * **ऋचोः** द्वयोर्द्वयोः प्रग्रथनेन ब्राह्मणाच्छंसिसामगानं गवामयने । ९।२।६।२५–२८ वर्णकं ४, * **ऋचाम्** उत्तराग्रन्थपठितानामेव ग्रहणम् 'उत्तरयोर्गायति' इति उत्तराशब्देन । ९।२।५।२३–२४, * ऋचाम् एकादशानामेव मानवीनां दाशतयीभ्य आनयनं विकृतिविशेषे सामिधेन्यर्थम् । १०।६।१९।७३–७६. * ऋचां विवृद्धस्तोमकेषु क्रतुषु बहिष्पवमाने आगमयितव्यानाम् अन्ते निवेशः । **रत्न.** ५।३।५।१३–१४. * **ऋचि** ऊहो न भवति । पाशमन्त्रयोर्भवति, परन्तु न तौ ऋग्वेदस्थौ । तस्मात् ऋग्वेदस्थायाम् ऋचि नोहः इत्येव तत्त्वम् । पाशन्याये (९।३।४) द्रष्टव्यम् । **के.** * ऋचि ( दाशतयीस्थायाम् ) ऊहो नास्ति 'पूयति वा एतदृचोऽक्षरम्, यदेनदूहति, तस्मादृचं नोहेत्' । **भाट्ट.** ९।१।१ पृ. १४०. * ऋचि तृचगतायां प्रत्येकं साम परिसमापयितव्यम् । **भा.** ९।२।३।१४–२०, * **ऋचोः** उत्तरयोः योनिसाम्नो गानमुत्तरावर्णवशेन । ९।२।९।३२–३३, * ऋचोः उत्तरयोः योनिस्थस्तोभानामतिदेशः । ९।२।१०।३४–३८. * **ऋक्षु** तिसृषु समानच्छन्दस्कास्वेव गानं ज्योतिष्टोमे । **वि.** ९।२।४. * ऋक्षु पादव्यवस्था अपर्यवसिते अर्थे वृत्तवशेन । **वा.** २।१।१०।३५.

* **ऋक्तो** यज्ञभ्रेषप्रायश्चित्तम् 'भूः स्वाहा' इति गार्हपत्ये जुहुयात् । **वि.** १२।३।५.

* **ऋक्त्वादिन्यायेन** च अनेकवर्णसमूहात्मकेषु धातुषु न धातुत्वं जातिः । **भाट्टालंकारे.** पृ. १६. * **ऋक्शब्दः** सब्राह्मणके वेदे प्रयुक्तः । 'ऋग्भिः प्रातर्दिवि देव ईयते' इत्यत्र । **वा.** ३।३।१।३. * **ऋक्सामयजुःषु** त्रयी इति शब्दः प्रसिद्धः । **भा.** ३।३।१।५. * **ऋगादीनाम्** ( शब्दानाम् उच्चैर्ऋचा इत्यादौ ) वेदलक्षणाऽर्थत्वम् । **वा.** ३।३।१।२ पृ. ८०७.

* **ऋगादिशब्दाः** केवलाः ऋग्वेदादिषु वेदे दृष्टाः । 'ऋग्भिः पूर्वाह्णे दिवि देव इयते' इति । **पराक्रमः.** ४।२.

**ऋग्जुषाणाधिकरणन्यायः । आज्यभागयोः ऋग्-जुषाणयाज्ययोर्विकल्पः ॥**

आज्यभागयोः 'जुषाणो अग्न आज्यस्य वेतु । जुषाणः सोम आज्यस्य हविषो वेतु' इति निगदरूपौ याज्यामन्त्रौ श्रुतौ । 'ऋग्रूपावेकेषां जुषाणयाज्यौ भवतः' 'ऋग्याज्यौ भवतः' 'सहविषौ भवतः' 'अहविषौ भवतः' इति च विधयः । तत्र ऋग्जुषाणयोर्विलक्षणार्थप्रतिपादकत्वेन कार्यभेदात् समुच्चयः । सहविष्काहविष्कयोस्तु पदमात्रसदसद्भावकृतभेदेऽपि प्रतिपाद्याभेदात् उत्तमप्रयाजयाज्यायां हविःपदस्यैव विकल्पः, कार्यैक्यात् । इति प्राप्ते, अर्थप्रतिपादनरूपद्वारभेदेऽपि मुख्यविशेष्यभूतप्रदानप्रकाशनरूपकार्यैकत्वात् ऋग्जुषाणनिगदयोर्विकल्पः । याज्यावषट्कारयोस्तथात्वेऽपि वाचनिकः समुच्चय इत्युक्तम् । हविःपदविषये तु अहविःसहविःपदयोः समिद्घृतन्यायेनोक्तयोरेव निगदयोः प्रयोगसंभवादनुवादमात्रम् । उत्तमप्रयाजे तु शाखाऽन्तरीयं हविःपदरहितं निगदांशमनूद्य 'अग्न आज्यस्य व्यन्त्विति हैक आहुर्न तथा कुर्यात्' इति निषिध्य विनिन्द्य 'तस्मात् स्वाहा देवा आज्यपा जुषाणा अग्न

आज्यस्य हविषो व्यन्त्वित्येव ब्रूयात्' इति निगमनात् उदितानुदितहोमवत् विकल्पः। प्रकृते तु 'हविष इत्युत्तरमाह' इति वचनान्तरेण व्यवस्थापनान्न सहविषा अहविषा इत्यनयोर्विधित्वम्। **संकर्ष. ४।३।१०.**

* 'याज्यया यजति' 'वषट्कारेण प्रदीयते' इति विधिभ्याम् उभयोः प्रदानार्थत्वावगतेः एकार्थत्वात् **ऋग्जुषाणाधिकरणन्यायात्** विकल्पः इति पूर्वपक्षः। **संकर्ष. ४।३।३.**

* **ऋग्द्रव्यवाचिता** 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दस्य। **वि. ७।३।१४.**

* **ऋग्यजुःसामलक्षणं** प्रसक्तानुप्रसक्तोक्तं श्रुतेर्जाताधिकारः स्यादित्यस्मिन्नुपयोक्ष्यते। **वा. ३।१।१।१ पृ. ६५०–५१.**

* **ऋग्यजुःसामशब्दानां** वेदेषु प्रयोगात् 'ऋग्भिः प्रातर्दिवि देव ईयते' इत्यत्र च 'वेदैरशून्यः' इति बहुवचनात् ऋक्शब्दादेः स्पष्टं वेदे प्रयोगावगतिः। **सु. पृ. १५०४.**

**ऋग्यजुर्मन्त्राणां तानस्वरेण कर्मणि प्रयोगः॥**

**अर्थैकत्वाद् विकल्पः स्यादृक्सामयोस्तदर्थत्वात्। ९।२।८।३० वर्णकं ३॥**

**भाष्यम्**— इह के चित् त्रैस्वर्येण अधीयते, के चित् चातुःस्वर्येण। आह, ये इमे चातुःस्वर्येण अधीयते, किं ते उदात्तानुदात्तस्वरितेभ्यः अधिकम् अपरं स्वरं कुर्वन्ति? नेत्याह। तेषामपि एते एव स्वराः, ये अन्येषाम्। किं नु कुर्वन्ति? एकं स्वरान्तरम् उत्क्रम्य अधीयते। तत्र संदेहः किं समुच्चयः त्रैस्वर्यादीनाम्, उत विकल्पः इति। किं प्राप्तम्? सर्वाङ्गोपसंहारित्वात् प्रयोगवचनस्य समुच्चयः इति। **एवं प्राप्ते, ब्रूमः।** अर्थैकत्वात् विकल्पः स्यात्। एकोऽर्थः सर्वेषां त्रैस्वर्यादीनाम् अध्ययननिर्वृत्तिः। तस्मात् विकल्पः।

**वचनाद् विनियोगः स्यात्। ३१॥**

**भाष्यम्**— वचनमिदं भवति स्मृत्यनुमितम् 'तानो यज्ञकर्मणि' इति। तस्मात् तानेन (एकश्रुत्या) प्रयोगः कर्तव्यः। अथ त्रैस्वर्यादीनां किमर्थं समाम्नानमिति? उच्यते। अर्थावबोधनार्थं भविष्यति।

**सोम**— तानः इति एकश्रुतेः पूर्वाचार्यसंज्ञा। न साक्षात् स्वरविशिष्टतया मन्त्राणां कर्माङ्गत्वबोधिका श्रुतिरस्ति, येन तद्विरोधे स्मृतिर्बाधिका भवेत्, किन्तु स्वराध्ययनविधिमुपजीव्य न्यायबलात् स्वरविशिष्टानां कर्माङ्गत्वम्। न्यायश्च (सर्वशाखाप्रत्ययन्यायः स्वरसमुच्चयसाधकः) स्मृतितो दुर्बलः, इति निष्प्रत्यूहं वेदानुमानम्। बहुव्रीहौ समासे पूर्वपदं प्रकृतिस्वरं भवति, पूर्वपदे यः स्वरः स एवावशिष्यते, न तु समासान्तोदात्तत्वम्। यथा 'स्थूलपृषतीम्' इत्यादौ पूर्वपदस्य स्थूलशब्दस्य अन्तोदात्तत्वलक्षणं प्रकृतिस्वरं दृष्ट्वा बहुव्रीहिनिश्चयः। अयं चैकश्रुतिविधिः जपमन्त्रादिव्यतिरिक्तविषयः 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति पाणिनिस्मृतेः। (१।२।३४ यज्ञक्रियायां मन्त्रः एकश्रुतिः स्यात् जपशास्त्रविशेषगत–ओकाररूपन्यूङ्खेषु साम्नि च न एकश्रुतिः)। जपादौ तु चातुःस्वर्येण त्रैस्वर्येण वा प्रयोगः। एवं च जपमन्त्रादिव्यतिरिक्तेषु करणमन्त्रादिरूपेषु 'अग्नये जुष्टं निर्वपामि' इत्यादिषु आध्वर्यवयाजमानेष्वपि आधुनिकानां याज्ञिकानां चातुःस्वर्येण प्रयोगे मूलं मृग्यम्। अस्मिन् वर्णके सूत्रे ऋक्सामशब्दः चातुःस्वर्यादौ कथञ्चिन्नेयः।

**वि**— 'त्रैस्वर्यादि समुच्चेयं विकल्प्यं तान एव वा।, प्रयोगादर्थतो द्वौ, नो वचनात् स्मृतिकल्पितात्॥'

**भाट्ट**— साममन्त्रप्रसङ्गात् ऋग्यजुर्मन्त्रयोः स्वरश्चिन्त्यते। ते हि क चित् उदात्तानुदात्तस्वरितप्रचयरूपचातुःस्वर्येण अधीताः। क चित् ते एव शाखाऽन्तरे प्रचयवर्जं त्रैस्वर्येण। तत्र उभयोरपि गीतिप्रकारवत् विकल्प एव। **न च** 'तानो यज्ञकर्मणि, अजपन्यूङ्खसामसु' इति स्मृत्या तानस्वरस्य विहितत्वात् उभयबाधः इति **वाच्यम्।** श्रौतानाम् अध्ययनविध्यध्यापितानां स्वराणां पाठादिना तत्तत्क्रत्वपूर्वसाधनीभूतमन्त्रवृत्तित्वस्य प्रबलप्रमाणप्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथा 'अग्निर्मूर्धा' इत्यादीनां स्मृत्या नवग्रहाङ्गभौमार्चने विनियोगात् (याज्ञ. १।३००) क्रमादिना आग्नेयाद्यङ्गत्वानापत्तेः। न चैवं नवग्रहहोमाङ्गत्वानापत्तिः, सौर्याकाङ्क्षयैव नवग्रहहोमाकाङ्क्षयैव वा वाक्येन विनियोगोपपत्तेः। प्रकृते तु श्रौतस्वरविरोधात् तानस्मृतेः अप्रामाण्यमेव। इति प्राप्ते, श्रौतस्य स्वरस्य अध्ययनविधिना अध्यापितस्य प्रयोजनापेक्षायाम् 'यद्यच्छक्नुयात्, तत्तत् कुर्यात्' इत्युपबन्धेन प्रकरणादिसहकृतमन्त्रवृत्तिपाठेन च प्रयोजनद्वयमवगम्यते। **एकं** तावत् प्रयोगकालात् पूर्वमेव अर्थविशेषनिर्णायकत्वम्। न च मन्त्राणां प्रयोगकाले एव अर्थस्मारकत्वात् पूर्वम् अर्थविशेषावधारणाभावेऽपि बाधकाभावः, विध्यवगतस्यापि अर्थविशेषस्य प्रयोगकाले मन्त्रप्रतिपाद्यत्वसंदेहप्रयोगप्राशुभावभङ्गापत्तेः। अतस्तदर्थं प्रयोगात् बहिरेव मन्त्रार्थनिर्णयार्थं 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यादिस्वरोपयोगः। **अपरं** च पूर्वम् अवधारितस्यापि अर्थस्य प्रयोगमध्ये विस्मरणे पुनर्निर्णायकता। तस्य च कादाचित्कत्वेऽपि मन्त्रनैयत्यवदेव स्वरनैयत्योपपत्तिः। मन्त्रोच्चारणवदेव च स्वरोच्चारणसिद्धेः न स्वरानुसंधानमात्रेण निर्णायकता। तदेवं द्विविधः स्वरस्य क्रतूपयोगः प्रकरणादिना सिध्येत्। तत्र च विशेषरूपेण स्मृत्या यज्ञप्रयोगे तानस्वरविधायिकया बाधात् सामान्यरूपस्य प्रकरणादेः प्रयोगबहिर्भूतार्थनिर्णयोपयोगित्वविषयतैव कल्प्यते। प्रयोगमध्ये विस्मरणादौ तु स्वरानुसंधानेनैव अर्थविशेषस्मरणम्। अत्र च तानस्य अर्थविशेषोपयोगाभावेन अदृष्टार्थत्वेऽपि एकमन्त्रवृत्तित्वादेव त्रैस्वर्यादिबाधकता। इतरथा गुणानुरोधेन मन्त्रावृत्त्यापत्तेः। अजपेत्यादिना पर्युदासाच्च जपादौ त्रैस्वर्यादिप्रतिप्रसवः। जपाः जपतिचोदनाचोदिता मन्त्राः। न्यूङ्खाः शस्त्रेषु मन्त्रविशेषाः (अनुदात्त–अर्धौकाररूपाः इत्यादि)। **भाट्ट. ९।२।७ वर्णकं ३.**

**मण्डन**— 'कर्मस्वेकश्रुतिर्मन्त्रे।' 'त्रैस्वर्याद्यविकल्पः स्यात्' इति वा पाठः।

**शंकर**— 'यज्ञमन्त्रेषु तानता।' १५.



**ऋग्लक्षणम्॥**

**तेषामृग् यत्रार्थवशेन पादव्यवस्था। २।१।१०।३५॥**

**भाष्यम्**— 'ऋचः' इत्यस्ति वेदे, 'अहे बुध्निय मन्त्रं मे गोपाय। यमृषयस्त्रयिविदा विदुः। ऋचः सामानि यजूंषि' इति। कथंलक्षणिका ऋचः? तेषामृक् यत्रार्थवशेन पादव्यवस्था। यत्र पादकृता व्यवस्था, स मन्त्रः ऋङ्नामा। यथा 'अग्निमीळे' इति। एवंजातीयकेषु मन्त्रेषु, अभियुक्ता उपदिशन्ति, 'ऋचोऽधीमहे, ऋचोऽध्यापयामः, ऋचो वर्तन्ते' इति।

यदि अर्थवशेनेत्युच्यते, यत्र वृत्तवशेन, तत्र न प्राप्नोति, 'अग्निः पूर्वेभिर्ऋषिभिः' इति। यतो नार्थवशेनेति वृत्तादिवशव्यावृत्त्यर्थम्, किं तर्हि? अनुवाद एष प्रदर्शनार्थः। अवश्यं चैतदेवं विज्ञेयम्। वृत्तादिनिवृत्त्यर्थे सति वाक्यं भिद्येत। तस्मात् यत्र पादकृता व्यवस्था, सा ऋगिति।

**वा**— प्रसक्तानुप्रसक्त्यापतितम् ऋगादिलक्षणाभिधानम्। शब्दार्थस्य वृद्धव्यवहारगम्यत्वात् कृतेऽपि तल्लक्षणे तन्मूलमभियुक्तोपदेशमेव दर्शयति। क्रियापदानुपादानात्, 'अग्निः पूर्वेभिः' इत्यपर्यवसितेऽर्थे वृत्तवशेन पादव्यवस्था। ननु च 'अग्निमीळे' इत्यपि समस्ताया ऋच एवार्थवत्त्वात् नैव प्रतिपादमर्थः पर्यवस्यतीति, न वाच्यम् 'अर्थवशेन पादव्यवस्था' इति। कथं न वाच्यम् 'अग्निमीळे पुरोहितम्' इति तावत् प्रत्यक्षं समाप्तोऽर्थो दृश्यते। परयोः पादयोरसमाप्त इति चेन्न। आख्यातानुषङ्गेण समाप्तेः सिद्धत्वात्। तस्मात् साधूक्तमिह अर्थवशेनेति। एतस्य तु प्रदर्शनार्थत्वान्न वृत्तवशव्यावृत्तिः इति अनिषिद्धमृक्त्वम्।

**सोम**— मन्त्रप्रसङ्गात् ऋगादिलक्षणस्य **संगतिः।** ऋचः सर्वस्याः विशिष्टैकार्थप्रतिपादकत्वेऽपि प्रतिपादम् अवान्तरार्थभेदसंभवात् अर्थवशेन इत्युक्तम्। इदं च पादव्यवस्थाहेतूनां वृत्तवशादीनामुपलक्षणम्। तदपि न लक्षणशरीरप्रविष्टम्, पादव्यवस्थामात्रस्यैव लक्षणत्वसंभवात् इति द्रष्टव्यम्। **सूत्रे** तेषां मन्त्राणां मध्ये इत्यर्थः। अनेन पादव्यवस्थारूपलक्षणे 'मन्त्रत्वे सति' इति विशेषणं सूचितम्। तेन लौकिकश्लोके नातिव्याप्तिः इति द्रष्टव्यम्।

**वि**— (ऋक्सामयजुर्लक्षणपराधिकरणत्रयम् अत्रैव व्याख्यातम् इति ज्ञेयम्) 'नर्क्सामयजुषां लक्ष्म सांकर्यादिति शङ्किते। पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः॥' पादेनार्थेन चोपेता वृत्तबद्धा मन्त्रा ऋचः। गीतिरूपा मन्त्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि इत्युक्ते न क्वापि संकरः।

भाट्ट— मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तरधर्मः ऋक्त्वादिः ' ऋचः सामानि यजूंषि ' इति वेदप्रयुक्तऋगादिपदार्थपरिज्ञानार्थे निरूप्यते । पादव्यवस्थावन्मन्त्रत्वम् ऋक्त्वम् ।

मण्डन— ' ऋक् पादबद्धो भवतीह मन्त्रः । '

शंकर— ' ऋग्लक्षणमथोदितम् । ' १३.

* **ऋग्लक्षणम्** अर्वाचीनपादव्यवस्थावत्त्वम् । **के.** २।१।१०।३५.

* **ऋग्वेदः** अग्नेः अजायत । **भा.** ३।३।१।२. * ऋग्वेदः। वेदाव्यभिचारात् ऋगादीनाम् ऋगाद्युक्तिमात्रेण ऋगादिरूपवेदावयवप्रतीतिसिद्धेः तल्लक्षणार्थत्वे वेदोक्तिरनर्थिका । तस्मात् ऋग्बहुलो वेदः ऋग्वेदः इत्येवमादिमध्यमपदलोपिसमासत्वेनैव ऋग्वेदाद्युक्तिर्व्याख्येया । **सु.** पृ. ११७२, * ऋग्वेदः हौत्रप्रवचनाख्यः । पृ. ७५७, ११००. * **ऋग्वेदेन** उच्चैः क्रियते । ' उच्चैर्ऋचा क्रियते '। **भा.**३।३।१।१, * ऋग्वेदे कृत्स्नेऽपि न प्रथमा नाम का चित् ऋगस्ति, तथा उत्तरे इति । १०।६।१।२. * ऋग्वेदे याज्यापुरोऽनुवाक्यापाठादयो धर्माः । यजुर्वेदे दोहननिर्वापादयः । सामवेदे आज्यस्तोत्रपृष्ठस्तोत्रादयः । **वि.** ३।३।६.

* **ऋग्वेदसामवेदाभ्यां** यत्किञ्चित् काम्यं नैमित्तिकं वा चोद्यते , तत्सर्वम् उच्चैः कर्तव्यम् । **वा.** ३।३।२।१९ पृ. ८१३, * **ऋग्वेदादयः** । ' तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक् पृथक् । भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा ॥ ' ३।१।७।१३ पृ. ७०३. * **ऋग्वेदादिषु** आत्मानः प्रतिष्ठिताः ' यो वै वेदेषु तिष्ठन् वेदानन्तरो यमयति, यो वेदान् वेत्ति, यं वेदा न विदुः , यस्य वेदाः शरीरम् , एष त आत्माऽन्तर्याम्यमृतः ' इत्युपनिषत्प्रामाण्यात् । **सु.** पृ. १००८.

* ' **ऋग्वेदादिसमूहेषु** क्षेत्रज्ञा ये प्रतिष्ठिताः । ' **वा.** ३।१।७।१३ पृ. ७०२.

* **ऋङ्नवकवाची** त्रिवृत्-शब्दः ' त्रिवृद् बहिष्पवमानम् ' इत्यादौ । **वि.** १।३।५ वर्णकं ४.

* ऋङ्मन्त्रेऽपि अनुपङ्ग उक्तो मन्त्राधिकरणे । **के.**

* **ऋजीषं** निष्पीडितस्य सोमस्य नीरसो भागः । स च अवभृथदेशे नेतव्यः । तच्च नयनं प्रतिपत्तिः । **वि.** ४।२।८. * ' ऋजीषमप्सु प्रास्यन्ति ' इति अहर्गणे सर्वेषाम् अह्नां यदृजीषम् , अविशेषात् तत् सर्वं प्रास्यते । **भा.** १०।६।१९।७३.

* **ऋजुत्वसंततत्वप्राक्त्वानां** भिन्नकार्यत्वात् आघारे समुच्चयः। **भा.** १२।३।३।९.

ꙮ **ऋजुमार्गेण सिद्ध्यतोऽर्थस्य वक्रेण साधनाऽयोग इति न्यायः** । स्पष्टार्थः । **साहस्री.** २५३.

* **ऋणत्रयापाकरणं** त्रैवर्णिकानां नित्यम् । ' जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी ' इति श्रुतेः । **वि.** ६।२।११, ब्राह्मणग्रहणं तु प्रदर्शनार्थम् । जायमानो ब्राह्मणो राजन्यो वैश्यश्चेति । **भा.** ६।२।११।३२.

* **ऋतपेये** ' घृतव्रतौ भवतः ' इति वचनात् अभावे व्रतदुहः, ' अन्या यजमानस्य व्रतदुघामाशिरे दुहन्ति ' इति श्रुतेः आशिरार्थमन्या गौरुपादीयते । **भा.** ११।३।१३।३९, * ऋतपेये वचनप्रामाण्यात् अल्पव्रतकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः । १०।३।११।४५.

ꙮ **ऋतपेये विहितया सोमचमसदक्षिणया प्राकृतकृत्स्नक्रतुदक्षिणाया बाधः ॥**

**तथा च सोमचमसः ।१०।३।१९।६८ वर्णकं १॥**

**भाष्यम्**— ऋतपेये श्रूयते, ' औदुम्बरः सोमचमसो दक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देयः ' इति । तत्र संदेहः किं ब्रह्मभागस्य निवर्तकः सोमचमसः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य । किं प्राप्तम् ? तथा सोमचमसः स्यात् । यथा स्रग् उद्गात्रे तद्भागस्य निवर्तिका, उद्गातृसंयोगात् । एवं ब्रह्मसंयोगात् ब्रह्मभागस्य निवर्तकः सोमचमसः ।

**सर्वविकारो वा, क्रत्वर्थे प्रतिषेधात् पशूनाम् । ६९ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति, न ब्रह्मभागस्य निवर्तकः । किं तर्हि ? कृत्स्नस्य क्रतुदाक्षिण्यस्य ।



कथमवगम्यते ? पशुप्रतिषेधानुवादात् । एवमाम्नायते ' ऋतं वै सोमोऽनृतं पशवो, यत्पशून् दद्यात् सोऽनृतं कुर्यात्, औदुम्बरः सोमचमसो दक्षिणा ' इति । पशुदानमपोह्य सोमचमसो विधीयते । यः पशून् दद्यात्तस्यैष दोषो भवेत् । एतस्मान्न पशवो दातव्या इति वक्तव्ये तमेवार्थमुक्तं मन्यमानः, ' सोमचमसो दक्षिणा ' इत्याह । सोमचमसदानेन पशवो न दीयन्ते इति गम्यते । तदेवं कृत्स्नस्य निवर्तकोऽवकल्पते । ब्रह्मदानस्य निवर्तके सति अन्येभ्यः पशवो दीयेरन् । तस्मात् कृत्स्नस्य निवर्तकः इति ।

**ब्रह्मदानेऽविशिष्टमिति चेत् । ७० ॥**

**भाष्यम्**— इति चेत्पश्यसि, पशुदानविप्रतिषेधात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः इति । ब्रह्मदानेऽपि एतदवकल्पते । ब्रह्मणे सोमचमसो देयः यः पशून् दद्यात् ब्रह्मणे, इति गम्यते । तस्मान्न नियोगतः कृत्स्नस्यैव क्रतुदाक्षिण्यस्य निवर्तके पशुप्रतिषेधानुवादोऽवकल्पते । ब्रह्मणे दानेऽपि तदुपपद्यते इति ।

**उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् । ७१॥**

**भाष्यम्**— न चैतदस्ति, ब्रह्मभागस्य निवर्तकः सोमचमसः इति । कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः स्यात् । अस्य सोमचमसस्य य उत्सर्गः, स क्रत्वर्थः स्यात् । दक्षिणाशब्देन हि संबध्यते, ' सोमचमसो दक्षिणा ' इति । न च प्रकृतौ एकैको गवादिर्दक्षिणा । उक्तमेवेदं गवादीनां समुदाये दक्षिणाशब्दः इति । तदेवं सोमचमसदानेन प्रतिषिद्धेषु पशुषु यदि ब्रह्मदानेऽपि एतदविशिष्टमिति कृत्वा अन्येभ्यः पशवो दीयेरन्, प्रतिषिद्धं क्रियेत । यो हि ब्रह्मभागः, न सा दक्षिणा । दक्षिणावयवो हि सः । दक्षिणाऽवयवे दक्षिणाशब्दो निविशमानो गौणः स्यात् । न च विद्यमाने मुख्ये, गौणः उपादीयते । सोमचमसस्य हि प्रयोजनं दक्षिणानिवृत्तिः । सर्वेषामृत्विजामानमनं प्रयोजनं दक्षिणानाम् , न ब्रह्मदानम् । तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः सोमचमसः इति ।

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् । ७२ ॥**

**सर्वं वा पुरुषापनयात् तासां क्रतुप्रधानत्वात् । ७३ ॥**

**भाष्यम्**— प्रयोजनसूत्रद्वयमिदम् । यदि तु ब्रह्मभागस्य निवर्तकः सोमचमसः, ततो ब्रह्मभागोना सा दक्षिणा । एतेन विकारेण अन्या दीयेरन् यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, तथा सर्वे निवर्तते । तस्मिन् निवर्तिते, ततः पुरुषापनयः क्रियते ' स ब्रह्मणे देयः ' इति । तासां दक्षिणानां क्रतुप्रधानत्वं भवति । सर्वर्त्विगानमनेन हि क्रतुः सिध्यति, न ब्रह्मनत्या केवलया । सोमचमसेन च सा सर्वानतिः कृता, इति नान्यत् किं चन दीयेत । एतत् प्रयोजनं भवत्येव पक्षोक्तं यथोपवर्णितमिति ।

**के**— सूत्रद्वयमिदं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय भाष्यकारेण पुनरधिकरणान्तरत्वेन व्याख्यातम् । तत् प्रकृताधिकरणोत्तरं निवेक्ष्यते ।

**शा**— तत्र पूर्ववत् संशयपूर्वोत्तरपक्षाः । का पुनर्विशेषाशङ्का ? ( **प्राभाकरोक्तमाह**– ) पूर्वत्र द्वे एव वाक्ये , इह तु एकमिदम् वाक्यम् । अतः प्रथमं क्रतुसंकोचाभावात् ब्रह्मभागस्यैव निवृत्तिः इति विशेषाशङ्का। ( **प्राभाकरोक्तं परिहारमाह**– ) यद्यपि एकं वाक्यम्, तथापि दक्षिणासंयोगात् सर्वनिवृत्तिः । इत्येवं के चित् वर्णयन्ति । ( प्राभाकरवचनं निरस्यति– ) न तु एतद्युक्तम् । अत्रापि द्वे एव वाक्ये, ' सोमचमसो दक्षिणा ' इत्येकम् , ' स ब्रह्मणे देयः ' इत्यपरं स्पष्टमेव । अतो नायं विशेषः । सिद्धान्तोऽप्ययुक्तः । सति हि एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः । तस्मादेवं वक्तव्यम् । अत्र हि केषां चित् दक्षिणाद्रव्याणां प्रतिषेधः श्रूयते, असौ सत्यां प्राप्तौ घटते । तस्मान्न सोमचमसः सर्वस्य निवर्तकः इति विशेषाशङ्का। सोमचमसस्तुत्यर्थोऽयं अर्थवादः ' यत् पशून् दद्यात् सोऽनृतं कुर्यात् ' इत्यादिः, न प्रतिषेधः । तस्मात् पूर्ववत् सर्वनिवृत्तिः ।

**वि**— ' किं सोमचमसो ब्रह्मभागहार्युत ( री उत ) कृत्स्नहृत् ।, पशूनां निन्दया सर्वप्रसक्तेर्ब्रह्मभागहृत् ॥ , निन्देयं न निषेधाय चमसस्तुतये त्वसौ । दयावाव्रवत्

सर्वदेयपुरुषान्तरबाधकः ॥' 'यत् पशून् दद्यात् सोऽनृतं कुर्यात्' इति पशुनिन्दा ।

**भाट्ट**— ऋतपेये 'औदुम्बरः सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः' इति श्रुतम् । तत्रापि पूर्ववत् दक्षिणातच्छब्दयोर्वैयर्थ्यापत्तेः पूर्ववाक्येन गुणद्वय-विशिष्टप्राकृतविजातीयदानविधिः, तेन च प्राकृतकृत्स्न-दाक्षिण्यनिवृत्तिः । उत्तरवाक्येन च द्रव्यसंप्रदानोभय-विशिष्टस्य ब्रह्मानत्यर्थत्वस्य पदान्तरकल्पनया अवगमात् पुरुषान्तरादपनयः । अत्र हि ब्रह्मोद्देशेन द्रव्यविधिपक्षो नैवोद्भावयितुं शक्यः, सगोत्रत्वादेः अविवक्षाऽऽपत्तेः । अत एव ऋतपेये सगोत्र एव ब्रह्मा ।

अधिकाशङ्का तु 'यत् पशून् दद्यात् सोऽनृतं कुर्यात्' इति पशुदानपर्युदासो नासत्यां पशुप्राप्तौ घटते इति ब्रह्मभागस्यैव निवृत्तिः । अतश्च अध्वर्य्वादिभागेषु पशुप्राप्तौ तत्पर्युदासात् तेषां माषादयो देया इति । सा चास्य नित्यानुवादत्वेन सोमचमसविध्येकवाक्यतया अर्थवादत्वात् गमकत्वानुपपत्तेः कृत्स्नक्रतुदाक्षिण्यस्यैव निवृत्तिरिति निराकर्तव्या ।

**मण्डन**— 'तथा समस्तं चमसेन बाध्यम् ।'

**शंकर**— 'स सोमचमसेऽपि च ।' स बाधः ।

**ऋतपेये सोमचमसेन कृत्स्नक्रतुदक्षिणायाः पुरुषान्तरस्य च निवृत्तिः** ॥ (अन्तिमसूत्रद्वयेन वर्णकान्तरं क्त्वाचिन्तया)।

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात्** । १०।३।१९।७२ **वर्णकं २** ॥

**भाष्यम्**— एवं वा । ऋतपेये श्रूयते, 'औदुम्बरः सोमचमसो दक्षिणा । स प्रियाय सगोत्राय ब्रह्मणे देयः' इति । तत्रैषोऽर्थः सांशयिकः किं ब्रह्मभागेन ऊनं दातव्यम्, उत सोमचमस एव केवलो दातव्य इति । ननु सोमचमसो दक्षिणा इत्येष संबन्ध इत्युक्तम् । तत्रो-च्यते । सोमचमसो ब्रह्मणः इत्येष संबन्धः इति कृत्वा चिन्ता । यद्येवं ब्रह्मणः सोमचमसः इति संबन्धो विवक्षितः, सोमचमसेन ब्रह्मभागो निवर्तितः । अव-शिष्टं दातव्यं तदूनो विकारः स्यादिति ।

**सर्वं वा पुरुषापनयात्, तासां क्रतुप्रधान-त्वात्** । ७३ ॥

**भाष्यम्**— सर्वं वा सोमचमसेन निवर्त्येत । कुतः ? सोमचमसो दक्षिणा, इत्येष संबन्धः प्रत्यक्षः । तेन निवर्तिते सर्वस्मिन् दाक्षिण्ये पुरुषापनयः एव क्रियते । तासां क्रतुप्रधानत्वात् । दक्षिणानां सोमचमसो यः क्रतुदक्षिणा, स सर्वं क्रतुदाक्षिण्यं निवर्तयतीति ।

**शा**— 'सर्वं वा पुरुषापनयात्' इति क्त्वाचिन्तो-द्घाटनम् ।

**सोम**— पूर्ववदिहापि सर्वनिवृत्तिः इत्युत्थितेः संगतिः । **सूत्रे** यदिशब्दः असंदिग्धे संदिग्धार्थत्वेन वा यद्येकं वाक्यम् इत्यध्याहारेण वा कथञ्चित् योज्यः ।

**वि**— 'पूर्वोक्तं निर्णयं पूर्वपक्षयित्वैकवाक्यताम् । भ्रान्त्या कृत्वा दक्षिणांशं ब्रह्मभागं निवर्तयेत् ॥' कृत्वा-चिन्तामुद्धाटयति— 'दक्षिणोक्तिः क्रतौ दृष्टा सर्वत्रासौ न पुंसि सा । वाक्यभेदश्च दुर्वारो युक्तोऽतः पूर्वनिर्णयः ॥' तस्मात् कृत्स्नदक्षिणापुरुषान्तरयोर्बाधः इत्ययमेव राद्धान्तः।

**भाट्ट**— पूर्वाधिकरणद्वये अपि भिन्नवाक्यत्वमभ्यु-पगम्य कृत्स्नदाक्षिण्यनिवृत्तिरित्युक्तम् । यदा तु कृत्वा-चिन्तया एकवाक्यत्वमभ्युपगम्यते, तदाऽपि किं कृत्स्न-दाक्षिण्यनिवृत्तिः, उत ब्रह्मभागस्यैवेति चिन्तायाम्, दक्षिणापदतच्छब्दयोः श्रवणाविशेषात् भिन्नवाक्यत्वे इव एकवाक्यत्वेऽपि कृत्स्नदाक्षिण्यनिवृत्तिः पुरुषा-न्तरादपनयश्च । **इति प्राप्ते**, एकवाक्यत्वे ब्रह्मा-नत्युद्देशेन द्रव्यसंप्रदानोभयविशिष्टप्राकृतदानाभ्यासस्यैव विधेयत्वावगतेः क्रतूद्देशेन द्रव्यविशिष्टप्राकृतविजातीय-दानविध्यनुपपत्तेः, दक्षिणाशब्दस्य च ब्रह्मसंबन्धिन्याम् आनतावपि शक्तत्वेन अनुवादोपपत्तेर्ब्रह्मभागस्यैव निवृत्तिः । वस्तुतस्तु अर्थवादव्यवधानात् तच्छब्ददक्षिणा-पदवैयर्थ्यप्रसङ्गात् भिन्नवाक्यत्वमेव युक्तमिति तदैव कृत्स्नक्रतुदाक्षिण्यस्य निवृत्तिः ।

**मण्डन**— 'न ब्रह्मभागव्यतिरिक्तदानम् ।'

**शंकर**— 'वाक्यैक्ये भागबाधः स्यात् ।'

* **ऋतपेये सोमचमसपात्रं** ब्रह्मणे एव देयम् । इतरेभ्यश्च न किमपि शास्त्रीयम् । लौकिकेन तु



आनतिस्तेषाम् । 'यत् पशून् दद्यात्' इति तु सोमचमस-स्तुत्यर्थः अर्थवादः । भा. १०।३।१९।६८–७३.

* **ऋतव्या इष्टका** अग्निचयने 'व्यत्यस्तमृतव्या उपदधाति' इति व्यत्यासः श्रौतः क्रमः । भा. ५।१।४।७.

* '**ऋताषाड् ऋतधामा** गन्धर्वः' इत्यादयो राष्ट्रभृद्धोममन्त्राः । वि. ३।४।१३.

* '**ऋतौ** भार्यामुपेयात्' अयं नियमविधिः पुरुषार्थः । बाल. पृ. २४. * '**ऋतौ** भार्यामुपेयात्' दाक्षायणयज्ञप्रकरणे इदम् । **संकर्ष**. १।३।८.

* '**ऋतुकाले** नियुक्तो वा नैव गच्छेत् स्त्रियं क्वचित्' इति वृद्धमनुः । अयं क्रत्वर्थः क्रियाविषयकः स्मृतिकल्प्यः प्रतिषेधः । बाल. पृ. ३१.

* **ऋतुग्रहेषु** 'होता यक्षत्' 'होतर्यज' इत्यंशयो-रनन्वितत्वेन तौ उन्मूल्य तत्स्थाने येयजामहेवषट्कार-योगेन यागे प्रयोगः । **संकर्ष**. २।४।२५.

* **ऋतुग्रहयागेषु** यजमानस्य स्वयं याज्यापाठपक्षे वषट्कारभक्षो यजमानस्यैव ज्योतिष्टोमे । **भा.** ३।५।१८। ४४–४६. * ऋतुग्रहयागेषु यजमानसमानां याज्या-प्रयोगार्थे वरणमाम्नातम् । तेषु यजमानस्य याज्या ज्योतिष्टोमे । वा. ३।५।१८।४४.

* **ऋतुनक्षत्रे** न प्रतीक्षेत यदि आधानसमनन्तर-मेव सोमेन यक्ष्यमाणः स्यात् । अयं प्रतीक्षाऽभावः आधानविषयकः इति सूत्रभाष्यकारौ सुबोधिनी च । सोमविषयकः इति वार्तिकं तन्त्ररत्नं च । **के.** ५।४।३।६.

* **ऋतुनक्षत्रयोरेव** सोमपूर्वाधाने सोमे बाधः पर्वपञ्चाहत्वाद्यादरस्तु कर्तव्यः एव । पर्वादरोऽपि न कर्तव्यः इति **के चित्** । **भाट्ट**. ५।४।५. * '**ऋतु-नक्षत्रसंभार**सामवपनचातुष्प्राश्यजागरणेध्मपूर्वाधान्वा-रम्भणसार्पराज्ञीर्न वा कुर्यात्' इति वपननिषेधः आधाने कातीये । अयं अपूर्वकर्मगतसंनिपाति– अदृष्टार्थक्रिया-निषेधः । बाल. पृ. ३६. * **ऋतुनक्षत्रातिक्रमवचनात्** सोमाधानयोरानन्तर्यमस्ति । **भा.** ५।४।३।६.

**'ऋतुप्रैषादिभिर्वृणीते' इति येषां शाखायां वचनम्, तेषां तैरेव मन्त्रैर्वरणम्** ॥

येषां शाखायाम् 'ऋतुप्रैषादिभिर्वृणीते' इत्याम्नातम्, तेषां यज्ञे तैरेव मन्त्रैर्वरणम् । परन्तु ऋतुप्रैषेषु 'होता यक्षत्' इत्यत्रास्य परित्यागेन 'इन्द्रं होत्रात्' इत्यादय एव मन्त्रा भवन्ति, प्रैषयागाधिकरणन्यायात् । **संकर्ष**. ३।४।११.

**ऋतुमतीकन्यकान्यायः** । यथा कन्यका स्वय-मृतुमती भूत्वा जननीं जनकं भ्रातरं सर्वं स्वजनं त्यक्त्वा भर्तारमेवैकमाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमते, तेनैव तृप्यति, हृष्यति, आनन्दति, नान्यं शृणोति, पश्यति, स्मरति, स्पृशति, स्वयं पतिव्रता भूत्वा तत्रैव तिष्ठति, तथैव ब्रह्मविदो यतेः प्रज्ञा समाधिना प्रौढीभूय देहं प्राणमिन्द्रियजातं च सर्वं दूरतः परित्यज्य सच्चिदा-नन्दैकरसं परब्रह्मैकमेवाश्रित्य तदेकालम्बना भूत्वा तत्रैव रममाणा नन्दन्ती, तुष्यन्ती, हृष्यन्ती सती पतिव्रतावत् नान्यत् शृणोति, पश्यति, मनुते, विजानाति, स्वयं सदा तदात्मना तिष्ठतीति । **साहस्री**. ५२७.

* **ऋतुयाजेषु** का चिद्याज्या होतुरपनीय यजमानस्य विधीयते । ततो यजमानः स्वेच्छया होतारमेव 'होत-रेतद्यज' इति याज्यां पठितुं प्रेष्यति स्वयं वा पठति । वि. ३।५।८.

**ऋतुयाजेषु स्वयं याज्यापाठे यजमानस्य वषट्कारनिमित्तोऽस्ति भक्षः ज्योतिष्टोमे** ॥

**याज्याऽपनये नापनीतो भक्षः, प्रवरवत्** । ३।५। १८।४४ ॥

**भाष्यम्**— अस्ति ज्योतिष्टोमः, तत्र ऋतुयागेषु श्रूयते यजमानस्य याज्या, 'सोऽभिप्रेष्यति होतरेत-द्यजेति, स्वयं वा निषद्य यजति' इति । यदा स्वयं यजति, तदा संदेहः किमस्य भक्षोऽस्ति, नास्तीति । तदुच्यते । याज्यायामपनीयमानायां नापनीयेत भक्षणम्। होतुरेव तु भक्षणं स्यात्, न यजमानस्येति । कुतः ? अन्या हि याज्या, अन्यद्भक्षणम् । न चान्यस्मिन् अपनीयमाने अन्यदपनीयते । यथा तस्यामेव याज्याया-मपनीयमानायां प्रवरो नापनीयते, तद्वदेतदपीति । ननु 'याज्याया अधि वषट् करोति' इति, यत्र याज्या तत्र वषट्कारः । यत्र वषट्कारस्तत्र भक्षणमपीति । नेत्यु-च्यते । न तावत् याज्यायामवयवभूतो वषट्कारः, येन

याज्याग्रहणेनासौ गृह्येत । यत्तु तस्या अधि वषट् करोति इति, अन्येनापि प्रयुज्यमानाया उपरि होता वषट् करिष्यति । याज्याऽपनयो हि वचनात् । न वषट्कारापनयः । यावद्वचनं वाचनिकं भवत्येव । वचनं हि तद्विषयमेव ।

वा-- ज्योतिष्टोमे ऋतुग्रहेज्यासु यजमानसप्तमानां याज्याप्रयोगार्थे वरणमाम्नातम् । तेषु यजमानस्य याज्या । तस्याश्च पक्षद्वयं विहितम्, होत्रे प्रत्यर्पणं स्वयं वोच्चारणम् । तत्र यदा स्वयं यजति, तदा किं वषट्कारः तन्निमित्तश्च भक्षोऽपनीयते, नेति संदेहे, नापनयो वचनाभावात् । अन्यापनये च नान्यस्यापनयः, असंबन्धात् । याज्यामात्रस्य हि अपनयनं श्रूयते, न वषट्कारभक्षयोः । तस्माद्यथा याज्याया अपनये सत्यपि होतुर्वरणं नापनीयते, तथा भक्षोऽपीति । ननु च यदा स्वयं यजते, तदा नैवापनयो भवति ' यजमानस्य याज्या ' इति वचनात् । यदा तु सोऽभिप्रेष्यति तदाऽपनयः । अत एवं विचारयितव्यम्, किं याज्याऽपनये यजमानात् भक्षोऽपनीयते, नेति । उच्यते । **' याज्याभक्षवषट्काराः प्राप्ता होतुः समाख्यया । यजमानस्य याज्येति ततोऽपनयनं श्रुतम् ॥ '** ( पूर्वपक्षन्यायोऽयम् ) होत्रसमाख्यया हि प्राक् ' यजमानस्य याज्या ' इति हि अतो वचनात् सर्वे होतुः प्रापितम् । तत्र वचनेन याज्यामात्रं यजमानसंबन्धि कृतम्, वषट्कारादयस्तु होतुस्तदवस्था एव । यदि पुनः यजमानादपनय इति व्याख्यायेत, ततस्तस्य याज्यामात्रं प्रापितं सत् अपनीयते इति वषट्कारादिप्राप्त्यभावात् अपनयाशङ्कैव न स्यात् । तस्मात् ' यजमानस्य याज्या ' इत्यनेन याज्यामात्रापनयात् वषट्कारस्य च याज्यातः अत्यन्तव्यतिरेकात् अङ्गाङ्गित्वाभावाच्च यजमानेन प्रयुज्यमानाया उपरि होता वषट्कृत्य भक्षयेत् । वषट्कारनिमित्तो हि भक्षः, न याज्यानिमित्त इत्यनपनीतः ।

**यष्टुर्वा, कारणागमात् । ४५ ॥**

**भाष्यम्--** यष्टुर्वा भक्षः स्यात् । कुतः ? कारणागमात् । भक्षस्य कारणं वषट्कारः । स च याज्यायामागच्छन्त्यामागच्छति । एवं हि श्रूयते ' याज्याया अधि वषट् करोति ' इति । ननु एतदुक्तं यजमानेनापि प्रयुज्यमानाया अधि होता वषट् करोति इति । नैष समाधिः । अनवानता यष्टव्यम्, वषट्कारेण यागः क्रियते न याज्यामात्रेण । तस्मात् आ वषट्कारात् नावानितव्यं यजमानेन । अन्यश्चेत् वषट् कुर्यात्, अवान्यात् यजमानः, न च यजेत । यष्टव्ये चासौ चोद्यते, न याज्यामात्रवचने, ' स्वयं निषद्य यजति ' इति साङ्गस्य निषद्ययागे विधानात् ।

वा--- यदि ' यजमानस्य याज्या ' इत्येतावन्मात्रमेव श्रूयेत, ततः कदाचित् नापनीयेत भक्षः । इह त्वेवं श्रूयते ' स्वयं निषद्य यजति ' इति । वषट्कारेण च हविःप्रदानार्थत्वादिज्यते, न केवलया याज्यया । तथा ' अनवानं यजति ' इति याज्यातः आरभ्य यावद्यजतेः अर्थः समाप्यते तावत् न अवानितव्यम् । एककर्तृकत्वे च याज्यावषट्कारयोः इदमुपपद्यते, नान्यथा । तस्माद्यत्र याज्या तत्र वषट्कारभक्षावपि इति अन्तरेणापि एकत्वम् अङ्गभावं चापनयो विज्ञायते ।

**प्रवृत्तत्वात् प्रवरस्यानपायः । ४६ ॥**

**भाष्यम्--** अथ यदुक्तम्, यथा प्रवरो नापनीयते एवं भक्षोऽपीति । उच्यते । अशक्यत्वात् प्रवरो नापनीयते । अतिक्रान्तो हि स कथमपनीयेत होतुः । भ्रष्टे चावसरे अनुष्ठीयमानो यजमानस्य विगुणः स्यात् । न च विगुणः कथञ्चिदर्थं साधयेत् । नात्र चोदकेन प्राप्नोति । अथोच्येत, यच्छक्यं तच्चोदकेन प्रापितम्, यन्न शक्यं न तत्प्रापितमिति । प्रकृतिरियम् । अपूर्वस्यात्र विधानं यादृशमुक्तम्, तादृशं यदि शक्यते, कर्तव्यम् । यदि न शक्यते, यत्रैव शक्यते तत्रैव कार्यम् । न यत्र विगुणमिति । तस्मात् प्रवरस्य अनपायो युक्तः, न भक्षस्येति ।

वा-- यत्तु प्रवरवत् इति, तत्रोच्यते । **' प्रवरो न त्वतिक्रान्तो याज्याकालेऽपनीयते । भक्षणस्य तु भावित्वात् शक्याऽपनयकल्पना ॥ '** तन्नाम निमित्तापनयात् अपनीयते, यत् अपनेतुं शक्यते अन्यत्र च योजयितुम् । न च प्रवरस्य याज्याऽपनयवेलायां होतुरपनयनं शक्यम्, नापि यजमाने अतिक्रान्तकालस्य करणात् सगुणं वरणम् । भक्षस्य तु द्वयमपि शक्यम् ।



तस्मात् इह दृष्टान्तवैषम्यम् । ( एवं तावत् यथाभाष्यं व्याख्याय अन्यथा व्याचिख्यासुः आदौ भाष्यं तावत् आक्षिपति-- ) इदं त्विह वक्तव्यम् । किमिति तत्र प्रवरापनयो न शक्यते, यदा सर्ववैकल्पिकानि आदित एव अन्यतरतः अवधार्य प्रयोग आरभ्यते । शक्यं हि प्रवरवेलायामेव निश्चेतुम्, किं यजमानो याज्यां वक्ष्यति, उत होतेति । तथा निश्चिते च अन्यतरस्य वरणं करिष्यते । यदि हि एतत् याज्यावचनम् उरुक्रमविष्णुयागवत् (' वैश्वदेवं चरुं निर्वपेत् भ्रातृव्यवान्, तं बर्हिषदं कृत्वा शम्यया स्फ्येन च व्यूहेत् इदमहममुं चामुं च व्यूहामि इति, यं द्विष्यात् तं ध्यायेत्, यदधोऽवमृद्येत् यत् स्फ्ये आश्लिष्येत्, तद् विष्णवे उरुक्रमायावद्यति ' इति वाक्येन अधोवमर्दनस्फ्याश्लेषयोर्निमित्ते विधीयमानोरुक्रमविष्णुयागवत् १०।१।१ तृतीयवर्णके द्र० ) नैमित्तिकं भवेत्, ततः प्राक् निमित्तोपजननात् अनवधृतसद्भावं सत् न कारयेदपि प्रवरणम् । नित्यं चैतच्छक्नोति प्रथममेव स्वानुसारि वरणं नियन्तुम् । यदपि होतुर्न शक्यमपनेतुम् ( इति ) । कथमेतद्धोतुरपनीयेत, यदा तस्य आत्मीययाज्यार्थमवश्यकर्तव्यमेवेति । न किञ्चिदेतदर्थं पृथग्वरणम्, यस्य अपनयः आशङ्क्येत । शक्यं हि याज्यासहस्रार्थमपि तन्त्रेण एकमेव वरणं कर्तुमदृष्टार्थे च । अतः समस्तज्योतिष्टोमप्रयोगार्थे प्रथममेव वृते सति क्रियते इति, अगृह्यमाणविशेषत्वादपि तन्त्रम् । यदपि यजमानस्य भ्रष्टावसरं क्रियमाणं विगुणं भवतीति, तदपि ' गुणलोपे च मुख्यस्य ' ( १०।२।२७।६४ ) इत्यनेन विरुद्धम् । न च तत्र प्रकृतिविकृत्योः कश्चित् प्रयोगविशेषो भवति । यदपि यथाश्रुतमेव प्रकृतौ कर्तव्यमिति, तत् सर्वशक्त्यधिकरणेन ( ६।३।२।८-१० ) विरुद्धं शक्यमेव यथाकालं संपादयितुमित्युक्तम् । **अत एवं सूत्रं नेतव्यम्,** कारणान्तरेण एतत्प्रसिद्धिमङ्गीकृत्य नान्यस्यापनये अन्यस्यापनयः इत्येतावता पूर्वमुदाहृतम् । इदानीं तु ब्रवीति ' प्रवृत्तत्वात् प्रवरस्यानपायः ' याज्याऽन्तरार्थं प्रवृत्तत्वादित्यभिप्रायः । तेन यजमानोऽपि यदि वक्ष्यति यदि च प्रेष्यति, तथापि इतरार्थे भवितव्यमेव प्रवरणेन । एतावता तु वैषम्यम्, यदसौ न वषट्कारभक्षवत् एतद्याज्यानुसारं प्रतिपद्यते इति ।

शा-- **' यजमानस्य याज्येति याज्याऽपनयचोदना । वषट्कारस्य याज्यातो भिन्नत्वान्नापनीयते ॥ '** इति प्राप्ते, ब्रूमः । **' यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम् । परिपूर्णं च यष्टृत्वं वषट्कारेण जायते ॥ याज्यामात्रप्रयोगे तु न्यूनं तच्च न युज्यते । अनवानं च यष्टव्यम्, याज्यामात्रं ब्रुवन्नसौ ॥ अवान्याद् यजमानोऽतो वषट् कुर्यात् स नेतरः ( होता ) । भक्षोऽपि यजमानस्य वषट्कारनिमित्तकः ॥ '** १७.

**सोम--** ऋत्विजां भक्षे साङ्गे उक्ते, अनन्तरं स्वामिनो भक्षचिन्ता इति पेटिकाभेदः संगतिश्च इति केचित् । तन्न । समाख्याहोमाभिषवादिविचारस्य ऋत्विग्यजमानसाधारण्येन पेटिकाभेदस्य उक्तसंगतेश्चायोगात् । तस्मात् यथा एकपात्रप्रसक्तपुरुषानुज्ञानमात्रेण अनुज्ञानशास्त्रस्य चारितार्थ्यम्, एवमिहापि याज्याऽपनयमात्रेण ' यजमानस्य याज्या ' इति शास्त्रस्य चारितार्थ्यात् न भक्षापनयः इति प्रत्यवस्थानात् ( दृष्टान्त- ) **संगतिः** इत्यन्ये । ननु यदा यजमानो याज्यामाह तदाऽयं विचारः । यजमानस्य च याज्याप्रयोक्तृत्वं न ' यजमानस्य याज्या ' इत्येतद्वचनलभ्यम्, ' तद्वचनप्राप्तयाज्यासंबन्धस्य ' सोऽभिप्रेष्यति होतरेतद्यज ' इत्यनेन प्रत्यर्पितत्वात् । तस्मात् ' स्वयं वा निषद्य यजति ' इति वाक्यस्य याज्यामात्रापनयार्थकत्वप्रतिपादनमेव पूर्वपक्षोपयुक्तम्, न तु ' यजमानस्य याज्या ' इति वाक्यस्य तत्प्रतिपादनम्, इति चेन्नैवम् । ' स्वयं वा निषद्य यजति ' इति वाक्यमत्यन्ताप्राप्तं याज्यासंबन्धं न स्वयं प्रापयति, किंतु ' यजमानस्य याज्या ' इत्यनेन प्राप्तः एव यजमानस्य याज्यासंबन्धः ' सोऽभिप्रेष्यति होतरेतद्यज ' इत्यनेन अपोदितः ' स्वयं वा निषद्य यजति ' इत्यनेन पुनः पक्षे प्रतिप्रसूयते । प्रतिप्रसवश्च प्राथमिकप्राप्त्यनुसारी इति प्रथमं याज्यासंबन्धप्रापकस्य ' यजमानस्य याज्या ' इति वाक्यस्य याज्यामात्रापनयार्थकत्वप्रतिपादनस्य पूर्वपक्षोपयोगसंभवात् । **सूत्रार्थस्तु--** यथा

याज्याऽपनयेन याज्याऽर्थवरणलक्षणः प्रवरो नापनीतः तद्वत् भक्षोऽपि इति । ऋतुयाज्यावरणस्य तन्त्रेण सकलयाज्योपकारकत्वात् एकस्यां याज्यायां होतुरपनीतायां तदर्थं यजमानस्य वरणावश्यंभावेऽपि याज्याऽन्तरार्थं होतुरपि वरणस्य अवश्यकर्तव्यत्वात् न तस्य होतुरपनयः इति प्रवरवैषम्यं सिद्धान्ते बोध्यम् । १७.

**वि**—'होतुर्याज्याऽपनीतौ किं न वषट्कारभक्षयोः । अपनीतिरुतापायो, नापनीतिर्विभेदतः ॥, यजमानेन यष्टव्यं न विनेष्टिर्वषट्कृतिम् । वषट्कृतिर्याज्ययाऽतः सहापैत्यदनं तथा ॥' (अतः याज्यया सह वषट्कृतिः अपैति, तथा अदनं सोमभक्षणं होतुः सकाशात् अपैति)।

**भाट्ट**— ज्योतिष्टोमे ऋतुयाज्यासु हौत्रप्रवचनाम्नातासु अन्त्या याज्या होतुरपनीय यजमानस्य विकल्पेन विधीयते 'यजमानस्य याज्या, सोऽभिप्रेष्यति होतरेतद्यजेति, स्वयं वा निषद्य यजति' इति । तत्र स्वयंयाज्यापाठपक्षे वषट्कारभक्षयोः स एव कर्ता, उत होता वा इति चिन्तायाम्, षष्ठीश्रुत्या यजमानस्य याज्यामात्रं श्रुतं न वषट्कारः, तस्य 'याज्याया अधि वषट् करोति' इति वचनेन याज्यातो भेदात् । अतश्च वषट्कारे समाख्यानिमित्तो होतैव इति तन्निमित्तो भक्षस्तस्यैव । यत्तु 'स्वयं वा' इति वचनम्, तत् न तावत् यागकर्तृत्वविधायकम्, तस्य प्रधानवाक्यादेव सिद्धेः । नापि यागप्रकाशकवषट्कारप्रयोक्तृत्वविधायकम्, विध्यन्तरत्वे वाक्यभेदापत्तेः । अतः आद्यवाक्येन यजमानस्य याज्यायां विहितायां द्वितीयेन प्रैषकर्तृत्वविधानात् प्रैषार्थकर्तृत्वानुपपत्तेरेव याज्याऽर्थविकल्पप्राप्तेः, यागकर्तृत्वस्य च याज्याप्रयोक्तृत्वमात्रेणाप्युपपत्तेः तृतीयमर्थवादः । 'निषद्य' इत्यपि याज्यायां निषण्णत्वस्य सामान्यविधितः एव प्राप्तत्वादनुवादः । 'अनवानं यजति' इति याज्याऽन्तरविषयम् । इति प्राप्ते, आख्यातश्रवणात् वाशब्दानुपपत्तेश्च तृतीयमेव विधायकम्, आद्यं तु अर्थवादः । अतश्च याज्याऽन्तेन वषट्कारेणैव मुख्ययागकर्तृत्वात् वषट्कारोऽपि तस्यैव, याज्यावषट्कारयोः समानकर्तृत्वस्य अनवानस्य च बाधापेक्षया वषट्कारे होतृकर्तृकत्वमात्रस्यैव एकस्य समाख्याप्रमाणकस्य बाधौचित्याच्च । एवं च आद्यस्यापि विधित्वे न कश्चिद्दोषः । अतश्च वषट्कारनिमित्तो भक्षोऽपि तस्यैव । १४.

**मण्डन**—'याज्यापाठी वषट् पठेत् ।'

**शंकर**—'भक्षापनेत्री याज्येष्टा ।'

* **ऋतुयाजप्रैषान्** अध्वर्युर्न विभजेत् किन्तु मैत्रावरुणः । **संकर्ष.** २।३।१२.

* **ऋतुयाज्याः** प्रातःसवने एव नोत्तरयोः सवनयोः । प्रस्थितयाज्यास्तु त्रिष्वपि । **संकर्ष.** २।३।१३.

**⧗ ऋतुयाज्यासु प्रैषांशस्योद्धारः ॥**

ऋतुग्रहे 'होता यक्षदिन्द्रं होत्रात्' इत्यादीन् 'होतर्यज' इत्यन्तान् प्रैषानाम्नाय 'प्रैषेण यजन्ति' इत्याम्नातम् । तत्रापि यथासमाम्नातस्यैव मन्त्रत्वेन प्रदानाङ्गयोर्येयजामहवषट्कारयोः ऋगाद्यन्तभागयोरिव योजनया प्रयोगे प्राप्ते, होता यक्षद्धोतर्यजेत्यंशयोरनन्वितत्वेन तावुन्मूल्य तत्स्थाने तयोर्योगेन प्रयोगः । **संकर्ष.** २।४।२५.

* **ऋतुयाज्यावरणस्य** अदृष्टार्थस्य अनुष्ठानं द्वादशाहो सत्रे । भा. १०।२।२६।६२.

**⧗ ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः सत्रे न बाधः ॥**

**क्रिया स्याद् धर्ममात्राणाम् । १०।२।२६।६३ ॥**

**भाष्यम्**— अस्ति द्वादशाहः 'द्वादशाहमृद्धिकामा उपेयुः' इति । अस्ति तत्र चोदकप्राप्तं धर्ममात्रं किञ्चित् । यथा ऋतुयाज्यावरणम् आत्रेयहिरण्यदानं च । तत्र संशयः किं धर्ममात्रं कार्यम्, नेति । किं प्राप्तम् ? स्वयंकर्तृकत्वात् सत्रस्य वरणं दानं च निवर्तते इत्युक्तम् (१०।२।१०) न चान्यत् वचनमस्ति कर्तव्यमिति । यावानेव श्रुतस्योत्सर्गे दोषः तावानश्रुतकल्पनायाम् । तस्मात् न कर्तव्यमिति । एवं प्राप्ते, ब्रूमः । क्रिया स्यात् धर्ममात्राणाम् । यद्धि वरणं दानं वा न भवति आनत्यर्थम्, तत् स्वयंकर्तृकेऽपि न विरोधमुपैति । तस्मात् चोदकानुग्रहाय क्रिया स्यादिति ।

**सोम**— प्रत्युदाहरणं **संगतिः** । ऋतुयाज्याऽवयवैः 'इन्द्रं होत्रात् सजूर्देव आ पृथिव्याः' इत्यादिभिः यत्



होत्रादिवरणम् (तत् अदृष्टार्थत्वात् सत्रेऽपि कर्तव्यम्) । सूत्रे धर्ममात्राणां अदृष्टार्थानामित्यर्थः ।

**वि**— 'आत्रेयदानर्तुयाज्यावृती सत्रेषु नाचरेत् । कुर्याद्वा, ऽऽनतिलोपान्नो, धर्मार्थे क्रियतां द्वयम् ॥' ऋतुयाज्या च वृतिर्वरणं च ते द्वे ।

**भाट्ट**— सत्रे वरणभरणयोर्दृष्टार्थत्वात् लोपे अभिहिते यत् प्रकृतावदृष्टार्थम् ऋतुयाज्यावरणम् आत्रेयाय दानं च, तत् सत्रे कार्यमेवेति प्रत्युदाहरणमात्रम् । सोमे हि वृते पुनः ऋतुयाज्यावरणमदृष्टार्थमेव । एवम् 'आत्रेयाय हिरण्यं ददाति' इत्यपि । नह्यत्र प्राप्तदक्षिणादानानुवादेनोभयविधिः संभवति, वाक्यभेदापत्तेः । अतो दानान्तरमेवावश्यं विधेयम् । तदपि च न 'वैश्वामित्रो होता' इत्यादिविशेषविहितातिरिक्तऋत्विक्षु, आत्रेयत्वविधिकल्पनया तदानत्यर्थं उक्तविधिकल्पननिरपेक्षदक्षिणादानेनैव निराकाङ्क्षायामानतौ विधिकल्पनसापेक्षदानस्य जनकत्वेन अन्वयायोगात् । न च पक्षप्राप्तात्रेयऋत्विगानत्यर्थमेव तद्विध्युपपत्तेर्नात्रेयविधिकल्पनं ममापीति वाच्यम् । 'हिरण्यमन्तर्धाय' जुहोति इत्यादौ उपयुक्तहिरण्यप्रतिपत्त्यर्थत्वेनापि दानस्य दृष्टार्थत्वोपपत्तौ तादृशऋत्विगानत्यर्थत्वे एव प्रमाणाभावात् । अतो विनिगमनाविरहात् अदृष्टार्थमेवेदं दानम् । अत एव नात्राग्नेयीन्यायेन (३।२।८) दैववशसंपन्नऋत्विगात्रेयस्यैव ग्रहणम्, आत्रेयत्वस्य अपूर्वसाधनताऽवच्छेदकत्वेन अक्लृप्तेः तन्न्यायाभावात् । १०।२।२५.

**मण्डन**—'सत्रे दानमदृष्टकृत् ।' २५.

**शंकर**—'सत्रे दानमदृष्टार्थम्' । २७.

**⧗ ऋतुलिङ्गन्यायः** 'यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये । स्वानिस्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥' (मनुः १।३० मेधापाठः) 'यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानितान्येव, तथा भावा युगादिषु ॥' इति । (शांभा. १।३।३० ब्रसू.) इदं न्यायस्वरूपम् । के.

* **ऋतुलिङ्गन्यायेन** प्रतिसृष्टि तुल्यनामप्रभावव्यापारवस्तूत्पत्तेर्नानित्यताप्रसङ्गः । (प्रतिसंवत्सरं यथा ते एव ऋतवः तैरेव लिङ्गैश्चिह्नैर्विशिष्टा आवर्तन्ते तथा सृष्टावपि ।) वा. १।२।१।१० पृ. १२६.

* **ऋत्विक्** इति संज्ञायाः यद्यपि प्रवृत्तिनिमित्तम् ऋतौ यजनम्, तथापि सौम्यस्याध्वरस्य सप्तदशैव ऋत्विजः इति चमसाध्वर्यूणां न ऋत्विक्त्वम् । वि. ३।७।१६, * ऋत्विक् एक एव अध्वर्युः अग्निहोत्रे 'अग्निहोत्रस्य यज्ञक्रतोरेकः एव ऋत्विक्' इति नियमविधिः । ४।२।९.

**⧗ ऋत्विक् फलं करणेष्वर्थवत्त्वात् । ३।८।१३।२६ ॥**

दर्शपूर्णमासयोः अग्न्यन्वाधाने विहव्यमन्त्राः 'ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम । मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम ॥' इत्यादयः पठ्यन्ते । अग्न्यन्वाधानस्य करणमन्त्रोऽयम् । तत्रोक्तं वर्चस्तनुपोषणदिङ्नमनादिफलम् । एवं करणेषु मन्त्रेषु उक्तं फलम् ऋत्विक् स्वस्यैव आशासीत न स्वामिनः । कुतः ? अर्थवत्त्वात् 'ममाग्ने वर्चः' इति मन्त्रगतममशब्दस्य अध्वर्युणा स्वफलाशासने एव सफलत्वात् । स्वामिफलाशंसने तु ममेतिपदं व्यर्थं स्यात् । तस्मात् करणमन्त्रोक्तं फलं करणमन्त्रपाठकस्य ऋत्विजः एव इति पूर्वः पक्षः ।

**स्वामिनो वा तदर्थत्वात् । २७ ॥**

वाशब्देन पूर्वपक्षं निरस्यन् सिद्धान्तयति । ऋत्विक्-पदमनुवर्तते । ऋत्विक् करणमन्त्रेण स्वामिनः फलं आशासीत । तदर्थत्वात् । कर्मणो यजमानार्थत्वात् । 'मम वर्चः अस्तु' इत्यपि यजमानस्य वर्चः 'मम' इति व्यपदिशति लक्षणया । तस्मात् करणमन्त्रोक्तं फलं यजमानस्यैवेति सिद्धान्तः ।

**लिङ्गदर्शनाच्च । २८ ॥**

उक्ते सिद्धान्ते हेत्वन्तरप्रतिपादकं सूत्रम् । 'यां वै कां चन ऋत्विज आशिषमाशासते यजमानस्यैव सा' इति अर्थवादः फलस्य यजमानार्थकतां दर्शयति । इत्यस्मात् लिङ्गस्य दर्शनात् ऋत्विक् यजमानस्यैव फलमाशंसीत न स्वस्य इति सिद्धम् । के.

* नहि द्वेष्यः **ऋत्विक्** भवति । 'ऋत्विगाचार्यौ नातिचरितव्यौ' इति । भा. १०।२।१६।४६, * **ऋत्विजः** अन्ये

सत्रिभ्यः पृष्ठशमनीये । १०।२।१४।४३, * ' ऋत्विजः उपगायन्ति ' इति प्रकृतौ । १०।४।५।८, * ' ऋत्विजः उपगायन्ति ' इति सहस्रसंवत्सरे उक्तम् । ८।१।११।१८, * ऋत्विजः एकस्मिन् प्रयोगे प्रयुक्ताः प्रयोगान्तरे ते एव ग्राह्याः अन्ये वा इच्छया । न तु तेषां यातयामत्वम् । ११।३।१२।३५.

**ऋत्विजः कर्तव्यानुसारिसंख्यया वरीतव्याः ॥**

**तत्रार्थात् कर्तृपरिमाणं स्यादनियमोऽविशेषात् । ३।७।९।२१ ॥**

**भाष्यम्**—तत्र तैः परिक्रीतैः कर्तव्येषु अनियमेन कर्तृपरिमाणं स्यात् । कुतः ? अविशेषात् । न कर्तृपरिमाणे विशेषः कश्चिदाम्नायते, अर्थेन तत्परिमाणं यावद्भिरसौ इतिकर्तव्यता निर्वर्तते, तावतो वृणीतेति ।

**वा**—एकस्य द्वयोर्वा उपादाने परिक्रयः शक्यः कर्तुमित्यनियमः । अथवा फलसमानकर्तृकत्वे सामानाधिकरण्यात्मनेपदाभ्यां समस्तस्य प्रयोगस्य प्राप्ते, यन्मात्रमेव अबाधित्वा परिक्रयविधिरशक्यः, तदेव बाधितव्यम् । स चैकेन कर्त्रा यत्किञ्चित्कुर्वता उपपन्नः इति नानेकं बाधितव्यमिति ।

**अपि वा श्रुतिभेदात्, प्रतिनामधेयं स्युः । २२ ॥**

**भाष्यम्**— यावन्ति कर्तृनामधेयानि कर्माणि श्रूयन्ते, तावन्तो वरीतव्या भिद्यन्ते । तानि नामधेयश्रवणानि ' तान् पुरोऽध्वर्युर्विभजति ' ' प्रतिप्रस्थाता मन्थिनं जुहोति ' ' नेष्टा पत्नीमभ्युदानयति ' ' उन्नेता चमसानुन्नयति ' इति । तथा ' प्रस्तोता प्रस्तौति ' ' उद्गातोद्गायति ' ' प्रतिहर्ता प्रतिहरति ' ' सुब्रह्मण्यः सुब्रह्मण्यामाह ' ' होता प्रातरनुवाकमनुब्रूते ' ' मैत्रावरुणः प्रेष्यति चानु चाऽऽह ' ' अच्छावाको यजति ' ' ग्रावस्तुत् ग्रावस्तोत्रीयामन्वाह ' । एतावद्भिः कर्मणि प्रयोजनम् । तेन ते अवश्यमेतानि यथाश्रुतानि कर्तुं वरीतव्याः । एतद्व्यतिरिक्तोऽन्यः पदार्थो न विद्यते । योऽपि वाक्येन नोपदिष्टः, स समाख्यया गम्यते । तस्मादेतावतो वृणीते इति ।

**वा**— भिन्नसमाख्यानियतकर्तृकपदार्थयुक्तभावनाविधिना तावतामुपादानमिति विहितं भवति । ' संज्ञाचोत्पत्तिसंयोगात् ' इति चैष न्यायो यथा कर्मभेदं बोधयितुं समर्थः, तथा कर्तृभेदमपीति यावत्समाख्यं कर्तार उपादातव्याः ।

**एकस्य कर्मभेदादिति चेत् । २३ ॥**

**भाष्यम्**-- एवं चेत् प्रतिज्ञायते, एतावतो वृणीते इति । तन्न । योयः तत्कर्म करिष्यतीति संकल्पते, सस तत्तच्छब्दाभिधेयो भवति । एकोऽपि बहून् पदार्थान् कर्तुं बहुभिर्नामधेयैरुच्येत । तस्मादनियमः ।

**वा**-- व्याप्रियमाणानामेताः समाख्या उपलभ्यन्ते । न च लोकादवगता इति यूपादिवत् कार्यतस्तावत् परिच्छिद्यन्ते । ततश्च पाचकादिवत् तत्तद्धौत्रादि कर्म कुर्वन् हौत्रादिशब्दैरभिधास्यते इत्यभेदः ।

**नोत्पत्तौ पुरुषाणाम् । २४ ॥**

**भाष्यम्**— नैतदेवम्, उत्पत्तौ पुरुषाणाम् । उत्पाद्यमानेषु पुरुषेषु नामधेयानि भिद्यन्ते ' ब्रह्माणं वृणीते ' ' होतारं वृणीते ' ' उद्गातारं वृणीते ' ' अध्वर्युं वृणीते ' इत्येवमादि । तस्मात् कर्मणि तैरेवंनामकैः प्रयोजनम् । अवश्यं ते वरीतव्याः । तस्मादेषां वरणे संकीर्तनम्, न विधिः । प्रयोजनस्याभावान्नानुवादः । न वेदे तावन्तो वरीतव्या इति ब्रूयात्, अनर्थकमेव स्यात् । शक्नोति चेदं प्रत्याययितुं संख्याविशेषम् । तस्माद्यः संख्याविशेष एषां प्रतीयते, तदर्थमेतद्वचनम् । तस्मात् षोडश कर्तारो वरीतव्याः, तावत्कर्तृकश्च सोमः स्यात् । एवं दर्शपूर्णमासयोरपि ।

**वा**-- यदि हि कर्मविनियोगवेलायामेतदुत्तरकालं वा एताः समाख्याः श्रूयेरन्, एवं सति न भिन्द्युरपि । वरणं तु अत्यन्ताप्रवृत्तानां प्रवर्तनार्थमभ्यर्थनम् । तत्रैताः श्रूयन्ते ' ब्रह्माणं वृणीते ' इत्यादि । न च तदानीं निमित्तान्तरं दृश्यते, यत्कृतः समाख्याभेदो भवेत् । वरणान्यपि चैतानि ' एकस्यैवं पुनःश्रुतिः ' इत्येवम्, ' गुणश्चापूर्वसंयोगे ' इत्येवं यावच्छ्रुति भिद्यन्ते । तद्भेदाच्च उपादेयानाम् ऋत्विजामपि तत्परिमाण एव भेदः । समाख्यानामपि च प्रागनुपलब्धेरुत्तरकालं न सिद्धवत् व्यवहारात् वरणनिमित्तत्वैव गम्यते । निमित्तभेदाच्च नैमित्तिकभेदसिद्धिः । दृष्टार्थत्वाच्च नैकस्यैव कर्तुः



पुनःपुनर्वरणं कर्तुं शक्यते । सकृदुपात्तस्य पुनरुपादानानुपपत्तेः । उत्पत्तिवाक्यशिष्टवरीतव्यबाधविकल्पासंभवाच्च न शक्यं तेनैव वरणेन व्रियमाणान्तरं संबन्धुम् । अतोऽपि वरणानि भिद्यन्ते । सर्वाणि च तानि ऐन्द्रवायवादिग्रहणवत् अपर्यायविधायिना प्रयोगवचनेन गृह्यन्ते । तद्ग्रहणवशेन च सर्वर्त्विजां ग्रहणम् । अतो यावद्वरणमृत्विजां भेदसिद्धिः । यत्तु **भाष्यकारेण** उक्तम्, **तस्मादेषां वरणे संकीर्तनं न विधिः** इत्यादि, तदविहितवरणनियमप्राप्त्यभावात् अयुक्तम् । न चैतावतो वाक्यराशेः कल्पितैकवाक्यत्वस्य सुग्रहतरोपायप्रचयलभ्यसंख्यामात्रप्रत्यायनं फलं भवितुमर्हति । तेन वरणविधिनैव अनुनिष्पादिनी प्रचयशिष्टैव संख्या सेत्स्यतीत्येतदेव समर्थयितव्यम् । न किञ्चित् तया विहितया ।

**सोम —सूत्रार्थस्तु**-- तत्र कर्त्रन्तरसद्भावे सति यावद्भिर्यत्र प्रयोगकार्ये निर्वर्त्यते, तत्र तावन्तः इति कार्यतः कर्तृणां परिमाणं स्यात्, न तु एतावन्तः इति नियमः, विशेषानवगमात् इति ।

**वि** — ' न क्रीतकर्तृसंख्याया नियमोऽस्त्यस्ति वा, नहि । अविशेषा, दस्ति यावत्कार्यं तावन्त एव हि ॥'

**भाट्ट**-- ते कियन्तः इत्यपेक्षायां तत्तत्कर्मणि अध्वर्य्वादिसंज्ञापुरस्कारेण तत्तत्कर्मविधानात् यावतां यत्र विधानं तावन्तः एव तत्र ज्ञेयाः । अतश्चाग्निहोत्रे एक एवाध्वर्युः, दर्शपूर्णमासयोः चत्वारः, चातुर्मास्येषु पञ्च, पशौ षट्, सोमे षड्विंशतिः । **न च** परिक्रयवशादेकोपादानावश्यम्भावे तस्यैव पाचकलावकादिवत् तत्तत्कर्मकरणनिमित्ताः तावत्यः संज्ञा भविष्यन्तीति **वाच्यम्** । संज्ञानां कर्मकरणात् पूर्वमेव ' अध्वर्युं वृणीते ' इत्यादिना प्रयुक्तत्वेन कर्मकरणनिमित्तत्वाभावात् । अपितु तत्तद्वरणनिमित्तकत्वं तत्तद्वरणजन्यतत्तदानतिनिमित्तकत्वं वा उक्तविधानतिजन्याध्यवसायविशेषनिमित्तकत्वं वा, कृतेऽपि वरणे ' अहमध्वर्युः स्याम् ' इत्यध्यवसायाभावे अध्वर्युशब्दाप्रयोगात् । वस्तुतस्तु अध्यवसायस्यापि निश्चयरूपस्य क्षणिकत्वात् तज्जन्याभिमानविशेषः एव निमित्तम्, तस्य च सत्रे स्वत एवानतत्वेन वरणाभावेऽपि इच्छातः एव सत्त्वादध्वर्युत्वाद्युपपत्तिः । प्रकृतावपि ' होता अवृतः सामिधेनीरन्वाह ' इति वरणात् पूर्वं होतृशब्दप्रयोगोपपत्तिः । अत एव ' वरणजन्यादृष्टवत्त्वमध्वर्युत्वादिकम् ' इति प्राभाकरमतमपास्तम् । सत्रेऽपि ऋतुयाज्यावरणवत् वरणापत्तेश्च । न च एवमपि एकस्यैव तत्तदभिमानोपपत्तेः कर्तृभेदे प्रमाणाभावः, ' अध्वर्युं वृणीते ' ' ब्रह्माणं वृणीते ' इति तत्तद्विधिविहितवरणानामभ्यासेन भिन्नानां संस्कार्यभेदं विना अनुपपत्तेः । अप्रवृत्तस्य पुरुषस्य प्रवर्तनफलकमभ्यर्थनं हि वरणम्, न च तदेकस्मिन् पुरुषे अनेकं संभवति । भिन्नानां च संस्कार्याणां तत्तत्क्रियासु भिन्नास्वेव विनियोगान्न विकल्पाशङ्का । ' दर्शपूर्णमासयोश्चत्वार ऋत्विजः ' इत्याद्यनुवादबलादप्येवम् । एवं च ' ऋत्विजो वृणीते ' इत्ययमपि न वरणविधिः । तथात्वे ' ऋत्विजः ' इति बहुत्वानुवादानुपपत्तेः, अपितु ऋत्विक्संस्कारकवरणमात्रानुवादः ऋत्विग्धर्माणां तदुत्तरत्वप्राप्त्यर्थः, तत्तद्धर्मविधानार्थश्च । अतो यावन्ति लौकिकानि मन्त्रवन्ति वा वरणानि, तावन्तः कर्तारः इति सिद्धम् ।

**मण्डन**-- ' प्रतिनामर्त्विजो भिन्नाः । '

**शंकर**-- ' भिन्नाः स्युस्ते च वरणैः । '

* **ऋत्विजः** चातुर्मास्येषु पञ्च अध्वर्यु–प्रतिप्रस्थातृ–होतृ–आग्नीध्र–ब्रह्माणः । ' चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः ' इति कर्तृणां नियमविधिः । **वि.** ४।२।९. * ऋत्विजः दर्शपूर्णमासयोः चत्वारः अध्वर्युः आग्नीध्रः ब्रह्मा होता चेति । **भा.** ४।२।९।२३, * ऋत्विजः । ' दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति ' । १०।२।८।२६, * ऋत्विजः परिक्रीयन्ते । ३।७।१८।३८, * ऋत्विजः पशुबन्धे षट् ब्रह्मा, अध्वर्युः, होता, मैत्रावरुणः, आग्नीध्रः, प्रतिप्रस्थाता चेति । ४।२।९।२३. * ऋत्विजः प्रयोगमध्यपतितं यजमानं प्रक्रान्तकर्मावश्यसमापनीयत्वनिबद्धं समाप्त्युत्तरकालभाविस्वाच्छन्द्यं च विदित्वा कार्यवत्तावेलायामेव खलगतधान्यविभागग्याप्तभृतकवत् स्वयम् उत्पाद्योत्पाद्य तानितान्यादेयकानि श्रद्धाजनकार्थवादपुरःसरं याचन्ते । प्रत्यक्षश्रुतिविहितदेयान्तरनिदर्शन-

न्यामोहितश्च यजमानः श्रद्धानतया तथैव प्रतिपद्य तेभ्यः प्रयच्छति। वा. १।३।२।४ पृ. १८७. * ऋत्विजः भृतिनिर्देशविशिष्टेन वरणेनैव उपादेयाः इति नियमः। सु.३।७ पृ. ३५, * ऋत्विजः मध्यतःकारिणः ब्रह्मयजमानहोत्रुद्गातारः। पृ. १२४३. * ऋत्विजः यजमानादन्ये ज्योतिष्टोमे। वि. १०।६।१५. * ऋत्विजः 'यजमानपञ्चमा इडां भक्षयन्ति' दर्शपूर्णमासयोः। भा. १२।१।१५। ३२. * ऋत्विजः ये ऋतौ यजन्ति, ये चाध्वर्यवादिकं कुर्वन्ति। के च ते ? ये तत्समर्थाः, सामर्थ्यरहितानामनधिकारात्। के च समर्थाः ? ये विद्वांसः। तत्रापि स्मृतिप्रामाण्यात् ये ब्राह्मणाः। वरणोपात्ता ये इति पुनर्विशेषः। वा. ३।७।१६।३३ पृ. १०९७. * 'ऋत्विजो वृणीते' इति उत्पत्तिवाक्यम्। टुप्. ११।३।९।२०. * ऋत्विजः श्येने सर्वे एव लोहितोष्णीषा लोहितवसनाः प्रचरन्ति, न केवलम् उद्गातारः एव। वाजपेये च हिरण्यमालिनः, न केवलमध्वर्यवः एव। भा. ३।८।४।१२. * ऋत्विजः सौम्येऽध्वरे सप्तदश। अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता च। ब्रह्मा ब्राह्मणाच्छंसी अग्नीत् पोता च। होता मैत्रावरुणः अच्छावाकः ग्रावस्तुत् च। उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्या चेति। सदस्यश्च चमसाध्वर्यवो दश च, न ते ऋत्विजः। साप्तदश्यं च यजमानेन। वि. ३।७।१७, ४।२।९.

**ऋत्विजः स्वामिसप्तदशाः ज्योतिष्टोमे ॥**

**स्वामिसप्तदशाः, कर्मसामान्यात्। ३।७।१८।३८॥**

**भाष्यम्**— एतदुक्तम् 'सप्तदश ऋत्विजः' इति, ते च ब्रह्मादयः। तत्र संदेहः किमेषां सदस्यः सप्तदशः, उत गृहपतिः। किं तावत् प्राप्तम् ? सदस्यः इति। स हि कर्मकरः। इतरः स्वामी। यश्च कर्मकरः स परिक्रेतव्यः। ऋत्विजश्च परिक्रीयन्ते। तस्मात् सदस्यः सप्तदशः ऋत्विगिति। अपिच तस्य चमसमामनन्ति वरणं च। ऋत्विक् वरीतव्यो न स्वामी। तस्मात् सदस्यः सप्तदशः। इति प्राप्ते, उच्यते। स्वामिसप्तदशाः कर्मसामान्यात्। स्वाम्येषां सप्तदशः स्यात्। कुतः ? कर्मसामान्यात्, यज्ञे कर्तारः ऋत्विजो भवन्ति। यज्ञे च कर्ता गृहपतिः, तस्मादृत्विक्। यज्ञकर्मसामान्यात्। यदुक्तम् 'तं समामनन्ति तस्य चमसमामनन्ति वरणं च तस्मात् सदस्यः सप्तदशः' इति। उच्यते। ब्रह्माणमेव ते समामनन्ति, वरणमपि चमसश्च ब्रह्मण एव। स हि सदसि भवः। तस्मात् स्वामिसप्तदशाः।

**वा** — दीक्षादक्षिणवाक्ययोः षोडशानां संकीर्तनात् तावन्तः अवधारिताः। सप्तदशः कस्तेषामिति न ज्ञायते। सदस्ययजमानचमसाध्वर्यवश्च अवशिष्यन्ते। तत्र चमसाध्वर्यूणां तुल्यकल्पत्वात् अन्यतरावधारणप्रमाणं नास्ति, इति सदस्ययजमानयोरन्यतरः संदिह्यते। तत्र कर्मकरत्वसामान्यात् सदस्यग्रहणप्रसक्तौ अभिधीयते 'स्वामिसप्तदशाः स्युः' इति। कथं पुनः पूर्वत्र ऋतुयजनकर्मनिमित्तत्वम् अनभ्युपगम्य अधुना तत्सामान्यात् स्वामिनः ऋत्विक्कर्म अभिधीयते ? 'सदस्यं वृणीते' इति च उत्पत्तिसंयोगात् अध्वर्य्वादिवत् भेदः। न च ब्रह्मणि अवयवप्रसिद्धिः संभवति, समुदायप्रसिद्ध्या बाधितत्वात्। न च ब्रह्मणः पुनर्वरणं विधातुमनुवदितुं वा शक्यम्, अध्वर्य्वादिष्वपि एवमेव प्रसङ्गात्। सर्वेषु च उपहवादिषु ब्रह्ममन्त्रव्यतिरेकेण अस्य मन्त्रः पठ्यते। तत्र च अन्याय्यो विकल्प आश्रीयते। न च चमससंबन्धेऽपि ब्रह्मणः संकीर्तनं सदस्यशब्देन उपयुज्यते। सामर्थ्याक्षितेन च उपद्रष्ट्रा सदस्येन अवश्यं भवितव्यम्। सोऽपि च प्रत्यवेक्षणात् ऋतौ यजति इति शक्यते वक्तुम्। सर्वे याज्ञिकाश्च भेदेन तं वृण्वते। तस्मात् अयुक्ता सदस्यनिराक्रियेति। उच्यते। '**क्रत्वङ्गत्वेन नैवेह सदस्यस्य निराक्रिया। चमसाध्वर्युवत् त्वेष नार्त्विगित्यभिधीयते ॥**' सदस्यो हि भेदेन वरीतव्य एव। न च ब्रह्मा सदस्यशब्देनोच्यते, ऋतुयजने सति वरणेन ऋत्विक्त्वनियमात्। दक्षिणाभागसंबन्धद्वादशाहदीक्षावाक्ययोश्च असंकीर्तनात् 'ऋत्विक्' इति नोच्यते (सदस्यः) यथा सत्यपि वरणे ऋतुयजनसंबन्धे च कारणद्वयासंभवात् चमसाध्वर्यवः ऋत्विजो नोक्ताः। स्वामिनस्तु यद्यपि च वरणं नास्ति, तथापि अन्यत् सर्वमस्ति इति युक्तम् ऋत्विक्त्वम्। यत्तु सदस्योऽपि प्रत्यवेक्षणात् यजतीति, वचनसामर्थ्यादेव असौ व्रियते, न तु कश्चित् पदार्थः तदधीनः, येनास्य व्यपदेशः स्यात्। न च प्रत्यवेक्षणं



नाम कश्चित् पदार्थः, येन अस्य कर्तृविशेषः केन चित् प्रमाणेन नियम्येत। तस्मात् सत्येव सदस्ये सूक्तम् 'स्वामिसप्तदशाः' इति। यत्त भाष्यकारेण किञ्चित् सदस्यनिराकरणपरम् उक्तम्, तत् ऋत्विक्त्वनिराकरणपरस्य अतिरभसवचनम् इत्युपेक्षणीयम्।

**सोम**— सप्तदशस्यानिर्धारणे केचिदेव ऋत्विजो न सर्वे इत्यस्यार्थस्यास्थिरत्वात् तत्स्थिरीकरणार्थं सप्तदशस्य निर्धारणात् हेतुहेतुमद्भावः **संगतिः**। नहि यागोपयुक्तपदार्थकरणमात्रम् ऋतुयजनं सोमविक्रयिप्रभृतिषु अतिप्रसङ्गात्, किन्तु क्रत्वङ्गकरणं कृताकृतप्रत्यवेक्षणं च क्रत्वङ्गत्वेऽपि क्रत्वनुपयुक्तत्वात् न यजनम्।

**वि**— 'सदस्ये यजमाने वा साप्तदश्यम्, वृतत्वतः। सदस्ये, कुरुते किञ्चिन्नासौ स्वामिनि तत् त्वतः ॥' (तु अतः)।

**भाट्ट**— सप्तदशस्तु सदस्यः। तस्यापि पृथग्वरणाम्नानात् चमसविधानाच्च। इति प्राप्ते, सदस्यकर्तव्यपदार्थाश्रवणात्, वरणस्य सक्तुन्यायेन विनियोगभङ्गं कल्पयित्वा अदृष्टार्थत्वावगतेः, सदस्यस्य पाक्षिकत्वेन सप्तदशश्रुतेः पाक्षिकानुवादत्वापत्तेः, सत्रे तस्य दीक्षाऽऽम्नानाच्च स्वाम्येव सप्तदशः। कर्मकरत्वेऽपि वा न पत्नी सप्तदशत्वजनकीभूता, अपेक्षाबुद्धौ लिङ्गवैरूप्याङ्गीकारे प्रमाणाभावात्।

**मण्डन**— 'स्वामिसप्तदशाश्च ते।'

**शंकर**— 'स्वामी सप्तदशो मतः।'

* ऋत्विग्भिः उपदेश–समाख्यालिङ्गानुसारेण स्वंस्वं कर्म कर्तव्यम्। भा. ३।७।२०।४१–४२, * ऋत्विग्भिरेव प्राशित्रादिशेषभक्षणं कार्यम्। ६।४।३।४–९, * ऋत्विग्भिः चमसाध्वर्यवः वरीतव्याः, न यजमानेन। (लोके तु महावरणकाले यजमान एव तान् वृणोति।) ३।७।१०।२५. * 'ऋत्विग्भ्यो दक्षिणां ददाति' अत्र उद्देश्यगतं बहुत्वमविवक्षितम् इत्येकैकः प्रतिग्रहीता। वि. १०।३।१२. * ऋत्विग्भ्यो यज्ञे दक्षिणा। यस्य यावान् भागः आभजति स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः न तु परिषदा। भा. १०।३।१२। ५०–५२, * **ऋत्विग्भ्यः** अन्यः एव सोमविक्रयी। ३।७।१५।३१, * ऋत्विग्भ्यः अन्ये चमसाध्वर्यवः। ३।७।१०।२५, * ऋत्विग्भ्यः न भिन्ना उपगातारः। ३।७।१४।३०.

**ऋत्विजाम् अनियतपदार्थकर्तृत्वमपि विशेषसमाख्यया।** सामान्यसमाख्यायाः विशेषसमाख्यया बाधः ॥

**तस्योपदेशसमाख्यानेन निर्देशः। ३।७।२०।४१॥**

**भाष्यम्**— किमेष एवोत्सर्गः, सर्वं समाख्यातं समाख्यातपुरुषैः कर्तव्यमिति। नेति ब्रूमः। तस्योपदेशात् विशेषसमाख्यानाच्च निर्देशः। यथोपदेशः, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाऽऽह' इति। समाख्या पोत्रीया, नेष्ट्रीयेति। एष समाख्यायाश्चापवाद इति।

**वा**— विशेषसमाख्याऽपि विशेषश्रुतिवदेव शीघ्रतरप्रवृत्तेर्बाधिका भवति।

**तद्वच्च लिङ्गदर्शनम्। ४२॥**

**भाष्यम्**— 'यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्' इति हौत्रे प्रातरनुवाके समाख्यया प्राप्तं होतारं दर्शयति। तथेदमपरं लिङ्गं भवति, 'उद्गीथ उद्गातॄणाम्, ऋचः प्रणव उक्थशंसिनाम्, प्रतिगरोऽध्वर्यूणाम्' इति समाख्याकृतं भेदं दर्शयति। तथेदमपि लिङ्गं भवति। 'यो वाऽध्वर्योः स्वं वेद, स्ववानेव भवति। एतद्वा अध्वर्योः स्वम्, यदाश्रावयति' इति समाख्याकृतं नियमं दर्शयति।

**वा**— सामान्यसमाख्याविनियोगस्यैव एतल्लिङ्गम्। विशेषसमाख्यायां तु किञ्चिदन्यत् द्रष्टव्यम्।

**सोम**— प्राभाकरैरिदं सूत्रं सामान्यसमाख्यायाः वचनविशेषसमाख्याभ्यां बाधस्य व्युत्पादनार्थमधिकरणान्तरत्वेन व्याख्यातम्। तदनुपपन्नम्। समाख्याया वचनापेक्षया, सामान्यस्य विशेषापेक्षया च दुर्बलत्वस्य अन्यत्र सिद्धत्वेन पूर्वपक्षानुन्मेषात्। तस्मात् प्रकृताधिकरण(१९) शेषभूतमेवेदम्। **सूत्रार्थस्तु**– तस्य 'तत्संयोगात् कर्मणां व्यवस्था स्यात् संयोगस्यार्थवत्त्वात्' इति पूर्वसूत्रे प्रस्तुतस्य अध्वर्य्वादिपुरुषसंयोगस्य आध्वर्यवादिसमाख्यानस्य इति यावत्। तस्य उपदेशेन वचनेन विशेषसमाख्यानेन (च) निर्देशः निष्कर्षः अपवादः इति यावत्।

**वा** — पूर्वाधिकरणे अन्तर्भावितमिदम् ।

**भाट्ट** — अयं च उत्सर्गः वचनात् ' यजमानस्य याज्या ' इत्यादिकात्, विशेषसमाख्यया च पोत्रीयं नेष्ट्रीयं याजमानम् इत्यादिकया अपोद्यते । न चैवं तादृशविषये सामान्यसमाख्यायाः निर्विषयत्वापत्त्या आनर्थक्यप्रतिहत-न्यायेन विकल्पापत्तिः, यथाशक्तिप्रयोगे पोत्रादीनामशक्तौ सविषयत्वोपपत्तेः । वस्तुतस्तु हौत्रादिसमाख्यायाः सामानाधिकरण्यसंबन्धेन ऋग्वेदविहितकर्मत्वमुप-लक्षणीकृत्यैव तत्तत्पदार्थेषु हौत्रादिविधायकत्वम्, निरुक्तसंबन्धेन अग्नीषोमीयप्राक्कालवृत्तित्वमुपलक्षणीकृत्य उपांशुत्वविधायकत्वमिव ' यत्किञ्चित् प्राचीनम् ' इत्यस्य । अतश्च तद्वदेव केषु चित् पदार्थेषु तदभावेऽपि न क्षतिः । अत एव दक्षिणारहितकाम्यादौ यजमानस्यैव कर्तृत्वेऽपि समाख्यायाः न का चिदनुपपत्तिः । २१.

**मण्डन**-- ' वचनाच्च क चिद्भवेत् । '

**शंकर**-- ' तद्बाधश्च विशेषेण । '

* ऋत्विजाम् **आनमनं** दक्षिणानां प्रयोजनम् । **भा.** १०।३।१९।७१, * ऋत्विजाम् **उपकारः** कर्तव्यः । महत्तमे हि ते उपकारे वर्तन्ते । उपकुर्वतां च उपकर्तव्यम् इति सदाचारः । १०।३।११।४७, * ऋत्विजाम**उपगातॄणां** पत्नीभिः पिच्छोलादिभिः उपगायन्तीभिः समुच्चयः महाव्रते । १०।४।५।८-९, * ऋत्विजाम**उपवासो** विधीयते ज्योतिष्टोमे ' सर्वर्त्विजः उपवसन्ति ' इति । १०।६।१५।५३, * ऋत्विजाम् **उपादानं** राजसूयोपक्रमे वृतानामेव यावदन्तम् । ११।४।२।४-८, * ऋत्विजामपि **करणमन्त्रफलं** क चित्, यत्र फलं कर्मार्थमेव । यत्र वा ' तन्नौ सह ' इति व्यपदेशो भवति । ३।८।१३।२६-२८. * ऋत्विजां **कर्माणि** हौत्रम् आध्वर्यवम् औद्गात्रमिति समाख्यया, क चित् विशेषवचनेन च नियतानि, न तु अनियतानि । **वि.** ३।७।१९. * ऋत्विजां **कर्मार्थमेव** क्रीतत्वात् तैरेव सर्वं साङ्गं कार्यम्, त्यागमात्रं तु यजमानेन । यजमानस्यैव प्रयोजकत्वात् फलभोक्तृत्वं युक्तमेव तस्य । **भा.** ३।७।८।१८-२०, * ऋत्विजामपि **कामः** ' उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते तमागायति ' इत्यादेः व्यपदेशात् । ३।८।५।१४, * ऋत्विजां **केशश्मश्रुवपन-पयोव्रतादिसंस्काराः** न सन्ति ज्योतिष्टोमादौ । किन्तु ते यजमानस्यैव । ३।७।२।६, * ऋत्विजामपि **तपः** वचनात् भवति ' सर्वे ऋत्विजः उपवसन्ति ' इति ज्योतिष्टोमे । वरदानवत् एतत् द्रष्टव्यम् । ३।८।३।९-११, * ऋत्विजां **दक्षिणा** उत्साहकारिणी । परिक्रयस्य च एतद्रूपम् । **वा.** ३।४।१७।४९. * ऋत्विजां **परिक्रयः** दक्षिणया कर्तव्यः । **वि.** १।३।३, * ऋत्विजां परिक्रयः सत्रे नास्ति यजमानानामेव ऋत्विक्त्वात् । १०।२।११.

**ऋत्विजां परिक्रयः स्वामिकर्म, न ऋत्विक्-कर्म ॥**

**स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् । ३।८।१।१॥**

**भाष्यम्**--- अस्ति परिक्रयो ज्योतिष्टोमे द्वादशशतम्, दर्शपूर्णमासयोरन्वाहार्यम् । तत्र संदेहः किमध्वर्युणा परि-क्रेतव्या ऋत्विजः, उत स्वामिनेति । किं प्राप्तम् ? समा-ख्यानादध्वर्युणा । **इति प्राप्ते, ब्रूमः** । स्वामिकर्म परिक्रयः । स्वयं करोतीति गम्यते । कस्मात् ? कर्मणस्तदर्थत्वात् । फलकामो हि यजमानः । यश्च फलकामस्तेन स्वयं कर्तव्यम् । स यदि परिक्रीणीते, ततः स्वयं सर्वं करोतीति गम्यते । अथ न परिक्रीणीते, न सर्वं कुर्यात् । तस्मात् स्वामी परिक्रीणीते इति ।

**वा**---समाख्याऽपवादत्वेन एतदपि विचार्यते किं परिक्रयः आध्वर्यवादिषु आम्नानात् तत्समाख्यातैः पुरुषैः कर्तव्यः, उत स्वामिनेति । सिद्धे तु एतस्मिन् ' अन्यो वा स्यात् परिक्रयाम्नानात् ' ( ३।७।८।२० ) इत्येतत् द्रष्टव्यम् । तथा स्वामिना लौकिक उपाय आस्थेयो यथा अध्वर्य्वादयः स्वद्रव्येण इतरान् परिक्रीणते समाख्याऽनु-ग्रहार्थम् । **इति प्राप्ते, अभिधीयते** । **' लौकिका-श्रयणं तत्र, यत्र नान्योऽस्ति वैदिकः । वैदिके दक्षिणादाने सति किं लौकिकाश्रयः ॥'** परिक्रयेण हि सर्वत्र स्वयङ्कर्तृत्वं यजमानस्योपपादितम् । यदि परिक्रयमपि न कुर्यात्, न क चित् कर्तृत्वं प्रतिपद्यते । लौकिकेनोपायेन प्रतिपत्स्यते इति चेत् न, वचनादृते स्वयङ्कर्तृत्वबाधासंभवात् । तस्मात् स्वामिकर्म ।



**वचनादितरेषां स्यात् । २ ॥**

**भाष्यम्**— किमेष एवोत्सर्गः ? नेत्युच्यते । वचना-दितरेषां स्यात् । यत्र वचनं भवति, तत्र वचन-प्रामाण्याद्भवति परिक्रयः । ' य एतामिष्टकामुपदध्यात्, स त्रीन् वरान् दद्यात् ' इति ।

**वा**— उपदध्यादिति परस्मैपदात् अयाजमानत्वे अवधारिते वरदानमृत्विक्कर्म । तत्सिद्धिश्च यदि तावत् शास्त्रीयेण परिक्रयेण लभ्यते, ततोऽस्त्येव यजमानस्य कर्तृत्वम् । अथ न लभ्यते, ततो लौकिक उपायः इति ।

**सोम**— अस्मिन् पादे पूर्वोक्तसमाख्यानिबन्धना-ध्वर्य्वादिकर्तृकत्वापवादेन स्वामिकर्तृकत्वं प्राधान्येन प्रतिपाद्यते इति पादान्तरत्वमानन्तर्यं चेत्याहुः । ' गौर्वै वरः, अतिवरोऽन्यः । धेनुर्वरः, अतिवरोऽन्यः । अनड्वान् वरोऽतिवरोऽन्यः ' इत्यापस्तम्बाचार्योक्तो वरशब्दार्थो द्रष्टव्यः । स्वयमातृण्णोपधातुः अविद्वद्-ब्राह्मणस्य ऋत्विक्त्वाभावात् ' अनड्वान् होत्रा देयः ' इत्यादिकमुदाहरणं बोध्यम् । **सूत्रार्थस्तु**—परिक्रयः स्वामिकर्म, साङ्गस्य कर्मणः स्वाम्यर्थत्वात्, स्वामिकर्तृ-कत्वाभावे अङ्गानां तत्कर्तृकत्वानुपपत्तेः इति ।

**वि**--'दक्षिणादिपरिक्रीतिर्ऋत्विजः स्वामिनोऽथवा ।, परिक्रयः समाख्यानादृत्विजः स्याद् यथेतरत् ॥, परि-क्रयात् पुराऽध्वर्युहोत्रादीनामभावतः । परिक्रयणकर्तृत्वं यजमानस्य नर्त्विजः ॥ ' ( विस्तरे ' वचनादितरेषां स्यात् ' इति सूत्रेण पृथक् द्वितीयमधिकरणमारचितम् । तच्च ' अग्निचयने स्वयमातृण्णोपधानोत्तरं० ' इति विन्दौ द्रष्टव्यम् ।

**भाट्ट**— वरणं दक्षिणादानं च समाख्यया अध्वर्य्वा-दिभिरेव कार्यम् । अध्वर्युश्च यथा तान् स्वद्रव्येण परिक्रीणीते, तदुपायं यजमानः कुर्यात् । अध्वर्योश्च ' इतरमन्यः ' इति न्यायेन वरणादिकं प्रतिप्रस्थाता कुर्यात् । स च अध्वर्युः दक्षिणाऽऽम्नानात् तेनानतः स्वकृत्यं कुर्यात् । ऋत्विगन्तरार्थं स्वद्रव्यं दातुं यजमान उपायान्तरं कुर्यात् । **इति प्राप्ते**, अवश्यं वृतः अध्वर्युः अन्यान् वृणीते, अन्यथा अध्वर्युत्वासंभवात्, वरणस्य अदृष्टार्थत्वाद्यापत्तेश्च । तद्वरणं च येन आदौ कर्तव्यम्, तस्य अध्वर्युगणत्वसंपत्तये वरणस्यावश्यकत्वात् । तस्य च असमाख्यातकर्तृकत्वावश्यम्भावात् वरणे तावत् समाख्या-बाध आवश्यकः एव । एवं दक्षिणादानेऽपि उपायान्तर-कल्पने गौरवापत्तेः प्रयोगवाक्यावगतस्वामिकर्तृकत्वबाधा-पत्तेश्च समाख्याया एव केवलायाः बाधः । वस्तुतस्तु सर्वत्र स्वामिकर्तृकत्वप्राप्तौ वरणेनेव दक्षिणादानेनापि अन्यत्र अन्यकर्तृकत्वे सिद्धे समाख्यया नियममात्रं क्रियते, इति स्वलाघवानुरोधेनापि समाख्या वरणभरणविषयिणी । सत्यपि वा तस्मिन् उपायान्तरकल्पनाऽऽद्यनुरोधेनैव दान-मात्रे स्वामिकर्तृकत्वम् । यत्र तु वचनं यथा ' य एता-मिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात् ' इत्यादौ, तत्राध्वर्य्वादीनामपि दानकर्तृत्वम् । तत्र हि स्वामिकर्तृ-कत्वे उपधानस्य सामानाधिकरण्येन तत्समानकर्तृकत्वाव-गतेः, तस्यापि तत्कर्तृकत्वे ' उपदध्यात् ' इति परस्मै-पदानुपपत्तिः, तस्य ऋत्विक्परत्वेन उपधातृभिन्नगामि-क्रियाफलकत्वावगतेः । यदि तु क्रियाफलस्य अग्न्यादि-गतत्वात् परस्मैपदोपपत्तिरित्याशङ्क्येत, ततः प्राप्तोप-धानानुवादेन दानस्य तत्कर्तृकत्वस्य च विधौ वाक्यभेदा-पत्तेः, य इत्यनेन कर्तृप्राप्तिप्रतीतेश्च उपधानस्य अध्वर्यु-कर्तृकत्वावसायात् तत्समानकर्तृकस्य दानस्यापि तत्कर्तृ-कत्वसिद्धिः ।

**मण्डन**— ' परिक्रयः स्याद् यजमानकर्म । '

**शंकर**— ' परिक्रयः स्वामिकर्म । '

* **ऋत्विजां परिक्रयार्थम्** उदवसानीये दक्षिणा-दानम्, तस्य सत्रानङ्गत्वात् । **भा.** १०।२।१२।४०-४१. * ऋत्विजां **प्रक्लृप्तिः** लोकतः । **संकर्ष.** ३।२।३. * ऋत्विजां **प्रतिनिधिरस्ति** । **वि.** ६।३।८, * ऋत्विजां **प्रथमाः**, अर्धिनः, तृतीयिनः इति चत्वारो वर्गाः । तत्र प्रथमाः अध्वर्युः ब्रह्मा उद्गाता होता चेति । तेषां पूर्णा द्वादशगोरूपा दक्षिणा । अर्धिनः प्रतिप्रस्थाता ब्राह्मणाच्छंसी प्रस्तोता मैत्रावरुणश्चेति । ते दक्षिणार्धं षड् गाः लभन्ते । तृतीयिनः नेष्टा अग्नीत् प्रतिहर्ता अच्छा-वाकश्चेति । ते तृतीयांशं गोचतुष्टयरूपां दक्षिणां लभन्ते । पादिनः उन्नेता पोता सुब्रह्मण्यः ग्रावस्तुत् च । ते चतुर्थांशं गोत्रयरूपां दक्षिणां लभन्ते । ३।७।१७,

* ऋत्विजां **लोहितोष्णीषत्वादिकं** श्येनयागे । न तु उद्गातॄणामेव । ३।८।५. * ऋत्विजां **वरणम्** ऋतुप्रैषेषु ऋतुप्रैषैरेव, येषां शाखायां तथा आम्नातम् । **संकर्ष.** ३।४।११. * ऋत्विजां वरणं क्रयार्थम् । सत्रे तु सर्वेषां यजमानत्वात् क्रयासंभवान्न वरणम् । **वि.** १०।२।१०. * ऋत्विजां वरणं ज्योतिष्टोमे आनमनार्थं दृष्टप्रयोजनम् । **भा.** १०।२।१०।३९. * ऋत्विजां वरणं दैक्षे पशौ वषट्कर्तॄणामेव ऋत्विजाम्, न सर्वेषाम् । **संकर्ष.** ३।४।९, * ऋत्विजां वरणं सर्वेषां लौकिक्या एव वाचा, न तु होतृमैत्रावरुणयोर्वैदिक्या । ३।४।१०. * ऋत्विजां वरणं सोमे 'अग्निर्होता' इत्यादिमन्त्रैः क्रियते । तच्च क्रयार्थम् । **वि.** १०।२।१०, * ऋत्विजां **संख्याविशेषनियमः** ऋतुषु कर्मानुसारेण । कार्याणि च कानि चिदेवम्, 'पुरोध्वर्युर्विभजति' 'प्रतिप्रस्थाता मन्थिनं जुहोति' 'नेष्टा पत्नीमुदानयति' 'उन्नेता चमसानुन्नयति' 'प्रस्तोता प्रस्तौति' 'उद्गातोद्गायति' 'प्रतिहर्ता प्रतिहरति' 'सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति' 'होता प्रातरनुवाकमनुब्रूते' 'मैत्रावरुणः प्रेष्यति' 'अच्छावाको यजति' 'ग्रावस्तुत् ग्रावस्तोत्रीयामन्वाह' इत्यादि । ३।७।९. * ऋत्विजां **समास** आम्नातः कुण्डपायिनामयने 'यो होता सोऽध्वर्युः' इत्यादिः । (स पोता । य उद्गाता स नेष्टा सोऽच्छावाकः । यो मैत्रावरुणः स ब्रह्मा, स प्रतिहर्ता । यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् । यः प्रतिप्रस्थाता सोऽग्नीत् स उन्नेता । गृहपतिर्गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्यः । सत्याश्रौ. १८।४।१०) । **भा.** ३।८।१०।२१. * ऋत्विजां **साप्तदश्यं** यजमानेन, न तु सदस्येन । यजमानो हि त्यागरूपां क्रियां करोति इति ऋत्विक्त्वं तस्योपपद्यते । **वि.** ३।७।१८, * ऋत्विजां **सोमवमने** सौमेन्द्रचरुर्नास्ति । यजमानस्यैव सः । ३।४।१७, * ऋत्विजां **हिरण्यमालित्वं** वाजपेये यजुर्वेदोक्तम् । न तु अध्वर्यूणामेव । ३।८।५.

* **ऋत्विगन्तरसंपादनेन** प्रत्येककर्तृकत्वं पृष्ठशमनीयस्य । **भा.** १०।२।१३।४२–४४.

* **ऋत्विगाचार्यौ** नातिचरितव्यौ इति तु पुरुषधर्मः, न कर्मधर्मः । कर्मसंयोगाभावात् प्रकरणाभावाच्च । **भा.** ११।३।१२।३५.

* **ऋत्विक्कर्म** स्वयमातृण्णोपधाने वरदानम् । यदि तावत् शास्त्रीयेण परिक्रयेण लभ्यते, ततोऽस्त्येव यजमानस्य कर्तृत्वम् । अथ न लभ्यते, ततो लौकिकः उपायः इति । **वा.** ३।८।१।२.

* **ऋत्विग्गामि** कर्मोपयोगि करणमन्त्रप्रकाश्यं फलं संतापाभावादि । **भा.** ३।८।१४।२९–३०.

* **ऋत्विक्त्वं** ब्राह्मणानामेव, न राजन्यवैश्ययोः । **भा.** १२।४।१५।४२–४७, * ऋत्विक्त्वं योग्यतालक्षणम् अध्ययनश्रवणाभ्यां सिद्धमिति । **वा.** ३।७।१६।३३ पृ. १०९८. * ऋत्विक्त्वं सत्रे यजमानानामेव । **वि.** १०।६।१५. * ब्रह्मत्वादिकरणयोग्येषु एव ऋतौ यजत्सु **ऋत्विक्त्वं** न सर्वेषु ऋतौ एव यजत्सु भवति न तु भवत्येव । **वा.** ३।७।१७।३७.

**ऋत्विक्त्वनियामकन्यायः** । 'आग्नेय्या आग्नीध्रमुपतिष्ठते' । संभवति च प्रकृतानामपि आग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसंबन्धासंभवेऽपि कार्यान्तरद्वारा सः । आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावत् अपूर्वसंबन्धावगमः । अयमेव च ब्रह्मौदनप्राशने (चतुरो ब्राह्मणान् भोजयेत् इत्यादौ) ऋत्विक्त्वनियामकन्यायः । **भाट्ट.** ३।२।८.

**ऋत्विग्दानं धर्ममात्रं स्याद् ददातिसामर्थ्यात्** । १०।२।८।२३॥

'ऋत्विग्भ्यो दक्षिणां ददाति' इति श्रूयते । तद्दानं किं धर्ममात्रं परिक्रयार्थं वेति विचारे पूर्वपक्षमाह । ऋत्विग्दानम् ऋत्विग्भ्यो दक्षिणायाः दानं धर्ममात्रं केवलं धर्मार्थम् अदृष्टार्थम् स्यात् । ददातिसामर्थ्यात् ददाति इति श्रुतिबलात् । त्रैधातवीयायां सहस्रं दक्षिणा श्रुता अल्पे कर्मणि महती । ऋतपेये च केवलं सोमचमसः श्रुतः महति कर्मणि अल्पा । क्व चिच्च दण्डः, उपानहौ, शुष्का दृतिः (चर्मपात्रम्) इति दक्षिणा



श्रुता । नहि दण्डादिना परिक्रयः संभवति । तस्मात् धर्ममात्रं दानम् इति पूर्वः पक्षः ।

**परिक्रयार्थं वा, कर्मसंयोगाल्लोकवत्** । २४ ॥

वाशब्दः उक्तपूर्वपक्षनिरासार्थः । 'ऋत्विग्भ्यो दक्षिणां ददाति' इति श्रूयते । सा दक्षिणा न धर्ममात्रं किन्तु परिक्रयार्थं स्यात् । कर्मसंयोगात् कर्मणा सह कर्तृत्वेन संयोगमभिप्रेत्य दक्षिणा श्रुता । ऋतौ यजन्ति इति यागकर्तृत्वेन ऋत्विक्शब्दस्य प्रवृत्तिः । 'ऋत्विग्भ्यो दक्षिणां ददाति' इति च श्रूयते । एवं च कर्मसंयोगेन दक्षिणाश्रवणात् परिक्रयार्थत्वमवगम्यते । लोकवत् यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते तत् असंकीर्तितेऽपि परिक्रये आनमनार्थमेव भवति । तस्मात् यज्ञेऽपि परिक्रयार्थं दक्षिणादानम् इति सिद्धान्तः । क्व चित् कर्मन्यूनाधिक्यविचारमकृत्वापि अधिकन्यूनदक्षिणादानं दण्डः, शुष्का दृतिः, इत्यादिर्दक्षिणा च वचनबलात् भविष्यति ।

**दक्षिणायुक्तवचनाच्च** । २५ ।

सिद्धान्ती हेत्वन्तरमाह । 'दक्षिणायुक्ता वहन्ति ऋत्विजः' इति दक्षिणायुक्तात् वचनात् लिङ्गाच्च यज्ञे ऋत्विक्परिक्रयार्थं दक्षिणादानं न धर्मार्थम् इति ।

**न चान्येनानम्येत परिक्रयात्, कर्मणः परार्थत्वात्** । २६ ॥

ऋत्विक् दर्शादौ कर्मणि परिक्रयात् अन्येन सामादिना उपायेन नानम्येत इति उत्सर्गः । कर्मणः परार्थत्वात्, परार्थं हि कर्म कर्तव्यम्, तच्च नान्तरेण परिक्रयं परः परार्थं करोति । तस्मात् यज्ञे दक्षिणादानम् ऋत्विक्परिक्रयार्थम् ।

**परिक्रीतवचनाच्च** । २७ ॥

हेत्वन्तरमाह 'दीक्षितमदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति' इति परिक्रीतवचनात् ऋत्विजां परिक्रीतवचनात् लिङ्गात् यज्ञे दक्षिणादानं परिक्रयार्थमिति गम्यते ।

**सनिवन्ये च भतिवचनात्** । २८ ॥

षणु दाने, वनु याचने । अत्र सनिः द्रव्यम् । सनेः वन्यं द्रव्यस्य याचनम् । याचनाप्राप्तं द्रव्यं सनिवन्यम् । तस्मिन् सनिवन्ये भृतिवचनं भवति । 'यज्ञो वै देवतानां न समभवत्, तं भृत्या समभावयन्, यद् भृतिं वनुते, यज्ञस्य भृत्यै, द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत' इति । यज्ञार्थं यत् भिक्षितम् ऋत्विजः परिक्रेतुम् अन्यं च यज्ञार्थं साधयितुम्, तस्मिन्नेतत् भृतिवचनं भवति । भृतिश्च कर्मकरेभ्य आनत्यर्थं यद्दीयते, तदुच्यते । तस्मात् परिक्रयार्थम् ऋत्विग्भ्यो दानम् ।

**नैष्कर्तृकेण संस्तवाच्च** । २९ ॥

'यथा वै दारुहारो नैष्कर्तृको निष्कर्तनभृतः कर्मयोगे वर्तते, एवं वा एते यज्ञस्य ऋत्विजः' इति नैष्कर्तृकेण ऋत्विजां संस्तवः श्रुतः । यथा दारुहारः काष्ठहारकः निष्कर्तनेन वृक्षच्छेदनार्थेन द्रव्येण भृतः सन् कर्मयोगे वृक्षच्छेदादौ वर्तते, तथा ऋत्विजः इति परिक्रयार्थं दानं दर्शयति । इति यज्ञे ऋत्विग्भ्यो दक्षिणादानं परिक्रयार्थम् इति सिद्धान्तः । **के.**

**ऋत्विङ्नियमो दक्षिणाभिः** ॥

**नियमस्तु दक्षिणाभिः, श्रुतिसंयोगात्** । ३।७।१७।३६ ॥

**भाष्यम्**— सप्तदश ऋत्विजः इति समधिगतम् । कतमे ते सप्तदश इतीदं चिन्त्यते । किं प्राप्तम् ? अज्ञानम् । एवं प्राप्ते, ब्रूमः । नियमस्तु दक्षिणाभिः श्रुतिसंयोगात् । दक्षिणासंबन्धेन नियम्येरन् । एवं हि आम्नायते 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । एवमभिधाय दक्षिणादानक्रमपरे वाक्ये ब्रह्मादयः श्रूयन्ते । अग्नीधेऽग्रे ददातीति, ततो ब्रह्मणे, ततोऽमुष्मै चामुष्मै चेति केचिदेव विशिष्टाः श्रूयन्ते । एवं ये श्रूयन्ते, ते तावदृत्विजः । ततोऽभ्यधिका नान्ये भवितुमर्हन्ति । दक्षिणाभिर्नियम इति ।

**वा**— प्रकृतानां येकेचित्सप्तदश इति प्राप्ते अभिधीयते । सामानाधिकरण्यप्रयोगात् नियमः । तच्च दक्षिणादानक्रमवाक्यगतं ब्रह्मादीनां दृश्यते, न चमसाध्वर्यूणाम् । यद्यपि च सिद्धमृत्विक्त्वम् अनूद्यमानं न शक्यमुपसंहर्तुमिति बुद्धिर्भवति, तथापि सप्तदशश्रुत्यपेक्षितविशेषावस्थानम्, तदेष्वेव वेदेन सिद्धवत् आश्रितम् । अतः अस्माकमेवं परिच्छेदो भवति, नूनमेते एव ऋत्विजः इति ।

**उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ।३७॥**

**भाष्यम्**—'य ऋत्विजस्ते यजमानाः' इत्येवमभिधाय ब्रह्मादीनां दीक्षाक्रमपरे च वाक्ये दीक्षां दर्शयति । कथम् । 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारम्, ततो होतारम् । ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्धिनो दीक्षयति, ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः । ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति, आग्नीध्रं ब्रह्मणः, प्रतिहर्तारमुद्गातुः, अच्छावाकं होतुः । ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति, पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः । ततस्तमन्यो ब्राह्मणो दीक्षयति, ब्रह्मचारी वाऽऽचार्यप्रेषितः' इति । दीक्षा च यजमानसंस्कारः । तस्मात् ब्रह्मादय ऋत्विजः सप्तदश इति ।

**वा**—'य ऋत्विजस्ते यजमानाः' इति यजमानर्त्विक्शब्दौ समानविषयौ नियम्य यजमानसंस्कारं दीक्षां ब्रह्मादिषु क्रमार्थमनुवदन् एतेषु तौ द्वावपि इति दर्शयति । तस्मात् ब्रह्मत्वादिकरणयोग्येष्वेव क्रतौ यजत्सु ऋत्विक्त्वं न सर्वेषु, तद्विषयमेव च क्रतुयजनं शब्दस्य प्रवृत्तिनिमित्तम् । यथा सास्नादिमद्गमनं गोशब्दस्य । यथा धाय्याशब्दः सामिधेनीषु निपात्यमानः (पा० ३।१।१२९) तास्वेव इत्यवधारणात् नान्यासु धीयमानास्वपि धाय्याशब्दवाच्यत्वं भवति इत्यवधार्यते, तथैव क्रतावेव यजत्सु भवति, न तु भवत्स्वेव, इत्यवधारयितव्यम् ।

**सोम**— प्रयोगभेदेन सर्वेषामृत्विक्त्वात् पूर्वोक्तः सर्वेषाम् ऋत्विक्त्वाभावः असिद्धः इति प्रत्यवस्थानात् (**आक्षेप**-) संगतिः । **सूत्रार्थस्तु** — 'ऋत्विग्भ्यो दक्षिणां ददाति, अग्नीधे ददाति, ब्रह्मणे ददाति' इत्येवं दक्षिणाभिः सहाम्नाते 'अग्नीधे ऋत्विजे ददाति, ब्रह्मणे ऋत्विजे' इति पर्यवसानात् सामानाधिकरण्यलक्षणो यः ऋत्विक्शब्दरूपश्रुतिसंयोगः, तस्मात् अग्नीध्रप्रभृतीनामेव ऋत्विक्त्वम् इति नियमः स्यात् इति ।

**वि**—'संख्याता अपि येकेचिन्नियता वा,ऽविशेषतः । आद्यो, न दक्षिणादाने दीक्षायां च विशेषतः ॥' दीक्षावाक्ये निर्दिष्टा अध्वर्युप्रभृतयः ऋत्विजः षोडश, न तु चमसाध्वर्यवः इति नियमो द्रष्टव्यः ।

**भाट्ट**— के ते सप्तदश इत्यपेक्षायाम् 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्युपक्रम्य अग्नीधे ब्रह्मणे उद्गात्रे इत्यादिना षोडशानामेव संकीर्तनात् तेषामेव ऋत्विक्त्वम् । अत एव सत्रे यजमानानामेव ऋत्विक्त्वात् तेषामेव यजमानसहितानां दीक्षाश्रवणम् । अतः षोडश तावत् समधिगताः ।

**मण्डन**— 'ते तु ब्रह्मादयो नान्ये ।'

**शंकर**— 'नियता दक्षिणाभिस्ते ।'

* **ऋत्विङ्न्यायेन** पत्न्युपादाने स्वामिवचनपत्नीयजमानशब्दानुपपत्तेः तयोः कर्तृत्वं न्यासज्यवृत्ति । **बिन्दु.** ६।१।४. * **ऋत्विङ्न्यायस्य** स्वरूपम्- 'ऋत्विजो हि परिक्रीताः कर्म कुर्वन्ति, परन्तु न तेषां यागकर्तृत्वं नाम' । यजतेऽसौ यजमानः, यज्ञसंयोगाच्च पत्नीत्वं पाणिनिराह 'पत्युर्नो यज्ञसंयोगे' इत्यनेन । तयोस्तु यागकर्तृत्वमिति । **के.**

* **ऋत्विक्पदस्य** योगरूढया केषां चिदेव एतन्नाम । **वि.** ३।७।१६.

* **ऋत्विक्प्रयोज्यानां** सर्वाशिषां यजमानसंबन्धः । **वा.** ३।८।१३।२८.

* **ऋत्विक्फलं** दक्षिणालाभात्मकं विनाऽपि तैः (संस्कारैः) उपलभ्यते । **वा.** ३।८।२।४.

* **ऋत्विक्बहुत्वसाधनाधिकरणे** 'ब्रह्माणं वृणीते' इति वचनं भाष्यकृता उदाहृतम् । (३।७।९।३४) । **शा.** ३।७।१८.

* **ऋत्विग्याज्ययोश्च** अव्यभिचारो धर्मः । **भा.** ११।४।२।५.

* **ऋत्विक्शब्दः** द्विविधोऽयं क्रतुयजननिमित्तः वरणभरणनिमित्तश्च । **भा.** ३।७।१६।३३.

**ऋत्विक्शब्दः यागीयसर्वकर्मकरेषु न प्रवर्तते, किन्तु सप्तदशस्वेव ॥**

**कर्मकार्यात् सर्वेषामृत्विक्त्वमविशेषात् । ३।७।१६।३२ ॥**

**भाष्यम्**— ये एते पुरुषा ज्योतिष्टोमस्य श्रूयन्ते, ते किं सर्वे एते ऋत्विजः, उत के चिदेषामिति । किं प्राप्तम् ? सर्वे । कुतः ? कर्मकार्यात् । सर्वे यागस्य साधनं कुर्वन्ति ।



तस्मात् सर्वे क्रतौ यजन्ति । ये च क्रतौ यजन्ति, ते ऋत्विजः । न कश्चित् विशेष आश्रीयते, इमे एव क्रतौ यजन्ति इति ऋत्विजः, इमे नेति । तस्मात् सर्वेषामृत्विक्त्वम् । ननु परिसंख्या श्रूयते 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति । उच्यते । परिसंख्यायां बहवो दोषाः सन्ति, इति अवयुत्यवादोऽयं भविष्यति ।

**वा**— ऋत्विक्शब्दो हि निपात्यमान एव (पा० ३।२।५९) उपपदधातुप्रत्ययसमन्वितेऽर्थे वर्तते, ऋतौ यजन्ति इति ऋत्विजः । एतस्मात् चेत् कारणात् ऋत्विजो भवन्ति, हन्त सर्वेषां तत् अविशिष्टमिति तदनुसारम् ऋत्विक्त्वमपि सर्वेषामेव प्राप्तम् । अतः चत्वारः पञ्च षट् सप्तदश इत्याद्याः अवयवा अपि एतस्य महान्तः इत्येवं स्तोतुम् अवयुत्यवादः ।

**न वा, परिसंख्यानात् । ३३ ॥**

**भाष्यम्**— न वा सर्वे । कस्मात् ? परिसंख्यानात् । एवं हि श्रूयते 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति । स एष न विधिः बहुतराणां प्राप्तत्वात्, नानुवादः प्रयोजनाभावात्, न चेत् परिसंख्याऽपि आनर्थक्यमेव स्यात् । **ननु** परिसंख्यायां स्वार्थहानं परार्थकल्पना प्राप्तबाधश्च । **उच्यते** । स्वार्थहानमदोषः प्राप्तत्वात्, परार्थकल्पना च (न इत्यनुवर्तते) प्रत्ययात् । बहूनामृत्विक्त्वे ज्ञाते, पुनः 'सप्तदश ऋत्विजः' इत्युच्यते । (तेन) सप्तदशभिः ऋत्विक्शब्दस्य संबन्धः पुनः प्रकाश्यते, अधिकैश्च न प्रकाश्यते, तत्र विज्ञायते एतत् । ऋत्विक्शब्दस्य पुरुषैः संबन्धे पुनः प्रकाश्यमाने सप्तदशभ्यः अभ्यधिकाः वर्जिताः इति गम्यते । तत्र किं सप्तदशभिः संबन्धो विवक्षितः, किं वा अधिकानां वर्जनमिति । सप्तदशसंबन्धस्य अप्रयोजकत्वात् अधिकानां वर्जनं विवक्षितमिति गम्यते । **आह**, ननु प्रतिषिध्यमानेष्वपि अधिकेषु प्रतिषेधो न प्राप्नोति । नहि ते क्रतौ न यजन्ति, न वा क्रतौ यजन्तो न ऋत्विजः स्युः । **उच्यते**, सत्यम् । न प्रतिषेधात् ऋत्विक्शब्देन न संबध्यन्ते, किन्तु प्रतिषेधसामर्थ्याद्धि ऋत्विक्कार्ये न भवन्ति । किं पुनर्ऋत्विक्कार्यम् ? 'ऋत्विज उपवसन्ति' 'ऋत्विजो वृणीते' 'ऋत्विग्भ्यो दक्षिणां ददाति' इति । **आह**, यत् ऋत्विजां कार्यम्, कथं तत् केषां चित् ऋत्विक्शब्दकानां न स्यात् ? **उच्यते** । एवं तर्हि द्विविधोऽयम् ऋत्विक्शब्दः, क्रतुयजननिमित्तः वरणभरणनिमित्तश्च । तत्र यागनिमित्तस्य ग्रहणमनर्थकम् । तस्मात् वरणभरणनिमित्तो गृह्यते इति । **आह** ननु इतरेतराश्रयमेवं भवति, ये ऋत्विजः ते वरीतव्याः, ये व्रियन्ते ते ऋत्विजः, इति तदितरेतराश्रयम् । **उच्यते** । नहि 'ऋत्विजो वृणीते' इति (अस्य) अयमर्थः 'ऋत्विजः सन्तो वरीतव्याः' इति । कथं तर्हि ? 'वरणेन ऋत्विजः क्रियन्ते' इति । एवं द्वितीयानिर्देशो युक्तो भविष्यति 'अध्वर्युं वृणीते' इत्येवंलक्षणः । दृष्टार्थता च वरणस्य भविष्यति । कथमात्मेच्छया अध्वर्युर्भवति इति चेत् कश्चित् ब्रूयात्, भवतीति ब्रूयात् । कथम् ? एवंशब्दकेन अयं पदार्थः कर्तव्यः इति, नास्ति एवंशब्दकः । यश्च नास्ति स यदि शक्यते कर्तुम्, कर्तव्यो भवति यथा 'जुह्वा जुहोति' इत्यविद्यमाना जुहूः क्रियते, एवमेतदपि द्रष्टव्यम् । तत्र अर्थात् अनियमेन ऋत्विक्शब्दसंबन्धे कर्तव्ये एवंवरणविशेषेण कर्तव्य इति नियम्यते । तस्मात् नेतरेतराश्रयम् । तस्मात् सप्तदशैव ऋत्विजः कर्तव्याः इति परिसंख्या । सप्तदश ऋत्विजः संस्कारैः कर्तव्या इति ।

**वा**— परिसङ्ख्यानात् इति (सौत्रपदेन) भाष्यकारेण परिसङ्ख्यैव व्याख्याता । सप्तदशसु अन्येषु च प्राप्तवत्सु सप्तदशपुनःश्रवणं न तावन्मात्रपरिग्रहार्थम्, यः अर्थात् इतराभावप्रत्ययः तमाश्रयितुम्, न सप्तदशस्वरूपं प्रत्याययितुम् । सर्वत्र हि द्वयोः संबन्धे कृते तत्स्वरूपं संसर्गश्च प्रतीयते अन्यनिवृत्तिश्च । क्व चित्तु किञ्चित्प्रयोजनवशेन विवक्ष्यते । स्वरूपसंसर्गसंभवे च बलादेव विधिः इतरनिवृत्तिप्रयोजनो भवति । अतश्च त्रिदोषत्वमदोषः । स्वार्थस्य प्राप्तत्वेनैव हेयत्वात्, प्रतीतस्य च परार्थस्य अपरिग्रहे विध्यानर्थक्यात् । परस्तु कर्मकरणमेव हेतुं परिगृह्य सति निमित्ते अन्येष्वपि शब्दप्रवृत्त्यवश्यम्भावित्वं मत्वा आह— '**ननु प्रतिषिध्यमानेष्वपि**' इति कार्यप्रतिषेधेनैव तावत् प्रक्रमते । सर्वत्र हि

स्वरूपप्रतिषेधासंभवात् कार्यं प्रतिषिध्यते। तद्यथा ' न ममैष पुत्रः ' पुत्रकार्ये न प्रवर्तते इत्यर्थः। एवं योऽयम् अर्थात् सप्तदशभ्यः अधिकानां प्रतिषेधः प्रतीयते, स कार्यविषयो न स्वरूपविषयः, इति द्रष्टव्यम्। वरणं तु शब्दप्रवृत्तिनिमित्तत्वात् अनुदाहरणम्, इति चेन्न, अस्मिन् पक्षे कर्मयोगादेव शब्दप्रयोगसिद्धेः। इतरस्तु स्वरूपाप्रतिषेधात् तन्निमित्तं कार्यमपि दुष्प्रतिषेधम्, इति कथम् ऋतौ यजतां तेषाम् ऋत्विक्त्वं न स्यात् इत्याह। सिद्धान्तवादी तु तत्त्वेन उत्तरं विवक्षमाणः ' **एवं तर्हि द्विविधोऽयम्** ' इत्यादि प्रक्रमते। यदि एष यौगिकः स्यात्, ततो न कुतश्चिन्निवर्तते। संस्कारशब्दस्तु अयम्। वरणभरणे हि संस्कारौ। ते येषां न स्तः, न ते सत्यपि क्रियायोगे तच्छब्दवाच्या भविष्यन्ति। ते च वरणभरणे सप्तदशानामेव यजमानेन क्रियेते। तन्निमित्तत्वाश्रयणे च ' सप्तदश ऋत्विजः ' इत्यनुवादः अवकल्पिष्यते, अन्यथा तु अवयवानुवादो मृषात्वरूपः कल्प्येत। तस्मात् नातिप्रसङ्गः। ननु च ये ऋत्विजः तेषां वरणभरणे, येषां च ते, ते ऋत्विजः, इति इतरेतराश्रयं प्राप्नोति। नैष दोषः। प्रथमं तावत् आञ्जस्येन एषा वचनव्यक्तिरन्विष्यते ' ये ऋत्विजः, तेषां वरणभरणे ' इति। यदा तु वृक्षादिवत् ते लोकव्यवहारेषु अप्रसिद्धाः, तदा अर्थात् अयमर्थो भवति ' वरणेन ऋत्विजः करोति ' इति। यथैव ' अस्य सूत्रस्य शाटकं वय ' इत्युक्ते वानेन शाटकः क्रियते, इति हि भाविनि संज्ञाविज्ञानात् अविरोधो विज्ञायते, तथैवात्र प्रत्येतव्यम्। एतेन 'अध्वर्युं वृणीते ' ( होतारं वृणीते ) इति तद्विशेषवचनानि व्याख्यातानि। एवं च व्रियमाणानामृत्विजां द्वितीयानिर्देशः अवकल्पिष्यते। वरणं च आधानवत् कर्मौपयिकान् तानुत्पादयत् दृष्टार्थं भविष्यति। वेदपौर्वापर्यपर्यालोचनात्तु ते वरणेन क्रियन्ते इत्यध्यवसानात् नाप्रसिद्धिः। ( यथाश्रुतभाष्यार्थमुपवर्ण्य तत्र विशेषं वक्तुम् आदौ दूषणं वदति- ) न तु इदम् ( ऋत्विक्पदस्य- ) निपातनाख्यानद्वारेण ऋतुयजननिमित्तत्वं गम्यमानं सत् परित्यक्तुं युज्यते। न च वरणभरणयोः सिद्धर्त्विक्संबन्धित्वेन तानुद्दिश्य श्रूयमाणयोर्विपरीता वचनव्यक्तिर्युक्ता। यच्च अप्रसिद्धाः संस्कर्तुं न शक्यन्ते इति, वरणेऽपि एवं तुल्यम्। नहि कश्चित् अप्रसिद्धं वस्तु ' कुरुष्व ' इत्युक्तोऽपि अध्यवस्यति, नापि तेन व्यापृतेनापि तन्निमित्ता निष्पत्तिरध्यवसीयते। यदि तु वेदवाक्यपौर्वापर्येण ज्ञायते इत्युच्यते, ततः सिद्धानामेव संस्कारः सुखतरमध्यवसीयते। जानाति हि एवं वरणं कुर्वन् यथा ' वेदस्य प्रसिद्धा एव के चित् ऋत्विजः, मम तु ते वरणद्वारेण प्रसिध्यन्ति, प्राक् तस्मात् अन्येन अनवधारितत्वात् '। अथवा तस्यापि सामान्यतः अस्त्येव प्रसिद्धिः। सर्वो हि भावः केन चिदात्मना सिध्यन् व्यवहारं साधयति। सर्वात्मिकायाः सिद्धेः क्व चिदपि अभावात्। अतो ये ऋतौ यजन्ति, ये वा आध्वर्यवादिकं कुर्वन्ति, ते ऋत्विजः। के च ते ? ये तत्समर्थाः, सामर्थ्यरहितानामनधिकारात्। के च समर्थाः ? ये विद्वांसः। तत्रापि स्मृतिप्रामाण्यात् ये ब्राह्मणाः। तदविशेषप्रसङ्गे पुनः विशेषो भवति ' वरणोपात्ताः ये ' इति। ततोऽपि पुनः दक्षिणाभिर्भ्रियमाणाः इति। सेयम् एतैर्विशेषैः शब्दार्थसंबन्धव्युत्पत्तिर्भवति। विज्ञानं च तद्विषयम् अन्यथाऽन्यथा च प्रसज्यमानं विशेषविषयमुपसंह्रियमाणम् ( एभिर्विशेषैर्भवति ) अक्रियमाणमेव सिद्धमृत्विक्त्वम्। अपिच वरणभरणाभ्याम् ऋत्विजो वा उत्पाद्येरन् ऋत्विक्त्वं वा ? तत्र ऋत्विजस्तावत् मातृपितृभ्यामेव ( मातापितृभ्यामेव ) उत्पादिता इति न पुनः उत्पत्तिमपेक्षन्ते। तथा योग्यतालक्षणमृत्विक्त्वम् अध्ययनश्रवणाभ्यां सिद्धमिति न पुनः साधनीयम्। वक्ष्यति च ' याजमानास्तु ' इत्यत्र ' न योग्यता एषां यजमानेन कर्तव्या ' इति। सर्वत्र च यत् अनुत्पन्नम्, तत् उत्पाद्यते। किञ्च एषां प्राक् वरणात् अनुत्पन्नं कर्म प्रति आनमनम्। ननु ऋत्विक्त्वमपि अनुत्पन्नम्। सत्यम्, तत्तु पश्चादपि उत्पद्यमानं पश्यामः। अथ यदुत्पद्यते तदेव ऋत्विक्त्वम्। तथा सति आनमनमेव तत्, नान्यत् किञ्चित्। न चेदम् अदृष्टमृत्विक्त्वम्। यस्य हि कार्यमदृष्टं भवति, तत्स्वरूपमपि अदृष्टं भवेत्। ऋत्विक्कार्यं तु कर्मनिर्वृत्तिः। दृष्टैव सा कथमदृष्टसाध्या भविष्यति। यावता च सा



भवति, तत् सर्वं विद्वत्त्वब्राह्मणत्वादि दृश्यते एव। यत्तु अदृष्टं किञ्चित्, तत् प्रकरणवशात् कर्मप्रयोगवचनेन गृह्यमाणं तदर्थमेव नाध्वर्य्वादित्वे व्याप्रियते। न च तत् वरणभरणाभ्यां जायते, इति तयोः अनिमित्तत्वं भवति। आहवनीयादीनां तु अप्रकरणोत्पत्तीनाम् अदृष्टोपकाराणाम् अनुत्पन्नावस्थानां संस्कारविधानात् उपपन्नमुत्पाद्यत्वम्। नहि तत्र होमादिभिः त्यज्यमानद्रव्याधारः अपेक्षितः। तेन अवश्यं तत्संबन्धात् अदृष्टमेव अभ्युपगन्तव्यम्। न च तत् अग्निमात्रात् सिध्यति इति तन्निर्वृत्त्यर्थम् अदृष्टमेव आहवनीयादित्वम् अपेक्षितम्। अतो नैष दृष्टान्तः। यदि च अदृष्टमृत्विक्त्वं वरणभरणाभ्यां जन्येत, ततः सत्रेऽपि यजमानेषु तत् आधातव्यम्, तद्विशेषाश्च अध्वर्य्वादयो दीक्षावाक्ये अनूद्यन्ते इति वरणभरणे कर्तव्ये स्याताम्। तत्र ' वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात् ' ' परिक्रयश्च तादर्थ्यात् ' इति च विरुध्यते। तस्मात् कर्मयोग्यतया अवधारितानामेव वरणभरणाभ्याम् उपादाननियमः कर्मार्थः क्रियते। ऋत्विक्शब्दश्च अवैगुण्यात् तद्विषय एव उपसंह्रियमाणः सतोऽपि अन्यान् योग्यान् नालम्बते। सत्रे तु स्वयंकर्तृकत्वात् वरणभरणयोः अनपेक्षितयोः अग्रहणात् विनैव ताभ्याम् अवैगुण्यम्, इति योग्यतामात्रेणैव अध्वर्युत्वादिसिद्धिः। तद्यथा पौर्णमास्यां विनाऽपि शाखापरिवासनेन यदेव अङ्गारापोहनक्षमं द्रव्यम्, स एव उपवेषः इत्यदोषः। तस्मात् यथा ' यूपस्य स्वरुं करोति ' इत्यत्र ' आदाने कर्मशब्दः ' ( ४।२।१६। भाष्यादौ तु करोतिशब्दः इति पाठः ) इति वक्ष्यति, तथा अत्र भाष्यकारस्य द्रष्टव्यम्।

**पक्षेणेति चेत्। ३४॥**

**भाष्यम्**--एवं चेन्मन्यसे, यथोक्तपक्षेण एतदेवमुच्येत अवयुत्यवादपक्षेण सप्तदश ऋत्विजः इति, तत् परिहर्तव्यम्।

**वा**—**पक्षेणेति चेत्।** ( इदं सूत्रं केवलमुपन्यस्तम्, न व्याख्यातम्। उत्तरं सूत्रं तु व्याख्यायते )।

**न सर्वेषामनधिकारः। ३५॥**

**भाष्यम्**— नैतदेवम्। नात्र सर्वेषां पुरुषाणां वचनं यानधिकृत्य अवयुत्यवादो भविष्यति। यत्र परा संख्या कीर्त्यते, तत्र अवयुत्यवादो भवति। यथा द्वादशकपाले यदष्टाकपालो भवतीति। न चेह परा संख्या कीर्त्यते। तस्मान्नावयुत्यवादः इति।

**वा**-- वैश्वानरद्वादशकपालाधिकारे हि अष्टत्वादय उच्चार्यमाणाः स्वरूपेण अनुपयुज्यमानाः शक्नुवन्ति अवयवत्वं गमयितुम्। स्तुत्या चोपयुज्यन्ते। न त्विह परमसंख्या उपात्ता यदधिकारात् सप्तदशत्वमवयवः प्रतीयेत। स्तुत्यर्थं च स्यात्। तस्मादृत्विक्त्वोपसंहारार्थमेव एतदिति सप्तदशर्त्विजः।

**शा**-- ब्रह्मादयः चमसाध्वर्यवश्चेति बहवः कर्तारः समधिगताः। ते सर्वे किम् ऋत्विक्शब्दवाच्याः, उत के चिदेवेति। तत्र '**ऋतौ कार्यं हि सर्वेषां तेनर्तुयजनादमी। सर्वे तदभिधेयाः स्युरविशेषेण यष्टृवत्॥**' ' सप्तदश ऋत्विजः ' इति वचनं तु अवयुत्यानुवादः। इति प्राप्ते, ब्रूमः। ' **ऋतुयागनिमित्तत्वे भवेत् सर्वाभिधायिता। संख्याश्रुतिविरोधात्तु तन्नैवं संश्रयामहे॥ वरणं तन्निमित्तं स्याद् वचनं त्वेवमर्थवत्॥** '

**सोम**— प्रासङ्गिकी **संगतिः**। **प्रयोजनम्** - पूर्वपक्षे ' ऋत्विज उपवसन्ति ' ' आग्नीध्रे एतां रात्रिं ऋत्विजो वसन्ति ' ' ऋत्विजस्तानूनप्त्रं समवमृशन्ति ' इत्यादिर्ऋत्विग्धर्मः सर्वेषाम्। सिद्धान्ते तु ब्रह्मादीनामेवेति। सूत्रे कर्मकार्यात् यज्ञकरत्वात् इति यावत्।

**वि**-- ' किमृत्विङ्नाम सर्वेषु समानमुत केषु चित्।, ऋतौ यजनमेतेषां तुल्यमित्यस्ति नाम तत्॥, सौम्याध्वरस्य सप्त स्युर्दश चेत्यादिसंख्यया। न सर्वेषां समं नाम केषां चित् योगरूढितः॥ '

**भाट्ट**— ब्रह्मादयः चमसाध्वर्यवश्च सोमे कर्तारः समधिगताः, ते सर्वे ऋत्विक्पदवाच्याः ऋत्विक्पदस्य 'ऋत्विग्दधृक्' इत्यादिस्मृत्या कर्तृवाचिक्विन्नन्तत्वनिपातनेन यौगिकत्वावगतेः वसन्ताख्यऋतुकालीनयागप्रयोगकर्तृवाचित्वनिर्णयेन अदृष्टरूपऋत्विक्त्वे रूढिमङ्गीकृत्य औणादिकत्वकल्पनाऽनुपपत्तेः। तस्य च सर्वपुरुषेष्वविशेषात्।

'तस्यैतस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति तु 'एकं वृणीते' इत्यादिवत् अवयुत्यानुवादः। इतरथा परिसंख्यायां त्रिदोषत्वापत्तेः। अदृष्टरूपऋत्विक्त्वकल्पनायां गौरवात्। अत एव च वरणमेव तज्जन्यादृष्टमेव वा ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तम्, रूढिकल्पनायां प्रमाणाभावात्, ब्रह्मादिवरणानां भेदात् अनेकादृष्टशक्तिकल्पनाऽऽपत्तेश्च। व्यापकधर्मस्य वरणत्वस्यैव शक्यत्वाङ्गीकारे तु अतिप्रसङ्गः इत्यस्मन्मतप्रवेशः, यजमाने वरणाभावेन ऋत्विक्त्वानापत्तेश्च, सत्रे ऋत्विक्त्वसंपत्तये वरणापत्तेश्च। अत एव 'ऋत्विजो वृणीते' इत्यस्यैव वरणविधित्वात् एकमेव वरणम् ऋत्विक्पदप्रवृत्तिनिमित्तमित्यप्यपास्तम् 'ब्रह्माणं वृणीते' इत्यादिविधीनां वैयर्थ्यप्रसङ्गाच्च। एतेन ब्रह्मादिनिष्ठऋतुयजनान्येव ऋत्विक्पदप्रवृत्तिनिमित्तम् इत्यपि अपास्तम्, अनेकशक्तिकल्पनातादवस्थ्यात्। अतश्च सर्वे एव ऋत्विक्पदवाच्याः इति सर्वेषामेव हिरण्यमालित्वादि ऋत्विक्कार्यम्। इति प्राप्ते, सत्यम् ऋत्विक्पदं यौगिकम् ऋतुयजनसामान्यवाचि च। तथापि सप्तदशश्रुत्या उद्भित्पङ्कजादिवदेव रूढिमकल्पयित्वैव सप्तदशश्रुत्युन्नीतप्राचीनप्रयोगस्य सहकारित्वकल्पनेनैव सप्तदशानामेव ऋत्विक्पदशक्यत्वोपपत्तिः। नहि उद्भिदादिपदेषु अतिप्रसङ्गनिराकरणार्थे रूढिकल्पनम्, तथात्वे सोमादिवत् मत्वर्थलक्षणामङ्गीकृत्य गुणविधित्वस्यैव आपत्तेः। न चैवं सप्तदशश्रुतेः परिसंख्यात्वापत्त्या त्रिदोषत्वापत्तिः। ऋत्विक्पदज्ञानकारणताकल्पनवेलायामेव सप्तदशश्रुतेः तात्पर्यग्राहकत्वकल्पनेन प्राप्तपरिसंख्यात्वाभावात्। अतश्च सप्तदशानामेव ऋत्विक्कार्ये हिरण्यमालित्वादि।

**मण्डन**— 'सोमे सप्तदशर्त्विजः।'

**शंकर**— 'स्युः सप्तदश चर्त्विजः।'

* ऋत्विक्शब्दः संस्कारशब्दः। वरणभरणे हि संस्कारौ। तौ येषां न स्तः, न ते सत्यपि क्रियायोगे तच्छब्दवाच्या भविष्यन्ति। ते च वरणभरणे सप्तदशानामेव यजमानेन क्रियेते। **वा.** ३।७।१६।३३, * ऋत्विक्शब्दो हि ( ऋत्विक्दधृक्सूत्रे ) निपात्यमानः एव उपपद–धातु–प्रत्ययसमन्वितेऽर्थे वर्तते ( ऋतुशब्दः उपपदं यज धातुः क्विन् प्रत्ययः )। ऋतौ यजन्तीति ऋत्विजः। ३।७।१६।३२, * **ऋत्विक्शब्दात्** निपातनाख्यानद्वारेण ऋतुयजननिमित्तत्वं गम्यमानं सत् परित्यक्तुं न शक्यते। ३।७।१६।३३ पृ. १०९७. * ऋत्विक्शब्दस्य प्रवृत्तिनिमित्तम् ऋतौ यजनम्। **वि.** ३।७।१६.

* **ऋत्विक्संस्काराणां** सर्वर्त्विग्धर्मता। **भा.** ३।८।४।१२.

* '**ऋद्धस्य** राज्ञः पुरुषः' इत्यत्र शेषिणोऽपि राज्ञः विशेषणत्वात् ऋद्धिमपेक्षमाणस्य समासो न भवति। **रत्नाकरः**. पृ. ३४७.

* **ऋद्धिकामस्य** ज्योतिष्टोमातिरात्रः ( ज्योतिरतिरात्रः ) कातीये। **बाल.** पृ. ३४.

* **ऋभवः** नाम रथकाराः सौधन्वनाः। तेषाम् आधाने अधिकारः। 'वर्षासु रथकारः आदधीत।' तच्च त्रैवर्णिकेभ्यो जात्यन्तरं किञ्चित्। **भा.** ६।१।१२। ४४–५०.

* **ऋषभो** दक्षिणा द्वितीयायां अवेष्टौ राजसूये। **भाट्ट.** ११।४।३. * '**प्रवयसमृषभं** दक्षिणां ददाति' वरुणप्रघासेषु। **भा.** ११।२।१०।४६.

* **ऋषिः** गोत्रप्रवर्तकः कश्यपभरद्वाजादिः। **वि.** ६।१।११. * **ऋषीणां** न (कर्मणि अधिकारः), आर्षेयाभावात्। न भृग्वादयो भृग्वादिभिः सगोत्रा भवन्ति। न चैषां सामर्थ्यं प्रत्यक्षम्। **भा.** ६।१।२।५। **टुप्**— इत्ययुक्तम्। अनादिर्हि कालोऽस्माकम्। **रत्न**— अस्माकमिति मीमांसकानामित्यर्थः। **भाट्ट**— ऋष्यादीनां तु अनादित्वात् संसारस्य प्रवरवरणादौ ऋष्यन्तरस्यापि संभवात् अधिकारोऽस्त्येव। इति भाष्योक्तमनधिकारप्रतिपादनमनादरणीयम्। * ऋषीणां प्रतिभया ( योगाभ्यासजन्येन बुद्धिविशेषेण ) धर्माधर्मप्रमा इति निरस्तम्। प्रतिभायाः अनिश्चायकत्वेन मानत्वाभावात्। **मणि.** पृ. ६२.

---

## ए.

**एकं पदमेकत्रान्वितम् अन्यत्र विना बलवदनुपपत्त्या नान्वेति इति न्यायः।** 'तिथ्यृक्षयोर्यदा छेदो नक्षत्रान्तमथापि वा। अर्धरात्रेऽपि तत् कुर्याद् वर्जयित्वा महानिशाम्॥' इति



वचनम्। 'एकं पद०' इति न्यायात् अर्धरात्रे यदा उभयान्तः, तदा वचनान्तरबोधितदिने एव पारणं कुर्यात्, न तु अर्धरात्रे पारणम् इत्येवंपरम्। न्यायश्चायं तृतीये सिद्धः ( शा. ३।५।८ ) 'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ति' इत्यत्र चमसिपदस्य हारियोजनान्वयानभ्युपगमात्। **समयमयूखः**. पृ. ३२.

* एकं साम तृचे क्रियते। **टुप्.** ९।२।३।१४. * यदेव हि **एकम्**, तदेव अन्यापेक्षया अनेकम्। **वा.** ३।१।७।१४ पृ. ७२०.

**'एकोऽपि हन्ति गुणलक्षमपीह दोषः। कश्चित् परो यदि गुणोऽस्ति न तद्विरोधी। मद्यस्य बिन्दुरपि पावनपञ्चगव्यसंपूर्णमत्र कलशं मलिनीकरोति॥' इति न्यायः** स्पष्टार्थः। **साहस्री.** ५७९.

* एकः घटः इति एकत्वाभिन्नसंख्यावान् घटः इति बोधः इति वैयाकरणाः। **मणि.** पृ. १२४. * एकः पदार्थः अवघातः, कृष्णाजिनास्तरण– उलूखलाधिवर्तन – बीजावाप – अवघात – परावपण – विवेचन– फलीकरणानि इति। **शा.** ५।२।६. * एकः पदार्थः अवदानं प्रदानान्तम्। **भा.** ५।२।४।६, * एकः पदार्थः कृष्णाजिनाधःस्तरणादितण्डुलनिष्पत्यन्तः। राजसूये नानाबीजेष्टौ विशिष्टपदार्थेनानुसमयः, तेनैकमुलूखलं तन्त्रेण। ५।२।७।१३–१५. * एकः पदार्थः कृष्णाजिनास्तरणादिः पेषणान्तः। तस्यानुसमयो राजसूये नानाबीजेष्टौ। **भाट्ट.** ५।२।७ पृ. १८४, * एकः पदार्थः दैवतावदानादिः प्रदानान्तः एकदेवताकपशुगणे, विभिन्नदेवताकस्थलेऽपि (च)। एकदेवताके तु पदार्थावयवानामेवानुसमयः ( इति विशेषः )। ५।२।६. * एकः पदार्थः मुष्टिचतुष्टयं निर्वापे दर्शपूर्णमासयोः। **वि.** ५।२।३.

**एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः इति न्यायः।** अयं कुमारसंभवे कालिदासोक्तिरूपः स्पष्टाऽभिप्रायकः। **साहस्री.** ५८०.

* एकं पुरोडाशं अधिश्रपयति ( अवदानं च सहैव। इन्द्राय राज्ञे इन्द्रायाधिराज्ञे इन्द्राय स्वराज्ञे इत्यत्र )। **संकर्ष.** २।२।१४. * एकं प्रति विकृतित्वेऽपि अन्यं प्रति प्रकृतित्वं न विरुद्धम्। ( यथा दैक्षस्य पशोः दर्शादिविकृतित्वेऽपि सवनीयपशोः प्रकृतित्वम् )। **वि.** ८।१।६.

**एकं संधित्सतोऽपरं प्रच्यवते इति न्यायः।** यथैककांस्यपात्रावयवादि संधातुमिच्छतः अपरं तदत्यन्ताऽनलसंयोगादेः प्रच्यवते, तथा 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्यादिवाक्यतः अभेदवचसः प्रामाण्यसाधने प्रवृत्तानां वैष्णवं शैवमित्यादिपुराणसंज्ञाभेदात् 'चतुर्भिर्भगवान् विष्णुर्द्वाभ्यां ब्रह्मा तथा रविः। अष्टादशपुराणेषु शिष्टैस्तु भगवान् शिवः॥' इत्यादिप्रभासादिवचनाच्च प्रकृतन्यायविषयत्वं दुर्वारमिति भेदवादिनो वदन्तीति। **साहस्री.** ८४.

**एकेनापि समाप्येत कृतार्थत्वाद्, यथा क्रत्वन्तरेषु, प्राप्तेषु चोत्तरावत् स्यात्। ११।१।३।११॥**

अग्निहोत्रदर्शपूर्णमासादीनां प्रयोगः एकेन अपिशब्दात् द्वाभ्यां त्र्यादिभिरपि अङ्गैः युक्तः समाप्येत न सर्वाङ्गोपसंहारेणैव। एकेनापि अङ्गेन कृतेन इतिकर्तव्यताऽऽकाङ्क्षायाः कृतार्थत्वात्। यथा क्रत्वन्तरेषु सौर्य–आर्यमण–प्राजापत्यादिषु यो यावन्ति कर्माणि करोति स तावद्भ्यः फलमश्नुते। ननु प्रधानसंनिधानाविशेषात् सर्वाण्येव अङ्गानि प्राप्यन्ते। उच्यते। प्राप्तेषु चापि सर्वेष्वङ्गेषु उत्तरावत् यथोत्साहम् अनुष्ठानं स्यात्। यथा गृहमेधीये 'वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इति यस्य यावत्यो गावः, सः तिसृभ्य उत्तरा अधिका अपि तावतीर्दोहयति इति तावतीष्वपि कृतार्थः उत्तराशब्दः। एवमिहापि यथोत्साहमङ्गानि करिष्यन्ते। इति पूर्वः पक्षः।

**फलाभावान्नेति चेत्। १२॥**

सिद्धान्ती शङ्कते। न यथोत्साहमङ्गानामनुष्ठानम्, किन्तु स्वर्गकामस्य इदं कर्तव्यमिति यावच्छ्रुतम्, तत् साकल्येन अकुर्वतः फलाभावात्। सकलाननुष्ठाने फलं न स्यात्। तस्मात् सकलान्येव अङ्गानि कर्तव्यानि नैकादिकम्। इति चेत्।

**न कर्मसंयोगात्, प्रयोजनमशब्ददोषं स्यात्।१३॥**

पूर्वपक्षी उत्तरमाह। सकलाङ्गाननुष्ठानेऽपि न फला-

भावः । कर्मसंयोगात् प्रधानकर्मणः फलेन संयोगात् । ‘ दर्शपूर्णमासाभ्यां स्वर्गकामः’ इति प्रधानकर्मभ्यामित्यर्थः नाङ्गैरपि । अङ्गाकाङ्क्षा तु एकेनाप्यङ्गेन शाम्यति । एवं सति प्रयोजनम् अङ्गकृत उपकारः, स्वर्गादि फलं च अशब्ददोषं स्यात् । विधिशब्दस्य दोषो न स्यात् । शब्दस्य दोषः वैयर्थ्यं शब्ददोषः, अविद्यमानः शब्ददोषः यस्मिन् प्रयोजने तत् अशब्ददोषम् । तस्मात् सकलाङ्गाननुष्ठानेऽपि न फलाभावप्रसङ्गः ।

**ऐकशब्द्यान्नेति चेत् । १४ ॥**

सिद्धान्ती पुनः शङ्कते । नैतद्युक्तम् ऐकशब्द्यात् । एकः शब्दः विधायकः येषां प्रधानानामिव अङ्गानामपि सर्वेषां तानि एकशब्दानि, तेषां भावः ऐकशब्द्यम् । ‘ दर्शपूर्णमासाभ्याम् ’ इत्येकः शब्दः उपदेशकः प्रधानानां समिदादीनां च प्रयोगस्य । तेन च फलसंबन्धः कृतः । तस्मात् सर्वाङ्गसहितस्यैव फलम् ।

‘ ऐककर्म्यान्नेति चेत् ’ इति पाठान्तरे तु, एकस्य अङ्गस्य कर्म करणम् अनुष्ठानं एककर्म, तस्य भाव ऐककर्म्यम् । एकमेव अङ्गं क्रियताम् । एकेनापि प्रधानमङ्गवद्भवति । न सर्वाण्यङ्गानि कर्तव्यानि इति चेत् इत्यर्थः !

**नार्थपृथक्त्वात्, समत्वादगुणत्वम् । १५ ॥**

पूर्वपक्षी तु आह, न अङ्गानामपि फलेन संबन्धः । अर्थपृथक्त्वात् अर्थस्य अङ्गफलस्य प्रधानफलात् पृथक्त्वात् । प्रधानस्य फलं स्वर्गादि, अङ्गानां तु फलं प्रधानसामर्थ्यसिद्धिः । एवम् अर्थपृथक्त्वात् नाङ्गानां फलसंबन्धः । यदि तु प्रधानानामङ्गानां च सममेव फलसंबन्धः स्यात्, तदा प्रधानाङ्गयोः समत्वात् अङ्गानाम् अगुणत्वं गुणत्वाभावः स्यात्, गुणत्वं न स्यात्, अङ्गानामपि प्रधानत्वमेव स्यात् । ततश्च न फलसाम्यम् । तस्मान्न सर्वाङ्गोपसंहारस्यावश्यकता । अथवा नाङ्गानां फलसंबन्धः अर्थपृथक्त्वात् । अर्थः उपकारः । एकेनाङ्गेन अल्प उपकारः, बहुभिर्महान् । यदि एकेन बहुभिश्च सम एव उपकारः स्यात्, तदा एकस्य बहूनां च समत्वप्रसङ्गात् एकस्यैव गुणत्वं स्यात्, इतरेषां तु अगुणत्वं स्यात् । तस्मात् अङ्गभूयस्त्वे फलभूयस्त्वमस्त्येव ! तस्मादेकमनेकं वा अङ्गमनुष्ठातव्यम् इत्यर्थः । समर्थत्वादगुणत्वम् इति पाठे तु अङ्गानामपि प्रधानवत् स्वर्गादिफलदाने समर्थत्वात् गुणत्वं न स्यात् इत्यर्थः ।

**विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंबन्धादर्थेन युगपत् प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् । १६ ॥**

तुशब्दः प्राप्तनिरासार्थः । नैकेनाङ्गेन प्रयोगः । विधेः एकश्रुतित्वात् । अङ्गानां प्रधानानां च विधानस्य एकश्रुतित्वात् । एका ‘ दर्शपूर्णमासाभ्यां यागाभ्याम् ’ इति एकैव श्रुतिः शब्दो यस्य स विधिः एकश्रुतिः । एकया श्रुत्या सर्वेषामङ्गानां प्रधानानां च विधानादित्यर्थः । कथमेकश्रुतित्वम्, तत्राह अपर्यायविधानात् एकया विधिश्रुत्या अपर्यायेण पर्यायं विनैव विधानात् एकया हेलया सर्वेषां विधानात्, ‘ प्रयाजानुयाजा इज्यन्ते ’ इति ऐकविध्येनैव प्रयाजानां विधानात् । कदा चित् समिधः, कदा चित् तनूनपात् इति नात्र पर्यायो विहितः । अपर्यायविधानमेव विशदयति नित्यवच्छ्रुतभूताभिसंयोगात् इति । नित्यवत् नित्यत्वेन श्रुतभूतानि श्रुतानि अङ्गानि, तैः अभिसंयोगात् संबन्धात्, नित्यत्वेन श्रुतैरङ्गैः संबन्धात् इति । नित्यवच्छ्रुतिभूताभिसंयोगे हेतुमाह अर्थेन युगपत् प्राप्तेः इति । अर्थेन प्रधानोपकाररूपेण प्रयोजनेन खले कपोतवत् युगपत् अङ्गानां प्राप्तेः । उक्तस्य सर्वस्य फलमाह यथाप्राप्तं स्वशब्दः विदधाति इति शेषः । अर्थेन युगपत् प्राप्तेः नित्यवच्छ्रुतभूताभिसंयोगात् अपर्यायविधानात् विधेः एकश्रुतित्वात् स्वशब्दः सर्वाङ्गसहितप्रधानविधायकः ‘ दर्शपूर्णमासाभ्यां यजेत ’ इति शब्दः यथाप्राप्तं सर्वमङ्गजातं विदधाति । एवं यथाप्राप्तं स्वशब्देन विधानात् निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात् । यथा ‘ निवीता ऋत्विजः प्रचरन्ति ’ इति श्येनादौ ऋत्विग्विशेषस्यानुक्तत्वात् सर्वेषु ऋत्विक्षु निवीतस्य विधेः प्रवृत्तिः, तथा सर्वप्रयोगे सर्वेषामङ्गानां प्रयोगे अङ्गविधेः प्रवृत्तिः स्यात् । अथवा ऋत्विजां सर्वाङ्गप्रयोगे प्रवृत्तिः स्यात् । तस्मात् सर्वेषामेवाङ्गानां प्रयोगः ।



**तथा कर्मोपदेशः स्यात् । १७ ॥**

तथा सर्वाङ्गोपसंहारे सति ‘ चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायाम् ’ इति कर्मोपदेशः आहुतिकर्मणाम् उपदेशः उपपन्नः स्यात् । पञ्च प्रयाजाः द्वौ आज्यभागौ उपांशुयाजः त्रीणि प्रधानानि स्विष्टकृत् त्रयोऽनूयाजाः इति पौर्णमास्यां चतुर्दश आहुतयः । अमावास्यायां तु उपांशुयाजाभावात् ऐन्द्राग्नः पुरोडाशः दधिपयोरूपसांनाय्यम् इति द्वे प्रधानाहुती शेषं समानम् इति त्रयोदश आहुतयः इति उदाहृतश्रुत्यर्थः । नेयमाहुतिसंख्या सर्वाङ्गोपसंहारं विना उपपद्यते । तस्मात् सर्वाङ्गोपसंहारः सिद्धान्तः ।

**क्रत्वन्तरेषु पुनर्वचनम् । १८ ॥**

यदुक्तम् ‘ यथा क्रत्वन्तरेषु ’ इति ( सू. ११ ) तत्राह, क्रत्वन्तरेषु सौर्यार्यमणादिषु तु पुनर्वचनं भवति प्रत्येकं पृथगेव विधिः । ततस्तेषां भेद एव । इति वैषम्यम् ।

**उत्तरास्वश्रुतित्वाद् विशेषाणां कृतार्थत्वात् स्वदोहे यथाकामी प्रतीयेत । १९ ॥**

यदुक्तम् उत्तरावत् इति ( सू. ११ ) तत्राह । ‘ वाग्यतस्तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति ’ इति वाक्यं वाग्विसर्गादीनां विशेषाणां विधानेन कृतार्थं नोत्तरासां दोहनं विधातुमुत्सहते । तस्मात् उत्तरासु गोषु दोहनस्य अश्रुतित्वम्, न श्रुतिः, न विधिः । तथा च कृतार्थत्वात् उत्तरासु अश्रुतित्वात् स्वदोहे स्वासां स्वीयानां गवां दोहे यथाकामी यथाकामता प्रतीयेत । प्रकृते तु यथाकामता न संभवति इति वैषम्यम् । यथाकामी इति प्रायः सर्वत्र पाठः । प्रतीयते इति च भाष्ये मुद्रितम् । सूत्रे तु प्रतीयेत इति पाठः सर्वत्र । **के.**

* **एकेन** च नैराकाङ्क्ष्ये संभवति न प्रयोजनान्तरं कल्पयितुं शक्यम् । वा. ३।४।१०।२८ पृ. ९५९.

**एकस्माच्चेद् याथाकाम्यविशेषात् । ३।४।१६। ४६ ॥**

क्त्वाचिन्तया पूर्वपक्षः । स्विष्टकृदिडं शेषकार्ये एकस्मादेव हविषश्चेत् स्यात्, तदा अनेकप्रधानके याथाकामी यथाकामताबुद्धिः स्यात् । कस्माच्चिदेकस्मात् कर्तव्यम्, न आग्नेयादेव अग्नीषोमीयादेव वा । अविशेषात् विशेषाभावात् । “ याथाकाम्यम् इत्यस्यैव बुद्धिसामानाधिकरण्येन स्त्रीत्वविवक्षायां ‘ षिद्गौरादिभ्यश्च ’ ( पा० ४।१।४१ ) इति ङीषि कृते ‘ हलस्तद्धितस्य ’ (पा०६।४।१५०) इति य्यङ्यकारे लुप्ते याथाकामी इति भवति ” इति वार्तिकम् ।

**मुख्याद्वा पूर्वकालत्वात् । ४७ ॥**

कृत्वाचिन्तयैव सिद्धान्तः । स्विष्टकृदिडम् एकस्माच्चेत् हविषः कर्तव्यं स्यात्, तदा तत् मुख्यात् प्रथमादेव कर्तव्यम् । मुखे आदौ भवं मुख्यम्, तस्मात् । वाशब्दः पूर्वपक्षनिरासार्थः । पूर्वकालत्वात् मुख्यस्य । पाठक्रमात् मुख्यस्य कालः पूर्वमुपस्थितः तत्परित्यागे च न कारणम् इति प्रथमादेवेति सिद्धान्तः । वस्तुतस्तु एकस्मान्नास्त्येव शेषकार्यं किन्तु सर्वेभ्य एवेति पूर्वाधिकरणे साधितमेव । अत एव एकस्मात् इति कृत्वा चिन्ता । सा च चेत्पदेन उद्घाटिता । **के.**

**एकस्याप्यनेकशक्तिसंभवादनेकार्थप्रत्यायनमविरुद्धम् इति न्यायः** । अनेकार्थशब्देषु चरितार्थोऽयं न्यायः स्पष्टार्थः । **साहस्री. ४२९.**

**एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात् । २।२।२।२ ॥**

‘ समिधो यजति ’ ‘ तनूनपातं यजति ’ ‘ इडो यजति ’ ‘ बर्हिर्यजति ’ ‘ स्वाहाकारं यजति ’ इत्येवं पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति, किंवा प्रत्यभ्यासमपूर्वभेदम् इति । अत्र शब्दान्तरानन्तरं पञ्चभिः प्रमाणैः कर्मभेदे वक्तव्ये अभ्यासपूर्वपक्षस्य शब्दान्तरप्रत्युदाहरणरूपत्वात् अनन्तरमभ्यासारम्भः । अत्रायं पूर्वपक्षिणोऽभिसंधिः— युक्तं प्रत्ययैकत्वेन एकरूपतया प्रतिभासमानोऽपि प्रत्ययार्थः प्रकृत्यर्थोपरागात् प्रतिधातु भिद्यते इति । इह धातोरपि एकत्वेन एकरूपधात्वर्थोपरागात् कुतो भेद इति । न हि शतकृत्वोऽपि करः कर इत्युक्ते भेदोऽवगम्यते । तदुक्तम् ‘ **प्रत्ययार्थः समानोऽपि धातुभेदेन भिद्यते । धातोरपि समानत्वे केन भेदोऽवधार्यताम् ॥**’ इति । ( वा. पृ.

४६८.)। न च अर्थाभेदे सति दृष्टार्थाध्ययनविध्युपस्थापितस्य यजति यजतीत्यस्य पञ्चधाऽभ्यस्तस्य आनर्थक्यमयुक्तमिति प्रत्युच्चारणमर्थभेद एवेति वाच्यम्। मन्त्रवत् प्रयोगविधिपरिगृहीतानाम् असमवेतार्थानाम् अदृष्टार्थानाम् अदृष्टार्थत्वेनैव उपपत्तिः। अथवा प्राथम्यानुरोधेन समिद्वाक्येनैव सिद्धान्तवत् समिन्नामावच्छिन्ने कर्मणि विहिते तदितरैः तदनुवादेन तनूनपादादिदेवताभिधानात् अर्थवत्त्वं भविष्यति। न च कथं नामधेयत्वमिति वाच्यम्। 'समिद्भयः स्वाहा' इति मान्त्रवर्णिकदेवतासंबन्धनिमित्तत्वेन समित्पदस्य नामधेयत्वात्। न च एवं सति वाक्यविहिततनूनपादादिदेवताभिः दुर्बलमान्त्रवर्णिकदेवताबाध एवेति वाच्यम्। मान्त्रवर्णिकसमिद्देवतामपेक्ष्य समिन्नामावच्छिन्नयागानुवादेनैव तनूनपादादिदेवताविधानात् '**न निमित्तं विधिरपबाधते**' **इति न्यायान्न** मान्त्रवर्णिकसमिद्देवताबाधः। अतो देवतानां विकल्प एवेति। ननु समिद्यागवत् 'तनूनपाते स्वाहा' (तनूं न पातयति इति तनूनपात्) इत्यादिमन्त्राः क्रमपठिताः प्रत्येकं भिद्यन्ते एव, तत्र तनूनपादादिवाक्येष्वपि मान्त्रवर्णिकदेवताप्राप्तिनिमित्तनामावच्छिन्नकर्मविधानमेव युज्यते। गुणविधानं तु कुतः? स्यादेवं यदि यजतीत्यत्र प्रकृतकर्मप्रत्यभिज्ञानबलेन च कर्मैकत्वे सति तस्याविधेयत्वात् यदि गुणमपि न विदध्यात्, वाक्यमनर्थकमेव भवेत्। तेन मान्त्रवर्णिकीं प्राप्तिम् उपेक्ष्य प्रकृते समिद्यागे वैकल्पिकदेवताविधानार्थत्वमेव उत्तरेषामिति।

अथवा सर्वैरेव समिदादिवाक्यैः उपांशुयाजे एव मान्त्रवर्णिकदेवताबाधेन वैकल्पिक्यः समिदाद्या देवता विधीयन्ते इति। न च उपांशुयाजवाक्यक्रमाम्नातमन्त्रानर्थक्यम्, उत्तरेणापि समिदादिदेवताप्रकाशनेन अर्थवत्त्वात्। यत्र वा विष्ण्वादयो देवताः सन्ति, तत्रोत्कर्षेण अर्थवत्त्वं भविष्यति। अस्मिंश्च पक्षे 'पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति' इति भाष्यमेवं नेयम्, एकमुपांशुयाजवाक्यम् अपूर्वं चोदयति अनुगृह्णातीत्यर्थः। न च वाच्यम् "**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वेष्यते। देवतासंगतिस्तत्र दुर्बलं तु परं परम्॥**" (वा. पृ. ५३३) इति चतुर्थीमन्त्रवर्णानामेव देवताप्रतिपादकत्वमुक्तम्। तत्किं द्वितीयाऽन्ततनूनपादादिपदैर्देवताविधानमिति"। यतो 'विष्णुं यजति' इत्यादिद्वितीयाऽन्तेनापि देवताविधानात् प्रायिकमिदम्। तेन पञ्चधाऽभ्यस्तेन यजतिशब्देन एकमेव समिद्यागभावनारूपम् उपांशुयाजभावनारूपं वा कर्म प्रतिपाद्यते इति। **एवं प्राप्ते, अभिधीयते**। भवेदेवं यदि प्रत्यभिज्ञानमात्रम् अनुवादकारणं भवेत्, किं तर्हि? अनुवादाकाङ्क्षाऽपि। सा च विधेयोपपदार्थप्राप्तौ भवति। तथाहि, भावनार्थो विधिः प्रथमं भावनामेव धात्वर्थानुरक्तां विदधातीत्युचितम्। यदा तु उपपदार्थम् लिप्सते, तदा विशिष्टविधिगौरवभिया धात्वर्थं परित्यज्य उपपदार्थमेव विधातुमनुसंधत्ते। तत्र विधियोग्योपपदार्थप्राप्तौ सत्यां धात्वर्थमनुवदितुम् आकाङ्क्षति। तां चाकाङ्क्षां धात्वर्थप्रत्यभिज्ञा पूरयति। यदि तु विधियोग्योपपदार्थप्राप्तिर्न भवति, नापि धात्वर्थप्रत्यभिज्ञानम्, तदा परावृत्य भावनाऽनुरञ्जकतया धात्वर्थमेव विदधातीति सर्वत्र स्थितम्। न चात्र विधिविधानयोग्यम् उपपदार्थं पश्यति। तथाहि, विधेयता द्रव्यत्वेन वा? देवतात्वेन वा? न च तनूनपादादिरूपं द्रव्यं किञ्चिल्लोके प्रसिद्धमस्ति। नापि द्वितीयाऽन्तेन देवता प्रतिपादयितुं शक्यते 'विष्णुं यजति' इत्यादौ अगत्या तथा आश्रितम्। न चेह गत्यन्तरं नास्ति। मान्त्रवर्णिकदेवतालाभात् तत्प्रख्यन्यायेन नामधेयत्वेन उपपत्तेः। अतोऽत्र प्रतिवाक्यमभ्यस्तो विधिः गुणानाक्षिप्तशक्तिः भावनामेव धात्वर्थानुरक्तां विदधाति। तदुक्तम् '**आख्यातप्रत्ययः पूर्वं विधत्ते कर्म शक्तितः। अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदितम्॥**' इति। (वा. पृ. ४६९)। न च विहितस्य विधानं संभवतीति प्रत्यभ्यासं कर्मभेदः एवेति। **न चात्र** वर्तमानापदेशरूपतया विध्यभ्यास एव नास्तीति वक्तव्यम्। 'वर्म वा एतद्यज्ञस्य क्रियते, यत्प्रयाजानूयाजा इज्यन्ते वर्म यजमानाय भ्रातृव्याभिभूत्यै' इत्यर्थवादसंबन्धेन पञ्चमलकारविधिर्निर्णीयते, विधिस्तुत्योरेकविषयत्वात्। यत्तु 'गुणो वा नामधेयं वा समिदादिपदं भवेत्। ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति॥' इत्युक्तम्, तत्र समिदादिपदानामुक्तक्रमेण गुणपरत्वा-



संभवादेव गुणस्य तावन्न भेदकत्वम्। नापि नामधेयस्य, अनन्यपरविध्याख्यातसमभिव्याहृतत्वात्। नहि अत्र अन्यथासिद्धविध्याख्याताभ्यासः, यथा 'उद्भिदा यजेत पशुकामः' इत्यत्र, तत्र प्रकृतस्यैव ज्योतिष्टोमस्य यजिशब्देनानूद्य पशुफले विधानेनापि विध्याख्याताभ्याससामर्थ्यान्न कर्मान्तरत्वम्। किं तर्हि? गुणस्यैव, ज्योतिष्टोमनामावरुद्धे नामान्तरस्य प्रवेशासंभवात् तत्र नामधेयमेव भेदकम्। अत्र तु अनन्याकृष्टतात्पर्यस्य आख्यातस्यैव कर्मान्तरमन्तरेण असंभवः। विध्याख्याताभ्यासस्यैव भेदकत्वे सिद्धे नामधेयमपि तद्विषयमेव व्यवतिष्ठते, न तु अग्रतः एव। तदुक्तम् '**प्रायेणाख्यातसंबन्धि नामेष्टं पारतन्त्र्यभाक्। तस्यैव प्रथमं तेन भेदाभेदनिमित्तता॥**' इति। (वा. पृ. ४६७)। न चैवं सति यथा अभ्यासात् भेदः, तथा 'समिधो यजति' इति बहुवचनश्रुतेः संख्यातोऽपि भेदः प्राप्नोतीति वक्तव्यम्। अनन्यगामिनी हि संख्या कर्मगता कर्म भिनत्ति यथा 'तिस्र आहुतीर्जुहोति' 'द्वादश द्वादशानि जुहोति' इति। इह पुनः 'समिद्भ्यः स्वाहा, इड्भ्यः स्वाहा' इति मान्त्रवर्णिकदेवतासंबद्धस्य नामप्रवृत्तिनिमित्तत्वात् देवताबहुत्वनिमित्तमेव एतद्बहुवचनम्, न चैतद्बहुत्वं कर्मनिमित्तमिति। अत्र च वाक्यान्तरावगतभावनाऽनुवादेन धात्वर्थविधानस्य पूर्वाधिकरणे निरस्तत्वात्, स्ववाक्यावगतभावनाऽनुवादस्य च पूर्वाप्राप्तत्वेन अनुवादासंभवात् भावनाऽभिधानम् अवश्याङ्गीकरणीयम्। विधिश्च अभ्याससहायो भेदकः इति सधात्वर्थामेव भावनां विधिर्भेदयति। अतो यत् भ्रान्ताः केचिज्जल्पन्ति धात्वर्थभेद एव अभ्यासतो धात्वर्थभेदाच्च भावनाभेद इति, तदुपेक्षणीयमेवेति।

प्रयोजनं पूर्वपक्षे एकस्मिन् कर्मणि देवतानां वैकल्पिकत्वात् सकृदनुष्ठानम्। सिद्धान्ते तु प्रत्यभ्यासं कर्मभेदेनानुष्ठानम्। **सूत्रं** तु– एकस्य पुनःश्रुतेरेवं स्यात्, यथा शब्दान्तरं भेदकं तथा स्यात्, अविशेषात्। अन्यथा कं चिद्विशेषमनभिदधत् वाक्यमनर्थकमेव स्यात्। **तौता.**

※ **एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्। २।२।२॥** 'समिधो यजति' 'तनूनपातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इति पञ्चकृत्वः अभ्यस्तो यजतिशब्दः। अत्र शब्दान्तरं नास्ति। किन्तु एकस्य यजतिशब्दस्य पञ्चकृत्वः पुनःश्रुतिरस्ति। सा एवं शब्दान्तरवत् कर्मणो भेदिका स्यात्। एकेन यजतिशब्देन यदुक्तम्, तस्मिन्नेव पुनःपुनःश्रवणे यजतिशब्देन विधीयमाने अविशेषात् विशेषाभावात् पुनःश्रवणम् अनर्थकं हि यस्मात् स्यात्। सार्थक्याय तु प्रत्यभ्यासम् अदृष्टभेदः स्वीकर्तव्यः। तस्मात् अभ्यासेनापि कर्मभेदः सिध्यति। समिदादयः पञ्च प्रयाजाख्या यागा विधीयन्ते। **के.**

* 'एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' इति न्यायः 'अभ्यासाधिकरणम्' इति बिन्दौ द्रष्टव्यः। (२।२।२). * चोदकेनाज्यभागौ, प्रत्यक्षेणाप्याज्यभागौ इति 'एकस्यैवं पुनःश्रुतिः' (२।२।२) **इत्यनेन न्यायेन** कर्मान्तरम्। **टुप्.** १०।७।९।२७. * वरणान्यपि चैतानि 'एकस्यैवम्०' इत्येवम् 'गुणश्चापूर्वसंयोगे०'(२।२।९।२३) इत्येवं यावच्छ्रुति भिद्यन्ते। **वा.** ३।७।९।२४. पृ. १०९०.

* एकस्य एव पुरुषस्य स्त्रीसद्वितीयस्य आधानेऽधिकारः। **भा.** ६।१।५।२२–२३.

※ **एकस्यैव वस्तुनः सदसत्त्वविरोधः इति न्यायः**। 'तस्याश्च (शक्तेः) सर्वगामित्वं तन्न्यायत्वात् प्रमीयते। नैकेषामेव सा ह्यस्ति, केषां चिद्वा न विद्यते॥' वा. १।३।४।८ पृ. २१६। अत्र **सुधा–** (पृ. २०७) तस्मिन् सर्वगामित्वे न्यायः युक्तिः यस्याः शक्तेरस्ति सा तन्न्याया, तद्भावस्तन्न्यायत्वम्। कीदृशो न्यायः? इत्यपेक्षायामाह– नैकेषामिति। एकस्यैव वस्तुनः सदसत्त्वविरोधादित्याशयः। सर्वेषामपि पुंसां वाचकशक्तिः न विद्यते इत्येतदपि नास्तीत्यर्थः। इति।

* एकस्य कर्मणः प्रक्रमात् प्रभृति आ समाप्तेः एककालत्वम्। **सु.** पृ. ७७९.

※ **'एकस्य कर्मभेदादिति चेत्' इति न्यायः। एकस्य कर्मभेदादिति चेत्। ३।७।९।२३॥ नोत्पत्तौ हि पुरुषाणाम्। २४॥** ज्योतिष्टोमादौ ऋत्विजां

संख्यानियमो नास्ति। एकः द्वित्रादिका वा ऋत्विजो वरीतव्याः। होता अध्वर्युः इत्यादयः समाख्यास्तु एकस्यापि कर्मभेदात् तत्तद्भिन्नकर्मकरणात् उपपद्येरन्। इति चेन्न। पुरुषाणाम् ऋत्विजाम् उत्पत्तौ उत्पत्तिवाक्येषु संख्यानियमस्योपलब्धत्वात्। इति न्यायसूत्रयोरर्थः। के.

* सत्यम् ( ऋत्विक्षु शमित्रा ) संख्याविवृद्धिर्गम्यते, न तु उत्पद्यमानेषु। या तु अनुत्पत्तिस्तेषु गम्यते, तत्र 'एकस्य कर्मभेदात्' इत्येवमत्रकल्पते। भा. ३।७।१३।२९. * होत्रादिसमाख्या च तस्यैव ( यजमानस्यैव ) तत्तत्कुर्वाणस्य 'एकस्य कर्मभेदात्' इत्यनेन न्यायेन भविष्यति इति मन्यते ( पूर्वपक्षी )। वा. ३।७।८।१८. * शमितृशब्दस्य कर्मयोगनिमित्तत्वेन 'एकस्य कर्मभेदात्' (३।७।९।२३) इति न्यायात् प्रकृतेषु ऋत्विक्षु ब्राह्मणेषु उपपत्तेः अब्राह्मणस्य शमितृत्वप्राप्त्यभावः। सु. ३।७ पृ. २८.

**꣸ एकस्य तूभयत्वे संयोगपृथक्त्वम् ।४।३।३।५॥**

अग्नीषोमीये पशौ आम्नायते 'खादिरे बध्नाति' इति, 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति च। अत्र श्रुतं खादिरत्वं किं नैमित्तिकमेव, उत नित्यार्थमपीति विचारे खादिरत्वं नैमित्तिकमेव, नित्यार्थे तु अन्यत् इति गोदोहनन्यायेन ( ४।३।२।५ ) पूर्वपक्षे प्राप्ते, सिद्धान्तसूत्रम्। तुशब्दः गोदोहनवैलक्षण्यार्थः। नेदं गोदोहनवत्, किन्तु खादिरत्वादेः एकस्यैव उभयत्वे नैमित्तिकत्वे नित्यत्वे च संयोगपृथक्त्वं कारणम्। क्रत्वर्थत्वेन संयोगः 'खादिरे बध्नाति' इति श्रुतः, पुरुषार्थत्वेन च संयोगः 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति श्रुतः। तस्मात् संयोगयोः पृथक्त्वात् एकस्यापि उभयार्थत्वं स्वीकार्यम्। एवम् 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादावपि ज्ञेयम्।

**शेष इति चेत्। ६ ॥**

खादिरत्वस्य उभयार्थत्वं स्वीकार्यम् इति सिद्धान्तिना उक्ते शङ्कासूत्रमिदम्। 'खादिरे बध्नाति' इत्यस्यैव 'खादिरं वीर्यकामस्य' इति वाक्यं शेषः स्यात्। उभयोरेकवाक्यता स्यात्। तथा च पुरुषार्थमेवेदं खादिरत्वं न क्रत्वर्थमिति। इति चेत्।

**नार्थपृथक्त्वात्। ८ ॥**

शङ्कां निराकरोति। नात्रैकवाक्यता। द्वयोरपि भिन्नसाध्ययोः परस्परसंबन्धो नास्ति। अर्थपृथक्त्वात् अर्थभेदात्। 'दध्ना जुहोति' इति होमप्रयोजनेनैव निराकाङ्क्षम्। 'दध्नेन्द्रियकामस्य' इति च इन्द्रियेण साध्येन निराकाङ्क्षम्। तस्मात् खादिरत्वं नित्यं क्रत्वर्थम्, वीर्यार्थे नैमित्तिकं पुरुषार्थं चेति उभयार्थत्वमेव। के.

* एकस्य उभयार्थत्वे संयोगस्य संयुज्यते तादर्थ्येन बोध्यते अनेनेति व्युत्पत्त्या वाक्यस्य पृथक्त्वं नानात्वं कारणम्। तदिहाप्यस्ति इति दधिखादिरादिकम् उभयार्थम्। सोम. ४।३।३. * एकस्य एकद्रव्यस्य, उभयत्वे उभयार्थत्वे, एकस्य दध्नः होमार्थत्वे इन्द्रियार्थत्वे च, संयोगस्य संयुज्यतेऽनेनेति व्युत्पत्त्या संयोगस्य वाक्यस्य, पृथक्त्वं वाक्यभेदः। वाक्यभेदादुद्देश्यपृथक्त्वमिति भावः। 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुयात्' इति च वाक्यद्वयम्। बृ. ४।३।४।५, * 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायः 'संयोगपृथक्त्वन्यायः' इति बिन्दौ द्रष्टव्यः। ४।३।३।५. * 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्येवम् अग्निष्टोमान्तस्य नित्यस्यैव कामसंयोग इति। वा. ३।६।१६।४३ पृ. १०७१, * ननु 'एतयाऽन्नाद्यकामं याजयेत्' इति वर्णविशेषेण असंबद्धं पृथक् राजसूयप्रयोगवचनादेव अवेष्टेर्वचनमस्ति। नैतदेवम्, तदा हि निर्ज्ञातक्षत्रियकर्तृकायाः कर्मान्तरे वचनान्तरेण अविधीयमानायाः पृथक्प्रयोगकारणाभावाच्च राजसूयमध्यस्थाया एव 'एकस्य' इत्यनेन न्यायेन साधारणं च स्वाराज्यं फलम्, प्रात्यात्मिकं चान्नाद्यं विज्ञायते। २।३।२।३ पृ. ५७९. * वैश्वदेवश्च आत्मनः अन्नस्य च संस्कारार्थः। 'तानेतान् यज्ञान् अहरहः कुर्वीत' इति, 'अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयात्' इति वचनात् च 'एकस्य तूभयत्वे०' इति न्यायाच्च। आचारमयूखः पृ. ५१.

* एकस्य युगपदनेकत्रोपलब्धिर्दृष्टा ( यथा आदित्यस्य )। बृहती. पृ. १९५.

* एकस्मिन्नपि बहुवचनं पूजाऽर्थम् आचार्यादिष्विव प्रयोक्तुं शक्यम् 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति। वि. ११।४।२०.



**꣸ एकस्मिन्नेकसंयोगात्। ३।३।१५।३९ ॥**

पौष्णं पेषणं विकृतौ चर्वर्थे भवति इत्युक्तम्। तत् पेषणं किं पौष्णे एकमात्रदेवत्ये भवति, द्विदेवत्येऽपि वा इति विचारे सिद्धान्तमाह। इदं पेषणं एकस्मिन् एव पूषणि देवे चर्वर्थे स्यात्। एकसंयोगात् 'पूषा प्रपिष्टभागः' इत्यत्र एकेनैव पूष्णा संबन्धावगमात्।

**धर्मविप्रतिषेधाच्च। ४० ॥**

पौष्णं पेषणम् एकमात्रदेवत्ये एव, न द्विदेवत्ये ऐन्द्रापौष्णादौ, धर्मविप्रतिषेधात् एकस्मिन्नेव चरौ पूषार्थे पेषणं इन्द्रार्थे च अपेषणम् इति पेषणापेषणरूपधर्मयोः विप्रतिषेधात् विरोधात्। तस्मात् एकदेवत्ये एव पेषणम्, न द्विदेवत्ये।

**अपिवा सद्वितीये स्याद्, देवतानिमित्तत्वात्। ४१ ॥**

पूर्वपक्षी आह। अपिवाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः। सद्वितीयेऽपि पूषणि पेषणं स्यात् द्विदेवत्ये। देवतानिमित्तत्वात् पेषणस्य, देवता पूषा निमित्तं यस्य पेषणस्य तादृशत्वात्। पूषदेवतासद्भावमात्रनिमित्तत्वावगमात्, द्विदेवत्ये च घटकतया पूषदेवतायाः सद्भावात्। तस्मात् एकदेवत्ये द्विदेवत्ये चापि पेषणं स्यात् इति पूर्वः पक्षः।

**लिङ्गदर्शनाच्च। ४२ ॥**

पेषणं देवतानिमित्तकम् इत्यत्र लिङ्गस्य दर्शनं भवति। 'तस्मात् पूषा प्रपिष्टभागः अदन्तको हि' इति स्तुत्यर्थवादः देवतानिमित्तकं पेषणं दर्शयति। 'सोमापौष्णं चरुं निर्वपेत् नेमपिष्टं पशुकामः' इति अर्धपिष्टतां दर्शयति। 'नेम' इति अर्धार्थे सर्वनाम। 'अर्धं पिष्टमर्धमपिष्टं भवति द्विदेवत्यत्वाय' इति देवतानिमित्तकमेव पेषणं दर्शयति। तस्मादपि सद्वितीयेऽपि पूषणि पेषणं स्यात् इति पूर्वपक्षः।

**वचनात् सर्वपेषणम्, तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति। ४३ ॥**

ननु 'सोमापौष्णं चरुं नेमपिष्टम्' इति पेषणे नेमत्वस्य विधायकमेव कुतो न स्यात्। ततश्च नेदं लिङ्गदर्शनम्। इति चेत्तत्राह पूर्वपक्षी। पेषणशब्देन उपलक्षणतया अर्धपेषणं ग्राह्यम्। यदि तत् वचनं विधिः स्यात्, तदा चरुपदस्योपलक्षणत्वं स्वीकृत्य सर्वपेषणं सर्वेषु चरौ पशौ पुरोडाशे चेति सर्वत्र पेषणं नेमपेषणं स्यात्, न चरावेव। कुतः ? तं प्रति, सोमापौष्णं चरुं पशुं पुरोडाशं च प्रति अर्धपेषणस्य शास्त्रवत्त्वात्, सर्वत्र नेमपेषं प्रति वा शास्त्रवत्त्वात्। शास्त्रम् अस्ति अस्य इति शास्त्रवान्, तादृशत्वात्। तत्र पुरोडाशे अर्थात् पेषणे प्राप्ते चरौ चरूपलक्षिते पशौ च अपेषणं भवति, पेषणं न भवति। तत्प्राप्त्यर्थं पूर्वोक्तं वचनं स्यात्, सर्वं चेदमयुक्तम्। तस्मान्नायं विधिः, किन्तु अनुवादः। तथा च तस्य लिङ्गत्वं सुस्थम्। अपेषणं भवति इत्यत्र भवतिना अन्वितस्य नञः पेषणपदेन समासः असमर्थः। सोऽपि 'किमोदनम् ? शालीनाम्' इत्यादिवत् न दोषाय। अथवा 'अ इति पृथक् नञर्थकं पदं निपातस्वभावम्। तथा च पेषणम् अ भवति, न भवतीत्यर्थः।

**एकस्मिन् वाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्यादचोदितत्वात्। ४४ ॥**

पौष्णं पेषणम् उभयदेवत्येऽपि इति पूर्वपक्षोक्तनिरासार्थो वाशब्दः। एकस्मिन् पूषमात्रैकदेवत्ये पौष्णं पेषणं भवितुमर्हति, न ऐन्द्रापौष्णादौ सद्वितीये पूषणि। अर्थधर्मत्वात् अर्थस्य यागस्य धर्मोऽयम्, न देवताधर्मः। अपूर्वधर्मोऽयम्। अथवा अयमत्र पूष्णो भागः, यः पूषणमुद्दिश्य त्यज्यते, यस्य द्रव्यस्य त्यागे पूषा देवता ! 'सोमापौष्णश्चरुः' इत्यत्र उभयोः सोमापूष्णोः व्यासक्तदेवतत्वात् केवलस्य पूष्णः सोमापौष्णे अचोदितत्वात् अविहितत्वात् अनुक्तत्वात् सोमापौष्णे चरौ पौष्णं पेषणं न स्यात्। ऐन्द्राग्नवत्, यथा ऐन्द्राग्नस्य पुरोडाशस्य व्यासक्तदेवताकत्वात् न केवलाग्नेयत्वम्। यथा वा ऐन्द्राग्नस्य ग्रहस्य न केवलैन्द्रत्वं तद्वत्। तस्मात् केवलपूषदेवताकं पेषणं न सोमापौष्णादौ द्विदेवत्ये।

**हेतुमात्रमदन्तत्वम्। ४५ ॥**

यदुक्तं पूर्वपक्षिणा 'अदन्तको हि' इति देवताधर्मं दन्तशून्यत्वं दर्शयति इति। तत्रोच्यते। इदम् अदन्तत्वं हेतुमात्रम्, हेतुवन्निगदार्थवाद एषः। तच्च पेषणस्य देवताधर्मत्वपक्षे इव अपूर्वधर्मत्वपक्षेऽपि उपपद्यते एव। तस्मात् पौष्णं पेषणं एकदेवत्ये एव न द्विदेवत्ये।

**वचनं परम् । ४६ ॥**

अथ यत् परं कारणमुक्तं पूर्वपक्षिणा 'नेमपिष्टं भवति' इति द्विदेवत्ये पेषणं दर्शयति, 'अर्धं पिष्टं भवति, अर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मं दर्शयति इति । अत्रोच्यते । परं परस्तात् उक्तं द्वितीयं कारणं वचनं भवति, अप्राप्ते पेषणे विधायकं वचनमिदं भवति । न च वाक्यभेदः । सति पक्षान्तरे अनेकार्थविधिः पक्षान्तराश्रयणेन परिह्रियते । असति पुनः पक्षान्तरे उच्चारणानर्थक्यप्रसङ्गपरिजिहीर्षया अनेकार्थं वाक्यम् अभ्युपगन्तव्यं भवति । तस्मात् न द्विदेवत्ये पेषणम् इति सिद्धान्तः । के.

* एकस्मिन्नेकसंयोगात् (३।३।२०।३९) इति पूषप्रविष्टभागविचारे पूषशब्देन सापेक्षपूषदेवत्यस्य ऐन्द्रापौष्णादेश्चरोर्ग्रहणं (नेति) वक्ष्यति । सु. पृ. ६४७. * 'एकस्मिन्नेकसंयोगात्' इत्यधिकरणं 'पूषाधिकरणम्' इति बिन्दौ द्रष्टव्यम् । ३।३।१५।३९–४६.

* एकस्मिन् कर्मणि एककार्याणां गुणानां विकल्पः । व्रीहियवयोः खादिरादीनां यूपद्रव्याणां बृहद्रथंतरयोश्च । भा. १२।३।४।१०–१५.

**एकस्मिन् कर्मणि भिन्नकार्याणां गुणानां समुच्चयः ॥**

**एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात् । १२।३।३।९ ॥**

**भाष्यम्**— ये एकस्मिन् कर्मणि गुणा बहवः शिष्यन्ते, तेषां सर्वेषां क्रिया स्यात्, समुच्चयः । एवं सर्वेषां शासनमर्थवद्भविष्यति । सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुगृह्यते । यथा आघारे, 'ऋजुमाघारयति' 'संततमाघारयति' 'प्राञ्चमाघारयति' इति च ।

**सोम**— अस्तु भिन्नकर्माश्रितधर्मेषु मुख्यत्वेन व्यवस्था, एककर्माश्रितेषु तु तन्न्यायानवतारात् अनियमः इत्युत्थितेः संगतिः । सूत्रे– सर्वकर्म सर्वेषां क्रिया स्यात् इत्यर्थः ।

**वि**— 'ऋजुत्वादय आघारे विकल्प्यन्ते न वा, ऽग्रिमः । एकार्थत्वा, ददृष्टार्थभेदात् संभवतोऽन्तिमः ॥'

**भाट्ट**— वाक्येन एकाघारार्थत्वेन विहितानामपि 'ऊर्ध्वमाघारयति' 'संततमाघारयति' 'ऋजुमाघारयति' इत्यादिना ऊर्ध्वत्वादीनामवान्तरकार्यभेदात् प्रयाजादिवदेव प्रधानप्रयोगविधिना सर्वेषां युगपद्ग्रहणेन समुच्चयावगतेर्न विकल्पमङ्गीकृत्य एकस्य एकेन प्रसङ्गसिद्धिः । ऊर्ध्वत्वं हि यथा दृष्टविधया आघारजनकम्, न तथा संततत्वम् । तत्तन्नियमादृष्टभेदस्तु स्फुट एव । अवघातपेषणादिवदेव एतेषां समुच्चयः ।

**मण्डन**— 'कर्मण्येकस्मिन् गुणाः स्युः समस्ताः ।'

**शंकर**— 'सर्वमूर्ध्वादि चाघारे ।'

* एकस्मिन् पात्रे सोमभक्षणे प्रसक्ते प्रथमभक्षो होतुः, ततोऽध्वर्योः, न तु अध्वर्योः प्रथमभक्षः । वि. ३।५।१३. * एकस्मिन् प्रयोगे प्रयाजाद्यङ्गस्य सकृदनुष्ठानम् । भा. ११।१।७।२९–३७, * एकस्मिन् वाक्ये अन्यार्थो विधीयमानो नान्येन संबध्यते वचनव्यक्तिभेदात् । ३।१।६।१२ पृ. ६९०.

**एकस्मिन् वाक्ये एकस्य शब्दस्य क चिन्मुख्यत्वं क चिद्गौणत्वम्, इति वैरूप्यं न युक्तम् इति न्यायः** । अत्र भाष्यम् । 'नह्येकस्मिन् प्रकरणे एकस्मिंश्च वाक्ये एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क चिन्मुख्यः क चिद्गौणः इत्यध्यवसातुं शक्यं वैरूप्यप्रसङ्गात्' इति । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः०' इति श्रुतौ खादौ 'जायन्ते' इति पदं यदि मुख्यार्थम्, तर्हि प्राणेऽपि मुख्यमेव ग्राह्यम् । रत्नप्रभा. २।४।१।१ ब्रसू.

* एकस्मिन् वाक्ये न खलु विधेयबाहुल्यं संभवति । वि. २।२।४.

**एका क्रिया द्व्यर्थकरी बभूव इति न्यायः ।** यथा मुमुक्षुणा श्रोत्रियेण क्रियमाणं कर्म सत्त्वशुद्धिद्वारा स्वस्य मोक्षहेतुः भवति, वृष्ट्यादिद्वारा जगत्स्थितिहेतुश्च भवति । अत उभयथाऽपि कर्म कर्तव्यमेवेति । साहस्री. ५२९.

**एकामसिद्धि परिहरतो द्वितीया आपद्यते इति न्यायः** बौद्धाधिकारे उदयनाचार्येणोक्तः 'अङ्कुरादिषु अकर्तृकं शरीराजन्यत्वात् इत्यत्र



शरीरीतिविशेषणेन स्वरूपासिद्धिं परिहरतो बौद्धस्य व्याप्यत्वासिद्धिरापद्यते' इत्यन्तेन । साहस्री. ९२.

* 'एकां गां दक्षिणां दद्यात्' (सोमापहारे) इत्यत्र गोरेकत्वेन प्राकृतसंख्यायाः बाधः । भा. १०।३।१५।५९.

**एकां पञ्चेति धेनुवत् । १०।३।१५।५९ ॥**

'यस्य सोममपहरेयुः एकां गां दक्षिणां दद्यात्, अभिदग्धे पञ्च गाः' इति श्रूयते । धेनुवत् यथा भूनाम्निक्रतौ एका धेनुः कृत्स्नस्य प्राकृतस्य क्रतुदाक्षिण्यस्य निवर्तिका तद्वत् एकाम् इति पञ्च इति च यत्रोक्तम्, तत्रापि ज्ञेयम् । एकस्याः पञ्चानां च दक्षिणासंबन्धः प्रत्यक्षः श्रूयते । तेन ताभिः प्राकृत्याः सर्वदक्षिणायाः व्यावृत्तिः इति पूर्वः पक्षः ।

**एके तु श्रुतिभूतत्वात् संख्यया गवां लिङ्गविशेषेण । ६२ ॥**

पूर्वपक्षव्यावृत्त्यर्थः तुशब्दः । न कृत्स्नक्रतुदक्षिणा निवृत्ता भवति । किन्तु एके मुख्याः आदौ पठिताः अर्था एव निवृत्ता भवन्ति । तथा च एकां गाम्, पञ्च गाः इत्यनेन द्वादशशतगवामेव निवृत्तिः नाश्वादीनाम् । गवां संख्यया संबन्धस्य श्रुतिभूतत्वात् । एकाम् इत्यस्य गाम् इत्यनेन, पञ्च इत्यस्य च गाः इत्यनेन साक्षात् संबन्धः श्रुतिभूतः न पारम्परिकः । एवं लिङ्गविशेषेण 'एकां गाम्' 'पञ्च गाः' इत्यनेन प्राकृतदक्षिणापदार्थेषु आदिभूता गोपदार्था एव निवृत्ता भवन्ति । तेन अश्वादयो यथापठिता एव दातव्याः स्युः । ६०–६१ इति द्वाभ्यां सूत्राभ्यां अन्तर्गर्भरूपम् अधिकरणान्तरं भवति । के.

**एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ।** (परि. १२७ पृ. ३३२) यत्र अन्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोऽयं न्यायः । 'कृञ् चानुप्रयुज्यते' इति सूत्रे भाष्ये स्पष्टोऽयम् । (शेखर.) । अस्याम् 'यत्र तत्र' इति शेषः । आकृतिः श्रावणप्रत्यक्षविषयताऽवच्छेदको धर्मः । आश्रये चोपचारात् प्रयोगः । तस्य च अर्थवतः एव व्याख्यानात् ग्रहणम् । तथाच यत्र वाक्ये यदर्थकयद्धर्मवतः प्रयोगोऽस्ति, तत्र वाक्ये तदर्थकतद्धर्मवतः एव सति संभवे प्रयोगो भवति, न तु तदर्थकभिन्नधर्मवतः इति परिभाषाऽर्थः । समानार्थकसमानधर्मवति एकस्मिन् तात्पर्यावधारणे अन्यत्र तादृशे शब्दे तात्पर्यग्राहकान्तरानपेक्षा इति लाघवमेवात्र बीजम् । (भूतिः)

* **एकस्या** याज्यायाः एकस्याः पुरोऽनुवाक्यायाश्चेति द्वयोः समुच्चयः एव, परस्परसापेक्षत्वात् साहित्यविधानाच्च । वि. १२।४।२ वर्णकं २.

* **एककपालः** पुरोडाशो वैश्वदेवपर्वणि द्यावापृथिव्यः, वरुणप्रघासेषु कायः, साकमेधेषु वैश्वकर्मणः, शुनासीरीये सौर्यः व्यम्बकाश्च, आग्रयणे द्यावापृथिवीयः, अवभृथे वारुणः । के. * एककपालः वरुणप्रघासगतः कायः, आग्रयणगतो द्यावापृथिव्यश्च वैश्वदेवपर्वगतद्यावापृथिव्यैककपालस्य धर्माणां ग्राहकः । भा. ७।३।१०।२६. * 'यजमान एककपालः' अत्र एककपालो यजमानत्वेन स्तूयते, न गुणविधिः, नापि नामधेयम् । वि. १।४।१३, * **एककपालाः** पुरोडाशा बहवश्चातुर्मास्येषु व्यम्बकनामकाः । तेषामभिघारणमस्त्येव । १०।८।५. * **एककपालम्** 'अपर्यावर्तयन् जुहोति' । इदम् उपयोगसमकालं द्रव्यसंस्कारकम् अदृष्टार्थं संनिपत्योपकारकम् क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म । प्रकृतौ तु पर्यावर्तनविधिः अदृष्टार्थः एव । बाल. पृ. ८३. * **एककपालस्य** सर्वहोमे स्विष्टकृद्यागस्य लोप एव, आज्येनापि च समापनं नास्त्येव । भाट्ट. ४।१।७. * **एककपालानां** वैश्वदेविकः एककपालः प्रकृतिः । भा. ७।१।५।२३.

**एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापर्यावृत्तिदर्शनादवभृथे च सकृद्व्यवदानस्य वचनात् । ७।१।५।२३ ॥**

साकमेधेषु 'एतद्ब्राह्मण एककपालः' इति श्रुतम् । इदमेककपालग्रहणं वैश्वदेविकस्य, उत वारुणप्राघासिकस्य इति विचारे वारुणप्राघासिकस्य एककपालस्य ग्रहणम् इति सिद्धान्तः । साकमेधिकेऽपि एककपाले वैश्वदेविका धर्माः प्राप्ताः तेषामतिदेशोऽनर्थकः । वारुणप्राघासिकस्य ये वैशेषिका धर्माः, 'हिरण्मय्यः स्रुचो भवन्ति, शमीमय्यो वा' इत्येवमादयः अप्राप्ताः, तेषामतिदेशः अर्थवान् । तस्मात् वारुणप्राघासिकस्यैककपालस्य इदं

ग्रहणमिति। सूत्रार्थस्तु, सर्वेषाम् एककपालानां वैश्वदेविकः एककपालः प्रकृतिर्भवति। एवं सति आग्रयणे द्यावापृथिव्यस्य एककपालस्य यः सर्वहोमः या च अपर्यावृत्तिः, तयोर्दर्शनं वैश्वदेविकस्य धर्मस्यैवानुवादः, नापूर्वो धर्मः। तस्मात् आग्रयणे सर्वहोमापर्यावृत्तिदर्शनात् वैश्वदेविक एव प्रकृतिः। सौमिके अवभृथे च वारुणस्य एककपालस्य सकृत् द्व्यवदानस्य वचनं भवति। वचनबलात् प्रधानहोमे सकृदवदानम्, स्विष्टकृति च पुनः सकृदवदानम्, इति द्विः सकृदवदानं भवति इति विशेषः। तस्मात् अवभृथे सकृत् द्व्यवदानस्य 'एककपालस्य द्विरवद्यति' इति वचनाच्च वैश्वदेविकैककपालस्य प्रकृतित्वेऽपि न विरोधः। ततश्च वैश्वदेविक एककपाल एव सर्वेषाम् एककपालानां प्रकृतिः। तथापि वारुणप्राघासिकेषु यो विशेषः 'हिरण्मय्यः शमीमय्यो वा स्रुचः' इति तत्प्राप्त्यर्थं वारुणप्राघासिकस्यैव एककपालस्य धर्माणां साकमेधीयैककपाले अतिदेशः, न साक्षात् वैश्वदेविकैककपालधर्माणाम् इति सिद्धान्तः। के.

* 'एककपालानां वैश्वदेविकः प्रकृतिः' इत्यधिकरणन्यायस्य (७।१।५।२३) स्वरूपम् '**अन्यलभ्यं न विधीयते**' इति। एतच्च 'आद्ये (साकमेधस्थपञ्चसंचरेषु अतिदेशविधिरस्ति इति पक्षे) एतदधिकरणन्यायस्य अन्यलभ्यत्वस्य अभावात्' इति भाट्टग्रन्थात् (७।१।५) ज्ञायते। के.

* **एककपाले** द्यावापृथिव्ये आग्नेयाष्टाकपालगतप्रथमकपालस्य विध्यन्तः। भा. १०।५।१।६, * एककपाले साकमेधीये वरुणप्रघासगतैककपालधर्माणामतिदेशः। ७।१।५।२३.

* **एककपालधर्माः** 'अलङ्कृत्य, अभिपूर्य, उपांशु यष्टव्यः' इत्येवमादयः। ७।१।५।२३, 'सर्वहुतं जुहोति' 'अपर्यावर्तयन् जुहोति' इति। ७।३।१०।२६, अवभृथे एव तु एककपालस्य द्विरवदानम्। भा. ७।१।५।३, * वरुणप्रघासगतकायै**ककपालधर्माणां** साकमेधीयवैश्वकर्मणैककपाले अतिदेशः। ७।१।५।२३.

* **एककपालमात्र**हविष्केष्टौ आवापिकस्विष्टकृल्लोपात् उत्तमानूयाजस्यापि लोपः। **भाट्ट.** १०।४।२०.

**एककपालैन्द्राग्नौ च तद्वत्। ७।१।४।२२॥**

वैश्वदेवे पर्वणि द्यावापृथिव्य एककपाल आम्नातः। वरुणप्रघासेषु च काय एककपालः आम्नातः, ऐन्द्राग्नो द्वादशकपालश्च। अथ साकमेधेषु वैश्वकर्मणमेककपालम् ऐन्द्राग्नमेकादशकपालं चाम्नाय 'एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालः, यद्ब्राह्मण इतरश्चेतरश्च' इति। तत्रेदं सिद्धान्तसूत्रम्। एककपालश्च ऐन्द्राग्नश्च तावेतौ तद्वत् स्याताम्, यद्वत् पञ्चसंचराणि। तथा च अत्रापि सविधिकस्य सार्थवादकस्य सर्वस्य काण्डस्यातिदेशः। चशब्दः पूर्वाधिकरणोक्तदृष्टान्तार्थः। अतिदेशोऽयम्। के.
* **एककपालैन्द्राग्नयोः** साकमेधीययोः वारुणप्राघासिककायैककपालैन्द्राग्नसंबन्धिसार्थवादविधिकाण्डातिदेशश्चातुर्मास्येषु। **भा.** ७।१।४।२२.

* **एककर्तृकोपाख्यानत्वे** सति वेदवाक्यत्वम् अर्थवादस्य परकृतित्वम्। **बाल.** पृ. १२.

**एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात्। ८।१।१५।२६॥**

'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति श्रुतम्। अस्ति च प्रकृतौ हविरभिमर्शनद्वयम् 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्यायाम्' इति। वेद्यां हविषि आसादिते 'पृथिवी होता' इत्यादिना चतुर्होतृसंज्ञकेन मन्त्रेण अध्वर्युः पौर्णमास्याम् अभिमृशति। न्युब्जेन पाणिना। अमावास्यायागे तु 'अग्निर्होता' इत्यादिना पञ्चहोतृसंज्ञकेन मन्त्रेण अभिमृशति। अथ सौर्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्रा अभिम्रष्टव्यः, यदा च अमावास्यायां सौर्यः प्रयुज्यते तदा पञ्चहोत्रा अभिम्रष्टव्यः, किंवा उभयत्र मन्त्रविकल्पः इति विचारे मन्त्रयोरुभयत्र व्यवस्था इति उत्सूत्रे पूर्वपक्षे सिद्धान्तमाह। एककर्मणि एकस्मिन् सौर्ये कर्मणि अभिमर्शनमन्त्रयोः विकल्पः स्यात्। हि यस्मात् चोदनैकत्वात् 'सौर्यं चरुं निर्वपेत्' इति चोदनाया एकत्वात् कर्मणः एकत्वात् अभिमर्शनमन्त्रयोः अविभागः समुच्चयः प्राप्नोति। स च एककार्यत्वात् न संभवति। तस्मात् विकल्पः इति सिद्धान्तः।



(अत्र पौर्णमास्यां सौर्ययागप्रयोगे चतुर्होत्रैवाभिमर्शनम्, अमावास्यायां सौर्ययागप्रयोगे तु पञ्चहोत्रैवाभिमर्शनम् इति मन्त्रयोर्व्यवस्थयैव विनियोगः। सामान्यस्तु विकल्प एव भवति, व्यवस्थितविकल्पः इति तु विशेषः इति युक्तमुत्पश्यामः। विकल्पसिद्धान्तस्तु तदवस्थ एव।) के.

* 'एककर्मणि विकल्पो विभागो हि चोदनैकत्वात्' इत्य**ष्टमाधिकरणन्यायेन** विकृतौ सायंप्रातर्होमाङ्गयोः अग्निसूर्ययोः विकल्पेन प्राप्तेः। (सा च व्यवस्थया)। **सु.** पृ. ७८८, प्रकृतौ विशेषाभावेऽपि कर्मभेदे सति, '**एककर्मणि०**' **इतिन्यायेन** एकस्य ऐन्द्रवायवादिवाक्यविहितस्य यागस्य विकृतौ विकल्पेन विध्यन्तातिदेशात् विकल्पेन एकस्य धर्माः कार्याः सकृच्च यागः, कर्मैक्ये यथाप्रकृति इति विशेषः। पृ. ८०७.

**एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात्। १२।३।३।९॥**

एककर्मणि एकस्मिन् कर्मणि बहूनां गुणानां शिष्टत्वात् विहितत्वात् सर्वकर्म सर्वेषां कर्म अनुष्ठानं स्यात्। यथा आघारे 'ऋजुमाघारयति' 'संततमाघारयति' 'प्राञ्चमाघारयति' इति विधानात् ऋजुत्व–संततत्व–प्राक्त्वानां समुच्चयः, एवमन्यत्रापि इति सिद्धान्तः। के.

* 'एककर्मणि शिष्टत्वात्' इत्यत्र आघारे ऋजुत्वोर्ध्वत्वदीर्घत्वसंततत्वानां समुच्चयः उक्तः। **बाल.** पृ. १७९.

* **एककार्याणां** करणमन्त्राणां विकल्पः। **भा.** १२।३।१३।२९, * एककार्याणां गुणानामेकस्मिन् कर्मणि विकल्पः। १२।३।४।१०-१५.

* **एकजातीयधर्मानुसमयो** वाजपेये प्राजापत्यपशुषु कर्तव्यः सहत्वानुग्रहाय। **भा.** ५।२।१।१-३.

* **एकतन्त्रत्वं** तन्त्रिणाम् एकदेशकालकर्तृत्वे एकवाक्यचोदितानां भवति यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ। यानि तु नानावाक्यैश्चोदितानि, तेषु तन्त्रस्य भेदः स्यात्। **भा.** १२।१।१।१.

* **एकतो द्वौ**, अन्यतः एकं द्व्यामुष्यायणानां आर्षेयवरणम्। **संकर्ष.** ३।४।८.

* '**एकत्र उभयम्**' इतिरीत्या विशिष्टवैशिष्ट्यज्ञाने विशेषणताऽवच्छेदकप्रकारकनिश्चयस्य हेतुत्वाभावः। **मणि.** पृ. १५. * **एकत्र** गुणस्यापि अन्यत्र प्राधान्यं न विरुद्धम्। देवतायाः पशुं प्रति गुणत्वेऽपि पशुपुरोडाशं प्रति प्राधान्यात्। **वि.** १०।१।९.

**'एकत्र द्वयम्' इति न्यायेन** षट्संख्यायाश्चतुःसंख्यायाश्च कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मदशकापत्तिः, षट्त्रिंशद्रात्रे 'षडहा भवन्ति, चत्वारो भवन्ति' इत्यत्र। **भाट्ट.** ८।३।२, * प्रकृतौ देशादिवाक्ये देशवत् अङ्गप्रधानसाहित्यस्यापि '**एकत्र द्वयम्**' **इति न्यायेन** प्रधानप्रयोगे वैशिष्ट्याङ्गीकारेण सकलविशेषणविशिष्टप्रयोगविधानात्। ११।२।१.

**एकत्र निर्णीतः शास्त्रार्थोऽन्यत्रापि तथा इति न्यायः।** यत्र स्वमतविरुद्धेषु नानाविधवादिमतेषु एकत्र प्रबलयुक्तिशास्त्रप्रमाणसिद्धस्वमतेन स्वमतविरुद्धवादिमतं निरस्तं चेत्, तद्वन्ये सर्वे निरस्ता ज्ञेया इति। **साहस्री.** २५८.

* **एकत्रिकः**। एकसंख्यायाः त्रिसंख्यायाश्च व्यतिषङ्गविधानात् एकत्रिकनामकः कश्चित् क्रतुर्भवति। स च एवं श्रूयते 'अथैष एकत्रिकः तस्य एकस्यां बहिष्पवमानं तिसृषु होतुराज्यम्, एकस्यां मैत्रावरुणस्य तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः' इति। **वि.** १०।५।२, * **एकत्रिके क्रतौ** आद्ये तृचे गानम्। १०।५।२.

**एकत्रिके क्रतौ एकस्या एव ऋचः त्रिरभ्यासेन त्रिकस्तोमधूर्गानम्॥**

**त्रिकस्तृचे धुर्ये स्यात्। १०।५।३।१०॥**

**भाष्यम्**–– अस्ति एकत्रिकः क्रतुः 'अथैष एकत्रिकः तस्यैकस्यां बहिष्पवमानम्, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः। एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः' इति। सन्ति तु धुरि सामानि। तेषु संशयः किं तृचे गेयानि, उत एकस्यामृचि इति। किं प्राप्तम्? त्रिकः स्तोमः तृचे स्यात् धुरिसामसु। एवं तृचप्रापकश्चोदकः अनुग्रहीष्यते। तस्मात् तृचे गेयमिति।

**एकस्यां वा, स्तोमस्यावृत्तिधर्मत्वात् । ११ ॥**

**भाष्यम्** — एकस्यां वा ऋचि गेयम् । स्तोमस्य हि तत्र आवृत्तिधर्मता भवति, वचनप्रामाण्यात् । इदं भवति वचनम् ' आवृत्तं धूर्षु स्तुवते ' ' पुनरावृत्तं पृष्ठैरुपतिष्ठते ' इति । किमिव वचनं न कुर्यात् । धुरि सामसु एकस्यामृचि गेयमिति ।

**सोम**— प्राकृतक्रमाबाधवत् इहापि प्राकृततृचाबाधो न्याय्यः इत्युत्थितेः ( दृष्टान्त- ) **संगतिः** । गायत्रविकारात्मकानि सामानि धूर्गानशब्देनोच्यन्ते । ' गीतिविकारो गायत्रस्य धुरः ' इति वचनात् । **सूत्रार्थस्तु**— धुर्ये धूर्गानसंपाद्यस्तोत्रमध्ये यत् त्रिकस्तोमकम्, तत् तृचेषु स्यात् इति ।

**वि**—' तृचे स्यादथ वैकस्यां धूर्गानम्, प्रकृताविव । तृचे भवे, दिहैकस्यां श्रुत्याऽऽवृत्तिविधानतः ॥ '

**भाट्ट**— प्रकृतौ कानि चित् धूर्गानसंपाद्यानि स्तोत्राणि, कानि चित् तदसंपाद्यानि । तदिह एकत्रिके त्रिकस्तोमकधूर्गानसंपाद्यस्तोत्रेषु किं विभिन्नासु तिसृषु ऋक्षु गानम्, उतैकस्याः एव ऋचः अभ्यासेन त्रिकस्तोमकता संपाद्या इति चिन्तायाम्, तृचगानप्रापिचोदकानुग्रहाय विभिन्नास्वेव तिसृषु गानम् । न च एकत्रिकप्रकरणे ' आवृत्तं धूर्षु स्तुवते ' इति वचनेन एकस्या एवर्चो अभ्यासविधानात् तद्बाध इति वाच्यम् । अस्य सामावृत्त्यभिप्रायकतया अनुवादत्वात् । तथाहि, न तावदनेन स्तोममात्रोद्देशेन आवृत्तिविधिः, अधूर्गानसंपाद्येऽपि तदापत्तेः । धूर्षु इत्यस्य विशेषणत्वे विशिष्टोद्देशापत्तेः, स्तोत्रोद्देशेन अभ्यासविधौ तस्यैवावृत्तिप्रसङ्गेन एकस्या एव ऋचः आवृत्तौ प्रमाणाभावाच्च । अतो धूर्गाने एवावृत्तिसंबन्धः ' स्तुवीत ' इत्यस्य अनुवादत्वमङ्गीकृत्य विधेयः । तस्य च तृचगानप्रापिचोदकादेव सिद्धेः अस्य वाक्यस्यानुवादत्वात् विभिन्नास्वेव तिसृषु गेयम् । इति प्राप्ते, समस्तवाक्यवैयर्थ्यापत्तेः अनेन धूर्षु निमित्तभूतासु स्तोत्रोद्देशेनैव आवृत्तिर्विधीयते, सप्तम्या निमित्तत्वोक्तेः । क्रतुगतभेदनस्यैव निमित्तत्ववत् उद्देश्यभूतस्तोत्राङ्गस्यैव धूर्गानस्य निमित्तत्वात् न स्तोत्रान्तरे आवृत्तिप्रसङ्गः । गुणसंकीर्तनात्मकस्तोत्रस्यैव तत्त्वेन धातुवाच्यत्वात् तदुद्देशेनैव आवृत्तिविधिः । अत एव लक्षणाप्रसङ्गेन आज्यत्वपृष्ठत्वादिना उद्देश्यत्वाभावात् न सकलस्यावृत्तिप्रसङ्गः । गुणसंकीर्तनात्मकस्तोत्रवृत्तेश्च ऋगावृत्तिमन्तरेणानुपपत्तेः एकस्या एवर्चः अभ्यासेन त्रिकस्तोमकता संपाद्या, तेन त्रिकस्तोमके धूर्षु तृचगानस्य पृथक्त्वनिवेशित्वमेव बाध्यम् । एकस्तोमके तु तृचगानमेव इति ध्येयम् ।

**मण्डन**— ' भवेदृगेका धुरि सामगीतौ । '

**शंकर**— ' एकस्यामृचि धूर्गानम् । '

* एकत्रिके क्रतौ माध्यंदिने पवमाने गानार्थं निखिल आद्यस्तृच एव ग्राह्यः, न तु त्रयाणां तृचाणाम् आद्याः तिस्रः ऋचः । भा. १०।५।२।७–९.

**ॐ एकत्रिके तृचादिषु माध्यंदिने, छन्दसां श्रुतिभूतत्वात् । १०।५।२।७ ॥**

अस्ति एकत्रिकः क्रतुः ' अथैष एकत्रिकः, तस्य एकस्यां बहिष्पवमानम्, तिसृषु होतुराज्यम् । एकस्यां बहिष्पवमानम्, तिसृषु होतुराज्यम् । एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः । एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः ' इति । अस्मिन् एकत्रिके क्रतौ माध्यंदिने पवमाने तृचादिषु तृचानां आद्यासु ऋक्षु स्तोत्रियासु गानं स्यात् । छन्दसां श्रुतिभूतत्वात्, श्रुतिभूतानि हि गायत्रीबृहतीत्रिष्टुभो नाम त्रीणि च्छन्दांसि प्रकृतौ उक्तानि ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा ' इति । तानीह चोदकप्राप्तानि उपसंहर्तुं शक्यन्ते यदि तृचाद्यासु गानम् । तस्मात् तृचादिषु गानम् इति पूर्वः पक्षः ।

**आदितो वा, तन्न्यायत्वादितरस्यानुमानिकत्वात् । ८ ॥**

एकत्रिके नाम क्रतुविशेषे माध्यंदिने पवमाने आदितः आद्ये तृचे एव गानम् । तन्न्यायत्वात्, सः पूर्वाधिकरणोक्तः कपालविषयको न्यायः यस्य माध्यंदिनपवमानगानस्य तत् तन्न्यायम्, तस्य भावः तन्न्यायत्वं तस्मात् । ' क्रमवतामेकदेशग्रहणे आदितः प्रवृत्तिः ' इति पूर्वोक्तो न्यायः । तेनैव न्यायेन अत्रापि निर्णयः । इतरस्य ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः ' इत्यत्रोक्तस्य



छन्दस्त्रयानुग्रहस्य चोदकप्राप्तत्वात् आनुमानिकत्वम् । आनुमानिकाच्च छन्दोऽनुग्रहात् क्रमानुग्रहो बलवान् । तस्मात् आद्ये तृचे एव गानम्, न तु त्रयाणां तृचानां आद्याऽऽद्यासु तिसृषु ऋक्षु इति सिद्धान्तः ।

**यथानिवेशं च प्रकृतिवत् संख्यामात्रविकारत्वात् । ९ ॥**

एकत्रिके नाम क्रतुविशेषे माध्यंदिने पवमाने यथानिवेशं यथाक्रमं आद्ये एव तृचे गानं न त्रयाणां तृचानां आद्याऽऽद्यासु ऋक्षु । प्रकृतिवत् यथा प्रकृतौ एवमत्रापि । ननु क्रमानुरोधे स्वीकृते ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः ' इत्युक्तः त्रिच्छन्दस्त्वविरोध एवेति, तत्राह । त्रित्वस्य संख्यामात्रस्य विकारः बाधः स्यात्, न च्छन्दसः न च क्रमस्य । क्रमानुग्रहस्तु मुख्यः, जघन्यः छन्दसाम् । तस्मात् आद्ये तृचे एव गानम् इति सिद्धान्तः । के.

* **एकत्वम्** ' अग्नीषोमीयं पशुमालभेत ' इत्यत्र विवक्षितम् । **भा.** ४।१।५।११–१६, * एकत्वम् अविवक्षितम् ' ग्रहं संमार्ष्टि ' इत्यत्र । ३।१।७।१४–१५. * **एकत्वस्य** कारकद्वारा क्रियाऽन्वयात् युक्ता विधेयता ( ' ग्रहं ' इत्यत्र । इदं पूर्वपक्षे ) । **सु.** पृ. १०१४.

**ॐ एकत्वयुक्तमेकस्य श्रुतिसंयोगात् । १३ ॥**

ज्योतिष्टोमे श्रूयते ' दशापवित्रेण ग्रहं संमार्ष्टि ' इति । अग्निहोत्रे ' अग्नेस्तृणान्यपचिनोति ' इति । तथा दर्शपूर्णमासयोः ' पुरोडाशं पर्यग्नि करोति ' इति । तत्र किम् एकं ग्रहम् एकस्य अग्नेः एकं पुरोडाशम् इति, किंवा सर्वेषां ग्रहाणां सर्वेषामग्नीनां सर्वांश्च पुरोडाशान् इति विचारे पूर्वपक्षमाह । संमार्जनं तृणापचयः पर्यग्निकरणं च एकत्वयुक्तं स्यात् । एकस्य श्रुतिसंयोगात् एकवचनोक्तस्य एकस्यैव श्रुतिसंयोगात् विधिश्रुत्या संयोगात् । ' ग्रहं संमार्ष्टि ' इति एकस्यैव ग्रहस्य संमार्जनेन संबन्धात् । एवम् उदाहरणान्तरेऽपि ।

**सर्वेषां वा, लक्षणत्वादविशिष्टं हि लक्षणम् । १४ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । सर्वेषां ग्रहाणां संमार्जनं कर्तव्यं नैकस्यैव । ग्रहत्वस्य लक्षणत्वात् कृत्स्नव्यक्त्युपस्थापकत्वात्, उद्देश्यताऽवच्छेदकत्वात् इति वा । ग्रहत्वजात्या द्रव्यं लक्षयित्वा संमार्गादि विधीयते । अविशिष्टं समानं हि यस्मात् लक्षणं सर्वग्रहेषु ग्रहत्वरूपम् । तस्मात् सर्वे ग्रहाः संमार्ष्टव्याः, सर्वेषामग्नीनां तृणान्यपचेयानि, सर्वे पुरोडाशाः पर्यग्नि कर्तव्याः । उद्देश्यगतस्य एकत्वस्य अविवक्षितत्वात् ।

**चोदिते तु परार्थत्वात् यथाश्रुति प्रतीयेत । १५ ॥**

ननु तर्हि ' पशुना यजेत ' इत्यत्रापि पुंस्त्वमेकत्वं च अविवक्षितं स्यात् इति चेन्नेत्याह । चोदिते विधेयतया उपादेये एकवचनसंयोगेन विहिते पशौ तु यथाश्रुति श्रुतिमनतिक्रम्य, श्रुतमेकवचनमनतिक्रम्य एकत्वं विवक्षितं प्रतीयेत । परार्थत्वात् यागक्रियां प्रति पुंस्त्वैकत्वयोर्गुणभूतत्वात् । इति विषमो दृष्टान्तः । तस्मात् ग्रहम् इत्यादौ एकवचनमविवक्षितम् । के.

* एकत्वयुक्तमेकस्य श्रुतिसंयोगात् इति ग्रहाधिकरणपूर्वपक्षसूत्रे अवघातादीनां श्रुतिसंयोगात् व्यवस्थाऽभ्युपगमे संमार्गाद्यपि एकवचनश्रुतिसंयोगात् एकस्मिन्नेव ग्रहादौ व्यवतिष्ठेत इत्यभिधानात् । **सु.** पृ. ११९१.

* **एकत्वसंबद्धः** सर्वोऽपि । **भा.** ९।३।१२।४०.

* **एकत्वसंमार्गयोरसंबन्धः** ' ग्रहं संमार्ष्टि ' इत्यत्र । **भा.** ३।१।७।१४ पृ. ७१५–१६.

* **एकत्वादयो** यदा विभक्त्यर्थाः, तदा कर्मादयो विशेषणत्वेनेति ! **भा.** ३।४।४।१३ पृ. ९२६.

**ॐ एकत्वादिवैलक्षण्यानुपलम्भन्यायः** । ' न शोणत्वादिवत् संख्या जातिभेदेषु भिद्यते । ' ( वा. ३।४।४।१३ पृ. ९२० ) इति वार्तिकोक्तेन एकत्वादिवैलक्षण्यानुपलम्भन्यायेन द्रव्यवत् कारकेष्वपि एकत्वाद्यवान्तरजात्ययोगः अभिहितः । **सु.** पृ. १४१५.

* **एकदेवताकत्वं** देवतात्वाश्रयप्रतिपाद्यैकार्थकत्वम् । एकत्वम् एकत्वसंख्याकत्वम् । **अर्थस्य देवतात्वपक्षे** तु एकदेवतात्वाधिष्ठानकत्वमेव एतत् । **भाट्ट.** ८।१।७.

* **एकदेवताकपशुगणे** दैवतैः अवदानैः दैवतानाम्, सौविष्टकृतैः सौविष्टकृतानाम्, ऐडैश्च ऐडैरनुसमयः वाजपेये प्राजापत्यपशुषु । **भा.** ५।२।६।१०–१२,

* एकदेवताकपशुगणे वसाहोमः तन्त्रम् । ११।२।५।२४.

* एकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थान् गमयितुं शक्नुवन्ति यथा गाव्यादयः । भा. १०। १।९।३४, * एकदेशेऽपि जातिनिमित्ताः ( शब्दाः ) दृष्टाः सर्वत्र जातिनिमित्ता भवितुमर्हन्ति । १।४।७।१०.

* "एकदेशेऽपि यः शब्दो दृष्टो जातिनिमित्तकः। तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना ॥' य एव लौकिका शब्दाः, त एव वैदिकाः, त एवामीषामर्थाः' इति स्थितत्वात् लोकप्रसिद्धिप्रतीते वेदे यत्रैकदेशेऽपि जातिनिमित्तता लभ्यते, न तत्र पुनर्निमित्तान्तरशक्तिकल्पना संभवति ।" (वा. १।४।७।१० पृ. ३४३) इति बर्हिराज्याधिकरणवार्तिकोक्तन्यायेन राज्यरहिते क्षत्रिये जातिनिमित्तत्वेनाभ्युपगतस्य राजशब्दस्य राज्ययोगिन्यपि क्षत्रिये जात्यत्यागात् अक्षत्रियेऽपि च अजहत्स्वार्थवृत्तित्वेन जात्यत्यागसंभवात् नानेकशक्त्यापादकं निमित्तान्तरं कल्पनीयम् । सु. पृ. ९०. * एकदेशेऽपि हूयमाने सर्वमिदं द्रव्यं देवतोद्देशेन त्यज्यमानं यागं साधयति । वा. ३।२।१७।१४, * एकदेशेष्वपि समुदायशब्दानाम् उपलब्धिः यथा 'ग्राम आयातः' इति । ३।३।१।१ पृ. ८०३.

* एकदेशकर्म अवयविनं न प्रयुङ्क्ते, विद्यमानस्य अवयविनः एकदेशः उपादातव्यः इति तत्रार्थो भवति । न अवयविनमुपाददीतेति । यथा 'इक्षुखण्डमस्मै प्रयच्छ' 'मोदकशकलमस्मै प्रयच्छ' इति न इक्षुमुपाददीतेति गम्यते । ( किन्तु ) सतः इक्षोः खण्डमुपाददीत, सतो मोदकात् शकलमुपाददीतेति । भा. ४।१।१३।२८.

ꣽ एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् । ११।२।१।१ ॥

दर्शपूर्णमासयोः मुख्यानां प्रधानानाम् एकदेशकालकर्तृत्वं तन्त्रं स्यात् । एकस्य प्रधानस्य यो देशो यौ कालौ ये च कर्तारः, ते एव देशकालकर्तारः इतरेषामपि प्रधानानाम् । एकशब्दोपदेशात् 'दर्शपूर्णमासाभ्याम्' इति एकेनैव शब्देन सर्वेषां प्रधानानामुपदेशात् । एकशब्दोपदेशात् समानदेशकालकर्तृकत्वं स्यात् । देशकालकर्तारो हि प्रयोगाङ्गम् । इति सिद्धान्तः ।

**अविधिश्चेत् कर्मणां नाभिसंबन्धः प्रतीयेत, लक्षणार्थाभिसंयोगाच्चोदनाविधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् । २ ॥**

पूर्वपक्षमाह । अविधिश्चेत् यदि देशकालकर्तृणां विधिर्न स्यात् तदा कर्मणाम् आग्नेयादीनां प्रधानानां प्रत्येकं देशादिभिः अभिसंबन्धः संबन्धो न प्रतीयेत । चोदनाविधिशेषस्तु अयं देशादिः । तस्मात् प्रत्येकं संबन्धः । लक्षणार्थाभिसंयोगात् । दर्शपूर्णमासशब्दः समुदायशब्दः, आग्नेयादयस्तु षट् समुदायिनः, समुदायशब्दस्य च समुदायिषु लक्षणा । तथा च लक्षणाऽर्थेन समुदायिभिः देशादीनां अभिसंयोगः संबन्धः ज्ञायते । इतरेषां देशादीनां च चोदनाविधिशेषत्वात् प्रधानविधिशेषत्वात् प्रधानशेषत्वात् इति यावत्, प्रतिप्रधानं देशकालकर्तृणां भावः स्यात् । तस्मात् देशकालकर्तृणां न नियमेन तन्त्रम् । ( ३, ८–१२ सूत्रैस्तु अन्तरागर्भिणी अधिकरणं पृथगेवेति ध्येयम् ) ।

**यदि तु कर्मणो विधिसंबन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् । ४ ॥**

सिद्धान्ती पुनराह । यदि आग्नेयादेः कर्मणः देशकालकर्तृणां विधिना संबन्धः स्यात्, ततः स्यात् चोदनाविधिशेषत्वम्, भेदेन च देशादयः । न तु तदस्ति । कुतः ? ऐकशब्द्यात् आग्नेयादीनां समस्तानां दर्शपूर्णमासाभ्याम् इति एकेन शब्देन बोधितत्वात् एकः शब्दो बोधको येषामाग्नेयादीनां ते एकशब्दाः, तेषां भावः ऐकशब्द्यं तस्मात् । प्रधानार्थाभिसंयोगात् । प्रधानं फलम्, प्रधानार्थः प्रधानसाधनार्थः आग्नेयादीनां प्रयोगरूपो व्यापारः, तेन देशादीनाम् अभिसंयोगात् एकशब्दबोधितैराग्नेयादिभिः देशादीनां संबन्धात् । फलसाधकेन प्रयोगेण तेषां संबन्धस्य अवगमात् न तेषां चोदनाविधिशेषत्वं भवति । तस्मात् देशकालकर्तारः तन्त्रम् ।

**तथा चान्यार्थदर्शनम् । ५ ॥**

'उग्राणि ह वा एतानि घोराणि हवींषि यदमावास्यायां संभ्रियन्ते, आग्नेयं प्रथममैन्द्रे उत्तरे' इति अन्यार्थदर्शनं सर्वेषां प्रधानानाम् एककालत्वं दर्शयति,



संभरणस्य पौर्वापर्यस्य च समकालत्वे एव संभवात् । तस्मात् तन्त्रम् । अमावास्यायां यानि त्रीणि हवींषि संभ्रियन्ते प्रथमम् अग्निदेवताकः पुरोडाशः, तत उत्तरे च द्वे सांनाय्यरूपे दधिपयसी इन्द्रदेवताके इति, तानि उग्राणि घोराणि च । अग्नेः इन्द्रस्य च उग्रत्वात् घोरत्वाच्चेति श्रुत्यर्थः ।

**श्रुतिश्चैषां प्रधानवत् कर्मश्रुतेः परार्थत्वात् । ६ ॥**

किञ्च एषां देशादीनां प्रधानवत् प्रधानानामिव श्रुतिः पुनःश्रुतिवत् अनुवादत्वेन प्रतीयते 'समे दर्शपूर्णमासाभ्यां यजेत' इत्यादिः । कर्मश्रुतेः 'दर्शपूर्णमासाभ्याम्' इति कर्मवाचकश्रुतेः परार्थत्वात् 'दर्शपूर्णमासाभ्यां करणभूताभ्याम् अन्यत् किमपि कार्यं कुर्यात्' इत्येतदर्थत्वात् । तस्मात् देशादिश्रुतिः प्रयोगचोदनापुनःश्रुतिः । तस्मात् तन्त्रम् ।

**कर्मणोऽश्रुतत्वाच्च । ७ ॥**

कर्मणः कार्यस्य प्रधानस्य देशादिवाक्ये अश्रुतत्वात् । तेन देशादेर्गुणभावोऽवगम्यते । तस्मात् प्रयोगचोदनायाः अनुवादो देशादिश्रुतिः । तस्मात् प्रधानानाम् एकदेशकालकर्तृकत्वं सिद्धान्तः । चकारः पूर्वहेतुसमुच्चयार्थः । के.

* एकदेशकालकर्तृत्वम् इत्येकादशाधिकरणे प्रधानकालतन्त्रता वक्ष्यते । ( अत्र सूत्रान्ते 'स्यात्' इति पदमधिकम् ) । सु. पृ. ७३३.

* एकदेशग्रहणे आदितः प्रवृत्तिः । यथा 'त्रिकपालो वैष्णवः' एतानि त्रीणि कपालानि अष्टाकपालस्य आदिमकपालत्रयस्य धर्मवन्ति । यथा वा 'एकां सामिधेनीमन्वाह' इयम् एका पञ्चदशसामिधेनीषु आदिमा ग्राह्या । यथा वा द्विरात्रत्रिरात्रादिषु द्वादशाहस्य आदिमत्र्यहस्य ( द्वितीयाहमारभ्य ) धर्माः इति । वि. १०। ५।१ । अस्यापवादस्तु एकत्रिके आज्यस्तोत्रेषु ( १०।५। २ ), एकत्रिके एव धूर्गाने ( १०।५।३ ) द्विरात्रादौ द्वादशाहस्य द्वितीयाहमारभ्य द्व्यहादिग्रहणे ( १०।५।४ ) अग्निचयने ( १०।५।५ ) आघ्ननमन्त्रेषु बीजावपनमन्त्रेषु च ( ९।३।११ ) । * एकदेशग्रहणेषु आनुपूर्व्यवतां आद्योपादानम् अन्त्यलोपश्चेति । भा. १०।५।१।१–६.

* 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगात्' इति चतुर्थाधिकरणे ( ४।१।१३।२८ ) एकदेशद्रव्यकस्य सतः कर्मणः संनिहितशेषसत्त्वात् न द्रव्यप्रयोजकत्वम् इति वक्ष्यते । कु. ३।४।१८।४३. * पुरोडाशधानाऽऽदीनां सवनीययागार्थत्वात् पूर्वेणैव न्यायेन ग्रहणश्रयणार्थम् अन्ये पुरोडाशकपालादयः इति प्राप्तेऽभिधीयते । 'एकदेशद्रव्यं च' इत्यनेन अप्रयोजकलक्षणाऽऽपत्तेः अन्यस्य च शकलस्याभावात् ( न अप्रकृतग्रहणमिति ) । वा. ३।८। १८।३३ पृ. ११३५, * यदा हि द्व्यवदानमात्रे हुते पुरोडाशादयः सशेषाः क्रियन्ते, तदा 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्येवमादिचोदनावशेन 'एकदेशद्रव्यं० संयोगात्' इत्येवं स्विष्टकृदादीनां अप्रयोजकत्वं भवति । ३।४।१४।३७ पृ. ९७४. * 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानैकदेशिसंयोगात्' ( सुधापाठः ) शेषसद्भावे शेषकार्योत्पत्तौ 'विद्यमानैकदेशिसंयोगात्' इति चतुर्थाधिकरणसिद्धान्तहेतुना शेषकार्याणाम् एकदेशप्रयोजकत्वम्, सर्वप्रक्षेपेण शेषभावप्रयोजकहेत्वभावात् द्रव्यान्तरोत्पादनेन शेषकार्योपपत्तिरित्याशयः । सु. पृ. १५१५. * विद्यमानसंयोगायोगे च शेषकार्याणां द्रव्यान्तरोत्पादनप्रयोजकत्वम् 'एकदेशद्रव्यं च' इत्येतदधिकरणशङ्कासूत्रे तस्य विद्यमानस्यैकदेशिनः समस्तस्य प्रधानदेवतायै निर्देशात् शेषकार्यार्थं अन्यत् द्रव्यम् अर्थात् उत्पाद्यम् इति सूत्रकारोऽपि वक्ष्यति । पृ. १५१६.

* 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' अप्रयोजकः ( ४।१।१३।२८ ) इति यदुक्तं तत्रोच्यते । ( पाठप्रदर्शनफलकोऽयमुद्धारः ) । वा. ३।३।१०।२२ पृ. ८७०. * 'एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात्' इत्यधिकरणे 'उत्तरार्धात् स्विष्टकृते समवद्यति' इत्युत्तरार्धशब्दस्य एकदेशवचनतया कस्योत्तरार्धात् इत्याकाङ्क्षायां प्रकृताग्नेयादिद्रव्यस्य इत्यवगमेन द्रव्यान्तराप्रयोजकत्वात् स्विष्टकृतः प्रतिपत्तित्वम् इति व्यवस्थापयिष्यते । कु. ३।३। १५।१८. * सिद्धान्ते तु विद्यमानशेषत्वात् चातुर्थिकन्यायेन ( एकदेशद्रव्यश्च इत्यनेन ) प्रतिपत्तिकर्मत्वात् अविवक्षितसंख्यशेषाख्यसंस्कार्यानुरोधेन सर्वेभ्यः ( हविर्भ्यः स्विष्टकृतः ) करणम् । भाट्ट. ३।४।१९.

**एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् । ४।१।१३।२८ ॥**

दर्शपूर्णमासयोः ' उत्तरार्धात् स्विष्टकृते समवद्यति ' इति श्रूयते । तत्र किं पुरोडाशस्य आग्नेययागः स्विष्टकृच्चोभयं प्रयोजकम्, आग्नेययाग एव वा प्रयोजकः इति विचारे सिद्धान्तसूत्रमिदम् । एकदेशद्रव्यः एकदेशः पुरोडाशस्य उत्तरार्धांशः द्रव्यं यस्य सः एकदेशद्रव्यः स्विष्टकृद्यागः पुरोडाशस्य न प्रयोजकः । चकारः प्रकरणप्राप्तमप्रयोजकत्वं परामृशति । उत्पत्तौ ' यदाग्नेयोऽष्टाकपालः ' इत्युत्पत्तिवाक्ये विद्यमानसंयोगात् । विद ज्ञाने इत्यस्य रूपं विद्यमानपदम् । विद्यमानेन अवगम्यमानेन आग्नेययागार्थेन पुरोडाशेन एकदेशद्रव्यकस्य स्विष्टकृतः संयोगात् । तथा च परप्रयुक्तोपजीवित्वात् स्विष्टकृद्यागः न प्रयोजकः इति सिद्धान्तः । एकदेशद्रव्यम् इति पाठे तु स्विष्टकृत्कर्म इति विशेष्यं ज्ञेयम् । ' विद्यमानैकदेशिसंयोगात् ' इति हेतुपदस्य सुधापाठे तु विद्यमानस्य एकदेशिनः समस्तस्य द्रव्यस्य प्रधानदेवतया संयोगात् संयोगनिर्देशात् इति सुधोक्तानुसारेणैव ( पृ. १५१६ ) व्याख्येयम् ।

**निर्देशात् तस्यान्यदर्थादिति चेत् । २९ ॥**

दर्शपूर्णमासयोः आग्नेयपुरोडाशस्य आग्नेययागः प्रयोजकः, न स्विष्टकृद्यागः इति पूर्वसूत्रेण सिद्धान्तिना उक्ते पूर्वपक्षः । निर्देशात् ' आग्नेयोऽष्टाकपालः ' इति तद्धितेन तस्य पुरोडाशस्य अग्नये एव निर्देशात्, तस्य स्विष्टकृदर्थे दानासंभवात्, स्विष्टकृद्विध्यन्यथाऽनुपपत्त्या अर्थात् अन्यत् पुरोडाशद्रव्यं स्विष्टकृदर्थम् उत्पादयितव्यम् इति स्विष्टकृदपि पुरोडाशस्य प्रयोजकः इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, शेषसंनिधानात् । ३० ॥**

सिद्धान्ती ब्रूते । स्विष्टकृदर्थम् अन्यः पुरोडाशः संपादनीय इति चेन्न शेषसंनिधानात् । शेषस्य परार्थस्य अग्न्यर्थस्य पुरोडाशस्य संनिधानात् प्रकृतत्वात् । यस्मिन् अनुत्पादिते शेषकार्ये न सिध्यति तदेव कार्यवशात् उत्पादनीयम् । प्रकृते तु परार्थपुरोडाशस्यैव संनिहितस्यैव उत्तरार्धात् स्विष्टकृद्यागे संभवति न पुरोडाशान्तरमुत्पादयितव्यम् । तस्मान्न स्विष्टकृद्यागः पुरोडाशस्य प्रयोजकः ।

**कर्मकार्यात् । ३१ ॥**

दर्शपूर्णमासयोः आग्नेयपुरोडाशस्य स्विष्टकृद्यागो न प्रयोजकः इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । कर्मणः हव्यवहनरूपस्य कार्यं फलं पुरोडाशस्य उत्तरार्धात् अवत्तस्य प्राप्तिः । तद्रूपत्वात् स्विष्टकृद्यागस्य न पुरोडाशप्रयोजकत्वम् । तथाहि श्रूयते ' देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति । सोऽब्रवीत् वरं वृणै, भागो मेऽस्त्विति । वृणीष्वेत्यब्रुवन् । सोऽब्रवीत्, उत्तरार्धादेव मह्यं सकृत्सकृदवद्यात् ' इति । कर्म कुर्वतो भागोऽयम् उत्तरार्धात् इति स्तुतिर्भवति । तस्मात् स्विष्टकृन्न प्रयोजकः ।

**लिङ्गदर्शनाच्च । ३२ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चयार्थः । ' तद् यत् सर्वेभ्यो हविर्भ्यः समवद्यति, तस्मादिदमुदरे विश्वरूपमन्नं समवधीयते ' इत्यर्थवादे सर्वत्वरूपस्य लिङ्गस्य दर्शनात् न आग्नेयादेव स्विष्टकृत् । तस्मात् न स्विष्टकृत् प्रयोजकः । तथा ' शेषात् स्विष्टकृते समवद्यति ' इति परार्थवचनशेषशब्दात् लिङ्गात् न स्विष्टकृद्यागः प्रयोजकः । के.

* **' एकदेशनियमे समस्तैकदेशिनियमः '** इति सौभराधिकरणन्यायस्वरूपम् । वा. २।२।१३।२९ पृ. ५७०, * एकदेशनियमे सति कांस्यभोजिन्यायेन समस्तनियमः सौभरादौ । २।२।१३।२९.

* **एकदेशन्यायः** । (४।१।१३।२८) न च क्रियान्तरस्यावच्छेदकत्वेऽपि प्रकरणावगतस्तोत्राङ्गभावानाम् आज्यादिभावनानाम् अङ्गप्रधानयोः एकदेशन्यायलभ्यस्थापनस्यैव अवच्छेदकत्वसंभवः । कौ. १।४।३।३ पृ. १८६.

* **एकदेशभिन्नम्** । यत् शकले विगतेऽपि प्रयोजनसमर्थम्, तत् एकदेशभिन्नम् । भा. ६।४।४।१०.

* **एकदेशभेदनादावपि प्रायश्चित्तम्** । वि. ६।४।४.

* **' एकदेशविकारे हि नित्यत्वं नोपपद्यते '** इति शाब्दिकमुख्यसिद्धान्तः । सोम. ६।१।१३.

**एकदेशविकृतमनन्यवत् इति न्यायः ।** अनन्यवत् इत्यस्य अन्यवन्न इत्यर्थः । छिन्नपुच्छे



शुनि श्वव्यवहारवत् । अयं न्यायः शास्त्रीयकार्ये एव, तेन शास्त्रीयविकारे एव इत्यपास्तम् । विकृतावयवनिबन्धनकार्ये तु नायम् । छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवत् । एवम् अक्तपरिमाणग्रहणेऽपि ( परिच्छिन्नपरिमाणेऽपि इत्यर्थः ) नायम् ( तेन संख्यात्वव्याप्यधर्मानयने, परिमाणत्वव्याप्यधर्मानयने, तद्घटितधर्मानयने च एतदप्रवृत्तिः ( तेन शतत्व–शतमुद्राघटितमञ्जूषात्वयोः, शेटकत्व–शेटकपरिमितधान्यघटितमञ्जूषात्वयोश्च नातिदेशः–भूतिः ) ( तथा च परिच्छिन्नार्थवाचकानां द्रोणाढकाद्येकद्व्यादिशब्दानां सर्वनामतिङादिशब्दानां च अनेन न्यायेन न्यूने न प्रवृत्तिः । तत्त्व. ) ( एकदेशः स्वावयवः, विकृतम् इति भावक्तान्तप्रकृतिकार्शआद्यजन्तम् । अनन्यवत् स्ववत् इत्यर्थः । तथा च स्वावयवविकारघटितं स्ववत् भवति इति यावत् । [ एकदेशः विकृतं इति कर्मधारयः समासः । विकृतशब्दस्य निपातनात् परनिपातः । तत्त्व. ] एकदेशो विकृतो यस्मिन् इति बहुव्रीहिर्वा बोध्यः । भूतिः । ) अर्धाधिकविकारे तु एतन्न्यायस्य न प्रवृत्तिः–तत्त्व. ।

एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवद्भवति इति । **महाभाष्यम्** ४।१।८३.

* एकदेशविकृतमनन्यवद्भवतीति न्यायः । अयं हि–' स्थानिवदादेशोऽनल्विधौ ' १।१।५६ इति सूत्रमहाभाष्येऽभिहितः । तथाहि– ' एकदेशविकृतस्योपसंख्यानम् । एकदेशविकृतस्योपसंख्यानं कर्तव्यम् । किं प्रयोजनम् ? पचतु, पचन्तु तिङ्ग्रहणेन ग्रहणं यथा स्यात् । एकदेशविकृतस्यानन्यत्वात् सिद्धम् । एकदेशविकृतमनन्यवद्भवतीति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा, श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति, नाऽश्वो न गर्दभः' इति । **साहस्री.** ३५०.

* **एकदेशविकृतन्यायेन** दीव्यत्–शब्दः ( प्राग् दीव्यतोऽण् पा० ४।१।८३ ) दीव्यतिशब्दवाच्यार्थं बोधयति । तत्त्व. परिभाषा ३७.

* एकदेशविकृतन्यायेन पुग्विशिष्टे घुसंज्ञया निर्वाहेण ( प्रणिदापयति इत्यत्र ) अवतरणासंगतिः इति यत्तु तन्न ( यदागमपरिभाषायाः शब्देन्दुकृतस्यावतरणस्य असंगतेः ) – तत्त्व. परिभाषा ११. * ऋकारैकदेशस्य रेफस्य लत्वे कृते **एकदेशविकृतन्यायेन** अच्कार्यसिद्धिः । शब्दकौस्तुभः ऋलृक्सूत्रे.

* **एकदेशव्यापारः** श्रूयमाणः नावयविनमुपादेयत्वेन चोदयति । **भा.** ४।१।१४।३४.

* **एकदेशस्तुतिद्वारेण** चैकदेशी स्तुतो भवति । **वा.** १।४।११।२० पृ. ३५१.

* **एकदेशानुमतौ सर्वानुमतिः इति न्यायः ।** मिथ्यात्वघटकासद्वैलक्षण्यरूपसत्यत्वानुमतौ सद्वैलक्षण्यानुमतेरपि संभवात् । यदि सद्रूपं स्यात्, तदा न शुक्तिज्ञानबाध्यं स्यात् इति बाधकतर्कसचिवस्य ' **एकदेशानुमतौ सर्वानुमतिः** ' इति न्यायस्य जागरूकत्वात् । **अद्वैतसि.** टिप्पणी पृ. ३३.

**एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम्, तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत् प्रयोगः स्यात् । ११।४।१२।४५॥**

दर्शपूर्णमासयोः व्रीहीणाम् अवहनने किं प्रतिप्रहारं मन्त्रः, उत सकृदेवादौ इति विचारे सिद्धान्तमाह । एकद्रव्ये एकस्मिन् व्रीह्यादौ द्रव्ये संस्काराणाम् अवहननादीनाम् ' आ तण्डुलनिर्वृत्तेः एकमिदं कर्म ' इति एककर्मत्वं व्याख्यातम् ( ५।२।७।१५ ) । यत्र तु मन्त्रार्थस्य नानात्वम्, तस्मिन् आवृत्तौ सत्यां मन्त्रस्य असकृत् प्रयोगः स्यात् । प्रकृते तु एक एव मन्त्रार्थः, करणत्वात् मन्त्रस्य । तस्मात् अवहननमन्त्रस्य सकृत् प्रयोगः इति । के.

* **एकद्रव्यपदार्थ**शब्देन कर्मपदार्थ उच्यते एकद्रव्यश्चासौ पदार्थश्चेति । एकद्रव्यम् आश्रयभूतं तस्यैव, न द्रव्यपदार्थस्य गुणपदार्थस्य वा । **ऋजु.** पृ. १९८.

* **एकद्विदेवतत्वम्** इष्टिप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* **एकद्विबहुशब्दाः** संख्यावचनाः, तामनभिधाय ( तेषाम् ) संख्येये वृत्त्यसंभवात् । वा. ३।४।४।१३ पृ. ९२४.

* **'एकधा अस्य त्वचमाच्छयतात्'** अयं लोट् मन्त्रगतः श्रौतो विधौ । **बाल.** पृ. २९. * ' एकधा अस्य

त्वचमाच्छयतात् ' इत्यत्र एकधा इत्येष शब्दः ऐकध्य-वचनः । एकीकुरु एषां त्वचः इत्यर्थः । बह्वीषु त्वक्षु एकीकरणम् एकधाशब्दो वदति इत्यवसेयम् । भा. ९।३।११।३१.

**एकधेत्येकसंयोगादभ्यासेनाभिधानं स्याद्-सर्वविषयत्वात् । ९।३।११।३० ॥**

( एकधा इति पृथक् पदम् । ) अध्रिगुप्रैषे 'एकधा-ऽस्य त्वचमाच्छयतात् ' इत्याम्नायते । द्विपश्वादिषु पशुगणेषु स एकधाशब्दः अभ्यसितव्यो न वेति विचारे सिद्धान्तमाह । एकधा इति अभ्यासेन अभिधानम् उच्चारणं स्यात् । एकधैकधा इत्यभ्यसितव्यम् । एकसंयोगात् एकेति-शब्देन संयोगात् । एकशब्दात् प्रकारार्थे धाप्रत्ययः । 'एकधा अस्य त्वचम् आच्छयतात्' अस्य पशोः त्वचम् एकधा एकेन प्रकारेण एकेन प्रयत्नेन छिन्नां कुरु इति तस्यार्थः । छो छेदने दिवादिः । एकश्च प्रयत्नः एक-स्मिन् पशौ स्यात् पशुद्वये तु प्रयत्नद्वयं स्यात् । तस्मात् पशुगणे ' एकधैकधाऽनयोस्त्वचौ , एकधैकधैकधैषां त्वचः' इत्यूहः कर्तव्यः इति सिद्धान्तः ।

**अविकारो वा, बहूनामेककर्मवत् । ३१ ॥**

पूर्वपक्षी आह । वाशब्दः अभ्यासपक्षव्यावृत्त्यर्थः । अविकारः एकधापदस्य अभ्यासरूपो विकारो न स्यात् । एकधाशब्दः एकस्मिन् काले एकस्मिन् देशे वा त्वचः एकीकुरु इत्याह । तस्मात् बह्वीषु त्वक्षु एकीकरणम् एकधा-शब्दो वदति । तच्च अभ्यासं विनैव सिध्यति । बहूनाम् एककर्मवत् ' एकधा गाः पाययति ' इत्यत्र बहूनां गवाम् एककाले पायनं यथा कर्तुं शक्यते तद्वत् । एकं कर्म इव एककर्मवत् इति विग्रहः ।

**सकृत्त्वं त्वैकध्यं स्यादेकत्वात्, त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्, पदेष्वभ्यासेन विवृद्धावभिधानं स्यात् । ३२ ॥**

एकधापदस्य अभ्यासो न कर्तव्यः इति यत् पूर्व-पक्षिणा उक्तं तद्व्यावृत्त्यर्थः तुशब्दः । एककाले कर्मणि अभिधीयमाने ऐकध्यम् एकधात्वं नाम सकृत्त्वं साहित्यं त्वचाम् अभिहितं स्यात् । तच्च प्रकृतौ त्वचः एकत्वात् अनभिप्रेतं स्यात् , असंभवात् । तथा च प्रकृतौ अग्नी-षोमीये पशौ ऐकध्यम् एकधाभावः एकप्रयत्नः एव स्यात् न सहत्वम् । तदेव च परेषु अनेकपशुकयागेषु तत्प्रकृति-त्वात् अग्नीषोमीयप्रकृतिकत्वात् , विवृद्धौ पशूनां त्वचां च विवृद्धौ अपि चोदकेन प्राप्तत्वात् एकधापदस्य एक-प्रयत्नवाचकस्य अभ्यासेनैव अभिधानं स्यात् । तस्मात् पशुगणे एकधापदस्य अभ्यास एवेति सिद्धान्तः । के.

* 'एकधा ब्रह्मणे परिहरति' इति कृष्णलेषु भक्षाणाम् उपहारः सह कर्तव्यः इत्यर्थः । भा. १०।२।४।१७.

**एकधाऽधिकरणम्** । अध्रिगुप्रैषगतैकधाशब्दस्य पशुगणे यावत्त्वचमभ्यासः ॥

**एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् । ९।३।११।३० ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभते ' इति । तत्र अध्रिगु-प्रैषे समाम्नायते ' एकधाऽस्य त्वचमाच्छयतात् ' इति । तत् विकृतौ द्विपश्वादिषु संदिह्यते, किम् एकधाशब्दः अभ्यसितव्यः, उत अविकारेण प्रयोक्तव्य इति । किं प्राप्तम् ? एकधा इत्ययमभ्यसितव्यः । कुतः ? एक-संयोगात् । एकः त्वचः प्रकारः आच्छयता (छिन्दता) कर्तव्य इति । तत्र द्वयोर्बह्वीषु वा त्वक्षु उत्कृत्यमानासु नैकः प्रकारो भवति । पर्यायेण हि पशुभ्य आच्छयन्ति । एकस्यां त्वचि आच्छयमानायाम् एकेन प्रकारेण आच्छयेयुः । तस्मात् असर्वविषयो भवति अविकृतः शब्दः प्रयुज्यमानः । तस्मात् अभ्यसितव्यः इति ।

**अविकारो वा, बहूनामेककर्मवत् । ३१ ॥**

**भाष्यम्**— वाशब्दात् पक्षो विपरिवर्तते । नैतदस्ति अभ्यसितव्य इति, अविकारेण प्रयोक्तव्य इति । कुतः ? ऐकध्यवचन एष शब्दः, एकीकुरु, एषां त्वचः इति । किं तत्र ऐक्यम् ? एककालोपदेशो वा एकदेशोपदेशो वा । बहूनामेककर्मवत् । बहूनाम् एककाले कर्माणि भवन्ति, ' एकधा गाः पाययति ' इति, एवमिहापि ऐकध्यं त्वचः कुरु इति । बहूनां तु एकीकरणं शक्यते कर्तुं न एकस्यास्त्वचः । तस्मात् बह्वीषु त्वक्षु एकीकरणम् एकधाशब्दो वदति इत्यध्यवसेयम् ।



**सकृत्त्वं त्वैकध्यं स्यादेकत्वात् त्वचोऽनभि-प्रेतम्, तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धा-वभिधानं स्यात् । ३२ ॥**

**भाष्यम्**-- तुशब्दः पक्षं व्यावर्तयति । न अविकारः, अभ्यसितव्यः शब्द इति । एककाले कर्मणि अभिधीयमाने सहत्वं त्वचामभिहितं भवति । तत् प्रकृतौ एकस्यां त्वचि असंभवात् अनभिप्रेतम् । तत्प्रकृतित्वा-दुत्तरासां ततीनां परेषु वर्धमानेषु पशुषु अभ्यासेनाभि-धानं स्यात् ।

**शा**— ' **प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः । तादृगेवातिदेशेऽपि स हि कार्यपरो यतः ॥**' कार्यप्रधानो हि अतिदेशः, न शब्दस्वरूपपरः । तेन प्राकृतम् एकप्रयत्नसाध्यत्वं प्रत्येकं त्वचाम् अभिधातुम् ' एकधैकधा ' इत्येवम् अभ्यसितव्यम् ।

**सोम**—संसर्गिषु इव अविकारः इत्युत्थितेः **संगतिः** । प्रतिपशु एकप्रयत्नसाध्यत्वं न लभ्यते इति तदर्थम् अभ्यास एव स्वीकर्तव्यः । **सूत्रार्थस्तु**- एकधा इत्यभ्यासेनाभिधानं स्यात् एकसंयोगात् अभ्यासेन विना सर्वविषयत्वासंभवात् इति ।

**वि**-- ' एकधेत्यविकारः स्यादभ्यासो वा , सह-त्वतः । आद्यो, मैवं प्राकृतस्य सकृत्त्वस्योचितत्वतः ॥ '

**भाट्ट**-- तत्रैव प्रैषे ( अध्रिगुप्रैषे ) ' एकधाऽस्य त्वचमाच्छयतात् ' इति श्रुतम् । तत्र षष्ठ्यन्तं द्वितीयान्तं च पशुगणे द्विबहुवचनान्तेन ऊहितव्यम् इत्यविवादम् । एकधाशब्दस्य तु अविकारः अथवा अभ्यासात्मको भाक्त ऊहः इति चिन्तायाम्, एकधा-शब्दस्य एकप्रयत्नसाध्यत्वे एकदेशकालकत्वे च लौकिक-प्रयोगेण नानाऽर्थकत्वावगतेः प्रकृतौ एकत्वात् त्वचः देशतः कालतो वा साहित्यरूपार्थासंभवेन त्वचः साकल्यसंपत्तये एकप्रयत्नसाध्यत्वस्यैव ग्राह्यत्वेऽपि विकृतौ अश्रुताभ्यासकल्पने प्रमाणाभावात् एकधाशब्देन अर्थान्तरभूतं देशतः कालतो वा अनेकत्वक्छेदनसाहित्य-मेव शक्त्या प्रकाश्यते इति अविकारात् अनूहः । यदि तु उपकारपृष्ठभावेन पदार्थानामतिदेशात् प्रकृतौ यस्य शब्दस्य योऽर्थो निर्णीतः, तस्य तदर्थपृष्ठभावेनैव प्राप्त्यवगतेः न अर्थान्तरप्रकाशनस्य प्रयोजनत्वकल्पनम् उपपत्तिमत् इति विभाव्यते, तदा अस्तु एकप्रयत्न-साध्यत्वमेव विकृतौ अपि एकधाशब्दार्थः । तथापि तु नाभ्यासः सकृदुच्चरितेनैव एकधाशब्देन सर्वत्वग्गतैक-प्रयत्नसाध्यच्छेदनकत्वस्य वक्तुं शक्यत्वात् । **यद्यपि** च सहितानां सर्वासां त्वचाम् एकप्रयत्नसाध्यच्छेदनकत्वं बाधितम् , **तथापि** प्रतिप्रधानं गुणावृत्तेर्युक्तत्वात् , उद्देश्यानां त्वचां साहित्याविवक्षणाच्च प्रत्येकमेव संमार्गा-दिवत् तासु एकप्रयत्नसाध्यच्छेदनकत्वस्य अन्वयबोधोप-पत्तेः नार्थोऽभ्यासेन । **इति प्राप्ते**, प्रकृतौ यादृशनिर्णयं प्रति यादृशपदज्ञानस्य यादृशसामग्रीसत्त्वे फलोपधायकता, विकृतावपि तादृशसामग्रीसत्त्वे एव तादृशपदज्ञानस्य तादृशनिर्णयोपधायकत्वं वाच्यम् , इतरथा प्रकृतिवद्भावा-नुपपत्तेः । तदिह प्रकृतौ एकधाशब्देन सहकार्यन्तरनैर-पेक्ष्येणैव त्वक्त्वं विशेष्यताऽवच्छेदकीकृत्य त्वग्विशेष्य-कैकप्रयत्नसाध्यच्छेदनकत्वप्रकारकः पर्याप्तिसंसर्गको निर्णयो जनितः । न चासौ विकृतौ सकृदुच्चरितेन एकधाशब्देन सहकार्यन्तरनैरपेक्ष्येण संभवति, तस्य समुदितत्वक्त्वं विशेष्यताऽवच्छेदकीकृत्यापि तादृशबोध-जनकत्वात् । अतश्च तादृशबोधे बाधितविषयत्वप्रति-संधानस्यापि उक्तनिर्णये सहकारिकारणता वाच्या इति अधिकसामग्रीकत्वात् प्रकृतिवद्भावबाधापत्तिः । अतः प्राकृतसहकारिकारणमात्रेण प्रत्येकत्वग्विशेष्यकनिरुक्तबोध-जननार्थम् एकधापदस्य यावत्त्वचमभ्यासः आवश्यक एव । सोऽयम् अभ्यासमात्रेण प्रकृतितः अन्यथाभावात् ऊहः इति व्यवह्रियते । न तु अयं वस्तुतः संस्कारोहादि-साधारणोहलक्षणाक्रान्तः इति ध्येयम् ।

**मण्डन**-- ' अभ्यासमृच्छेत् पदमेकधेति । '

**शंकर**-- ' अभ्यस्यं तत्रैकधेति च । ' तत्र अध्रिगुप्रैषे ।

* **एकधाऽधिकरणन्यायस्य** स्वरूपम् ' प्रकृतौ अन्यार्थत्वेन निर्णीतस्य शास्त्रस्य विकृतौ अतिदेशेन अन्यार्थपरता न न्याय्या ' इति । बाल. पृ. १००.

* **एकधाशब्दः** एकप्रकारवचनः । सकृत्त्वमपि एकप्रकारः, सहत्वमपि । तद्यथा , यः सकृत् गाः

पाययति, सः ‘एकधा पाययति’ इत्युच्यते। योऽपि सह प्रापयति सोऽपि एकधा प्रापयतीति। भा. १०।२।४।१७.

* ‘**एकधैकधा**’ इति प्राकृतस्यैव सकलस्य पदस्य अभ्यासात्मक ऊहोऽयं पशुगणे। बाल. पृ. १२७.

**एकधोपहारे सहत्वं ब्रह्मभक्षाणाम्, प्रकृतौ विहृतत्वात्। १०।२।४।१८ ॥**

शतकृष्णले चरौ शेषभक्षेषु श्रुतम् ‘एकधा ब्रह्मणे परिहरति’ इति। तत्र एकधा इत्यनेन उपहारे उपहरणे ब्रह्मभक्षाणां सहत्वं गम्यते। प्रकृतौ विहृतत्वात् दर्शपूर्णमासयोः इमे भक्षाः विहृताः भिन्ने काले भेदेन दत्ताः भवन्ति। ते इह चोदकेन विहृता एव प्राप्ताः, तत्र सहत्ववचने एकधाशब्दः अवकल्पते। तस्मात् शतकृष्णले ब्रह्मभक्षाः युगपत् परिहर्तव्या इति सिद्धान्तः। के.

**एकनिष्पत्तेः सर्वं समं स्यात्। ४।१।९।२२॥**

चातुर्मास्यगतवैश्वदेवपर्वणि ‘तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्’ इति श्रुतम्। दध्यानयनस्य आमिक्षा वाजिनं च उभयमपि प्रयोजकम्, आमिक्षैव वा प्रयोजिका इति विचारे पूर्वपक्षसूत्रमिदम्। निष्पद्यते इति निष्पत्तिः, कर्मणि क्तिन्। एकेन दध्यानयनेन सुतप्ते पयसि दधिप्रक्षेपेण आमिक्षावाजिनयोरुभयोर्निष्पत्तेः, सर्वम् आमिक्षा वाजिनं चेत्युभयम्, समं प्रयोजकं स्यात् उभयोः प्रयोजकत्वं तुल्यमेव स्यात्।

**संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात्। २३ ॥**

सिद्धान्तयति। वाशब्दः पूर्वपक्षव्यावर्तकः। आमिक्षा प्रधानं प्रयोजिका स्यात्। कुतः? संसर्गरसनिष्पत्तेः दधिपयसोः संसर्गेण उभयरसस्य मधुरस्य आमिक्षायामेव निष्पत्तेः। वाजिने तु तिक्तकटुको रसो निष्पद्यते। तस्मात् दध्यानयनस्य आमिक्षैव प्रयोजिका, न वाजिनम्। रसस्य निष्पत्तिः रसनिष्पत्तिः, तस्याः संसर्गरसनिष्पत्तेः इति पञ्चमी।

**मुख्यशब्दाभिसंस्तवाच्च। २४ ॥**

दध्यानयनस्य आमिक्षैव प्रयोजिका न वाजिनम् इति सिद्धान्तस्य साधकं हेत्वन्तरम् उपन्यस्यते अनेन सूत्रेण। अर्थवादे आमिक्षायाः स्तुतेः सैव प्रधानम्। कथम्? ‘मिथुनं वै दधि च शृतं च, अथ यत् संसृष्टं मण्डमिव मस्त्विव परिदृश्यते गर्भ एव सः’ इति गर्भशब्देन आमिक्षायाः अभिसंस्तवः कृतः। मिथुनस्य च गर्भः प्रयोजको न गर्भोदकम्। तस्मात् आमिक्षैव दध्यानयनस्य प्रयोजिका न वाजिनम्। मुख्यस्य आमिक्षारूपद्रव्यस्य बोधकः शब्दः मुख्यशब्दः गर्भशब्दः, तस्य तद्बोध्यस्य द्रव्यस्य अभिसंस्तवात्। अथवा मुख्यशब्देन गर्भशब्देन आमिक्षारूपद्रव्यस्य अभिसंस्तवात् इति समासः। हेतुसमुच्चयार्थश्चकारः। के.

* ‘एकनिष्पत्तेः सर्वं समं स्यात्’। (सोमक्रयणी–) नयनादुभयं निष्पद्यते क्रयः पदं च। तस्मादुभयं प्रयोजकम्, नहि गम्यते विशेषः। तदुक्तम् ‘एकनिष्पत्तेः०’ इति (इति पूर्वपक्षः)। भा. ४।१।१०।२५ पृ. २११.

* **एकपदरूपा** तिङन्तात्मिका विनियोक्त्री श्रुतिर्यथा, ‘यजेत’ इत्यादिका श्रुतिर्भावनायां धात्वर्थस्य करणत्वं प्रतिपादयति। बाल. पृ. ४२, * एकपदरूपा सुबन्तात्मिका विनियोक्त्री श्रुतिर्यथा ‘पशुना यजेत’ इति। अत्र पदश्रुत्या एकत्वं पश्वङ्गं प्रतीयते। पृ. ४२.

‘**एकपदोपात्तानामेकविशेष्यकत्वमौत्सर्गिकम्**’ **इति न्यायेन** एककार्यकारणभावकल्पनालाघवानुरोधेन च यदि संख्याविशेष्ये भावनाऽन्वयः इत्याग्रहः, तदा अस्तु आख्यातलक्ष्ये एव कर्त्रादौ उभयान्वयः (कृतेः संख्यायाश्चेति)। रहस्य. पृ. २७.

* **एकपात्राणाम्** अनुज्ञापनं स्यात्। एकपात्रे सोमे साधारणे संस्कर्तव्ये (भक्ष्यमाणे) न्यायेन समो विभागः प्राप्नोति। तत्राविभज्य पीयमाने कदा चिदन्येन (ऋत्विजा) पातव्यमन्यः पिबेत्। तत्रानुज्ञापनं संभवति, ‘त्वयाऽर्धं पातव्यं मयाऽर्धम्, कदा चिदभ्यधिकं न्यूनं वा पिबेयं तदनुज्ञातुमर्हसि’ इति। भा. ३।५।१७।४२, * एकपात्राणामेव ज्योतिष्टोमे सोमभक्षणम् अनुज्ञापनपूर्वकम्। ३।५।१७।४२.

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्। ३।५।१३।३६ ॥**

ज्योतिष्टोमे सोमशेषभक्षणे निमित्तत्रयमुक्तम्, तेषां संनिपाते च समुच्चयः इत्यप्युक्तम्। तदनुसारेण यत्र एकस्मिन् पात्रे बहवो भक्षयन्ति, तत्र केन क्रमेण भक्षणम् इति विचारे, एकपात्रे भक्षे प्राप्ते अध्वर्युः पूर्वः प्रथमः सन् भक्षयेत्, आदौ भक्षयेदित्यर्थः। कुतः? क्रमात्, ‘हुत्वा भक्षयति’ इति होमानन्तर्यं भक्षस्य दर्शयति। यस्य हस्ते सोमः स एव आदौ भक्षयेत् इति युक्तम्। इति पूर्वः पक्षः।

**होता वा, मन्त्रवर्णात्। ३७ ॥**

पूर्वपक्षस्य निरासार्थं वाशब्दः। अध्वर्युः न पूर्वं भक्षयेत्, किंतु होता एव पूर्वं भक्षयेत्। कुतः? ‘होतुश्चित् पूर्वे हविरद्यमाशत’ इति, ‘होतेव नः प्रथमः पाहि’ इति च मन्त्रवर्णात्। होतुः चित् अद्यम् अदनीयं हविः आशत भक्षयत, इति प्रथमस्य मन्त्रपादस्यार्थः। यथा होता प्रथमं पिबसि, तथा त्वं पिब इति द्वितीयपादार्थः। अनयोर्मन्त्रयोः होतुः प्रथमं भक्षणं स्पष्टं दर्शितम्।

**वचनाच्च। ३८॥**

सिद्धान्ते हेत्वन्तरप्रतिपादनार्थं सूत्रम्। हेत्वन्तरसमुच्चयार्थश्चकारः। ‘वषट्कर्तुः प्रथमभक्षः’ इति वचनाच्च होतैव पूर्वं भक्षयेत्। प्रथमत्वविशिष्टो भक्षः प्रथमभक्षः। स च वषट्कारमुच्चारयितुः होतुः इत्यक्षरार्थः श्रुतेः।

**कारणानुपूर्व्याच्च। ३९ ॥**

सिद्धान्ते तृतीयहेतुप्रदर्शनार्थं सूत्रमिदम्। कारणानां भक्षनिमित्तानाम् आनुपूर्व्यात् क्रमात् होता पूर्वम्, पश्चात् अध्वर्युः भक्षयेत् इति सिध्यति। वषट्कारो होतुर्भक्षनिमित्तम् आदौ भवति ततो होमो निष्पद्यते, तच्च अध्वर्योर्भक्षनिमित्तम्। तस्मात् अध्वर्योः पूर्वं होता भक्षयेत्। पूर्वमनतिक्रम्य वर्तते इति अनुपूर्वम्। तस्य भावः आनुपूर्व्यं क्रमः। चकारो हेतुसमुच्चयार्थः। के.

* एकपात्रे होतुः प्रथमं सोमस्य भक्षः। भा. ३।५।१३।३६–३९.

* **एकपुरोडाशायामपि** पौर्णमास्याम् (प्राक् सोमात्) उपांशुयाजविधिः। भा. १०।८।१८।६२–७१.

* **एकप्रत्ययरूपा** श्रुतिर्यथा ‘पशुना’ इति सुब्रूपा, ‘यजेत’ इति तिङ्रूपा च। तया हि कर्त्रेकत्वादिसंख्या भावनायां विनियुज्यते। बाल. पृ. ४२.

* **एकप्रयोगवचनपरिगृहीतानि** सर्वाण्यङ्गानि युगपत् प्राप्तानि भवन्ति। वि. ११।१।३.

* **एकप्रसरताभङ्गापत्तिः**। ‘वषट्कर्तुः प्रथमभक्षः’ इति समासरूपे एकस्मिन् पदे एकांशेन उद्देश्यत्वे, एकांशेन विधेयत्वे चाङ्गीक्रियमाणे एकप्रसरताभङ्गापत्तेः कर्मान्तरमेवेदम्। सर्वत्र उद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात् पूर्वम् उद्देश्यस्य उद्देश्यत्वेन क्रियाऽन्वयः अवश्यं वाच्यः, पश्चादेव विधेयस्य यागस्य उद्देश्ये अन्वयः इति स्थितिः। अतश्च क्रियाऽन्वयात् पूर्वं भक्षप्राथम्ययोः विशेषणविशेष्यभावानवगमात् एकार्थीभावलक्षणसामर्थ्यभङ्गात् अपरिपूर्णस्य समासपदस्य पदान्तरेण आख्यातेनापि अन्वयायोगात्। अतश्च एकप्रसरताभङ्गभिया भक्षान्तरमेव विधेयम्।

तत्रतत्र एकप्रसरताभङ्गपरिहारप्रकारो वक्ष्यते– ‘लोहितोष्णीषाः’ इत्यादौ अतिदेशात् पूर्वमेव लोहितोष्णीषविशिष्टकर्तार एव प्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलकाः इत्यादि। प्रकृते एकप्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मणि अनिवेशात् गुणादेव वषट्कर्तृप्राथम्योभयविशिष्टभक्षान्तरमेव विधीयते सोमसंस्कारार्थम्। भाट्ट. ३।५।८, * ‘अयज्ञिया वै माषाः’ अत्र लक्षणया यज्ञोद्देशेन माषनिषेधविधानात् नैकप्रसरताभङ्गः। ६।३।६, * ‘एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः उद्देश्यविधेयभावस्य अनेकपदसाध्यत्वात्। मीन्या. * एकस्मिन् पदे उद्देश्यविधेयभावाङ्गीकारे एकप्रसरताभङ्गापत्तेः। १०।७।१८, * ‘त्र्यङ्गैः स्विष्टकृतं यजति’ इत्यत्र स्विष्टकृद्यागसाधनीभूताङ्गानुवादेन त्रित्वविधाने विशिष्टोद्देशः एकप्रसरताभङ्गश्च आपतति... (पूर्वपक्षे)। १०।७।३, * न तावत् ज्योतिष्टोमोद्देशेन संस्थोद्देशेन वा संख्यया विधिः ‘शताग्निष्टोमम्’ ‘शतोक्थ्यम्’ ‘शतातिरात्रम्’ इत्यत्र एकप्रसरताभङ्गापत्तेः। ८।३।४, * पञ्चावत्तैव वपा इति पञ्चावदानवाक्ये एकप्रसरताभङ्गपरिहारार्थं पञ्चत्वविशिष्टावदानान्तरस्य

प्राकृतकार्यापन्नस्य वपोद्देशेन विधानम् । अत एव द्वितीयपक्षे पञ्चत्वांशे नित्यत्वसिद्ध्यर्थे विधिः, अवदानांशे च हविष्ट्वसिद्ध्यर्थम् एकप्रसरताभङ्गपरिहारार्थे चेति द्रष्टव्यम् । १०।७।१८, * 'पञ्चावत्तैव वपा कार्या' इति वचनेन एकप्रसरताभङ्गभयेन प्राकृतकार्यापन्नावदानान्तरविधेरावश्यकत्वात् । १०।७।२, * 'पूषा प्रपिष्टभागः अदन्तको हि' इत्यत्र न तावत् भागशब्दलक्षितयागोद्देशेन पेषणविधिः एकप्रसरताभङ्गापत्तेः । ३।३।१३, * पृषदाज्यम् । आज्योद्देशेन पृषत्त्वमात्रं विधीयते । एकप्रसरताभङ्गमिया वा पृषत्त्वविशिष्टाज्यस्यैव अतिदेशप्रवृत्तितः पूर्वप्रवृत्तौ पृषत्त्वमात्रफलको विधिः । १०।४।२५.

* **एकभागत्वं** मैत्रावरुणस्य न द्विभागत्वं ज्योतिष्टोमे अग्नीषोमीये पशौ । भा. १०।७।७।२०-२१.

**एकमन्त्राणि कर्माणि इति न्यायः ॥**

(एक एव मन्त्रः अङ्गत्वेन करणं येषां तानि एकमन्त्राणि । एकस्य कर्मणः करणभूतो मन्त्रः एक एव भवति इत्यर्थः ।) सत्याश्रौ. १।१।३४. * अग्निर्यजुर्भिः (तैआ. ३।८) इत्येकविंशतिर्मन्त्राः संभारयजूंषि । समाप्ते अनुवाके (शेषे च सति मन्त्राकाङ्क्षायाम्) पुनरभ्यासः कार्यः **एकमन्त्राणि कर्माणि** इति न्यायात् । सत्याश्रौ. सूत्रवृत्तिः २८।३।९. * तत्र कहोडादिषु अर्थात् तर्पयामिशब्दः कार्यः । सर्वत्र प्रतिवाक्यं तर्पणं कुर्यात् । 'एकमन्त्राणि कर्माणि' इति न्यायात् । आश्व. गृ. नारायणवृत्तिः ३।४।४. * 'नमो अस्तु सर्वेभ्यः' इत्येतेषां (त्रयाणां मध्ये) एकेन सर्पशिर उपदधाति (चयने, 'एकमन्त्राणि कर्माणि' इति न्यायात्) । सत्याश्रौ. ११।७।६३.

**एकयैव हि बुद्ध्याऽसौ गृह्यते चित्ररूपया । पदार्थाहितसंस्कारचित्रपिण्डप्रसूतया ॥'** इतिन्यायेन अरुणादिभिः क्रमेणावगतैरपि एकस्मृत्यारूढैः युगपदेव क्रयभावना अन्वयमनुभवति । रत्न. ६।१।५।२२ वर्णकं २.

**एकर्चस्थानि यज्ञे स्युः, स्वाध्यायवत् ।१।६।१।१॥**

रथंतरबृहदादीनि सामानि यज्ञे एकर्चस्थानि स्युः एकस्यामृचि गातव्यानि, न तृचे । स्वाध्यायवत् । यथा स्वाध्यायकाले एकस्यामृचि गीयन्ते तद्वत् । एका चासौ ऋक् च एकर्चम् । 'ऋक्पूरब्धूःपथामानक्षे' (पा० ५।४।७४) ऋच्-पुर्-अप्-धुर्-पथिन् एतदन्तस्य समासस्य (अ अनक्षे) अ-प्रत्ययः स्यात् । अक्षे अर्थे या धूः तदन्तस्य तु न । इति अ-प्रत्ययः । अर्धर्चादित्वात् नपुंसकत्वम् । एकर्चे तिष्ठन्ति इत्येकर्चस्थानि । इति पूर्वः पक्षः ।

**तृचे वा, लिङ्गदर्शनात् । २ ॥**

पूर्वपक्षं वाशब्दो व्यावर्तयति । यज्ञे सामानि तृचे गेयानि, न एकर्चे । 'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति, द्व्यक्षरेणोत्तरयोः' इति लिङ्गदर्शनात् । नहि तृचं विना प्रथमायाः उत्तरयोः इति च निर्देशः संभवति । 'एकं साम तृचे क्रियते स्तोत्रीयम्' इत्यर्थवादपूर्वको विधिरपि तत्र प्रमाणम् । तस्मात् सामानि यज्ञे तृचे गेयानि इति सिद्धान्तः । के.

* **एकलक्षणया** अनेकलक्षणा बाध्यते । यथा दशमे 'रथघोषेण' इत्यत्र समाहारद्वंद्वः इति पूर्वपक्षे पदद्वयलक्षणा स्यात्, तत्पुरुषे तु पूर्वपदे एवेति, स एव युक्तः इति सिद्धान्तः । बाल. पृ. १४३.

* **एकवचनमेकस्मिन्** इति प्रायिकमेतत् दारादिषु व्यभिचारात् । बृहती. पृ. १३०-१३१.

* **एकवचनान्तः** कथं पुनर्बहूनां वाचको भविष्यति ? इति यदि उच्यते, समुदायतया अवकल्पिष्यते । भा. २।२।३।३ पृ.४७९, * भवति हि बहूनाम् **एकवचनान्तः** शब्दः समुदायापेक्षः, यथा यूथम्, वनम्, कुलम्, परिषद् इति । पौर्णमासी, अमावास्या इति च विद्वद्वाक्यार्थौ शब्दौ । २।२।३।३ पृ. ४८०.

* **एकवचनान्तबहुवचनान्तपाशमन्त्रयोः** द्विवचनान्तेन ऊहः द्विपशुकायां विकृतौ । भा. ९।३।४।१०-१४.

* **एकवचनान्तमेधपतिशब्दस्य** पशुगणे ऊहः । भा. ९।३।१४।४४, * एकवचनान्तमेधपतिशब्दस्य बहुदैवत्ये पशौ द्विवचनान्तेन विकल्पः । ९।३।१३।४२-४३.



* **एकवाक्यम्** । यावन्ति पदानि एकं प्रयोजनमभिनिर्वर्तयन्ति तावन्ति एकं वाक्यम् ; भा. २।२।१२।२७ पृ. ५६०, * **एकवाक्यस्य** द्वावर्थौ विधातुमशक्यौ । १।४।२।३ पृ. ३३१.

* **एकवाक्यगतस्य** विपरिणामः अन्यस्मादेषितव्यात् लघीयान् । कुतः ? प्रत्यक्षा तेनैकवाक्यता, परोक्षा अन्येन । भा. ३।४।८।२४.

* **एकवाक्यचोदितानाम्** एकदेशकालकर्तृकत्वे एकतन्त्रत्वं भवति । यथा दर्शपूर्णमासयोः । यथा च चित्रायामिष्टौ । भा. १२।१।१।१ पृ. २२१५.

* **एकवाक्यता** आकाङ्क्षावशेन भवति, पूर्वप्रतीते च उत्तरम् आत्मानुगुणमधिकं वा आकाङ्क्षति । वा. ३।३।१।२ पृ. ८०६, * एकवाक्यता च सति विशेषणविशेष्यभावे भवति नान्यथा । सोऽपि च सामानाधिकरण्येन भवति समानविभक्त्यन्तानाम्, वैयधिकरण्येन वा क्रियाकारकरूपः शेषशेषिरूपश्च । ३।४।४।१३ पृ. ९२३. * एकवाक्यता विधेर्विधेश्च नहि भवति, वचनव्यक्तिभेदात् तत्र एकवाक्यतारूपं बाध्येत । भा. ३।४।१।९, * अनन्तरमुच्चरितेन हि **एकवाक्यता** भवति । अनन्तरसंबद्धं हि विशेषणं विशानं विशेष्टुं शक्नोति । नहि व्यवहितम् । १०।३।११।४१. * 'तस्मात् पदेषु यावत्सु श्रूयमाणेषु दृश्यते । विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता ॥' लोकमन्त्रब्राह्मणेषु अव्यभिचारि एतदेव वाक्यलक्षणम् इति स्थितम् । वा. २।१।१४।४६ पृ. ४४५.

* न अन्यार्थ इति ज्ञानेन संनिहितेनापि एकवाक्यता भवति अन्यसंबन्धोपपत्तौ सत्याम् । यथा 'भार्या राज्ञः पुरुषो देवदत्तस्य' इति । भा. ३।८।१६।३१, * न च द्वाभ्यामपि सह एकवाक्यता स्यात् । यदा एकेन एकवाक्यता, तदा तेन निराकाङ्क्षस्य न अन्येनापि एकवाक्यता कल्प्यते । ९।१।२।२ पृ. १६४२, * न च बुद्धौ असंनिहितेन एकवाक्यता भवति । द्वाभ्यां पदार्थाभ्यां वाक्यार्थः संजन्यते नान्यतरेण । संनिधौ समाम्नानस्य एतदेव प्रयोजनम्, कथम् उभाभ्यां पदार्थाभ्यां विशिष्टां बुद्धिम् उत्पादयेयुरिति । अनन्तरावबुद्धेन वाक्यार्थः शक्यते कर्तुम् । असंबद्धपदोच्चारेण च नानन्तरोऽवबुद्धो भवति । तस्माद् व्यवहितेन सह नैकवाक्यता भवतीति । ३।१।११।२१ पृ. ७३४. * नहि अङ्गाङ्गित्वरहितयोः उभयोः स्वतन्त्रयोः परस्परासंबद्धयोः विधीयमानयोः एकवाक्यता भवति, वचनव्यक्तिभेदात् । अन्या हि प्रधानविधेः तावन्मात्रोपसंहारिणी वचनव्यक्तिः, अन्या च स्तुतेः पराङ्गभावानुगतरूपा । वा. ३।४।१।९, * नहि विधायकाविधायकगतयोर्विशेषणविशेष्यभावेनैकवाक्यता, 'छागस्य वपायाः' इति वपाविशेषणं छागशब्दः । ६।८।१०।३१, * 'पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते । लोकसिद्धे, न तत्रास्ति वाक्यैकत्वनिमित्तता ।' यदि हि वाक्यं पदवत् वाचकं भवेत्, ततस्तदेकत्वानुवर्तिता वाक्यार्थस्याभ्युपगम्येत कदा चित् । यदा तु पृथग्भूतैरेव पदैरितरेतरनिरपेक्षैः स्वेषु पदार्थेषूक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति, तद्वशेन च तावन्ति पदानि एकं वाक्यम् इत्यवधार्यते, न तदा वाक्यतदेकत्वयोः व्यापारं पश्यामः । २।१।१४।४६ पृ. ४४५, * प्रत्यक्षेण विधिना यथाकथञ्चित् एकवाक्यतायां संभवन्त्यां न परोक्षा **एकवाक्यता** युक्ता । तथा सति च अनेकादृष्टकल्पना स्यात् । ३।४।१।९. * अर्थैकत्वाच्च **एकवाक्यतां** वक्ष्यति । भा. १।१।१।१ पृ. ५.

**एकवाक्यताऽधिकरणम् ॥**

**अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् । २।१।१४।४६ ॥**

**भाष्यम्**— अथ प्रश्लिष्टपठितेषु यजुःषु कथमवगम्येत, इयदेकं यजुरिति ? यावता पदसमूहेन इज्यते तावान् पदसमूह एकं यजुः । कियता चेज्यते ? यावता क्रियाया उपकारः प्रकाश्यते तावत् वक्तव्यत्वात् वाक्यमित्युच्यते । तेनाभिधीयते अर्थैकत्वादेकं वाक्यमिति । एतस्माच्चेत् कारणादेकवाक्यता भवति, तस्मादेकार्थः पदसमूहो वाक्यम् । यदि च विभज्यमानं साकाङ्क्षं पदं भवति । किमुदाहरणम् 'देवस्य त्वा सवितुः प्रसवे' इति । ननु पदंपदमनैकार्थम् । सत्यं, न तु तद्विभागे साकाङ्क्षम् । न तर्हि अर्थैकत्वमुपपद्यते, बहुत्वात् पदार्थानाम् । पदसमुदायस्य च पृथगर्थो नास्तीत्युक्तम् ।

भेदः संसर्गो वा वाक्यार्थः इति यद्युच्यते, तथापि एकार्थता न स्यात्। बहुपदे भेदानां संसर्गाणां च बहुत्वात्। एकप्रयोजनत्वाद्युपपन्नम्। यथा तावत् देवस्य त्वेति निर्वापप्रकाशनम्। तस्य विशिष्टस्य वाचक एतावान् पदसमूहः, तत् वाक्यम्। नन्वत्र ‘देवस्य त्वा सवितुः प्रसवे निर्वपामि’ इत्येकं वाक्यम्, ‘अश्विनोर्बाहुभ्यां निर्वपामि’ इत्यपरम्। एवं बहूनि वाक्यानि। यदि निर्वपामीत्यनुषङ्गः, ततो बहूनि वाक्यानि। न त्वेवमनुषङ्गो भवति। यदि गुणभूतो निर्वपामीति, तदा प्रतिप्रधानं भिद्येत। न च निर्वापो देवस्य त्वा इत्येवमादीनामर्थेनोच्यते। साधनप्राधान्ये हि अदृष्टार्थता वचनस्य स्यात्। निर्वापे पुनः प्रधाने, दृष्टं कार्यं निर्वापप्रकाशनम्। तत् सर्वैर्विशेषणैर्विशिष्टमुच्यते। तस्मादविरोधः। यथा च पदं पदेन विशेष्यते, तथोक्तं तद्भूतानामिति (१।१।७।२५)। तस्मादेकं वाक्यम्।

अथ किमर्थमुभयं सूत्रितम्, अर्थैकत्वादिति च, विभागे साकाङ्क्षमिति च ? उच्यते ! भवति किञ्चिदेकार्थम्, न तु विभागे साकाङ्क्षम्। यथा ‘भगो वां विभजतु’ ‘अर्यमा मां विभजतु’ इत्येकार्थाः सर्वे विभागमभिदधति। ननु भगविशिष्टाद्विभागात् अयमविशिष्टोऽन्यो विभागः। नेत्युच्यते। विभागसामान्येन अस्य प्रयोजनम्, न विशेषेण। सामान्ये हि दृष्टोऽर्थो भवति, न विशेषे। विभागे तु न साकाङ्क्षम्। तस्माद्भिन्नमिदं वाक्यं विभागे विकल्प्यते। तथा ‘स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ॥’ इति विभागे साकाङ्क्षम्। द्वे तु प्रयोजने क्रियेते सदनकरणं पुरोडाशप्रतिष्ठापनं च। तस्माद्भिन्ने वाक्ये, पूर्वं सदनकरणे विनियुज्यते, उत्तरं पुरोडाशप्रतिष्ठापने। तस्मात् सम्यक् सूत्रितम्, न सूत्रोपालम्भो भवति।

वा— केचिदेतत् सूत्रं वाक्यलक्षणपरत्वेन व्याचक्षते। तत्रापि किल लौकिकवैदिकवाक्यलक्षणसंभवे हेतुप्रसिद्धिवशेन लौकिकानामेव एतल्लक्षणम्। कुतः ? ‘अन्यतोऽवगतेऽर्थे हि लोके वाक्यं प्रवर्तते। तत्रैकार्थत्वविज्ञानात् सुखबोधक( धा ए )वाक्यता ॥’ लौकिकानां हि वाक्यानां प्रमाणान्तरेण अर्थः तदेकत्वं चावधार्यते। तत्र प्रसिद्धेन हेतुना शक्यमेकवाक्यत्वम् अवगन्तुम्। वैदिकानां पुनः अनन्यप्रमाणगम्यत्वात् प्राक् वाक्यात् तदेकत्वाज्ञानात् अज्ञातेऽर्थे तदेकत्वसिद्धिर्नास्ति इति एतल्लक्षणानुपपत्तेः अर्थापत्त्या विपरीतं लक्षणं द्रष्टव्यं ‘वाक्यैकत्वात् अर्थैकत्वम्’ इति। यथैव हि धर्मिणा वाक्येन धर्म्यन्तरम् अर्थः प्रतिपाद्यते, तथा एकवाक्यधर्मेण एकत्वेन अर्थैकत्वम्। आह च ‘**नित्यवाक्याधिगम्यत्वात् यथावाक्यं प्रवर्तते। वेदार्थस्तदसिद्धेस्तु न वाक्यस्यार्थवश्यता ॥**’ अत्राभिधीयते। वेदव्याख्यानप्रवृत्तस्य जैमिनेः कः प्रसङ्गो लौकिकवाक्यलक्षणाभिधाने ? वैदिकवाक्यलक्षणस्यापि भेदलक्षणे (भेदाध्याये) कः प्रसङ्गः ? किमर्थं प्रमाणलक्षणे एव नोक्तम् ? एकशब्दश्च न वक्तव्यः, ‘अर्थैकत्वात् वाक्यम्’ इति एतावतैव सिद्धत्वात्। कथं च मन्त्राधिकारे तदसंबद्धोऽर्थः अभिधीयते। भाष्यकृतश्च ‘प्रश्लिष्टपठितेषु यजुःषु’ इत्युपन्यासः प्रमाणवानपि विना कारणेन अतिक्रान्तः। किञ्च ‘**यजुर्भेदं च मुक्त्वैतद् वाक्यैकत्वस्य लक्षणम्। मन्त्रब्राह्मणलोकेषु वक्तव्यं क्वोपयुज्यते ॥**’ ऋक्सामयोस्तावत् परिमाणं प्रयोगसमर्थं प्रसिद्धम्, इति न कश्चित् वाक्यलक्षणात् एकवाक्यतालक्षणाद्वा उपकारो भवति। तथा ब्राह्मणे अग्निहोत्रादिवाक्यैः साध्यसाधनेतिकर्तव्यतावत्यां भावनायां नियुक्तेषु पुरुषेषु एकानेकवाक्यज्ञानं क्वोपयुज्यते। ननु अयमुपयोगः, एकवाक्यतालक्षणज्ञो वाक्यभेदं परिहरिष्यति। नायमुपयोगः। कुतः। ‘**वाक्यभेदो ह्यसामर्थ्यं शब्दावृत्त्यादिदोषतः। एकनानात्वविज्ञाननिरपेक्षोऽवधार्यते ॥**’ पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकः तद्विभागलक्षणो वा वाक्यैकत्वनानात्वज्ञाननिरपेक्षैरेव दोषत्वेन अवधार्यते। विभागलक्षणे गम्यमानसंबन्धपरित्यागः अनेकादृष्टकल्पना च दोषः। इतरत्र आवृत्तेः अवेदत्वात् अप्रामाण्यम् इति नैकवाक्यलक्षणेन अर्थः। पौरुषेयवाक्ये तु लक्षणनिरपेक्षस्य लोकस्य व्यवहारसिद्धेः अत्यन्तानौपयिकत्वम्। यदि च अर्थैकत्वेन वाक्यैकत्वमवधार्यते, वाक्यस्य अर्थप्रत्यायनार्थत्वात् तत्स्वरूपै-



कत्वज्ञानोत्तरकालभाविना किं वाक्यैकत्वज्ञानेन। वक्तृणां च परप्रत्यायनार्थो वाक्यप्रयोगः इति नात्मार्थे लक्षणज्ञानापेक्षा। श्रोतृणां पुनः अत्यन्तानवगते अर्थे प्रवर्तमानं पुरुषवाक्यमपि न वेदवाक्यात् भिद्यते। अवगतार्थे तु अनुवादत्वात् अनादृत्यमेव इति न एकानेकज्ञानमपेक्ष्यते।

किमर्थं च वैदिकानां लक्षणं नोक्तम् ? यदि तु अर्थापत्त्या उक्तमेवेति, तन्न। श्रुत्या तल्लक्षणमभिधाय अर्थापत्त्या लौकिकवाक्यसिद्धिः आश्रयितव्या, न चार्थापत्तिः संभवति। नहि एतत् लौकिकवाक्यलक्षणज्ञानम् ईदृशेन वैदिकवाक्यलक्षणज्ञानेन विना नोपपद्यते। न च एतस्यापि वाक्यलक्षणता सिद्धा, वाक्यैकत्ववशेन अर्थैकत्वलक्षणार्थापत्त्युपन्यासात्। अपिच कदा चित् वैदिकवाक्यानामपि एतत् लक्षणम् अत्यन्तविप्रकृष्टं वा किं चित् भवेत् इत्याशङ्कितत्वात् न नियोगतः अर्थापत्तिः। न च परिसंख्या, सामान्यविशेषभेदानुपादानात्। यदि हि सामान्येन इदं लक्षणं क्व चिदभिधाय पुनः केवलपौरुषेयसंबद्धमुच्येत, ततः परिसंख्यावशेन वैदिकानामिदं तावत् न भवति इत्येतावन्मात्रं गम्येत। न तु लक्षणविशेषः अनेकोपप्लवात्। एवमपि हि विपर्ययकल्पनं संभवति अर्थानेकत्वात् एकं (अनेकं) वाक्यं निराकाङ्क्षं चेत् विभागे स्यादिति। अथवा अर्थैकत्वात् नानावाक्यत्वमिति। तस्मादकल्पनेयम्। किञ्च ‘**कथं चार्थानपेक्षत्वे वाक्यैकत्वं प्रसिध्यति। नहि वर्णस्वरूपेण ज्ञातेनैतन्निरूप्यते ॥**’ वाक्यैकत्वाच्च अर्थैकत्वे अवधार्यमाणे अवश्यम् अर्थनिरपेक्षं वाक्यैकत्वम् अवगन्तव्यम्। न च तस्य अवधित्वेन किञ्चित् पश्यामो वर्णशतं वर्णसहस्रं वा। तथाहि ‘**अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्तिषु। न कदा चिन्मतिर्दृष्टा वाक्येयत्त्वावधारणे ॥**’ (बहुवाक्यवर्तिषु एकवाक्यवर्तिषु वा वर्णेषु बहूनि वाक्यानि एकं वा इत्यवधारणा न दृष्टा इत्यर्थः)। ‘**तस्मात् पदेषु यावत्सु श्रूयमाणेषु दृश्यते। विस्पष्टमैक्यमर्थस्य, तावतामेकवाक्यता ॥**’ लोकमन्त्रब्राह्मणेषु अव्यभिचारि एतदेव वाक्यलक्षणमिति स्थितम्।

यत्तु न प्राक् वाक्यात् अर्थतदेकत्वावधारणमस्तीति, अत्र ब्रूमः। ‘**पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते। लोकसिद्धैर्न तत्रास्ति वाक्यैकत्वनिमित्तता ॥**’ यदि हि वाक्यं पदवत् वाचकं भवेत्, ततः तदेकत्वानेकत्वानुवर्तिता वाक्यार्थस्य अभ्युपगम्येत कदा चित्। यदा तु पृथक् भूतैरेव पदैः इतरेतरनिरपेक्षैः स्वेषु पदार्थेषु उक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति, तद्वशेन च तावन्ति पदानि एकं वाक्यम् इत्यवधार्यते, न तदा वाक्य—तदेकत्वयोः व्यापारं पश्यामः। तस्मात् अविरोधः। ‘**भावनैव च वाक्यार्थः स्वकारकविशेषिता। तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः ॥**’ यस्मिन् पदसमूहे शब्दान्तरादिभिः न भावनाऽन्तरं प्रतिपाद्यते तस्य एकवाक्यत्वम्, भावनाऽन्तरापेक्षया तु नानात्वम्। तच्च एतदुभयमपि अन्यत एव ज्ञायते इति अनिमित्तं वाक्यैकत्वम् अर्थैकत्वस्य।

(परव्याख्यां दूषयित्वा यथाभाष्यं सूत्रं व्याख्यातुमुपक्रमते–) तस्मात् यथाभाष्यमेव व्याख्यातव्यम्। (संगतिं तावदाह–) भेदलक्षणे मन्त्रप्रस्तावे च तद्भेदस्तावत् ऋग्यजुःसामात्मकः अभिहितः। तदवान्तरभेदाकाङ्क्षायाम् ऋक्सामानाम् [ अचतुरविचतुरेति साधुत्वम् ]। अध्येतृसिद्धे भेदे लक्षणं न क्रियते। यजुषां तु प्रश्लिष्टपठितत्वात् न लक्षणात् विना भेदज्ञानम् इत्यारभ्यते। ननु भिन्नप्रतीकविनियोगात् तद्भेदः (यजुर्मन्त्रभेदः) सेत्स्यतीति। न तावत् सर्वेषामेव ब्राह्मणे विनियोगोऽस्ति। न च ‘उत्तरादिः पूर्वान्तलक्षणम्’ इत्येतत् वेदवचनम्। (ऐकार्थ्यनिबन्धना पदसमूहस्य एकवाक्यता इति–) न्यायेन तु सूत्रकारैरेव (आपस्तम्बेन आत्मीयब्राह्मण...) विनियोगेषु एतदुक्तम् इति न्यायस्य लक्षणमुच्यते। तत्र अवयवव्युत्पत्तिबलेन आह— (यजेः उसि प्रत्यये कृते यजुःशब्दः) **यावता इज्यते** इति। सर्वमन्त्राणाम् ‘अनेन यजेत’ इति हि प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति। ततः साक्षात् यागसंबन्धासंभवात् तदुपकारिप्रकाशनेन तैः इष्टं भवति इति कल्प्यते। तेनोच्यते ‘**यावता पदसंघेन स्मार्यते**

यागसाधनम् । तावद् यजुश्च वाक्यं च वक्तव्यत्वान्निरूप्यते ॥ ' वचनार्हं हि वाक्यं कार्ये समर्थं च तदर्हं भवति , न न्यूनमधिकं वा , तावतैव चेज्यते । तत्तु कीदृशम् इति ' एकार्थं साकाङ्क्षावयवं च ' इति लक्षणम् । ईदृशं चेत्, एकं यजुः । यत् ततोऽधिकम्, तत् वाक्यान्तरं यजुरन्तरं च इत्युक्तं भवति । एवं सर्वत्र पुरस्तात् परस्ताद्वा एकार्थत्वसमर्थपदपरिग्रहणात् असमर्थपदविमोकेन च भिन्नानि यजूंषि कल्प्यन्ते । तेन एकवाक्यलक्षणोक्तौ च अर्थात् यजुर्भेद–वाक्यभेदलक्षणयोः सिद्धिरिति ' एतस्मात् चेत् कारणात् ' इत्याह । ' किमुदाहरणम् ' इति अभिधेयवाचिनम् अर्थशब्दं गृहीत्वा लक्षणद्वयसमावेशासंभावनया पृच्छति । तथाहि ' एकार्थत्वं पदस्य स्यात् साकाङ्क्षावयवं न तत् । साकाङ्क्षावयवः संघस्तस्यैकोऽर्थो न विद्यते ॥ ' पदस्य हि आकृतिर्नाम एकोऽर्थो भवेत् , न तु तदवयवानां वर्णानां प्रकृतिप्रत्यययोर्वा विभागे साकाङ्क्षत्वम् , अर्थप्रत्यायनशक्त्यभावात् । समूहावयवास्तु पदानि विभागे परस्परमाकाङ्क्षन्ति , न तु एषामेकार्थत्वम् , प्रतिपदमर्थभेदात् , समूहस्य च पृथगर्थान्तराप्रसिद्धेः । अतो लक्ष्याभावात् अलक्षणमेतत् इति ( एतावता ' किमुदाहरणम् ' इति आक्षेपभाष्यं व्याख्यातम् ) । प्रयोजनवाच्यभिप्रायेण ( सौत्रम् अर्थपदं प्रयोजनं ब्रूते इति प्रयोजनवाचि इति अभिप्रायेण, प्रयोजनवाचित्वाभिप्रायेण इत्यर्थः) ' देवस्य त्वा ' इत्युदाहृतम् ( भाष्ये ) । ननु इति परः स्वाभिप्रायं प्रकटयति । यदा पदार्थव्यतिरिक्तः कश्चित् एको निर्भागो वाक्यार्थो नास्ति, तदा तत्तत्पदार्थधर्मौ एव सामीप्यवशात् तेषां गम्यमानौ भेदसंसर्गौ स्याताम्, अत आह–' तथापि एकार्थता न स्यात् ।' कथम् ' भेदो नाम पदार्थानां व्यवच्छेदः परस्परम् । स च प्रतिपदार्थत्वान्नैकत्वं प्रतिपद्यते ।।' व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैव उपात्तत्वात् विषयशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदमात्रं वक्तव्यम् । तत्संसर्गः पदार्थान्तर्गतत्वात् न वाक्यार्थो भवति, इति तदुपसर्जनः तेषां भेदो गृह्यते । स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वात् भवति, एवं शुक्लशब्दस्यापि गोशब्देन अश्वादिभ्यो निवर्तितस्य भवति, व्यवच्छेद्यनानात्वाच्च नास्त्येकत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः । यदा तु भेदवन्तः पदार्थाः एव वाक्यार्थः, तदा सिद्धमेव नानात्वम् । तथा ' संसर्गोऽपि पदार्थानामन्योन्येनानुरञ्जनम् । एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते ।।' आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेण अभिहितयोः ( व्यक्तिसहितजातेः स्वरूपतो भानम् इति परिभाषा ) संनिधानात् इतरेतरानुरञ्जनम् अर्थसिद्धमेवं वाक्यार्थः । स च गोत्वे शुक्लत्वसंसर्गः, शुक्लत्वे वा गोत्वसंसर्गः सामस्त्येन एकैकव्यक्त्युपसंहारात् उपलभ्यते इति नाना । यद्यपि च कथञ्चित् द्विपदे स एव उभयत्रापि संसर्गः इति एकत्वं गम्येत , तथापि बहुपदे येनयेन प्रदेशेन पदद्वयं संसृज्यते , तेनतेन संसर्गरूपेण उपलब्धेः अनेकत्वम् । किञ्च ' स्वप्राधान्यात् पदार्थानां धर्मावेतावुभावपि । धर्मिभेदेन भिद्येते नह्येकत्वमुपाश्रितम् ॥ ' यावत् हि प्रयोजनैकत्वं नाश्रीयते , तावत् स्वतन्त्राः पदार्थाः न एकतामापादयितुं शक्यन्ते , इति पृथगेव भेदसंसर्गौ अनुभवन्ति , तस्मादपि नाना । यद्यपि च अस्माकं आकृतिपदार्थकत्वात् नैव भेदो वाक्यार्थत्वेन अभिप्रेतः, तथापि पूर्वपक्षवादिना विकल्पमात्रेण उपन्यस्तः । सिद्धान्ताभिप्रायविवरणं प्रयोजनवाचित्वात् अर्थशब्दस्य उपपन्नम् । एवं सति एक एव कश्चित् पदार्थः प्रधानभूतः, तद्विशेषणत्वेन इतरोपादानम् इति । सर्वेषां च तद्भेदात् तत्संसर्गाच्च एको भेदः संसर्गो वा इत्यपि शक्यं वदितुम् । तस्मात् कर्मसमवायित्वेन दृष्टार्थत्वात् अशेषसवित्रादिपदार्थविशिष्टनिर्वापप्रकाशनं ( देवस्य त्वा सवितुः इत्यादेः ) समस्तस्य पदसमूहस्य एकं प्रयोजनम् इति सिद्धमुदाहरणम् । परन्तु निर्वापप्राधान्यं अज्ञात्वा पृच्छति ननु अत्र देवस्य त्वा इति ( भाष्ये ) । सिद्धान्तवादी आह यदि निर्वपामि इति अनुषङ्गः , ततः एवम् । स च अनुषङ्गः तद्गुणभावेन भवेत् , न चास्य गुणभावः, प्रयोजनवत्त्वात् , सवित्रादीनां च अकर्मसमवायात् इत्येकार्थत्वम् ।



अथ किमर्थम् उभयं सूत्रितम् इति । येषां संहतानां एकप्रयोजनवत्त्वम्, तेषां तदशक्तेः । व्यस्तानामेकान्तेनैव साकाङ्क्षत्वं भवति इति अवाच्यं तत् । अथवा विभज्यमानसाकाङ्क्षत्वं संहतैकप्रयोजनत्वेन विना न भवति , प्रत्येककार्येषु निरपेक्षप्रवृत्तिसिद्धेः । अतः साकाङ्क्षविभागेनैव इतराक्षेपात् तन्मात्रमेव अभिधातव्यमिति । प्रत्युदाहरणे दर्शयति उच्यते इति । पुरोडाशविभागप्रकाशनम् एकं प्रयोजनं निरपेक्षाणां दृष्टम् । निर्वापे दत्तोत्तराऽपि विभागनानात्वपरिचोदना संहत्य विशेषणानुपादानात् पुनःपुनःप्रयुक्तस्य अनुषङ्गदोषाभावात् उपन्यस्यते । तत्रोत्तरम् , न तावत् निरपेक्षसाधनभेदादपि क्रियानानात्वम् इति वक्ष्यामः ( अनुषङ्गाधिकरणे ' चित्पतिस्त्वा पुनातु ' इत्युदाहरणे ' न च तस्य कारकभेदात् भेदः ' इत्यादिना ) । साधनप्राधान्यं तु प्रत्युक्तमेव । एतत्कृतो विशेषः कर्मानङ्गत्वात् अनादरणीयः इति सामान्यप्रकाशनात् एकार्थत्वम् । ' तस्मिन् सीद ' इत्यस्य पूर्वापेक्षित्वे सत्यपि प्रयोजनभेदात् वाक्यान्तरत्वम् । तस्मात् संहतयोरेव लक्षणत्वम् ।

सोम — अवसरः संगतिः । प्रयोजनं– यावदेकं यजुः तावत् प्रयोगसमये प्रयोक्तव्यम् , न तु तदेकदेशः इति सूत्रे वाक्यशब्दो यजुःपरः । सूत्रे यजुःशब्दे प्रयोक्तव्येऽपि उक्तप्रयोजनसूचनायैव वाक्यशब्दप्रयोगः, इति नाकौशलं सूत्रकारस्य ।

वि— ' देवस्यत्वेतिवाक्यस्य भिन्नत्वमथवैकता ।, ऐक्यप्रयोजकस्यात्र दुर्बोधत्वेन भिन्नता ।।, विभागे सति साकाङ्क्षस्यैकार्थत्वं प्रयोजकम् । तस्माद् वाक्यैक्यमेतेन यजुरन्तोऽवधार्यते ॥ '

भाट्ट— यजुष्ट्वं यावत्सु पदेषु वाक्यत्वं पर्याप्तम् , तावत्सु पर्याप्तम् , न तु वाक्यसमूहे । तस्य विनियोगानर्हत्वात् । वाक्यत्वं च यत्रार्थैकत्वं विभज्यमानपदसाकाङ्क्षत्वं च तावत्सु । अर्थैकत्वं च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यम् , अन्यस्य दुर्वचत्वात् । अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात् तत् । दर्शपूर्णमासामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात् , व्रीहियववाक्ययोः ' भगो वां विभजतु ' इत्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यभूताया भावनाया एकत्वादर्थैकत्वम् । अतस्तत्रैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयमन्वीयमानयोः पदार्थयोरनन्वये अनिवृत्ताकाङ्क्षत्वरूपं विशेषणम् । ' स्योनं ते सदनं करोमि । तस्मिन् सीद ' इत्यत्रान्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् । १५.

मण्डन— ' साकाङ्क्षमेकार्थमिहैकवाक्यम् । ' १४ ( १५ ).

शंकर— ' परिमाणं यजुर्मनोः । ' यजुर्मन्त्रस्य । १७. ' यजुर्भेद इषेत्वादौ । ' १८.

* एकवाक्यताऽधिकरणम् । यजुष्ट्वाश्रये निरूपिते अधुना प्रसङ्गात् यजुष्ट्वं कियत्सु पदसमूहेषु व्यासज्य वर्तते कियत्सु वा पर्याप्नोति इति विवेकार्थमिदमारभ्यते । कौ. २।१।१५।४७ पृ. १२०, ( यथा ) वाक्ये एव पर्याप्तं यजुष्ट्वम् , एवं मन्त्रत्वमपि वाक्ये मन्त्रशब्दप्रयोगात् पर्याप्तमेव । तस्मात् सिद्धं वाक्यमात्रवृत्ति यजुष्ट्वमिति । पृ. १२२, * विभज्यमानसाकाङ्क्षत्वविशिष्टार्थैकत्वकृतवाक्यैकत्वेन यजुःपरिमाणं चिन्तितम् । २।१।१६।४८.

* एकवाक्यतोपगमनसामर्थ्यरूपं शब्दसामर्थ्यं लिङ्गं विनियोजकम् । बाल. पृ. ९.

* एकवाक्यत्वम् अध्याहारेण अग्नीषोमीये पशौ ' सं ते प्राणो वातेन ' इत्यादौ । वि. २।१।१८, * एकवाक्यत्वम् अनुषङ्गेण ज्योतिष्टोमे उपसद्धोममन्त्रेषु ' या ते अग्नेऽयाशया ' इत्यादौ । २।१।१६, * एकवाक्यत्वम् अनुषङ्गेण ज्योतिष्टोमे दीक्षाप्रकरणे ' चित्पतिस्त्वा पुनातु ' इत्यादौ । २।१।१७. * एकवाक्यत्वम् एकार्थत्वम् । वा. २।२।१२।२७ पृ. ५६०, * एकवाक्यत्वं द्वयोराख्यातयोः केन चिदुपबन्धेन विना न संभवति । ३।१।१४।२४ पृ. ७४०, * एकवाक्यत्वम्, योग्यत्वम्, अवान्तरप्रकरणं च महाप्रकरणात् बलीयांसि विनियोजकानि । ३।१।१४।२४ पृ. ७४०, * एकवाक्यत्वं सर्वत्र आकाङ्क्षामूलकम् । ३।३।७।१४ पृ. ८२९, * न च निमित्तत्वादिभिर्विना अनेकाख्यातैकवाक्यत्वं घटते । ३।५।२०।५३ पृ. १०२३. * नहि विधायकाविधायकवाक्ययोरेकवाक्यत्वं भवति । विधायकं ब्राह्मणम् ।

अविधायको मन्त्रः । भा. १०।८।१०।२०, * विभज्यमानानि चात्र ( 'वायव्यं श्वेतमालभेत' इत्यादौ ) पदानि साकाङ्क्षाणि इत्युपपन्नमेकवाक्यत्वम् । २।३।५।१४. * 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' ( विध्यर्थवादादौ ) वा. १।४।१३।२४ पृ. ३६६ । **सुधा**— पदार्थानां परस्पराकाङ्क्षाऽपर्यवसानेऽपि वाक्यार्थानां परस्परापेक्षया अन्वयो न विरुद्धः इत्याशयः । भावप्रत्ययेन संबन्धाभिधानात् ( श्लोके ) अङ्गाङ्गिसंबन्धापेक्षया अङ्गस्य अङ्गिसंबन्धापेक्षया, अङ्गिनश्च अङ्गसंबन्धापेक्षया । आदिशब्देन आग्नेयादिप्रधानानाम् एकफलसंबन्धापेक्षया अङ्गानां च एककरणोपकारसंबन्धापेक्षया स्वार्थपर्यवसितानामपि वाक्यानां संहत्य एकमहावाक्यार्थापादनेन एकवाक्यत्वं भवतीत्यर्थः । पृ. ५२५.

* **एकवाक्यत्वे** संभवति अनेकादृष्टानुबन्धिवाक्यभेदापादकविधित्वाङ्गीकरणायोगः । इदं 'न चेदन्यं प्रकल्पयेत्०' ( १०।८।४।७ ) इत्यस्य न्यायस्य स्वरूपम् । **सु.** पृ. ६२.

* **एकवाक्यत्वलक्षणम्** 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' ( सूत्रं ) यत् विभागे सति साकाङ्क्षम्, अविभागे च एकार्थम्, तदेकं वाक्यम् । 'स्योनं ते—तस्मिन् सीद' इत्यत्र अतिव्याप्तिनिरासार्थम् एकार्थम् इति । 'भगो वां विभजतु, पूषा वां विभजतु' अनयोरतिव्याप्तिनिरासार्थं विभागे साकाङ्क्षं इत्युक्तम् । **वि.** २।१।१४.

* **एकवाक्यत्वसंभवे** वाक्यभेदस्य अन्याय्यत्वात् । **पराक्रमः.** ५१ पृ. १.

⧗ **एकवाक्यत्वापन्नानां संभूयैकार्थप्रतिपादकत्वम्** इति न्यायः । संभूय मिलित्वा इतरसाचिव्येनेत्यर्थः । यथा प्रयाजाद्यङ्गजातवाक्यसंभूतानां दर्शपूर्णार्थसाधकत्वेन एकवाक्यत्वमित्येवं विवक्ष्यते तत्रास्य प्रवृत्तिः । यथा न अनेन एकाद्वितीयब्रह्मरूपतया हरिहरादीनां तद्ब्रह्मत्वप्रतिपादकानि वाक्यानि प्रमाणभूतानि भवन्तीति संक्षेपः । **साहस्री.** १३०.

* '**एकविंशः** षोडशी' इति एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने त्रैशोकाभ्यासः । ( षोडशिनि सर्वस्तोत्राणि एकविंशानि भवन्ति ) । **भा.** २।२।५।२४ वर्णकं २. * एकविंशः स्तोमः अष्टरात्रे चतुर्थेऽहनि । **वि.** ७।३।१०, * एकविंशः स्तोमः अतिरात्रे बहिष्पवमाने काम्यो विहितः 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इति । ५।३।४, * **एकविंशस्य** स्तोमस्य विष्टुतिरेवमाम्नायते । 'सप्तभ्यो हिंकरोति, स तिसृभिः, स तिसृभिः, स एकया । सप्तभ्यो हिंकरोति, स एकया, स तिसृभिः, स तिसृभिः, । सप्तभ्यो हिंकरोति, स तिसृभिः, स एकया, स तिसृभिः' इति । ९।२।६ वर्णकं ३ । अस्यार्थः— प्रथमे पर्याये प्रथमा ऋक् त्रिवारम्, द्वितीया ऋक् त्रिवारम्, तृतीया ऋक् एकवारम् इति सप्त । अथ द्वितीये पर्याये प्रथमा एकवारं द्वितीया त्रिवारं तृतीया त्रिवारम् इति सप्तैव । तृतीये पर्याये प्रथमा त्रिवारं द्वितीया एकवारं तृतीया त्रिवारम् इति सप्तैव । संकलनया एकविंशतिः इति । **के.** * **एकविंशे** अतिरात्रे आगमेन संख्यापूरणे 'समाम्नायपाठक्रमादेवात्र नियमः' । **भा.** ५।१।६।१३ वर्णकं २. * एकविंशे अतिरात्रे विवृद्धस्तोमके साम्नामागमेन वृद्धिः, न त्वभ्यासेन । **वि.** १०।५।६, * एकविंशे अतिरात्रे विवृद्धानां चतुर्णां तृचानां पर्यासोत्तरं निवेशः, न प्राक् बहिष्पवमाने । ५।३।४.

* **एकविधिगम्यः** एकः पदार्थः । **वि.** ५।२।३.

* **एकविभक्तिनिर्देशात्** अन्तरेणापि षष्ठीं सामानाधिकरण्यम् अवगमिष्यामः यथा नीलमुत्पलमिति । इति कश्चिदाह । **भा.** ३।१।६।१२ पृ. ६८५.

⧗ '**एकविशिष्टे अपरवैशिष्ट्यम्**' इति **न्यायेन** षट्संख्याविशिष्टे चतुःसंख्यान्वयो वाच्यः । अतश्च सत्यपि एकवाक्यत्वे चतुःसंख्या आवृत्त्यापादिकैव । **भाट्ट.**८।३।३.

* **एकविषयत्वे** सामान्यं विशेषो बाधते । **वा.** ३।८।७।१७.

⧗ **एकवृन्तगतफलद्वयन्यायः** । नियमपरिसंख्ययोः एकवृन्त०न्यायेन परस्परानपेक्षयोः व्रीहिषु अवहननसंबन्धकरणेन अर्थाल्लाभः । **रसायनं.** पृ. १३८.



* एकवृन्तगतफलद्वयन्यायः स्पष्टः । 'वृन्तं प्रसवबन्धनम्' इत्यमरः । अयं साहित्यदर्पणस्य दशमपरिच्छेदे श्लेषालंकारप्रकरणे उक्तः । तथाहि— 'अभङ्गस्तु अर्थश्लेष इव यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दाभेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः' इति । **साहस्री.** ८२४.

* **एकशब्दत्वेन** अनेकशब्दत्वं बाध्यते । यथा व्याकरणाधिकरणे । **बाल.** पृ. १४०.

* **एकशब्दसंयोगात्** समुदायानुवादरूपेण वा समुदायत्वापादनं भवति यथा 'य एवं विद्वान् पौर्णमासीं यजते' इति । **वा.** २।२।१।१ पृ. ४६३.

* **एकशब्दार्थत्वेन** अनेकशब्दार्थत्वं बाध्यते । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०.

* '**एकशितिपात्** पेत्वः' ( ऐकादशिनेषु द्वादशः पशुः । अश्वमेधे ज्योतिष्टोमे च । पेत्वः गालितवृषणः । एकः शितिः श्वेतः पादः यस्य स एकशितिपात् । पादस्य लोपः संख्यासुपूर्वस्य पा० ५।४।१४०के.) । **वि.** ८।१।७.

* **एकशेषः** इतरेतरयोगाख्यचार्थस्मृतद्वंद्वापवादः इतरेतरयोगवाची । **सु.** पृ. ८०९. * यो हि द्वंद्वस्य धर्मः इतरेतरयोगो नाम, स **एकशेषस्यापि** । इयांस्तु विशेषः एकत्र शब्दश्चार्थश्च द्वावपि भिन्नौ, इतरत्र अर्थो भिन्नः, शब्दः एक एव । **वा.** ६।१।५।२२ पृ. १३६६.

* **एकश्रुतिः**, प्रचयः, तानः, इति पर्यायाः । उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तः चतुर्थः स्वरः एकश्रुतिः । याज्यादीनां प्रयोगे तानेनैव पाठः, न तु स्वरत्रयस्य तानस्य च समुच्चयो वा विकल्पो वा । **वि.** ९।२।८ वर्णकं ३.

* **एकश्रुतित्वं** मन्त्रान्तर्गताक्षराणां एकजातीयस्वरकत्वम् । **संकर्ष.** ४।३।३.

* **एकसंज्ञायोगः** प्रयोजनान्तररहित एव अतिदेशसाधकः । **भाट्ट.** ८।१।३.

⧗ '**एकसंबन्धिज्ञानेन अपरसंबन्धिस्मरणम्**' इति **न्यायेन** नञ्समासान्तम् अपशुपदं गवाश्वविध्येकवाक्यताऽनुरोधात् अर्थवादेऽपि च 'पशवो गोअश्वाः' इति सामानाधिकरण्यात् गवाश्व( श्वान्य )गतप्राशस्त्याभावोपस्थापकम् । अतोऽर्थात् गवाश्वगतप्राशस्त्यावगमात् अजादीनां निन्दा अवगम्यते । **कौ.** १।४।१६।२६ पृ. २८४. * **एकसंबन्धिज्ञानात् अपरसंबन्धिस्मरणम्** । **मणि.** पृ. ७८. * **एकसंबन्धिदर्शनमपरसंबन्धिस्मारकम्** इति **न्यायः** । यथा हस्तिपकदर्शनं हस्तिनः स्मारकं भवति, तथा हस्तिपकदर्शनस्य हस्तिस्मारकत्ववत् नद्यादिज्ञानस्य तत्संबन्धिकुशादिस्मारकत्वं भवतीति भावः । **साहस्री.** ११.

* '**एकसंबन्धिदर्शनेनापरसंबन्धिस्मरणम्**' इति **न्यायेन** गङ्गापदात् शक्त्यैव प्रवाहबोधे जाते तत्संबन्धवत्ताबोधः । **कौ.** १।४।३।२३ पृ. २७८. * कूलसक्रमकपूर्वपदार्थोपस्थितिः उत्तरपदार्थस्य झटित्युपस्थापिका एकसंबन्धिदर्श० इति **न्यायात्** । **भाट्ट.** ५।१।६.

* **एकसंबन्धिदर्शनन्यायः** । न्यायसुधाऽऽदौ पशुपदं गवाश्वगतप्राशस्त्यपरमङ्गीकृत्य नञा तदभावः अजादौ प्रतिपाद्यते इत्युक्तम् । तद् यदि एकसंबन्धिदर्शनन्यायेन गवाश्वगतप्राशस्त्योपस्थितिरभिप्रेता, ततः अशाब्दत्वात् तस्य शाब्देन नञर्थेन अन्वयानुपपत्तिः । **कौ.** १।४।१६।२६, * '**एकसंबन्धिस्मरणेन अपरसंबन्धिस्मरणम्**' इति **न्यायेन** सिंहशब्दोच्चारणे सति शक्त्यैव प्रतीयमानेन सिंहेन स्ववृत्तिगुणानामुपस्थानात् । तैश्च तेनैव न्यायेन तत्समानजातीयगुणवत्ताज्ञापनादेव एवंविधगुणवत्ताज्ञाने सति सिंहपदात् उक्तविधशाब्दबोधोपपत्तौ न किञ्चिद्बाधकमुत्पश्यामः । १।४।१३।२३ पृ. २७५.

⧗ **एकस्तोमस्य वा क्रतुसंयोगात्** । ५।३।१५।४३॥

'य एतेनानिष्ट्वाऽथान्येन यजेत' इत्यत्र अन्यशब्देन ज्योतिष्टोमविकाराणां क्रतूनां वाद इत्यवगतम् । ज्योतिष्टोमविकारस्यापि किम् एकस्तोमकस्य वादः, उत एकानेकस्तोमकानां सर्वेषां वादः इति विचारे पूर्वपक्षमाह । एकस्तोमस्य, एकः एव त्रिवृदादिः स्तोमः यस्य स एकस्तोमकः, तस्य एकस्तोमकस्य अग्निष्टुदादेरेव अन्यशब्देन वादः स्यात् । क्रतुसंयोगात् 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः ( अन्यं यज्ञक्रतुमापद्यते ) स तम्, इत्यादिना एकस्तोम-

केनैव क्रतुना संयोगो दर्शितः। तस्मात् एकस्तोमकानामेव वादोऽयम् इति पूर्वः पक्षः। वाशब्दः पक्षान्तरं व्यावर्तयति। अत्र 'एकस्तोमो वा' इति 'एकस्तोमे वा' इति च अन्यत्र पाठः।

**सर्वेषां वा चोदनाऽविशेषात् प्रशंसा स्तोमानाम्। ४४॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह। चोदना उक्तिः वाद इति एकोऽर्थः। सर्वेषामेकस्तोमकानाम् अग्निष्टुदादीनाम्, अनेकस्तोमकानामुक्थ्यादीनां च चोदना स्यात्, वादः स्यात् अन्यशब्दस्यार्थः स्यात्। अविशेषात् अन्यपदेन एकस्तोमकानाम् अनेकस्तोमकानां च ग्रहणे विशेषाभावात्। 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते स तं दीपयति' इति एकस्तोमकस्य वादस्तु स्तोमानां सर्वेषामेव प्रशंसार्थः स्यात्। प्रकृतौ अभ्यस्ता धर्माः विकृतौ चोदकप्राप्ताः प्रागनुभूतत्वात् सुखं प्रतिपद्यन्ते इति तं दीपयति प्रकाशयति इत्युक्तम्। अनभ्यासे तु सुखप्रतिपत्त्यभावात् सम्यग्दीपनं न स्यात्। तस्मात् एकानेकस्तोमकानां सर्वेषां ज्योतिष्टोमविकाराणाम् अन्यशब्देन चोदना इति सिद्धान्तः। चोदनाऽविशेषात् चोदनागतस्य अन्यशब्दस्य एकस्तोमकेषु अनेकस्तोमकेषु च अविशेषात् इति ऐकपद्यमते व्याख्या। सुबोधिन्यां कुतूहले च ऐकपद्येन व्याख्यातम्। के.

* 'एकस्तोमस्य वा क्रतुसंयोगात्' इत्यधिकरणम् 'अग्निष्टोमविकाराणाम् एकानेकस्तोमकानामपि' इति बिन्दौ द्रष्टव्यम्। के. ५।३।१५।४३. * विशेषप्रवृत्तोपक्रमानुसारेण औपसंहारिकविशेषश्रवणस्य यथाकथञ्चिद् व्याख्यानम् '**एकस्तोमे वा** क्रतुसंयोगात्' इति पाञ्चमिकाधिकरणे स्थितम्। **परिमल.** ३।४।४।२३-२४ ब्रसू. * **एकस्तोमकाः** क्रतवः 'त्रिवृदग्निष्टोमो भवति' 'पञ्चदश उक्थ्यो भवति' इत्यादयः। **वि.** ५।३।१५. * **एकस्तोमकानाम्** अनेकस्तोमकानां च 'अथान्येन' इति वादः। **भा.** ५।३।१५।४३-४४, * एकस्तोमकानाम् अनेकस्तोमकानां वा सर्वेषामेव अग्निष्टोमविकाराणाम् अग्निष्टोमोत्तरकालता। ५।३।१५।४३-४४.

* **एकहविरार्तावपि** पञ्चशरावनिर्वापः कार्यः दर्शे सायंप्रातर्दोहयोः। आर्तिन्यायः इति बिन्दौ अधिकरणं द्रष्टव्यम्। **भा.** ६।४।६।२२-२३.

* **एकहायनस्य** पशोः द्वेष्याय दानं धर्ममात्रं न परिक्रयार्थम्। अनृत्विजे इदम्। पत्नीसंयाजेषु कपालाभिहोमे वैश्वानरो द्वादशकपालः। तत्रेदं दानम्। **भा.** १०।२।१६।४७.

* '**एकहायन्या** क्रीणाति' इत्ययं द्रव्यस्य नियमविधिः। **बाल.** पृ. २४. * **एकहायन्याः** क्रयमात्राङ्गत्वावसायात् तदङ्गभूतनयनस्यापि तन्मात्रार्थत्वप्रतीतेः। **भाट्ट.** ४।१।१०. * एकहायन्याः तन्नयनस्य वा अक्षाभ्यञ्जनं पदपांसवः पदहोमो वा न प्रयोजकानि, किन्तु सोमक्रय एव। **भा.**४।१।१०।२५. * **एकहायन्यां** क्रयार्थे नीयमानायां दैवात् ग्रावणि सप्तमपदपाते अक्षाभ्यञ्जनाद्यर्थं न पुनस्तदानयनं ज्योतिष्टोमे सोमक्रये। **भाट्ट.** ४।१।१०.

* **एकहायनीन्यायः** 'अरुणान्यायः' इति बिन्दौ द्रष्टव्यः। के. ३।१।६।१२. * प्रकृतौ व्रीहिमयपुरोडाशग्रहणात् तत्साधनत्वम् (पर्यग्निकरणस्य) शास्त्रकृतत्वात् प्राप्नोति इति वक्तव्यम्। तत्रापि तु **एकहायनीन्यायेन** अप्रयोजकत्वात् तदभावे (पर्यग्निकरणस्य) लोपप्रसङ्गः। **वा.** २।१।४।१२ पृ. ४१५। एकहायनीन्यायेन पुरोडाशोक्तप्रकृतिव्रीहियवाप्रयोजकत्वेऽपि यत्किञ्चिद्द्रव्योपादानेन पुरोडाशसिद्धेः पर्यग्निकरणलोपस्यायुक्तत्वेन एतत्पूर्वपक्षप्रयोजनापरितोषः। **सु.** पृ. ६३८.

* **एकहायनीपिङ्गाक्षीशब्दौ** द्वावपि सामानाधिकरण्यात् एकद्रव्यवचनौ। **वा.** ३।१।६।१२ पृ. ६७३.

* **एकहायनीशब्दः** क्रये विधीयमानः अज्ञातवत् स्यात्। अरुणाशब्देन संबध्यमानश्च ज्ञातवत्। **भा.** ३।१।६।१२ पृ. ६९१, * एकहायनीशब्दः यद्यपि क्रीणातिना अभिसंबध्यमानः कृतार्थः, न पदान्तरेण संबन्धमाकाङ्क्षति। (तथापि) अरुणाशब्दस्तु पदान्तरेण संबन्धमलभमानः अनर्थकः इत्येकहायनीशब्देन एकवाक्यतामभ्युपैति। ननु उक्तं क्रियासंबन्धार्थो नारुणासंबन्धार्थ इति। आह, अरुणाशब्दस्य आनर्थक्यपरिहाराय उभयसंबन्धार्थं इति वदामः। अन्यार्थमपि कृतम्



अन्यार्थमपि शक्नोति कर्तुम्। तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते उपस्पृश्यते च। एवमिहापि क्रयसंबन्धार्थमेकहायनीशब्दः उच्चार्यमाणः अरुणाशब्देन सह संभन्त्स्यते, न किञ्चित् दुष्यति। तस्मान्न वाक्यभेद इति। ३।१।६।१२ पृ. ६८९. * **एकहायनीशब्दस्य** क्रीणातिना अन्वयः नारुणाशब्देन इति विचारः 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः। के.

* **एकहायन्यादिशब्दाः** कालविशेषयुक्तद्रव्यवचनाः सन्तो वयो लक्षयन्तः प्रवर्तन्ते। **वा.** ३।१।६।१२ पृ. ६७९.

**एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेत्** इति न्यायः। (हेतुं व्याप्तिं च विना केवला प्रतिज्ञा प्रतिज्ञातमर्थं साधयितुं न शक्नोति इत्यर्थः। के.) **साहस्री.** १४८.

**एकाग्नित्वादपरेषु तन्त्रं स्यात्।११।२।११।४९॥**

वरुणप्रघासेषु पौर्वाग्निकानां होमानाम् अग्निभेदाद्भेद उक्तः। अथ अपरेषु गार्हपत्ये कर्तव्येषु पत्नीसंयाजेषु तन्त्रं स्यात् एकाग्नित्वात्। दक्षिणविहारसंबन्धिनामुत्तरविहारसंबन्धिनां च पत्नीसंयाजानां अग्निः एक एव गार्हपत्यः। एकाग्नित्वात् अपरेषु होमेषु तन्त्रं स्यात्। इति पूर्वः पक्षः।

**नाना वा, कर्तृभेदात्। ५०॥**

सिद्धान्ती आह। वाशब्देन पूर्वपक्षं व्यावर्तयति। अपराग्नेरेकत्वेऽपि कर्तृभेदात् कर्त्रोर्भेदात् पत्नीसंयाजाः नाना भवेयुः भिन्नाः। दक्षिणविहारार्थाः प्रतिप्रस्थात्रा कार्याः उत्तरविहारार्थास्तु अध्वर्युणा। के.

* 'एकादश वै पशोरवदानानि' अयं परिसंख्याव्यावर्तितविषयः प्रतिप्रसवविधिः सोमेश्वरमतेन। **बाल.** पृ. १६. * **एकादशभिरङ्गैः** इतरेषामङ्गानां परिसंख्या अग्नीषोमीये पशौ। **भा.**१०।७।२।३-९. * **एकादशानां** यूपानां समूहः यूपैकादशिनी। तत्र दक्षिणतोऽवस्थापितः एकादशो यूपः उपशयः नाम। तस्मिन् उच्छ्रयणपरिव्याणादिको यूपसंस्कारो नास्ति। **वि.** ७।३।१३.

* **एकादशः** (अध्यायः) प्रयोगेयत्ताविचारार्थमारभ्यते तन्त्रावापेन। **टुप्.** ७।१।१।१ पृ. १५२४.

* **एकादशे** अङ्गानां प्रधानानां च एकेनैव प्रयोगविधिना विधानम् इति वक्ष्यते। **भाट्ट.** ५।१।१.

* **एकादशकपालः** माध्यंदिने सवने सवनीयः पुरोडाशः। **के.** * **एकादशकपाले** ऐन्द्रे औषधस्य आग्नेयपुरोडाशस्य विध्यन्तः। **भा.** ८।१।१७।३२-३४.

* **एकादशरात्रे** चयनं कर्तुं शक्यते। **भा.** १०।५।२३।७८.

* **एकादशरात्रान्तानां** द्विरात्रादीनामहीनत्वं यजतिचोदनात्। **भा.** ८।२।६।२६.

* **एकादशाद्ये** (अधिकरणे) यजिरूपैकशब्दोपादानात् आग्नेयादीनां साहित्यं विवक्षितम् इति साधितम्। **बाल.** पृ. १६८.

* **एकादशाध्यायार्थः** 'उपोद्घातस्तथा तन्त्रावापौ तन्त्रस्य विस्तृतिः। आवापविस्तृतिश्चैकादशाध्यायस्य पादगाः॥' प्रथमे पादे तन्त्रस्य उपोद्घातो वर्णितः। द्वितीये तन्त्रावापौ संक्षेपेणोक्तौ। तृतीये तन्त्रम् उदाहरणबाहुल्येन प्रपञ्चितम्। चतुर्थे तथैव आवापः प्रदर्शितः। **वि.** प्रस्तावना. श्लो. २३. * एकादशाध्यायार्थः। तत्र तन्त्रलक्षणम् उक्तमेव 'साधारणं भवेत् तन्त्रम्' इति। अत्र साधारणशब्दः विशेषग्रहणमाह। ततश्च विशेषग्रहणे सति प्रसङ्गाप्रयोजकत्वे भवतः। विशेषाग्रहणे तु तन्त्रं सकृदनुष्ठानमित्यर्थः। विशेषाग्रहणं च सप्तधा १ फलकामनातः, २ निमित्ततः, ३ रूपतः, ४ संख्यातः, ५ कालतः, ६ मन्त्रतः, ७ कर्तृतश्चेति। तन्त्रं च प्रधानानामङ्गानां चेति द्विविधम्। यथा सांनाय्ययागयोः प्रयाजानां च दर्शपूर्णमासयोः। तत्र चोभयत्र पूर्वोक्तं सप्तधा विशेषग्रहणं नास्ति आद्ये स्वर्गकामनायाः, द्वितीये करणोपकारकामनायाः अविशेषात्। नहि अत्र काम्याग्निहोत्रेण नित्याग्निहोत्रप्रसङ्ग इव कामनातो विशेषग्रहणमस्ति। न चोक्ततन्त्रोदाहरणद्वये निमित्ततो विशेषग्रहणमस्ति यथा वैश्यनिमित्तकसप्तदश्येन नित्यपाञ्चदश्यस्य प्रसङ्गसिद्धौ। न च तन्त्रोदाहरणद्वये द्रव्यदेवताऽऽख्यरूपतो विशेषग्रहणमस्ति, यथा पाशुकैः 'पृषदाज्येनानुयाजान् यजति' इति पृषदाज्यद्रव्यकैरनुयाजैः केवलाज्य-

द्रव्यकाणामनुयाजानां पौरोडाशिकानां प्रसङ्गसिद्धौ । नापि पूर्वोक्ततन्त्रोदाहरणद्वये संख्यातः कालतो वा विशेषग्रहणमस्ति , यथा पाशुकैः प्रयाजैः ‘ तिष्ठन्तं पशुं प्रयजन्ति ’ इति तिष्ठति पशौ अपकृष्यमाणैः ‘ एकादश प्रयाजान् यजति ’ इत्येकादशसंख्याकैश्च, पौरोडाशिकानां ‘ आसन्नेषु हविःषु प्रयजन्ति ’ इति हविरासादनोत्तरकालविहितानां पञ्चसंख्यानां च आतिदेशिकानां प्रयाजानां प्रसङ्गसिद्धौ । न च प्रागुक्ततन्त्रोदाहरणद्वये मन्त्रतः कर्तृतो वा विशेषग्रहणमस्ति, यथा सवनीयपशौ मैत्रावरुणकर्तृकात् ‘अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः ’ इति अग्नीषोमीयात् अतिदिष्टात् सूक्तवाकप्रैषात् तन्त्रिणि सवनीयहविरङ्गानां मैत्रावरुणरहितानां प्रसङ्गोपकारित्वे । तस्मात् सप्तधा विशेषाग्रहणे तन्त्रं भवतीति सिद्धम् , सप्तधा च विशेषग्रहणे प्रसङ्गो भवतीत्यपि सिद्धम् । तत्र च प्रसङ्गात् सप्तविधान्युदाहरणान्यपि उक्तानि ।

तच्च तन्त्रं त्रिविधम् । तत्र द्विविधमुक्तं प्रधानतन्त्रमङ्गतन्त्रं च । प्रधानाङ्गतन्त्रं च तृतीयम् । प्रधानतन्त्रमपि त्रिविधं प्रकृत्योः विकृत्योः प्रकृतिविकृत्योश्च । तत्र प्रकृत्योर्यथा सांनाय्ययोः इत्युक्तम् । द्वितीयं यथा आहिताग्नेः युगपत् अनेकगृहदाहादौ क्षामवत्यादीनाम् । तृतीयभेदे श्रौतमुदाहरणं मृग्यम् । स्मार्तं तु हेमाद्रिणोक्तम् अमावास्याव्यतीपातश्राद्धादीनाम् एकदिनकर्तव्यत्वापत्तौ इति । अङ्गतन्त्रमपि त्रेधा उपदिष्टानामेवाङ्गानामन्योन्यम्, यथोदाहृतं दर्शाङ्गानां प्रयाजानाम् । उपदिष्टातिदिष्टयोरन्योन्यं यथा ‘ दीक्षासु यूपं छिनत्ति ’ इत्यपकृष्यमाणस्य अग्नीषोमीये उपदिष्टस्य सवनीये चातिदिष्टस्य यूपस्य तत्संस्काराणां चान्योन्यम् । अतिदिष्टानामेव अन्योन्यं यथा वरुणप्रघासेषु उत्तरे विहारे अष्टसु हविःषु अतिदिष्टानां प्रयाजानां तन्त्रम् । प्रधानाङ्गतन्त्रं तु द्वेधा प्रकृतिप्रधानस्य स्वाङ्गविकृत्या सह तन्त्रम् , यथा ‘ यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत् ’ इति सांनाय्ययागाङ्गभूतया आग्नेययागविकृतिभूतया इष्टया सह सांनाय्ययागस्य तन्त्रम् । तथा विकृतिप्रधानस्य स्वाङ्गविकृत्या तन्त्रम् , यथा ऐन्द्रस्य आमिक्षायागस्य प्रधानभूतस्य आमिक्षाऽऽर्तौ अतिदिष्टेन तदङ्गभूतेन विकृतिरूपेण सांनाय्यहविरार्तिनिमित्तकैन्द्रपञ्चशरावयागेन सह तन्त्रम् । न च उक्तोदाहरणद्वये प्रसङ्ग एवेति वाच्यम् । सांनाय्यवत् द्रव्यभेदात् दैवतैक्याच्च । तदेवम् अष्टविधं तन्त्रं निरूपितम् । इत्येकादशाध्यायार्थसंग्रहः । बाल. पृ. १४७–१४८.

* **एकादशाध्यायार्थविचारः** । एकादशे तु प्रयोगपरिमाणं तन्त्रावापद्वारेण चिन्त्यते । तन्त्रं नाम साधारणम् अङ्गाद्यनुष्ठानम् । यथा आग्नेयादिषु प्रयाजादीनाम् । तत्र प्रथमं तावत् आग्नेयादीनां फलतन्त्रत्वं प्रतिपाद्यते । किम् ‘ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ’ इत्येतत् फलम् आग्नेयादीनां तन्त्रम् , उत पृथगिति । किम् अन्योन्यनिरपेक्षाणां फलसाधनत्वम् , उत सहितानामित्यर्थः । यत्तु अत्र **भाष्यकारेण** ( ११।१।१।१ ) पुरुषपरत्वादिनिराकरणं कृतं कामशब्दस्य ( स्वर्गकामशब्दस्य ), तदिह असूत्रितमपि सूत्रितविचारोपोद्घातत्वेन भावार्थाधिकरणोपोद्घातभूतप्रतिपदाधिकरणवत् कृतमिति वेदितव्यम् । निमित्तपरत्वं तु ‘ प्रयोगे पुरुषश्रुतेः ’ ( ६।२।२।३ ) इत्यत्र प्रसङ्गात् सूत्रकारेणैव निराकृतम्, इह भाष्यकारेण स्मारितम् । इदं च पुरुषपरत्वादिनिराकरणं स्वर्गकामाधिकरणस्यापि उपोद्घातत्वात् तत्रैव अस्माभिः अनागतप्रत्यवेक्षणेन प्रदर्शितम् । निमित्तपरत्वमपि अनाकाङ्क्षितत्वात् अयुक्तम् । आकाङ्क्षितत्वात्तु फलमेव अनेन प्रतिपाद्यते इति युक्तम् ।

**‘ पुरुषस्य नियोज्यस्य ये विदुः ( प्राभाकराः ) प्रतिपादनम् । कामशब्देन भाष्येण त एतेन निराकृताः । १ ॥ ’** कार्यस्य फलानपेक्षत्वात् तदपेक्षितो नियोज्यः एव स्वर्गकामादिशब्दैः प्रतिपाद्यते इति ये मन्यन्ते , तेषां पुरुषपरत्वनिराकरणभाष्यविरोधः । नहि अनेन कर्तृवचनत्वमेव निराक्रियते । ननु ‘ **पुरुषस्यायं वक्ता** ’ इत्यादिना पुरुषपरत्वमात्रनिराकरणात् ‘ **निमित्तपरता चैवं श्रुताबाधात् प्रसज्यते । लिङ्गबाधस्तथाहि स्यादन्यथा श्रुतिबाधनम् । २ ॥** ’ यदि च नियोज्यपरः स्वर्गकामशब्दः स्यात् , ततः स्वर्गकामनाविशिष्टस्य गृहादिदाहविशिष्टस्येव



पुरुषस्य नियोज्यत्वात् तद्वदेव कामानां निमित्तं स्यात् , न फलत्वं स्वर्गस्य सिध्येत् । **स्यादेतत्** , दाहादयो हि निष्पन्नाः युक्तं यत् निमित्तीभवन्ति इति । स्वर्गस्तु अनिष्पन्नो न निमित्तं भवितुमर्हति इति फलतयैव नियोज्यविशेषणमिति । **तन्न** । अनिष्पन्नस्य निष्पन्ननियोज्यविशेषणत्वायोगात् । नहि असति विशेषणे तद्विशिष्टस्य नियोज्यस्य सिद्धिरवकल्पते । असिद्धेन च कथं नियोगः साध्यते ? तेन तत्सिद्धिमङ्गीकुर्वता अवश्यमेव फलविषया कामना तद्विशेषणमभ्युपगन्तव्यम् । सा च सिद्धत्वात् शक्नोत्येव ‘ परस्त्रीकामः प्रायश्चित्तं कुर्यात् ’ इतिवत् निमित्तत्वेनैव नियोज्यमवच्छेत्तुम् । एवं च सति सर्वलोकावगतक्रियाकार्याभिधानं लिङ्श्रुतेः अबाधितं भवति । कामस्वभावबाधो न युक्त इति चेत् , न , श्रुतिप्राबल्यात् । **तत्रैतत् स्यात्** , यद्यपि निमित्तेनापि कामान्वयः संभवति, तथापि फलत्वेनैव विशेषणत्वमङ्गीकर्तुं युक्तम् , कामनास्वभावभङ्गप्रसङ्गात् । कामना हि स्वभावत एव काम्यमानप्रधाना । निमित्तत्वे च सति तत् प्राधान्यं हीयेत इति फलत्वमेव युक्तमिति । **तन्न**, श्रुतेर्लिङ्गात् बलीयस्त्वात् । कामनास्वभावो हि लिङ्गम् । तस्य च निमित्तपरत्वे बाधः, फलपरत्वे तु लिङ्श्रुतेर्बाधः । सा हि लोके क्रियारूपकार्याभिधायित्वेन अवगता सती तत उत्तार्य फलपरत्वे सति अर्थान्तरं नेतव्या स्यात् । तत्र लिङ्गानुग्रहेण श्रुतिं बाधित्वा फलपरत्वमभ्युपेयताम्, उत श्रुतानुसारात् लिङ्गबाधेन निमित्तपरत्वम् इति संदेहे श्रुत्यनुग्रहो न्याय्यः । फलपरत्वे हि तस्य कालान्तरभावित्वात् तत्साधनत्वं क्षणभङ्गुरस्य कर्मणः साक्षान्न संभवति । न च फलापूर्वद्वारेण उत्पत्त्यपूर्वद्वारेणेव परमापूर्वसाधनस्यापि कर्मणः फलसाधनत्वं संभवति । अतः समवेतस्य अतत्कालीनस्य च अपूर्वस्य तच्छक्तित्वतद्व्यापारत्वायोगात् । शक्तिव्यापारयोरेव फलसाधनत्वनिर्वाहकत्वात् । अन्यद्वारेण किल अन्यस्य साधनत्वं काष्ठादेरिव ज्वलनादिद्वारेण अनुभवस्य वा संस्कारद्वारेण स्मृतिपाकसाधनत्वं न संभवति इति असाधकं कर्म स्यात् । साधनसाधनं तु स्यात् । न च किल साधनं फलं लिप्समानेन साधने साक्षात् प्रवर्तितुमशक्नुवता व्रीहिकामेनेव कर्षणम् , कार्यतया अवगन्तुं शक्यम् , इत्यनया स्वतन्त्रया लोकविरुद्धया प्रक्रियया लिङ्श्रुतेः लोकप्रसिद्धक्रियाकार्याभिधानपरित्यागेन अलौकिकापूर्वाख्यकार्याभिधायित्वं कल्पनीयम् इति श्रुतिबाधप्रसङ्गात् निमित्तपरत्वमेव ज्यायः । ननु एवं सति प्रयोजकत्वं विधेः कल्प्यम् , इति गौरवं स्यात् । नैष दोषः, श्रुत्यनुग्रहार्थं निमित्तपरत्वाभ्युपगमेन तत्कल्पनस्य न्याय्यत्वात् । न च एतदतीव कल्पनीयम् , सामान्येनैव कार्यस्य स्वसाधनप्रयोजकत्वं लोकत एव सिद्धं धूमस्येव अग्न्यनुबन्धित्वम्, रूपस्येव चाक्षुषत्वम् । अतश्च कार्यविशेषवत् पूर्वानवगते अवगम्यमानेऽपि तस्य प्रयोजकत्वम् अग्न्यनुबन्धित्वादिवत् निर्ज्ञातचरमेव अनुसंधीयते, न तु अपूर्वं किञ्चित् कल्पयितव्यम् । सामान्येन अवगतमपि अस्मिन् विशेषे अनवगतमेव कल्प्यम् इति चेत्, नेदं तावत् अनुमानस्य अनवगतगोचरत्वसमयं विस्मरता न भाषितुं युक्तम् । अपिच एतावन्मात्रं कामाधिकारेऽपि फलस्य कल्पनीयमेव । नो खलु फलविशेषस्य स्वर्गादेः ज्योतिष्टोमादिप्रयोजकत्वं लोकसिद्धम् । न च फलस्य अतदात्मनः कार्यात् विशेषतः प्रयोजकत्वं लोकसिद्धम् , येन न तत् कल्पनीयम् । किञ्च , फलमपि न फलतया प्रयोजकम् , किन्तु कार्यतया । सा च अफलरूपस्यापि कार्यस्य अविशिष्टा , इति न किञ्चित् गौरवम् । किञ्च ‘ **फलस्य विध्यधीनस्य तावन्मात्रनिरीक्षणात् । नैव कामाधिकारेऽपि प्रयुक्तिः साधनेऽङ्गवत् । ३ ॥** यदि हि नैमित्तिकाधिकारवत् कामाधिकारेऽपि विधेः प्रयोजकत्वं न स्यात् , ततः शक्येतापि वक्तुं प्रयोजकत्वं मा कल्पि इति कामाधिकारत्वं परिकल्प्यते इति, न तु एतदस्ति, कामाधिकारेऽपि विधिरेव साधनानुष्ठानं अङ्गानुष्ठानवत् प्रयुङ्क्ते न फलम् , तस्य कालान्तरभाविनः तत्कालावस्थायिविध्यर्थमात्रसाध्यस्य तत्सिद्धिमात्रप्रतीक्षत्वात् । नहि तत् साक्षात् कर्मणा सिध्यति , यतः तदनुष्ठापयेत् । विधिस्तु तेनैव साध्यमानो युक्तं यत् तदनुष्ठापयति इति । स–द्वारमेव विधिवत् फलमपि प्रयोजकमिति चेत् न , द्वारासंभवात् । अथापि स्यात् यथा हि विधिः उत्पत्त्यपूर्वद्वारेण प्रधानानामङ्गानां च

प्रयोजको भवति । नहि तेषामुत्पत्त्यपूर्वं साक्षात् साध्यमपि प्रयोजकम्, अकार्यत्वात् । नहि उत्पत्त्यपूर्वं कार्यम्, किन्तु तेन परमापूर्वम् । अकार्यं च न प्रयोजकम् इति परमापूर्वमेव स-द्वाराणां कर्मणां प्रयोजकम्, तद्वत् कामाधिकारे फलमपि अपूर्वद्वारेण साधनं प्रयुङ्क्ते इति । **तच्च नैवम्**, द्वारासंभवात् । यदि हि उत्पत्त्यपूर्ववत् परमापूर्वमपि स्वातन्त्र्येण प्रयोजकं भवितुमशक्तम्, ततः तद्वदेव प्रयोजकस्य फलस्य द्वारीभवेत् । तत्तु स्वयमेव प्राधान्येन कार्यमव्यवहितं च फलापेक्षया प्रथमप्रतीतं च किमिति व्यवहितपरम् अप्रतीतफलप्रयुक्तिं प्रतीक्षते ? औपादानिकं हि फलस्य साध्यत्वम् । तेन प्रतिपन्ननियोगविशिष्टनियोज्यसंबन्धाधीनत्वात् युक्तमेव चरमप्रतिपन्नत्वम् ।

ननु काम्येषु फलकरणीभूतस्य विषयत्वात् फलसाध्यत्वपुरःसरमेव नियोगसाध्यत्वम् । नूनं भवान् यथाशक्ति निर्णयेऽपि न सम्यगालोचितपूर्वी । तत्र हि नियोगसाध्यत्वनिरपेक्षस्य फलस्य कर्मसाध्यत्वे निरूप्यमाणे अपूर्वाभिधानप्राधान्यप्रहाणादिदूषणगणः प्रदर्शित एव । तेन नियोगः स्वयमेव प्रयुक्तिसामर्थ्यात् अव्यवधानाच्च न फलस्य कर्म प्रयुञ्जानस्य द्वारीभवितुमर्हति, अतत्प्रयुक्तत्वाच्च । उत्पत्त्यपूर्वाणि हि स्वयमकार्यरूपाणि परमापूर्वसिद्ध्युपायत्वेन प्रयुक्तकार्यत्वानि युक्तं यत् परमापूर्वस्य कर्मप्रयोजकस्य द्वारं भवन्ति इति परमापूर्वं तावत् कार्यम्, तच्च न ऋते अवान्तरापूर्वेभ्यः सिध्यति इति तान्यपि कर्तव्यानि । तानि च कर्माधीनसिद्धीनि इति कर्मापि कर्तव्यमिति । अनेन हि क्रमेण अपूर्वं साधनानुष्ठापकं भवति । न च एवं फलकर्तव्यत्वाधीनं अपूर्वकर्तव्यत्वम्, तस्य स्वयमेव कार्यत्वात् । यच्च यस्य न प्रयोजकम्, तत् तद्द्वारेण अन्यस्य प्रयोजकं भवति इति कुतः एतत् ? तत् सिद्धं कामाधिकारेऽपि विधेरेव प्रयोजकत्वम्, न नैमित्तिककामाधिकारयोः कश्चित् प्रयुक्तिकल्पनाविशेष इति । प्रत्युत '**कामाधिकारेऽभ्यधिकं त्रयं स्यादपूर्वरूपं फलसाधनत्वम् । यागस्य तत्साधनता च कल्प्या, प्रयोजकत्वं तु समानमेव । ४ ॥**' प्रयुक्तिकल्पना तावत् पक्षद्वयेऽपि फलापूर्वयोः, उभयत्र वा अपूर्वस्य अविशिष्टैव । कामाधिकारे तु अप्रसिद्धमपूर्वरूपं तस्य फलसाधनत्वम्, यागस्य तत्साधनत्वं च कल्प्यम्, इति विशेषः । **अथापि** नाम कामाधिकारे न प्रयुक्तिकल्पना, तथापि अपूर्वस्वरूपं धर्मि, तस्य च फलसाधनत्वम्, यागस्य तत्साधनता ( च ) कल्प्या । नैमित्तिकत्वे तु '**क्रियारूपस्य कार्यस्य सिद्धरूपस्य धर्मिणः । प्रयोजकत्वमात्रं स्यात्, तत् नैमित्तिकता वरम् । ५ ॥** लोकसिद्धार्थत्यागाच्च श्रुतिबाधः स्थित एव । तस्मात् श्रुत्यबाधात् कल्पनालाघवाच्च नैमित्तिकत्वमेव युक्तम्, न कामाधिकारत्वमिति । कथं पुनः यच्छब्दादिविरहिणो निमित्तत्वम् ? न वयं श्रौतं निमित्तत्वं ब्रूमः, किन्तु जञ्जभ्यमानवत् कामनाविशिष्टस्य नियोज्यत्वात् अर्थात् निमित्तत्वं कामनायाः कल्प्यते । '**किञ्च यच्छब्दवाच्यत्वं न निमित्तस्य विद्यते । उद्देश्यत्वं ततः सिध्येदिह तत् सिद्धमन्यतः । ६ ॥**' यच्छब्दो हि उद्देश्यत्वमात्रं प्रतिपादयति, न निमित्तत्वम् । अनुपादेयविशेषणविशिष्टस्य उद्दिष्टस्य नियोज्यत्वेन गृहदाहादिमतः अन्वयात् विशेषणभूतस्य दाहस्य आर्थिकं निमित्तत्वमुच्यते । तच्च फलकामस्यापि नियोज्यस्य उद्दिष्टत्वात् तत्कामनाया अपि अविशिष्टमिति युक्तं निमित्तत्वम् । बहुशश्च यच्छब्दादि श्रूयते 'यः प्रजाकामः पशुकामः स्यात्' 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्' इत्यादिषु, इति न निमित्तपरत्वे कश्चित् विशेषः । **ननु** नित्यानि दर्शपूर्णमासादिकर्माणि, न तानि नैमित्तिकानि भवितुं प्रभवन्ति । यदि तावत् नियमेन क्रियेरन् ततो नैमित्तिकविध्यानर्थक्यम् । अथ तद्वशेन निमित्ते सति अनुष्ठानम्, ततो यावज्जीवविधेरानर्थक्यम् । तस्मात् कामाधिकार एव युक्त इति । **नेत्युच्यते** । यदि हि उभयपक्षसाधारणं वाक्यं स्यात्, ततः अस्मिन् पक्षे अर्थवत्त्वं समाश्रीयेत । अत्र तु श्रुत्यबाधनादियुक्तिकदम्बकेन निमित्तपरत्वमेव अवसीयते । यदि तथा सति आनर्थक्यमन्यतरस्य भवति भवतु, नहि आनर्थक्यं नाम श्रुतिप्रमाणवर्गे अन्तर्भवति । यस्य अर्थवत्त्वमवगम्यते, तस्य तदेव । यस्य तु आनर्थक्यमेव



गम्यते, तस्यापि तदेव ज्यायः । आवृत्तिर्वा प्रयोगस्य दाक्षायणयज्ञवत् अर्थवत्त्वायास्तु, न तु अर्थान्तरकल्पना शक्यते कर्तुम् । अथवा नैमित्तिकस्यैव अनुष्ठानस्य यावज्जीवकालाभ्यासो यावज्जीववाक्येन लक्षणया विधीयते । सा हि लौकिकी, लिङ्शब्दस्य तु अर्थान्तरकल्पना इहैव । अतो न कामाधिकारत्वं युक्तम् । आश्रीयतां वा सूत्रभाष्यारूढं वार्तिककारीयं दर्शनम् 'यागाद्यवच्छिन्ना भावना विध्युपेता पुरुषाभिलषितभाव्यापेक्षिणी वाक्येन स्वर्गादिकं भाव्यतया स्वीकरोति न निमित्ततया, तस्य अनपेक्षितत्वात्' इति । तत्र हि यागादेः करणत्वं कल्पितापूर्वद्वारेण संभवति, काष्ठकर्षणादीनामिव ज्वलनविलेखनादिद्वारेण व्रीहिपाकादिसाधनत्वम्, आग्नेयादिषट्कस्येव उत्पत्त्यपूर्वद्वारेण परमापूर्वसाधनत्वम्, अवगोरणादेर्वा शतयातनादिसाधनत्वम् । इति सर्वं सुस्थितं भवति ।

'**सौर्यादिषु निमित्तत्वं कामनायाः प्रसज्यते । नहि तत्र वचः किं चिदानर्थक्यमुपाश्नुते । ७ ॥**' भवतु वा दर्शपूर्णमासादिषु यावज्जीवश्रुतिसद्भावात् फलपरत्वम् । येषु तु सौर्यादिषु नित्यत्वश्रुतिर्नास्ति, तत्र किम् आनर्थक्यपरिहारार्थं फलपरत्वमङ्गीक्रियते ? । **अथायमभिप्रायः 'दर्शादावेव वाच्यत्वमपूर्वस्यावधारितम् । मा भाजि कामनालिङ्गमित्यन्यत्रापि संश्रितम् । ८ ॥**' यावज्जीवश्रुत्यानर्थक्यपरिहारार्थमेव तावत् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादिषु फलपरत्वे कामशब्दस्यावधारिते सति अतत्साधने कामिनः कार्यावगमानुपपत्तेः, कर्मणश्च क्षणभङ्गुरस्य तत्साधनभावासंभवात् तदतिरिक्तमेव स्थास्नु कार्यं लिङ्शब्दः प्रतिपादयति इत्यवगते सौर्यादिष्वपि लिङ्श्रुतेः कर्मणि तदतिरिक्ते वा पक्षपाताभावात् कामस्वभावाभङ्गार्थं फलपरत्वमेव युक्तमिति । **नेति वदामः 'अभिधानश्रुतिर्यद्यप्येवं लिङ्गं न बाधते । समानपदरूपा तु श्रुतिरस्यापि बाधिनी । ९ ॥**' यद्यपि लिङ्शब्दस्य लोके क्रियायां प्रयोगात्, दर्शपूर्णमासादिवाक्येषु च अपूर्वे प्रयोगात् उभयानुगतकार्यसामान्यवाचिनः क्रियाऽतिरिक्तेऽपि कार्यविशेषे नास्ति अभिधानव्याघातः, **तथापि** सामान्यस्य विशेषापेक्षायां समानपदोपादानलक्षणया श्रुत्या प्रकृत्युपात्तो भावार्थ एव विशेषत्वेन संबध्यमानो न पदान्तरोपात्तनियोज्यविशेषणीभूतकामनास्वभावाख्यलिङ्गवशेन निवारयितुं शक्यते । उच्चरन् एव हि प्रत्ययः स्वार्थे कार्यसामान्यं प्रकृत्यर्थानुरक्तमेव अभिधत्ते । यथोक्तम् 'प्रातिपदिकादुच्चरन्ती द्वितीया(यादि)विभक्तिः प्रातिपदिकार्थो विशेषकः इत्याह' इति ( भा. १।१।७।२५ पृ. ९९ ) । तेन अभिधानाविशेषेऽपि पदश्रुतिविरोधादेव लिङ्गबाधः । तदिदमुपहसन्ति **प्राभाकराः** । ते किल मन्यन्ते '**अपूर्वस्याभिधेयत्वे क्रिया लाक्षणिकी भवेत् । अनेकार्थत्वदोषात्तु न द्वयोरभिधेयता । १० ॥**' यदा हि फलकामिनियोज्यसमभिव्याहारात् क्रियाऽतिरिक्तमपूर्वं लिङाद्यभिधेयमास्थितम्, तदा न क्रियाया अपि तदभिधेयत्वं सुकल्पम्, अनेकार्थत्वस्य अन्याय्यत्वात्, क्रियाप्रतीतेश्च लक्षणयाऽपि उपपत्तेः । अपूर्वकार्यता हि क्रियाकार्यत्वाविनाभूता शब्देनावगता तदुपस्थापयति इति नाभिधेयत्वसंभवः । न च सौर्यादिषु लक्षणाकारणमस्ति इत्यपूर्वमेव तत्तद्गतैर्लिङादिभिः अभिधीयते । अतो न युक्तः कामनास्वभावभङ्गेन निमित्तपरत्वाभ्युपगमः ( इति । तत् दूषयति– ) इदं तु तेषामभिमानमात्रमिति प्रामाणिका न श्रद्दधति । तथाहि '**अनेकार्थत्वमन्याय्यं शक्त्यनेकत्वदोषतः । एकयैवोभयोः सिद्धौ प्रतीतेरभिधेयता । ११ ॥**' न तावत् लौकिकाः 'गामानय' इत्यादिषु लिङः ( लिङर्थस्य लोटः ) लक्षणया वृत्तिं मन्यन्ते, किन्तु मुख्यतयैव । तत्र यदि क्रियाकार्ये मुख्यया वृत्त्या अभिधीयमाने शक्त्यन्तरकल्पना आपतेत्, ततो लाक्षणिकत्वमभ्युपगम्येत, न त्वेतदस्ति, एकयैव कार्यमात्राभिधानशक्त्या उभयत्र मुख्यत्वोपपत्तेः । अनेकार्थत्वं हि अनेकशक्तिकल्पनादोषात् अन्याय्यं न स्वरूपेण, मा दूषि नानाविधनित्यकाम्यप्राकृतवैकृतनिषेधापूर्वाणां तदभिधेयत्वम् । अतो यथा तेषां कार्यत्वरूपैकोपलक्षणयोगात् तदभिधेयत्वं भवति, एवं क्रियाया अपि तपस्विन्याः तद्योगात् तदभिधेयत्वं भविष्यति । आह, नैकया शक्त्या क्रियास्वरूपे

हि प्रकृत्युपात्ते तस्य कर्तव्यतारूपं विशेषणमेव लिङा प्रतिपादयितव्यम्। अपूर्वं तु नान्येन केन चित् प्राप्तम्, इति लिङैव कर्तव्यताविशिष्टं तत्स्वरूपमभिधातव्यम् इति नैकप्रकारसंभवः।यदि विशिष्टाभिधायी, ततः अपूर्वमेव न क्रियामभिदध्यात्। अथ विशेषणाभिधायी, ततः क्रियामेव, नापूर्वम् अभिदध्यादिति। **नैतदेवम्**। विशिष्टाभिधायी एवायं शब्दः। स यदा क्रियापरो भवति, तदा तत्स्वरूपस्य प्रकृतित एव प्राप्तत्वात् विशेषणपरो भवति। तद्यथा 'दण्डी प्रैषानन्वाह' इति विशिष्टाभिधायी अपि दण्डिशब्दो विशेषणपरो भवन्नपि न लक्षणया। तथा कार्यवचनः शब्दोऽपि यदा क्रियायां प्रयुज्यते, तदा कार्यत्वरूपविशेषणपरत्वं श्रुतिवृत्तः सन् प्रतिपद्यते, नैतावता लक्षणा भवति इत्युभयत्रापि मुख्यमेव।

**यस्तु वदति**, 'ननु एवं सति कामाधिकारेऽपि समानपदोपात्तभावार्थः एवाभिधेयः स्यात् इत्यपूर्वाभिधानमुत्सीदेत्। तेन यदेव कामिनियोज्यसंबन्धात् अपूर्वाभिधायकत्वमवगतम्, तदा तन्निर्वाहार्थे क्रियाया लाक्षणिकत्वमध्यवसितम्' इति। **स एवमनुशासितव्यः**, हन्त किं नाश्रौषीः 'यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुल्यो भवन्ति' इति (भा. १०।३।१।८)। यो हि नियोज्यसंबन्धात् लिङ्शब्दं क्रियारूपकार्यविशेषवाचिनम् अवगतमपि तत उद्धृत्य अपूर्वे नयति, स कथं सामान्यवाचिनमपूर्वे नेतुं न क्षमेत। तस्मात् कर्तव्यतासामान्यवाची सन् अपि यत्र फलकामस्य नियोज्यत्वम्, तत्र तद्बलेन अपूर्वमभिधत्ते, अन्यत्र तु समानपदोपादानात् क्रियाम्। तेन सामान्यवाचित्वात् लिङ्शब्दस्य यथा अपूर्वाणां तद्योगात् तदभिधेयत्वम्, एवं क्रियाया अपि किं नोपगम्यते। तत्कर्तव्यताभेदात् इति चेत् न, तदभावात्। **तत्र एतत् स्यात्** 'कृत्युद्देश्यता कर्तव्यता लिङभिधेया उपलक्षणम्, सर्वाणि चापूर्वाणि तदुपेतानि इति युक्तं यत् तैरभिधीयन्ते इति। क्रियायास्तु फलोद्देशप्रवृत्तकृतिव्याप्यताऽऽत्मिका कर्तव्यता इति कर्तव्यताभेदात् नाभिधेयत्वसंभवः' इति। **नैतदेवम्**, कर्तव्यताभेदाभावात्। यद्यपि लौकिकानां गवानयनादीनां न स्वातन्त्र्येण कर्तव्यता अवगता, तथापि वेदे सौर्यादियागानां तादृश्येव कर्तव्यता भविष्यति। स्वतन्त्रकार्याभिधायी हि लिङ्शब्दो यजिना समभिव्याहृतः, तमेव तादृशं प्रतिपादयति। 'न लौकिकक्रियायाः तादृशी कर्तव्यता अवगतपूर्वा' इति चेत्, न। नियोगस्य वा किमवगता? येन अभ्युपगम्यते। लोकानवगताऽपि वेदादेव तस्य तादृशी कर्तव्यता अवगम्यते इति चेत्, क्रियायामपि तुल्यम्। ननु प्रत्यक्षविरुद्धा दुःखरूपायाः क्रियायाः कथमागमेनापि शक्यते कर्तव्यता प्रतिपादयितुम्। नियोगात्मा वा (कथम्) भगवद्भक्तिमानानन्दैकरसो यः, तस्य कर्तव्यता न प्रमाणान्तरविरुद्धा स्यात्। सोऽपि बहुद्रव्यव्ययप्रयाससाध्यो दुःखाकर एव न चेतनव्यापारस्य उद्देश्यतामनुभवितुमर्हति। यथा तु तस्य नित्यनिरपेक्षाम्नायात् कर्तव्यता, तथा क्रियाया अपि भविष्यति।

अपि च नियोगस्य सुखदुःखप्राप्तिपरिहारव्यतिरिक्तस्य क्रियावत् न स्वातन्त्र्येण कार्यत्वमुपपद्यते। कृतिर्हि चेतनप्रयत्नरूपा इच्छापूर्वकत्वात् तद्गोचरमेव गोचरयितुमर्हति। इच्छा हि सुखदुःखपरिहारगोचरैव इति साऽपि तद्गोचरैव। अतो नापूर्वस्य प्राधान्यमुपपद्यते इति यथा शक्तिनिर्णये वर्णितम्। किञ्च, नान्यार्थप्रवृत्तकृतिव्याप्यताऽऽत्मिका क्रियायाः कर्तव्यता इति भवता शक्यते वक्तुम्, इष्टव्याघातप्रसङ्गात्। 'लोके हि क्रियाकार्याभिधायित्वे लिङादीनामवगते क्रियारूपविशेषणपरिहारो न वेदे अपूर्वपर्यन्ततामात्रं कामपदसमभिव्याहारात् अवगम्यते' इति भवतां दर्शनम्, तत्र यदि अन्यार्थप्रवृत्तकृतिव्याप्यतारूपकर्तव्यतोपेता क्रिया तदर्थत्वेनावगता, हन्त तर्हि वेदेऽपि तद्रूपापरित्यागेन अपूर्वपर्यन्ततामात्रं कल्पनीयम् इति अपूर्वप्राधान्यमिष्टं व्याहन्येतेति।स्वर्गकामपदसमभिव्याहारो हि क्रियारूपस्यैव विशेषस्य परिपन्थी, न तु अन्योपसर्जनत्वस्य। तेन लोकवेदयोरुभयोः अन्योपसर्जनकार्याभिधानात् नास्ति अनेकार्थत्वम्। प्रत्युत सर्वकामपदसमभिव्याहाराच्च एवमेव अवगम्यते। यो हि स्वतन्त्रकार्याभिधायित्वं लिङादीनामिच्छति, स वक्तव्यः किमत्र ते प्रमाणमिति। स चेत् ब्रूयात् 'फलकामिनियोज्यसमभि-



व्याहारात् अनन्योपसर्जनं क्रियाऽतिरिक्तं कार्यं सिध्यति' इति, प्रतिब्रूयादेनं न, विपरीतसाधनत्वादिति। कामपदसमभिव्याहारो हि अन्योपसर्जनकार्याभिधाने एव प्रमाणम्, न स्वातन्त्र्ये। स हि स्वर्गं कामयमानः तत्कामित्वेन रूपेण तदुपसर्जनं कार्यं बोद्धुमलम्, इत्यनेन हेतुना तत्साधनत्वायोग्यक्रियापरित्यागेन तदनुकूलापूर्वाभिधानं लिङादीनामुपेयते, तत् कथं स्वप्रमाणविरुद्धप्राधान्याभ्युपगमः। ननु वस्तुवृत्त्या फलानुगुणमपि न तथा शब्देन अभिधातव्यम्, किमेतावता स्वप्रधानभूतमभिधातव्यम्, नहि प्राधान्ये कश्चिदपि प्रमाणलवः समस्ति। अपिच नियोज्यपदसंबन्धादेवं कल्पयितव्यम्, यादृशं कार्यरूपं फलकामी 'ममेदं कार्यम्' इति बोद्धुमलम्, तादृशमभिधातव्यम्। स च स्वकामानुगुणमेव बोद्धुमर्हति इति तथव अभिधातव्यम् अङ्गापूर्ववत्। यो हि 'प्रयाजादिविषयापूर्वं विनियुक्तविषयतया स्वतन्त्रीभवितुमसमर्थम् इति स्वशब्देन अधिकारवाक्यनिर्ज्ञातप्रधानकार्याभिधानशक्तिनाऽपि लक्षणया अन्योपसर्जनीभूतम् अभिधीयते' इति वदति, स कथम् (हास्यो न स्यात् इत्युत्तरेणान्वयः), कामाधिकारवाक्यादन्यत्र अविदितप्रधानकार्याभिधानसामर्थ्येन प्रत्युत लोकावगतगुणभूतकार्याभिधानसामर्थ्येन कामपदसमभिव्याहाराच्च अपूर्वाभिधानप्रमाणात् अवश्यम्भाविताद्दक्त्वेन लिङ्शब्देन करणीभूतविषयतया च तद्वदेव विनियुक्तविषयतया प्रत्यूढप्राधान्यमपूर्वं प्रधानतयैव लोकस्वप्रमाणस्वविषयविरुद्धम् अभिधीयते' इति वदन् हास्यो न स्यात्। तत् उभयत्रापि गुणभूतकार्याभिधानशक्त्या एकयैव मुख्यत्वोपपत्तेः न क्रियायाः लाक्षणिकत्वम्।

**'लोकतः स्वप्रमाणाच्च फलार्थविषयत्वतः। अन्यार्थत्वमपूर्वस्य प्राधान्यं न कुतश्चन।' १२ ॥** इति संग्रहश्लोकः।

एतेन नैमित्तिकाधिकारेऽपि कामाधिकारव्युत्पत्त्यनुसारात् अन्यार्थस्यैव अपूर्वस्याभिधानात् तदुपपत्त्यर्थं नियोज्यवत् फलमवश्यं कल्पनीयमिति दर्शितम्। किञ्च,

**'प्राधान्येऽपि नियोगस्य गुणभावेऽपि कर्मणः।**
**विशेषद्वयहानेन सामान्यस्यैव वाच्यता।' १३ ॥**

**यद्यपि** नियोगस्य कृत्युद्देश्यतया प्रधानस्य अन्यादृशी कर्तव्यता, क्रियायाश्च अन्योद्देशप्रवृत्तकृतिव्याप्यतया गुणभावात् अन्यादृशी कर्तव्यता, **तथापि** उभयत्र युज्यमानस्य लिङ्शब्दस्य गोशब्दस्येव खण्डादिषु प्राधान्यगुणभावप्रहाणेन खण्डत्वादिविशेषप्रहाणेनेव सर्वानुगतं कार्यत्वसामान्यं गोत्वमिव वाच्यं स्यात्। अनेकत्र प्रयुक्तस्य शब्दस्य सर्वत्र मुख्यत्वोपपत्तौ अन्याय्या लक्षणा। तदेतत् कपिञ्जलाधिकरणे (११।१।८।३८) भगवता भाष्यकारेण महता प्रबन्धेन साधितमपि स्वसमयसंतमसतिरस्कृतदृष्टिभिः नालोचितम्। एतेन 'गामानय' इत्यादिषु कार्यान्विते प्रयोगात्, तथा 'नद्यास्तीरे फलानि सन्ति' इत्यादिषु सिद्धार्थान्विते प्रयोगात्, उभयानुगताकाङ्क्षितसंनिहितयोग्यार्थमात्रान्वितस्वार्थाभिधायित्वात् गवादिशब्दानां कार्यान्विताभिधायित्वं निरस्तम्।

**'यदि त्वेतन्न मृष्येत प्रमाणान्तरगोचरः।**
**शब्दानामभिधेयं स्यात् ततो वेदाप्रमाणता।' १४॥**

यदि हि अनेकत्र प्रयुज्यमानस्यापि शब्दस्य सर्वानुगतसामान्यसद्भावेऽपि तद्वाचित्वमनभ्युपेत्य व्युत्पत्त्यवसरावगतविशेषवाचित्वेन अन्यत्र लाक्षणिकी वृत्तिरभ्युपगम्येत, ततो वृद्धव्यवहारे प्रमाणेन तदाभासेन वा वक्तृबुद्ध्यारूढे एवार्थे शब्दप्रयोगात् तथाविधः एव सर्वशब्दानामभिधेयः स्यात्, वेदे चापौरुषेये तदसंभवात् अप्रतिपादकत्वम्, वेदस्य पौरुषेयत्वं वा बलादापद्यते इति अप्रामाण्यं स्यात्। तथा लिङ्शब्दस्यापि व्युत्पत्तिस्थानाभिमते कामाधिकारे फलकामिनियोज्यफलानुगुणापूर्ववाचित्वं व्युत्पन्नम् इति नैमित्तिकनिषेधाधिकारयोरपि व्युत्पत्त्यनुसारेण तथाविधापूर्वाभिधानात् तदनुसारेण फलं तत्कामी च नियोज्यः कल्पयितव्यः इति सर्वत्र फलाविकारत्वं जातेष्टिवत् स्यात्। तस्मात् सिद्धार्थेऽपि वेदस्य प्रामाण्याविघातात् 'आनन्दं ब्रह्म' इत्यादीनां प्रामाण्यनिराकरणं नास्तिकतामेव फलति, इत्यलमनेन।

तस्मान्न क्रियाया लाक्षणिकत्वम्, इति सौर्यादिषु लिङ्शब्दस्य कार्यसामान्यवाचिनः समानपदोपादानश्रुत्या भावार्थविषयत्वात् तत् मा बाधि इति निमित्तत्वमेव कामनायाः भवन्मते स्यात्। तस्मात् विधियुक्तायाः

क्रियायाः फलापेक्षत्वात् तत्परत्वमेव कामशब्दस्य, न निमित्तपरत्वमनपेक्षितत्वात् इत्ययमेव निमित्तपरत्वनिराकरणहेतुः, अभ्युच्चयमात्रं तु नित्यत्वम् । भङ्गुराया अपि क्रियायाः फलसाधनत्वम् अवान्तरव्यापारापूर्वद्वारेण प्रागेव समर्थितम् । बहु एव हि तत्रोदाहरणं काष्ठाग्नेयावगोरणादि इति नात्र विशेषे मनः खेदयितव्यम्, न च अलौकिकममिधेयं कल्प्यम् । अत्र संग्रहश्लोकाः: '**श्रुतिः समर्थिता भवेन्निमित्ततासमाश्रये । विरुध्यते हि कामनास्वरूपलिङ्गमेव तु ।१५।। फले समाश्रिते श्रवि: प्रसिद्धमर्थमुत्सृजेत् । अलौकिकं समाश्रयेदतश्च सा विरुध्यते ।१६।। निमित्तताऽऽश्रये विधेः प्रयुक्तिकल्पनं तु यत् । फले समाश्रितेऽपि तत् समं फलस्य तस्य वा ।१७।। अपूर्वरूपमस्ति तत् फलस्य साधनं तथा । यजिश्च तत्र साधनं त्रयं त्विदं ततोऽधिकम् ।१८।। अथ प्रयुक्तिकल्पनं निमित्त एव नो फले । तथापि तद् वरं यतस्त्रयं प्रकल्प्यमन्यथा ।१९।। कथं तु यत् पदादिभिर्विना निमित्ततेति चेत् । फलार्थिनो नियोगतो न तु श्रुतेर्निमित्तता ।२०।। कथं तु नित्यवच्छ्रुतं निमित्तवद्भविष्यति । अनर्थकं प्रसज्यते वचस्तयोर्हि किं चन ।२१।। भवत्वनर्थकं नहि प्रयोजनात् प्रमास्थितिः । प्रयोगभेदकल्पनं निमित्ततोऽथवा भवेत् ।२२।। निमित्तता प्रसज्यते न यत्र नित्यवच्छ्रुतिः । द्वयोः प्रसक्ततः श्रुतिर्न लिङ्गबाधनक्षमा ।२३।। अतः स्वभावलिङ्गवः फलत्वमेव चेन्न तत् । पदश्रुतिर्हि कामनास्वरूपलिङ्गबाधिनी ।२४।। अपूर्वमेव चेच्छ्रुतिर्ब्रवीति न क्रियामपि । द्वयोरपि प्रयोगतो ऽनुवृत्तमेव सा वदेत् ।२५।। यथैव गोत्वमेव गोकृतिस्तथैव लिङ्श्रुतिः । द्वयोः क्रियानियोगयोर्ब्रवीति कार्यमात्रकम् ।२६।। अतः श्रुतेरनुग्रहात्तथाऽल्पकल्पनादपि । निमित्ततैव ते भवेदियं तु तन्निराकृतिः ।२७।। अपेक्षते फलं क्रिया विधिक्षमा हि नान्यथा । ततस्तदेव गृह्यते निमित्तताऽनपेक्षिता ।२८।। कथं फलस्य साधनं क्रिया विशारुकेति चेत् । अवान्तरक्रियाऽन्वयात् स्वरूपतस्तु नो भवेत् ।२९।। यथैव वासनावशात् प्रमाणतः स्मृतिर्भवेत् । यथेन्धनैरवान्तरक्रियावशाच्च विक्लिदिः ।३०।। यथाऽवगोरणादिना शतादियातनोद्भवः । यथैव कर्मणस्तव स्वरूपभङ्गुरादपि ।३१।। अवान्तरक्रियावशाद्भवेदधिक्रियाविधिः । तथा ततः फलं भवेत् किमत्र खेद्यते मनः ।३२।।**'

तदेवं फलपरत्वे सति किं तत् आग्नेयादीनां तन्त्रम्, उत मेदेन इति विचार्यते । यत्र अन्योन्यनिरपेक्षा एव आग्नेयादिभावनाः भाव्यमपेक्षन्ते, इति तथैव संबध्यन्ते । इति पूर्वः पक्षः । सिद्धान्तस्तु फलमुद्दिश्य आग्नेयादीनामुपादीयमानानां तन्त्राभिधानावगतं साहित्यं विवक्षितम् । एकेनापि च फलेन सर्वेषां नैराकाङ्क्ष्यं भवति इति सर्वेषामेव तन्त्रं फलमिति । ततः अङ्गानां निरपेक्षैरेव वाक्यैः क्रतूपकारसाधनत्वेन विनियोगात् निरपेक्षाणामेव तत्साधनत्वं सौर्यार्यमणादीनामिव ब्रह्मवर्चसादिसाधनत्वमाशङ्क्य उक्तं नैषां वाक्येन विनियोगः, स्वरूपमात्रेण तु स्ववाक्यैरुपस्थितानां प्रकरणविनियोगः । तच्च अपर्यायव्यापारम् इति सह सर्वेषां विनियोगः । कथं तर्हि अङ्गविधीनां विनियोजकत्वम् ? तदभावे प्रकरणविनियोगस्य असंभवात्, न तु स्वरूपेणैव विनियोजकत्वम् । प्रयोजकैकस्वभावत्वात् इत्ययुक्तमेतत् । यदा तु श्रेयःसाधनतैव विधिः लिङादिभिरभिधीयते इत्याश्रीयते, तदाऽपि क्रत्वैदमर्थ्यमात्रेण प्रकरणसनाथैः प्रातिस्विकैर्विधिभिः विनियुक्तानां प्रयाजादीनाम् एकैकेनैव प्रधानविधिना अष्टदोषदुष्टविकल्पपरिजिहीर्षया सर्वविशिष्टभावनाविधायिना सर्वेषां युगपत्प्रयोगावगमात् तद्वशेन अवान्तरकार्यभेदद्वारेण सर्वेषामुपकारकत्वस्य सहैव परिकल्पनात् काष्ठादीनामिव पाकाङ्गानां समुच्चयसिद्धिः । नहि उपकारमुद्दिश्य पदार्थानां विधिः संभवति, तेभ्यः प्राक् उपकारस्य अप्राप्तत्वात् इति क्षुण्णमेतत् । यत्र तु प्रमाणान्तरेण एककार्यत्वावगमः यथा व्रीहियवयोः, यत्र वा प्रयोगविधिनानात्वमेकार्थत्वेऽपि यथा उद्भिच्चित्रयोः पश्वर्थयोः, तत्र विकल्प इति ।



ननु यदि प्रधानविधिरेव अनुष्ठापकः नाङ्गविधयः अनुष्ठापकाः, किमर्थास्तर्हि तेषु अर्थवादाः 'वर्म वा एतद् यज्ञस्य क्रियते' इत्यादयः, ते हि विधेः प्रयोजकशक्तिम् उत्तभ्नन्ति इति स्थितिः । अप्रयोजकत्वे तु तेषां किमुत्तम्भनम् एषां कार्यमिति, उच्यते, प्रधानविधेरेव सर्वाङ्गविशिष्टप्रधानविधायिनः तदङ्गस्तुतिद्वारेण सर्वे एव अर्थवादाः शेषभूता इत्यदोषः । नैतदेवम् । विध्येकवाक्यभावेन हि अर्थवादानां तत्वम्, न च प्रधानविधिना अङ्गवाक्यस्थानामर्थवादानाम् एकवाक्यत्वसंभवः इति न तच्छेषत्वसंभव इति । नैष दोषः । प्रधानविधिशक्तिर्हि विशिष्टं विषयीकृत्य अर्थात् विशेषणेषु अङ्गेषु संक्रामति, तत्स्थविध्येकवाक्यभूता अर्थवादाः युक्तं यत् तामुत्तभ्नन्ति इति । यथा 'वायुर्वै क्षेपिष्ठा देवता' इत्यनेन विशिष्टालम्भविधिशक्तेः अर्थात् विशेषणभूते वायौ संक्रान्तायाः सहायकरणम् । इयांस्तु विशेषः, यत् तत्र वायोः वाक्येन विनियोगः, प्रयाजादेस्तु प्रकरणेन । नैतावता अर्थवादसंगतेः कश्चिद्विशेषः । तत् सिद्धम् अङ्गानामपि संभूयकारित्वमिति ।

ततः एककालानां बहूनां प्रधानानाम् एकदेशकालकर्तृकाणां तादृशान्यङ्गानि तन्त्रं यथा आग्नेयादीनां प्रयाजादयः । यत्र तु अन्यतमस्यापि भेदः यथा त्रिकद्वयस्य कालभेदः, वरुणप्रघासेषु मारुत्याः अन्येषां च देशभेदः, तत्रैव आपराग्निकानां (पत्नीसंयाजानाम्) कर्तृभेदः, तत्र अङ्गानाम् आवापः– आवृत्तिरित्यर्थः । एकदेशकालकर्तृत्वेऽपि वचनादावापः यथा 'अग्नये पवमानाय निरुप्य' पावकशुचिभ्यां समानबर्हिषि निर्वपेत् इति । (इति एकादशाध्यायार्थविचारः । अत्र अध्यायार्थविचारः अल्पीयानेव, प्राभाकरनिरासस्तु प्रधानम्) ।

* **एकादशिनी** (पशूनां) गवामयने अभ्यस्यमाना दण्डकलितवदभ्यस्यते । भा. १०।५।२५।८३ । 'पुनः पर्यावृत्तेषु आग्नेयमेव प्रथमेऽहन्यालभेत' इति वचनात् परिवृत्तिः ऐकादशिनेषु । ८६, * **एकादशिनीं** (पशूनां) द्वादशाहे विधाय विहृतायाम् एकस्य (पशोः) अतिरेकं दर्शयति । १०।६।१३।४२, * **एकादशिन्याः** समस्तैश्च प्रायणीयोदयनीययोः संबन्धः कर्तव्यः इत्युक्तं विधेस्त्वेकश्रुतित्वात् (११।१।१६) इत्यत्र । ११।१।१०। ५४. * **एकादशिन्याम्** अध्रिगुप्रैषे देवानां गणत्वाभावेन पृथक्त्वेन च 'मेधपतिभ्यो मेधम्' इति बहुवचनान्तत्वमेव ऊहनीयम्, न त्वेकवचनान्तमन्त्रस्य विकल्पः । वि. ९।३।१४. * **एकादशिन्याम्** अनारभ्य विहारः शिष्टः । 'यथा हि प्रभवः पशवः स्युः । तानेवानूचीनानहरहरालभेरन्, आग्नेयमेव प्रथमेऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्ततः । अथ पुनर्ज्योतिरादीनां पर्यावर्तेष्वाग्नेयमेव प्रथमेऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्ततः' इति । तदनारभ्यवादानां प्रकृत्यर्थत्वात् ज्योतिष्टोमं प्रविष्टम् । तत्र अह्नां बहुत्वस्याभावादसंभवादपरां प्रकृतिं द्वादशाहमागतम् । तत्रापि, पुनर्ज्योतिरादीनां पर्यावर्तेषु इत्येतन्न युज्यते इति तृतीयां प्रकृतिं गवामयनमापन्नम् । एवमागतस्यैतद्दर्शनमिति । भा. ७।४।३।२०, * **एकादशिन्यां** (यूपानां) यूपाहुतिः तन्त्रम् अन्तिकदेशस्याविवक्षितत्वात् । १०।१।५।११.

* **एकारपाठः** (ए इत्यक्षरस्य पाठः) यत्रैव स्थानान्तरे उत्तरादौ, तत्रैव आईभावरूपा गीतिः ऊहितव्या, न तु प्राकृतस्थानपठिताक्षरान्तरे कर्तव्या । भाट्ट. ९।२।८.

* **एकार्थानां** करणमन्त्राणां विकल्पः । भा. १२।३।१३। २९, * **एकार्थानां** ब्राह्मणविनियुक्तानां प्रथनादिमन्त्राणां विकल्पः । १२।३।१५।३१–३५, * **एकार्थानां** विकल्पो वा बाधो वा भवति । १०।४।२।३ पृ. १९१३.

* **एकार्थत्वम्** अनेकमुख्यविशेष्यराहित्यम्, न तु एकाख्यातवत्त्वम् । तेन आख्यातभेदेऽपि यत्रैकाख्यातार्थे अन्याख्यातार्थः प्रकारो यथा 'पश्य मृगो धावति' इत्यादौ, तत्रैकवाक्यत्वमेव । मणि. पृ. ६३. * **एकार्थत्वेन** अनेकार्थत्वं बाध्यते । बाल. पृ. १४०. * **एकार्थत्वात्** (अभिमर्शनयोः) समुच्चयो न संभवति सौर्ये चरौ । भा. ८।१।१५।२६.

X 'एकार्थास्तु विकल्पेरन्' इति न्यायः। विकल्पाधिकरणम्। सूत्रार्थस्तु अव्यवहितोत्तराधिकरणे द्रष्टव्यः। के.

X **एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य। १२।३।४।१० ॥**

ये तु गुणा एकार्था एकफलकाः, ते विकल्पेरन्, तेषां विकल्पः स्यात् न समुच्चयः। समुच्चये हि यस्मात् प्रधानस्य आवृत्तिः कर्तव्या स्यात्। न च प्रतिगुणं प्रधानावृत्तिर्न्याय्या। तस्मात् एकार्थानां विकल्पः यथा व्रीहियवयोः यथा वा खादिरपालाशादीनाम्। इति सिद्धान्तः।

**अभ्यस्येतार्थवत्त्वादिति चेत्। ११ ॥**

शङ्कते। एकार्थानामपि न विकल्पः किन्तु व्रीहियवादिकम् अभ्यस्येत। व्रीहीन् कृत्वा पुनर्यवान् कुर्यात्। उभयं कर्तव्यम्। गुणान्तरशासनस्य यवशास्त्रस्य अर्थवत्त्वात् अर्थवत्त्वार्थं साकल्यार्थम् अभ्यासः। इति चेत्।

**नाश्रुतित्वात्। १२ ॥**

अत्रोच्यते नाभ्यासः कर्तव्यः। अश्रुतित्वात् श्रुतिशून्यत्वात् अभ्यासस्य अश्रवणात्।

**सति चाभ्यासशास्त्रत्वात्। १३ ॥**

चशब्दस्तुशब्दार्थकः। 'संसवे उभे कुर्यात्' 'गोसवे उभे कुर्यात्' इत्यादौ सति तु समुच्चये अभ्यासशास्त्रत्वात् अभ्यासशास्त्रस्य युक्तत्वात्। असति तु विकल्प एव एकार्थानां युक्तः। अभ्यासशास्त्रात् इति वक्तव्ये त्वप्रत्ययः नैयायिकत्वसंपातात्।

**विकल्पवच्च दर्शयति। १४ ॥**

'बैल्वो वा खादिरो वा पालाशो वा अन्येषां यज्ञक्रतूनां यूपा भवन्ति, अथैतस्य खादिर एव कार्यः' इति वाजपेये खादिरस्य नियमं वदन् अन्यत्र विकल्पवत् विकल्पयुक्तमनुष्ठानं दर्शयति। तस्मादेकार्थानां विकल्पः। चकारो हेतुसमुच्चयार्थः।

**कालान्तरेऽर्थवत्त्वं स्यात्। १५ ॥**

यदुक्तं (११ सूत्रे) गुणान्तरस्य अर्थवत्त्वाय अभ्यास इति, तत्रोच्यते। कालान्तरे क्रियमाणे प्रयोगान्तरे गुणान्तरस्य अर्थवत्त्वं स्यात्। कार्तिके क्रियमाणयोर्दर्शपूर्णमासयोर्व्रीहिभिः प्रयोगः, चैत्रे क्रियमाणयोः यवैः प्रयोगः। इति उभयोरपि गुणयोः साफल्यं भवति। मिश्रणे तु नास्ति प्रमाणम्। तस्मादेकार्थानां विकल्प एव। के.

* एकार्थास्तु० इति द्वादशाधिकरणे तुल्यार्थत्वमात्रेण विकल्पस्य वक्ष्यमाणत्वात्। सु. पृ. ८००. * आघारे ऊर्ध्वताऽऽदीनां तत्तद्वाक्यैः परस्परानपेक्षाणाम् आघारक्रियाऽर्थतया विधीयमानानाम् **एकार्थास्तु०** इति न्यायेन व्रीहियववत् विकल्पः एव इति पूर्वः पक्षः। **सोम.** १२।३।४.

* कथं न (आमिक्षावाजिनयोः) समुच्चयः? (उत्तरम्) 'एकार्थास्तु०' इति हि स्वास्त्वेतत्। वा. २।२।९।२३ पृ. ५३३। सु- समुच्चयासंभवं शङ्कते 'एकार्थास्तु०' इति। आमिक्षावाक्ये निरपेक्षामिक्षासाधनकत्वेन अवगते यागे समुच्चयविध्ययोगात् वाजयोगस्य चोपलक्षणमात्रत्वोपपत्तेः न वचनात् समुच्चयसिद्धिः। पृ. ८२७.

X **एकार्थत्वादविभागः स्यात्। ९।२।१५।४५ ॥**

अग्निष्टोमे 'बृहत् पृष्ठं भवति' 'रथंतरं पृष्ठं भवति' इत्याम्नायते। पृष्ठस्तोत्रनिष्पादनम् एकोऽर्थः बृहतो रथंतरस्य च, तस्मात्तयोर्धर्माः उभयेऽपि उभयत्रापि कर्तव्याः। धर्माणाम् अविभागः स्यात् विभागो व्यवस्था न स्यात्। बृहद्रथंतरशब्दग्रहणं तु तद्धर्मलक्षणार्थं स्यात्। इति पूर्वः पक्षः।

**निर्देशाद् वा व्यवतिष्ठेरन्। ४६ ॥**

बृहद्रथंतरयोः स्तोत्रसंपादनार्थत्वात् उभयोर्धर्मा उभयत्र कर्तव्याः इति पूर्वपक्षं वाशब्दो व्यावर्तयति। तयोर्धर्माणां व्यवस्थैव स्यात्। 'नोचैर्गेयम्, न बलवद्गेयम्' 'रथंतरे प्रस्तूयमाने संमीलयेत् (नेत्रे), स्वर्दृशं प्रति (स्वर्दृक्शब्दोच्चारणकाले) वीक्षेत' इत्यादयो रथंतरधर्माः। 'उच्चैर्गेयम्, बृहति गीयमाने समुद्रं मनसा ध्यायेत्' इत्यादयो बृहद्धर्माः। ते व्यवस्थयैव कर्तव्याः। ते व्यवतिष्ठेरन् व्यवस्थिता भवेयुः। निर्देशात् 'बृहत् पृष्ठम्' 'रथंतरं पृष्ठम्' इति भेदेन निर्देशात्। न श्रुतिसंभवे लक्षणाऽऽश्रयणं युक्तम्। तस्मात् धर्माणां व्यवस्था इति सिद्धान्तः। के.



* एकार्थत्वादविभागः स्यात्। इत्यत्र, 'रथंतरे प्रस्तूयमाने संमीलयेत्' 'बृहति प्रस्तूयमाने समुद्रं मनसा ध्यायेत्' इत्यादौ प्रतिनियमनिर्देशान्यथाऽनुपपत्त्या अपूर्वसाधनीभूतरथंतरत्वादिलक्षणापक्षस्यापि आश्रयणात् न धर्माणां सांकर्यम् इति वक्ष्यते। कौ. १।२।४४ पृ. ८४.

X **एकार्थत्वादविभागः स्यात्। १०।२।७।२२ ॥**

दर्शपूर्णमासयोः 'इदं ब्रह्मणः इदं होतुः' इत्यादिना चतुर्धाकरणमाम्नातं बहूनां पुरुषाणां शेषेण संबन्धः कर्तव्य इति। शतकृष्णले चरौ तु सर्वे भागाः ब्रह्मणे एव परिहृताः। तस्मादत्र सर्वशेषाणामेकार्थत्वं ब्रह्मार्थत्वं सिद्धम्। तस्मादत्र अविभागः स्यात् विभागः चतुर्धाकरणं न स्यात्। इति सिद्धान्तः। के.

* **एकार्थत्वे** उभयोः विकल्पो भवति। भा. १२।३।१।१.

* **एकार्थविधानेन** अनेकार्थविधानं बाध्यते। अप्राप्तबाधः। वा. ३।३।७।१४ पृ. ८६०. * **एकार्थविधाने** संभवति अनेकार्थविधानमन्याय्यम्। भा. ९।४।२।१८, * एकार्थविधाने हि एकं वाक्यं भवति। २।३।३।४ पृ. ५९२.

* **एकार्षेयस्य** वरणविशिष्टकर्माधिकारो नास्ति इति सूत्रभाष्यकारौ। तथापि एकार्षेयस्यापि आर्षेयत्रयवरणसमर्थत्वात् अधिकारोऽस्ति। मनुवत्पक्षे तु एकार्षेयवरणमपि ऋष्यन्तरैः स्वीकृतम्। स्पष्टं चेदम् ६।१।१० अधिकरणे भाट्टे। के.

* **एकाष्टका**। भाक्तो हि अन्यासु अष्टमीषु एकाष्टकाशब्दः। एषा हि मुख्या या माघ्यां वृत्ता। भा. ६।५।९।३४. * एकाष्टका माघकृष्णाष्टमी इति याज्ञिकसमाख्या। वि. ६।५।१०.

* **एकाहः**। एकेनाह्ना योगात् एकाहः यागः। वा. २।२।२।२ पृ. ४७१. * **एकाहाः** सोमविकारा गवादयः दर्शपूर्णमासाभ्यामूर्ध्वं स्युः, न प्राक्। भा. ५।४।९।२६. * एकाहाः सोमविकृतिरूपा यागाः अग्निष्टोमात् प्राक् नानुष्ठेयाः। वि. ५।३।१४, * **एकाहे** उपहव्ये क्रतौ 'अश्वः श्यावो रुक्मललाटो दक्षिणा, स ब्रह्मणे देयः'। अयमश्वः कृत्स्नप्राकृतदक्षिणायाः ब्रह्मातिरिक्तपुरुषान्तरस्य च बाधकः। १०।३।१८. * एकाहे तु एकत्वादेव विभागासंभवात् समस्ते (सामनी) 'ज्योगामयाविनः उभे कुर्यात्' इति। ज्योक् अनेकवारम् आमयावी रोगयुक्तः। तस्य द्वे अपि सामनी कुर्यात्। भा. १०।६।३।५. * एकाहे भूनामके सोमे 'धेनुर्दक्षिणा'। धेन्वा च अनया 'गौश्चाश्वश्च' इत्यादिनिखिलदक्षिणाबाधः। वि. १०।३।१४, * एकाहे विश्वजिति परिधानार्था वल्कत्वक् विहिता। परिधानमत्र प्रावरणम्। १२।३।१.

* **एकाहकाण्डपठितज्योतिरादिधर्माणां** गवामयनगतज्योतिरादिषु अतिदेशः। इदम् 'अतिदेशः गवामयनगत०' इति बिन्दौ द्रष्टव्यम्। भा. ७।४।३।१३–२०.

* **एकाहशब्दस्य** एकाहयोगः उपाधिः। सु. पृ. ७१७.

* **एकाहादिदीक्षापक्षाणां** प्रकृतितः प्राप्तानां न बाधः साग्निचित्ये क्रतौ। **संकर्ष.** २।१।२९.

* **एकैकस्य** एव सपत्नीकस्य पुरुषस्य कर्तृत्वं दर्शपूर्णमासयोः। भा. ६।२।२।३–१३. * **एकैकस्य** फलस्य साधनत्वेन कर्म चोद्यते। वि. ४।३।११.

X **एकैकाङ्गश्रवणे सति अन्येषामङ्गानामुपसंहरणम् इति मीमांसान्यायः** (सर्वशाखाप्रत्ययन्यायः)। श्रीकर. ३।३।२६ ब्रसू.

* **एकोद्दिष्टे** सदा भोजनं निषिध्यते। सपिण्डीकरणोत्तरम् एकोद्दिष्टम् अन्येषां स्मर्तॄणां मतेन अनिषिद्धम्। सु. पृ. १६६.

* **एकोद्देशेन** अनेकविधाने वाक्यभेदप्रसङ्गः। मीन्या.

* **एकोनपञ्चाशद्रात्रं** सत्रम्। अञ्जनाभ्यञ्जनं नाम। तत्र वैकृतैः गौग्गुलवादिभिरभ्यञ्जनैः प्राकृतस्य नवनीताभ्यञ्जनस्य समुच्चयः। वि. १०।४।७.

* 'एते असृग्रमिन्दवः' इति 'बहुभ्यो यजमानेभ्यः' इति ज्योतिष्टोमप्रकरणे विहितायाः प्रतिपदः सत्रे उत्कर्षः। वि. ३।३।१४.

X **'एते पक्षाः पुनर्योज्या व्यतिकीर्णाः परस्परम्'** (वा. १।३।९।३० पृ. २९३) इति न्यायेन

वचनव्यक्त्यानन्त्यात् वाक्यभेदानन्त्यम् । व्यतिकीर्णाः मिश्रिताः । सु. पृ. ७४३.

* एतेन क्रत्वर्थकर्तृप्रतिपादनद्वारेण उपनिषदां नैराकाङ्क्ष्यं व्याख्यातम् । वा. १।२।१।७ पृ. ११४ । अत्र सुधा ( पृ. २४ )– परलोकफलेषु कर्मसु विनाशिदेहादिव्यतिरिक्तनित्यकर्तृभोक्तृरूपात्मज्ञानं विना प्रवृत्त्यनुपपत्तेः अहंप्रत्ययेन च देहेऽपि दृष्टेन स्फुटतया तद्व्यतिरेकस्य ज्ञातुमशक्यत्वात् शास्त्रीयमात्मज्ञानं क्रतुविधिभिरपेक्षितम् । तस्य अनारभ्यविहितस्यापि सामर्थ्येन उपनिषज्जनितस्य आत्मज्ञानस्य फलातिशयलक्षणवीर्यवत्तरत्वाभिधानेन क्रत्वङ्गत्वावधारणात् तद्द्वारेण पुरुषार्थानुबन्धित्वम् । ज्ञानस्य च अव्यापाररूपत्वेन स्वरूपेण अविधेयत्वेऽपि उपासनापरनामधेयं ध्यानमेव 'आत्मा ज्ञातव्यः' इत्यादिभिर्विधीयते । अप्रतिपन्नस्वरूपस्य च ध्यातुमशक्तेः आत्मस्वरूपप्रतिपादनम् 'अविनाशी वा अरेऽयमात्मा' इत्यादिभिः क्रियमाणं विध्यपेक्षितत्वात् नार्थवादेष्विव अनादरमर्हति इति तद्द्वारेण उपनिषदां पुरुषार्थपर्यवसानम् इति भावः । एतच्च संसारिरूपात्मप्रतिपादनाभिप्रायम् । असंसारिरूपसगुणनिर्गुणात्मज्ञानस्य अभ्युदयनिःश्रेयसार्थतया साधुशब्दाधिकरणे वक्ष्यमाणत्वात् । * एतेन 'य एतेनानिष्ट्वा' अत्रत्यएतच्छब्देन अग्निष्टोमसंस्थः एव ज्योतिष्टोमः परामृश्यते, न तु सप्तसंस्थारूपं ज्योतिष्टोमं प्रकरणात् लिङ्गाच्च । सु. ५।३।१३।३७–३८. * 'एतेन (कुलाययज्ञेन) राजपुरोहितौ सायुज्यकामौ यजेयाताम्' अत्र राज्ञः पुरोहितस्य चेति द्वयोर्यजमानयोः एको यज्ञो विहितः । भा. ६।१।५।२२ पृ. १३६४, * 'एतस्यैव रेवतीषु वारवन्तीयम् अग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इत्यत्र कर्मान्तरमेवंधर्मकम्, न तु गुणात् फलम् । २।२।१२।२७.

* 'एतया अन्नाद्यकामं याजयेत्' इत्यत्र वाक्ये 'आग्नेयोऽष्टाकपालः पुरोडाशो भवति' इत्यादिना उक्तैव अवेष्टिः गृह्यते फलविधानार्थम्, न कर्मान्तरम् । भा. २।३।१३।२६.

ℤ 'एतयैव दिशा वाच्या शुक्लादेरपि नित्यता' इत्यादिवार्तिकोक्तन्यायेन शुक्लादिगुणानाम् अवान्तरभेदाभावेन गुणशब्दानां जातिवाचित्वायोगात् । सु. पृ. ३३१.

* एतच्छब्दः संनिहितस्य प्रतिनिर्देशकः । भा. २।३।१३।२६. * एतच्छब्देन संनिहितवाचिना अतीतसंनिहितस्येव आगामिसंनिहितस्यापि परामर्शः ('अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः') आगामिसंनिहितश्च ज्योतिरादिशब्दः । वि. २।२।८.

* 'एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालः' इत्यनेन वरुणप्रघासगतैन्द्राग्नैककपालगतस्य सार्थवादविधिकाण्डस्य साकमेधेषु अतिदेशः । भा. ७।१।४।२२. * 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यत्रोक्तस्य ब्राह्मणस्य लक्षणं 'मन्त्रभिन्नत्वे सति वेदभागत्वम्' इति । वि. २।१।८. * 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यनेन वरुणप्रघासगतपञ्चसंचरेषु वैश्वदेवपर्वगतसार्थवादविधिकाण्डस्य अतिदेशः । भा. ७।१।३।१७–२१.

ℤ एरण्डबीजन्यायः यथा बन्धच्छेदात् एरण्डबीजवच्चोर्ध्वगतिरिति । साहस्री. ७०५.

ℤ 'एवं पदार्थवाक्यार्थसंघातैरुपकल्पिताम् । विशिष्टां भावनां प्राप्य वृत्तिर्विधिनिषेधयोः ॥' इति न्यायेन विधिवत् निषेधस्यापि विशिष्टभावनाविषयत्वम् । सु. पृ. १३६७. धात्वर्थकारकाणां न साक्षाद्विधिः संभवतीति यदुक्तं तदनुमन्यामहे इत्याह– एवं पदार्थेति । भावनामेव विशिष्टां विदधत् प्रत्ययः अर्थात् यागादीन् विदधाति, न साक्षात् । रत्नाकर. श्लो. वा. वाक्याधिकरणे २७३.

* 'एव' । 'अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' इति एवकारः परिसंख्याबोधकः । वि. १०।४।१३. * एवकारः अन्यव्यवच्छेदवाची । सु. पृ. ८९३. * यत्र द्वे संख्ये प्राप्नुतः तत्र एवकारः अन्यतरत् निवर्तयेत् तत्र एवकारार्थः परिगृह्यते । टुप्. १०।७।२०।७३, * एवकारस्य अर्थवादत्वेऽपि पर्युदसितव्याभावो भवत्येव यथा विधौ । १०।४।२१।४२ । विधौ इव अर्थवादेऽपि भक्त्या व्याख्याने दोष एव ।



रत्न. * यतः एवकारकरणं ततोऽन्यत्रावधारणम् । भा. १०।७।२०।७३.

* एवकारप्रतिपाद्यो नञर्थभूतश्च सर्वोऽपि निषेधः परिसंख्येति युक्तम् । रसायनं. २१६.

* एवकारश्रवणादन्यनिवृत्तिर्गम्यते । यथा 'षड्विंशतिरित्येव ब्रूयात्' इति चतुस्त्रिंशदन्यावृत्त्यर्थम्, न षड्विंशतिविधानार्थम् । टुप्. १०।७।२०।७३. * एवशब्दः 'एताभ्यामेव असोमयाजिनं याजयेत्, यावेतौ आग्नेयश्चैन्द्राग्नश्च' इत्यत्र पुनः इत्यस्मिन्नर्थे भविष्यति । यथा 'क्षीरेण भुक्त्वा देवदत्तः क्षीरेणैव भुञ्जीत' इति । भुञ्जीतैव इति पुनरिति गम्यते । एवमिहापि सोमयाजिनश्च असोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ पुनः असोमयाजिनः तौ विधीयेते 'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत्' इति । तद्धर्मेकाभ्याम् इति गम्यते । भा. १०।८।१४।३६, * दर्शपूर्णमासयोराम्नायते 'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत्, यावेतौ आग्नेयश्चैन्द्राग्नश्च' इति । तत्रास्थाने एवशब्दो भवति, पुरोडाशाभ्याम् असोमयाजिनमेव इति तु विवक्षितम् । यथा 'यमेव विद्याः शुचिमप्रमत्तम्' इति, यं शुचिमेव विद्याः इति वदितव्ये 'यमेव विद्याः शुचिम्' इति । (यास्कः) । १०।८।१४।३५.

*'एष वन्ध्यासुतो याति' अयं शब्दाभासः । बृहती. पृ. ८२. * 'एष वाव प्रथमो यज्ञो यज्ञानाम्' अत्र वाक्ये अग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरत्वकालविधिः । भाट्ट. ५।३।१४, * 'एष वाव प्रथमो यज्ञो यज्ञानाम्' इत्यत्र वाक्यार्थो विचार्यते । अत्र अग्निष्टोमस्य प्राथम्यं न विधीयते नापि उत्तरेषां प्राथम्यं प्रतिषिध्यते, किन्तु इदं वाक्यम् अग्निष्टोमस्य पूर्वं कर्तव्यतामाह पश्चात् गवादीनाम् । तेन अग्निष्टोमप्राथम्यं गवादीनामङ्गम् अनेन वाक्येन चोद्यते इति वार्तिकतात्पर्यम् । के. ५।३।१४।४०.

* एषशब्दोऽपि संनिहितप्रत्यक्षवचनः सन् यथैव च पूर्वप्रकृते तद्रूपत्वाद्वर्तते तथोत्तरे प्रस्तूयमानेऽपि इत्यविशेषः । प्रकृतविच्छेदाप्रकृतप्रक्रिये च संज्ञाश्रुतिवशात् आश्रीयमाणे निर्दोषे । वा. २।२।८।२२ पृ. ५३०.

* एषितव्यादन्यस्मात् एकवाक्यगतस्य विपरिणामो लघीयान् । कुतः ? प्रत्यक्षा तेन एकवाक्यता, परोक्षा अन्येन । भा. ३।४।८।२४.

---

## ऐ.

* ऐककर्म्यात् विकल्पो भविष्यति यथा आग्नेयविकारेषु अभिमर्शनस्य । भा. ८।२।५।२४.

ℤ ऐककर्म्यान्नियमः स्यात् इति न्यायः । 'अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्' (३।१।६।१२) इति सूत्रैकदेशोऽयम् । द्रव्यस्य एकहायन्याः गुणस्य आरुण्यस्य च नियमः परस्परावच्छेदकत्वं स्यात् एकहायनी अरुणैव, एकहायन्येव अरुणा इति । ऐककर्म्यात्, एकं कर्म क्रियापदं यस्मिन् पदसमूहे, तत् एककर्म, तस्य भावः ऐककर्म्यं तस्मात् । एकेन 'क्रीणाति' इत्यनेन क्रियापदेन उभयोरपि संबन्धात् तयोर्नियमः स्यात् । इति न्यायाक्षरार्थः । के. * ऐककर्म्यान्नियमः स्यात् (३।१।६।१२) (अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्) एकस्य शब्दस्य एकार्थित्वमेव युक्तं न त्वनेकार्थत्वम् । 'गोशब्देन सास्नादिमान् अभिधीयते' इत्याप्तवाक्यात् वाच्यवाचकताग्रहदशायाम् अभिधानक्रियाकरणकर्मणोः सास्नादिमद्व्यक्तिगोशब्दयोः अभिधानक्रियाद्वारा 'ऐककर्म्यान्नियमः स्यात्' इति तार्तीयिकन्यायात् प्रथममवगतस्य संबन्धस्य नियमरूपस्य कदा चित् व्यक्तिपरिहारेण आकृतिवाचित्वे बाधप्रसङ्गात् । (पूर्वपक्षे इदम्) । कु. १।३।११।२८ पृ. ८२.

ℤ ऐकभविकनयः— प्रायणम् अनारब्धफलस्य कर्मणोऽभिव्यञ्जकम् । तच्चाविशेषात् यत्किञ्चिदनारब्धफलम्, तस्य सर्वस्याभिव्यञ्जकम् । (शांभा. ३।१।२।८ ब्रसू.) इति न्यायस्य स्वरूपम् । एकश्चासौ भवः जन्म च एकभवः तत्र भवः ऐकभविकः कर्माशयः । स च मरणकाले सर्व एवाभिव्यज्यते, उत्तरमेकमेव च देहमारभते, इति न्यायाक्षरार्थः । के. * कर्मणाम् ऐकभविकनयात् विलयसंभवे सम्यग्ज्ञानस्य नैष्फल्यं पूर्वपक्षे प्रयोजनम् । योगिनामयं पक्षः । कल्पतरुः ३।१।२।८ ब्रसू.

प्रायणस्य सकलकर्मशक्त्यभिव्यञ्जकत्वात् अभिव्यक्तशक्तिभिः कर्मभिः प्रायणानन्तरभाविनि एकस्मिन्नेव शरीरे फलजननावश्यम्भावः । **परिमलः. ३।१।३।८ ब्रसू.**

**ऐकमत्ये द्वयोरेव किमसाध्यं भवेदिति न्यायः** । अयं च एकमतिविशिष्टौ द्वावपि सर्वं स्वामीष्टं साधयतः इति विषये प्रचरतीति । **साहस्री. ९४१.**

* **ऐकशब्द्ये** परार्थवत् ( १।४।५।८ ) 'जाघन्या पत्नीः संयाजयन्ति' इत्यनेन यदि जाघन्युद्देशेन च कर्म विधीयते पत्न्यश्चास्य विधीयन्ते ततः अनेकार्थविधानात् 'ऐकशब्द्ये०' इति वैरूप्यलक्षणो वाक्यभेदः स्यात् । **वा. ३।३।१०।२१ पृ. ८७०.**

* **ऐकादशिनाः** पशवः अश्वमेधे पठिता अपि ज्योतिष्टोमे विधीयन्ते एव, तेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् । **वि. ८।१।७.** * ऐकादशिनाः पशवः 'कृष्णशीर्ष आग्नेयः' इत्यारभ्याम्नाताः । अन्येषां च 'आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येन' इति । तेषु नाग्नीषोमीयस्य विध्यन्तः । किन्तु सौत्यस्य सवनीयपशोरेव । **भा. ८।१।७।१४,** * ऐकादशिनाः पशवः द्वादशाहे प्रत्यहमेकैकः । ११।४।६।२९.

**ऐकादशिनाः पशवो द्वादशाहे प्रायणीये पञ्च, उदयनीये षट् इति विभज्यानुष्ठेयाः ॥**

**समासस्त्वैकादशिनेषु तत्प्रकृतित्वात्। १०।६।४।६॥**

**भाष्यम्**— इदमाम्नायते 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति । तत्र संशयः । किमेकादश प्रायणीये, पुनस्ते एव एकादश उदयनीये, आहोस्वित् के चित् पशवः प्रायणीये, के चिदुदयनीये इति । समानत्वान्निर्देशस्य संशयः । किं प्राप्तम् ? तुशब्दः संशयनिवृत्त्यर्थः । समासः एवैकादशिनेषु, सर्वे प्रायणीये, सर्वे पुनरुदयनीये भवितुमर्हन्ति । कुतः ? तत्प्रकृतित्वात् । प्रकृतौ ज्योतिष्टोमे समस्तानामैकादशिनानामालम्भः, इहापि समासं चोदकः प्रापयति । अपिच लक्षणत्वेन प्रायणीयमुदयनीयं चाहः श्रूयते । तत्र प्रायणीये सर्वे विहिता भवन्ति । न गम्यते विशेषः, के इहैकादशिना न विहिता इति । तथोदयनीये । तस्मात् समासस्तत्र ।

**विहारप्रतिषेधाच्च । ७ ॥**

**भाष्यम्**— विहारप्रतिषेधश्चायम्, 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेरन्' इति । 'अन्वहमेकैकमालभेत' इति विहारः प्राप्तः । तत्रैकः पशुः प्रायणीये प्राप्त एव । अन्ये अन्येष्वहःसु । ततोऽनेन किं क्रियते ? ये अन्येष्वहःसु, ते प्रतिषिध्यन्ते, प्रायणीये च ते सर्वे भवन्तीति । तथोदयनीये । तस्मात् सर्वे प्रायणीये भवितुमर्हन्तीति ।

**श्रुतितो वा लोकवद् विभागः स्यात् । ८ ॥**

**भाष्यम्**–वाशब्देन पक्षं व्यावर्तयति । नैतदस्ति समासः इति । विभागः स्यात् । कुतः ? द्वित्वश्रुतितः । द्वित्वश्रुतिर्हि भवति, प्रायणीयोदयनीययोरिति । सा चेदानीमुपादेयत्वेन, न लक्षणतया । कुतः ? एकादशिनीविधौ संनिहिते वचनादेकादशिनीं विधाय पुनः श्रुत्या तां लक्षयित्वा प्रयोजनविधित्सया एतदभिधीयते, प्रायणीयोदयनीययोरिति । तत्र द्वंद्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः । समासे चेतरेतरयोगात् नैकादशिनी केवले प्रायणीये । सा उदयनीययुक्ते भवितुमर्हति । तद्वदुदयनीयेऽपि । तस्मात् समुदाये वाक्यपरिसमाप्तिः । यदि पुनर्नोपादेयत्वेन अश्रोष्येताम्, तत्र द्वंद्वभाविनोरप्राधान्यम् । अप्राधान्ये असत्यामाकाङ्क्षायां न समासो भविष्यति । तत्र प्रत्येकं वाक्यपरिसमाप्तिः स्यात् । उपादेयत्वेन तु एतच्छ्रूयते । तस्माद्विभाग इति । लोकवत् । यथा लोके शतं देवदत्तयज्ञदत्तयोर्दीयतामित्युक्ते समासार्थो विधीयते, यदेतच्छतम्, तदेतयोर्दीयतामिति । द्वंद्वश्रुतिविधानसामर्थ्याच्छतं विभज्यते, एवमेकादशिन्यपि विभज्येतेति ।

**टुप्**— एकादशिनी विहिता ( वाक्यान्तरेण ) तस्मिन् ( एकादशिनी— ) प्रकरणे ( इदं द्वितीयं वाक्यम्– ) 'प्रायणीयोदयनीययोरालभेरन्' इति । तत्र एकादशिनी ( प्रकरणादेव लब्धफला, केवलम् ) इतिकर्तव्यताम् ( कालं च देशं च ) अपेक्षते । अपेक्षमाणायाश्च देशविशेषणत्वेन प्रायणीयोदयनीयौ विधीयेते । ( तत्र ) द्विवचनम् इतरेतरयोगश्च सर्वं विवक्षितम् ( उपादीयमानत्वात् ) । ( कथं पुनरुपादेयता, नोद्देश्यता इत्याशङ्क्य उत्तरभूतः ) अत्र ( भाष्य– )



ग्रन्थः । 'तत्र द्वंद्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः । समासे च इतरेतरयोगात् सहितयोरेव आलम्भः' इति [ आर्थिकोऽयमनुवादः ] । ( अत्र कां चिदाशङ्कामपनुदन्नाह— ) प्रायणीयोदयनीयौ विधीयमानौ शब्दवृत्तेन प्रधानभूतौ । प्रधानस्य ( पदान्तरम् ) अपेक्षमाणस्यापि भवति समासः । ( यथा 'राजपुरुषो दर्शनीयः' इत्यत्र वस्तुतो गुणभूतस्यापि शब्दतः प्राधान्यात् पुरुषस्य दर्शनीयत्वमपेक्षमाणस्यापि राज्ञा सह समासो भवति । एवं प्रायणीयोदयनीययोः ऐकादशिनान् अपेक्षमाणयोरपि भवति समासः ) । यदि न विधीयेयाताम् ( तथा सति शब्दतः ) गुणभूतौ । गुणभूतयोश्च ऐकादशिनान् अपेक्षमाणयोः समासो न प्राप्नुयात् । तस्मात् विधीयेते ( देशत्वेन प्रायणीयोदयनीयौ । तस्मात् प्रत्येकं कृत्स्नालम्भश्चोदकप्राप्तो बाध्यते ) ।

**विहारप्रकृतित्वाच्च । ९ ॥**

**भाष्यम्**— इतश्च विभागः । कुतः ? विहारः ( विभागः इत्यर्थः ) प्रकृतः 'एकादशिन्यामन्वहमेकैकमालभेत' इति । तस्यैव विकारः 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति । यावच्छक्यम्, तावत् विहारस्य अनुग्रहीतव्यम् ;

**विशये च तदासत्तेः । १० ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । आह । यदि विहारोऽभिप्रेयते, तत्रैकत्र पञ्च आलब्धव्याः, एकत्र षट् । तत्रैकदेशो न निर्णीयते, किं प्रायणीये किमुदयनीये इति । अनिर्णयेन अनध्यवसानम् । अनध्यवस्यतः अप्रवृत्तिः । तत्रोपदेशवैयर्थ्यं स्यादिति । अत्रोच्यते । विशये एतस्मिन् संशये, प्रत्यासत्तिर्मुख्येनानुगृह्येत । तत्र प्रायणीये पञ्च आलभ्यन्ते, षडुदयनीये इत्यध्यवस्यामः ।

**त्रयस्तथेति चेत् । ११ ॥**

**भाष्यम्**— इति चेत्पश्यसि प्रत्यासत्तिर्मुख्येनानुग्रहीतव्येति । तस्मात् त्रय एव प्रायणीये आलब्धव्याः, यावत्सु बहुवचनमविरुद्धं भवतीति । स्थितायां प्रतिज्ञायां सूत्रेण प्रतिचोदयत्येवम् ।

**न, समत्वात् प्रयाजवत् । १२ ॥**

**भाष्यम्**— नैतदेवम् । कुतः ? समत्वात् । यदा प्रायणीयोदयनीययोः इतरेतरापेक्षयोः ऐकादशिना विधीयन्ते, न सर्वे अन्यतरस्मिन् केवले कर्तव्याः, तदपेक्षया कार्त्स्न्यं बाधितं भवति । तत्र यावद्भिरन्यतरत्र भवद्भिरवश्यं बाधितव्यम्, तावद्भिरनुज्ञातो बाधः । अत एव साम्येनैव विभागः प्रयाजानामिव । यथा, षडागन्तवः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन प्रविभज्यन्ते, एवमिहापि यावत्सु साम्यं भवति, तावतः साम्येन विभज्य, अभ्यधिकः ( एकः ) उदयनीये आलप्स्यते, प्रत्यासत्तिर्मुख्येनानुग्रहीष्यते इति । तस्माददोषः ।

**सोम**— सत्यपि द्वंद्वे साहित्यविवक्षा इत्युत्थितेः प्रत्युदाहरणसंगतिः । **सूत्रार्थस्तु**— प्रायणीयोदयनीययोः ऐकादशिनानां समासः सामस्त्यं स्यात्, प्रकृतौ ज्योतिष्टोमे सामस्त्यस्य दर्शनात् इति । 'विहारप्रकृतित्वाच्च' इति सिद्धान्तगुणसूत्रं "विभागः प्राकृतः 'एकादशिन्यामन्वहमेकैकमालभेत' इति तस्यैव विकारः 'ऐकादशिनान् प्रायणीयोदयनीययोरालभेरन्" इति, तद्भाष्यं च 'विभागस्य संनिहितत्वात् विभागविशेषपरत्वं प्रायणीयवाक्यस्य' इत्येवंपरतया योज्यम् । अन्यथा प्राथमिकसूत्रतद्भाष्यविरोधात् इति ध्येयम् ।

**वि**-- 'स्युरैकादशिनाः किं प्रायणीयोदयनीययोः । प्रत्येकमखिलाः किंवा विभज्याः स्युस्तयोरपि ॥, उद्देश्ययोः प्रधानत्वात् प्रत्येकं पशवोऽखिलाः ।, नोद्देश्यौ शतवद् भागः शिष्टस्त्वासत्तितोऽन्तिमे ॥'

**भाट्ट**-- ज्योतिष्टोमे वैकल्पिकी पश्वेकादशिनी समाम्नाता । सा द्वादशस्वपि सुत्यासु भेदेन तथैव कर्तव्यतया प्राप्ता । तस्यां च 'अन्वहमेकैकमालभेत द्वादशे आद्यम्' इति वचनेन विहारपक्षं विधाय ऐकादशिनान् प्रायणीयोदयनीयोद्देशेन ऐकादशिनविधिः, उत ऐकादशिनानुवादेन प्रायणीयोदयनीयोपलक्षितकालविधिः इति चिन्तायाम्, प्रायणीयोदयनीयपदस्य उद्देश्यपरत्वे संभवति लाक्षणिककालोपलक्षकत्वे प्रमाणाभावात्, द्वितीयविधिप्रकारसंभवे च तृतीयविधिप्रकारस्य अन्याय्यत्वात् प्रायणीयोदयनीयोद्देशेनैव ऐकादशिनविधिः । द्वंद्वोपात्त-

त्वाच्च नोद्देश्यानेकता । एकपदोपादानाच्च न विधेयानेकताऽपि । न च अतिदेशेनैव तत्र तत्प्राप्तिसंभवे पुनस्तद्विधिवैयर्थ्यमिति वाच्यम् । अतिदेशेन सर्वसुत्यासु प्राप्स्यमानानामैकादशिनानां दशरात्रे परिसंख्यार्थत्वात् । न चैवं सैव दोषः, निषादस्थपत्यधिकरणन्यायेन काललक्षणापेक्षया तस्या अदोषत्वात् । वस्तुतस्तु अतिदेशेन सर्वत्र संभवत्प्राप्तिकाया एकादशिन्याः विहारविधिनैव एकैकपश्वतिरिक्तदशपशूनां द्वादशस्वपि सुत्यासु परिसंख्यासिद्धौ प्रायणीयोदयनीययोः अप्राप्ताया एवैकादशिन्याः विधानेन वैयर्थ्याभावः । अतश्च प्रतिप्रधानं गुणावृत्तेर्न्याय्यत्वात् प्रायणीये संपूर्णैकादशिनी, उदयनीये च संपूर्णा, इति न विभज्य तस्याः प्रयोगः । दशरात्रे च नैकातिरिक्तानां दशानां पशूनां पक्षेऽप्यङ्गता, इति तेषां तत्र बाधः । इति प्राप्ते, नेयमप्राप्तपरिसंख्या, प्रायणीयोदयनीययोः तद्विधिना इतरसुत्यासु तद्विषये नैराकाङ्क्ष्यापादनासंभवेन तत्र तद्विषये अतिदेशप्रतिबन्धकत्वायोगात् । अतश्च सर्वत्र तत्प्राप्तौ क्व चित्तद्विधिः स्ववैयर्थ्यपरिहारार्थम् इतरत्र तत्परिसंख्यां सूचयतीत्येवं विधया अयं परिसंख्याविधिर्भवेत् । न चास्यापूर्वविधित्वम्, द्वयोः पक्षयोः परस्परनैरपेक्ष्येण युगपत्प्रवृत्तयोः पौर्वापर्ये प्रमाणाभावात् । अन्यथा व्रीह्यादिविधेरपि नियमविधित्वानापत्तेः । प्रायणीयादौ एकस्य पशोर्विहारविधिनैव प्राप्तौ दशानामेव तत्र विधाने ऐकादशिनपदवैरूप्यापत्तेः । न चैवमादिदूषणानां काललक्षणाऽपेक्षया फलमुखत्वम्, अधिकरणत्ववाचिन्याः सप्तम्या उद्देश्यतापरत्वे लक्षणायाः तत्रापि समानत्वात् । तद्वरं प्रातिपदिके काललक्षणा । वस्तुतस्तु, सप्तम्यर्थोऽधिकरणत्वं द्वेधा, कालिकं दैशिकं च, 'पौर्णमास्याम्' इत्यादौ कालिकेऽपि प्रयोगात् । अतश्च सप्तम्यर्थे कालिके अधिकरणत्वे कालोपाधित्वसंसर्गेण प्रायणीयोदयनीययोरन्वयात् न काललक्षणाऽपि । अत एव 'जन्यमात्रं कालोपाधिः' इति मते 'घटे कालिकसंबन्धेन पटः' इत्यत्र न लक्षणा । अतश्च ऐकादशिनानुवादेन विधेयकालविशेषणीभूतयोः प्रायणीयोदयनीययोः द्वंद्वोपात्तसाहित्यस्य विवक्षितत्वात् मिलिता ऐकादशिना द्वादशसुत्याऽङ्गभूता अपि उभयत्र कार्याः । एवं च दशरात्राङ्गत्वप्रापी चोदकोऽपि न बाधितो भवति । एवं विहारपक्षेऽपि 'अन्वहम्' इत्यनेन कालस्यैव विधानात् सर्वसुत्याऽङ्गभूतैव एकादशिनी विहृत्य कर्तव्या । न तु एकैकसुत्यागाः एकैकः पशुरङ्गं दशपशुप्रापिचोदकबाधापत्तेः । अत एव दशाहान्तर्गतैकसुत्यामात्रविकारे एकाहादौ प्राकृतस्थानरूपकालाभावेऽपि पक्षद्वयेऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन (१०।२।२७।६४) सकलैकादशिनीप्राप्तिरविरुद्धा । प्रायणीयोदयनीययोर्मेलनं च प्रायणीये पञ्च, उदयनीये षट्, इत्येवंरूपम्, अवशिष्टस्य अन्तिमस्य तत्रैव कर्तव्यत्वात् ।

**मण्डन**— 'नैकादशिनमन्वहम् ।'

**शंकर**— 'तथैकादशिनेष्वपि ।' विभज्योक्तिः ।

* ऐकादशिनाः पशवः सवनीयपशोर्विकृतिः । वि. ८।१।७.

* '**ऐकादशिनान्** प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति अयम्, 'एकादशिन्यामन्वहमेकैकमालभेत' इति विहारस्य विकारः । यावच्छक्यं तावत् विहारस्य अनुग्रहीतव्यम् । **भा.** १०।६।४।९. * **ऐकादशिनानां** पशुगणप्रकृतित्वम् । 'वसन्ते ललामान् त्रीन् वृषभानालभेत' इत्यादयः पशुगणाः । वि. ८।१।८. * ऐकादशिनानां समस्तानां ज्योतिष्टोमे आलम्भः ! **भा.** १०।६।४।६, * **ऐकादशिनेषु** पशुषु उपयड्ढोमे अनेकगुदानां समुच्चयः, न विकल्पः । उपयजनं प्रतिपत्तिः न अर्थकर्म, उपयुक्तशेषत्वात् । १२।४।४।८.

**ऐकादशिनेषु पशुषु कुम्भी–शूल–वपाश्रपणीनां तन्त्रम् ॥**

**भेदस्तु संदेहाद् देवताऽन्तरे स्यात् । ११।४।९।३४ ॥**

**भाष्यम्**— ऐकादशिनेषु तु भेदेन कुम्भ्यादीनि स्युः, संदेहात् । एकस्यां कुम्भ्यामुप्तानां संदेहः स्यात् । कस्य पशोः कान्यवदानानीति । एवं हृदयादीनां वपानां च ।

**अर्थाद्वा लिङ्गकर्म स्यात् । ३५ ॥**

**भाष्यम्**— अथवा न स्याद्भेदः । कुतः ? सहप्रयोगात् । यत्तु संदेहादिति, अर्थाच्चिह्नं किञ्चित्करिष्यते, येन विशेषग्रहणं भविष्यति ।



**अयाज्यत्वाद् वसानां भेदः स्यात्, स्वयाज्याप्रदानत्वात् । ३६ ॥**

**भाष्यम्**— कुम्भ्यास्तन्त्रभावो न घटते । अयाज्यत्वात् वसानाम् । 'याज्याऽर्धर्चान्ते वसां जुहोति' इति श्रुतं प्रकृतौ । तत्र स्वयाज्याऽर्धर्चान्ते वसा हुता । इहापि तथैव होतव्या । न च वसानां लिङ्गं कर्तुं शक्यम् ।

**अपिवा प्रतिपत्तित्वात् तन्त्रं स्यात्, स्वत्वस्याश्रुतिभूतत्वात् । ३७ ॥**

**भाष्यम्**— अपिवा तन्त्रं कुम्भी स्यात् प्रतिपत्तित्वात् । शेषभूता वसाः । तासां प्रतिपत्तिरियम् । प्रतिपत्तिश्च द्रव्यं न प्रयोजयति । कुतः तद्धारणार्थे पात्रम् । अत्यन्तसंसृष्टाश्च वसाः, ताः स्वयाज्याऽर्धर्चान्ते एव हुता भवन्ति । ननु परयाज्याऽर्धर्चान्तेऽपि प्रसज्यन्ते । अत्रोच्यते । स्वत्वस्य अश्रुतिभूतत्वात् । नात्र श्रूयते स्वयाज्याऽर्धर्चान्ते होतव्या न परयाज्याऽर्धर्चान्ते इति । तस्मात् परत्र होमो न दोषाय, नाभ्युदयाय । अतस्तन्त्रमेव कुम्भ्यपि स्यात् ।

**सकृदिति चेत् । ३८ ॥**

**भाष्यम्**— इति चेत् पश्यसि स्वत्वं न श्रुतमिति । तेन तर्हि सकृदेव होमः प्रथमे याज्याऽर्धर्चान्ते भवतु । एवं सहत्वं चानुग्रहीष्यते, याज्याऽर्धर्चान्ते च हुतं भविष्यति । स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ।

**न, कालभेदात् । ३९ ॥**

**भाष्यम्**— नैतदेवं प्रथमे अर्धर्चान्ते इति । किं तर्हि । प्रत्यर्धर्चान्ते होतव्याः । कुतः । कालभेदात् । भिन्ना याज्याऽर्धर्चान्ताः । निमित्तसप्तमी चेयं, याज्याऽर्धर्चान्ते इति, अधिकरणस्यासंभवात् । निमित्तावृत्तौ च नैमित्तिकावृत्तिः यथा भिन्ने जुहोतीति । तस्मात् सर्वयाज्याऽर्धर्चान्तेषु होमः ।

**सोम**— 'अयाज्यत्वाद् वसानां भेदः स्यात्' इत्यादिसूत्रचतुष्टयं वसाविषयकम् अधिकरणान्तरत्वेन कैश्चित् व्याख्यातम्, तदयुक्तम् । एकदेवत्यस्थलेऽपि चिह्नकरणलक्षणव्यामोहनिरासोपायानुसरणस्य आवश्यकत्वेन प्रस्तुताधिकरणस्य तन्मात्रपरत्वे वैयर्थ्यापत्तेः । अतो 'वसानां चिह्नकरणासंभवात् न तन्त्रत्वम्' इति विशेषाशङ्कानिराकरणार्थं प्रस्तुताधिकरणम् इति वक्तव्यत्वेन उक्तसूत्रचतुष्टयस्य अधिकरणान्तरत्वायोगात् । एवं च उक्तविशेषाशङ्कया उत्थानात् **संगतिः** ।

**वि**— ( अत्र आदिमसूत्रद्वयेन एकमधिकरणं नवमम्, अन्तिमसूत्रचतुष्टयेन च द्वितीयमधिकरणं विरचितम् । तदधिकरणद्वयमपि अत्रैव निवेश्यतेऽस्माभिर्भाष्यानुसारात् ) 'किमैकादशिनेष्वस्य कुम्भ्यादेर्भिन्नता न वा ।, असंदेहाय भेदो, न लिङ्गादेवास्य सिद्धितः ॥' (इति नवमम् । अथ दशमम्) 'तत्तन्त्रं हेयमुत नो, चिह्नं नास्ति वसास्वतः (वसासु, अतः) । हेयम्, नो प्रतिपत्तित्वात् सांकर्येणाप्यदोषतः ॥'

**भाट्ट**— यत्र तु भिन्नदेवताका एकजातीयाः पशवः, तत्रापि चिह्नकरणेन विवेकसिद्धेः प्रयोगविध्यवगतसाहित्यलाभार्थं कुम्भ्याद्येकत्वमेव । न च वसानां चिह्नासंभवात् सर्वासां स्वेस्वे याज्याऽर्धर्चान्ते होमसिद्ध्यर्थं भेदेनैव कुम्भी स्यादिति वाच्यम् । संसर्गेऽपि क्षीरनीरविवेकिन्या देवतायास्तत्तत्काले तत्तद्वसाग्राहित्वोपपत्तेः । यथा च वसासंसर्गेऽपि तत्तद्याज्याऽर्धर्चान्ते वसाहोमभेदस्तथोक्तं पुरस्तात् । न च संसर्गभिया साहित्यबाधः, सांनाय्येऽपि तदापत्तेः ।

**मण्डन**— 'एकैव भिन्नदैवत्ये ।' ९. 'वसाऽर्थमपि नो पृथक् ।' १०.

**शंकर**— 'नानादेवेष्वप्येवं स्यात् ।' ९. 'वसाभेदेऽप्यभिन्नता ।' १०.

* ऐकादशिनेषु पशुषु पत्नीसंयाजेषु जाघनीनां विकल्पः । जाघनीसमुच्चयन्यायः । **भा.** १२।४।६।१०–१६, * ऐकादशिनेषु पशुषु प्रतिपशु यूपः । ८।१।८।१५, * ऐकादशिनेषु सवनीयपशुधर्माणाम् अतिदेशः । (अतिदेशप्रघट्टके अधिकरणं द्रष्टव्यम्) । ८।१।७।१४.

**ऐकादशिनेषु सौत्यस्य, द्वैरशन्यस्य दर्शनात् । ८।१।७।१४ ॥**

सुत्यायां भवः सौत्यः आग्नेयादिः सवनीयः पशुः । सौत्यस्य पशोर्यूपः द्वाभ्यां दर्भमयरशनाभ्यां परिवेष्ट्यते । ऐकादशिनाः पशवः नाम '१ आग्नेयः कृष्णग्रीवः,

२ सारस्वती मेषी, ३ बभ्रुः सौम्यः, ४ पौष्णः श्यामः, ५ शितिपृष्ठो बार्हस्पत्यः, ६ शिल्पो वैश्वदेवः, ७ ऐन्द्रोऽरुणः, ८ मारुतः कल्माषः, ९ ऐन्द्राग्नः संहितः, १० अधोरामः सावित्रः, ११ वारुणः कृष्णः एकशितिपात् पेत्वः इति एकादश पशवः । अत्र कृष्णो वर्णो ग्रीवायामेव यस्य स कृष्णग्रीवः । बभ्रुः पिङ्गलवर्णः । शिति श्वेतं पृष्ठं यस्य स शितिपृष्ठः । शिल्पः नाम बहुरूपः । कल्माषः कृष्णबिन्दुलाञ्छितः शुक्लवर्णः । संहितः शुक्लकृष्णशबलः । कृष्णः सर्वतः कृष्णः । एकः शितिः श्वेतः पादो यस्य स एकशितिपात् । पेत्वः गालितरेतस्कः । एते सर्वे जातितो मेषाः । एतेषु ऐकादशिनेष्वपि यूपानां रशनाद्वयेन परिव्याणं नाम परिवेष्टनं भवति । 'अग्निष्ठात् द्वेद्वे रशने आदाय द्वाभ्यांद्वाभ्यां रशनाभ्याम् एकैकं यूपं परिव्ययति' इत्युक्तत्वात् । तथा च सौत्ये पशौ ऐकादशिनेषु च पशुषु द्वैरशन्यं समानं दृश्यते । एवं द्वैरशन्यस्य रशनाद्वयवत्त्वस्य दर्शनात् ऐकादशिनेषु पशुषु सौत्यस्य सवनीयस्य पशोः विध्यन्तः स्यात् । द्वेद्वे रशने येषां ते द्विरशनाः । तेषां भावः द्वैरशन्यम् । द्वैरशन्यं सामान्यतो लिङ्गम् । समाने पशुत्वे सुत्याकालता विशेषलिङ्गम् । ऐकादशिना अपि सुत्यायामेव भवन्ति, यदि भवन्ति । ततश्च सवनीयः पशुः ऐकादशिनानां प्रकृतिः । के.

* ऐकादशिनगतवसाहोमस्य भेदेनानुष्ठानम् । वि. ११।२।६, * ऐकादशिनपशुगणविकृतिः प्राजापत्यसप्तदशपशवः । २।२।७.

**ऐकादशिनपशुवसाहोमानां तन्त्रभेदः ॥**

**कालभेदात् त्वावृत्तिर्देवताभेदे । ११।२।६।२६ ॥**

**भाष्यम्**— देवताभेदे, ऐकादशिनेषु भिन्नप्रदानेषु । भिन्ना याज्याऽर्धर्चान्ताः, तेषु गृह्यते विशेषः, यस्य प्रदानस्य याज्याऽर्धर्चान्तः कृतः, स तदर्थ इति । तस्मात्तन्त्रभेदः ।

**सोम**— पूर्वापवादात् संगतिः ।

**वि**— 'ऐकादशिनगे तन्त्रं वसाहोमेऽथ भिन्नता ।, तन्त्रं शक्यत्वतो, भेदः प्रदानार्धर्चभेदतः ॥'

**भाट्ट**— यत्र तु भिन्नदेवताकत्वम्, तत्रापि सजातीयपशुस्थले चिह्नकरणेन सहश्रपणस्य वक्ष्यमाणत्वात् वसायाः संसृष्टत्वेऽपि तत्तद्याज्याऽर्धर्चान्तकालस्य भेदात् भेदेनैव वसाहोमः । प्रकृतौ हि याज्यायाः यागार्थत्वेन कृतार्थत्वात् वसाहोमार्थत्वाभावेन परप्रयुक्तयाज्याऽर्धर्चान्तकालस्यैव पश्वनुनिष्पन्नवसाप्रतिपत्त्यर्थवसाहोमाङ्गत्वावगतेः तत्तद्याज्याऽर्धर्चान्ते एव तत्तद्यागाङ्गपश्वनुनिष्पन्नवसाहोमः कार्यः । न च वसायाः संसृष्टत्वात् सकृत्कृतेनैव सर्वप्रतिपत्तिसिद्धेः कालभेदेन गृह्यमाणविशेषत्वेऽपि तज्जन्योपकारस्य सत्त्वेन इतरेषु प्रसङ्गेन कार्यसिद्ध्युपपत्तेर्नावृत्तिर्युक्तेति वाच्यम् । संसृष्टत्वेऽपि सकृद्धोमेन शेषस्य अनपायात् क्षीरनीरविवेकिन्या देवतया तत्तद्यागीयवसाया एव तत्तद्याज्याऽर्धर्चान्ते ग्रहणेन यागान्तरीयवसायाः सकृद्धोमेन हुतत्वादवर्जनीयतया यागान्तरीयवसाप्रक्षेपेऽपि तद्यागसमानकालीनतत्प्रक्षेपस्यैव तत्प्रतिपत्तितया पुनस्तदावृत्त्युपपत्तेः । अतः प्रतिपत्तिरूपप्रयोजकजन्योपकारस्य दृष्टरूपस्य शेषान्तरसत्त्वेनोपपत्तेः नियमादृष्टरूपोपकारकस्यापि च भावितत्तद्यागोत्पत्त्यपूर्वेणैव नाशात् प्रतिपत्तिकार्यरूपप्रयोजकसत्त्वेन आवृत्त्यैव करणम् । यत्र तु पाकवैषम्यात् विजातीयपशुगणस्थले भेदेन श्रपणम्, तत्र वसायाः असंसृष्टत्वादावृत्तिर्देवताभेदे स्पष्टैव । ५.

**मण्डन**— 'तद्भेदे तु वसा पृथक् ।' तद्भेदे देवताभेदे ।

**शंकर**— 'कालभेदे भिदा मता ।' भिदा वसाहोमानाम् ।

**ऐकादशिनवत् त्र्यनीकापरिवृत्तिः स्यात् । १०।५।२५।८३ ॥**

गवामयने सत्रे द्वादशाहात् चोदकेन त्र्यनीका प्राप्ता । तत्र च अह्नां भूयस्त्वात् त्र्यनीकापरिवृत्तिः कर्तव्या । बहवः त्र्यनीका आवर्तयितव्याः । सा च त्र्यनीकापरिवृत्तिः ऐकादशिनवत् स्यात् । यथा गवामयने एव ऐकादशिनाः पशवः दण्डकलितवत् आवर्त्यन्ते तथा त्र्यनीका अपि दण्डकलितवत् आवर्तनीयाः । नवाहात्मिकायां त्र्यनीकायां एकदा अनुष्ठितायाम्, पुनः सा तथैव तेनैव क्रमेण अनुष्ठातव्या, एवं पुनःपुनः । क्षेत्रादिमापने यथा विशिष्टो दण्डः संपूर्णः पुनःपुनरावर्त्यते तद्वत् । इति पूर्वः पक्षः ।



**स्वस्थानविवृद्धिर्वाऽह्नामप्रत्यक्षसंख्यत्वात् । ८४ ॥**

पूर्वपक्षं वाशब्दो व्यावर्तयति । स्वस्थानविवृद्धिः स्यात् न दण्डकलितवत् । अह्नां नवानाम् अप्रत्यक्षसंख्यत्वात् अह्नां संख्या न प्रत्यक्षा । प्रत्यक्षा संख्या येषां तान्यहानि प्रत्यक्षसंख्यानि, न तथा इति अप्रत्यक्षसंख्यानि, तस्य भावात् । अहर्ग्रहणमनुवादो न विधानार्थम् । अग्रता विधीयन्ते । तस्मात् स्वस्थानविवृद्धिः कर्तव्या । स्वस्य प्रथमाया ऐन्द्रवायवाग्रतायाः यत् स्थानं प्रथममहः तस्य विवृद्धिः कर्तव्या । त्र्यनीकायाः हि नव अहानि, तेषु नव अग्रताः क्रमेण विहिता द्वादशाहे । गवामयने तु सर्वाणि अहानि नवधा विभज्य एकैकस्मिन् विंशतिदिनात्मके भागे क्रमेण एकैका अग्रता संपादनीया । प्रथमे विंशतिदिनात्मके भागे ऐन्द्रवायवाग्रता, द्वितीयायां विंशतौ शुक्राग्रता, तृतीयस्यां विंशतौ आग्रयणाग्रता, चतुर्थ्यां विंशतौ पुनः ऐन्द्रवायवाग्रता इत्येवंरीत्या स्वस्थानविवृद्धिः इति सिद्धान्तः ।

**पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् । ८५ ॥**

अथ सिद्धान्ते हेत्वन्तरं पूर्वपक्षे च दोषमाह । उत्तरस्मिन् पक्षसि परिवृत्तौ प्रातिलोम्येन पृष्ठ्यावृत्तौ पृष्ठ्यस्य षडहस्य आवृत्तौ त्रयस्त्रिंशे आग्रयणस्य दर्शनात् स्वस्थानविवृद्ध्या आवृत्तिर्गम्यते । दण्डकलितवत् आवृत्तौ तु पुनः ऐन्द्रवायवः स्यात्, त्रयस्त्रिंशे ऐन्द्रवायवः स्यात् तच्चायुक्तम् । तस्मात् स्वस्थानविवृद्धिरेव सिद्धा भवति । तथाहि स्वस्थानविवृद्धिपक्षे गवामयने आद्ययोरह्नोः यत् वाचनिकम् ऐन्द्रवायवाग्रत्वं तद्विरोधाभावेन आदित आरभ्यैव प्रवर्तमाना त्र्यनीका पूर्वस्मिन् पक्षसि नवधा विभक्ते ( १८०÷९ = २० ) परिसमाप्यते । अथ प्रातिलोम्येन प्रवृत्तस्य उत्तरस्य पक्षसः प्रथमभागगते त्रयस्त्रिंशे आग्रयणाग्रता भवति ( षष्ठेऽहनि ) । तदेतदुक्तं पृष्ठ्यावृत्तौ त्रयस्त्रिंशे आग्रयणस्य दर्शनात् इति । दण्डकलितवदावृत्तिपक्षे तु प्रातिलोम्येन प्रवृत्तस्य उत्तरस्य पक्षसः उक्ते त्रयस्त्रिंशे ऐन्द्रवायवाग्रता प्राप्नोति । तदित्थम्, पूर्वपक्षसि त्र्यनीका निविशमाना आद्ये द्वे अहनी वर्जयित्वा भवति । तयोः ऐन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् दण्डकलितपक्षे तु द्वितीयेऽहनि ऐन्द्रवायवाग्रताया अभावात् शिष्टेषु अहःसु निविशमानायाः एकोनविंशतिवारम् आवृत्तायाः त्र्यनीकायाः ( १८०−२=१७८ = [ ९×१९ = १७१+७ ] ) सप्त अहानि शिष्यन्ते । तत्र सप्तमेऽहनि ऐन्द्रवायवाग्रता । तस्मिंश्च पूर्वे पक्षः समाप्तम् । त्र्यनीका तु अपरिसमाप्ता । सा च परिसमापयितव्या । ततो विषुवान् शुक्राग्रः, ततः प्रथमः स्वरसामा आग्रयणाग्रः, ततः द्वितीयः स्वरसामा ऐन्द्रवायवाग्रः, ततः तृतीयः स्वरसामा शुक्राग्रः, ततो विश्वजित् आग्रयणाग्रः, ततः षडह आवृत्तः प्रयुज्यते । तस्य आवृत्तस्य प्रथममहः त्रयस्त्रिंशम्, तत् ऐन्द्रवायवाग्रं प्राप्नोति । एवं दर्शनं नोपपद्यते दण्डकलितवदावृत्तौ । तदेतदुक्तं पुनः ऐन्द्रवायवः स्यात् इति । 'गवामयने अहःक्लृप्तिः' इति शब्दे द्रष्टव्यम् ।

तस्मात् त्र्यनीकापरिवृत्तिः स्वस्थानविवृद्ध्या इति सिद्धान्तः ।

**वचनात् परिवृत्तिरैकादशिनेषु । ८६ ॥**

पूर्वपक्षिणा दृष्टान्ततया यदुक्तम् ऐकादशिनवत् इति, तद्युक्तम् । ऐकादशिनेषु पशुषु परिवृत्तिः 'वारुणमन्ततः, पुनःपर्यावृत्तेषु आग्नेयमेव प्रथमेऽहन्यालभेत' इति वचनात् स्यात् । सा द्वादशाहे असंभवन्ती गवामयनं विशति । तथा च विषमो दृष्टान्तः । तस्मात् स्वस्थानविवृद्ध्यैव त्र्यनीका ।

**लिङ्गदर्शनाच्च । ८७ ॥**

लिङ्गस्य दर्शनाच्च ऐकादशिनाः पशवः गवामयने दण्डकलितवत् आवर्तन्ते इति । 'प्राणा वा ऐकादशिनाः, यदेकादशिनीभिरीयुः अहान्यतिरिच्यन्ते पशवो वा' इति । स्वस्थानविवृद्धौ नास्त्यतिरेकः । दण्डकलितवदावृत्तौ तु न्यूनता अतिरिक्तता वा भवति । तस्मात् ऐकादशिनानां दण्डकलितवत् आवृत्तिरिति युक्तम् । त्र्यनीका तु स्वस्थानविवृद्ध्यैवेति सिद्धान्तः ।

**ऐकादशिनादिपशुगणेषु पत्नीसंयाजेषु जाघनीनां विकल्पः ॥**

**द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्, तथा विकल्पे नियमः, प्रधानत्वात् । १२।४।६।१० ॥**

**भाष्यम्**— 'जाघन्या पत्नीः संयाजयन्ति' इति श्रूयते। तत्र पशुगणेषु विचारो भवति किं जाघनीनां समुच्चयः, उत विकल्प इति। अत्रापि पूर्व एव न्यायः। यदि अर्थकर्म ततो विकल्पः, अथ प्रतिपत्तिस्ततः समुच्चय इति। किं प्राप्तम्? द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्। पूर्ववदेतदर्थकर्म, यज्जाघन्या पत्नीसंयाजनं दर्शपूर्णमासपूर्वकं चोदकपरम्परया पशुगणं प्राप्तम्। दर्शपूर्णमासयोश्चैतदर्थकर्म। नहि तत्र का चिच्छेषभूता जाघनी अस्ति, यस्याः प्रतिपत्तिः स्यात्। लौकिक्यास्तु तत्र आज्येन सह विकल्पश्चोदकेन अग्नीषोमीयं पशुं प्राप्तः। तत्रापि श्रूयते, 'जाघन्या पत्नीः संयाजयन्ति' इति। सा श्रुतिर्विकल्पे प्राप्ते नियमार्था भवति। यथाप्राप्तयोश्च नियमः। गुणभूता च प्राप्ता। तस्मादग्नीषोमीये गुणभूता जाघनी, कर्म प्रधानम्। यथा अग्नीषोमीये तथा पशुगुणेषु। तस्मात्तत्राप्यर्थकर्म। अर्थकर्मणि च एकार्थानां समुच्चयो न युक्तः। तस्माद्विकल्पः।

**टुप्**— पशुगणे जाघनीनां विकल्पः, अथ समुच्चयः इति (चिन्त्यते। पूर्वपक्षमाह–) समुच्चय इति ब्रूमः। कथम्? अग्नीषोमीये पशौ आज्यं च जाघनी च (पत्नीसंयाजद्रव्यतया प्रकृतितः) विकल्पेन प्राप्येते 'जाघन्या पत्नीः संयाजयन्ति' इति। तत्पुनर्वचनं जाघनीं नियमयति। स चायं नियमो दृष्टार्थः। कथम्? (यावता) विशसनेन हृदयादीनि उत्पादितानि (तथा च विशसनं हृदयाद्युत्पादनार्थम्, न जाघन्युत्पादनार्थम्), तानि (च) वाक्यान्तरैर्विनियुक्तानि (यागार्थत्वेन), जाघनी तु अविनियुक्ता, तेन प्रतिपत्त्यर्हा। तया यागे क्रियमाणे याऽसौ प्रतिपत्तिरपेक्षिता जाघन्याः, सा भवत्येव। (ननु अभ्युदयेष्टावपि इन्द्राद्यर्थोत्पन्नस्य सांनाय्यादेः विष्ण्वादिगमनं प्रतिपत्तिः स्यात्। अत आह--) सांनाय्ये तु (तण्डुलेषु च) यागादपूर्वम् (न प्रतिपत्तिः उपयुक्तशिष्टत्वाभावात्)। योऽयम् (दर्शपूर्णमासयोः) आज्यजाघन्योर्विधाननियमः, सोऽपि अदृष्टार्थ एव। पशौ यागादपूर्वम्, नियमः (तु) द्रव्यसंस्कारः। पशुगणेष्वपि एवमेव (संस्कारतया नियमः) प्राप्यते चोदकेन। तस्मात् सर्वाः (जाघन्यः) संस्कर्तव्याः (तस्मात् समुच्चयः)। (अत्र भाष्यम् 'जाघन्याः प्राधान्यं युक्तम्' इत्यादि 'तस्मात् प्रतिपत्तिः' इत्यन्तं [भा. पृ. २२७८ पं १–४] तदर्थतोऽनुभाष्य दूषयति--) यदेतत् 'तस्यैकदेशोऽन्यदेवत्यः स्यात्' इति पूर्वपक्षवादी सिद्धान्ते दोषमुपन्यस्यति, तदयुक्तम्। हृदयादीनाम् अग्नीषोमदेवतत्वात् (न कृत्स्नस्य तद्देवत्यता पशोः)। तदुक्तं दशमे (१०।७।२)। तस्मात् पूर्वोक्तः (पूर्वसूत्रोक्तः एवं) पूर्वपक्षो नेतरः (भाष्योक्तः।)।

**एवं प्राप्ते ब्रूमः।** नास्ति समुच्चयो जाघनीनाम्। कुतः? (गुणत्वात् जाघन्याः। संस्कार्यत्वे हि) यागः अपूर्वार्थः, दृष्टार्थं द्रव्यम्, नियमाच्च यागः (प्रधानभूतः सन् द्रव्यस्य) संस्कारकः इति विवक्षाद्वयम् (अङ्गीकर्तव्यम्, तच्च) न लभ्यते एकेन वाक्येन। अपिच यागादपूर्वं प्रधानभूतम्, द्रव्याच्च यागः (प्रधानभूतः) नियमात् (च) द्रव्यम् (प्रधानभूतम्)। तेन भवतः प्रधानम् अङ्गार्थं कृतं स्यात्। (प्रधानभूतो यागः स्वाङ्गभूतनियमार्थः स्यात्। नियमः कल्पितद्रव्यसंस्कारार्थः स्यादित्यर्थः)। [यदि तु मुद्रितलिखितयोः 'अङ्गाङ्गार्थं कृतम्' इति पाठः स्वीक्रियते, तदा 'प्रधानभूतो यागः स्वाङ्गभूतद्रव्याङ्गनियमार्थः स्यादित्यर्थः' इति तद्विवरणं भा–टिप्पणीस्थं द्रष्टव्यम्। तन्त्ररत्नपाठस्तु उपरिष्टात् प्रदर्शित एवास्माभिः। के.]। यदि च संस्कारार्था जाघनी ततः अप्राकृतकार्यत्वात् (पत्नीसंयाजाख्यम्) कर्मान्तरं पशौ प्राप्नोति। चोदकेन च अन्ये पत्नीसंयाजाः प्राप्नुवन्ति (वचनबलात् सौत्रामणीपशुपुरोडाशवत्) एवमेते दोषाः पूर्वपक्षे (प्राप्ताः स्युः।) तस्मात् यथा (येन प्रकारेण आरादुपकारकत्वेन) निर्ज्ञाताः पत्नीसंयाजाः प्रकृतौ, तथा प्राप्तानां पशौ जाघनी (वैकल्पिकी) नियम्यते (न तु संस्कार्या। तस्मात् पशुगणे जाघनीनां विकल्पः)।

**द्रव्यत्वेऽपि समुच्चयो, द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति। ११॥**

**भाष्यम्**—यद्यपि जाघनी गुणभूता कर्मणि, एवमपि समुच्चयो युक्तः। कुतः? द्रव्यस्य कर्मनिष्पत्तेः। जाघनी द्रव्यं कर्मणा विशसनेन निष्पन्नमिति। तत्र



प्रयोजनापेक्षा भवति। इदं च श्रूयते, 'जाघन्या पत्नीः संयाजयन्ति' इति। तदेवं विज्ञायते, इदमस्य प्रयोजनम्। पशुगणे च प्रतिपशु कर्मभेदः। तस्यतस्य पशोः कर्मनिष्पन्नं जाघनीद्रव्यम्। अतस्तत्रापि तत् पत्नीसंयाजार्थमेव कर्तव्यम्। एवं सति यथाप्रकृति कृतं भवति। तस्मादर्थकर्मण्यपि समुच्चयः एव।

**कपालेऽपि तथेति चेत्। १२॥**

**भाष्यम्**-- इति चेत् पश्यसि कर्मनिष्पत्तित्वाज्जाघनीनां समुच्चय इति। तेन तर्हि कपालेऽपि समुच्चयः प्राप्नोति 'पुरोडाशकपालेन तुषानुपवपति' इति। तदपि कर्मणा प्रयुज्यते। तस्यापि तुषोपवपनं प्रयोजनं भवितुमर्हति। तथा पुरोडाशगणे तस्यतस्य पुरोडाशस्य कपालेन तुषोपवपनं कर्तव्यम्। वक्तव्यो वा विशेषः।

**न, कर्मणः परार्थत्वात्। १३॥**

**भाष्यम्**—नैतदेवम्। कुतः? कर्मणः परार्थत्वात्। परार्थं च कपालानां प्रयोगकर्म, पुरोडाशश्रपणार्थम्। तदर्थमुपात्ते कपाले तुषोपवपनमपि अन्वासज्यते। तद्यथा काष्ठान्याहर्तुं प्रस्थिते पुरुषे शाकाहरणमपि उपाधिः क्रियते, शाकमप्याहरेति। न तस्य गमनं शाकार्थमपि भवति। कथं पुनर्ज्ञायते पुरोडाशार्थे कपाले तुषोपवपनमन्वासज्यते, नैतदुभयार्थमिति। उक्तोऽत्र न्यायः। 'भविष्यता संयोगस्य तन्निमित्तत्वात्' (४।१।११।२६) इति। न चेत् तुषोपवपनार्था कपालानामुत्पत्तिः, नावश्यं सर्वैस्तुषोपवपनं कर्तव्यम्। अथवा उभयोरपि प्रतिषेधोऽयम्, न कर्मणः परार्थत्वादिति। कपाले व्याख्यातम्। जाघन्यामपि, कर्मणः परार्थत्वम्। हृदयादीनां निष्पत्त्यर्थं विशसनकर्म, न जाघन्याः। अपिच हृदयादिभिरवदानैर्यष्टुं पशोरालब्धस्य विशसनकर्मापि तदर्थमेव। तस्मान्न जाघन्या निष्पत्त्यर्थं विशसनम्। न चेदेवम्, नैवात्र प्रयोजनाकाङ्क्षा, कुतस्तत्संबन्धः। हृदयादीनि अनुनिष्पन्ना जाघनी, सा पत्नीसंयाजनिर्वृत्त्यर्थमुपदिष्टा। एकया च तया ते निर्वर्त्यन्ते। तस्मात् पशुगणे जाघनीनां विकल्पः।

**प्रतिपत्तिस्तु, शेषत्वात्। १४॥**

**भाष्यम्**-- भवेद्विकल्पो यदि अर्थकर्म स्यात्। प्रतिपत्तिस्त्वेषा। कस्मात्? शेषत्वात्। पशुना निर्वर्तिते यागे शेषभूता जाघनी निष्प्रयोजना क्व चिन्निक्षेपार्हा। तस्या निक्षेपः पत्नीसंयाजेषु क्रियते, न जाघनी विधीयते, न पत्नीसंयाजाः। उभये विहिताः। संबन्धो न विहितः। स विधीयते। तत्र च जाघन्याः प्राधान्यं युक्तम्, न गुणभावः। गुणभावे अस्या अनेकत्र गुणभावः स्यात्। तत्र को दोषः? 'अग्नीषोमीयं पशुमालभेत' इत्येषा चोदना बाध्येत। नानादेवतोऽयं तदा पशुर्भवति। एकदेशोऽस्य अग्नीषोमीयः। एकदेशः पत्नीसंयाजदेवतानामिति। तस्मात् प्रतिपत्तिः। प्रतिपत्तौ यस्यैव पशोर्जाघनी न प्रतिपाद्यते, तस्यैव तेन संस्कारेण वर्जनं स्यात्। तस्मादपि समुच्चयः।

**शृतेऽपि पूर्ववत्त्वात् स्यात्। १५॥**

**भाष्यम्**--'शृते चरुम्, दधंश्चरुम्' इत्यत्रापि प्रतिपत्तिः स्यात्। कुतः? पूर्ववत्त्वात्। अन्यपूर्वकं शृतं दधि च इन्द्राय उत्पन्नम्। तस्यार्थान्तरगमनं विष्णुं शिपिविष्टं प्रति। तस्मात्तस्यापि 'उत्पत्तौ येन संयुक्तं तत्र तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात्' इत्यनेन न्यायेन (४।२।७।१९) प्रतिपत्तिः प्राप्नोति। वक्तव्यो वा विशेषः।

**विकल्पे त्वर्थकर्म, नियमप्रधानत्वाच्छेषे च कर्मकार्यसमवायात्, तस्मात् तेनार्थकर्म स्यात्। १६॥**

**भाष्यम्**-- अस्मिन् सूत्रे द्वयोः सूत्रयोः परिहार उच्यते। प्रतिपत्तिस्तु शेषत्वादिति, शृते च पूर्ववत्त्वात् स्यादिति च। यत्तावदुच्यते जाघन्याः प्रतिपत्तिरिति। तत्र ब्रूमः। विकल्पः प्रकृतौ जाघन्या आज्येन सह। पशौ च तथैव विकल्पे प्राप्ते, नियमप्रधाना पुनःश्रुतिः, 'जाघन्या पत्नीः संयाजयन्ति' इति आज्यस्य निवृत्तिं कृत्वा कृतार्था भवति, जाघन्या अर्थकर्म न वारयति। यस्तु शेषत्वादिति, शेषस्यापि वचनादनेकत्र गुणभावो भवति। यथा प्रस्तरस्य। यच्च शृतस्य अन्यार्थमुत्पन्नस्य अन्यत्र गमनं प्रतिपत्तिरिति, तदप्ययुक्तम्। कुतः? शेषे च कर्मकार्यसमवायात्। य उपयुक्तः शेषः, तस्मिन्

कर्मकार्यं समवैति । किं पुनस्तत् ? संस्कारः । स हि कर्मणा क्रियते । न चैतत् शृतं दधि च क चिदुपयुक्तम् । यस्मै यागायोत्पन्नम्, स नैव तावन्निर्वर्त्यते । तस्मात्तेन जाघनीद्रव्येण दधिशृताभ्यां च अर्थकर्म स्यात्, न प्रतिपत्तिः ।

**सोम**-- पूर्वत्र द्रव्यस्य ( एकादिगोद्रव्यस्य ) गुणत्वात् अस्तु विकल्पः । इह तु जाघनीनां प्रतिपाद्यतया समुच्चयः इत्युत्थितेः **संगतिः** । जाघनीशब्दः पुच्छवाची इति भट्टरुद्रदत्तः । **सूत्रार्थस्तु**— द्रव्यविकारात् जाघन्याख्यद्रव्यस्य नियमलक्षणविकारेऽपि प्रकृतिवत् अर्थकर्मैवेदम्, प्रकृतिवत् विकल्पे प्राप्ते नियमार्थत्वात्, पुनर्विधानस्य नियमस्य च यथाप्राप्ति वक्तव्यत्वादिति ।

**वि**— 'समुच्चयो जाघनीनां न वा, ऽऽद्यो गुदवत्, न तत् । प्रकृतौ नियमादर्थकर्मातोऽत्र तथात्वतः ॥'

**भाट्ट**-- पशुगणे अतिदेशप्राप्तपत्नीसंयाजेषु जाघनीनां समुच्चयो विकल्पो वा इति चिन्तायाम्, दर्शे तावत् पत्नीसंयाजानामर्थकर्मत्वात् आज्येन सह जाघन्या विकल्पेन गुणभाव अविवाद एव । दैक्षेऽपि च तथैव अतिदेशेन प्राप्तौ पुनःश्रूयमाणम् 'जाघन्या पत्नीसंयाजं यजति' इति वचनं लाघवात् आज्यन्यावृत्तिफलकजाघनीनियमार्थमेव, न तु पत्नीसंयाजानां जाघनीप्रतिपत्त्यर्थत्वेन विधानार्थम्, सत्यप्यत्र जाघन्याः प्रतिपत्त्यपेक्षत्वे पत्नीसंयाजानामप्राकृतकार्यकारित्वे प्रसङ्गेन प्रतिपत्त्यर्थत्वकल्पनाऽनुपपत्तेः । अत एव अस्य वचनस्य नियममात्रपरत्वेऽपि प्रयाजशेषाभिघारणन्यायेन **पार्थसारथ्युक्त**रीत्या नियमस्यैव जाघनीसंस्कारार्थत्वकल्पनमित्यपि अनाशङ्क्यम्, नियमस्यापि प्रकृतौ क्लृप्तप्रयोजनत्वात् । अस्मदुक्तरीत्या पत्नीसंयाजानामेव प्रतिपत्त्यन्तरविधिकल्पना तु अनाशङ्क्यैव । अतश्चानेन वचनेन यथाप्राप्ताया गुणभूताया विवक्षितसंख्यायाश्च नियममात्रकरणात् उपादानलाघवानुरोधेन प्रतिपत्त्यन्तराभावेन उपस्थितायास्तस्यास्त्यागे प्रमाणाभावाच्च प्रकृतग्रहणेऽपि पशुगणे एकसंख्याया एव विकल्पेन ग्रहणम् ।

**मण्डन**-- 'जाघनी च विकल्प्यते ।'

**शंकर**-- 'जाघनीषु समुच्चयः ।' न ।

* **ऐकार्थ्योद्वा** नियम्येत पूर्ववत्त्वाद् विकारो हि ( ८।१।१६।२८ ) इतिकर्तव्यतायाः प्रत्येकविकारे सौर्यादौ अतिदेशायोगात् 'ऐकार्थ्याद्वा०' इत्यष्टमाधिकरणसिद्धान्तो भज्येत । **सु.** पृ. ७३०.

ꕥ **ऐकार्थ्यनिबन्धना पदसमूहस्यैकवाक्यता इति न्यायः** । 'उत्तरादिः पूर्वान्तलक्षणम्' इति कल्पसूत्रकृद्वचनस्य च 'ऐकार्थ्य०वाक्यता' इति न्यायमूलत्वात् तस्य लक्षणस्वरूपमुच्यते इत्याह । **सु.** पृ. ६८३. न च 'उत्तरादिः पूर्वान्तलक्षणम्' इत्येतद् वेदवचनम् । न्यायेन तु ( कल्प- ) सूत्रकारैः आत्मीयब्राह्मणविनियोगेषु एतदुक्तमिति न्यायस्य लक्षणमुच्यते । **वा.** २।१।१४।४६ पृ. ४४५.

* **ऐक्षव्यौ** विधृती इक्ष्ववयवात्मिके ( पत्रात्मिके ) लोकात् । वाक्यशेषात्तु काशमूलके । **शा.** १।३।५ पृ. ३५। याज्ञिकास्तु इक्षुपत्रात्मिके एव गृह्णन्ति । **के.** * 'ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके । लोके सिद्धे, तथा वेदे काशानामेव मूलके ॥' **वा.** १।३।४।९ पृ. २२२, ऐक्षवीशब्दस्तु यदि तावत् वैदिकप्रयोगलब्धसमुदायप्रसिद्धित्वेन लौकिकीम् अवयवप्रसिद्धिं जहाति, ततः सिद्धमेव शास्त्रस्यप्रतिपत्तिबलीयस्त्वम् । पृ. २२३.

* **ऐक्षवीशब्दस्य** तु समुदायप्रसिद्धेः बलीयस्त्वेनापि दुर्बललौकिकावयवप्रसिद्धिबाधेन काशमूलवाचित्वमेव अवसीयते । **सु.** पृ. २१८.

* **ऐच्छिकः** द्रव्यविकल्पः पशुश्छागः इति सिद्धेऽपि अयं वा अयं वा छागः इति । **बाल.** पृ. १५७.

* **ऐतिह्यम्** । 'वटे वैश्रवणः' इति ऐतिह्यं न प्रमितिकरणम् । तत्त्वेऽपि आगमान्तर्गतम् । **मणि.** पृ. ६२.

* **ऐन्द्रः** अरुणः ऐकादशिनेषु सप्तमः पशुः । अश्वमेधे ज्योतिष्टोमे च । **वि.** ८।१।७. * ऐन्द्रः ऋषभः चरकसौत्रामण्यां तृतीयः पशुः । 'ऐन्द्रमृषभं वृष्णिं बस्तं वा' इति सत्याषाढः । **के.** * ऐन्द्रः एकादशकपालो राज्ञः ( क्षत्रियस्य ) गृहे राजसूये । **भा.** ११।२।३।१३. * ऐन्द्रः चमसः इतरेषां चमसानां प्रकृतिः । स एव च सधर्मकः, अनैन्द्रा अधर्मकाः, चोदकेन सधर्मकाः । **वि.** ३।२।१६, * 'ऐन्द्रो राजन्यः' । अत्र ऐन्द्रत्वेन



राजन्यः स्तूयते । १।४।१४. * ऐन्द्रो राजन्यः इति ऐन्द्रशब्दः अर्थवादः, न गुणविधिः । **भा.** १।४।१२। २३-२, * 'ऐन्द्रो वृष्णिः षोडशिनि आलभ्यः' ( क्रतुपशुः सवनीयस्तृतीयः ) । ३।६।७।१८.

ꕥ "**ऐन्द्रः सोमो** गृह्यते मीयते च । तेन ऐन्द्रेषु सोमः, अनैन्द्रेषु सोम एव नास्ति । इति सर्वे सोमधर्मा ऐन्द्रेष्वेव । अधर्मका इतरे साकाङ्क्षाः । कथं पुनर्ज्ञायते ऐन्द्रः सोमो गृह्यते मीयते चेति ? मन्त्रवर्णात् । 'इन्द्राय त्वा वसुमते' इत्येवमादिर्मन्त्रः ऐन्द्रं सोमं वदितुं शक्नोति, नान्यम् । तस्मादैन्द्रः सोमः । तेन ऐन्द्रेषु सोमधर्माः । अन्यानि तु प्रदानानि साकाङ्क्षाणि, अतो धर्मान् ग्रहीष्यन्ति" **इति न्यायः** । तस्मात् यथादेवतं ऊहितव्यो मन्त्रः । **भा.** ३।२।११।२९. * '**ऐन्द्रमे**कादशकपालम् ऋषभो दक्षिणा' अवेष्टिषु द्वितीया राजसूये । **भाट्ट.** ११।४।३. * 'ऐन्द्रमेकादशकपालं निर्वपेत्' इत्यादौ प्राकृतपुरोडाशधर्मातिदेशः, न तु सांनाय्यधर्मातिदेशः, देवतासामान्यात् हविःसामान्यस्य बलवत्त्वात् । **वि.** ८।१।१७, * 'ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकामः ।' अत्र असति प्रतिबन्धे फलमैहिकं सति तु आमुष्मिकम् । ४।३।१२, * 'ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादिः काम्यो यागः कामनावता कर्तव्यः । ५।३।१२. * ऐन्द्रं ग्रहं प्रतिप्रस्थाता आदत्ते सौत्रामण्याम् । **भा.** ३।५।३।१४. * **ऐन्द्राणाम्** अनैन्द्राणां च प्रकृतिविकृतित्वं नास्ति । इति नास्त्यूहः अनैन्द्रेषु । ततः अनैन्द्राणाम् अमन्त्रकं भक्षणम् ( क्त्वाचिन्ता ) । **वि.** ३।२।१७. * **ऐन्द्रे** एकादशकपाले औषधस्य आग्नेयपुरोडाशस्य विध्यन्तः । **भा.** ८।१।१७।३२-३४. * ऐन्द्रे पुरोडाशे सांनाय्यविध्यन्तः प्राप्तः आग्नेयविध्यन्तेन बाध्यते । **बाल.** पृ. १४१.

* **ऐन्द्रचमसभक्षणे** वषट्कारदेवता अग्निर्नोपलक्षणीयः । **वि.** ३।२।१६.

* '**ऐन्द्रवायवं** गृह्णाति' इति इन्द्रवायुभ्यां संकल्पयति इत्येतावदुक्तं भवति । तत्र यागमन्तरेण संकल्पयति इति एतन्न युज्यते इति यागः कल्प्येत । **भा.** २।२।६।१८.

ꕥ **ऐन्द्रवायवस्य ग्रहस्य कामसंयोगेऽपि पाठप्राप्ते स्वस्थाने एवानुष्ठानम्, न तु सर्वादितः ॥**

**कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ।** १०।५।१८।६५ ॥

**भाष्यम्** — अथ यत्र कामसंयोगे वचनमैन्द्रवायवस्य 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति । तत्र किं सर्वादितः प्रतिकर्षः, उत तत्रापि स्वक्रमस्थस्य ग्रहणमिति ? किं प्राप्तम् ? पूर्वेणाधिकरणेन ( १७ ) स्वक्रमस्थस्येति । **तथा प्राप्ते, ब्रूमः** । कामसंयोगे तु सर्वादितः प्रतिकर्षः स्यात् । कुतः ? वचनात् । वचनं हि भवति 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति, तत् सर्वादितः प्रतिकर्षे अर्थवत्, अग्रतायां विधीयमानायाम् । अप्रवृत्तिविशेषकरं तदग्राणां ग्रहणे विधीयमाने । तस्मात् सर्वादितः प्रतिकर्षः इति ।

**तद्देशानां वाऽग्रसंयोगात्, तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ।** ६६ ॥

**भाष्यम्**— न चैतदस्ति, यदुक्तं सर्वादितः प्रतिकर्षः इति । स्वक्रमस्थस्य ग्रहणे क्रमानुग्रहो भविष्यति । तस्मात् स्वक्रमस्थस्येति । यदुक्तं अग्रताऽभिधानात् आदितः प्रतिकर्षः इति, तन्न । तद्देशानां धारादेशानाम् ऐन्द्रवायवाग्राणाम् अयमुपदेशः । तद्युक्तानां तदग्राणां ग्रहणेन कामः साध्येत । श्रुतिरेवमनुगृह्यते, त्वत्पक्षे वाक्यम्, श्रुतिश्च वाक्यात् बलीयसी । अथ यदुक्तम्, अप्रवृत्तिविशेषकरं ग्रहणविधौ इति, तन्न । संयोगपृथक्त्वात् । एकोऽत्र नित्यस्य कामसंयोगः, ग्रहणेन कामं साधयेत् । अपरो नित्यसंयोगः, ये ऐन्द्रवायवाग्रा ग्रहाः, तान् गृह्णीयात् इति । तस्मात् अस्ति प्रवृत्तिविशेषः । अतः तद्देशसंयुक्ते कामसाधनमेतत् । तस्मात् स्वक्रमस्थस्य ग्रहणमिति ।

**सोम**-- इह तर्हि भवतु आदितः प्रतिकर्षः इत्युत्थानात् ( प्रत्युदाहरण— ) **संगतिः** । **ननु** अग्रतायाः कामाय विधाने 'वाग्वा एषा यदैन्द्रवायवो, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते' इति वचनमनर्थकं स्यात् । ग्रहाणामेव फले विधाने तु तेषां

प्रकरणप्राप्तक्रत्वर्थत्वबाधेन वाक्यात् केवलफलार्थत्वप्राप्तौ प्रतिप्रसवार्थतया तत् वचनमर्थवत् इति चेत् । मैवम् । प्रतिप्रसवार्थत्वाभावेऽपि शुक्राग्रत्वादेः काम्यगुणस्य धाराग्रहमात्राश्रितत्वलाभरूपस्य सद्भावेन वचनानर्थक्याभावात् । वस्तुतस्तु, 'वाग्वै' इत्यादिवाक्यस्य प्रतिप्रसवार्थत्वं न संभवति ।

वि— 'सर्वादौ स्वस्य वा स्थाने काम्यः स्यादैन्द्रवायवः ।, पुनर्विधेरादिमो, ऽन्त्यः कामायैतद्विधानतः ॥'

भाट्ट— तदवान्तरप्रकरणे एव (ज्योतिष्टोमावान्तर०) 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति श्रुतं फलं किम् अग्रतारूपगुणजन्यम्, उत ग्रहणजन्यमेवेति बाधोपयोगितया चिन्तायाम्, इन्द्रियकामाधिकरणन्यायेन (२।२।११) गुणजन्यमेव । न च यत्र गुणस्य गोदोहनादेः अत्यन्ताप्राप्त्या विधेयता, तत्र विधेयस्यैव फलसंबन्धात् इन्द्रियकामाधिकरणन्यायः । यत्र तु गुणधात्वर्थयोः द्वयोरपि अन्यतः प्राप्तिः, तत्र भावार्थाधिकरणन्यायेन धात्वर्थस्यैव फलसंबन्धः इति वाच्यम् । तथात्वे दध्नोऽपि 'दध्ना जुहोति' इत्यनेन प्राप्तेः फलसंबन्धानापत्तेः । न च तस्य वैकल्पिकतया पाक्षिकानुवादापत्तिभिया विधेयत्वावगमात् फलसंबन्धः, प्रकृतेऽपि ऐन्द्रवायवाग्रत्वस्य बृहत्सामत्वनिमित्तकशुक्राग्रत्वानुरोधेन काम्यमन्थ्यग्रत्वानुरोधेन च पाक्षिकत्वावश्यम्भावात् । अतश्च गुणवाचकपदवैयर्थ्यपरिहारार्थमेव दध्यादेः फलसंबन्धो वाच्यः । स च प्रकृतेऽपि तुल्यः, इति ऐन्द्रवायवाग्रत्वमेव फलोद्देशेन विधीयते । तत्र च ऐन्द्रवायवाग्रत्वस्य विधेयत्वात् मैत्रावरुणापेक्षया च तस्य पाठादेव प्राप्तेः अविधेयत्वापत्तेः उपांश्वन्तर्याम्यपेक्षयैव विधेयत्वावगतेः अवान्तरप्रकरणं बाधित्वा महाप्रकरणात् सर्वग्रहाणामेव आश्रयत्वम्, ऐन्द्रवायवस्य च सर्वादितः प्रतिकर्षः इति प्राञ्चः । वस्तुतस्तु पाठादिना क्रत्वर्थतया प्राप्तस्यैव ऐन्द्रवायवाग्रत्वस्य खादिरत्ववत् फलार्थत्वोपपत्तेः अवान्तरप्रकरणात् अधाराग्रहाणामेव आश्रयत्वम् । इति प्राप्ते, गुणवाचकपदस्य 'ऐन्द्रवायवाग्रान् ग्रहान्' इत्यस्य विधेयताऽवच्छेदकीभूतव्यापकजात्युपलक्षणत्वेनापि चरितार्थत्वात् नात्र भावार्थाधिकरणा- (२।१।२) पवादः । ऐन्द्रवायवादिग्रहत्वमेव तज्जात्युपलक्षणम्, नान्यत् । इदमेव 'वाग्वा एषा यदैन्द्रवायवः' इत्यत्रापि गुणवाचकपदग्रहणस्य प्रयोजनम् । अत एव गुणवाचकपदस्य यत्र नैवंविधप्रयोजनलाभः, तत्र दध्यादौ गुणफलसंबन्ध एव । अतश्चात्र धाराग्रहाणामेव फलसंबन्धः, 'ऐन्द्रवायवाग्रान्' इति तु पाक्षिकानुवादमात्रम् । अत एव द्वितीयपूर्वपक्षे नैमित्तिकस्य शुक्राग्रत्वस्य बाधः, मन्थ्यग्रत्वस्य न काम्यस्य अभिचारार्थम् अप्रयोगः, द्वयोर्विरुद्धयोर्गुणयोः युगपत् स्वस्वकामार्थप्रयोगासंभवात् । सिद्धान्ते तु प्रजार्थग्रहणानां प्रयोगेऽपि नैमित्तिकं शुक्राग्रत्वम्, काम्यं च मन्थ्यग्रत्वादि न विरुध्यते इति प्रयोजनम् ।

मण्डन— 'काम्येऽपि न स्यात् सकलग्रहेभ्यः ।' प्राक् प्रतिकर्षः ।

शंकर— 'तथा कामे तदग्रता ।' २०.

## ऐन्द्रवायवस्य ग्रहस्य मैत्रावरुणादिग्रहापेक्षया पूर्वमनुष्ठानम् ॥

**ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् । १०।५।१७।६२ ॥**

**भाष्यम्—** ज्योतिष्टोमे श्रूयते 'वाग् वा ऐन्द्रवायवो, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते, वाचमेवावरुन्धे' इति । तत्र संशयः किम् ऐन्द्रवायवस्य सर्वादितः प्रतिकर्षः स्यात् उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्यः, उत शुक्रामन्थिभ्यां पूर्वं ग्रहणमिति । किं प्राप्तम् ? ऐन्द्रवायवस्य सर्वादितः प्रतिकर्षः इति । कुतः ? अग्रवचनात् । अग्रताऽत्र विधीयते 'ऐन्द्रवायवाग्रं गृह्णाति' इति ऐन्द्रवायवम् अग्रे कुर्यादेषामिति । अविशेषात् सर्वे एव ऐन्द्रवायवाग्राः कर्तव्याः । यदि आदितः प्रतिकर्षो न क्रियेत, उपांश्वन्तर्यामौ ऐन्द्रवायवाग्रौ न स्याताम् । आदितस्तु प्रतिकर्षे क्रियमाणे सर्वे ऐन्द्रवायवाग्राः कृता भवन्ति । न चात्र ऐन्द्रवायवस्याग्रता विधीयते । यदि विधीयेत, यान्कांश्चित् प्रति ऐन्द्रवायवस्याग्रतायां कृतं कर्तव्यं स्यात् । अथ पुनः अन्येषां ग्रहाणाम् ऐन्द्रवायवाग्रता धर्म उच्यते, तस्मात् सर्वेषां धर्मः कर्तव्यः, इति आदितः प्रतिकर्षः स्यात् । कथं पुनरवगम्यते सर्वेषामेवायं धर्मः



इति ? 'ऐन्द्रवायवाग्रान् कुर्यात्' इति निर्देशात् । नात्र ग्रहस्य कर्तव्यता उच्यते । तदग्राः कर्तव्याः इति श्रूयते । अग्रता परार्था, न स्वार्था विज्ञायते । तस्मात् सर्वादितः प्रतिकर्षः स्यात् ।

**अपिवा धर्मविशेषात् तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते । ६३ ॥**

**भाष्यम्—** अपिवेति पक्षव्यावृत्तिः । न सर्वादितः प्रतिकर्षः स्यात् । किं तर्हि ? स्वस्थानस्य ग्रहणम् । कुतः ? नात्र तदग्रता विधीयते । वाक्यं हि तदाऽनुगृह्यते । किं तर्हि ? तदग्राणां ग्रहणं विधीयते । तथाहि श्रुतिरनुगृहीता भवति । 'यदि रथंतरसामा सोमः स्यात्' (तदा) ये ऐन्द्रवायवाग्रा ग्रहाः समाम्नाताः तेषामनेनानुपूर्व्येण ऐन्द्रवायवादितया धर्मा(र्म)विशेषेण तद्धर्माणां प्रकृतानां ग्रहणं विधीयते । स्वे स्थाने ये ग्रहा ऐन्द्रवायवाग्राः, तान् प्रकृत्य ग्रहणविधिः, इति न सर्वादितः प्रतिकर्ष इति ।

**धारासंयोगाच्च । ६४ ॥**

**भाष्यम्—** अपिच धारासंयोगो भवति ऐन्द्रवायवादिवाक्ये 'अण्व्या अव्यवच्छिन्नया धारया गृह्णाति' इति । तस्मात् धाराग्रहास्ते । तदग्रानधिकृत्य ग्रहणं विधीयते इति ।

सोम— पूर्वत्र बहुव्रीहिबलात् निरपेक्षपृष्ठसाधनत्ववत् इहापि बहुव्रीहिबलादेव सर्वग्रहधर्मतालाभः इत्युत्थितेः संगतिः ।

वि— 'पुरोपांशोरुत स्वस्य स्थाने स्यादैन्द्रवायवः ।, आद्योऽग्रत्वविधेर्, मैवं धारायुक्ताग्रतोक्तितः ॥'

भाट्ट — उपांश्वन्तर्यामौ ज्योतिष्टोमे अधाराग्रहौ विधाय धाराग्रहाणाम् ऐन्द्रवायवमैत्रावरुणादीनामुपक्रमे श्रुतम् 'वाग्वा एषा यदैन्द्रवायवो, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्रयन्ति' इति । तदनेन किम् ऐन्द्रवायवस्य पाठात् मैत्रावरुणग्रहात् पूर्वमेवानुष्ठाने प्राप्ते उपांश्वन्तर्यामात् पूर्वमपकर्षो विधीयते, उत नेति चिन्तायाम्, 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिना प्रत्यक्षतत्तद्विधिभिरेव प्राप्तानां ग्रहणानां संक्षेपेण पुनर्विधानस्य विहितविधानायोगेन अनुपपत्तेः प्रकृतसर्वग्रहणोद्देशेन ऐन्द्रवायवाग्रतैव अनेन विधेया । अत एव न ग्रहपदेन मैत्रावरुणाद्या एव ग्रहा उच्यन्ते, संकोचे प्रमाणाभावात्, तदग्रतायाः पाठादेव प्राप्तत्वाच्च । अतश्च उपांश्वन्तर्यामापेक्षयाऽपि अग्रता ऐन्द्रवायवस्य विधीयते । तस्याश्च बृहत्सामत्वे नैमित्तिकशुक्राग्रत्वविरोधात् अनिवेशेऽपि रथंतरसामकत्वे एव निवेशो यद्यपि न्यायादेव प्राप्तः, तथापि 'यदि रथंतरसामा' इत्यनेन नैमित्तिकत्वेन विधीयते, तत्प्रयोजनं च सिद्धान्ते इव कण्वरथंतरादौ तदप्राप्तिः । अतः ऐन्द्रवायवस्य सर्वादितः करणम् । इति प्राप्ते, धात्वर्थमात्रविधिलिप्सया ग्रहणान्येव अत्र विधीयन्ते नाग्रता, ग्रहणोद्देशेन तृतीयविधिप्रकारापत्तेः । न च विहितविधानायोगः, यत्प्रकारकयद्विशेष्यकविधौ कृते तत्प्रकारकतद्विशेष्यकविध्ययोगोऽपि, तस्यैव विशेष्यस्य धर्मान्तरप्रकारकविधौ बाधकाभावात् । 'ऐन्द्रवायवं गृह्णाति' इत्यादिना हि विजातीयग्रहणत्वादिना तत्तद्ग्रहणानां विधिः, अनेन तु वक्ष्यमाणतावद्ग्रहणनिष्ठव्यापकीभूतवैजात्यप्रकारकः तत्तद्ग्रहणानां विधिः । वैजात्यं च एतद्विधेरेव आद्यविधिप्रकारलिप्सासहकृतस्य विधेयताऽवच्छेदकतया सिद्धम् । तदपि च न उपांश्वन्तर्यामादिसाधारण्येन, प्रकृतग्रहणमात्रे तथात्वे उपांश्वन्तर्यामोत्तरम् एतत्पाठस्य वैयर्थ्यापत्तेः, ऐन्द्रवायवाग्रा इत्यस्य अनुवादानुपपत्तेश्च, सामान्यधर्मप्रकारकविधिप्रयोजनानां वक्ष्यमाणानाम् उपांश्वन्तर्यामसाधारण्यानुपपत्तेश्च । अतश्च विशिष्य तत्तद्विधिविहितानामपि ऐन्द्रवायवादिग्रहणानां संक्षेपेणायं विधिः । तेषु च ऐन्द्रवायवस्य प्राथम्यं पाठप्राप्तम्, इति 'ऐन्द्रवायवाग्राः' इत्यनुवादात् न ऐन्द्रवायवस्य सर्वादितः प्रतिकर्षः । संक्षेपविधिप्रयोजनं च तेषामेव ग्रहणानां विशिष्य आकाङ्क्षोत्थापनद्वारा तदवान्तरप्रकरणसिद्धिः । ततश्च तदुपरितनवाक्येषु 'अण्व्या धारया गृह्णाति' इत्यादिषु गृह्णातिना तेषामेवानुवादात् तेष्वेव धाराऽऽदिधर्मविधिः, न तु उपांश्वन्तर्यामयोरपि । अतश्च तयोरधाराग्रहत्वसिद्धिः । प्रयोजनान्तरं काम्यग्रहणविधौ एतेषामेव 'कामसंयोगे' इति (उत्तराधिकरणे) वक्ष्यते । ग्रहणाश्रितगुणफलेषु च एतेषामेव आश्रयत्वसिद्धिः इति च । यत्तु तन्त्र-

रत्नादौ तत्तद्वाक्येन विहितानां ग्रहणानां वक्ष्यमाणकामवाक्येन काम्यत्वावगतेः क्रत्वर्थत्वसिद्धिरेव एतद्वाक्यप्रयोजनम् इत्युक्तम्, तत् प्रमाणान्तरेण अर्थादिना संभवत्प्राप्तिकानां तत्तद्ग्रहणानां तत्तद्देवतासंयोगानां च तत्तद्विधिभिः पुनर्विधानस्य आरादुपकारकविधया क्रत्वर्थत्वफलकत्वेन पशुसोमाधिकरणे ( २।२।६ ) **कौस्तुभे** व्यवस्थापिततया उपेक्षितम् । सर्वथा ऐन्द्रवायवस्य सर्वादितः करणाभावात् न पाठबाधः ।

**मण्डन**-- ' सर्वादितो न प्रतिकर्षणं स्यात् । ' ऐन्द्रवायवस्य । १८.

**शंकर**-- ' स्वमैन्द्रवायवस्थानम् । ' १९.

**ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् । १०।५।१७।६२ ॥**

ज्योतिष्टोमे ' वाग् वा ऐन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवावरुन्धे ' इति श्रूयते । अस्य ऐन्द्रवायवस्य ग्रहस्य आदितः सर्वादितः उपांश्वन्तर्यामाभ्यामपि पूर्वं प्रतिकर्षः आक्षेपः स्यात् । अग्रतावचनात् ऐन्द्रवायवाग्राः इति अग्रतायाः प्राथम्यस्य वचनात् । इति पूर्वः पक्षः ।

**अपिवा धर्मविशेषात् तद्धर्माणां स्वे स्थाने प्रकरणादग्रत्वमुच्यते । ६३ ॥**

पूर्वपक्षव्यावृत्त्यर्थः अपिवाशब्दः । धर्मविशेषात् अव्यवहितपूर्वत्वेन ऐन्द्रवायवादित्वरूपस्य धर्मस्य धाराग्रहे एव विशेषात्, तद्धर्माणाम् ऐन्द्रवायवादित्वधर्मविशिष्टानां प्रकरणात् पाठक्रमात् स्वे स्थाने मैत्रावरुणात् धाराग्रहात् अव्यवधानेन प्राक् यत् ऐन्द्रवायवस्य स्थानम्, तस्मिन् स्वे स्थाने स्वीये स्थाने अग्रत्वम् आदित्वम् उच्यते, न तु अंशोः प्राक् । तद्धर्माणाम् इत्यत्र सः ऐन्द्रवायवादित्वरूपः धर्मो येषामिति बहुव्रीहिः । समासान्तविधेरनित्यत्वात् अनिच् नोत्पन्नः । अथवा तद्धर्मणाम् इति पाठः स्यात् । स च क्वचिदपि नोपलभ्यते इत्यन्यदेतत् । न सर्वादितः प्रतिकर्षः इति सिद्धान्तः ।

**धारासंयोगाच्च । ६४ ॥**

सिद्धान्ते हेत्वन्तरमाह । धारासंयोगात्, ऐन्द्रवायवादिवाक्ये धारासंयोगो भवति ' अण्व्या अव्यवच्छिन्नया धारया गृह्णाति ' इति । तस्मात् धाराग्रहास्ते । तान् धाराग्रहानपेक्ष्य ऐन्द्रवायवस्य अग्रत्वमुच्यते । तस्मात् न सर्वादितः प्रतिकर्षः । के.

**ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यात् । ३।५।५।१८ ॥**

सिद्धान्तसूत्रम् । ज्योतिष्टोमे प्रातःसवने ऐन्द्रवायवो ग्रहो द्विदेवत्यः । तस्य भक्षः सकृत् वा द्विर्वा इति संदेहे सोमसंस्कारार्थत्वात् भक्षस्य, सकृत्करणेनापि संस्कारस्य सिद्धत्वात् सकृद्भक्षः इति पूर्वः पक्षः । तन्निराकरणार्थः सूत्रे तुशब्दः । ' द्विर्ह्येतस्य वषट् करोति ' इति वषट्कारभेदात् अवान्तरकर्मभेदोऽत्र । ' द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट् करोति ' इति वचनात् ऐन्द्रवायवे प्रतिकर्म कर्मणिकर्मणि वषट्कारेवषट्कारे निमित्ते सति भक्षः स्यात् । वषट्कारद्वित्वात् भक्षोऽपि द्विः कर्तव्य इत्यर्थः ।

इदं सूत्रं भाष्ये अधिकरणान्तरत्वेन व्याख्यातम् । पूर्वाधिकरणाङ्गमिति वार्तिकम् । वार्तिकं तु इत्थम्–ऐन्द्रवायवे तु सकृद्भक्षणे प्राप्ते वचनात् द्विर्भक्षो न प्रधानभेदनिमित्तः हेत्वधिकरणे हेतोर्निराकृतत्वात् । एवं च सति पूर्वाधिकरणशेषेणैव सता सोमभक्षसामान्यविचारस्मारणात् न क्रमकोपो भविष्यतीति–इति । के.

* **ऐन्द्रवायवग्रहः** ज्योतिष्टोमे द्विर्भक्षणीयः । **वि.** ३।५।५, * ऐन्द्रवायवग्रहः तृतीयो मन्त्रकाण्डविधिकाण्डयोः, धाराग्रहेषु तु प्रथमः । १०।५।१७, * ऐन्द्रवायवग्रहः प्रातःसवने गृह्यते ज्योतिष्टोमे । २।३।१. * **ऐन्द्रवायवग्रहस्य** प्रतिकर्षः कामसंयोगेऽपि धाराग्रहेभ्यः आदितः एव, न सर्वादितः । **भा.** १०।५।१८। ६५–६६.

**ऐन्द्रवायवन्यायः । ऐन्द्रवायवग्रहस्य द्विर्भक्षणम् ॥**

**ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षः स्यात् । ३।५।५।१८ ॥**

**भाष्यम्**— अस्ति ज्योतिष्टोमः ' ज्योतिष्टोमेन स्वर्गकामो यजेत ' इति । तत्र ऐन्द्रवायवे ग्रहे संदेहः किं सकृद्भक्षणम्, उत द्विरिति । सोमसंस्कारार्थत्वात् सकृत् । इति प्राप्ते, ब्रूमः । ऐन्द्रवायवे द्विर्भक्षयितव्यमिति ।



कुतः ? वचनात् । वचनमिदं भवति, ' द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति ' इति । नास्ति वचनस्यातिभारः ।

**वा**— ' सोमेऽवचनाद्भक्षो न विद्यते ' इति सामान्येन भक्षविचारं कृत्वा विशेषविचारोऽयं कर्तव्य आसीत् । यत्तु प्रथमतरं क्रियते तत् पूर्वाधिकरणापवादत्वेन शीघ्रतरोपस्थानात् । पूर्ववद्धि द्रव्यैकत्वात् सकृद्भक्षिते कृतः शास्त्रार्थ इति न्यायात् प्राप्ते, वचनात् द्विर्भक्षणं ' द्विरैन्द्रवायवस्य भक्षयति ' इति । भवन्ति चेदृशान्यपि अधिकरणानि, येषां न्यायेन पूर्वपक्षं कृत्वा वचनेन सिद्धान्तो भवति । न त्वेतत् युक्तम् । संदेहाभावात् । तत्र वैतत् क्रियन्ते, यत्र न्यायेन प्रतिपादितो वचनाद्बाधितः, तदभावात् समानन्यायेषूपकरिष्यति । स चेह न्यायः पूर्वाधिकरणेनैव प्रदर्शित इति मन्दफलो विचारः । तस्मान्नैवं वर्णनीयम् । किं तर्हि ? सर्वपृष्ठायामेव प्रतिकर्म स्विष्टकृदिदं कर्तव्यं प्रधानभेदात् । तथाहि, सिद्धवत्प्रधानभेदम् ऐन्द्रवायवसंस्कारहेतुमाह ( ऐन्द्रवायवसंस्कारभूतभक्षणहेतुमाह इत्यर्थः ) ' द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य भक्षयति ' इति । तस्मात् यावद्वषट्कारं शेषसंस्कारः इत्युक्तोत्तरे दत्ते दृष्टान्तमनुभाष्य सूत्रेण परिहारो वक्तव्यः । ऐन्द्रवायवे तु सकृद्भक्षणे प्राप्ते वचनात् द्विर्भक्षः, न प्रधाननिमित्तः । हेत्वधिकरणे ( १।३।२ ) हेतोर्निराकृतत्वात् । ( ' तेन ह्यन्नं क्रियते ' इतिवत् ' द्विर्ह्येतस्य वषट् करोति ' इत्यत्रापि वर्तमाननिर्देशात्, वर्तमानकालिकस्य च वषट्कारभेदस्य हेतुत्वासंभवात् लटो भूतकाललक्षणाऽवश्यम्भावात्, लक्षणायाश्च ' न विधौ परः शब्दार्थः ' इत्यनेन निषिद्धत्वात् इति युक्त्या निराकृतत्वादित्यर्थः ) । एवं च सति पूर्वाधिकरणशेषेणैव सता सोमभक्षसामान्यविचारस्मारणात् न क्रमकोपो भविष्यति इति ।

**वि**— ' ऐन्द्रवायवशेषस्य सकृद्भक्ष उतासकृत् ।, पूर्वन्यायात् सकृत्प्राप्तौ, द्विर्भक्षो वचनाद्भवेत् ॥ '

**भाट्टे** तु इदं सूत्रं पूर्वाधिकरणे एवान्तर्भावितम् । ' ऐन्द्रवायवे तु वचनादेव भक्षावृत्तिः ' इति च तत्रोक्तम् ।

**मण्डन**— ' द्विरैन्द्रवायवे भक्षः । '

**शंकर**— ' तन्त्रं तन्नैन्द्रवायवे । ' तत् भक्षणरूपं शेषकार्यम् ।

* ' सर्वतः परिहारमाश्विनं भक्षयति ' इत्यादिषु **ऐन्द्रवायवन्यायः** एव स्यात् ( पूर्वपक्षे । ' वचनात् ऐन्द्रवायवग्रहे द्विर्भक्षः ' इति तस्य न्यायस्य स्वरूपम् ) । **वा.** ३।५।६।१९.

* **ऐन्द्रवायवपात्रे** पूर्वसिद्धपुरोडाशशकलं निधेयं ज्योतिष्टोमे, न तु तदर्थं स्वतन्त्रपुरोडाशसंपादनम् । **वि.** ३।८।१९.

* **ऐन्द्रवायवाग्रः** द्वितीयः स्वरसामा । **टुप्.** १०। ५।२५।८५ पृ. १९८०.

* **ऐन्द्रवायवाग्रतायाः** त्र्यनीकायां पुनःश्रवणं अहर्गणेषु समानविध्यर्थम् । **भा.** १०।५।२३।७७–७८.

* **ऐन्द्रवायवाग्रत्वम्** अनैमित्तिकं द्वादशाहविकृतिषु रथंतरात्मकनिमित्ताभावेऽपि भवति । **वि.** १०।५।२३, * ऐन्द्रवायवाग्रत्वं ज्योतिष्टोमे पृष्ठस्तोत्रस्य रथंतरसामत्वे सति कर्तव्यम् ' यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् । ' २।३।१, * ऐन्द्रवायवाग्रत्वं धाराग्रहेषु द्वादशाहे व्यूढे, द्वितीये षष्ठे दशमैकादशयोश्च अहःसु प्रायणीयोदयनीययोश्च इति षट्सु अहःसु । समूढे च द्वितीये पञ्चमे अष्टमे दशमे प्रायणीयोदयनीययोश्च इति षट्सु अहःसु । १०।५।२४.

* **ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः** प्रथमद्वितीययोरह्नोः पुनःश्रवणात् समानविधित्वं त्र्यनीकायाम् । **भा.** १०।५। २३।७७–७८.

* **ऐन्द्रवायवादयो** ग्रहयागाः ज्योतिष्टोमे प्रधानम् । इष्टिपशवोऽङ्गम् । **वि.** ४।४।१२. * **ऐन्द्रवायवादीनि** ग्रहणानि सोमयागद्रव्यस्यैव संस्कारकाणि । **टुप्.** १०। १।९।२३ पृ. १८१८. * ऐन्द्रवायवादीनि यानि प्राकरणिकानि ग्रहणानि तानि यथापाठमेव व्यवस्थितानि । **भाट्ट.** ५।३।६.

* **ऐन्द्रवायवादिग्रहाणाम्** अग्रताविधौ ग्रहणप्रतिकर्षेण सादनस्यापि प्रतिकर्षः । **भा.** १०।५।२१।७३–७४, * ऐन्द्रवायवादिग्रहाणाम् अग्रताविधौ ग्रहणप्रतिकर्षेऽपि प्रदानस्य नापकर्षः । १०।५।२२।७५–७६, * ऐन्द्र-

वायवादिग्रहाणाम् आतिदेशिकानाम् अश्वमेधोपदिष्ट-सौवर्णराजतग्रहाभ्यां समुच्चयः। १०।४।२।३-५, * ऐन्द्रवायवादिग्रहाणाम् आतिदेशिकानां बृहस्पतिसवादौ औपदेशिकैः बार्हस्पत्यादिग्रहैः समुच्चयः। १०।४।२।३-५, * ऐन्द्रवायवादिग्रहाणाम् आतिदेशिकानां विषुवति विहितेन अर्कग्रहेण समुच्चयः। १०।४।२।३-५.

* **ऐन्द्रवायवादिग्रहापेक्षया** काम्याग्रताविधौ शुक्रादिग्रहणस्य पूर्वं प्रतिकर्षः। भा. १०।५।२०।७०-७२.

* **ऐन्द्रवायवादिवाक्येषु** देवताविशिष्टग्रहणविध्यभ्युपगमः। सु. पृ. ७९०. * ऐन्द्रवायवादिवाक्येषु 'सोमेन यजेत' इत्यस्मिन् उपतिष्ठमाने नान्ययजिकल्पना। वा. १।२।१।७ पृ. १२०.

* **ऐन्द्रवायवाद्या** ग्रहाः प्रातःसवने दश समाम्नाताः। भा. ३।६।९।३०.

* **ऐन्द्रशब्दः** राजन्यस्तुत्यर्थः: 'ऐन्द्रो राजन्यः' इति, न गुणविधिः। वि. १।४।१४.

* **ऐन्द्राग्नः** द्वादशकपालः पुरोडाशः आग्रयणगतः दर्शपूर्णमासयोर्विकृतिः। भाट्ट. १२।२।१४. * 'ऐन्द्राग्नः पशुरुक्थ्ये आलभ्यः'। (उक्थ्ये सवनीयौ द्वौ तत्रायं द्वितीयः)। भा. ३।६।७।१८. * 'ऐन्द्राग्नः संहितः' ऐकादशिनेषु नवमः पशुः। संहितः शुक्लकृष्णवर्णद्वयविशिष्टः। वि. ८।१।७. * **ऐन्द्राग्नं** कर्म (-द्वयम्) वियातसजातस्यास्ति भ्रातृव्यवतः। तस्य याज्याऽनुवाक्यायुगलमपि आम्नायते। ऐन्द्राग्नम् 'इन्द्राग्नी रोचना दिवः, प्र चर्षणिभ्यः' इत्येकम्, 'इन्द्राग्नी नवतिं पुरः, श्नथद्वृत्रम्' इति द्वितीयम्। तत्र (देशसामान्यात्) पूर्वं युगलं पूर्वस्यैन्द्राग्नस्य उत्तरमुत्तरस्येति। भा. ३।३।५।१२, * '**ऐन्द्राग्नानि** छुक्थ्यानि' (देवतया)। ३।६।७।१८, * '**ऐन्द्राग्नमेकादशकपालं** निर्वपेत्' इत्यादीनि वैकृतानि कर्माणि सद्यस्कालानि न द्वयहकालानि। ५।४।७।२२-२४. * ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः इति प्रजाकामेष्टिः दर्शपूर्णमासाभ्यां कर्मान्तरम्। वि. २।३।१२, * 'ऐन्द्राग्नं० प्रजाकामः' इत्यादेः फलम् भवति प्रतिबन्धे ऐहिकम्। सति तु आमुष्मिकम्। ४।३।१२, * 'ऐन्द्राग्नं० प्रजाकामः' इत्यादिषु इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्। ८।१।४, * 'ऐन्द्राग्नं० प्रजाकामः' इत्यादिषु प्राकृतयोर्द्व्यन्यदेवतयोर्न प्राप्तिः। विकल्पसमुच्चयौ तु दूरापेतौ। १०।७।१७, * 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् भ्रातृव्यवान्' अत्र 'इन्द्राग्नी नवतिं' इत्यादिकं याज्याऽनुवाक्यायुगलम्। ३।२।७, * 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् यस्य सजाता वीयुः'। सजाताः ज्ञातयः। वीयुः विगताः विप्रतिपन्नाः। अत्र 'इन्द्राग्नी रोचना' इति याज्याऽनुवाक्यायुगलं स्यात्। ३।२।७. * **ऐन्द्राग्ने** एकादशकपाले निर्वापमन्त्रे ऐन्द्राग्नपदस्योहः। भा. ९।३।१।१-२.

**ऐन्द्राग्ने तु लिङ्गभावात् स्यात्। ३।२।१७।४०॥**

ज्योतिष्टोमे ऐन्द्राग्नग्रहशेषसोमभक्षमन्त्रे इन्द्रपीतस्य इति व्यपदेशः स्यान्न वा इति विचारे पूर्वपक्षमाह। ऐन्द्राग्ने पीयमाने मन्त्रवत् भक्षणं स्यात् इन्द्रपीतस्य इति विशेषणमुच्चार्यं स्यात्। लिङ्गभावात् द्वाभ्याम् इन्द्राग्निभ्यां पीतेऽपि इन्द्रपीतत्वरूपस्य लिङ्गस्य भावात् सत्त्वात्। तुशब्दः पूर्वाधिकरणसिद्धान्तवैलक्षण्यार्थः।

**एकस्मिन् वा, देवताऽन्तराद् विभागवत्। ४१॥**

सिद्धान्तमाह। वाशब्दः पूर्वपक्षनिरासार्थः। एकस्मिन् एकमात्रदेवताकयागीयशेषभक्षणे एव इन्द्रपीतस्य इति मन्त्रः, न तु द्विदैवत्ये ऐन्द्राग्ने। अत्र देवताऽन्तरात् अग्निरूपस्य देवताऽन्तरस्य सत्त्वात्। विभागवत् 'आग्नेयं चतुर्धा करोति' इत्याम्नातचतुर्धाकरणवत्। तत्र यथा आग्नेयपदेन अग्निपर्याप्तदेवतात्वकत्वस्य तद्धितेन प्रतिपादनात् व्यासज्यवृत्तिदेवतात्वके अग्नीषोमीयादौ चतुर्धाकरणं न प्रवर्तते तद्वत्। तस्मात् ऐन्द्राग्नशेषभक्षमन्त्रे इन्द्रपीतस्य इति पदं नोच्चार्यमिति सिद्धान्तः। के.

* ऐन्द्राग्ने तु लिङ्गभावात् इत्यधिकरणोक्तरीत्या स्वीकारः एव पाधातुना लक्ष्यते (इन्द्रपीतशब्दे)। कौ. ३।२।११।४३ (४४) पृ. ३०६. * ऐन्द्राग्ने साकमेधीये वारुणप्रघासैन्द्राग्नस्य सार्थवादविधिकाण्डस्य अतिदेशः। भा. ७।१।४।२२.

* **ऐन्द्राग्नग्रहो** ज्योतिष्टोमे प्रातःसवने। के.

* **ऐन्द्राग्नमहविकृतित्वम्** आश्विनद्विकपालस्य, 'मारुतं सप्तकपालम्' इत्यस्य च त्र्यक्षरदेवताविधिसादृश्यात्। बाल. पृ १२०.



* **ऐन्द्राग्नद्वादशकपाल**वैश्वकर्मणैककपालयोः साकमेधीययोः चातुर्मास्यवरुणप्रघासगतकायैककपालैन्द्राग्नगतसार्थवादविधिकाण्डातिदेशः। भा. ७।१।४।२२.

* **ऐन्द्राग्नवत्**— यथा ऐन्द्राग्नपुरोडाशस्य अग्निसंबन्धेऽपि चतुर्धाकरणं नास्ति, तद्वत् सोमापौष्णे चरौ पूषसंबन्धेऽपि पेषणं नास्ति। के. ३।३।१५।४४. * ऐन्द्राग्नवत्— यथा चतुर्धाकरणं मिश्रदेवतत्वात् ऐन्द्राग्ने न भवति, तद्वत् उपांशुयाजाज्यम् अग्नीषोमीयशब्देन न शक्यते वदितुम्, वैष्णवत्वादेरपि संभवात्। भा. ५।४।६।२१.

* **ऐन्द्राग्नविकाराणामपि** सोमप्राक्कालत्वमेवेति केचित्। वस्तुतस्तु तद्विकाराणामनियतकालत्वम्। भाट्ट. ५।४।९.

* **ऐन्द्राग्नविकृतित्वम्** इन्द्रासोमीये इन्द्रमुखत्वात्। एवम् ऐन्द्रावैष्णवे ऐन्द्रापौष्णे ऐन्द्राबार्हस्पत्यादौ च ऐन्द्राग्नविकृतित्वमेव। बाल. पृ. १२०.

* **ऐन्द्राग्नविधानार्था** 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति आग्नेयपुनःश्रुतिः। भा. २।३।१४।२९, * **ऐन्द्राग्नवैश्वदेवयो**र्द्यावापृथिव्यानुरोधेन आग्रयणे वैश्वदेविकतन्त्रस्य नियमो नास्ति। आग्रयणेष्टिन्यायोऽयम्। १२।२।१५।३५-३७.

**ऐन्द्राग्नसोमभक्षणममन्त्रकं ज्योतिष्टोमे॥**

**ऐन्द्राग्ने तु लिङ्गभावात् स्यात्। ३।२।१७।४०॥**

**भाष्यम्**— एवं स्थिते चिन्त्यते। अस्ति तत्रैन्द्राग्नः सोमः 'ऐन्द्राग्नं गृह्णाति' इति। तत्र संदेहः किं मन्त्रवद्भक्षणम् अमन्त्रकं वेति। किं प्राप्तम्? ऐन्द्राग्ने तु स्यात्। यस्य हीन्द्राग्नी देवता तस्य नेन्द्रः। शक्यते हि स इन्द्रपीत इति व्यपदेष्टुम्। यस्य हि अवयवान्तरमिन्द्रेण पीतम्, स इन्द्रपीतः। तस्यैन्द्राग्निभ्यां पिबद्भ्यां पीतम् अवयवान्तरमिन्द्रेण। तस्मात् मन्त्रवद्भक्षणमिति।

**वा**— (अन्यसहितेन्द्रदेवत्यसोमभक्षणे ऊहितमन्त्रप्रयोगोपपत्तेः अमन्त्रकत्वं पूर्वपक्षप्रयोजनं सर्वानैन्द्रान्व्यापकत्वेन आक्षिप्य व्यापकत्वोक्त्यर्थम् इदमधिकरणम्। सु. पृ. ११५९.) अथ यत्र अन्यसहितः इन्द्रो देवता, तत्र किं इन्द्रपीतव्यपदेशः अस्ति, न इति संदेहे अस्तीति भ्रमः। कुतः? 'न देवतात्वमिन्द्रस्य तत्पीतत्वेन कथ्यते। तेन नाग्नेयतुल्यत्वमसामर्थ्याद्विहेष्यते॥' आग्नेये हि यजमानसंकल्पो विशेषणत्वेन संकीर्त्यते। स च तद्धितेन अन्यनिरपेक्षाग्निविषय उपात्तः, इति सापेक्षं न प्रतिपादयति। अत्र पुनः इन्द्रपीत इति संप्रदानव्यापारो विशेषणम्। स च उभयोरपि संकल्प्यमानयोः प्रत्येकं केन चिदंशेन विद्यते। यस्य च यावान् व्यापारः, स तेन पाता इत्युपलक्ष्यते। ('यस्य हि अवयवान्तरम्' इति भाष्यं पूर्वभाष्येण असंबद्धत्वात् उत्कृष्य व्याख्येयं मत्वा 'तस्य इन्द्राग्निभ्याम्' इति भाष्यम् आदौ व्याचष्टे-) तेन ऐन्द्राग्नस्य इन्द्राग्निभ्यां पिबद्भ्याम् अर्धम् इन्द्रपीतम्, अर्धम् अग्निपीतम् इति शक्यं वदितुम्। ('यस्य हि' इति भाष्यं पूर्वमुपेक्षितं अधुना व्याचष्टे-) न च वर्तमानस्य साक्षात् इन्द्रपीतत्वम् इति हुतावयवद्वारेण व्यपदेशः। न च तस्य इयत्तानियमः अस्ति 'एतावता पीतेन व्यपदेष्टव्यः' इति। तस्मात् विशेषणोपपत्तेः मन्त्रवत् भक्षणमिति।

**एकस्मिन् वा, देवताऽन्तराद् विभागवत्। ४१॥**

**भाष्यम्**— नास्त्यवयवान्तरमिन्द्रेण पीयते। न चावयवान्तरेण इन्द्रपीतेन तत् पीतं भवति। तेन पीतः इति लक्षणाशब्दोऽयम्। इन्द्रमुद्दिश्य यः संकल्पितः, इन्द्रो यस्य देवतेति। यथैव च साकाङ्क्षस्य तद्धितार्थेन असंबन्धः, एवं समासोऽपि इन्द्रपीतस्येति साकाङ्क्षस्य नावकल्पते। तदुक्तम्, 'व्यवस्था वाऽर्थसंयोगात्' (३।१।१५।२७) इति। आह, ननु तेनैवाधिकरणेन एतद्गतम्, किमर्थं पुनश्चिन्त्यते इति। उच्यते। यत्तत्र विचारितं सिद्धमेव तत्, कथं पुनर्विचार्यते नैव साकाङ्क्षस्य देवतासंबन्ध इति। नैवेह देवतासंबन्ध इति पूर्वः पक्षः, पानमात्रसंबन्धोऽत्रेति। पानमात्रसंबन्धेन यत्र द्वाभ्यां पीयते, तत्रैकेन देवतासंबन्धः, इत्युत्तरः पक्षः। तस्मान्न पुनरुक्तमिति।

**वा**— सत्यम्, यदि देवताव्यापारः पातृत्वम् इह विशेषणं स्यात्, ततः ऐन्द्राग्नोऽपि गृह्येत। न तु अस्माकं देवता पिबति। किं तर्हि? संकल्पविषयत्वेनैव उपयुज्यते। न च मिश्रसंकल्पे अन्यतरव्यपदेशः संभवति,

तद्धितवत् समासस्य सापेक्षेषु अप्रवृत्तेः । तस्मात् आग्नेय-चतुर्धाकरणवदेव केवलेन्द्रदेवत्यविषयत्वात्, नैव व्यपदेशः उभयदेवत्यः संभवति इति मन्त्रनिवृत्तिः । अनेनैव च विशेषणस्य अपुनरुक्तत्वम् । यत् **पूर्ववादी** 'न देवतात्वमिह विशेषणम्, किं तर्हि ? संप्रदानगतं पातृत्वम्, तच्च प्रत्येकमपि अस्ति' इति मन्यते, **सिद्धान्तवादी तु** मुख्यपातृत्वासंभवात् देवतात्वमेव अनेन लक्ष्यते (न पातृत्वम्) इत्यापादयति । यद्यपि च मुख्यं पातृत्वं देवतायां भवेत्, तथापि द्रव्यस्य तत्पीतत्वम् अशक्यं वक्तुम् ? **'यो हि तावद्धुतः सोमः, स नैवमभिधीयते । न च तस्येन्द्रपीतत्वादहुतस्येन्द्रपीतता ॥'** चमसस्थो हि इन्द्रपीतत्वेन व्यपदिश्यते, न चासौ इन्द्रपीतः, हुतविषयत्वात् इन्द्रपीतव्यपदेशस्य । तस्मात् अवश्यविद्यमानधर्माभिधानात् इन्द्राय संकल्पितः इन्द्रपीतः प्रत्येतव्यः । ततश्च आपन्नं देवतात्वमेव उपलक्षणमिति । न च हुतसोमगतं पीतत्वं तत्र उपचरितुं शक्यम्, आरम्भधर्मेणैव संकल्पेन अभिधानोपपत्तेः । एकदेशेऽपि हि हूयमाने सर्वमिदं द्रव्यं देवतोद्देशेन त्यज्यमानं यागं साधयति, अतोऽसौ निर्वपतेरिव यजिरेव अत्र विवक्षितः । तेन ऐन्द्रयागसाधनात् इन्द्रपीतप्रत्ययसामर्थ्यात् मन्त्रनिवृत्तिः ।

**शा--** **'तस्मान्मन्त्रवदेव स्यादैन्द्राग्नादिषु भक्षणम् । स्यादेवं यदि पानं स्यात् तत्तु नास्तीति वक्ष्यते ॥'** चतुर्धाकरणवत् ऐन्द्राग्नादिषु मन्त्राभावः ।

**सोम--** **सूत्रार्थस्तु** ऐन्द्राग्नेऽपि लिङ्गसद्भावात् मन्त्रः स्यात् इति ।

**वि--** 'समन्त्रकममन्त्रं वा स्यादैन्द्राग्नादिभक्षणम् ।, ऐन्द्राग्नेऽपीन्द्रपीतत्वसंभवात् तत् समन्त्रकम् ॥, न पानमशरीरस्य युक्तं दानं तु मिश्रगम् । मन्त्रोऽयं तु न मिश्रार्हस्तस्मादेतदमन्त्रकम् ॥'

**भाट्ट--** एवं स्थिते पुनश्चिन्ता । ऐन्द्राग्नेऽप्यभ्यासे 'इन्द्रपीतस्य' इत्येवं समन्त्रकं भक्षणम् । त्यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदलक्षितस्वीकारस्य वा प्रत्येकवृत्तित्वेन डित्थमात्रवदेकेन व्यपदेष्टुं शक्यत्वात्, त्यागस्य हुताहुतसमुदायविषयत्वेन भक्ष्यमाणाहुतावयवमात्रविषयत्वाभावात् न पीतपदेन त्यक्तत्वलक्षणा । अतः चतुर्धाकरणाधिकरणविषयत्वाभावात् तस्यापि समन्त्रकं भक्षणम् । **इति प्राप्ते**, सत्यं पीतपदेन स्वीकारलक्षणा, पानस्य नवमे निषेत्स्यमानत्वात्, त्यागस्य त्वदुक्तरीत्या लक्षयितुमशक्यत्वाच्च । स्वीकारस्य तु देवस्वादिपदावलम्बनतयां कल्प्यमानस्य हुतावशिष्टे एव कल्पनीयत्वात् युक्ता लक्षणा । तथापि तस्य लाघवेन व्यासज्यवृत्तिनः एव कल्पनात्, प्रत्येकवृत्तित्वे प्रमाणाभावात्, चतुर्धाकरणाधिकरणविषयत्वोपपत्तेर्न तस्य समन्त्रकं भक्षणम् । १८.

**मण्डन--** 'नेन्द्राग्निपीतो भवतीन्द्रपीतः ।'

**शंकर--** 'नैन्द्राग्ने त्विन्द्रपीतवाक् ।'

* **ऐन्द्राग्नाग्नीषोमीयादीनां** केवलाग्न्यादिदेवताकैः आग्नेयादिशब्दैः असामर्थ्यादग्रहणं चतुर्धाकरणेन्द्रपीतपूषप्रविष्टभागविचारेषु । **वा.** २।१।५।१७ पृ. ४२०.

* **ऐन्द्राग्नादयो** विकृतयः साङ्गाः पौर्णमास्याममावास्यायां वा कर्तव्याः । 'य इष्टया पशुना' इति वचनात् । **भा.** ५।४।७।२४. * **ऐन्द्राग्नादीनि** काम्यानि कर्माणि आम्नातानि, तेनैव क्रमेण तद्देवत्यानि काम्यसमाख्यायुक्तानि याज्यापुरोऽनुवाक्यायुगलानि । तानि तास्वेव काम्यासु इष्टिषु यथाक्रमं विनियुज्यन्ते । न तु क्रममुल्लङ्घ्य तद्देवत्यकर्ममात्रार्थानि लिङ्गात् भवन्ति । **वा.** ३।२।७।२०. * **ऐन्द्राग्नादेः** आग्रयणे वैश्वदेविकतन्त्रस्य न नियमः । **भा.** १२।२।१५।३५-३७, * ऐन्द्राग्नादेः मुख्यस्यापि आग्रयणे जघन्यद्यावापृथिव्यानुरोधेनापि प्रसूनबर्हिर्नियमः । आग्रयणेष्टिन्यायोऽयम् । १२।२।१४।३४. * **ऐन्द्राग्नादीनां** काम्यानां कर्मणां पाठक्रमो न नियामकः, किन्तु यथाकाममनुष्ठानम् । **वि.** ५।३।१२.

## ऐन्द्राग्नादीनां विकृतिरूपाणामिष्टीनां सद्यस्कालता ॥

**विकृतेः प्रकृतिकालत्वात् । सद्यस्कालोत्तरा ततिस्तयोः प्रत्यक्षशिष्टत्वात्** ५।४।७।२२॥

**भाष्यम्**—इह वैकृतानि कर्माण्युदाहरणम् 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इत्येवमादीनि । तत्र संदेहः किमेता विकृतयः सद्यस्कालाः, उत द्व्यहकाला इति । किं प्राप्तम् ? विकृतिः प्राकृतान् धर्मांश्चोदकेन गृह्णाति । अतस्ते धर्मा आनुमानिकाः । पौर्णमासी चान्यः कालः । स यदि वा प्रकृत्या गृह्येत, यदि वा विकृत्या, असंभवे अन्यतरस्याः कालस्त्यक्तव्यः । तत्र आनुमानिको वैकृतस्य त्यज्यताम्, न प्रत्यक्षश्रुतः प्राकृतस्येति न्याय्यम् । तस्मात् सद्यस्काला एता विकृतयो भवेयुरिति ।

**द्वैयहकाल्ये तु यथान्यायम् । २३ ॥**

**भाष्यम्**—द्वैयहकाल्ये क्रियमाणे यथान्यायं कृतं भवति । तस्मात् द्वैयहकाल्यं स्यात् । चोदकस्तथाऽनुगृहीतो भवति । प्रकृतौ हि श्रूयते 'पूर्वेद्युरग्निं गृह्णाति, उत्तरमहर्देवतां यजति' इति । तस्मात् द्व्यहकालमेकमभिनिर्वर्त्य, तदहरेवोपक्रम्य अपरेद्युः परिसमापयेत् ।

**वचनाद्वैककाल्यं स्यात् । २४ ॥**

**भाष्यम्**—नैतदेवं द्व्यहकाला विकृतयो भवेयुरिति । सद्यस्कालाः स्युः । कस्मात् ? वचनमिदं भवति, 'य इष्टया पशुना सोमेन वा यक्ष्यमाणः स पौर्णमास्याममावास्यायां वा यजेत' इति । साङ्गस्यैतद्वचनम् । तस्मात् साङ्गं पौर्णमास्याममावास्यायां वा कुर्वीतेति गम्यते । तेन सद्यस्काला विकृतयः ।

**शा--** विकृतीष्टयो द्व्यहकाला इति प्राप्ते, उच्यते **'न प्रत्यक्षश्रुतः कालः संकोचं चोदकाद् व्रजेत् । सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत् ॥'**

**सोम**—वचनस्य पूर्वत्र पुरोडाशोत्कर्षसामर्थ्यात् इह सद्यस्कालतायामसामर्थ्यम् इति प्रत्यवस्थानात् **संगतिः** । ननु पौर्णमासीशब्दो यस्मिन् क्षणे चन्द्रः संपूर्णः, तद्वाचकः । अमावास्याशब्दश्च यस्मिन् क्षणे सूर्याचन्द्रमसौ सह वसतः, तद्वाचकः । स च पञ्चदश्यास्तिथेः अन्तिमः क्षणः । तथा च साङ्गस्य कर्मणः क्षणमात्रे अनुष्ठातुमशक्यत्वात् संकोचस्त्वयाऽपि वाच्यः (**इति चेदुच्यते**) नैतौ शब्दौ क्षणविशेषमात्रवचनौ, किन्तु वेदे 'सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्, तासाममावास्यां च पौर्णमासीं च नोपैत्' इति विशेष-(अविशेष-) प्रयोगात् लौकिकव्यवहाराच्च पञ्चदश्यात्मकतिथिविशेषवाचकौ इति **तन्त्ररत्ने** व्यवस्थापितत्वात् । **सूत्रार्थस्तु**- विकृतेः प्रकृतितः प्राप्तद्व्यहकालत्वात् चोदकबाधः स्यात् । तत एव ततिः विकृतिः सद्यस्काला स्यात् । प्रकृतौ तु तयोः द्व्यहकालत्वपर्वकालत्वयोः प्रत्यक्षशिष्टत्वात् उभयमङ्गीकृतम् । इह तु एकस्यानुमानिकत्वात् बाध एवेति ।

**वि--** 'द्व्यहकालाः किमैन्द्राग्नाद्याः सद्यस्कालगा उत ।, आद्यः प्रकृतिव, न्मैवं विकृत्युक्तिविशेषतः ॥'

**भाट्ट--** 'य इष्टया' इति वचनेन न तावत् प्रकृतीष्टौ पौर्णमास्यादिकालविधिः 'पञ्चदश्यान्ता उपवस्तव्याः, पक्षादयोऽभियष्टव्याः' इत्यादिवचनैस्तस्याः प्रतिपत्कालत्वविधानात् । अत एव 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवचनेषु पौर्णमास्यादिशब्दावपि आरम्भद्वारकौ पर्वप्रतिपत्समुदायलक्षकौ वा । अत एव प्रकृतौ द्व्यहकालत्वं प्राकरणिकम् । अतश्च इदमनारभ्याधीतं वचनं विकृतीष्टिविशेषपरम्, विकृतिपशुपरं च । अग्नीषोमीयस्य औपवसथ्येऽहनि विहितत्वात् । अतिदेशप्राप्तोऽपि च विकृतौ पौर्णमास्यादिकालो यथा पौर्णमासीविकाराणां पौर्णमास्यां करणम्, अमावास्याविकाराणां चामावास्यायां करणमित्येवं व्यवस्थया प्राप्तानामव्यवस्थार्थम्, तथा साङ्गानां तासां पौर्णमास्यादिकालविधानात् आतिदेशिकद्व्यहकालत्वबाधनार्थमपि । न च तत्तद्विकृतीनां तद्विधावेव प्रयोगस्य प्राप्तत्वादत्र प्रयोगविध्यभावेन प्रधानमात्रे एव पौर्णमास्यादिकालविधानोपपत्तेः प्रतिपत्कालत्वादिबाधेऽपि, चतुर्दश्यामन्वाधानकरणेन प्राकृतद्व्यहकालत्वबाधे प्रमाणाभावः इति **वाच्यम्** । कालस्य प्रयोगान्वयितया प्राप्तप्रयोगसंबन्धित्वेन विधानात् अन्वाधानेऽपि पौर्णमास्यादिकालकत्वस्य औपदेशिकत्वात् । अतः साङ्गमपि विकृतिप्रधानं पौर्णमास्यादिकाले कर्तव्यम् । तत्र पूर्वपर्वणि अपराह्णसंधौ वा विकृतिं कृत्वा प्रकृतेरन्वाधानं निर्विवादमेव । अन्वाधाने प्रातःकालस्तु उपदिष्टोऽपि अङ्गगुणत्वात् आतिदेशिकेनापि विकृतिप्रधानाङ्गप्रातःकालेन बाध्यते । पूर्वाह्णसंधावपि औदयिकपर्वणः प्रकृत्यवरुद्धत्वात् पूर्वपर्वण्येव वा उपदिष्टपर्वकालत्वानुरोधेन अतिदेशप्राप्तप्रातःकालं द्व्यहकालत्वं च बाधित्वा विकृत्यनुष्ठानम्, ततः प्रकृत्यन्वाधानमिति बोध्यम् । एवं सोमेऽपि, पूर्वेद्युरेव अधिककालव्याप्तिलाभात् । यत्तु

**धूर्तस्वाम्यादिभिर्याज्ञिकैः** आवर्तनतत्पूर्वसंध्योः प्रकृत्यनुष्ठानानन्तरं संधिदिने एव विकृत्यनुष्ठानम्, पौर्णमास्यादिशब्दानां पर्वान्त्यक्षणवचनत्वात् । 'यः परमो विप्रकर्षः सूर्याचन्द्रमसोः, सा पौर्णमासी । यः परमः संनिकर्षः, सा अमावास्या' इति **गोभिलसूत्रात्** । अतश्च संनिकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रस्यैव पौर्णमास्यमावास्यापदवाच्यत्वात् तस्य च पूर्वाह्णसंधौ द्वितीयदिने एव सत्त्वात् तत्रैव विकृत्यनुष्ठानम् । तदपि न प्रकृतेः पूर्वम्, तस्याः द्वयहकालत्वेन विकृतौ प्रसङ्गसिद्ध्यापत्तेः । अतः अगत्या प्रातःकालबाधः एवेत्युक्तम् । **तन्न** 'सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन्, तासाममावास्यां च पौर्णमासीं च नोपैत्' इत्याद्यर्थवादात्, आपामरप्रसिद्धेः, ज्योतिःशास्त्रादिवशाच्च पौर्णमास्यादिशब्दानां तिथिवचनत्वात् । नहि सूर्याचन्द्रमसोः परमसंनिकर्षविप्रकर्षक्षणावच्छिन्नाहोरात्रत्वाचित्वे पौर्णमास्यादिशब्दानां 'पर्वणो यश्चतुर्थोंऽश आद्याः प्रतिपदस्त्रयः' इत्यादेर्व्यवहारस्य, द्वैधे पूर्वविद्धापरविद्धाग्राह्यत्वत्याज्यत्वादिव्यवहारस्य च कथमप्युपपत्तिः संभवति, द्वैधस्यैवाप्रसक्तेः । अतस्तिथिपरा एवैते शब्दाः । तिथिर्नाम अमासंज्ञकचन्द्रकलाव्यतिरिक्तचन्द्रकलानां मध्ये एकैकस्याः कलायाः सूर्यमण्डलेन आद्यावयवविप्रकर्षादारभ्य अन्त्यावयवविप्रकर्षः, आद्यावयवसंनिकर्षादारभ्य अन्त्यावयवसंनिकर्षो वा यावता कालेन जायते, तावान् कालो यथाक्रमं शुक्लकृष्णपक्षगतः प्रतिपद्द्वितीयादिशब्दप्रतिपाद्यः । 'अमा षोडशभागेन देवि प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देहधारिणी ॥ अमादिपौर्णमास्यन्ता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने ॥ तत्र पक्षावुभौ मासः शुक्लकृष्णौ क्रमेण हि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदशैव ताः । दर्शान्ताः कृष्णपक्षे तु पूर्णिमाऽन्ताश्च शुक्लगाः ॥' इत्यादिवचनात् । अत एव तिथिशब्दः प्रतिपदादिशब्दाश्च कलास्वेव शक्ताः । काले तन्निरूढलक्षणयेति ध्येयम् । एवं च पौर्णमास्यमावास्याशब्दावपि न योगेनान्तिमक्षणवचनौ तदवच्छिन्नाहोरात्रविषयौ वा । **गोभिलसूत्रमपि** उक्तविधसंनिकर्षविप्रकर्षकालोपलक्षणमेव व्याख्येयम् । तत् सिद्धं न विकृतीनां द्वयहकालत्वमिति । ६.

**मण्डन**— 'द्वैदिन्यं स्यान्नेष्टिधर्मो विकारे ।' ८.

**शंकर**— 'सद्यस्काला च विकृतिः ।' ७.

* **ऐन्द्राग्नादिविकृतौ** दार्शपौर्णमासिकधर्माणामतिदेशः । **भा.** । ८।१।४।११. * **'ऐन्द्राग्नैकादशकपाल**द्वादशकपालयोः शाखाऽन्तरीययोः समविकल्पः सर्वान् प्रति' इति यत् शाखाऽन्तराधिकरणे वार्तिकम्, तत्तु न स्वमतम् । किन्तु यथाशाखं व्यवस्था । **बाल.** पृ. ९१.

* **ऐन्द्रापौष्णश्चरुः** राजसूये द्वितीये त्रिसंयुक्ते द्वितीयं हविः । **भा.** ११।४।१।२. * **ऐन्द्रापौष्णस्य** ऐन्द्राग्नविकृतित्वम् इन्द्रमुखत्वात् । **बाल.** पृ. १२०.

* **ऐन्द्रापौष्णे** राजसूयगते पौष्णं पेषणं नास्ति, केवलपूषदैवत्ये एव तत् । **वि.** ३।३।२०. * **ऐन्द्राबार्हस्पत्यस्य** ऐन्द्राग्नविकृतित्वम्, इन्द्रमुखत्वात् । **बाल.** पृ. १२०. * **ऐन्द्राबार्हस्पत्ये** 'अर्धं बर्हिषो लुनाति अर्धं न' 'स्वयं दितमर्धं वेद्यां करोति, अर्धं न' इति वैदिक्या इतिकर्तव्यताया लिङ्गम् । **भा.** ७।४।२।४.

* ऐन्द्राबार्हस्पत्ये कर्मणि 'इदं वामास्ये हविः, प्रियमिन्द्रावृहस्पती' इत्यादिके याज्याऽनुवाक्ये द्विविधे आम्नाते । तत्र दृष्टप्रयोजनस्य देवताबोधनस्यैकत्वात् विकल्पः । **वि.** १२।४।२.

**ऐन्द्राबार्हस्पत्ये कर्मणि याज्याऽनुवाक्यायुगलद्वयस्य विकल्पः ॥**

**याज्याऽनुवाक्यासु तु विकल्पः स्याद् देवतोपलक्षणार्थत्वात् । १२।४।२।३ ॥**

**भाष्यम्**— ऐन्द्राबार्हस्पत्ये कर्मणि अनेकं याज्याऽनुवाक्यायुगलमाम्नातम् । 'इदं वामास्ये हविः प्रियमिन्द्रावृहस्पती, अयं वां परिषिच्यते सोम इन्द्रावृहस्पती' इत्येकम् । 'अस्मे इन्द्रावृहस्पती, बृहस्पतिर्नः परिपातु पश्चात्' इत्यपरम् । तयोः किं समुच्चयः, विकल्प इति विचारः । तत्रोच्यते । याज्याऽनुवाक्यासु तु विकल्पः स्यादिति । कस्मात् ? देवतोपलक्षणार्थत्वात् । कर्मणि गुणभूता देवता याज्याऽनुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते । सकृदुपलक्षणेन च तत् सिध्यति । कर्मसिद्धौ



कर्मणि उपलक्षणकार्ये नास्तीति द्वितीयं याज्याऽनुवाक्याद्वयं प्रयोगान्तरार्थं भवति । तस्मात् विकल्पः ।

**लिङ्गदर्शनाच्च । ४ ॥**

**भाष्यम्**— लिङ्गं चैवमर्थं दर्शयति । किं लिङ्गं भवति ? एवमाह, 'ऊरू वै देवानां याज्याऽनुवाक्ये, एकया प्रत्यागच्छति, गमयत्यन्यया, अथात्र तिस्रः कार्याः' इति, पितृयज्ञे याज्याऽनुवाक्यात्रयविधानपरे वाक्ये तयोर्द्वित्वमुचितं दर्शयति । तथा, 'न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि, मानुषं तत् क्रियते, नैकमेकम्, पितृदैवं तत् । द्वेद्वे सह प्रहृत्ये, याज्याऽनुवाक्ययो रूपम्' इति । तस्मादपि विकल्पः । (अथ एकस्मिन्नेव याज्याऽनुवाक्यायुगले तयोर्विकल्पं निरस्य समुच्चयं वर्णकान्तरेण प्रतिपादयति भाष्यकारः । के.) अथ तयोरेव मिथः कस्माद्विकल्पो न भवति । एकार्थत्वात् प्राप्नोति, अन्यतरस्यापि हि देवतोपलक्षणं सिध्यति । उच्यते । समाख्या पुरोऽनुवाक्येति । पूर्वमनूच्यते इति पुरोऽनुवाक्या । आपेक्षिकः पूर्वशब्दो याज्यामपेक्ष्य भवति । समुच्चये चैतदुपपद्यते । तस्मात् समुच्चयः । ननूपलक्षिते, उपलक्षणकार्याभावादर्थलोपादन्यतरस्याः प्रयोगो न प्राप्नोति । उच्यते । समाख्यासामर्थ्यात् द्विरुपलक्षणसाध्यं कर्म भविष्यति । यथा, 'द्वाभ्यां खनति' इति वचनसामर्थ्यात् द्व्यभिधानसाध्यम् । तस्मादविरोधः ।

**सोम**— पूर्ववत् (जपस्तुत्याशीरभिधानमन्त्रवत्) इहापि समुच्चयः इत्युत्थितेः **संगतिः** । एवं च याज्यापुरोऽनुवाक्यावैषम्यप्रतिपादनमात्रे अस्य (अधिकरणस्य) तात्पर्यम् । पुरः पूर्वम् अनूच्यते इति समाख्या समानजातीययाज्याऽपेक्षया पूर्वभावं विना न संभवति इति तद्बलात् समुच्चयः ।

**वि**— 'इदंवादिद्वयोः किं स्यात् साहित्यं वा विकल्पनम् । , साहित्यं पूर्ववत्, मैवं देवताबोधनैक्यतः ॥' (इदंवादि 'इदं वामास्ये हविः' इत्यादि इत्यर्थः । इति प्रथमं वर्णकम्) । 'पुरोऽनुवाक्यया याज्या विकल्प्या वा समुचिता । , पुरेवाचः, समाख्यानाद् वचनाच्च समुच्चयः ॥' (इति द्वितीयं वर्णकम्) ।

**भाट्ट**— ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्याऽनुवाक्यायुगले श्रुते । तयोर्देवताप्रकाशनरूपदृष्टार्थत्वाद्विकल्प एव । पुरोऽनुवाक्यायास्तु याज्यया सह पुरोऽनुवाक्यासमाख्याबलादेव समुच्चयः ।

**मण्डन**— 'याज्याऽनेका विकल्प्यते ।'

**शंकर**— 'अनुवाक्यायाज्ययोश्च सः ।' सः समुच्चयः । (अत्र मण्डनाचार्येण प्रथमवर्णकार्थ एवोक्तः, शंकरभट्टैस्तु द्वितीयवर्णकार्थ एवोक्तः इति ज्ञेयम् । तेन न तयोर्विरोधः । के.)

* **ऐन्द्रावैष्णवश्चरुः** राजसूये प्रथमे त्रिसंयुक्ते द्वितीयं हविः । **भा.** ११।४।१।२. * ऐन्द्रावैष्णवस्य शुनासीरीयगतस्य ऐन्द्राग्नविकृतित्वम् इन्द्रमुखत्वात् । बाल. पृ. १२०.

* **ऐन्द्री** (एव) **सुब्रह्मण्या** कार्या पञ्चदशरात्रे अग्निष्टुति प्रथमाहे एकादशानामह्नां धर्मभूता, नामेयी । **भा.** १२।२।७।२२. * 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' । अत्र गार्हपत्योपस्थाने मन्त्रः प्रत्यक्षश्रुत्या विनियुज्यते । **वि.** ३।३।७. * 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र गार्हपत्यश्रुत्या 'कदा चन स्तरीरसि' इति मन्त्रेण गार्हपत्यस्य एव उपस्थानम्, न तु लिङ्गात् इन्द्रस्य । **भा.** ३।३।७।१४. * 'ऐन्द्या सदः' इति ज्योतिष्टोमे सदोमण्डपोपस्थानम् (अभिमर्शनं) प्रकृताभिरेवैन्द्रीभिः । **वि.** ३।२।८.

**ऐन्द्रीन्यायः** । ऐन्द्यधिकरणम् । अग्निचयने 'निवेशनः संगमनः' इत्यैन्द्या गार्हपत्योपस्थानं कर्तव्यम् ॥

**वचनात् त्वयथार्थमैन्द्री स्यात् । ३।२।२।३ ॥**

**भाष्यम्**— अग्नौ श्रूयते 'निवेशनः संगमनो वसूनाम् इत्यैन्द्या गार्हपत्यमुपतिष्ठते' इति । तत्र संदेहः किं इन्द्रस्योपस्थानं कर्तव्यम्, उत गार्हपत्यस्येति । कुतः पुनः गार्हपत्यमुपतिष्ठते इत्येवं विस्पष्टे वचने संशय इति ? उच्यते । यद्धि वाक्येनोपस्थानं तत् स्तुतिवचनेन संस्करणम्, न समीपस्थानमात्रम् । न च ऐन्द्रेण मन्त्रेण अग्नेरभिधानं शक्यते कर्तुम् । अतो गार्हपत्यमुपतिष्ठते इति न गार्हपत्यार्थमुपस्थानमेतत् इति जायेत शङ्का । गार्हपत्यः उपस्थानार्थो भवेत् इति तादृशश्च शब्दो नास्ति तृतीयाऽन्तः

सप्तम्यन्तो वा । तस्मात् विचारः कथमुपपन्नं भवतीति । किं तावत् प्राप्तम् ? सामर्थ्यादिन्द्रोपस्थानम् । अशक्यत्वाच्च गार्हपत्योपस्थानस्य । कथं द्वितीयाविभक्तिरिति चेत्, अविवक्षिता, ईप्सितार्था वा संबन्धमात्रप्रधाना । यद्वा उपस्थानविशेषणं संबन्धात् गार्हपत्यशब्दः । तस्मात् गार्हपत्यविशिष्टमुपस्थानम् इन्द्रार्थे कर्तव्यमिति । गार्हपत्यश्च देशेन विशिंष्यात् । मुख्यमेव कार्यं मन्त्राणाम् । एवं प्राप्ते, ब्रूमः । वचनात्तु अयथार्थम् ऐन्द्री स्यात् । नैतदस्ति इन्द्रार्थमुपस्थानमिति । अयथार्थम् ऐन्द्री स्यात् । कुतः ? वचनसामर्थ्यात् । वचनमिदं भवति 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति । गार्हपत्ये द्वितीया विभक्तिः प्राधान्यमाह । किमिव वचनं न कुर्यात् । नास्ति वचनस्य अतिभारः । तस्मात् गार्हपत्यार्थमुपस्थानम् ।

वा— अपवाद आरभ्यते ( मन्त्रमुख्यार्थविनियोगस्य) । 'निवेशनः संगमनो वसूनामित्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इति यद्यपि मन्त्रार्थः अग्नावपि उपपद्यते, तथापि तद्धितश्रुत्यैव इन्द्राभिधानसामर्थ्यम् अत्र मुख्यम् इति विज्ञायते । केषां चित्तु 'कदा चन स्तरीरसि' इत्येषा ऋक् पठ्यते । तत्र पूर्ववदेव संदेहः किं मुख्यत्वात् इन्द्रोऽभिधातव्यः, उत वचनसामर्थ्यात् गौणो गार्हपत्य इति । सत्यपि च संयुक्तश्रवणे अरुणावत् (३।१।६।१२) अशक्तेः संदेहो योजनीयः । तत्र द्रव्यपरिच्छेदद्वाराऽपि क्रयसंबन्धो लब्धः । इह तु शब्दार्थसंबन्धस्य औत्पत्तिकत्वेन अशास्त्रहेतुत्वात् अत्यन्ताशक्तत्वम् । नहि कथं चित् इन्द्रशब्दो गार्हपत्यं ब्रवीति । अभिधानं चेदं चोदितम् । उपतिष्ठते इत्यात्मनेपदनिर्देशात् मन्त्रकरणव्यापाराभिधाने हि एतत् । न च अभिधानं मुक्त्वा अन्यत्र मन्त्रः करणं भवति । तेन 'ऐन्द्र्या उपतिष्ठते' इत्येतावता तावत् इन्द्रोपस्थानं विज्ञायते । गार्हपत्यम् इति च द्वितीयया अग्नेः प्रकाश्यत्वम् । तत्र किं समञ्जसम्, किमसमञ्जसम् इति जायते संशयः । नहि इन्द्रोपस्थाने एव साधनान्तरं गार्हपत्यो ज्ञायते ।

किं प्राप्तम् ? पूर्वाधिकरणेन इन्द्रोपस्थानमिति । कथं द्वितीया इति चेत्, सक्तुवत् ( २।१।४।१२ ) साधनान्तरम् अधिकरणापादानादि लक्षयिष्यति । शक्नोति विरोधात् ईप्सिततमत्वम् अविवक्ष्यमाणं कारकमात्रं लक्षयितुम् । तत्र च 'द्रव्याणां कर्मसंयोगे' ( ६।१।१।१ ) इत्यनेन गार्हपत्यस्य अङ्गत्वं भविष्यति । यद्वा उपस्थानविशेषणं संबन्धात् गार्हपत्यशब्दः इन्द्रलक्षणार्थः इति केचित् । एतदुक्तं भवति, विभक्तिर्वा लक्षणावृत्ता प्रातिपदिकं श्रुतिवृत्तम्, प्रातिपदिकं वा यज्ञसाधनसामर्थ्यात् लक्षणाऽर्थे द्वितीया मुख्येति । 'अथवा उपस्थानविशेषणम्' ( इति भाष्ये ) इत्यत्र धात्वर्थमात्रमुक्तम् । एककर्मविषयत्वं हि गार्हपत्यमन्त्रयोर्विप्रतिषिद्धम् । यस्य मन्त्रः करणं न तस्य गार्हपत्यः कर्म, यस्यासौ कर्म न तस्य मन्त्रः करणम् । द्वौ चेह प्रकृतिप्रत्ययसमूहेन व्यापारौ उपात्तौ । प्रकृत्या समीपस्थानम्, प्रत्ययेन प्रकाशनम् । तत्र प्रकाशने यादृशं गार्हपत्यस्य कारकत्वम्, तादृशं व्याख्यातम् । इदानीं मुख्यमेव कर्मत्वं प्रकृत्यर्थं प्रति उच्यते । तेन एतदुक्तं भवति, गार्हपत्यं समासीदन् इन्द्रं प्रकाशयेत् इति । यद्यपि च प्रत्ययार्थप्राधान्यात् तत्कर्मत्वं युक्तम्, तथापि अयोग्यत्वात् ततो निवृत्तं संबन्धात् प्रकृत्यर्थमुपसंक्रामति । तस्मात् मुख्यमेव कार्यं मन्त्राणामिति । एवं प्राप्ते, ब्रूमः । वचनात् अयथार्थत्वं मन्त्राणामिति । कुतः । **'गौणत्वं यत्र नाम स्यात् क चिद् ब्राह्मणमन्त्रयोः । तत्रानुवादरूपत्वान्मन्त्राणां गौणतेष्यते ॥'** गार्हपत्यस्तावत् द्वितीयया प्रधानस्य प्रत्ययार्थस्य कर्म इति श्रुत्या गम्यते । तेन ऐन्द्र्या स प्रकाशयितव्यः । तत्र यदि अयथार्थत्वं वचनानुरोधेन संजातम्, तथा नाम इति अध्यवसातव्यम् । अवश्यम्भावि हि अत्र ब्राह्मणस्य मन्त्रस्य वा गौणत्वम् । तत्र ब्राह्मणस्य अत्यन्ताप्राप्तविधित्वात् प्रथमप्रवृत्तेश्च अनन्यप्रमाणके अर्थे गौणत्वमयुक्तम् । **'मन्त्रस्य तु ब्राह्मणचोदितार्थप्रकाशनात् तत्परतन्त्रवृत्तेः । विरोधिनं स्वार्थमतीत्य मुख्यं युक्तो हि गौणार्थनिमित्तभावः ॥ तेन कारकसामान्यं लक्ष्यते न द्वितीयया । येनात्र गार्हपत्योऽपि संबन्धात् स्याद्विशेषणम् ॥ न चावयवसंबन्धादिन्द्रो गृहपतेर्यतः । तेनात्र गार्हपत्यः स्याद् रूढ्याऽग्निप्रत्ययाद् दृढात् ॥'**



**गुणाद्वाऽप्यभिधानं स्यात् संबन्धस्य शास्त्रहेतुत्वात् । ४ ॥**

**भाष्यम्**— अत्राह, ननु एतदुक्तं न ऐन्द्रेण मन्त्रेण गार्हपत्योपस्थानं भविष्यतीति । उच्यते । वचनात् भविष्यतीति । आह । न वचनशतेनापि शक्यमेतत् । इन्द्रशब्देन अग्निं प्रत्याययेत् इति ब्रुवन् विहन्येत । यथा 'अग्निना सिञ्चेत्' 'उदकेन दीपयेत्' इति । नहि शास्त्रहेतुकः शब्दार्थयोः संबन्धो भवति । नित्योऽसौ लोकतोऽवगम्यते इत्युक्तम् । 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति । ननु शब्दलक्षणोऽपि भवति शब्दार्थयोः संबन्धः कृत्रिमः । यथा देवदत्तो यज्ञदत्त इति । भवति कश्चित्, यत्र संबन्धस्य विधायकं वाक्यं भवति । न तु एतद्वाक्यं शब्दार्थयोः संबन्धस्य विधायकं गार्हपत्यस्य इन्द्रशब्दो नामेति । कथं तर्हि सिद्धसंबन्धेन इन्द्रशब्देन गार्हपत्यमुपतिष्ठते इति । न च शक्यते परशब्देन परो वदितुम् । किमत्र वचनं करिष्यति । अत्रोच्यते । 'गुणाद्वाऽप्यभिधानं स्यात् संबन्धस्याशास्त्रहेतुत्वात्' इति । यद्यपि नेदं वाक्यं शब्दार्थसंबन्धस्य विधाने हेतुभूतम्, तथापि अनेन इन्द्रशब्देन शक्यं कर्तुं गार्हपत्याभिधानम् । कुतः ? गुणसंयोगात् गौणमिदम् अभिधानं भविष्यति । भवति हि गुणादपि अभिधानम्, यथा 'सिंहो देवदत्तः' 'अग्निर्माणवकः' इति । एवमिहापि अनिन्द्रे गार्हपत्ये इन्द्रशब्दो भविष्यति । अस्ति चास्य इन्द्रसादृश्यम् । यथैव इन्द्रो यज्ञसाधनम्, एवं गार्हपत्योऽपीति । अथवा इन्दतेः ऐश्वर्यकर्मणः इन्द्रो भवति । भवति च गार्हपत्यस्यापि स्वस्मिन् कार्ये ईश्वरत्वम् । तस्मात् इन्द्रशब्देन यः प्रत्याय्यते अर्थः, स प्रतीतः, सादृश्यात् गार्हपत्यं प्रत्याययिष्यति, ऐश्वर्याद्वा प्रत्याययिष्यति, इति न दोषः ।

वा— ननु च मन्त्रोऽपि अशक्य एव गार्हपत्ये विनियोक्तुम् । तथाहि, **'गौणेऽपि तावदेतस्य वृत्तिः क्लेशेन जायते । अत्यन्तासदृशत्वात्तु न गौणोऽप्यत्र दृश्यते ॥'** नहि वचनशतेन इन्द्रशब्दः शक्यो गार्हपत्याभिधानसमर्थः कर्तुम् । **'न वाऽदेवगुणवच्छास्त्रादिन्द्रोऽग्निः पारिभाषिकः । नहि शब्दार्थसंबन्धः प्रसिद्धः शास्त्रहेतुकः ॥'** अत्रोच्यते । **'स्यादग्नेर्गौणमिन्द्रत्वं यज्ञसंबन्धकारितम् । इन्दत्यर्थानुसाराद् वा स्वकार्ये सोऽपि हीश्वरः ॥'** तस्मात् अन्यथाऽनुपपत्तेर्गौणमभिधानम् इति सिद्धम् ।

शा— **'पूर्वाधिकरणन्यायात् मुख्यस्येति प्रतीयते । विनियोज्यानुसारेण विनियोगस्तु वर्ण्यते ॥ न खल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने । शक्तिरस्ति न चाशक्तोऽशक्येऽर्थे विनियुज्यते ॥ तेन मन्त्रानुसारेण विनियोगार्थवर्णना । इन्द्रो हि गार्हपत्येन गौण्या वृत्त्याऽभिधीयते ॥ यज्ञसाधनसाधर्म्याद् यद्वा गृहपतेर्यतः । तेनायं गार्हपत्यः स्यादिन्द्रोऽवयवयोगतः ॥'** इति प्राप्ते, अभिधीयते । **'अग्नौ वचनसामर्थ्याद् विनियोगः प्रतीयते । न चात्यन्तासमर्थत्वं गौणसामर्थ्यसंभवात् ॥ यत्र मानान्तरं नास्ति तत्र गौणो न गम्यते । प्रमाणान्तरसद्भावे गौणे शब्दः प्रवर्तते ॥ पूर्वाधिकरणे ह्येतद् वर्णितं विद्यतेऽत्र च । विस्पष्टं वचनम्, तेन गार्हपत्यार्थता स्फुटा ॥ अवश्यं कल्पनीयं हि मन्त्रस्य ब्राह्मणस्य वा । गौणत्वम्, तच्च मन्त्रस्य प्राप्तार्थस्यैव युज्यते ॥ अप्राप्तार्थे विधौ नैव गौणत्वमुपपत्तिमत् । न चावयवयोगेन वृत्ती [ वृत्तिः ] रूढ्याऽग्निवेदनात् ॥ अभिधानक्रियायाश्च प्रधानत्वात् तदन्वयः । गार्हपत्यस्य नान्यार्थसमीपस्थितिगामिता ॥'**

**सोम**— श्रुतिविनियोगविचारस्यापि अस्य मुख्यार्थे एव मन्त्राणां विनियोग इति पूर्वोक्तार्थापवादतया अत्र संगतिः । सूत्रार्थस्तु– वचनबलात् ऐन्द्री इयमृक् अयथाश्रुतार्था स्यात् इति । एवं च यदुक्तं न्यायसुधायाम् 'इन्द्रो न तस्थौ' इति नकारस्य उपमाऽर्थतया अग्निप्राधान्यमेवास्य मन्त्रस्य, न तु इन्द्रप्राधान्यमिति । तत् एतत्सूत्रविरोधात् 'गुणाद्वाऽप्यभिधानं स्यात्' इत्युत्तरसूत्रविरोधात् भाष्यवार्तिकयोः स्पष्टमेव गौणत्वाभिधानात् नकारस्य लोकवेदोभयप्रसिद्धनिषेधार्थकत्वसंभवे तत्परित्यागेन 'उपमार्थीय उपरिष्टादुपचारः' इति निरुक्तमात्रम् ( १।४ ) अवलम्ब्य उपमाऽर्थस्वीकारायोगाच्च अनादरणीयम् ।

वि-- 'ऐन्द्या निवेशनेत्यग्निं गार्हपत्यं भजेदिति । प्रकाश्ये मुख्य इन्द्रे वा गौणे, मुख्येऽस्तु पूर्ववत् ॥, एकस्य गौणताग्रौण्ये मन्त्रस्यैवानुवादतः । गौणताऽतोऽग्न्युपस्थाने मन्त्रः श्रुत्या नियुज्यते ॥'

भाट्ट— यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते, यथा अग्नौ 'कदा चन स्तरीरसि इत्यैन्द्या गार्हपत्यमुपतिष्ठते' इत्यादौ, तत्र गौणे एव गार्हपत्ये विनियोगः । अथ 'ऐन्द्या' इत्युपक्रमस्य तद्धितश्रुत्या मुख्यसामर्थ्योज्जीवनात् जघन्यद्वितीयायाः एव तदनुरोधेन प्रतियोगित्वे लक्षणा गार्हपत्यसमीपे स्थित्वा इति । गुणभूतप्रातिपदिके एव वा यज्ञसाधनत्वसादृश्यात् गौण्या गृहपतित्वयोगेन वा इन्द्रप्रकाशकत्वम् । अस्तु वा रूढत्वात् अग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वम्, न तु मन्त्रसाध्यामिधानं प्रति, तस्याशाब्दत्वात् । न च 'उपान्मन्त्रकरणे' (उप– उप सर्गात् परो यः स्थाधातुः, ततः परं आत्मनेपदं भवति धात्वर्थस्य मन्त्रकरणकत्वे सति इति सूत्रार्थः । पा० १।३।२५) इति स्मृत्या आत्मनेपदविधानेन धातोः मन्त्रकरणार्थकत्वावगतेः तस्य अभिधानलक्षकत्वावगतिः, आत्मनेपदबलेन समीपस्थितेः अभिधानप्रयोजकत्वावगतेः, मन्त्रस्य स्वसाध्याभिधानाङ्गत्वसंबन्धेन समीपस्थितिविशेषणत्वोपपत्तेः, अभिधानलक्षणायां प्रमाणाभावात् । अतश्च शक्यार्थे एव समीपस्थितौ गार्हपत्यस्य कर्मत्वम्, इन्द्रस्य तु आर्थिके अभिधाने, इति न विरोधः । यथा च अस्य धातोः सकर्मकत्वम्, तथा कौस्तुभे एव प्रपञ्चितम् । (कौस्तुभे 'अकर्मकाच' (पा० १।३।२६) इत्युत्तरसूत्रेण अकर्मकात् तिष्ठतेः आत्मनेपदविधानेन अस्मिन् सूत्रे तिष्ठतिवाच्यस्यापि अर्थस्य सामीप्यरूपफलावच्छेदेन सकर्मकत्वविवक्षणात् इत्युक्तम्) अतः कथं मन्त्रस्य गौणेऽर्थे विनियोगः इति चेत्, न । ऐन्द्या इति तद्धितेन एकपदेन विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य चयनानुपयोगीन्द्राङ्गत्वबोधानुपपत्तेः । अतस्तस्य शक्यत्रोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनापि उपपत्तेः न द्वितीयादौ तद्बलेन लक्षणाऽऽश्रयणं रूढित्यागो वा । न च समीपस्थितिं प्रति अग्नेः कर्मत्वम् । तथात्वे तस्याः अभिधानं प्रति अङ्गत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेः । आत्मनेपदविरोधेन धातुनैव स्वशक्यार्थविशिष्टाभिधानलक्षणाऽवश्यम्भावात् विशेष्यभूताभिधाने एव मन्त्रस्य करणत्वप्रतीतेः गार्हपत्यस्य च चयनसंस्कार्यस्य कर्मत्वप्रतीतेः अर्थाच्च सामीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेः । तात्पर्यग्राहकब्राह्मणानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोगः इति सिद्धम् ।

मण्डन-- 'श्रुत्यैन्द्रमन्त्रोऽग्निगुणो यथाऽर्थः ।'

शंकर-- 'मुख्यार्थाङ्गं मनुलिङ्गात् ।' मनुः मन्त्रः ।

* न च ऐन्द्रीन्यायः, वाचनिकविनियोगाभावात् । सोम. ९।१।५ पृ. ५८२. * ऐन्द्रीन्यायेन 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति मन्त्रस्य प्रजापतिप्रकाशकत्वापत्तेः । ब्राह्मणवाक्यगतचतुर्थ्युपात्तप्रजापतिदेवताऽवरुद्धे मान्त्रवर्णिकदेवताया निवेशायोगात् । कौ. १।४।४।४ पृ. १९८. * देवताऽन्तरपदानां अग्निहोत्राङ्गमन्त्रगतानाम् ऐन्द्रीन्यायेन अग्निलक्षकत्वोपपत्तेः । कु. १।४।४।४ पृ. ९३. * न चैवं ब्राह्मणगतचतुर्थ्या (यदग्नये च प्रजापतये च) प्रजापतेर्विधाने मन्त्राणाम् (अग्निर्ज्योतिर्०) ऐन्द्रीन्यायेन गौणत्वापत्तेः देवताकल्पकत्वानापत्तिः, 'अग्नेः पूर्वाहुतिः, प्रजापतेरुत्तरा' इति क्रमविध्यन्यथाऽनुपपत्त्यैव सिद्धौ तद्बलेन ऐन्द्रीन्यायानुपपत्तेः । कौ. १।४।४।४ पृ. २०३. * मन्त्रयोः उत्थाने वाग्विसर्गे च गौणेऽर्थे ऐन्द्रीन्यायेन वचनात् विनियोगः इति पूर्वपक्षः । कु. ३।२।४।८, * मुख्यसामर्थ्याभावेऽपि सामान्यविषयश्रुत्यनुसारादेव ऐन्द्रीन्यायेन गौणीं वृत्तिमाश्रित्य शक्यार्थविधानस्य कथञ्चिदुपपाद्यत्वात् पूर्वः पक्षः । १।४।२०।२१.

* ऐन्द्रीन्यायस्य स्वरूपं 'लिङ्गात् वचनं बलवत्' इति । भा. ३।२।२।३–४. * "वचनात् गार्हपत्ये विनियुक्तः 'निवेशनः संगमनो०' इति मन्त्रः तस्यैव शेषीभवन् इन्द्रशब्दविषये गौणीं वृत्तिमाश्रयति" इति ऐन्द्रीन्यायस्य स्वरूपम् । के. * विधेः अत्यन्ताप्राप्तार्थप्रापणे स्वतन्त्रप्रथमप्रवृत्तिकस्य अनन्यप्रमाणकेऽर्थे गौणत्वं न युक्तं आश्रयितुम् । इति ऐन्द्रीन्यायस्य स्वरूपम् । कु. ३।२।२।४.



* ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन ज्योतिरादिनाम्ना आग्नेयी–सुब्रह्मण्याप्रवर्तकम् अग्निष्टुन्नाम बाध्यते पञ्चदशरात्रे । बाल. पृ. १३२.

* ऐन्द्रयधिकरणे (३।२।२।३) तद्धितश्रुत्यालोचनया पूर्वपक्षः, श्रुतिलिङ्गविरोधाधिकरणे तु मन्त्रस्वरससामर्थ्यालोचनेन पूर्वपक्षः इत्यपौनरुक्त्यम् । सु. पृ. १०८६. * ऐन्द्रयधिकरणे श्रुतिबलेन मन्त्रस्य (निवेशनः संगमनः इत्यस्य) यथार्थत्वाभिधानात् । पृ. १२०८, * तत्र (ऐन्द्रयधिकरणे) गौणसामर्थ्यस्य श्रुतिसहायत्वमात्रनिरूपणात् । कौ. ३।३।७।१४ पृ. ३५०.

* मन्त्रस्य विधिविहितार्थप्रकाशकतया तत्परतन्त्रस्य तदुत्तरकालप्रवृत्तिकस्य विधिविरोधिनं मुख्यार्थमतिक्रम्य गौणार्थत्वं युक्तमाश्रयितुम् इति ऐन्द्रयधिकरणन्यायस्वरूपम् । कु. ३।२।२।४. * वस्तुतस्तु यथैव नायं केवलश्रुतिविरोधः, एवं न केवलवाक्यविरोधोऽपि, गार्हपत्यपदसमभिव्याहारस्य ऐन्द्र्यधिकरणपूर्वपक्षन्यायेन समीपस्थितिविशेषणत्वादिनाऽपि उपपत्तेः । कौ. ३।३।७।१४ पृ. ३५३, * श्रुतेरपि असमर्थविनियोगायोगेन अस्त्येव स्वावगताङ्गतापर्यवसानार्थे गौणसामर्थ्यापेक्षा (लिङ्गापेक्षा) । अतश्च ऐन्द्रयधिकरणपूर्वपक्षन्यायेन कथञ्चित् श्रुतिरेव (अन्यथा) व्याख्येया इति पूर्वपक्षः । ३।३।७।१४ पृ. ३५१, * तद्धितश्रुतिदौर्बल्यस्य बलाबलाधिकरणसिद्धत्वेन ऐन्द्र्यधिकरणविषयत्वाभावात् गौणसामर्थ्यस्य विनियोजकश्रुत्यसहायतामात्रत्वेन एतदधिकरणविषयः । अत एव न तेन पौनरुक्त्यमपि । ३।२।२।३ पृ. २२९. * ऐन्द्र्यधिकरणापवादतया श्रुतिविनियुक्तस्य सूक्तवाकस्य पुरुषार्थविनियोगस्य पूर्वाधिकरणोक्तस्य आक्षेपसमाधानार्थम् (३।२।६) अधिकरणम् । भा. टिप्पणी. ३।२।६।१६.

* 'एरं कृत्वोद्गेयम्, न गिरागिरा इति ब्रूयात्, यद् गिरागिरेति ब्रूयात् आत्मानमेव तत् उद्गाता गिरेत् ।' योनिगाने 'गायीरागीरा' इति गायन्ति, तत्र 'आयीरायीरा' इति गातव्यम्, ब्राह्मणेन बाधपूर्वकमुक्तत्वात् । यज्ञायज्ञीयं साम 'यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे' (सामसं. ७०३) इत्यस्यामृचि । वि. ९।१।१८–१९.

* ऐरवत्, गिरापदस्य स्थाने 'इरा' इति यथा पदविकारः, तथा आश्वमेधिकसवनीयाश्वस्य विषये ऋचः 'चतुस्त्रिंशत्–पदस्थाने षड्विंशतिः' इति पदविकारः स्यात् इति पूर्वः पक्षः । के. ९।४।२।२०. * ऐरवत्, यथा इरापदस्य उपदेशात् कर्मकाले गिरापदस्य निवृत्तिः, तद्वत् मन्त्रेषु प्रावचनस्य स्वरस्य निवृत्तिः । भा. १२।३।८।२०.

* ऐष्टिकः विध्यन्तः प्रयाजादिः । वि. ८।१।३. * ऐष्टिकेषु सौमिकेषु अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम् । प्रधानदेवतावत् अङ्गदेवतानामपि गृहीतत्वात् । भा. १२।१।१२।२४–२८. * ऐष्टिकेषु सौमिकेषु अन्वाहार्यदानाभावः । वि. १२।१।१६. * ऐष्टिकेषु सौमिकेषु दार्शिकः ऐडादिः शेषभक्षः चोदकप्राप्तः कर्तव्यः एव, संस्कारार्थत्वात् । भा. १२।१।१५।३१, * ऐष्टिकेषु सौमिकेषु दार्शिकम् आरण्यभोजनं चोदकप्राप्तं सौमिकेन पयोव्रतादिना प्रसङ्गसिद्धत्वात् न कर्तव्यम् । १२।१।१४।३०, * ऐष्टिकेषु सौमिकेषु दार्शिकं ब्रह्मवरणं सौमिकेन प्रसङ्गसिद्धम् । १२।१।१८।३७–४०, * ऐष्टिकेषु सौमिकेषु धारणार्थम् अग्न्यन्वाधानं सौमिकेन प्रसङ्गात् सिध्यति । १२।१।१२।२४–२८, * ऐष्टिकेषु सौमिकेषु पत्नीसंनहनाननुष्ठानम् । १२।१।१३।२९, * ऐष्टिकेषु सौमिकेषु शेषभक्षाः न परिक्रयार्थाः । संस्कारार्थे ते कर्तव्याः । १२।१।१७।३४–३५, * ऐष्टिकेषु सौमिकेषु होतुः वरणं कर्तव्यम् । १२।१।१८।३६–३७, ४०–४२.

* ऐष्टिकधर्माणां सोमे न अतिदेशः । भा. ८।१।३।३–१०.

* ऐष्टिकधर्मातिदेशः ऐन्द्राग्नादौ । वि. ८।१।४.

* ऐष्टिकी वेदिः सौमिक्याः महावेद्याः पृथक् न कार्या । वि. १२।१।३.

* ऐहिकफलकं काम्यं वैदिकं कर्म यथा 'कारीर्या वृष्टिकामो यजेत' 'श्येनेनाभिचरन् यजेत' जातेष्टिश्चेति । बाल. पृ. ८५.

**ऐहिकामुष्मिकत्वम्** । चित्रादिकाम्यकर्मणां फलम् असति प्रतिबन्धे ऐहिकम् ॥

**तत्र सर्वेऽविशेषात्** । ४।३।११।२७ वर्णकं २ ॥

**भाष्यम्**— एवं वा । काम्यानि कर्माण्युदाहरणम् । 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' 'चित्रया यजेत पशुकामः' 'वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः' इति । तेषु संदेहः किमिह लोके कामाः, उतामुष्मिँल्लोके इति । किं प्राप्तम् ? तत्रामुष्मिन् लोके कामाः, अविशेषात् । यथा स्वर्गः, एवमिमेऽपि । नहि अनन्तरं निर्वृत्ते कर्मणि फलमुपलभ्यते पश्वादि । यच्चानन्तरमुपलभ्यते, तत्तत इति विज्ञायते । यथा यत्कालं मर्दनम्, तत्कालं मर्दनसुखम् । यच्च कालान्तरे उपलभ्यते, तस्याप्यन्यदेव कारणमस्ति प्रत्यक्षम् । शरीरग्रहणस्य तु नादृष्टादृते किञ्चित्कारणमस्ति । तस्माद्विशिष्टेन्द्रियशरीरादि फलं पशुसंबन्धसमर्थं पशुफलात् कर्मणो भवतीत्येवं बोद्धव्यम् । तद्धि दर्शयति 'कैकयो यज्ञं विविस्सन् दाल्म्युवाच । अनया मा राष्ट्रप्रतिपादनीययेष्टया याजयेति । सोऽब्रवीत् । न वै सौम्य राष्ट्रप्रतिपादनं वेत्थ, अमुष्मै कामाय यज्ञा आह्रियन्ते' इति जन्मान्तरफलतां दर्शयति । तस्मात् जन्मान्तरफलानि काम्यानीति ।

**योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्** । २८ ॥

**भाष्यम्**— इहैवैषां सिद्धिर्योगस्य । उत्पत्त्या योगो न संभवति । यः पशून् कामयते स एतेन यागेन कुर्यादिति नात्रैतद्गम्यते, इह जन्मनि न संभवतीति । यच्चानन्तरं नोपलभ्यते इति, तत्र । प्रत्यक्षानुमानाभ्यां न गम्यते । शब्देन त्वस्त्यवगतिः । यत्तु कालान्तरे अन्यत् कारणमिति, नैष दोषः, अन्यदपि भविष्यति, एतदपि । यच्च 'अमुष्मै कामाय यज्ञा आह्रियन्ते' इति, अत्रोच्यते । एवमस्य ऋषेर्मतम् । इह यस्य फलं तेन त्वां न याजयामि, यस्यामुत्र फलम्, तेन च याजयिष्यामीति । तस्मादेतत् परिहृतमिति ।

**टु**.— ( सिद्धान्तमाह— ) वृष्टिग्रामपुत्रादीनां ( सिद्धिः ) इह वा अमुत्र वा इति अनियमः । कुतः ? पुत्रादीनि कामयमानस्य उपायो विधीयते । उपाये ( च कृते ) नियतम् उपेयेन भवितव्यम् । तत्र कदा चित् पूर्वजन्मनि अशुभं कृतम्, तच्चानुभाव्यम् । तस्मात् पूर्वजन्मकृतमनुभूयते । तत्र यदि जन्मान्तरकृतः अधर्मः प्रक्षीणः, ततः इहैव जन्मनि ( प्रतिबन्धकस्य अभावात् ) फलं ( भवेत् ) । अथ अक्षीणः, ततः तेन प्रतिबद्धसाधनकम् उत्कृष्यते । 'फलं भविष्यति' इत्येतावति विधिशब्दोऽस्ति, न तु अनन्तरत्वे ( किं चित् प्रमाणमस्ति, ) तस्मात् अनियमः । स्वर्गस्तु जन्मान्तरे एव । स हि निरतिशया प्रीतिः कर्मानुरूपा च, इति न शक्या इह जन्मनि अनुभवितुम् । यतः अस्मिन् लोके क्षणेक्षणे सुखदुःखे अनुभवति ( जनः ) । न च प्रीतिमात्रं ज्योतिष्टोमफलम् ( इत्युक्तम् । किञ्च ) प्राणिमात्रस्य अल्पीयसी ( प्रीतिः कण्डूयनादिजन्मा ) भवति । न च प्राणिमात्रं ज्योतिष्टोमं करोति । तस्मात् स्वाभाविकी असौ ( सर्वप्राणिसाधारणत्वात् ) । देशान्तरं तु ( कर्मदेशव्यतिरिक्तम् ) निरतिशयप्रीत्यनुभवान्यथाऽनुपपत्त्या कल्प्यते । तच्च अमृतस्य ( पुरुषस्य ) न संभवति, इत्यतः जन्मान्तरे एव स्वर्गः ।

**शा**— '**प्रतिग्रहादिकं दृष्टं पश्वादेः कारणान्तरम्** । ( चित्रादियागात् कारणान्तरम् ) । **देहारम्भकतैवातश्चित्रादेः फलहेतुता** ॥' इति आमुष्मिकाण्येव पश्वादीनि । इति प्राप्ते, अभिधीयते । '**साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते । अमुत्र चेह वेत्येवं नास्ति शब्दो नियामकः ॥ देहारम्भमुखत्वं च फलानामप्रमाणकम् । विपाकः कर्मणां येषां प्राग्देहविनिपाततः ॥ प्राप्तस्तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे । दैवं पुरुषकारश्च पश्वादेः कारणद्वयम्** ॥' तस्मादनियमः । १२.

**सोम**— अत्र भाष्ये 'तत्र सर्वेऽविशेषात्' 'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्' इति सूत्रद्वयं यौगपद्यायौगपद्यपरतया व्याख्याय 'एवं वा' इत्यादिना ऐहिकामुष्मिकत्वपरतयाऽपि व्याख्यातम् । तत्र वर्णकान्तरोपक्रमे यथाभाष्यं 'एवं वा' इत्येवमेव ग्रन्थकारेण



( शास्त्रदीपिकाकारेण ) सर्वत्र लिख्यते । इह तु वैचित्र्यात् 'योगसिद्धिर्वा' इति सिद्धान्तसूत्रं लिखितं बोध्यम् ।

दर्शादेः पर्यायेण सर्वफलार्थत्वे उक्ते प्रसङ्गात् इदानीं तेषां फलानाम् ऐहिकामुष्मिकत्वं चिन्त्यते । **सूत्रार्थस्तु**— इहापि एषां फलयोगस्य सिद्धिः स्यात्, न तु अमुत्रैव, अर्थस्य फलस्य जन्मान्तरोत्पत्तियोगित्वानवगमात् इति ।

**वि**— 'चित्रया पशवोऽमुष्मिन्नेव स्युर्नियता न वा ।, आद्यः स्वर्गेण तुल्यत्वाद् देहस्योत्पादकत्वतः ॥, चित्रोत्पत्तौ तु नियमो न श्रुतो नापि कल्पनम् । पुंस्त्ववृत्त्यादिनाऽपेते प्रतिबन्धे भवेत् फलम् ॥' चित्रया देहस्य उत्पत्तौ नियमो न श्रुतः । १२.

**भाट्ट**— एवं वा । स्वर्गस्तावत् आमुष्मिक एव, 'यन्न दुखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥' इति वाक्यशेषादवगतस्य निरतिशयप्रीतिरूपस्य तस्येह जन्मन्यसंभवात्, मन्त्रार्थवादादौ देशविशेषभोग्यत्वप्रसिद्धेश्च । पशुपुत्रादीनां त्वैहिकामुष्मिकत्वम्, न तु केवलामुष्मिकत्वम् । तत्रापि भोगप्रतिबन्धकदुरितसत्त्वे आमुष्मिकत्वम् । तदभावे त्वैहिकत्वमेव । न च कर्मणां शरीरारम्भद्वारैव फलसाधनतेत्यत्र किञ्चिन्नियामकमस्ति, येन केवलामुष्मिकत्वं भवेत् । न चैषां केवलैहिकत्वम्, इह जन्मनि पुत्रपशुराज्यादिसत्त्वे तदयोग्यत्वेऽपि वा 'जन्मान्तरे तन्मे स्यात्' इति कामनाया दुरपह्नवत्वात् । अतो मुमूर्षूणामपि पश्वाद्यर्थं चित्राद्यनुष्ठेयमेव । यत्र तु वृष्ट्यादौ ऐहिके एव कामना, तत्र केवलैहिकत्वम् । अस्तु वा वृष्ट्यादेरपि तादृशकामनासत्त्वे उभयरूपत्वम् । केवलैहिकत्वं तु पुत्रगतपूतत्वादौ आहवनीयादौ च द्रष्टव्यम् । ९ वर्णकं २.

**मण्डन**— 'अत्र वाऽमुत्र वा फलम् ।' १२.

**शंकर**— 'पश्वाद्यामुष्मिकमपि ।' १२.

## ओ.

* **ओजस्कामं** त्रिणवेन अतिरात्रेण याजयेत् । भा. १०।४।१०।२०.

**ओतप्रोतन्यायः**— अयम् 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इति ( भगी. ७।७ ) श्लोकटीकायां विस्तृतः इति । **साहस्री**. ९१५.

* **ओदनस्तु** विनैव पेषणेन भवति । कामं पेषणेन व्याहन्यते, पिष्टकम् ( पिठलें ) यवागूर्वा स्यात् खलतिर्वा ( खळ ) । भा. १०।१।१२।५०, * ओदनः पञ्चशरावः प्रायश्चित्तं दर्शे दोह्ययोरेकस्य नाशेऽपि । ६।४।६।२२-२३.

* **ओदनो** वा प्रयुक्तत्वात् ( १०।१।१०।४४ ) इत्यत्र चरुशब्दस्य ओदनवाचकतायाः व्यवस्थापयिष्यमाणत्वात् (पूर्वपक्षे) । ओदनशब्दस्य तण्डुलप्रकृतिकावस्त्रावितानवस्त्रावितोभयविधविशदपक्वान्नवाचकत्वात्, चरुशब्दस्य तण्डुलप्रकृतिकानवस्त्रावितान्तरूष्मपक्वविशेषवाचकत्वात् । दाशमिकसूत्रं तु चरुशब्दस्य स्थालीपरत्वव्यावृत्तिपरम् । कु. ३।३।१९।३२. * '**ओदनं** पचति' इत्यत्र अभिधीयमानकर्मशक्त्या आक्षिप्तप्रयोज्यव्यापारो वा, स्वयमेव आक्षिप्तप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते । ( वार्तिकनिष्कृष्टार्थोऽयम् ) । वा. २।१।१।१ पृ. ३७७-३७८. * **ओदनेन** चरुशब्दवाच्येन सौर्ययागे प्राकृतहविर्बाधः । भा. १०।१।१०।३६-४६.

* **ओदनकामः** पचेत्, काष्ठान्याहरेत् इत्यादिषु सापेक्षेऽपि शब्दे भेदविनियोगप्रयोगक्रमप्रतीतिदर्शनात् । रत्न. ६।१।१।३. * **ओदनपाकः** यदूष्मणा उदकगतेन निर्वर्त्यते, स ओदनपाकः कपालगतेनोष्मणा न निर्वर्त्यते । भा. १०।१।११।५०. * **ओदनवत्** यथा 'यस्योभयं हविरार्तिमार्च्छति' इत्यत्र पञ्चशराव ओदनः अन्यतरस्यार्तौ अपि भवति । (६।४।६।२२-२३) एवम् अग्निहोत्रे अन्यतराग्न्यनुगमनेऽपि प्रायश्चित्तं पुनराधेयं कर्तव्यम् इति पूर्वः पक्षः । के.

* **ओदनोपघात**निवारणविधिपरे वाक्ये श्रुतानामपि श्वमार्जारादीनाम् अविधीयमानत्वात् अविशेषणत्वम् । कुतः ? 'न ह्यन्नभक्षणाद् रक्ष्याः श्वमार्जारादयोऽत्र नः । तुल्यान्नाद्योपघातात् तु काकादेरपि वारणा ॥' तथा च आह— 'काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि चोदितः । उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' वा. ३।१।७।१४ पृ. ७१३.

* **ओषधिना** वा असाधारणेन लिङ्गेन एकदेवतात्वेन वा 'सौर्यं चरुं निर्वपेत्' इत्यत्र आग्नेयविध्यन्तो नियम्यते । भा. ८।१।२।२.

## औ.

* औक्थिक्यं गानशास्त्रमिति वृत्तिकारः ( वृत्तिकारोऽत्र उपवर्षः स्यात् ) । भा. ७।२।१।६.
* औक्थिक्ये हि सर्वाणि सामपर्वाणि यथाक्रमं लक्षणेन अनुगतानि । वा. १।३।८।२४ पृ. २६२.

* औचित्यमपि वाक्यार्थावधारणोपायं संगिरन्ते शाब्दाः ( वैयाकरणाः )। कणिका. पृ. ४२२.

* औत्तरवेदिकाग्निप्रणयनोत्तरम् आग्नीध्रीयप्रणयनं सोमे । संकर्ष. ३।२।१४.

* औत्पत्तिकः इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । भा. १।१।५।५ पृ. २३, * औत्पत्तिको हि नामिनाम्नोः संबन्धः । यः शब्दो यस्मिन् अर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धः, न स ततोऽन्यं प्रत्याययितुं शक्नोति । नहि गोशब्देन अश्वोऽभिधातुं शक्यते । ७।२।१।५, * औत्पत्तिको हि नामिनाम्नोः संबन्धः । यन्नाम यस्मिन्नर्थे औत्पत्तिकेन संबन्धेन प्रसिद्धम्, तस्मिन्नेव सदा विज्ञेयं नान्यत्र च । तथाऽवस्थायां शब्दार्थे विश्वासो न स्यात् । उक्तम् 'अन्यायश्चानेकार्थत्वम्' इति । ७।३।१।३.

### 🙏 औत्पत्तिकसूत्रम् ॥

**औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् । १।१।५।५ ॥**

**भाष्यम्—** अभावोऽपि नास्ति ( धर्मे प्रमाणम् ) यतः– औत्पत्तिकस्तु० । औत्पत्तिक इति नित्यं ब्रूमः । उत्पत्तिर्हि भाव उच्यते लक्षणया । अवियुक्तः शब्दार्थयोर्भावः संबन्धः, नोत्पन्नयोः पश्चात् संबन्धः । औत्पत्तिकः शब्दस्यार्थेन संबन्धः । तस्य अग्निहोत्रादिलक्षणस्य धर्मस्य निमित्तं प्रत्यक्षादिभिरनवगतस्य । कथम् ? उपदेशो हि भवति । उपदेश इति विशिष्टस्य शब्दस्योच्चारणम् । अव्यतिरेकश्च ज्ञानस्य । नहि तदुत्पन्नं ज्ञानं विपर्येति । यच्च नाम ज्ञानं न विपर्येति, न तत् शक्यते वक्तुं नैतदेवमिति, यथा भवति यथा विज्ञायते, न तथा भवति, यथैतत् न विज्ञायते तथैतदिति । अन्यदस्य हृदये, अन्यत् वाचि स्यात् । एवं वदतो विरुद्धमिदं गम्यते अस्ति नास्ति वेति । तस्मात् तत् प्रमाणम् । अनपेक्षत्वात् । नहि एवं सति प्रत्ययान्तरमपेक्षितव्यं पुरुषान्तरं वाऽपि । अयंप्रत्ययो ह्यसौ । बादरायणग्रहणं बादरायणस्येदं मतं कीर्त्यते बादरायणं पूजयितुम्, नात्मीयं मतं पर्युदसितुम् ।

**भाष्यम्—** ( वृत्तिकार–उपवर्षमतेन ) 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानम्'। ( पृ. ४१ ) तुशब्दः पक्षं व्यावर्तयति । अपौरुषेयः शब्दस्य अर्थेन संबन्धः । तस्य अग्निहोत्रादिलक्षणस्य अर्थस्य ज्ञानं प्रत्यक्षादिभिः अनवगम्यमानस्य । तथा च चोदनालक्षणः सम्यक् संप्रत्यय इति ।

अव्यतिरेकश्च । यथा अस्मिन् देशे सास्नादिमति गोशब्दः एवं सर्वेषु दुर्गमेष्वपि । अतो नास्ति ( शब्दार्थयोः ) संबन्धस्य कर्ता । अपर आह– अव्यतिरेकश्च । नहि संबन्धव्यतिरिक्तः कश्चित् कालोऽस्ति, यस्मिन् न कश्चिदपि शब्दः केन चिदर्थेन संबद्ध आसीत् । पृ. ५६–५७.

अर्थेऽनुपलब्धे । अनुपलब्धे च देवदत्तादौ अर्थे अनर्थकं संज्ञाकरणम् अशक्यं च । तस्मादपौरुषेयः शब्दस्यार्थेन संबन्धः । पृ. ५८.

तत्प्रमाणमनपेक्षत्वात् । अतश्च तत्प्रमाणम् । न चैवं सति पुरुषान्तरं प्रत्ययान्तरं च अपेक्ष्यते । बादरायणग्रहणमुक्तम् । पृ. ५८.

**श्लोवा—** ( अवतरणभाष्यमाक्षिपति– ) 'प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः । धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् । १ ॥ धार्मिकाधार्मिकत्वाभ्यां पीडाऽनुग्रहकारिणौ । प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि । २ ॥ इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये । आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् । ३ ॥' ( इदं प्रपातडागादिकं पुण्यम्, इदम् अगारदहनादिकम् अपुण्यम् इत्येवं उपकारापकारविषये धर्माधर्मपदद्वये यावच्चण्डालं प्रसिद्धे सति । आक्षेपं परिहरति– ) 'निर्मूलासंभवादत्र प्रमाणैः सैव ( प्रवृत्तिः ) मृग्यते । कुतः पुनः प्रवृत्तेति' प्रत्यक्षादि तु वारितम् । ४ ॥ न चैतानि परित्यज्य पृथग् लोके प्रमाणता । संसारमोचकादेश्च हिंसा पुण्यत्वसंमता । ५ ॥ न पश्चात् पुण्यमिच्छन्ति के चिदेवं विगानतः । म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते । ६ ॥ न चार्याणां विशेषोऽस्ति यावच्छास्त्रमनाश्रितम् । तन्मूलाऽर्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् । ७ ॥ तस्मादभाववक्तृस्थौ धर्माधर्मा न शक्नुयात् । चोदना चेत् समद्धर्तुं ग्रस्तौ तेनैव पश्यताम् । ८ ॥ ( पश्यताम् इत्यनादरे षष्ठी ) । उपदेशो हि भवति ज्ञानं तस्येति योज्यते । ज्ञायते येन तज्ज्ञानमेकाधिकरणत्वतः । ९ ॥ औत्पत्तिकगिरा, दोषः कारणस्य निवार्यते । अबाधोऽव्यतिरेकेण, स्वतस्तेन (स्वेन) प्रमाणता ॥ १० ॥ सर्वस्यानुपलब्धेऽर्थे प्रामाण्यम्, स्मृतिरन्यथा । चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ११ ॥ ( शङ्कते– ) वाक्यान्तरे समर्थेऽपि किमर्थं विधिराश्रितः । साध्यसाधनसंबन्धः सर्वाख्यातेषु विद्यते ॥ १२ ॥ सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्तनात् । प्रवृत्तिसिद्धिरिच्छातः प्रतिषेधात्तु वर्जनम् । १३ ॥ ( उत्तरम्– ) विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते । श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् । १४ ॥ विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते । तत्साधनस्य धर्मत्वमेवं सति च लभ्यते । १५ ॥ स्वप्रत्ययान्तरापेक्षा स्यादनाप्तनरोक्तिषु । आप्तोक्तिषु नरापेक्षा, नोभयं चोदनासु नः । १६ ॥

**बृहती—** ननु च शाब्दं प्रमाणमात्रं प्रमाणान्तरसापेक्षमेव लौकिकवाक्यव्यवहारे उपलभ्यते । सत्यं प्रमाणान्तरविषयमेवोपलभ्यते, न तु प्रमाणान्तरसापेक्षम् । स्वार्थे हि औत्पत्तिकी शब्दशक्तिः । तदुक्तम् 'औत्पत्तिकस्तु०' ( इति सूत्रम् ) ।

**शा—** उक्तं प्रत्यक्षादीनामनिमित्तत्वम् । तत एव तन्मूलपुरुषवचनस्यापि अनिमित्तत्वम् । एवं तर्हि शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात् तदभावे तस्याप्यप्रामाण्यात् अभावावगम्यत्वमेव आयातं धर्मस्य । इत्याशङ्कानिराकरणाय चोदनायाः प्रामाण्यमुच्यते । सत्यं लोके प्रमाणान्तरमूलानां प्रामाण्यम्, अतन्मूलानां च अप्रामाण्यं लक्ष्यते, न तु एवमपि सापेक्षं प्रामाण्यम्, किन्तु स्वत एव । अनाप्तवाक्यस्य तु अप्रामाण्यं न मूलविरहात्, किन्तु दुष्टमूलतया शब्दस्य दुष्टत्वात् स्वाभाविकस्य प्रामाण्यस्य अपवादात् । अपौरुषेये तु वेदे यद्यपि आप्तप्रणीतत्वं नास्ति, तथापि प्रामाण्यस्य तदपेक्षाऽभावात् अनाप्तस्पर्शनिमित्तदोषाभावाच्च अनपोदितं प्रामाण्यं भवति । त्रेधा ह्यत्र पुरुषानुप्रवेशः, पदपदार्थसंबन्धद्वारेण वाक्यवाक्यार्थसंबन्धद्वारेण ग्रन्थस्यैव वा भारतादिवत् पौरुषेयत्वात् । न तु एतत् त्रयमप्यस्ति । पदपदार्थसंबन्धस्य नित्यत्वम् अत्र औत्पत्तिकशब्देनोक्तम् । वाक्यार्थस्य च पदार्थमूलत्वम् । वेदस्य च अपौरुषेयत्वम् उपरिष्टात् वक्ष्यते । न च साक्षात् बाधकमस्ति इति अव्यतिरेकशब्देनोच्यते । अनुपलब्धार्थत्वाच्च नानुवादलक्षणम् अप्रामाण्यमस्ति इति 'अर्थेऽनुपलब्धे' इत्यनेनोक्तम् । एतच्च विशेषणत्रयं उपाददानेन सूत्रकारेण कारणदोष–बाधकज्ञानरहितम् अगृहीतग्राहि ज्ञानम् इति प्रमाणलक्षणं सूचितम् । तर्कपादे पृ. ४३–४५.

**सोम—** पदार्थसंबन्धः औत्पत्तिको नित्यः, न तु संकेतयितृपुरुषाधीनः । तस्य च वैदिकपदेष्वपि गोत्वादिसामान्यमुखेन सुग्रहत्वात्; अग्निहोत्रादिचोदनाभ्यो जायमानस्य ज्ञानस्य स्वतःप्रमाणभावस्य प्रामाण्यापवादकपुरुषदोषासंस्पर्शादुपपन्नं प्रामाण्यम् इति औत्पत्तिकसूत्रे प्रतिपादितम् । १।२।१.

**वि—** 'अबोधको बोधको वा, न तावद् बोधको विधिः । शक्तेरलौकिके धर्मे ग्रहणं दुर्घटं यतः ॥, समभिव्याहृते धर्मे शक्तिग्रहणसंभवात् । बोधकस्य विधेर्मात्वमनपेक्षतया स्थितम् ॥' यथा– 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यत्र मधुकरपदस्य अर्थमजानन् अन्यपदार्थमवगत्य तत्समभिव्याहारात् कमलमध्यगते मधुपानं कुर्वति दृश्यमानभ्रमरे मधुकरशब्दस्य संगतिं गृहीत्वा वाक्यार्थं प्रतिपद्यते । तथा 'कारीर्या वृष्टिकामो यजेत' इत्यत्र लोकप्रसिद्धार्थवृष्ट्यादिपदसमभिव्याहारात् अलौकिकभावनायां विधेः संगतिं गृहीत्वा विधिवाक्यार्थं पुरुषो बुध्यते । तस्मात् अबोधकत्वलक्षणम् अप्रामाण्यं नास्ति । न च संवादाभावात् अप्रामाण्यम्, समनन्तरभाविप्रतिनियतफले वृष्ट्यादौ संवादस्यापि संभवात् । अनियतदृष्टफले चित्रायागादौ, प्रतिनियतजन्मान्तरफले ज्योतिष्टोमादौ च संवादः कथमिति चेत्,

एवं तर्हि स्वतःप्रामाण्याभ्युपगमात् नास्ति क्वापि संवादाद्यपेक्षा । तस्मात् अबोधकत्वसापेक्षत्वयोः अप्रामाण्यकारणयोः अभावात् विधेः स्वतःसिद्धं प्रामाण्यं नापह्नोतुं शक्यम् ।

**भाट्ट**— देहान्तरैकभोग्यफलकानाम् अग्निहोत्रादीनां करणत्वोपपादकस्य अपूर्वस्य कल्पनेऽपि पश्वादिदृष्टैकफलकानां चित्रादीनां घटजनकदण्डादीनामिव व्यापारत्वेन अपूर्वकल्पनाऽभावात् यत्र चित्रेष्ट्यव्यवहितोत्तरक्षणे पश्वलाभः, तत्र प्रबलप्रत्यक्षविसंवादेन चित्रेष्टिनिष्ठकारणतायाः व्यभिचारित्वेन तद्विधेरप्रामाण्यम् । न च औषधपानादेरिव कालान्तरभाविफलजनकत्वात् न दोष इति वाच्यम् । फले कालान्तरसंबन्धस्य चित्राविधिप्रामाण्यसिद्ध्युत्तरकालिकत्वेन अन्योन्याश्रयात् । एवम् 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इत्यनेन सशरीरस्वर्गप्राप्तिकथनमपि प्रत्यक्षविरोधादप्रमाणम् । ततश्च 'तत्सामान्यादितरेषु तथात्वम्' ( १।२।२।२३ ) इति न्यायेन सर्वासां चोदनानामप्रामाण्यम् । इति प्राप्ते, यज्ञायुधशब्दस्य यज्ञात्मकसाधनपरतया शरीरपरत्वाभावेन यज्ञरूपसाधनसद्भावात् स्वर्गं प्राप्नोति इत्यर्थकेन वाक्येन अपूर्वसहितात्मनः परलोकप्राप्त्यनुवादात् नाप्रामाण्यम् । चित्रेष्ट्यादेस्तु उत्तराङ्गसाचिव्योपपत्तये अपूर्वकल्पनाऽवश्यम्भावात् अव्यवहितकालकालान्तरयोः अन्यतरस्यापि न कार्यताऽवच्छेदककोटिप्रवेशः इति न दोषः। न चान्योन्याश्रयः, अप्रामाण्यकारणाभावादेव स्वतःप्रमाणत्वात् । न च पदपदार्थसंबन्धस्य पुरुषाधीनत्वेन तज्ज्ञानसापेक्षस्य वेदवाक्यार्थज्ञानस्य प्रमात्वनियमो न संभवति इति वाच्यम् । संबन्धस्यापि अनादित्वेन पौरुषेयत्वाभावात् । तस्य च स्वरूपतो न वाक्यार्थज्ञानकारणता अपितु ज्ञानस्यैव, इति तदवगमाय व्याकरणादेरिव क्व चित् आप्तपुरुषस्यापि उपयोगः, इति न तावन्मात्रेण सर्वत्र अनाश्वासो युक्तः । तस्मात् चोदना प्रमाणमेव ।

एतत्साधनायैव हि मूले निरालम्बनवाद–माहायानिकवादयोर्निरासौ , अनुमान– शब्द– उपमान– अर्थापत्ति– अभावप्रमाणानां सपरिकरं निरूपणम् , स्वरूपनिरूपणाय स्फोटनिरासः, नित्याकृतिसाधनम्, अपोहनिरासः, वनवाद–आत्मवादौ च इत्यादिकं निरूपितम् ।

**मण्डन**—'निराकृतेषु सर्वेषु (प्रमाणेषु) धर्मो नास्तीति शङ्क्यते । प्रमाणं चोदनां तत्र ब्रवीत्यौत्पत्तिकादिना । ४ ॥ बह्वर्थं वक्तुकामेन तमर्थं सौत्रमिच्छता । वृत्तिकारमतेनैव त्रिसूत्री वर्ण्यतेऽन्यथा । ५ ॥ सत्यमिथ्याविभागो यो वृत्तिकारनिरूपितः । बौद्धस्तं सहते नेति नन्वित्येतेन कथ्यते । ६ ॥ प्रत्यक्षादिविरोधेन दूषिते परसाधने । तदशक्तिं परो मत्वा पुनः प्रत्यवतिष्ठते । ७ ॥ प्रत्यक्षाव्यभिचारित्वे प्रबन्धेन ( निरालम्बनशून्यवादनिराकरणात्मकेन ) प्रसाधिते । इदानीमनुमानस्याव्यभिचारोऽभिधीयते । ८ ॥ अतः शब्देऽपि विज्ञाते वक्तृदोषविवर्जिते । सत्यार्थबुद्धेरस्यापि ब्रवीत्यव्यभिचारिताम् । ९ ॥ असंनिकृष्टसादृश्यज्ञानं सदृशदर्शनात् । उपमानं यदेतच्चाव्यभिचारीति कथ्यते । १० ॥ प्रमाणेन प्रमाणस्य विरोधेऽन्यार्थकल्पनाम् । अर्थापत्तिमपि स्वार्थे वदन्त्यव्यभिचारिणीम् । ११ ॥ प्रमाणपञ्चकाभावोऽप्यभावोऽन्यप्रतीतिकृत् । सोऽपि न व्यभिचारीति , चोदनाऽपि तथोच्यते । १२ ॥ प्रमाणानां प्रमाणत्वे हेतुरव्यभिचारिता । व्यभिचारवती तेन चोदना शिष्यते ( वर्ण्यते ) परैः । १३ ॥ व्यभिचारो भवेज्ज्ञाने हेतुदोषेऽप्युतान्यथा । तद्दोषसिद्धये तेन संबन्धः कार्य इष्यते ( परैः ) । १४ ॥ इदानीं नित्यसंबन्धसाधनायाश्रयद्वयम् । निर्णेतुं प्रथमः शब्दः स्फोटवादे निरूप्यते । १५ ॥ ततोऽभिधेयरूपं यत् संबन्धस्याश्रयान्तरम् । तन्निरूपयितुं नित्या जातिरस्तीति साध्यते । १६ ॥ ततो निरूपिते भित्तिद्वयेऽपि परमार्थतः । संबन्धनित्यतामाह कर्त्रभावेन हेतुना । १७ ॥ अथ चित्राऽऽदियागेषु सद्यः फलमपश्यता । व्यभिचाराद् य आक्षेपः सोऽधुना विनिवार्यते । १८ ॥ व्यभिचारविशेषोऽन्यो यज्ञायुधिवचोगतः । तमिदानीं निराकर्तुं विभुरात्मा प्रसाध्यते । १९ ॥'

**शंकर**— ' स्वतः प्रामाण्यवर्णनम् ( ६ ) । शब्दार्थान्वयनित्यत्वम् ( ७ ) उपवर्षमतं ततः ( ८ ) ॥ २ ॥ निरालम्बनवादोऽथ ( ९ ) शून्यवादस्य दूषणम् ( १० ) । अनुमानपरिच्छेदः ( ११ ) शब्दप्रामाण्यवर्णनम् ।



( १२ ) ॥ ३ ॥ प्रामाण्यमुपमानस्या ( १३ ) ऽप्यर्थापत्तेश्च वर्णनम् ( १४ ) । प्रामाण्योक्तिरभावस्य ( १५ ) स्फोटवादनिराक्रिया ( १६ ) ॥ ४ ॥ आकृतिस्थापनं चाथा– ( १७ ) पोहवादनिराक्रिया ( १८ ) । वनवादस्ततश्चाथ ( १९ ) संबन्धाक्षेपदूषणम् ( २० ) ॥ ५ ॥ चित्राऽऽक्षेपनिरासश्चा– ( २१ ) ध्यात्मवादस्ततः परम् ( २२ ) ।'

* औत्पत्तिकसूत्रम् । 'यो धर्मस्तत्र चोदना प्रमाणमेव' इति द्वितीयसाधनार्थम् औत्पत्तिकसूत्रम् । ' औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात् ' इति । अत्र [ १ ] 'यस्य च दुष्टं करणम्, यत्र च मिथ्येति प्रत्ययः, स एवासमीचीनः प्रत्ययः ' इति भाष्योक्तस्य ( १।१।५।५ पृ. २८ ) कारणदोषज्ञानस्य अप्रामाण्यहेतोः अभावः पञ्चपदेनाद्यावयवेन उक्तः, [ २ ] भाष्योक्तद्वितीयाप्रामाण्यहेतोः अभावः 'अव्यतिरेकश्च ' इत्यनेन । तदुक्तम् ' औत्पत्तिकगिरा दोषः कारणस्य निवार्यते । अबाधोऽव्यतिरेकेण ' इति ( श्लोवा. १० ) । [३] तत्र शब्दः औत्पत्तिको नित्यः, अर्थश्च जात्यात्मा , संबन्धश्च असंकेतरूपः सामर्थ्यात्मा इत्याद्यावयवार्थः । उपदेशो विधिः, तस्य धर्मस्य, ज्ञायते अनेन इति ज्ञानं ज्ञापकः, इत्यनेन अज्ञापकत्वरूपस्य अप्रामाण्यस्य अभाव उक्तः । तदुक्तम् ' अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः ' इति ( चोदनासूत्रे श्लोवा. ५४ ) । तथा ' विधावनाश्रिते साध्यः पुरुषार्थो न लभ्यते । श्रुतस्वर्गादिबाधेन धात्वर्थः साध्यतां व्रजेत् ॥ विधौ तु तमतिक्रम्य स्वर्गादेः साध्यतेष्यते । तत्साधनस्य धर्मत्वमेवं सति च लभ्यते ॥ ' इति ( वृत्तिकारग्रन्थे श्लोवा. १४–१५ ) । [४] अर्थे अनुपलब्धे इत्यनेन तु गृहीतग्राहकतया स्मृतेरिव अप्रामाण्यं निरस्तम् । [५] अनपेक्षत्वात् इत्यनेन च प्रामाण्यस्य स्वतस्त्वं कारणगुण–संवाद–अर्थक्रियाज्ञानानधीनत्वरूपमुक्तम् । प्रामाण्यं हि अर्थतथात्वरूपविषयधर्मः, यन्निमित्तौ ज्ञाने प्रामाण्यबुद्धिव्यपदेशौ भवतः । तच्च स्वतो गृह्यते, ज्ञानेनैव विषयीक्रियते घटादीव । अप्रामाण्यं तु अर्थान्यथात्वं बाधकज्ञानकारणदोषज्ञानविसंवादज्ञानैः गृह्यते , इति परतः । [ ६ ] तथा तेनैव सूत्रावयवेन लौकिकवाक्ये वक्तृज्ञानहेतुनिश्चयापेक्षत्वं प्रामाण्यप्रतिष्ठायाः । [७] वेदे तु वक्तुरभावेन तदनपेक्षत्वादेव न तदभावात् अयथाऽर्थता इत्युक्तम् । तदेतदुभयम् ' अनपेक्षत्वात् ' इतिसूत्रावयवोक्तत्वात् तद्व्याख्यानावसरे वाच्यमपि अनागतावेक्षणेन वक्ष्यमाणतयैव चोदनासूत्रे एव वार्तिककृता उक्तम् । [८] औत्पत्तिकसूत्रे एव च भाष्ये निरालम्बनवादनिरासेन बाह्यार्थसद्भाव उक्तः । ततश्च चोदनायाः, तदर्थस्य, तत्फलस्य स्वर्गादेश्च सत्त्वे धर्मप्रामाण्यं युक्तम्, नान्यथेति । [९] एवं माहायानिकसंमतशून्यवाददूषणमपि । इयांस्तु तन्मतयोर्भेदः, निरालम्बनवादे बाह्यो विषयोऽपि नास्ति, नीलाद्याकारा अपि न सन्ति संविद्गता इति । अत एव तन्निरासावसरे तन्मततात्पर्यमनूदितमाचार्यैः, ' स्वच्छस्य ज्ञानरूपस्य नहि भेदः स्वतोऽस्ति ते ' इति ( श्लोवा. १७९ ) । शून्यवादिमते तु संविद्गता नीलाद्याकाराः ( अपि न ) सन्ति । एवं सिद्धे बाह्येऽर्थे यत् माध्यमिकैरुक्तम् ' अर्थाभावादेव ज्ञानमपि नास्ति ' इति , तदपि हेतुनिरासादेव निरस्तम् । [१०] एवं स्फोटनिरासोऽपि अत्र सूत्रे चोदनायाः धर्मप्रामाण्यसिद्ध्यर्थमेव । ऊहादिमान् हि धर्मः चोदनाप्रमेयः । ऊहश्च पदादिधर्मः पदाद्यसत्त्वे कथं प्रमीयेत ? । एवं पदार्थमृषात्वेऽपि तदाश्रितम् ऊहतन्त्रप्रसङ्गादि । तदुक्तं स्फोटनिरासस्य नैष्फल्यशङ्कापूर्वकम् आचार्यैः ' वर्णातिरेकः प्रतिषिद्ध्यमानः पदेषु मन्दं फलमादधाति । कार्याणि वाक्यावयवाश्रयाणि सत्यानि कर्तुं कृत एष यत्नः ॥ ' इति ( श्लोवा १३७ ) । अनेनैव विधाऽन्तरेणापि धर्मप्रमितिसिद्धिः अस्य फलम् । श्रेयःसाधनधर्मप्रमितिर्हि स्वर्गादिश्रेयस्तत्साधनयागादिपदपदार्थयोर्मृषात्वे न स्यादिति । [ ११ ] अस्मिन्नेव च सूत्रे अनित्यव्यक्तिशब्दार्थत्वे वेदाप्रामाण्यापत्तेः, तत्प्रामाण्यप्रतिष्ठापयिषया नित्या आकृतिः पदार्थभूता स्थाप्यते आकृतिवादेन । आकृतिश्च मीमांसकानां जातिः । ' जातिमेवाकृतिं प्राहुर्व्यक्तिराश्रीयते यया ' इति वार्तिकात् ( श्लोवा. ३ ) । [१२] तस्याश्च सौगताभिमतावस्तुरूपतुच्छान्यापोहरूपत्वे,

पुनः वेदाप्रामाण्यापत्तेः भावरूपता उपपादिता अपोहवादेन। [१३] ततो वनवादे वनादिवत् परमाण्वादिपुञ्जात्मक एवावयवी नार्थान्तरम् इत्याशङ्का तस्याप्रत्यक्षत्वेन व्यवहारानुपयोगित्वात् संगतिग्रहाद्यसंभवेन तन्मूलकवेदाप्रामाण्यावहा इति तत्प्रामाण्यसिद्ध्यर्थमेव वनादिदृष्टान्तवैषम्योपपादनेन निरस्ता। [ १४ ] ततः पदपदार्थसंबन्धस्य ईश्वरकृतसंकेतात्मकत्वेऽपि वेदाप्रामाण्यापत्तेः, तत्प्रामाण्यायैव ईश्वरनिरासः संबन्धाक्षेपपरिहारेण। [ १५ ] ततः यः प्रत्यक्षसूत्रे 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इत्यवयवेन अनन्तरफलानुपलब्ध्या चित्राऽऽदिचोदनाऽऽक्षेपः कृतः, स परिहृतः। [१६] ततो यस्तेनैव प्रत्यक्षसूत्रावयवेन 'स एष यज्ञायुधी—आत्मा— अञ्जसा स्वर्गं लोकं याति' इत्यादिचोदनानां यज्ञायुधवतः शरीरस्य स्वर्गगमनासंभवरूपप्रत्यक्षविरोधात्, तत्सामान्याच्च अग्निहोत्रादिचोदनानां प्रामाण्याक्षेपः कृतः, तत्परिहारः आत्मसाधनेन आत्मवादे कृतः। तदेतदुभयमपि 'अव्यतिरेकश्च' इत्यवयवेनैवोक्तमिति। 'तदेवं षोडशाप्यर्थाः सूत्र औत्पत्तिकादिके। प्रामाण्यस्य प्रसिद्ध्यर्थं चोदनाया निरूपिताः॥' इत्यौत्पत्तिकं सूत्रं समाप्तम्। बाल. पृ. ५–७. एते षोडश पदार्थाः इत्थम् ( १ ) कारणदोषज्ञानस्य अप्रामाण्यहेतोरभावः। ( २ ) मिथ्याप्रत्ययस्य अप्रामाण्यहेतोरभावः। ( ३ ) अज्ञापकत्वरूपस्य अप्रामाण्यस्य अभावः। ( ४ ) गृहीतग्राहकत्वस्य अप्रामाण्यस्य अभावः। ( ५ ) प्रामाण्यस्य स्वतस्त्वम्। ( ६ ) वक्तृज्ञानहेतुनिश्चयापेक्षत्वस्य अभावः। ( ७ ) वक्तुरभावेन दोषशून्यत्वम्। ( ८ ) निरालम्बनवादनिरासः। ( ९ ) शून्यवादनिरासः। ( १० ) स्फोटनिरासः। ( ११ ) आकृतिवादः। ( १२ ) अपोहनिरासः। ( १३ ) वनवादः। ( १४ ) ईश्वरनिरासः ( सर्वज्ञनिरासः )। ( १५ ) चित्राऽऽक्षेपनिरासः। ( १६ ) आत्मवादः। इति। एतत् सर्वं श्लोकवार्तिके औत्पत्तिकसूत्रे निरूपितम्। के.

कु—औत्पत्तिकसूत्रम्। शब्दस्य अर्थेन संबन्धः प्रत्याय्यप्रत्यायकभावलक्षणः औत्पत्तिकः नित्यः। तस्य शब्दार्थसंबन्धस्य शक्तेः ज्ञानं शक्तिग्रहम् उपदेशः वेदवाक्यं जनयति प्रसिद्धपदसमभिव्याहारात् इति शेषः। उपदेश इत्यस्य प्रसिद्धपदसमभिव्याहारः इत्यप्यर्थः इत्यन्ये। अनुपलब्धे प्रत्यक्षाद्यगृहीते अर्थे विधिजन्यज्ञानस्य अव्यतिरेकश्च व्यभिचारोऽपि नास्ति। तत् तस्मात् अगृहीतार्थविषयकत्वे सति भ्रमसंशयान्यज्ञानजनकत्वात् चोदनावाक्यं प्रमाणम्। तुरवधारणे प्रमाणमेव। अनपेक्षत्वात् पुरुषान्तरे प्रत्ययान्तरे च अपेक्षाराहित्यात्। बादरायणग्रहणमादरार्थम्।

* **औत्पत्तिकस्तु**। इदानीं चोदनासूत्रप्रतिज्ञातस्य विधिप्रामाण्यस्य परीक्षा क्रियते। कारणदोषबाधकज्ञानरहितम् अगृहीतग्राहि ज्ञानं प्रमेति पूर्वमुक्तम्। विधिजन्यज्ञाने तथात्वमस्ति, न वा इति चिन्ता। तत्र पूर्वः पक्षः— नैतादृशप्रमाजनकत्वं विधीनां संभवति स्वर्गाद्यामुष्मिकफलकर्मबोधकानाम् अपूर्वकल्पकार्थापत्तिरूपप्रमाणसापेक्षतया निरपेक्षतज्जनकत्वरूपप्रामाण्यासंभवात्। ऐहिकफलचित्राऽऽदिकर्मबोधकानामपि प्रत्यक्षादिप्रमाणान्तरेण बाधात्। नहि तत्रापि द्वारभूतादृष्टकल्पनम्, मानाभावात्। कारीर्यादौ तात्कालिकफलदर्शनात् हिरण्यधारणस्य भ्रातृव्यदुर्वर्णत्वजनने दृष्टद्वारत्वसंभवे तत्कल्पनाऽयोगाच्च। अतो न बाधकराहित्यम्। 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति यज्ञायुधपदवाच्यस्फ्यादिसंयोगविशिष्टस्य यजमानशरीरस्य दाहेन भस्मीभूतस्य स्वर्गलोकगमनवादस्य अशक्यपरिहारः प्रमाणान्तरविरोधः।

किञ्चात्र कारणदोषोऽप्यस्ति। तथाहि। विधिस्थसोमादिपदानां स्वार्थेन संयोगतादात्म्यादिसंबन्धासंभवात् प्रत्यायकत्वं संबन्धः। तच्च 'अयं शब्दः अस्य वाचकः' इति पुरुषान्तरोपदेशाधीनमेव अर्थज्ञानम्। एवं च विधिवाक्यार्थज्ञानस्य पुरुषोपदेशाधीनत्वेन, पुरुषाणां च भ्रान्त्यादिसंभवेन कारणदोषवत्त्वम्। न च पदपदार्थयोः नित्यः स्वाभाविकः संबन्धः संभवति, प्रथमश्रवणेऽपि अर्थप्रत्ययप्रसङ्गात्। आधुनिकैः पुरुषैः 'इदं पदमत्र शक्तम्' इति व्यवहारकरणाच्च। न च आधुनिकैः पुरुषैः नित्यस्य संबन्धस्य उपदर्शनेऽपि न तत्कल्पनमिति वाच्यम्। आधुनिकैरकल्पनेऽपि सर्गाद्यकालिकपुरुषे न तत्कल्पनाऽसंभवः। न च सर्गादौ मानाभावः, 'स ऐक्षत बहुः स्यां प्रजायेय' इति, 'नासदासीन्नो सदासीत्' इति



श्रुतेरेव मानत्वात्। तथा च सर्गादौ भगवता स्थावरं जङ्गमं जगत् धर्माधर्मौ च सृष्ट्वा व्यवहाराय तत्तच्छब्दानां तेनतेनार्थेन संबन्धं कल्पयित्वा धर्माधर्मप्रतिपादनपरान् वेदान् कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादिताः, तैरन्येभ्यः, इत्येवम् उत्तरोत्तरं शब्दार्थप्रतीतिरिति।

**सिद्धान्तस्तु**— प्रथमे श्रवणे अर्थप्रत्ययाभावस्य नित्यसंबन्धानवगममूलकत्वेन उपपत्तेः ईदृशार्थकल्पने मानाभावात्। सर्गत एकरूपस्य अनुभवसिद्धत्वेन सर्गादौ नाशाभावात् मन्त्रार्थवादेतिहासपुराणानामपि पौरुषेयसंबन्धापेक्षितया पौरुषेयतया च शाक्यग्रन्थवत् अतीन्द्रियार्थे प्रामाण्यासंभवेन अप्रमाणप्रतिपादितसर्गादेः दूरापेतत्वात्। अतो न सर्गादिकाले पदपदार्थसंबन्धकरणं संभवति। किञ्च सर्वपदानामर्थानां च संबन्धसिद्धौ वाक्येन तत्संबन्धकरणं स्यात्। अज्ञातार्थसंबन्धकपदघटितवाक्येन तदसंभवात्। न च एवं श्रोतॄणां अप्रसिद्धसंबन्धत्वात् संबन्धविशेषकथनमपि अनुपपन्नम् इति **वाच्यम्**। सतः संबन्धस्य उपायाभावात् अज्ञातस्य वाक्येन ज्ञानसंभवात्। वृद्धव्यवहारेणैव संबन्धज्ञानसंभवे तज्ज्ञापकवाक्यकथनस्य अनावश्यकत्वाच्च। तस्मान्न पौरुषेयः संबन्धः इति संबन्धस्य नित्यतया पुरुषापेक्षा नास्ति इति सिद्धं चोदनाप्रामाण्यम्।

**न च** तथापि चित्राऽऽदीनां अनन्तरफलादर्शनेन विसंवादात् अप्रामाण्यमिति **वाच्यम्**। शब्दोक्तसाधनत्वमात्रस्य अपूर्वद्वारेण कालान्तरेऽपि तैलपानवत् संभवेन अविसंवादात्। अपूर्वद्वारकत्वस्य अङ्गप्रधानमेलनान्यथाऽनुपपत्त्या वाक्यार्थबोधे संसर्गलभ्यत्वात्। पशूत्पत्तिमात्रस्य अफलतया तदुपयोगस्य फलत्वेन तत्पर्यन्तस्यापि द्वारकल्पनाऽवश्यम्भावेन अपूर्वबोधाच्च। अतो न विसंवादः। **न च** तथापि 'स एष यज्ञायुधी' इत्यत्र दृष्टविरोधात् अप्रामाण्यमिति **वाच्यम्**। शरीरशरीरिणां अत्यन्तभेदाभावेनैव तत्पदव्यपदेश्यस्य शरीरस्य यज्ञायुधैः परंपरया यज्ञायुधवतः आत्मनः स्वर्गगमनलिप्सितभोगोत्पादविरोधाभावात्। फलवाचकफलभोक्तृवाचकपदयोः सामानाधिकरण्यस्य 'अग्निं चिनुते, ऋध्नोत्येव' 'द्विरात्रेण यजते, स्वर्गमेव लोकमेति' इत्यादौ बहुशो दर्शनात्। एवमत्रापि यजमानः स्वर्गं याति इत्युपपन्नम्। एवम् 'संकल्पादेवास्य पितरः समुत्तिष्ठन्ति' इति संकल्पनिरूपितकर्तृत्वबोधकषष्ठ्या आत्मनः संकल्पं प्रति कर्तृत्वम्। **न च** व्यापकस्य स्पन्दो न संभवति इति **वाच्यम्**। प्रयत्नद्वारा प्रयोजकत्वसंभवात्। सर्वधात्वर्थस्य क्रियात्वेन तत्र कर्तृत्वसंभवाच्चेति। तस्मात् कारणदोषबाधकज्ञानरहितागृहीतग्राहित्वेन वेदप्रामाण्यम्। बादरायणग्रहणं पूजार्थम्। **मणि.** पृ. १६५–१६७.

* **आत्पत्तिके तु॰** इत्यधिकरणस्य ( द्यावापृथिव्याधिकरणस्य ) न्यायस्तु 'असाधारणगुणवचने अधिष्ठानमन्तरेणैव गुणः संपादितो भवति। तस्माच्चोदकबाधः' इति। **टुप्.** १०।२।२९।६८.

**औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात्।** १०।२।२९।६९ ॥

काम्यपशुकाण्डे 'द्यावापृथिव्यां धेनुमालभेत, मारुतं वत्सम्, ऐन्द्रमृषभम्' इति श्रुतम्। एते धेनुवत्सर्षभा अजजातीया वा गोजातीया वा इति विचारे, सिद्धान्तमाह। औत्पत्तिके उत्पत्तितः स्वभावतः गोपदं विनाऽपि प्राचुर्येण गोगतधानादिगुणाभिधायके धेन्वादिशब्दे श्रूयमाणे द्रव्यतः चोदकप्राप्ताजद्रव्यस्य विकारः बाधः स्यात्। अकार्यत्वात् प्रत्यक्षश्रुतानां धेन्वादिशब्दानाम् अजजातीयेषु लक्षणाऽऽश्रयणस्य अन्याय्यत्वात्। तस्मादिह धानादिगुणकानां गवामेव आलम्भो नाजानाम्। धानं प्रस्नावनपूर्वकं दुग्धदानम्। के.

* प्रमाणान्तरप्रमितविषयमेव **औत्पत्तिकत्वं** शक्यतेऽवगन्तुम्। न पुनर्यत्र शब्दावगमपूर्वको व्यवहारस्तत्र औत्पत्तिकत्वं शक्यावगमम्। **बृहती.** पृ. २५५.

**औत्सर्गिकप्रत्ययप्राधान्यन्यायः**। कर्तुरुपसर्जनत्वेऽपि मत्पक्षे प्रत्ययार्थभूताया भावनायाः प्राधान्यानिवृत्तेः कर्तृप्राधान्यनिवृत्तावपि नौत्सर्गिको न्यायो निवर्त्स्यति। कर्तृप्रत्ययार्थत्वरूपे तु त्वत्पक्षे कर्तृप्राधान्यानिवृत्तेरेव औत्सर्गिको न्यायो निवर्त्स्यति। **सु.** १३७२–७३,

* भावनायाः प्रत्ययार्थभूतायाः प्राधान्यानपवादेन **औत्सर्गिकप्रत्ययार्थप्राधान्यविषयन्यायापवादायोगात्**। पृ. १३७२.

**औदमेघिन्यायः** । स्वरूपम्– यस्य उदमेघः प्रसिद्धः स तस्यानाख्यातमपि अपत्यम् औदमेघिरिति ब्रूते । यस्यौदमेघिः ( प्रसिद्धः, ) स तस्य पितरम् अनाख्यातमपि उदमेघं प्रतिपद्यते इति । भा.३।५।८।२६. * अध्वर्य्वादिशब्दानाम् **औदमेघिन्यायेन** कर्मनिमित्तत्वाभ्युपगमे । सु. ३।७ पृ. २७. * छन्दोगप्रवचनं हि औद्गात्रशब्देनाभिधीयते । तत्प्रवचनस्थं कर्म, तत्संबन्धाच्च पुरुषाः प्रवक्तृत्वेनानुष्ठातृत्वेन च औदमेघिन्यायेन उद्गातारः इत्यनुमातुं शक्यते । ननु चैष न्यायः अवेष्ट्यधिकरणे निराकृतः । उच्यते 'उद्गाता गौण एवात्र मुख्योद्गातुरसंभवात्' इति । वा. ३।५।८।२६. * द्रविडदेशे राजशब्दार्थस्य क्षत्रियस्वरूपेण विज्ञातत्वात् **औदमेघिन्यायानुपपत्तेः** न राजकर्मवाचिराज्यशब्दान्यथाऽनुपपत्तिलक्षणया अर्थापत्त्या राज्यस्य कर्ता राजा इति वचनव्यक्तिः कल्पनीया । सु पृ. ९०७.

* '**औदुम्बरो** यूपो भवति ऊर्ग् वा उदुम्बरः' इत्यादि वाक्यम् 'सोमापौष्णं त्रैतमालभेत पशुकामः' इति वैकृतपशुप्रकरणे श्रुतम् । सु. पृ. ७१. * 'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः, ऊर्जैवास्मै ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुद्धयै' एतादृशा अपि अर्थवादाः स्तावका एवेति धर्मे प्रमाणम् । वि. १।२।२. * औदुम्बरः सोमचमसः ऋतपेये दक्षिणा । 'स प्रियाय सगोत्राय ब्रह्मणे देयः' । स च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकः । भा. १०।३।१९।६८–७३, * **औदुम्बरत्वेन** विकृतौ श्रूयमाणेन प्राकृतखादिरत्वादेर्निवृत्तिः सोमापौष्णे पशौ । १०।७।१८।६१–६३.

**औदुम्बराधिकरणम्** । उदुम्बराधिकरणम् । विधिवन्निगदाधिकरणम् ॥

**विधिर्वा स्यादपूर्वत्वाद्, वादमात्रं ह्यनर्थकम् । १।२।२।१९ ॥**

**भाष्यम्**— इह ये विधिवन्निगदा अर्थवादास्ते उदाहरणम् । 'औदुम्बरो यूपो भवति, ऊर्ग्वा उदुम्बरः, ऊर्क् पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुद्धयै' इति । किमस्य विधिः कार्यम्, उतास्यापि स्तुतिरिति । किं तावत् प्राप्तम्? विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् । विधिवन्निगदेषु एवंजातीयकेषु फलविधिः स्यात् । फलं ह्यवगम्यते । तथा ह्यपूर्वमर्थं विधास्यति । इतरथा स्तुतिवादमात्रमनर्थकं स्यात् । स्तुतश्चास्तुतश्च तावानेव सोऽर्थः । अपिच 'ऊर्जोऽवरुद्ध्यै' इति प्रयोजनं श्रूयते । न च प्रशस्तोऽयमर्थ इति कश्चिच्छब्दोऽस्ति । लक्षणया तु स्तुतिर्गम्यते । श्रुतिश्च लक्षणाया ज्यायसीति ।

**वा**— एवम् आनर्थक्योपाख्यानादिप्रतियोगिषु ( आनर्थक्यं च, उपाख्यानं च, आदिशब्दोपात्तं अदृष्टार्थत्वं च प्रतियोगि विरोधि येषां तेषु । सु. पृ. ६७ ) अर्थवादेषु व्याख्यातेषु इदानीं विधिप्रतियोगिनो विचार्यन्ते । कुतः संशयः ? ( संदेहसमर्थं चतुर्धा पूर्वपक्षं संभावयति– ) पूर्वत्र हि स्वार्थानुपयोगित्वेन दूरलक्षितस्तुतिग्रहणम् अङ्गीकृतम् । तत्संभवे तु स्तुतिरपि अनर्थकतुल्या आपद्यते । विध्यंशश्च न कथं चन अन्यस्मात् सिध्यति । प्ररोचना पुनः कथञ्चित् विध्युद्देशादपि उपपद्यते इत्युक्तं पुरस्तात् । अपि च प्रधानं विधिः, अङ्गं स्तुतिः । तत्र प्रधानविशेषणसंभविनः तद्गामित्वमेव युक्तम् । समाप्ते च विध्युद्देशे अर्थवादः प्रवर्तते । तत्प्रक्रमावस्थायामेव तु भावनांऽशाः संनिपतन्ति । विशेषेण तु फलं प्राथम्यप्राधान्याभ्याम् इत्यादि मन्वानः अपूर्वत्वात् इति वदति, तदपेक्षया च स्तुतिमात्रम् अनर्थकं मन्यते ।

ननु च एवंजातीयकः 'फलविधिः, उत अर्थवादः' इति विचारः चतुर्थेऽपि 'द्रव्यसंस्कारकर्मसु' (४।३।१) इति भविष्यति, अतो नेह प्रस्तोतव्यः । तत्र **के चित्** आहुः, अनेन गतार्थत्वात् तत्रैव एष पर्यनुयोगो युज्यते, न तु इदं पुनरुक्तमिति ( इदं समाधानं दूषयति– ) सत्यमेवम्, यदि तु तत्कालप्रतीक्षणात् किञ्चित् परिहारान्तरं लभ्यते । अतः तत्र अन्विच्छेम, अथ पुनः इहैव शक्यते वक्तुम्, तथा सति इदानीमपि उच्यमाने मन्दो दोष इति । ( अपौनरुक्त्ये परिहार्ये चतुरः प्रकारानुपन्यस्य दूषयति– ) **तत्रापरे** वदन्ति, तेन फलविधित्वनिराकरणमात्रम्, इह तु अर्थवत्त्वाय । अर्थवादः स्यात् इति तत्र वक्ष्यति, तत् विधित्वनिराकरणमात्रपरमेव द्रष्टव्यम् । **तदयुक्तम्** । यतः तेन फलविधित्वात् प्रच्यावितानाम्



आनर्थक्यप्रसक्तौ पूर्वाधिकरणेनैव ( १।२।१ ) स्तुत्यर्थता साधिता, तथा च दर्शितम् 'शोभतेऽस्य मुखम्' इत्यादिषु ( १।२।१।१५ ) । **केचित्** पुनः आहुः— युक्तम् 'वायुर्वै क्षेपिष्ठा' इत्यादीनां स्तुतित्वम्, 'उर्जोऽवरुद्धयै' इति पुनः यथा फलविधित्वात् प्रच्याव्यते, तथैव विसंवादेन स्तुतित्वादपि, इति कामं विधिर्भवतु, येन कालान्तरभावित्वेन कथञ्चित् विसंवादो निवर्तते इत्यारम्भः ( अस्याधिकरणस्य ) । **तदप्ययुक्तम्** । अपि च वेदे व्यक्तम् अविसंवादः इति हि अभ्युच्चयहेतुः अपुनरुक्तः स्यात् । अधिकरणशरीरं तु तदेव ( पर्णमय्यधिकरणशरीरात् अभिन्नम् ) विसंवादोऽपि च 'गुणवादस्तु' ( १।२।१।१० ) इत्यनेन न कश्चिदपरिहृतः । पुनरपि च तावन्मात्रमेव उत्तरं भविष्यति । ( प्रकारान्तरं शङ्कते– ) तस्मात् 'विधिर्वा स्यात्' (१।२।२।१९) इति अविशेषेणोपादानात्, चतुर्थे च फलश्रुतिग्रहणात् । 'इह अशेषद्रव्यगुणक्रियादिविधिसरूपाः, तत्र फलविधिसरूपा एव उदाहरणम्' **इत्यपरे** । तथा च 'विधिश्चानर्थकः क्व चित्' ( १।२।२।२३ ), 'प्रकरणे च संभवन्' ( २४ ) इति च, 'अप्सुयोनिर्वा अश्वः, अप्सुजो वेतसः' 'यो विदग्धः' इति चोदाह्रियते । अन्यथा फलविधिमात्रोपन्यासे तत् असंबद्धमेव स्यात् । ( निरस्यति– ) इहापि तस्य तावत् विशेषविषयत्वात् इदमगतार्थं भवेत्, अनेन तु सामान्यतः सर्वविषयावरोधिना तत् पुनरुक्तमेव । ( प्रकारान्तरमाशङ्कते– ) इति ( हेतोः ) व्यवस्थया **के चित्** उदाहरन्ति अत्र द्रव्यादिविधीनेव, तत्र फलविधीनेव । भाष्यकारोदाहरणम् अतन्त्रीकृत्य उदाहरणान्तरं दातव्यम् इति । **अत्र वदामः**, किम् अधिकरणद्वयम् अवश्यारब्धव्यम्, येन एवमुदाहरणव्यवस्था आश्रीयते । नहि उदाहरणभेदात् अधिकरणं भिद्यते, मा भूत् यथाव्यवस्थितेऽपि खादिरौदुम्बरत्वभेदात् अपौनरुक्त्यम् । न्यायविषयत्वेन तु अधिकरणानां तद्भेद एव अपौनरुक्त्ये हेतुः । द्रव्यादिविधयोऽपि न सर्वे विचारिताः, के चित् तत्सिद्धिसूत्रे ( १।४।१२।२३ ), के चित् निवीताद्यधिकरणेषु ( ३।४।१ ), परकृतिपुराकल्पद्वारेण अन्ये षष्ठे ( ६।७।१२ ), 'यदृचा स्तुवते' इत्यादयः 'अर्थैकत्वाद्विकल्पः' इति नवमे ( ९।२।८ ), जर्तिलगावीधुकविधिसरूपा दशमे ( १०।८।४ ) । ( मतान्तरद्वयमाह– ) अतश्च न पुनरुक्तता महान् दोषः इत्येव वक्तव्यम्, **अथवा** एकस्यैव न्यायस्य क्व चित् कश्चिदंशः शोध्यते इति पुनरारम्भः । ( प्रकारचतुष्टये एकः प्रकार उक्तः । द्वितीयमाह– ) स्पष्टं वा ( च–सुधायाम् ) विषयनानात्वम् एवं वर्णनीयम्, सर्वविधिसरूपाणां केवलविधित्वनिराकरणेन अर्थवादत्वमिह सिद्धम् । यस्तु चतुर्थे पुनरारम्भः, स अर्थवादकल्पिते विधौ फलाकाङ्क्षावेलायाम् अन्यार्थोपात्तमपि क्रतुप्रयोगवचनात् तदेव संनिहिततरम् । क्लृप्तसंबन्धस्य च विशेषमात्रं सुकरम् । इतरथा संबन्धः तद्विशेषश्च उपकारकत्वं कल्पनीयम् इति रात्रिसत्रप्रतिष्ठाऽऽदिवत् फलविधित्वमपि इति पूर्वपक्षाभिप्रायः । कथञ्चित् प्रयोजनान्तरे लभ्यमाने, न एकस्यानेकार्थता युक्ता, तस्मात् अर्थवादत्वमेव इति सिद्धान्तः । **एतेन** निवीताद्यधिकरणानि व्याख्यातानि ( केवलार्थवादत्वेन ) । **अथवा** औदुम्बराधिकरणपूर्वपक्षं कृत्वा चिन्तास्ताः प्रत्येतव्याः । विधित्वाभ्युपगमेन हि कस्य शेषः क्रतोः पुरुषस्य वा इत्यादि विचार्य इहसिद्धेन अर्थवादत्वेन उपसंहारः । तथा परकृतिपुराकल्पयोः किं तद्गोत्राणाम्, उत सर्वपुंसाम् इति चिन्तितम् । एवम् ऊहबाधप्रसङ्गेन नवमदशमगता चिन्ता । तत्सिद्धिसूत्रे तु गुणवादनिमित्तमात्रकथनम् । (अथ तृतीयं प्रकारमाह-) **अथवा** फलविधावेव यत्र भेदेन स्तुतिफलपदानि भवन्ति, तदिह उदाहरणम् । यथा अत्रैव 'ऊर्गुदुम्बरः ऊर्क् पशवः' इत्येतैरेव स्तुतिः, 'ऊर्जोऽवरुद्धयै' इत्यनेन फलमिति । यत्र पुनः तावन्मात्रेणैव फलं वा स्तुतिर्वा वक्तव्येति भवति, ते चतुर्थे इति । ( अत्रापि अपरितोषात् चतुर्थं प्रकारमाह –) **अथवा** तत्र 'परार्थत्वात्' ( ४।३।१ ) इति हेतुव्यपदेशात् प्रसिद्धेन च हेतुना व्यवहारात् ये विज्ञातपारार्थ्याः, ते उदाहरणं यथा 'यस्य पर्णमयी जुहूः' इति । अत्र हि अवश्यं जुह्वनुवादेन पर्णमयीत्वं विधातव्यम्, स्वातन्त्र्येण फलसंबन्धाशक्तेः । सर्वत्र हि गुणः फलाय चोद्यमानः कं चित्

आश्रयमपेक्षते । न च प्रकरणमन्तरेण आश्रयप्राप्तिः । तदिह यदि 'पर्णमयीत्वेन फलं भावयेत्' इति वचनं व्यज्येत, 'किमाश्रितेन' (कस्याश्रितेन इति विग्रहः) इत्यपेक्षायां किं संबध्यताम् ? जुहूः इति चेत् न, वाक्यभेदप्रसङ्गात् । साऽपि च प्राक् क्रियालाभात् नैव निराकाङ्क्षी भवति । न च क्रियासंबन्धे प्रमाणमस्ति । तस्मात् अनिर्वहणात् एतद्वचनव्यक्तिपरित्यागेन इतराश्रयणम् (पर्णमयीत्वेन जुहूं भावयेत् इति) । तत्र च 'जुह्वा जुहोति' इत्यस्याः प्रकरणे निर्ज्ञातप्रयोजनत्वात् अविहितजातिविशेषायाः तदाकाङ्क्षायां सत्यां यावदेव पर्णत्वजातिः उपनीता, तावत् अविज्ञातप्रयोजनावस्थत्वात् अङ्गतां प्रतिपद्यते । ततश्च निराकाङ्क्षीभूतायाः तस्मिन्नेव वाक्ये फलकल्पनानिमित्तं नास्ति इति युक्तमर्थवादत्वम् । इह पुनः वैकृतपशुप्रकरणे (सोमापौष्णं त्रैतमालमेत इत्यत्र) श्रूयमाणम् औदुम्बरत्वम् उदाह्रियते । न च तस्य प्रसिद्धं पारार्थ्यम्, येन चतुर्थाधिकरणविषयता भवेत् । कथम् ? अत्र हि न तावत् अप्राप्ते यूपे जातिविधानं शक्यम् । तत्प्राप्तिश्चेत्, अवश्यं क्लृप्तोपकारप्रकृतखादिरत्वादिनैव निराकाङ्क्षेण भवितव्यम् । तत् कुतो जात्यन्तरस्य तादर्थ्येन विधिः, अतः फले विधानम् । याऽपि च आश्रयापेक्षा, साऽपि प्राकृतकर्मसंबन्धिचोदकप्राप्तयूपग्रहणात् निवर्तते इति अविघातः । तेन प्रागेव पारार्थ्यात् फलसंबन्धप्रसक्तिः अवश्यं न्यायान्तरेण निराकर्तव्या इति एतदधिकरणारम्भः । (उक्तानां चतुर्णां पौनरुक्त्यपरिहारप्रकाराणां मध्ये प्रथमोपन्यस्तस्य एकस्यैव न्यायस्य 'क्व चित् कश्चिदंशः बोध्यते' इत्यस्यैव अभिमतत्वमाह- ) इदमपरं मतम्, औदुम्बरवाक्यं जुह्वादिवाक्यं च उभयमुभयत्र उदाहरणम् । कथम् ? भावनांऽशान्तरविचारात् अपौनरुक्त्यम् । साध्यसाधनसंबन्धस्तावत् द्वयोरपि योग्यत्वेन उपात्तयोः अवकल्पते, नान्यथा । तत्र चतुर्थे साधनांशयोग्यविचारम् अनादृत्य अभ्युपेत्य वा केवलसाध्यांशविचारः 'किम् ईदृशेन कामशब्दोपबन्धरहितेन वर्तमानफलसंबन्धाभिधायिना फलत्वं शक्यते गमयितुं न वा' इति विचारः । इह पुनः साध्यांशमनादृत्य अभ्युपेत्य वा केवलसाधनांशविचारः 'किम् ईदृशेन विधिविभक्तिरहितेन द्रव्यगुणक्रियाः कं चित् प्रति साधनत्वेन प्रतिपाद्यन्ते, न' इति । यच्च यदात्मना प्रतिपादितं भवति, तत् प्रतियोगिविशेषापेक्षं सत् पदान्तरायुपात्तेन तेन संबध्यते । तत्र साध्यम् इति अवधृते, परिशेषात् अवशिष्टं साधनं गम्यते, एवं साधनावधारणेऽपि, इति द्वावपि अंशौ स्वरूपेण निरूपयितव्यौ । तदिह साधनांशे विचार्यमाणे यो नाम फलांशस्य संस्पर्शः, स चतुर्थे सिद्धः प्रसङ्गात् हेतुत्वेन इति मन्तव्यः । तथा यस्तत्र साधनांशपरामर्शः, स इह सिद्धः, तत्र प्रसङ्गात् इति अपुनरुक्तम् । ननु एवं सति विध्युद्देशचिन्तेयम् इति अर्थवादाधिकरणेन न संबध्यते । नैष दोषः, तद्द्वारेणैव अर्थपरिच्छेदात् । यदि हि असौ विधीयमानतया पूर्वेण अवगतः, ततो नार्थवादत्वम् । अथ स्तुत्यर्थतया, ततः अर्थवादत्वमिति ।

तत्र पूर्वपक्षाभिप्रायः, सर्वथा साध्यसंनिधाने यत् उच्चरितम्, तत् आकाङ्क्षावशेन ताद्रूप्येण अनुपात्तमपि साधनं भवति, यथैव यागेन इत्यनूदितं संबध्यते, तथैव औदुम्बरेण इति । तत्र विधिः किं कुर्यात् ? पुरुषं प्रवर्तयेत्, स च फलार्थितयैव प्रवृत्तः, इति किं विधिना ? अथवा प्रयोगवचनविहितस्य फलसंबन्धमात्रम् अनेन क्रियते, पञ्चमो वा लकारो विधास्यति, अर्थवादैकदेशो वा इत्युक्तमेव । तस्मात् 'ऊर्जोऽवरुद्ध्यै' इति तादर्थ्यचतुर्थ्यैव एवंकामशब्दादपि स्फुटतरं फलमुपात्तम् इति तस्मिन् औदुम्बरताविधिः, न तु फलस्य विधानम् इति ग्रहीतव्यम्, भावार्थाधिकरणे फलविधिनिषेधात् । 'ऊर्गुदुम्बरः' इत्यतः स्तुतिः इत्यविरोधः । तस्मात् मुख्यविधिसंभवे लक्षणया न स्तुतिः प्रतिपत्तव्येति ।

**लोकवदिति चेत् । २० ॥**

**भाष्यम्**-- इति चेत् पश्यसि स्तुतिरनर्थिका, न च शब्देन अवगम्यते इति । लौकिकानि वाक्यानि भवन्तो विदांकुर्वन्तु । तद्यथा 'इयं गौः क्रेतव्या देवदत्तीया, एषा हि बहुक्षीरा स्त्र्यपत्या अनष्टप्रजा च' इति । क्रेतव्या इत्यपि उक्ते (प्रवर्तन्ते, तथापि) गुणाभिधानात् प्रवर्तन्तेतरां क्रेतारः । बहुक्षीरा इति च गुणाभिधानमवगम्यते । तद्वत् वेदेऽपि भविष्यति ।



**वा**— लोके तावत् बुद्धिपूर्वकारिणः पुरुषाः मात्रामपि न निष्प्रयोजनां प्रयुञ्जते । तत्र च क्रेतव्या इति विहिते बहुक्षीरादिभिर्गुणैः स्तुतिः प्रवृत्तिविशेषनिमित्तत्वेन आश्रीयते । न च क्षीरादयः फलविषयः, प्रत्यक्षविषयत्वात् । अतः स्तुतिः । एवं वेदेऽपि । श्रुत्यसंभवाच्च लक्षणापरिग्रहः इत्यदोषः ।

**न, पूर्वत्वात् । २१ ॥**

**भाष्यम्**— नैतदेवम् । लोके विदितपूर्वा अर्था उच्यन्ते बहुक्षीरादयः । तेषां विज्ञानमेव न प्रयोजनम् । अतः प्रशंसा गम्यते । अविदितवादे न श्रद्दधीरन् पूर्ववचनादिव । विदितत्वादेव च प्ररोचयन्ते । वैदिकेषु पुनर्यदि विधिशब्देन न प्ररोचयन्ते, नतरामर्थवादेन । जाताशङ्को हि विधिशब्दे स तदानीम् । अथ विधिशब्देन प्ररोचितः, किमर्थवादशब्देन । अपि च वेदे व्यक्तमसंवादः, 'ऊर्जोऽवरुद्ध्यै' इत्यप्रसिद्धं वचनम् । 'ऊर्ग्वा उदुम्बरः' इति हेतुत्वं चाप्रसिद्धम् । यस्मात् ऊर्गुदुम्बरः, तस्मात्तन्मयो यूपः कर्तव्यः इत्यूर्गुदुम्बर इत्यनृतवचनात् अन्यदस्य अनृतमिति परिकल्प्येत ।

**वा**— नायं दृष्टान्तः, स्तुतेः प्रमाणान्तरावगत्यपेक्षत्वात् । लोके तत्संभवादुपपत्तिः, वेदे तु अविदितवादत्वात् न श्रद्दधीरन् । अथवा लोके एव यदि अविदितं कश्चित् वदेत्, तदा नैव श्रद्दधीरन् । '**पुनर्वचनादिव**' इति विध्युद्देशादिव । अथवा वैधर्म्योपमा, यथा अधिगतपूर्ववचने श्रद्दधते, नैवं अविदितवादे । न च उक्तिमात्रेण एते बहुक्षीरादयः प्ररोचयन्ते, किं तर्हि ? विदितत्वादेव । वेदे तु अर्थवादासत्यत्वेन विधौ जाताशङ्को न प्रवर्तेत । अथवा यो विधिमुत्क्रम्य अर्थवादं प्रार्थयते, नूनमस्य विधौ अविश्रम्भः । तत्र चेदनाश्वासः (यत्र चोदनाऽनाश्वासः, तत्र) अर्थवादे कुतः प्रत्ययः इति । '**अपि च वेदे व्यक्तम् असंवादः**' । वर्तमानेन ऊर्जोऽवरोधनेन इयं स्तुतिः, न च तदस्ति, तत्र अविद्यमानबहुक्षीरसंकीर्तनवत् एतत् स्यात् । स्वरूपतस्तावत् उदुम्बरे अन्नत्वं पक्षधर्मेण अप्रसिद्धम् । अन्वयाप्रसिद्धेश्च हेतुत्वाप्रसिद्धिः । नहि यद्यत् अन्नं सस यूपः इति लोके वेदे वा प्रसिद्धम् । तस्मात् असंवादात् वरं विधिरेव, किं स्तुत्या संवादापेक्षिण्या इति ।

**उक्तं तु वाक्यशेषत्वम् । २२ ॥**

**भाष्यम्**— उक्तमस्माभिर्वाक्यशेषत्वम् 'विधिना त्वेकवाक्यत्वात्' इति । ननूक्तं फलवचनमिह गम्यते, न स्तुतिरिति । यदिह फलवचनम्, तत् औदुम्बरस्य यूपस्य । न च अविहित औदुम्बरो यूपोऽस्ति । तत्र फलवचनमेव अनर्थकम् । स्तुतिवचनः शब्दो नास्तीति-चेत्, इह फलवचनेन फलवत्ता प्रतीयते, फलवांश्च प्रशस्त इति । तत्र फलवत्तायाम् आनर्थक्यमिति यो द्वितीयोऽर्थः प्रशंसा नाम, स गम्यते । लक्षणेति चेन्न । लक्षणायामपि अर्थवत्ता भवत्येव । लक्षणाऽपि हि लौकिकी । ननूक्तम् असंवादो वेदे, नहि ऊर्गुदुम्बर इति । गुणवादेन प्ररोचनाऽर्थतां ब्रूमहे । गौणत्वात् संवादः । किं सादृश्यम् ? यथा अन्नं प्रीतेः साधनम् एवमिदमपि । प्रीतिसाधनशक्तियुक्तं प्रशंसितुं प्रशंसावाचिना प्रीतिसाधनशब्देनोच्यते । शक्यते हि तत् पक्वफलसंबन्धात् ऊर्क् इति वक्तुम् ।

**वा**— 'ऊर्गुदुम्बरः' इत्यादि तावत् 'ऊर्जोऽवरुद्ध्यै' इत्यस्योपपत्तितया एकवाक्यभूतम्, न विच्छिन्नं स्तावकम् । नहि अन्नमुदुम्बरः इत्युक्ते पुरुषं प्रति प्रशस्तता गम्यते । 'ऊर्जोऽवरुद्ध्यै' इति तु प्ररोचयति । तदुपपत्तिरितरेति संगच्छते । तस्मात् कृत्स्नेन फलं प्ररोचना वा । तत्र यद्यपि तावत् लिङादिः स्यात्, तथापि सुतरामर्थवादतया गृह्णीयात् । किमुत वर्तमानापदेशो यो विधिसिद्ध्यर्थमेव । प्रकरणाच्च यागोपकारे प्रयोजने लभ्यमाने, किमित्यवाचकात् फलं कल्पयिष्यामः । प्रकरणं वाक्येन बाध्यते इति चेन्न, अविरोधात् । यदि हि एकांशग्राहित्वेन वाक्यप्रकरणे संनिपतेताम्, तथा सति बाधः स्यात् । इह तु प्रकरणमौदुम्बरताविधिं गृह्णाति, सोऽपि 'ऊर्गुदुम्बरः' इत्यादिलभ्यां प्ररोचनाम् । तत्र तद्विशिष्टौदुम्बरत्वग्राहिणः प्रकरणस्य को विरोधः । तस्मात् फलविधिसामर्थ्याभावात् प्रकरणाबाधेन निवेशसंभवो नातिक्रमितव्यः । प्ररोचनाऽपि च वाक्यशेषादुपपद्यमाना, नार्थापत्त्या विध्युद्देशादेव कल्पिता भविष्यति । अन्यत्र विधिरपि हि तावत् तां कल्पयेत् । इह

तु स्वयमेव दुःस्थितः किं प्ररोचनया करिष्यतीति । न च स्तुत्युपयुक्तस्य पुनः फलेऽपि प्रतिष्ठादाविव व्यापारो युज्यते । रात्रिसत्राणां हि अनन्यपरत्वात् गुर्व्यपि कल्पना आश्रीयते । अत्र तु प्रकरणादस्ति प्रयोजनसिद्धिरित्युक्तम्। जातिविशेषस्य च योग्यतयैव काष्ठाङ्गत्वं प्रसिद्धं न फलार्थता। यूपशब्दोऽपि च कर्माविष्टकाष्ठवचन इत्युपनीतमात्रमेव गृह्णाति । अतश्च प्रसिद्धे पारार्थ्ये अर्थवादता । यत्तु यूपे ( पो ) निराकाङ्क्षो जातिं प्रतीति, शरवद्बाधो भविष्यति । न च अबाधप्रकारोऽस्ति । काम्यपक्षेऽपि तदभ्युपगमात् । एतावांस्तु विशेषः, तव पुरुषार्थत्वात् भिन्नविषयेण सता कथञ्चित् प्रसङ्गलभ्यसमानाश्रयत्वेन, मम तूभयोः क्रत्वर्थत्वात् समानविषयेणेति । न चात्र जातौ फलाय विधीयमानायां दध्न इव होमः आश्रयो मनसि विपरिवर्तते । यो हि पशुयागः प्रकृतः, स तावदयोग्यः । पशुनियोजनं च यूपद्वारेण योग्यम्, तदपि सह यूपेन अप्रकृतम् । न च 'आनर्थक्यात् तदङ्गेषु' इति प्रधानादवतीर्य तदङ्गमाश्रीयते । यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थितः उपकरोति इति एवं कल्प्यते । न तु इह तथा । अत्र हि प्राधान्यांशभाजा गुणेन आश्रयः प्रार्थ्यते, तत्र प्रधानं संनिहितम् । तत् यदि न योग्यम्, ततो वचनव्यक्त्यन्तरं ( 'औदुम्बरत्वेन ऊर्गवरोधं भावयेत्' इतिवचनव्यक्त्यपेक्षया 'औदुम्बरत्वेन यूपं भावयेत्' इति ) आश्रीयताम् । न च अवतरणं संभवति । न च अनेनैव वाक्येन आश्रयो दीयते, वाक्यभेदप्रसङ्गात् । द्वौ हि संबन्धौ तदा स्यातां गुणफलसंबन्धः तदाश्रयसंबन्धश्चेति । युगपच्च औदुम्बरता फलयूपौ प्रति उपादीयमाना उद्दिश्यमाना (च) विरूपा स्यात् । अथ उभयोद्देशेन विधीयते, तथापि फलाननुरक्ता यूपेन संबध्येत, यूपाननुरक्ता च फलेन । यत्तु विनैव विधायकात् स्वेच्छयैव प्रवर्तिष्यामहे इति, स्वच्छन्देन सह नास्ति विधिवादः । पुरुषार्थफलत्वं तु न प्राक् विधेः सिध्यति, संनिहिततरौदुम्बरत्वादिसाध्यांशावरोधात् । यत्तु प्रयोगवचनो विधास्यतीति, न पुरुषार्थेषु तस्य शक्तिः । 'असंयुक्तं प्रकरणात्' इति वक्ष्यति ( ३।३।४।११ ) । यदि तु तेन विधीयते, सिद्धं कर्मार्थत्वम् । पञ्चमलकाररूपं वर्तमानापदेशेन संदिग्धम् । तस्मात् वर्तमानफलाभिधायित्वात्, चतुर्थे च एवंकामशब्दरहितस्य फलविधित्वनिराकरणात् प्रधानफलमेवेदं प्ररोचनायै संकीर्त्यते इति युक्तम् । सर्वत्र च स्तुतिपरत्वात् तदुपायेषु सत्यासत्यान्वेषणं व्यर्थम्, ज्ञानमात्रौपयिकत्वात् । गुणवादेन च संवादात्, साधनत्वेऽपि च प्रीतिसाधनत्वेन तृप्तिहेतुत्वेन वा संवादः ।

**विधिश्चानर्थकः क्वचित्, तस्मात् स्तुतिः प्रतीयेत, तत्सामान्यादितरेषु तथात्वम् । २३ ॥**

**भाष्यम्**— 'अप्सुयोनिर्वा अश्वः अप्सुजो वेतसः' इति अप्सुयोनिरश्वः कर्तव्य इति विधेः अशक्यत्वादानर्थक्यम् । तत्रावश्यं स्तुतिः कल्पयितव्या, शमयित्रीभिरद्भिः अश्वस्य अवकानां च संबन्धो यजमानस्य कष्टं शमयतीति । तत्सामान्यादितरेषु तथात्वम् । तथेति यावत्, तावत् तथात्वमिति । किं तत् सामान्यम् ? विध्यसंभवः स्तुतिसंभवश्च ।

**वा**— यदि च एवंजातीयका विधयो भवेयुः, ततः पूर्वोदाहृताः सर्वे एव द्रव्यगुणक्रियाविधयो भवेयुः । वायुः क्षेपिष्ठा देवता कर्तव्या, अप्सुयोनिः अश्वः कर्तव्यः, अप्सुजो वेतसः अवकाश्च कर्तव्याः, आपः शान्ताः, ऊर्क् उदुम्बरः इत्यादि । तत्र यद्यपि के चित् क्रियाऽऽदिविधयः शक्यन्ते कर्तुम्, एते तु अशक्याः, स्वभावसिद्धेः, प्रयत्नेनापि च अनिष्पत्तेः । वायुवेतसावकाऽऽदिषु स्वभावसिद्धिः, अश्वौदुम्बरादीनाम् अशक्यता । कीदृशी स्तुतिः ? तां दर्शयति '**शमयित्रीभिः अद्भिः**' इत्यादि । ( आक्षिपति— ) तत्र असंगतेः अग्रन्थः ( प्रतिभाति ) इति ( मत्वा ) व्याख्यातारः समर्थयन्ते, यस्मादिह अवकातत्संबन्धयोः शमयितृत्वस्य च नैवोपन्यासः कृतः, वेतसः उपन्यस्तः, सोऽपि स्तुतिवेलायां न प्रदर्शितः इति । ( स्वयं समर्थयते– ) तत्र तु इयं गमनिका, वेतसोदाहरणेनैव तुल्यत्वात् अवकाऽऽदीन्यपि उदाहृतानि । न चायम् अश्वावकयोः परस्परेण संबन्धः कथ्यते । केन तर्हि ? अद्भिः । तावता तु न स्तुतिः का चित् उन्मीलिता इति अर्थवादान्तरापेक्षाप्रवृत्ताम्



( अर्थवादान्तरस्य अपेक्षया प्रवृत्ताम् ) तां दर्शयति 'आपो वै शान्ताः' इति । अनेन हि विधित्वात् प्रच्युतेन अपां प्राशस्त्यमुच्यते, तत्र कस्य चित् प्रसिद्धाप्संबन्धस्य तन्मात्रसंकीर्तनादेव स्तुतिर्भवति । अन्येषां तु संबन्धिसंबन्धात् संबन्धः कीर्त्यते । प्रसिद्धशान्तत्वसंबन्धाभिः ( प्रसिद्धः शान्तत्वेन सह संबन्धो यासां ताभिः ) अद्भिः संबन्धात् अश्वादिरपि शान्तात्मकः, तत्संबद्धेन च कर्मणा यजमानस्य कष्टं शाम्यति, इत्येवंविधप्राशस्त्यज्ञापनार्थम् । एवं क्षिप्रदैवतेन शीघ्रं फलप्राप्तिः, अन्नमयेन च यूपेन अन्नप्राप्तिः, इति स्तुतित्वे सिद्धे तत्समानन्यायानामपि एवमात्मकत्वम् ।

**प्रकरणे संभवन्नपकर्षो न कल्प्येत, विध्यानर्थक्यं हि तं प्रति । २४ ॥**

**भाष्यम्**— इतश्च पश्यामः स्तुतिरिति । कुतः ? इदं समामनन्ति 'यो विदग्धः स नैर्ऋतो, योऽशृतः स रौद्रो, यः शृतः स दैवतः, तस्मादविदहता श्रपयितव्यः सदैवतत्वाय' इति । यदि स्तुतिः, दर्शपूर्णमासयोरेव शृतः स्ताविष्यते । तथा संभवन्नपकर्षो न कल्प्येत । अपकृष्यते इत्यपकर्षः । विधिपक्षे तु यत्र नैर्ऋतः तत्र विदग्धता नीयेत । तथा सति प्रकरणं बाधितं भवेत् । दर्शपूर्णमासकर्म प्रति नैर्ऋताभावात् विदग्धविधानमनर्थकं स्यात् । तस्मात् स्तुतिरेव ।

**वा**— विधिपक्षे च अयमपरो दोषः । यदि तावत् यथाऽवस्थितवाक्यग्रहणम्, ततः प्रकरणगतविदग्धोद्देशेन देवताऽन्तरविधानात् उत्पत्तिवाक्यशिष्टदेवताऽपकर्षणं स्यात् । इयं वा तामपि अपकर्षति इति अपकर्षः । तत्र नैमित्तिकत्वात् अभ्युदितेष्टिवत् बाधोऽपि कल्प्येत यदि अन्यथा न संभवेत्, सति तु संभवे न युक्तमेतत् । अथ एतद्दोषभीतेः अर्थलभ्यवचनव्यक्त्यन्तरं व्यवहितकल्पनया आश्रीयेत 'यो नैर्ऋतः, स विदग्धः कर्तव्यः' इति, ततः प्रकरणे नैर्ऋताभावात् यत्रासौ विहितः, तत्र विदग्धता नीयेत, तत्र प्रकरणं बाध्येत । न च अबाधसंभवे तत् युक्तम् । अतः अर्थवादत्वात् अनपकर्षः इति ।

**विधौ च वाक्यभेदः स्यात् । २५ ॥**

**भाष्यम्**— 'औदुम्बरो यूपो भवति' इति विधौ तस्मिन्नाश्रीयमाणे 'ऊर्जोऽवरुद्ध्यै' इत्येतस्मिंश्च, वाक्यं भिद्येत । इत्थमौदुम्बरो यूपः प्रशस्तः, स च ऊर्जोऽवरुद्ध्यै इति । तस्मात् विधिवन्निगदानामपि स्तुतिरेव कार्यमर्थवादानामिति ।

**वा**— स्तुतित्वेन विधिविभक्तिमुपजनय्य पुनस्तेनैव फलकल्पनायां वाक्यभेदः । तस्मादर्थवाद एवेति ।

**शा**— ( प्राभाकरैस्तु 'औदुम्बरो यूपो भवति' इति यूपौदुम्बरत्वसंबन्धविधिः, 'ऊर्जं पशूनाप्नोति' इति पशूदुम्बरसंबन्धविधिश्च प्रतीयते इति वाक्यभेदः प्रतिभाति, तथा 'ऊर्जं पशूनाप्नोति' इत्यस्य स्तुतिपरत्वावलम्बनेन सस्तुतिकौदुम्बरताविधेः एकवाक्यत्वं च प्रतिभाति । तयोश्च बलाबलानध्यवसायात् अप्रामाण्यम्, इति पूर्वपक्षं कृत्वा यथानियोगं विनियोगः इति एकवाक्यस्य प्रबलत्वात् सस्तुतिकविधिपरत्वमेव इति सिद्धान्तितम् । तत् दूषयति– ) एकदेशिनां तु वाक्येनैव आश्रयसंबन्धं फलसंबन्धं च गुणाधिकारे ( ४।३।२ ) अभ्युपगच्छताम् इहापि तथैव संभवात्, यत् एकवाक्येन संबन्धद्वयासंभवात् अप्रामाण्यमाशङ्क्य तन्निरासार्थं स्तुत्यर्थत्वमापादितम्, तदनर्थकम् । ( प्राभाकरा हि गुणफलविधिषु 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादिषु दध्यनुरक्तो होमः फलाय विधीयते इति वदन्तो दधिहोमसंबन्धः फलसंबन्धश्च वाक्येनैव लभ्यते, इति स्वीकुर्वन्ति। तेषामिहापि एकेनैव वाक्येन यूपौदुम्बरत्वसंबन्धस्य फलसंबन्धस्य च लाभसंभवेन वाक्यभेदाप्रसङ्गात् अनध्यवसायनिबन्धनाप्रामाण्यपूर्वपक्षानुत्थानात्, तन्निराकरणाय स्तुत्यर्थत्वव्युत्पादनं व्यर्थमित्यर्थः । **ननु** सत्यमस्मन्मते दध्यनुरक्तो होमः फलाय विधीयते, तथापि दध्यनुरागो न वाक्येन विधेयः, किन्तु क्रियाकारकत्वमात्रेण लोकसिद्धमेव दधिहोमसंबन्धमाश्रित्य केवलफलहोमसंबन्ध एव विधेयः । **न च** दध्यनुरागस्य होमे विधानाभावे फलार्थिनो दध्युपादानं नियमेन न स्यात्, इति **वाच्यम्** । दध्यनुरक्तरूपापन्नस्यैव होमस्य फलविधिविषयत्वात् गुणोपादानं विना तद्रूपासिद्ध्या

नियमेन तदुपादानसिद्धेः । एवं च दध्युपरक्तरूपापन्नस्य होमस्य फलसंबन्धविधिबलात् दध्युपरागोऽपि नियमेन सिध्यति इत्येतावता संबन्धद्वयस्यापि वाक्येन अस्मन्मते सिद्धिव्यवहारः, न तु संबन्धद्वयस्यापि वाक्यविधेयत्वेन । प्रकृते च यूपस्य अदृष्टरूपस्य अलौकिकत्वेन लोकतः तत्संबन्धासिद्धेः तदाश्रयणेन फलसंबन्धमात्रविधिर्न संभवति, इति यूपौदुम्बरसंबन्धस्यापि विधेयत्वावश्यम्भावात् दुष्परिहरो वाक्यभेदः । इति तन्मतानुसारिणः कस्यचिदुपपादनम् अनुवदति– ) **कश्चित्तु** आह यूपस्यादृष्टत्वात् तत्संबन्धो दधिहोमसंबन्धवत् न लोकतो लभ्यते । ततस्तस्य फलसंबन्धस्य च नैकस्मात् वाक्यात् सिद्धिरिति । ( तक्षणादिजन्यसंस्कारविशिष्टस्य अलौकिकत्वेऽपि विशेष्यांशकाष्ठविशेषस्य लौकिकत्वात् गुणाश्रयसंबन्धो लोकतः सिद्धो वाच्यः, अन्यथा देवतोद्देशविशिष्टप्रक्षेपरूपहोमस्यापि अलौकिकदेवताघटितत्वात् तत्संबन्धोऽपि लोकसिद्धो न स्यात् । इत्यभिप्रायेण परिहरति– ) **तदसत्** । यद्यपि यूपत्वमदृष्टम्, तेन तु निमित्तेन यस्मिन् काष्ठे यूपशब्दो वर्तते, तस्य च औदुम्बरत्वजातेश्च लौकिकः एव संबन्धः । यदि चैवं न लभ्यते 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इत्यत्रापि एकवाक्यता न स्यात् । अस्तु तत्र वाक्यभेदः इति चेत्, वार्तमेतत् ( असारमित्यर्थः ), एकवाक्यत्वावगमात् । यदि चात्र एकस्मिन्नाख्याते वाक्यभेदः, तथा सति 'औदुम्बरो यूपो भवति' 'ऊर्जं पशूनाप्नोति' इत्याख्यातद्वये सुतरां वाक्यभेदः, प्रामाण्यं च संभवति इति दूरापेतमप्रामाण्यम् । अथ 'खादिरो यूपो भवति' इत्येतद्वाक्यविहितयूपसंबन्धाश्रयणेन फलसंबन्धविधिः 'यः खादिरो यूपः, स वीर्यकामस्य' इति, तथा सति खादिरत्वं न क्रत्वर्थं स्यात्, उक्थ्यवत् व्यूढवच्च फलार्थमेव स्यात्, उभयार्थं चैतदिष्टं खादिरत्ववत् उभयार्थतां दधिग्रहस्य वदतो **निबन्धकारस्यापि** । तस्मात् यूपाश्रितस्य खादिरत्वस्येव औदुम्बरत्वस्य फलार्थविधिसंभवात् नाप्रामाण्यशङ्का, इत्यास्तां तावत् ।

तस्मात् औदुम्बरता यूपोद्देशेन विधीयते, तत्स्तुतिरियं 'ऊर्जोऽवरुद्धयै' इति सिद्धम् । ( **भवनाथेन** तु गुणाश्रयसंबन्धो गुणफलसंबन्धश्च इति संबन्धद्वयविधानमाश्रित्य अनध्यवसायो नोपपादितः, किन्तु 'औदुम्बरो यूपो भवति' इति स्वतन्त्रो विधिः प्रतीयते । तथा 'ऊर्जं पशूनाप्नोति' इति औदुम्बरव्यापारविषयः पशुकामनियोज्यकः स्वतन्त्र एव विधिः साधीयो भवति इत्येवं स्वतन्त्रसाध्यद्वयप्रतीतिमाश्रित्य अनध्यवसायः प्रतिपादितः । उक्तं च तेनैव 'अत एव न गुणफलसंबन्धोऽयम् आख्यातद्वयावगतस्वतन्त्रसाध्यद्वयविरोधात्' इति । **तदप्ययुक्तम्** । एवमपि गुणफलसंबन्धविधिना एकवाक्यतोपपादनसंभवे तन्निर्वाहाय सिद्धान्ते निरर्थकप्रायस्तुत्यर्थत्वव्युत्पादनस्य आनर्थक्यात् ) ।

**सोम**— आक्षेपिकी **संगतिः** । **प्रयोजनम्**– पूर्वपक्षे औदुम्बरतायाः फलार्थेनानुष्ठानम्, सिद्धान्ते तु क्रत्वर्थेनेति । **सूत्रार्थस्तु**– ऊर्गवरोधफलस्य मानान्तराप्राप्तत्वात् तत्प्रापकमेवेदं वाक्यम्, न तु अर्थवादः, यस्मात् अर्थवादमात्रमनर्थकमिति ।

**वि**–– 'ऊर्जोऽवरुद्धया इत्येष विधिवन्निगदो न किम् । यूपौदुम्बरतां स्तौति स्तौति वा तद्विधित्सया ॥, चतुर्थ्या फलतालाभाद् यूपौदुम्बरताफलम् । ऊर्जोऽवरोधं कथयन् कथं स्तुतिपरो भवेत् ॥, अस्तुतौदुम्बरत्वस्याविधानात् कस्य तत् फलम् । अर्थद्वैधे वाक्यभेदस्तेन स्तावक एव सः ॥'

**गुरुमतेन** तु 'आप्नोतीति विधित्वस्य वादत्वस्याप्यनिर्णयात् । न प्रमा चोदनेत्येत, न्न वादो श्लोकवाक्यतः ॥' इति ।

**भाट्ट**––'औदुम्बरो यूपो भवति, ऊर्ग् वा उदुम्बरः, ऊर्क् पशवः, ऊर्जैवास्मा ऊर्जं पशूनाप्नोति, ऊर्जोऽवरुद्धयै' ( उदुम्बरकाष्ठमयो यूपः कार्यः, वै नूनम् उदुम्बरः ऊर्क् रसमयः, पशवोऽपि दुग्धादिदानात् ऊर्क् रसमयाः । अस्मै यजमानार्थम् ऊर्जा रसमयेन उदुम्बरेण ऊर्जम् रसरूपान् पशून् अध्वर्युः प्राप्नोति । तथा च औदुम्बरो यूपः ऊर्जः रसस्य अवरुद्धयै अवरोधाय प्राप्तये भवति । इति श्रुत्यर्थः । के. ) इत्याद्यर्थवादेषु न स्तुतिलक्षणा, शक्त्यैव पशुरूपफलसंबन्धविधायकत्वेन प्रामाण्योपपत्तेः । पशूनिति द्वितीयया 'ऊर्जोऽवरुद्ध्यै'



इति चतुर्थ्या वा पशूनां साध्यत्वेऽवगते, साधनापेक्षत्वादौदुम्बरत्वं साधनम्, संनिधानादूर्जेति तृतीयाश्रवणाच्च, भवतीत्याख्यातेन च लक्षणया शक्त्यैव वा भावनाऽभिधानात् भूधातोश्च यूपोत्पादकच्छेदनानुवादकत्वात् अप्राप्तार्थकत्वेन च लेट्त्वनिश्चयात् उभयविशिष्टभावनाविधायकत्वोपपत्तिः । **इत्याक्षेपे प्राप्ते**, यूपकर्तृकभावनाऽऽक्षिप्तायां भावनायाम्, यूपस्यैव भाव्यत्वौचित्यात् संनिधानाच्च यूपोद्देशेनैव औदुम्बरत्वविधिः, न तु फलोद्देशेन कामशब्दाद्यभावेन फलत्वस्य तथाऽनुपस्थितेः । किञ्च भवन्मते गुणफलसंबन्धोऽयम् । न चासौ संभवति, आश्रयाभावात् । 'सोमापौष्णं त्रैतमालभेत पशुकामः' ( त्रीणि एतानि शुक्लानि यस्मिन् तम् अजं त्रैतम् ) इति प्रकृतस्य यागस्याश्रयत्वे हि यूपग्रहणानर्थक्यम् । यूपस्य तु अप्रकृतत्वादेव आश्रयत्वानुपपत्तिः । अतिदेशेन तस्योपस्थितिस्तु जुह्वादिपात्रान्तरसाधारणीति तेषामप्याश्रयत्वे तथैव यूपग्रहणानर्थक्यम् । वाक्येनाश्रयदाने च वाक्यभेदः । तस्मात् 'ऊर्ग्वै' इत्यादिरर्थवाद एवौदुम्बरत्वस्येति सिद्धम् ।

**प्रयोजनम्**— यागफलात् फलान्तरकामनायामौदुम्बरो यूपः, इतरथा खादिरः, पूर्वपक्षे । सिद्धान्ते तु औदुम्बर एवेति ।

**मण्डन**–– 'स्तुतिरूर्गवरोधनम् ।'

**शंकर**–– 'नौदुम्बरफलान्वयः ।' ३.

* 'निवीतं मनुष्याणाम्' इति सर्वोऽप्ययम् 'उपव्ययते' इत्यस्य उपवीतविधेः शेषः, न तु स्वतन्त्रो विधिः इति **औदुम्बराधिकरणेनैव** स्थितम् । **भाट्ट.** ३।४।१. * 'एतावता हैनसा विमुक्तो भवति' इति फलार्थवादोऽयं न फलविधिः **औदुम्बराधिकरणात्** । **रत्न.** ४।१।३।३. * **औदुम्बराधिकरणे** ( १।२।२ ) एकवाक्यत्वबलादेव विभक्तिव्यत्ययवर्णनम् । **वाक्यार्थ.** पृ. २०. * औदुम्बराधिकरणे विध्युपयोगः प्रतिपाद्यते । **शा.** १।२।१ पृ. ४ । **सोम**–विधौ सत्येव समीहितसाधनत्वप्रतीतिः इति विध्यभावात् उदुम्बरतायाः ऊर्गवरोधं प्रति साधनत्वं न संभवति इति प्रतिपादितम् । * औदुम्बराधिकरणे समभिव्याहारमात्रकल्प्यस्य साधनत्वस्य निरस्तत्वात् न पूतत्वादीनि प्रति कारणताऽस्ति । **सु.** पृ. ४९०, * औदुम्बराधिकरणे सर्वेषां विधिवन्निगदानां विधित्वस्याशङ्का निरस्ता । पृ. ४८०. * तत्संभविनश्च ( प्रधानविशेषणसंभविनः ) स्तुत्युपयोगित्वं न युज्यते इत्युक्तमौदुम्बराधिकरणे । **वा.** १।४।१।१ पृ. ३२१. * 'निवीतं मनुष्याणाम्' इत्यादेः औदुम्बराधिकरणे फलाय विध्यसंभवात् विध्येकवाक्यत्वसंभवाच्च अर्थवादत्वमास्थितम् । **कु.** ३।४।१।९. * यत्रापि केवलार्थवादश्रवणम्, तत्रापि विधिकल्पनया प्रामाण्योपपत्तिः औदुम्बराधिकरणे वक्ष्यते । **कौ.** १।२।१।७ पृ. २९. * वर्तमानापदेशस्य फलपरत्वानुपपत्त्या अर्थवादत्वस्य औदुम्बराधिकरणे साधितत्वात् । **भाट्ट.** ४।३।१. * विधिप्रत्ययशून्येषु संभवद्विध्यन्तरैकवाक्यत्वेन औदुम्बराधिकरणे विधित्वाशङ्का निरस्ता । **सु.** पृ. ४९२. * सर्वेषां विधिसरूपाणामर्थवादत्वम् औदुम्बराधिकरणे उक्तम् । **सोम.** १।२।२. * इदं चाधिकरणं ( जातेष्टि–वैश्वानर ) **औदुम्बराधिकरणन्यायेन** पुनरुक्तमपि शिष्यशिक्षार्थमुक्तम् इति ध्येयम् । **भाट्ट.** १।४।१२. * **न च** एवमपि 'उपदधाति' इति वर्तमानापदेशतया स्फुटविध्यभावे औदुम्बराधिकरणन्यायेन अर्थवादत एव विधिः कल्पनीयः । इति **वाच्यम्** । **कु.** १।४।१९।२०. * 'यजमानः प्रस्तरः' इति यजमानपदं प्रस्तरादिनामधेयम्, उत औदुम्बराधिकरणन्यायेन गौण्या वृत्त्या अर्थवादः इति विचारः । **कौ.** १।४।१३ पृ. २६८–६९. * **औदुम्बराधिकरणपूर्वपक्षन्यायेन** अत्र ( वैश्वानराधिकरणे ) प्रत्यवस्थानम् इति केचित्, तन्न । **वा.** १।४।११।२१. * **औदुम्बराधिकरणपूर्वपक्षसूत्रन्यायेन** वैकल्पिको यजमानः साधनत्वेन विधीयते प्रस्तरैककपालकार्ये इति पूर्वपक्षः । **कौ.** १।४।१३ पृ. २७२. * गुणवादेन तु 'अदितिर्द्यौरदितिरन्तरिक्षम्' इत्यस्य **औदुम्बराधिकरणवत्** संवादो योजयितव्यः । **वा.** १।२।४।३९. ( अनेन– यस्तु अर्थविप्रतिषेधः शङ्कितः, स गौणत्वात् परिहर्तव्यः इति सूत्रार्थो व्याख्यातः । स्तुतिविषयत्वात् गौणत्वस्य, स्तुतित्वस्य च अर्थवादाधिकरणव्युत्पादितस्यापि औदुम्बराधि-

करण ( –प्रतिपादनेन ) विधित्वशङ्कानिराकरणेन प्रतिष्ठानात् औदुम्बराधिकरणवत् इत्युक्तम् । ( संवादः एकवाक्यता । के. ) सु. पृ. ११०, * **औदुम्बराधिकरणवार्तिकोक्तः** ( वा. १।२।२।२२ पृ. १३६ ) अङ्गावतारन्यायः । पृ. ८५५ । ( अङ्गे अवतारः, तस्य न्यायः रीतिः । अङ्गावतारन्यायो नाम आनर्थक्यतदङ्गन्यायः । के. ) * ऐन्द्राग्नस्य असोमयागकाले एव प्राप्तत्वात् आग्नेयस्य च सोमयागकालविधौ सोमयाजिनः प्रतिषेधापत्तेः अच्युतवाक्यात्रगतसर्वदातनत्वबाधापत्तेः अर्थवादः एवायम् इति **औदुम्बराधिकरणसिद्धम्** । ( अच्युतवाक्यम् – ' आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति ' इति ) । **भाट्ट.** १०।८। १४, * ' यजमानः प्रस्तरः ' इत्यत्र प्रत्यक्षविध्यश्रवणात् ' प्रस्तरम् उत्तरं बर्हिषः सादयति ' ( बर्हिषः उत्तरं प्रस्तरं सादयति ) इति विध्यन्तरैकवाक्यत्वाच्च तदर्थवादत्वम् औदुम्बराधिकरणसिद्धमेव । १।४।१३, * **औदुम्बराधिकरणसिद्धस्याप्यर्थस्य** प्रयुक्तत्वरूपप्रयोजनसूचनार्थं पुनरुक्तिः । ४।३।१. * **औदुम्बराधिकरणसिद्धान्तोपसंहारार्थत्वेन** अस्य सूत्रस्य ( अर्थवादो वा प्रकरणात् ३।४।१।८ ) विधित्वशङ्कानिरासार्थत्वम् । **सु.** पृ. १३५०, * **औदुम्बराधिकरणसिद्धार्थवादत्वाङ्गीकरणेन** तदाक्षिप्तफलविधिप्रतिपादनात् विध्यर्थवादसमुच्चयेन पर्णमय्यधिकरणपूर्वपक्षः । पृ ६९. * **औदुम्बराधिकरणस्थेन** ' विधिश्चानर्थकः क्वचित् ' ( १।२।३ ) इति सूत्रोक्तेन न्यायेन नायम् ( यजमानः प्रस्तरः इति ) गुणविधिः । **कौ.** १।४।१३।२३ पृ २७३, * **औदुम्बराधिकरणोक्तस्याप्यर्थवादत्वस्य,** गुणविधिनामधेयत्वरूपप्रकारद्वयासंभवे उपपादिते वैयर्थ्याशङ्कापरिहारार्थं स्मरणम्, आक्षिप्यसमाधानाद्वा, न पौनरुक्त्यम् ( वैश्वानराधिकरणस्य औदुम्बराधिकरणेन ) । १।४।१२।१७ पृ. २५५.

* **औदुम्बरी** अवभृथदेशे नेतव्या, सा च प्रतिपत्तिः । **भा.** ४।२।८।२०–२२, * **औदुम्बरी** एकेनापि यजमानेन संमिता चेयं सर्वेषां यजमानसंमिता भवति । १२।४।११।३२. * औदुम्बरी यजमानसंमिता नोपरेण सह, किन्तु खातादूर्ध्वम् ( उपरः तक्षणरहितो मूलभागः यः गर्ते स्थाप्यते ) । **संकर्ष.** १।४।८. * औदुम्बरी शाखा ज्योतिष्टोमे सदोमण्डपे निखन्यते । **वि.** १।३।२. * ' औदुम्बरी सर्वा वेष्टयितव्या ' इति स्मृतिः धर्मे प्रमाणं न वेति संदेहे ' औदुम्बरीं स्पृष्ट्वोद्गायेत् ' इति श्रुत्या विरुद्धत्वात् न प्रमाणमिति सिद्धान्तः । **भा.** १।३।२।३. * ' **औदुम्बरीं** दक्षिणेन देशेन वाससा परिवेष्ट्य ब्राह्मणाः समापयत मे यज्ञम् इति संप्रेष्य यजमानः संविशति' सर्वस्वारे क्रतौ आर्भवपवमानकाले । **वि.** १०।२।२३. * ' औदुम्बरीं स्पृष्ट्वा अनपाश्रित्य उद्गातोद्गायेत् ' इति । सदसि औदुम्बरी मध्यमा स्थूणा भवति । तां स्पृष्ट्वा इति ब्रुवन् सदसि गानं दर्शयति । **भा.** ९।२।२।११, * **औदुम्बरीमानशुकस्पर्शानुष्ठानम्** अस्थियज्ञे ( क्त्वाचिन्ता ) । १०।२।१९।५०. * **औदुम्बरीवत्** । यथा सत्रे ' यजमानेन संमितामौदुम्बरीम् ' इति यस्य कस्य चिद् यजमानस्य परिमाणेन सिद्धो यज्ञोऽन्येषामपि सिद्धो भवति, तथा वसिष्ठादीनां नाराशंसकल्पेन सिद्धं सत्रम् अन्येषामपि सिद्धं स्यादिति पूर्वः पक्षः । **के.** ६।६।१।४. * **औदुम्बरीसंमानम्** अस्थियज्ञे कर्तव्यं क्रत्वर्थत्वात् । **भा.** १०।२।१९।५१. * औदुम्बरीसंमानं सत्रे यजमानेन एकेनैव कार्यम्, न सर्वैः, अस्य यजमानसंस्कारत्वाभावात् । **वि.** १२।४।११. * **औदुम्बरीसंमानादिषु** पुरुषोऽपि गुणभूतः श्रूयते । **भा.** ३।१।३।६, * **औदुम्बरीहोमे** 'घृतेन द्यावापृथिवी आपृणेथाम् इत्यन्तरा कर्णौ जुहोति, आमूलादन्ववस्रावयति, भूमिगते स्वाहा करोति ' इति । अत्र स्वाहाकारे सत्यपि सौमिको विध्यन्तो न प्रतिषिध्यते । ( अन्तराकर्णौ कर्णयोर्मध्ये–दुबेळक्यामध्यें ) । ८।४।५।१४–१५.

* **औद्गात्रम्** इति समाख्यया धर्मनियमः । औद्गात्रसंज्ञकं कर्म सामवेदोक्तम् उद्गात्रा कर्तव्यमित्यर्थः । **वि.** ३।३।६. * औद्गात्रं कर्म बहिष्पवमानाज्यपृष्ठादिस्तोत्राणि । ३।७।२३. * औद्गात्रं नाम प्रवचनम्, तथा औद्गात्राणि कर्माणि । औद्गात्रस्य कर्ता अध्येता वा उद्गाता इत्युच्यते । **भा.** ३।५।८।२६.



* **औपगवादिशब्दे** देवदत्तादिविशेषाप्रतीतावपि उपगवपत्यत्वमात्रप्रतीतेरुपपत्तिः । **सु.** पृ. ८२९.

* **औपदेशिकेन** अङ्गेन औपदेशिकस्य अङ्गस्य प्रसङ्गो यथा वैश्यनिमित्तकेन साप्तदश्येन नित्याङ्गस्य पाञ्चदश्यस्य । **बाल.** पृ. १४९, * औपदेशिकेन आतिदेशिकस्य अङ्गप्रसङ्गो यथा दर्शार्थेन प्रयाजादिना निशीष्टयर्थस्य प्रयाजादेः । पृ. १३३, * औपदेशिकेन काम्येन औपदेशिकस्य नित्यस्य प्रसङ्गो यथा प्रतिष्ठाऽर्थेन सामिधेनीनाम् एकविंशतित्वेन नित्यस्य पाञ्चदश्यस्य । पृ. १३३, * औपदेशिकेन काम्येन नैमित्तिकस्य औपदेशिकस्य प्रसङ्गो यथा प्रतिष्ठाऽर्थेन सामीधेनीनाम् एकविंशतित्वेन वैश्यनिमित्तकस्य साप्तदश्यस्य । पृ. १३३, * औपदेशिकेन नैमित्तिकेन अङ्गेन औपदेशिकस्य नित्यस्य प्रसङ्गो यथा वैश्यनिमित्तकसाप्तदश्येन नित्यस्य पाञ्चदश्यस्य । पृ. १३२. * **औपदेशिककालबलात्** आतिदेशिकद्व्यहकालत्वं बाध्यम् । तेन चातुर्मास्यसाकमेधीयेष्टिषु सद्यस्कालत्वमेव । **सोम.** ५।१।११. * **औपदेशिकधेनुदक्षिणया** आतिदेशिककृत्स्नक्रतुदक्षिणाया बाधो भूसंज्ञकैकाहे । **भा.** १०।३।१४।५६–५८, * **औपदेशिकमुख्यक्रमापेक्षया** आतिदेशिकपाठक्रमस्य बलवत्त्वम् । ५।१।१०।१७–१८.

* **औपनिषदः** यावत्संसारभाव्यणुपरिमाणलिङ्गशरीरमिश्रत्वात् आत्मनः मूर्तत्वं वदति । **सु.** पृ. ६१६.

* **औपभृतमाज्यं** जुह्वाम् अर्धं समानेतव्यमन्तिमप्रयाजद्वयार्थम् । **भा.** ४।१।१७।४६–४८, * औपभृतमाज्यं प्रयाजानुयाजोभयार्थम्, जौहवं तु प्रयाजार्थं दर्शपूर्णमासयोः । ४।१।१६।४२–४५, * **औपभृतस्य** आज्यस्य प्रयोजकं प्रयाजार्थं समानयनम् । ४।१।१५। ४०–४१. * औपभृतस्य आज्यस्य प्रयोजकाः अनुयाजाः अन्तिमप्रयाजौ च दर्शपूर्णमासयोः । **वि.** ४।१।१५. * **औपभृते** आज्ये द्वे चतुर्गृहीते एते, न तु एकमेव अष्टगृहीतम् । **भा.** ४।१।१७।४६–४८.

* **औपयजा** अग्नयः पशुभेदेन त्रयः सोमे । **संकर्ष.** ३।२।१६.



* **औपवसथ्ये** अहनि अग्नीषोमप्रणयनोत्तरकालम् उपाकरणादयः पशुधर्माः पठ्यन्ते । **वा.** ३।६।७।१८. * औपवसथ्ये अहनि एव सोमार्थं वरणम्, न तु तस्य सुत्याकाले उत्कर्षः । **संकर्ष.** ३।४।१४. * औपवसथ्ये अहनि दर्शपूर्णमासयोः आरण्यभोजनमाम्नातम्, तत् वृत्त्यर्थम् । **भा.** १२।१।१४।३०. * औपवसथ्ये अहनि पशुत्रयतन्त्रभूतो यूपः संमीयते अग्निष्टोमे । **संकर्ष.** १।४।१९. * औपवसथ्ये अहनि रात्रौ जागरणं दर्शपूर्णमासयोः एकेषां मतेन आम्नातम् । **भा.** १२।१।८। १७. * औपवसथ्ये सुत्यापूर्वदिने अग्नीषोमीयः पशुः अग्नेः सोमस्य च मधुपर्कार्थं क्रियते । **वि.** ५।१।६.

* **औपादानिक**प्रवृत्तिनिषेधे च क्रत्वर्थत्वप्रसक्तिः ' नानृतं वदेत् ' इतिवत् । **ऋजु.** पृ. २९.

**औपाधिकाकाशभेदन्यायः** । यथा औपाधिकाकाशगोचरं ज्ञानं सविशेषणे हि इति न्यायेन उपाधिभेदविषयम्, तथा जीवब्रह्मभेदविषयं प्रत्यक्षादिकं तदुपाधिभेदविषयमित्येवं यत्र विवक्ष्यते, तत्रायं प्रवर्तते । ' घटसंवृत आकाशे नीयमाने यथा पुनः । घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः ॥ ' इति श्रुत्युक्तिश्च ( गौडपादाः ) एतन्न्यायमूलिकेति । **साहस्री.** ४९२.

* **औपानुवाक्यं** काण्डम् । कर्मणि उच्यमानो मन्त्रो वाकः । तद्-व्याख्यानरूपं ब्राह्मणम् अनुवाकः । तत्र एकैकं मन्त्रमाम्नाय तस्यतस्य समीपे पठितम् उपानुवाकम् । तत्संबन्धि काण्डम् औपानुवाक्यम् उच्यते । तृतीयं काण्डं ( तैसं. ) औपानुवाक्यम् इति काण्डानुक्रमण्यामुक्तम् । अनुवाकानां समीपम् उपानुवाकम् । तत्र अन्वेतुं योग्यानामर्थानां प्रतिपादकत्वात् इदं काण्डम् औपानुवाक्यम् । एतत् सर्वम् अनारभ्य आम्नायते । **तैसंसा.** ३।१।१ प्रस्तावे. * **औपानुवाक्ये** काण्डे श्रुतौ अंशवदाभ्यौ ग्रहौ क्रतुशेषौ, चित्रिण्यादयश्च इष्टकाः अग्निचयनशेषाः, न तु तदुभयं सवनचितिशेषम् । **भा.** ५। ३।६।१५–१६, * औपानुवाक्ये काण्डे श्रुताः चित्रिण्यादय इष्टकाः मध्यमायामेव चितौ उपधेयाः, न तु पञ्चम्यां चितौ । ५।३।७।१७–१९, * औपानुवाक्ये काण्डे

श्रुताः चित्रिण्यादय इष्टकाः लोकंपृणायाः प्रागेव उपधेयाः, न तु पश्चात् । ५।३।८।२०.

* **औपानुवाक्यकाण्डाधीना** ये ( मन्त्राः ) तेषां वाक्यादृते संबन्धः एव नास्ति । वा. १।४।१२।२३ पृ. ३६४.

* **औपासनः** अग्निः पार्वणस्थालीपाकादीनाम् आयतनं निर्दिष्टम् । भा. १२।२।१।३, * **औपासनोऽग्निः** सत्स्वपि त्रेताऽग्निषु भवति । यथा राजसूये 'यः कामयेत राष्ट्रमस्य प्रजायै स्यादिति तस्यौपासने प्रतिहितमालभ्य जुहुयात् ' इति । १२।२।१।४.

* **औलुक्यानां** ( काणादानां ) सामान्यविशेषयोः व्यतिरेकैकान्तप्रतिपादनम् । ( व्यतिरेकस्य भेदस्य एकान्तो नियमः । तस्य प्रतिपादनम् ) । सु. पृ. १३१.

* **औशनं** साम ज्योतिष्टोमे माध्यंदिने पवमाने अन्त्यम् 'प्र तु द्रव परिकोशं' इति त्रिष्टुप्सु गीयते । भा. ९।२।६।२५ वर्णकं २.

* **औषधस्य** विधन्तः शतकृष्णले चरौ विशदत्वात् चरुशब्दात् श्रपणश्रुतेश्च । भा. ८।१।१८।३५-३९, * **औषध-आज्य**-सांनाय्यधर्माः न सर्वे सर्वत्र कर्तव्याः, किन्तु यथाविधानं प्रयोजनानुसारेण, दर्शपूर्णमासयोः । ३।१।४।७-१०.

* **औषधद्रव्यकत्वम्** इष्टिप्रकृतिलिङ्गम् । बाल. पृ. ११९.

* **औषधधर्माः** निर्वपणं प्रोक्षणम् अवहननमित्येवमादयः । भा. ३।१।४।७. * **औषधधर्माः** प्रथमम्, तत आज्यधर्माः दर्शपूर्णमासयोः । उपांशुयाजाग्नीषोमीययोः मुख्यक्रमात् कल्प्यमानात् पाठक्रमस्य क्लृप्तस्य बलीयस्त्वात् । के. ५।१।८।१५.

* **औषधधर्मानन्तरमाज्यधर्माः** अध्वरकल्पायाम् । वि. ५।१।१०.

* **औषधविकृतिः** सुरा । भा. ८।२।१।५. * **औषधेडा** आग्नेयादीनामेवाङ्गम्, न सर्वयागाङ्गम् । संकर्ष. ४।३।१६.

* **औष्ण्यव्यवहितेऽप्यग्नौ** दाहकत्वाङ्गीकारात् । अङ्गारजन्यमौष्ण्यं शान्तेष्वपि अङ्गारेषु जले अनुवर्तते । वि. २।१।२.

---

## क.

* '**क ईं स्तवत्** कः पृणात् को यजाते यदुग्रमिन्मघवा विश्वहाऽवेत् । पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः ॥' ( ऋसं. ६।४७।१५ ) इति । ऐश्वर्यवचनत्वात् इन्द्रशब्दस्य सर्वमुत्पादयितुमयमलम् इति ( इन्द्रः ) संस्तूयते । 'क ईं स्तवत् कः पृणात् को यजाते' इति । ऐन्द्रे सूक्ते वचनात् ऐन्द्री ऋक् । क एवं शक्नोति स्तोतुम् । को वा अस्मै ददाति । को वा यजति । इति सर्वत्र अनवक्लृप्तिः । अयमेव सर्वमिदं करोति । यथा गच्छन् कश्चित् पूर्वपादम् अपरं करोति, अपरं च पूर्वम्, एवमयम् इदं सर्वं करोतीति, प्राक् करणादेकः । भा. १०।३।२।१५ पृ. १८७१.

* '**क उ नु ते** महिमनः समस्यासत् पूर्वं ऋषयोऽन्तमापुः । यन्मातरं च पितरं च साकमजनयथास्तन्वः स्वायाः ॥' ( ऋसं. १०।५४।३ ) । 'क उ नु ते महिमनः समस्येत्' इति, कोऽस्य सकलस्य महिम्नः असत् पूर्वेऽपि ऋषयः अन्तं प्राप्तुं शक्नुवन्ति ? यत् मातापितरावपि स्वस्मात् शरीरात् जनयसीति । मातापितृभ्यामपि पूर्वः, किमुत अन्यस्माज्जनात् । इति सिद्धमेकत्वमस्येति । सोऽपि प्राक् सर्वोत्पत्तेः एक एव । अतः इन्द्राभिधायिनी एषा ऋक् । भा. १०।३।२।१५ पृ. १८७२.

⌛ '**कः प्राज्ञो वाञ्छति स्नेहं वेश्यासु सिकतासु च**' इति न्यायः । वेश्यासु स्नेहं सौहार्दम्, सिकतासु च स्नेहं तैलं न कश्चित् लभते इत्यर्थः । साहस्री. ९४८.

* **ककुप्** उष्णिक् । पादेषु अक्षराणि ८।१२।८। उदा० 'शर्धशर्ध व एषाम्' ( ऋसं ५।५३।११ ) । के. * **ककुभोरेव** स्वयोन्युत्तराग्रथनेन संपादितयोः, बृहद्रथंतरयोर्गानं ज्योतिष्टोमे । भा. ९।२।६।२५-२८ वर्णकं १.



* **ककुम्न्यङ्कुशिराः** उष्णिक् । पादेषु अक्षराणि ११।१२।४ उदा० 'ददीरेक्णस्तन्वे' । ( ऋसं. ८।४६।१५ ) । के.

* '**कङ्कचितं** चिन्वीत' इति कङ्काकारतां ( चयनस्य ) ब्रुवन् अग्न्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति । भा. १०।८।११।२६.

⌛ **कच्छपन्यायः** । गुरुणा शिष्ये क्रियमाणस्य षष्ठप्रकारस्य शक्तिपातस्य दृष्टान्तः कच्छपः । श्रीकर. ३।२।५ ब्रसू.

* '**कटुकानि** च सर्वाणि विरसानि तथैव च ।' ( मरीचिः ) श्राद्धे वर्ज्यानि । अयं क्रत्वर्थः गुणविषयकः स्मृतिकल्प्यः प्रतिषेधः । बाल. पृ. ३१.

* **कठः** पुनः इमां केवलां शाखां अध्यापयांबभूव । स बहुशाखाध्यायिनां संनिधौ एकशाखाध्यायी अन्यां शाखामनधीयानः तस्यां प्रकृष्टत्वात् असाधारणत्वात् उपपद्यते विशेषणम् । ( तस्मात् कठशाखा इति वादः ) । भा. १।१।८।३०. * **कठस्य** वैशंपायनान्तेवासित्वात् । सु. पृ. ९८७.

⌛ **कडारान्यायः** यत्र बहुवचनेन आदित्वं ज्ञायते तत्रायं प्रवर्तते । यथा 'कडाराः कर्मधारये' ( पा० २।२।३८ ) इति पाणिनिसूत्रे बहुवचनेन कडारादय इति ज्ञायते, तथा 'निवीतमाप्रष्ठदेशावलम्बं ग्राम्यधर्मेषु' इति निगमपरिशिष्टे दर्शनात् । ग्राम्यधर्मो मैथुनम् । कडारा इतिवद्बहुवचनमाद्यर्थे । साहस्री. ३१४.

⌛ **कण्टकं कण्टकेनैव इति न्यायः** । पादादौ प्रविष्टमेकं कण्टकम् अपरेण दृढेन कण्टकेनैव निःसारयन्ति, तथा एकं कुटिलं शत्रुम् अन्येन तादृशेनैव वशीकृतेन शत्रुणा नाशयन्ति इति न्यायस्य अर्थ उपयोगश्च । संग्रह.

* '**कण्टकैर्वितुदन्ति**' इति श्येने । तत्र उद्गातारो वितोत्स्यन्ति । भा. ३।७।२३।५१.

⌛ **कण्टकन्यायः** । तत्र कण्टकाः प्रसिद्धाः, शत्रवश्च । तत्र प्रथमपक्षे पादप्रविष्टं कण्टकं यथा दृढेन कण्टकान्तरेण निष्कास्य, अनेनापि कालान्तरे पीडा मा भूत् इति तमपि अग्न्यादौ प्रक्षिपन्ति । प्रथमं पादलग्नेन तद्द्वाराय अनुप्रविष्टेन च कृतं व्रणादिकं यथा योग्योपायैरुपशमं नयन्ति । द्वितीयकल्पे च यथा, ये शत्रवः स्वदेशोपद्रवं कुर्वन्ति, तदपेक्षया प्रबलममित्रान्तरं सामदानरूपोपायेन वशीकृत्य तद्द्वारा तान् पराजित्य भेददण्डरूपोपायेन तमपि पराजयन्ते, तैः कृतं प्रजोत्सादनाद्युपद्रवं च स्वस्वस्थाने स्थापनादिना दूरीकुर्वन्ति नीतिनिपुणा नृपाः, तथा प्रकृतेऽपि । अख्याति-आत्मख्याति-असत्ख्याति-अन्यथाख्यातिभेदात् चतुर्विधाः ख्यातयः सन्ति । तत्र अख्याति-असत्ख्याति-आत्मख्यातिवादान् अन्यथाख्यातिवादेन निरस्यन्तः तमपि निराकुर्वन्ति इति । अनिर्वचनीयख्यातौ तैस्तार्किकैः दूषणगणमुद्धरन्ति इति न्यायोदाहरणसंगतिः । साहस्री. २५९.

⌛ **कण्ठचामीकरन्यायः** । चामीकरः नाम कृतस्वराख्यः खनिविशेषः । तत्र भवं सुवर्णं चामीकरम् । यद्वा चमनं चामिः 'इणजादिभ्यः' इति इण् । 'अनाचमेः' आङः अविवक्षितत्वात् वृद्धिः । 'कृदिकारात्' इति ङीष् । चामीं करोति चामीकरम् । तेन सुवर्णेन निर्मितं भूषणमपि चामीकरम् । यथा कण्ठगतं हेमभूषणम् अज्ञानात् अप्राप्तमिव 'कण्ठे तत् पश्य' इत्युपदेशात् ज्ञातं सत् प्राप्तमित्युपचर्यते, तथा प्रत्यगात्मतया ब्रह्मणः प्राप्तत्वेऽपि मायोपहितत्वात् अप्राप्तमिव 'स्वहृदि तत् पश्य' इति गुरूपदेशात् ज्ञातं सत् प्राप्तमिति निश्चीयते । उक्तं च- 'प्रत्यगात्मतया तस्य प्राप्तत्वेऽपि च सर्वदा । कण्ठचामीकरन्यायात् तत्प्राप्तिरुपचर्यते ॥' इति । साहस्री.५.

* **कण्ठबन्धः** ( उपनीतस्य ) प्रायेणाप्राप्त एव । इति अस्ति नियमविधेरवकाशः ( निवीतं मनुष्याणाम् इति ) । वा. ३।४।१।३.

* **कण्डूयनम्** 'कृष्णविषाणया कण्डूयति' इति ज्योतिष्टोमे दीक्षितव्रतम् । पुनश्च श्रुतम् 'नीतासु ( दक्षिणासु ) चात्वाले कृष्णविषाणां प्रास्यति' इति । भा. ११।३।६।१३, * कण्डूयनं कृष्णविषाणया द्वादशाहे, प्रथमाहे दीक्षामारभ्य उत्तमाहे दक्षिणानयनपर्यन्तम् । चात्वाले प्रासनम् उत्तमाहे दक्षिणानयनोत्तरम् । ११।३।६।१३-१४. * कण्डूयनं दक्षिणाप्राक्कालभावि विधीयते 'कृष्णविषाणया कण्डूयते' इत्यनेन सोमे ।

भाट्ट. ४।२।७. * कण्डूयनं दीक्षितेन कृष्णविषाणया कर्तव्यम्, न हस्तेन । कृष्णविषाणाप्रासनोत्तरं हस्तेन इत्यर्थात् । वि. ११।३।६, * कण्डूयनं यथादृष्टप्रयोजनमावर्त्यताम्, मन्त्रस्तु सकृत् पठनीयः । कण्डूयनजन्यनिर्दुःखत्वसंस्कारेण संस्कार्यस्यात्मनः एकत्वात्, न तु प्रत्यङ्गमभ्यस्यमानेऽपि कण्डूयने मन्त्राभ्यासः । ११। ४।१७. * कण्डूयनं विषाणायाः प्रयोजकम्, प्रासनं तु प्रतिपत्तिः । ज्योतिष्टोमे । भा. ४।२।७।१९, * विषाणाकण्डूयनं सर्वस्मिन्नहर्गणे नियम्यते । अन्त्येऽहनि प्रासनं स्यात् । ११।३।६।१४.

☒ कण्डूयने प्रत्यङ्गं कर्मभेदात् । ११।४।१६।५१ ॥

ज्योतिष्टोमे कृष्णविषाणया कण्डूयने ' कृषिं सुसस्यामुत्कृधि ' इति मन्त्र उक्तः । यदा अनेकस्मिन्नङ्गे युगपत् कण्डूतिरुत्पद्यते, तदा किं प्रत्यङ्गं मन्त्रावृत्तिः, उत सकृत् प्रयोगः इति विचारे पूर्वपक्षमाह । कण्डूयने कर्तव्ये प्रत्यङ्गम् अङ्गेअङ्गे कर्मभेदात् कर्मणः कण्डूयनस्य अङ्गभेदेन भेदात् प्रत्यङ्गं मन्त्रस्य आवृत्तिः स्यात् ।

अपिवा चोदनैककालमैककर्म्यं स्यात् । ५२ ॥

सिद्धान्तमाह । न प्रत्यङ्गं कण्डूयने मन्त्रावृत्तिः । एककालम् इति अत्यन्तसंयोगे द्वितीया । एकस्मिन् काले यावत्सु अङ्गेषु कण्डूयनम् उत्पद्यते, तावती एका चोदना स्यात् । तावत्सु चाङ्गेषु अवान्तरभेदेन भिन्नस्यापि कण्डूयनस्य ऐककर्म्यम् एककर्मता स्यात् । ततश्च अङ्गभेदेऽपि सकृदेव मन्त्रः पठनीयः । घटिकाऽर्धघटिकादिकालभेदेन कण्डूयने तु मन्त्रावृत्तिः । के.

☒ कण्डूयनमन्त्रस्य एककाले अङ्गभेदेनापि कण्डूत्पत्तौ सकृत् प्रयोगः ज्योतिष्टोमे ॥

कण्डूयने प्रत्यङ्गं कर्मभेदात् । ११।४।१६।५१ ( ४८ अन्यत्र ) ॥

भाष्यम्— ज्योतिष्टोमे कण्डूयनार्थो मन्त्रः ' कृषिषु स्थामकृषे ' ( ' कृषिं सुसस्यामुत्कृधि ' ) इति । यदा अनेकस्मिन् अङ्गे युगपत् कण्डूरुत्पद्यते, तदा चिन्ता किं प्रत्यङ्गं मन्त्रावृत्तिः, अथवा सकृदेव प्रयोगः इति । किं प्राप्तम् ? प्रत्यङ्गं मन्त्रः इति । कुतः ? कर्मभेदात् । अङ्गेअङ्गे कण्डूयनं कर्म भिन्नम् । यतः पर्यवसानात् गृह्यते विशेषः । तस्मादावृत्तिः । ( अत्र आनन्दाश्रमीये ' कृषिषु स्थामकृष ' इति मुद्रितम् । मैत्रायणीये ( १।२। २।१८ ) ' कृषिं सुसस्यामुत्कृषे ' इति मन्त्रः । मानवश्रौतेऽपि ( २।१।२।११,१३ ) तथा । शास्त्रदीपिकायां तु ' कृष्यै त्वा सुसस्यायै ' इति मन्त्रः । विस्तरे च ' सुपिप्पलाभ्यस्त्वौषधीभ्यः ' इति मन्त्रः । एवं सति भाष्ये ' स्याम् अकृषे ' इति वा ' स्याम् अकृषः ' इति वा छेदः इति संशयः । वयं तु भा-पाठः लेखकप्रमादः इति मत्वा मैत्रायणीयपाठ एव भाष्यसंमत इति मन्यामहे ) ।

अपिवा चोदनैककालमैककर्म्यं स्यात् । ४९ ॥

भाष्यम्— अपिवा नैवं स्यात् । नहि अत्र कण्डूयनं चोद्यते । अर्थात् क्रियते कण्ड्वपनयनार्थम् । किमतः ? यदि नोद्यते, अदृष्टार्थं स्यात् । अप्राप्ते शास्त्रमर्थवदिति । प्रतिप्रयोगं च अदृष्टभेदात् कर्मनानात्वं भवेत्, तथा गृह्येत विशेषः । अथ पुनरर्थगृहीते कण्डूयने यावता उत्पन्ना कण्डूरपनीयते तावच्चिकीर्षितम् । तत्र विशेषो न गृह्यते । ननु यस्याङ्गस्य निष्कर्षणं कृतं तत् संस्कृतम्, अङ्गान्तरे पुनः कर्तव्यम् । उच्यते । नाङ्गनिष्कर्षणार्थोऽयं यत्नः । किं तर्हि ? कण्ड्वपनयनार्थः । सा च कण्डूरात्मनो, न शरीरस्य । तत्र न गृह्यते विशेषः तस्मात् सकृदेव प्रयोगः ।

शा— आत्मानं कण्डूदुःखाक्षिप्तचित्तम् अपनीतकण्डूदुःखं कर्तुं कण्डूयनं क्रियते । तेन यावता दुःखेन अनपनीतेन आत्मनि दुःखं भवति, तावत् सर्वमपनेतुमभिसंधाय कण्डूयनमुपक्रममाणेन प्रयुक्तो मन्त्रः अगृह्यमाणविशेषत्वात् तन्त्रं भवति ।

सोम-- संस्कार्यैक्यात् मन्त्रस्य सकृत् प्रयोगेऽपि इह तद्भेदात् ( संस्कार्यभेदात् ) भेदः, इत्युत्थितेः संगतिः । सूत्रार्थस्तु— कण्डूयने प्रत्यङ्गमावृत्तिः स्यात् कर्मभेदात् इति ।

वि-- ' एककालीनबह्वङ्गकण्ड्वां मन्त्रे भिदा न वा ।, अङ्गभेदान्मन्त्रभेदो, निवृत्त्येकत्वतो न सः ॥ ' कण्डूयने ' सुपिप्पलाभ्यस्त्वौषधीभ्यः ' इत्यादिको मन्त्रो विहितः । १७.



भाट्ट-- कृष्णविषाणाकण्डूयने ' कृष्यै त्वा सुसस्यायै ' इति मन्त्रः । यदि कालभेदेन कण्डूयनम्, तदा स्मृतिविच्छेदान्मन्त्रावृत्तिरविवादैव । यदा तु एककाले एवानेकाङ्गविषयं कण्डूयनम्, तदा स्मृत्यविच्छेदादनावृत्तिः । न च तदाऽपि त्वापदयुक्तत्वात् निर्वापमन्त्रन्यायेन ( ११।४।१४ ) तत्तदङ्गभेदेनावृत्तिः, अङ्गानामुपयुक्तत्वाभावेनासंस्कार्यत्वात् त्वापदेन तन्निर्देशानुपपत्तेः । अत एव तत्तदङ्गभेदेन तत्तत्कण्डूभेदात् तज्जन्यदुःखभेदेन तद्ध्वंसरूपकार्यभेदेऽपि न मन्त्रावृत्तिः । त्वापदनिर्देशस्त्वात्मनः ( निर्देशस्तु आत्मनः ) एव कण्डूजनितचित्तविक्षेपनिवृत्तिद्वारा संस्कार्यत्वात् तस्य चैकत्वेन निर्वापन्यायानुपपत्तेः ।

मण्डन— ' सकृत् कण्डूयने मन्त्रः । ' १७.

शंकर-- ' सकृत् कण्ड्वां सकृन्मन्त्रः । ' १७.

* ' कण्डूरं श्वेतवृन्ताकं कूष्माण्डं च विवर्जयेत् ।' इत्यत्र सामान्यप्रतिषिद्धस्य वृन्ताकस्य उपसंहाररूपः क्रत्वर्थः प्रतिषेधः । बाल. पृ. ३४.

* कण्वकश्यपसंकृतीनां नाराशंसो द्वितीयः प्रयाजः । भा. ६।६।१।१.

* कण्वरथंतरं बृहद्रथंतरोभयविकारः इत्युक्तम् ( ९।२।१६।४८ ) । भा. १०।४।१२।४३, * प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकालाभ्यासस्य कण्वरथंतरम् इत्याख्या भवति । तस्मात् योनिरपि विशेषणम् । तदयुक्तम् । १०।४।२२।४४.

☒ कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य ' पुनानः सोम धारया ' इति स्वयोनौ एव गानम् ॥

पृष्ठार्थेऽन्यद् रथंतरात्, तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् । १०।४।२२।४३ ॥

भाष्यम्— अस्ति वैश्यस्तोमः ' वैश्यः वैश्यस्तोमेन यजेत ' इति । तत्र श्रूयते ' कण्वरथंतरं पृष्ठं भवति ' इति । उभयविकारः कण्वरथंतरम् इत्युक्तम् ' अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् ' इति (९।२।१६।४७) । तत्र संशयः किं रथंतरयोनौ बृहद्योनौ वा अनियमेन कण्वरथंतरं गेयम्, उत रथंतरयोनौ, अथवा स्वयोनाविति । किं प्राप्तम् ? चोदकेन अनियमः, लाघवं हि तथा भवति । ततः प्रयोगप्रादुर्भावः । एवं प्राप्ते, ब्रूमः । पृष्ठार्थे यदेतत् अन्यत् रथंतरात् कण्वरथंतरं श्रूयते, तत् रथंतरयोनौ स्यात् । ज्योतिष्टोमपूर्वको हि वैश्यस्तोमः । ज्योतिष्टोमे रथंतरयोनौ पृष्ठं कृतम् । ननु बृहद्योनावपि तत्र कृतम् । नैवम्, ऋचां प्रविभक्तत्वात् । ऋचां प्रविभागः इह गम्यते । यथा रथंतरयोनिर्भवतीति । कुतः ? कण्वरथंतरे रथंतरशब्दः श्रूयते, तेन गम्यते रथंतरविशेषः कण्वरथंतरमिति । अर्थान्तरे कण्वरथंतरशब्दो भवेत्, यदि रथंतरधर्माः न भवेयुः । तेषु सत्सु यूपवदुपपद्यते । यथा ' औदुम्बरो यूपो भवति ' इति । नहि उदुम्बरो यूपद्रव्यं प्रकृतौ संकीर्तितम् । धर्मनिमित्तस्तु अयं शब्द उपपद्यते । एवमिहापि धर्मनिमित्तः कण्वरथंतरे रथंतरशब्दो भवति, नान्यथेति ।

स्वयोनौ वा, सर्वाख्यत्वात् । ४४ ॥

भाष्यम्— न चैतदस्ति रथंतरयोनौ गीयेतेति । किं तर्हि ? स्वयोनौ । कुतः ? सर्वाख्यत्वात् । सर्वविशेषणविशिष्टस्य हि रथंतरशब्दो वाचकः । प्रस्ताव–उद्गीथ–प्रतिहार–उपद्रव–निधनवतः सर्वस्य सस्तोभ–स्वर–काल–अभ्यासस्य कण्वरथंतरम् इत्याख्या भवति । तस्मात् योनिरपि विशेषणम् । अपिच अर्थान्तरे कण्वरथंतरे रथंतरशब्दः कल्प्यः स्यात् । तस्मात् स्वयोनौ गेयमिति ।

टुप्-- भाष्यकारेण यदिदं व्याख्यानं कृतं ' प्रस्तावोद्गीथादौ कण्वरथंतरशब्दः ' इति, तदयुक्तम् । ' गीतिषु सामाख्या ' ( २।१।११।३६ ) इति कण्वरथंतरशब्देन साम उच्यते, न ऋक् । प्रकृतौ च ऋगक्षराणि संस्कुर्वती रथंतरगीतिः पृष्ठस्य साधनभावेन अवगता । एवं बृहद्गीतिरपि । इह तु बृहद्रथंतरानुवादेन अन्यत् गीत्यन्तरं विधीयते पृष्ठसाधनत्वेन । तस्मात् गीतिः गीतेरेव कार्ये ( अक्षराभिव्यक्तौ ) वर्तते, न ऋक्कार्ये ( अक्षमत्वात् ) । ऋक् च ( चोदकेन ) प्राकृती प्राप्नोति । सा ( विकारेण ) न बाधितव्या ( सा हि प्रकृतौ क्रमप्रकरणाभ्याम् ) अङ्गभूता । वाक्यस्य तावत् अयमर्थः । ( यदुत साममात्राभ्यासकरणम् । तेन शब्दतस्तावत् न ऋचो बाधः ) । न च पदार्थसामर्थ्यात्

( चोदकप्राप्तायाः ) ऋचो बाधः । [ सोऽयं पाठः लिखितयोः टुप्तन्त्ररत्नयोः । आनन्दाश्रमीये तु 'वाक्यस्य तावत् अपदार्थः । न च अपदार्थसामर्थ्यात् चोदकप्राप्ताया ऋचो बाधः ' इति पाठः । स च न युक्तः ] यथा धेनुशब्देन छागशब्दस्य । धेनुशब्दो ( हि ) गोद्रव्यमन्तरेण नैव दृष्टः प्रयुज्यमानः । कण्वरथंतरगीतिस्तु ऋगन्तरेऽपि दृष्टैव प्रयुज्यमाना । ( अन्यथा उत्तरयोर्गीत्यनुपपत्तेः ) न च गौणी सा ( गीतिः ) अन्यत्र प्रयुज्यमाना ( प्रमाणाभावात् ) । तस्मात् चोदकेन ऋक् प्राप्नोतीति । ( नैवं सिद्धान्तयितुं शक्यते । किंतु वैश्यस्तोमप्रकरणे कण्वरथंतरयोनिः पठिता उत्तराग्रन्थे । तस्मात् तया प्रकरणप्राप्तया प्राकृती बाध्यते इत्येवं च व्यक्तम् । तस्मात् स्वयोनौ गेयम् । )

**के**— बृहतो योनिः 'त्वामिद्धि' इति, रथंतरस्य योनिः 'अभि त्वा शूर' इति, कण्वरथंतरस्य योनिस्तु 'पुनानः सोम धारया' इति ( साम. ५११, ६७५ ) ।

**यूपवदिति चेत् । ४५ ॥**

**भाष्यम्**— इति चेत्पश्यसि स्वयोनौ गेयमिति, रथंतरशब्दस्तेन उपपद्यते । स हि रथंतरधर्मेषु सत्सु यूपवदुपपद्यते इति ।

**न, कर्मसंयोगात् । ४६ ॥**

**भाष्यम्**—नैतदेवम् । कर्मसंयोगात् काष्ठस्य यूपता । नहि लोके यूप इति संज्ञातः कश्चित् वृक्षोऽस्ति । यत्र ते संस्काराः, स यूपः । तस्मात् 'औदुम्बरो यूपो भवति' इति संस्कारनिमित्तः । इह पुनरेवंविशेषणविशिष्टः कण्वरथंतरशब्दो लोके एवास्ति । नासौ कण्वानां रथंतरं कण्वरथंतरमित्येवं कृत्वा उच्यते । रथंतरत्वे कण्वसंबन्धे वा अस्य विधीयमाने वाक्यभेदः प्रसज्येत । तस्मात् सांविज्ञायिकः ( रूढः ) कण्वरथंतरशब्दः । अत एव स्वयोनौ गीयते ।

**सोम**— यथा वायव्यादौ प्राकृती मनोता, तथेहापि प्राकृत्य एवः ऋचः इत्युत्थानात् **संगतिः । सूत्रार्थस्तु**— पृष्ठार्थे यदन्यत् रथंतरात् विहितम्, तत् साम रथंतरयोनिकं स्यात्, वैश्यस्तोमस्य ( ताण्ड्य. १८।४ ) ज्योतिष्टोमविकारत्वात् तत्र बृहद्योनिसद्भावेऽपि इह ऋचां विभक्तत्वात् कण्वरथंतरावयवरथंतरशब्देन विभागेन रथंतरयोनेरेव प्राप्तेः इति । २३.

**वि**— 'बृहद्रथंतरैकीययोनौ कण्वरथंतरम् । रथंतरस्यैव योनौ किं स्वयोनावुता, भ्रिमः ॥ चोदकस्याविशेषेण द्वितीयो नामसाम्यतः । , अनङ्गत्वान्नातिदेशः स्वयोनौ पठितत्वतः ॥ ' २४.

**भाट्ट**— वैश्यस्तोमे 'कण्वरथंतरं पृष्ठं भवति' इति श्रुतम् । तच्च यद्यपि ज्योतिष्टोमे बहूनि पृष्ठस्तोत्राणि, तथापि होतुः पृष्ठे एव विधीयते इति वक्ष्यते । अतश्च तत्पृष्ठसाधनीभूतबृहद्रथंतरयोन्योरेव अनियमेन गेयम्, उत रथंतरयोनावेव, उत स्वयोनौ । ततश्च प्राकृतयोनिबाधः, इति चिन्तायाम्, साममात्रोपदेशेन तदाश्रयभूताया अपि तदङ्गभूतायाः ऋचो वैश्यस्तोमाङ्गत्वे प्रमाणाभावात् अतिदेशप्राप्तऋग्बाधानुपपत्तेः कौत्सादेरिव अस्यापि बृहद्योनौ रथंतरयोनौ वा गानम्, अथवा कण्वानां रथंतरमिव रथंतरमित्येवम् अरथंतरेऽस्मिन् सामनि रथंतरशब्दो रथंतरकार्यापन्नत्वप्राप्त्यर्थः इति तत्कार्यऋगक्षराभिव्यक्त्यर्थत्वावगतेः तद्योनावेव गेयम् । इति प्राप्ते, न तावत् कण्वानां रथंतरमित्येवं यौगिकः कण्वरथंतरशब्दः, कण्वसंबन्धे प्रामाणाभावेन अश्वकर्णादिवत् रूढेरावश्यकत्वात् । नापि कौत्सादिवत् प्राकृतर्क्षु गानम् । कौत्सादिकं हि अनारभ्य स्वयोनौ पठितं वचनेन तत्तत्क्रतौ अङ्गत्वेन विहितमपि तदाश्रयभूताया ऋचः क्रतुप्रकरणे पाठाभावेन क्रत्वङ्गत्वानवगतेः अतिदेशप्राप्तऋग्बाधायोगे तावत्स्वेव गानम् । तदाश्रयभूताया ऋचस्तु वाचःस्तोमादौ निवेशादर्थवत्ता । कौत्सादेः प्राकृतगायत्र्यादिष्वेव आवापविधानादप्येवम् । प्रकृते तु वैश्यस्तोमक्रमे कण्वरथंतरयोनेः तदुत्तरयोश्च उत्तराग्रन्थे पाठात् तासामपि वैश्यस्तोमाङ्गत्वावगतेः औपदेशिकर्ग्भिः (क ऋ) आतिदेशिकर्चां बाधात् स्वयोनावेव गेयम्, तदुत्तरयोश्च पाठस्याविशेषात् । उत्तराग्रन्थे हि तत्तद्योनौ पठितस्यापि साम्नः तत्र क्रतुक्रमेण योनिरुत्तरे च पठ्यन्ते । तासां च पाठादेव तत्तत्क्रत्वङ्गत्वम् । अतस्तदनुरोधेन तास्वेव गानम् । एवं विश्वजिदादावपि षाडहिकसाम्नां वाचनिके सर्वपृष्ठशब्देन विधौ पाठबलादेव ऋगन्तराधिकरणत्वम्, तदभावे तु



प्राकृतऋगधिकरणकत्वमेव । ( भाष्ये अधिकरणयोर्भेदः । अत्र तु ऐकाधिकरण्यं स्वीकृतम् । के. )

**मण्डन**— 'स्वयोनौ साम कण्वाख्यम् । ' २५. कण्वाख्यं कण्वरथंतराख्यम् ।

**शंकर**— 'कण्वादिसाम्नि स्वा योनिः । ' २५.

**§ कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्रसाधनतया विहितस्य स्वोत्तरायामेव 'दुहान ऊधर्दिव्यम्' इत्यस्यामेव गानम् ॥**

**कार्यत्वादुत्तरयोर्यथाप्रकृति । १०।४।२३।४७ ॥**

**भाष्यम्**— कण्वरथंतरे एव भवति संशयः । 'उत्तरयोर्गायति' इति किं रथंतरयोन्युत्तरयोः, बृहद्योन्युत्तरयोर्वा गेयम्, उत स्वयोन्युत्तरयोरिति । किं प्राप्तम् ? बृहद्योन्युत्तरयोर्वा रथंतरयोन्युत्तरयोर्वेति । कुतः ? चोदकानुग्रहात् । न तत्रैष दोषो भवति, स्वयोनिविशिष्टं कण्वरथंतरमिति । उत्तरयोर्हि यत् कार्यम्, तत्र स्वयोनिरवश्यं ज्ञातव्या भवति । तस्मात् प्रकरणमपेक्षितव्यमिति ।

**समानदेवते वा, तृचस्याविभागात् । ४८ ॥**

**भाष्यम्**— न चैतदस्ति, बृहद्योन्युत्तरयोः, रथंतरयोन्युत्तरयोर्वा गेयमिति । किं तर्हि ? स्वयोन्युत्तरयोः । कुतः ? तृचशब्दात् । समानच्छन्दसि समानदेवताके च अविशेषितस्तृचशब्दो भवतीत्युक्तम् । अतः श्रुत्या चोदको बाध्यते, इति स्वयोन्युत्तरयोर्गेयमिति ।

**सोम**— यथा उत्तराग्रन्थे पठितयोरपि स्वयोन्युत्तरयोः अगानम्, एवं पठितायामपि स्वयोनौ (स्वोत्तरायाम्) न गानमिति पूर्वाधिकरणाक्षेपेणोत्थानात् **संगतिः । सूत्रार्थस्तु**— कण्वरथंतरस्य स्वयोन्युत्तरयोरपि कार्यत्वात् आम्नानसिद्धत्वाभावेन पुरुषकृतिसंपाद्यत्वात् यथाप्रकृत्येव उत्तरे ग्राह्ये इति ।

**वि** — 'संदेहनिर्णयौ पूर्ववदेवोत्तरयोर्ऋचोः । योनित्यागः समश्चेन्न तृचशब्देन बाधनात् ॥ ' २५.

**भाट्टे** तु इदमधिकरणं पूर्वाधिकरणे एव समावेशितम् ।

**मण्डन**— 'स्वयोन्युत्तरयोश्च तत् । ' २६.

**शंकर**— 'तत्र स्वे एव चोत्तरे । ' २६.

**§ कण्वरथंतरे अविरुद्धानां बृहद्रथंतरधर्माणां समुच्चयः वैश्यस्तोमे ॥**

**अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् । ९।२।१६।४८ ॥**

**भाष्यम्**— अस्ति वैश्यस्तोमः 'वैश्यो वैश्यस्तोमेन यजेत' इति । तत्रेदमाम्नायते 'कण्वरथंतरं पृष्ठं भवति' इति । तत्रायमर्थः सांशयिकः, किं कण्वरथंतरे अन्यतरस्य रथंतरस्य बृहतो वा धर्माः कर्तव्याः, उतोभयोरपीति । किं प्राप्तम् ? अन्यतरस्येति । कुतः ? एवं ह्युक्तम् । रथंतरस्य राथंतरा भवन्ति बृहतो बृहद्धर्माः, निर्देशसामर्थ्यादिति । तद्विशेषे अनुच्यमाने यावदुक्तं तावत् प्राप्तमिति । तस्मादन्यतरस्य धर्माः कर्तव्या इति । **एवं प्राप्ते, ब्रूमः** । अप्राकृते कण्वरथंतरं तद्विकारात् । यस्मात् कण्वरथंतरमुभयोः कार्ये वर्तते, तस्मादुभयधर्मान् लभेत । नहि विकृतौ निर्देशोऽस्ति यथा प्रकृतौ । अर्थापत्तित इह धर्मा भवन्ति, न चोदकेन । कण्वरथंतरमुभयोरर्थापन्नम् । तस्मादुभयधर्मान् लभेत । ये तु विरुद्धा धर्माः, तद्यथा उच्चैर्गेयं बलवद्गेयमित्येवंजातीयकाः, विरोधात् व्यवतिष्ठेरन् । अविरुद्धेषु समुच्चयः ।

**टुप्**— द्वेधा कर्मणां प्राप्तिः चोदकेन अर्थापत्त्या च । कण्वरथंतरं च उभयोः कार्यापन्नम् । अत उभयधर्मग्राहकम् । '**अर्थापत्तितः इह धर्मा भवन्ति, न चोदकेन**' इति ( भाष्यं ) कार्यापत्तिम् (अर्थापत्तिरूपाम्) आह । **तदेतदयुक्तम्** । कथम् ? बृहद्रथंतरयोः अग्निष्टोमे समुच्चयः । किमतः ? एतदतो भवति, यद्यपि अग्निष्टोमस्य बृहद्रथंतरे पृष्ठसाधनत्वेनावगते, तथापि तयोर्वैकल्पिकत्वात् एकस्यैवेदं कण्वरथंतरमापद्यते । एवं चेत् एकस्यैव धर्मान् ग्रहीष्यतीति ।

**शा**— वैश्यस्तोमे श्रूयते 'कण्वरथंतरं पृष्ठं भवति' ( ताण्ड्य. १८।४।७ ) इति । तत्र संशयः किं कण्वरथंतरं बृहद्रथंतरयोः स्थानापन्नं कार्यप्रयुक्तान् रथंतरधर्मान् बृहद्धर्मांश्च गृह्णत् विकल्पेन गृह्णाति, उत समुच्चयेनेति । '**विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात् । मिथोऽनपेक्षैस्तैर्धर्मैः प्रकृतौ साधिता स्तुतिः ॥**' उच्यते । '**पृथङ्निर्देशसार्थक्याद्**

व्यवस्था प्रकृतौ कृता । इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते ॥ ' तच्च द्वयोरपि कार्यं कुर्वत् धर्मानपि द्वयोः समुच्चयेन गृह्णाति इति **भाष्यकारः** । **वार्तिककारस्तु** विकल्पमेव मन्यते ।

**सोम**— प्रकृताविव न समुच्चयः इत्युत्थानात् प्रत्युदाहरणसंगतिः । **सूत्रार्थस्तु ( भाष्यमते- )** अप्राकृते कण्वरथंतरे तद्विकारत्वात् बृहद्रथंतरोभयविकारत्वात् उभयस्थानापन्नत्वात् उभयधर्माः स्युः । विरुद्धास्तु ये धर्माः, ते विरोधात् समुच्चयासंभवेन व्यवतिष्ठेरन् इति ; **वार्तिककारपक्षे**, वैश्यस्तोमस्य ज्योतिष्टोमविकारत्वात् यथाप्रकृति स्तुतिद्वयविकल्पे, तद्धर्मा अपि विकल्पेरन् ' बृहति उच्चैर्गेयम् ' ' रथंतरे नीचैः ' इत्यादिधर्माणां विरोधात् इति ।

**वि**— ' तयोर्धर्माः समुच्चेया न वा कण्वरथंतरे । , द्विस्थानत्वाद् भाष्य ( भाष्ये ) आद्यो विरोधाद् वार्तिकेऽन्तिमः ॥ '

**भाट्ट**— वैश्यस्तोमे ' कण्वरथंतरं पृष्ठं भवति ' इति श्रुतम् । तच्च प्रकृतौ बृहद्रथंतरयोरेव पृष्ठशब्दसामानाधिकरण्यात् पृष्ठपदसमानाधिकरणसामत्वसादृश्येन हेतुः पृष्ठे एव निविशते , न तु मैत्रावरुणादिपृष्ठेषु इति तत्रैव **कौस्तुभे** स्पष्टम् । अतश्च बृहद्रथंतरविकारत्वात् तद्धर्मप्राप्तिरपि पूर्वाधिकरणोक्तरीत्या अविवादैव । सा च किं समुच्चयेनोभयधर्मप्राप्तिः, उत विकल्पेनेति चिन्तायाम्, स्तोत्रद्वयजनकविजातीयसंस्कारसमूहयोः प्रकृतौ तत्तदृक्सामादिसामग्रीभेदेन विकल्पेनोत्पत्तावपि वैश्यस्तोमे कण्वरथंतरतदाश्रयभूतऋगादिरूपसामग्र्यैक्येन एकस्मिन्नेव सप्तदशसंख्याकसंस्कारसमूहे तज्जन्यगुणाभिधानसमूहालम्बने वा वैजात्यद्वयाभिव्यक्तौ बाधकाभावात् प्रयोजकद्वयसत्त्वेन अविरुद्धसंमीलनादिधर्माणां समुच्चयः, विरुद्धोच्चैष्ट्वादीनां तु विकल्पः । **इति प्राप्ते , भाष्यकारेण** तावदिष्टापत्त्यैव समाहितम् । **वार्तिककारस्तु**— पृष्ठद्वयजन्यापूर्वस्य एकजातीयत्वेन अतिदेशेन इह प्राप्तौ तत्साधनत्वेन विकल्पेनैव पृष्ठस्तोत्रद्वयस्य तत्साधनीभूतसंस्कारसमूहद्वयस्य च प्राप्तेः तादृशसाधनत्वेनैव चोपदिष्टयोः कण्वरथंतरादिसामतदृचोर्विकल्पेनैव तज्जनकत्वम् । न च सामग्रीवशात् वैजात्यद्वयावच्छिन्नोत्पत्तिः, निमीलनादेरपि सामग्रीत्वसंपादकतया ऋक्साममात्रस्य तदभावात् । न च संमीलनादेरपि समुच्चयः, संमीलनादिसमुच्चये सामग्रीसत्त्वात् वैजात्यद्वयावच्छिन्नोत्पत्तिः, तदुत्पत्तौ च प्रयोजकसत्त्वात् संमीलनादिसमुच्चयः इति इतरेतराश्रयात् एकव्यक्तौ जातिद्वयाङ्गीकारे साङ्कर्यप्रसङ्गाच्च । अतः संमीलनादीनामैच्छिको विकल्प एवेति ।

**मण्डन**— ' कण्वरथंतरे सर्वे ( धर्माः ) । ' ( भाष्यमते ) । २३.

**शंकर**— ' कण्वादौ तद्विकल्पनम् । ' ( वार्तिकमते ) । २७.

* **कण्वरथंतरे** रथंतरधर्मान् निराकरिष्यति । ( १०।४।२२।४४-४७ ) । **वा.** ३।३।६।१३. * **कण्वरथंतरशब्दः** लोके एवास्ति । नासौ कण्वानां रथंतरं कण्वरथंतरम् इत्येवं कृत्वोच्यते । तस्मात् सांविज्ञायिकः (रूढः) कण्वरथंतरशब्दः । **भा.** १०।४।२२।४६. वस्तुतस्तु कण्वरथंतरगानस्य कण्वः ऋषिः, इति कण्वरथंतरम् इत्युच्यते । **आर्षेयब्राह्मणे** स्पष्टमिदम् । **के.** * ' गीतिषु सामाख्या ' ( २।१।११।३६ ) इति **कण्वरथंतरशब्देन** सामोच्यते , न ऋक् । कण्वरथंतरगीतिस्तु ऋगन्तरेऽपि दृष्टैव प्रयुज्यमाना । **वा.** * **कण्वरथंतरशब्दस्य यौगिकत्वे** सति अरथंतरे रथंतरशब्दस्य वत्यर्थकल्पनया शब्दोक्तात् सादृश्यात् प्रवृत्तेः, सादृश्यस्य च धर्मसामान्यलक्षणत्वात् रथंतरधर्मातिदेशकत्वं स्यात्, रूढित्वात्तु शब्दसादृश्येन रथंतरशब्दोपस्थापनद्वारा रथंतरोपस्थापनेऽपि शब्दसादृश्यस्य प्रत्यक्षस्य गम्यत्वेन शाब्दत्वात् तद्द्वारेण रथंतरोपस्थापने शब्दस्य अव्यापारात् नातिदेशकता युक्ता । **सु.** पृ. १२०२. * नहि **कण्वरथंतरावयवो** रथंतरमिति निश्चीयते । **वा.** २।२।८।२२ पृ. ५३१.

**कतकरजोन्यायः** । यथा कतकबीजं जलस्थं मलं नीत्वा स्वयमपि अधस्तात् गच्छति एवं ब्रह्माकारवृत्तिः प्रपञ्चं निवर्तयित्वा स्वयमपि निवृत्ता भवति इति । **आत्मबोधः** ।



* तत्त्वज्ञानोत्पत्तिद्वितीयक्षणे तत्त्वज्ञानादिसर्वदृश्यनाशोत्पादात् । **चन्द्रिका.** पृ. ३, दृश्यत्वाविशेषात् **कतकरजोन्यायेन**—**विट्ठलेशी.** * यथा कतकबीजं ( निवळीच्या बिया ) रजःकलुषिते जले प्रक्षिप्तं जलगतं सकलं रजो विलापयत् स्वयमपि विलीयमानं सलिलमनाविलं करोति । तथा यथोक्तविवेकबुद्धिवृत्तिरपि परे प्रत्यगात्मनि संसिद्धा तद्गतसकलविशेषमुन्मूलयन्ती स्वयमपि उन्मूलिता प्रत्यगात्मानं निरस्तसमस्तविशेषम् अनाविलमापादयति । **उपदेशसाहस्री.** पद्य. १२।१४ रामतीर्थ. * वेदान्तवाक्यजन्यचरमचित्तवृत्तेः कतकरजोन्यायेन स्वपरबाधकतया अनवस्थाया अभावात् । **अद्वैत.** ४९९.

* **कल्पयग्रीवं** नाम साम अनृकम् । **बाल.** पृ ७२.

* ' **कथम्** ' इत्याकाङ्क्षायां यत्र संनिधौ आम्नानं निराकाङ्क्षीकरणक्षमम्, तत्र तेनैव निराकाङ्क्षत्वात् भवति कृत्स्नविधानता । इह च ( सोमे ) संनिपत्योपकारकाः सर्वे आम्नायमाना निराकाङ्क्षीकरणसमर्थाः । उपहोमादिषु संनिपत्योपकाराभावात् कृत्स्नविधानता नास्ति । तस्मात् तत्र आकाङ्क्षा न संनिवर्तते । **टुप्.** ८।१।३।५. * **कथम्भावः** अनुत्पन्ने कर्मणि न भवति । **वा.** २।२।७।२१ पृ. ५२५. * कथम्भाव: सर्वः उपकारमाकाङ्क्षति । तमुपकारं चोदकः सादृश्येनोत्पादयति प्रापयति च । उत्पादितं प्रापितं च प्रयोगवचनः उपसंगृह्णाति । ते चोपकाराः शास्त्राण्यन्तरेण न संभवन्ति इति शास्त्राणामुत्पत्तिं प्राप्तिं च करोति । **टुप्.** १२।१।१।४. * ' कथम्भावो हि भावानां यावदाख्यातमिष्यते । न तस्य प्रतिबन्धोऽस्ति महाप्रकरणादिभिः ॥ नान्यप्रकरणापत्तिः संस्कारो वा विहन्ति तम् । ' **वा.** ३।१।११।२१ पृ. ७३२. । **सुधा**— महाप्रकरणावगतप्रधानभावनाऽङ्गत्वोपपादकत्वात् प्रधानानुग्रहकरणस्य न महाप्रकरणावगतेन अङ्गत्वेन कथम्भावः प्रतिबध्यते इत्यर्थः । पृ. १०५४. * **कथम्भावैः** ' नावान्तरक्रियायोगाद् ऋते वाक्योपकल्पितात् । गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥ ' **वा.** १।४।२।३ पृ. ३३१, * **कथम्भावस्य** (प्रकरणस्य) इत्थम्भावात् (इतिकर्तव्यतारूपात्) अन्येनासंबन्धात् । ३।४।५।१५ पृ. ९४६. * कथम्भावस्य प्रकारविशेषाकाङ्क्षात्मकत्वम् । **सु.** पृ. ७७७. * **कथम्भाव–देशसामान्य–यौगिकरूपाणां** प्रकरण–क्रम– समाख्यानविवेकः सुज्ञान एव । **वा.** ३।३।७।१४ पृ. ८२६. * **कथम्भावाकाङ्क्षा** नाम करणगतप्रकाराकाङ्क्षा । सामान्यस्य भेदको विशेषः प्रकारः । करणगतक्रियाविशेषाकाङ्क्षा कथम्भावाकाङ्क्षा । **मीन्या.** * **कथम्भावाकाङ्क्षयैव** उपकारपृष्ठभावेन गृह्यमाणाः पदार्था गृह्यन्ते । **मीन्या.** * **कथम्भावाकाङ्क्षायामुत्पन्नायाम्** अङ्गसंबन्धः । स च कथम्भावो यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति, तस्मिन्नेव अनुयाजादीन्यपि । न च भिन्नः कथम्भावः, येन भिन्नानि संबध्येरन् । **टुप्.** ११।१।२।६ पृ. २१०५. * **कथम्भावाकाङ्क्षागृहीतस्य** इतिकर्तव्यतात्वम् । **मीन्या.** * **कथम्भावात्मकं** प्रकरणं ऋतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमाने अत्यन्तं बाधितं भवति । **वा.** २।४।१।१ पृ. ६२४, * **कथम्भावात्मकस्य** प्रकरणस्य फलसंबन्धोत्तरकालत्वेन प्रयोगवाक्याधीनप्रसूतत्वात् । २।२।५।१५ पृ. ४९९. * कथम्भावात्मकस्य प्रकरणस्य वाक्यैकवाक्यत्वकल्पनेन तादर्थ्यबोधकत्वात् । **सु.** पृ. ९११.

**कदम्बमुकुलन्यायः** । कदम्बो वृक्षविशेषः, तस्य मुकुलः ईषद्विकसितपुष्पं कलिकेति यावत् ' कुड्मलो मुकुलोऽस्त्रियाम् ' इत्यमरः । तद्यथा **गोलाकारकदम्बपुष्पस्य गोलके** यथा सर्वावयवेषु युगपत्पुष्पाणामुत्पत्तिः, एवं शब्दस्यापि । अपि चोक्तम्– ' कदम्बमुकुलन्यायादुत्पत्तिः कस्य चिन्मते ' इति । **साहस्री.** २२९ । कदम्बवृक्षस्य कुड्मलं प्रथमवृष्टिपाते सर्वतः दशसु दिक्षु अपि सहसा विकसति तद्वत् एकस्मात् प्रथमोत्पन्नात् शब्दात् सर्वदिक्कानि दीर्घदीर्घाणि शब्दवर्तुलानि उत्पद्यन्ते । **के.**

* वीचीतरङ्गन्यायेन **कदम्बमुकुलन्यायेन** वा तार्किकाणां शब्दगुणकस्य इन्द्रियसंनिकर्षो बोध्यः । **कु.** १।१।६।१५.

* कदरः खदिरस्य यूपादौ प्रतिनिधिः । ' कदरः खदिरे सिते ' इत्यमरः । **वि.** ६।३।१७-२०.

⧗ **'कदर्याणां परे प्राणा: प्रायेणाऽनर्थसंचयाः'** इति **न्यायः**। कदर्यलक्षणम्– 'आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयन्। यो लोभात् संचिनोत्यर्थान् स कदर्य इति स्मृतः ॥' इति। **साहस्री.** ७३८

⧗ **कदलीफलन्यायः**। कदलीफलं यथा स्वजननीं कदलीं नाशयति, तथा ज्ञानम् अज्ञानं नाशयति इति। **संग्रहः.**

* 'कदा चन स्तरीरसि' इति मन्त्रः श्रुत्या गार्हपत्योपस्थाने विनियोक्तव्यः, न तु लिङ्गेन इन्द्रोपस्थाने। श्रुतिलिङ्गाधिकरणम्। **के.** ३।३।७।१४.

⧗ **कनककुण्डलन्यायः**। यथा सुवर्णजन्यकुण्डलस्य सुवर्णाभिन्नत्वम्, तथा ब्रह्मरूपकारणजन्यजगतः कार्यस्य ब्रह्मरूपकारणाभिन्नत्वमिति। **साहस्री.** ४१६.

* **कनककुण्डलन्यायेन** ब्रह्मैव जगदाकारेण परिणतम्। **सनत्सुजातीये नीलकण्ठः** २।३७.

* **कनिष्ठार्जितधनोपजीवनं** ज्येष्ठस्यानुचितम्। **सु.** पृ. १८६.

* कनीयोऽर्जितभ्रातृजायापरिणयनम् अनाचारः। **वा.** १।३।७।१४ पृ. २०३–२०४.

⧗ **कन्दुकन्यायः**। यथा कन्दुकः कराघातैः पतितोऽपि स्वभावत एवोत्पतति, तथा साधुवृत्तयो भवन्तीति। **साहस्री.** ९९०.

* **कपालम्** एकं यदि नश्येत् द्यावापृथिवीयमेककपालं निर्वपेत्, यदि द्वे नश्येयाताम् आश्विनं द्विकपालं निर्वपेत्। उपघातसंयोगोऽयं निमित्तार्थः। **भा.** ४।३।१६।३८–३९. * कपालं प्रथमं श्रपणेन प्रयुज्यते। श्रपणेनैव प्रयुक्तं कपालं तुषोपवापेऽपि प्रसङ्गात् सिध्यति। **वि.** ४।१।११. * 'भिन्नं कपालमप्सु प्रास्यति' इति सर्वनाशे श्रूयते। **भा.** ६।४।४।१६.

⧗ **कपालानि कुम्भीवत् तुल्यसंख्यानाम्**। ११। ४।११।४२ ॥

'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान् निर्वपेत्' इति अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशाः अश्वसंख्याः श्रूयन्ते। यदा ते पुरोडाशाः बहवः स्युः, तदा किं तेषां श्रपणं दीर्घेषु कपालेषु स्यात्, उत प्रतिपुरोडाशं कपालचतुष्कभेदः इति विचारे पूर्वपक्षमाह। तुल्यसंख्यानां पुरोडाशानां कपालानि प्राजापत्येषु पशुषु कुम्भीवत् तन्त्रं स्युः दीर्घतरदीर्घतमेषु चतुर्ष्वेव कपालेषु अनेकेषां पुरोडाशानां श्रपणं स्यात्।

**प्रतिप्रधानं वा, प्रकृतिवत्। ४३ ॥**

सिद्धान्तमाह। प्रतिप्रधानं प्रतिपुरोडाशं कपालचतुष्कभेदः स्यात्। प्रकृतिवत् यथा प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपलानि भिन्नानि भवन्ति तद्वत् चोदकानुसारात्।

**सर्वेषां चाभिप्रथनं स्यात्। ४४ ॥**

'यावत्कपालं पुरोडाशं प्रथयति' इति पुरोडाशस्य स्वीयेषु कपालेषु सर्वेषु अभिप्रथनं विहितम्। तच्च तन्त्रत्वे अशक्यं संपादयितुम्। तस्मात् कर्तव्यानां सर्वेषां पुरोडाशानां स्वीयेषु कपालेषु यथा अभिप्रथनं स्यात् इत्येतदर्थं प्रतिपुरोडाशं कपालचतुष्कभेदः स्यात् इति सिद्धान्तः। **के.**

* कपालानि भिन्नानि प्रतिपुरोडाशं दर्शपूर्णमासयोः। **भा.** ११।४।११।४०.

* कपालानि यज्ञायुधम्। 'कपालेषु श्रपयति'। **वि.** ३।१।५.

* **कपालेभ्यो** व्युद्धृत्य पुरोडाशस्य वेद्याम् आसादनं क्रियते दर्शपूर्णमासयोः। **भा.** १०।१।२०। ५८. * **कपालस्य** तुषोपवापं प्रति शेषत्वेऽपि तत्प्रयोज्यत्वं नास्ति। **वि.** ३।१।२, * कपालस्य भेदे संघर्षे वा प्रायश्चित्त होमविशेषः। ६।४।४. * **कपालानाम्** उपधानं सौर्ये चरौ न कर्तव्यम्। **भा.** १०।१।१६।५४, * कपालानां संतापनं प्रकृतौ अस्ति 'वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्' इति मन्त्रेण। १०।१।१५।५३ (५६), * कपालानां संतापनं सौर्ये चरौ न कर्तव्यम्। १०।१। १५।५३ (५६), * **कपाले** नष्टे तदन्वेषणार्था नहि इष्टिर्युक्ता, नहि काकिन्यां नष्टायां तदन्वेषणं कार्षापणेन क्रियते। ४।३।१६।३९. **भा.** ६।४।५।१७. * **कपालेषु** एव पुरोडाशपाकः पुरोडाशस्यापूपत्वात्। **वि.** १०।१।११. * कपालेषु तप्तेषु अधःपाकार्थं पुरोडाशोऽधिश्रीयते,



उपरि चाङ्गारा अभ्युह्यन्ते। * कपालेषु पुरोडाशस्य प्रथनं दर्शपूर्णमासयोः क्रियते, 'उरु प्रथा उरु प्रथस्व' इति मन्त्रेण। १०।१।१७।५५ (५८).

* **कपालकार्ये** निष्पन्नेऽपि भेदनहोमो भवत्येव। **भाट्ट.** ९।४।५ (६).

* **कपालचतुष्कभेदः** अश्वप्रतिग्रहेष्ट्यां प्रतिपुरोडाशम्। **भा.** ११।४।११।३९–४१.

⧗ **कपालन्यायः**। कपालसामिधेनीन्यायः। विकृतौ प्राकृतैकदेशग्रहणे प्राथमिकानामेव ग्रहणम् अन्त्यानां लोपः ॥

**आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात्। १०।५।१।१ ॥**

**भाष्यम्** — 'द्यावापृथिव्यमेककपालम्' 'आश्विनं द्विकपालम्' 'वैष्णवं त्रिकपालम्' इत्याद्येकदेशवचनम्। समस्तवचनमपि भवति, 'आग्नेयमष्टाकपालं निर्वपेत्' इति। तथा 'द्विरात्रेण यजेत, त्रिरात्रेण यजेत, चतूरात्रेण यजेत, पञ्चरात्रेण यजेत, षड्रात्रेण यजेत, सप्तरात्रेण यजेत, अष्टरात्रेण यजेत, नवरात्रेण यजेत, दशरात्रेण यजेत, एकादशरात्रेण यजेत' इत्येकदेशग्रहणम्। समस्तग्रहणमपि भवति 'द्वादशाहेन प्रजाकामं याजयेत्'। तथा 'एकां सामिधेनीमन्वाह' 'तिस्रः सामिधेनीरन्वाह' इत्येकदेशग्रहणम्। समस्तग्रहणमपि भवति, 'पञ्चदश सामिधेनीरन्वाह' इति। तदत्र संशयः किं सर्वेष्वेव आद्योपादानम् अन्त्यलोपश्च, उत विकल्पः इति। किं प्राप्तम्? आनुपूर्व्यवतां क्रमवतामेकदेशग्रहणं ब्रूमः। अन्त्यलोपः आद्योपादानं चेति। किं कारणम्? मुख्यमाद्यम्, जघन्यमन्त्यम्। मुख्यजघन्ययोरन्यतरस्मिन् लोप्तव्ये जघन्यो लुप्येत। मुख्यः हि अनुग्रहीतव्यः। तदुक्तम्, 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (१२।२।८।२३) इति। आगमवत्। यथा, समाजेषु समासेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम्।

**लिङ्गदर्शनाच्च। २ ॥**

**भाष्यम्**— इतश्च आद्योपादानमन्त्यलोपश्चेति। कुतः? लिङ्गमप्येवं भवति, 'लुप्येत वा एतत् षष्ठमहो यत्पञ्चाहानुपयन्ति' 'लुप्येत वा एतत् षष्ठं कपालं यत्पञ्चकपालं निर्वपन्ति' इति षष्ठस्य लोपं दर्शयति, न प्रथमस्य।

**विकल्पो वा, समत्वात्। ३ ॥**

**भाष्यम्** —नैतदस्ति, आद्योपादानमिति। किं तर्हि? विकल्पः। आद्यमन्त्यं वा उपादातव्यमिति। कुतः? समत्वात्। समो हि अन्त्यलोपः आद्यलोपेन। नहि आदिलोपे श्रुतिः, नो खल्वपि अन्त्यलोपे। मुख्ये जघन्ये वा उपादीयमाने प्राकृतमुपात्तं भवति। नहि विशेषश्रुतिरस्ति, मुख्यमुपादातव्यमिति। तस्मादनियम इति।

**क्रमादुपजनोऽन्ते स्यात्। ४ ॥**

**भाष्यम्**-- अथ यदुक्तं समाजेषु समासेषु च आगन्तुर्जनो यथा वास्तव्यान् अनुपमृद्यैव निविशते एवमिहापीति, युक्तं यत् वास्तव्यैः आक्रान्ते देशे आगन्तुर्जनः असंभवात् अन्ते निविशते। इह तु अनाक्रान्ते चिन्त्यते के प्रथममाक्रमेयुरिति। तेनात्र न केषांचित् क्रमो विरुद्धः इति।

**लिङ्गमविशिष्टम्, संख्याया हि तद् वचनम्। ५॥**

**भाष्यम्** — अथ यल्लिङ्गमुक्तम् 'लुप्येत वा एतत् षष्ठमहः' इति षष्ठस्य लोपं दर्शयति, नाद्यस्येति, तदविशिष्टं विकल्पेऽपि। संख्याया हि षष्ठमिति पूरणवचनं भवति। यस्मिन्कस्मिंश्चिदपगते, येन प्रथमेन मध्येनान्त्येन वा संख्या पूर्यते, तत् षष्ठम्। यथा षष्ठो भ्रातॄणां न दृश्यते इति, कनीयसि ज्येष्ठे मध्ये वा अदृश्यमाने भवति। एवमिहापि द्रष्टव्यम्।

**आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्, वचनादन्त्यविधिः स्यात्। ६ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। आदितः प्रवृत्तिर्भवितुमर्हति। कुतः? आरम्भस्य तदादित्वात्। आरम्भो हि तेषामानुपूर्व्यवतामादितो न्याय्यः। पूर्वेण हि उपक्रान्तो द्वितीयादिः कर्तव्यः। स इह प्रथममेव क्रियमाणः अनुपक्रान्तः केन चित् क्रियेत। पूर्वो हि पदार्थः क्रियमाणः उत्तरं पदार्थमभिनियच्छति। यः पुनराद्यः पदार्थः, सोऽनुपक्रान्त एवान्येन कर्तव्यः। तस्मिन्नेव प्रथममुपादीयमाने नानुपक्रमदोषो

भविष्यति। तस्मात् सर्वत्रैवं ये क्रमवन्त आरब्धव्याः, ते प्रथमादुपक्रमितव्या इति। अपिच, प्रथमस्य निमित्तमुपसंप्राप्तम्। न च विरोधोऽस्ति तदादिषु कृतेषु। अन्त्यानां निमित्तेऽपि प्राप्ते, परिपूर्णत्वात् पदार्थानां लोपो न विरुद्धः। तस्मादाद्योपादानम् अन्त्यलोपश्चेति। अथैवं न्यायेन प्राप्ते यत्र वचनं भवति, तत्रापनीय मध्यममपि विधिर्भवति। यथा 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनुयाजौ यजति' इति। विना वचनेन अन्त्यलोप एव न्याय्य इति।

**सोम**— प्राकृतस्य पदार्थस्य बाधनिरूपणानन्तरं पदार्थैकदेशबाधो निरूप्यते, इति पादान्तरत्वम् आनन्तर्यं च। **यद्यपि** 'द्यावापृथिव्यमेककपालम्' इत्यादौ कपालविशिष्टकर्मविधानेन कपालानामातिदेशिकत्वाभावात् न प्राकृतैकदेशत्वसंभवः, **तथापि प्रकृतौ** कपालोपधानार्थानाम् 'ध्रुवमसि पृथिवीं दृंह' 'धर्त्रमस्यन्तरिक्षं दृंह' इत्यादीनां मन्त्राणाम् इहातिदेशिकत्वात् तदभिप्रायेण 'एकदेशग्रहणम्' इत्युक्तम्, तदभिप्रायेणैव च आदिमध्यान्तभावश्च, इति ध्येयम्। **यद्यपि** महापितृयज्ञे 'एकां सामिधेनीमन्वाह' इति श्रूयते, तत्र च अप्राकृतसामिधेन्यन्तरपाठात् न प्राकृतैकदेशग्रहणम्, **तथापि** यत्र विकृतौ न सामिधेन्यन्तरपाठः, तत्रैकदेशत्वसंभवो बोध्यः। **न च** द्विरात्रादिषु द्वादशाहस्य कार्त्स्न्येन न प्रकृतित्वम्, किन्तु द्विरात्रे द्वादशाहगताहर्द्वयस्य, त्रिरात्रे तद्गताहस्त्रयस्य इत्येवमवयवशः एव, तावताऽपि आकाङ्क्षाशान्तेः। तथाच प्राकृतैकदेशग्रहणाभावात् नास्योदाहरणत्वसंभवः इति **वाच्यम्**। कृत्स्नस्य द्वादशाहस्य न प्रकृतित्वम्, किंतु आद्यस्याहर्द्वयस्य इत्यस्यैवार्थस्यात्र व्युत्पादनात्। एवं चेदं विशेषातिदेशविचारतया अष्टमे संगतमपि कपालादितुल्ययोगक्षेमतया लाघवात् इहैव कृतमिति ध्येयम्। न चात्रागन्तुन्यायः। यत्र प्राथमिकपदार्थनिवेशो निश्चितः, तत्र आगन्तुन्यायात् अन्त्यलोपः। इह तु सोऽपि न निश्चितः, सर्वेषां चोदकावगतत्वाविशेषात्। 'मुख्यं वा पूर्वचोदनात्' (१२।२।८।२३) इत्यत्र मुख्यधर्मिणो धर्मोपादाने स्थितेऽपि इह एकस्यैव धर्मिणः आद्यधर्मोपादानं चिन्त्यते इति न ततोऽपि गतार्थत्वमित्याहुः। **सूत्रे** आगमवत् यत्र आगन्तुषु अन्ते निवेशः, तद्वत् इत्यर्थः।

**वि**— 'प्राकृतानामेकदेशे कोऽपि स्यादाद्य एव वा।, अविशेषेण कोऽप्या,–द्यः पूर्वेणास्यैव बोधनात्॥' आ चतुर्थात् कर्मणोऽभिसमीक्षेत, इदं करिष्यामि इदं करिष्यामि इत्युक्तत्वात् अनुक्रमेण स्मृत्वा (कर्माणि) अनुष्ठेयानि। तत्र प्राकृतोऽनुक्रम एवंविधः, उपवेषनामकेन काष्ठविशेषेण प्रथमम् अङ्गारविशेषं सम्यगवस्थाप्य 'ध्रुवमसि' इति मन्त्रेण तस्मिन्नङ्गारे पुरोडाशकपालमुपदधाति। सोऽयमनुक्रमः चोदकप्राप्तः, तथैव स्मर्यते। तत्र अङ्गारावस्थापनेन पूर्वपदार्थेन अनन्तरभावि प्रथमकपालोपधानमेव बुद्धौ उपस्थाप्यते। तेन च द्वितीयम्। न च प्रथमद्वितीययोर्विशेषाभावः, द्वितीयस्य हि 'धर्त्रमसि' इति मन्त्रः प्राचीनदेशश्च विशिष्यते। सति एवं क्रमनियमे प्रतीतपरित्यागाप्रतीतस्वीकारयोः अयुक्तत्वात् आद्य एवैकदेशः स्वीकार्यः। अवशिष्टस्तु प्रयोजनाभावात् लुप्यते।

**भाट्ट**— यत्र प्रकृतौ अष्टत्वादिसंख्यायुक्तानि कपालादीनि श्रुतानि तत्र विकृतौ तत्समसंख्याकस्थले तावन्नैव कश्चिद्विवादः। अधिकसंख्याकस्थले चोक्तं प्रसङ्गात् पञ्चमे (५।३।१)। वक्ष्यते च। क्व चिच्च सामिधेन्यादौ आगमादिरूपो विशेषोऽपि। न्यूनसंख्याके त्रिकपाल–सामिधेनीत्रय–द्विरात्रादौ। तत्र श्रुतसंख्यासंपत्त्यर्थमावश्यके पदार्थलोपे विनिगमनाविरहात् यस्यकस्यचिल्लोपः। न च मुख्यस्यानुग्रहे सति अन्त्यलोपस्यैव न्याय्यत्वम्, प्रकृतौ सर्वेषामनुष्ठेयानां पाठक्रमेण मुख्यत्वावगमेऽपि विकृतावन्येषामननुष्ठेयत्वेन तन्निरूपितमुख्यत्वासंभवात्। अत एव एकवाक्यत्वाद्यभावान्नानुपसञ्जातविरोधित्वादिकमपि। न च प्राकृतप्रथमकपालतन्मन्त्रादेः तत्पूर्वपदार्थरूपस्योपस्थापकस्य सत्त्वात् तदनुरोधेन तस्यैवानुष्ठेयत्वावगतौ अन्त्यलोपस्यैव न्याय्यत्वम्, अन्त्यकपालोपधानोत्तरानुष्ठेयपदार्थस्य अन्त्यकपालोपधानोपस्थापितस्यैवानुष्ठेयत्वेन तदनुरोधात् अन्त्यकपालोपधानस्याप्यनुष्ठेयत्वावगतेः, गुणभूतसंख्याऽनुरोधेन प्रधानभूतपदार्थानां नित्यं बाधानुपपत्तेश्च। **इति प्राप्ते**, कपालोप-



धानोत्तरकर्तव्यपदार्थस्यैव अनुपस्थितत्वेन तदनुरोधात् तत्पूर्वपदार्थकर्तव्यतानियमानुपपत्तेः, प्रथमकपालोपधानपूर्वभाविपदार्थस्य तु उपस्थापकस्य सत्त्वेन नियमेनोपस्थितत्वात् तदनुरोधेन आद्यस्यैव यावत्संख्यमनुष्ठेयता। अतोऽन्त्यस्यैव संख्यानुरोधेन लोपः। एवं च 'लुप्येत वा एतत्षष्ठमहो यत् पञ्चाहानुपयन्ति' 'लुप्येत वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपति' इति लिङ्गमप्युपपद्यते।

**मण्डन** — 'बह्वेकदेशग्रहणेऽन्त्यलोपः।'

**शंकर**— 'लोपोऽन्त्यस्यैव विकृतौ।'

* कपालन्यायः। अष्टाकपालः प्रकृतिः, एककपालः द्विकपालः त्रिकपालः इत्येवमादयो विकृतयः। तत्र अष्टाकपालगतप्रथमकपालधर्माः एककपाले भवेयुः, अष्टाकपालगतादिमकपालद्वयधर्माः द्विकपाले, अष्टाकपालगतादिमकपालत्रयधर्माः त्रिकपाले इत्यादि। भा. १०।५।१।१. * **कपालन्यायस्य** स्वरूपं तु 'क्रमवतामेकदेशग्रहणे आदिमग्रहणम् अन्त्यलोपः' इति। बृ. १०।५।४।१२.

* **कपालप्रयोजकं** न श्रपणम्। **भाट्ट.** ४।१।१, * **युगपदनेककपालभेदने** होमतन्त्रत्वम्। ५।२।२.

* **कपालमन्त्रगतच्छन्दसामेव** व्यतिक्रमो व्यूढे द्वादशाहे। भा. १०।५।२६।८८.

* **कपालवत्**। अनेकगुणभावश्च कपालवत् भविष्यति। यथाकपालं श्रपणेऽपि तुषोपवपनेऽपि। एवम् अग्नीषोमावपि अभिन्नौ पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः। भा. १०।१।९।२२, * कपालवत् (नासंहानात् कपालवत्)। यथा एकेन कपालेन तुषेषु उप्यमानेषु अन्येषां कपालानां न किं चित् हीयते, एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्यमाने न किं चित् पशुदेवतायां हीयते (पूर्वपक्षे)। १०।१।९।२६(२७), * कपालवत्। यथा 'पुरोडाशकपालेन तुषानुपवपति' इति परार्थकपालेन तुषा उपवप्तव्याः इत्युपादीयते, एवम् एकेनापि यजमानेन संमिता औदुम्बरी सर्वेषां यजमानानां संमिता भवति। (औदुम्बर्याः परार्थत्वात् कपालवत्)। ६।६।१।६.

* **कपालसामिधेनीन्यायः**। कपालन्यायः। प्रथमाधिकरणोक्तकपालसामिधेनीन्यायेन आधूननार्थेषु वपनार्थेषु च मन्त्रेषु प्रथमपठितस्यैव मन्त्रस्योपक्रमः प्राप्नोति (पूर्वपक्षे)। वि. १०।५।५. * **अष्टाकपालादिषु** अष्टादिकपालसमुदायः एकः पदार्थः। तेन तत्र समुदायानुसमयः। भा. ५।२।३।४–५.

* **कपालाभिहोमे** दर्शपूर्णमासयोः पत्नीसंयाजेषु, वैश्वानरो द्वादशकपालः। तत्र एकहायनस्य गोर्दानं द्वेष्याय। तच्च धर्ममात्रं न परिक्रयार्थम्। अनृत्विजे इदम्। भा. १०।२।१६।४६ (४७).

* **कपालाष्टकोपधानम्** आग्नेयपुरोडाशे एकः पदार्थः। दर्शपूर्णमासयोः। वि. ५।२।३.

* **कपालोद्वासनं** दर्शपूर्णमासादौ 'एकं द्वे' इत्यादिरीत्या संख्याय कर्तव्यम्, 'संख्यायोद्वासयति यजमानस्य गोपीथाय' इति वचनात्। के. * कपालोद्वासनं 'यानि घर्मे कपालान्युपचिन्वन्ति' इत्यादिमन्त्रेण क्रियते। एककपालोद्वासने तु 'यद्घर्मे कपालमुपचिन्वन्ति वेधसः। पूष्णस्तदपि व्रत इन्द्रवायू विमुञ्चताम्॥' इत्यूहः। आधुनिका याज्ञिकास्तु 'यद्घर्मे कपालमुपचिनोति वेधसः' इति पठन्ति, तदत्यन्तमशुद्धम्। नहि उपचिनोतौ कपालं कर्तृ, किन्तु वेधसः एव। द्विकपाले तु 'ये घर्मे कपाले उपचिन्वन्ति वेधसः। पूष्णस्ते अपि व्रत इन्द्रवायू विमुञ्चताम्॥' इत्यूहः कार्यः। के.

* **कपालोपधानम्** उपवेषेणाङ्गारं सम्यगवस्थाप्य तस्मिन् क्रियते। वि. १०।५।१, * **कपालोपधाने** 'ध्रुवमसि पृथिवीम्' 'धर्त्रमस्यन्तरिक्षम्' इत्यादयो मन्त्राः। १०।५।१, * शाखां परिवास्य परित्यक्ते मूले संनिहिते सति **कपालोपधानार्थं** काष्ठान्तरान्वेषणप्रयासो न कर्तव्यो दर्शे। पौर्णमास्यां तु दोहनरहितायां शाखाया एवाभावात् उपवेषार्थे शाखाच्छेदो न कर्तव्यः। ४।२।३.

* **कपालोपादानासादनयोः** अवघातकालीनः तुषोपवापः न प्रयोजकः, निनयनकालीनस्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽपि अप्रयोजकः। भाट्ट. ४।१।११.

* **कपिञ्जलाः** । यथाऽत्रैव न विचार्यते । किं कपिञ्जला आलब्धव्याः उत मयूराः कपोताः वेति । तत् कस्य हेतोः ? यतः कपिञ्जलशब्दस्य न मयूराः कपोताः वा वाच्याः । (इति चेन्न) । कपिञ्जलशब्दस्य दृष्टः प्रयोगः कपोते मयूरे च । महान् कपोतः उच्यते 'कपिञ्जलोऽयं न कपोतः' इति । तथा अल्पो मयूरः उच्यते 'कपिञ्जलोऽयं न मयूरः' इति । ( तेन तर्हि यः उच्यते 'कवडा' 'हुलगुड' इति, स कपोतः स्यात् । यस्तु 'पारवा' इत्युच्यते स कपिञ्जलः स्यात् । ? ) आह भक्त्या तत्र कपिञ्जलशब्दः प्रयुज्यते, न च भाक्ते प्रयोगे शब्दार्थाकाङ्क्षा भवति । **भा.** ११।१।८।३८-४१, * **कपिञ्जलाना**लभते इति बहुत्वं विवक्षितमेव अश्वमेधे। ४।१।५।११-१६. * कपिञ्जलानालभेत इति मन्त्रः विधिरूपः । **वि.** २।१।७. * 'कपिञ्जलानालभेत' इत्यत्र बहुत्वस्य कारकद्वारा यागान्वयः, पश्चात् च कपिञ्जलावच्छेदकत्वम् । तथा च बहुभिरेव-त्रिभिः-कपिञ्जलैर्यागः, न द्वाभ्यां नैकेन । **के.** * **कपिञ्जलानां** पर्यग्निकृतानामुत्सर्गः । ( शङ्काविशेषनिराकरणं तु कपिञ्जलाधिकरणें सोमे द्रष्टव्यम् ) । **सोम.** २।२।७ पृ. १४५.

* 'जुहुयात् सर्पिषाऽऽहुतीः' अत्राहुतीरिति बहुवचनात् **कपिञ्जलन्यायेन** आहुतित्रयमेव ज्ञेयम् । **प्रा. मयूख.** पृ. ६, * 'पिण्याकं वा कणान् वाऽपि भक्षयेत्तु समा निशि' ( याज्ञ. २५४ ) अत्र 'समा निशि' इति पाठे कपिञ्जलन्यायेन अब्दत्रयं भवति । पृ. ५१. * 'मन्त्रकृतो वृणीते' इति विधिः । तत्र चानियमेन बहुत्वसंख्यानां त्र्यादीनां कपिञ्जलन्यायेन त्रयाणामेव वा वरणप्रसक्तौ पञ्चार्षेयवरणमेकमेव विधीयते इति पूर्वपक्षः । **संकर्ष.** ३।४।३. * **कपिञ्जलन्यायात्** बहुवचनस्य त्रित्वे तात्पर्यम् । **दत्तकमीमांसाटीका.** ७२. * 'अभेदैकत्वसंख्याया वृत्तौ मानमिति स्थितिः । कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ॥' अभेदैकत्वसंख्या नाम संख्याविशेषाणाम् अविभागेन सत्त्वम्, परित्यक्तविशेषं वा संख्यासामान्यम् । **वै. सार.** कारिका. ५४. * 'मधुपर्केण संपूज्य राजानं च द्विजान् शुचीन्' । द्विजानिति बहुत्वं त्रित्वपर्यवसितं कपिञ्जलन्यायात् । **दत्तकचन्द्रिका** १०. * राजाभिषेके अभयापराजिताद्याः मन्त्राः प्रयोगे वक्ष्यन्ते ( ते च ) बहुवचनेन त्रयस्त्रयो ग्राह्याः कपिञ्जलन्यायात् । **नीतिमयूखः** पृ. ५. * **कपिञ्जलवच्च** ( स्तोत्रकारिषु ) त्रिष्वेव ( उद्गातॄणाम् इति ) बहुत्वश्रुतिरवस्थाप्यते । **वा.** ३।५।८।२६पृ.१००४.

**कपिञ्जलाधिकरणम्** । बहुवचनस्य त्रित्वे पर्यवसानं बाधकाभावे ॥

**बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात्** । ११।१।८।३८ ॥

**भाष्यम्**— 'वसन्ताय कपिञ्जलानालभते' इति श्रूयते । तत्र विचार्यते, किं तत्र त्रयश्चत्वारः पञ्च वा विकल्पेन आलब्धव्याः, अथवा त्रय एवेति । किं प्राप्तम् ? विकल्पेन आलब्धव्याः । कस्मात् ? सर्वप्राप्तेः । सर्वे एते संख्याविशेषा बहुवचनेन प्राप्यन्ते । सर्वे तस्य वाच्याः, सर्वत्र प्रयोगात् । न च समुच्चयेन संभवन्ति, अशक्यत्वात् । तस्माद्विकल्पः । नन्वेवं सति एकस्य शब्दस्यानेकार्थता आश्रिता भवति, न चैष न्यायः । उच्यते । सत्यमेतत् । अगत्या आश्रीयते । यदि अगत्या आश्रीयते, सत्यां गतौ नाश्रयितव्यः । अस्ति तु इयं गतिः, यत् त्रित्वं बहुवचनस्यार्थः स्यात्, तद्योगात् चतुरादिष्वपि वर्तते, सर्वेषु तेषु त्रित्वमस्तीति । नैतद्युक्तम् । यदि बहुवचनस्य त्रित्वमर्थः स्यात्, ततश्चत्वारो ब्राह्मणा इति सामानाधिकरण्यं नोपपद्येत । ब्राह्मणा इत्यस्य त्रयोऽर्थः, चत्वार इत्यस्य चत्वारः, तयोः सामानाधिकरण्यं न प्राप्नोति । नहि भवति चत्वारस्त्रय इति । एवं सर्वत्र लक्षणया भविष्यति । यथा न्यग्रोधः क्षेत्रमिति । त्रित्वं हि चतुष्ट्वादीनि साहचर्यात् शक्नोति लक्षयितुम् । सिध्यति, लक्षणा त्वाश्रिता भवति । किं क्रियताम् ? अगत्या आश्रीयते । सत्यां गतौ नाश्रयितव्या । अस्ति चेयं गतिः, यद्बहुत्वं बहुवचनस्यार्थः स्यात् । सर्वेऽपि ते बहवः, इति श्रुत्यैव सामानाधिकरण्यम् । यदि बहुत्वं विज्ञायेत, किं तत् बहुत्वमिति ? उच्यते बहुत्वं वृद्धिः उपचयः आधिक्यमित्यर्थः । कथं कृत्वा ? वृहतिः अयं वृद्ध्यर्थः । तस्य औणादिकः उकारः प्रत्ययः 'बृंहेर्नलोपश्च' इति



[ उणादि २७५ सू. । पूर्वसूत्रात् इसिप्रत्ययस्यानुवृत्तिः इति कौमुद्याम् । तत्र बर्हिः इति शब्दः साधितः, न बहुशब्दः । बहुशब्दस्य तु व्युत्पत्तिः रामाश्रम्याम् अमरटीकायां प्रदर्शिता 'बंहते । बहि वृद्धौ ( भ्वादिः ६३३ ) लङ्घिबंह्योर्नलोपश्च ( उणादिः ३० ) इत्युः' इति ] तस्य रूपं बहु इति । बहु वृद्धम् अधिकमित्यर्थः । सर्वे चैते त्र्यादयः अधिकाः । तस्मात् सर्वे बहुशब्दवाच्याः । ननु आपेक्षिकमेतत् बहु अधिकमिति । यदेव हि बहु, तदेव अन्यापेक्षया अबहु भवति । सत्यमेवम् । यत्तु यदपेक्ष्य बहु, न तत् तदेवापेक्ष्य अबहु । तद्यथा उत्तराः कुरवो दक्षिणान् कुरूनपेक्ष्य उत्तराः इत्युच्यते, न च ततोऽन्ये उत्तरा देशा न सन्ति, अथ च नियतापेक्षत्वात् उत्तरत्वं न जहति । एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते, न च ते ततः कदा चिदपि अबहवः । कथं पुनर्ज्ञायते द्वित्वापेक्षं त्रिप्रभृतीनां बहुत्वमिति ? उच्यते । अपेक्षा तावत् समानजातीयेषु भवति, यथा 'बलवान् देवदत्तः' इति न हस्तिनं सिंहं वा अपेक्ष्य भवति । किं तर्हि ? समानजातीयान् पुरुषानपेक्ष्य । एवं संख्याऽपि संख्यामेव अपेक्ष्य बहुत्वं लब्धुमर्हति । तत्र एकत्वं तावत् नापेक्षते, द्वयोः बहुवचनस्य अदर्शनात् त्र्यादिषु च सर्वेषु दृश्यते । तेन विज्ञायते द्वित्वापेक्षमिति । तच्च बहुवचनेन उपलभ्यते । कुतः ? तद्भावे भावात्, तदभावे अभावात् । तद्भावे त्रित्वादिषु भवति, तदभावे च द्वयोः एकस्मिंश्च न भवति । एवं बहुवचनमिति समाख्या अन्वर्था भवति । अभियुक्तवचनं च 'बहुषु बहुवचनम्' ( पा० १।४।२१ ) इति । यदि त्रित्वं बहुवचनस्य अर्थः स्यात् त्रिषु ( बहु- ) वचनम् इत्येव ब्रूयात्, लाघवात् असंदेहात् । तस्मात् द्वित्वमपेक्ष्य एते बहवः । अतः अवस्थितं त्र्यादीनां बहुत्वम् । एवं च सति नैकः शब्दः अनेकार्थो भवति सर्वेषां च बहुत्वात् न कश्चित् लक्षणया प्रयोगः । अथोच्यते । त्रिषु निरुपपदं प्रयुज्यते । चतुरादिषु तु सोपपदं चत्वारो ब्राह्मणा इति । तच्च मिथ्या । त्रिष्वपि सोपपदं प्रयुज्यते । यथा, त्रयो लोकास्त्रयो वेदा इति । यदि च निरुपपदं त्रित्वं प्रत्याययेत् ततो वसन्ताय कपिञ्जलानित्युक्ते विचार एवायं न प्रवर्तेत । यथा अत्रैव न विचार्यते किं कपिञ्जला आलब्धव्या उत मयूराः, कपोता वेति । तत् कस्य हेतोः ? यतः कपिञ्जलशब्दस्य न मयूराः कपोता वा वाच्याः । इहापि यदि बहुवचनस्य त्रित्वमेव वाच्यं स्यात् नेतराः संख्याः, पूर्ववद्विचार एवायं न स्यात् ।

**टुप्**— 'वसन्ताय कपिञ्जलानालभेत' इत्यत्र पूर्वः पक्षः । यथा अक्षशब्दः साधारणवचनो विदेवनादिषु, एवं बहुवचनं साधारण्येन वर्तते त्रित्वादिषु । अथवा यत्र एकत्वद्वित्वे न स्तः, तत्रायं वर्तते । एतस्मिन् पक्षे सामान्यवचनोऽयम् । सिद्धान्तेऽपि अयमेव शब्दार्थः, न व्यावर्तते ।

**दृष्टः प्रयोग इति चेत्** । ३९ ॥

**भाष्यम्**— अथोच्येत, दृष्टो बहुवचनस्य प्रयोगः चतुरादिषु चत्वारो ब्राह्मणा इति । ततो विचारः इति ।

**तथेह** । ४० ॥

**भाष्यम्**— इहापि कपिञ्जलशब्दस्य दृष्टः प्रयोगः कपोते मयूरे च । महान् कपोत उच्यते, कपिञ्जलोऽयं न कपोतः इति । तथा अल्पो मयूरः कपिञ्जलोऽयं न मयूरः इति । ( महतः कपोतस्य अल्पस्य च मयूरस्य कपिञ्जल इति संज्ञा इत्यर्थः ) ।

**भक्त्येति चेत्** । ४१ ॥

**भाष्यम्**— आह । भक्त्या तत्र कपिञ्जलशब्दः प्रयुज्यते । न च भाक्ते प्रयोगे शब्दार्थशङ्का भवति ।

**तथेतरस्मिन्** । ४२ ॥

**भाष्यम्**— इतरस्मिन्नपि चत्वारो ब्राह्मणा इति लक्षणया प्रयुज्यते इत्युक्तम् । न च लक्षणाप्रयोगे शब्दार्थशङ्का भवति । अपिच प्रातिपदिकार्थस्य या संख्या, सा वचनेनाभिधीयते यथा ब्राह्मणा इति । प्रातिपदिकार्थ एव वा, यथा द्वावेक इति । न च त्रित्वं प्रातिपदिकस्यार्थः, न तत्संख्या इति । तस्माच्चत्वार इति बहुवचनं न प्राप्नोति । अथोच्यते । अस्ति चतुर्षु अवयवभूतं त्रित्वम्, तदपेक्षं बहुवचनमिति । द्वित्वमपि तत्रास्ति, एकत्वं च । काममनेनैव हेतुना द्विवचनमेकवचनं चोत्पद्येत । तस्मान्न त्रित्वयोगात् चतुरादिषु बहुवचनप्रयोगः । बहुत्वादेव तेषां बहुवचनम् । अतः सर्वे त्र्यादयः परार्ध-

पर्यन्ताः बहुवचनस्यार्थः । सर्वे चेदर्थः, 'कपिञ्जलानालभेत' इति सर्वे प्राप्यन्ते । तस्मात् विकल्पः ।

**प्रथमं वा नियम्येत, कारणादतिक्रमः स्यात् ।४३॥**

**भाष्यम्**— प्रथमं वा बहुत्वं त्रित्वं नियम्येत । किं कारणम् ? नहि कश्चिच्चतुर उपाददानो न त्रीनुपादत्ते । यत्कारणम् । अनुगतास्त्रयश्चतुर्षु । त्रिषु चोपात्तेषु कृतः शब्दार्थः । बहूनालभेतेति श्रुतम् । आलब्धव्याश्च बहवः । एवं सति कारणादतिक्रमः स्यात् । यदि च यथाश्रुतानुपादाने किञ्चिदन्यत् कारणं त्रित्वातिक्रमे स्यात्, ततोऽतिक्रमः । न तदस्ति । तस्मात् त्रित्वं नियम्येत । ननु फलभूयस्त्वं कारणं भविष्यतीति । नैतदस्ति । यत्र बहवः कल्पाः श्रूयन्ते, तेषां कश्चित् लघुः, कश्चित् गुरुः, तत्र गुरोः कल्पस्य अनुष्ठानाम्नानसामर्थ्यात् तदनुष्ठानात् फलभूयस्त्वम् अनुमीयते । यथा 'एका देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः' इति । इह तु एक एव कल्पः बहूनामालम्भः । स त्रिभिः चतुरादिभिः ( च ) तुल्यः । अतस्तत्र यो लघुमुत्सृज्य गुरुकल्पमातिष्ठेत, तस्य फलभूयस्त्वं न भवितुमर्हति ।

**टुप्**—अनेन तु (वक्ष्यमाणन्यायेन त्रित्व–) नियमः । (तमेव न्यायं निगदव्याख्यातेन सूत्रेण दर्शयति–) **प्रथमं वा नियम्येत, कारणादतिक्रमः स्यात्** इति । प्रकृतिः ( स्वभावः ) इयं लोके यथा न्यग्रोधतले स्थातव्यम् इति प्रथमे एव न्यग्रोधे अवतिष्ठते, एवमिहापि । ( त्रिचतुरादिषु बहुवचनार्थेषु प्रथमातिक्रमे कारणाभावात् त्रिभिरेव शास्त्रार्थोपपत्तौ नाधिकग्रहणमित्यर्थः । )

**श्रुत्यर्थाविशेषात् । ४४ ॥**

**भाष्यम्**—यथा 'पशुमालभेत' इति श्रुते यो महान्तं महार्घं वा पशुमालभेत, न तस्य फलभूयस्त्वं भवति । यस्तु मांसीयन् ( मांसमिच्छन् ) शिष्टमतिक्रामेत्, स यदि तावत् वैदिकीष्वपि हिंसासु प्रत्यवायः, ततः प्रत्यवेयात् । अथ अप्रत्यवायः, तथापि शिष्टविगर्हणं च लभेत । 'कृते श्रुत्यर्थे मांसीयन् पशून् हन्ति' इति । तस्मात् त्रयः कपिञ्जला आलब्धव्याः ।

**तथा चान्यार्थदर्शनम् । ४५ ॥**

**भाष्यम्** — अन्यार्थोऽपि च एतमर्थं दर्शयति यथा न्याय उपदिष्टः । यथा 'कृष्णा याम्याः ( यमदेवत्याः ), अवलिप्ता रौद्राः ( गर्विष्ठाः पशवः रुद्रदेवत्याः ), नभोरूपाः पार्जन्याः ( नीलवर्णाः पर्जन्यदेवत्याः ), तेषामैन्द्राग्नो दशमः' इति । यदि च त्रय एते त्रिकाः, एवं नियोगतः ऐन्द्राग्नो दशमः संपद्यते । इतरथा पाक्षिकः स्यात् । तस्मादपि ( कपिञ्जलानाम् ) त्रित्वनियमः ।

**प्रकृत्या च पूर्ववत् तदासत्तेः । ४६ ॥**

**भाष्यम्** — प्रकृत्या अग्नीषोमीयेण एकत्वं प्राप्यते, तस्य आसत्तिर्भविष्यति त्रित्वे उपादीयमाने । इतरथा विप्रकर्षः स्यात् । इदं चापि लिङ्गम्, गृहमेधीये श्रूयते 'ओदनानुद्धरति' इति । तत्र मध्यमस्य इति त्रयाणां निरुपपदं भवति, अन्यत्र सोपपदम्, पञ्चानां मध्यमः, अष्टानां मध्यमः इति ।

**सोम**— पूर्ववैषम्येणोत्थानात् **संगतिः** । यद्यपि कपिञ्जलानां पर्यग्निकृतानां उत्सर्गात् न हिंसाप्रसक्तिः, तथापि यत्र न पर्यग्निकृतोत्सर्गः, तदभिप्रायेणेदं बोध्यम् ।

**वि**— 'कपिञ्जलेषु त्रित्वाद्याः पाक्षिकास्त्रित्वमेव वा ।, आद्यो बहुत्वसाम्या, न त्रित्वेनैव कृतत्वतः ॥'

**भाट्ट**— 'वसन्ताय कपिञ्जलानालभेत' इत्यादौ यत्र बहुवचनं श्रुतम्, तत्र तस्य त्र्यादिपरार्धपर्यन्तसर्वसंख्यावाचित्वात् चतुरादिसंख्यादीनामपि शास्त्रीयत्वेन तत्करणे फलाधिक्यम् । नहि बहुवचनस्य त्रित्वमेवार्थः, 'चत्वारो ब्राह्मणाः' इत्यादौ चतुरादिसंख्यास्वपि प्रयोगात् । अस्तु वा नानाऽर्थत्वभिया बहुवचनस्य द्वित्वाधिकसंख्यायामेव शक्तिः, अतश्च 'पशुमालभेत' इत्यत्र महापशुग्रहणेऽपि यथा न वैगुण्यम्, तथा चतुरादिग्रहणेऽपि । अस्तु वा कथञ्चित् कपिञ्जलोदाहरणे त्रित्वनियमः, 'न हिंस्यात्' इति निषेधप्रवृत्तेः संभावितत्वात् । दर्शपूर्णमासयोः 'ब्राह्मणांस्तर्पयित्वा' इत्यादौ त्रित्वग्रहणे तु नैव किञ्चित् प्रमाणं पश्यामः । **इति प्राप्ते**, सत्यम्, द्व्यधिकसंख्यैव बहुवचनस्यार्थः । तथापि चतुरादिग्रहणे त्रिग्रहणस्यावश्यकत्वात् प्रथमातिक्रमे कारणाभावेन त्रिभिरेव शास्त्रार्थोपपत्तेर्नाधिक-



ग्रहणम् । अत एव 'गां दद्यात्' इत्यादौ महोपकारकगोदाने अल्पोपकारकगोदानाभावः, तत्र तद्दाने फलाधिक्यम्, प्रकृते तु नैवम् । अत एव 'कृष्णा याम्या अवलिप्ता रौद्रा नभोरूपाः पार्जन्यास्तेषामैन्द्राग्नो दशमः' इति लिङ्गमप्युपपद्यते । ६.

**मण्डन**— 'त्रित्वं नियम्येत कपिञ्जलेषु ।'

**शंकर**— 'कपिञ्जलेषु त्रित्वं स्यात् ।'

* **कपिञ्जलाधिकरणम्** । 'कपिञ्जलानालभते' इत्यत्र अवश्यम्भावित्वेन प्रथमभावित्वेन लाघवेन च त्रित्वे उपात्ते शास्त्रार्थसिद्धौ ततोऽधिकपक्षिहिंसायां प्रत्यवायः । **वि.** ११।१।८. * **कपिञ्जलाधिकरणस्यापवादः** उत्तरान्यायः ( ११।१।९ ) । **के.** * **कपिञ्जलाधिकरणन्यायः** । कपिञ्जलस्तित्तिराख्यपक्षिविशेषः 'कपिञ्जल इति प्राज्ञैः कथितो गौरतित्तिरः' इत्युक्तेः । अधिकरणं नाम 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' इति । यत्र बहुवचनस्य त्रित्वे पर्यवसानं तत्रायं प्रवर्तते । यथा 'कपिञ्जलानालभेत' इति । अत्र कपिञ्जलानिति बहुवचनेन त्र्यादयः परार्धावधिकाः कपिञ्जलाः, त्रयो वा, चत्वारो वा, पञ्च वेत्यादि, कपिञ्जलत्वावच्छेदकावच्छिन्ना वेति संशये शिष्टकृतव्याख्यानं त्रित्वे पर्यवसितमिति सिद्धान्तः । **साहस्री.** ५२६. * ननु तत्र कपिञ्जलनयः, यत्रैकमनुपादाय द्विबहूपादानाशक्तिः । इह त्वेकानुपादानेऽपि द्विबहूपादानं संभवति, इति न **कपिञ्जलाधिकरणन्यायः** इति शङ्कते । **सोम.** ८।१।१६. * सोमे 'दीक्षाहुतीर्जुहोति' । अत्र बहुवचनात् संख्यया कर्मभेदः । मन्त्रषट्काम्नानात् कर्मषट्कावगतेः न कपिञ्जलाधिकरणन्यायः । **भाट्ट.** १०।३।४. * अत्र 'आज्यैः' इत्युत्पत्तिवाक्ये बहुवचनात् संख्यया कर्मभेदः । कर्माणि चत्वारि न तु कपिञ्जलाधिकरणन्यायेन त्रीणि, तस्य गमकान्तरसत्त्वे अप्रवृत्तेः । **कौ.** १।४।३।३ पृ. १८७. * अधिकरणप्रयोजनं संमार्गस्य प्रधानकर्मत्वे पशुचातुर्मास्यादिषु स्रुग्वृद्धावपि कपिञ्जलाधिकरणन्यायेन तिसृणामेव संमार्गः । **सोम.** २।१।४. * 'अहानि पञ्च विप्राग्न्यान्' अत्र कपिञ्जलाधिकरणन्यायेन पञ्चसु अपि अहःसु त्रयस्त्रयो विप्राः । **प्रा.** **मयूख.** पृ. २८. * 'क्लृप्तीर्वाचयति' अत्र उत्तराधिकरणन्यायेन यावत्प्रथमाऽन्तं क्लृप्तिभेदः इति न कपिञ्जलाधिकरणन्यायेन त्रित्वमात्रपर्यवसानाशङ्का । **कौ.** २।१।१६।४८. * 'ज्योतिष्टोमे गौश्चाश्वश्चाश्वतरश्च० ।' अत्र एकः अश्वादिर्देय एव । अजादयस्तु कपिञ्जलाधिकरणन्यायेन त्रयः । **भाट्ट.** १०।३।११. * त्रयाणामेव च तेषां (व्रीहीणां) कपिञ्जलाधिकरणन्यायेन सः ( अवघातः) इति प्रयोजनम् ( पूर्वपक्षे ), सिद्धान्ते तु यागीयद्रव्येऽवघातनियमः । **कौ.** २।१।४।८, * प्रयोजनं स्रुगुदाहरणे पूर्वपक्षे संमार्गसाधनीभूतस्रुचां प्रकृतौ विवक्षितसंख्यात्वात् कपिञ्जलाधिकरणन्यायेन त्रित्वस्यैव शास्त्रीयत्वात् पश्चादौ स्रुग्विवृद्धावपि तिस्र एव संमार्ष्टव्याः । सिद्धान्ते तु संस्कार्यत्वात् सर्वा एव संमार्ष्टव्याः । २।१।५।१२ पृ. ७९. * 'मनोर्ऋचः सामिधेन्यः' प्रकृतिवदनुवचनानुवादेन मनोर्ऋग्विधानात् उपादेयेन बहुत्वस्य कपिञ्जलाधिकरणन्यायेन त्रित्वे पर्यवसानप्राप्तौ अतिदेशप्राप्तसंख्यानुरोधेन एकादशैव । **भाट्ट.** १०।६।१८. * वृत्तौ संख्याविशेषानवगमेऽपि संख्याऽपेक्षायां प्रथमातिक्रमे कारणाभावात् कपिञ्जलाधिकरणन्यायेन एकत्वं प्रतीयते । **सोम.** ८।१।१६. * त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तरम् 'अवशिष्टानंशून् उपसमूहति' इत्युपसमूहनविधानात् अर्थवादे यावदपेक्षितपरत्वप्रतीतेः **कपिञ्जलाधिकरणन्यायस्यापि** अप्रवृत्त्या परिमाणाभावात् प्रदेयविवृद्धिः सुलभैव । **भाट्ट.** ३।३।११, * इष्यते च उत्तरान्यायेन प्रमाणान्तरसत्त्वे अन्यत्रापि **कपिञ्जलाधिकरणन्यायबाधः** । यथा–'आग्नेयैः सूक्तैः इष्टका उपदधाति' इत्यत्र यावदिष्टकमाग्नेयसूक्तग्रहणम्, न तु तत्र कपिञ्जलाधिकरणन्यायप्रवृत्तिः । १०।६।१८. * 'अग्नेस्तृणान्यपचिनोति' इत्यत्रापन्नयस्य द्वितीयया उपयुक्तपरिस्तरणतृणप्रतिपत्तित्वावगमात् तद्गतं तावद्बहुत्वं न विवक्षितम्, इति न **कपिञ्जलाधिकरणन्यायादरः** । अग्नेस्तु अपादानत्वेन गुणत्वेऽपि प्रतिपाद्यतृणानुरोधेन प्रत्येकैकत्वानुवादावगतेः न विवक्षितविशेषणत्वम् । **कौ.**

**कफोणिगुडन्यायः** । ' भुजबाहू प्रवेष्टो दोः स्यात् कफोणिस्तु कूर्परः ' इत्यमरः । कफोणौ भुजमध्यग्रन्थौ गुडाभावेऽपि तदाशया यथा लेहनमेवं यत्र वस्त्वसद्भावेऽपि तत्प्रत्याशया व्यापारभेदस्तत्रास्य प्रवृत्तिरिति । **साहस्री.** ४९५.

* **कमिपद्निरपेक्षसमभिव्याहारमात्रप्रमाणकस्य** साध्यत्वस्य पर्णमय्यधिकरणे निराकरिष्यमाणत्वात् । **सु.** पृ. ४९०.

* **कम्बलनिर्णेजन**वदेतत् भविष्यति । निर्णेजनं हि उभयं करोति, कम्बलशुद्धिं पादयोश्च निर्मलताम् । **भा.** २।२।११।२५ पृ. ५४५.

* **कयाशुभीयासु** ( ऋसं. १।१६५।१–१५ ) पञ्चदशसु एकादशसामिधेन्यः, अन्याश्चतस्रो याज्याऽनुवाक्याः । **संकर्ष.** ४।४।३.

**करकङ्कणन्यायः** । कङ्कणशब्दस्य करभूषणवाचित्वेऽपि तत्पूर्वे करशब्दप्रयोगे यथा प्रयोगकाले तस्य करसंबन्धिता द्योत्यते, एवमन्यस्यापि तत्काले तत्संबन्धद्योतनार्थं यत्र प्रयोगः, तत्रास्य प्रवृत्तिः । **साहस्री.** २०७.

* **करञ्जाकादिस्थावरदेवतापूजाऽऽदिकं** स्वस्वकुलागतं क्रियते । तच्च ' आह्नीनैबुकम् ' इत्युच्यते । तच्च दाक्षिणात्यैः क्रियते । **वि.** १।३।८.

* **करणः**— शूद्रायां वैश्यादुत्पन्नः करणः । **वि.** ६।१।११२.

* **करणं** क्रियायाः शक्तिमत् द्रव्यं तदाधारा वा शक्तिः । **वा.** १।४।१।१ पृ. ३२२. * करणम्, ' यत् साधकतमत्वेन कस्य चित् किं चिदुच्यते । तस्यानुग्राहकापेक्षा न स्वशक्तिविघातिनी ॥ ३६ ॥ नहि तत् करणं लोके वेदे वा किञ्चिदीदृशम् ! इतिकर्तव्यतासाध्ये यस्य नानुग्रहेऽर्थिता ॥ ३७ ॥ प्रत्यात्मनियतत्वाच्च यथैव करणं भवेत् । बाह्यान्तरविभागेन क चित् स्याद्वा विवक्षया ॥ ३८ ॥ ' ( सर्वत्र चक्षुरादौ प्रदीपाद्यर्थित्वदर्शनात् ऐकान्तिकं सहायापेक्षणं नाशक्तिमापादयति । प्रत्युत इतिकर्तव्यतयैव करणत्वम्, तदभावे एव तन्न सिध्यति, प्रतिकरणं तदपेक्षाया नियतत्वात् । उदाहरणमाह– ) ' उद्विग्नो ह्यन्धकारेण कश्चिदेवं ब्रवीत्यपि । किं चक्षुषा ममैतेन दृष्टं दीपेन यन्मया ॥ ३९ ॥ नित्यवृत्तौ तु नान्धानां दृष्टिर्दीपशतैरपि । रूपादिदर्शने यस्मात् तस्माच्चक्षुः प्रकाशकम् ॥ ४० ॥ शरीरात्ममनोयोगादसाधारणताबलात् । विज्ञानासत्तिभावाच्च चक्षुः करणमिष्यते ॥'४१॥ **श्लोवा.** संबन्धाक्षेपवादे पृ. ५०७–०८. * करणं व्यापारवदसाधारणं कारणम् । **मणि.** पृ. १९. * करणं हि यागः । उद्भिदाद्यपि तृतीयानिर्देशात् करणम्, तत्र उद्भिदा यागेन इति कर्मनामधेयत्वेन सामानाधिकरण्यसामञ्जस्यम् । **भा.** १।४।१।२ पृ. ३२४. * **करणैः** इतिकर्तव्यता न संबध्यते इत्युक्तम् ( इन्द्रियकामाधिकरणे ) । **वा.** ३।६।१६।४३ पृ. १०६९. * **करणस्य** अनुग्राहकापेक्षा न अशक्तिमापादयति । **के.** * करणस्य क्रत्वन्तरगमनविधिनिषेधः ' कर्मणस्त्वप्रवृत्तित्वात्० ' ( ८।१।१३।२० ) इत्यत्रोक्तः । **सु.** पृ. ९५१, * एकक्रियाकरणस्य अन्यकरणत्वानुपपत्तिः । पृ. ८६१. * **करणानां** मन्त्राणां च मन्त्रान्तेन कर्मादिसंनिपात उक्तः ' मन्त्राणां करणार्थत्वात्० ' इति । **भा.** १२।३।८।२५. * **करणे** तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा ' सोमेन यजेत ' । **बाल.** पृ. ४४, * करणे पञ्चमी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा स्तोकेन स्तोकाद्वा मुक्तः । पृ. ४५, * करणे षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा ' शतस्य दीव्यति ' ' शतस्य प्रतिदीव्यति ' ' अग्नये छागस्य वपाया हविषो मेदसः प्रेष्य ' ' आज्यस्य यजते ' । पृ. ४५. * **करणेषु** ( करणमन्त्रेषु ) कानि चित् पदानि गुणं प्रत्याययन्ति, कानि चित् गुणिनम् । तत्र विपरिवृत्त्या स्तुतिः गुणिनं व्यापयति । [illegible]. १२।४।१।१. **रत्न**– करणेषु अभिधानार्थेषु इत्यर्थः । तत्र गुणिसंबन्धितया गुणकीर्तनं न स्वात्मनि पर्यवसितम्, किन्तु गुणिसंबन्धितया गुणः कथं नाम प्रकाशितः स्यादित्येवमर्थम् । तेन गुणिविशिष्टतया गुणिप्रकाशनम् अभिधानमित्यर्थः । * करणेषु मन्त्रेषु स्वामिनः फलमाशासितव्यम् इति समधिगतम् ( ३।८।१३।२६ ) । **भा.** ३।८।१४।२८.



* **करणत्वम्** अतिशयितसाधकत्वरूपं साधकतमत्वम् । **सु.** पृ. ११९४, * करणत्वं धात्वर्थनिरूपितत्वेन संसर्गेण क्रियाऽन्वयित्वम् । **रहस्य.** पृ. १००. * करणत्वं फलोद्देशप्रवृत्तकर्तृव्यापारगोचरत्वम् । **सोम.** ३।३।४ पृ. २३७, * करणत्वं मन्त्रस्य क्रियां तत्संबन्धिनं वा प्रकाशयतो भवति । ३।८।१३. * करणत्वम् ' साधकतमं करणम् ' ( पा. १।४।४२ ) इति सूत्रेण निरुक्तम् । तच्च कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावे सति क्रियाहेतुत्वम् । सत्यन्तेन कर्तृकर्मणोः करणनिष्ठव्यापारद्वारा क्रियाहेतुत्वात्, संप्रदानस्य च स्वानुमतिद्वारककर्त्रीच्छोत्पादनद्वारा क्रियाहेतुत्वात्, अपादानस्यापि पतनप्रतिबन्धकसंयोगनाशकविभागद्वारा पतनहेतुत्वात्, अतिव्याप्तिवारणम् । चरमकारणस्यैव लक्ष्यत्वेन कुठारादेरपि कर्त्रादिनिष्ठव्यापारद्वारा क्रियाहेतुत्वात् नाव्याप्तिः इति सर्वदर्शनानुयायिनः **प्राञ्चः** । तन्न । कुठारेण च्छिनत्ति इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात् । अतो यद्व्यापाराव्यवहितोत्तरं यत्क्रियानिष्पत्तिर्विवक्ष्यते, तत् तत्क्रियाकरणम् । अधिकरणादिव्यापारानन्तरमेव यदा पच्यादिक्रियानिष्पत्तिर्विवक्षिता, तदा तेषामपि करणत्वम् इष्टमेव । पचिधातोश्च तदा तत्क्रियैव विवक्षिता । अत एव ' गवा दानं संपादयति ' ' ब्राह्मणेन दानं साधयति ' ' स्थाल्या पचति ' इत्यादयः प्रयोगा अपि संगच्छन्ते इति **वैयाकरणनव्याः** । **तदपि न** । ' औषधभोजनेन परंपरया क्रमेण पुष्टिं संपादय ' इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात् । अतः व्यापारवदसाधारणकारणत्वं करणत्वम् । कर्त्रादीनां च करणत्वेऽपि न क्षतिः, उपाधिसांकर्यस्य अदोषत्वात् । विवक्षातश्च कारकविभक्तयः इत्यपि **अन्ये** । **तदपि न** । ' भ्रम्या घटं करोति ' ' पुण्येन स्वर्गं भुङ्क्ते ' इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात् । अतः करणत्वम् ' करणं करणम् ' इत्याद्यनुगतप्रतीत्या अखण्डोपाधिरूपमेव कारणत्वादिवत् । तदेव च तृतीयाऽर्थः । तस्य च कर्त्रादौ अतिप्रसङ्गनिरासः पूर्ववत् । तस्य च स्वनिरूपकधात्वर्थावच्छिन्नत्वसंसर्गेण भावनाऽन्वयः, पूर्ववदेव एककार्यकारणभावकल्पने लाघवात् । प्रकृत्यर्थान्वयस्तु आधेयतया तत्र बोध्यः । **रहस्य.** पृ. ९६–९७. * करणत्वं साधकतमत्वम् ' साधकतमं करणम् ' इति सूत्रात् ( पा० १।४।४२ ) साधकतमत्वं च अव्यवधानेन फलजनकव्यापारवत्कारणत्वम्, फलायोगव्यवच्छिन्नत्वं वा । तेन ' आत्मना जानाति ' इत्यादौ आत्मनोऽपि करणत्वमविरुद्धम् । फलोद्देशप्रवृत्तकर्तृव्यापारोपकार्यत्वं वा । अस्ति चेदं कुठारादौ । एवं च ' कुठारेण छिनत्ति ' ' दर्शपूर्णमासाभ्यां यजेत ' इत्याद्युपपत्तिः । **मणि.** पृ. १३२–१३३. * करणत्वं हि क्रियामपेक्षते । अत एव अनुषङ्गः अनुकर्षो वा । **वि.** २।१।१७. * यत् भाव्यम्, तत् कर्तव्यतां प्रतिपद्यते । यन्निष्पन्नम्, तत् **करणत्वं** प्रतिपत्तुं शक्नोति दात्रादि । **वा.** ६।१।१।१ पृ. १३४७. * कर्तृव्यापारविषयस्यैव **करणत्वात्** । **सोम.** ७।१।१ पृ. ५२६. * **करणत्वस्य** साधकतमत्वलक्षणत्वात् तमबर्थस्य चातिशयस्य आपेक्षिकत्वात् । **सु.** पृ. ८४७, * कर्तृव्यापारव्याप्यत्वं विना **करणत्वायोगः** । पृ. ६९७, * निर्व्यापारस्य करणत्वायोगः । पृ. ५४६.

* **करणमन्त्रः** कर्तव्यस्य वस्तुनः अभिसंधानार्थः समधिगतः । **भा.** ११।४।१२।४२. * **करणमन्त्राः** एकान्तेन कर्मसमानकर्तृकत्वात् आध्वर्यवाः । **वा.** ३।८।१३।२५. * करणमन्त्राः ' करोमि ' इत्येवं प्रत्ययं कुर्वन्ति । क्रियमाणानुवादिनस्तु ' एवं कर्तव्यम् ' इति । **भा.** १२।३।१६।३७, * ' **करणमन्त्रम्** आध्वर्यवम् ' परिवीरसि ' इति होता कुर्यात् ' कुण्डपायिनामयने यूपपरिव्याणे । **हौत्रं** तु कश्चित् होतृपुरुषः कुर्यात् । ३।८।१०।२१, * **करणमन्त्राणाम्** अन्तेन कर्मादिसंनिपातं वक्ष्यति ' मन्त्राणां करणार्थत्वात् ' इति ( १२।३।१०।२५ ) । १२।१।९।१८.

**करणमन्त्राणामेकार्थानां विकल्पः ॥**

**मन्त्राणां संनिपातित्वादेकार्थानां विकल्पः स्यात्** । १२।३।१३।२९ ॥

**भाष्यम्**— ये मन्त्रा एककार्याः, यथा पुरोडाशविभागार्थाः, ' पूषा वां विभजतु ' ' भगो वां विभजतु ' ' अर्यमा वां विभजतु ' इत्येवमादयः, तेषां विकल्पः ।

कुतः ? संनिपातित्वात् । करणा एते मन्त्राः । करणानां च मन्त्रान्तेन कर्मादिसंनिपात उक्तः, 'मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् ' (१२।३।१०। २५) इति । न च विकल्पमन्तरेण सर्वेषामन्तैः कर्मादिसंनिपातः कर्तुं शक्यः । किं वचनमेतत् ? नहि, न्यायः सर्वस्य वचनार्थत्वादिति । यद्येवं समुच्चयेऽपि स मन्त्रः सर्व उच्यते, तत्रापि वचनार्थः सिध्यति । एकेन तु कृते कर्मणि द्वितीयस्य प्रयोगोऽनर्थकः । तदेतदेककार्यत्वे भवति । तस्मादेकार्थत्वाद्विकल्पः । तच्च पूर्वमेवोक्तम् , एकार्थास्तु विकल्पेरन् (१२।३।४।१०) इति । ततस्तत्प्रातिसूत्रमिदमुत्तरचिन्ताऽर्थम् ।

**सोम**— पूर्वोक्तमन्त्रान्तकर्मादिसंनिपातोपजीवनात् **संगतिः** । **सूत्रार्थस्तु**– एकक्रियाकरणभूतानां मन्त्राणां विकल्पः स्यात्, संनिपातित्वात् कर्मादिसंनिपतनशीलत्वात्, विकल्पमन्तरेण सर्वेषां मन्त्राणां कर्मादिसंनिपातासंभवात् इति ।

**वि**—' पूषाद्येकार्थमन्त्राणां साहित्यं वा विकल्पना।, आद्यः शक्यत्वतो, मैवं मन्त्रान्ते संनिपाततः ॥ ' व्रीहियवयोर्निर्णीतस्यैव विकल्पस्यायं प्रपञ्चः ।

**भाट्ट**— तदेवमुपस्थितमन्त्रप्रसङ्गागते विचारे समाप्ते अधुना मन्त्रेषु प्रसङ्गविचार एव क्रियते । ये करणमन्त्रा एकक्रियाप्रकाशनार्थाः ' भगो वां विभजतु ' इत्यादयोऽनेके, तेषां व्रीहियवन्यायेन विकल्पात् एकेनापरस्य प्रसङ्गसिद्धिः । न च प्रकाशितस्यापि पुनः प्रकाशनसंभवात् समुच्चयः, प्रकाशनस्य अनुष्ठानार्थत्वेन सकृत्प्रकाशनेनापि अनुष्ठानसिद्धौ प्रकाशनान्तरानुपयोगात् ।

**मण्डन**— ' स्यादेकार्थे मन्त्रवाक्ये विकल्पः । '

**शंकर**— ' विकल्प्याः करणा मन्त्राः । '

* करणमन्त्राणां कर्मसमवेतानुष्ठास्यमानार्थस्मृतिफलकत्वम् । **सु**. पृ. १०२.

**♅ करणमन्त्रेषु मन्त्रान्ते कर्मप्रारम्भः ॥**

**मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसंनिपातः स्यात् सर्वस्य वचनार्थत्वात् । १२।३।१०।२५ ॥**

**भाष्यम्**— ये पदार्थकरणा मन्त्राः यथा, ' इषे त्वेति छिनत्ति ' ' देवस्य त्वा सवितुः प्रसव इत्यादत्ते ' इति । तेषां मन्त्रान्तेन कर्मादिसंनिपातः, यस्मिन् कर्मण्युपयुज्यते । किं कारणम् ? सर्वस्य वचनार्थत्वात् । सर्वो मन्त्रः समस्तं वचनार्थं करोति । कः पुनर्मन्त्रस्य वचनार्थः ? प्रयोगकाले पदार्थस्योपस्थानम् । मन्त्रेणोपस्थितः पदार्थः कर्तव्य इति विज्ञायते, तदर्थस्य मन्त्रस्य आम्नानसामर्थ्याद्वचनाच्च । क चित् ' इत्यादत्ते ' ' निर्वपति ' इति । मन्त्रान्ते च तस्योपस्थानम् । उपस्थितः पर्याप्तो यावन्न भ्रश्यते इति । तस्मान्मन्त्रान्तेन कर्मादिसंनिपातः करणमन्त्रेषु ।

**सोम**— मन्त्रप्रसङ्गात् **संगतिः** । **सूत्रार्थस्तु**— मन्त्राणां क्रियाऽनुष्ठानार्थत्वात् मन्त्रान्तेन कर्मादेः संनिपातः स्यात्, सकलस्य मन्त्रस्य विनियोजकवचनेन स्मृत्यर्थत्वावगमात् इति ।

**वि**— ' यदा कदा चिन्मन्त्रान्ते वा, कर्मानियमाद् भवेत् । आद्यो, मैवं कृत्स्नजन्यस्मृतेरङ्गत्वतोऽन्तिमः ॥ '

**भाट्ट**— ये करणमन्त्रास्तेषामनुष्ठेयक्रियाप्रकाशनप्रयोजनकत्वात् सकलमन्त्रजन्यप्रकाशनस्यैव क्रियाऽनुष्ठानकरणत्वावगतेः मन्त्रान्ते एव कर्मादिः संनिपात्यः न तु क्रियावाचकपदोच्चारणानन्तरमेव, अवशिष्टपदानां वैयर्थ्यापत्तेः । यत्तु ' मन्त्रान्तेन कर्मादिः संनिपात्यः ' इति कल्पसूत्रकारादिवचनम्, तेनापि अयमर्थः सिध्यत्येव, तथापि न्यायेनापि सिद्ध्यतीत्येतदर्थं तदुपन्यासः । न चैवं न्यायेनैव सिद्धेः वचनानर्थक्यम्, तस्य ' आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति ' इत्यादौ यत्र एकमन्त्रसाध्यानि अनेकानि संततानि कर्माणि, तत्र सकृन्मन्त्रपाठेनैव वेदिप्रोक्षणन्यायेन ( ११।४।१५ ) स्मृत्यविच्छेदात् होमत्रयकरणापत्तौ विहितकर्मादेः मन्त्रान्तसंनिपातविधानात् मन्त्रावृत्तिप्रयोजनकतया सार्थक्यात् । अत एव नेदं कल्पसूत्रं न्यायप्राप्तानुवादकम् । ( वस्तुतस्तु आमनमस्य इति त्रिभिरेव मन्त्रैः तिस्र आहुतयो हूयन्ते , नैकेनैव मन्त्रेण । मन्त्रत्रयस्य तु ' आमनमस्यामनस्य देवाः ' इति आदिमो भागः समान एव, अन्तिमो भागस्तु ' ये सजाताः ' ' ये सजाताः कुमाराः' ' याः स्त्रियः' इत्यादिर्भिन्न एवेति मन्त्रत्रयमेवेदम् । इति ध्येयम् । **के.** )



**मण्डन**— ' मन्त्रान्ते स्यात् कर्मणः संनिपातः ।'

**शंकर**— ' मन्त्रान्ते कर्म चारभेत् । '

* **करणमन्त्रप्रकाश्यं** फलं क चित् ऋत्विजामपि , यत्र फलं कर्मार्थम् । यत्र वा उपरवेषु ' तन्नौ सह ' इति व्यपदेशो भवति । **भा.** ३।८।१४।२९–३०, * करणमन्त्रप्रकाश्यं फलं याजमानम् । ३।८।१३।२६–२८, * **करणवाचिनः** प्रातिपदिकात् तृतीया भवति । १।४। १।२ पृ. ३२४. * **करणवाचिनी** तृतीया । **वा.** १।४।१।१ पृ. ३२२, * **करणविभक्तिविनियुक्तानां** सकलोपयोगान्यथाऽनुपपत्त्या फलसाधनता युक्ता । १।२। ४।३५ पृ. १५३, * **करणव्यतिरिक्तत्वात्** इतिकर्तव्यतायाः । २।२।११।२६ पृ. ५५०, * **करणशब्दो** यादृशमर्थं ब्रवीति , तादृशस्य प्रातिपदिकं वाचकमेव । कृदन्तेन हि कारकविशिष्टं द्रव्यमेव उच्यते , न विभक्तिवत् निष्कृष्टा शक्तिः । तथा च ' करणम् , करणेन , करणाय ' इति च कारकान्तरयोगो दृश्यते । अन्यथा हि विभक्त्यभिहितेनैव एकेन कारकेण वशीकारात् न द्रव्यं कारकान्तरयोगं प्रतिपद्येत । शक्तेस्तु शक्त्यन्तरं नास्त्येव । तस्मात् शक्त्युपसर्जनद्रव्यवचनत्वात् उपपन्नं करणशब्दार्थवाचित्वं प्रातिपदिकस्य । १।४।१।१ पृ. ३२४. * **करणाकाङ्क्षाऽनुरोधेन** अङ्गोपकारः कल्प्यः । करणं च स्वयमेकं सत् स्वशक्त्युद्बोधनलक्षणम् एकमेवोपकारम् अङ्गकृतमपेक्षते । अङ्गबहुत्वं तु द्वारभेदेनोपपद्यते । **वि.** ११।१।२. * **करणानुग्रहद्वारेण** , भाव्यमानं धर्मानाकाङ्क्षति । **टुप्** . ९।१।१।१ पृ. १६३७, * **करणानुग्राहिणी** इतिकर्तव्यता लोके दृष्टा, सा तथैवेहापि भवितुमर्हति । ७।१।१।२ पृ. १५२६, * **करणेतिकर्तव्यते** भावनया आकाङ्क्षिते । तत्र करणं फले व्याप्रियते । ११।१।७।३५. * **करणेतिकर्तव्यतयोः** उभयोः अपूर्वेण प्रथममन्वयः । पश्चात्तु परस्परं गुणप्रधानभावेनान्वयः । **वि.** ७।१।१. * करणेतिकर्तव्यतयोः संबन्धः अरुणाधिकरणन्यायेन । **टुप्** . ९।१।१।१ पृ. १६३७.

* **करभत्वं** उष्ट्रत्वैकार्थसमवायिनी बाल्याद्यन्तरजातिः । **सु.** पृ. १४११.

**♅ करस्थबिल्वन्यायः** । बिल्वस्य फलं बिल्वम् । फलात्मके विकारे तद्धितस्य लुक् । करे स्थितं बिल्वं यथा चक्षुषैव दृश्यते , न तत्र संशयादिसंभवः । तद्वत् ब्रह्मणि प्रत्यगात्मतया साक्षात्कृते न संशयविपर्ययादिसंभवः इति । **साहस्री.** २८१.

**♅ करिघण्टान्यायः** । यत्र बलापेक्षया बुद्धेर्महत्त्वं विवक्ष्यते, तत्रास्यावतारः । उक्तं च— ' मतिरेव बलाद्गरीयसी यदभावे करिणामियं दशा । इति घोषयतीव डिण्डिमः करिणो हस्तिपकाहतः क्वणन् ॥ ' इति । **साहस्री.** ६५३.

**♅ करिबृंहितन्यायः** । अयं विशिष्टवाचकपदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायां प्रवर्तते । यथा– ' बृंहितं करिगर्जितम् ' इति कोशात् विशिष्टवाचकस्य बृंहितपदस्य ' तत्र स द्विरदबृंहितशङ्की' इत्यादौ विशेषणवाचिद्विरदपदसमवधानात् यथा गर्जितरूपविशेष्यमात्रपरत्वमिति । यथा वा– ' स कीचकैर्मारुतपूर्णरन्ध्रैः' इत्यत्रापि कीचकपदस्य ' कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः' इत्यभिधानात् विशिष्टवाचकत्वेऽपि तथा विशेष्यमात्रपरत्वमिति । **साहस्री.** २०६.

* **करोतिः** अभूतप्रादुर्भाववचनः । **टुप्** . ९।२।३। १४ पृ. १७०६. * ' करोतिरर्थेष्विव सर्वधातून् ' इति यथा चाहुः । ( करोतिभावयत्योरेकोऽर्थः ) । **वा.** २।१। १।१ पृ. ३८० । **सुधा**– (पृ. ५६५ ) ' विभज्य सेनां परमार्थकर्मा सेनापतींश्चापि पुरंदरोत्थः । नियोजयामास स शत्रुसैन्ये करोतिरर्थेष्विव सर्वधातून् ॥ ' * करोतिः उत्पत्तिरूपफलवाचित्वं तदनुकूलव्यापारो यत्नरूपः प्रत्ययवाच्यः । एवं च न करोतियतत्योः समानार्थकत्वम्, न वा यततेः सकर्मकत्वापत्तिः अनुप्रयोगश्च । **मणि.** पृ. १०२. * करोतिः उत्पत्तिविधानार्थः इति सिद्धान्तयितव्यम् । ... सिद्धान्ते विधानं करोतिवाच्यम् । **सु.** पृ. ११८७. * करोतिः । कृञो व्यापारोऽर्थः । करोतेः भवत्यर्थकर्तृकर्मकत्वात् णिजन्तभवतिसमानार्थकत्वम् । **मणि.** पृ. १०८. * ' करोतिः क्रियमाणेन न कश्चित् कर्मणा विना । भवत्यर्थस्य कर्ता च करोतेः

कर्म जायते ॥ ' करोतेः नित्यं सकर्मकत्वात् यावत् क्रियमाणं न लभ्यते, न तावदर्थः पर्यवस्यति । तत्र अन्वयव्यतिरेकाभ्याम् इदमवगतम् 'भवतिक्रियायाः कर्ता करोतेः कर्म संपद्यते ' इति । तथाहि, ' नित्यं न भवनं यस्य, यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥ ' य एव हि प्रवृत्तभवनः संभावितभवनो वा अन्येन प्रयुज्यते, स एव क्रियमाणत्वेन अवधार्यते नान्यः । तथा च न कश्चित् खपुष्पम् आकाशं वा कुर्वन्नुपलभ्यते । यत्रापि 'पादौ कुरु' इत्यादिषु निष्पन्नानां कर्मत्वप्रयोगो दृश्यते, तत्रापि अनिष्पन्नसंस्कारादिविवक्षया पादादिशब्दप्रयोगात् अव्यभिचारः । सत्यपि च करोतेरनेकार्थत्वे सर्वत्र गन्धनावक्षेपणादौ किञ्चिदनुत्पन्नोत्पादनसामान्यमवगम्यते । अथवा यदा अस्य उत्पादनाभिधायित्वम्, तदैव विशिष्टाख्यातसामानाधिकरण्यं दृष्टम् इति तद्वतस्य उत्पद्यमानमेव कर्म भवति इत्युपपन्नम् । वा. २।१।१।१ पृ. ३७७. * करोतिः धातुः सर्वधात्वर्थानुस्यूतक्रियासामान्यवाची । क चित् तु उद्वासनपरः ' तं ( शूलं ) नाग्नीषोमीये करोति, न सवनीये ' इत्यादौ । संकर्ष. २।२।१. * **करोतेः** ' वाचा करोति ' ' मनसा करोति ' इत्यादौ अध्यवसानेऽपि प्रयोगदर्शनात् परिकल्पना–अध्यवसानापरपर्यायप्रतिपत्तिवाचित्वावगतिः । सु पृ. ८६७. * करोतेः व्यापारसामान्यवाचकत्वम् । नहि करोतिर्यत्नार्थकः । तथात्वे करोतेः यततेरिव अकर्मकताऽऽपत्तेः इति पार्थसारथिः। करोतिः यत्नार्थक एव । न च यततेरिव अकर्मकताऽऽपत्तिः, धात्वर्थताऽवच्छेदकफलभेदेन सकर्मकत्वाकर्मकत्वव्यवहारोपपत्तेः ( इति रहस्यमतम् । ) **रहस्य.**पृ.४९-५०. * **करोति** कटं देवदत्तः, स च भवति इति प्रयोज्यप्रयोजकव्यापारौ समुच्चित्य प्रयोगः।वा. २।१।१।१ पृ. ३७८, * **करोतिभावयतिभ्यां** कथितेऽपि भावनाऽर्थे कर्तृसंख्याऽऽदिप्रत्यायनार्थं पुनः प्रत्यय उच्चार्यते । २।१।१।१ पृ. ३७९, * **करोतिभावयत्यादीनां** सामान्यधातूनां यत् द्वितीयाऽन्तम्, तद् धातुस्थलीयं भवति द्रव्यं क्रिया वा । तस्माच्च कर्तव्यतां प्रतिपद्यते । ४।२।१।१ पृ. १२२५. * **करोतिवाच्यां** भावनां प्रति कर्मत्वेऽपि आख्यातोक्तां प्रति करणत्वं न विरुद्धम् । सु. पृ. ८५४. * **करोतिशब्दः** आदाने भविष्यति, ' स्वरुं करोति ' इति स्वरुमादत्ते इति । यथा ' काष्ठानि करोति ' ' गोमयानि करोति ' इति आदाने करोतिशब्दो भवति एवमिहापि (' आदाने करोतिशब्दः ' इति सूत्रम् ) । भा. ४।२।१।६. * **करोत्यर्थः** अभूतप्रादुर्भावनम् । ऋजु. पृ. १९४. * **करोत्यर्थस्य** आख्यातार्थत्वेन स्थापितत्वात् । **रहस्य.** पृ. १३७. * करोत्यर्थस्य निर्विशेषणस्य विशेषणत्वायोगात् रेवतीवारवन्तीयान्वयस्य विधेयभावनाविशेषणान्तर्भावाभ्युपगमेन लिङैव विधेयत्वम् । द्रव्यस्य अविशेषितस्यापि स्वरूपमात्रेण विशेषणत्वोपपत्तेः तद्विशेषणस्यानन्तर्भावात् अविधेयत्वेऽपि करोत्यर्थस्याविशेषितस्य निरूपणाशक्तेः विशेषणत्वायोगात् विधेयविशेषणान्तर्गतत्वात् रेवतीवारवन्तीयान्वयस्य विशेषणविशेषणत्वेऽपि विधेयता युक्ता । सु. पृ. ८६६. * ' करोत्यर्थस्य यः कर्ता भवितुः स प्रयोजकः । भविता तमपेक्ष्याथ प्रयोज्यत्वं प्रपद्यते ॥ ' भवतिकरोत्योः शक्तिभेदाद् विक्लिदिपचत्योरिव नियतं प्रयोज्यप्रयोजकव्यापारवचनत्वम् । तत्र च कदा चित् अभिधीयमानकर्मशक्त्याक्षिप्तप्रयोज्यव्यापारो वा, स्वयमेव आक्षिप्तप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते, ' कटं करोति ' ' ओदनं पचति ' इति । कदा चित् आक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं ' घटो भवति ' ' विक्लिद्यन्ति तण्डुलाः' इति । कदा चिदुभौ भिन्नौ समुच्चित्यप्रयोगः ' करोति कटं देवदत्तः , स च भवति ' इति । कदा चित् उपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः ( विवक्ष्यते ) ' क्रियते देवदत्तेन ' इति, स्वयमेव इति वा प्रयोगे । कदा चित् पुनः समानपदैकदेशोपात्तोपसर्जनीभूतप्रयोज्यक्रियः प्रयोजकव्यापारो विवक्ष्यते, तदा च करोतिपचत्योः तादात्म्येन अशक्तेरप्रयोगात् भूविक्लिद्योश्च केवलप्रयोज्यक्रियानिष्ठत्वात् न साक्षात् प्रवर्तितुं शक्तिरस्ति इति वाचकत्वेन द्योतकत्वेन वा णिच् अपरः प्रयुज्यते, 'भावयति विक्लेदयति' इति च । तथा चाह–' प्रयोज्यकर्तृकैकान्तव्यापारप्रतिपादकाः । ण्यन्ता एव



प्रयुज्यन्ते तत्प्रयोजककर्मसु ॥ ' न च तेषाम् अण्यन्तानाम् अशक्तिः इति अन्येषामशक्त्या भवितव्यम् । अन्येषां वा शक्तिः, इति एषामपि तद्वत् भवितव्यम् । कुतः ? ' शक्तयः सर्वभावानां नानुयोज्याः स्वभावतः । तेन नाना वदन्त्यर्थान् प्रकृतिप्रत्ययादयः ॥ ' एवं करोत्यर्थद्वारेण सर्वाख्यातेषु भावयत्यर्थः सिद्धः । वा. २।१।१।१ पृ. ३७७–३७८.

* **कर्कत्वम्** अश्वत्वैकार्थसमवायिशुक्लावान्तरजातिः । **सु.** पृ. १४१०.

**कर्णे पृष्ठे कटिं चालयति इति न्यायः** । एतेन ज्ञानानिवर्त्यत्वरूपसत्त्वाभावनिवेशे असत्त्वाभाववैयर्थ्यमाशङ्कितम्, विषयताविशेषरूपसत्त्वाभावनिवेशेन च तत् समाहितम् इति ' कर्णे पृष्ठे ' इतिन्यायेन संदर्भाशुद्धिः, इति परास्तम् । **विठ्ठल.** पृ. ८७.

**कर्णकौन्तेयन्यायः** । यथा कर्णः कौन्तेय एव सन्नपि कौन्तेयत्वाज्ञानात् राधेयमात्मानं मेने, पश्चादाप्तोपदेशेन कौन्तेयमात्मानं मन्यते स्म, तथा ब्रह्मैव स्वस्वरूपाज्ञानात् जीवमात्मानं मन्यते । गुरूपदिष्टमहावाक्यजबोधात् अबोधबाधे ब्रह्मैवाहमिति मन्यते इति । **साहस्री.** ३५६.

* **कर्णवर्तिनाऽपि** कुण्डलेन ' कुण्डली देवदत्तः ' इति देवदत्ताभिधानं भवति । एकदेशवर्तिनाऽपि निमित्तेन एकदेशिनोऽभिधानम् । **रत्न.** ५।४।७।२२.

* **कर्णशष्कुली** । अवच्छेदककर्णशष्कुल्यामेव श्रोत्रनिष्ठशब्दग्रहणयोग्यताजनकसंस्कारोत्पत्तिः अङ्गीक्रियते । **मणि.** पृ. १६८. * कर्णशष्कुली पार्थिवी संयोगलक्षणेन संनिकर्षेण शब्दं गृह्णाति इति न च वाच्यम् । पार्थिवत्वेन श्रवणेन्द्रियस्य गन्धोपलम्भकत्वप्रसङ्गात् । **ऋजु.** पृ. २४२.

* **कर्तव्यम्** अकृत्वा कुर्यात्, न अकर्तव्यम् । **भा.** ६।५।११।४०.

**' कर्तव्यं हि सतां वचः ' इति न्यायः** । सद्भिः कर्तव्यतया यद्विहितं तत् कर्तव्यम् इत्यर्थः । **साहस्री.** ७३२.

* **कर्तव्यश्च** सुखवान्, अकर्तव्यो दुःखवान् । **भा.** ६।१।१।१ पृ. १३४९, * **कर्तव्यतायां** चोदितायाम् इतिकर्तव्यताऽऽकाङ्क्षा भवति कथं कुर्यादिति । प्रकरणेन धर्माः संबध्यन्ते इत्थं कुर्यादिति । ७।१।१।२ पृ. १५२७, * **कर्तव्यतालिङ्गेन** गुणानां भूयस्त्वेन ज्योतिष्टोमस्य याजुर्वेदिकस्य चोदना अनुमीयते । ३।३।३।१०. * **कर्तव्यतावचनः** भावनायां पुरुषं प्रवर्तयति । तस्याश्च प्रयोजनेन भाव्यम् । स च पुरुषार्थः प्रयोज्यतां प्रतिपद्यते । तस्मात् पुरुषार्थो भाव्यमानः । अतः सर्वाख्यातेषु पुरुषार्थः अपि न अभूतः। प्रयाजादिषु द्वारेण, दर्शपूर्णमासादिषु साक्षात् । **टुप्.** ४।३।५।११. * **कर्तव्यतोपदेशश्च** शक्यादिषु अर्थेषु भवति । **भा.** ६।२।३।१४ । शक्यः कर्तुम् इत्यस्मिन्नर्थे कर्तव्यतावचनस्य कल्पना शक्या कर्तुम् । **टुप्.**

* **कर्ता** अनुष्ठेयक्रियाऽवगमादेव अवगम्यते इति प्रत्यक्षम् । तत् तावत् केन चिन्न बाध्यते । **भा.** ३।४।४।१३ पृ. ९३१, * कर्ता आख्यातस्य आर्थिकोऽर्थः न श्रौतः । ' ननु कर्तारमपि प्रतियन्ति (आख्यातात्)। सत्यं प्रतियन्ति न तु शब्दात् । कुतः तर्हि ? अर्थात् । यदा क्रिया अनुष्ठातव्या विधीयते, तदा अर्थात् कारकव्यापारो गम्यते । यश्चार्थात् गम्यते न स श्रौतः । ' ३।४।४।१३ पृ. ९१३, ९२१. * कर्ता आख्याताभिहितभावनाऽविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति । **शा.** ३।४।८. * कर्ता एकः एव आग्नेयादिप्रधानानां दर्शपूर्णमासचातुर्मास्यादौ । **भा.** ११।२।१–२।८–१२. * कर्ता एव सर्वभावनासु एकान्तसंनिहितः इति असाधारणत्वेन तिङ्वाच्यया संख्यया संभन्त्स्यते । **वा.** ३।४।४।१३ पृ. ९१४. * कर्ता करणादीनि समादत्ते, तानि असमाहितानि न शक्नुवन्ति स्वस्वमर्थम् अभिनिर्वर्तयितुम् । **भा.** ३।१।६।१२ पृ. ६९६, * कर्ता कर्म वा नैव प्रत्ययार्थः इत्याचार्या आहुः । ३।४।४।१३ पृ. ९२३. * कर्ता नाख्यातार्थः किन्तु आक्षेपलभ्यः । **मीन्या.** * जीवतोऽपि पुरुषः कर्ता, न शरीरम् । स च पतितेऽपि शरीरे पुरुषोऽस्ति । तस्मात् स एव ( सर्वस्वारस्य ) परिसमाप्तौ कर्ता ।

भा. १०।२।२३।५८. * ' त्रिधैव ज्ञायते कर्ता विशेषेण प्रतिक्रियम् । योग्यत्वाप्रतिषिद्धत्वविशेषोपपदान्वयैः ॥ ' वा. १।३।७।१६ पृ. २४५ । ' स्वर्गकामो यजेत ' इति अविशेषश्रवणेऽपि अग्नि-विद्यारहितत्वेन अयोग्यस्य शूद्रादेः कर्तृत्वासंभवात् , योग्यत्वेन त्रैवर्णिकः कर्ता विशेषरूपेण ज्ञायते । ' पतितषण्ढयोः द्विजातिकर्मभ्यो हानिः ' इति निषेधात् तद्वर्जितः अप्रतिषिद्धत्वेन ज्ञायते । ' राजा राजसूयेन यजेत ' इति विशेषोपपदेन क्षत्रियः कर्ता ज्ञायते । सु. पृ. २४६. * प्रतिग्रहे हेतुभूतं दानं य आचरति सोऽपि प्रतिग्रहे कर्ता इति व्यपदिश्यते हेतुकर्तर्यपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वसत्त्वात् । पराक्रमः. ५।२. * यस्य कारकस्यावान्तरव्यापारं धातुः प्राधान्येनाह स कर्ता । वा. ३।४।४।१३ पृ. ९१७. * यस्य व्यापारो धातुना प्राधान्येनोपादीयते स कर्ता । धातुना सकलकारकानुयायिव्यापारोपादानेऽपि कारकान्तरव्यापारस्य राजसंनिधाने अमात्यानामिव न्यग्भावान्नातिव्याप्तिः । सोम. १०।२।१९. * कर्तारः क्रियानिर्वृत्त्या उपकुर्वन्ति । भा. ११।२।१०।४५, * कर्तारः ते एव आ अन्तात् स्युः राजसूये । ११।४।२।४-७, * कर्तारः ते वा अन्ये वा कर्मभेदे । ११।३।१२।३३. * कर्तारः तन्त्रं राजसूये इति भाष्यमतम् । सति संभवे ते एव कर्तारः इति वार्तिकम् । के. ११।४।२।४-७. * कर्तारः तन्त्रं विहारद्वये , अध्वर्युप्रतिप्रस्थात्रोस्तु वचनात् भेदः वरुणप्रघासेषु । भा. ११।२।१०।४४-४८, * कर्तारः दर्शपूर्णमासयोः पुनःप्रयोगे ते एव वा अन्ये वा अनियमः । ११।३।१२।३३, * कर्तारः षोडश वरीतव्याः ज्योतिष्टोमे । तावत्कर्तृकः सोमः । ३।७।९।२४. * सत्रे च यजमाना एव कर्तारः । टुप्. ११।४।५।१७. * कर्तुः अनभिधेयस्यैव विशेष्यत्वविशेषणत्वोपपत्तेः अप्रमाणम् ( आख्यातस्य- ) अभिधानशक्तिकल्पनम् । वा. ३।४।४।१३ पृ. ९२१. * कर्तुः असाधारण्येन संख्याऽन्वयस्य विस्तरेणोपपादितत्वात् । सु. पृ. १४४७. * कर्तुः अस्मरणं जीर्णकूपारामादिष्विव चिरकालव्यवधानादुपपन्नम् ( सामगानाम् ऊहग्रन्थस्येदं कर्त्रस्मरणम् ) । वि. ९।२।१ वर्णकं २. * कर्तुः दार्शपौर्णमासिकस्य विकृतौ सौर्यादौ नातिदेशः । भा. ८।१।१३।२०-२२. * कर्तुः दीक्षानिष्ठत्वलाभस्तु अनुवादबलात् इरापदस्येव नानुपपन्नः । एवं च सर्वस्यापि एकवाक्यत्वलाभः ( दीक्षावाक्ये ) । भाट्ट. ५।१।१. * कर्तुः नियमविधिः । ' अग्निहोत्रस्य यज्ञक्रतोः एक एव ऋत्विक् ' अध्वर्युः । ' दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः ' अध्वर्युः ब्रह्मा होता आग्नीध्रश्चेति । ' चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः ' अध्वर्युः प्रतिप्रस्थाता ब्रह्मा होता आग्नीध्रश्चेति । ' पशुबन्धस्य यज्ञक्रतोः षट् ऋत्विजः' । अध्वर्युः प्रतिप्रस्थाता होता मैत्रावरुणः ब्रह्मा आग्नीध्रश्चेति । ' सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता च, ब्रह्मा ब्राह्मणाच्छंसी अग्नीत् पोता च, उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यश्च , होता मैत्रावरुणः अच्छावाकः ग्रावस्तुत् च सदस्यश्च । वि. ४।२।९, ३।७।१७. * कर्तुः पुनः ऐकान्तिकं भावनया उपादानं विशेषरूपेण चेत्युक्तम् । वा. ३।४।४।१३ पृ. ९१९.

⌘ कर्तुः फलम् इति फलोत्सर्गन्यायः । परिमल. ३।४।१३।४४ ब्रसू.

* कर्तुः फलभोगसंभवेनाधिकारः कर्मसु । वि. ६।१।१.

⌘ कर्तुर्वा श्रुतिसंयोगात् ( ३।४।१।२ ) इति न्यायेन यावज्जीवकालः कर्तृधर्मः इत्युक्तम् । भा. १२।२।६।२०.

* कर्तृणाम् अध्वर्युभिन्नानां तन्त्रं चातुर्मास्यगतवरुणप्रघासेषु । भा. ११।२।१०।४४-४८, * कर्तृणाम् ऐक्यम् आग्नेयादीनां प्रधानानां दर्शपूर्णमासचातुर्मास्यादौ । ११।२।१।१-२,४-७.

⌘ ' कर्तृणां शास्त्रगम्येऽर्थे ' इति वार्तिकोक्तन्यायेन कर्तृत्वस्य विधेश्चापुरुषार्थे कर्मणि आत्मलाभायोगात् तदुभयश्रुत्यर्थवत्त्वाय तस्य पुरुषेण समीहितेन प्रधानभूतेन संबन्धः पदश्रुत्या गम्यते । सु. पृ.१३८७ । ' कर्तृणां शास्त्रगम्येऽर्थे चेतनानामधिक्रिया । विधिश्च न भवेत्तेषां फलसंकल्पनादृते ॥ ' यद्यपि अनुष्ठातृ-



मात्रात्मकं कर्तृत्वम्, तथापि तत् बुद्धिपूर्वकारिणां फलसंकल्पनमिश्रम् । तादृशानामेव वैदिकेषु कर्मस्वधिकारो नाचेतनानाम् । विधियुक्ताश्चैताः सर्वाः क्रियाः, प्रतिषेधानामपि विधिप्रत्ययसंबन्धाधीनत्वात् । वा. ३।४।४।१२ पृ. ९०६.

* कर्तरि तृतीया कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा ' ब्राह्मणेन निष्कारणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च' । बाल. पृ. ४४, * कर्तरि षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा ' कृष्णस्य कृतिः' । पृ. ४५.

*'कर्तृकर्मणोरेव आख्यातात् तात्पर्यविषयतया प्रतीतिः तन्निमित्तश्च संख्याऽन्वयः, न कारकान्तराणाम्' इति नियमे ' प्राधान्यविवक्षाहेतुकत्वात् तात्पर्यस्य , कारकान्तराणां च कर्मवत् वस्तुलक्षणस्य कर्तृवद्वा शब्दलक्षणस्य प्राधान्यस्य विवक्षितुमशक्यत्वम् ' हेतुः । सु. पृ. १४५७. * ' तस्मात् पचतिशब्दादिर्वाचकः कर्तृकर्मणोः । तत्पदाभेदवर्तित्वात् पक्तृपक्त्रादिशब्दवत् ॥ ' अभेदवर्तित्वं हि तत्पदसामानाधिकरण्यम् असंदिग्धवाचकेषु कृदन्तेषु ' पक्ता देवदत्तः, पक्व ओदनः ' इत्यादिषु दृष्टम् । यत्र च कर्तृकर्मवचनत्वं नास्ति , तत्र सामानाधिकरण्यमदृष्टं यथा पाकादिशब्दे । ( इति पूर्वपक्षे ) । वा. ३।४।४।१३ पृ. ९३०. * कर्तृकर्मकृतां कर्तृत्वाद्याश्रये शक्तिः । मणि. पृ. ११४.

⌘ कर्तृकर्मविशिष्टसंख्यावगत्याख्यः लौकिकन्यायः । सु. पृ. १४२७.

* कर्तृकर्माख्याते ' ओदनः पच्यते स्वयमेव ' इत्यादौ ओदननिष्ठयोः कर्तृत्वकर्मत्वयोः विवक्षणात् ओदननिष्ठकर्मत्वसमानाधिकरणफलप्रयोजकौदननिष्ठकर्तृत्वसमानाधिकरणपाकानुकूलभावना इति बोधः । मणि. पृ. ११४. * कर्तृ-काल-देश-द्रव्य-गुण-संस्काराः अध्वर्य्वादि-पौर्णमास्यादि-समादि- व्रीह्यादि-शुक्लादि- अवघातादयः तत्तद्वाक्यैः नियमेन प्रयुज्यन्ते । ( तत्र अध्वर्य्वादिः कर्ता , पौर्णमास्यादिः कालः, समादिः देशः, व्रीह्यादि द्रव्यम्, शुक्लादिः गुणः, अवघातादिः संस्कारः । ) के. ४।२।९-१।१।२३-२६.

⌘ कर्तृगुणे तु कर्मासमवायाद् वाक्यभेदः स्यात् । ३।१।१०।१९॥

दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते ' अभिक्रामं जुहोत्यभिजित्यै ' इति । अभिक्रामम् इति णमुल् । अभिक्रम्यअभिक्रम्य इत्यर्थः । किमिदम् अभिक्रमणं प्रयाजेष्वेव निविशते , उत कृत्स्ने प्रकरणे इति विचारे पूर्वपक्षमाह । अभिक्रमणं तावत् कर्तृगुणः । तस्मिन् अभिक्रमणे कर्तृगुणे सति ' अभिक्रामं जुहोति ' इत्यत्र वाक्यभेदः स्यात् । कर्मासमवायात् कर्मणा जुहोतिना अभिक्रमणस्य कर्मणः समवायाभावात् संबन्धाभावात् । ततश्च कर्तृद्वारा सर्वस्मिन् प्रकरणे निविशेत अभिक्रमणम् ।

अथवा अभिक्रमणे कर्तृगुणे, अङ्गानाम् इतिकर्तव्यताऽऽकाङ्क्षाविरहेण अवान्तरप्रकरणपर्युपस्थापितकेवलप्रयाजहोमकर्मसंबन्धाभावात् कर्मासमवायात् , तत्प्रकरणैकवाक्यत्वाभावरूपो वाक्यभेदः स्यात् इति वार्तिकानुसारी सूत्रार्थः । पूर्वस्तु भाष्यानुसारी । ' कर्तृगुणे अभिक्रमणे प्रयाजकर्मणि असमवायात् तद्वाक्यैकवाक्यता न स्यात् इति सूत्रार्थः ' इति कौस्तुभः ।

साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण । २० ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । ' अभिक्रामं जुहोति ' इति अभिक्रमणं दर्शपूर्णमासप्रकरणे न निविशते । किन्तु प्रयाजेष्वेव निविशते । अभिक्रमणेन समासीदति आहवनीयं कर्ता , दूराद्वा अभिप्रसार्य हस्तं जुहुयात् । तस्मादभिक्रमणम् उपकरोति होमस्य । अतः प्रयाजेष्वेव निवेशः । सूत्राक्षरार्थस्तु- अभिक्रामम् इत्येतत् जुहोतिना एकवाक्यम् एकार्थप्रतिपादकं स्यात् । हि यस्मात् पूर्वेण अभिक्रामम् इत्येतावता पदेन जन्यं पदार्थज्ञानम् असमाप्तम् अपर्यवसन्नं जुहोतिना उत्तरेण साकाङ्क्षं भवति । अतः तदेकवाक्यत्वं युक्तम् ।

अथवा अभिक्रमणं प्रयाजभावनया साकाङ्क्षम् इत्थम्भावाकाङ्क्षालक्षणप्रकरणयुक्तमेव । तस्मात् तत् एकवाक्यं प्रयाजभावनायामेव अन्वितं स्यात् । पूर्वेण पूर्वपठितसमानयनविधिना उत्थापितं प्रयाजभावनायाः इत्थम्भावाकाङ्क्षालक्षणं प्रकरणम् असमाप्तम् । इति ।

पूर्वोऽर्थो भाष्यानुसारी द्वितीयोऽर्थो वार्तिकानुसारी ।

कौस्तुभे तु संदंशेन अभिव्यक्ताकाङ्क्षम् अभिक्रमणवाक्यं प्रयाजवाक्यैकवाक्यं स्यात् । नहि आद्योत्तेजकमात्रेण अभिव्यक्तेः समाप्तिरस्ति, तस्याः अन्तिमनाश्यत्वात् इति सूत्रं व्याख्येयम्—इत्युक्तम् । के.

* 'कर्तृगुणे तु कर्मासमवायाद् वाक्यभेदः स्यात्' इत्यत्र असत्यपि लक्षणतो वाक्यभेदे परस्परासंबन्धाभिप्रायेणोक्तम् । वा. ३।६।७।२२ पृ. १०५०.

* कर्तृवः तुल्यानि अङ्गानि प्रधानानि च दर्शपूर्णमासयोः । 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति । प्रधानैः सह अङ्गानाम् एकदेशकालकर्तृकत्वं वक्ष्यति 'अङ्गानि तु प्रधानत्वात्०' (११।२।८) इत्यत्र । भा. ११।१।१०।५६. * कर्तृतः वाचनिको व्यवस्थाविधिः 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तथा 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति । तथा 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति । बाल. पृ. १६–१९, * कर्तृतः वाचनिकः व्यवस्थितविकल्पो यथा याजमाने व्रते 'अग्ने व्रतपते, वायो व्रतपते, आदित्य व्रतपते' इति मन्त्रत्रयस्य ब्राह्मणादिकर्तृतः क्रमेण व्यवस्था । (चिन्त्यमिदं ब्राह्मणेनापि उक्तमन्त्रत्रयस्य प्रयोज्यत्वात् । के.) पृ. १५९, * कर्तृतो व्यवस्थारूपः प्रतिषेधो यथा 'नासोमयाजी संनयेत्' इति । पृ. ३४.

* **कर्तृत्वम्** अनुष्ठेयत्वावगतिपूर्वकानुष्ठातृत्वम् । सु. पृ. १३८१. * कर्तृत्वम् इतरकारकाप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वम् । कारकान्तरनिष्ठव्यापारजनकत्वं विशेष्यदलार्थः । अस्ति चेदं कुविन्दादौ । तन्त्वादिनिष्ठपटजनकसंयोगरूपव्यापारजनकत्वात् । कुठारेऽपि काष्ठनिष्ठसंयोगजनकत्वेन कर्तृत्वापत्तौ सत्यन्तम् । तस्य पुरुषजन्यसंयोगाश्रयत्वेन तत्प्रयोज्यत्वात् । इति सर्वदर्शनानुयायिनः प्राञ्चः । तन्न, ईश्वरप्रयोज्यजीवे अव्याप्तेः । दण्डजन्यसंयोगाश्रयत्वेन कुलाले अव्याप्तेश्च । अतः धातूपात्तव्यापाराश्रयत्वं कर्तृत्वम् इति वैयाकरणनव्याः । 'चैत्रः पचति' 'घटो भवति' इत्यादौ चैत्रघटादौ पाकभावनाऽऽदिरूपव्यापाराश्रयत्वात् लक्षणसमन्वयः । व्यापारपदोपादानात् न फलाश्रये कर्मणि ओदनादौ अतिव्याप्तिः । 'पाचयति चैत्रः मैत्रेण' इत्यादौ पाकस्य णिजर्थस्य च उभयोर्धातूपात्तव्यापारत्वात् तदाश्रययोरुभयोरपि कर्तृत्वोपपत्तिः । परन्तु चैत्रवृत्त्येव कर्तृत्वं तिङुपात्तम् इति तस्यैव तदुपात्तसंख्याऽन्वयः न तु मैत्रस्य । न चैवं 'चैत्रो मैत्रं गमयति' इत्यत्र मैत्रे कर्तृत्वापत्तिः, तस्मिन्नपि तद्व्यवहारसत्त्वेन इष्टत्वात् । तृतीयायास्तु अनुशासनबलात् कर्मसंज्ञाऽवरोधात् न प्रसङ्गः । एवं 'स्थाली पचति' इत्यादौ स्थालीनिष्ठव्यापारस्यैव धातुना उक्तत्वात् कर्तृत्वाविरोधः इत्याहुः । तन्न । 'चैत्रो न पचति' 'भूतले घटो नास्ति' इत्यादौ धातूपात्तव्यापाराभावाश्रये चैत्रादौ अव्याप्तेः । न च तत्र चैत्रवृत्तिः पाकः अभावप्रतियोगी इति, भूतलवृत्तिघटनिष्ठा सत्ता अभावप्रतियोगिनी इत्येवं शाब्दबोधाङ्गीकारात् नाव्याप्तिः, 'ह्रदे वह्निर्नास्ति' इत्यादौ प्रतियोगिताऽवच्छेदकावच्छिन्नप्रतियोगिनः अप्रसिद्ध्या अव्याप्त्यापत्तेः । न च तत्र 'वह्निवृत्तिसत्ता ह्रदवृत्त्यभावप्रतियोगिनी' इत्येवं शाब्दबोधाङ्गीकारात् तन्निवारणम्, तथात्वेऽपि 'शुक्लो घटो भवति' इत्यादौ शुक्लगुणस्यैव भावनाऽऽश्रयत्वेन तत्र अतिव्याप्तिप्रसङ्गात्, घटे अव्याप्तेश्च । अथ तत्र विशेषणविशेष्ययोः उभयोर्भवनाश्रयत्वम्, तदा 'चक्रे घटो भवति' इत्यादौ चक्रस्यापि तदापत्तिः । अथ यद्धात्वर्थाश्रयत्वेन यो विवक्षितः, स तत्कर्ता इत्युच्यते, चक्रे च विवक्षाऽभावात् नातिप्रसङ्गः, तदा 'पटो घटो न' इत्यादौ अन्योन्याभावप्रतियोगिनि घटादौ धात्वर्थाश्रयत्वाभावात् अव्याप्तिः । न च तत्र भवतिपदाध्याहारेण घटपटोभयवृत्ति तादात्म्यभवनं भूधातुना लक्षयित्वा तादृशभवनम् अभावप्रतियोगि इति शाब्दबोधाङ्गीकारात् अर्थाच्च अन्योन्याभावबोधोपपत्तेः तदात्मत्वेन भवनस्य च उभयवृत्तित्वात् उभयकर्तृत्वोपपत्तिः इति वाच्यम् । तथात्वे उभयत्रापि तिङुपात्तसङ्ख्याकत्वापत्तेः । 'घटो न पटौ' इतिप्रयोगानापत्तेः ।



एतेन 'घटो न पटः' इत्यत्र घटपदं घटप्रतियोगिकान्योन्याभाववल्लक्षकम्, नञ्पदं च तात्पर्यग्राहकम्, अन्वयश्च उभयोरपि 'शुक्लो घटः' 'अघटः पटः' इतिवत् पार्ष्ठिकाभेदसंबन्धमादाय विशेषणविशेष्यभावेन वा अध्याहृतक्रियायाम्, इत्यपास्तम् । तथात्वे तद्वदेव 'घटो न पटौ' इति प्रयोगानापत्तेः । 'घटो नश्यति' इत्यादौ कथमपि कर्तृत्वानुपपत्तेश्च ।

अतो यद्धात्वर्थावच्छिन्नलिङ्गानन्वयिपदोपस्थाप्यार्थाश्रयत्वं यस्य, तस्य तत्कर्तृत्वम् । अस्ति चेदम् 'पच्यते चैत्रेण' 'पचति चैत्रः' इत्यादौ, चैत्रस्य धात्वर्थावच्छिन्नकृत्याश्रयत्वात् कर्मलकारेणापि कृतेरुक्तेः । 'घटो भवति' इत्यादौ आख्यातेन आश्रयत्वस्य लक्षणात्, 'घटो नश्यति' इत्यादौ प्रतियोगित्वस्य तेन लक्षणात् तत्रापि लक्षणसमन्वयः । अवच्छिन्नत्वं च स्वरूपसंबन्धविशेषः, न तु जनकत्वाद्येव । तेन प्रतियोगित्वादेर्नाशाजनकत्वेऽपि न क्षतिः । 'चैत्रः पाचकः, पक्ता' इत्यादौ कृतैव पाकानुकूलकृतेः लिङ्गानन्वयिन्याः उक्तत्वात् तस्य कर्तृत्वोपपत्तिः । 'चैत्रस्य पाकः' इत्यादिघञन्ते घञर्थे लिङ्गान्वयेऽपि पचिधातुना उक्तस्य लक्षणया पाकावच्छिन्नव्यापारस्य लिङ्गानन्वयात् तदाश्रये चैत्रे कर्तृत्वाविरोधः । घञा वा लक्षणया कृतेः, शक्त्या पाकाख्यस्य भावस्य उक्तेः पाकावच्छिन्नकृतिसाध्यः पाकः इति शाब्दबोधः । कृतौ चैत्रस्यान्वयात् कर्तृत्वोपपत्तिः । शेषषष्ठीत्वाद्वा कर्तृत्वाभावेऽपि न क्षतिः । प्रधानभूताध्याहृतक्रियायामेव च तस्यान्वयः । चैत्रस्य पाककृतिः इत्यादिप्रयोगोपपत्त्यर्थं च इदमावश्यकम् । 'चैत्रेण कृतः' इत्यादिकर्मकृत्सु अपि धातुना पाकानुकूलव्यापारस्यैव वस्तुतः उक्तेः तदाश्रयत्वेन चैत्रे कर्तृत्वाविघातः । एवम् 'पाचयति चैत्रो मैत्रेण' इत्यादावपि मैत्रस्य धातूक्तपाकानुकूलकृत्याश्रयत्वात् कर्तृत्वम् । चैत्रस्य तु आख्यातोपात्तकृत्याश्रयत्वादेव । अत्र 'पाकं कारयति' इति विवरणात् कृत्यनुकूलव्यापारः णिजर्थः इति लक्षणसमन्वयः । कर्मलकारस्थले च फलस्य संसर्गविधयैव भानाङ्गीकारेण पदोपस्थाप्यत्वाभावात् न तदाश्रये ओदने अतिव्याप्तिः । 'विक्लिद्यन्ति तण्डुलाः' इत्यादौ आख्यातेन धात्वर्थाश्रयत्वलक्षणात् तद्वति तण्डुले नाव्याप्तिः । एवम् 'स्थाली पचति' इत्यादावपि धातुना स्थालीनिष्ठस्यैव व्यापारस्योक्तेः न कर्तृत्वविघातः । कर्मकर्तृस्थले च फलस्यैव अस्मिन् पक्षे आख्यातेन लक्षणात् न ओदनस्य कर्तृत्वविघातः । ततश्च वस्तुपदाभिधेयभावनायाः चैत्रान्वयवारणार्थं लिङ्गानन्वयि इति । 'चैत्रो न पचति' 'भूतले घटो नास्ति' इत्यादौ 'चैत्रवृत्तिपाकभावना, भूतलाधिकरणकघटसत्ताऽऽश्रयत्वं च अभावप्रतियोगि' इति शाब्दबोधाङ्गीकारात् न चैत्रादेः कर्तृत्वविघातः । अभावे चैत्रवृत्तित्वं समभिव्याहारात् नञा वा चैत्रवृत्त्यभावलक्षणा इति न विरोधः । 'वायौ रूपं नास्ति' 'जातौ समवायेन सत्ता नास्ति' 'ह्रदे वह्निर्नास्ति' इत्यादौ च उक्तविधशाब्दबोधाङ्गीकारे प्रतियोगिप्रसिद्ध्यनापत्तेः अगत्या 'रूपादिवृत्तितत्तत्संबन्धावच्छिन्नविद्यमानत्वाश्रयत्वं वाय्वादिनिष्ठाभावप्रतियोगि' इति शाब्दबोधाङ्गीकारात् न रूपादेः कर्तृत्वविघातः । प्रकारान्तरं तु सप्तमीप्रकरणे वक्ष्यते । 'घटः पटो न' इत्यादौ भवतिक्रियापदाध्याहारात् घटप्रतियोगिकान्योन्याभाववल्लक्षणात् नञ्पदस्य च तात्पर्यग्राहकत्वात् 'शुक्लो घटोऽस्ति' इतिवत् पार्ष्ठिकान्वयलभ्याभेदमादाय उभयोः क्रियाऽन्वयात् उभयोरपि कर्तृत्वोपपत्तिः । वस्तुतस्तु 'घटो न पटौ' इत्यादौ विभिन्नसंख्याकत्वानुपपत्त्या न अभाववल्लक्षणा, अपितु अध्याहृतक्रियावाचकाख्यातेन प्रतियोगित्वाश्रयत्वयोः उभयोरपि लक्षणा । तयोश्च यथातात्पर्यं घटपटान्वयात् घटपटसंबन्धिनी यथाक्रमम् अन्योन्याभावीये विद्यमानत्वसंबन्धिनी प्रतियोगित्वाश्रयत्वे इति च शाब्दबोधाङ्गीकारात् उभयोः कर्तृत्वोपपत्तिः । परन्तु 'अनुयोगिवृत्तिसंख्यावचनमेव आख्याते, न तु प्रतियोगिवृत्तिसंख्यावचनम्' इति नियमोऽपि अनुभवानुसारेण प्रकृते कल्प्यते, इति नैतादृशोऽपि बोधः, अपितु 'घटो भवति, पटौ न भवतः' इति क्रियापदद्वयाध्याहारेण एकघटवृत्तिभवनाश्रयत्वं पटद्वयवृत्तिभवनाश्रयत्वप्रतियोगिकान्योन्याभाववत् इत्येवं नञ्पदस्य तात्पर्यग्राहकत्वमङ्गीकृत्य द्वयोराख्यातयोः 'पश्य मृगो धावति' इतिवत् स्वप्रतियोगिकान्योन्याभाववत्त्व-

संसर्गेण अन्वयः । मानसश्च भवनाश्रययोः भेदबोधः । एवं च स्वस्वसंख्याऽन्वयः कर्तृत्वं च उभयोरुपपन्नम् इति ध्येयम् । एवम् ' सत्ता न समवायेन जातिवृत्तिः ' इत्यादिप्रयोगा अपि लक्षणाऽध्याहारादिना व्याख्येयाः, अयोग्या वा इत्यन्यत्र विस्तरः । अत्र च आश्रयत्वमेव तृतीयाप्रथमातिबादीनामर्थः । अन्यत्तु सर्वं प्रमाणान्तरेण लभ्यम् इति ध्येयम् ।

अथवा कृत्याश्रयत्वमेव मुख्यं कर्तृत्वम्, यत्नवाचिकृञ्धातुघटितत्वात् कर्तृशब्दस्य । अन्यत्र कर्तृत्वव्यवहारो भाक्त एव द्रष्टव्यः ।

वस्तुतस्तु ' धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम् ' ' पत्युर्नो यज्ञसंयोगे ( पा० ४।२। ३३ ) ' ' जायापती अग्नीनादधीयाताम् ' इत्यादिप्रमाणान्तरानुरोधात् स्त्रिया अपि यजमानवदेव कर्तृत्वे अवगते ' वसन्ते ब्राह्मणोऽग्नीनादधीत ' ' यजेत स्वर्गकामः ' इत्यादौ एकत्वश्रवणं निषादस्थपत्यधिकरणन्यायेन लक्षणायां प्रमाणाभावात् उभयोः व्यासज्यवृत्ति एकं कर्तृत्वं गमयति । तच्च न सखण्डोपाधिरूपम्, बाधात् । अपितु पूर्वोक्तसखण्डोपाधिव्यापकम् अखण्डोपाधिरूपं कर्तृत्वम्, तद्गतमेव च एकत्वादिकम् इत्युक्तं प्राक् । अस्मिंश्च पक्षे कर्मकर्तृस्थलेऽपि न फललक्षणा । अपितु आख्यातलक्ष्यस्य अखण्डोपाधिरूपस्य कर्तृत्वस्यैव आख्यातोपात्तकृतौ एव स्वसमानाधिकरणफलप्रयोजकत्वसंसर्गेण अन्वयः इत्युक्तं **कौस्तुभे** । इदमेव च कर्तृत्वं तृतीयाऽर्थः । तस्य च ' चैत्रेण पच्यते ' इत्यत्र स्वनिरूपकपाकानुकूलत्वसंसर्गेण निरूपकत्वेनैव वा लिङ्गानन्वयिभावनायामन्वयः । इदमेव च कात्यायनमते प्रथमाऽर्थः कर्त्राख्यातलक्ष्यं कृत्प्रत्ययशक्यताऽवच्छेदकं कृद्योगनिमित्तकषष्ठीबोध्यं च । **रहस्य.** पृ. ९१-९६.

* कर्तृत्वं कृतिप्रयोजकत्वं कृतिसमवायित्वं वा । **मणि** पृ. ८६, * कर्तृत्वं भावनाऽऽक्षिप्तः अखण्डोपाधिः । पृ. ११३. * कर्तृत्वं भोक्तृत्वं च सक्रियस्य स्यात्, न निष्क्रियस्य । **ऋजु.** पृ. १७१. * कर्तृत्वं भोक्तृत्वार्थम् ' शास्त्रफलं प्रयोक्तरि ' इति न्यायात् ( ३।७।८ ) । **सोम.** ३।७।२. * कर्तृत्वं यागक्रियानिष्पादकत्वम् । **वि.** ६।१।१.

**' कर्तृत्वं साधकत्वेन '- इत्यादिवार्तिकोक्तन्यायेन । सु.** पृ. १३८२ । ' कर्तृत्वं साधकत्वेन सिद्धं तच्चाभिधीयते । स्वामित्वं तु ततः पश्चात् प्रमाणान्तरगोचरः ॥ ' यद्यपि स्वामित्वेन विना कर्तृत्वं नोपपद्यते, तथापि प्रमाणान्तरलभ्ये तस्मिन् आख्यातांशैरनुष्ठातृत्वांशमात्रमभिधीयते । तथा च स्वामित्वप्रतिपादनार्थाः तत्रतत्र स्वर्गकामादिशब्दाः प्रयुक्ताः । तस्मात् गुणत्वमेव केवलं कर्तृत्वम् । **वा.** ३।४।४।१२ पृ. ९०४.

* कर्तृत्वं स्वातन्त्र्यम् । ' स्वतन्त्रः कर्ता ' इति सूत्रात् ( पा० १।४।५४ क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् । प्रधानीभूतधात्वर्थाश्रयत्वं स्वातन्त्र्यम् ) स स्वतन्त्रः त्रिविधः शुद्धः, प्रयोजकः, कर्मकर्ता चेति । तदनुकूलव्यापारफलाश्रयः शुद्धः । व्यापारानाश्रयत्वे सति फलाश्रयः द्वितीयः । फलानाश्रयत्वे सति अनुकूलव्यापाराश्रयः तृतीयः । कर्तृत्वं न तावत् यत्नाश्रयत्वं तदुपादानविषयकापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं वा, ' कूलं पिपतिषति ' ' रथो गच्छति ' इत्यादौ अभावात् । नापि कारकान्तराप्रयोज्यत्वे सति कारकान्तरप्रयोजकत्वम्, उक्तदूषणापरिहारात् । किन्तु धात्वर्थव्यापाराश्रयत्वं तत् । यद्धातूत्तराख्यातेन यगाद्यसमभिव्याहृतेन यद्धात्वर्थान्वितधर्मवत्त्वं बोध्यते, तद्वत्त्वं तत्क्रियाकर्तृत्वम् । ' चैत्रः पचति-जानाति-नश्यति ' इत्यादौ पाकानुकूलव्यापारवत्त्व-आश्रयत्व-प्रतियोगित्वादिकमेव तत्तत्क्रियाकर्तृत्वम् । ' पच्यते तण्डुलः ' इत्यादौ कर्मणि अतिप्रसङ्गवारणाय यगाद्यसमभिव्याहृतेन इति । तेन ' स्थाली पचति ' ' काष्ठानि पचन्ति ' इत्यत्र स्थालीकाष्ठादावपि कर्तृत्वम् अविरुद्धम् । **मणि.** पृ. १६२. * यागकर्तृत्वं यागानुकूलकृत्याश्रयत्वम् । **भाट्ट.** १०।२।१६.

* **कर्तृदेशयोः** भेदस्य अनियमः भिन्नकर्मसु । **भा.** ११।३।१२।३३ ( ३५ ).



**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् । ४।२।९।२३ ॥**

' अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक् ' ' दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः ' ' चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः ' इत्यादिना कर्तार उक्ताः । ' समे दर्शपूर्णमाभ्यां यजेत ' इत्यादिना देश उक्तः । ' पौर्णमास्यां पौर्णमास्या यजेत ' इत्यादिना काल उक्तः । एतेषां कर्तृदेशकालानाम् एभिर्वाक्यैः अचोदनं न चोदनं न विधानं क्रियते, किन्तु अनुवादः क्रियते । प्रयोगे अनुष्ठाने नित्यसमवायात् नित्यं संबन्धात् । नहि विना कर्तृदेशकालेभ्यः अनुष्ठानं भवति । तस्मादनुवादः । इति पूर्वः पक्षः ।

**नियमार्था वा श्रुतिः । २४ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । कर्तृदेशकालानां नानुवादः, किन्तु विधानमेव । ननु प्रयोगे नित्यसमवायात् कर्त्रादिश्रुतिरनुवादः इत्युक्तम् । उच्यते । सा श्रुतिः नियमार्था भवति । अनियमे प्राप्ते नियमार्था श्रुतिः । अग्निहोत्रानुष्ठाने एकस्मिन् अनेकस्मिंश्च ऋत्विजि प्राप्ते ' अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक् ' इति अध्वर्योर्नियम उक्तः । दर्शपूर्णमासयोः चतुर्षु अधिकेषु वा ऋत्विक्षु अनियमेन प्राप्तेषु ' दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः ' इति अध्वर्युहोतृब्रह्माग्नीध्राणां चतुर्णां नियमः उक्तः । दर्शपूर्णमासयोः समे विषमे च देशे अनियमेन प्राप्ते ' समे दर्शपूर्णमासाभ्यां यजेत ' इति समभूतस्य देशस्य नियम उक्तः । एवं पौर्णमासयागस्य पौर्णमासी अन्या वा तिथिः संभाव्यते, ततश्च ' पौर्णमास्यां पौर्णमास्या यजेत ' इत्यनेन पौर्णमासीतिथिरूपः कालः नियमेन उक्तः । एवं नियमार्था श्रुतिः । तस्मात् कर्तृदेशकालानां विधिरेवायं नानुवादः इति सिद्धान्तः । **के.**

**कर्तृदेशकालविधयः नियमार्थाः ॥**

**कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् । ४।२।९।२३ ॥**

**भाष्यम्**— इदं श्रूयते, ' पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः ' ' दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः ' ' चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः ' 'अग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक् ' 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः'। तथा, ' समे दर्शपूर्णमासाभ्यां यजेत' 'प्राचीनप्रवणे वैश्वदेवेन यजेत ' ' पौर्णमास्यां पौर्णमास्या यजेत ' ' अमावास्यायाममावास्यया यजेत ' इति । तत्र संदेहः किं कर्तृदेशकाला विधीयन्ते, उत अनूद्यन्ते इति । किं तावत् प्राप्तम् ? कर्तृदेशकालानाम् अचोदनं अनुवादः । कुतः ? प्रयोगे नित्यसमवायात् । प्रयोगे नित्यसमवेता एते इति । न ऋते कर्तृदेशकालेभ्यः प्रयोगः सिध्यति । तेन प्रयोगचोदनयैव प्राप्तानामनुवादः । ननु विषमादिप्रतिषेधार्थमेतद्वचनं भविष्यति । नेति ब्रूमः । उपदेशकमेवंजातीयकं वचनम्, न प्रतिषेधकम् । तस्मादनुवाद इति ।

**टुप्**— कर्तृसंख्या समादयश्च प्रयोगवचनेन आक्षिप्तत्वान्न विधीयन्ते । तस्मादनुवादः । न च समादिग्रहणं विषमादिनिवर्तकम्, प्रतिषेधवचनस्य अभावात् । न चेतरनिवृत्तिः एवकाराभावात् । न च विधिः, प्राप्तत्वात् । अनेनाभिप्रायेणाऽऽह- ' उपदेशकमेवंजातीयकं वचनं न प्रतिषेधकम् ' इति ( भाष्यम् ) ।

**नियमार्था वा श्रुतिः । २४ ॥**

**भाष्यम्**— उच्यते, न चैतदस्ति, अनुवाद इति । अनुवादमात्रमनर्थकम् । यदि विधिः, एवमपूर्वमर्थं प्रकरिष्यति । तस्माद्विधिरिति । ननु प्रयोगाङ्गत्वात् प्राप्ता एवेति । उच्यते । नियमार्था श्रुतिर्भविष्यति । कोऽयं नियमः ? अनियतस्य नियतता । प्रयोगाङ्गतया सर्वे देशाः प्राप्नुवन्ति, न तु समुच्चयेन । यदा समो न तदा विषमः, यदा विषमो न तदा समः । स एष समः प्राप्तश्च अप्राप्तश्च । यदा न प्राप्तः, स पक्षो विधिं प्रयोजयति । अतो विषमचिकीर्षायामपि समो विधीयते । तस्मात् विषमस्य अप्राप्तिः विधौ सति भवतीति समो विधीयते । एवमितरेष्वपि । तस्माद्विधिरिति ।

**टुप्**— ' व्रीहिभिर्यजेत ' इति दर्शपूर्णमासयोः श्रवणात् यावत् आक्षेपात् अङ्गभावः, तावत् देशादि स्थितम् । दर्शपूर्णमासापूर्वम् एषां निमित्तं प्रयोजकं चेति । अतो नियतनिमित्तत्वात् नियमः इत्युच्यते ।

प्रयाजादीनामपि इति चेत्, तन्न । यत् पक्षे विधिमन्तरेण प्राप्नोति, तत् श्रूयमाणम् अनियतांशे प्रविशत् नियमः अभिधीयते । न चानुवादः शक्यते वक्तुम् । सर्वदा यत् प्राप्नोति, तत् अनूद्यते । अत आह (भाष्यम्) ' अनियतस्य नियतता ' इति ।

शा — **' सर्वं क्रियाविधेरेव कारकं प्राप्यते यतः । ततस्तन्न विधातव्यमप्राप्ते ह्यर्थवान् विधिः ॥ विषमादिनिवृत्त्यर्थं समादिश्रवणं यदि । परिसंख्या प्रसज्येत नातोऽन्याऽस्ति विधेर्विधा ॥ '** तस्मादनुवादः । ( सिद्धान्तमाह– ) नैवम् । **' नियमेन नहि प्राप्तिः समादीनां क्रियाविधेः । समे च विषमे वाऽपि सोमेनान्येन वा यजिः ॥ प्राप्नोति , तेन सोमादेः प्राप्तिर्न स्यादपि क चित् । यस्मिन् पक्षे न सोमादेः प्राप्तिर्न स्यादपि क चित् । अप्राप्तिपक्षसद्भावान्नियमार्थो विधिः स्थितः ॥ '** ( नियमपरिसंख्ययोः इतरपरिवर्जनाऽविशेषेऽपि यत्र प्रयोगे समादेः प्राप्तिः, तत्रापि प्रापणस्य शास्त्रेण अकरणे विध्याक्षेपात् प्राप्नुवतो विषमादेः वर्जनालाभेन प्रथमोपस्थितत्वात् विधेयसमादिगततया प्रत्यासन्नत्वात् भावरूपत्वेन लघुशरीरत्वाच्च अप्राप्तांशपूरणमेव फलम् । विषमादिनिवृत्तिस्तु तद्वैपरीत्यात् अप्राप्तांशपरिपूरणरूपनियमानुनिष्पादित्वाच्च न फलम् । परिसंख्यायां तु उभयोरपि नित्यप्राप्तत्वेन अप्राप्तांशपरिपूरणस्य फलत्वासंभवात् इतरपरिवर्जनमेव फलम् । एवं च ' समे एव यजेत ' इत्येवकारेण फलविवरणम् अयोगव्यवच्छेदार्थम्, न तु परिसंख्यायामिव अन्ययोगव्यवच्छेदार्थम्, इति नियमपरिसंख्ययोः फलभेदात् अवर्जनीयः तृतीयो विधिप्रकारः [ नियमविधिरूपः ] इत्याशयः ) ।

**सोम**— अवभृथदेशप्रसङ्गात् अन्यस्य समादिदेशस्य तत्समानन्यायस्य कालकर्तृव्रीहिसोमादेरपि बुद्धिविपरिवर्तनात् प्रासङ्गिकी **संगतिः** । **सूत्रार्थस्तु**– कर्त्रादीनाम् अचोदनम् अनुवाद एव स्यात्, प्रयोगे कर्त्रादिसामान्यस्य नित्यसमवायात् इति ।

**वि**— ' समे यजेत ( इत्यादिना ) देशादेरनुवादोऽथवा विधिः । , प्रयोगानुपपत्त्यैव प्राप्तत्वादनुवादता ॥, समे वा विषमे वेति पाक्षिकत्वनिवृत्तये । अप्राप्तांशानुपातेन नियमोऽत्र विधीयते ॥ '

**भाट्ट**— तत्र कर्तारः अध्वर्य्वादयः, कालाः पौर्णमास्यादयः, देशाः समादयः, द्रव्याणि व्रीह्यादीनि, गुणाः शुक्लादयः, संस्कारा अवघातादयः तत्तद्वाक्ये श्रुताः कर्मचोदनयैव आक्षेपेण प्राप्तत्वान्न विधीयन्ते, अतो न ते कर्मविधिभिर्नियमेन प्रयुज्यन्ते **इत्याशङ्काऽऽभासे** प्राप्ते, यावदाक्षेपेण अनियताः प्राप्यन्ते, तावत् वचनेन नियमफलकविधिकरणात् नियमेनैव प्रयोजकत्वम् । नियमविधिप्रकारश्च सर्वोऽपि अनागतावेक्षणन्यायेनात्र, **कौस्तुभे** च मन्त्राधिकरणे एव प्रदर्शितः ।

**मण्डन** — ' देशादिवाक्ये नियमो विधेयः । '

**शंकर**— ' कालादौ नियमो विधिः । '

* **कर्तृधर्मो** यावज्जीविकाभ्यासः । बृ. २।४।१।१–७. * **कर्तृनामधेयानि** कर्माणि यावन्ति श्रूयन्ते , तावन्तो वरीतव्याः ( कर्तारः ऋत्विजः ) भिद्यन्ते । **भा.** ३।७।९।२२.

* **कर्तृन्यायः** । कर्त्रधिकरणम् (३।४।४।१२–१३)। **के.** * **कर्तृप्राधान्ये** ( यजेत इत्यत्र ) कार्याभावात् न साधनाकाङ्क्षया भवितव्यम् । नहि भवति पाचकः केन किमर्थं कथमिति । ( भावप्राधान्ये तु भवति, केन किमर्थं कथमिति । ) **भा.** ११।१।४।२४, * **कर्तृभेदः**। अङ्गप्रधानानाम् अग्नौ सौत्रामण्यां ( च ) दक्षिणाभेदात् अन्यकर्तृत्वं विज्ञायते ' वडवा दक्षिणा ' इति । ११।३।१।१.

**कर्तृभेदस्तथेति चेत् । ११।२।१०।४४॥**

वरुणप्रघासेषु दक्षिणोत्तरविहारयोः किं कर्तारो भिन्नाः, उत तन्त्रमिति विचारे पूर्वपक्षमाह । यथा उभयोर्विहारयोः पूर्वाधिकरणे अङ्गानि भिन्नानीत्युक्तम्, तथा कर्तृभेदोऽपि स्यात् । उभयत्र सर्वे कर्तारोऽपि भिन्नाः स्युः । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, समवायात् । ४५ ॥**

उभयोर्विहारयोः न सर्वे एव कर्तारो भिन्नाः । होता तावत् स्वस्थानस्थितः एव सन् याज्याऽनुवाक्या अनुब्रुवन् अध्वर्युमिव प्रतिप्रस्थातारमपि संबोधयितुमलम् । आग्नीध्रो-



ऽपि उत्करदेशस्थः प्रत्याश्रावणं करिष्यति । ब्रह्माऽपि उभयोरपि विहारयोर्दक्षिणतः स्थितः सन् कृताकृतानि अवेक्ष्य अनुज्ञां दास्यति । तस्मादेतेषां त्रयाणां तन्त्रम् । समवायात् ' चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः ' इति वचनेन पञ्चानामेव संबन्धात् । अन्यथा हि दश स्युः । अध्वर्युप्रतिप्रस्थातारौ तु ऋत्विजौ भिन्नौ । एवं हि पञ्च भवेयुः अध्वर्योरपि तन्त्रत्वे तु चत्वार एव स्युः, न पञ्च ।

**लिङ्गदर्शनाच्च । ४६ ॥**

' प्रवयसमृषभं दक्षिणां ददाति ' इति वरुणप्रघासेषु उभयविहारार्थं दक्षिणैक्यमुक्तम्, तत् लिङ्गम् एककर्तृकत्वं दर्शयति । तथा च तन्त्रं कर्तारः । प्रवयसं वृद्धम् ।

**वेदिसंयोगादिति चेत् । ४७ ॥**

आह पूर्वपक्षी । ' अन्तर्वेद्यन्यः पादो होतुर्भवति, बहिर्वेद्यन्यः ' इति होतुः वेद्या संयोगः श्रूयते । पादसंयोगश्चायं वेद्याम् उत्तरश्रोण्यां कर्तव्यः । स च एकेन होत्रा न शक्यः कर्तुं दक्षिणोत्तरयोर्वेद्योः । तस्मात् होतारौ तावत् द्वौ स्वीकर्तव्यौ । तस्मात् लिङ्गाच्च सर्वेऽपि भिन्नाः स्युः ।

**न, देशमात्रत्वात् । ४८ ॥**

सिद्धान्ती आह । नैतदेवम् । देशमात्रत्वात् ' अन्तर्वेद्यन्यः ' इत्यादिना देशमात्रं विधीयते, तस्मिन् देशे होत्रा स्थातव्यम्, यत्र अस्य एकः पादः अन्तर्वेदि भवेत् बहिर्वेदि अन्यः । नात्र होतुः पादो वेदेः वेद्योर्वा उपकारकत्वेनोपदिश्यते । एकस्य च होतुः द्वौ पादौ भवतः एव । न तदर्थं होतृद्वयापेक्षा । न च वेदिद्वयेऽपि होत्रा होतृभ्यां वा स्थातव्यम् । तस्मात् न कर्तृभेदः । **के.**

* कर्तृभेदः दक्षिणाभेदात् । कर्तृभेदाच्च अङ्गभेदः । **भा.** ११।४।१।१–३. * कर्तृभेदः नास्ति दक्षिणैक्यात् द्वादशाहे । **टुप्.** ११।४।५।१७.

* **कर्तृभेदात्** अङ्गभेदः । राजसूये सोमापौष्णादित्रिके आग्नावैष्णवादित्रिके च दक्षिणाभेदात् कर्तृभेदः, कर्तृभेदाच्च त्रिकयोरङ्गभेदः । **वि.** ११।४।१. * **कर्तृमनुष्यसंबन्धकीर्तनेन** क्रिया प्रशस्ता भवति । प्रशस्तं च प्रतिपाद्यम् । **भा.** ६।७।१२।२६. * **कर्तृवत्** । यथा दीर्घः कर्ता न संतर्दननिमित्तं तथा संस्था अपि , अभिषूयमाणसोमधारणे संतर्दनप्रयोजने अर्थवादोक्ते , कर्तृदैर्घ्ये इव संस्थास्वपि अविशेषेणार्थवादयोगसाम्यात् । ' धृत्यै ' इत्यर्थवादः ' दीर्घसोमे संतृद्यात् धृत्यै ' इति । **सु.** * कर्तृवत् ' वषट्कारश्च कर्तृवत् ' ३।२।१६।३८ । सोमे भक्षमन्त्रे अनुवषट्कारदेवता नोपलक्षयितव्या कर्तृवत् । यथा कर्ता नोपलक्ष्यते ' होतृपीतस्य , अध्वर्युपीतस्य ' इति , एवं अग्निपीतस्य इत्येवम् अनुवषट्कारदेवताऽपि नोपलक्षयितव्या । **भा.** * **कर्तृविकल्पः** एको द्वौ बहवो वा अहीनेन यजेरन् इति । **बाल.** पृ. १६३, * **कर्तृविधिः** अर्थवादः ' एषा वा अनाहिताग्नेराहुतिर्यच्चतुर्होतारः । ' ( ६।८।१ अधिकरणे ) पृ. ५५, * **कर्तृविधिसरूपः** अर्थवादः ' इति ह स्माह बट्कुर्वार्ष्णिः माषान् एव मह्यं पचत ' इति । ( ६।७।१२ अधिकरणे ) । पृ. ५६. * **कर्तृव्यापारसामान्यरूपैव** चासौ भावना , तमेव विशेषतः पर्युपस्थापयति । **वा.** ३।४।४।१३ पृ. ९१७, * **कर्तृसंस्कारश्च** सर्वान्तरङ्गो भक्षणं नाम । ३।४।१७।५०. * **कर्तृस्मरणाभावात्** अपौरुषेयाः वेदाः । अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणम् अनादरात् भ्रष्टम् इति ( केचित् ) तदयुक्तम् । **वैद्यनाथः.** १।१।८।२९.

**कर्त्रधिकरणम्** । कर्तृन्यायः । कर्त्रनभिधानन्यायः ॥ ३।४।४।१२–१३ ॥

**वा**— किमाख्यातेन कर्ता अभिधीयते नेति । तत्र यदि अभिधीयते, ततः श्रौतत्वात् प्रयोजनाकाङ्क्षिणी भावना प्रकरणगम्यक्रत्वर्थत्वबाधनेन पुरुषार्था भवति । अथ नाभिधीयते , ततः श्रुतिविरोधाभावात् प्रकरणेन क्रत्वर्थता ( भवति ) । **ननु** सत्यपि कर्तुरभिधाने भावनाप्रधानत्वात् आख्यातेन तां प्रति उपादीयमानस्य श्रौतोऽपि संबन्धः प्रकरणानुगुणत्वात् अविरुद्धो नैव क्रत्वर्थतां बाधते । विरोधिनौ हि तुल्यकक्षौ संबन्धौ परस्परं बाधेयाताम् , न गुणप्रधानभूतौ । तद्यथा ' दशापवित्रेण ग्रहं संमार्ष्टि ' इत्यत्र दशापवित्रोपसर्जनस्य संमार्गस्य ग्रहं प्रति उपादीयमानस्य नैवमाशङ्का भवति ' किं दशापवित्रेण संबध्यताम् , उत ग्रहेण ' इति । तथा

अत्रापि गुणभूतकर्तृकायाः क्रियायाः क्रतुं प्रति उपादीयमानाया न कश्चित् विरोधः । यदि तु आख्यातेन कर्तुः प्राधान्यमुच्येत ततः प्रकरणगम्येन क्रतुप्राधान्येन विरोधः स्यात् । यदि वा कर्तुरिव क्रतोरपि गुणत्वं स्यात्, तत उभयोः शेषयोः शेषिसमवायविरोधो लक्ष्यते । न तु तदुभयमप्यस्ति । अतः श्रुत्या कर्तुर्गुणभावात्, प्रकरणेन च क्रतोः प्राधान्यात्, नानाविषयत्वेन असमवायादविरोधः । तदभावात् अबाधः स्यादिति । **नैतदेवम् । ' यद्यप्यादौ गुणत्वेन कर्ता कर्मणि गम्यते । तथाप्यस्य प्रधानत्वं न पश्चात् प्रतिषिध्यते ॥ '** यद्यपि प्रथमं साधकमपेक्षमाणा क्रिया कर्तारं गुणत्वेन गृह्णाति, तथापि तस्याः प्रयोजनाकाङ्क्षावेलायामपि कर्तैव संनिहितः तां निर्वर्तयितुं समर्थः । सोऽपि च साधकत्वं प्रतिपद्यमानः ' किमयं ममोपकरिष्यति ' इत्येवमपेक्षते । तयोश्च एकशब्दोपात्तयोः परस्परसंबन्धे निर्वर्तमाने विप्रकर्षात् यागसंबन्धो न गृह्यते । न च सामवायिकत्वे ( संनिपत्योपकारकत्वे ) संभवति आरादुपकारकल्पना युक्ता । तद्यथा ' अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति ' इत्यत्र सत्यपि तद्धितेन देवतोपसर्जनत्वोपादाने यागस्य प्रयोजनाकाङ्क्षायां सत्याम् अग्नीषोमयोरेव संनिहितयोः संस्कार्यत्वं विज्ञायते, इति न पशोः ( पशुपुरोडाशयागे पशुयागस्य इत्यर्थः ) आरादुपकारकत्वेन ( संस्कार्यत्वम् ) कल्प्यते । नहि पूर्वं गुणत्वम्, उत्तरेण प्राधान्येन विरुध्यते । अवश्यम्भाविन्यां प्रयोजनकल्पनायां कस्य चित् प्राधान्यम्, एवमत्रापि इति । **अथवा** आख्यातेन कर्ता केवलमभिधीयते, गुणप्रधानभावस्तु अर्थात् यथेष्टं यथायोग्यं भविष्यतीति । तेन उभयोः क्रियाकर्त्रोः अपेक्षासंनिधियोग्यत्वैः अन्योन्यं गुणप्रधानभावौ उपपत्स्येते । **' यद्वैतदविशेषेण स्थितं क्रमवशादुभौ । प्रत्ययार्थं सह ब्रूतः प्रकृतिप्रत्ययाविति ॥ तेनाख्यातेऽपि कर्तैव प्रकृत्यर्थोपसर्जनः । प्राधान्येनाभिधीयेत द्वाभ्यामपि कृदन्तवत् ॥ '** नहि अस्य औत्सर्गिकस्य न्यायस्य स्मरणस्य वा अपवादभूतं न्यायान्तरं स्मरणान्तरं चोपलभ्यते । तेन

कृत्तद्धितान्तवदेव प्रत्ययार्थप्राधान्यं प्राप्नोति । ततश्च शब्देनैव धात्वर्थस्य शेषत्वमुक्तं नातिक्रमितुं शक्यते । **ननु** सामान्यमुत्सृष्टं प्रतीतिविशेषेण अपोद्यते । तथाहि, **' धात्वर्थस्य प्रधानत्वमाख्यातेषु प्रतीयते । कर्तोपसर्जनं तस्य, प्रधानत्वे ह्यसंगतिः ॥ '** द्वयोस्तावत् प्रधानयोर्गुणयोर्वा सर्वत्रैव संबन्धो नावकल्पते । तत्रावश्यं कल्पनीये गुणप्रधानत्वे यथाप्रतीति व्यवस्था अवधार्यते । तत्प्रतीतिश्च यथा अन्यत्र प्रकृत्यर्थोपसर्जनप्रत्ययार्थविषयत्वेन उपलभ्यते, तथा अत्र प्रत्ययार्थोपसर्जनप्रकृत्यर्थविषया सर्वस्य स्वसंवेद्या । न च ततोऽन्यत् बलवत् कारणमस्ति । तस्मात् अप्रसङ्गः कर्तुः प्रधानत्वस्येति । **उच्यते । ' धात्वर्थस्य प्रधानत्वं न तावदिह जन्मनि । औत्सर्गिको न च न्यायो मत्पक्षे हि निवर्त्स्यति ॥ '** भावप्रधानत्वात् आख्यातेषु न कदा चित् धात्वर्थस्य नित्यं करणभूतस्य प्राधान्यम् इति स्थितं ( भावार्थाधिकरणे ) । न च धात्वर्थ एव भाव इत्युक्तम् । ननु प्रतीतिवशात् कर्तृप्राधान्यं तावत् निवृत्तम् । सत्यं निवृत्तम्, न तु भवत्पक्षे, किं तर्हि अस्मत्पक्षे । यो हि भावमेव प्रत्ययार्थं वदति, तस्य प्रकृतिप्रत्ययार्थप्राधान्यन्यायः लौकिकी प्रतीतिः ( च ) उभयमपि न विरुध्यते । यस्य तु कर्तैव शुद्धः प्रत्ययार्थः, तस्य नैव केन चित् भावोपादानम्, इति तत्प्राधान्यानुगमलक्षणं न स्यात् । लक्षणत एव कर्तुः प्राधान्यं प्राप्नोति, तच्च प्रतीतिविरुद्धम् । तत्र यदि प्रतीतिरनुगन्तव्या, ततः तदनुसारेव प्रत्ययार्थलक्षणं प्रणेतव्यम् । तच्च भावप्रत्ययार्थवादिभिरेव प्रणीतं नेतरैः । अतस्तैः अतिक्रान्तायां लौकिकप्रसिद्धौ अभिधेयत्ववत् कर्तुः प्राधान्यमभ्युपगन्तव्यम्, इति क्रियायाः तादर्थ्यप्रसङ्गः । ( यद्वैतत् इति श्लोकद्वयोक्तं परिहारं दूषयितुमारभते— ) आह — तत्र एतत् प्रसज्यते, यत्र तादर्थ्यसंबन्धमेव श्रुतिरुपादत्ते । प्रकृतिप्रत्ययार्थयोः पुनः अपेततादर्थ्यविशेषणविशेष्यभावमात्रं प्रतीयते । तत्र यद्यपि विशेषणत्वेन धात्वर्थस्य उपसर्जनता, तथापि राजपुरुषः इत्यादिष्विव कदा चिदङ्गाङ्गिभावो विपरीतः स्यात् । तथाहि, **' विशेषणतया राजा पुरुषस्योपसर्जनम् । अर्थयोः शेषशेषित्वे तस्यैवेष्टा प्रधानता ॥ '** अपिच



**' निःसंदिग्धप्रधानत्वं पाचकादिषु कारकम् । तथापि तु न तादर्थ्यं क्रियाणामवधार्यते ॥ '** तथा च पश्वेकत्वपुंस्त्वादिषु समानपदोपादानलक्षणश्रुतिसंबन्धेषु वाक्येन क्रियार्थत्वेन अत्रधार्यमाणेषु वक्ष्यते ' न श्रुतिर्ब्रूते वाक्यार्थो नेति ' ( नास्तीति इति मूले. भा. ४।१।५।१५ पृ. १२०५ ) । तेन अत्रापि शक्यं वक्तुम् ' न श्रुतिर्ब्रूते प्रकरणार्थो नेति ' । अपिच **' प्राधान्येनेह कर्तृत्वं यदि नामाभिधीयते । ततस्तात्पर्यतो वाच्यं गुणत्वमवधारितम् ॥ '** प्राधान्येनाभिधानं तात्पर्येणाभिधानम्, न शेषित्वेन । तदिह यदि कर्तृत्वपरमाख्यातम्, ततः सुतरां गुणत्वमभिहितं भवति । नहि अकुर्वन् कर्ता इत्युच्यते । यश्च यत् करोति, स तस्यैकान्तेन गुणभूतः, तेन अस्यानुपपन्नं शेषित्वेन प्राधान्यम् । एतत् औदासीन्याभिधानपक्षेऽपि वक्तव्यम् । ( द्वितीयं परिहारं दूषयति— ) यत्तूक्तम् ' अभिधीयते केवलं प्रत्ययेन कर्ता, गुणप्रधानभावस्तु अर्थात् भविष्यति ' इति । ( वा. ९०२।९ ) । तत्रापि यदि वस्तुमात्रत्वेन कर्ता अभिधीयते, ततः औदासीन्यावस्थानात् यथेष्टम् अङ्गाङ्गिभावं प्रतिपद्येत । स तु कर्तृरूपत्वेन गुणात्मनैव अभिधीयते इति नास्ति औदासीन्यावस्थानम् । ( ' यद्यप्यादौ गुणत्वेन ' इति श्लोकोक्तम् आद्यं परिहारं दूषयति— ) यदपि उक्तम् ' गुणत्वेनाभिहितोऽपि द्वितीयया आकाङ्क्षया पुनः प्राधान्यं प्रतिपत्स्यते ' इति, तदपि श्रुतिविरोधादयुक्तम् । आख्यातेन हि श्रुत्यैव गुणपर्यायात्मना कर्तृत्वमभिहितम्, तत् पश्चात् व्यावर्तयतः श्रुतिविरोध आपद्येत । न च तत्कल्पनामन्तरेण आनर्थक्यप्रसक्तिः, यत एवं कल्प्येत, प्रकरणेन प्रयोजनसंबन्धसिद्धेः । यथैव च अनभिहिते कर्तरि निष्प्रतिद्वंद्वं प्रकरणं विनियोगाय पर्याप्तं भवति, तथा एवंरूपेणाभिहितेऽपि अविरोधः । न च एक एव प्रत्ययः सकृदुच्चरितः शक्नोति गुणप्रधानत्वे युगपदभिधातुम् । तत्र एकस्मिन् आश्रीयमाणे यदि प्राधान्यमाश्रीयते, ततः क्रियागुणत्वलक्षणं कर्तृत्वमुत्सृज्य तया आप्यमानत्वेन कर्मत्वप्रसङ्गात् तत्रैव लकारोत्पत्तेः यगात्मनेपदादिकरणात् अन्यरूप एव शब्दः स्यात् ( कर्मणि

लकारोत्पत्तौ यगात्मनेपदसंप्रसारणसीयुट्करणात् ' उद्येत ' इत्यन्यरूपः शब्दः स्यात्, न तु ' वदेत् ' इत्येवंरूपः ) । **अथोच्येत**, सर्वः कर्ता किञ्चित् प्रयोजनमनुद्दिश्य क्रियायां न प्रवर्तते । ततश्च द्वयात्मकमेव कर्तृत्वं साधकरूपं क्रियाफलस्वामिरूपं चेति । उभयरूपेणाभिहिते सति आकाङ्क्षाद्वयं प्रसृतं क्रियातो निर्वर्तयिष्यते इति । **तदयुक्तम्** । कुतः ? **' कर्तृत्वं साधकत्वेन सिद्धम्, तथाभिधीयते । स्वामित्वं तु ततः पश्चात् प्रमाणान्तरगोचरः ॥ '** यद्यपि स्वामित्वेन विना कर्तृत्वं नोपपद्यते, तथापि प्रमाणान्तरलभ्ये तस्मिन् आख्यातैः अनुष्ठातृत्वांशमात्रमभिधीयते । तथा च स्वामित्वप्रतिपादनार्थाः तत्रतत्र स्वर्गकामादिशब्दाः प्रयुक्ताः । तस्मात् गुणत्वमेव केवलं कर्तृत्वम् । अतश्च ( इतश्चेत्यर्थः ) एतदेवम्, तथाहि । **' अचेतनेऽपि काष्ठादौ कर्तृत्वमभिधीयते । न च तत्र फलोद्देशस्तस्मान्नैषाऽवधारणा ॥ '** व्यापि हि कर्तृलक्षणमङ्गीकर्तव्यम् । न च फलोद्देशस्य व्यापित्वम्, अचेतनेष्वभावात् । साधकत्वं तु व्यापि, तेन तदेवाश्रयितव्यम् । ( परिहारत्रयदूषणमुपसंहरति— ) तस्मात् नैव पुरुषार्थता युक्तेति । तस्मात्रारब्धव्यम् ( अधिकरणम् ) । परिहर्ता तृतीयं परिहारं समाधातुम् ' तत्रैतत् प्रसज्येत ' ( वा. पृ. ९०३।९ ) इत्यादिवार्तिकोक्तं दूषणं परिहरति— ) **अत्राभिधीयते** । यद्यपि श्रुत्या शेषत्वं नाभिहितम्, तथापि यदेव तद्विशेषणत्वेनोपसर्जनत्वम्, तदेव शेषत्वमपि आपादयति । तेन हि एकं तावत् तादर्थ्यम् अभिधानात्मकमुपात्तमेव, केवलमनुष्ठानेऽपि तदेवाङ्गीकर्तव्यम् । राजपुरुषादिष्वपि शब्दार्थवृत्त्या राजादीनां गुणत्वमेव प्राप्तम्, प्रमाणान्तरवशेन तु विपरीतं कल्प्यते । तच्च सक्त्वधिकरणे दर्शितम् । न चैतावता शब्दार्थत्वं भवतीत्युक्तमेव । यश्च वस्तुतोऽपि तत्र राज्ञो गुणत्वांशः, तमेवोपादाय शब्दः प्रवर्तते । अस्ति चासौ । कथम् ? **' बिभ्राणः पुरुषं राजा गुणत्वं तावदृच्छति । स्वामित्वं भजते पश्चात्, विवक्षा तु यथारुचि ॥ '** तत्र यदा राजविशिष्टः पुरुषो विवक्षितः, तदा शब्दार्थानुगुण्यात् एकान्तेन वस्तुगतमपि उपकारकत्वं विवक्षितव्यम् । यदा

पुनः उपकार्यत्वं विवक्ष्यते, तदा तस्य विशेष्यलक्षणापत्तेः राजाज्ञाकरत्वेन उपकारकभूताः पुरुषाः विशेषणं भवन्ति, इति पुरुषराजशब्द एव प्रयोक्तव्यः । प्रयोगद्वयस्य विद्यमानस्य तावत् व्यवस्थाहेतौ अर्थद्वये संभवति, किमिति वक्ष्यमाणक्रियोपयोगापेक्षया विवक्षाभेदमात्रेण क्लिष्टां व्यवस्थामाश्रयिष्यामहे । तेन भूतं निमित्तमालोच्य शब्दे प्रयुज्यमाने राजपुरुषः इत्यत्र उपकारांशकृतं शेषत्वमेव विवक्षितमिति गम्यते । यत्रापि गोगर्भदासादिस्वामिनि अत्यन्ताविद्यमानमेव शेषत्वम्, तत्रापि उपकारकत्वसंभवात् उपचरितमिति द्रष्टव्यम् । अथापि एवमादीनां मुख्यत्वसिद्ध्यर्थम् उपकारकत्वमेव उपसर्जनत्वम्, न शेषत्वम्, तथापि शेषस्य एवंफलवत्त्वात् एतत् प्रत्यासन्नतरम्, न शेषिणः इति शेषत्वप्रतिपत्त्यर्थत्वमेव विज्ञायते । पाचकादावपि सर्वत्र तत्कृतवृत्तिलाभात् उपकारकत्वसद्भावात् क्रियाणामुपसर्जनत्वम्, न निर्वर्त्यत्वेन अवस्थानात् प्राधान्यम् । ननु एवं सति 'प्रोक्षिताभ्यामुलूखलमुसलाभ्याम्' इत्यत्रापि प्रोक्षणस्य द्रव्यार्थत्वं प्राप्नोति । कस्य वा एतदनिष्टम् (नास्माकमनिष्टमित्यर्थः)। ननु एवं सति हन्तिपिषिप्रयुक्तत्वापूर्वप्रयुक्तत्वविचारो (९।१।२।२–३) विरुध्यते । कथं नाम विरुध्यते ? यदा अन्यदेव तत्प्रयुक्तत्वम्, अन्यच्च तादर्थ्यम् । अवस्थिते हि द्रव्यार्थत्वे कर्मप्रयुक्तो हि धर्मः किम् अनन्तरकार्येण हन्तिना पिषिणा च प्रयुज्यताम्, उत व्यवहितेनापूर्वेणेति । योऽपि च तादर्थ्यविचारस्तत्र, सोऽपि एवमेव उलूखलमुसलापरित्यागेनैव द्रष्टव्यः किं यत् तयोर्हन्तिपिषिसाधनत्वं तदर्थमेतत् प्रोक्षणम्, उत यदपूर्वसाधनत्वं तदर्थमिति । **'तिरोहितं च कर्मत्वं न गृह्णीयादपि क्रियाम् । आविर्भूतं तु कर्तृत्वमाख्यातस्थं ग्रहीष्यति ॥'** कृदन्ताभिहितानि कारकाणि तिरोहितत्वात् न शक्नुयुरपि नामार्थत्वेन क्रियां ग्रहीतुम्, सुप्तिङन्तस्थानि तु आविर्भूतत्वात् शक्नुवन्ति । यत्तु पदैकत्वादिवत् अपेततादर्थ्यसंबन्धो न क्रत्वर्थत्वेन विरोत्स्यते इति, तत्रोच्यते **'कारकेण गृहीतत्वादेकत्वादेः क्रियाऽर्थता । कारकश्रुतिगम्यत्वाद् बाधते द्रव्यशेषताम् ॥'** कारकोपसर्जनीभूतस्य द्रव्यस्य प्रत्यासत्तिमात्रेण संख्यादयः शेषाः संभवेयुः, ते तु अत्यन्तप्रत्यासन्नप्रधानभूतेन कारकेण अपहृत्य क्रियायै नीयन्ते । न त्वेवं धात्वर्थानां केन चित् बलवत्तरेण प्रमाणेन क्रत्वर्थत्वमवगम्यते, येन कर्तृत्वशेषता बाध्येत । यत्तु कर्तृत्वस्य गुणात्मकत्वात् प्राधान्याभिधाने सति सुतरां गुणत्वं प्राप्नोतीति, तदसत् । कुतः ? **'कर्तॄणां शास्त्रगम्येऽर्थे चेतनानामधिक्रिया । विधिश्च न भवेत्तेषां फलसंकल्पनादृते ॥'** यद्यपि अनुष्ठातृमात्रात्मकं कर्तृत्वम्, तथापि तत् बुद्धिपूर्वकारिणां फलसंकल्पनमिश्रम् । तादृशानामेव वैदिकेषु कर्मसु अधिकारः, नाचेतनानाम् । विधियुक्ताश्चैताः सर्वाः क्रियाः, प्रतिषेधानामपि विधिप्रत्ययसंबन्धाधीनत्वात् । न च पुरुषार्थकर्तव्यतामन्तरेण विधिः संभवति । तेन अवश्यमनुष्ठातृत्वेन उच्यमानः पुरुषः किमपि 'ममैषा क्रिया साक्षात् पारंपर्येण वा उपकरिष्यति' इत्यध्यवस्यति । साक्षादुपकारके च संभवति, न पारंपर्योपकारकल्पना लभ्यते । न च संस्कारानर्हः कर्ता, क्रतुफलाधारत्वेन सप्रयोजनत्वात् । कस्तस्योपकार इति चेत्, सर्वथा तावत् सामान्येनोपकारमात्रमवधारितम् । तावता च क्रत्वर्थत्वं व्यावर्तितम् । तद्विशेषावधारणं च यथेष्टं कल्पयिष्यते । न तदत्रोपयुज्यते । (तृतीयपरिहारसमाधानमुपसंहरति–) तस्मात् न क्रत्वर्थता । यद्यपि च प्राधान्यांशः कर्तृत्ववचनेन अनभिहितः, तत्र चानन्तर्गतः, तथापि तदन्यथाऽनुपपत्त्यैव प्रत्यायितत्वात् संभत्स्यते । यथा स्वर्गकामादिशब्देन पुरुषविशेषवचनेन अनुक्तमपि स्वर्गस्य साध्यत्वं कल्पयिष्यते, तथा स्वामित्वमपि बुद्धिपूर्वकारिणः पुरुषस्य फललिप्सयैव कर्तृत्वप्रतीत्या प्रतिपत्स्यते । तत्र यथैव देवतायाः कर्मणा अभिप्रेयमाणायाः प्राधान्यं यागसाधनत्वप्रतिपत्त्यर्थमेव ज्ञायते, न प्राधान्यस्वरूपपर्यवसायित्वेन, तथेह गुणत्वं प्राधान्यसिद्ध्यर्थमेव द्रष्टव्यम् । **'गुणभावो हि कर्तॄणां न धात्वर्थान् प्रतीष्यते । भावनायां तु शेषस्य धात्वर्थः किं न ते गुणः ॥'** यस्यापि कर्ता प्रत्ययार्थः, तेनापि अवश्यं प्रतीतिवशात् भावनाऽभ्युपगन्तव्या । ततश्च एकप्रत्ययोपादानात् प्राधान्याच्च सैव



कर्तारमङ्गीकरोति इति न धात्वर्थाङ्गता भवतीति । स तु भावनायां व्यापृतः तामन्यथाकर्तुमशक्नुवन् धात्वर्थमेवाङ्गीकरोति । न च उभयात्मकत्वं विप्रतिषिद्धम्, विषयान्यत्वादेव । यदि धात्वर्थमेव प्रति गुणत्वमेव कल्प्येत, ततः सक्तुपादाने विप्रतिषिद्धमिव स्यात् । इह तु भावनां प्रति गुणत्वम्, धात्वर्थेषु (धात्वर्थे तु) प्राधान्यम् इत्यविरोधः । स्वभावश्च उभयात्मकं वस्तु । यदि तथैव शब्द उपादत्ते, किं तत्र विप्रतिषिद्धम् ? अथवा एकं शब्दात्, एकं सामर्थ्यात् इत्यविरोधः । सर्वथा अस्ति तावत् कर्तुः प्राधान्यप्रसक्तिः, इति पुरुषार्थो धात्वर्थः प्राप्नोति । अयं चापरो विशेषः, **'क्रियाऽन्तरेण संबन्धः पाचकादेः प्रतीयते । तत्र शब्दार्थमात्रेण भवेद्धातुर्विशेषणम् ॥'** शब्दार्थवस्त्वर्थात्मना उभयप्रकारस्य उपसर्जनत्वस्यायं विवेकः । 'पाचकं राजपुरुषं वा आनय' इत्यत्र पुरुषस्य आनयनसंबन्धिनः पाचको राजा वा शब्दार्थमात्रतया उपसर्जनत्वं प्रतिपन्नः, इति शेषत्वं यावत् न गच्छेदपि । 'वदेत्' इत्येवमादिषु तु कर्तुः कार्यान्तरसंबन्धानुपादानात् न शब्दार्थोपसर्जनत्वमाकाङ्क्षितम्, इति परिशेषात् वस्त्वर्थोपसर्जनत्वमेव शेषत्वमवधार्यते । (कर्त्रभिधानपूर्वपक्षप्रयोजनसमाधानमुपसंहरति–) तस्मादस्ति अभिधानपक्षे धात्वर्थानां पुरुषार्थत्वे प्रमाणमिति ।

(सिद्धान्तप्रयोजनाभावात् कर्तुः आख्यातवाच्यावाच्यत्वचिन्ता अनर्थिका इत्याक्षिपति–) **ननु** एवं सति अनभिधीयमानोऽपि समानपदोपात्तभावनालक्षितः प्रकरणात् स एव प्रत्यासन्नतरः शक्नोति धात्वर्थस्य प्रयोजनाकाङ्क्षां निवर्तयितुम्, इति अभिधीयमानपक्षतुल्यत्वं प्राप्नोति । (परिहरति–) **नैष दोषः । 'स शब्दो लक्षणां याति यः श्रुत्या नोपयुज्यते । श्रुत्यर्थेनोपयुक्ते तु लक्षणा नान्तरीयकी ॥'** अभिधीयमानो हि अगम्यमानविशेषया श्रुत्या तन्त्रेणोपात्तो यद्यत् कार्यमुपतिष्ठते, तत्तत् सर्वं निराकाङ्क्षीकर्तुं समर्थं इति न क चित् शास्त्रार्थत्वात् हीयते । लक्ष्यमाणः पुनः आदित एव 'नैष शास्त्रेणोक्तः' इत्येवं तावत् प्रतीयते । न च तेन अनुक्तः आदर्तव्यो भवति । तत् यदि लक्षणावीजं शास्त्रं तत्रोपसंहरिष्यते, ततः शास्त्रार्थत्वमध्यवसाय प्रमाणीकरिष्यते । सर्वमेव शास्त्रम्, यदा श्रुत्यर्थः कर्मणि नोपयुज्यते, तदा लक्षणार्थमात्मानं प्रापयति । श्रुत्यर्थे एव च इह भावना उपयुज्यते । न च युगपत् श्रुतिलक्षणावृत्त्युपयोगित्वमवकल्पते । तस्मात् यथैव 'पूर्वो धावति' इत्युक्ते संबन्धित्वात् अपरो गम्यमानोऽपि न कार्येण संबध्यते, तथेह अन्यपरेऽपि शब्दबलात् संबन्धी कर्ता गम्यते एव केवलम् इत्यवधारणात् नोपयोगित्वेन गृह्यते । या चासौ प्रतीतिः, सा गुणत्वेनापि उपयुक्ता, इति न पुनः प्राधान्यकल्पनामपि करोति । तदा च भावना कर्तारम् आत्मसिद्ध्यर्थम् अनन्यथासंभवमात्रेण उपसर्जनीकृतमेव गमयति, न प्रधानभूतम्, इति निष्प्रमाणिकैव प्राधान्यप्रतिपत्तिर्भवेत् । नहि तं प्रधानभूतं भावना गमयितुं समर्था । तेन यदैव कर्ता प्रधानत्वं प्रतिपत्तुमारभते, तदैव 'किम् एतस्य प्रमाणम्' इत्यन्विष्यमाणे शब्दो भावना च उभयमप्युदासीनम् । न च ततः अन्यत् प्रमाणमस्ति । (कर्तृवाच्यावाच्यत्वविचारस्य अर्थवत्त्वमुपपादितमुपसंहरति–) तस्मात् अर्थवान् अभिधानानभिधानविचारः ।

**भाष्यम्**—(३।४।४।१३ पृ. ९१३) अत्र ब्रूमः । सर्वेष्वाख्यातेषु क्रियाऽनुष्ठानं श्रूयते, न कारकं किञ्चित् । कथमेतत् गम्यते ? प्रत्ययात् । यतः क्रियामनुष्ठेयां प्रतीमः । ननु कर्तारमपि प्रतियन्ति, सत्यं प्रतियन्ति, न तु शब्दात् । कुतस्तर्हि ? अर्थात् । यदा क्रिया अनुष्ठातव्या विधीयते, तदा अर्थात् कारकव्यापारो गम्यते । यश्चार्थात् गम्यते, न स श्रौतः । यश्च न श्रौतः, न स वाक्यात् गम्यते, कथमसौ प्रकरणं बाधिष्यते ? आह । 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इत्याचार्योपदेशात् कर्ता शब्दार्थः कर्म च इत्यवगम्यते 'कर्तरि शप्' (पा० ३।१।६८)' कर्मणि यक् ('सार्वधातुके यक्' ३।१।६७ धातोर्यक् प्रत्ययः स्यात् भावकर्मवाचिनि सार्वधातुके परे इति सूत्रेण इत्यर्थः) इति प्रत्ययार्थे कर्तारं कर्म च समामनन्ति आचार्याः । तस्मात् शब्दार्थः कर्ता कर्म चेति । उच्यते । नाचार्यवचनात् सूत्रकारवचनाद्वा शब्दार्थो भवति । प्रत्ययादसौ गम्यते । अनुष्ठेया च क्रिया प्रतीता सती कारकाणि प्रत्याययति इत्यवगतमेतत् ।

अपि च नैव कर्ता प्रत्ययार्थः कर्म वा इत्याचार्या आहुः। **ननु** कर्तरि कर्मणि च लकारः श्रूयते। **नासौ** कर्तरि कर्मणि वा श्रूयते, किन्तु एकस्मिन् एकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम्, इति तत्र अपरं वचनम्। तत्र एवमभिसंबन्धः क्रियते एकस्मिन् कर्तरि, द्वयोः कर्त्रोः, बहुषु कर्तृषु इति। एवं कर्मणि एकत्वादिसंबन्धः। तत्र नैवं भवति कर्तरि भवति, एकस्मिंश्चेति। कथं तर्हि ? कर्तरि एकस्मिन् एकवचनं कर्तुरेकत्वे इत्यर्थः। एवं द्वित्वे बहुत्वे, कर्मणि च। एवं वर्ण्यमाने लौकिकन्यायानुगतः सूत्रार्थो वर्णितो भवति, सूत्राक्षराणि च न्यायानुगतानि भवन्ति। आगमोऽपि चायमेव 'यदा एकत्वादयो विभक्त्यर्थाः, तदा कर्मादयो विशेषणत्वेन' इति। **ननु** एतदप्यस्ति 'यदा कर्मादयो विभक्त्यर्थाः, तदा एकत्वादयो विशेषणत्वेन' इति। **उच्यते**। अर्थप्राप्ता हि कर्मादयः, तेन भवन्ति शब्दस्याभिधेयभूताः, न तु एकत्वादयः अर्थात् प्राप्नुवन्ति, तेन ते शब्दार्थभूताः। तस्मात् यद्यपि विशेषणमेकत्वादयः, तथापि विशेषणमेवाभिधीयते, यथा 'हिरण्यमालिनः ऋत्विजः प्रचरन्ति' इति हिरण्यमालित्वं विशेषणत्वेन (प्रतीयते), तथापि तदेव विधीयते। तस्मात् कर्तुरेकत्वं शब्दार्थो न कर्ता (पृ. ९३०)।

वा— (१. ९१२) '**सर्वाख्यातेषु कर्तृणामिष्टा नैवाभिधेयता। या तु तेभ्यः प्रतीतिः, सा संयोगान्तरतो भवेत्** ॥' सर्वत्रैव तावत् शब्दादुच्चरितात् अनेकोऽर्थो गम्यते। न च तावता सर्वः एवाभिधेयो भवति, तद्भावभावित्वान्यथाऽनुपपत्त्यधीनत्वात् वाचकशक्तिकल्पनायाः। स नाम अर्थः अभिधीयते, यत्र शब्दस्य वाचकशक्तिः कल्प्यते। क्व चासौ अदृष्टा सती कल्प्यते ? यत्र तत्कल्पनामन्तरेण प्रतीतिप्रयोगौ नावकल्पेते। यत्र तु अन्यविषयैव शक्त्या अकल्पितया तया अन्यत्रापि तौ सिध्यतः, तत्रानुपलब्ध्या शक्त्यभावः प्रतीयते यथा आकृतिशब्दानां व्यक्तौ, सिंहादिशब्दानां च माणवकादौ। तदिह पचत्यादिशब्दोच्चारणात् इयन्तोऽर्था गम्यन्ते भावना–धात्वर्थ–कर्तृ–तत्संख्या–पुरुष–उपग्रह–कालविशेषाः। (पुरुषः प्रथममध्यमोत्तमरूपः, उपग्रहः परस्मैपदात्मनेपदरूपः)। तेषां तु कः शब्दः, कोऽर्थात् इति विभागो न ज्ञायते। लक्षणं चैतावत् 'योऽर्थान्न गम्यते स शब्दार्थः' इति। भावनायास्तावत् न शब्दव्यतिरिक्तं प्रत्यायकं पश्यामः, तत्र कालादीनां व्यभिचारित्वात्, संभवन्ति हि विनाऽपि भावनया कालसंख्यादयः। कर्तृधात्वर्थाभ्यां अव्यभिचारात् गम्यते इति चेन्न, कृदन्तवत् अप्राधान्यप्रतीतिप्रसङ्गात्। यदि कर्त्रा धात्वर्थेन च भावना गम्येत, ततः पाचकादिशब्देष्विव तिरोहितस्वरूपा गम्येत, प्राधान्यप्रत्ययात्तु शब्दार्थत्वाध्यवसानम्। न च तया कालादयः प्रतिपाद्यन्ते, कालान्तरसंख्याऽन्तरधात्वर्थान्तरपुरुषोपग्रहान्तरेष्वपि दृष्टत्वात्। एवं कालसंख्याऽऽदीनां परस्परव्यभिचारादेव अगमकत्वं वाच्यम्। यादृशश्च गुणभूतः कर्ता अत्रावगम्यते, न तादृशेन विना भावना उपपद्यते इत्यर्थापत्त्या अनुमानेन वा शक्ता गमयितुम्। कारकान्तरेऽपि संबन्धेन व्यभिचारात् अशक्तेति चेन्न, अन्यसंबन्धमात्रात्मकव्यभिचारानभ्युपगमात्। द्विधा हि एकः संबन्धी अनेकेन संबध्यते, कश्चित् संबन्ध्यन्तरं परित्यजन्, कश्चित् पूर्वापरित्यागेन। तत्र यः परित्यज्य अन्यत्रान्यत्र वर्तते, स व्यभिचारादगमको भवति यथा ऊर्ध्वत्वं स्थाणुपुरुषयोः। न च तत्र अन्यसंबन्धः कारणं व्यभिचारस्य। किं तर्हि ? तेन विनाऽपि प्रवृत्तिः। यस्तु अन्यत्रापि वर्तमानः पूर्वावगतसंबन्ध्यपरित्यागेनैव वर्तते यथा शिंशपात्वं वृक्षत्वपार्थिवत्वद्रव्यत्वसत्त्वेषु, न तस्य अनैकान्तिकत्वम्, सर्वेषु प्रत्यायनशक्त्यविघातात्। भावना च कारकेषु वर्तमाना न विकल्परूपेण वर्तते, किं तर्हि सर्वेषु युगपत्। न चेदृशं व्यभिचारित्वमुच्यते, अन्यत्रापि वृत्तौ पूर्वापरित्यागात्। अतः सर्वकारकाणि असंशयं गम्यन्ते। यत्रापि नाम अकर्मकत्वात् संप्रदानापादानयोस्तु बाह्यतरत्वात् अप्रतीत्या व्यभिचार आशङ्क्यते, तत्रापि तेषामेव, न तु कर्तुः कदा चित्। नहि क्व चित् कर्तृरहिता का चित् क्रिया विद्यते, तन्मूलत्वात् क्रियाप्रवृत्तेः। तदव्यभिचारेण वेह (चेह) सुतरां प्रयोजनम्। यावत् इतराणि व्यभिचरन्ति, तावत् केवलकर्तृप्रत्यायनसामर्थ्यमस्याः स्फुटतरं व्यज्यते। समर्थनीय



एव च एषोऽर्थः (भावनायाः कारकान्तरव्यभिचाररूपः) संख्यासंबन्धे (घटनीये) कर्तुः असाधारणतासिद्ध्यर्थम्। असितिष्ठत्यादिषु करणानपेक्षणात्, चलनपतनादिषु च आधारानाश्रयणात्, अकर्मकेषु कर्माभावात्, आसनस्थानवचनादिषु संप्रदानापादानाभावात् कर्तैव सर्वभावनासु एकान्तसंनिहितः, इति असाधारणत्वेन तिङ्वाच्यया संख्यया संभन्त्स्यते। कर्तृविशिष्टा चेह संख्या गम्यते, न कारकान्तरगता, इति सर्वेषां प्रत्यक्षम्। तत्र यदि कश्चित् वदेत् 'समाने सर्वकारकाणां गम्यमानत्वे कस्मात् कर्त्रैव संख्यासंबन्धः, न करणादिभिरपि' इति, स वक्तव्यो यथैव भवतः इति। स चेत् ब्रूयात् 'मम कर्ता संख्या च एकेन शब्देन उपात्तौ परस्परं नियम्येते इति, तेन अनभिधेयेभ्यो बाह्येभ्यो निवृत्ता संख्या कर्तर्येव वर्तिष्यते' इति। तत्र एवं प्रत्यवस्थेयम्, 'अथ समाने कारकत्वे किं कारणं भवतः, कर्तैवाभिधीयते, न कारकान्तराणि' इति, तत्र अवश्यं फलावगम्या शब्दशक्तिरेव शरणं प्रतिपत्तव्या, यतः तद्विषया बुद्धिरुत्पद्यते इति। सा च अस्मत्पक्षेऽपि अविशिष्टा '**यतः कर्तृगतां संख्यां प्रतीमः केवलामतः। तस्मादेतावती शक्तिस्तिङां कार्यात् प्रतीयते** ॥' 'समाने भावनया कारकोपस्थाने कः शक्तिनियमे हेतुः' इति चेत्, 'उक्तं यस्तव समाने कारकत्वे कर्त्रभिधाने शक्तिनियमहेतुः' इति। न च शक्तयः पर्यनुयुज्यन्ते, यथाकार्यं व्यवस्थया अनुगन्तव्याः इत्युक्तम् (शक्तयः सर्वभावानां इत्यादिना २।१।१।१ पृ. ३७८)। **अपिच** भवता कर्त्रभिधाने शक्तिं कल्पयित्वा भूयः तद्गतसंख्याऽभिधाने शक्तिः कल्पयितव्या। ननु एकप्रत्ययोपादानादेव तत्सिद्धेः न कल्पनाऽन्तरमाश्रयिष्यते, कुतः खलु अनेकशक्तिकल्पनया विना नियमः सिद्ध्यति ?। अवश्यं हि एतदपि कल्पनीयम्, यत् समाने संख्याभाक्त्वे अभिहितस्यैव संख्यामाह, न अनभिहितस्य। शक्त्या हि विना एतदेव विपरीतमपि उच्येत 'यतश्च अभिधीयते कर्ता, तत एवास्य न वक्तव्या संख्या वरम् अनभिहितानामेतावता संविभागः कृतः' इति। न च अभिहितत्वं केवलं व्यवस्थाकारणं भवति, तेनैव प्रत्ययेन अभिहितानामपि भावनाकालोपग्रहपुरुषविशेषाणां संख्यासंबन्धाभावात्। प्राधान्यप्रतीता भावनैव सुतरां संबध्येत। यदि तु अयोग्यत्वात् तदसंबन्धोऽभिधीयते, तत् गम्यमानेषु कारकान्तरेष्वपि अविशिष्टम्। अथोच्येत 'अस्ति तेषां संख्यासंबन्धयोग्यत्वम्, येन शब्दान्तराभिहितया संबध्यते' इति, तत् भावनाऽऽदिष्वपि भावनाऽऽदिशब्दाभिहितेषु समानम्। अथेह तेषामसत्त्वभूतत्वात् अयोग्यत्वमिति, तदयुक्तम् ! असत्त्वभावस्यैव पर्यनुयुक्तत्वात्। नहि संख्याऽऽदिसंबन्धायोग्यत्वादन्यत् असत्त्वभूतत्वम्। तत्र एतदेवाभ्युपगन्तव्यम्, 'तादृशेन शब्देनाभिहिता संख्या भावनाऽऽदयो वा न परस्परं संबन्धुं शक्नुवन्ति' इति, तच्च तुल्यम्, एतदभिहितायाः कारकान्तरसंबन्धायोग्यत्वात्। कथमयोग्यत्वमिति चेत्, 'शब्दशक्तिवशेन भावनाऽऽदिष्विव' इत्युक्तम्। ननु च आख्याताभिहितसंख्यायोग्यत्वं कर्मणो दृष्टम्, इति तस्य संबन्धः प्राप्नोति यथा 'पच्यते ओदनः' इति। नैतदस्ति। कुतः ? '**यथैव क्व चिदुक्त्वाऽपि कर्मान्यत्र न वक्ष्यति। तथैवैतस्य संख्याऽपि शब्दशक्तेर्व्यवस्थिता** ॥' यो हि मन्यते 'कर्मणः क्व चित् तिङभिहितसंख्याऽर्हत्वं दृष्टम्, अतोऽन्यत्रापि तेन भवितव्यम्' इति, तस्य क्व चित् तिङन्ताभिधेयत्वदर्शनात् सर्वत्राभिधेयत्वमपि स्यात्। अथ तत् कथञ्चित् व्यवतिष्ठते, ततः संख्याऽपि तथैव व्यवस्थास्यते, इत्यचोद्यमेतत्। तत्र एतत् स्यात्, 'कर्तृविशिष्टा संख्या अभिधीयमाना न शक्या कर्तारमनभिधाय वक्तुम्' इति, उच्यते '**विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्। अभिधाऽनभिधाने तु न केन चिदिहाश्रिते** ॥' 'अगृहीतविशेषणे तदनुरक्ता विशेष्यबुद्धिर्नोपजायते' इति तद्ग्रहणमादर्तव्यम्। न तु अनभिहितविशेषणत्वेन किञ्चित् दुष्यति। यदि नाम अनभिहितमपि विशेषणं केन चिदन्येन प्रत्याय्यमानं विशिष्टप्रत्ययोत्पादनाय पर्याप्तं भवति, किं तत्र अभिधानानुरोधेन। अस्ति चेह भावनयैव प्रत्यायितस्य कर्तुः विशेषणत्वशक्तिः, इति नाभिधानमपेक्षते। सर्वत्र विशिष्टप्रत्ययेषु चैतदवस्थितम् 'न चेदन्येन शिष्टाः' (१।४।९।९) इति। तत्र

विशिष्टप्रत्यये जाते विशेषणविशेष्ययोः किं शब्देनोपात्तं किमन्येन इति परीक्षायां यत्रयत्र विशेष्यमन्यतः सिध्यति तत्र विशेषणे शब्दव्यापारः, यत्र विशेषणमन्यतो लभ्यते तत्र विशेष्ये । सर्वत्र च विशिष्टप्रत्ययादेव अर्थापत्त्या एकस्य द्वयोर्वा अवयवयोः विशेषणविशेष्ययोः व्यापारः शब्दे कल्प्यते । सा च अन्यथाऽनुपपत्तिरूपत्वात् अनन्यलभ्ये विषये भवति । तदिह विशेषणभूतं विशेष्यभूतं वा एकत्वं तावत् नान्यतो लभ्यते, येन अनभिधेयं कल्प्येत । यदि हि कर्ता तत् प्रतिपादयितुं शक्नुयात्, ततः आकृतिन्यायेन स एवाभिधेयः । इतरत्तु व्यक्तिवत् गम्यमानमित्याश्रीयते, तस्य तु व्यभिचारेण अशक्तत्वात् एकत्वमपि अभिधेयमेवाश्रयणीम् । ततश्च तत्र संचरितायामभिधानशक्तौ गम्यमानलक्षणाऽऽपन्नः कर्ता सत्यपि विशेषणत्वे नाभिधेयः संपद्यते । यदा तु एकत्वमेव विशेषणम्, तदापि अवश्यं तदेव प्रथमतरमभिधातव्यम् । तच्चेत् अभिहितम्,क्षीणशक्तिः शब्दः कर्तारमन्यतः सिध्यन्तमपेक्षते । सिध्यति चासौ भावनातः, इति नाभिधानशक्तिकल्पनाहेतुर्भवति । यत्तु अन्यान्यपि कारकाणि प्रतीयन्ते, न तैः प्रतीतैरप्रतीतैर्वा कश्चिदुपकारः अनुपकारो वा भवति । सर्वथा तावत् यः प्रार्थितः कर्ता, स प्रतीतः । यदि तु अन्यदपि प्रतीयते, किं नो बाध्यते । तेन हि अप्रतीतेन वयं बाध्येमहि, नाभ्यधिकप्रत्ययेन । प्रतीतान्यपि तु करणादीनि शब्दशक्तिवशात् कर्त्रभिलाषिण्या संख्यया न ग्रहीष्यन्ते । नहि तया यद्यत् प्रतीतम्, तत्तत् ग्रहीतव्यम् । सर्वत्र हि प्रतीत्यपेक्षायोग्यत्वादि ग्रहणे कारणं भवति । तदत्र उभयसिद्धेन संख्यायाः कर्तृगामित्वेन कारकान्तराणि अनपेक्षितत्वात् अयोग्यत्वाच्च संनिहितान्यपि न संबन्धित्वं प्रतिपद्यन्ते । न च तेषामपि तिङभिहितसंख्याऽभिलाषो विद्यते, सर्वत्र सुबभिहितसंख्यापरिच्छेद्यत्वात् । न चैषा संख्या सामान्यरूपेण प्रतीता सती संबन्ध्यन्तरमपेक्षते । कथितो हि पदवाक्ययोर्विशेषः पौर्वापर्यनियमात् ( वाक्याधिकरणे श्लोवा. ३५५–५७ ) । तत् यावदेवेह धात्वर्थः प्रतीतः, तावदेव ' काऽपि भावना कर्ता च कश्चित् भविष्यति ' इत्यवधार्यते । ततश्च पूर्वतरप्रतीते कर्तरि संख्या केवलैव अभिधीयमाना विशेषणत्वं विशेष्यत्वं वा प्रतिपत्स्यते । ' **यद्वा भावनया कर्ता प्रथमं प्रतिपद्यते । न संख्यासंगतेश्चास्ति तदतिक्रमकारणम् ॥** ' सत्यपि कारकसंबन्धाविशेषे भावना पूर्वं तावत् कर्तारमपेक्षते गृह्णाति च तदधीनत्वादितरकारकसमवधानस्य । कर्तृव्यापारसामान्यरूपैव चासौ तमेव विशेषतः पर्युपस्थापयति, कारकान्तराणि तु धात्वर्थसंबन्धित्वात्, सर्वजघन्येतिकर्तव्यतात्मकव्यापारनिबन्धनत्वाद्वा बहिरङ्गतराणि भवन्ति । न च किञ्चित् कारणमस्ति, येन प्राथम्यप्राधान्योपस्थितकर्त्रतिक्रमेण कारकान्तराणि संख्या गच्छेत् । अपिच यस्य कारकस्य अवान्तरव्यापारं धातुः प्राधान्येनाह, स कर्ता इति । व्याकरणेऽपि कारकान्तराणि कर्तारमेव आविर्भूतरूपं ज्ञापयन्ति, तेन स एव संख्यया संबध्यते, अभिहितवच्च विशेषरूपेण प्रतीयते । कारकान्तरेषु तादृगर्थाभावात् अनादरेण सदपि गम्यमानत्वं असदिव प्रतिभाति, परमार्थनिरीक्षणवेलायां तु अविनाभावात् तान्यपि भावनया तुल्यवदुपस्थाप्यन्ते, इति नात्यन्तमनादृतानि । **ननु** एवं सति ( पूर्वतरप्रतीतिप्राधान्याभ्यां कर्तुः तिङुपात्तसंख्याऽन्वये अङ्गीक्रियमाणे सति ) ' ओदनः पच्यतां त्वया ' इत्यादिषु कर्मसंख्याऽभिधानं न प्राप्नोति । कुतः ? ' **प्राधान्येनात्र नोपात्ता धातुना ह्योदनक्रिया । मा भूत् तस्यैव कर्तृत्वमभिधेयं न भावना ॥** ' नात्र ओदनव्यापारो धातुना प्राधान्येनोपादीयते, यतः कर्मणो विशेषप्रतीतस्य संख्या उच्येत । मा भूत् तस्यैव कर्तृलक्षणापन्नत्वात् कर्मत्वमुत्सृज्य कर्तृत्वम् । अकर्तृत्वादेव च न तद्व्यापारो भावना । तेन तथापि ( तयाऽपि ) न विशेषरूपेण कर्मणः पर्युपस्थानम् । अवश्यं च पुरुषव्यापार एव प्राधान्येन वक्तव्यः, अन्यथा हि परव्यापारे अस्य नियोग एव न भवेत् । आख्यातपदेन च अकल्पितं कर्तृत्वं पदान्तरोपात्तस्यापि नाविर्भवेत् । ततश्च ' त्वया ' इत्यपि तृतीया न स्यात् । तद्व्यापारेण वा अनभिभूतव्यापारं कर्म तेन अनाप्यमानत्वात् कर्मत्वं हित्वा आविर्भूतव्यापारतया कर्तृत्वमेव प्रतिपद्येत इति स्वसंबन्धत्यागेन कर्तृसंख्ययैव संबध्येत । तेन



पचतिशब्दवदेव पच्यतेइत्येवमाद्यभिहिताऽपि संख्या अनभिभूतत्वात् कर्तुरेव प्राप्नोति, न कर्मण इति । ( वा. पृ. ९१७ ) उच्यते । ' **यस्यापि कारकं वाच्यं तस्याप्येतत् प्रसज्यते । न चोभयाश्रयं दोषमेकश्चोद्यो विचारयन् ॥**' सर्वथा '**यल्लक्षणो हि भवतः कर्ता सन्नभिधीयते । कर्म वा, तादृशस्यैव यत्र संख्याऽभिधीयते ॥** ' तत् यदि मम कर्मोत्पन्नलकारेष्वपि कर्तुरेव संख्या प्राप्नोति, तवापि तर्हि तत्र कर्त्रभिधानेन भवितव्यम् । अथ तत्र तव कथञ्चित् कर्तुरनभिधानम्, तद्वत् ममापि तत्संख्याऽनभिधानम्, इत्यदोषः । तदेतत् अवश्यमावाभ्याम् एवं परिहर्तव्यम्, ' सर्वत्रैव तावत् ईप्सिततमत्वात् वस्तुलक्षणं कारकान्तरेभ्यः कर्मणः प्राधान्यम्, भाव्यांशेन च तद्व्यापारस्य भावनाऽन्तर्गतत्वम् । तत्र यदा तत् प्राधान्यम् आख्यातेनैव दर्शयामि इति विवक्ष्यते, तदा सत्यपि कर्तुः शब्दार्थरूपेण लिङ्धातुभ्याम् अभिधीयमानप्रधानभूतसामान्यविशेषरूपव्यापारत्वे, तावता च कर्तृत्वलाभे अपरस्य वस्तुलक्षणस्य प्राधान्यस्य विवक्षितत्वात् कर्मणि तत्संख्यायां वा लकारोत्पत्तिः । यदा तु खलु तत् विद्यमानमपि अविवक्षितत्वात् धातुविशेषवशेन वा नैव तदस्ति इत्यवगम्यते, शब्दार्थरूपप्राधान्यमात्रे ( च ) विवक्षा भवति, तदा सुपा कर्मप्राधान्याभिव्यक्तिमङ्गीकृत्य कर्तरि तत्संख्यायां वा लकार उत्पद्यते । करणादीनां तु न वस्तुलक्षणा, नापि शब्दलक्षणा प्राधान्यविवक्षा अस्तीति नित्यमेव बाह्यशब्दोपादेयत्वम् ' । **के चित्** पुनराहुः । यदा एवंविधं शब्दसामर्थ्यमवगम्यते यथा ' अयं कर्तुरेव संख्यां शक्नोति वक्तुम्, अयं कर्मण एव ' इति, तदा अन्तरेणापि भावनोपस्थापनं सैव संख्या अनन्यविषयत्वेन अभिहितत्वात् कर्तारमुपादास्यते, तद्यथा शोणशब्दः अन्येन अनुपात्तेऽपि अश्वे तद्गतं गुणं वदन् आत्मनैव अश्वत्वमपि गमयति । तथा च सति अनेनैव न्यायेन सर्वे गवादयोऽपि अनभिधेयाः प्राप्नुवन्ति । कथम् ? ' **कश्चित् तद्गत एवेह लिङ्गसंख्यादिरुच्यताम् । स एवाभिहितः पश्चाद् गवादीन् ज्ञापयिष्यति ॥** ' एतावती चेत् शब्दशक्तिः कल्पिता तद्गतमेवैषा गुणं ब्रवीति, किं ततः परं शक्त्यन्तरकल्पनया, पूर्वयैव व्यवहारोपपत्तेः । अयं तु एवमादिषु एकशब्दोपात्तत्वेन संबन्धनियमो न शब्दशक्तिवशेन, ततः कर्तृसंख्यादिष्वपि तदेव (सुपा केवलसंख्याऽभिधानम्) अभ्युपगन्तव्यम् इति अनभिधेयत्वहानिः । **तत्रापरे मन्यन्ते** ' **शोणेऽपि नैव वाजित्वमनुक्त्वा तद्गतेऽभिधा । दृष्टा हि न क चिद् बुद्धिरगृहीतविशेषणा ॥** ' कथं हि अश्वत्वे अनुच्यमाने तदवच्छिन्नरक्तत्वप्रत्ययो जायेत, रक्तत्वविशिष्टो ह्यसौ । गुणो ( गुणिनमश्वं ) गमयिष्यति इति चेन्न, गवादिषु व्यभिचारात् । ऐकान्तिकं हि गमकं भवति, न रक्तत्वमश्वत्वाव्यभिचारि । द्रव्यमात्रं तु ऐकान्तिकत्वात् गमयेत्, न तद्विशेषम् । तस्मादुभयोरपि अश्वत्वरक्तत्वयोः अन्योन्यव्यभिचारित्वेन अगमकत्वात् वस्त्वन्तरोपस्थापितान्यतरग्रहणासंभवाच्च शोणशब्दाभिधेयत्वमभ्युपगन्तव्यम्, नहि तत्र वस्त्वन्तरसाधारण्येन अश्वत्वमेव ऐकान्तिकं केन चित् गमितम् । कर्तुः पुनः ऐकान्तिकं भावनया उपादानं विशेषरूपेण च इत्युक्तम् । **अथवा** अस्तु शोणशब्देन अश्वत्वैकार्थसमवायिगुणमात्राभिधानम् ( तथापि न तद्दृष्टान्तेन संख्यायाः कर्तृगमकता युक्ता ) । कथमनवगतविशेषणा विशेष्ये बुद्धिः इति चेत्, उच्यते । ' **अश्वत्वं नैव शोणस्य विशेषणतयेष्यते । गुणजात्यन्तरं त्वेतद् दैवात् तत्संगतिं गतम् ॥** ' यदि हि रक्तत्वमात्रमयं ब्रूयात् ततोऽश्वत्वेन विशेषणमाकाङ्क्षेत् शक्त्यन्तरं वा, येन तदेकार्थसमवाय्येव रक्तत्वं वदेत् । एष तु यथैव सत्तागुणत्वयोरवाचकः, तथा रक्तत्वमतिक्रम्य शोणत्वं नाम रक्तावान्तरजातिं वदति । सा च अश्वेष्वेव विद्यते, न गवादिषु, इत्यश्वत्वं प्रतीयते, न रक्तत्वादिवत् संशयो भवति । **कीदृशं** पुनस्तत् गवादिरक्तत्वातिरेकेण शोणत्वम्, यत् अश्वेषु समवेतम्, अन्यत्र चासमवेतमिति, उच्यते । ' **सर्वपुंसां स्वसंवेद्यं प्रतिजाति गुणान्तरम् । क चित्तस्य विशेषेण, क चित् सामान्यतोऽभिधा ॥**' सर्वजातिषु तावत् स्वव्यक्तिमात्रानुसारिणः कृष्णशुक्लरक्तत्वादयो विलक्षणाः प्रत्यक्षमुपलभ्यन्ते । तत्र क चित् सतो विशेषस्य वाचकः शब्दो

नास्ति इति प्रमाणान्तरगम्यविशेषमङ्गीकृत्य सामान्यमात्रेणाभिधेयत्वम्, क्व चित् पुनः शोणादिविशेषशब्दसद्भावात् विशेषरूपेणाभिधानम् । तथा क्व चित् अपभ्रंशेन कश्चित् विशेषः प्रतिदेशमभिधीयते यथा ' रोहिणिका गौः ' इति । न कदा चित् अश्वायां शाट्यां वा रक्तगुणायामेवमभिधानं भवति । तस्मात् जात्यन्तराण्येव शोणत्व–कर्कत्व–गौरत्वादीनि अश्व–मनुष्यादिसंबन्धीनि अभिधीयमानानि तेष्वपि प्रत्ययमादधति ( अश्वत्वैकार्थसमवायिशुक्लावान्तरजातिः कर्कत्वम्, मनुष्यत्वैकार्थसमवायिशुक्लावान्तरजातिः गौरत्वम् । एवं पद्मत्वैकार्थसमवायिशुक्लावान्तरजातिः पुण्डरीकत्वम्, रक्तावान्तरजातिः कोकनदत्वम् इत्यादि आदिशब्दाभ्यामुक्तम् ) । यथा गोत्वं सास्नादिमत्त्व इति न वाच्यत्वमाशङ्क्यम् । एतेनैव कुमार–करभ–कलभ–किशोर–वत्स–बर्करादयो विशिष्टजातिसंबद्धवयोविशेषवचनत्वेन मनुष्योष्ट्रहस्त्यश्वादीनां ग्रहणे सत्यपि अवाचका इति व्याख्यातम् । ( मनुष्यत्वैकार्थसमवायिनी बाल्यावान्तरजातिः कुमारत्वम्, उष्ट्रत्वैकार्थसमवायिनी करभत्वम्, हस्तित्वैकार्थसमवायिनी कलभत्वम्, अश्वत्वैकार्थसमवायिनी किशोरत्वम्, गोत्वैकार्थसमवायिनी वत्सत्वम्, अजत्वैकार्थसमवायिनी बर्करत्वम् ) । तथाहि '**बाल्यत्वादौ समानेऽपि तद्गतैश्चेष्टितादिभिः । वयोभेदाः प्रसिध्यन्ति प्रतिजाति व्यवस्थिताः ॥** '

**अथ** यदुक्तं गवादिष्वपि तद्गतसंख्यादिमात्राभिधानादेव जातिविशेषसिद्धेः अनभिधेयत्वं प्रसज्यते इति, तत्र ब्रूमः । ' **न शोणत्वादिवत् संख्या जातिभेदेऽपि भिद्यते । उभयोरभिधेयत्वं नात्र शब्देन तावता ॥** ' यदि हि शोणत्वादिवत् गवाश्वगतानामेकत्वादीनामपि प्रत्यक्षेण विशेषो लक्ष्येत, तत एवं कल्प्येत । यदि च यथा शोणप्रातिपदिकम् अविभक्तावयवं गुणाश्वत्वयोर्वाचकमापद्यमानम् अनेकशक्तिकल्पनाभयात् अन्यतरवाचित्वेनाध्यवसीयमानम् अश्वत्वस्य व्यभिचारित्वेन अगमकत्वात् अव्यभिचारिगुणवचनत्वेनावधारितम्, **एवं** गोत्वसंख्ययोरपि समानशब्दाभिधानभाजोः अन्यतरस्याव्यभिचारितया वाचकत्वमवधार्येत, न तु तदस्ति । संख्यायास्तावत् सर्वत्र परिच्छेदात्मकत्वात् न कश्चित् भेदो दृश्यते । न च तावानेव शब्दः उभयोर्वाचकत्वेन संभाव्यते, अन्वयव्यतिरेकाभ्यां प्रातिपदिकेन जात्यभिधानात्, विभक्त्या च संख्याऽभिधानात् । न चानेकशब्दस्य अनेकार्थकल्पनादोषः । यदि तत्रानेकस्य शब्दस्य शक्त्यनेकत्वं न कल्प्येत, ततः अन्यतरस्य अनर्थकत्वमेव भवेत् । न च संख्यासंख्येययोः अव्यभिचारित्वम्, येन अन्यतरदुच्यमानम् इतरस्य गमकं स्यात् । तथाहि ' **परिच्छेदो गवादीनां न कया चिन्न संख्यया । न क्व चिच्च न संख्येये संख्या सैव प्रवर्तते ॥** ' ननु च लिङ्गं प्रातिपदिकेनैवोच्यमानं प्रतिजाति विलक्षणम् अव्यभिचारिरूपेण प्रवर्तमानं शोणत्वादितुल्यं स्यात् । **नैतदेवम् । ' अचेतनेषु यत् तावद्दृश्यते न विलक्षणम् । तेन वृक्षादिजातीनां वाच्यत्वं न निषेधति ॥ तथा यत्रापि टाबादिसंबन्धात् स्त्री प्रतीयते । तत्रापि प्राक् ततो जातेर्वाच्यत्वमवधार्यते ॥** ' यद्यपि टाबादयः स्त्रीलिङ्गस्य द्योतकत्वात् न भेदेन वाचका भवन्ति, पूर्वस्यैव च शक्त्यन्तरमाविर्भावयन्ति, तथापि प्राक् टाबादिभ्यो यत् शब्दरूपम्, तस्य अप्रतीतावस्थे लिङ्गे जातिं प्रति शक्तिः कल्पिता न पश्चात् अपनेतुं शक्या । तथा यत्र विभक्तिसंबन्धात् पुंस्त्वं नपुंसकत्वं चाभिव्यज्यते, तत्रापि एवमेव जात्यभिधानं योज्यम् । यत्र तु प्रागेव विभक्तेः, तन्निवृत्तौ वा सत्यां शुद्धादेव प्रातिपदिकात् अन्यतरलिङ्गप्रत्ययो भवति यथा हस्ती ना देवदत्तः श्रीः सरित् तोयं वारि इति, तत्र तथात्वाभ्युपगमेऽपि न किञ्चिद्विरुद्धम् । **अथवा** विनाऽपि शब्दविभागेन अर्थप्रतीतौ उत्पाद्यमानायां सर्वस्वसंवेद्येन विभागेन प्रथमतरं जातिं प्रतिपद्यते । ( वा. पृ. ९२१ ) किञ्च ' **व्यक्तिधर्मश्च पुंस्त्वादिः प्राक् ततो न प्रतीयते । न च जातावबुद्धायां व्यक्तिः कैश्चित् प्रतीयते ॥** ' तेन कामं लिङ्गमेव जातिगम्यं भवेत्, न जातिर्लिङ्गगम्या । नित्यं चोपसर्जनीभूतमेव एतत् ( लिङ्गम् ) गम्यमानं नार्हति प्राधान्येन प्रतीयमानाया जातेरभिधेयत्वं वारयितुम् । न च गोपश्वादिशब्देषु अन्यतरलिङ्गाभिव्यक्तिः जाति-



वदस्ति । तस्मात् जातिस्तावदभिधेया । सा च यत्र लिङ्गं न व्यभिचरिष्यति, तत्र गमयिष्यत्यपि । यत्रापि ( अचेतने ) व्यभिचारे सति अन्यतः प्रतीयते, तत्र तदेव गमकं तदनुगृहीता वा जातिः प्रातिपदिकं वेति यथेष्टं कल्प्यते । ( गवादिशब्देषु शोणादिशब्दतुल्यत्वाशङ्काया निरासमुपसंहरति– ) तस्मान्न शोणादितुल्यता ।

पचत्यादिशब्देष्वपि यदि संख्या सर्वकारकान्तरव्यावृत्तरूपा कर्तृमात्रानुसारिणी शोणत्ववत् उपलभ्येत, ततः तया नाम कर्ता गम्यताम्, तावताऽपि अनभिधेयो भवत्येव । यदा तु पूर्वोक्तेन न्यायेन संख्याभेदो न लभ्यते, प्रतिवस्तु च अनन्तान्येकत्वादिजात्यन्तराणि न शक्यन्ते कल्पयितुम्, तदा भावनाधात्वर्थाभ्यामेव ( कर्तुः ) उपादानमादर्तव्यम् । किञ्च ' **शोणादीनां न चान्येन जातिर्बुद्धौ निधीयते । क्लेशस्तेनाश्रितस्तत्र, न त्वत्राप्येवमिष्यते ॥** ' यदि शोणस्यापि कश्चिदन्यः अश्वमुपनयेत्, नैवासौ स्वयं क्लिश्येत् । संख्यायाश्च भावनाधात्वर्थौ उपनेतारौ इति न स्वयमायस्यति । भावनोपस्थाने चोक्तो विशेषः ( वा. पृ. ९१४।१५ ) ( भाष्यं व्याख्यातुमाह– ) तस्मात् अनभिधेयस्यैव कर्तुः विशेषत्वविशेषणत्वोपपत्तेः अप्रमाणमभिधानशक्तिकल्पनमित्यवगच्छामः ।

एवं न्यायेनावधारिते कश्चित् आगमविरोधं दर्शयन्नाह ( भाष्यं ) ' प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इत्याचार्योपदेशात् कर्ता शब्दार्थः, कर्म च इत्यवगम्यते ' इति, ' लः कर्मणीतिसूत्रेण ( पा० ३।४।६९ ) चशब्दात् कर्तरीति च । **आदेशस्थानिवत्त्वाच्च लिङ्गार्थौ कर्तृकर्मणी ॥** ' **ननु** सूत्रार्थेनैव आगमविरोधे दर्शिते प्रकृतिप्रत्ययौ प्रत्ययार्थम् इत्येतदसंबद्धम् । कथमसंबद्धम् ? यदा पूर्वेण न्यायेन ( यद्वैतदविशेषेण० इति । वा. पृ. ९०२ ) कर्तुः प्राधान्यमपि पूर्वपक्षवादिना दर्शयितव्यम् । तदेतत् अभिधानं प्राधान्यं च उभयमपि स्मृतिसिद्धं दर्शयति । यस्मात् प्रकृतिप्रत्ययौ सह ब्रूतः प्रत्ययार्थश्च कर्ता कर्म च स्मर्यते, तस्मात् क्रियाविशिष्टयोस्तयोः अभिधानात् अस्त्येव श्रुतिप्रकरणविरोध इति । तत्र ' लः कर्मणि च ' ( भावे चाकर्मकेभ्यः पा० ३।४।६९ लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युः, अकर्मकेभ्यः भावे कर्तरि च ) इत्यत्र तावत् एकान्तेन अभिधेयत्वेन कर्तृकर्मणोरुपादानम् । ' कर्तरि शप् ' इत्यत्र पुनः एकमभिधेयत्वदर्शनम् । अन्यत्तु कर्तरि इति परसप्तमी । न च शब्दसंनिवेशे कर्ता परत्रावस्थितः संभवति, अतः ' आनर्थक्यात् तदङ्गेषु ' इति शब्दे कार्ये विज्ञायते । तत्र एषोऽर्थः ( कर्तरि शप् इत्यस्य– ) कर्तृवाचिनि सार्वधातुके प्रत्यये परत्र अवस्थिते इति । सर्वथा तावत् प्रत्ययार्थः कर्ता इत्युक्तम् आचार्यैः ( व्याकरणाचार्यैः ) तस्मात् अयुक्तम् अनभिधेयत्वानुमानमिति । **तदुच्यते** । ' **वाच्यवाचकसंबन्धो नाचार्यैरुपदिश्यते । अन्यथाऽनुपपत्त्या हि व्यवहारात् स गम्यते ॥** ' तत्र नाम आगमविरोधो युक्तः उद्भावयितुम्, यत्र न्यायागमौ समानविषयौ भवतः । इह तु न्यायस्य अन्य एव विषयः ' किं वाच्यं किं गम्यमानम् ' इति, अन्य एव व्याकरणस्मृतेः ' एकार्थप्रयुक्तानां कः साधुः कोऽपभ्रंशः ' इति । न च अन्यविषयेण अन्यविषयस्य दुर्बलस्यापि बाधो युक्तः, किमुत वाच्यगम्यमानविषयत्वेन प्रत्यक्षमेव सर्वस्वसंवेद्यस्य । तेन यद्यपि ' कर्ता शब्दार्थः ' इत्येवमाचार्या वदेयुः, तथापि स्वविषयादन्यत्र वदन्तो नादर्तव्याः भवेयुः । ते तु नैव तथा वदन्ति । ननु प्रत्यक्षमेव सूत्रमुदाहृतम् । सत्यम्, न तु शास्त्रस्वरूपमालोच्य । किं तर्हि ? एकदेशालोचनेन । न च तावन्मात्रेण शास्त्रविरोधोद्भावनं शक्यम् । कुतः ? ' **सर्वाण्येव हि शास्त्राणि स्वप्रदेशान्तरैः सह । एकवाक्यतया युक्तमुपदेशं प्रतन्वते ॥** ' यदि शास्त्रैकदेशालोचनेन तद्विरुद्धत्वमभ्युपगच्छता शास्त्रविरोध उद्भाव्यते, ततः ' सुरा न पातव्या ' इत्यस्यापि एकदेशेन पानं विहितमकुर्वन् शास्त्रविरुद्धं कुर्यात् । तथा भिन्नवाक्येषु ' यावज्जीवमग्निहोत्रं जुहोति ' इत्यादिमात्रापेक्षया दीक्षितोऽपि अजुह्वन् प्रत्यवेयात् । व्याकरणेऽपि ' मिदेर्गुणः ' इत्येतावन्मात्रे दृश्यमाने ' मिन्नः ' इत्यत्र गुणाकरणं शास्त्रविरुद्धं स्यात् । तस्मान्नैकदेशेन विरोध उद्भावनीयः । आह च ' **अन्य एवैकदेशेन शास्त्रस्यार्थः प्रतीयते । अन्यश्च परिपूर्णेन समस्ताङ्गोपसंहृतौ ॥** ' विशेषेण तु

व्याकरणे । तत्र हि एकैकस्मिन् पदे प्रायेण अष्टाध्यायी व्याप्रियते । तेन ‘ लः कर्मणि च ’ इत्यस्यैकदेशान्तरपरिपूर्णस्य योऽर्थः, तेन सह विरोधः परिहर्तव्यः । इह च एतावता प्रत्ययविधिः परिपूर्यते ‘ प्रत्ययः, परश्च, आद्युदात्तश्च, अनुदात्तौ सुप्पितौ, धातोः, तत्रोपपदं सप्तमीस्थम्, कृदतिङ्, वाऽसरूपोऽस्त्रियाम्, वर्तमाने लट्, कर्तरि कृत्, लः कर्मणि च भावे चाकर्मकेभ्यः, लस्य, तिबादयः ( तिप्तस्झि इत्यादि सर्वं सूत्रम् ), अनुदात्तङित आत्मनेपदम्, शेषात् कर्तरि परस्मैपदम्, युष्मदस्मदुपपदादिषु मध्यमादयः, तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः, तान्येकवचनद्विवचनबहुवचनान्येकशः, बहुषु बहुवचनम्, द्व्येकयोर्द्विवचनैकवचने इति । पराणि च संज्ञापरिभाषाऽऽदिरूपेण लोपागमवर्णविकारादिशास्त्राणि सर्वाणि एकं वाक्यम् । एकवाक्यता च सति विशेषणविशेष्यभावे भवति, नान्यथा । सोऽपि च सामानाधिकरण्येन वा भवति समानविभक्त्यन्तानाम्, वैयधिकरण्येन वा क्रियाकारकरूपः शेषशेषिरूपश्च ।

तदिह अनौपयिकत्वात् अवयवान्तराण्युपेक्ष्य ‘ लादेशाः कर्तरि कर्मणि च भवन्ति, एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम् ’ इत्येतेषां विशेषणविशेष्यभावः सामानाधिकरण्यवैयधिकरण्यप्रवृत्तिश्च चिन्त्यते । तत्र तावत् बहुद्व्येकशब्दाः संख्यावचनाः तामनभिधाय संख्येये वृत्त्यसंभवात् इत्याकृत्यधिकरणे स्थापितम् । पातञ्जलेऽपि च ‘ केषु बहुषु ’ इति प्रश्नपूर्वकमुपक्रम्य तत्र दोषानभिधाय संख्यावचनत्वमेवावधारितम्, बहुत्वे द्वित्वैकत्वयोः इति विवरणात् । ‘ **कथमन्तरेण भावप्रत्ययं भावप्रधानो भवति निर्देशः** ’ इति पृष्टे, भवति यदा प्रथम एव गुणः स्वप्राधान्येन विवक्ष्यते इति व्याकृतम् । तथाहि, ‘ **पूर्वमेव गुणः कश्चिद् स्वातन्त्र्येण विधीयते । कश्चिद् द्रव्याङ्गभावेन ततो निष्कृष्य चापरः ॥** ’ यत्र गुणः प्रथममेव स्वप्रधानो विवक्षितः, तत्रानुत्पाद्यैव भावप्रत्ययम् विना च सामानाधिकरण्यम्, संबद्धो भवति ‘ पटस्य शुक्लः ’ इति । यत्र तु द्रव्योपसर्जनत्वेन च न निष्कर्षो विवक्ष्यते, तत्र सामानाधिकरण्यं भवति ‘ शुक्लः पटः ’ इति । यत्र पुनः उपसर्जनत्वेन विवक्षित्वा पश्चात् निष्कर्षविवक्षा भवति, तत्र यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशः, तदभिधाने ‘ त्वतलौ ’ ( तस्य भावस्त्वतलौ पा० ५।१।११९ ) इति भावप्रत्ययोत्पत्तिः । स्वप्राधान्यविवक्षायां तु असौ अनङ्गत्वात् गुण एव न भवति, न तद्द्वारेण द्रव्ये शब्दनिवेशः । तेन नासौ तदा तस्य द्रव्यस्य शब्दप्रयोगं भावयति, इति भावप्रत्ययेन नाभिधीयते । पूर्वमेव निष्कृष्टत्वात् निष्कर्षकारिणः प्रत्ययस्य निष्फलत्वं स्यात् । तदा तर्हि नित्यं संख्येये षष्ठ्यैव भवितव्यम्, सत्यमेष उत्सर्गः । कदा चित्तु यथैव गुणवचनः शब्दो गुणोपसर्जनद्रव्यप्रतिपिपादयिषया तच्छब्दसमानाधिकरणो भवति, एवमेव गुण्युपसर्जनगुणविवक्षायां गुणशब्दानुरोधेन सामानाधिकरण्यं भवति । तुल्यो हि हेतुः अभेदोपचारलक्षणयोः । तथापि तु एष प्रयोगो न प्रचुरः इति न शीघ्रमितरवत् प्रतिभाति । यदा तु नाम कथं चिदापतति, तदा एतेन न्यायेन अनुसर्तव्य इति कथ्यते । तस्माद्दृष्ट **अन्तरेणापि भावप्रत्ययं प्रत्यययोग्यवस्तुप्रधानो निर्देशः** । एवं च सति ‘द्व्येकयोः’ इति द्विवचनं समर्थितं भविष्यति । अन्यथा हि ‘ **द्व्येकसंख्येयसंघाते बहुत्वमुपजायते । व्येकेष्विति भवेत्तत्र यदि संख्येयतन्त्रता ॥** ’ संख्येयप्रधाने हि निर्देशे ‘ द्वौ च एकश्च ’ इति कृते बहुवचनमेव प्राप्नोति । संख्याप्राधान्ये तु द्वित्वैकत्वयोः प्राधान्यात् आत्मीयसंख्यानिर्देशो भवति द्व्येकयोः इति प्रयोगः । कस्मात् पुनः विशिष्टमेव भावप्रत्ययेन न निर्दिश्यते ? वक्तृविवक्षाया बहुप्रकारत्वात् । अथवा यदि ‘ बहुत्वे बहुवचनम् ’ इति क्रियेत ततो यथा वैपुल्यं महत्त्वं वा शब्दस्यार्थः ‘ बहुः समुद्रः, बहुरोदनः ’ इति, यच्च त्रिप्रभृतीनां द्वित्वातिरेकसामान्यम्, तयोरुभयोरपि अविशेषेण बहुवचनं प्राप्नोति, तत्र ‘ बहुषु ’ इत्युच्यते, कथं नाम भेदनिबन्धनसंख्यावाचि एव बहुवचनं स्यात् । अतश्च ‘ बहुरोदनः ’ इत्येकवचनं सिद्धम् । यस्तु ‘ संख्याप्राधान्यपक्षे तदेके मन्यन्ते ’ इत्येकत्वप्राधान्यात् एकवचनप्रसङ्गश्चोदितः, सः अन्यत्ववाच्यत्वेन परिहृतः ; तस्मात् बहुत्वादिषु बहुवचनादीनि इति सिद्धम् ;



एवं च सति तिङ्विधाने लादेशत्वात् कर्तरि तिप् इत्येकं वचनम्, एकवचनसंज्ञत्वाच्च एकत्वे तिप् इत्यपरम् । तत्र यदि वा अनयोः परस्परमसंबध्य तिपैव केवलेन संबन्धः स्यात्, ‘ कर्तरि तिप् एकत्वे वा ’ इति । अथवा एकस्मिन् कर्तरि इति प्रतिपन्नविशेषणविशेष्यत्वयोः तिब्विषयत्वम् । ( तत्र नैवं इत्यादि भाष्यं व्याचष्टे– ) तत्र न तावत् अविशेषितयोस्तिपा संबन्धः । कुतः ? ‘ **अनेकस्मिन्नपि प्राप्तिः कर्तरि स्यात् तिपस्तथा । सर्वकारकसंस्थे च सैकत्वे च प्रसज्यते ॥** ’ यदि हि स्वतन्त्रमेव कर्तरि एकत्वे च अन्योन्यनिरपेक्षवाक्यभेदेन तिब्विधानमिष्यते, ततः प्रयोगकाले तद्वदेव नैरपेक्ष्यम्, इति द्विबहुष्वपि कर्तृषु प्राप्नोति, कारकान्तरगतेऽपि वा एकत्वे । तस्मादवश्यं प्रथमं विशेषणविशेष्यसंबन्धोऽभ्युपगन्तव्यः । स चैकविभक्त्यन्तत्वात् सामानाधिकरण्येन । तत्रापि श्रौतत्वाभावात् एकस्य लक्षणावृत्तिः, विभक्तिविपरिणामेन वा वैयधिकरण्यसंबन्धः । सामानाधिकरण्ये तावत् अवस्थितसंख्याप्राधान्यानुरोधेन कर्तृशब्दो लक्षणाम् अभेदोपचारं वा भजते नैकशब्दः, संख्येयप्राधान्यप्रसङ्गात् । ततश्च सामानाधिकरण्यसंबन्धमर्थे मुख्यया वृत्त्या दर्शयितुम् उपसर्जने षष्ठी प्रयुक्ता ‘ कर्तुरेकत्वे इत्यर्थः ’ इति ( भाष्ये ) । अथवा भिन्नार्थविषये सामानाधिकरण्यं न भवति । न च व्यधिकरणयोः एकविभक्त्यन्तयोः षष्ठ्या विना एवंजातीयकः संबन्धोऽवकल्पते । न च संबन्धमन्तरेण अभिप्रेतोऽर्थः सिध्यति । तदा अवश्यं कर्तव्ये अन्यतरविभक्तिविपरिणामे तेनैव न्यायेन संख्याप्राधान्यात् नित्यं च विशेषणे षष्ठीप्रयोगात् एवं विपरिणामेन कथ्यते ‘ कर्तुरेकत्वे ’ इति । दूरापगतश्चात्र एकत्वस्य विभक्तिविपरिणामः, अर्थान्तरबुद्धिप्रसङ्गात् । यदि चैकत्वस्य कर्तरि कर्मणि चेत्युच्यते, ततोऽन्य एवार्थ आपद्येत, एकत्वं यः करोति, यच्च तस्य कर्मेति । तस्मात् कर्तुरेकत्वे इत्येवमादिना दर्शिते कर्तृकर्मविशिष्टा एकत्वादयः प्रत्ययवाच्याः शास्त्रानुगताः इत्यविरोधः । एवं च व्याख्यायमाने यत् लौकिकेन न्यायेन ( अन्यतः प्राप्तकर्तृकर्मणोरवाच्यता इत्यनेन ) भावनातः प्राप्तत्वात् कारकानभिधानमवगतम्, तदपि अनुगतं सूत्रैर्भविष्यति । सूत्राक्षराणि च ‘ द्व्येकयोः ’ इत्येवमादीनि एतदपेक्ष्य नियम्यमानानि विशेषणविशेष्यत्वादिन्यायानुगतानि भविष्यन्ति ( विशेषणविशेष्यता उचिता इति न्यायमनुगतानि इति, विशेषणविशेष्यत्वन्यायानुगतता इति च सुधायामुक्तम् ) । ‘ **लौकिकन्यायानुगतश्च सूत्रार्थः** ’ इत्यस्य अपरोऽपि अभिप्रायः, यथा लोके कर्तृकर्मविशिष्टसंख्याप्रतिपत्तिरियम् एवं व्याख्यायमाने अनुगता भवति । अन्यथा हि स्वातन्त्र्येण इतरनिरपेक्षलक्षणव्याख्याने लोकप्रसिद्धिविपरीतपरस्परासंबद्धसंख्याकारकमात्रवाचित्वग्राही सूत्रार्थः स्यात् । न केवलमेतावन्मात्रम् किं तर्हि स्वगोत्रेणापि ( व्याकरणगोत्रेण योऽनुसृतो न्यायः व्याख्याप्रकारः तेनापि ) सूत्राक्षराणि न्यायापेतानि स्युः । विशेषणविशेष्यतया तु व्याख्याने सर्वं न्याय्यं भविष्यति । तत्र एतत् स्यात्, त्वया मीमांसकेन वचनव्यक्तिकुशलेन भूत्वा स्वमनीषिकया एवमुच्यते, न तु व्याकरणसंप्रदाय एवमवस्थित इति, अत आह– ( भाष्यम् ) ‘ **आगमोऽपि चायमेव, यदा एकत्वादयो विभक्त्यर्थाः तदा कर्मादयो विशेषणत्वेन** ’ इति । द्वाभ्यामपि वाक्यकारभाष्यकाराभ्यां बहुवचनवार्तिके अनभिहितवार्तिके च द्वावपि कर्मत्वाद्येकत्वादिवाच्यत्वपक्षौ दूरमनुसृत्य अन्ते निर्दोषतया अवधारितम् । (पा०२।३।१ सूत्रान्ते ) कर्मादिविशिष्टा एकत्वादयो विभक्त्यर्थाः । इतरथा येषुकेषुचित् बहुवचनं प्राप्नोति । अनभिहिताधिकारश्च न कर्तव्यः स्यात् । अन्यत्राप्यभिहिते, विधानाभावात् तिङ्कृत्तद्धितसमासाभिहितेषु कर्मादिषु कः प्रसङ्गो द्वितीयादीनाम्, येन अनभिहिताधिकारः क्रियेत । अनभिहितानां तु कर्मादीनां एकत्वादिषु द्वितीयाऽऽदयः इति नैतदनुक्तं गम्यते । नहि न्यायेन तेषामभिहितानामनभिहितानां च कश्चित् विशेषो दृश्यते । तदेतत् वार्तिकोपसंहारे स्पष्टं भाष्यकारेण ( पतञ्जलिना ) उक्तम् ‘ एकत्वादिषु विभक्त्यर्थेषु कर्तव्यः अनभिहिताधिकारः, कर्मादिषु तु अनर्थः ’ इति । ( ‘ अनभिहिताधिकारः कर्तव्यः, स कथं कर्तव्यः यदि एकत्वादयः विभक्त्यर्थाः । अथ हि कर्मादयो

विभक्त्यर्थाः, नार्थः अनभिहिताधिकारेण' इति तु पातञ्जलमूले पाठः। भट्टपादैस्तु अर्थतः अनूदितः। के.) **'ननु एतदप्यस्ति, यदा कर्मादयो विभक्त्यर्थाः, तदा एकत्वादयो विशेषणत्वेन'** इति। एतत् पूर्वपक्षवचनत्वात् अनुपन्यसनीयं सत् अभ्युपेत्यवादेनोपन्यस्तम्। एतदुक्तं भवति, यदाऽपि कर्मादयो विशेष्यभूताः प्राधान्येन विभक्त्यर्थाश्रिन्त्यन्ते, तदाऽपि एकत्वादय एव विशेषणत्वेनावस्थिताः सन्तः अभिधीयन्ते, अनभिहितानां विशेषणत्वानुपपत्तेः, विशेषस्य चान्यत एव सिद्धेः। भवति हि ईदृश्यामवस्थायाम् उपसर्जनपरत्वं विधेः यथा लोहितोष्णीषादिषु। अथवा अर्थशब्देन प्रयोजनमभिधीयते। यदाऽपि ते प्रयोजनं तादर्थ्येन विभक्तिः प्रयुज्यते इत्यर्थः। यद्वा उभयोर्वचनयोः उत्सृष्टयोः (अनिर्दिष्टविषयविशेषयोरित्यर्थः) यथासंभवं निवेशात् एकं तिङ्विषयं यत् पूर्वमुदाहृतम्, अपरं तु सुब्विषयं भविष्यति, तत्र कर्मादीनां विभक्त्यर्थत्वाभ्युपगमात्। **ननु च** समानत्वात् बहुवचनादिशास्त्रस्य ऐकरूप्ये सति यथैव तिङां कर्मादिविशिष्टसंख्याऽभिधानात् न कारकाभिधानं जातम्, तथैव सुपामपि प्राप्नोति। ततश्च **'यत् करणाभिधायिन्या विभक्त्या संयुज्य निर्दिशति'** (भा. ३।१।६।१२ पृ. ६७९), 'तदागमे हि तद् दृश्यते तस्य ज्ञानम्' (सू. ४।१।५।१५) इत्यादिव्यवहारविरोधः स्यात्। (आगमद्वयस्य व्यवस्थितविषयत्ववादिनामेव समाधानमाह– ) तत्र **केचिदाहुः।** एकमपि शास्त्रं प्रयोजनवशात् संबन्धिभेदेन भिद्यमानम् अन्यथा च विशेषणविशेष्यभावप्रतिपत्तेः तिङ्क्षु विशेष्यत्वेन संख्यां च वक्ष्यति, सुप्सु विशेषणत्वेनेति। (स्वमतेन आह– ) अथ एतेनापरितोषः, ततोऽन्यथोच्यते (वा. पृ. ९२७) **'शास्त्रे यद्यपि नैतेषामभिधेयत्वमाश्रितम्। तथाप्याश्रितसिद्ध्यर्थमभिधेयत्वमिष्यते॥'** शास्त्रे हि कार्यवशेन अनभिधेयस्यापि अभिधेयत्वं पारिभाषिकमाश्रीयते। न च तावता लोके तथैव प्रसज्यते। न च कर्मादयः अनभिधेया एव इत्येतत् शास्त्रे अभिहितम्, किं तर्हि ? एकान्ताभिधेयैकत्वादिविशेषणं तावत् (कर्मादयः) भवन्ति इत्येतत् व्याख्यातमेव। तस्मात् विशेषणतामेवैते प्रतिपत्स्यन्ते।

तत् यत्र न शास्त्रेण, न न्यायेन अभिधेयत्वप्राप्तिः, तत्रानभिधेया विज्ञास्यन्ते। यत्र पुनः शास्त्रोक्तां विशेषणतामनभिधीयमानाः पतिपत्तुं न शक्ष्यन्ति, तत्र न्यायलभ्याम् अनन्यगतित्वात् अभिधेयतामपि प्रतिपत्स्यन्ते। अर्थापत्त्या वा शास्त्रेणापि अभिधेयतया उक्ता भविष्यन्ति। तत्र तिङ्क्षु भावनोपस्थानात् विशेषणत्वसिद्धेः, नावश्यम् अभिधेयत्वमङ्गीकर्तव्यम्। सुप्सु पुनः प्रातिपदिकार्थानामेकत्वादीनां च अकारकेषु कारकान्तरेषु च व्यभिचारात् अन्यतरप्रतिपादनशक्तौ विहतायाम्, अन्यस्य च भावनाधात्वर्थादेः गमकस्यानभिधानात् न किञ्चिदुपस्थापकमस्ति इति स्वयं कारकमनभिधाय तद्विशिष्टसंख्याऽभिधानानुपपत्तेः कारकमपि अभिधेयं भवति। **ननु च** केवलकारकपदप्रयोगाभावात् अवश्यम्भाव्याख्यातपदाभिहितभावनोपनीतानामेव कारकाणां तिङ्क्ष्विव संख्यासंबन्धः अवकल्पिष्यते। (परिहर्ता आह– ) कथमवकल्पते, यदा वाक्ये स्वनियतपदक्रमेषु कदा चिदाख्यातशब्दात् प्रथमप्रयुक्तेन सुबन्तेन 'वृक्षम्' इति कारकप्रत्ययो जन्यमानो नाभिधानमन्तरेण सिध्यति। (स एव शङ्कते– ) ननु तत्रापि क्रियासंबन्धात् प्राक् कारकत्वानुपपत्तेस्तावत् कारकविभक्त्या नोत्पत्तव्यम्, यावत् क्रियासंबन्धो नोपदर्शितः। ततश्च क्रियापूर्वकत्वं संप्रतिपद्यते इति। (परिहर्ता शङ्कां दूषयति– ) **सत्यम्,** वक्तुरेवम्। श्रोता पुनः यः प्रथममेव वृक्षमिति शृणोति, न तेन क्रिया तत्संबन्धो वा अन्यतः पूर्वमवधारितः, किं तर्हि ? शब्दमात्रात् कारकं प्रतिपद्य अनुमानेनार्थापत्त्या वा वक्त्रा पूर्वतरसंकल्पितां क्रियां प्रतिपद्यते। अन्यथा हि इतरेतराश्रयत्वं स्यात्। कुतः ? **'क्रियया कारकं गम्यं कारकेण क्रिया तथा। एकस्याप्यनपेक्षत्वे न मूलमवधारितम्॥'** द्वयोः संबन्धिनोः अवश्यमेकस्य इतरनिरपेक्षं प्रतीतिमूलमभ्युपगन्तव्यम्, तदिह यदि क्रियागम्यं कारकम्, ततः क्रिया केन प्रत्याय्यते इति वक्तव्यम्। न च तावत् वृक्षप्रातिपदिकं क्रियाया



वाचकम्, शाखादिमज्जातिमात्रवचनत्वात्। नापि प्रातिपदिकार्थो गमकः विनाऽपि क्रियया उपपत्तेः। **अथोच्येत,** न जातु चित् कश्चित् निष्क्रियः संभवति, अतः अस्तितिष्ठत्यादिका का चित् एकान्तेन आक्षिप्ता क्रिया भविष्यति। अथवा 'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति इति गम्यते' (महाभाष्यं २।३।४६) इत्येवं सक्रियत्वात् कारकाक्षेपः सेत्स्यति इति (नेतरेतराश्रयत्वम्)। **तदनुपपन्नम्।** कुतः ? **'तिष्ठत्यादावुपात्तेऽपि क्रियामात्रे ह्यकर्मके। कर्तृमात्रमुपात्तं स्यान्न कर्मादि नियोगतः॥'** सामान्येन ह्यत्र अस्त्यादिक्रिया का चित् प्रातिपदिकार्थेन आक्षिप्येत, न चासौ सर्वकारकाक्षेपे समर्था, इति कर्मादीनामन्यत् प्रापकं मृग्यम्। न च विभक्तिः क्रियां ब्रवीति, यया कर्म आक्षिप्येत। न च संख्या क्रियाकारकविशेषाक्षेपसमर्था इत्युक्तम्। अतो न कारकप्रतीतिं मुक्त्वा अन्यत् क्रियायाः प्रत्यायकमस्ति। तत्र यदि कारकस्यापि क्रिया प्रत्यायिकेष्यते, ततः स्फुटतरम् इतरेतराश्रयेण उभयोरपि निर्मूलत्वमापद्यते। तस्मादिह अनन्यगतिकत्वात् कारकं विभक्तिवाच्यम्। तत्संबन्धाच्च तदनुरूपक्रियाऽऽक्षेप इति वक्तव्यम्। यदा तर्हि क्रियापदपूर्वकं कारकपदं प्रयुज्यते, तदा तत्संबन्धयोग्यायाः क्रियायाः पूर्वतरप्रतीतत्वेन कारकप्रत्यायनसामर्थ्यात् विभक्तिभिः संख्यामात्रमभिधीयेत। सत्यमेवमपि प्राप्स्यत्, यदि नित्यम् आख्यातोपक्रमाण्येव वाक्यानि प्रायोक्ष्यन्त, तेषां तु अनियमेनैव प्रयोगः सर्वदा स्थितः 'गां पश्य, पश्य गाम्' चेति। (कारकस्य वाच्यत्वमुपपादितमुपसंहरति- ) तस्मात् नानभिधेयता। ननु एवमपि अभिधानशक्तेरपि अनियमेन भवितव्यम्। न शक्यमेवं भवितुम्। यदा हि सुबन्तपूर्वप्रयोगापेक्षया कल्पिता वाचकशक्तिः, तदा किमसौ प्रयोगान्तरे अपनेतुं शक्यते। नहि अनित्यः शब्दार्थसंबन्धः। शक्तिद्वयनियमश्च संबन्धः इत्युक्तम् (श्लोवा. संबन्धाक्षेपवादे १३–१४)। **अथोच्येत** आख्यातपूर्वप्रयोगापेक्षया विभक्तेः शक्त्यभावे अवधारिते अवश्यम्भाविनि चैकरूप्ये अत्यन्तमशक्तिरेव भवत्विति, **तदयुक्तम्।** कुतः ? **'सत्यप्यत्रयाप्रुता शक्तिः कृतार्थत्वान्न दुष्यति। असत्यास्तु फलं तस्याः प्रार्थितं दुर्लभं भवेत्॥'** सर्वत्रैव यस्यकस्यचित् कार्यस्य सदसद्भावदर्शनात् विरुद्धसदसद्भावात्मकत्वानभ्युपगमे सति ऐकरूप्यं परिगृह्यते। तत्सद्भावः परिग्रहीतव्यः, सतामपि प्रतिबन्धात् कारणान्तराभावात् अन्यतो वा सिद्धेः कार्यानारम्भाविरोधात्। असतश्च कार्यवेलायां दैवैरपि अप्राप्तेः अनिमित्तकार्योत्पादप्रसङ्गात् इत्युक्तं संबन्धनित्यत्वे (संबन्धाक्षेपरिहारे श्लोवा. ३३)। तस्मात् कल्पिता वाचकशक्तिः नामपूर्वे तावत् प्रयोगे व्यापरिष्यते। विपर्यये (आख्यातपूर्वप्रयोगे) पुनः उदासिष्यते। लब्धात्मकत्वाद्वा श्रौतत्वे सति अनुमानप्रत्ययं निराकुर्वती कार्यमारप्स्यते। (तद्यत्र न शास्त्रेण इत्यादिनोपपादितां न्यायात् व्यवस्थामुपसंहरति– ) अतश्च सिद्धाः सुपां कर्मादयोऽप्यर्थाः। तिङां तु नियतपौर्वापर्यवशात् एकान्तेन धात्वर्थभावनाभ्यामुपस्थापितयोः कर्तृकर्मणोः पश्चात् संख्या अवगम्यते इति न कदा चिदपि कारके विशेषणे वाचकशक्तिकल्पनाऽवसरः। ततश्च नित्यानुमेये कर्तृकर्मणी इति सिद्धम्।

**भाष्यम्**— (पृ. ९३०–३१,३५) **ननु** कर्तुरेकत्वात् एकवचनम्, कर्तुर्द्वित्वात् द्विवचनम्, कर्तुर्बहुत्वात् बहुवचनम्। तेन नूनं कर्ता शब्दार्थः इति गम्यते। **उच्यते।** नैतदनुमानात् शक्यम्। कर्ता अनुष्ठेयक्रियाऽवगमादेवावगम्यते इति प्रत्यक्षम्। तत्तावत् केन चिन्न बाध्यते। एकवचननिर्देशे कर्त्रेकत्वं गम्यते, द्विवचननिर्देशे कर्तुर्द्वित्वम्, बहुवचननिर्देशे कर्तुर्बहुत्वम्। तदपि प्रत्यक्षम्। कतरदत्रानुमानं बाधितुमर्हतीति। यथा आकृतिवचने शब्दे द्विवचने द्रव्यभेदोऽवगम्यते एकवचने द्रव्यैकत्वम् एवमिहापि द्रष्टव्यम्।

**वा**— (पृ. ९३०) **अथात्र** कश्चित् अनुमानकुशल आह— **'ननु कर्तृद्वित्वात् द्विवचनम्, कर्तुरेकत्वादेकवचनम्, कर्तृबहुत्वात् बहुवचनम्। तेन नूनं कर्ता शब्दार्थः'** इति (भाष्यम्)। कोऽभिप्रायः ? कर्तृविशेषप्रत्यायनार्थे यः शब्द उच्यते देवदत्तादिः, तेन सह पचत्यादीनां प्रयुज्यमानानां तदनु-

वर्तनं सर्वप्रकारं दृश्यते । तत्तु सामानाधिकरण्यात् भवति । सामानाधिकरण्यं च द्वयोरपि एकविषयत्वे कल्प्येत । तेन यदि हि देवदत्तादयः सामान्यतः पचतिशब्देनाभिहिताः, ततस्तैः सामानाधिकरण्यं लभ्यते । लक्षणया आकृत्यरुणाऽधिकरणोक्तन्यायेन भविष्यतीति चेन्न । तण्डुलस्थेन पाकेन लक्षयितुमशक्यत्वात् । तत्समवेतमेव हि एकत्वादि लक्षयितुं शक्यते, नान्यसमवायि । तत्र एतत् स्यात्, अधिश्रयणादयोऽपि देवदत्तसमवेताः तस्य पाकत्वेनोच्यन्ते इति । सत्यमुच्यन्ते, न तु तद्द्वारं सामानाधिकरण्यं भवति । गोत्वारुणत्वादीनि हि विशेष्ये स्वात्मानुरूपप्रत्ययोत्पादनात् मतुब्लोपाभेदोपचारनिमित्ततां प्रतिपद्य शब्दं प्रवर्तयन्ति ( प्रथमाबहुवचनमेतत् ) सामानाधिकरण्यं कारयन्ति, न त्वेवम् अधिश्रयणादिरूपापन्नो देवदत्तो गम्यते, येन अभेदोपचारमतुब्लोपौ स्याताम् । अतो यथा दण्डादिशब्दाः देवदत्तादिसामानाधिकरण्यं न प्रतिपद्यन्ते ‘ दण्डो देवदत्तः ’ इति । यथा वा ‘ अधिश्रयणादयः पाको वा देवदत्तः ’ इति प्रयोगो न भवति, तथा ‘ पचति देवदत्तः ’ इत्यपि न स्यात् । **‘ तस्मात् पचतिशब्दादिर्वाचकः कर्तृकर्मणोः । तत्पदाभेदवर्तित्वात् पक्तृपक्कादिशब्दवत् ॥ ’** ( अनुमानं तु ‘ पचतिशब्दः कर्तृवाची देवदत्तादिकर्तृपदाभेदवर्तित्वात् पक्तृशब्दवत् ’ ‘ पच्यतेशब्दः कर्मवाची ओदनादिकर्मपदाभेदवर्तित्वात् पक्कशब्दवत् ’ इति ) । अभेदवर्तित्वं हि तत्पदसामानाधिकरण्यम् असंदिग्धवाचकेषु कृदन्तेषु ‘ पक्ता देवदत्तः ’ ‘ पक्क ओदनः ’ इत्यादिषु दृष्टम् । यत्र च कर्तृकर्मवचनत्वं नास्ति , तत्र सामानाधिकरण्यं दृष्टं यथा पाकादिशब्दे । किञ्च **‘ तच्छब्दोपात्ततद्भूतसंख्याभेदानुवर्तनात् । तथैव वाचकत्वं स्याद् दृष्टान्तौ ताविहापि च ॥ ’** ‘ पचति देवदत्तः, पचतो देवदत्तयज्ञदत्तौ, पचन्ति देवदत्तयज्ञदत्तविष्णुमित्रादयः ’ इति यैव कर्तृवाचिनि देवदत्तादिशब्दे संख्या, सैव आख्यातेऽपि दृश्यते । यत्र चासौ दृश्यते, स वाचको दृष्टो यथा ‘ पक्ता देवदत्तः, पक्तारौ ’ इत्यादि । तथा कर्मण्यपि ‘ पच्यते ओदनः, पच्येते ओदनशाकौ ’ ‘ पक्क ओदनः, पक्कौ शाकौदनौ ’ इत्यादीनि पक्षदृष्टान्तोदाहरणानि वक्तव्यानीति । ( तथा च प्रयोगौ ‘ पचतिशब्दः कर्तृवचनः कर्तृगतसंख्याविशेषानुवर्तनात् पक्ता देवदत्त इति वाक्यस्थपक्तृशब्दवत् ’ इति, ‘ पच्यतेशब्दः कर्मवचनः कर्मगतसंख्याविशेषानुवर्तनात् पक्क ओदन इति वाक्यस्थपक्कशब्दवत् ’ इति च ) । किञ्च **‘ तयोरभिहितत्वेन विभक्तिप्रतिबन्धनात् । साधर्म्यं पूर्वमेवान्यद्देवदत्तेन पच्यते ॥ ’** इतश्च वाचकः, येन अनभिहिताधिकारविहितकारकविभक्तिप्रतिबन्धो दृश्यते ‘ पचति देवदत्तः ’ ‘ पच्यते ओदनः ’ इति । यदि हि वाचकत्वं न स्यात्, ततः ‘ अनभिहिते ’ ( पा० २।३।१ ), ‘ कर्मणि द्वितीया ’ ( पा० २ ), ‘ कर्तृकरणयोस्तृतीया ’ ( पा० २।३।१८ ) इति च विभक्तिप्राप्तिर्न केन चित् प्रतिबध्येत । यथा ‘ पच्यते देवदत्तेन ’ ‘ पचत्योदनम् ’ इति । यतस्तु खलु प्रतिबन्धः, तेनावगम्यते पक्तृपक्कसाधर्म्येणैव वाचकत्वम् । साधर्म्यादन्यत् वैधर्म्यम्, तदेवं दर्शयितव्यम् ‘ यत्र च वाचकत्वं नास्ति, तत्र कारकविभक्तिप्रतिबन्धोऽपि नास्ति, यथा पच्यते देवदत्तेन, पचत्योदनम् ’ इति । **‘ इतश्च बोधकः शब्दस्तद्विशेषावबोधनात् । यथा श्रोत्रमकारस्य बोधकं शब्दबोधकम् ॥ ’** ( पचतिपच्यतेशब्दः कर्तृकर्मणोर्बोधकः कर्तृकर्मविशेषबोधकत्वात्, यत् यद्विशेषबोधकं तत् तद्बोधकं यथा श्रोत्रं शब्दविशेषाकार– [ विशेषस्य अकारस्य ] बोधकम् इति प्रयोगः ) यदि पचतिशब्दादिभिः कर्तृकर्मणी नोच्येयाताम्, कथं तद्विशेषः संख्या अभिधीयते । ‘ तत् नाभिधत्ते, तद्विशेषमभिधत्ते ’ इति हि विप्रतिषिद्धमेतत् । नहि श्रोत्रं शब्दसामान्यम् अगमयत् तद्विशेषम् अकारं गमयति । न च शब्दस्य अभिधातृत्वात् अन्यादृशं बोधकत्वं भवति । भावनया हि गम्यमानत्वे अर्थ एव बोधकः स्यान्न शब्दः । तस्मादपि वाचकत्वम् ( वा. पृ. ९३२ ) किञ्च **‘ विशेषणैश्च संबन्धादुच्येते कर्तृकर्मणी । नह्यनुक्तस्य संबन्धः स्वगुणैरवकल्पते ॥ ’** इतश्चाभिधीयेते, विशेषणैः संबध्यमानत्वात् ‘ इह शोभनः पचति ’ ‘ शोभनः पच्यते ’ । यत्र अनयोर्विशेषणसंबन्धः, तत्राभिधेयत्वमपि



दृष्टं यथा , शोभनः पक्ता , रमणीयः पक्कः ’ इति । यत्र तु अभिधेयत्वं नास्ति , तत्र विशेषणसंबन्धोऽपि न दृष्टः यथा ‘ शोभनमास्यते ’ इति । न च गम्यमानस्य विशेषणसंबन्धो यथा धूमशब्दादग्नेरवगतस्य न ज्वलनादिभिः संबन्ध इति । तदेतत् सर्वम् ‘ ननु कर्तुरेकत्वादेकवचनम् ’ इत्यादिनैव ( भा. पृ. ९३० पं. १ ) दर्शितत्वात् भाष्यकारेण न प्रपञ्चितम् । तद्गतसंख्यायोग्यत्वं सामानाधिकरण्यादिभिर्विना नोपपद्यते । तस्मात् अभिधानपक्ष एव न्याय्य इति । अत्राभिधीयते । यत् तावदुक्तं ‘ वाचकः पचत्यादिशब्दः कर्तृकर्मणोः सामानाधिकरण्यात् ’ इति , तत्र यदि वाचकशक्त्या अस्तित्वमनुमीयेत , ततः पूर्वोक्तेन अर्थापत्तिभङ्गेन सर्वप्रमाणानुपपत्तेः अनुपलब्धिविरोधः । सर्वशक्तीनां च अर्थापत्तिरेवैकं प्रमाणम् । सा चेह अन्यथाऽप्युपपत्तेर्निराकृता । अनुमानविरोधश्च नाभिधाता कर्तृकर्मणोः पचत्यादिशब्दः , तदत्यन्ताविनाभूतार्थाभिधायित्वात् । ( कर्तृकर्माविनाभूतभावनारूपार्थाभिधायित्वात् इत्यर्थः ) यो यदत्यन्ताविनाभूतार्थाभिधायी , स तस्य न वाचकः यथा शिंशपाशब्दो वृक्षत्वनियतशिंशपात्वस्य ( वाचको, न वृक्षत्वस्य ) । तथा कर्तृकर्मणी नाभिधेये तिङा , तदभिधेयापरित्यागात् तद्व्यापारात् विनाऽपि च प्रतीयमानत्वात् , द्रव्यत्ववत् , तस्मिन्नेव शिंशपाशब्दे वृक्षत्वात् । कारकत्वात् आख्यातानभिधानं करणादिवत् । तिङ्शब्दस्य अवाचकत्वम् आख्यातत्वात् आस्यते इत्यादिवत् , इत्येवमपि शक्यं वक्तुम् । ननु ‘ अचन्द्रः शशी ’ इतिवत् एतत् लौकिकविरुद्धमनुमानम् , नैष दोषः । यदि वयं प्रत्याय्यत्वं प्रत्यायकत्वं वा निह्नुमहि , ततो लोकविरुद्धं ब्रूयाम । वाच्यवाचकशक्तिप्रतिषेधस्तु अयं क्रियते , न च तेन लोकप्रसिद्धिविरोधः, प्रत्ययोत्पादमात्रेण कृतार्थस्य ( वा. पृ. ९३३ ) लोकस्य अभिधेयगम्यद्योत्यविषयरूपार्थचतुष्टयविवेकानादरात् । ( गवादिशब्दानाम् अभिधेया जातिः, गम्या व्यक्तिः, उपसर्गाणां द्योत्यः गमनादिरर्थः, योगरूढानां विषयः पद्मत्वादिरिति चतुष्टयम् ) । यदि तु लोकप्रसिद्धं प्रत्याय्यप्रत्यायकत्वमात्रं साध्येत , ततः प्रागुक्तेन भावनाद्वारप्रतीत्यभ्युपगमात् सिद्धसाधनम् । लोकविरोधोऽपि तवैव आपद्येत । कुतः ? **‘ लोको यदन्यतः सिद्धम्, नाभिधेयं तदिच्छति । यथा श्रोत्रगृहीतत्वात् स्वरूपं नाभिधीयते ॥ ’** शेषा अपि प्रतिज्ञादोषाः पूर्वोक्तेन मार्गेण ( श्लोवा. शब्दनित्यत्वाधिकरणोक्तमार्गेण ३१८ ) वर्णस्फोटजात्यादिशब्दविकल्पनया शक्तिद्रव्यकारकविकल्पेन व्यतिरेकाव्यतिरेकप्रश्नेन च वैयाकरणं प्रति योजयितव्याः ( सुधा. पृ. १४४० ) ।

तथा सामानाधिकरण्यं श्रौतं लाक्षणिकं वा हेतुरुच्यते ? श्रौतं तावत् उभयोरप्यसिद्धम् । कस्मात् , अस्माकं भावनामात्राभिधानात् , तव शक्तिमात्रकारकत्वाभ्युपगमात् । देवदत्तादिशब्दो हि द्रव्यवचनो न शक्तिं ब्रवीति । कारकं च अभिदधत् प्रत्ययः शक्तिमात्ररूपेण अभिदध्यात् न द्रव्यरूपेण , तस्याकारकत्वात् । यस्यापि हि द्रव्यं कारकम्, तेनापि शक्तिर्विशेषणत्वेन अवश्यमभ्युपगन्तव्या तद्रहितद्रव्यव्यापारासंभवात् । ततश्च आकृत्यधिकरणात् शक्तेरेवाभिधानम् , इति द्रव्यशब्देन सह सामानाधिकरण्यानुपपत्तिः । शक्तिवचनस्तु नैव आख्यातसमभिव्याहृतः कश्चित् शब्दोऽस्ति , येन सह श्रौतं सामानाधिकरण्यं स्यात् । स हि कारकविभक्त्यन्तो भवेत् । न चेदानीं कारकविभक्तिः प्रयुज्यते । यस्य तु ( शक्त्यनभ्युपगन्तुर्वैशेषिकस्य ) द्रव्यं कारकम्, तस्य यत् द्रव्यं केन चित् कारकात्मना अवधारितम्, तस्य जातिवत् तत्त्वानपायात् यावत्सद्भावं कारकान्तराविवक्षा प्राप्नोति । शक्तिपक्षेऽपि अविशिष्टमिति चेन्न, एकद्रव्याश्रितानां तासाम् आविर्भावतिरोभावविवक्षावशेन तथातथाऽभिधानात् । द्रव्यस्य तु एकात्मकत्वात् अपेक्षाकारणरहितस्य न विवक्षाऽन्तरं प्राप्नोति । **‘ यदि च द्रव्यवाचित्वं सुप्तिङन्तेष्वपीष्यते । ततो लिङ्गादियोगः स्यात् सत्त्वभावात् कृदन्तवत् ॥ ’** यथैव पाचकादिशब्देषु द्रव्यप्राधान्यात् सत्त्वरूपप्रत्ययो भवति , एवं सुप्तिङन्तेष्वपि स्यात् । ततश्च यथैतेष्वेव ‘ पाचकं ब्रूहि ’ ‘ पाचकेन कृतम् ’ ‘ पाचकाय देहि ’ इति कारकान्तरयोगो भवति, एवम् ‘ पचत्योदनम् ’ इत्यादिष्वपि

प्राप्नोति । तस्मात् शक्तिमद्द्रव्यकारकपक्षेऽपि अवश्यं निष्कृष्य शक्तिमात्रं सुप्तिङ्भ्याम् अभिधेयमेष्टव्यम् । तथा सति हि '**आविर्भूतैकया शक्त्या द्रव्यमात्मवशीकृतम् । न शक्त्यान्तरयोगित्वं तदैव प्रतिपत्स्यते ॥**' तेन कारकान्तरायोगो लिङ्गसंख्यारहितत्वं च द्रव्यप्रधानकृतवैलक्षण्येन सिद्धम् । ( श्रौतत्वविशिष्टस्य सामानाधिकरण्यस्य हेतुतायाः उभयासिद्धतामुपसंहरति– ) ततश्च अवस्थितं श्रुतिसामानाधिकरण्यस्य उभयोरसिद्धत्वम् । अथ लक्षणया सामानाधिकरण्यम् अविशेषितं वा हेतुः, ततः ' सिंहो माणवकः ' इत्यादिषु अन्तरेणापि वाच्यवाचकभावं सामानाधिकरण्यं दृष्टम् , इत्यनैकान्तिकता । ( श्रौतत्वविशेषणपक्षे एव हेतोः साध्याविशिष्टत्वलक्षणप्रतिज्ञार्थैकदेशत्वेन अन्यतरासिद्धत्वं वक्तुमारभते – ) यच्च श्रौतं सामानाधिकरण्यम् , तस्य कोऽर्थः ? समानमधिकरणम् इति समानं वाच्यमित्यर्थः । नहि अन्यथा शब्दस्य अर्थः अधिकरणं भवति , सर्वशब्दानामनधिकरणत्वात् ( वैयाकरणमतेन तु– ) आकाशाधिकरणत्वाद्वा । वाच्यस्य तु विषयत्वप्रतिपत्त्या अधिकरणत्वमुच्यते । तदपि च लक्षणादिनिवृत्त्यर्थं मुख्यत्वेन विशेष्यते । ततश्च मुख्यया वृत्त्या समानाधिकरणम् – समानो विषयः – समानमभिधेयमिति यावत् । ततश्च एवं साधनं भवति, वाचकः पचतिशब्दो देवदत्तस्य तच्छब्दसमानार्थत्वात् देवदत्तवचनत्वादित्यर्थः । ततश्च अनित्यः शब्दः अनित्यत्वात् इतिवत् प्रतिज्ञातार्थैकदेशो हेतुः स्यात् । तद्भूताधिकरणोक्तेन च न्यायेन ( वार्तिकोक्तेन श्लो. १०–४६ ), षष्ठान्तवक्ष्यमाणेन ( भाष्योक्तेन ) च शब्दयोः तद्बुद्ध्योः अर्थयोः अर्थबुद्ध्योः इत्यादिभिः व्यवहारकाले ( अनुमानव्यवहारकाले ) सामानाधिकरण्यं विकल्प्य सर्वप्रकारमसिद्धत्वं गवाश्वादिशब्दाविशेषाद्वा अनैकान्तिकत्वमुद्भावनीयम् । अनुमानविरोधोक्तैरेव हेतुभिः ( कर्तृकर्माविनाभूतार्थवाचित्वादिभिः अनुमानविरोधाय उक्तैर्हेतुभिः तिङः कर्तृकर्मवाचित्वनिरासेन ) मुख्यसामानाधिकरण्यनिराकरणात् असिद्धता निर्णेतव्या । ( तैरेव हेतुभिः तुल्यबलत्वाभ्युपगमे ) सप्रतिसाधनता च वक्तव्या । दृष्टान्तोऽपि यदि तावत् शक्त्यभिधानत्वेन, ततः साध्यविकलता । नहि पाचकादिशब्दाः शक्तिपराः, किं तर्हि शक्त्यन्तरायोगित्वात् शक्तिमत्परा इत्युक्तम् । सति च शक्तिपरत्वे तथैव मुख्यसामानाधिकरण्यात्मकमेव हेतुविकलत्वम् । ( **हेतोर्विरुद्धत्वमाह–** ) पाचकादिशब्दवदेव प्रधानभूतशक्त्यनभिधानप्रसङ्गात् सिषाधयिषितधर्मविशेषविपरीतसाधनता । अथवा यदा मुख्यं सामानाधिकरण्यमसिद्धम् , तदा इतरदवाचकेष्वेव दृष्टम् इति विरुद्धता । न च लक्षणायां गौणत्वे वा वाचकत्वमस्ति इति तत्सिद्धिसूत्रे ( भाष्यकृता ) अर्थाभिधानसंयोगात् इत्यत्र च ( सूत्रे अर्थेन नित्यसंयोगात् इत्यवयवेन सूत्रकृता ) साधितम् । तेन विपक्ष एव नास्तीत्येवं शक्यं वक्तुम् । एवं परेष्वपि साधनेषु यथासंभवं योजयितव्यम् । तद्गतसंख्योपादानमपि शक्तिगतत्वेन तावदसिद्धम् । नहि शक्त्यात्मककारकाश्रयाः संख्याः केनचिदिष्यन्ते द्रव्याश्रितत्वात्तासाम् । अथ तु यद्गतामसौ संख्यामुपादत्ते तस्यैव प्रतिद्रव्यस्य वाचक इति प्रतिज्ञायते, ततः पूर्वाभ्युपगमविरोधः । नहि कश्चित् वैयाकरणः आख्यातस्य द्रव्यवचनत्वमिच्छति । यदि तु वाच्यलक्षितगतसंख्याभेदोपादानम् अभेदोपचाराद्वा गौणमेवैतत् हेतुः, ततः ' सिंहो देवदत्तः, सिंहौ देवदत्तयज्ञदत्तौ, सिंहा देवदत्तयज्ञदत्तविष्णुमित्राः ' इत्यादिभिः अनैकान्तिकम् । पाचकादौ यावति पचतिकर्त्रभिधानम्, तावति संख्याभेदोपादायित्वं नास्ति , विभक्तिवाच्यत्वात् संख्याया इति हेतुविकलता । यत्र तु विभक्तौ तदस्ति, तस्यां कर्त्रभिधानाभावात् साध्यविकलता । तेन तृतीयाऽन्तमेव किञ्चित् पदमुदाहर्तव्यम् । तत्रापि तु सर्वे सामानाधिकरण्यवत् दोषाः संभवन्ति इत्यसाधनत्वम् । इदमपरम् ( दूषणम् , यदुत ) अनैकान्तिकत्वम्, गोशब्दो न ब्रवीति द्रव्यम् , अथ तु तद्गतसंख्याभेदमुपादत्ते । नैवैष विपक्ष इति यदि वदेत् , आकृत्यधिकरणमस्मै व्याख्यातव्यम् ( तत्र व्यक्तिवाचिताया निरस्तत्वात् व्यक्त्यभिधानवादिनाऽपि वैयाकरणेन गोशब्दस्यापि पक्षत्वाभ्युपगमेन अनैकान्तिकता परिहर्तुं न शक्या इत्यर्थः ) '**कतरदत्रानुमानं बाधितुमर्हति**' इति ( भाष्येण )



सप्रतिसाधनतां यथोक्तां दर्शयित्वा ' **यथा आकृतिवचने शब्दे** ' इति परकीयस्य अनैकान्तिकतामुद्भाव्य आत्मीयेन निर्णयः कृतः । यदपि च कारकविभक्तेः प्रतिबन्धनम्, तदपि यदि तावत् सर्वस्याः, ततः असिद्धम्, प्रथमाया अपि अभिहितकारकविभक्तित्वात् । अथ यस्याःकस्याश्चित् , ततः अनभिधायकेष्वपि अपवादेषु तदस्ति, इत्यनैकान्तिकता । ( एतदेव विवृणोति– ) ' उभयप्राप्तौ कर्मणि ' ( पा० २।३।६६ ) इति परिसंख्यानात् कर्मगता षष्ठी न तावत् कर्तारमभिधत्ते, अथ च कृदन्ताभिहितक्रियासंबन्धिकर्तृविभक्तिः षष्ठीं प्रतिबध्नाति । यत्तु अनभिहिताधिकारोक्ते द्वितीयातृतीये प्राप्नुतः इति , तदनुपपन्नम् । कुतः ? ' **संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते । उभयं चात्र तत् सिद्धं भावनातिङ्विभक्तितः ॥** ' ' पचति देवदत्तः' इत्यत्र कर्तृत्वं तावत् भावनयैव बोधितम् । याऽपि संख्या, साऽपि तिङा । किमन्यदवशिष्यते , यदर्थं विभक्तिरुत्पद्येत । कथं पुनः अनेककारकसंनिपाते सति कर्तृत्वमेव भावनया देवदत्तस्यावगमितम् , न कारकान्तरत्वमिति ? योग्यतावशेन इति **केचित्** । देवदत्तो हि पाकस्य कर्तृत्वयोग्यः, न करणत्वादियोग्यः, न चाकारकस्य सतः आख्यातेन संबन्धः अवकल्पते, तस्मात् कर्तृत्वं गृह्णाति इति । न त्वेतत् ' काष्ठानि पचन्ति ' इत्यत्र संभवति , नहि तानि कर्तृत्वयोग्यानि , किं तर्हि ? करणत्वार्हाणि इति प्रसिद्धमेतत् । **अथोच्येत** नैवात्र काष्ठानां कर्तृत्वम् , किं तर्हि ? करणत्वमेव । इदमुक्तेन न्यायेन ( आसितिष्ठत्यादिषु इत्यादिना उक्तेन वा. पृ. ९१४ पं १५ ) कर्तृत्ववत् स्वां विभक्तिं नोत्पादयति , एवम् ' स्थाली पचति ' इत्यधिकरणत्वं सप्तमीम् ' तण्डुलाः पचन्ति ' इति कर्मत्वं द्वितीयाम् , ' कुशूलः पचति ' इत्यपादानत्वं पञ्चमीम् , ' ब्राह्मणाः पचन्ति ' इति संप्रदानत्वं च चतुर्थीम् , सर्वत्र योग्यत्वस्य निर्णयकारणत्वादिति । ( सिद्धान्ती– ) **तदनुपपन्नम्** , कर्तृप्रतीतेः सर्वस्य स्वसंवेद्यत्वात् । ( एकदेशी– ) आह । नैवेयं कर्तृत्वप्रतीतिः । नानाकारकप्रतीतिरेव तु सती तिङ्वाच्यकर्तृत्वप्रसिद्धिवासनावशेन तत्सामानाधिकरण्यबुद्ध्या कर्तृप्रत्ययवत् आभासते । यस्तु निपुणः पश्यति , तस्य भवत्येव तत्रतत्र कारकविवेकः । तथाहि , ' **स्थाल्यादेर्योऽपि कर्तृत्वं तदानीमध्यवस्यति । नाधारादन्यथाभूतं व्यापारं सोऽपि विन्दति ॥** ' यं हि व्यापारं साधयन्ती स्थाली अधिकरणत्वं प्रतिपन्नवती , कर्तृत्वेनापि अभिधीयमाना तमेव प्रतिपद्यते । तस्मात् वरमधिकरणत्वेनैव स्थाली उच्यते इति कल्पितम् । लकारवाच्ये तु सति कर्तरि अधिकरणादिषु लकारानुत्पादात् सामानाधिकरण्यानुपपत्तेः, तिङा च संख्याऽनभिधानात् सप्तम्यादिप्रसक्तौ सत्यां प्रथमासिद्ध्यर्थं तिङभिधानार्हकर्तृत्वमेषामुच्यते इति बलादभ्युपगमनीयं स्यात् । अनभिधाने तु यस्यैव तिङुक्तसंख्यासंबन्धो विवक्षितः, तदेव सिद्धफलत्वात् फलभूतां विभक्तिम् अनुत्पादयदपि गम्यते, शिष्टानि पुनः उत्पादयिष्यन्ति । **ननु** एवं सति सर्वेषां भावनाया गम्यमानत्वं संख्यासंबन्धयोगत्वं चास्ति , इति सर्वदैव द्वितीयाऽनुत्पादः प्राप्नोति । **नैष** दोषः । यद्यपि कारकाणि स्वरूपतो गम्यमानत्वात् तदर्थं विभक्तिं न प्रयोजयन्ति , तथापि तिङुपात्ता संख्या केन संबध्य उपयुज्यते इति शेषसंख्यार्थमवश्यं विभक्त्यन्तराणि प्रयोक्तव्यानि । ननु तिङुपात्तैव अगृह्यमाणविशेषत्वात् सर्वैः संबध्यते । ( परिहर्ता– ) कथमेका सती शक्नोति संबन्धुम् । संबध्यमानायां च संख्यान्तरोपजन एव प्राप्नोति । विकल्पः स्यात् इति चेत् । इष्ट एवासौ , यथाप्रयोगं तु व्यवस्थितो न प्रयोगान्तरकालं यथेष्टकल्पनया । यदेव प्रथमाऽन्तम् आदितः प्रयुक्तम् , तदेव तिङ्वाच्यसंख्यायोग्यत्वेन विवक्षितम् इत्यवगम्य शेषेषु यथास्वं विभक्त्यन्तराणि प्रार्थ्यन्ते । ( आशङ्कते– ) यदा तर्हि बहुवचनप्रयोगः, तदा साधारण्यविभवात् शेषेषु विभक्त्यन्तरासंभवप्रसङ्गः । ( परिहरति– ) इष्ट एवैषोऽपि , यदा सर्वाणि तुल्यकल्पत्वेन विवक्ष्यन्ते यथा ' काष्ठादीनि पचन्ति ' इत्यत्र । यदा तु खलु कर्तृमात्रगतमेव बहुत्वं विवक्ष्यते , कारकान्तराणि च श्रुत्यैव गुणभूतानि दर्शयितव्यानि , तदानीं प्राथम्यप्राधान्याभ्यां कर्तर्येव संभवात् तदतिक्रमकारणाभावाच्च न कारकान्तराणि गच्छति इति कर्तृष्वेव लीयते , कारकान्तराणां च स्वविभक्तिभिरेव संख्या अभिधीयते ।

(सिद्धान्ती–) यदि एवम्, ततः सर्वदैव तिङभिहितया संख्यया कर्ता नातिक्रमितव्यः। (शङ्कते) कथं तर्हि 'स्थाली पचति' इति प्रयोगः। (सिद्धान्ती–) उच्यते। किं पुनरत्र युक्तम्, किं कुतश्चित् कारणात् कर्तारमतिक्रम्य अधिकरणं संख्यया आश्रितम्, अथवा तत्संख्याऽर्हे कर्तृत्वमेव स्थाल्यां विवक्ष्यते इति (विचारे) कर्तृत्वविवक्षा युक्तेति मन्यामहे। कुतः? '**न मुख्यातिक्रमे किञ्चित् दृश्यते कारणान्तरम्। मुख्यत्वस्य विवक्षा तु यथेष्टं ननु युज्यते॥**' सर्वत्रैव अर्थद्वये संभवति अन्यतररूपविवक्षा युक्ता। संभवति च सर्वकारकाणां स्वव्यापारापेक्षया कर्तृत्वम् इति पुरस्तात् प्रतिपादितम् (वाक्याधिकरणे श्लो. ६६ इत्यादिना)। नहि प्रधानक्रियागतं कारकवैचित्र्यं स्वव्यापारविषयात् कर्तृत्वाद्भिना उपपद्यते। तस्मात् तदेव विवक्षितम् इति न्याय्यम्, न कारकान्तरसंख्याऽभिधानमिति। एवं च सति यत् कर्मसंख्याऽपि क्वचिदभिधीयते, तत्रोक्तं कारणम्। न च तत् अन्यत्रास्तीति व्यवस्था। (अन्य एकदेशी आह–) तदा तु अनभिहिताधिकारोऽपि एवं करिष्यते 'अनभिहिते कर्मण एकत्वे द्वित्वे वहुत्वे चेत्यादि'। कुतः? '**विभक्तयो विधीयन्ते यत्र तस्य विशेषणम्। युज्यतेऽनभिधानं हि न पुनस्तद्विशेषणे॥**' नहि उपसर्जनस्य विशेषणसंबन्धो युज्यते। विशेष्यास्तु एकत्वादय एव पुनः विशेषणान्तरसंबन्धं सहन्ते प्रधानत्वात्। तथा च समासाधिकारेऽप्युक्तम् 'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति (समर्थसूत्रे पतञ्जलिना। **संख्याविशेषणत्वेन अनभिहिताधिकारव्याख्यामुपसंहरति–**) तस्मात् एकत्वादिषु अनभिहितेषु इति संबन्धः। (**अनिष्टापत्त्या एतां व्याख्यां दूषयति–**) एतस्मिंस्तु व्याख्याने 'कृतः कटः' इति शब्दयोरपि द्वितीया स्यात्, उभयत्रापि कर्मैकत्वस्य अनभिहितत्वात्। अथ प्रथमयैवाभिहितत्वात् न भविष्यतीत्युच्यते, तदयुक्तं प्रागेव प्रथमोत्पत्तेः तत्प्रसङ्गात्। अपिच 'कटं करोति भीष्ममुदारं दर्शनीयम्' इत्यत्रापि कटद्वितीययैवाभिहितत्वात् भीष्मादिषु अभावः प्रसज्यते।

**ननु** कर्मादिविभक्त्यर्थवादिनोऽपि (कर्मादिविशेषणानभिहितत्ववादिनोऽपि। विभक्त्यर्थस्य विशेषणम् अनभिहितत्वम् इति वादिनः इत्यर्थः) अविशिष्टमेतत्। **न**, तस्य तिङ्कृत्तद्धितसमासैः अनभिहितेषु इति परिसंख्यानात्। न च कटद्वितीया तिङादिष्वन्तर्भूता, यतः तयोक्तानां पर्युदासो भवेत्। ननु ममापि परिसंख्या भविष्यति, भवेत्, यदि कृदादीनामपि संख्या वाच्या स्यात्। न त्वेते संख्यायां स्मर्यन्ते, नापि वदन्तो दृश्यन्ते। तेन तिङः केवलस्य ग्रहणमुपपद्यते, नेतरेषाम्। कर्मादयस्तु सर्वेषामर्था इति वैषम्यम्। अतः कृतपाचकादिशब्देभ्यः प्राप्नुवन्त्येव द्वितीयादयः, इत्यन्यः परिहारो वक्तव्यः। स च एवं संभवति, यर्हि कर्मादिविशेषणम् अनभिहिताधिकारः। तथाहि, '**कृतः कटः इतीहापि कर्मत्वं निष्ठयोच्यते। तस्मिन्नभिहिते संख्या न द्वितीयां ग्रहीष्यति॥**' यस्य च कर्मादयो वाच्याः, यस्य च तद्विशिष्टा एकत्वादयः, तयोरुभयोरपि अनभिहितत्वं कर्मादिविशेषणम्, 'अनभिहिते कर्मणि द्वितीया, अनभिहिते वा कर्मणि ये एकत्वादयो वर्तन्ते तेषु द्वितीया' इति। यद्यपि चोपसर्जनं कर्मादयः, तथापि विशेषणेन संबध्यन्ते। समासस्थं हि उपसर्जनं विशेषणैर्न संबध्यते, वाक्यस्थं तु 'ऋद्धस्य राज्ञः पुरुषः' इतिवत् संबध्यमानं दृष्टम् एवमादि। एवं च वृत्तिवाक्ययोर्विशेषो भविष्यति। वाक्यस्थाश्च कर्मादयः। अतः सत्यपि उपसर्जनत्वे शक्नुवन्ति समानविभक्तिकानभिहिताधिकारविशेष्यतां प्रतिपत्तुम्। (पूर्वपक्षी शङ्कते–) ततश्च 'पचति देवदत्तः' इति तिङादिभिरनभिहितस्य कर्तुः संख्यामभिधातुं तृतीया प्राप्नोत्येव। (संख्यायां कारके वा धीः [पृ. ९३५] इत्यत्र तृतीयाप्राप्तिर्निरस्ता इति शङ्कते–) गतार्थत्वात् अप्राप्तिः इति चेत्। (भीष्मादिकारकविभक्तिभिः अनैकान्तिकत्वेन हेतुं दूषयति–) न, भीष्मादिभिरनेकान्तात्। उक्तं ह्येतत् कटद्वितीयोक्तेऽपि कर्मणि भीष्मादिभ्यस्तदुत्पत्तिरिति। यदि च तृतीया गतार्थत्वात् नोत्पद्यते, ततः प्रथमावाच्याऽपि संख्या गतैवेति कामं सा नोत्पद्यते। केवलप्रातिपदिकप्रयोगासंभवात् तदुत्पत्तिरिति चेन्न,



एवं सति यथाविहिततृतीयाप्रसङ्गात्। (पूर्वपक्षी–) न चैष न्यायेन प्रसङ्ग आपादितः, किं तर्हि? आगमेन, न चागमविरोधे न्यायः कार्यक्षमो भवति। (अनभिहिताधिकाराख्यागमेनैव तृतीयापर्युदासोपपत्तिं मत्वा सिद्धान्ती परिहरति–) तस्मात् अनभिहितशब्द एव लक्षणया विशेषात्मना अनवगतत्वे वर्तते, पचतिपच्यतेशब्दाभ्यां च संख्यासंबन्धादरात् विशेषरूपेण कर्तृकर्मणी गम्येते। तस्मात् तत्तद्विभक्तिर्नोत्पत्स्यते। कारकान्तराणि न कदाचिदेवं विशेषरूपेण प्रतीयन्ते इति स्वविभक्तीरुत्पादयन्ति। कारकत्वाविशेषेऽपि च यथा कर्तृकर्मणोरेव विशेषप्रतीतिः संख्यासंबन्धश्च भवति इति, तथोक्तम् (यल्लक्षणो हि भवतः इत्यादिना करणादीनां तु न वस्तुलक्षणा इत्याद्यन्तेन ग्रन्थेन उक्तम्। पृ. ९१८।३–१५) यत्तु भावोत्पन्नलकारपक्षेण व्यभिचारः 'नेह पच्यते, नेह भुज्यते' इत्यादिषु पचिमात्रविवक्षायां कर्तृकर्मणोरनाश्रयणात् धात्वर्थभावनयोः आशङ्क्यते ततश्च अगमकत्वमिति (वा. पृ. ९१४।१५–१६) तत्रोच्यते। '**तुल्योऽभिधानपक्षेऽपि स दोषः शब्दगोचरः। वाचकस्याप्यनेकान्तो गमकस्येव नेष्यते॥**' यथैवात्र क्रियाया अनैकान्तिकत्वात् अन्यत्रागमकत्वमापाद्यते, तथैव शब्दस्यापि कर्मानभिधानात् 'ओदनः पच्यते' इत्यत्रापि अनभिधातृत्वप्रसङ्गः। अथ व्यभिचारी अप्यसौ केनचिदनुगृहीतः सन् अभिधास्यति, तथा ममापि तदर्थो गमयिष्यति इत्यविशेषः। तच्च सर्वत्र सकर्मकाकर्मकश्यन्विकरणेतरविकरणोपपदविशेषज्ञानात् अनभिधातृत्ववत् गमकत्वं विविच्यते (अभिधातृत्ववत् गमकत्वं न विरुध्यते इति पाठः क्वचित्) इत्यनुपालम्भः। इतरथा तेशब्दस्य भावकर्तृकर्मसु त्रिष्वपि दर्शनं यतेशब्दस्य श्यन्विकरणात्मनेपदीयङ्यङ्यक्क्यङ्प्रत्ययेषु चाविशेषः (श्यन्विकरणेषु आत्मनेपदिषु धातुषु, 'ऋतेरीयङ्' इति इयङ्प्रत्ययेषु, 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङ्प्रत्ययेषु, 'सार्वधातुके यक्' इति यक्प्रत्ययेषु, 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्प्रत्ययेषु च संदेहः) इति अत्यन्तसंशयहेतुत्वमेव अभिधानपक्षेऽपि स्यात्। तस्मात् तद्भूताधिकरणोक्तेनैव अन्वयव्यतिरेकभङ्गपरिहारेण पक्षद्वयमपि (अभिधातृत्वगमकत्वरूपं पक्षद्वयं) समर्थनीयम्। ततश्च विशेषहेतुभिः शक्यो गमकत्वपक्षो निर्णेतुम्। भाष्यकाराभिमतलक्षणावृत्त्यपरितोषात् स्वयं मुख्यत्वाभ्युपगमेन पर्युदासोपपत्तिं वक्तुमारभते–) अथवा मुख्यः एव अनभिहितशब्दः। कथं तर्हि 'पचति देवदत्तः' इति तृतीया नोत्पद्यते? पर्युदस्तत्वात्? कथं पर्युदस्तत्वम्? तिङा अभिहितत्वात्। किमर्थं तर्हि पुरस्तात् अनभिधानक्लेशः कृतः? लोकवेदार्थम्, न व्याकरणार्थम्। किं लोकवेदव्यतिरेकेणापि व्याकरणव्यवहाराः सन्ति? बाढम्। नहि वृद्धिगुणशब्दौ लोकवेदयोः आदैजदेङाम् (आत्–ऐच्–अत्–एङाम्) वाचकौ दृष्टौ। भवतु संज्ञापरिभाषाणामलौकिकत्वम्, प्रकृतिप्रत्ययार्थास्तु न लोकवेदव्यतिरिक्ताः प्रयुज्यन्ते। कथं न प्रयुज्यन्ते? यदा 'लः कर्मणि' च इति वेदलोकयोः अत्यन्तम् असन्नेव लकारः कर्तृकर्माभिधायित्वेन कथ्यते। **ननु** लादेशानामत्र लकारग्रहणेन ग्रहणं युक्तम्, स्थानिनि वा अर्थादेशनमादेशार्थम्। नैतद्युक्तम्। कुतः? '**लकारे लक्षणा तावदादेशार्थे प्रसज्यते। स्थानिद्वाराऽपरोक्षा च वृत्तिरादेशभाग् भवेत्॥**' लकारं श्रूयमाणमुत्सृज्य आदेशा गृह्यन्ते इति श्रुतिबाधः। अथापि लकारस्यैव वाच्याः कर्मादयोऽपि उच्यन्ते, तथापि तेन अनभिधीयमानाः सन्तः प्रागादेशोत्पत्तेः न शक्याः तथाऽध्यवसातुम्। अन्ते च न्यायविरोधः स्थित एव (अर्थापत्तिभङ्गन्यायेन विरोधः)। अतश्च कस्मिंश्चित् असमञ्जसे अवश्यकल्पनीये, वरम् अभिधेयत्वमेव पारिभाषिकं कल्पितम्, एकान्तस्य आश्रयणीयत्वात्। नहि कथञ्चिदपि लावस्थायाम् अपारिभाषिकमभिधेयत्वं संभवति। तेन 'लः कर्मणि च' इत्यादेशद्वारेण लोकवेदार्थम् अर्थादेशनम्, उत स्वशास्त्रे व्यवहारार्थम् इति परीक्षायां यदि लोकवेदयोः तिङ्वाच्यत्वं युक्त्या अवकल्पयिष्यते, ततः तादर्थ्यपरिकल्पनम् युक्तम्? अथ अनवक्लृप्तिः, ततः स्वशास्त्रार्थत्वमिति। तत्र तु लोकवेदार्थत्वस्य पूर्वं निराकृतत्वात्, परिशेषतः स्वशास्त्रार्थता। तेन एतदुक्तं भवति, पाणिनेर्मम कर्तृकर्मणी लकारा-

मिहिते द्रष्टव्ये इति । किं पुनरस्य प्रयोजनम् , यदा न लोकवेदयोस्ते तथोपलभ्येते । यदपि च तत्र नास्ति प्रयोजनम् , स्वशास्त्रे तु अस्ति , कथं नाम अनभिहिताधिकारेण लकारप्रयोगे तयोरभिहितत्वाश्रयणात् पर्युदासः स्यादिति । ( मुख्यत्वाभ्युपगमेन पर्युदासोपपत्तिमुपपादितामुपसंहरति– ) तस्मात् यद्यपि परमार्थतो नाभिधीयेते, तथापि अभिहितवदाश्रयणात् अनभिहिताधिकारविहिते विभक्ती न लक्ष्येते इति परिहृतः कारकविभक्तिप्रसङ्गः । ( चतुर्थप्रयोगस्थं 'तद्विशेषावबोधकत्वात्' इति हेतुम् अनैकान्तिकत्वेन दूषयति– ) यत्तु तद्विशेषाभिधानादिति ( पृ. ९३१।२० ), तत् शिंशपादिशब्दैरनैकान्तिकम् । शिंशपाशब्दो हि न तावत् वृक्षत्वपार्थिवत्वद्रव्यत्वसत्ताप्रमेयत्वज्ञेयत्वानाम् अभिधायकः, अथ च तद्विशेषमेव शिंशपामभिधत्ते । तेन यथा अस्य सामान्यमनभिधाय विशेषाभिधानशक्तिर्न विरुध्यते, यथा च चक्षुषः सामान्यमनित्यत्वमगृह्णतोऽपि रूपग्रहणशक्तिर्न विरुध्यते , यथा च भवतोऽपि द्रव्यमनभिधायैव तिङा तद्विशेषः कर्तृत्वमुच्यते , तथा मम कर्त्रभिधानात् ऋते तद्विशेषसंख्याऽभिधानं द्रष्टव्यम् । यदपि गम्यमानस्य विशेषणसंबन्धो नास्ति , अतस्तत्संबन्धदर्शनात् अभिधानमिति ( वा. पृ. ९३२ ), तदपि आकृत्यरुणाऽधिकरणयोः उभयथाऽपि दर्शनान्निराकृतम् । अपिच 'मधुरो रसः स्निग्धः शीतो गुरुश्च' इत्यनेन अनैकान्तिकत्वम् । अत्र हि मधुररसस्य गुणत्वात् गुणान्तरैः शीतादिभिः संबन्धो नावकल्पते इति एतत्प्रतिपादितं द्रव्यं संबध्यते , न च कथञ्चिदपि रसशब्दस्य द्रव्यवचनत्वम् । तथा 'अश्वसहस्रेण नगरं मुषितम्' इति गम्यमानानामेव सादिनां मोषक्रियासंबन्धः । यत्तु क्व चित् धूमादौ रूपादौ वा न दृश्यते , न तावता सर्वत्र स्थितिः कल्पयितुं शक्यते । तस्मान्नाभिधेयः कर्ता । (इति कर्त्रधिकरणम्) ।

* कर्त्रधिकरणे आख्यातार्थत्वं कर्तुर्निरस्य जक्षभ्य. मानाधिकरणे शानजर्थत्वं स्वीकुर्वन्तो मीमांसका अपि परास्ताः । शब्दकौस्तुभः ११. * कर्त्रधिकरणे तु अनभिहितपुरुषस्य अप्राधान्येन निषेधस्य क्रत्वर्थत्वमुक्तम् । कल्पतरुः. ३।१।६।२५ ब्रसू. * कर्त्रधिकरणे 'नानृतं वदेत्' इति पुरुषार्थनिषेधेऽपि क्रत्वर्थे संयोगान्तरम् अर्थवत् इत्युक्तम् । पुरुषार्थनिषेधेन नैतत् सिध्यति । यत् तदतिक्रमे क्रतुफलं न भवतीति तदर्थं संयोगान्तरम् । बाल. पृ. १६९–७०. * कर्त्रधिकरणे भावनावाचित्वबलेन भावनाऽऽक्षेपादेव कर्तृप्रतीतिसिद्धेः आख्यातस्य कर्तृवाचित्वं निषेत्स्यते । सु. पृ. ५४७, * कर्तुराख्यातवाच्यत्वे सति प्रकृत्यर्थस्य यागस्य तद्विशेषणत्वप्रतीतेः, विनष्टस्य च कार्यानुपयोगित्वात् प्रमेयान्तर्भूतव्यावर्तकत्वे लक्षणविशेषणत्वानुपपत्तेः उपलक्षणत्वमात्रकल्पनया अतिक्रान्तयागस्य पुरुषस्य साधनत्वं संभाव्येत , तस्य कर्त्रधिकरणे निषेत्स्यमानत्वात् यागस्य पुरुषोपलक्षणत्वानुपपत्तेः शुद्धस्यैव पुरुषस्य साधनताऽऽपत्तेः फलनानात्ववैचित्र्ये न युज्येते । पृ. ६००–६०१. * दर्शपूर्णमासयोः 'नानृतं वदेत्' इति श्रूयते स निषेधः क्रत्वर्थः । तेन यो दर्शपूर्णमासौ अनुतिष्ठन् तदुपयोगिद्रव्यसंपादनार्थितया पुरुषार्थे निषेधमुल्लङ्घ्य अनृतं वदेत् , तस्य न केवलं पुरुषार्थनिषेधातिलङ्घनेन प्रत्यवायमात्रम्, किन्तु क्रतोर्वैगुण्यमपि । इति निर्णीतं कर्त्रधिकरणे । परिमल. ३।३।९।१८ ब्र. सू. * भावनाऽऽक्षेपादेव कर्तृप्रतीतिसिद्धेः आख्यातस्य कर्तृवाचित्वं कर्त्रधिकरणे निषेत्स्यते । सु. पृ. ५४७. * भावना हि कर्तृत्वकर्मत्वे अखण्डोपाधिरूपे आक्षिपति । ते च स्वाश्रयमाक्षिपतः । कर्तृत्वकर्मत्वयोश्च आक्षेपलभ्ययोरपि शाब्दत्वसिद्ध्यर्थं लक्षणा , न तु तदाश्रयस्यापि । सर्वं चैतत् विस्तरेण कर्त्रधिकरणे निरूपयिष्यते । कौ. २।१।२।५ पृ. ३२. * गम्यमानस्यापि तात्पर्यवृत्त्या शाब्दत्वात् सामानाधिकरण्योपपत्तौ कर्त्रधिकरणसिद्धदृष्टान्ताभिधानम् । सु. पृ. ५७३ । दृष्टान्तश्लेषम् 'यथैव भावप्रधानत्वादाख्याते तत्संबन्धादेव गुणभूतकारकप्रतीतिसिद्धेः न कर्तृकर्मणोरभिधानं भविष्यति , एवं कर्त्राद्यभिधानादेव तदन्यथाऽनुपपत्त्या भावनासिद्धेरनभिधानम्, गम्यमानापेक्ष्यैव च करोतिसामानाधिकरण्यम् , इति । वा. २।१।१।१ पृ. ३८२. * 'अभिक्रामं जुहोति' । 'अव्ययकृतो भावे भवन्ति' इति स्मृत्या णमुला तावत् कर्तुरनुपात्तत्वात् कर्त्रधिकरणन्यायेन



आख्यातेनापि तस्यानुपादानाच्च । कौ. ३।१।१०।१९ पृ. १९१. * कर्त्रधिकरणन्यायस्य स्वरूपम् , 'अनन्यलभ्यः शाब्दार्थः' इति । बाल. पृ. ९३. * 'लः कर्मणि च' इत्यागमस्य एकदेशान्तरैः पूर्णस्य योऽर्थः, तद्विरोधः कर्त्रनभिधानन्यायं बाधेत , न चासावस्ति । सु. पृ. १४१९.

* साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविधानमात्रेण भावनाऽऽक्षेपादेव तन्निष्पादनसमर्थकर्त्रवगमसिद्धिः । सु. पृ. २४६.

* कर्त्राख्याते आख्यातलक्षितकर्तृत्वस्य सामानाधिकरण्येन भावनायामन्वयः । मणि. पृ. ११३, * कर्त्राख्याते 'देवदत्तनिष्ठकर्तृत्वसमानाधिकरणः पाकानुकूलो यत्नः' इति बोधः । पृ. ११४. * कर्त्राख्यातस्थले संख्याया अन्वयः 'संख्याया अपि तिबाद्युक्तायाः' इति बिन्दौ द्रष्टव्यः । रहस्य.

⌛ कर्त्रुत्सर्गन्यायः 'अङ्गाश्रितम् अङ्गकर्त्रा कर्तव्यम्' इति । 'फलभाजः एव प्रधानकर्तृत्वम्' इति । 'सर्वं कर्म ऋत्विजाम्' इति च तस्य स्वरूपम् । ३।४।१३।४४ ब्रसू. । के. * 'उपासनं प्रधानत्वात् यजमानेन कर्तव्यम्' इति फलोत्सर्गन्यायात् कर्त्रुत्सर्गन्यायो दुर्बलः प्रधानवाक्यगतात्मनेपदश्रुतेः । परिमल. ३।४।१३।४४ ब्रसू.

* कर्त्रैक्यमङ्गानां प्रधानैः सह । भा. ११।२।१। १–२, ४–७.

* 'कर्त्वं हविः' अयं त्वन्प्रत्ययः कृत्यार्थः विधौ , कर्तव्यम् इति । बाल. पृ. ४०.

* कर्म अपि उपकाररूपेण कर्मसाध्यं भवति । वा. ३।१।१०।२० पृ. ७३०. * कर्म असतः फलस्य उत्पादकम् । भा. ११।३।४।२५. * कर्म अस्माभिः इतिकर्तव्यतायुक्तं फलसाधनं दृष्टम् । टुप्. ८।१।२।२ पृ. १५८४, * कर्म आरब्धम् अवश्यं समापनीयम् । ६।४।१०।३१. कर्म आरब्धं काम्यं समापयितव्यमेव । भा. ६।२।३।१४–१६, * कर्मैव फलं ददाति, न देवता । यागे गुणभूता देवता । तस्याः दातृत्वं स्तुत्योच्यते । ८।१।१८।३४. * कर्म करणकर्तृशून्यं न भवति । ऋजु. पृ. १७७. * कर्म कर्ता वा नैव 'प्रत्ययार्थः' इत्याचार्याः आहुः । भा. ३।४।४।१३ पृ. ९२३. * कर्म कर्तुं संकल्प्य अननुष्ठाने प्रायश्चित्तं भवति । यथा 'यः सत्रायागुरते' इति निमित्तत्वेन उपन्यासात् यदि सत्रं संकल्प्य नानुतिष्ठते , तदा प्रायश्चित्तार्थं विश्वजिद्यागं कुर्यात् । वि. ६।४।११. * कर्म , कर्मत्वम् अनयोः लक्षणं विभागादिकं च 'द्वितीया' इति बिन्दौ मणौ द्रष्टव्यम् । के. * कर्म कालान्तरानवस्थायि इति मीमांसकमतम् । ऋजु. पृ. २४६.

⌛ **कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत , तादर्थ्यं श्रुतिसंयोगात् । १०।१।५।९ ॥**

'साद्यस्क्रे खलेवाली यूपो भवति ।' खले बलीवर्दान् वारयति दूरं गन्तुं प्रतिबन्धं करोति इति खलेवारी , रलयोरभेदात् सैव खलेवाली खलमध्यस्थः स्तम्भः । स एवात्र यूपः । तत्र यूपाहुतिरूपं कर्म , यत् द्रव्यसंयोगार्थं यूपसंस्कारार्थं भवति , तत् अर्थाभावात् प्रयोजनलोपात् निवर्तेत निवृत्तं भवति । तादर्थ्यं यूपाहुतेः यूपसंस्कारार्थत्वं तु श्रुतिसंयोगात् 'यूपमच्छेष्यता होतव्यम्' 'आज्यं चारणिं चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जहोति' इति श्रुत्युक्तत्वात् । तस्मात् साद्यस्क्रे यूपकरणार्था यूपाहुत्यादयः संस्काराः अर्थलोपात् निवर्तन्ते । तस्मान्नास्ति खलेवाल्यां यूपाहुतिः इति सिद्धान्तः । के.

* कर्म चतुर्विधम् उत्पाद्य–आप्य–विकार्य–संस्कार्यरूपम् । सु. पृ. ८१३. * कर्म चलनात्मकम् एकम् । ( न तु न्यायमते इव पञ्च ) । मणि. पृ. २१. * कर्म दर्शादिकं न विघ्नन्तविहितम् , विध्यादिविहितं तत् । भा. ८।१।१३।२०, * कर्म देवतां प्रति द्रव्यस्य उत्सर्गः । ८।१।१७।३२.

* कर्म द्विविधं लौकिकं वैदिकं च । वैदिकमपि त्रिविधं प्रवृत्तिरूपं निवृत्तिरूपम् उभयरूपं च । अन्त्यं पर्युदासाख्यम् इति । तत्र आद्यं कर्म द्विविधं क्रत्वर्थं पुरुषार्थं च । पुनरपि वैदिकं कर्म द्विविधं गुणकर्म प्रधानकर्म च अर्थकर्मापरपर्यायम् । तत्र आद्यं यथा आधानम् । द्वितीयं यथा अग्निहोत्रादि । क्रत्वर्थमपि द्विविधम् आराादुपकारकं संनिपत्योपकारकं च । तत्र

आद्यम् अदृष्टार्थमेव यथा प्रयाजाः। संनिपत्योपकारकं तु त्रिविधं दृष्टार्थम् अदृष्टार्थम् उभयार्थं च आश्रयिकर्माख्यम्। दृष्टार्थमपि द्विविधं भाव्युपयोगसंस्कारार्थं भूतोपयोगसंस्कारार्थं चेति। तत्र आद्यद्वयं प्रत्येकं द्विविधम्। द्रव्यसंस्कारकं देवतासंस्कारकं चेति। तत्र दृष्टार्थं भाव्युपयोगद्रव्यसंस्कारार्थं संनिपत्योपकारकं द्विविधम्, साक्षात् विनियुक्तसंस्कारार्थम्, साक्षाद्विनियुक्तस्य यदुपकारकम्, तत्संस्कारार्थं चेति। तत्राद्यं यथा 'व्रीहीनवहन्ति' इति। द्वितीयं यथा 'वत्समालभेत' इति। अत एव 'वत्सस्येत्र विनियुक्तदोहाङ्गगोद्रव्योपकारकतया 'वत्समालभेत' इत्यत्र आलम्भसंस्कारार्थत्वम् इति पशुसोमाधिकरणे (२।२।६) **भवदेवः**। (भूतोपयोगद्रव्यसंस्कारार्थं दृष्टार्थं संनिपत्योपकारकं–) प्रतिपत्तिस्तु त्रिविधा प्रधानोत्तरकाला तत्पूर्वकाला तत्समकाला च। तत्राद्या यथा 'चात्वाले कृष्णविषाणां प्रास्यति' इत्यादिः। द्वितीया यथा 'शकृत् प्रविध्यति' 'लोहितं निरस्यति' इति। इयं चतुर्थे 'पशावनालम्भाल्लोहितशकृतोरकर्मत्वम्' (४।१।१२।२७) इत्यधिकरणे प्रतिपादिता। प्रधानसमकाला यथा आग्नेयचोदनया विहिते यागे 'चतुरवत्तं जुहोति' इति होमरूपा प्रतिपत्तिः। होमो हि 'वषट्कृते जुहोति' इति विधानात् वषट्कारोच्चारणोत्तरक्षणे अध्वर्युणा कर्तव्यः, तस्मिन्नेव च क्षणे यागस्मरणार्थेन वषट्कारेण स्मारितो यागो यजमानेनानुष्ठेयः। तदिदं सर्वप्रदानाधिकरणवार्तिके (३।४।१४) प्रतिपादितम्। भूतभाव्युपयोगोभयसंस्कारार्थं तु द्रव्यसंस्कारकं नास्त्येव। भूतभाव्युपयोगोभयदेवतासंस्कारकस्तु पशुपुरोडाशयागः आश्रयिकर्मभेदेषु वक्ष्यते। अदृष्टार्थं संनिपत्योपकारकं यत्, तदपि प्रतिपत्तिवदेव त्रिविधम्। भूतोपयोगसंस्कारार्थं भाव्युपयोगसंस्कारार्थम् उपयोगसमकालं च। तत्राद्यं यथा हुतहविर्दाहः शिष्टाचारकल्प्यविधिप्राप्तः। न चेयं प्रतिपत्तिः, होमेन प्रतिपादितस्य आकीर्णकरतानिवृत्तौ प्रतिपत्त्यन्तरानपेक्षत्वात्। भाव्युपयोगद्रव्यसंस्कारार्थमपि द्विविधं साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तस्य यदुपकारकम्, तत्संस्कारार्थं चेति। तत्राद्यं यथा 'व्रीहीन् प्रोक्षति' इति। द्वितीयं यथा खलेवाल्यां स्थाण्वाहुतिः यूपीयात्रश्वनस्थाणुसंस्कारद्वारा यूपसंस्कारार्था। तृतीयं यथा 'एककपालमपर्यावर्तयन् जुहोति' इति। प्रकृतौ तु पर्यावर्तनविधिः अदृष्टार्थ एव। दृष्टादृष्टोभयार्थम् आश्रयिकर्माख्यं यत्, तदपि त्रिविधं किञ्चित् द्रव्यप्रक्षेपांशेन दृष्टार्थम्, देवतोद्देशांशेन तु अदृष्टार्थम्। यथा स्विष्टकृद्यागः अग्नेः स्विष्टकृतः क चिदन्यत्राविनियोगात्। किञ्चिद्देवतोद्देशांशेन दृष्टार्थं द्रव्यप्रक्षेपांशेन तु अदृष्टार्थं यथा उत्तमः प्रयाजः। तत्र हि 'स्वाहाऽग्निं स्वाहा सोमम्' इत्यादियाज्यामन्त्रलिङ्गात् क्रमेण प्रत्यभिज्ञायमाना आज्यभागादिषु यक्ष्यमाणा एव देवताः संस्कार्याः। तदेतद्दशमे 'प्रयाजे च तन्न्यायत्वात्' (१०।१।७) इत्यधिकरणे प्रतिपादितम्। पशुपुरोडाशयागोऽपि एवमेवेति दशमे एव 'पशावपीति चेत्' इत्यधिकरणे (१०।१।९) प्रतिपादितम्। किञ्चिदाश्रयिकर्म देवतोद्देशांशेनापि दृष्टार्थं द्रव्यप्रक्षेपांशेनापि, द्रव्यत्यागांशेनैव तु केवलं अदृष्टार्थम् इति आश्रयिकर्मतां लभते यथा 'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रस्तरप्रहरणं सूक्तवाकप्रकाशितेष्टदेवताकल्पनात् तदुद्देशेनापि दृष्टार्थम्। एवम् 'प्रस्तरे जुहूमासादयति' इत्युपयुक्तप्रस्तरद्रव्यप्रक्षेपांशेनापि दृष्टार्थम्। तत्यागमात्रं तु तत्रादृष्टार्थमिति।

पुनरपि वैदिकं कर्म चतुर्विधम् उत्पत्ति–प्राप्ति–विकृति–संस्कृत्यर्थत्वेन। तत्राद्यं यथा 'प्रणीताभिः संयौति' इति संयवनं पुरोडाशपिण्डोत्पत्त्यर्थं यागादि च स्वर्गाद्युत्पत्त्यर्थम्। द्वितीयं यथा 'पयो दोग्धि' इति ऊधःस्थस्यैव हि दुग्धस्य प्राप्त्यर्थं दोहनम्। तृतीयं यथा 'व्रीहीनवहन्ति' इति, वैतुष्यरूपविकारार्थत्वात्। चतुर्थं यथा 'व्रीहीन् प्रोक्षति' इति, अदृष्टरूपसंस्कारार्थत्वात्।

पुनरपि वैदिकं कर्म चतुर्विधं प्रकृतिर्विकृतिरुभयात्मकमनुभयात्मकं च। तत्राद्यं यथा अग्निहोत्रदर्शपूर्णमासादि। द्वितीयं यथा मासाग्निहोत्रादि। तृतीयं यथा अग्नीषोमीयसवनीयपश्वादि। अष्टमे ह्येतदुक्तं दर्शपूर्णमासयोः अग्नीषोमीयो विकृतिः, तस्य च सवनीयपशवः, तेषां चैकादशिनाः सुत्याकालत्वसाम्यात्, तेषां च प्राजा-



पत्याः पशुगणत्वसाम्यादिति। चतुर्थं यथा दर्विहोमा नारिष्ठादयः। तेषां हि अपूर्वत्वम् अष्टमान्त्ये उक्तम्। एवं गृहमेधीयाद्यपीति।

पुनरपि वैदिकं कर्म द्विविधं नैमित्तिकं काम्यं च। नैमित्तिकमपि द्विविधं नियतनिमित्तकम् अनियतनिमित्तकं च। अनियतनिमित्तकमपि द्विविधं दोषनिर्घातार्थम् अदोषनिर्घातार्थं च। तत्र नियतनिमित्तकं यथा 'यावज्जीवमग्निहोत्रं जुहोति' 'वसन्तेवसन्ते ज्योतिषा यजेत' इति। तत्राद्यं यावज्जीवाधिकरणे (२।४।१) प्रतिपादितम्, द्वितीयं तु षष्ठे 'सोमविद्याप्रजमृणवाक्येन संयोगात्' (६।२।११।३२) इत्यधिकरणे प्रतिपादितम्। अनियतनिमित्तकं दोषनिर्घातार्थं यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेदग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इति, 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेद् वैश्वानरं द्वादशकपालं निर्वपेत्' इति च। दोषनिर्घातार्थत्वादेव एकार्थत्वादनयोर्विकल्पो द्वादशे 'प्रायश्चित्तेषु चैकार्थ्यात्' इत्यधिकरणे (१२।३।५।१६) वक्ष्यते। अनियतम् अदोषनिर्घातार्थं यथा द्वादशे एव 'समुच्चयस्त्वदोषनिर्घातार्थेषु' इति पूर्वापवादार्थेऽधिकरणे (१२।३।६।१७) प्रतिपादितम् 'भिन्ने जुहोति' इत्यादि।

काम्यमपि कर्म त्रिविधम् ऐहिकफलकं आमुष्मिकफलकम् अनियतफलकं च। तत्राद्यं यथा 'कारीर्या वृष्टिकामो यजेत' 'श्येनेनाभिचरन् यजेत' इति, जातेष्टिश्च पूतत्वादिफलिका। उपस्थितसस्यार्थैव हि वृष्टिः सर्वैः काम्यते, नानुपस्थिता ऐहिकसस्यार्थाऽपि, किमुत जन्मान्तरीयसस्यार्था। एवमभिचारोऽपि उपस्थितशत्रोरेव काम्यते, नानुपस्थितस्य ऐहिकस्यापि, किमुत जन्मान्तरीयस्य। एवं पूतत्वाद्यपि यो यदा जायते पुत्रस्तस्यैव काम्यते, न कालान्तरजातस्य ऐहिकस्यापि, किमुत जन्मान्तरीयस्येति। आमुष्मिकफलकं यथा स्वर्गार्थाग्निहोत्रादि। नहि स्वर्गः केवलसुखात्मको मानुषशरीरेण सुखदुःखोभयभोगार्थं धर्माधर्मोभयारब्धेन अनुभवितुं शक्य इति। अनियतफलकं यथा 'चित्रया यजेत पशुकामः' इत्यादि। पश्वादि हि फलं ऐहिकामुष्मिकत्वेनानियतं चतुर्थे योगसिद्ध्यधिकरणे (४।३।११) प्रतिपादितमिति।

निवृत्तिरूपमपि कर्म द्विविधं क्रत्वर्थं पुरुषार्थं च। तत्राद्यं यथा 'नातिरात्रे षोडशिनं गृह्णाति' इति। द्वितीयं यथा 'न हिंस्यात् सर्वा भूतानि' इति। प्रवृत्तिनिवृत्त्यात्मकतया उभयरूपं पर्युदासाख्यं यत् कर्म, तदपि द्विविधं क्रत्वर्थं पुरुषार्थं च। तत्राद्यं यथा 'यजतिषु येयजामहं करोति नानुयाजेषु' इति, 'नार्षेयं वृणीते, न होतारं वृणीते' इति च। द्वितीयं यथा 'नेक्षेतोद्यन्तमादित्यम्' इति। इति सकलकर्मभेदनिरूपणम्। बाल. पृ. ८१–८६.

* कर्म न आख्यातवाच्यम्, किन्तु अर्थात् गम्यते। 'आख्यातेषु सर्वेषु' इतिशब्दे द्रष्टव्यम्। भा. ३।४।४।१३ पृ. ९१३–९४०. * कर्म न भिद्यते द्रव्यभेदेऽपि तदेवेदं चलनं यजनम्, इत्यादिप्रत्यभिज्ञाबलात् क्रियैक्यप्रतीते प्रतिनिध्युपादानेऽपि न क्षतिः। तत्र च जगतीतलवर्तिनी एकैव कर्मव्यक्तिः। अभिव्यक्तिमात्रं तु भिद्यते। अथवा माऽस्तु व्यक्तिभेदः, शब्दान्तरादिप्रमाणैश्च आग्नेयादिजातय एव भिद्यन्ते। भाट्ट. ६।३।३. * कर्म नित्यानुमेयम्। ऋजु. पृ. २४६.

* कर्म प्रक्रान्तं वीतायामपि फलेच्छायां प्राप्तेऽपि वा फले अवश्यं समापनीयम् इति 'प्रक्रमात्तु नियम्येत' (६।२।३।१४) इत्यत्रोक्तम्। सु. पृ. ७४९. * कर्म लोके अर्थलक्षणं भवति, न शब्दलक्षणम्। यथा अर्थस्तथा क्रियते न यथा शब्दः। वेदे तु शब्देनैवार्थोऽवगम्यते तथैवानुष्ठेयमिति। भा. ६।८।७।२७, * कर्म लोके अर्थलक्षणम्, शब्दलक्षणं पुनर्वेदे। ३।१। ८।१७.

**कर्म वा विधिलक्षणम्। ९।२।२।३॥**

सामशब्दः गीतिवाचकः इत्यवगतम्। सा गीतिः किम् ऋचः प्रति प्रधानभूता, उत गुणभूता इति विचारे पूर्वपक्षमाह। सामशब्देन कर्म प्रधानकर्म उच्यते। यतः विधिलक्षणम्। 'रथंतरं गायति' 'बृहत् गायति' इत्यत्र प्रधानकर्मणो विधेः लक्षणं स्वरूपं दृश्यते द्वितीया विभक्तिः। वाशब्दः पक्षान्तरनिरासार्थः।

**तद्दृग्द्रव्यं वचनात् पाकयज्ञवत् । ४ ॥**

सामशब्दो गीतिवाचकः । सा गीतिश्च न प्रधानभूता किन्तु गुणभूता । ननु यत् प्रति गीतिः गुणभूता, तत् किं स्यात् ? आह । तत् आश्रयभूतं द्रव्यम् ऋक् स्यात् । अथवा ऋक् द्रव्यं यस्य साम्नः तत् ऋग्द्रव्यं स्यात् । ऋग्रूपं द्रव्यं प्रति गुणभूता गीतिः । वचनात् 'ऋचि अध्यूढं साम गायति' इति । पाकयज्ञवत् पाकयज्ञेषु इव । पाकयज्ञेषु वाचनिकं द्रव्यं भवति लाजाः धानाः तण्डुलाः आज्यम् इति, एवमिहापि द्रव्यम् ऋक् । तस्य गुणभूता गीतिः, इति पूर्वः पक्षः ।

**तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च । ५ ॥**

सामस्वरूपं या गीतिः सा ऋचः प्रति प्रधानभूता इति पूर्वपक्ष उक्तः । तत्र विशेषमाह । तत्र ऋगाश्रिते साम्नि प्रधानभूते स्वीकृतेऽपि आश्रयात् ऋग्द्रव्यात् व्यतिरेकः द्रव्यान्तरे ऋगन्तरे योनेः सकाशात् उत्तरायाम् ऋचि प्रदेशश्च संबन्धश्च अविप्रतिषिद्धः न विरुद्धः । 'कवतीषु रथंतरं गायति' इति विशेषविहितेन द्रव्यान्तरेण सामान्यविहितम् 'अभि त्वा शूर' इति ऋग्–रूपं द्रव्यं बाध्येत । अतो न विरोधः । तस्मात् प्रधानकर्म साम इति पूर्वः पक्षः ।

**शब्दार्थत्वात्तु नैवं स्यात् । ६ ॥**

साम ऋचः प्रति प्रधानम् इति पूर्वपक्षं प्राप्तं निरस्यन् सिद्धान्तं सूचयति । एवं न स्यात् साम ऋचः प्रति ऋगपेक्षया प्रधानं न स्यात् । किन्तु ऋगेव प्रधानम्, साम तु तस्याः ऋचः गुणभूतम् । शब्दार्थत्वात् ऋग्रूपशब्दार्थत्वात् ऋगक्षराणां संस्कारार्थं सामेति प्रत्यक्षमेव । एवं सति नादृष्टकल्पना । तस्मात् ऋक् प्रधानं साम गुणभूतम् इति सिद्धान्तः ।

**परार्थत्वाच्च शब्दानाम् । ७ ॥**

सिद्धान्ते हेत्वन्तरमाह । परार्थाः शब्दाः स्तुत्यर्थाः । 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इति स्तुतिश्चोदिता, स्तुतिश्च ऋगक्षरैर्भवति । एवम् ऋग्रूपशब्दानां परार्थत्वात् ऋक् प्रधानम्, साम गुणभूतम् ।

**असंबन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ।८॥**

साम ऋचो गुणभूतम् इति सिद्धान्तवादी साम्नः ऋक् गुणभूता इति पूर्वपक्षे दोषमाह । ऋचो गुणभूतत्वे कर्मणा स्तोत्ररूपकर्मणा साम्नः असंबन्धः, संबन्धो न स्यात् । शब्दयोः 'रथंतरं पृष्ठं भवति' इत्यत्र रथंतरशब्दस्य गीतिवाचकत्वेन पृष्ठशब्दस्य च स्तोत्रवाचकत्वेन पृथगर्थत्वात् भिन्नार्थकत्वात्, श्रुतं सामानाधिकरण्यं बाध्येत । 'रथंतरं पृष्ठम्' रथंतरगुणकं पृष्ठम् इत्युपदिश्यते । साम्नः गुणभूतत्वे सति रथंतरशब्दो गीतिविशिष्टवाची सन् पृष्ठशब्देन सामानाधिकरण्यं लभेत । तस्मात् साम ऋचो गुणभूतम् । चशब्दो हेतुसमुच्चयार्थः ।

**संस्कारश्चाप्रकरणेऽग्निवत् स्यात्, प्रयुक्तत्वात् । ९ ॥**

ऋचः गुणभूतं साम इति सिद्धान्ते पूर्वपक्षी शङ्कते । अप्रकरणे, प्रकरणं प्रकरणगतं कर्म, अप्रकरणम् अकर्म अकर्मकालः । अप्रकरणे अकर्मकाले अध्ययनकाले गानेन ऋचः संस्कारः प्रयुक्तः संपादितः । तथा च अकर्मकाले संस्कारस्य प्रयुक्तत्वात् कर्मकाले पुनः गानेन संस्कारो न कर्तव्यः । नहि कृतस्य पुनः करणं सफलम् । अग्निवत् अग्न्याधानवत् सकृत् कृते अग्न्याधाने पुनर्न क्रियते तद्वत् ।

**अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयते ।१०॥**

सिद्धान्ती आह । तव मते सकृत् संस्कृतानां शब्दानां पुनः कर्मकाले अकार्यत्वात् पुनः संस्कार्यत्वाभावात् अप्रयोगः गानस्य कर्मकाले प्रतीयेत । अयमर्थः, यदि हि अध्ययनकाले गानं कृतं कर्म यावत् तिष्ठेत् तावन्न विनश्येत्, यदि वा पुनः न शक्येत कर्मकाले गानं कर्तुम्, एवम् अकार्यत्वात् पुनरप्रयोगः स्यात् । तच्च तथा नास्ति । शक्यन्ते तु प्रगीताः शब्दाः पुनः प्रयोक्तुम् । तस्मात् अध्ययनकाले प्रयुक्तमपि गानम् असाधकं कर्मणि इति कर्मकाले पुनः प्रयुज्येत तस्मान्न दोषः ।

**आश्रितत्वाच्च । ११ ॥**

कर्मकाले ऋक्षु गानं कर्तव्यमेवेति सिद्धान्ते हेत्वन्तरमाह । 'औदुम्बरीं स्पृष्ट्वा अनपाश्रित्य उद्गाता



उद्गायेत्' इति कर्मकाले गानस्य आश्रितत्वात् । तस्मात् अध्ययनकाले कृतं गानम् अग्न्याधानवत् न कल्पयितव्यम् ।

**प्रयुज्यत इति चेत् । १२ ॥**

अध्ययनकाले कृतेऽपि गाने कर्मकाले गातव्यमेवेति सिद्धान्तिना उक्ते पुनः पूर्वपक्षी शङ्कते । यत् अर्धपञ्चमान् मासान् अध्ययनं प्रयुज्यते, तत् कर्मफलाय भविष्यति । ततश्च कर्मकाले माऽस्तु गानम् । इति चेत् ।

**ग्रहणार्थं प्रयुज्येत । १३ ॥**

गानाध्ययनं कर्मफलाय स्यात् इति पूर्वपक्षिते सिद्धान्ती आह । गानाध्ययनं न कर्मफलाय भवितुमर्हति अदृष्टकल्पनाप्रसङ्गात् । दृष्टं हि तत्र फलम् । यत्तावत् उपाध्यायः शिष्यसंनिधौ अधीते तत् ग्रहणार्थम् । यत् शिष्यः, तत् धारणार्थम् । ग्रहणधारणे च प्रयोगार्थे । तस्मात् दृष्टार्थे सति नादृष्टार्थमध्ययनम् । तस्मात् संस्कारकर्म साम । ऋक् प्रधानम्, साम च गुणभूतम् इति सिद्धान्तः । के.

* कर्म वा विधिलक्षणम् । साममन्त्राणां गीत्यात्मकत्वेन अर्थाभावात् तदभिधानद्वारोपयोगासंभवेऽपि ऋगक्षराभिव्यक्तिद्वारा गुणाभिधानरूपस्तोत्रकरणत्वात् दृष्टविधयैव उपयोगसंभवे नादृष्टार्थोच्चारणप्रयोगजनकत्वकल्पना युक्ता इति निरूपयिष्यते । कौ. १।२।४।४२ पृ. ७२. * कर्म श्रुतिमूलमित्युक्तं चोदनालक्षणोऽर्थो धर्मः इति । भा. २।३।५।१३. * कर्म साकाङ्क्षं कर्मान्तरात् यथा घर्मान् गृह्णाति, तथा द्रव्यमपि । वा. ३।६।१३।३६.

* 'अन्यदेव हि धात्वर्थप्राप्यं कर्म सकर्मके । अन्यदेव च सर्वत्र प्रत्ययार्थनिबन्धनम् ॥' ओदनं पचति, ग्रामं गच्छति, इति धात्वर्थापवर्गलभ्यमेकं कर्म । अपरं पुनर्भावनाकर्म । तत्र कदा चित् धात्वर्थकर्मैव भावनाकर्मत्वमपि प्रतिपद्यते पाकेन ओदनं भावयतीति । वा. २।१।१।१ पृ. ३८५.

* यत् आश्रयं देशान्तरं प्रापयति तत् कर्म इत्युच्यते, न तदात्मनि समवेतं सर्वगतत्वात् आत्मनः । भा. २।१।२।५ पृ. ४००. * यदाऽपि कामना अनेकविषया उत्पन्ना, तदाऽपि एकमेवोद्दिश्य कर्म अनुष्ठातव्यं कर्मणस्तथा सामर्थ्यात् । वा. ४।३।११।२८.

* **कर्माणि** अग्निहोत्रादीनि नियतानि । ऐन्द्राग्नादीनि अनियतानि । भा. ५।३।९।२१. * कर्माण्यपि जैमिनिः ( ३।१।३।४ ) इत्यनेन कर्मणां फलशेषभावः उक्तः । वा. ५।१।१।१. * कर्माण्यपि जैमिनिः फलार्थत्वात् । जैमिनिस्तु आचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म । स हि ददर्श, न यागः कर्तव्यतया चोद्यते । फलकामस्य तु तत्साधनत्वेनेति । द्रव्यगुणसंस्काराः शेषभूताः, यागोऽपि शेषभूतः फलं प्रतीति । भा. ३।१।३।४. * कर्माणि अवधृतस्वरूपाणि प्रयोगवाक्येन गृह्यन्ते । वा. २।२।१।१ पृ. ४६६. * कर्माणि कर्तुं स्वाध्यायमभ्यस्यन्ति । भा. १०।६।१।१. * कर्माणि, 'क्रमभेदं न यास्यन्ति स्वशाखाविहिताः क्रियाः । परिमाणं च तद्वर्ति नान्यत्वं प्रतिपत्स्यते ॥' वा. २।४।२।३२. * कर्माणि न इमानि फलदानि परस्य ( कर्तुरन्यस्य ) भवन्ति । भा. ४।३।१६।३८. * कर्माणि न देवताप्रयुक्तानि, किन्तु अपूर्वप्रयुक्तानि । त्रि. ९।१।४. * कर्माणि न फलप्रयुक्तानि ( किन्तु अपूर्वप्रयुक्तानि )। भा. ४।३।१।१–४, * कर्माणि नहि इतिकर्तव्यतां प्रति विधीयन्ते, किन्तु फलं प्रति तेषां विधिः । इतिकर्तव्यता तु कर्मणां विधीयते । ३।२।६।१९, * कर्माणि यानि परार्थानि सत्राहीनयोः यजमानानां गणे शुक्रान्वारम्भौदुम्बरीसंमानादीनि, तानि एको यजमानः कुर्यात्, न सर्वे । १२।४।११।३२, * कर्माणि शुक्रान्वारम्भौदुम्बरीसंमानादीनि कश्चिदेको यजमानः कुर्यात्, न तत्र नियमः अहीने कस्य चिन्मुख्यत्वाभावात् । १२।४।१२।३३, * कर्माणि शुक्रान्वारम्भौदुम्बरीसंमानादीनि सत्रे एको यजमानः कुर्यादिति यदुक्तम्, स गृहपतिरेव कुर्यात् नियतः । १२।४।११।१३. * कर्माणि समानफलान्यपि यानि परस्परानपेक्षाणि क्रियन्ते, तेषां यथारुचि अनुष्ठानात् नान्यानर्थक्यकरत्वम् । वा. १।२।१।४, * 'वेदादृतेऽपि कुर्वन्ति कल्पैः **कर्माणि** याज्ञिकाः । न तु कल्पैर्विना के चिन्मन्त्रब्राह्मणमात्रकात् ॥' १।३।६।११ पृ. २३२. * **कर्मणा** असत् भाव्यते । पुनःपुनरपि भावयिष्यते कृषिवत् ।

भा. ११।१।४।२४. * कर्मणा आकृष्यमाणस्य (मन्त्रस्य) तत्समानकर्तृकत्वनियमः । वा. ३।८।१३।२६. * कर्मणा कर्मणः असंभवायात् । भा. ३।१।१०।१९. * कर्मणा प्रयोज्यव्यापाराक्षेपः निर्व्यापारस्य कर्मत्वायोगात् । सु. पृ. ५५७. * कर्मणः एकस्य नहि अनेकया देवतया अनेकया (वा) अनुवाक्यया कार्यमस्ति। वा. २।२।३।३ पृ. ४७९. * कर्मणः नास्ति प्रतिनिधिः । वि. ६।३।५. * कर्मणः निरपेक्षस्य संयोगविभागौ फलम्, अभिघाताद्यपेक्षस्य च वेगाख्यः संस्कारः, तथा अवयवसंयोगापेक्षस्य अवयविद्रव्यमपि इति वदन्ति । सु. पृ. ८४३, * कर्मणः पूर्वापरीभूतानिष्पन्नत्वरूपत्वात् नित्यत्वं न संभवति इति कूटस्थनित्यत्वाभावेऽपि नित्यविधिविषयत्वरूपेण प्रवाहनित्यत्वम् । पृ. ७१६.

**ॐ कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् । ७।३।१४।३५ ॥**

अग्निचयने 'पृष्ठैरुपतिष्ठते' इति श्रुतम् । तत्र किं पृष्ठधर्माः कर्तव्या न वेति विचार्यते । ते च हिंकारादयः सामान्यधर्माः, 'रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्, बृहति समुद्रम्' इत्येवमादयो विशेषधर्माः । किञ्च अयं पृष्ठशब्दः कर्मणो वाचकः, अथवा द्रव्यस्येति । तत्र कर्मणः स्तोत्रकर्मणः वाचकः पृष्ठशब्दः पृष्ठ इति शब्दः स्यात् । पृष्ठः इति शब्दः सामवाचकः स्यात् । तथाभूतोपदेशात् । पृष्ठशब्दः कर्मनामधेयम् इत्युक्तं प्राक् (१।४।२।३) । तथाभूतस्य कर्मवाचकस्यैव 'पृष्ठैरुपतिष्ठते' इत्ययमपि उपदेशः । तस्मात् गीतिवाचकः । ततश्च पृष्ठधर्मा अपि अत्र कर्तव्या एवेति पूर्वः पक्षः । 'पृष्ठैरुपतिष्ठते' इत्यस्य च पृष्ठसदृशैः कर्मभिः उपतिष्ठते इत्यर्थः ।

**अभिधानोपदेशाद्वा विप्रतिषेधात् द्रव्येषु पृष्ठशब्दः स्यात् । ३६ ॥**

पृष्ठशब्दः कर्मणो वाचकः, तेनात्र हिंकारादयः पृथिवीध्यानादयश्च धर्माः कर्तव्याः इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । 'पृष्ठैरुपतिष्ठते' इति अभिधानस्य उपदेशोऽयम् । पृष्ठैः अभिदधाति इत्यर्थः । उपतिष्ठते इति तावदात्मनेपदम् । उपोपसर्गात् परस्मात् तिष्ठतेः आत्मनेपदं मन्त्रकरणत्वे भवति । मन्त्राश्चात्र पृष्ठशब्दोक्ता एव संभवन्ति । पृष्ठशब्दस्य कर्मनामत्वे तु आत्मनेपदेन विप्रतिषेधः प्राप्नोति । विप्रतिषेधात् नायं पृष्ठशब्दः कर्मवाचकः । अभिधानोपदेशात्, अन्यथा आत्मनेपदेन विप्रतिषेधात्, अयं पृष्ठशब्दः द्रव्येषु स्यात् 'अभि त्वा शूर नोनुमः' इति ऋग्रूपद्रव्यवाचकः स्यात् । न कर्मवाचकः । तथा च नात्र हिंकाराद्यः पृथिवीध्यानादयश्च धर्मा भवन्ति इति सिद्धान्तः । के.

* कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात् । 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दोऽयं हिंकारादिपृष्ठधर्मातिदेशार्थो न वेति विचारयितुम् अयं स्तोत्रवाची ऋग्वाची वेति संदिह्य चित्राऽधिकरणे (१।४।२) स्तोत्रक्रियावाचित्वेन स्थितस्य पृष्ठशब्दस्य इह अनेकार्थतादोषप्रसङ्गात् ऋग्द्रव्यवाचित्वकल्पनाऽनुपपत्तेः मुख्यानां च पृष्ठानाम् अन्यत्र क्रियावाक्ये विनियुक्तानाम् इह विनियोगात् 'मासमग्निहोत्रं जुहोति' इतिवत् धर्मातिदेशार्थता इति पूर्वपक्षिते, 'अभिधानोपदेशात्' (३६) इति सूत्रेण 'अभि त्वा शूर' इत्याद्यानामृचाम् अयं पृष्ठशब्दो वाचकः इति सिद्धान्तयिष्यते । सु. पृ. ४२७.

* कर्मणः फलसाधनत्वं शास्त्रैकसमधिगम्यम् । वि. ६।३।२. * कर्मणः भङ्क्त्वे कार्यैक्याद्यावृत्तिरित्युच्यते, न स्वतः कार्यस्याभाव्यात् । बृहती. । आवर्तमानं हि कार्ये कार्यान्तरमेव स्यात् न पुनस्तदेव कृतक्रियमाणयोर्भेदात् । ऋजु. पृ. २४३. * कर्मणः विधेयस्य पापफलत्वासंभवात् । वा. ३।४।१०।२८ पृ. ९५८. * कर्मणः श्रौतस्यापि आहवनीयाभावे आचारप्राप्ते लौकिकेऽग्नौ अनुष्ठानम् अविरुद्धम् । सोम. ६।८।४. * कर्मणः सर्वस्यापि द्रव्येच्छा भवति गुणभूता । तथा द्रव्यामानेतुं यतते दृष्टेनैव द्वारेण । भा. ६।१।१।१ पृ.१३५०. * कर्मणः सर्वत्र विच्छिन्नप्रकरणस्य संबन्धि द्विप्रकारं श्रूयते, उपादेयमनुपादेयं च । तत्र यदुपादेयं यथा आहवनीय-प्रतिपदादि, तत् प्रदेशान्तरस्योद्देशेनापि शक्यं विधातुम् । यत्तु अनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकम्, तस्य प्रदेशान्तरावस्थितस्य कर्म



प्रति विद्ध्यशक्तेः, एषा वचनव्यक्तिर्भवति 'तत्रैव कर्म कर्तव्यम्' इति । वा. २।३।११।२४ पृ. ६१५.

**ॐ कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् । ८।१।१३।२० ॥**

तुशब्दः उत्सूत्रशङ्कानिरासार्थः । दर्शपूर्णमासादिरूपं कर्म न प्रवर्तते सौर्यादिकर्मणि, विध्यादिविहितत्वात् कर्मणः, विध्यन्तविहितत्वाच्च धर्माणाम् । एवं च कर्मणः अप्रवृत्तित्वात् न प्रवृत्तिर्यस्य ताद्दशत्वात् दर्शपूर्णमासकर्मणः यत् फलं स्वर्गः, यश्च नियमः यावज्जीविकत्वादिः, यश्च कर्ता स्वर्गकामः, यश्च आग्नेयादिः समुदायः, तस्य फलनियमकर्तृसमुदायस्य सौर्यादौ अनन्वयः, न अन्वयः, न प्रवृत्तिः । तद्बन्धनत्वात् कर्मबन्धनत्वात् फलादेः । दर्शपूर्णमासकर्मणो यत् फलादि, तत् दर्शपूर्णमासकर्मणैव निबद्धं सत् न सौर्यादौ संक्रमितुं समर्थम् । फलनियमकर्तृसमुदायस्य इति समाहारद्वंद्वः । तेन कर्मणा बन्धनं नित्यसंबन्धो यस्य फलादेः इति व्यधिकरणो बहुव्रीहिः ।

**प्रवृत्तौ चापि तादर्थ्यात् । २१ ॥**

दर्शपूर्णमासादिकर्मणः ये फलनियमकर्तृसमुदायाः, तेषां सौर्यादौ प्रवृत्तौ स्वीकृतायां चापि अपि च तादर्थ्यात् पुरुषार्थत्वात् सौर्यादौ प्रवृत्तिः व्यर्थैव । प्रकृतिफलादेः विकृतौ अनुपकारकत्वात् । तस्मात् प्राकृतं फलादि विकृतौ न प्रवर्तेत । 'अपिच' इति वक्तव्ये 'चापि' इति व्यत्ययेन पाठः सूत्रकृतेर्नानाविधत्वात् ।

**अश्रुतित्वाच्च । २२ ॥**

सिद्धान्ते हेत्वन्तरप्रतिपादकं सूत्रम् । दार्शपौर्णमासिकं फलनियमकर्तृसमुदायं सौर्यादौ न प्रवर्तते, अश्रुतित्वात् । प्रयाजादीनि तु विध्यन्तेन प्राप्तानि । फलादौ तु श्रुतिर्नास्ति । तस्मात् दार्शपौर्णमासिकं फलादिकं सौर्यादौ न प्रवर्तते । नास्ति श्रुतिर्यस्य तत् अश्रुति तस्य भावः अश्रुतित्वम् । के.

* कर्मणस्त्वप्रवृत्तित्वात्० (८।१।१३।२०) इत्यत्र करणस्य क्रत्वन्तरगमनविधिनिषेधः उक्तः । सु. पृ. ९५१. * 'कर्मणस्त्वप्रवृत्तित्वात्' इत्यष्टमस्याद्ये पुरुषार्थस्य नातिदेशः इति वक्ष्यते । कु. २।४।१६. * कर्मणः हविः प्रत्यासन्नम् (अन्तरङ्गम्), देवता तु बहिरङ्गम् । भा. ८।१।१७।३२. * फलस्य अनुपादेयत्वेन प्राप्तस्यापि कर्मणः फले विधानात् अनेकगुणविशिष्टता सेत्स्यति । सु. पृ. ८६९. * कर्मणाम् अग्निहोत्रादीनां नानाशाखासु विहितानामैक्यम् । टु. २।४।२।८-३२. * कर्मणाम् अदृष्टार्थत्वात् तस्य प्रतिनिधिना सिद्धौ प्रमाणाभावात् प्रतिनिध्यभावो वक्ष्यते 'न देवताग्नि०' (६।३।१८) इत्यत्र । सु. पृ. ६२१. * कर्मणाम् उत्पत्तिवेलायाम् एकानेकत्वनिर्णयो भवति । उत्पत्तिश्च सर्वत्रोपदेशेन गम्यते, नातिदेशेन । नहि अनुत्पन्ने कर्मणि कथम्भाव्यं भवति । न च तस्मिन् असति अतिदेशः प्रवर्तते । वा. २।२।७।२१ पृ. ५२५. * कर्मणां तन्त्रभेदः कालभेदात् । भा. ११।२।५।२३. * कर्मणां दृष्टादृष्टसाधनत्वविवेकः । सर्वत्रैव द्रव्यकर्मसंबन्धे कर्मणां द्रव्येण विनाऽनुपपत्तेः प्रथमं तावत् द्रव्यं कर्मोत्पादयत् दृष्टोपकारित्वात् तदर्थमाभासते । तत्र क्व चित् भूयः कर्म परावृत्य द्रव्यस्योपकरोति, क्व चित् आत्मलाभमात्रमनुभवति । तत् यदा आत्मलाभमात्रं तस्य दृश्यते, तदा साकाङ्क्षत्वात् अदृष्टं कल्पयितुं शक्यते । यदा तु कार्यान्तरौपयिकेन दृष्टेनैव तण्डुलनिर्वृत्त्यादिना द्रव्योपकारेण निराकाङ्क्षी भवति, तदानीम् अदृष्टकल्पनाऽवसराभावात् अन्यथैव विधानार्थवत्त्वोपपत्तेः नादृष्टसाधनत्वं प्रतीयते । वा. २।१।३।६, * कर्मणां देशाद्युद्देशेन विधीयमानानां स्वरूपानुवादकल्पनं युगपद्विध्यनुवाददोषादयुक्तम् । २।३।१३।२६ पृ. ६१९. * कर्मणां दैवानामुपनयनादीनाम् उदगयन-पूर्वपक्ष-अहः-पुण्याहाः इति कालस्य नियमः । भा. ६।८।५।२३, * कर्मणां नामधेयं दर्विहोमशब्दः । ८।४।१।१ । स्मार्तानां वैदिकानां च कर्मणाम् । ८।४।२।२-३ । परन्तु होमरूपकर्मणामेव । ८।४।३।४. * कर्मणां प्राप्तिर्द्वेधा, चोदकेन कार्यापत्त्या च । कण्वरथंतरं च उभयोः (बृहद्रथंतरयोः) कार्यापन्नम् । अतः उभयधर्मग्राहकम् । टुप्. ९।२।१७।४८, * कर्मणां फलशेषभावः 'कर्माण्यपि जैमिनिः' (३।१।३।४) इत्यत्रोक्तः । ५।१।१।१ पृ. १२८७. * कर्मणां भिन्नानामपि फलस्य एकत्वमवेक्ष्य एकवचनं भवति । यथा अध्वरकल्पा, सर्वपृष्ठा, मृगारा

सुमनाः । भा. * कर्मणां यागहोमादिरूपेण भेदः, न यागादीनां ज्योतिष्टोमदर्शपूर्णमासादिरूपेण इति केषांचिन्मतम् । सु. पृ. ३४३. * कर्मणां लौकिकानां गार्हपत्याद्यग्निषु नानुष्ठानम् । भा. १२।२।१।१–७, * कर्मणां सर्वेषाम् आधानं तन्त्रम् । ११।३।२।२, * कर्मणां स्मार्तानां स्थालीपाकादीनां वैदिकस्य च वास्तुहोमस्य नामधेयं दर्विहोमशब्दः । ८।४।२।२–३. * 'एककालाभिसंयोगाद् भिन्नानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥' यथैव हि एकदेशावस्थितान् वृक्षान् आलोच्य वनमिति समुदायबुद्धिर्भवति, एवम् एककालयुक्तकर्मसमुदायनामधेयबुद्धिः । वा. २।२।३।३ पृ. ४८०, * नहि उत्पत्तिवाक्ये अस्ति कर्मणां प्रकरणम्, फलसंबन्धोत्तरकालत्वेन कथम्भावात्मकस्य प्रकरणस्य प्रयोगवाक्याधीनप्रसूतत्वात् । २।२।५।१५, * **कर्मणि** अगुणोत्पत्तौ तत्रैव गुणः, सगुणोत्पत्तौ तु प्रकारान्तरेण चाविधीयमानानेकगुणसंगतौ सत्यां कर्मान्तरत्वम् इति । २।२।११।२५ पृ. ५३९, * कर्मणि अधिकारः अविदुषः असमर्थस्य च नास्ति। ३।४।५।१५ पृ. ९४५. * कर्मणि अधिकारः नास्ति अन्धपङ्ग्वादेरशक्तस्य । वि. ६।१।२, * कर्मणि अधिकारः स्त्रीणामपि । ६।१।३. * कर्मणि अपवृत्ते संस्कारापायात् अग्नयो लौकिकाः संपद्यन्ते । **संकर्ष.** ३।२।९. * कर्मणि अपि कारकस्मृतेः कारकत्वेनैव क्रियाऽन्वयः । स्वशब्देन भूततया उपादानात् । ईप्सिततमत्वं तु प्रमाणान्तरविषयः । **विवि.** पृ. ४३५. * कर्मणि अविहिते गुणविधानमनर्थकम् । भा. १।४।१।१ पृ. ३२२.

**ဇ कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः । ११।१।४।२० ॥**

काम्ये कर्मणि प्रत्यारम्भम् आरम्भेआरम्भे इति प्रत्यारम्भम् । पुनःपुनरारम्भे पुनःपुनः फलानि स्युः । पुनरभ्यासे फलभूयस्त्वम् । आरम्भभाव्यत्वात् आरम्भेण कर्मप्रयोगेण फलं भाव्यते जन्यते । इति कर्मावृत्तौ फलावृत्तिः । कृषिवत् चतुष्पञ्चैर्मासैः कृषेरावृत्तौ यथा फलावृत्तिर्भवति तद्वत् । इति सिद्धान्तः ।

**अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः । २१ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । सर्वेषां काम्यानां कर्मणां पुनःपुनरपि कार्यत्वात् अनुष्ठेयत्वात् विशेषः अधिकारः अधिकः फलसंबन्धः उपपद्यते । तस्मात् यथेच्छमभ्यासः इति सिद्धान्तः ।

**सकृत्तु स्यात्, कृतार्थत्वादङ्गवत् । २२ ॥**

पूर्वपक्षी तु आह । काम्यं कर्म सकृदेव कर्तव्यं स्यात् सकृद्विधाने सकृत्करणे च चोदनायाः कृतार्थत्वात् कर्तुश्च । अङ्गवत् एकस्मिन् प्रयोगे यथा अङ्गानि सकृदेव क्रियन्ते, नाभ्यस्यन्ते तद्वत् ।

**शब्दार्थश्च तथा लोके । २३ ॥**

पूर्वपक्षी एवाह । लोके शब्दार्थः शब्दस्य अर्थः तथैव भवति । 'काष्ठान्याहर' इत्युक्तः सकृदाहरति, न पुनःपुनः । तद्वत् । चशब्दः पूर्वपक्षे हेत्वन्तरपरः ।

**अपिवा संप्रयोगे याथाकामी प्रतीयेताश्रुतित्वाद्, विधिषु वचनानि स्युः । २४ ॥**

अपिवाशब्दः पूर्वपक्षं व्यावर्तयति । आर्थिनः कर्मणश्च संप्रयोगे संबन्धे सति याथाकामी यथाकामताबुद्धिः प्रतीयेत अनुष्ठाने । फलभूमार्थी बहुकृत्वः, संतुष्टः सकृत् । अश्रुतित्वात् सकृदसकृत्करणस्य श्रुतिर्नास्ति । तस्मात् फलाधिक्यार्थिना काम्यं कर्म यावदिच्छमभ्यसितव्यम् । यदि च नियमेन सकृदेव कर्तव्यं भवेत्, ततः 'तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रः, ये द्वितीयं तेषामायुः' इत्यादीनि गवादीनां विधिषु वचनानि निरर्थकानि स्युः । अथवा काम्यकर्मविधायकानि वचनानि विधिषु स्युः, कर्म विधाय कृतार्थानि, सकृत्त्वे असकृत्त्वे वा उदासीनानि । तस्मात् फलभूमार्थी असकृदपि प्रयुञ्जीत ।

**ऐकशब्द्यात् तथाऽङ्गेषु । २५ ॥**

यदुक्तं पूर्वपक्षिणा अङ्गवत् इति ( सू० २२ ) तत्राह । अङ्गेषु ऐकशब्द्यात् तथा । अङ्गानां प्रधानानां च उपदेशकः एक एव शब्दः अपेक्षया सर्वाण्यङ्गानि गृह्णाति । इति अङ्गानां सकृत् प्रयोगो युक्तः । प्रकृते तु प्रतिप्रयोगम् अन्यस्यान्यस्योत्पत्तिर्न विरुद्धा । इति दृष्टान्तवैषम्यम् ।



**लोके कर्मार्थलक्षणम् । २६ ॥**

यदुक्तं पूर्वपक्षिणा 'यथा लोके' इति ( सू. २३ ) तत्राह । लोके कर्म अर्थलक्षणम् अर्थेन प्रयोजनानुसारेण लक्ष्यते । कार्यवशात् सकृदप्युक्तः असकृदाहरति, सकृदाहरति नाहरति वा । प्रकृते तु शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्तिर्युक्ता । तस्मात् काम्ये कर्मणि फलभूमार्थी असकृत् प्रवर्तेत इति सिद्धान्तः । कृषिन्यायोऽयम् । के.

* **'कर्मण्यारम्भभाव्यत्वात्** इत्यधिकरणे' 'सकृत्तु स्यात् कृतार्थत्वात्' इति गुणसूत्रे कृतयागस्य आत्मन एव फलम् इति कल्पना उद्भाव्य निराकरिष्यते । कु. २।१।२।३. * कर्मणि उपक्रान्ते तदसमाप्य नहि कर्मान्तरमारब्धुं युक्तं वचनाभावे । **संकर्ष.** ३।१।७. * कर्मणि एकेन (अधिकरणेन द्रव्येण वा) अवरुद्धे न अन्यत् संभवति । वा. २।२।५।१६ पृ. ५०७. * कर्मणि एकस्मिन् एकार्थानां गुणानां विकल्पः यथा व्रीहियवयोः खादिरादीनां यूपद्रव्याणां बृहद्रथंतरयोश्च । विकल्पाधिकरणम् । भा. १२।३।४।१०–१५, * कर्मणि एकस्मिन् भिन्नकार्याणां गुणानां समुच्चयः । यथा आघारे 'ऋजुमाघारयति, संततमाघारयति, प्राञ्चमाघारयति' इति । १२।३।३।९, * कर्मणि गुणभूता देवता याज्याऽनुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते । १२।४।२।३.

* कर्मणि **द्वितीया** कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । यथा 'व्रीहीनवहन्ति' । बाल. पृ. ४४. * कर्मणि **तृतीया** कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । यथा 'यवाग्वा जुहोति' 'पित्रा पितरं वा संजानीते' । पृ. ४४, * कर्मणि **चतुर्थी** कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । यथा 'ग्रामाय याति' 'फलेभ्यो याति' 'तृणाय मन्यते' । पृ. ४४. * कर्मणि **षष्ठी** कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा 'जगतः कर्ता' 'चित्रमगोपेन गवां दोहः' 'धर्मजिज्ञासा' 'ब्रह्मजिज्ञासा' । पृ. ४५.

* कर्मणि नहि अविद्वान् विहितोऽस्ति । यो हि अविद्वान् नासौ अधिकृतः, सामर्थ्याभावात् । भा. ३।८।८।१८. * कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणविधिः । वि. १२।३।८. * कर्मणि फलश्रुतिः 'वर्म वा एतद्यज्ञस्य क्रियते यत् प्रयाजानूयाजा इज्यन्ते' इयमर्थवादः । 'कर्मणि फलश्रुतिरर्थवादः' इत्यत्र कर्मपदं आरादुपकारककर्मपरम् । **मीन्या.** * कर्मणि यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किञ्चित् शब्दगतमर्थगतं वा वैकृत्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात् । भा. ८।१।२।२.

**ဇ 'कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः'** इति न्यायः । कार्यकरणे बुद्धिः प्रकाश्यते । स्वस्थे प्रकृतिस्थे जने को वा जनः पण्डितो न, सर्व एव पाण्डित्यं दर्शयतीतिभावविषयेऽस्य प्रचार इति । **साहस्री.** ८००.

* **कर्मसु** उत्सर्गं स्वयं कुर्यात् शेषमन्यः कुर्यात् । वि. ३।७।८. * कर्मसु दैवेषु उदगयनं पूर्वपक्षः अहः पुण्याहश्च कालः । भा. ६।८।५।२३–२४, * कर्मसु द्रव्यरहितस्यापि अधिकारः । ६।१।८।३९–४०, * कर्मसु पित्र्येषु अपरपक्षादिकालनियमः । ६।८।६।२५, * कर्मसु भिन्नेषु देशकर्तृविषये न भेदनियमः । पुरुषधर्मोऽसौ, न कर्मधर्मः । ११।३।१२।३३.

* **कर्मकरः** परिक्रेतव्यः । ऋत्विजश्च परिक्रीयन्ते । भा. ३।७।१८।३८, * कर्मकरः यः परस्योपकारे वर्तते । नैवासौ फलं प्राप्नोति । ६।३।९।२४, * **कर्मकराः** कर्म कुर्वाणाः पादिकमपि अहः लभन्ते, फलानुरूपं नैव ज्ञायते । १०।३।११।४५. * **कर्मकराणां** धनकामानामपि प्रारम्भकाले स्वयमङ्गीकृताया भृतेः अधिकं धनं न लभ्यते । वि. १०।२।२६, * **कर्मकरेषु** प्रयासानुरूपेण भृतितारतम्यं दृष्टम् । १०।३।१३.

* **कर्मकरानतिसाधनवचने** हि दक्षिणाशब्दः । भाट्ट. ३।७।८.

* **कर्मकर्तारौ** नित्यानुमेयौ भावनया । वा. ३।४।४।१३ पृ. ९३०.

* **कर्मकर्तरि** आख्याते कर्तृत्वादेः भावनायामेवान्वयः । एवम् 'कर्मवत् कर्मणा तुल्यक्रियः' ( पा० ३।१।८७ ) इति सूत्रात् 'पच्यते ओदनः स्वयमेव' इत्यादौ यत्र सकर्मकधातोः यत् कर्मकारकं तद्वृत्त्यखण्डोपाधिरूपकर्मत्वाविवक्षया कर्तृत्वविवक्षा, तत्र आख्यातेन

तस्यैव गुणत्वेन लक्षणया उपादानात् आख्यातेन विवरणानुसारेण शक्त्यैव कृतेरुपादानात् । तस्यामेव कर्तृत्वस्य स्वनिरूपकविक्लित्तिरूपफलजनकपाकजनकत्वसंबन्धेन, ओदनस्य च स्वनिष्ठकर्मत्वनिरूपकफलप्रयोजकत्वसंबन्धेन अन्वयः इति व्यक्तं कौस्तुभे । रहस्य. पृ. ४५-४६.

**卐 कर्मकार्यात् सर्वेषामृत्विक्त्वमविशेषात्** । ३।७।१६।३२ ॥

ज्योतिष्टोमे अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता, ब्रह्मा ब्राह्मणाच्छंसी आग्नीध्रः पोता, होता मैत्रावरुणः अच्छावाको ग्रावस्तुत्, उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यः, सदस्यः इति सप्तदश, चमसाध्वर्यवश्च दश, शमिता उपगातारः सोमविक्रयी चेति भूयांसः पुरुषाः यजमानपत्नीभ्यामन्ये यागानुष्ठाने उपयुक्ता ज्ञाताः पूर्वग्रन्थात् । तेषां सर्वेषामेव ऋत्विक्त्वं स्यात् । कुतः ? कर्मकार्यात् । कार्यशब्दो भावार्थके यप्रत्यये छान्दसत्वाभ्युपगमेन वृद्धौ च करणार्थकः । ते सर्वे यागं कुर्वन्ति । यागरूपस्य कर्मणः करणात् सर्वेषामृत्विक्त्वम् । अविशेषाच्च ये ऋतौ यजन्ति ते ऋत्विजो नाम । तथा च ऋतुयजनरूपस्य ऋत्विक्पदप्रवृत्तिनिमित्तस्य सर्वेषु अविशेषात् विशेषस्य भेदस्य अभावात् सर्वेषामृत्विक्त्वमपि अविशिष्टम् । तस्मात् सप्तविंशतेरपि पुरुषाणाम् ऋत्विक्त्वम् इति पूर्वः पक्षः ।

**न वा, परिसंख्यानात्** । ३३ ॥

सूत्रेण पूर्वपक्षे प्राप्ते वाशब्देन तं निरस्य सिद्धान्तयति । न सर्वेषाम् ऋत्विक्त्वम् । कुतः ? परिसंख्यानात् 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इत्यनेन सप्तदशभ्योऽधिकानाम् ऋत्विक्त्वं निषिद्धम् । ततश्च सप्तदशानामेव ऋत्विक्त्वं नाधिकानाम् । ऋत्विक्शब्दो हि यथा ऋतुयजननिमित्तः, तथा वरणभरणनिमित्तोऽपि । तत्र वरणभरणनिमित्तोऽयमत्र गृह्यते । तेन येषां विहितः वरणं भरणं (भृतिदानं) च क्रियते ते ऋत्विजः । ते च सप्तदशैव ।

**पक्षेणेति चेत्** । ३४ ॥

सप्तदशानामेव अध्वर्युप्रभृतीनाम् ऋत्विक्त्वम् इति सिद्धान्तिना उक्ते पूर्वपक्षिणः शङ्का । यद्यपि सप्तविंशतेरेव ऋत्विक्त्वं तथापि 'सप्तदश ऋत्विजः' इति वादः अवयुत्यवादपक्षेण स्यात् । सप्तविंशतौ सप्तदशसंख्याकान् अवयुत्य पृथक्कृत्य वादोऽयम् । न तावता इतरेषां चमसाध्वर्यूणाम् ऋत्विक्त्वं विनश्यति । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, सर्वेषामनधिकारात्** । ३५ ॥

अवयुत्यानुवादः इति पूर्वपक्षिणा शङ्किते सिद्धान्ती उत्तरयति । न अवयुत्यानुवादः संभवति । कुतः ? सर्वेषाम् अनधिकारात् । 'सौम्यस्याध्वरस्य सप्तदश ऋत्विजः' इति वाक्यस्य प्राक् पश्चात् वा सर्वे सप्तविंशतिसंख्याकाः नाधिकृताः नोक्ताः, यानधिकृत्य 'सप्तदश' इति अवयुत्यानुवादो भविष्यति । यत्र महती संख्या कीर्त्यते तत्र अपरायां संख्यायामुक्तायाम् अवयुत्यानुवादो भवति । यथा द्वादशकपालमुक्त्वा 'यदष्टाकपालो भवति' इति वादः । न चेह तथा, तस्मान्नायमवयुत्यानुवादः । ततश्च ऋत्विक्त्वं सप्तदशानामेव । के.

* **कर्मकालशास्त्रं** सर्वापेक्षया प्रबलमपि प्रातिस्विकशास्त्रेण बाध्यते इति नव्याः । तन्न । तदेव हि प्रातिस्विकशास्त्रं कर्मकालबाधकम्, यदनन्यथासिद्धं भवति । **समयमयूख.** पृ. २८.

* **कर्मकालीनमन्त्रप्रयोगः** अनध्यायादावपि । **भा.** १२।३।७।१८-१९.

* **कर्मचोदना** द्रव्यमन्तरेणानुपपन्ना द्रव्यसामान्यमाक्षिपति, तत्र व्रीह्यादिशास्त्रं नियामकम् । वि. ६।३।४.

**卐 कर्मजे कर्म यूपवत्** । ७।३।११।२८ ॥

'अनो ददाति' 'वासो ददाति' इति श्रूयते । अनः वासः एवमादयः शब्दाः क्रियानिमित्ताः । अतः कर्मजे क्रियाजन्ये द्रव्ये श्रूयमाणे कर्म तक्षणवानादिक्रिया । तक्षणेन अनो निष्पाद्य देयम् । एवं यागकाले वानेन वस्त्रं निष्पाद्य देयम् । न तु पूर्वसिद्धम् । यूपवत् । यथा यूपशब्दः जोषणादिक्रियानिमित्तः । स यत्र श्रूयते तत्र जोषणाद्याः क्रियाः प्राप्यन्ते तद्वत् ।

**सिद्धरूपं वाऽशेषभूतत्वात्** । २९ ॥

'अनो ददाति' 'वासो ददाति' इति अनोवासःशब्दौ आकृतिनिमित्तौ, न क्रियानिमित्तौ । ततश्च प्राक्-



सिद्धं रूपं यस्य तत् सिद्धरूपम् अनः सिद्धरूपं च वासो देयम् । न तु दानकाले निष्पाद्य देयम् । वाशब्दः पूर्वपक्षनिरासार्थः । अशेषभूतत्वात् । नात्र तक्षणादिक्रिया दानशेषभूता । यूपे तु जोषणाद्याः क्रियाः श्रूयन्ते । तस्मात् विषमो दृष्टान्तः । एवं तक्षणादिक्रियायाः दानशेषभूतत्वाभावात् सिद्धरूपमेव अनो वा वासो वा देयमिति सिद्धान्तः । **के.**

* **कर्मजे कर्म** यूपवत् । अनङ्गस्यापि विधिना आक्षेपे, 'वासो ददाति' 'अनो ददाति' इति वस्त्रशकटदानविधिना वस्त्रशकटोत्पादकयोर्वानतक्षणयोः आक्षेपः सप्तमाधिकरणपूर्वपक्षसूत्रे वक्ष्यमाणः । तक्षण-(वयन-) कर्मजन्ये शकटे वस्त्रे च विहिते तदुत्पादकम् आक्षिप्यते । यथा यूपे विहिते तदुत्पादकं छेदनादि इति सूत्रार्थः । **सु.** पृ. ९१७.

* **कर्मतः** वाचनिकः व्यवस्थाविधिः यथा 'रथंतरे प्रस्तूयमाने संमीलयेत्, बृहति समुद्रं मनसा ध्यायेत्' इति । स्मार्तेऽपि **बृहस्पतिः**— 'इष्टिश्राद्धे क्रतुर्दक्षः, सत्यो नान्दीमुखे वसुः । नैमित्तिके कालकामौ, काम्ये तु धुरिलोचनौ ॥ पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ ॥' इत्यादि । तथा **मनुः**— 'पित्र्ये स्वदितमित्येवं वाच्यम्, गोष्ठे तु सुश्रुतम् । संपन्नमित्यभ्युदये, दैवे रोचितमित्यपि ॥' इति । **बाल.** पृ. १९, * कर्मतः वाचनिकः व्यवस्थितविकल्पो यथा वरुणप्रघासेषु 'अष्टावध्वर्युरुत्तरे विहारे हवींषि आसादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति । पृ. १६०. * कर्मतः व्यवस्थारूपः प्रतिषेधो यथा **कातीयसूत्रे** अतिरात्रान् त्रयोदश उपक्रम्य 'तेषां चत्वारः अषोडशिकाः प्रथमाः' इति सूत्रेण चतुर्ष्वेव व्यवस्थितः षोडशिनिषेधः कृतः इति । पृ. ३४-३५.

* **कर्मतारतम्येन** भृतितारतम्यं लौकिके कर्मणि, यज्ञकर्मणि तु नासौ न्यायः । के. १०।३।१९।६८.

* **कर्मत्वं** (जुहोतेः) त्यागप्रक्षेपविषयौपचारिकव्याप्यत्वम् । **सु.** पृ. ६३२. * कर्मत्वं परसमवेतक्रियाजन्यफलभागित्वम् । **मणि.** पृ. ५४, * कर्मत्वं भावनाऽऽक्षिप्तः अखण्डोपाधिः । पृ. ११३. * निर्व्यापारस्य कर्मत्वायोगः । **सु.** पृ. ५५७.

* **कर्मधारयः** तत्पुरुषात् बलीयान् । 'समानाधिकरणसमासस्तु बलीयान् तत्र हि स्वार्थे शब्दौ (निषादस्थपति इति) वृत्तौ भवतः । द्वितीया च विभक्तिः तन्त्रेणोभाभ्यां संबध्यते । तेन द्वितीयानिर्दिष्टो निषादो गम्यते । तत्र षष्ठ्यर्थं कल्पयन् अश्रुतं गृह्णीयात् । तस्मात् निषाद एव स्थपतिः स्यात् । **भा.** ६।१।१३।५१.

* **कर्मधारयः** षष्ठीतत्पुरुषात् बलवान् । निषादस्थपतिः । तथाहि, 'समर्थः पदविधिः' (पा० २।१।१) इति समासः सामर्थ्यापेक्षः । सामर्थ्यं च एकार्थीभावः । नीलोत्पलम् इत्यत्र हि नीलोत्पलशब्दाभ्याम् एक एवार्थः प्रतिपाद्यते इति एकार्थीभावलक्षणसामर्थ्यसत्त्वात् समासः । एवं षष्ठीसमासेऽपि सामर्थ्यापेक्षा । तत्र यदि निषादशब्देन निषादः एवोच्येत स्थपतिशब्देन स्थपतिरेव, तदा भिन्नार्थकत्वात् सामर्थ्याभावात् समासो न स्यात् । ततश्च सामर्थ्यसिद्ध्यर्थं निषादशब्दः षष्ठीसमासे स्थपतिलक्षकः स्यात् । **न च** निषादानां स्थपतिः इति विग्रहवाक्ये लक्षणाऽभावात् समासेऽपि न लक्षणा, व्याससमासयोरेकार्थत्वात् इति **वाच्यम्** । निषादानां स्थपतिः इति विग्रहवाक्ये हि षष्ठ्यैव निषादसंबन्धिस्थपत्यभिधानात् नास्ति लक्षणा । समासे तु षष्ठी न विद्यते, अनुपलभ्यमानत्वात् । अतो निषादशब्देनैव लक्षणया संबन्धी प्रतिपादयितव्यः । न चैतावता व्याससमासयोर्भिन्नार्थकत्वम्, उभाभ्यामपि निषादसंबन्धिनः स्थपतेः प्रतिपादनात् । इयांस्तु भेदः, क्व चित् श्रुत्या, क्व चिल्लक्षणया । न तु एतावता एकार्थत्वहानिः । **न च** समासे लुप्ता षष्ठी संबन्धिनमभिधास्यति इति **वाच्यम्** । व्याघातात् । नहि लुप्ता षष्ठी शक्नोत्यभिधातुम् अविद्यमानत्वात् । एतेन षष्ठीलोप एव अभिधास्यति इत्यपि निरस्तम् । लोपस्य अभावात्मकत्वेन तस्य अभिधायकत्वासंभवात् । समासे विभक्तिलोपस्यैव असिद्धेश्च । 'एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति वैयाकरणसिद्धान्तात् । एवं च रेखागवयन्यायेन अनुशासनस्य कल्पिते प्रक्रियावाक्ये एव विभक्तिलोपः काल्पनिकः

इति समासे विभक्तिलोपस्यैवाभावात् न तस्य संबन्धाभिधायकत्वसंभवः । तस्मात् निषादशब्देनैवात्र लक्षणया षष्ठ्यर्थः प्रतिपादनीयः । **न चैवं** सति षष्ठीसमासोच्छेदः, पदद्वयस्यापि समानाधिकरणतया कर्मधारयप्रसङ्गात् इति **वाच्यम्** । यत्र षष्ठ्यर्थलक्षणया सामानाधिकरण्यम्, तत्र षष्ठीसमासः । यत्र लुकं विनैव सामानाधिकरण्यम्, तत्र कर्मधारयः इत्युपगमात् । **न चैवमपि** राजपुरुष इत्यत्र राजा चासौ पुरुषश्चेति विग्रहः स्यात् । राजशब्देन राजसंबन्धिनः पुरुषस्य प्रतिपादनात् राज्ञः पुरुष इति विग्रहो न स्यात् । समासे षष्ठ्यभावात् समासान्तर्भूतस्य च विग्रहवाक्ये प्रयोगायोगात् इति **वाच्यम्** । इष्टापत्तेः । कथं तर्हि राज्ञः पुरुष इति व्याख्यातारोऽपि विगृह्णते इति चेत् । अर्थविस्पष्टीकरणार्थमिति गृहाण । अन्यथा हि कर्मधारयोऽपि संभाव्येत । तत् सिद्धं षष्ठीसमासे निषादशब्दस्य लक्षणाऽऽपातात् कर्मधारय एव समासः । अतो निषादः एव स्थपतिः अधिक्रियते इति । **कु.** ६।१।३।५३. * यत्र षष्ठ्यर्थलक्षणां विनैव सामानाधिकरण्यम्, तत्र **कर्मधारयः** । यत्र तु षष्ठ्यर्थलक्षणया सामानाधिकरण्यं तत्र षष्ठीसमासः । **सोम.** ६।१।१३. * निषादस्थपत्यधिकरणे लक्षणाऽऽपत्त्या तत्पुरुषापेक्षया **कर्मधारयस्य** प्राबल्यमुक्तम् । **मणि.** पृ. १४९. * **कर्मधारयविचारः** 'समासवादः' इति बिन्दौ मणिग्रन्थे द्रष्टव्यः । **के.**

* **कर्मनाम** सर्वम् अन्यत्र श्रूयमाणं धर्माणां ग्राहकम् इति उत्सर्गः । **भा.** ७।३।२।५.

* **कर्मनामधेयम् अग्निहोत्रशब्दः** 'अग्निहोत्रं जुहोति' इति । **भा.** १।४।३।४, एवं **अभिजित्** शब्दः 'अभिजिता यजेत' इति । १।४।१।१, एवम् **आघार**-शब्दः 'आघारमाघारयति' इति । १।४।३।४, एवम् **आज्यशब्दः** स्तोत्ररूपकर्मविशेषनामधेयम् 'पञ्चदशानि आज्यानि' इति । १।४।२।३, एवम् **उद्भिद्**-शब्दः कर्मनामधेयम् 'उद्भिदा यजेत पशुकामः' इति । १।४।१।१, एवं **गो**-शब्दः 'गवा अभिचरन्' यजेत इति १।४।४।५, एवं **चित्रा**शब्दः 'चित्रया यजेत पशुकामः' इति । १।४।२।३, एवं **दर्विहोम**-शब्दः होमनामधेयम् । ८।४।१-२।१-६, एवं **पवमान**शब्दः स्तोत्रविशेषनामधेयम् 'त्रिवृद् बहिष्पवमानम्' इति । १।४।२।३, एवं **पृष्ठ**शब्दः 'सप्तदशानि पृष्ठानि' इति । १।४।२।३, एवं **बलभिद्**-शब्दः यागविशेषनामधेयम् 'बलभिदा यजेत' इति । १।४।१।१, एवं **वाजपेय**शब्दः 'वाजपेयेन स्वाराज्यकामो यजेत' इति । १।४।५।६, एवं **विश्वजित्**-शब्दः 'विश्वजिता यजेत' इति । १।४।१।१, एवं **वैश्वदेव**शब्दः 'वैश्वदेवेन यजेत' इति । १।४।१०।१३, एवं **श्येन**शब्दः 'श्येनेनाभिचरन् यजेत' इति । १।४।४।५, एवं **संदंश**शब्दः 'संदंशेनाभिचरन् यजेत' इति । १।४।४।५० । **के.** * कर्मनामधेयं **स्वाहाकार**शब्दः पञ्चमस्य प्रयाजस्य । **वि.** १०।१।७, * **कर्मनामधेयानाम्** अग्निहोत्रादिशब्दानाम् आतिदेशिकत्वम् । यौगिकानां प्रायणीयादिशब्दानाम्, गुणविधीनां च वैष्णवादिशब्दानाम् आतिदेशिकत्वं नास्ति ।

* **कर्मपदार्थः** अनुमेयः । ऋजु. पृ. १९८, * कर्मपदार्थः एकस्मिन्नेव द्रव्ये वर्तते इति एकद्रव्यपदार्थशब्देन उच्यते । पृ. १९८.

* **कर्मप्रयोगः** सर्वकालम् अध्याये अनध्यायेऽपि । अपि च कर्म पर्वणि, पर्वणि चाध्ययनस्य प्रतिषेधः । श्रुत्यनुरोधेन प्रयोगः प्राप्नोति, स्मृत्यनुरोधेनाप्रयोगः । श्रुतिश्च स्मृतितो बलीयसी । **भा.** १२।३।७।१९, * **कर्मप्रयोगेण** फलं भाव्यते । कथं ज्ञायते ? प्राक् कृतात् कर्मणः फलं नास्ति । यदि भवेत्, कर्म अनर्थकं स्यात् । कर्मोत्तरकालं च अस्तीति श्रुतितोऽवगम्यते । यच्च प्राक् कर्मणो नास्ति कर्मोत्तरकालं च भवति, तत् तेन कर्मणा भाव्यते कृषिवत् । ११।१।४।२०.

* **कर्मफलयोः** संबन्धे, कर्म गुणतः, फलं प्रधानतः । इत्युक्तं 'प्रत्यर्थं चाभिसंयोगात्' ( ६।१।१।३ ) इत्यत्र । **भा.** ७।४।१।१ पृ. १५६९.

* **कर्मफलविपाकसूचनं** वेदमूलम् । **सु.** पृ. १३०.

* **कर्मफलसंबन्धपरः** काम्यः पुरुषार्थाधिकारविधिः 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । **बाल.** पृ. १४.

* याज्ञसेनीनां इष्टकोपधानमन्त्राणाम् 'एतद्वा ऋषीणामाग्नेयं छन्दो यद्याज्ञसेनीः' इति वाक्येन स्मृतितः



प्राबल्यात् संनिहितत्वाच्च उपधाने करणत्वम् । न च मन्त्राल्पत्वम्, दण्डकलितवदावृत्तिसंभवात् **कर्मभूयस्त्वाधिकरणन्यायेन** ( १०।५।२५।८३-८४ ) स्वस्थानविवृद्धेर्वा संख्यापूरणसंभवात् । इति पूर्वः पक्षः । त्र्यनीकाऽधिकरणम् । **संकर्ष.** २।१।३३.

* **कर्मभेदः** दक्षिणाभेदात् कर्तृभेदाच्च । 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा, ऐन्द्र एकादशकपाल ऋषभो दक्षिणा, वैश्वदेवश्चरुः पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुण्यामिक्षा वशा दक्षिणा, बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणा' इति दक्षिणाभेदात्, दक्षिणायाश्च कर्त्रानत्यर्थत्वात् कर्तृत्वाधिष्ठानद्रव्यैक्येऽपि प्रयोगाङ्गभूतकर्तृरूपभेदद्वारा प्रतियागं प्रयोगभेदावगतिः । **सु.** पृ. ९१२. * कर्मभेदः न 'आश्रयन्वेन गृह्णाति यो गुणः प्रकृतां क्रियाम् । तत्संबन्धानुवादत्वात् तत्र भेदो न गम्यते ॥' दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र । **वा.** २।२।१२।२७ पृ. ५५३. * कर्मभेदः न उत्पत्तिवाक्ये द्रव्यविशेषानुक्तौ । 'अग्निहोत्रं जुहोति' 'दध्ना जुहोति, पयसा जुहोति' । **वि.** २।२।१०. * कर्मभेदः न 'तथा न भिद्यते कर्म काठकादिसमाख्यया ।' **वा.** ३।१।१।१ पृ. ६५०. * कर्मभेदः नाम्नां प्रयोजनम् । **मणि.** पृ. ६. * कर्मभेदः **शब्दान्तरात्** 'यजति, जुहोति, ददाति' इति यागहोमदानानां भेदः । **वि.** २।२।१, **अभ्यासात्** 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति यजतिपदाभ्यासात् प्रयाजानां पञ्चानां भेदः । २।२।२, 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति **प्रकरणभेदात्** यागयोर्भेदः । २।२।३, 'तिस्र आहुतीर्जुहोति' इति **संख्यया** आहुतिकर्मणो भेदः । ३।२।७, 'अथैष ज्योतिः, अथैष विश्वज्योतिः, अथैष सर्वज्योतिः' इति ताण्ड्यवाक्यत्रये **संज्ञाभेदात्** कर्मभेदः । २।३।८, 'वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति द्रव्यदेवतारूप**गुणभेदात्** कर्मभेदः । २।३।९. * कर्मभेदः संस्कारभेदे न भवति । 'प्राजापत्यं मनोग्रहं गृह्णाति' इति दशममहः अङ्गीकृत्य ग्रहचोदनैषा, गृह्णाति इति संस्कारविधानात् । ( तस्मात् मानसो ग्रहः ) दशमस्याह्नो गुणस्य विधिः स्यात्, नाहरन्तरचोदना । **भा.** १०।६।१३।३८. * **कर्मभेदे** प्रतिकर्म मन्त्र आवर्तनीयः यथा आमनहोमादौ । **सोम.** २।२।७. * कर्मभेदे प्रमाणानि शब्दान्तरम्, अभ्यासः, नामधेयम्, गुणः, प्रकरणान्तरं चेति । एतानि उत्पत्तिपरतां विधेर्बोधयन्ति वाक्यान्तरविहितात् कर्मणश्च स्ववाक्यविषयस्य भेदं बोधयन्ति । संख्या च स्ववाक्यविधेयानामेव कर्मणां मिथो भेदमावहति । **शा.** २।१।१.

* **कर्मभेदकत्वं** नास्ति संनिधौ फलादेः । (देशकालनिमित्तफलसंस्काराणाम् । ) । **भा.** २।३।१३।२६, * कर्मभेदकत्वं फलसंस्कार्ययोर्भिन्नयोः । फलसंस्कार्याधिकरणम् । २।३।१२।२५. * **कर्मभेदकप्रमाणानां** चतुष्ट्वमेवेति भाष्यान्तरकारोक्तमतनिरासः 'अवेष्टिरेव अन्नाद्यकामस्य' इत्यत्र वार्तिके द्रष्टव्यः । **के.** * **कर्मभेदहेतुः** कर्तृभेदश्च फलभेदश्च । **सु.** पृ. ९१२. * कर्मभेदहेतुः सप्तमः अनुपादेयान्वयसहकृतासंनिधिलक्षणः प्रकारविशेषः प्रकरणान्तरस्यैव । **सु.** पृ. ९५६ । तदेतत् सप्तमं भेदाधिकरणम् ( फलसंस्कार्याधिकरणम् ) । **वा.** २।३।१२।२५.

* **कर्मभेदाभेदौ** । परोद्देशेन कर्म विधीयमानं यदि अन्येन तद्रूपमेव वाक्येन उपस्थाप्यते, ततः 'तदेव' इति अकर्मान्तरबुद्धिर्भवति । अथ तु ईषदपि तिरोधानात् नोपतिष्ठेत, ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्या अपनेतुम् इति कर्मान्तरत्वं भवति । **वा.** २।३।११।२४ पृ. ६१५, * कर्मभेदाभेदौ । यदि बलीयस्या विपरिवृत्त्या ताद्रूप्यात् अप्रच्युतया पूर्वकर्म उत्पत्तिरूपं स्थाप्यते तत्र उत्पादकशक्तिविरोधात् प्रत्यभिज्ञानबलेन तदेव कर्म अध्यवसीयते इति न भिद्यते । यदा तु पूर्वकर्मरूपात् किञ्चिदप्याधिक्यं विज्ञायते, तदा नैव अविभागज्ञानमस्ति इत्यर्थात् उत्पत्तिविधिर्भवन् अन्येन तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेण अनिवारितशक्तिः सत्यपि अन्यपरत्वे अनुपादेयं प्रति उपादानात् कर्म भिनत्ति । २।२।११।२५ पृ. ५४०. * **कर्ममध्ये** कर्मान्तरारम्भः सति प्रमाणे युज्यते दर्शकर्ममध्ये अनुष्ठेयनिशीष्टिवत् । **सोम.** ५।१।११.

* कर्ममध्ये न कर्मान्तरम् 'अप वा एतद्यज्ञस्य च्छिद्यते यदन्यस्य तन्त्रे वितते अन्यस्य तन्त्रं प्रतायते' इति क्रमभेदे दोषश्रवणात् । भा. ५।१।१७।३१.

* कर्मवत् । 'अभिधानं च कर्मवत्' प्रधानकर्मण इव चाभिधानं भवति द्वितीयासंयोगेन 'प्रउगं शंसति' 'निष्केवल्यं शंसति' इति । भा. २।१।५।२८. * कर्मवत् । 'प्रतिषेधश्च कर्मवत्' । सत्रे ऋत्विजामेव यजमानत्वात् यथा वरणरूपं कर्म न प्राप्नोति, एवं गवादिदानमपि न प्राप्नोति स्वसंप्रदानकत्वासंगतेः । तथा 'न ह्यत्र गौर्दीयते, न वासः' इत्यादिः प्रतिषेधोऽपि न प्राप्नोति । के. १०।२।११।३६, * कर्मवत् 'याजमानास्तु तत्प्रधानत्वात् कर्मवत्' । ज्योतिष्टोमे वपनादिसंस्काराः याजमानाः स्युः 'केशश्मश्रु वपते, दतो धावते' इति संस्कारफलस्य यजमानगामित्वेन यजमानप्रधानत्वात् । कर्मवत् यथा प्रधानकर्माणि पुरुषार्थानि यजमानस्य भवन्ति तद्वत् । ३।८।२।४, * कर्मवत् । 'संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद् व्यवतिष्ठेरन्' । यथा वपनादिभ्योऽन्ये पदार्थाः यस्मिन् वेदे आम्नाताः तत्समाख्यातेन पुरुषेण क्रियन्ते, तथा ज्योतिष्टोमे वपनादिसंस्कारा अध्वर्युवेदोक्ताः अध्वर्युणा कर्तव्याः इति पूर्वः पक्षः । ३।८।२।३.

* कर्मविधीनाम् अध्ययनसिद्धविद्योपजीवित्वमेव, न तु स्वयं विद्याप्रयोजकत्वम् । सोम. ६।८।२.

* 'देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः । प्रकृत्यारम्भवैचित्र्यात् दृश्यन्तेऽपरमात्मनाम् ॥' वा. ३।१।७।१३ पृ. ७०२ । ननु देहानां पार्थिवत्वव्याप्तेः ऋग्वेदादीनां व्यापकपार्थिवत्वनिवृत्त्या व्याप्यदेहत्वनिवृत्त्यवगमात् नात्मभिः (वेदानां) अधिष्ठानं युक्तम् इत्याशङ्क्य आह— देहेति । पृथिवीपरमाण्वादीनां देहप्रकृतिभूतानां देहारम्भवैचित्र्यात् देहानां भिन्नाः प्रकाराः इत्युक्ते प्रकृत्यारम्भवैचित्र्यनिमित्तापेक्षायाम् अपरमात्मनां जीवानां देहविचित्रकर्मजन्यविचित्रफलोपभोगापादकापूर्वाख्यशक्तिवशानुगाः इत्युक्तम् । ततश्च शुद्धायाः पृथिव्याः क्व चित् देहप्रकृतित्वाभावात् बाहुल्यस्य च भूतान्तरेष्वपि भावात् देहत्वस्य पार्थिवत्वेन व्याप्तिरसिद्धा इति परिहाराशयः । सु. पृ. १००९.

* कर्मशब्दाः भवन्ति के चित्, न भावार्थाः यथा श्येनैकत्रिकादयः । के चिद् भावार्थाः, न कर्मशब्दाः यथा भवनं भावो भूतिः इति । भा. २।१।१।१ पृ. ३८६. * कर्मशब्दं लौकिकाः कार्येऽर्थे प्रयुञ्जते । बृहती. पृ. २७.

* कर्मशेषस्य उक्षवाक्ये प्रतिषेधविधानेन प्रतिसंवत्सरं भिन्नानाम् एव उक्ष्णामानयनम् । पञ्चशारदीये अहीने । भा. ११।२।१३।५४-५६, * कर्मशेषत्वपक्षे द्रव्यसंस्कारः प्रयोजनवान्, अनर्थकस्तु पुरुषधर्मे । ३।४। ८।२३. * कर्मशेषभूतार्थसंस्कारकत्वसंभवे कर्मोपकारित्वात् मन्त्राः प्रयोक्तव्याः, नान्यथा (द्वितीयसूक्तवाकाधिकरणन्यायस्य स्वरूपमिदम्) । सु. पृ. ११०८.

* कर्मसंयुक्ताः (वैदिककर्मसंयुक्ताः) जय-अभ्यातान-राष्ट्रभृत्-होमाः । न स्वतन्त्राः, न वा लौकिककर्मसंयुक्ताः । भा. ३।४।९।२५-२६.

* कर्मसंस्कारपक्षे हूयमानसंस्कारपक्षे वा तद्भेदात् भेदो भवेत् (सर्वपृष्ठेष्टौ स्विष्टकृदिडस्य षट्सु इन्द्रेषु) । वा. ३।५।४।१७ पृ. ९९६.

* कर्मसमवेतार्थप्रकाशनसामर्थ्यरूपं शब्दसामर्थ्यं लिङ्गम् । बाल. पृ. ९.

* कर्मसाद्गुण्यप्रयोजनत्वात् विधेः । भा. १०। ६।१२।३३.

* कर्मसिद्धिं विना प्रयोगपरिच्छेदासिद्धेः प्रयोगपरिच्छेदे साधिते कर्म साधितम् । सु. पृ. ८५६. * कर्मस्वरूपत्वेन द्रव्यदेवताक्रियम् अवधार्य यजुर्वेदे सकलमाम्नायते । वेदान्तरे तु क्रियामात्रं संकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते । वा. ३।३।४।११ पृ. ८१६.

* कर्माख्याते (ओदनः पच्यते) तण्डुलाभिन्नाश्रितत्वकर्मत्वसमानाधिकरणफलप्रयोजको व्यापारः इति बोधः । मणि. पृ. ४१४. * कर्माख्यातस्थले संख्याया अन्वयः 'संख्याया अपि तिबाद्युक्तायाः' इति बिन्दौ द्रष्टव्यः । के.



* कर्माङ्गानामियत्ता श्रुत्या निश्चीयते । लौकिककर्माङ्गानामियत्ता तु प्रत्यक्षेण निश्चीयते । वि. ८।१।३ वर्णकं २.

* कर्माङ्गस्मारका मन्त्राः । नियतोच्चारणं च नियमादृष्टार्थम् । के. १।२।४।३१-५३ (वि).

* कर्मादयः अर्थप्राप्ताः, ते न भवन्ति शब्दस्य अभिधेयभूताः । भा. ३।४।४।१३ पृ. ९२७, * कर्मादिसंनिपातः मन्त्रान्तेन आधारे दर्शपूर्णमासयोः । १२।३। १२।२८, * कर्मादिसंनिपातः मन्त्रान्तेन करणमन्त्रेषु । १२।३।१०।२५, * कर्मादिसंनिपातः मन्त्रान्तेन वसोर्धारायाम् । १२।३।११।२६-२७.

* कर्माधिकारः नास्ति अप्रतिसमाधेयाङ्गवैकल्यस्य । भा. ६।१।१०।४२, * कर्माधिकारः प्रतिसमाधेयाङ्गवैकल्यस्यास्ति । ६।१।९।४१.

* कर्मानुमेयत्वविचारः । 'यद्यत् फलभूतं तत्तत् उत्पत्तिमतोऽनन्तरम्' इति सामान्यतः तन्त्वादि संयोगादि च अवयविनि संबन्धदर्शने सति देशान्तरप्राप्तिं कादाचित्कीं फलभूताम् अवधार्य उत्पत्तिमत् प्राग्भावि किञ्चिदनुमीयते । तत्र च लोकस्य कर्मशब्दप्रयोगः । न च द्रव्यमेव उत्पत्तिमत् इति शक्यावगमम् । तस्य प्रत्यभिज्ञया स्थायित्वेनावधृतत्वात् । न च दृष्टविरुद्धमनुमानम् अविरोधिनि संभवति इति युक्तम्, तस्मात् द्रव्यातिरेकि कर्म अनुमीयते । अत्रापरः परोत्कर्षव्यालोककलुषितान्तःकरणः कर्मणः प्रत्यक्षतामाकाङ्क्षते । तामाह । ननु नानुमेयं कर्म, किन्तु रूपिद्रव्यसमवेतचाक्षुषमेव, 'गच्छत्ययम्' इति प्रतीतेः इन्द्रियव्यापारायत्तत्वात् । तथा च तन्त्रान्तरे सूत्रम् 'संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि' (कणादसूत्रं ४।१।११) इति । अथ संयोगविभागानुमितक्रियाविषयोऽयं प्रत्यय इति । तदनुपपन्नम् । आकाशस्य अतीन्द्रियत्वात् तेन सह संयोगस्य वायुवनस्पतिसंयोगवत् अप्रत्यक्षत्वात् लिङ्गाभावात् पतत्सु पतत्रिषु 'पतति' इति बुद्धिर्न स्यात् । अथोच्यते, विहायसि विततैस्तरणिकिरणैः सह संयोगविभागौ प्रत्यक्षौ लिङ्गमिति, तन्न । सान्द्रतरान्धकारे निशीथे झटिति तडिति स्फुरन्त्यां चलतीति प्रतीतेः । अपि च संयोगविभागौ गम्ये गन्तरि च स्तः । ताभ्यां चेत् कर्म अनुमेयम्, गन्तरीव तद्बुद्धिः गम्येऽपि स्यात् । किञ्च कार्यविरोधि कर्म । ततश्च संयोगादुपरते कर्मणि वर्तमानावभासो न स्यात् । किञ्च न संयोगविभागौ कर्म अनुमापयितुमीशाते । तस्यापि कादाचित्कत्वेन हेत्वन्तरापेक्षत्वात्, तद्धेत्वमिमतादेव तयोरुपपत्तेः । तदेतत् बधिरदोषविलासमात्रम् । अनुमितक्रियानिमित्तः चलतीति प्रत्ययः । विद्युति तु मेघावयवसंयोगविभागलिङ्गानुमिता चलनक्रिया इति नानुपपत्तिः । न च गम्ये क्रियाऽनुमानम् । गन्तृसमवेतयैव क्रियया संयोगविभागयोरुपपत्तेः । न चेदं विपरीतमापादयितुं शक्यते गम्यक्रिययैव गन्तरि फलं प्रस्तुतम् इति उत्तरदेशसंयोगस्य गन्तरि क्रियाऽन्तरानुमाऽऽपत्तेः । देवदत्तगता तु क्रिया पूर्वप्रदेशेन विभागम् उत्तरदेशेन संयोगं चारभते इत्युपपन्नम् । न च 'चलति' इति वर्तमानावबोधः एकक्रियाक्षणाभिप्रायेण, क्षणस्य पौर्वापर्याभावात् । तस्मात् क्रियाक्षणानां संताननिमित्तः एव 'अयं चलति' इति वर्तमानताऽवसायः । तेन क्षणान्तरे नष्टेऽपि क्षणान्तरे अनागतेऽपि प्रारब्धापरिसमाप्तत्वात् एकफलावच्छिन्नस्य क्रियासंतानस्य वर्तमानता नानुपपन्ना । संभवति च फलोद्देशेन उत्तरक्षणपरामर्शात् एषा प्रतीतिः । तदुक्तम् 'यदा त्वाद्यपरिस्पन्दप्रभृत्या फललाभतः । क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥' इति (श्लोवा. स्फोटवादे ७९) । न च कर्महेतोरेव संयोगविभागादयः । तथाहि । आत्मशरीरसंयोगात् आत्माश्रितप्रयत्नानुगृहीतात् पादहस्तादिषु कर्म दृश्यते । तदुक्तम् 'आत्मशरीरसंयोगप्रयत्नाभ्यां हस्ते कर्म' इति (कणादसू. ५।१।१) । संयोगश्च संयोगिन्येव कार्यमारभते यथा अवयविनम् अवयवसंयोगः । संयोगविभागौ च न केवलमाश्रयसमवेतौ, अनाश्रयेऽपि देशे समवायात् । तेन आत्मसंयोगातिरिक्तम् अपरं कर्म अनुमीयते । न च तत्र अयं नियमो दृष्टः 'स्वाश्रयमेव फलमारभते' इति, तस्यापूर्वत्वात् । तेन अनुमेयत्वेऽपि न कश्चिद्दोषः । प्रत्यक्षं तु प्रतीतिविरुद्धम् ।

नहि संयोगविभागातिरिक्तं निपुणमपि निरूपयद्भिः अपरं वस्तु उपलभ्यते। तदुक्तम् 'नहि ते प्रत्यक्षाः' इति (भा. पृ. ७७ पं. ३)। **किमर्थं** तर्हि 'देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य आदित्येऽपि गतिस्मरणम्' इत्युक्तम्? (भा. पृ. ३७ पं १) देवदत्तेऽपि अनुमेयत्वात्। **उच्यते**। देवदत्ते तावत् आत्मसंयोगातिरेकिणि अनुमिते तत्सामान्यात् आदित्येऽपि गतिरेवानुमीयते। देवदत्ते देशान्तरप्राप्तेः तत्कारणत्वेन निश्चितत्वात्। एतदुक्तं भवति, सर्वत्र चेतने वा अचेतने वा गतिरेव देशान्तरे प्राप्तौ निमित्तमिति। ऋजु. पृ. ७६–७८.

* **कर्मानुवादेन** गुणविधिः इत्युद्दोषः। सु. पृ. ७६६.

* **कर्मान्तरम्** अवभृथः वरुणप्रघासेषु। भा. ११। २।१५।६३–६६. * कर्मान्तरम् अवेष्टिः 'यदि ब्राह्मणः' इत्यादिना विहिता राजसूयप्रकरणे। वि. २।३।२, * कर्मान्तरम् आग्नेयादिकाम्येष्टिः। २।३।१२. * कर्मान्तरं कौण्डपायिनामयनगतमग्निहोत्रं नित्याग्निहोत्रात् इत्यधिगतम्। (२।३।११)। भा. ७।३।१।१. * कर्मान्तरं तेजस्कामेष्टिः। (रुक्कामेष्टिः, आग्नेयेष्टिः।) वि. २।३। १२. * कर्मान्तरं पञ्चशरावो द्रव्यदेवतासंबन्धेन गम्यते। भा. ६।५।१।१. * कर्मान्तरं पशुफलकम् 'एतस्यैव रेवतीषु वारवन्तीयम्' इत्यादिना विधीयते अग्निष्टुति। वि. २।२।१२, * कर्मान्तरं प्रजाकामेष्टिः 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति। २।३।१२. * कर्मान्तरम् 'वायव्यं श्वेतमालभेत' इति विहितं वायव्यश्वेतपश्वालम्भनम्। भा. २।३।५।१२–१५, * कर्मान्तरम् 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति द्रव्यदेवतायुक्तत्वात्। २।३।५।१२–१५.

* कर्मान्तरं न 'अग्निं चिनुते' इत्यत्राग्निः। किन्तु चयनरूपसंस्कारस्य विधिः। वि. २।३।१०, * कर्मान्तरं न 'एतयाऽन्नाद्यकामं याजयेत्' इत्यत्रावेष्टिः, किन्तु फलसंबन्धविधिरनेन। २।३।१३, * कर्मान्तरं न ज्योतिष्टोमे ऐन्द्रवायवाग्रत्वादि, किन्तु सोमयागे गुणः। २।३।१, * कर्मान्तरं न 'दध्नेन्द्रियकामस्य' इति, किन्तु गुणमात्रं फलाय विधीयते। २।२।११. * कर्मान्तरं न दाक्षायणयज्ञः, किन्तु दर्शपूर्णमासयोरेव विकारः। आवृत्तिगुणविधानात्तु संज्ञाविशेषः। भा. २।३।४।५–११, * कर्मान्तरं न 'नैवारश्चरुर्भवति' 'चरुमुपदधाति' इति, किन्तु उपधानमात्रविधिः अग्निचयने। २।३।७।८, * कर्मान्तरं न पर्यग्निकरणान्तत्वं त्वाष्ट्रपत्नीवतस्य, किन्तु गुणः। २।३।८।१९. * कर्मान्तरं न 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिना विधीयते, किन्तु कालसंबन्धः। वि. २।३।१३, * कर्मान्तरं न 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति पुनरुक्तः आग्नेयः दार्शिकात् ऐन्द्राग्नात्। २।३।१४. * कर्मान्तरं न 'योंऽशुं गृह्णाति' इति अंशुः, किन्तु ज्योतिष्टोमे गुणविधिः। भा. २।३।९।२०, * कर्मान्तरं न 'योऽदाभ्यं गृहीत्वा' इति अदाभ्यः। किन्तु ज्योतिष्टोमे गुणविधिः। २।३।९।२०, * कर्मान्तरं न 'वत्समालभेत' इत्यनेन अग्निहोत्रदोहाधिकारे, किन्तु स्पर्शमात्रगुणविधिः। २।३।६।१६–१७. * कर्मान्तरं न संनिधिस्थत्वेऽपि अनुपादेयगुणयोगेऽपि। भाट्ट. २।३। १३. * कर्मान्तरं न 'समे यजेत' इत्यादिना विधीयते, किन्तु दर्शपूर्णमासाभ्यां देशविशेषसंबन्धो विधीयते। वि. २।३।१३. * कर्मान्तरं न साकंप्रस्थायीयः (प्रस्थाप्यः–पाठः) किन्तु दर्शपूर्णमासयोः फलाय गुणः। भा. २।३।४।५–११. * कर्मान्तरं न स्विष्टकृद्यागः, किन्तु संस्कारः प्रधानहविषाम्। वि. २।३।१३. * न च गुणफलसंबन्धपरे वाक्ये सति **कर्मान्तरम्**। वा. २।२।८।२२.

* **कर्मान्तरत्वम्**। भावनाऽन्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेणानुपनीयमाना न कथञ्चित् प्रत्यभिज्ञायते इत्युपपन्नं प्रयोजनान्यत्वम्। (कर्मान्तरत्वम्)। वा. २।३।१।२४ पृ. ६१६. * **कर्मान्तरत्वसाधकत्वं** नास्ति अनुपादेयगुणानां देश–काल–निमित्त–फल–संस्काराणां संनिवेः। वि. २।३।१३. * उत्पत्तिपरत्वं विना अनेकार्थविध्ययोगात् तदन्यथाऽनुपपत्त्या उत्पत्तिपर-



त्वावगतेः उत्पन्नोत्पत्त्ययोगात् **कर्मान्तरत्वसिद्धिः**। सु. पृ. ८७०.

* **कर्मान्तरविधाने** तु अनेकार्थत्वमदोषः (न वाक्यभेदः)। वा. २।३।१।२४ पृ. ६१४.

* **कर्माभीज्या** पार्वणहोमः न कालाभीज्या। (कालम् अभिलक्ष्य इज्या यागः कालाभीज्या। एवं कर्म अभिलक्ष्य इज्या कर्माभीज्या)। संकर्ष. २।२।३.

**क्क कर्मार्थे तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्**। ३।८।१४।२९ (भा. २८)॥

करणमन्त्रोक्तं फलं यजमानस्य, न ऋत्विजः इत्युक्तं पूर्वस्मिन्नधिकरणे। तदपवाद उच्यते अत्र। तुशब्दः पूर्वस्माद्वैलक्षण्यार्थः। यत् कर्मार्थे फलम्, यजमानकर्मसिद्ध्यर्थं यत् फलम्, तत् तु तेषाम् ऋत्विजां स्यात्। यद्यपि च तत् ऋत्विजां फलम्, तथापि तस्य फलस्य स्वामिनं प्रति अर्थवत्त्वादेव फलत्वम्, न स्वातन्त्र्येण। ऋत्विक्फलेनापि स्वामिन एव अर्थवत्ता फलवत्त्वं परंपरया भवति। यथा 'अग्नाविष्णू मा वामवक्रमिषम्, विजिहाथाम्, मा मा संताप्तम्' इत्यादिर्मन्त्रः आग्नार्थे वेदिमतिक्रम्य दक्षिणायां दिशि गमनकाले अध्वर्युणा पठ्यते। भो अग्नाविष्णू अहं वां युवां मा अवक्रमिषम्। मया युवयोः अतिक्रमो न कर्तव्यः। तदर्थं युवां विजिहाथां युवाभ्यां किंचिदपसरणं क्रियताम् मार्गो मे दीयताम् इति प्रार्थना। किञ्च मा मां प्रति युवां मा संताप्तं मम युष्मत्तेजसा यथा तापो न स्यात् तथा क्रियताम्। इति मन्त्रार्थः। अयमपि करणमन्त्र एव गमने। अत्र संतापाभावः फलमुक्तम्। इदं च फलं साक्षात् अध्वर्योरेव। अध्वर्योः संतापाभावे सिद्धे यजमानस्य निर्विघ्नं कर्म स्यात् इति परंपरया यजमानस्य फलसिद्धिरस्त्येव। तथापि साक्षात् फलम् अध्वर्योः इति विशेषः।

**व्यपदेशाच्च**। ३० (भा. २९)॥

इदं सूत्रं केषु चित् ग्रन्थेषु कुतूहले च पृथगधिकरणत्वेनैव स्वीकृतम्। भाष्यादौ तु पूर्वाधिकरणगुणसूत्रत्वमेवास्य स्वीकृतम्। अग्निष्टोमे दक्षिणस्य हविर्धानशकटस्य अक्षस्य पुरस्तात् चत्वार उपरवाः नाम गर्ताः प्रादेशमुखाः प्रादेशान्तरालाः अधस्तात् एकीभूताः, उपरिष्टात् पृथग्भूताः खन्यन्ते। तत्र हस्तौ प्रवेश्य धृत्वा अध्वर्युर्यजमानमाह 'किमत्र' इति। यजमान आह 'भद्रम्' इति। अध्वर्युराह 'तन्नौ सह' इति। अत्र 'नौ' इति द्विवचनेन अध्वर्युयजमानयोर्व्यपदेशः। अस्मात् व्यपदेशाज्ज्ञायते यजमानस्येव अध्वर्योरपि फलमिति। तस्मात् व्यपदेशात् ऋत्विजोऽपि फलं भवतीति। याजमानफलनियमस्य क्व चित् प्रमाणानुरोधात् अयमपवाद उक्तः। अधिकरणान्तरत्वपक्षेऽपि सूत्रार्थः स एव। के.

* **कर्मार्थाः** अप्येते (प्रोक्षणादयो धर्माः) सन्तः न आस्कन्दपालिकावत् (साक्षात्) कर्मणि संबध्यन्ते। किं तर्हि? बर्हिर्द्वारेण। (आस्कन्दः केदारस्थं सस्यम्। तस्य पालिका तु स्त्री सस्यपालनकर्मण्येव साक्षात् संबध्यते)। भा. १२।१।१९।४४.

* **कर्मार्थकरणमन्त्रोक्तं** फलमार्त्विज्यम्। वि. ३।८।१५.

* **कर्मार्थता** द्रव्यस्य स्वभावतः। भा. ६।१।१।१ पृ. १३४६.

**क्क कर्मार्थफलाधिकरणम्**। अतिक्रमाधिकरणम्। दर्शपूर्णमासादौ करणमन्त्रप्रकाश्यं कर्मोपयोगिफलम् ऋत्विग्गामि॥

**कर्मार्थे तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्**। ३।८।१४।२९॥

**भाष्यम्**— इदं समधिगतं करणेषु मन्त्रेषु स्वामिनः फलमाशासितव्यमिति। किमेष एवोत्सर्गः? नेत्याह। क्व चित् ऋत्विजामपि फलमाशासितव्यमिति, यत्र कर्मार्थं फलम्। यथा 'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तम्' इति। असंतप्तोऽध्वर्युः कर्म शक्नोति कर्तुम्। कर्मसिद्धिः यजमानस्योपकारिकेति ऋत्विक्फलमाशासितव्यमत्रेति।

**वा**— यत्तु असंतापादि फलं कर्मप्रयोगे एवोपयुज्यते, तत् यजमानेनापि तथेष्यते एवेति नात्मनेपदेन विरुध्यते।

**व्यपदेशाच्च**। ३०॥

**भाष्यम्**— यत्र च व्यपदेशो भवति तत्रार्त्विज्यम्। दक्षिणस्य हविर्धानस्य अधस्तात् चत्वार उपरवाः प्रादेश-

मुखाः प्रादेशान्तरालाः। तत्र हस्तौ प्रवेश्य अध्वर्युर्यजमानमाह 'किमत्र' इति। स आह 'भद्रम्' इति। 'तन्नौ सह' इत्यध्वर्युः प्रत्याह। इति व्यपदेशो भवति अध्वर्योर्यजमानस्य च। 'तन्नौ सह' इत्युभयोर्वचनम् अध्वर्युयजमानयोः। तस्मात् अध्वर्युफलम् आशासितव्यमत्रेति।

वा— 'व्यपदेशादितरेषाम्' (३।८।५।१४) इत्यत्र ब्राह्मणगतमुदाहृतम् इह तु प्रस्ताववशेन मन्त्रगतम्। तद्धि क्लेशेन कल्प्यमानं कदा चित् उभयोर्न शक्यते कल्पयितुम् इत्याशङ्का स्यात्। कल्पनाहेतुस्तु युगपत्प्रवृत्तेः अविशिष्टः, इति न किञ्चित् गौरवम्। अथ कस्मात् नोभावेव प्रयुञ्जाते, यदा एकेनापि प्रयुज्यमानः शक्नोत्येव उभयगामि फलं प्रकाशयितुं तदा सिद्धेऽर्थे न किञ्चिदुभयकर्तृकत्वेन प्रयोजनमस्ति इत्यध्वर्युनियमः।

शा–वि–भाट्टेषु मण्डन–शंकरयोश्च 'कर्मार्थे तु०' 'व्यपदेशाच्च' इति अधिकरणद्वयं स्वीकृतम्। भाष्ये तु सूत्रद्वयेनापि एकमेव। सोमेऽपि पूर्वन्यायात् यजमानगामित्वमिति प्रथमे, वैषम्यात् इति द्वितीये संगतिः उक्ता। के.।

वि— 'मा मा संताप्तमित्येतत् कस्मिन्, स्वामिनि पूर्ववत्।, आध्वर्यवं तु तत् तेन स्वामिकर्मोपयोगतः॥' १५. 'भद्रं तन्नौ सहेत्येतत् कस्मिन्, स्वामिनि युज्यते।, द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः॥' १६.

भाट्ट— यत्र तु 'मा मा संताप्तम्' इत्यादौ इतिकरणविनियुक्ते एव असंतापनादिरूपं फलम् ऋत्विग्गामित्वेऽपि क्रतुविरोधिसंतापनिवर्तकतया तदुपयोगि, तत्र 'यजमानस्य सा' इति षष्ठ्याः परंपरयाऽपि उपपत्तेः लिङ्गानुरोधात् ऋत्विग्गाम्येव। १४. एवं यत्रापि 'तन्नौ सह' इत्यादौ द्विवचनाद्यनुपपत्तिः, तत्रापि ऋत्विग्गामित्वम्। १५.

मण्डन— 'न स्वामिनोऽसंतपनं फलं स्यात्।' १५. 'द्वयोः फलं भद्रपदाभिधेयम्।' १६.

शंकर— 'असंतापाद्यार्त्विजं तु।' १७. 'व्यपदेशे च तद्भवेत्।' (व्यपदिष्टम् उभयगामि) १८.

* कर्माव्यवहिते फले अलब्धेऽपि कालान्तरे लप्स्यते इत्याह— 'उप्तमात्रे नहि व्रीहौ फलमुत्पद्यते क्व चित्। अथाङ्कुरोऽपि तस्य स्यात्, स्वर्गोऽप्यस्तीति गम्यताम्॥ स्थूलीभूतश्चिरेणैष भोग्यत्वं प्रतिपद्यते। सर्वस्योत्पद्यमानस्य क्रमः स्वाभाविकः स्थितः॥' श्लोवा. चित्राऽऽक्षेपपरिहारे ८–९.

## कर्मैके, तत्र दर्शनात्। १।१।६।६॥

पूर्वसूत्रात् शब्दस्य इति शब्दः प्रथमाऽन्तत्वेन विपरिणतः अनुषञ्जनीयः। क्रियते इति कर्म कार्यम् अनित्यम् इत्यर्थः। तथाच गकारादिः शब्दः अनित्यः इत्येके वदन्ति। कुतः? तत्र उच्चारणप्रयत्ने कृते सति दर्शनात्। अतः प्रयत्नानन्तर्यात् तेन क्रियते इति गम्यते। तस्मादनित्यः शब्दः इति पूर्वः पक्षः। शब्दः कार्यम्, अतः तत्संबन्धोऽपि अनित्यः इति के चिन्मन्यन्ते। तत्र दर्शनात् प्रयत्नोत्तरकाले दर्शनात् इति कु.।

**अस्थानात्। ७॥**

यदुक्तं पञ्चमे सूत्रे शब्दार्थयोः संबन्धो नित्यः इति तन्न युक्तम्। शब्दस्य अनित्यत्वात्। कथम् अनित्यत्वम्? तत्राह द्वितीयं हेतुम्। अस्थानात्। स्थानं स्थितिः स्थिरता। शब्दस्य मुहूर्तमपि स्थिरता नास्ति उत्पन्नप्रध्वंसी शब्दः। तस्मादनित्यः।

**करोतिशब्दात्। ८॥**

पूर्वपक्षी शब्दानित्यत्वे तृतीयं हेतुमाह। 'शब्दं कुरु, मा कार्षीः' इति व्यवहर्तारः करोतिशब्दं प्रयुञ्जते। तेन मन्यामहे क्रियमाणत्वात् अनित्यः शब्दः, कृञः उत्पत्त्यर्थकत्वात्। करोतिशब्दात् करोतिशब्दप्रयोगात् इत्यर्थः।

**सत्त्वान्तरे च यौगपद्यात्। ९॥**

शब्दानित्यत्वे चतुर्थं हेतुमाह पूर्वपक्षी। सत्त्वान्तरे प्राण्यन्तरे शब्दज्ञानस्य यौगपद्यात्। नानादेशस्थैर्वक्तृभिः उच्चारितः एक एव गवादिशब्दः युगपत् नानादेशेषु उपलभ्यते। न चेदं नित्यस्य एकस्य संभवति। तस्मादनित्यः शब्दः। चकारो हेतुसमुच्चये।



**प्रकृतिविकृत्योश्च। १०॥**

पूर्वपक्षी शब्दस्य अनित्यत्वे पञ्चमं हेतुमाह। 'दध्यत्र' इति प्रकृतिविकृत्योः दर्शनात् अनित्यः शब्दः। इकारः प्रकृतिः, यकारो विकृतिः इति उपदिशन्ति पाणिन्यादयः। यद्विक्रियते तदनित्यम्। चकारो हेतुसमुच्चये।

**वृद्धिश्च कर्तृभूम्नाऽस्य। ११॥**

शब्दानित्यत्वे षष्ठं हेतुमाह। चकारो हेतुसमुच्चये। अस्य शब्दस्य कर्तृभूम्ना उच्चारयितृबाहुल्येन वृद्धिः महत्त्वं दृश्यते। अतः हेतुवृद्ध्यनुसारित्वात् शब्दस्य कृतकत्वादनित्यत्वम्।

**समं तु तत्र दर्शनम्। १२॥**

शब्दानित्यत्वपूर्वपक्षोदाहृतस्य प्रथमस्य हेतोर्निराकरणार्थं सिद्धान्तसूत्रम्। तुशब्देन पूर्वपक्षस्य व्यावृत्तिः। तत्र प्रयत्नोत्तरकाले दर्शनं शब्दस्य अनित्यत्वे व्यङ्ग्यत्वे च समम्। ततश्च प्रयत्नोत्तरत्वदर्शनेन न अनित्यत्वं सिध्यति।

**सतः परमदर्शनम्, विषयानागमात्। १३॥**

शब्दानित्यत्वसाधकस्य पूर्वपक्षोक्तस्य द्वितीयस्य हेतोर्निरासार्थं सिद्धान्तसूत्रम्। परम् इत्यव्ययं युक्तमित्यर्थे। विषयं शब्दं प्रति अभिव्यञ्जकस्य श्रोत्रादेः अनागमात् आगमाभावात् संबन्धाभावात् सतः विद्यमानस्यैव नित्यस्य शब्दस्य अदर्शनं अश्रवणं युक्तम्। प्रध्वंसित्वदर्शनं तु भ्रान्तम्। न तेन अनित्यत्वं सिध्यति।

**प्रयोगस्य परम्। १४॥**

शब्दानित्यत्वसाधकस्य पूर्वपक्षोक्तस्य तृतीयस्य हेतोर्निरासार्थं सिद्धान्तसूत्रम्। परम् अन्यत् कारणं यदुक्तं करोतिशब्दात् इति, तत् न शब्दस्य, किन्तु शब्दप्रयोगस्य। 'शब्दं कुरु' शब्दप्रयोगं कुरु इत्यर्थः। 'शब्दं मा कार्षीः' शब्दप्रयोगं मा कार्षीः इत्यर्थः। तथा च करोतिशब्दोऽपि प्रयोगविषयकत्वात् न शब्दस्य अनित्यत्वं साधयति।

**आदित्यवद् यौगपद्यम्। १५॥**

'सत्त्वान्तरे च यौगपद्यात्' इति पूर्वपक्षसूत्रोक्तहेतोर्निरासार्थम् इदं सिद्धान्तसूत्रम्। आदित्य एकोऽपि सन् यथा नानादेशेषु नानाजनैर्युगपदुपलभ्यते, तथा नित्यस्य एकस्यापि शब्दस्य नानाजनेषु यौगपद्यं स्यादुपलम्भतः। तस्मात् नानादेशेषु यौगपद्येन उपलम्भेऽपि न शब्दस्य अनित्यत्वं भेदो वा सिध्यति।

**शब्दान्तरमविकारः। १६॥**

प्रकृतिविकृत्योश्च इति दशमसूत्रोक्तं शब्दानित्यत्वहेतुं निराकरोति सिद्धान्ती। 'दध्यत्र' इत्यादौ न प्रकृतिविकारभावः कश्चित्। किन्तु शब्दान्तरम् इकारात् यकारः। किञ्च 'दधि अत्र' इत्यस्मात् 'दध्यत्र' इति शब्दान्तरमेव। न इकारस्य यकारो विकारः। अत एव 'इको यणचि' (पा० ६।१।७७) इति इकः उच्चारणप्रसङ्गे यण् उच्चार्यः अचि परे इत्येव व्याचक्षते वैयाकरणाः। तस्मात् शब्दो न अनित्यः।

**नादवृद्धिः परा। १७॥**

'वृद्धिश्च कर्तृभूम्नाऽस्य' इति सूत्रोक्तं शब्दानित्यत्वहेतुं निराकरोति सिद्धान्ती। परा परस्तादुक्ता या शब्दस्य वृद्धिः सा न शब्दवृद्धिः किन्तु नादवृद्धिः, नादस्य ध्वनेः वृद्धिः। बहुभिर्नैरन्तर्येण उच्चार्यमाणैः ध्वनिभिः शब्दो महान् इति भ्रमः। अथवा परा केवला नादस्यैव वृद्धिः, न शब्दस्य वृद्धिः। नादवृद्धिः शब्दे आरोपिता न शब्दविकारत्वेन अनित्यत्वं साधयितुं शक्नोति।

**नित्यस्तु स्याद् दर्शनस्य परार्थत्वात्। १८॥**

तुशब्देन शब्दानित्यत्वपूर्वपक्षं परिहरन् नित्यत्वं सिद्धान्तयति। शब्दो नित्यः स्यात् गकारादिः। दर्शनस्य उच्चारणस्य परार्थत्वात्, उच्चारणं परस्य अर्थं प्रत्याययितुम्। नहि उच्चारितस्य शब्दस्य नाशे अन्यस्मात् अर्थप्रतीतिः संभवति। परार्थत्वात् शब्दो न नश्यति, नित्यः शब्दः इति ज्ञायते।

**सर्वत्र यौगपद्यात्। १९॥**

शब्दनित्यत्वसिद्धान्ते द्वितीयो हेतुरत्र उक्तः। सर्वत्र सर्वगोव्यक्तिषु गोत्वप्रत्ययस्य यौगपद्यात् युगपद्भावात् युगपज्जननात्। गोत्वाकृतेश्च नित्यत्वात् नित्यः शब्दः।

**संख्याऽभावात्। २०॥**

शब्दनित्यत्वसिद्धान्ते तृतीयो हेतुरत्र उक्तः। अष्टकृत्वः गोशब्द उच्चरितः इति वदन्ति, न तु अष्टौ

गोशब्दाः इति । तथा च शब्दे संख्याया अभावात् शब्दभेदो नास्ति । तच्च नित्यत्वं विना न घटते इति नित्यः शब्दः ।

**अनपेक्षत्वात् । २१ ॥**

पटादिषु तन्तुवियोगात् तन्तुविनाशाद्वा कारणात् अनित्यत्वं ज्ञायते । शब्दे तु तादृशापेक्षितविनाशकारणाभावात् नित्यत्वम् अवगम्यते । नहि गकारादिः शब्दः सावयवः येन अवयवनाशादिना विनष्टः स्यात् । तस्मात् विनाशकारणानपेक्षत्वात् नित्यः शब्दः ।

**प्रख्याऽभावाच्च योगस्य । २२ ॥**

शब्दनित्यत्वसिद्धान्ते पञ्चमो हेतुः प्रतिपाद्यते । प्रकृष्टा ख्या ख्यातिः प्रख्या प्रत्यक्षात्मिका प्रत्यभिज्ञा । योगस्य वायवीयावयवसंयोगस्य इत्यर्थः । तथाच शब्दस्य वायुकारणकत्वपक्षे कारणीभूतवायवीयावयवसंयोगस्य प्रात्यक्षिकप्रत्यभिज्ञाया अभावात् न वायुकारणकत्वं शब्दस्य इति न अनित्यत्वम् ।

**वैद्यनाथी** । योग्यस्य इति वृत्तौ पाठः । योग्यस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयस्य शब्दस्य वायुविकारत्वे प्रख्याया अभावात् श्रोत्रेन्द्रियजन्यज्ञानविषयत्वस्य अभावप्रसङ्गात् न तस्य वायवीयत्वं तस्मात् नित्यत्वम् इत्यर्थः । **कुतूहले** तु, 'प्रेक्षाभावाच्च संयोगस्य' इति पाठः । शब्दे वाय्ववयवसंयोगस्य अनुपलब्धेः न वायुकारणकः शब्दः । प्रख्याभावाच्च इति पाठे योग्यस्येति जातावेकवचनम् । योग्यानां वाय्ववयवानां प्रख्यायाः उपलब्धेः अभावात् इत्यर्थः । चकारः अनुक्तसमुच्चयार्थः शङ्कापरिहारं समुच्चिनोति । ननु वायुर्न प्रत्यक्षः किन्तु तदीय एव स्पर्शः स्पार्शनप्रत्यक्षः । अतः शब्दे वाय्ववयवानुपलब्धिः इति चेन्न । 'वायुं स्पृशामि' इति प्रतीत्या तस्यापि प्रत्यक्षत्वात् स्पर्शमात्रोपलम्भापत्तिसंभवाच्च । **न च शब्दे अनुद्भूतस्पर्शकल्पनान्न दोष इति वाच्यम्** । तथा कल्पने मानाभावात् इति ।

**लिङ्गदर्शनाच्च । २३ ॥**

शब्दनित्यत्वसिद्धान्ते हेत्वन्तरप्रदर्शनपरम् अन्तिमं सूत्रम् । लिङ्गं च एवं भवति 'वाचा विरूपनित्यया' इति । अन्यपरं हीदं वाक्यं वाचो नित्यताम् अनुवदति । तस्मात् नित्यः शब्दः । भा. । 'विरूपा च सा नित्या चेति विग्रहः । रूपयति इति रूपं कर्ता । विगतं रूपं यस्याः इति कर्तृरहिता इत्यर्थः । अत एव नित्या वाक् । ' **वैद्यनाथी** । के.

* 'कर्मैके तत्र दर्शनात्' इत्यधिकरणे (१।१।६।६–२३) वेदप्रामाण्यसिद्ध्यर्थं शब्दनित्यत्वम् आक्षिप्य समाधीयते । तदिदं अष्टादशसूत्रकं शब्दाधिकरणं नाम । बाल. पृ. ७.

* **कर्मैकत्वविज्ञानं** 'सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः । एककर्मत्वविज्ञानं न शाखास्वपगच्छति ॥' वा. २।४।२।९ पृ. ६३५.

‡ **कर्षतिन्यायः** । 'षड्भिर्हलैः कर्षति' इत्यत्र षड्हलोपादानसामर्थ्यात् कर्षतेः प्रयोजककर्तृत्वं यथा, तथा 'योऽश्वं प्रतिगृह्णाति' इत्यस्यापि प्रयोगस्य निर्वाहः । **पराक्रमः**. ६।१.

* **कलञ्जन्यायः** । कलञ्जभक्षणप्रतिषेधन्यायः । **के.**

‡ **कलञ्जभक्षणप्रतिषेधन्यायः** । कलञ्जन्यायः । प्रतिषेधातिक्रमे पुरुषस्य प्रत्यवायः ॥

**प्रतिषेधेष्वकर्मत्वात् क्रिया स्यात् प्रतिषिद्धानां विभक्तत्वादकर्मणाम् । ६।२।५।१९ ॥**

**भाष्यम्**— इदं हि उपदिशन्ति । 'न कलञ्जं भक्षयितव्यम्, न लशुनम्, न गृञ्जनं च' इति । तत्र संदेहः किमेवंजातीयकं फलकामेन न भक्षयितव्यम्, निष्कामेन आद्यम्, अथवा नियोगतो वर्जयितव्यमेवेति । किं प्राप्तम् ? फलार्थिना न भक्षयितव्यम् । अनर्थिनः अनियम इति । कुतः ? नियमो हि अयमुच्यते, इदं न भक्षयितव्यमिति । एवमुक्ते द्वयमापतति, यदि वा अभक्षणं कर्तव्यमिति, यदि वा भक्षणं न कर्तव्यमिति । यदि नञ्विशिष्टं भक्षणं कर्तव्यमित्यभ्युपगम्यते, ततः अभक्षणं श्रुत्या तव्यो विदधाति । नञ् भक्षयतिविशेषणम् । तद्व्यापाराच्च कर्तव्यतया नञ् न संबध्यते । अथ नञर्थः कर्तव्यः ततो वाक्येन विधानम् । भक्षयतिश्च नञ्विशेषणम् । श्रुतिश्च वाक्याद्बलीयसी । तस्मादभक्षणं कर्तव्यमिति गम्यते । अभक्षणं च भक्षणाभावः । न तस्य कर्तव्यता अस्ति । तस्मात् यस्तत्र मानसो व्यापारः, सः



इहोपदिश्यते, येनोपायेन नञ्विशिष्टं भक्षणं भवति । पूर्वे नञ्भक्षयत्योः संबन्धः, ततो विधानम् । यथा 'नोद्यन्तमादित्यमीक्षेत' इत्येवमादिषु प्रजापतिव्रतेषु कुर्वतः फलम् । अकुर्वतो न फलं न दोषः, एवमिहापि । विभक्तत्वादकर्मणाम् । नात्र कर्म प्रतिषिध्यते, अकर्ममात्रमुपदिश्यते । अन्यद्धि कर्म भक्षणं प्रतिषिध्यमानम्, अन्यदकर्म मानसः संकल्प इति ।

**टुप्**— ( पूर्वपक्षमाह– 'न कलञ्जं भक्षयितव्यम्' इति ) त्वन्मतेन प्रतिषेधोऽयम्, मम तु पर्युदास एव । कथम् ? 'न कलञ्जं भक्षयितव्यम्' इति उपश्लेषलक्षणया ( पद– )श्रुत्या भक्षयतेः कर्तव्यतां तव्यो विदधाति । नकारश्च ( कलञ्जभक्षयतिभ्यां– ) व्यवहितत्वात् न कर्तव्यतावचनेन ( प्रत्ययेन ) संबध्यते । ( चशब्दः तुशब्दार्थे नकारस्तु इति ) तस्मात् ( धात्वर्थाविरुद्धात् कर्तव्यतावचनात् ) प्रच्युतः ( नञ् ) अन्येन ( शब्देन ) संबध्यमानः पर्युदासः ( एव ) भवति । ( केनास्य तर्हि संबन्धः इति विवेक्तुमाह– ) तत्र नायं कलञ्जेन ( अव्यवहितेनापि ) संबध्यते । किं कारणम् ? असमासत्वात् [ असमस्तत्वात् इति मुद्रिते पाठः ] सुबन्तयोः समासे सति पर्युदासो भवति, न असमासे । अतः ( असमस्तत्वात् ) तस्मात् ( कलञ्जशब्दात् ) पर्युदस्तः ( प्रच्युतः भक्षयति इति– ) धातुना संबध्यते । तत्र सुबन्तत्वाभावात् समासो नास्ति ( न प्रसज्यते इत्यर्थः ) तस्मात् ( नञो भक्षयतिना संबन्धात्, तद्विशिष्टस्य च भक्षयतेः विधिना संबन्धात् ) अभक्षणं कलञ्जादिविशिष्टं ( विश्वजिन्न्यायेन स्वर्ग– ) फलार्थिना कर्तव्यम् । ( हेत्वन्तरमाह– ) अथवा । सर्वपदानि भावनोपनिपातीनि । तत्र यदि अयम् ( नञ् ) स्वार्थवृत्तः ( सन् भावनया ) संबध्येत, ततो भावनावैपरीत्येन ( विरोधेन ) वर्तेत ( तद्विरुद्धनिवृत्तिप्रतिपादनात् ) । तस्मात् ( स्वार्थवृत्तौ ) भावनाविरोधात् स्वार्थं हित्वा लक्षणावृत्तः संबध्यते । न च केवलः ( नञ् ) लक्षणां प्रतिपत्तुं शक्नोति । ततः ( अर्थविशेषलक्षणासिद्ध्यर्थम् ) धातुना संबध्यते तेनैव न्यायेन ( 'समासाभावात् न कलञ्जसंबन्धः' इति उक्तेन न्यायेनैव ) । अर्थभावनाविरोधात् तस्याः प्रच्युतः ( नञ् ) अनन्तरेण धातुना संबध्यते । तस्मात् अभक्षणं नाम मानसो व्यापारः ( संकल्पाख्यः फलार्थिना ) अनुष्ठेयः । क्रियां कुर्वन् प्रथमं तावत् संकल्पं करोति, तदुत्तरकालं तस्यां प्रवर्तते । स्पर्शनादिक्रिया ( तु ) विप्रकृष्टा, मानसस्तु संकल्पः ( सर्वक्रियासाधारणत्वात् ) अनन्तरः ( संनिकृष्टः ), अतः तमेव ( संकल्पं पर्युदासवृत्तिः नञ् ) आतिष्ठति । ( प्रकारान्तरमाह– ) प्रतिषेधेऽपि प्रथमं संकल्पयति, ततो निवर्तते । एवं चोदितत्वात् नान्तरीयकः संकल्पः क्रियाचोदनायाम् ( वर्जनचोदनायाम् ) अविनाभूतः । ( अस्मिन् पक्षे नञ्भक्षयतिभ्यां भक्षणाभावः प्रतिपादितः स्वयं विधिसंबन्धयोग्यं स्वमूलभूतं संकल्पं लक्षयति । पूर्वस्मिन् पक्षे तु भक्षयतिनैव श्रुत्यर्थाभ्यां भक्षणसंकल्पे सामान्यरूपे प्रतिपादिते नञा श्रुतिप्रतिपादितभक्षणव्युदासेन स एव संकल्पो न लक्षयेत् इत्येवं विधिविशेषरूपेण प्रतिपाद्यते इति विवेकः । पुनरपि प्रथमपक्षमेव उपसंक्रम्याह– ) यथा अब्राह्मणमानय इति नञ्शब्देन ब्राह्मणजातेरेव अभावः क्रियते, पुरुषजातेः ( आर्थिक्याः ) नाभाव उच्यते । तस्मात् यत्र पुरुषत्वं विद्यते ( क्षत्रियादौ ) ब्राह्मणत्वं पर्युदस्तम्, स आनीयते, एवमिहापि नकारेण भक्षणं पर्युदस्तम् ( श्रौतम् ) । यस्तु मानसो व्यापारः ( संकल्पाख्यः सर्वक्रियासु ) अनुस्यूतः, सः अन्तरङ्गत्वात् ( अपर्युदस्तत्वाच्च ) कर्तव्यतावचनेन संबध्यते । यथा नोद्यन्तमादित्यम् ईक्षेत इति ( अत्र संकल्पविधिः, एवमत्रापि ) । इयांस्तु विशेषः, तत्र ( प्रजापतिव्रतेषु ) शतृप्रत्ययात् ( हेतोः ) नोद्यन्तमित्यनेन निमित्तमभिधीयते । अतः तत्र ( आगते आदित्योदये ) नित्यम् ( संकल्पस्य ) अनुष्ठानम् ।

**शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते, तयोरसमवायित्वात् तादर्थ्ये विध्यतिक्रमः । २१ ॥**

**भाष्यम्**— उपवर्णनापरिहारस्तावत् उच्यते । युक्तं यत् प्रजापतिव्रतेषु शास्त्राणाम् अर्थवत्त्वेन पुरुषार्थो विधीयते । तत्र नियमः कर्तव्यतया उपदिश्यते । यश्च कर्तव्यः, स कल्याणोदयः । यो न कर्तव्यः, स पापोदयः ।

कथं पुनः प्रजापतिव्रतेषु नियमः कर्तव्यतया चोद्यते इति ? उच्यते । 'तस्य व्रतम्' इति प्रकृत्य प्रजापतिव्रतानि समाम्नातानि । व्रतम् इति च मानसं कर्म उच्यते 'इदं न करिष्यामि' इति यः संकल्पः । कतमत् तत् व्रतम् ? 'नोद्यन्तमादित्यमीक्षेत' इति, यथा तदीक्षणं न भवति, तथा मानसो व्यापारः कर्तव्यः, तस्य च पालनम् । तत्र तस्मात् (संकल्पात्) पुरुषार्थोऽस्ति इत्यवगन्तव्यम् । तत्र च एतान्येव प्रकृत्य उच्यते 'एतावता हैनसा अयुक्तो भवति' इति, एतावता कृतेन अयुक्तः एनसा (पापेन) भवति इति । अथ इह तयोः असमवायित्वम् । इह क्रिया प्रतिषिध्यते, न अक्रिया उपदिश्यते । नहि कलञ्जं भक्षयन् प्रतिषेधविधिं नातिक्रामति । इह पुनः आदित्यं पश्यन् नातिक्रामति विधिम् । नहि तस्य दर्शनं प्रतिषिद्धम् । नियमः तत्रोपदिष्टः । यः तं नियमं करोति, स फलेन संबध्यते । इह तु प्रतिषिध्यते कलञ्जादि । कथमवगम्यते ? नात्र 'तस्य व्रतम्' इति प्रकृत्य वचनमस्ति । न च 'न भक्षयितव्यम्' इत्यस्य मानसो व्यापारः अर्थः । भक्षयितव्यम् इति च भक्षणं कर्तव्यं शब्देन उच्यते, नेति तत् प्रतिषिध्यते श्रुत्यैव । एवं प्रसिद्धोऽर्थः अनुगृहीतो भवति, इतरथा लक्षणा स्यात् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा । तस्मात् इह प्रतिषेध उच्यते । आह, प्रतिषिद्धं नाम, दोषो न श्रूयते । तस्मात् प्रतिषिद्धमपि अनुष्ठातव्यम् इति । कल्पयिष्यते इति चेत्, न, प्रमाणाभावात् । अर्थापत्तिः प्रमाणम्, उपदेशवैयर्थ्यप्रसङ्गात् इति यदि उच्येत, नैतदेवम् । व्यर्थोऽपि उपदेशः अज्ञानात् संभवति । न कल्प्यो दोष इति । उच्यते । सत्यं न कल्पनीयः, किन्तु क्लृप्त एव । कथम् ? अनन्तरमेव एनं शिष्टाः वर्जयेयुः 'पतितः कर्मफलेभ्यः' इति वदन्तः । महांश्चैष दोषः, यत् शिष्टाः वर्जयन्ति । तस्मात् नियोगतः कलञ्जादि न भक्षयितव्यमिति । यथा 'न सर्पाय अङ्गुलिं दद्यात्' । तत्र दोषदर्शनात् नियोगतः न सर्पाय अङ्गुलिर्दीयते, कण्टको वा न पादेन अधिष्ठीयते, एवमिदमपीति ।

**टुप्**— 'तस्य व्रतम्' इति उपक्रम्य 'नोद्यन्तमादित्यमीक्षेत' इति श्रूयते । व्रतमिति च कर्मनाम । तद्यदि प्रतिषिध्यते, पूर्वमुत्तरेण न संबध्यते । तस्मात्तत्र विरोधात् नञ् प्रच्युतः प्रत्ययानन्तरेण धातुना संबध्यते । इह तु नास्ति व्रतस्थानीयं पूर्ववाक्यम् । अतः श्रुत्या कर्तव्यतावचनेन नञ् संबध्यते । धातुसंबन्धे ह्युभे अपि पदे लक्षणावृत्ते स्याताम्, असमासे च समासः अध्यारोप्य प्रदर्शनीय इत्येते दोषाः । तथा, नञ्प्रत्ययसंबन्धे सर्वाणि स्वार्थवृत्तानि । शिष्टविगर्हणा चोपायत्वेन वर्णयितव्या । चोदनायाम्, फलाश्रुतेरिति द्वे सूत्रे अस्मिन्नूहेन नेये । (विश्वजिदधिकरणस्थे द्वे अपि पूर्वोत्तरपक्षसूत्रे (४।३।५।१०–११) विश्वजिदादिषु अश्रुतफलकेष्वपि विधिसामर्थ्यादेव समीहितं फलं कल्पयितव्यम् इत्येवं प्रतिपादनपरे कलञ्जभक्षणादिष्वपि अश्रुतफलकेषु निषेधस्य निवर्तकत्वसिद्ध्यनुरोधेनैव प्रत्यवायरूपं फलं कल्प्यते इत्यस्मिन् अर्थेऽपि ऊहेन योजनीये इत्यर्थः)।

**शा**— **'भक्षणव्यवधानेन नञ्विध्योर्नास्ति संगतिः । भक्षणं तु नञा युक्तमव्यवायाद् विधीयते ॥ श्रुत्या च विधिसंबन्धो भक्षणस्य नञः पुनः । पदान्तरत्वाद् वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥ तस्माद् भक्षणमेवेह नञा युक्तं विधीयते ॥'** अत्रोच्यते **'नञ्भक्षयत्योरेवं तु स्वार्थहानिः प्रसज्यते । संकल्पलक्षणात् तत्र श्रुतेरत्यन्तबाधनम् ॥'** मत्पक्षे पुनः प्रत्यासत्तिमात्रबाधनम् । न वा तदपि, किं तर्हि, भक्षयेत् इति पदं परिपूर्णं नञा संबध्यते 'भक्षयेन्न' इति । भक्षयेत् इति च भक्षणभावनायां प्रवर्तना गम्यते, नञा संबद्धेन विधिना तद्विपरीतनिवर्तनाप्रतीतिः । निवर्तना च निवृत्तिफलो व्यापारः । न च प्रेक्षापूर्वकारी पुरुषो रागतः प्रवर्तमानः असति प्रत्यवायफलत्वे निवर्तयितुं शक्यते, इति श्रुतनिवर्तनाऽन्यथाऽनुपपत्त्या विषयीभूतभक्षणव्यापारस्य प्रत्यवायफलत्वं कल्प्यते । अतः तत्परिहाराय सर्वेषामेवंजातीयकं वर्ज्यम् । (**सोम**—**ननु** यदि क्रियायां निवर्तनानिषेधः, तर्हि विधिनिषेधयोः एकविषयत्वात् भेदो न स्यात् इति **चेत्**, सत्यपि विषयैक्ये परस्परप्रत्यनीकतया



स्वरूपत एव भेदोपपत्तेः । उक्तं च **न्यायसुधायाम्** 'पञ्चधाऽत्यन्तभिन्नत्वाद् भेदो विधिनिषेधयोः । विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः ॥, प्रेरितोऽस्मीति पूर्वे धीर्वारितोऽस्मीति चापरे ।, विषयस्येष्टहेतुत्वं विधिना च प्रमीयते ॥ निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ।, विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम् । रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥, नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् । लिङाद्यनुगृहीतस्तु नञ् निषेधस्य बोधकः ॥' इति । एतदेवाभिप्रेत्य **बृहट्टीकायामुक्तम्** 'अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः । दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥' इति ।

**प्राभाकरास्तु** सर्वत्र कार्यवाक्यार्थवादिनः निषेधस्य प्रत्यवायफलकत्वं न प्रमाणवत्, तेन विनाऽपि विषयनियोज्यान्वितनियोगस्य वाक्यार्थस्य परिपूर्णत्वेन तत्कल्पकाभावात् । तथाहि निषेधवाक्यस्थलिङा कार्यमभिधीयते, तस्य च नञर्थो विषयः । **न च** विषयत्वं कृत्यवच्छेदद्वारा कार्यताऽवच्छेदकम् । तच्च कृतिविषयस्यैव संभवति । नञश्च औदासीन्यात्मा न कृतिसाध्यः, इति न तस्य विषयत्वम् इति **वाच्यम्** । औदासीन्यस्यापि प्रागभावरूपस्य केवलात्मस्वरूपावस्थाऽपरपर्यायस्य प्रचलितावस्थपुरुषेण अनुपाल्यतया कृतिविषयत्वोपपत्तेः । प्रचलितत्वं नाम निषेध्यकार्यताबोधः तदुपायचिकीर्षा वा । तदवस्थस्य पुरुषस्य भक्षणप्रागभावपरिपालनम् उत्तरकालसंबन्धित्वलक्षणम् उक्तचिकीर्षाविघातकानुपाल्यत्वबुद्ध्युत्पादनं विना न संभवति । ततश्च अनुपाल्यत्वबुद्ध्युत्पादनेन उक्तचिकीर्षाद्यपनयनद्वारा अनुपाल्यस्य प्रागभावस्य कथञ्चित् कृतिसाध्यत्वात् युक्तं विषयत्वम् । भक्षणप्रवृत्तश्च भक्षणाभावविषये कार्ये नियोज्यः । तस्मात् विषयस्य नियोगस्य नियोज्यस्य च प्रत्यवायपरिहारानपेक्षयैव लब्धात्मकत्वेन अनुपपत्त्यभावात् न प्रत्यवायः कल्प्यः इत्याहुः । तन्मतमनूद्य निरस्यति–ये तु इति ) **ये तु** नञर्थविषयस्य नियोगस्य, भक्षणप्रवृत्तस्य नियोज्यस्य च लब्धत्वात् न प्रत्यवायकल्पना प्रमाणवती इत्याहुः, ते श्रुतार्थापत्तेः प्रमाणत्वोपपादनात् निरस्ताः । किञ्च भक्षणं नञर्थविशेषणत्वेनोपक्षीणं न नियोज्यविशेषणम्, आख्यातेन कर्तुरनभिधानात् । उभयविशेषणत्वे च आवृत्तिप्रसङ्गात् । **ननु न** ब्रूमः श्रुत्या नियोज्यविशेषणत्वम् । नञर्थविशेषणस्यैव अर्थात् नियोज्यविशेषणतामाचक्ष्महे । भक्षणप्रवृत्त एव हि तदभावे नियोक्तुं शक्यते, नान्यः । **सत्यमेवम्**, तथापि न नियोज्यविशेषणत्वे भक्षणस्य प्रमाणमस्ति । यदि हि एतावतैव नियोज्यविशेषणत्वमाश्रीयते, ततः सर्वत्र जीवनं शक्तिश्च नियोज्यविशेषणं स्याताम् । तत्र **यत्** किञ्चित् केन चित् उच्यते 'प्रवृत्तिलाघवाय फलकल्पनम्' इति, **तत्** निषेधाधिकारेष्वपि समानम् । इत्यास्तां तावत् ।

**सोम**— यथा गृहादिफलेच्छावतामेव प्रक्रान्तं समापनीयम्, एवम् 'न कलञ्जं भक्षयेत्' इत्यादिकमपि फलेच्छावतामेव कर्तव्यम् इति प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु**– प्रतिषेधत्वेन सिद्धान्त्यभिमतेषु 'न कलञ्जं भक्षयेत्' इत्यादिषु अकर्मत्वात् भक्षणकर्मव्यतिरिक्तसंकल्पविधित्वात् प्रतिषिद्धानां भक्षणादीनां निष्कामपुरुषैः क्रियाऽपि स्यात् अकर्मणां संकल्पानां विभक्तत्वात् कर्मनिषेधान्यत्वात्, अत्र कर्मनिषेधाभावात् इति ।

**वि**— 'पर्युदासो निषेधो वा नाद्याद् गृञ्जनमित्यसौ, नञ्धात्वोरन्वयादाद्यः कल्प्यः संकल्पतः फलम् ॥, पदान्वयात्तु नञ्विध्योर्निषेधोऽनर्थहानये । संकल्पे लक्षणाप्राप्तिर्नैव काम्यविधिस्तथा ॥'

**भाट्ट**— 'न कलञ्जं भक्षयेत्' इत्यादिषु किं स्वर्गकामस्याधिकारः, उत प्रवृत्तमात्रस्येति चिन्तायाम्, नञो निपातत्वेन क्रियाऽन्वयनैयत्याभावात् क्रियाऽन्वयाङ्गीकारे च प्रधानभूतायास्तस्या एवान्यथात्वापत्तेः, आनर्थक्यतदङ्गन्यायेन (३।१।९) क्रियाविशेषणेष्वन्वयावगमात्, तत्रापि कलञ्जान्वये सुबन्तसंबन्धेन नञ्समासापत्तेः, कलञ्जातिरिक्तभक्षणस्य च रागप्राप्तत्वेनाविधेयत्वात् पारिशेष्येण धातुसंबन्धावगतेः भक्षणाभावस्य च कर्तुमशक्यत्वेन प्रजापतिव्रतवदेव लक्षितस्य भक्षणाभावसंकल्पस्य विश्वजिन्न्यायेन स्वर्गार्थत्वेन विधानम् । **इति प्राप्ते**, 'तस्य व्रतम्' इत्युपक्रमानुसारात् प्रजा-

पतिव्रतेषु लक्षणाऽङ्गीकारेऽपि प्रकृते लक्षणायां प्रमाणाभावात् प्रधानान्वयस्याभ्यर्हितत्वेन नञः अभाववाचकस्य प्रतियोगितासंसर्गेण भावनायामेव स्वकारकविशिष्टायामन्वयः। न चान्यथात्वापत्तिः, पुरुषे भावनाऽनुपत्तावपि प्रत्ययेन तस्या एव बोधनेन अन्यथात्वाभावात्। अत एव निषेधस्थले लिङर्थभूतव्यापारस्य न विधिवाक्ये इव प्रयोज्यत्वसंबन्धेन भावनाऽन्वयः। अपि तु नञस्तात्पर्यग्राहकस्य सत्त्वात् स्वप्रयोज्याभावप्रतियोगित्वेनेति तस्य निवर्तनारूपत्वसिद्धिः, कलञ्जभक्षणभावना निवर्तनाविषयः इति तु मूलानुसार्यन्वयः, नञ्सहितस्य लिङादेर्निवर्तनायां लक्षणास्वीकारात्। स्वप्रयोज्यत्वे च प्रवृत्त्यभावे प्रवृत्तिविषयस्य अनिष्टसाधनत्वज्ञानं विना अनुपपन्नमिति तस्य प्रत्यवायजनकत्वं कल्प्यते। तेन पुरुषमात्रस्यैव रागतः प्रवृत्त्युन्मुखस्य निषेधेष्वधिकारः। अत एव च प्रत्यवायसाधनीभूतस्यानुष्ठेयस्य भक्षणस्य रागत एव ज्ञातत्वात् तदनुष्ठाने सति प्रत्यवायोत्पत्त्युपपत्तेर्न तदंशे तन्निषेधांशे वा अध्ययनविधिसिद्धज्ञानापेक्षाऽपि। यत्तु अत्र निवर्तनाप्रकारकथनं प्रकारान्तरेण **तन्त्ररत्ने** कृतम्, तत् अर्थवादाधिकरणे कौस्तुभे एव निरस्तम्। स्वोक्तरीतिश्च विस्तरेणोपपादिता।

**मण्डन**— ' निषेधमात्रं लशुनाशनादौ। '

**शंकर**— ' कलञ्जप्रतिषेधनम्। '

* भाष्यकारादिभिः प्रजापतिव्रतस्य क्रत्वर्थत्वमाशङ्क्य पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्वमङ्गीकृतम्, तदपि **कलञ्जभक्षणप्रतिषेध**–हिरण्यधारणन्यायेन क्रत्वर्थत्वशङ्काऽनुपपत्तेरुपेक्षितम्। **भाट्ट.** ४।१।३. * **कलञ्ज–लशुन**– गृञ्जनादिभक्षणनिषेधेषु नरकभीतिशून्यता फलम्। न तु स्वर्गः। **वि.** ६।२।५.

* ' यो नाम क्रतुमध्यस्थः **कलञ्जादीनि** भक्षयेत्। न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः ॥ ' क्रतवो हि स्वसंबन्धिनौ विधिप्रतिषेधौ अपेक्षमाणाः तदतिक्रमे सति विगुणा भवन्ति। ये पुरुषगता विधिप्रतिषेधाः, ते क्रत्वन्तरगता इव अस्य सदसद्भावयोरविशिष्टाः। नहि तेषु गुणबुद्धिरुत्पन्ना, येनातिक्रमे वैगुण्यबुद्धिः स्यात्। **वा.** ३।४।४।१३ पृ. ९१२.

* **कलभत्वं** हस्तित्वैकार्थसमवायिनी बाल्यावान्तरजातिः। **सु.** पृ. १४११. * **कलभशब्दः** उष्ट्रस्य हस्तिनो वा वयोविशेषवचनः। **वा.** ३।४।४।१३ पृ. ९२०.

* **कला** ' अष्टादशनिमेषास्तु काष्ठा, त्रिंशत्तु ताः कला ' । इत्यमरः। के.

* **कलौ** अधर्मभूयिष्ठाः सर्वे भविष्यन्ति अल्पीयसाऽपि धर्मेण भूयानभ्युदयो भविष्यति इत्यादिभविष्यत्कथनस्य प्रयोजनं युगस्वभावनिबन्धनस्य धर्माधर्मानुष्ठानवैचित्र्यस्य फलपाकवैचित्र्यस्य च ज्ञानम्। **सु.** पृ. १२८.

* **कलिकालवशेन** अधर्मप्राबल्यात्। **सु.** पृ. १७१.

* **कल्पः** (प्रयोगपद्धतिः) ययोर्भिन्नः, तयोरपि कुलाययज्ञे अधिकारः राजपुरोहितयोः। **भा.** ६।६।२।१२–१५, * कल्पः येषां वैश्वामित्रेण समानः, तेषामेव सत्रेऽधिकारः। (कल्पशब्दोऽत्र प्रयोगपरः न श्रौतसूत्रपरः)। ६।६।४।२४–२६, * कल्पः येषां समानः तेषामेव सत्रेऽधिकारः। ६।६।१।१–११, * **कल्पाः** ( पक्षाः ) यत्र बहवः श्रूयन्ते, तेषां कश्चिल्लघुः, कश्चित् गुरुः। तत्र गुरोः कल्पस्य अनुष्ठानाम्नानसामर्थ्यात् तदनुष्ठानात् फलभूयस्त्वमनुमीयते। यथा, 'एका देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः' इति। ११।१।८।४३.

* **कल्पस्य** ( वेदाङ्गस्य ) शाखाऽन्तरसंदिग्धविध्युपसंहारद्वारा न्यायलभ्यार्थतात्पर्यनिर्णयद्वारा च वेदोपकारकत्वम्। **मणि.** पृ. ५.

* **कल्पनं** च तद्विरुद्धप्रत्यक्षश्रुतो वाक्यशेषो निरुणद्धि इत्यावेदितम् अक्ताधिकरणार्थनिर्णये ( १।४।१३ )। **पराक्रमः.** ५२।१.

* **कल्पना** दृष्टानुसारिणी न्याय्या। **ऋजु.** पृ. ९६.

* कल्पना नाम अदृष्टं विज्ञानकारणम्। **सु.** पृ. १२२.

* **कल्पसूत्राणि**। यथैव आप्तप्रत्ययात् ' इदमिह पठ्यते ' इति कथितम् उच्चारितम् अनुच्चारितं वा शिष्याः प्रतिपद्यन्ते, तथैव सूत्रकारवचनानि अध्यापकवचनस्थानीयानि स्वानुरूपवेदवाक्यसमर्पणमात्रं कृत्वा निवृत्तव्यापाराणि, इति न ताल्वादिध्वनिप्रेरणवत् पौरुषेयत्वेन परिभवितव्यानि। ' वेदो हीदृश एवायं



पुरुषैर्यः प्रकाश्यते। स पठद्भिः प्रकाश्येत स्मरद्भिर्वेति तुल्यभाक् ॥ ' **वा.** १।३।२।४ पृ. १८७, * **कल्पसूत्राणाम्** ' तस्माद् वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः। न तत्कृतकतां लब्ध्वा लभते नित्यमूलताम् ॥ ' १।३।६।११ पृ. २३३. * कल्पसूत्राणां ब्राह्मणोक्तार्थानुवादकता अवसीयते, ' होतुर्वषट्कारे चमसा नीयन्ते उद्गातुर्ब्रह्मणो यजमानस्य ' इति भक्षणार्थं नयनमुक्त्वा केनादौ भक्षणीयम् इत्यपेक्षायाम् ' तेषां होताऽग्रे भक्षयेत्' इति प्रतिज्ञाय ' तस्य वषट्कारान्वयत्वात् ' इत्यादिभिः ' वषट्कर्तुः प्रथमभक्षः' इत्यादिब्राह्मणोक्तैर्हेतुभिर्व्याख्यानदर्शनात्। तथा ' प्राश्य घृतं शंसेत् यथा ह वा इदमनो वा रथो वाऽक्तो वर्तते एवं हैवाक्तो वर्तते ' इत्यादिभिः घृतप्राशनादिविधिशेषभूतैर्ब्राह्मणैः 'नाचामेदिति विज्ञायते, देवरथो वा यद् होता, नाक्षमद्भिः करवाणीति ' इत्यादिवाक्यैः आचमनाभावादिज्ञापनात् अनुवादकत्वनिश्चयः। **सु.** पृ. २४१. * **कल्पसूत्रेषु** अर्थवादादिमिश्रशाखाऽन्तरविप्रकीर्ण–न्यायलभ्यविध्युपसंहारफलम् अर्थनिरूपणं यत्, तत् प्रमाणमङ्गीकृतम्। लोकव्यवहारपूर्वकाश्च केचित् ऋत्विगादिव्यवहाराः सुखार्थहेतुत्वेन आश्रिताः। **वा.** १।३।१।२ पृ. १६७. * कल्पसूत्रेषु क्रत्वर्थपुरुषार्थाङ्गप्रधानप्रतिपादनं प्रयोजनम्, वेदश्च मूलम्। अर्थवादमन्त्रमिश्राणां विधीनामुपसंहारो विविक्तीकरणं शाखान्तरविप्रकीर्णानामेकत्र संनिवेशः न्यायलभ्यानां तात्पर्यनिर्णयश्च। ये तु कल्पसूत्रेषु ऋत्विगादीनाम् ' को यज्ञः ' इत्यादिप्रश्नोत्तरादिव्यवहाराः तेषामनुष्ठानसौकर्यादिमुखं प्रयोजनम्। दक्षिणाप्रश्नोत्तरादिव्यवहाराणां च अर्थः प्रयोजनम्। लोकश्च उभयत्र मूलम्। **सु.** पृ. १२९.

* कल्पसूत्रेषु सर्वाङ्गोपसंहरणाय प्रवृत्तेषु, नानाशाखागतविनियोजकब्राह्मणवाक्यसंग्रहात्मकत्वात् कल्पसूत्राणाम्। **कु.** १।२।१।१८ पृ. २८. * **कल्पसूत्रकाराः**। ' स्वशाखाविहितैश्चापि शाखाऽन्तरगतान् विधीन्। कल्पकारा निबध्नन्ति सर्व एव विकल्पितान्। सर्वशाखोपसंहारो जैमिनेश्चापि संमतः ॥' **वा.** १।३।२।३ पृ. १७८.

* **कल्पसूत्रकाराणाम्**। ' वेदादेवानृतत्वं च तद्वाचामवगम्यते। विसंवादो हि भूयिष्ठस्तन्न्यायेन न दृश्यते ॥ ' **वा.** १।३।६।१४। ' यज्ञायज्ञीयमेव प्रायणीयाऽग्निष्टोमसाम कार्यम् ' इत्यादेः ( कल्पसूत्रस्य ) षड्विंशब्राह्मणे जराबोधीययज्ञायज्ञीययोः प्रायणीयाऽग्निष्टोमसामकार्यवैकल्पिकविधानेन साक्षात् विसंवाददर्शनात्, ' अपिवा नानागोत्राः स्युः ' इत्यादेः ( कल्पस्य ) तनूनपान्नाराशंसकल्पाद्यवैगुण्याय ' समानकल्पानामेव सत्रेष्वधिकारः ' इति वेदोत्थेन न्यायेन विसंवाददर्शनात् कल्पसूत्रकाराणां वेदादेव अनृतत्वावगतिः इत्यर्थः। **सु.** पृ. २४२.

* **कल्पसूत्रग्रन्थाः** बोधायनापस्तम्बकात्यायनादिनामाङ्किताः पौरुषेयाः। तथापि वेदमूलकत्वात् प्रमाणम्। **वि.** १।३।७. * **कल्पसूत्र–निरुक्त–मीमांसानाम्** अधीतमन्त्रब्राह्मणार्थविज्ञानोपयोगक्षमत्वात्। **वा.** १।३।८।२४ पृ. २६८.

**कल्पसूत्राधिकरणम्**। कल्पसूत्राणि धर्मे प्रमाणं वेदमूलकत्वात् ॥

**प्रयोगशास्त्रमिति चेत्**। १।३।६।११ ॥

**भाष्यम्**— इह कल्पसूत्राण्युदाहरणम्। माशकम्, हास्तिकम्, कौण्डिन्यकमित्येवंलक्षणकानि किं प्रमाणमप्रमाणं वेति संदिग्धानि। किं प्राप्तम् ? प्रयोगस्य शास्त्रं प्रमाणम् एवंजातीयकमिति ब्रूमः। सत्यवाचामेतानि वचनानि। कथमवगम्यते ? वैदिकैरेषां संवादो भवति। ये एव हि वेदे प्रहास्ते एवेह, या एव वेदे इष्टकास्ता एवेह। तस्मात् सत्यवाच आचार्याः। आचार्यवचः प्रमाणमिति च श्रुतिः। प्रत्यक्षतः प्रामाण्यमनवगतमिति यदि उच्येत, प्रमाणान्तरेण वचनेन अवगतमिति न दोषः। वेदवाक्यैश्च एषां तुल्य आदरः। तस्मात् प्रमाणम्।

**वा**— ' **कल्पसूत्राण्युदाहृत्य संप्रत्येतद्विचार्यते। किमेतेषां स्वतन्त्राणां प्रामाण्यं वेदवद्भवेत् ॥ किंवा वेदत्वमेवैषां मन्त्रब्राह्मणवन्मतम्। वैदिकार्थप्रबन्धाद्धि नैतेषां स्मृतितुल्यता ॥** ' आह। के पुनः कल्पाः कानि सूत्राणीति। उच्यते। ' **सिद्धरूपः प्रयोगो यैः कर्मणामनुगम्यते ॥ ते कल्पा, लक्षणार्थानि सूत्राणीति प्रचक्षते। कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनम् ॥ सूत्रं तु सूचनात्**

तेषां स्वयं कल्प्यप्रयोगकम् । कल्पाः पठितसिद्धा हि प्रयोगाणां प्रतिक्रतु ॥ बौधायनीयवाराहमाशकादिप्रबन्धवत् । स्वसंज्ञापरिभाषामिर्यदुत्सर्गापवादनम् ॥ हेतुदृष्टान्तवत् सूत्रं तल्लक्ष्यव्यापि लक्षणम् । आश्वलायनकं सूत्रं बैजावापिकृतं तथा ॥ द्राह्यायणीयलाटीयकात्यायनकृतानि च ॥' तत्र सकलप्रत्यक्षवत् अप्रतिपाद्यक्रतुप्रयोगोपनिबन्धनात् अन्तर्हितविप्रकीर्णानुमेयप्रायश्रुतिमूलस्मृतिग्रन्थनेभ्यो महानेव कल्पसूत्राणां विशेषोऽस्तीति न तत्तद्गतन्यायं व्यवस्थाप्य प्रामाण्यानि विज्ञायन्ते । 'अप्रामाण्यं स्मृतीनां च यदशब्दतयोदितम् । पूर्वपक्षे, न तद्वक्तुं कल्पसूत्रेषु शक्यते ॥ प्रत्यक्षवेदशब्दत्वात् तदुक्ता नापशब्दता । नह्यत्यन्तानृतं वक्तुं शक्यते पूर्वपक्षिणा ।' स्मृत्यधिकरणे ( १।३।१ ) चाप्रमाणत्वं मूलानुपपत्त्या पूर्वपक्षे अभिधाय सिद्धान्ते अनुमितश्रुतिमूलत्वेन प्रामाण्यं स्थापितम् । एतानि च न तत्रोदाहृतानि पूर्वपक्षहेत्वसंभवात् । न चैषामिह प्रामाण्यप्रतिपादनम् । अतिरिक्तप्रामाण्यापवादप्रतिपादनार्हत्वात् अधिकरणस्य । 'यद्वा भवतु नामैषां तस्मिन्नपि विचारणा । तेषां चात्रापि सर्वेषामिति प्रामाण्यवारणा ॥' यदि धर्मे प्रति स्मृतीनां प्रामाण्यमभ्युपगम्यते तथा सति 'तासामपि हि वेदत्वे तैर्वा तुल्यप्रमाणता । स्वातन्त्र्याच्छक्यते वक्तुं न तु मूलानुमानतः ॥ यद्वा प्रयोगशास्त्रत्वमङ्गानामभिधीयते । वेदत्वं वा षडङ्गेऽपि वेदत्वस्मृतिरस्ति हि ॥' 'मन्त्रब्राह्मणयोर्वेद इति नामधेयं षडङ्गमेके' इति अङ्गान्यपि वेदशब्दवाच्यानि स्मर्यन्ते । 'तस्मात् तान्यपि वेदा वा प्रमाणानि स्वतोऽथवा । प्रतिभान्तीति कर्तव्यमन्यथा प्रतिपादनम् ॥ यद्वा शाक्यादिशास्त्राणां स्मृतिशास्त्रत्ववारणात् । वेदशाखासमानत्वमाशङ्क्येह निवार्यते ॥' शाक्यादयो हि एवं वदन्त्येव । यथा 'उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्मनित्यता' इति । 'ततश्च वेदवन्नित्यास्तेऽपि वेदागमा मताः । चोदनालक्षणो धर्मस्तदुक्तोऽपि प्रसज्यते ॥ कामं न प्रविशेद् ग्रामं वारितो दण्डपाणिभिः । स्पष्टं महापथेनैव संप्रति प्रविविक्षति ॥' एवमेतानि चत्वार्यपि विचारस्थानानि एकमार्गपतितानि कल्पसूत्रविचारेणैव गतप्रायाणि भविष्यन्तीति मन्वानेन तदुपन्यासमात्रमेव क्रियते ।

'का गतिः कल्पसूत्राणामित्यस्मिन् संशये सति । प्रयोगशास्त्रतां तावत् प्राह स्म त्यक्तसंशयम् ॥ वेदत्वं कल्पसूत्राणां न मोक्तव्यं मनागपि । यदि वा वेदतुल्यत्वं स्वतन्त्राणां प्रतीयताम् ॥ वेदेनैवाभ्यनुज्ञाता धर्मे तेषां प्रमाणता । वेदत्वमेव वा सिद्धं संवादादिप्रमाणकम् ॥' ननु च पौरुषेयत्वादेषामेतदुभयमप्यनुपपन्नम्, 'नैतेषां पौरुषेयत्वं भविष्यति हि वेदवत् । माशकादिसमाख्या हि प्रोक्तत्वात् काठकादिवत् ॥' यथैव कठादिप्रोक्ताः शाखाः काठकादिसमाख्यया अभिधीयन्ते इति अकृत्रिमाः स्थापिताः, तथैव वेदसमाम्नातमशकादिसमाख्यातग्रन्थनियताऽपि प्रत्येतव्या । यथा सामसूक्तानाम् इदमस्य आर्षम् इदमस्य इति सत्यामपि तन्निमित्तायां समाख्यायां न नित्यत्वप्रतिघातः । एवं प्रख्यातर्षिप्रकल्प( क्लृप्त )सूत्रग्रन्थानामपि । तथाहि, 'न तावदनृषिः कश्चित् स्मर्यते कल्पसूत्रकृत् । कर्तृत्वं यदृषीणां तु तत् सर्वं मन्त्रकृत्समम् ॥' यथा 'शैशवं भवति, शिशुर्वा अङ्गिरसो मन्त्रकृतां मन्त्रकृदासीत्' इत्यत्र मन्त्रकृच्छब्दः प्रयोक्तरि प्रयुक्तः, एवं तस्यतस्य कल्पस्य सूत्रस्य वा प्रयोक्तारः तत्कारित्वेन व्यपदेक्ष्यन्ते । ब्रह्मयज्ञविधाने च 'एवं विद्वान् स्वाध्यायमधीयीत' इत्युक्त्वा तत्प्रपञ्चे 'यदृचोऽधीते यद्यजूंषि यत्सामानि यद्ब्राह्मणानि यदितिहासपुराणानि यत्कल्पान्' इति तत् जप्यमानत्वेन विधानात् आर्षत्वमेव विज्ञायते । पुरुषकृतानां जपनिमित्तधर्महेतुत्वेन नित्यविधिविषयत्वासंभवात् । अरुणपराशरशाखाब्राह्मणस्य च कल्परूपत्वात् सर्वयाज्ञिकैश्च स्वशाखाधीतव्यतिरिक्तकल्पसूत्रकारोपन्यस्तपक्षतुल्यबलत्वाध्यवसानात् कल्पजमन्त्राणां च इतरसमाम्नायाधीतवत् क्रतुविनियोगाश्रयणात् तुल्यत्वम् । 'आर्षेयवचनं नित्यपर्यायत्वेन गम्यते । आर्षेयत्वप्रसिद्धिश्च कल्पसूत्रेष्ववस्थिता ॥' लाटद्राह्यायणसूत्रकाराभ्यामपि च दृढकल्पप्रामाण्यापेक्षया इदं माशकमपेक्ष्य 'तत्प्रत्यक्षविहितं च आर्षकल्पेन, तत्रानुमानं न विद्यते' इति ब्राह्मणविहितादपि आर्षकल्पविहितगरीयस्त्वमङ्गीकृत्योक्तम् । कात्यायनेन च कृताक्षणसूत्रप्रणयनप्रक्रमेऽभिहितं यज्ञविषयब्राह्मणगतस्तोत्रविधिवाक्यशेषे 'यथामाशकं तत्प्रामाण्यात् करिष्यते, न तन्निरपेक्षशुद्धब्राह्मणप्रामाण्यात्' इति । तथा च प्रायणीयाऽग्निष्टोमसाम्नि यज्ञायज्ञीयेन सह वैकल्पिकम् 'जराबोधीयमग्निष्टोमसाम कार्यम्' इति पञ्चविंशब्राह्मणे अभिहितमपि माशकानुवृत्त्या कात्यायनेन आर्भवीयगायत्रतृतीयत्वेन 'जरा सात्' इति लक्षितम् ( जरा जराबोधीयम्, सात् आर्भवीयगायत्रात् परम् इत्यर्थः ) । आर्भवीयगायत्रीगतगायत्रानन्तरसाम्नो हि तेन समिति संज्ञा कृता । तस्माच्च परत्वेन पदैकदेशप्रयोगेण जराबोधीयमुक्तम्, ढेशब्देन च ज्यौतिष्टोमिकाग्निष्टोमसामसंज्ञाभूतेन यज्ञायज्ञीयमेव अग्निष्टोमसामत्वेन नियतम् । यदि च कल्पात् ब्राह्मणमतिरिक्तं कात्यायनोऽमंस्यत ततः प्रत्यक्षब्राह्मणदृष्टं विकल्पमेवावक्ष्यत् । 'बहुवेदगतन्यायविवेकज्ञो यदब्रवीत् । कात्यायनो न तद्वाच्यमन्याय्यमिति मादृशैः ॥ आचार्यवचनानां च प्रामाण्यं श्रूयते श्रुतौ । अङ्गानां च प्रणेतार आचार्या ऋषयो मताः ॥ यथा च सर्वशाखानां संवादात् तुल्यकल्पता । तथैव कल्पसूत्राणामिति प्रामाण्यतुल्यता ॥' यान्यपि अप्रत्ययितपुरुषवचनानि प्रमाणान्तरसंगतार्थानि भवन्ति, तान्यपि सत्यत्वेन अवधार्यन्ते, किमङ्ग पुनः सत्यवाचां वचनानि । 'सत्यवाचां च वाक्यानि वैदिकैः संगतानि च । ज्ञातसत्यानि तान्येवं कोऽन्यथा कल्पयिष्यति ॥' अपिच 'वेदादृतेऽपि कुर्वन्ति कल्पैः कर्माणि याज्ञिकाः । न तु कल्पैर्विना के चिन्मन्त्रब्राह्मणमात्रकात् ॥' तुल्यं च सांप्रदायिकं स्वाध्यायाध्ययनविधिवचनं प्राक् दर्शितं कल्पग्रहणात् । 'अथवा संप्रदातॄणामध्येतॄणां च यादृशः । मन्त्रब्राह्मणयोर्यत्नः, कल्पसूत्रेषु तादृशः ॥ अनुयोगेषु वेदानां घटिकामार्गवृत्तिषु । ( वेदकौशलजिज्ञासाऽर्थे तत्तद्वेदभागचिह्नलेख्यानि घटिकायां कुम्भाख्यायां निक्षिप्य तत्तद्वेदभागपरीक्षाकाले तान्याकृष्य आकृष्टलेख्यचिह्नितं पठन्ति अध्येतारोऽनुयुज्यते इति घटिकामार्गवर्तिनोऽनुयोगाः इति ) । न कल्पसूत्रहीनानां लभ्यते कृत्स्नवेदता ॥ तस्मात् कर्मप्रयोगाणां शास्त्रमेतदतिस्फुटम् । वेदो वा वेदतुल्यं वा कल्पसूत्राद्यसंशयम् ॥'

'एतेन धर्मशास्त्राणामङ्गानां चापि वेदता । तत्तुल्यताऽपि वा वाच्या सर्वेषां सर्वहेतुभिः ॥ धर्मशास्त्रपदं येषु सर्वकालं प्रयुज्यते । प्रयोगशास्त्रतां तेषां वेदज्ञः को हरिष्यति ॥ अपिचाङ्गानि वेदाश्च धर्मशास्त्रं च तुल्यवत् । विद्यास्थानानि गण्यन्ते सर्वदा वेदवादिभिः ॥'

किञ्च 'कर्मणां ब्राह्मणोक्तानां यथा मन्त्राः प्रकाशकाः । अष्टकापार्वणादीनां दृश्यन्ते ते तथैव हि ॥ तथाऽवकीर्णियागादि कृच्छ्रचान्द्रायणादि वा । वेदमन्त्रप्रकाश्यं सत् स्वयं कथमवैदिकम् ॥ सिद्धवह्निशिखत्वादि यच्च मन्त्रैरनूद्यते । चौलोपनयनप्राप्तं तत् स्यात् कथमवैदिकम् ॥ एवं च वेदमूलत्वं किमेषामनुमीयते । संभवत्येव वेदत्वे नित्यत्वे चापि तत्समे ॥ वेदं हि कल्पयित्वैभ्यः पुनस्तस्यापि नित्यता । वक्तव्यैव वरं तेन सा तेष्वेवावधारिता ॥ सिद्धानां नित्यतैवैका सुबोधा वेदताऽपि वा । असंशयितवेदार्थविषयत्वात् प्रकल्प्यते ॥ तस्माद्वर्षसहस्रेऽपि यस्य न ज्ञायतेऽवधिः । न तत् कृतकतां लब्ध्वा लभते नित्यमूलताम् ॥ यान्येव धर्मशास्त्राणां मूलवाक्यानि मन्यसे । तान्येवैतानि पठथन्त इत्येतत्कल्पितं वरम् ॥ मन्वादिभिरवश्यं च स्वग्रन्थप्रतिपादने । तान्युपन्यसनीयानि शिष्याणां वेदवादिनाम् ॥ तेन तान्येव तैरेभ्यः संप्रत्तानीति गम्यते । के हि तेषूपलब्धेषु गृह्णीयुः प्रतिकञ्चुकान् ॥ यथा च धर्मशास्त्राणां नाद्यत्वे प्रतिकञ्चुकाः । ग्राह्यास्तथा पुराऽप्यासन्न वेदप्रतिकञ्चुकाः ॥ संप्रदायविनाशाच्चेद् भीतेस्तदसमर्पणम् । मन्वादिष्वनुमीयेत स्वग्रन्थाकरणं तथा ॥ वेदवाक्यार्पणं

येषां खण्डशो नाभिसंमतम् । स्वग्रन्थकरणं तेषां वेदस्थाने कथं भवेत् ॥ वेदादेव च विज्ञातो वेदार्थः साधयेत् फलम् । नान्यस्मात् पुरुषग्रन्थात् मन्त्राभासात् स्मृतो यथा ॥ कृता मन्वादिभिर्यद्वन्न मन्त्रप्रतिकञ्चुकाः । न ह्येतेन स्मृतं कर्म सिध्यतीत्यवधारणात् ॥ तथैव तैर्न कर्तव्या ब्राह्मणप्रतिकञ्चुकाः । नावेदविहितं कर्म फलतीति हि निश्चितम् ॥ न चैभिर्भिन्नदेशस्थवेदवाक्यसमुच्चयः । कृत इत्यवगन्तव्यमीदृग्ग्रन्थावधारणात् ॥ ईदृगेवंक्रमश्चायं वेदग्रन्थ इतीदृशी । युज्यते हि मतिः कर्तुं न मूलान्तरकल्पना ॥ तेन प्रयोगशास्त्रत्वं तदैवापतितं बलात् । धर्मं प्रत्यप्रमाणत्वं यद्वैषां न संमतम् ॥ चोदनालक्षणे धर्मे पूर्वमेवावधारिते । अवेदस्य प्रमाणत्वं ब्राह्मणस्यापि नेष्यते ॥ तेनैषां धर्मशास्त्राणां न वा धर्मोपयोगिता । वेदता वाऽभ्युपेतव्या गतिर्नास्त्यान्तरालिकी ॥ वदन्ति धर्ममेतानि चोदनां गमयन्ति च । अशक्यमीदृशं वक्तुं यावदुक्तप्रमाणकैः ॥ उक्तमर्थं परित्यज्य यदनुक्तं प्रतीयते । अनुक्तेन च सोऽप्यर्थ इति किं नोपपद्यते ॥ तस्माद्धर्मप्रयोगस्य साक्षादुक्तस्य तत् स्वयम् । प्रमाणं धर्मशास्त्रं स्यात्र वेदव्यवधानतः ॥ '

'शाक्यादिनिर्मिते धर्मशास्त्राभासे निराकृते । धर्मप्रयोगशास्त्रत्वं तस्य वेदमिहोच्यते ॥ (वा इदम् इति च्छेदः) । येनैवाकृतकत्वं हि वेदस्य प्रतिपाद्यते । न्यायेन, तेन शाक्यादिग्रन्थस्यापि भविष्यति ॥ बोधकत्वात् प्रमाणत्वं स्वतस्तस्यापि लभ्यते । न च संदिह्यते बुद्धिर्न विपर्ययते क्वचित् ॥ अकर्तृकतया नापि कर्तृदोषेण दुष्यति । वेदवद् बुद्धवाक्यादि कर्तृस्मरणवर्जनात् ॥ बुद्धवाक्यसमाख्याऽपि प्रवक्तृत्वनिबन्धना । तद्द्रष्टृत्वनिमित्ता वा काठकाङ्गिरसादिवत् ॥ यावदेवोदितं किञ्चिद्वेदप्रामाण्यसिद्धये । तत्सर्वं बुद्धवाक्यानामतिदेशेन गम्यते ॥ तेन प्रयोगशास्त्रत्वं यथा वेदस्य संमतम् । तथैव बुद्धशास्त्रादेर्वक्तुं मीमांसकोऽर्हति ॥ ' इति ।

नासन्नियमात् । १२ ॥

भाष्यम्— नैतदेवम् । असन्नियमात् । नैतत् सम्यक् निबन्धनम् । स्वराभावात् ।

वा-- ' एवं प्राप्ते वदामोऽत्र तन्नासन्नियमादिति । असन्निबन्धनं ह्येतत् पूर्वोक्तं सर्वमीक्ष्यते ॥ इहैका परमार्थेन बुद्धिरर्थेषु जायते । अन्या भ्रान्तिरजाताऽपि त्वन्या जाताऽपि दुष्यति ॥ परेण सह केषां चिद् वाकोवाक्यानि जल्पताम् ॥ (उत्तरप्रत्युत्तररूपवाक्यानि वाकोवाक्यानि) उक्तयः प्रातिभासिक्यो जायन्ते परवाक्यतः ॥ स्वसंवेद्यं च सिद्धान्तमात्मीयमपि जानताम् । छायां तथापि रक्षन्तो जल्पन्ति प्रतिशब्दकैः ॥ यथा मीमांसकत्रस्ताः शाक्यवैशेषिकादयः । नित्य एवागमोऽस्माकमित्याहुः शून्यचेतनम् ॥ प्रद्वेषाद् वेदपूर्वत्वमनिच्छन्तः कथंचन । तन्मात्रेऽपि च भूयिष्ठामिच्छन्तः सत्यवादिताम् ॥ भूयसां वेदबाह्यत्वाद् बुद्धादिवचसाममी । अहिंसाऽऽद्यप्यतत्पूर्वमित्याहुस्तर्कमानिनः ॥ ततश्च पौरुषेयत्वादप्रामाण्यमतीन्द्रिये । प्रागुक्तैर्वेदनित्यत्ववागाभासैर्विमोह्यते ॥ '

यादृशतादृशमीमांसकैरपि अतीन्द्रियविषयपुरुषवचनप्रामाण्यनिराकरणात् अपौरुषेयत्वाध्यवसायनिराकृतकारणदोषाशङ्कनिरपवादप्रामाण्यसिद्धिं प्रतिहन्तुमशक्यां मन्यमाना निरुत्तरीभूता बालानुकरणवाक्यसदृशैः स्ववाक्यैः व्यवलिख्यमानहृदयाः सन्तोऽपि प्रक्षीणकुहेतुवचनजालाः कन्यावरणार्थागतमूर्खवरगोत्रप्रश्नोत्तरवत् । ' यदेव भवतां गोत्रं तदस्माकमपीतिवत् । आहुः स्वागमनित्यत्वं परवाक्यानुकारिणः ॥ अस्मदीयमिदं वाक्यं भवतामिति चोदिताः । जल्पन्त्यस्माकमेवैतच्छ्रुत्वा मीमांसकैर्हृतम् ॥ त्यक्तलज्जं ब्रुवाणो हि वाचोयुक्तिमनर्थिकाम् । कुर्वन् परातिसंधानमश्रान्तः कोऽवसीदति ॥ तत्र शाक्यैः प्रसिद्धाऽपि सर्वक्षणिकवादिता । त्यज्यते वेदसिद्धान्ताज्जल्पद्भिर्नित्यमागमम् ॥ धर्मस्तेनोपदिष्टोऽयमनित्यं सर्वसंस्कृतम् । क्षणिकाः सर्वसंस्कारा अस्थिराणां



कुतः क्रिया ॥ बुद्धिबोध्यं त्रयादन्यत् संस्कृते क्षणिकं च तत् ॥ '

तथा शब्देऽपि बुद्धेर्नियमात् नाभिव्यक्तिर्द्वेधाऽपि दोषात् इत्येवमादिभिः सर्वदा पदार्थसंबन्धानित्यत्वप्रतिपादनात् तद्विपरीतम् आगमनित्यत्वम् अभ्युपगम्यमानं लोकोपहासास्पदमात्रमेव भवेत् । तथाहि, ' यस्तन्तूननुपादाय तुरीमात्रपरिग्रहात् । पटं कर्तुं समीहेत, स हन्याद् व्योम मुष्टिभिः ॥ यावदागमनित्यत्ववेश्मदारूपकल्पिते । (दारुभिः काष्ठैः उपकल्पिते) हेत्वाभासाग्निनिर्दग्धे तस्मिंस्तद् वेश्म दुष्करम् ॥ ' व्यवहारनित्यताशब्दश्च क्रियानित्यत्वपर्यायः, तत् यस्य शब्दार्थसंबन्धानामनित्यत्वम्, तस्य तदाश्रयव्यवहारनित्यत्वं किमाधारं भविष्यतीत्यतिदुःसंपादम् । ' न च शब्दार्थसंबन्धकूटस्थत्वमनिच्छताम् । नित्यता व्यवहारस्य निराधाराऽवकल्पते ॥ शब्दादिषु विनश्यत्सु व्यवहारः क्व वर्तताम् । स्थितैषां धर्मतेत्येतदर्थशून्यमतो वचः ॥ एषेत्यपि न निर्देष्टुं शक्या क्षणविनाशिनी । किमुत स्थितया साकं एषेत्यस्यैकवाक्यता ॥' तेनानित्यशब्दवादिनाम् आगमनित्यत्वानुपपत्तेः अतीन्द्रियविषयस्य च वाक्यस्य प्रयोगशास्त्रत्वाभावात् नासन्नियमादित्युच्यते । ' असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः । असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते ॥ ' मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते । ' मम वि हि भिक्खवे कम्म वच्चइसी सवे ' । तथा ' उक्खित्ते लोडम्मि उव्वे अत्थि कारणम्, पडणे णत्थि कारणम्, अणुभवे कारणम्, इमे सक्कडा धम्मा, संभवन्ति सकारणा, अकारणा विणस्सन्ति । अणुप्पत्तिकारणम् ' इत्येवमादयः । (मम वि–मम अपि, हि, भिक्खवे–भिक्षोः, कम्म–कर्म, वच्चइसी–वर्तते, सवे–सर्वम् । उक्खित्ते–उत्क्षिप्ते, लोडम्मि–लोष्टे, उव्वे–ऊर्ध्वम्, अत्थि–अस्ति कारणम् । पडणे–पतने, णत्थि–नास्ति कारणम् । अणुभवे–अनुभवे कारणम् । इमे सक्कडा–संकटाः, धम्मा–धर्माः । विणस्सन्ति–विनश्यन्ति । अणुप्पत्तिकारणं–अनुत्पत्तिकारणम् इति संस्कृतम् । के. ) ' ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता । दृष्टापभ्रष्टरूपेषु कथं वा स्यादनादिता ॥ ' वेदेषु हि तावदेव पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति । ' या तद्बहिरवस्थानाद् वेदरूपं न दृश्यते । ऋक्सामादिस्वरूपे तु दृष्टे भ्रान्तिर्निवर्तते ॥ आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता । न शक्याऽध्यवसातुं हि मनागपि सचेतनैः ॥ दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः । पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते ॥ प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः । लोकेष्वप्यश्रुतप्रायैर्ऋग्वेदं कः करिष्यति ॥ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातममित्येतन्नृवचः कथम् ॥ किमालोच्य क्व वा दृष्ट्वा वाक् प्रतिच्छन्दमीदृशम् । रचयेत् पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम् ॥ अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते । ईळेशब्दप्रयोगश्च क्व दृष्टः स्तोत्रगोचरः ॥ देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम् । विधिनैव हि देवत्वं प्रतिकर्मावधार्यते ॥ न जात्या देवतात्वं हि क्व चिदस्ति व्यवस्थितम् । होतृत्वमपि यत् तस्य देवताह्वानहेतुकम् ॥ रत्नधायितमत्वं च तन्नरैर्ज्ञायते कथम् । अविज्ञातगुणानां च कल्पते स्तवनं न तु ॥ स्वतन्त्रो वेद एवैतत् केवलो वक्तुमर्हति । इषे त्वेत्ययमप्यर्थः पुरुषेणोच्यतां कथम् ॥ शाखाच्छेदोपयोगश्च पुंभिरुत्प्रेक्ष्यतां कुतः । एवमूर्जेत्ययं मन्त्रः केन शाखाऽनुमार्जने ॥ वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणाम् । वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ॥ एकशो विनियोक्तव्य इति कः कथयिष्यति ॥ ' वायुशब्देन बहुवचनान्तेन मातुर्वियोज्यमान एकैको वत्सोऽभिधीयते इति नैतत् बुद्धिपूर्वकारिणा चिन्तितुं शक्यम् । ' सामवेदे यदोग्नाईप्रभृतीनां प्रयुज्यते । रूपं तत्रापि पौंस्नत्वे नाभिप्रायोऽस्ति कश्चन ॥ ' को नाम बुद्धिपूर्वकारी पुरुषः अर्थाभिधानपराणाम् ऋगक्षराणां लोकव्याकरणादिषु अनवगतपूर्वम् अग्ने इत्यस्य पदस्य अकारमोकारेण प्लुतेन विकुर्यात् । ' तथा वीतय इत्यस्मिन्नीकारस्यापि विक्रियाम् । तशब्दस्य च तोशब्दं येशब्दस्यापि

रूपताम् ॥ को मूढो बुद्धिपूर्वो वा नियमात् कल्पयिष्यति । तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते ॥ किञ्चिदेव तु तद्वाक्यं सदृशं लौकिकेन यत् । तत्रापि च्छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ॥' एवं च यत् अध्येतारोऽध्यापयितारः पार्श्वस्था वा वेदपदवाक्यतदर्थरूपाणि आलोचयन्ति, तदा स्वसंवेद्यमेव अपौरुषेयत्वमध्यवस्यन्ति । तावता तु बाह्यतार्किकाणां प्रतीतिभावना नोत्पद्यते इति तत्तत्प्रतिपादनक्षमवेदोत्थापितन्यायोपनिबन्धनात् मीमांसकैः केवलं यश एव पीतम् । शाक्यादिग्रन्थेषु पुनर्यदपि किञ्चित् साधुशब्दाभिप्रायेण अविनष्टबुद्ध्या प्रयुक्तम्, तत्रापि प्रज्ञप्तिविज्ञप्तिपश्यतातिष्ठताऽऽदिप्रायप्रयोगात् किञ्चिदेव अविप्लुतं लभ्यते । किमुत यानि प्रसिद्धापभ्रष्टदेशभाषाभ्योऽपि अपभ्रष्टतराणि भिक्खवे इत्येवमादीनि । द्वितीयाबहुवचनस्थाने हि एकारान्तं प्राकृतं पदं दृष्टम्, न प्रथमाबहुवचने संबोधनेऽपि । संस्कृतशब्दस्थाने च कक्कारद्वयसंयोगोऽनुस्वारलोपः, ऋवर्णाकारापत्तिमात्रमेव प्राकृतापभ्रंशेषु दृष्टं न डकारापत्तिरपि । सोऽयं संस्कृता धर्मा इत्यस्य सर्वकालं स्वयमेव प्रतिषिद्धोऽपि विनाशः कृत इति असाधुशब्दनिबन्धनत्वात् इत्यन्तेन हेतुना वेदत्वाकृतकशास्त्रान्तरशङ्कानिवृत्तिः । ( तृतीयं व्याख्यानमाह– ) यावांश्च अकृतकोऽविनष्टः शब्दराशिः तस्य व्याकरणमेव एकमुपलक्षणम्, तदुपलक्षितरूपाणि च 'वेदे यथोपलभ्यन्ते नैवं शाक्यादिभाषिते । प्रयोगनियमाभावादतोऽप्यस्य न शास्त्रता ॥' असन्नियमादिति च व्याकरणोक्तनियमाभावादित्यर्थः । ( प्रागविद्यमानस्य ग्रन्थस्य निबन्धनात् इति चतुर्थं व्याख्यानमाह– ) क्षणिकत्वनिराकृतनित्यत्वात्यन्ताविद्यमानग्रन्थनियमाभ्युपगमाभिप्रायेण असन्नियमात् इत्युक्तम् । ( स्वसिद्धान्तसिद्धसर्वक्षणिकत्वनिराकृतेन 'स्थितैवेयं धर्मनित्यता' इत्युक्तेन धर्मप्रतिपादकागमनित्यत्वेन सिद्धमनित्यत्वं यस्य ग्रन्थस्य स तथोक्तः, अत एव निबन्धनात् प्राक् अत्यन्ताविद्यमानस्य निबन्धनाभ्युपगमात् इत्यभिप्रायेण इति योज्यम् । सु. पृ. २३८ । ( पञ्चमं व्याख्यानमाह– ) असतां वा क्षणभङ्गशून्यवादानात्मकत्वादीनाम् । ( षष्ठं व्याख्यानमाह– ) असद्धेतुभिर्वा प्रतिपादननियमात् तदेककर्तृकधर्मवचनानामपि अप्रामाण्यम् । 'कर्तृस्मरणदार्ढ्याच्च नैषामकृतता मता । तेनाकृतकगम्येऽर्थे स्वातन्त्र्यान्न प्रमाणता ॥ एवं समस्तवेदाङ्गधर्मशास्त्रेष्वपीदृशात् । कर्तृस्मृतिदृढिम्नः स्यान्न स्वातन्त्र्येण शास्त्रता ॥ अनेन कल्पसूत्राणां प्रत्याख्याता स्वतन्त्रता । कर्तृस्मृत्या दृढं ज्ञाता तेषामप्यसतां क्रिया ॥ येन न्यायेन वेदानां साधिताऽनादिता पुरा । दृढकर्तृस्मृतेस्तस्य कल्पसूत्रेषु बाधनम् ॥' यथैव हि कल्पसूत्रग्रन्थान् इतराङ्गस्मृतिनिबन्धनानि च अध्येत्रध्यापयितारः स्मरन्ति, तथा आश्वलायनबौधायनापस्तम्बकात्यायनप्रभृतीन् ग्रन्थकारत्वेन ( स्मरन्ति ) । ( प्रागसतां वेदातिरिक्तविद्यास्थानानां निबन्धनात् इति सूत्रं योजयति– ) 'ततश्च प्रागवस्थायामसतामेव बन्धनात् । कुतः प्रयोगशास्त्रत्वं वेदवद् वेदतैव वा ॥' न चैषां समाख्यामात्रबलादेव कर्तृत्वमुच्यते, येन 'आख्या प्रवचनात्' इत्युत्तरमुच्येत । पुरुषपरम्परयैव हि स्मृतेषु कर्तृषु समाख्या अभ्युच्चयहेतुत्वेन ज्ञायते । यथा च कठादिचरणैः अनादिभिः प्रोच्यमानानाम् अनादिवेदशाखानाम् अनादिसमाख्यासंभवः, नैवं नित्यावस्थितमाशकादिगोत्रचरणप्रवचननिमित्तसमाख्योपपत्तिः । माशकबौधायनापस्तम्बादिशब्दा हि आदिमदेकद्रव्योपदेशिनः, इति न तेभ्यः प्रकृतिभूतेभ्यः अनादिग्रन्थविषयसमाख्याव्युत्पादनसंभवः । ( अत्राप्यर्थे सूत्रं योजयति– ) अतश्च माशकादिसमाख्याऽपि अविद्यमानग्रन्थनियमनादेव प्रवृत्तेत्यपि हेत्वर्थयोजना । वेदरूपनियमाविद्यमानत्वादिति वा अत्र हेतुव्याख्या । 'कामं तु वेदाङ्गानि' इत्यनध्यायनियमाभावादिति वा योज्यम् । यत्तु भाष्यकारेण 'स्वराभावात्' इत्यनियमार्थे व्याख्यानं कृतम् । 'तन्मन्त्रेष्वप्यवेदत्वं कल्पाधीतेषु साधयेत् । तथा गृह्योपदिष्टेषु च्छान्दोग्यब्राह्मणेषु च ॥ ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते । छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतः स्वरः ॥ तेन तेष्वप्यवेदत्वं स्वराभावात् प्रसज्यते । तस्मादुक्तस्वसंवेद्यरूपा-



भावोऽत्र कारणम् ॥ स्वरोऽपि त्वस्ति रूपांशे नत्वसावेव केवलः ॥'

अवाक्यशेषाच्च । १३ ॥

भाष्यम्— 'ऋत्विजो वृणीते' 'वृता यजन्ति' 'देवयजनमध्यवस्यन्ति' इति नात्र विधिर्गम्यते वर्तमानकालप्रत्ययनिर्देशात् । न चात्र वाक्यशेषः स्तावकोऽस्ति । तस्मादप्रमाणम् । यश्च आदर उक्तः, स नान्तरीयकत्वात् वेदवाक्यमिश्रसमाम्नानात् । यत्तु श्रुतिरिति, नैतत् अर्थवादत्वात् । कथमर्थवादः ? विध्यन्तरं ह्यस्ति, आग्नेयोऽष्टाकपाल इति । अत्र आचार्यो वेदोऽभिप्रेतः । आचिनोत्यस्य बुद्धिमिति । यद्वा आचार्यवचनं प्रमाणं तदपेक्षम् । कतरत्तत् ? यत् प्रमाणगम्यम् ।

वा— 'अतश्च वाक्यशेषोऽपि तस्मिन्नेवोपयुज्यते । बहवो वाक्यशेषा हि येषां लोकेष्वसंभवः । अबुद्धिपूर्वतासिद्धिस्तेन वेदस्य तैरपि ॥' बृहस्पतिर्वै देवानामुदगायत्, इन्द्रो वृत्रमहन्, प्रजापतिर्वपामात्मन उदखिदत्, गावो वा एतत्सत्रमासत तासां दशसु मास्सु शृङ्गाण्यजायन्त इत्यादयः कथमिव बुद्धिपूर्वकारिणा अर्थवादाः प्रणीयेरन् । 'नित्यत्वे सति येषां हि क्लेशेन विधियोजना । तान् कृत्वाऽध्यापयन् कर्ता सुसमस्तं व्यजेज्जडैः ॥' न च तादृशवाक्यशेषमुद्राऽपि कल्पसूत्रादिग्रन्थेषु काचिदस्ति, यद्बलेन अकृतकत्वमेषाम् अवसीयेत । 'विधिशून्यतया चैषां विहिताऽऽख्यातरूपता । गम्यते न त्वपूर्वार्थप्रतिपादनशक्तता ॥ वर्तमानापदेशोऽपि त्वर्थवादप्ररोचितः । विधित्वं लभतेऽन्यत्र कल्पसूत्रेषु नास्ति सः ॥ पञ्चमेन लकारेण विधिर्यश्छन्दसि स्मृतः । मन्त्रब्राह्मणभिन्नत्वात् सोऽप्येतेषु न युज्यते ॥' यद्यपि 'षडङ्गमेके' इत्यनेन कल्पसूत्राणां वेदत्वं भवेत् । 'तथापि तर्कवत् तेषां छन्दस्त्वं नोपपद्यते । मन्त्रब्राह्मणयोरेव च्छान्दसा विधयः स्थिताः ॥' यथैव 'विधिर्विधेयस्तर्कश्च वेदः' ( विधिः ब्राह्मणम्, विधेयः मन्त्रः, तर्कः मीमांसा ) इत्येतस्मिन् दर्शने सति समस्तवैदिकतर्कोपसंहारात्मिका मीमांसाऽपि वेदशब्दवाच्या भवति न तु अमन्त्रब्राह्मणरूपत्वात् छन्दोनिबन्धनानि कार्याणि लभते, तथा कल्पसूत्राण्यपीति विधिपर्यायप्रयोगशास्त्रत्वाभावः । 'इतिहासपुराणाभ्यां सा त्वनैकान्तिकी स्मृता । या त्वेषां ब्रह्मयज्ञेऽपि विधानान्नित्यतोदिता ॥ इतिहासपुराणानि कल्पानिति हि सा श्रुतिः । तस्मात् कृत्रिममप्यत्र विद्यास्थानं ग्रहीष्यते ॥' वेदार्थोपसंहारस्य कल्पसूत्रानपेक्षैः कर्तुमशक्यत्वात् । अवश्यं च यावद्वेदं यावत्कर्मप्रयोगं च क्रियमाणैरपि विद्यास्थानाशून्यताऽर्थे कैरपि कल्पसूत्रैर्भवितव्यम् । 'वेदार्थकल्पनात् कल्पो नित्यैवाख्ययोच्यते । जपे च नित्यकर्तव्ये नित्यमेव विधीयते ॥ कर्माभ्यासाभिसंधानं विध्यर्थश्चात्र गम्यते । स चार्थो नित्य एवेति नापतेद् ग्रन्थनित्यता ॥ यः पुनर्वेदसंवादः स तत्पूर्वतयेष्यते । तदर्थानुगमाच्चैषां न स्वतन्त्रप्रमाणता ॥ वेदशब्दाभिधेयत्वं नैषामध्येतृषु स्थितम् । षडङ्गमेक इत्येतन्न च सिद्धान्तभाषितम् ॥ संवादत्वानुवादत्वमेकस्यैकान्तनिश्चितम् । ऐकान्तिकविधित्वाच्च ब्राह्मणे तन्न युज्यते ॥ कल्पादावनुवादत्वमापन्नं परिशेषतः । न च शाखाऽन्तरन्यायस्तुल्याध्येतृकतावशात् ॥ सर्वशाखाविधित्वं हि सिद्धमध्येतृभेदतः । प्रतिशाखं तु ये कल्पास्तदर्थप्रतिपादकाः ॥ समानाध्येतृकत्वात्ते न कदाचिद् विधिक्षमाः । विवृण्वन्तश्च दृश्यन्ते हेतुभिर्ब्राह्मणोत्थितैः ॥ कल्पकारास्ततोऽप्येषां नैव ब्राह्मणतुल्यता । अन्यार्थैर्ब्राह्मणैश्चान्यान् ज्ञापयन्त्यर्थनिर्णयान् ॥ तस्मादपि स्वतन्त्रत्वं कल्पानां नोपपद्यते । अर्थैकत्वेन केषांचिदक्षराणां च साम्यतः ॥ सादृश्याद् ब्राह्मणभ्रान्तिर्जातैवमपनीयते । आचार्यवचसां यच्च प्रमाणत्वं श्रुतौ श्रुतम् ॥ श्रुतिसामान्यमात्रत्वात् तस्याप्यन्यार्थतोदिता । व्याचक्षाणस्य वेदार्थान् वेदांश्च वदतः स्वयम् ॥ शिष्यान् प्रत्याप्तभावात् स्यादाचार्योक्तिप्रमाणता ॥' आचार्यशब्दस्यार्थो मन्वादिभिरेवं व्याख्यातः । 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । साङ्गं च सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति । वेदसंप्रदानकाले च शिष्याः तद्वचःसु कथं नाम श्रद्दधीरन् इत्येवमर्थम् आचार्यवचनं प्रमाण-

मित्युक्तं न कल्पसूत्रकारवचनविषयम् । **'न च पुंवचनं सर्वं सत्यत्वेनावगम्यते । वागिह श्रूयते यस्मात् प्रायादनृतवादिनी ॥'** तथा अन्यत्राप्युक्तम् । 'तस्माद् द्वयं वाचा वदति सत्यं चानृतं च, पाप्मना ह्येषा विद्धा' इति ।

**सर्वत्र च प्रयुक्तत्वात्, संनिधानशास्त्राच्च । १४ ॥** ( वा–सु–य–कु–पाठोऽयम् )

**भाष्यम्**–– यच्चोक्तं सत्यवाचामेतानि वचनानीति, तन्न । आचार्यवचनं हि भवति 'पूर्वपक्षे सर्वासु तिथिषु अमावास्या' इति, संनिहितं च शास्त्रम् 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति । तेन श्रुतिविरुद्धवचनात् न सत्यवाचः । तस्मादप्रमाणम् ।

**वा**–– **'वेदादेवानृतत्वं च तद्वाचामवगम्यते । विसंवादो हि भूयिष्ठस्तन्न्यायेन च दृश्यते ॥'** ( 'यज्ञायज्ञीयमेव प्रायणीयाग्निष्टोमसाम कार्यम्' इत्यादेः [ कल्पसूत्रस्य ] पञ्चविंशब्राह्मणे जराबोधीययज्ञायज्ञीययोः प्रायणीयाग्निष्टोमसामकार्यवैकल्पिकविधानेन साक्षात् वेदेन विसंवाददर्शनात्, 'अपिवा नानागोत्राः स्युः' इत्यादेः ( कल्पसूत्रस्य ) तनूनपान्नाराशंसकल्पाद्यवैगुण्याय 'समानकल्पानामेव सत्रेष्वधिकारः' इति वेदोत्थेन न्यायेन ( ६।६।१।१–११ ) विसंवाददर्शनात् कल्पसूत्रकारवाचां वेदादेव अनृतत्वावगतिः इत्यर्थः । सु. पृ. २४२ ) **'सर्वत्र च प्रयुक्तत्वादित्यनेन निदर्श्यते । संनिधानाच्च शास्त्रस्य विसंवादः स्फुटः स्फुटः ॥'** तत्र यत् वृत्तिकारेणोदाहरणं पार्वणस्थालीपाकविषयगृह्यसूत्रकारवचनश्रवणात् दर्शपूर्णमासचरककल्पसूत्रकारवचनाध्यारोपेण दत्तम्, ( अत्र सुधायां दर्शपूर्णमासयोः चरकं गमकं कल्पसूत्रकारवचनम् इति व्याख्यातम् । चरकशाखीयकल्पसूत्रकारवचनम् इति तु व्याख्यातुं युक्तं भाति–के. ) तत् अत्यन्तारोपाभिभवाभिप्रायप्रयुक्तम्, इत्यनादृतम् । गृह्यकारवचनं हि एतत् । अक्षतहोमे तावत् 'आ सायमाहुतेः प्रातराहुतिर्नात्येति, आ प्रातराहुतेः सायमाहुतिः' इति । अतश्च यथैवैतत् अग्निहोत्रविषयत्वेन न कल्प्यते ( प्रदोषान्तो होमकालः, सङ्गवान्तः प्रातः, तमतिनीय 'चतुर्गृहीतमाज्यं जुहुयात्' इति अग्निहोत्रस्य स्वकालातिक्रमे प्रायश्चित्तस्मरणात् । सु. पृ. २४३ ), तथैवैतदपि कर्म 'आ पौर्णमास्याः अमावास्या नात्येति, आ अमावास्यायाः पौर्णमासी' ( इत्येतदपि ) दर्शपूर्णमासविषयं न कल्पनीयमिति । तस्मादन्यत् उदाहार्यम् । ( 'सर्वाणि हवींषि पर्यग्नि करोति' इति कल्पसूत्रकारैः पर्यग्निकरणस्य सर्वत्र हविःषु प्रयुक्तत्वात् तद्विरुद्धस्य च 'पुरोडाशं पर्यग्नि करोति' इति शास्त्रस्य संनिधानात् इत्येवं व्याख्येयमित्यर्थः । सु. पृ. २४३ )

**शा**–– अत्र कल्पसूत्राण्युदाहृत्य किं प्रमाणमप्रमाणं वेति भाष्ये विचारितम् । ननु स्मृत्यधिकरणे एव सर्वेषामेव वेदातिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता वृत्ता । तत्र केचिदाहुः, तत्र अशब्दतया पूर्वपक्षमुक्त्वा शब्दानुमानेन सिद्धान्तितम् । एतानि च वैदिकार्थनिबन्धनत्वात् प्रत्यक्षशब्दानि, इति न तत्रोदाहरणम् । स्मृतयो हि प्रायेण इतस्ततोविप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधिमूलाः । तद्यथा 'नयनं दक्षिणं दीक्षितः पूर्वम् अङ्क्ते, सव्यं हि मनुष्याः पूर्वमञ्जते' इति प्रसिद्धवत् सव्यस्य पूर्वमञ्जनं निर्दिष्टम्, तच्च दृष्टप्रयोजनाभावात् प्रमाणान्तरेणाप्राप्तम् । इत्यनुपपत्त्या विधिः कल्प्यते ( 'मानुषीभिः सव्यनयनाञ्जनं प्रथमं कर्तव्यम्' इति ) । तथा 'तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति' ( आदित्यग्रहस्य द्विदेवत्यग्रहेभ्यो ग्रहणं सार्थवादकं श्रूयते 'देवा वै यज्ञात् रुद्रमन्तरायन्, आदित्यानन्वाक्रमत, ते द्विदेवत्यान् प्रापद्यन्त, तान् न प्रतिप्रायच्छन्, तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति, तस्मात् द्विदेवत्येभ्यो गृह्यते' इति । अत्र शरणागतो न प्रत्यर्पणीयः इति विधिरनुमीयते ) । 'तस्मात् गर्भेणाविज्ञातेन ब्रह्महा' ( 'अविज्ञातो वा एषः गृह्यते यदाग्रयणस्थाल्या गृह्णाति वायव्येन जुहोति' इति विधिशेषः 'तस्मात् गर्भेणाविज्ञातेन ब्रह्महा' इति । आग्रयणाख्यो ग्रहः स्थाल्या ग्रहणसमये 'ये देवा दिवि' इति मन्त्रेण ऐन्द्रवायवादिमन्त्रवत् देवताविशेषविज्ञानाभावात् अविज्ञातो गृह्यते । अतः स्थाल्या गृहीतस्य न स्थाल्यैव होतव्यम्, किन्तु स्थालीगतं सोमं वायव्येन ऊर्ध्वपात्रेण पुनर्गृहीत्वा तेन जुहुयात् । तथा



सति 'वाममद्य सवितः' इत्यादिषु पुनर्ग्रहणमन्त्रेषु होमार्थमन्त्रेषु च सवित्रादिदेवताविशेषविज्ञानसद्भावेन अज्ञातत्वदोषः परिहृतो भवति । अविज्ञातत्वस्य च दोषत्वम् 'तस्मात् गर्भेण' इति वाक्यशेषेण प्रतिपाद्यते । गर्भिणीवधे गर्भस्य स्त्रीपुंसभावेन विशिष्याविज्ञानात् 'ब्रह्महा भवति' इति गर्भस्याविज्ञातत्वेन ब्रह्महत्याऽभिधानात् । अत्र च अविज्ञातगर्भवधे सिद्धवत् ब्रह्महत्यानिर्देशान्यथाऽनुपपत्त्या तत्र ब्रह्महत्यातुल्यप्रायश्चित्तविधिः 'हत्वा गर्भमविज्ञातमेतदेव व्रतं चरेत्' इति स्मृतिमूलभूतः अनुमीयते– ) १।३।७ ।

**सोम**–– पिकादिशब्दार्थनिर्णये म्लेच्छप्रसिद्धेः स्वातन्त्र्येण प्रामाण्यवत् अमीषामपि स्वातन्त्र्येण प्रामाण्यम् इत्युत्थानात् **संगतिः** । **सूत्रार्थस्तु**–प्रत्यक्षशास्त्रविरोधे पूर्वपक्षापरपक्षमात्रे दर्शपूर्णमासकर्तव्यतापरकल्पसूत्रस्य अप्रामाण्यं सूत्रकारेणैव प्रतिपादितम्, इति तत्समानन्यायत्वात् 'अविशेषादुभौ वा' इत्यादेरपि अप्रामाण्यं तदनुमतम् इत्यर्थप्रयोगसूत्रं स्वतः प्रमाणम् इति चेत् इति ।

**वि**–– 'अपौरुषेयाः कल्पाद्याः कृत्रिमा वा, न कृत्रिमाः । श्रुतिस्मृत्योर्धर्मबुद्धेः स्वतो मात्वं यतः समम् ॥, पुंनामोक्तेः पौरुषेयाः काठकाद्यसमत्वतः । तत्रोपलेभिरे केचिदापस्तम्बादिकर्तृताम् ॥'

**भाट्ट**— स्मृतीनां कल्पसूत्राणां वा, षडङ्गानामेव वा, शाक्यादिग्रन्थानां वा वेदत्वं वेदतुल्यत्वं वा भवतु । न श्रुत्यादिमूलकत्वम्, गौरवात् नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तेश्च । अङ्गानां तु 'षडङ्गमेके' इति स्मृतेरपि वेदत्वम् । बुद्धबौधायनशाक्यादिसमाख्या तु काठकादिवत् प्रवचननिमित्तत्वेनापि उपपद्यते । **इति प्राप्ते**, दृढकर्तृस्मरणात् काठकादिवत् प्रवचननिमित्तत्वानुपपत्तेः, नैषां वेदत्वं वेदतुल्यत्वं वा । प्रतिमन्वन्तरं च एवंविधानां ग्रन्थानां सत्त्वात् नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः । 'षडङ्गमेके' इति तु परमतोपन्यासः एकपदश्रवणात् । तस्मादेतेषां स्मृत्यधिकरणन्यायेन ( १।३।१ ) वेदमूलकत्वमेव । शाक्यादिग्रन्थानां तु तदसंभवादाभासत्वमेव । **प्रयोजनम्** पूर्वपक्षे कल्पसूत्रादीनां वेदत्वे वेदतुल्यत्वे वा यत्र प्रत्यक्षश्रुतिविरोधः, तत्र विकल्पः । यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासमूलकं वचनम्, तत्रापि वचनत्वादेव तदनुष्ठानम्, न्यायोपन्यासस्तु हेत्वधिकरणन्यायेन अर्थवादः। सिद्धान्ते तु प्रत्यक्षश्रुतिविरोधे वा न्यायविरोधे वा यावच्छ्रुतिदर्शनम् अननुष्ठानलक्षणमप्रामाण्यम्। श्रुतिदर्शनोत्तरं तु विकल्पादि । यत्र तु न्यायोपन्यासरहितं मीमांसान्यायविरुद्धं च स्मृतिवचनम्, तत्र श्रुतिमूलत्वसंभवेन वचनविरोधे न्यायस्यैव आभासत्वात् तदर्थः एवानुष्ठेय इति । अत्र सर्वत्रोदाहरणानि मूलोक्तोदाहरणदूषणानि चास्मत्कृतकौस्तुभे द्रष्टव्यानि ।

**मण्डन**– 'न कल्पसूत्राण्यनपेक्षमाणम् ।'

**शंकर**–– 'कल्पसूत्रास्वतन्त्रता ।' १२ । स्मृतीनामस्वतन्त्रत्वम् । १३, । अङ्गानामस्वतन्त्रता । १४ । शाक्यादेश्चास्वतन्त्रत्वम् । १५ । '

**अत्र कुतूहलम्** —अत्रेदं चिन्त्यम् । 'सर्वोऽपरपक्षः पूर्णमासस्य, सर्वः पूर्वपक्षो दर्शस्य' इतिकल्पसूत्रम् 'अमावास्यायाममावास्यया यजेत' इत्यादिप्रत्यक्षश्रुतिविरोधात् अप्रमाणम् इत्यनुपपन्नम् । पूर्वपक्षापरपक्षयोरपि दर्शपूर्णमासकर्मकालत्वस्य प्रत्यक्षसिद्धत्वात् । एवं हि उदाहरन्ति श्रुतिवाक्यं बोधायनापस्तम्बसत्याषाढभारद्वाजाः " अथैकेषां 'वि वा एतस्य यज्ञश्छिद्यते, यस्य यज्ञे प्रतते अन्तरेतामिष्टिं निर्वपन्ति । य एवासौ आग्नेयोऽष्टाकपालः पौर्णमास्यां योऽमावास्यायाम्, तमग्नये पथिकृते कुर्यात्, तेनैव पुनः पन्थानमवैति, न यज्ञं विच्छिनत्ति' इति विज्ञायते " इति । अस्यार्थः—'अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इत्यादिना दर्शपूर्णमासयोः स्वकालातिक्रमे पाथिकृतीष्टिः प्रायश्चित्तत्वेन विहिता तैत्तिरीयादिशाखासु । तस्यास्तावत् अतिपन्नेन पूर्णमासेन दर्शेन च समानतन्त्रता शाखान्तरे विहिता । तन्निन्दापूर्वकं दार्शपूर्णमासिकाग्नेययागस्यैव पथिकृद्गुणकत्वं शाखाऽन्तरे विधीयते 'यस्य यज्ञे' इत्यादिना । यस्य यजमानस्य दर्शपूर्णमासयोः अन्यतरस्मिन् अतिपन्ने यज्ञे प्रतते

कालान्तरे प्रक्रान्ते सति अन्तः--मध्ये एतम्-पाथिकृतीमिष्टिं निर्वपन्ति-कुर्वन्ति ऋत्विजः, एतस्य यजमानस्य उपक्रान्तो यज्ञो विच्छिद्यते-विगुणः स्यात् । अतः योऽयम् आग्नेययागः अमावास्यायां च पौर्णमास्यां चाच्युतो विहितः, तम् अग्नये पथिकृते कुर्यात्, तेन पथिकृत्त्वगुणेन पन्थानम्-कालातिक्रमतः प्रच्युतं स्वर्गस्य पन्थानं पुनरवैति-प्राप्नोति । न च उपक्रान्तं यज्ञं विच्छिनत्ति-न विगुणीकरोति इति अन्येषां शाखिनां श्रुतिवाक्यं विज्ञायते-प्रत्यक्षं ज्ञायते इति । अत्र शाखाऽन्तरे समानतन्त्रतानिन्दा नहिनिन्दान्यायेन पथिकृत्त्वगुणविधिप्रशंसाऽर्थैव. न तु एतन्निषेधार्था । समानतन्त्रता ह्येषा शाखान्तरे विद्यते वा, न वा ? न द्वितीयः, अप्रसक्तत्वेन तन्निषेधायोगात् । नाद्यः शाखान्तरे विहितत्वेन नित्यवत् प्रतिषेधानुपपत्तेः । पाक्षिकनिषेधे च पक्षान्तरे तत्सत्त्वात् तन्निन्दाऽनुपपत्तेः । नहि विहितत्वे निन्दा युज्यते । अतः प्रशंसाऽर्थैव सा । तया च निन्दया समानतन्त्रताऽपि शाखाऽन्तरे अनुमीयते, अतो विकल्पः । तदाहुर्बोधायनादयः कल्पकाराः 'समानतन्त्रे वा मुख्यः कार्यः' इति । यदि च स्वकालातिक्रमे सति कालान्तरे अतिपन्नयोः दर्शपूर्णमासयोः अनुष्ठानमेव न स्यात्, तर्हि इदं सर्वम् अभित्तिचित्रायितमेव स्यात् । अतो बोधायनादिबहुमुनिदृष्टश्रुत्यन्यथाऽनुपपत्त्या कालान्तरेऽपि दर्शपूर्णमासयोः करणमनुमीयते । किञ्च 'अथातोऽनुग्रहान् व्याख्यास्यामः' इत्युपक्रम्य 'सायंहोमं वा उपोदयं जुहुयात्, प्रातर्होमं वा उपास्तमयम्, कालेन कालम् अनतिक्रम्य दर्शपूर्णमासयोः अग्निहोत्रस्य च न स्कन्दते न व्यथते इति विज्ञायते' इति संक्षेपश्रुतिमुदाहृत्य तां व्याकुर्वन् उदाहरणेषु विस्तारयामास बोधायनः 'आ प्रातराहुतिकालात् सायमाहुतिकालो नातीयात्' इत्यादिना 'ओत्तरवसन्तज्योतिष्टोमस्य कालात् पूर्ववसन्तज्योतिष्टोमस्य कालो नातीयात्' इत्यन्तेन । पूर्वस्य कर्मणः कालेन उत्तरस्य कर्मणः कालमनतिक्रम्य अन्तरालकाले दर्शपूर्णमासयोः अग्निहोत्रस्य चकारात् तज्जातीयानाम् आग्रयण-वैश्वदेव-वरुणप्रघास - साकमेध - शुनासीरीय - निरूढपशुबन्ध - ज्योतिष्टोमानां चानुष्ठानं शाखाऽन्तरे विज्ञायते इत्यर्थः ।

अतः '**सर्वोऽपरपक्षः पूर्णमासस्य**' इति कल्पसूत्रमिदं प्रत्यक्षश्रुतिविरोधात् अप्रामाण्ये कथमुदाहृतं **भाष्यकृता** । यच्च **वार्तिकादिग्रन्थेषु** 'अविशेषादुभौ वा' इति कात्यायनसूत्रे सर्वपुरोडाशानां चतुर्धाकरणवचनम् 'आग्नेयं चतुर्धा करोति' इति प्रत्यक्षश्रुतिविरोधात् 'शेषस्तु गुणसंयुक्तः साधारणः प्रतीयेत' इति तृतीयाद्यपादीयान्त्याधिकरणपूर्वपक्षन्यायाभासमूलकम् अप्रमाणम् । **तथा** 'स कृताकृतः' इत्यापस्तम्बसूत्रे सवनीयपशौ पशुपुरोडाशविकल्पवचनम् 'सवनीये छिद्रापिधानार्थत्वात् पुरोडाशो न स्यात् अन्येषामेवमर्थत्वात्' इति द्वादशिकद्वितीयपादीयद्वितीयाधिकरणपूर्वपक्षमूलकम् अप्रमाणम् 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने सवने, अङ्गैस्तृतीयसवने' इति प्रत्यक्षश्रुतिविरोधात् । **तथा** तीव्रसुति (नाम सोमयागे) 'यावद्यूपं वेदिमुद्धन्ति' इति आपस्तम्बादिसूत्रे वेदेः यूपाङ्गत्ववचनम् 'अर्धमन्तर्वेदि, अर्धं बहिर्वेदि' इति प्रत्यक्षश्रुतिविरोधात् 'तथा यूपस्य वेदिः' इति तार्तीयीकसप्तमपादीयाधिकरण-(६) पूर्वपक्षन्यायाभासमूलकम् अप्रमाणम् । **तथा** यूपैकादशिन्याम् 'जाघनीमिश्च पत्नीः संयाजयन्ति' इत्यापस्तम्बादिवचनम् 'जाघन्या पत्नीः संयाजयन्ति' इति प्रत्यक्षश्रुतिविरोधात् 'द्रव्यविकारात्तु पूर्ववदर्थकर्म स्यात्' इति द्वादशिकचतुर्थपादीयाधिकरण-(६) पूर्वपक्षन्यायाभासमूलकम् अप्रमाणम् इत्यादि प्रपञ्चितम् (वार्तिकादिग्रन्थेषु इति पूर्वेण संबन्धः) तदुद्धारस्तु तत्तदधिकरणे निरूपयिष्यते । तथा च किञ्चित्कल्पसूत्रवाक्यान्तरम् उदाहरणान्तरम् अत्र अन्वेषणीयम् इत्यास्तां तावत् । १।३।७।१०-१२ पृ. ६९-७१.

* ननु कल्पसूत्रं वेदे एवान्तर्भवेत्... । न, **पौरुषेयत्वस्मरणात्** । ...ताविमौ पूर्वपक्षसिद्धान्तौ **कल्पसूत्राधिकरणे** स्पष्टतरं द्रष्टव्यौ । **वैजयन्ती.** १।१।१.

* न हि शाक्यादिग्रन्थानां वेदमूलत्वं क्वचिन्निराकृतम् । कल्पसूत्राधिकरणे वेदवत् स्वातन्त्र्यस्य प्रत्यक्षसूत्रे च प्रत्यक्षमूलकत्वाङ्गीकारेण धर्मे प्रामाण्यस्य निराकरणात् (पूर्वपक्षे इदमुक्तम्) । **कौ.** १।३।२।४ पृ. २७,

* प्रकीर्णानां शाखाऽन्तरस्थानां विधीनाम्, अर्थवाद-



मिश्राणां च तदुद्धारेण एकत्रोपसंहारः, न्यायलभ्यानां चार्थानां तात्पर्यनिर्णयः प्रयोजनम् इति पूर्ववदेव वेदाङ्गत्वम् इति कल्पसूत्राधिकरणे वक्ष्यते । १।३।१।२ पृ. १०,

* ब्रह्मयज्ञाध्ययनस्य कल्पसूत्राधिकरणे (वा. पृ. १७७) 'कर्माभ्यासानुसंधानं विध्यर्थश्चानुगम्यते' इत्यत्र प्रयोगप्राशुभावोपयोगिकर्मानुसंधानप्रयोजनस्य वक्ष्यमाणत्वेन केवलदृष्टार्थत्वम् । १।३।३।७ पृ. ३७.

* **कल्प्यात् क्लृप्तं बलवत्** । चोदकप्राप्तः क्रमः क्लृप्तः, प्रयोगवचनात् तु कल्प्यः । ततश्च अध्वरकल्पायां पूर्वम् आग्नेयविकारो बार्हस्पत्यचरुनिर्वापः, ततः सारस्वताज्यनिर्वापः । **के.** ५।१।१०।१७-१८. * कल्प्यात् क्लृप्तं बलीयः इति व्रताधिकरणन्यायस्वरूपम् । **के.** * कल्प्यात् क्लृप्तं बलीयः । 'न च क्लृप्ते उपपद्यमाने कल्प्यः शक्यः कल्पयितुम् ।' **भा.** ३।८।३।६.

* **कल्प्यात् प्रकृतप्रत्ययो** बलवान् । **टुप्.** ६।५।१।२.

* **कल्प्योपकारात्** क्लृप्तोपकारं बलीयः । वैकृतोपहोमेभ्यः प्राकृतचोदकप्राप्तनारिष्ठहोमाः प्रबलाः । **के.** ५।२।९।१७-२०.

* **कवत्यः ऋचः** तिस्रः ककारघटिताः 'कया न श्चित्र० (ऋसं. ४।३१।१ सासं. ६८२) कस्त्वा सत्यो० (ऋसं. ४।३१।२ सासं. ६८३) अभी षु णः० (ऋसं. ४।३१।३ सासं. ६८४) इति । **वि.** ७।२।१.

* **कवषशब्दः** अध्रिगुप्रैषस्थः कार्त्स्न्यपरः । **भा.** ९।४।५।२५-२७.

* **कविभिर्निर्मिते** गद्ये तत्तद्देशीयभाषासु च चतुर्विंशत्यक्षरसंख्यया गायत्रीछन्दस्कत्वं भवत्येव । **वि.** ८।३।६.

* **क-शब्दः** कश-शब्दस्यैकदेशः समुदायप्रत्ययमादधाति । **भा.** ९।४।३।२२.

* **कश-शब्दो** मेदसि प्रसिद्धः । यथा कशवाहिनो रथाः मेदोवाहिनः इति गम्यते । **भा.** । ९।४।३।२२.

* **कशाङ्कुशप्रतोदैः** अश्वेभवृषभाः प्रेर्यन्ते (क्रमेण) । **ऋजु.** पृ. १५३.

* **कश्यपगोत्राणां** नाराशंसो द्वितीयः प्रयाजः । **वि.** ६।६।१. * **कश्यपशब्दः** अध्रिगुप्रैषस्थः कार्त्स्न्यपरः । **भा.** ९।४।५।२५-२७.

* '**कषायमवघ्नन्ति**' इति विनाऽपि तण्डुलैः प्रयोगो दृश्यते अवहन्तेः । न चायं प्रयोगः गौणः विशेषाभावात् । (कषायप्रकृतिद्रव्यम् अवघातेन संस्करोतीत्यर्थः । **के.**) **भा.** ११।१।६।२८.

§ **कष्टं कर्मेति न्यायः** । कर्मणो दुःखहेतुत्वम् अनुभवसिद्धमिति भावः । **साहस्री.** १७४.

* अग्निहोत्रादिकर्मसु इष्टसाधनत्वावगतिवत् अनिष्टसाधनत्वावगतेरपि '**कष्टं कर्म**' इति **न्यायेन** लोकसिद्धत्वात् प्रवृत्तिनिवृत्त्योर्मध्यस्थ उदासीनैव, न प्रवर्तेत । **सोम.** १।२।१.

* **कांस्येन** ब्रह्मवर्चसकामस्य प्रणयेत् दर्शपूर्णमासयोः । **भा.** ४।३।२।४.

§ **कांस्यभोजिन्यायः** । अस्यायमर्थः । यथा मया नित्यं गुरूच्छिष्टं भोक्तव्यं कांस्यपात्रे च भोक्तव्यमिति नियमवतो विनेयस्य नियमाभङ्गाय गुरुर्नित्यं कांस्यपात्रे भुङ्क्ते इति । यद्यप्ययं शास्त्रीयः, तथाप्येतद्व्यवहारस्य लौकिकत्वात् सुन्दोपसुन्दन्यायवल्लौकिकेषु परिगणितः इति । **साहस्री.** ३३८.

* आग्रयणे ऐन्द्राग्नादीनि मुख्यानि हवींषि, तेषां बर्हिः प्रसूनम् अप्रसूनं वेति न कश्चिन्नियमोऽस्ति । द्यावापृथिव्य एककपालो जघन्यं हविः, तस्य वैश्वदेवैककपालप्रकृतिकत्वात् प्रसूनं पुष्पितं बर्हिः इति नियमः प्राप्तः । तत्र मुख्यत्वात् बहुत्वाच्च ऐन्द्राग्नादीनां तदनुरोधादनियमप्राप्तौ जघन्यस्यापि द्यावापृथिव्यस्य धर्मः प्रसूननियमः आदर्तव्यः, प्रसूनोपादानेऽपि ऐन्द्राग्नादीनामवैगुण्यात् अनियमे च द्यावापृथिव्यस्य वैगुण्यप्रसङ्गाच्च । यथा अनियतपात्रभोजिनो गुरोः नियतकांस्यभोजिनः शिष्यस्य च क्व चिदेकपात्रभोजनप्राप्तौ गुणभूतस्यापि शिष्यस्यानुरोधेन कांस्यपात्रनियम आदीयते तद्वत् । तस्मादाग्रयणे पुष्पितमेव बर्हिरिति सिद्धान्तः । **पराक्रमः.** २९।२-३०।१. * गुरुणा यथा कांस्यपात्रभोजननियमवान् छात्रोऽनुस्रियते तथा विदुषा अज्ञोऽनुसर्तव्यः । **संग्रहः.** * कांस्यभोजिन्यायः प्रधानपीडायां नावतरति इति द्वादशे वक्ष्यते । **कु.** ६।३।१८।३८. * नचात्र कांस्यभोजिन्यायः अङ्गवाक्यानां शक्तविषये अर्थवत्त्वेन गुणस्य

निरवकाशत्वाभावात् । **सोम.** ६।१।२. * ननु अविरोधे कांस्यभोजिन्यायः । इह उपासनासु प्रधानं फलभाजा साक्षादेव कर्तव्यम् इति प्रागेव दर्शनात् विरोधोऽस्ति । **परिमल.** ३।४।१३।४४–४५ ब्रसू. * यत्र हि गुणानुरोधित्वेऽपि प्रधानस्य न बाधः तत्रैव कांस्यभोजिन्यायः। **कु.** १।४।१९।२०. * 'अक्ताः शर्करा उपदधाति तेजो घृतम्' घृतनियमे हि न विध्युद्देशो विरुध्यते अर्थवादोऽप्यनुगृह्यते । अतः **कांस्यभोजिन्यायेन** विध्युद्देशस्य प्रधानस्यापि गुणभूतार्थवादानुसारेण घृते संकोचः । ३।३।१।१. * आख्यातस्य उत्पत्तिप्रयोगयोरुदासीनतया नाम्ना प्रसिद्धाग्निहोत्रप्रत्यभिज्ञानेन उत्पत्तेः प्रतिरोधात् कांस्यभोजिन्यायेनापि आख्यातस्य प्रयोगविधिपरता सिध्यति । **आभरणं.** ३।३।१४।२५ ब्रसू. * उत्पत्तिविधेर्मन्त्रेण विना अपर्यवसानेऽपि प्रयोगवचनात् मन्त्रस्य नित्यग्रहणात्, अनेन मन्त्रेण प्रकाशितं पशुमालभेत इत्येवमुभयोरेकवाक्यतापर्यवसानात् मन्त्रानुरोधेऽपि विधिवाक्यविरोधाभावात् कांस्यभोजिन्यायेन विधेश्छागविषयत्वम् । **सोम.** ६।८।१०. * कामश्रुतिः सर्वाङ्गोपसंहारसमर्थेऽपि उपपन्नैव तत्राविरोधात् कांस्यभोजिन्यायेन तदनुरोधेन अङ्गिवृत्तिः । **विवि.** पृ. ३१९ । कामिपदं हि कामोपाधिना प्रतिपुरुषवृत्त्यङ्गविधिविरोधेन समर्थं नियम्यमानमपि न विरुध्येत कांस्यभोजिन्यायेन । तद्यथा उपाध्यायः प्रधानो नित्यं तत्पात्रभोजी, शिष्यस्तु अप्रधानः कांस्यपात्रे एव भुङ्क्ते । तत्र प्रवृत्तिलाघवात् एकस्मिन् पात्रे उपादातव्ये यदि प्रधानोपाध्यायानुरोधात् यत्किञ्चित् पात्रमुपादीयेत शिष्यस्य भोजनं न संपद्येत, कांस्यपात्रे तु उपादीयमाने नानियतपात्रभोजिन उपाध्यायस्य भोजनविरोधः । तेनाविरोधेन प्रधानमपि गुणानुरोधात् नियम्यते एव इति तदनुरोधेन अङ्गविध्यविरोधे अङ्गिविधिवृत्तिः इति । **कणिका.** पृ. ३१९–३२०. * गुणानुरोधेन क्व चित् प्रधाननयनम् इति कांस्यभोजिन्यायेन सूच्यते । **कु.** १।४।१९।२०. * दध्युपसेचनस्य इष्यमाणत्वेनावगतस्य भोजयव्यञ्जनार्थत्वेनेष्यमाणतया 'षाष्टिकान् पयसा भुञ्जीत' इति व्यञ्जनार्थपयःसाहचर्येणावधारणात् भोजनप्रयुक्तत्वेन तदभावेऽनुष्ठानासिद्धेः कांस्यभोजिन्यायेन उपसेचननियमात् शालिभोजननियमावगतेः। **सु.** पृ. ८९०–९१. * 'धार्यो गतश्रिय आहवनीयः' इति सर्वकर्मार्थेनापि धारणेन आक्षिप्तम् उद्धरणं कांस्यभोजिन्यायेन अग्निहोत्रोपकारकतया समन्त्रकमेवाक्षिप्यते । **भाट्ट.** ९।४।६. * प्रकरणानुग्रहे वाक्यस्यात्यन्तबाधाभावात् कांस्यभोजिन्यायेन अत्र प्रकरणानुग्रह एव युक्तः इत्यपि निरस्तम् । प्रकरणानुग्रहे यज्ञशब्दस्य लक्षणाऽनुपपत्त्या श्रुतिबाधप्रसङ्गात् । **सोम.** ३।१।१२. * प्रधानत्वादेव च गुणद्रव्याभ्याम् ( आरुण्यैकहायनीभ्याम् ) द्रव्यान्तरगुणान्तराक्षेपं क्रयणं निरुणद्धि । कांस्यभोजिन्यायेन वा अमुख्योऽपि अनियमं वारयेत्, किमुत मुख्य एव सन् । **वा.** ३।१।६।१२ पृ. ६९४. * ब्रह्मगतफलदातृत्वप्रधानत्वयोः कर्मस्विव आदित्याद्युपासनेष्वपि संभवात् कांस्यभोजिन्यायेन लौकिकन्यायानुगृहीतत्वमुक्तम् ( उत्कृष्टदृष्टिर्हि निकृष्टेऽध्यसितव्या यथा राजदृष्टिः क्षत्तरि इति लौकिको न्यायः)। **कल्पतरुः.** ४।१।४।५ ब्रसू., * यजमानगामिता फलस्य साक्षात्तत्कर्तृकत्वे परिक्रीतर्त्विक्कर्तृकत्वे च उपास्तीनां संभवति । ततः सा कांस्यभोजिन्यायेन लिङ्गदर्शनमनुग्रहीतुं परिक्रयद्वारकं कर्तृत्वमाश्रयति । ३।४।१३।४४–४५ ब्रसू. * विध्युद्देशाङ्गत्वेऽपि उपक्रमस्थेनार्थवादेन दातृविषयत्वेऽवधारिते विध्युद्देशस्य विषयावधारणे व्यापाराभावात् कांस्यभोजिन्यायेन अर्थवादानुरोधवृत्तित्वाविरोधमाशङ्क्य...। **सु.** पृ. १४९७. * साम्नो गुणत्वेऽपि तदनुसरणेऽपि तृचशास्त्रस्योपपत्तेः अत्यन्तानुपपद्यमानगुणानुसारेण कांस्यभोजिन्यायेन तृचशास्त्रवर्णनमेव युक्तम् इति संशरविश्लेशदोषपरिहारार्थं समास्वेव गानम् ! **सोम.** ९।२।४. * सोमापौष्णे चरौ यदि पूषानुरोधेन भागान्तरमपि कांस्यभोजिन्यायेन पिष्येत, एकस्यामेव च स्थाल्यां पच्येत, तर्हि भागसंकरात् अन्यदीयभागेऽन्यस्मै दीयमाने वैगुण्यमापद्येत । **कु.** ३।३।२०।३४. * हीष्निधनविधेः समानजातीयसौभरस्थले शाखाऽन्तरायोगात् निधनान्तरव्यावृत्तिफलकत्वेऽपि हीष्भिन्ननिधनमुक्तविजातीयसौभरस्थले तस्य वृष्ट्यर्थताव्यावृत्तिफलकत्वमपि कांस्यभोजिन्यायेन न



विरुध्यते । अत एव यत्र न कांस्यभोजिन्यायः यथा कारीर्यादौ, तत्र न तस्य वृष्ट्यर्थता व्यावर्त्यते । **कौ.** २।२।१३।२८. * पशुत्वसामान्यस्य च कृत्स्नस्य छागेऽपि सद्भावाविरोधेन **कांस्यभोजिन्यायावतारात्** । **पराक्रमः.** ४१।२.

⧗ **काकतालीयन्यायः**। अयं न्यायोऽष्टधालुप्तोपमाऽलङ्कारमीमांसायां धर्मोपमानवाचकलुप्तोपमोदाहरणे 'यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः । तदेतत् काकतालीयमवितर्कितसंभवम् ॥' इति । 'अभवत् किं ब्रवीमि ते' इति वा पाठः । इति पद्यं प्रकृत्योदाहृतः अप्पयदीक्षितैः **कुवलयानन्दे** इष्टावाप्तौ। **वेणीसंहारनाटके** तु, 'फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति' इत्यत्र अनिष्टावाप्तौ उदाहृतः । काकतालशब्दौ समासविषये काकतालसमवेतक्रियावर्तिनौ । तेन काकागमनमिव तालपतनमिव काकतालमिति 'समासाच्च तद्विषयात्' ( ५।३।१०६ ) इति ज्ञापकादिवार्थे समासः । इवार्थे समासाभावे तद्विषयादित्यनेन इवार्थविषयसमासानुवादस्य अनुपपन्नत्वात् तज्ज्ञापकत्वमिति । 'सह सुपा' (२।१।४) इति सूत्रेण वा समासः । उभयत्र काकागमनतालपतनयोरुपमेयं क्रमेण स्वस्य क्व चिद्गमनं तत्रैव रहसि तन्व्या अवस्थानम्, तेन च काकतालसमवेतक्रियापरयोः काकतालपदयोः इवार्थसमासेन स्वस्य तस्याश्च समागमः काकतालसमागमसदृश इति फलतीति । तादृशसमासानन्तरं च काकतालमिव काकतालीयमिति द्वितीयस्मिन्निवार्थे 'समासाच्च तद्विषयात्' इति सूत्रेण 'इवे प्रतिकृतौ' ( ५।३।९६ ) इत्यधिकारस्थेन छः प्रत्ययः । तथा च पतनदलितं तालफलं यथा काकेनोपभुक्तम्, एवं रहोदर्शनक्षुभितहृदया तन्वी स्वेनोपभुक्तेति तदर्थः । अयं न्यायः 'समासाच्च तद्विषयात्' इति सूत्रमहाभाष्येऽपि व्याख्यात इति । **साहस्री.** ५५.

* **यद्यपि** 'समासाच्च तद्विषयात्' इति सूत्रेण इवार्थविषयात् समासात् इवार्थेन छप्रत्ययेन निष्पादितः काकतालीयशब्दः उपमाद्वयगर्भः । तथा च काकतालयोरिव यादृच्छिको दस्युदेवदत्तयोः समागमः इत्येका समासार्थोपमा, तदानीमेव पतता तालेन काकस्येव दस्युना देवदत्तस्य वधः कृतः इत्यन्या तद्धितार्थोपमा चेति यत्रोपमाद्वयं तत्रैवास्य शब्दस्य संपूर्णार्थता, **तथापि** यादृच्छिकसमागममात्रेऽपि अस्य प्रचुरः प्रयोगो दृश्यते । **परिमळ.** पृ. १४. * **काकतालीयन्यायेन** संवादकारिणी का चन शक्तिः । यथा ऋतुमतीनां योषितां कासां चित् कस्मिंश्चिदृतौ गर्भधारणं इत्यादि । **श्वेताश्व. शंकरानन्दः** १।२. * फलार्थमपि संततफलकामेन **काकतालीयन्यायेन** पञ्चदशवर्षपर्यन्तद्विरावृत्तदर्शपूर्णमासप्रयोगानुष्ठाने तावतैव त्रिंशद्वर्षसाध्यप्रयोगसंख्यासंपत्तेः पञ्चदशवर्षपक्षस्तुतिरुपपन्ना भवति । **कौ.** २।३।४।९ पृ. ४०.

⧗ **काकदधिघातकन्यायः** । **संग्रहः.** ( उत्तरन्याये द्रष्टव्यम् ) ।

⧗ **काकदध्युपघातकन्यायः** । यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्युक्ते काकपदं दध्युपघातकमात्रलक्षकम्, एवं यत्र तात्पर्यवशेनेतरार्थपरत्वं तत्रास्य प्रवृत्तिः । **साहस्री.** १२४. 'नह्यन्नभक्षणाद् रक्ष्याः श्वमार्जारादयोऽत्र नः । तुल्यान्नाद्योपघातात्तु काकादेरपि वारणा ॥' तथा चाह, 'काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि चोदितः । उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' **वा.** ३।१।७।१४ पृ. ७१३.

⧗ **काकदन्तपरीक्षा ( – गवेषण ) न्यायः** । काकस्य दन्ताः सन्ति न वा, तेषां शौक्ल्यं न वेति विचारो यथा निष्फलः, एवं यत्र तत्रास्य प्रवृत्तिः । **साहस्री.** ३०४.

* **काकदन्तविचारो** निष्फलः । 'काकस्य कति वै दन्ता मेषस्याण्डं कियत्पलम् । गर्दभे कति रोमाणि व्यर्थैषा तु विचारणा ॥' 'काकदन्तविचारवत्' इति **विस्तरः** । ४।१।१.

* **काकनिलयनम्** अनभिधीयमानमपि देवदत्तगृहशब्दस्य स्वार्थमभिदधतः चिह्नभूततां प्रतिपद्यते । **वा.** १।३।९।३३ पृ. ३१७.

⧗ **काकपिकन्यायः** । 'काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः । प्राप्ते वसन्तसमये काकः काकः पिकः पिकः ॥' इति । **साहस्री.** ६५१.

'काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्' इति न्यायः। अत्यन्तनिकृष्टस्यातितुच्छस्यापि दुर्लभत्वेऽयं न्यायः प्रवर्तते इति। **साहस्री. ४९६.**

**काकाक्षिगोलकन्यायः।** काकस्यैकमेव चक्षुरिन्द्रियं गोलकद्वयेऽपि चाक्षुषप्रत्यक्षोपजनने हि उपकारकं भवतीति। 'न वेति विभाषा' (१।१।४४) इति सूत्रस्थः इतिशब्दः काकाक्षिगोलकन्यायेनोभाभ्यां संबध्यते। नेति निषेधः, वेति विकल्पः, विभाषायाः संज्ञीत्यर्थः। किञ्चोक्तं मुनीश्वरैः 'अविरोधिसुखे बुद्धिः स्वानन्दे च गमागमौ। कुर्वत्यास्ते क्रमादेषा काकाक्षिवदितस्ततः॥ एकैव दृष्टिः काकस्य वामदक्षिणनेत्रयोः। यात्यायात्येवमानन्दद्वये तत्त्वविदो मतिः॥ भुञ्जानो विषयानन्दं ब्रह्मानन्दं च तत्त्ववित्। विभाषाभिज्ञवद्विद्यादुभौ लौकिकवैदिकौ॥' इति। **साहस्री. २४८.**

* 'नाराधये मूलफलप्रसूनैः किं मय्यनागस्यपराधदृक् स्याः'। नाराधये किम्? अपराधदृक् किं स्याः? इति **काकाक्षिन्यायेन** किंशब्दस्य उभयत्राप्यन्वयः। **काशीखण्डः. रामानन्दः. ५।३३,** * 'रसालयं रसालैस्तैरशोकैः शोकहारिणम्' इति मूलम्। तत्र टीका– तैः रसालैः आम्रैः। काकाक्षिन्यायेन तच्छब्दस्य उभयत्र संबन्धात् तैः अशोकैः शोकरहितैः शोकहारिणं ब्रह्मलोकं विलोकयांचक्रे। १।८. * तेष्वदर्शनाद्विरोधस्य इति वा (सप्तमसूत्रस्य) समाप्तिः। अनन्तरसूत्रे विप्रतिपत्त्युपात्तविरोधाभावोक्तेः अनुपयुज्यमानत्वात्, इह च प्रक्रान्तविरोधाभावस्य अवश्यवचनीयत्वात् उपयोगसद्भावेऽपि च **काकाक्षिवत्** अनुषङ्गेण तन्त्रेण वोभयसंबन्धात्। **वा.** १।३।३।७ पृ. १९८. * 'मातुर्निवृत्ते रजसि, प्रत्तासु भगिनीषु च। निवृत्ते वाऽपि रमणे पितर्युपरतस्पृहे॥' (नारदः १४।३ घ. को. व्य. कां. पृ. ११५२) अत्र 'प्रत्तासु भगिनीषु च' इति काकाक्षिवत् रजोरमणनिवृत्त्योर्विशेषणम्। **व्यवहारमयूखः ४२.** * नकारश्च अभिधेय– भावनोक्तिभ्यां द्वाभ्यामपि काकाक्षिवत् संबध्यते। **सु.** पृ. १४०६। अनेन सुधाग्रन्थेन 'प्राधान्येनात्र ('ओदनः पच्यतां त्वया' इति वाक्ये) नोपात्ता धातुना ह्योदनक्रिया। मा भूत् तस्यैव कर्तृत्वमभिधेयं न भावना॥' इति वार्तिकश्लोके (पृ. ९१७) चतुर्थचरणे 'न' इति शब्दः 'अभिधेयं' इति पदेन च संबध्यते इति प्रतिपादितं दृष्टान्तेन। **के.**

**काकिणीन्यायः।** 'वराटकानां दशकद्वयं यत् सा तु काकिणी' इति। पद्येन विवृतोऽयम्, यथा– 'भिद्यन्ते भ्रातरो दाराः पितरः सुहृदस्तथा। एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः॥' इति। अस्यार्थः– भिद्यन्ते स्नेहं त्यजन्ति। कथम्भूताः एकास्निधाः एके एकप्राणास्ते च ते आस्निग्धा अतिप्रियाश्चेत्यर्थः। कुतः? काकिणिना। पुंस्त्वमार्षमिति। श्रीभागवते एकादशस्कन्धे त्रयोविंशाध्याये। **साहस्री. ५५७.**

**काचमणिन्यायः।** यथा मणिकाचयोः परीक्षाकाले एवायं काचोऽयं मणिरिति निश्चीयते, एवं यत्र विवक्षा, तत्रायं प्रवर्तते। उक्तं च– 'मणिर्लुठति पादेषु काचः शिरसि धार्यते। क्रयविक्रयवेलायां काचः काचो मणिर्मणिः॥' इति। **साहस्री. ६५०.**

* 'यथा च पद्मरागादीन् **काचस्फटिकमिश्रितान्।** परीक्षका विजानन्ति साधुत्वमपरे तथा॥ यथा रत्नपरीक्षायां साध्वसाधुत्वलक्षणम्। तथा व्याकरणात् सिद्धं साधुशब्दनिरूपणम्॥' **वा.** १।३।८।२७ पृ. २८२.

* **काञ्जिकादिनाऽपि** अन्येन अम्लेनापि दध्यभावे पयो घनीक्रियते। **भा.** ८।२।५।२२.

* **काठकम्** अग्निहोत्रं येन श्रुतं नासौ कदा चित् तैत्तिरीयकं शृणोति। (शृण्वन्नपि वा स्वशाखयैव प्रतिपन्नत्वात् तैत्तिरीयकप्रतिपत्त्यर्थमेवैतत् इति कल्पयित्वा न पुनःश्रुतिं मन्यते।) **वा.** २।४।२।१६. * काठकं नाम यजुर्वेदस्य शाखाऽन्तरम्। **वि.** १।१।८, * **काठककाण्व**माध्यंदिनतैत्तिरीयादिशाखासु दर्शपूर्णमासाख्यं कर्म आम्नातम्। तच्च रूपाद्यभेदात् एकं कर्म, न शाखाभेदेऽपि कर्म भिद्यते। २।४।२. * 'कृत्रिमं काठकाद्युक्तमाख्याप्रवचनादिति। न वाऽनादीनि भिद्यन्ते कर्माण्यादिमता सता॥' यद्यपि **काठकादेर्जातेः** नित्यत्वात् नित्यैवाख्या, तथापि प्रवचननिमित्तेयं स्मर्यते। **वा.** २।४।२।१२, * 'मन्त्रब्राह्मणतर्काणां समूहे **काठकादिके।** वेदत्वं वर्तते नित्यमनेकक्रतुगामिनि॥' ३।३।१।१ पृ. ८०४, * 'तथा न भिद्यते कर्म **काठकादिसमाख्यया।** ग्रन्थनामस्मृतेर्लोके निमित्तस्मरणादपि॥' ३।१।१।१ पृ. ६५०.



* **काठिन्यं** नाम न गुणान्तरम्, अपितु अवयवानाम् अविरलः संयोगः। **ऋजु.** पृ. १४९.

* **काणादाः** परमाणवो जगत्कारणमाहुः। **सु.** पृ. १३१.

* **काण्डक्रमः** अतिदेशविषयोऽपि। **टुप्.** ५।१।१।१ पृ. १२८७। न केवलमुपदेशविषयः। काण्डक्रमोऽपि भिन्नस्थानानां सतामेकस्थाने सहचोदितानां सर्वत्र प्रकृतौ विकृतौ च संभवति। **रत्न.** * काण्डक्रमः चोदकाश्रितत्वात् बलीयान् मुख्यप्रवृत्तिक्रमौ तु प्रयोगवचनाश्रितत्वात् दुर्बलौ। **टुप्.** ५।१।१०।१८, * काण्डक्रमः। भिन्नदेशानां हि सहानुष्ठाने चोदिते कः प्रथमः आरभ्यताम् इति यस्यैव बोधकः पदार्थो विद्यते, स प्रथमं क्रियते। ५।१।३।३.

* **काण्डवीणादिभिः** क्रियमाणमुपगानं दुन्दुभिनदनसमानजातीयम्। गवामयने महाव्रते 'पत्नय उपगायन्ति' काण्डवीणादिभिः। तत्र पत्न्यो न ऋत्विजां निवर्तिकाः। **वि.** १०।४।६.

**काण्डाधिकरणम्।** गुणजन्यकामानां याजमानत्वम्। तथाकामाधिकरणम्॥

**तथा कामोऽर्थसंयोगात्। ३।८।५।१३॥**

**भाष्यम्**— ज्योतिष्टोमे समामनन्ति 'यदि कामयेत वर्षेत् पर्जन्यः इति, नीचैः सदो मिनुयात्' इति। तत्र संदेहः किम् आर्त्विजः कामः, अथ याजमानः इति। किमेवम्? यदि कामयेत अध्वर्युः इति, उत यजमानः इत्येवं संशयः। किं प्राप्तम्? आर्त्विजः कामः, समाख्यानात्। अर्थी प्रकृतः अध्वर्युः। स वाक्येन संबध्यते मिनुयात् इति। तस्मात् आर्त्विजः काम इति। **एवं प्राप्ते, ब्रूमः।** तथा कामः स्यात्, यथा तपः। याजमानः कामः इत्यर्थः। कुतः? अर्थसंयोगात्। अर्थेन यागस्य साङ्गस्य यजमानः फलेन संबध्यते इति गम्यते उपग्रहविशेषात् (आत्मनेपदात्) 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। उपग्रहविशेषाच्च (परस्मैपदात्) मिनुयात् इति अध्वर्युः परार्थ (र्थः) इति गम्यते। **अथ** यदुक्तं प्रकृतेन अर्थिना सह एकवाक्यत्वात् इति, **उच्यते।** एवमपि प्रकृतेन अर्थिना सह एकवाक्यता यजमाने कामयमाने मिनुयात् इति।

**वा**— प्रधानकामस्य 'यजेत' इत्यात्मनेपदात् सामानाधिकरण्यात्, आधानगताच्च आत्मनेपदात् प्रधानकर्तृविषयत्वे अन्यतः (शास्त्रफलाधिकरणात् ३।७।८) सिद्धे, ये गुणकामाः सदोमानविशेषादिषु श्रुताः, तेषु 'मिनुयात्' इत्यनेन समानकर्तृकत्वात् अविरुद्धया समाख्यया अध्वर्युविषयत्वे प्राप्ते, प्रधानगतेन आत्मनेपदेन समस्तप्रयोगविषयः फलसंबन्धो यजमानविषयोऽवगम्यते इति 'यदि कामयेत यजमानः' इति प्रकरणात् अवधार्य तद्गामित्वं गम्यते। तथा च अध्वर्युव्यापारे परस्मैपदमुपपत्स्यते। अन्यथा 'डुमिञ् प्रक्षेपणे' इत्यस्य कर्त्रभिप्रायक्रियाफलविवक्षायां ञित्वात् आत्मनेपदं स्यात्। अनया च श्रुत्या सामानाधिकरण्यं वाक्यगम्यं बाधितमित्यदोषः। तद्वशेन वा यजमानप्रार्थनानुसारो यः अध्वर्योः कामः 'एष मे यजमानो वृष्टिं प्राप्नुयात्' इति, तदपेक्षया सामानाधिकरण्यमविरुद्धम्। तथाशब्देन च पूर्वाधिकरणात् एतावत् अतिदिश्यते 'समाख्यया न नियम्यते' इति।

**व्यपदेशादितरेषां स्यात्। १४॥**

**भाष्यम्**— यत्र भवति व्यपदेशः तत्र आर्त्विजः कामो भवति। यथा, 'उद्गाता आत्मने वा यजमानाय वा यं कामं कामयते, तमागायति' इति। यदि आत्मने इति यजमानायेति परिकल्प्येत, यजमानग्रहणं वाशब्दश्च न समर्थितौ स्याताम्। तस्मात् यजमानव्यपदेशात् आत्मानमेव उद्गाता प्रतिनिर्दिशतीति गम्यते।

**वा**— अन्यत्र 'वचनादितरेषां स्यात्' (३।८।१।२, ३।८।३।११), इह तादृशस्य वचनस्याभावात् व्यपदेशात् इत्युच्यते। वाशब्दोपादानात् यजमानव्यतिरेकेण च आत्मग्रहणात् चतुर्थ्या च विस्पष्टतादर्थ्यप्रतीतेः 'आत्मने वा यजमानाय वा' इति कर्तृद्वयस्य फलसंबन्धः इति शक्यं विज्ञातुम्।

**सोम**--सदोनामकमण्डपः उदगायतः। तत्र दक्षिणत आरभ्य उदगपवर्गासु मध्यमासु स्थूणासु औदुम्बरी यजमानसंमिता, इतरा औदुम्बरीसंमिताः। तासां पश्चात् पुरस्ताच्च याः स्थूणाः, ताः पर्यन्तस्थूणाः। तास्तु नाभिदघ्न्यः इति नित्ये प्रमाणम्। वृष्टिकामस्य तु औदुम्बरीमपि नीचैः कृत्वा सदो मातव्यम्।

अत्र समाख्यायाः वचनानुगुणत्वात् न बाधः इति प्रत्यवस्थानात् **संगतिः**। अधिकारचिन्ताऽपीयं काम्यगुणशेषत्वपर्यवसिता, इति अध्यायसंगतिर्बोध्या। **सूत्रार्थस्तु** कामोऽपि तथा याजमान एव अर्थेन क्रतुफलेन यजमानस्य नित्यसंयोगात्, तदर्थं नित्यगुणस्य प्रयोज्यत्वे तत्र परकीयकाम्यगुणानवकाशात् इति।

**वि**-- 'वृष्टिकामी सदो नीचैर्मिनुयादिति कामना। अध्वर्योः स्वामिनो वा, ऽऽद्यो वाक्यान्मातु, स्तदुच्यते॥ परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता। प्रतीताऽतो वाक्यबाधे तपोवत् स्वामिनोऽस्तु तत्॥' ३।८।६.

**भाट्ट**-- ये गुणजन्याः कामाः 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैः सदो मिनुयात्' इत्यादयः ते मानाद्याश्रयस्य तावत् आध्वर्यवत्वात् तत्सामानाधिकरण्याच्च कामयतेः तत्समानकर्तृकत्वप्रतीतेः अध्वर्युनिष्ठा एव। अत एव यत्र 'दध्नेन्द्रियकामस्य' इत्यादिवैयधिकरण्यम्, तत्र यजमानगामित्वमेव, प्रक्षेपाख्यस्य होमस्याध्वर्यवत्वात्। **इति प्राप्ते**, 'मिनुयात्' इति ञितः परस्मैपदनिर्देशात् अध्वर्युभिन्नकर्तृकत्वावगतेः सामानाधिकरण्यबाधेन याजमानत्वमेव। **यत्रापि** 'यो वृष्टिकामः स सौभरेण स्तुवीत' इत्यादौ न परस्मैपदम्, **तत्रापि** न उद्गातृगामित्वम्, ऋत्विक्कामानुरोधेन यजमानफलसाधनीभूतनित्यगुणबाधानुपपत्तेः। अतस्तत्र सामानाधिकरण्यमात्मनेपदं च प्रयोजककर्तृत्वाभिप्रायेणैव व्याख्येयम्। अत एव यत्र न नित्यगुणबाधः, बाधेऽपि वा साक्षादेव वचनम्, तत्र स्वामिभिन्नगामित्वेऽपि न क्षतिः, यथा 'आत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेत्' इति। अत्र पृथग्यजमानपदश्रवणात् वाशब्दश्रवणाच्च आत्मनेपदेन उद्गातैवोच्यते। अत एवानुषङ्गेण वाक्यभेदोऽपि अदोषः। 'तम्' इत्यनेनोभयनिष्ठं वैकल्पिकं कामं परामृश्य उद्देश्यत्वविधानाद्वा न वाक्यभेदः। गायतेश्च 'गायन्ति यं सामगाः' इत्यादौ अर्थाभिधानेऽपि प्रयोगान्न कामरूपार्थस्य उद्देश्यत्वविघातः। ('यं शैवाः समुपासते' इति श्लोकारम्भः।)

**मण्डन**— 'स्वामी सदो मानफलस्य शेषी।' ६.

**शंकर**— 'आर्त्विज्यं न गुणात् फलम्।' ८.

* **काण्डाधिकरणे** अङ्गाश्रितगुणफलानां यजमानगामित्वमुक्तम्। **परिमलः**. ३।४।१३।४४ ब्रसू.

* **काण्डानुसमयः** अनेकाश्वप्रतिग्रहे अभ्युपेतव्यः। **भा.** ५।२।२।३. * काण्डानुसमयः। काण्डं पदार्थवर्गः। अनुसमयः पश्चात् संगतिः, 'इण् गतौ' इति धातुनिष्पन्नत्वात् अनुसमयशब्दस्य। ततश्च एकस्य पशोः कृत्स्नोपाकरणादिपदार्थवर्गं कृत्वा परस्य तथा कर्तव्यमित्यर्थः। **सोम.** ५।२।१. * काण्डानुसमयः संनिपातिनामङ्गानां प्रधानविरोधे सति। **भा.** ५।२।२।३. * एकैकस्य प्रधानस्य संनिपत्योपकारकाङ्गकाण्डं कृत्वा इतरस्य कर्तव्यम् इत्येवं **काण्डानुसमयः**। **भाट्ट.** ५।२।१.

**काण्डानुसमयन्यायः**। अश्वसहस्रादिप्रतिग्रहे पुरोडाशधर्माणां काण्डानुसमयः॥

**कारणादभ्यावृत्तिः। ५।२।२।३॥**

**भाष्यम्**— अथवा अधिकरणान्तरम्। अनेकसहस्राश्वप्रतिग्रहे तन्त्रानुष्ठानम् इति पूर्वः पक्षः। काण्डानुसमयः अभ्युपेतव्यः इति सिद्धान्तः।

**टुप्**— कारणादभ्यावृत्तिः इति। न दृष्टान्तो युक्तः, नापि परिहारः। अश्वप्रतिग्रहे (निमित्ते) चतुष्कपाला विधीयन्ते। यावतः इत्यनेन अश्वेयत्ता उच्यते, तावतः इति पुरोडाशेयत्ता। एकत्र निमित्तेयत्ता, अपरत्र नैमित्तिकेयत्ता, वारुणान् इति देवतासंबन्धो विधीयते, कतरेण अत्र (एषाम्) साहित्यम् (विधीयते?)। तस्मात् भिन्ना एवैषां प्रयोगाः। क्रतूपकारस्तु एकः (न प्रयोगः)। यथा प्रयाजानुयाजानाम् (एकक्रतूपकारप्रयोजनानामपि) न तन्त्रेण इतिकर्तव्यता (किन्तु प्रयाजप्रयोगं साङ्गं समाप्य अनुयाजप्रयोगः) एवमिहापि। (येषां तु 'प्रयाजानुयाजानां तन्त्रेण इतिकर्तव्यता' इति पाठः, नञ् न पठ्यते, तेषामयमर्थः, इतिकर्तव्यताशब्देन क्रतूपकार उच्यते, यथा प्रयाजादीनां भिन्नप्रयोगाणामपि एक एव क्रतूपकारः प्रयोजनं भवति, एवमिहापि।) वारुणान् इत्यनेन साहित्यमिति चेन्न। देवता हि अनेन उच्यते (न तत्र बहुत्वं विवक्षितम्। किञ्च वारुणान् इत्यत्र–) बहुत्वं श्रूयमाणं (विवक्षितं सत्) यागभेदं कुर्यात्, यथा प्राजापत्यान् इति। तत्र एकस्मिन् अश्वप्रतिग्रहे बहवो वारुणाः प्राप्नुवन्ति (न चैतदिष्टम्)। पुनरपि नैवास्ति साहित्यम् (इति न चोद्यपरिहारौ उभावपि उपपन्नौ इति)। तस्मात् वचनान्तरमेव साहित्यप्रतिपादकं द्रष्टव्यमिति।



**सोम**– अत्र भाष्ये कारणादभ्यावृत्तिः इति सूत्रं बहुषु पुरोडाशेषु यथा काण्डानुसमयः एवमिहापि इति पूर्वपक्षोक्तदृष्टान्तवैषम्यकथनार्थत्वेन व्याख्याय बहुषु पुरोडाशेषु अपि उक्तन्यायेन पदार्थानुसमयं प्रापय्य प्रधानलोपप्रसङ्गात् काण्डानुसमयः इति अधिकरणान्तरपरतयाऽपि व्याख्यातम्। **यद्यपि** अश्वदाने निमित्ते चतुष्कपालेष्टिर्विधीयते, तत्र यावतः इति विधेयसंख्योपलक्षणीभूतनिमित्तेयत्ताप्रतिपादनेनैव नैमित्तिकेयत्तायाः अवगतत्वात् अवगतविषयतया 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र बहुत्ववत् चतुष्कपालबहुत्वस्य अविवक्षितत्वात् 'यावतोऽश्वान्' इति बहुत्वस्य निमित्तगतत्वादेव अविवक्षितत्वाच्च एकस्मिन् द्वयोः बहुषु वा अश्वेषु दत्तेषु तावत्संख्या वारुणेष्टिः कर्तव्या इति वाक्यार्थः। तथा च साहित्यस्य अविवक्षितत्वात् न सहप्रयोगः, किन्तु भेदेन इति काण्डपदार्थानुसमयाप्रसक्तेः इदमयुक्तम्। **तथापि** साहित्यविधायकं वचनान्तरमस्ति इति तन्त्ररत्ने समर्थितम्।

**वि**— 'प्रतिग्रहे तु बह्वश्वे पूर्वन्यायोऽस्ति वा न वा।, अस्ति तत्साम्यतो, मैवं पुरोडाशस्य शेषतः॥'

**भाट्ट**— यत्र तु प्रधानविरोधः, यथा अश्वप्रतिग्रहेष्ट्यां शते वा सहस्रे वा अश्वदाने तावत्सु पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वा उद्वासनं क्रियेत, दह्येरन्। ततस्तत्र काण्डानुसमय एव कतिपयाङ्गानाम्।

यत्तु अत्र वार्तिके निमित्तगतस्य यावत्त्वस्य अविवक्षितत्वात् नैमित्तिकगतस्य च तावत्त्वबहुत्वादेः पृष्ठशमनीयन्यायेन (१०।२।१३) अनुवाद्यगतत्वेन अविवक्षितत्वात् साहित्यबोधकवचनाभावेन अनेकेष्वपि अश्वदानेषु प्रत्येकप्रयोगेणैव वारुणेष्टिकर्तव्यत्वावगतेः भाष्यस्थमेतदुदाहरणं साहित्यबोधकवचनान्तरसंभावनया इत्युक्तम्। तन्न। 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इत्यत्र हि उदवसानसमानकर्तृकत्वबलेनैव पृष्ठशमनीये बहुत्वादेः प्राप्तत्वात् युक्ता साहित्याविवक्षा। प्रकृते तु निमित्तसमसंख्याकत्वस्यैव तावच्छब्दार्थस्य नैमित्तिकविशेषणतया अप्राप्तस्य विधेयत्वात् युक्तमेव अनेकनिमित्तसंनिपाते नैमित्तिकसाहित्यम्। तावच्छब्दाभावे हि युगपदनेकनिमित्तसंनिपाते तन्त्रेण नैमित्तिकी इष्टिरेकैव प्रसज्येत इति युक्त एव तावच्छब्दार्थविधिः। **यत्रापि** हि पुरुषार्थतया न क्रत्वन्तःपातित्वं यथा युगपदनेकचण्डालादिस्पर्शादौ अनेकगृहदाहादौ च, **तत्रापि** नैमित्तिकस्य सकृदनुष्ठानम्, किमुत क्रतुप्रयोगमध्यवर्तितदङ्गवारुणेष्टेः। अतश्च आग्नेयादिभेदेऽपि प्रयाजाद्यङ्गतन्त्रत्ववत् युगपदनेककपालभेदने होमतन्त्रत्ववच्च वारुणेष्टेः तन्त्रत्वप्रसक्तौ निमित्तसमसंख्याकत्वविधानेन तावत्त्वप्रतीतावपि एकप्रयोगविधिपरिगृहीतत्वेन साहित्यप्रतीतेः युक्तमेव उदाहरणत्वम्।

तत्र च आरादुपकारकेषु बहुधा प्रसङ्ग एव। संनिपातिषु बहुधा पदार्थानुसमय एव। क्वचिदेव तु प्रधानविरोधे काण्डानुसमयः। प्रदाने तु संप्रतिपन्नदेवताकत्वात् तन्त्रत्वमेव। पुरोडाशमात्रे तु निमित्तसमसंख्याकत्वं प्राजापत्यवत् इति द्रष्टव्यम्।

**मण्डन**— 'काण्डं पुरोडाशगुणे क्रमेण।'

**शंकर**— 'काण्डानुसमयश्चोक्तः।' २.

* **काण्वं** नाम शाखाभेदः शुक्लयजुर्वेदगतः। **वि.** २।४।२, * काण्वं नाम साम विकृतिविशेषस्थं प्राकृतस्य साम्नो बाधकम्। १०।४।१०. * **काण्वानां** यजमानानां नाराशंसो द्वितीयः प्रयाजः। **वा.** १।३।७।१७.

* **कातीयम्** इति रूपस्य सिद्धिः। कतस्यापत्यं गोत्रम् इत्यस्मिन्नर्थे 'गर्गादिभ्यो यञ्' (पा० ४।१।१०५) इति यञं कृत्वा कात्यस्यापत्यं युवा इत्यस्मिन्नर्थे 'यञिञोश्च' (पा० ४।१।१०१) इति फक्प्रत्यये तस्य च आयन्नादिसूत्रेण (पा० ७।१।२) आयनादेशे

कृते कात्यायनस्य इदमित्यस्मिन्नर्थे 'वृद्धाच्छः' (पा० ४।१।११४) इति छप्रत्यये तस्य इयादेशे 'फक्फिञो-रन्यतरस्याम्' (पा० ४।१।९१) इति फक्प्रत्ययस्य लुक्पक्षे कात्यः इति। यकाराकारात् परतः छप्रत्ययप्राप्तौ 'आपत्यस्य च तद्धितेऽनाति' (पा. ६।४।१५१) इति आकारादिवर्जिते तद्धिते परे अपत्यवाचिनः यकारस्य लोपात् कातीयम् इति रूपसिद्धिः। सु. पृ. १०७५.

* **कात्यायनः**। नित्यो हि अस्य नशब्दस्य सुबन्त-शब्देन समासः इति वार्तिककारो भगवान् मन्यते स्म। 'वावचनानर्थक्यं च स्वभावसिद्धत्वात्' इति। (समर्थसूत्रे वार्तिकमिदम्।) न इति भगवान् पाणिनिः। स हि 'विभाषा' (पा० २।१।११) इति प्रकृत्य ईदृशं समास-मुक्तवान्। सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्। असद्वादि-त्वात् न कात्यायनस्य। भा. १०।८।१।४. * कात्यायनः मन्वादिसमानः प्रामाण्ये। वि. १।३।९, * **कात्यायन-कल्पसूत्रं** पौरुषेयमेव। वेदमूलत्वाच्च प्रमाणम्। १।३।७.

ꕥ **कान्तारन्यायः**। तद्यथा, कश्चित्कान्तारे समुप-स्थिते सार्थमुपादत्ते, स यदा निष्क्रान्तकान्तारो भवति, तदा सार्थं जहातीति। 'त्यदादीनि च' (पा० १।१।७४) इति सूत्रभाष्ये प्रोक्तोऽयम्। साहस्री. ८३४.

ꕥ **कान्तारोत्तरणाय सार्थः इति न्यायः**। अयं न्यायः 'इको गुणवृद्धी' (पा० १।१।३) इति सूत्रस्थकैयटेऽभिहितः। तथाहि, 'संबन्धमनुवर्तिष्यते' इति महाभाष्यस्थसंबन्धमिति प्रतीकमादाय संबध्यते इति संबन्धम्, कर्मणि घञ्, नपुंसकस्याभिधेयत्वात् नपुंसकनिर्देशः। आदैज्ग्रहणसंबद्धं वृद्धिग्रहणम् 'अदेङ् गुणः' (पा० १।१।२) इत्यत्रानुवर्तते, तेन अदेङ्भिर्न संबध्यते। इह तु अनुवृत्तमादैचौ जहाति कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने इति। साहस्री. ४७४.

* **कापिवनः द्विरात्रः**। उत्तरमहस्तत्र अतिरात्रः। कु. १०।५।१३।४८.

* 'कामं हुते संचरेत्, पश्चाद्धि स गतः' (होमोत्तरम् अग्नीनां मध्येन कामं गच्छेत्। कामम् इत्यव्ययम्। हि यस्मात् सः आहवनीयः पश्चात् गार्हपत्ये गतः इति)। होमोत्तरम् आहवनीयस्य दक्षिणाग्नेश्च गार्हपत्ये गमनात् अग्निद्वयाभावेन मध्ये संचाराभ्यनुज्ञानमत्र। संकर्ष. ३।२।५. * **कामः** याजमानः एव न आर्त्विजः। 'यः कामयेत वर्षेत् पर्जन्यः इति नीचैः सदो मिनुयात्' इत्यादिः ज्योतिष्टोमे। वचनात् तु आर्त्विजोऽपि स्यात्। भा. ३।८।५।१३-१४. * कामः वा निमित्तं वा यदो-त्पद्यते, तदा तन्नोदितो यागः कर्तव्यः। वि. ५।३।१२.

ꕥ **'कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थ-यितुम्' इति न्यायः**। तद्यथा 'उशीनरवत् मद्रेषु यवाः सन्ति न सन्ति इति, मातृवत् अस्याः कलाः सन्ति न सन्ति इति' इति महाभाष्यम् (६।३।३४)। उपमानोपमेयभावविषयो वतिः। तत्र उपमाने सत्ता असत्ता वा प्रसिद्धा उपमेये प्रतिपाद्यते इति यथासंभवं वाक्यशेषपरिकल्पने कामचारः इति कैयटः। साहस्री. ८३६.

* **कामचारकामवादकामभक्षाः** प्रागुपनयनात्। वि. ६।२।६.

* **कामपदोपादानादेव** फलस्य पुरुषार्थत्वं गम्यते। नहि कश्चित् बुद्धिपूर्वकारी एवं कामयते 'स्वर्गं आत्मानं लभताम्' इति। किं तर्हि ? ममोपभोग्यः स्यादिति। वा. ३।१।३।५.

* **कामवत्** 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादि-मन्त्रोऽपि याजमानः। वि. ३।८।७.

* **कामशास्त्रस्य** दृष्टप्रमाणमूलत्वेन प्रामाण्यसिद्धिः। (इति संक्षेपः)। सु. पृ. १३२.

* **कामश्रुतयः** वसन्तादिश्रुतिभिः प्राप्तेर्न आधाना-क्षेपसमर्थाः इति आहिताग्नीनेव अधिकुर्वन्ति। वा. ३।२।८।२२ पृ. ७७९.

* **कामसंयोगेऽपि** ऐन्द्रवायवस्य पाठप्राप्तस्य स्थाने एवानुष्ठानम्। ज्योतिष्टोमे। भा. १०।५।१८।६५-६६, * कामसंयोगे ज्योतिष्टोमे आश्विनादेर्ग्रहस्य ऐन्द्रवायवात् प्राक् प्रतिकर्षः कर्तव्यः। १०।५।१९।६७-६९। स च प्रतिकर्षः धाराग्रहेभ्यः प्राक्। १०।५।२०।७०-७२। ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः। परंतु ऐन्द्रवायव-ग्रहणोत्तरं सादनम्। १०।५।२१।७३-७४। प्रदानस्य तु न प्रतिकर्षः। १०।५।२२।७५-७६.



ꕥ **कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात्**। १०।५।१८।६५॥

तुशब्दः पूर्वसिद्धान्तवैषम्यार्थः। कामसंयोगे 'ऐन्द्र-वायवाग्रान् ग्रहान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति यत्र कामेन ऐन्द्रवायवस्य संयोगः, तत्र आदितः सर्वादितः अंशोरपि प्राक् प्रतिकर्षः स्यात् 'यः कामयेत' इत्यादेर्वचनात्। इति पूर्वः पक्षः।

**तद्देशानां वाऽग्रसंयोगात् तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात्। ६६॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति। कामसंयोगेऽपि ऐन्द्रवायवस्य ग्रहस्य न सर्वादितः प्रतिकर्षः। किन्तु तद्देशानां धारादेशानामेव अग्रसंयोगात् अग्रतासंबन्धात् तद्युक्तं धाराऽग्रतायुक्तं कामशास्त्रं फलस्य शासनं स्यात्। धाराग्रहाणामग्रतयैव कामः साधयितुं शक्यते। नित्यसंयो-गात् अत्र कामसंयोगेऽपि संयोगपृथक्त्वन्यायेन नित्यसंयो-गात् ऐन्द्रवायवस्य धाराग्रहाग्रतयैव काम्यत्वं नित्यत्वं च संयोगभेदेन सेत्स्यति। तस्मात् कामसंयोगेऽपि स्वक्रम-स्थस्य ग्रहणम्, न सर्वादितः इति सिद्धान्तः। अत्र अग्रता न विधीयते, किन्तु तदनुवादेन ग्रह एव विधीयते इति ज्ञेयम्। के.

ꕥ **कामाकुलकामिनीन्यायः**। यथा नायकगुण-गणसंश्रवणप्रवृद्धानुरागा का चन कामिनी मदनविह्वला विरहक्लेशमसहमाना मदनलेखाऽवलम्बनस्वावस्थानिवेद-नानि विधत्ते। ततो वेगात् तन्निकटं अटत्यपि। तस्मिन् अवलोकितेऽपि तदवलोकनं तदीयगुणपरामर्शाभावे जन-साधारणत्वं प्राप्ते हृदयंगमभावं न लभते। यदा तु पूर्व-वचनात् तदीयगुणपरामर्शं करोति, तदा तत्क्षणमेव पूर्णभावमत्येति। एवं स्वात्मनि विश्वेश्वरात्मना भास-मानेऽपि तन्निर्भासनं तदीयगुणगणपरामर्शविरहसमये पूर्णभावं न संपादयति। यदा तु गुरुवचनादिना सर्व-ज्ञत्वसर्वकर्तृत्वादिलक्षणपरमेश्वरोत्कर्षपरामर्शो जायते, तदा तत्क्षणमेव पूर्णात्मतालाभः इति। स. द. सं. प्रत्य-भिज्ञादर्शने ध्वनितोऽयं न्यायः। साहस्री. ७१३.

* **कामाधिकारे** नियोगो यागस्य कर्तव्यतां न वदति, फलत एव कर्तव्यतासिद्धेः। ऋजु. पृ. २९, * **कामाधिकारेषु** काम्यमानफलसिद्धिपर्यन्तत्वात् शास्त्रस्य न नियोग एव स्वसिद्ध्यर्थं पुरुषं प्रयुङ्क्ते। रागाक्षिप्तप्रवृत्तित्वात् पुरुषाणां फलत एव प्रवृत्ति-सिद्धेः। पृ. २९.

ꕥ **कामेष्टौ च दानशब्दात्**। १०।२।१५।४५॥

'प्लाक्षं प्रस्रवणं प्राप्य अग्नये कामाय अष्टाकपालं पुरोडाशं निर्वपन्ति, तस्यामश्वां पुरुषीं च धेनुके दत्त्वा प्रति यमुनामवभृथमवयन्ति' इति सारस्वते सत्रे कामेष्टि-रुक्ता। तत्र च अश्वां धेनुकां पुरुषीं च धेनुकाम्, अश्व-जातीयां मनुष्यजातीयां च धेनुकां धयन्तीम् अर्भकाय दुग्धदात्रीं दत्त्वा इति ऋत्विग्भ्यो दानमुक्तम्। इयं कामे-ष्टिश्च सारस्वतसत्राङ्गम्, सत्रे च दानं नास्तीत्युक्तम्' तथापि दानशब्दात् दत्त्वा इति दानवाचकशब्दात् इदं परिक्रयार्थमेव स्यात्। इति पूर्वः पक्षः। चशब्दः उद-वसानीयदृष्टान्तार्थः। उदवसीने कर्मणि यथा परिक्रयार्थ-मेव दानमित्युक्तं तद्वत् इति।

**वचनं वा, सत्रत्वात्। ४६॥**

वाशब्दात् पूर्वपक्षो न्यावर्त्यते। सारस्वते सत्रे विहितायां कामेष्टौ 'तस्यामश्वां पुरुषीं च धेनुके दत्त्वा' इति वचनं भवति। कामेष्टेश्च सत्रमध्यपतितत्वेन सत्र-त्वात् सत्राङ्गत्वात् न तत्र परिक्रयः संभवति। वचनबलात् तु अश्वजातीयाया मनुष्यजातीयायाश्च धयन्त्याः दानं धर्ममात्रं कर्तव्यम् अदृष्टार्थम् इति सिद्धान्तः। के.

* **कामेष्टौ सारस्वतसत्रगतायां** तुरग-मनुष्य-गो-जातीयानां दानमदृष्टार्थं न त्वानत्यर्थम्। 'अश्वां पुरुषीं धेनुके दत्त्वा' इति। वि. १०।२।१५.

* **कामैक्यं** सौभरनिधनयोः (सौभरं साम)। हीष्, ऊर्क्, ऊ इति निधनविशेषनियमविधिः फल-भेदेन। वि. २।२।१३.

* **कामोपबद्धानां** पदानां फलपरत्वम् एकादशाद्ये वक्ष्यते। सु. पृ. ८८२.

* **कामना** च विषयसौन्दर्यज्ञानात् स्वत एवोत्पद्यते, न तु विधिश्रवणात् संपद्यते। वि. २।३।१२. * कामना द्विविधा साध्ये साधने च। तत्र स्वर्गस्य साध्यत्वेन न कामना। किं कारणम् ? सर्वे ह्येवं कामयन्ते 'स्वर्गो

मे स्यात् ' इति । साध्ये च मुख्या कामना, साधने तु नान्तरीयकी, साधनेन विना साध्यासंभवात् । तस्मात् साधने या कामना सा गौणी । टुप् ११।१।१।१ पृ. २०९९. * **कामनाऽनुरोधेन** पुनःपुनरभ्यासः काम्यानां कर्मणाम् । भा. ११।१।४।२०–२६.

* **कामिनं** हि अधिकृत्य साङ्गस्य यागस्य वचनम् । भा. ६।६।१।८.

* **कामिनोऽपि** काम्यकर्माननुष्ठाने प्रत्यवायो नास्ति। वि. ६।३।२. * कामिनः स्वयं फलसाधनावच्छिन्नभावनाकारित्वम् ' शास्त्रफलं प्रयोक्तरि ' ( ३।७।८।१८ ) इत्यत्रोक्तम् । सु. ३।८ पृ. ६०. * **कामिनां** सत्रं विधीयते । ते च परस्परनिरपेक्षा बहव एव । वचनात्तु बहुत्वसंबद्धः प्रयोगो विधीयते । भा. १०।६।१४। ४५–४६. * कामिनां स्वतः फले प्रवृत्तत्वात् तदर्थितयैव कर्मणि प्रवृत्तेः ' न हिंस्यात् ' इति प्रतिषेधाविरोधः । ऋजु. पृ. २९.

**काम्यं** कर्म आरब्धम्, मध्ये कामे निवृत्ते वा लब्धेऽपि वा समापनीयमेव, निन्दाप्रायश्चित्तयोः श्रवणात् । वि. ६।२।३, * काम्यं कर्म कृत्स्नाङ्गोपेतं कर्तुं यदा शक्नुयात्, तदैव कुर्यात् । नित्यं तु यथा शक्नुयात् तथा कुर्यात् । ६।३।२, * काम्यं कर्म चित्राऽऽदि सकृदेव कर्तव्यमिति न नियमः । यः स्वर्गपश्वादीन् भूयोभूयः कामयते, तेन प्रयोगावृत्तिः कर्तव्या । ११।१।४, * काम्यं गोदोहनादि नित्यप्रयोगे ग्रहीतुमयोग्यम् । ४।३।२. * काम्यं नित्यात् नैमित्तिकाच्च बलवत् ' आसन्नपुरुषार्थत्वाद् विप्रकृष्टफलात्तथा । बलवत् शीघ्रकारित्वात् काम्यं नैमित्तिकादपि ॥ ' वा. ३।६।३।१० पृ. १०३३. * काम्यं नित्यात् प्रबलं कामस्य शीघ्रं प्रवर्तकत्वात् । वि. १२।२।१३, * काम्यं नित्यस्य बाधकम् अग्निचयने काम्येन वह्न्यन्तरेण उख्यस्य बाधो यथा । १२।४।७.

**काम्यं नित्यस्य बाधकम् इति न्यायः ।** लिङ्गादेव अग्नेः प्रकृत्याश्रयत्वमपि प्राप्नोति पुरुषार्थसमासत्तेः, काम्यं नित्यस्य बाधकम् इति न्यायेन फलार्थतया बलवतस्तस्य उत्तरवेदिबाधकत्वात् । अयमेव काम्यबलवत्त्वन्यायः । रसायनं. पृ. १७७.

* काम्यं नित्यस्य बाधकम् । ' पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम् ' इति ' नैमित्तिके तु प्रकृतौ तद्विकारः संप्रयोगविशेषात् ' ( ३।६।३।१० ) इति तृतीयाधिकरणवक्ष्यमाणन्यायोऽयम् । ( वा. पृ. ३५२ ) । ' पुरुषसिद्ध्यर्थो हि सर्वः प्रयास इति तत्प्रत्यासन्नं वस्तु बलीयो भवति । ' ( वा. पृ. ३५२ ) काम्यस्य नित्यबाधकत्वे अयमेव मुख्यो न्यायः । ' अविशेषेण यच्छास्त्रम् ' ( १०।८।८।१६ ) इति दशमाधिकरणन्यायेनापि काम्यं नित्यस्य बाधकम् । ' पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ' ( ६।५।५४ ) इति षष्ठाधिकरणन्यायेनाप्येवम् । सु. पृ. ४८८. * काम्यं नित्यस्य बाधकम् **इति न्यायेन** काम्यप्रयोगे चमसस्य ( प्रणयने ) अनङ्गत्वम् । मुरारि. पृ. ११७८. * काम्यं नीचैः सदो मानमित्यादि अस्थियज्ञे न कर्तव्यानि । भा. १०।२।२०।५१. * काम्यं वैदिकं कर्म त्रिविधम् । ऐहिकफलकम् ' कारीर्या वृष्टिकामो यजेत ' इत्यादि । आमुष्मिकफलकं स्वर्गार्थाग्निहोत्रादि । अनियतफलकम् ' चित्रया यजेत पशुकामः ' इत्यादि । बाल. पृ. ८५.

* **काम्यानि** जन्मान्तरफलानि । भा. ४।३।११।२७ वर्णकं २.

**काम्यानि तु न विद्यन्ते कामाज्ञानाद् यथेतरस्यानुच्यमानानि । १०।२।२०।५२ ॥**

अस्थियज्ञे ' यदि कामयेत वर्षेत् पर्जन्य इति नीचैः सदो मिनुयात् ' इत्येवमादीनि काम्यानि न विद्यन्ते, न कर्तव्यानि । यजमानकामनया हि तानि कर्तव्यानि भवन्ति । यदा हि यजमानोक्त्या तत्कामस्य ज्ञानं स्यात् तदा ऋत्विजस्तत् कुर्युः । अस्मिनां तु कामासंभवात् ऋत्विजां यजमानकामस्य अज्ञानात् तत् कथं क्रियेत । यथा इतरस्य जीवतोऽपि यजमानस्य काम्यानि तेन अनुच्यमानानि ऋत्विग्भिः कर्तुं न शक्यन्ते । अस्थियज्ञे तु का कथा । तस्मात् अस्थियज्ञे काम्यानि न कर्तव्यानि। तुशब्दः कर्तव्यताऽऽशङ्काया असंभवप्रदर्शनार्थः । के.

* **काम्यः** गुणः नित्यमर्थं विकरोति, तत् इन्द्रियकामाधिकरण– (२।२।११) गोदोहनाधिकरणा–(३।६।३)



भ्यामुपसंहर्तव्यम् । वा. ३।६।१६।४३ पृ. १०६७, * काम्यः गुणः भिन्नप्रयोजनोऽपि अवान्तरकार्यैकत्वात् विरोधिगुणान्तरज्ञानमिथ्यात्वावधारणसमर्थः । ३।६।३।१० पृ. १०३६.

**काम्यः गुणः श्रूयमाणो नित्यमर्थं विकृत्य निविशते । इति न्यायः ।** यथा गोदोहनगुणो नित्यं चमससाधनकम् अपां प्रणयनं विकृत्य निविशते, एवमुक्थ्यगुणो नित्यामग्निष्टोमस्य संस्थां विकृत्य संस्थाऽन्तरत्वं गमयति । वि. ३।६।१६. * काम्यः पुरुषार्थः अधिकारविधिः कर्मफलसंबन्धपरः ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यादिः । गुणफलसंबन्धपरश्च ' दध्ना इन्द्रियकामस्य जुहुयात् ' इत्यादिः । बाल. पृ. १४.

**काम्यो वा नैमित्तिको वा नित्यमर्थं विकृत्य निविशते । इति न्यायात्** अनित्याधिकारेण निविशमानमपि न नित्यमनित्ययति । भामती. ३।४।८।३२ ब्र. सू. * काम्यो वा० यथा अक्ष्यामये मुद्गौदनभोजनं निवातशय्या चेति नित्यं शय्यासनं भोजनं च विकरोति। भा. १०।३।५।३२, १०।५।२४।८१. * काम्यो वा० यथा स्वर्गार्थोऽग्निप्रयोगो नित्यप्रयोगं विकृत्य प्रयोगस्योभयत्राविशेषात् नित्यविधेः प्रयोजकत्वं बाधित्वा निविशते, यथा वा फलचमसप्रयोगो नित्यं सोमप्रयोगं विकृत्य निविशते काम्यनैमित्तिकाभ्यां नित्यकार्यसिद्धेः । कल्पतरुः. ३।४।८।३२ ब्र. सू. * ' उच्यते यो गुणः काम्यः क्रत्वर्थेन न गृह्यते । क्रत्वर्थे कर्म गृह्णाति स एव स्वार्थसिद्धये ॥' वा ३।६।३।१० पृ. १०३५. * **काम्याः** सामिधेनीकल्पाः दर्शपूर्णमासयोः ' एकत्रिंशतिमनुब्रूयात् प्रतिष्ठाकामस्य ' ' एकविंशतिमनुब्रूयात् अन्नकामस्य ' ' चतुर्विंशतिमनुब्रूयात् ब्रह्मवर्चसकामस्य ' ' द्वाविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य ' ' षड्विंशतिमनुब्रूयात् पशुकामस्य ' इत्येवमादयः तत्र यावदुक्तमभ्यस्य ( आद्यन्तयोः त्रिरावृत्तिं कृत्वा ) अवशिष्टानामागमेन संख्या पूरयितव्या । भा. १०।५।८।२७–३३. * **काम्येन** अग्निहोत्रप्रयोगेण नित्यस्य अग्निहोत्रप्रयोगस्य प्रसङ्गसिद्धिः । बाल. पृ. १३२, * काम्येन नित्यस्य अङ्गप्रसङ्गो यथा प्रतिष्ठाऽर्थस्य एकविंशत्यनुवचनस्य अङ्गेन एकविंशतित्वेन नित्यस्य पाञ्चदश्यस्य । पृ. १४९. * ' काम्येन नित्यस्य बाधः ' इति ' उखायां काम्यनित्यसमुच्चयः ' ( १२।४।७।१७–२५ ) इत्यधिकरणस्य न्यायः । के. * काम्येन नैमित्तिकस्य अङ्गप्रसङ्गो यथा प्रतिष्ठाऽर्थस्य एकविंशत्यनुवचनस्य अङ्गेन एकविंशतित्वेन वैश्यनैमित्तिकस्य साप्तदश्यस्य । बाल. पृ. १४९, * काम्येन नैमित्तिकस्य बाधः । पृ. १३३. * **काम्यस्य** अग्नेः ( अग्निचयने वृक्षाग्रादिजन्यस्य ) आहवनीयत्वाभावः । भा. १२।४।८।२६–२७. * काम्यस्य अङ्गवैकल्ये नैष्फल्यम् । वि. ६।३।२. * काम्यस्य उत्पन्नशिष्टस्यापि उत्पत्तिशिष्टबाधकत्वम् । सु. पृ. ४८८. * काम्यस्य कर्मणः यावदिच्छमभ्यासः सकृत् वा बहुकृत्वो वा । फलभूमार्थी बहुकृत्वः, संतुष्टः सकृत् । यथाकामी प्रतीयेत । भा. ११।१।४।२४, * काम्यस्य धर्मा न नित्यस्य भवितुमर्हन्ति । ६।३।१।५. * **काम्यानां** कर्मणाम् अनुष्ठाने पाठक्रमो न नियामकः, एकप्रयोगाभावेन परस्परक्रमाकाङ्क्षाया अभावात् । तस्मात् कामो वा निमित्तं वा यत् यदोत्पद्यते, तदा तत्रोदितो यागः कर्तव्यः । वि. ५।३।१२, * काम्यानां कर्मणाम् असति प्रतिबन्धे ऐहिकं फलम् । सति तु आमुष्मिकम् । स्वर्गस्तु आमुष्मिक एव । ४।३।१२. * काम्यानां प्रतिनिधिभिः प्रक्रमो नास्ति । यदि तु प्रक्रान्ते कस्मिंश्चित् गुणकामकल्पे द्रव्यनाशे सति प्रतिनिधीयते, ततस्तस्य अवश्यं समापनीयत्वात् विकारेण प्रतिनिधिना तुल्यं समापनम् । वा. ३।६।१५।४०. * काम्यानां प्रारब्धानां नित्यकर्मणां च श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । भा. ६।३।४।१३–१७.

**काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः । ४।३।५।२० ॥**

' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' इत्यादौ काम्ये कर्मणि विश्वजिद्वत् नित्यः स्वर्गः स्यात् । ब्रह्मवर्चसादिकं तु अन्वाचयेन स्यादेव । यथा काष्ठान्याहर्तुं प्रस्थितः उच्यते ' भवता शाकमपि आहर्तव्यम् ' इति । तत्र काष्ठानि अवश्यमाह्रियन्ते, लब्धे शाके सोऽपि आह्रियते तद्वत् । यथा यज्ञाङ्गे क्रत्वर्थः ' गोदोहनेन पशु-

कामस्य प्रणयेत् ' इत्यत्र अपां प्रणयनरूपे यज्ञाङ्गो क्रत्वर्थः । अर्थ्यते इत्यर्थः उपकारः, क्रतोः अर्थः क्रत्वर्थः क्रतूपकारः, स नित्य एव गोदोहनस्यापि नित्यं प्रयोजनं पशुलाभोऽपि अन्वाचयेन, एवं प्रकृतेऽपि ।

**वीते च कारणे नियमात् । २१ ॥**

पूर्वपक्षे हेत्वन्तरपरं सूत्रम्। फलेच्छारूपे कर्मानुष्ठानस्य कारणे वीते अवाप्ते निवृत्ते वा सत्यपि कर्मसमाप्तिनियमो दृश्यते । तत्र काम्ये फले लब्धेऽपि स्वर्गरूपनित्यफल-लाभार्थः कर्मसमाप्तिनियम उपपद्यते नान्यथा । कारीर्यो वृष्टिकामेष्ट्याम् ' यदि वर्षेत् तावत्येव जुहुयात्, यदि न वर्षेत् श्वोभूते जुहुयात् ' इत्युक्तम् ।

**कामो वा तत्संयोगेन चोद्यते । २२ ॥**

सूत्रद्वयेन पूर्वपक्षे प्राप्ते सिद्धान्तमाह । वाशब्दः पूर्व-पक्षं व्यावर्तयति । काम्ये कर्मणि स्वर्गः न नित्यः, किन्तु कामः एव नित्यः । काम्यते इति कामः अमुककामः इति शब्देनोक्तं फलमित्यर्थः । यस्मात् तत्संयोगेन कामसंयोगेन कर्म चोद्यते । आनुमानिकोऽस्य स्वर्गकामेन एक-वाक्यभावः, प्रत्यक्षस्तु कामवचनेन । प्रत्यक्षं चानुमानात् बलीयः । तस्मात् काम एव फलम्, न स्वर्गः ।

**अङ्गे गुणत्वात् । २३ ॥**

दृष्टान्तवैषम्यप्रदर्शनार्थे सिद्धान्तसूत्रम् । गोदोहनादौ अङ्गे गुणत्वात् गुणत्वेन विधानात् युक्तं क्रत्वर्थत्वम् । सौर्ये चरौ तु न तथा विधानम् ।

**वीते च नियमस्तदर्थम् । २४ ॥**

सौर्यचर्वादौ काम्ये कर्मणि स्वर्गो नित्यं फलम्, काम्यं तु फलम् अन्वाचयेन इति पूर्वपक्षे 'वीते च कारणे नियमात् ' इति सूत्रेण यो हेतुरुक्तः, तन्निराकरणार्थं सूत्रमिदम् । वीते च अनुष्ठानस्य कारणे यो नियमः उक्तः, स तदर्थं तस्मै प्रयोजनाय । कस्मै ? शिष्टाविगर्हणाय । उपक्रम्य अपरिसमापयतः तदनन्तरमेव शिष्टा विगर्हयेयुः ' प्राक्रमिकोऽयं कापुरुषः ' इति वदन्तः । तस्मादवश्यं समापयितव्यम् । तस्मात् काम्यानां काम एव फलम्, न स्वर्गोऽपि । के.

* काम्ये कर्मणि श्रुतमेव फलं ग्राह्यम्, न स्वर्गः कल्पनीयः । वि. ४।३।९, * काम्ये कर्मणि श्रुतस्य द्रव्यस्यापचारे द्रव्यान्तरेणापि तत् कर्म अनुष्ठातव्यमेव । न तु श्रुतद्रव्याभावात् कर्मलोपः । ६।३।४. * काम्ये नित्यप्रयोगः अन्तर्गतः । श्रुतिकृतस्तु अस्ति भेदः । टुप्. ६।३।१।१. * काम्ये प्रवर्तनाऽऽक्षिप्तेष्टसाधनत्वं प्रधानांशे एव, न तु साङ्गे । भाट्ट. ६।३।१ पृ. २५०. * काम्ये श्राद्धादाहुतादौ अग्नौ आधानादयः संस्कारा लुप्येरन् । भा. १२।४।९।२८–२९. * काम्ये विध्या-क्षिप्तेष्टसाधनत्वज्ञानोत्तरमेव अङ्गविनियोगः । भाट्ट. ६।३।१ पृ. २५०. * काम्ये सर्वाङ्गोपसंहारसमर्थस्य अधिकारः । टुप्. ६।३।१।१. * काम्येषु अङ्गवैकल्ये फलासिद्धेः नास्ति तत्राङ्गविकलस्याधिकारः । वि. ६।१।१०.

**काम्येषु चैवमर्थित्वात् । ६।३।२।८ ॥**

ऐन्द्राग्नसौर्यसांग्रहण्यादिषु काम्येषु कर्मसु नित्येष्विव कतिपयाङ्गरहितेष्वपि एवं फलवत्ता स्यात् । अर्थित्वात् प्रधानजन्यफलकामनावत्त्वात् कर्तुः । नित्यादिव विगुणा-दपि काम्यात् फलं स्यादिति पूर्वः पक्षः । चकारः नित्यकर्मदृष्टान्तार्थः ।

**असंयोगात्तु नैवं स्याद्, विधेः शब्दप्रमाण-त्वात् । ९ ॥**

काम्यं कर्म विगुणमपि नित्यवत् फलवत् इति पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । एवं विगुणस्य काम्यकर्मणः फलवत्ता न स्यात् । प्रधानमात्रस्य फलेन असंयोगात् संबन्धाभावात् । विधेः विधीयमानस्य साङ्गस्यैव प्रधानस्य फलवत्तायाः शब्दप्रमाणत्वात् । शब्देन हि प्रमाणेन साङ्गमेव फलवत् इति विज्ञायते ।

विधेः विधानस्य फलाय समस्ताङ्गोपेतप्रधानप्रयोगस्य फलवाक्यप्रमाणकत्वात् सर्वाङ्गोपसंहारसमर्थस्यैव काम्येष्वधिकारः । इति कुतूहलम् ।

**अकर्मणि चाप्रत्यवायात् । १० ॥**

काम्यं कर्म साङ्गमेव कृतं फलवत् इति सिद्धान्ते हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । नित्ये कर्मणि प्रधानस्य अकरणे प्रत्यवाय उच्यते, नैवं काम्ये प्रधानस्य अकर्मणि अकरणे प्रत्यवायः श्रूयते । अकर्मण्यपि अप्रत्य-वायात् प्रत्यवायाभावात् न काम्यं नित्यतुल्यम् । तस्मात् सर्वाङ्गोपसंहारसमर्थस्यैव काम्ये कर्मणि अधिकारः ।



इदं सूत्रं कुतूहले नास्त्येव । के.

* काम्येषु सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारः । सर्वशक्त्यधिकरणम् । भा. ६।३।२।८–९.

* काम्याः इष्टयो गोप्या इति तासु प्रधाने उपांशु-त्वम् । वि. ३।८।२०. * काम्यासु इष्टिषु उपांशुत्वं प्रधानैरेव संबध्यमानम् अङ्गस्याचोदितम् इति वक्ष्यते ( ३।८।१९।३५–३६ ) । वा. २।१।४।१२ पृ. ४१४.

**काम्यासु विकृतिषु उपदिष्टैर्द्रव्यदेवताऽऽ-दिभिः प्राकृतद्रव्यदेवताऽऽदीनां बाधः ॥**

**सर्वासां गुणानामर्थवत्त्वाद् ग्रहणमप्रवृत्ते स्यात् । १०।७।१७।५८ ॥**

**भाष्यम्**— काम्या इष्टयः श्रूयन्ते । ' आग्नेयमष्टा-कपालं निर्वपेद् रुक्कामः ' ' अग्नीषोमीयमेकादशकपालं निर्वपेत् श्यामाकं ब्रह्मवर्चसकामः ' ' ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकामः ' इति । तत्रैतेषु यागेषु अयमर्थः सांशयिकः किं प्राकृतं द्रव्यदेवतं निवर्तते, उत न निवर्तते इति । सर्वासामेवंजातीयकानां चोदनानामुत्पन्नानां द्रव्य-देवनेनैव सहोत्पत्तिः । तस्योत्तरकाल चोदकः । तस्माद-गृहीते द्रव्यदेवते चोदकेन, विधिनैव प्राप्ते । द्रव्यदेवतं प्रति निराकाङ्क्षे यागे अवशिष्टान्यङ्गानि चोदकः प्राप-यिष्यतीति । अथ यदुक्तम् (१०।७।९।३०) अग्रहणात् ग्रहणमिति, तदिह सिद्धम् ।

**अधिकं स्यादिति चेत् । ५९ ॥**

**भाष्यम्**— इति चेत् पश्यसि, विधिना प्राप्तत्वादव-शिष्टानि चोदकः प्रापयिष्यतीति । नैतदेवम् । अधिकं स्यात् । उक्तमेतत् ( १०।७।९।३१ ) तुल्यश्चोदकः सर्वेष्वङ्गेषु । नहि स पदार्थमाकाङ्क्षति । पदार्थकृतं प्रकार-माकाङ्क्षति । तस्मात् द्रव्यदेवतमपि चोदकः प्रापयति । प्राप्ते वचनप्रामाण्यात् अधिकं भविष्यति । एकं वचनप्रापितम्, अन्यच्चोदकेनेति ।

**नार्थाभावात् । ६० ॥**

**भाष्यम्**— नैतदेवम्, अधिकं कर्तव्यमिति । कुत ? अर्थाभावात् । प्रयोजनाभावादित्यर्थः । सत्यं चोदक-प्राप्तं प्रत्यक्षश्रुत्या न प्रतिषिद्धं द्रव्यदेवतम्, किन्तु परार्थं तत्, यागनिर्वृत्तये । स च याग एकेनैव द्रव्येण एकया देवतया निर्वर्तयितव्यः श्रूयते ' आग्नेयमष्टाकपालं निर्व-पेद् रुक्कामः ' इत्येवमादि । तस्मिन् सहायापेक्षे कल्प्य-माने निर्देशो बाध्येत । अथ तेन निर्वर्तिते चोदकप्रापितस्य न किञ्चिदस्ति प्रयोजनमिति तत् श्रुतमपि सिद्धत्वात् प्रयोजनस्य न करिष्यते ।

**सोम**—पूर्वत्र श्रुतस्यैव नियतत्वेऽपि इह श्रुतस्य चोदकप्राप्तस्य च विकल्पः इत्युत्थितेः **संगतिः** । **सूत्रा-र्थस्तु**— सर्वासां द्रव्यदेवतादिगुणयुक्तवैकृतचोदनानां चोदके द्रव्यविषये अप्रवृत्ते सति वैकृतद्रव्यादीनां ग्रहणं स्यात् उपदेशार्थवत्त्वाय इति ।

**वि**— ' काम्येष्टिषु द्रव्यदेवं प्राकृतं न निवर्तते । निवर्तते वा, न प्राप्तेर्विकल्पो वा समुच्चयः ॥ , उत्पत्ति-शिष्टेनैवात्र निराकाङ्क्षत्वतः कुतः । चोदकः शिष्ट एवास्य विषयोऽर्थान्निवर्तते ॥ ' ( चोदकः कुतः, नास्तीत्यर्थः । किन्तु अस्य विषयः शिष्ट एव इत्यन्वयः ) ।

**भाट्ट**— वैकृतं श्यामाकादिद्रव्यं सूर्यादिदेवता क्रिया-ऽन्तरसाधनं च शरादि प्राकृततत्स्थानापन्नद्रव्यदेवता-कुशादेः निवर्तकं न वेति संदेहे, उभयोरपि प्रमाणसिद्ध-त्वात्, कल्प्यत्वेऽपि अतिदेशस्य प्रयाजादिविषये आव-श्यकत्वेन कुशादिविषयत्वावश्यम्भावात्, दुर्बलप्रमाण-प्रापितस्यापि च प्रबलप्रमाणप्रापितेनापि अत्यन्तबाधा-योगात् उभयोरपि तुल्यबलत्वेन विकल्पः । नहि प्रत्यङ्गं भिन्नोऽतिदेशः कथम्भावाकाङ्क्षिण्या विकृत्या लाघवेन प्रकृतिवदित्येवमाकारकस्य एकस्यैव अतिदेशस्य कल्प-नात् । अतो न क्वचिदपि प्रत्याम्नानाद्बाधः । इति प्राप्ते, उपकारपृष्ठभावेन पदार्थानामतिदेशात् यदुपकार-जनकीभूतः पदार्थो विकृतौ आम्नातः, तदुपकारजनकी-भूतप्राकृतपदार्थातिरिक्तपदार्थानामेव विकृतावतिदेशात् कुशादिपदार्थस्य आकाङ्क्षाऽभावे अतिदेशविषयत्वस्यैव अकल्पनात् कुशानां नैव प्रामाणिकत्वम् । अत एव वस्तुतः अप्राप्तस्यैव कुशादेर्विशेषादर्शने सति प्रापक-शास्त्रस्य आहवनीयादिशास्त्रवत् क्लृप्तत्वेन कुशादि-विषयत्वभ्रमात् प्राप्तबाधत्वव्यवहारः । विस्तरेण चैत-न्निरूपितं कौस्तुभे बलाबलाधिकरणे ( ३।३।७ ) । अतः सिद्धः प्रत्याम्नानात् शरादिभिः कुशादीनां बाधः । इह

सिद्ध एव च बाधः पूर्वे तत्रतत्र व्यवहृत इति ध्येयम् । १५.

**मण्डन**— ‘ द्रव्येषु काम्येषु न चोदकोक्तम् । ’ १७.

**शंकर**— ‘ प्रत्याम्नानाच्च बाधनम् । ’ १७.

* **काम्यकर्मणः** प्रारब्धस्य समाप्तिर्नियता । भा. ६।२।३।१३–१५, * **काम्यकर्मसु** सर्वाङ्गोपसंहारेणानुष्ठानम् । ११।१।३।११–१९. * **काम्यकर्माकरणेऽपि** कामिनोऽपि प्रत्यवायप्रायश्चित्ते न भवतः । वि. ६।३।२. * **काम्यकर्मारम्भोत्तरं** वीतायां स्वर्गादिफलेच्छायां तत्फलासंभवात् नित्यकर्मवत् पापक्षय एवात्र फलम् । स्पष्टं चेदम् उत्पत्त्यधिकरणे टुप्टीकातन्त्ररत्नयोः । सोम. ६।२।३. * **काम्यगुणानां** विकृतौ नातिदेशः । भा. ८।१।१४। २३–२५. * ‘**काम्यनैमित्तिकाभ्यां** हि तथा नित्यस्य बाधनम् ’ । वा. ३।६।३।१० पृ. १०३३.

* **काम्यपशुकाण्डे** ‘ आग्नेयं कृष्णग्रीवमालभेत , सौम्यं बभ्रुम् , आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्धमानः ’ इति पठितयोः आग्नेययोः सौम्येन व्यवधानात् न तन्त्रम् । वि. ११।१।११.

**काम्यबलवत्त्वन्यायः** । काम्यं नित्यस्य बाधकम् इति न्यायाभिन्न एवायम् । के.

* **काम्ययाज्यानुवाक्याकाण्डं** तैत्तिरीयादौ प्रायः प्रतिप्रपाठकम् अन्तिमानुवाकसमुदायात्मकम् । के. * काम्ययाज्यानुवाक्याकाण्डोक्तानां मन्त्राणां काम्येष्टिषु एव प्रथमायामिष्टौ प्रथमस्थानपठिते याज्यानुवाक्ये , द्वितीयेष्टौ द्वितीयस्थानपठिते याज्यानुवाक्ये इति क्रमेण विनियोगः । क्व चित् युगलद्वयादिकमपि पठितम् । तस्य तु क्रमसमाख्यासहितेन लिङ्गेन विनियोगः । के. ३।२।७।२०.

* **काम्याग्रतासु** अपि ऐन्द्रवायवाग्रत्वे ऐन्द्रवायवस्य स्वस्थाने एव ग्रहणम् , न तु उपांशोः पूर्वम् । भा. १०।५।१८।६५–६६.

**काम्याग्रताविधौ शुक्रादिग्रहस्य सर्वादितः प्रतिकर्षः ॥**

**परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु । १०।५।१९।६७ ॥**

**भाष्यम्** — अस्ति ज्योतिष्टोमः । तत्र ऐन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते ‘ आश्विनाग्रान् गृह्णीयादामयाविनः , शुक्राग्रान् गृह्णीयादभिचरतः , मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य ’ इति । तत्र संशयः, किमेतेष्वपि स्वक्रमस्थानां ग्रहणम् उत सर्वादितः प्रतिकर्षः कर्तव्य इति । किं प्राप्तम् ? परेषु च ऐन्द्रवायवात् परेषु एवमादिषु ग्रहणेषु अग्रशब्दः पूर्ववत् स्यात् स्वक्रमस्थग्रहणमिति । यस्ययस्य अग्रता श्रूयते तदग्राणां कामसंयोगः इति ।

**प्रतिकर्षो वा, नित्यार्थेनाग्रस्य तदसंयोगात् । ६८॥**

**भाष्यम्** — प्राक् ऐन्द्रवायवात् प्रतिकर्षः स्यात् । कुतः ? नहि अत्र नित्यार्थेन कामस्य संयोगो भवति । यदि हि नित्ये कामो भवेत् , आश्विनाग्रान् मन्थ्यग्रान् इति अग्रशब्दः अस्य नोपपद्येत । नहि तस्मिन् वचने सति प्रवृत्तेः कश्चित् विशेषः उपलभ्यते । प्राक् ऐन्द्रवायवात् पुनः प्रतिकर्षे वचनम् अर्थवत् भवति । अपिच प्रकृतास्ते ग्रहाः, तेषाम् आश्विनाग्रता , शुक्राग्रता ( च ) विधीयते । तस्मात् आदितः प्रतिकर्ष इति ।

**प्रतिकर्षं च दर्शयति । ६९ ॥**

**भाष्यम्** — ‘ धारयेयुस्तम् , यं कामाय गृह्णीयुः । ऐन्द्रवायवं गृहीत्वा सादयेत् , अथ तं सादयेत् यं कामाय गृह्णीयुः ’ इति कामाय गृहीते धार्यमाणे ऐन्द्रवायवस्य ग्रहणं दर्शयति । तस्मात् सर्वादितः प्रतिकृष्टव्य इति ।

**सोम**— पूर्ववत् इहापि ग्रहाणामेव विधानम् इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**– शुक्राग्रात् परेष्वपि ग्रहेषु अग्रशब्दः पूर्ववत् स्वक्रमस्थस्यैव अभिधानात् स्यादिति ।

**वि**— ‘स्वस्थाने प्रतिकर्षो वा शुक्रादेः, पूर्ववद्भवेत् । स्थाने , मैवं तदग्रत्वात् प्राप्तेः स प्रतिकृष्यते ॥ ’

**भाट्ट**— तत्रैव ‘ शुक्राग्रान् प्रतिष्ठाकामस्य , मन्थ्यग्रान् अभिचरन् ’ इति श्रुतं फलम् , न तु ग्रहणजन्यम् , प्रकृतधाराग्रहेषु मन्थ्यग्रत्वादेः कथमपि अप्राप्तत्वेन गोदोहनादिवत् विधेयतया तस्यैव फलसंबन्धात् । पूर्ववत् गुणवाचकपदस्य प्रयोजनाभावेन दध्यादिवत् फलसंबन्धोपपत्तेश्च ! न च शुक्राद्युत्तरभाविनामेव ग्रहणानां भावार्थाधिकरणन्यायेन फलसंबन्धोपपत्तेः तावत्सु च शुक्राग्रत्वमन्थ्यग्रत्वादेः प्राप्तत्वात् , विधेयताऽवच्छेदकशुक्रादिग्रहत्वमन्थ्यादिग्रहत्वप्रतिपादकतया च गुणवाचकपदस्य सार्थक्योपपत्तेर्नात्र प्रकृतधाराग्रहमात्राश्रितशुक्राग्रत्वादेर्गुणस्य फलसंबन्धः इति **वाच्यम्** । तथात्वे ‘ शुक्राग्रान् ’ इति अग्रपदस्य वैयर्थ्यापत्तेः विधेयताऽवच्छेदकस्य शुक्रादिग्रहत्वस्य ‘शुक्राग्रान् गृह्णीयात्’ इत्येवं पदेनाभिधातुं युक्तत्वात् , शुक्रग्रहापेक्षयाऽपि पूर्वं धाराग्रहसत्वेन अग्रपदस्यानुवादानुपपत्तेश्च , ‘ ऐन्द्रवायवाग्रान् ग्रहान् ’ इत्यादिवाक्यस्थग्रहपदस्य सर्वधाराग्रहवाचिनः इहानुषक्तस्य कतिपयधाराग्रहपरत्वे वैरूप्यापत्तेश्च । अतश्च ग्रहपदसंकोचे प्रमाणाभावात् प्रकृतधाराग्रहाश्रिता शुक्राग्रता मन्थ्यग्रता च तत्तत्फलोद्देशेन विधीयते । शुक्रादेश्च पाठप्राप्तं स्वस्थानं बाधित्वा पूर्वं प्रतिकर्षः ।

**मण्डन**— ‘ मन्थ्यग्रताऽऽदिः सकलग्रहाणाम् । ’

**शंकर**— ‘ काम्या शुक्राग्रतायां न । ’ २१. काम्या अग्रता ।

* **काम्येष्टीनामेकार्थानां** पुरुषार्थक्रिययोर्न्यायगम्ययोर्विकल्पः । बाल. पृ. १५४. * काम्येष्टीनां काम्यशब्दवाच्ये प्रधाने ‘ यज्ञाथर्वणं वै ’ इत्यादिना विशेषवचनेन उपांशुत्वविधानात् अङ्गमात्रे स्वरत्रयं युक्तम् । सु. पृ. ११७८. * **काम्येष्टिषु** उपांशुत्वं प्रधाने एव , अङ्गेषु तु तत्तद्वेदानुसारी स्वरः । उपांशुत्वाधिकरणम् । भा. ३।८।१९। ३५–३६. * काम्येष्टिषु ऐन्द्राग्नादिषु द्रव्यदेवते उपदिष्टे एव , न प्राकृतातिदिष्टाभ्यां विकल्पः समुच्चयो वा , अङ्गकलापस्तु चोदकप्राप्तः । वि. १०।७।१७, * काम्येष्टिषु प्रधानम् उपांशुस्वरेण , अङ्गानि तु तत्तद्वेदानुसारेण स्वरेण । ३।८।२०, * **काम्येष्टिकाण्डे** ‘ प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः ’ ‘ घृते श्रपयति ’ इति । तत्रावघातो न कर्तव्यः पाकस्तु कर्तव्यः, स चोष्णीकरणपर्यन्तः । कृष्णलं सुवर्णशकलं गुञ्जापरिमितम् । १०।१।१ वर्णकं २, * काम्येष्टिकाण्डपठिताः ‘ ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः ’ इत्यादय इष्टयः प्रकृतेः कर्मान्तरम् । २।३।१२.



**काम्येष्टिन्यायः ॥**

**अङ्गवत् क्रतूनामानुपूर्व्यम् । ५।३।१२।३२ ॥**

**भाष्यम्**— इह काम्या इष्टय उदाहरणम् ‘ ऐन्द्राग्नमेकादशकपालं निर्वपेत् ’ इत्येवमादयः, गवादयः सोमाः, सौम्यादयः पशवः । तत्र संदेहः किं येन क्रमेण अधीतास्तेनैव क्रमेण प्रयोक्तव्याः, उतानियमः इति । किं तावत् प्राप्तम् ? क्रतूनामानुपूर्व्यं यत् पाठे, तदेव प्रयोगे भवितुमर्हति । एवं पाठक्रमोऽनुगृहीतो भविष्यति । इतरथा पाठक्रमो बाध्येत । तन्मा भूदिति क्रमेणानुष्ठातव्यम् ।

**न वाऽसंबन्धात् । ३३ ॥**

**भाष्यम्**— न चायं क्रमो नियम्येत । कुतः ? असंबन्धात् । पृथक्पृथगेषां कर्मणां प्रयोगवचनानि । तानि स्वपदार्थानामुपसंहारकाणि । यो यस्य नोपकारकः, स तस्य न क्रमेण नोत्क्रमेण । यो यस्योपकरोति कस्य चित् , तस्योपकुर्वतः क्रमः साहाय्ये वर्तते । न चैतानि कर्माणि अन्योन्यस्योपकुर्वन्ति । तस्मात् नैषां क्रमः साहाय्ये वर्तते । तस्मादसंबन्ध इति ।

**टुप्**— अनियमेन कामा उत्पद्यन्ते । तेषां नास्ति क्रमः । कामेन च निमित्तेन कर्म कर्तव्यम् । तस्मात् नैमित्तिकेन क्रमेण प्रयोगे स्वाध्यायक्रमो बाध्यते अनङ्गत्वात्तेषाम् । एकप्रयोगवचनाभावाच्च नास्ति क्रमः ।

**काम्यत्वाच्च । ३४ ॥**

**भाष्यम्**—काम्यानि चैतानि कर्माणि । कामाश्च न क्रमेणोत्पद्यन्ते ; तेन निमित्तस्य अक्रमत्वात् न क्रमवन्त इति ।

**आनर्थक्यान्नेति चेत् । ३५ ॥**

**भाष्यम्**— इति यदुक्तं पूर्वपक्षे , तदेव पुनरुच्यते परिहर्तुम् । एवं क्रमेण पाठः अर्थवान् भविष्यतीति ! एतदाभाषान्तं सूत्रम् ।

**स्याद्विद्याऽर्थत्वाद्यथा परेषु सर्वस्वारात् । ३६ ॥**

**भाष्यम्**— स्यादर्थवान् क्रमपाठः असत्यपि प्रयोगे क्रमे विद्याग्रहणार्थत्वात् । कर्मावबोधनार्थायां विद्यायां क्रमनियमादृष्टं तदाश्रयमेव भविष्यतीति । यथा त्वत्पक्षे परेषु सर्वस्वारात् । यस्यापि क्रमः अङ्गमिति पक्षः, तस्यापि सर्वस्वारात् परेषां सर्वस्वारेण यः क्रमः, तस्यादृष्टार्थता अवश्यं कल्पनीया ।

**सोम**— दीक्षितधर्माणाम् इष्टिसाध्यदीक्षालक्षणनिमित्तानन्तर्यनियमेऽपि पाथिकृतादीनां नैमित्तिकानां न निमित्तानन्तर्यनियमः इति प्रत्यवस्थानात् **संगतिः** ।

**भाट्ट**— काम्यानाम् उद्भित्सौर्यादीनाम्, नैमित्तिकानां च भेदनहोमादीनां समिदादिवदेव पाठक्रमात् **क्रमे प्राप्ते**, उपायप्रवृत्तित्वावच्छिन्नं प्रति फलेच्छायाः कारणत्वात् नैमित्तिकानुष्ठानस्य च निमित्ताधीनत्वात् तदनुरोधेनैव क्रमावगतेः न पाठस्य नियामकता । वस्तुतस्तु यत्रैकप्रयोगविधिपरिग्रहः अनेकेषाम्, तत्रैव क्रमापेक्षायां पाठादीनां नियामकता, न तु यत्र भिन्नप्रयोगविधिपरिग्रहः । अत एव तादृशस्थले पाठः पारायणादौ उपयुज्यते ।

**मण्डन**— ‘ काम्ययागेषु न क्रमः । ’

**शंकर**— ‘ पाठक्रमः क्रतूनां न । ’

* **कायस्य** एककपालस्य वरुणप्रघासगतस्य यत् सार्थवादविधिकाण्डम्, तस्य साकमेधीयैककपाले अतिदेशः । **भा.** ७।१।४।२२, * **काये** एककपाले वरुणप्रघासगते आग्रयणगतद्यावापृथिव्यैककपाले च द्यावापृथिव्यैककपालविध्यन्तस्यातिदेशः । एककपालत्वसामान्यात् । ७।३।१०। २६–२७.

* **कारकम्** अभिदधत् प्रत्ययः शक्तिमात्ररूपेण अभिदध्यात्, न द्रव्यरूपेण तस्याकारकत्वात् । **वा.** ३।४।४।१३ पृ. ९३३. * कारकमेव प्रधानम् । ‘ प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोः प्रत्ययार्थः प्राधान्येन ’ इति प्रत्ययार्थप्राधान्यस्मृतेः । लिङ्गसंख्ययोश्च प्रत्ययार्थत्वाविशेषेण एकस्मिन् पदे अनेकेषां प्राधान्यायोगात् एकस्यैव प्राधान्येऽवगते कारकत्वेन प्रयोजनवत्त्वात् प्राधान्यप्रतीतेः लिङ्गसंख्याऽपेक्षया वा प्रातिपदिकार्थप्राधान्यस्मृत्युपपत्तेः कारकमेव प्रधानम् । **सु.** पृ. १०१४. * कारकं क्रियाया एव भवति, न द्रव्यस्य । **के.** * कारकं च क्रियाऽर्थम्, भूतत्वात् । **भा.** ११।२।१६। ६६. * कारकं च विभक्तिप्रतिपादितम् आविर्भूतपूर्वापरीभूतभावनैकदेशः इत्युक्तम् । **वा.** ३।१।७।१३ पृ. ७०४, * कारकं विभक्त्या अनूद्य प्रातिपदिकार्थो विधीयते इत्येव परमार्थः । ३।१।६।१२ पृ. ६९१, * कारकं विभक्त्या प्रत्याय्यते । २।२।५।१६ पृ. ५०७. * कारकं सर्वं कार्यसमधिगम्यम् । **ऋजु.** पृ. ९४. * ‘ कारकं ह्युच्यते कुर्वन्नाक्रियां तत् करोति च । तस्मान्न द्रव्यसंबन्धः कारकस्यास्ति कस्य चित् ॥ ’ ( क्रियां कुर्वत् कारकमुच्यते । तत् च कारकं अक्रियां क्रियाभिन्नं द्रव्यादिकं न करोति इत्यन्वयः ) । **वा.** ३।१।६।१२ पृ. ६९२. * **कारकाणि** कर्त्रादीनि सर्वाणि तावत् क्रियायाः उपकुर्वन्ति, अथ च प्रतिकारकं कार्यभेदः । **भा.** ११।१।२।७. * कारकाणि कृदन्ताभिहितानि तिरोहितत्वान्न शक्नुयुरपि नामार्थत्वेन क्रियां ग्रहीतुम् । सुप्तिङन्तस्थानि तु आविर्भूतत्वात् शक्नुवन्ति । **वा.** ३।४।४।१२ पृ. ९०५. * विधीयमानायां क्रियायां **कारकाणि** उद्भूतशक्तीनि भवन्ति । तानि क्रियया संबध्यन्ते कारकत्वात् । अविधीयमानायां तु क्रियायां कारकाणि अनुद्भूतशक्तीनि भवन्ति । **टुप्.** १०।३।१७। ६४. * **कारकस्य** कर्तृकरणापादानाधिकरणकर्मसंप्रदानातिरिक्तस्य अभावात् । **सु.**पृ.७५१. * कारकस्य क्रियानिर्वृत्त्येकस्वभावत्वम् । **सोम.** ४।१।५ पृ. ३५३. * कारकस्य य आत्मीयो व्यापारः स एकवचने विवक्षिते एकेन कर्तव्यो भवति । **भा.** ६।१।४।१७. * **कारकयोः** साक्षात् ( क्रियां विना ) अन्वयायोगात् । **सु.** पृ. ८२७.

* **कारकाणाम्** अवान्तरक्रियासु कर्तृत्वं प्रतिपद्यमानानां प्रधानक्रियासु कर्मादिविभागो जायते । प्रतिक्रियं योग्यताभेदात् अवान्तरक्रियावैचित्र्यं भवति । **वा.** २।१।१।१ पृ. ३७७, * कारकाणां क्रियाऽऽक्षिप्तत्वेन परस्परसंबन्धाभावात् । २।१।१७।४८ पृ. ४५८, * कारकाणां क्रियापरिहारेण ( क्रियां विना इत्यर्थः ) अन्योन्यसंबन्धाभावात् । १।२।४।३१–१ पृ. १४६. * कारकाणां धात्वर्थान्वयस्य अव्युत्पन्नत्वात् । एतेन कारकाणां धात्वर्थान्वयवादिनो **नैयायिकाः** परास्ताः । **रहस्य.** पृ. १३४. * कारकाणां न क चित् परस्परं साक्षात् संबन्धः । क्रियाऽन्वितानां तु तद्द्वारकोऽस्त्येव पश्चात् संबन्धः । **रत्नाकरः.** श्लोवा. शब्दार्थसंबन्धे १४. * कारकाणां प्रथमतो भावनाऽन्वय एव स्वीक्रियते । **भाट्ट.**



४।१।३. * कारकाणां भावनाऽन्वयः साक्षादसंभवात् धात्वर्थपरिच्छेदद्वारकः । **मणि.** पृ. ११२. * कारकाणां भावनोपसर्जनधात्वर्थनिष्पत्त्यर्थत्वात् धात्वर्थेनैव संबन्धसिद्धिः । स एव हि तानि स्वसिद्ध्यर्थमपेक्षते, भावनाऽपि च तथाभूतान्येव तानि गृह्णाति इत्यविरुद्धः संबन्धः । **वा.** २।१।१।१ पृ. ३८२, * कारकाणां विभक्त्यर्थत्वाभ्युपगमात् । ‘ करणाभिधायिन्या तृतीयाविभक्त्या ’ इति अरुणाऽधिकरणस्थं ( ३।१।६।१२ पृ. ६७९ ) भाष्यम् । १।४।१।२ पृ. ३२४. * कारकाणां सर्वेषां तद्भूताधिकरणवार्तिके ( १।१।७ ) स्वव्यापारेषु कर्तृत्वस्योक्तत्वात् ( ६५–६८ श्लो. ) । तस्मिन्नेव चाधिकरणे ‘ तत्स्वातन्त्र्यावगत्यैव विनियुङ्क्ते प्रयोजकः ’ ( २९५ श्लो. ) इत्यादिवार्तिकेन स्वव्यापारकर्तृत्वाद्भिना प्रधानक्रियागतकारकवैचित्र्यानुपपत्त्युक्त्या स्वव्यापारे कर्तृत्वस्योपपादितत्वात् । **सु.** पृ. १४५३, * कारकाणां सिद्धरूपत्वेन व्यापाररूपधात्वर्थनिष्पादनं विना साक्षात् भावनाऽन्वयायोगः । पृ. ७६७, * कारकाणां स्वव्यापारेषु कर्तृत्वसद्भावात् स्थाल्यादीनां कर्तृत्वविवक्षया तिङः स्थाल्यादिपदोक्तसंख्याऽनुवर्तनम् । पृ. १४५३. * कारकाणां स्वव्यापारापेक्षया कर्तृत्वं संभवति इति पुरस्तात् प्रतिपादितम् । ( **वा.** २।१।१।१ पृ. ३७७ इत्यत्र ) । **वा.** ३।४।४।१३ पृ. ९३७. * गुणस्येव द्रव्यपरिच्छेदं विना, **कारकाणां** धात्वर्थनिष्पादनं विना भावनाऽन्वयायोगात् धात्वर्थसिद्ध्यर्थत्वेनैव भावनया ग्रहणात् आख्याताश्रवणे भावनाऽन्वयाभावेऽपि धात्वर्थान्वयः अविरुद्धः । **सु.** पृ. ५७३.

* **कारकत्वं** नाम क्रियाहेतुत्वम् । **वि.** ४।१।५. * कारकत्वं विना क्रियाऽन्वयायोगः । **सु.** पृ. ७५१. * ननु किमिदं **कारकत्वम्** । न तावत् क्रियाप्रयोजकत्वम्, ‘ देवदत्तस्य तण्डुलं पचति ’ इत्यत्र अनुमतिद्वारा क्रियाप्रयोजके देवदत्ते अतिप्रसङ्गात् । नापि क्रियाजनकत्वम् । ‘ यथाज्ञानं पचति ’ इति ज्ञाने अतिप्रसक्तेः । अथ धात्वर्थान्वितविभक्त्यर्थान्वयित्वं कारकत्वम्, ‘ धनाय गच्छति ’ ‘ स्वर्गाय यतते ’ इत्यादौ अकारकयोः धनस्वर्गयोः अतिव्याप्तेः । ‘ न पचति ’ इत्यादौ नार्थेऽतिव्याप्तेश्च, तस्य पाकान्वितारख्यातविभक्त्यर्थान्वयात् । निपातातिरिक्तत्वेन विशेषणे ‘ नक्तं पचति ’ इत्यादौ अधिकरणे नक्तादौ अव्याप्तेः । तस्मात् कर्तृकर्माद्यन्यतमत्वं कारकत्वम् इति **नैयायिकाः** । सामान्यतः समवेतासमवेतस्य द्वैविध्यात् कारकत्वं कर्तृत्वादिकं च अनुगतव्यवहारसिद्धम् अखण्डोपाधिरूपं सामान्यम् इति **रत्नकोशकृतः** । **सिद्धान्तस्तु** आख्यातार्थान्वितविभक्त्यर्थान्वयित्वं कारकत्वम् । लिङ्गसंख्याऽऽदीनां कारकत्वम् इष्टमेव । ‘ आज्यस्य यजति ’ इत्यादौ लाक्षणिकषष्ठ्यर्थस्यापि आख्यातार्थान्वयात् आज्यादेः कारकत्वम् । उपपदविभक्त्यर्थानां तु कल्पितधात्वर्थान्तरे अन्वयात् श्रुतभावनाऽनन्वयित्वेन न कारकत्वम् । **मणि.** पृ. १२८–१२९. * **कारकत्वेन** यद्यपि द्रव्याणि प्रतीयन्ते, तथापि तत्पदानि अविधायकान्येव । **वा.** ३।१।६।१२ पृ. ६९४. * निर्व्यापारस्य **कारकत्वायोगः** । **सु.** पृ. १४४०.

* **कारकप्रतीतिं** मुक्त्वा नान्यत् क्रियायाः प्रत्यायकमस्ति । **वा.** ३।४।४।१३ पृ. ९२९.

* **कारकप्रतीतिपरा** विभक्तिः नान्तरीयकत्वात् संख्यां प्रतिपादयति (उद्देश्ये) । **वा.** ३।१।७।१४ पृ.७२३.

* **कारकलक्षणा** द्वितीयाऽऽदिः विभक्तिः क्रियासंबन्धे विवक्षिते भवति । सा क्रियासंबन्धस्य वाचिका । **भा.** ३।१।६।१२ पृ. ६८८.

* **कारकविभक्तिः** द्वितीया सामर्थ्यादेव आख्यातेन संबध्यते, न नाम्ना । **भा.** १०।३।१७।६३. * कारकविभक्तिः नामपदार्थालोचनाय ( नया ) प्रत्ययं प्रयुङ्क्ते । सा च नानोच्चारितानां नैव प्रयुङ्क्ते । **वा.** २।२।५। १६ पृ. ५०७. * कारकविभक्तिः यत्र कर्तृत्वादेर्विभक्त्यर्थस्य साक्षात् भावनायामन्वयः, सा । **मणि.** पृ. १३३. * न च कारकविशेषणत्वात् गुणानां **कारकविभक्तिः**, किं तर्हि ? कारकत्वादेव । एतदपि पश्वेकत्वविवक्षाऽधिकरणे वक्ष्यते ( ४।१।५।११–१६ ) । **वा.** ३।१।६।१२ पृ. ६८८, * **कारकविभक्तिमन्तरेण** क्रियासंबन्धाभावात् । ३।१।७।१४ पृ. ७१९. * कारकविभक्तिं विना आख्यातान्वयायोगः । **सु.** पृ. ४०१, * **कारकविभक्तिभिः** कारकस्यैव प्राधान्येनाभिधाना-

म्युपगमात् । अन्यथा च एकत्वादेः कारकद्वारा क्रियाङ्गत्वोक्त्ययोगापत्तेः संख्यैव कारकविशेषणम् । पृ. १४३०. * **कारकविभक्तेः** बलीयस्त्वात् । सर्वो हि संबन्धः **क्रियागर्भ एव** । तेन सूक्तवाकप्रस्तरप्रहरणयोः लक्षणक्रियागर्भोऽयं संबन्धः । न चेह लक्षणक्रिया उपात्ता, तामनुपात्तामपेक्ष्य अयं संबन्धः प्रत्येतव्यः इति विप्रकृष्यते । क्रियाकारकसंबन्धस्तु नान्यापेक्षः इति बलीयस्त्वम् । तेन करणमेव सूक्तवाकः । शा. ३।२।५। **सोम--** क्रियागर्भः क्रियाघटितः क्रियाप्रयुक्त इति यावत् । यथा राज्ञः पुरुष इति राजपुरुषयोः संबन्धः एकस्यां दानक्रियायाम् उभयोः दातृप्रतिग्रहीतृत्वभावात् तया दानक्रियया प्रयुज्यते, तद्वत् सर्वोऽपि संबन्धः क्रियाप्रयुक्तः । उक्तं च ' न क्रियागर्भसंबन्धादृते संबन्धनं क्व चित् ' इति । तेन यत्र तृतीया इत्थंभूतलक्षणे स्यात्, तदा तृतीयया ( सूक्तवाकेन प्रस्तरं प्रहरति ) सूक्तवाकस्य प्रस्तरस्य च लक्ष्यलक्षकभावः प्रत्याय्यः । स च लक्षणक्रियाप्रयुक्तः, लक्षणक्रियां विना लक्ष्यलक्षणभावस्यासंभवात् । लक्षणक्रिया नाम ज्ञानक्रिया । न चात्र ज्ञानात्मिका क्रिया उपात्ता । एवं च लक्षणक्रियां कथञ्चित् हृदयमागमय्य ज्ञाप्यज्ञापकभावात्मको लक्ष्यलक्षणभावः प्रत्येतव्यः इति तत्प्रतीतिः विलम्बेन जायते । कारकभावेन संबन्धस्तु शब्दोपात्तक्रियायाः साक्षादेव संभवति इति क्रियान्तरानपेक्षत्वात् क्रियाकारकसंबन्धः शीघ्रं प्रतीयते । एवं च ( उपपद--कारक--विभक्त्योः ) स्वस्वार्थप्रतीतिशैघ्र्यमान्द्यकृतं बलाबलमित्यर्थः । * **कारकविभक्तीनां** विनियोजकत्वम् । वा ३।१।७।१३ पृ. ७००. * **कारकविभक्तिरूपा** विनियोक्त्री श्रुतिः । **कर्तरि** तृतीया, यथा 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' । कर्तरि षष्ठी, यथा ' कृष्णस्य कृतिः' । **कर्मणि** द्वितीया, यथा ' व्रीहीनवहन्ति ' । कर्मणि तृतीया, यथा ' यवाग्वा जुहोति ' ' पित्रा पितरं वा संजानीते ' । कर्मणि चतुर्थी, यथा ' ग्रामाय याति ' । कर्मणि षष्ठी, यथा ' जगतः कर्ता ' ' चित्रमगोपेन गवां दोहः ' । **करणे** तृतीया, यथा 'सोमेन यजेत ' । करणे पञ्चमी, यथा 'स्तोकेन स्तोकाद्वा युक्तः' । करणे षष्ठी, यथा ' शतस्य दीव्यति ' ' शतस्य प्रतिदीव्यति ' ' अग्नये छागस्य हविषो वपाया मेदसः प्रेष्य--अनुब्रूहि ' 'आज्यस्य यजते ' । **संप्रदाने** चतुर्थी, यथा ' मैत्रावरुणाय दण्डं प्रयच्छति ' । संप्रदाने षष्ठी, यथा ' गोधा कालका दार्वाघाटास्ते वनस्पतीनाम् ' । **अपादाने** पञ्चमी, यथा ' अग्नेस्तृणान्यपचिनोति ' । **अधिकरणे** षष्ठी, यथा 'पञ्चकृत्वो द्विर्वा अह्नो भुङ्क्ते' । अधिकरणे सप्तमी, यथा 'समे दर्शपूर्णमासाभ्यां यजेत' । प्रातिपदिकार्थक्रिययोः अस्वार्थयोरपि विनियोक्त्री सुप्--तिङ्--श्रुतिस्तु स्वोक्तानामेव अर्थानां विनियोक्त्री । बाल. पृ. ४४, ४५. * **कारकविभक्तिश्रुतेरेव** विनियोगहेतुत्वम् । सु. पृ. १२०९. * **कारकविभक्ति**साध्यत्वात् क्रियासंबन्धस्य । वा. ३।१।६।१२ पृ. ६७९.

* **कारकश्रुतिः** तद्धितश्रुतेर्बलीयसी इति ' ऐन्द्या गार्हपत्यम्' इत्यत्र मन्त्रस्य गार्हपत्याङ्गत्वमेव, नेन्द्राङ्गत्वम् । शेष्यनेकत्वे इदम् । कौ. ( तात्पर्यम् ) ३।३।७।१४ पृ. ३५१, * कारकश्रुतिः पदश्रुत्यपेक्षाया दुर्बला उपजीवकत्वात् ' सोमेन यजेत ' इत्यादौ । शेषानेकत्वे इदम् । ३।३।७।१४ पृ. ३५१, * **कारकश्रुत्योर्विरोधे** सामान्यविशेषभावादिना बलाबलं द्रष्टव्यम्, ' आग्नेयं चतुर्धा करोति ' ' पुरोडाशं चतुर्धा करोति ' इत्यत्र यथा । इदं शेष्यनेकत्वे । ३।३।७।१४ पृ. ३५१.

* **कारकान्यत्वे** विधेर्व्यापारभेदो भवति एककारकनिबन्धनं तु अर्थसहस्रमपि एकप्रयत्नसाध्यम् । वा. २।२।५।१६ पृ. ५०७.

* **कारणम्** । अव्यभिचारि च कारणम् कारणवतामिष्टम् । भा. ३।१।६।१२ पृ. ६८२. * न च बलीयः **कारणं** शक्यते बाधितुम् । ३।३।७।१४ पृ. ८४९. * येन विना यन्न संभवति, तत् तस्य कारणम् । **बृहती.** पृ. ५४.

卐 **कारणादभ्यावृत्तिः** । ५।२।१।३ ॥

पौण्डरीकादौ यत्र यागे भूयसामश्वानां प्रतिग्रहो भवति, तत्र प्रत्यश्वप्रतिग्रहं चतुष्कपालो वारुणः पुरोडाशः प्रायश्चित्ततया कर्तव्यो भवति । तत्र भूयःसु पुरोडाशेषु तन्त्रेण कृतेषु कपालोपधानादिहविरभिवासनान्तानां



धर्माणां काण्डानुसमयेनैव अनुष्ठानं कर्तव्यं न पदार्थानुसमयेन । अन्यथा प्रथमादिपुरोडाशानां भस्मीभावप्रसङ्गः । तस्मात् तत्र कारणात् भस्मीभावप्रसङ्गरूपात् पुरोडाशेषु अभ्यावृत्तिः अभितः आवृत्तिः प्रत्येकं भेदेन सर्वधर्मानुष्ठानं कर्तव्यम् । तस्मात् बहुपुरोडाशस्थले काण्डानुसमय एव, न पदार्थानुसमयः इति सिद्धान्तः । के.

* **कारणे** कार्यवदुपचारः ' त्रिष्टुभो वा एतद् वीर्यं यदुष्णिक्ककुभौ ' इत्यत्र । भा. ५।३।३।६. * कारणे कार्यवदुपचारात् तण्डुले देववर्षणवत् ( देवो वर्षति तण्डुलान् इति तण्डुलशब्दो वृष्टौ उपचर्यते ) । वा. १।३।९।२७ पृ. २८८.

卐 **कारणगुणाः कार्ये स्वसमानजातीयगुणारम्भकाः इति न्यायेन** जडदुःखात्मकस्य प्रपञ्चस्य प्रज्ञानन्दात्मकस्य ब्रह्मणः परिणामत्वं नोपपद्यते । श्रीकर. २।२।१० ब्रसू.

卐 **कारणगुणाः हि कार्यगुणारम्भकाः इति न्यायः**, तेन ज्ञानानन्दात्मकेश्वरोपादानत्वे जगतस्तद्धर्मात्मकत्वं स्यात् इति चेत् । श्रीकर. २।२।१० ब्रसू.

卐 **कारणगुणप्रक्रमन्यायः** । कारणगुणाः कार्ये स्वसमानजातीयकार्यगुणानारभन्ते । यथा शुक्लतन्तुरूपादयः शुक्लपटरूपादीनिति न्यायार्थः । कारणगुणाः स्वसमानजातीयकार्यगुणारम्भका इत्याकारकेण न्यायस्वरूपं वदन्ति वैशेषिकाः । यथा शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य वस्त्रस्य प्रसवदर्शनात् तद्विपर्ययादर्शनाच्च, तथा चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्ये जगत्यपि चैतन्यमत एव वदन्ति । ' हरिरेव जगज्जगदेव हरिर्हरितो हि जगन्नहि भिन्नतनुः । इति यस्य मतिः सततं स्मरति स नरो भवसागरमुत्तरति ॥ ' इतिपरः चायं न्यायः ' महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ' २।२।११ इति ब्रह्मसूत्रशारीरकभाष्ये प्रत्युक्तः इति विस्तरभिया नेह प्रपञ्चितम् । **साहस्री.** ४०.

* कारणगुणप्रक्रमन्यायः । द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम् इति तदर्थः । **संग्रहः.**

卐 **कारणनाशे कार्यनाशः इति न्यायः** । केचित् समवायिकारणनाशे कार्यनाशो यथा तन्तुनाशे पटनाश इति वदन्ति । परे तु असमवायिकारणनाशेऽपि कार्यनाशो यथा तन्तुसंयोगनाशे पटनाशः इति वदन्तीति । **साहस्री.** २७६.

* यद्धि यस्य **कारणभूतं** दृष्टम्, सिद्धे दृष्टान्ते तच्चेत् साध्ये पक्षेऽपि कारणभूतम् इत्यवगम्यते, भवति तत् तस्य साधकम् । यन्न ज्ञायते कारणभूतमिति, न तत् तत्सदृशमपि साधकम् । भा. २।२।११।२५ पृ. ५४४.

卐 **कारणसत्यत्वे कार्यस्य सत्यत्वम् इति न्यायः** । तेन कारणरूपसर्ववेदात्मकविमर्शशक्तेर्नित्यत्वात् कार्यरूपवेदस्यापि नित्यत्वं निष्प्रत्यूहम् । श्रीकर. १।१।३ ब्रसू.

卐 **कारणानुविधायि कार्यम् इति न्यायः** । स्मृतीराचारांश्चोपलभ्य मूलश्रुतिषु अनुमीयमानासु कारणानुविधायिकार्यन्यायेन अवश्यमुपलभ्यमानकार्यानुरूपकारणानुमानैर्भवितव्यम् इति भावनानामविशेषव्यवच्छिन्नयागदानहोमोपवासादिधात्वर्थविशेषस्वर्गादिफलकारकेतिकर्तव्यताविषयस्तावदनुमातव्याः । वा. १।३।७।१६ पृ. २४५.

* कारणानुविधायि कार्यम् । कारणतथाविधत्वं विना कार्यतथाविधत्वानुपपत्तिः कार्यानुरूपकारणानुमाने हेतुः । सु. पृ २४६.

卐 **कारणाभावे कार्याभावः इति न्यायः** । उक्तावस्थायां लिङ्गशरीरसद्भावे ' कारणाभावे कार्याभावः' इति न्यायेन तल्लिङ्गशरीरोपादानकारणपाशरूपाद्यविद्याक्षितिरर्थात् सूचिता । श्रीकर. ४।२।१५ ब्रसू.

* **कारणत्वम्** । ननु एवं ( शक्तिवत् ) कारणताऽपि अतिरिक्ता स्यात् । तत्र तावत् कार्याभावव्यापकाभावप्रतियोगित्वम्, ईश्वरतज्ज्ञानेच्छादौ अव्याप्तेः । अत एव न कार्यव्यापकत्वम्, व्याप्तेः अनन्तपदार्थगर्भतया गौरवात् । नापि कार्योत्पत्तिप्रतिबन्धकाभावप्रतियोगित्वम्, उत्तेजके अव्याप्तेः । इति चेन्न । तस्य अनन्यथासिद्धनियतपूर्ववर्तित्वरूपतया तदभिव्यज्यधर्मान्तरकल्पने मानाभावात् । अत्र दैवादागते हेतुत्ववारणाय नियतेति । तद्घटे तद्रासभस्य हेतुत्ववारणाय अनन्यथा-

सिद्धेति । वस्तुतस्तु नियतपदं व्यर्थम् । अनन्यथासिद्धत्वं च अन्यथासिद्धत्वैविध्यराहित्यम् । गृहीतस्वतन्त्रान्वयव्यतिरेकाननुविधानावच्छेदकधर्मत्वम् आद्यम् । अन्यनिरूपितपूर्ववर्तित्वग्रहहेतुककार्यपूर्ववर्तित्वग्रहविषयत्वं द्वितीयम् । क्लृप्तान्वयव्यतिरेकानुविधानसाहित्यं तृतीयम् । अत्र अक्लृप्तान्वयव्यतिरेकानु– ( काननु )-विधायिनः इति विवक्षणीयम् । तेन न कारणान्तरस्य अन्यथासिद्धिः, ईश्वरज्ञानादिसंग्रहश्च । तस्य उपादानप्रत्यक्षतया स्वतन्त्रान्वयव्यतिरेकानुविधानात् । तच्च कारणं द्विविधं स्वरूपयोग्यं फलोपहितं चेति । सहकार्यन्तराभावावच्छिन्नजनकत्वाभाववैशिष्ट्यम् ( जनकत्ववैशिष्ट्यम् ) आद्यम् । सहकार्यन्तरसाहित्यं द्वितीयम् । अत एव नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावनियमः इति प्रसिद्धिः । एवं च क्लृप्तकार्यपूर्वकालदेशसंबन्धस्यैव कारणतया नाक्लृप्तकारणत्वरूपपदार्थान्तरतत्प्रागभावध्वंसादिकल्पनम् । प्रयोजकत्वं च अन्वयव्यतिरेकवत्त्वे सति नियतपूर्ववृत्तित्वमात्रम् इति दिक् । **मणि.** पृ. ४४–४५.

* कारीरी इष्टिः, एकमपि सत् वृष्ट्यादिफलं यदा-यदा काम्यते, तदातदा पुनःपुनः प्रयुज्यते । **वि.** ४।३।११, * 'कारीर्या वृष्टिकामो यजेत' । ६।२।३. * ननु कारीर्यां कृतायामपि किमिति कदा चित् वृष्टिर्न जायते, तत्राह– 'फलति यदि न सर्वं तत् कदा चित् तदैव ध्रुवमपरमभुक्तं कर्म शास्त्रीयमास्ते । २६ ॥' वृष्टिविरुद्धफलेन शास्त्रप्रतिषिद्धेन केन चित् प्रबलेन कर्मणा जन्मान्तरानुष्ठितेन प्रतिबन्धः तदा कल्प्यते । न प्रतिबन्धादसाधयतः साधनत्वहानिः इति न शास्त्राप्रामाण्यम् । **श्लोवा.** चित्राक्षेपपरिहारे, रत्नाकरश्च. * **कारीर्यादेः** काम्यस्य कर्मणोऽभ्यासेन फलभूयस्त्वम् । **वि.** ११।१।७. * **कारीरीवाक्यानि** अधीयानास्तैत्तिरीयाः भूमौ भोजनमाचरन्ति । अपरे शाखिनो नाचरन्ति । **भा.** २।४।२।८ पृ. ६३२.

* कार्तिकशुक्लप्रतिपदि प्रदीपदानं सदाचारः । **सु.** पृ. १८७.

⧗ **'कार्यं बादरिरस्य गत्युपपत्तेः'** ( ४।३।७ ब्र. सू. ) **इति न्यायः** । 'अमृतत्वं च गच्छति' इति-गमनोपादानात् कार्यममृतत्वम्, न कैवल्यम् 'कार्यं०' इति न्यायात् । **नृ. पू. भा.** १।२.

⧗ **कार्यं सर्वं कारणमात्रमिति न्यायः** । कार्यं सर्वं घटादिरूपं मृन्मात्रमित्यर्थः । **साहस्री.** ५४३.

* कार्यं हि कारणमवगमयति, न पुनः कार्यान्तरमपि । **बृहती.** पृ. २१९, * कार्यं हि कारणमस्तीत्येतावति ज्ञानमुत्पादयति न पुनः तद्वा अन्यद्वा इति । पृ. २४७. * कार्यं हि कारणदेशं भवति । पृ. २१७. * **कार्याणि** सर्वाणि सूक्ष्मात्मना कारणेषु सन्त्येव इति सत्कार्यवादिनां मतम्, न स्वमतम् । नहि दृश्यादर्शननिरस्तः कारणावस्थायां कार्यसद्भावः शक्योऽभ्युपगन्तुम् । **श्लोवा.** उपमानपरिच्छेदे ३३ **रत्नाकरः.**

⧗ **कार्येण कारणसंप्रत्ययः इति न्यायः** । यथा घटादिरूपकार्येण कुलालादिरूपकारणस्य संप्रत्ययो भवतीति स्पष्टम् । **साहस्री.** ३८.

⧗ **कार्यात् कारणजन्म इति न्यायः** । यत्र कार्यात्कारणोत्पत्तिर्विवक्ष्यते, तत्रायं प्रवर्तते । **साहस्री.** ५५८.

* **कार्याणाम्** एकोपादानानां परस्परं विलयाधारत्वायोगः । **संकर्ष.** ३।२।७. * **कार्ये अर्थे** वचनस्य स्वातन्त्र्यम् । **बृहती.** पृ. २३, * कार्ये अर्थे वेदस्य प्रामाण्यम् । पृ. १६.

⧗ **'कार्ये ज्ञातेऽधिकारः स्यात्' इत्यनेन न्यायेन** प्रयोगविधिप्रयोज्यसमस्ताङ्गावधारणपूर्वकत्वेन अधिकारविधेरेव प्रयोगविध्यनुरोधवृत्तित्वस्य न्याय्यत्वात् 'समस्तधर्मोपेतं यः शक्नुयात्' इति वाक्यशेषकल्पनेन सर्वाङ्गोपसंहारसमर्थस्यैवाधिकारनिश्चयात् नाधिकारेऽपि संदेहः । **सु.** पृ. ५३१.

* कार्ये हि प्रवर्तमानं द्रव्यं संस्कारं गृह्णाति, नोदासीनम् । न च द्व्यवदानव्यतिरिक्तस्य हविषः कार्यमस्तीति न संस्कारमपेक्षते । **वा.** ३।४।१४।४० पृ. ९७६. * नहि एकस्मिन् कार्ये कारणद्वयकल्पना घटते । **बृहती.** पृ. २१९. * **कार्यकारणयोरेवानुमानम्** इति के चित् । तदयुक्तम् । अकार्यकारणभूतानामपि कृत्तिकादीनाम् अचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । **वा.** १।२।३।३६ पृ. १३९.



⧗ **कार्यकारणभावनियमः अतिप्रसङ्गं भङ्क्तुमर्हति इति न्यायः** । अन्यस्योद्देशे अन्यदीयस्यापि सहानुष्ठानमतिप्रसङ्गः । **सदसं.** आर्हते । **साहस्री.** ७०१. * न खलु अन्वयमात्रात् **कार्यकारणभावावगतिः**, व्यभिचारात् । किन्तु यदि अस्मिन् सति संभवति, सत्यपि तदन्यस्मिन् तदभावे न भवति, तत् तस्य कारणम् इति प्रामाणिकाः । **कणिका.** पृ. ४०६. * **कार्यकारणसंबन्धो** नाम स भवति यस्मिन् सति यद्भवति, यस्मिंश्चासति यन्न भवति, तत्रैव कार्यकारणसंबन्धः । **भा.** ४।३।१।२ पृ. १२४६. * **कार्यतस्तु** कारणावगतिरनुमानमेव । **ऋजु.** पृ. २४. * **कार्यताज्ञानं** द्विविधम् । 'मयेदं कर्तुं शक्यते' इत्येवंरूपमेकम् । 'ममेदमवश्यं कार्यम्' इत्येवंरूपं द्वितीयम् । तत्राद्यं पदार्थनिष्ठयोग्यतागम्यम् इति न प्रवृत्तिं प्रति हेतुः । द्वितीयं तु स्वेष्टसाधनत्वबलवदनिष्टाननुबन्धित्वज्ञानजन्यं चिकीर्षाद्वारा प्रवृत्तिं प्रति हेतुः इति **गुरवः** । **मणि.** पृ. ८३, * कार्यताज्ञानं प्रवर्तकम् इति **गुरवः** । पृ. ८४, * **कार्यत्वमेव** विध्यर्थः इति **गुरवः** । पृ. ८४.

⧗ **कार्यत्वादुत्तरयोर्यथाप्रकृति । १०।४।२३। ४८ ॥**

वैश्यस्तोमे कण्वरथंतरं साम । 'यद्योन्यां तदुत्तरयोर्गायति' इति यत् गानम् उत्तरयोर्ऋचोरुपरि उक्तम्, तत् किं रथंतरस्य उत्तरयोर्गेयं बृहतः उत्तरयोः स्वस्योत्तरयोर्वा इति विचारे पूर्वपक्षमाह । कार्यत्वात् उत्तरयोर्यत् कर्तव्यं तस्य कार्यत्वात् अनुष्ठेयत्वात् उत्तरयोः रथंतरस्य बृहतो वा उत्तरयोः यथाप्रकृति अग्निष्टोमरूपप्रकृतिमनुसृत्य कर्तव्यम्, न स्वोत्तरयोः इति ।

**समानदेवते वा, तृचस्याविभागात् । ४९ ॥**

वाशब्देन पूर्वपक्षं निरस्यन् सिद्धान्तमाह । समाना एकैव देवता यस्य तृचस्य, तस्मिन् समानदेवते तृचे कण्वरथंतरं गातव्यम् । तृचस्य ऋक्त्रयस्य अविभागात् विभागाभावात् । 'एकं साम तृचे क्रियते' इति हि एकस्यैव अविभक्तस्य तृचस्य सामाधारत्वेन विधानात् । तस्मात् कण्वरथंतरं स्वयोन्युत्तरयोरेव गेयम् इति सिद्धान्तः । कण्वरथंतरम् 'पुनानः सोम धारयापो, दुहान ऊधर्दिव्यम्' इति ऋग्द्वयं प्रग्रथनेन ऋक्त्रयं कृत्वा गीयते इति ज्ञेयम् । ( उत्तरार्चिके ६७५–६७६ गानग्रन्थे च ५११।९ ) । **के.**

* **कार्यद्रव्यवृत्तिविशेषगुणानां** पाकादिना विरोधिगुणान्तरोत्पत्त्या द्रव्यनाशेन वा नाश्यत्वम् इति नियमः । **मणि.** पृ. ५३.

⧗ **कार्यनाशे कारणनाशः इति न्यायः** । यथा पटनाशे तन्तुनाश इत्यादि । **साहस्री.** २७८.

* **कार्यप्रयुक्ता** हि स्थानविशेषादयः न स्वरूपप्रयुक्ताः, स्वरूपस्य स्थानान्तरेऽपि अविभागात् । नहि यत् देवदत्तस्य युध्यमानस्य स्थानमवगतम्, तदेव भुञ्जानस्यापि भवति इति गम्यते । **वा.** २।२।१३।२९ पृ. ५६९.

⧗ **कार्यप्रयोजकस्य कस्य चिद्विरहे एकजातीयानेककारणान्तरसत्त्वेऽपि फलानुत्पत्तिः इति न्यायेन** भूयोभिरपि प्रतिहेतुभिः अनुमितिप्रतिबन्धफलानिर्वाहात् । **गादाधरी.** उपाधिदूषकताबीजे पृ. १०५९.

* **कार्यरूपो** वेदार्थः इति गुरुमतम् । **वि.** १।१।२. * **कार्यलक्षणया** धर्मलक्षणा बाध्यते । यथा त्रैधातव्या दीक्षणीया इति । **बाल.** पृ. १४३. * **कार्यविनाशः** कारणविनाशात् । 'यथा अभिनवं पटं दृष्ट्वा, न चैनं क्रियमाणमुपलब्धवान्, अथ च अनित्यत्वमवगच्छति रूपमेव दृष्ट्वा । तन्तुव्यतिषङ्गजनितोऽयं तन्तुव्यतिषङ्गविनाशात् तन्तुविनाशाद्वा विनश्यति इत्यवगच्छति' । **भा.** १।१।६।२१. * साधनविनाशव्यतिरेकेण **कार्यविनाशाभावात्** । **वा.** २।२।७।२१ पृ. ५२८.

⧗ **कार्यविपरिणामात् सिद्धम् इति न्यायः** । अत्रान्यस्य विपरिणामासंभवात् सामर्थ्यात् कार्यत्वेन बुद्धिर्गृह्यते, तेन तु कार्यशब्दो बुद्धिपर्याय इति कैयटः । अत एव भाष्ये कार्या बुद्धिः, सा विपरिणम्यते इत्यु-

क्तम् । तद्यथा– कश्चित् कं चिदुपदिशति 'प्राचीनं ग्रामादाम्राः' इति, तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । 'ततः पश्चादाह ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्र आम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति बुद्ध्या, आम्रांश्चापकृष्यमाणान् न्यग्रोधांश्च आधीयमानान् । नित्या एव च हि अस्मिन् विषये आम्राः, नित्याश्च न्यग्रोधाः, बुद्धिस्तस्य विपरिणम्यते इत्येवं प्रकृतेऽप्यूहनीयम् । साहस्री. ६०६.

* **कार्यवेलायाम्** असतः देवैरपि अप्राप्तिः, अनिमित्तकार्योत्पादप्रसङ्गात् इत्युक्तं संबन्धनित्यत्वे । ( श्लोवा. संबन्धाक्षेपपरिहारे ३३ ) । वा. ४।४।४।१३ पृ. ९२९.

* **कार्यव्युत्पत्तिसमर्थनम्** । इदानीमाद्या व्युत्पत्तिः कार्ये एवेति पतिपाद्यते । प्रवृत्तावेव आद्या व्युत्पत्तिः, प्रवृत्तिश्च कार्यज्ञानादेव भवति ।

ननु न तावदवश्यं प्रवृत्त्यधीनैव व्युत्पत्तिः, 'पुत्रस्ते जातः' इति वाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासं व्युत्पित्सुः पश्यति, तदा मुखविकासस्य हर्षहेतुकत्वेन तस्य स्वस्मिन्नवगतत्वात् हर्षोऽस्तीति निश्चिनोति, हर्षस्य च प्रियार्थावगमपूर्वकत्वेनावगमात् प्रियार्थज्ञानमनुमिनोति, प्रियार्थज्ञानं च शब्दानन्तर्यात् शब्दहेतुकमेवेत्यवधारयति । तत्र कः प्रियार्थ इति पर्यालोचनायां प्रत्यक्षेण पुत्रजननं दृष्ट्वा हेत्वन्तरादर्शनाच्च पुत्रजन्मैवानेन शब्देन प्रतिपादितमिति समाकलयति, तत्र प्रतिपदमावापोद्वापाभ्यां पदार्थविशेषोऽपि निश्चीयते इति सुकरैव सिद्धेऽपि आद्या व्युत्पत्तिः । **अथोच्येत** पुत्रजन्मैवास्य प्रियमिति पारिशेष्यावधारणं न शक्यते, अतीतानागतहर्षहेतूनामपि तदैव संभवादिति । **तन्न**, दृष्टहेतौ हेत्वन्तरसंभावनामात्रेण तत्र हेतुत्वत्यागो न युक्तः, अतिप्रसङ्गात् 'हेतुदर्शनाच्च' इत्यधिकरणविरोधाच्च । अतः पुत्रजन्मैव हर्षहेतुरिति शक्यः पारिशेष्यनिश्चयः । किञ्च पुत्रजनने सत्येव बहुशः प्रयोगदर्शनात् हर्षहेत्वन्तरेष्वप्रयोगात् पुत्रजननरूपो हर्षहेतुविशेषोऽर्थः इति निश्चीयते । किञ्च यद्यपि न शक्यः पारिशेष्यनिश्चयः, तथापि हर्षहेतुमात्रनिश्चयात् सिद्धस्यापि शब्दार्थताऽवगमात् सिद्धः कार्यव्यभिचारः । किञ्च यद्यपि प्रवृत्त्यधीनैव आद्या व्युत्पत्तिः, तथापि न कार्यविषयैवेति नियमः । यदा वृद्धमातुरं वा प्रति विनोदार्थे 'नद्यास्तीरे फलानि सन्ति' इति वाक्यं प्रयुङ्क्ते, तदा अन्यः कश्चिदेतद्वाक्यमर्थाच्छ्रुत्वा तत्र गत्वा फलमाहरति तत्र अन्यः अव्युत्पन्नस्तत् दृष्ट्वा तत्प्रतिपादने तस्य वाक्यस्य सामर्थ्यं कल्पयति । अतो न कार्ये एव व्युत्पत्तिरिति नियमः ।

किञ्च 'कोऽयं राजा ? पाञ्चालराजः' इत्यादिषु प्रश्नप्रतिवचनादिषु दृष्टः कार्यव्यभिचारः । किञ्च यद्यपि कार्ये एवाद्या व्युत्पत्तिः तथापि उत्तरकालं बहुशः सिद्धार्थे लौकिकवैदिकप्रयोगदर्शनात् सिद्धार्थकार्यविशेषं परित्यज्य अर्थमात्रे शक्तिनिश्चयो युक्तः, यथा गोशब्दस्यैकस्यां व्यक्तौ चेष्टां दृष्ट्वा तत्रैव शक्तिकल्पने सति, तेन व्यक्तिमात्रानिश्चयप्रसक्ते पश्चात् व्यक्त्यन्तरेऽपि बहुशः प्रयोगदर्शनादनुगतं सामान्यमेव गोशब्दार्थः इति कल्प्यते, एवमत्रापि सिद्धकार्यविशेषं परित्यज्यार्थमात्रे शब्दस्य शक्तिकल्पनमुचितम् । किञ्च कार्यज्ञानात् प्रवृत्तिरिति इदमेव दुर्घटम्, सर्वत्रेष्टोपायज्ञानादेव प्रवृत्तिदर्शनात् । यत्रेष्टोपायत्वमवगतं तत्र लौकिकाः प्रवर्तन्ते, यत्र तन्नास्ति, न तत्र प्रवर्तन्ते इति अन्वयव्यतिरेकाभ्यामिष्टसाधनज्ञानमेव प्रवर्तकम् । **अथोच्येत** अनन्यथासिद्धौ अन्वयव्यतिरेकौ हि कार्यकारणभावं कल्पयतः, अत्र चेष्टोपायज्ञानात् 'ममेदं कार्यम्' इति ज्ञानमुत्पद्यते, तज्ज्ञानात् स्वतन्त्रः प्रवर्तते इति । **तन्न** । इष्टोपायज्ञानादेव प्रवृत्त्युपपत्तौ किमर्थमन्तर्गडुयमानं कार्यज्ञानं मध्ये निक्षिप्यते ? **ननु** इष्टोपायज्ञानमात्रं प्रवृत्तौ व्यभिचरति अतीतेऽनागते चेष्टोपायज्ञानं न प्रवर्तयति, अतः कार्यज्ञानं निक्षिप्यते, कार्यं च कृतिसाध्यम्, अतीतमनागतं च कार्यमेव न भवति कृतत्वात् करिष्यमाणत्वाच्च । अतोऽतीतानागतकार्यज्ञानेषु न व्यभिचारः शङ्कनीयः । अतः अव्यभिचारित्वात् कार्यज्ञाननिक्षेपः । **एवं तर्हि** इष्टोपायज्ञानं कार्यज्ञानोत्पादकम् इत्यङ्गीकृतम् । तत्र च अतीतानागतयोः इष्टोपायज्ञानं कार्यज्ञानं नोत्पादयति इति कार्यज्ञानं कारणं न स्यादिति तुल्यचर्चम् । **अथ** कृत्यर्हेष्टोपायज्ञानात् कार्यज्ञानमुत्पद्यते इति विशेषयाम इति चेत्, **तर्हि** तत एव प्रवृत्तिरिति किं कार्यज्ञानव्यसनेन ? **किञ्च** कृत्यर्हेष्टोपायातिरिक्ते कृत्युद्देश्ये न तन्निरूप्यते, अतः कार्यज्ञानं प्रवर्तकमिति वदतां नामान्तरेणेष्टोपायज्ञानविशेषात् प्रवृत्तिरित्युक्तं भवति इति ।

**अत्रोच्यते** । कार्यधीतः ( धीशब्दात् तसिल् ) एव प्रवृत्तिः, तदन्वयव्यतिरेकित्वात् प्रवृत्तेः । इष्टोपायज्ञानस्यापि अन्वयव्यतिरेकौ स्तः इति चेन्न, कार्यज्ञानोत्पादकत्वेन अन्यथासिद्धत्वात् । तथाहि, यत्र कार्यज्ञानं नास्ति केवलमिष्टोपायज्ञानमेव, तत्र अतीतानागतवर्तमानोपायज्ञानेऽपि प्रवृत्तिर्न दृश्यते । **ननु** अयं व्यभिचारः इष्टोपायतायां कार्यधीजननेऽपि समः । **नैवम्**, कृत्युद्देश्यस्य इष्टोपायस्य कार्यधीहेतुत्वम्, अतः अतीतादिव्यावृत्तिसिद्धिः । द्विधा हि उपायताधीः अतीताद्याकारा कार्याकारा च । तत्र कार्याकारातः प्रवृत्तेः कार्यधीतः प्रवृत्तिरुच्यते । **ननु** पूर्वापरविरुद्धमुच्यते पूर्वमिष्टोपायज्ञानात् कार्यज्ञानमुत्पद्यते, कार्यज्ञानात् प्रवृत्तिरित्युक्तम्, इदानीमिष्टोपायधीवेद्यमेव कार्यमित्युक्तम् । **नैवम्**, इष्टोपायताऽऽकारोल्लेखादेव कार्यपर्यन्तं वेद्यमितिकृत्वा इष्टोपायताज्ञाप्यत्वमुक्तम्, न तु भिन्नज्ञानाङ्गीकारेण । यथा आकृतिव्यक्त्योरेकज्ञानविषयत्वेऽपि आकृतिज्ञाप्यत्वं व्यक्तेरुक्तं भाष्यकारेण, 'शब्दादाकृतिः, आकृतितो व्यक्तिः' इति । अतः कृत्युद्देश्यत्वं नाम धर्मः कृत्यर्हेष्टोपायपर्यवसानसिद्धोऽङ्गीकर्तव्यः । तदेव च कार्यमित्युच्यते । **ननु** कृत्यर्हेष्टोपायज्ञानात् प्रवृत्तिरस्तु, किं कृत्युद्देश्यत्वाख्येन धर्मेणाङ्गीकृतेन ? **नैवम्**, यदि तथाविधस्य कृत्यर्हता कृतिप्रयोजनत्वं विनाऽपि सिध्यति, ततः कृत्युद्देश्यत्वधर्मानङ्गीकारो युक्तः । न च तथा संभवति, तथाविधेषु कृतिसंबन्धः कृत्युद्देश्यतयैव संभवति नान्यथा । अतो मानसानुमानाभ्यां कृतीप्सितधर्मत्वाख्यो धर्मः अवश्याङ्गीकार्यः । इष्टोपायत्वमेव कार्यत्वमिति न शक्यते वक्तुम्, कार्यत्वेष्टोपायत्वयोरत्यन्तभेदस्य स्फुटत्वात् । कार्यत्वं च इष्टे च वर्तते इष्टसाधने च, तथा अनिष्टपरिहारेऽपि वर्तते, इष्टोपायत्वं तु न तथेति तयोर्भेदः स्फुटतर एव । इष्टसाधनत्वं तु फलप्रतियोगिकम्, कार्यत्वं च कृतिप्रतियोगिकम् । न चैकाधिष्ठानतया तयोरभेदः पितृपुत्रत्वयोरिव । यथैक एव देवदत्तः स्वपित्रपेक्षया पुत्रः, स्वपुत्रापेक्षया पिता, पितृत्वप्रयुक्तं च कार्यमन्यदेव, पुत्रत्वप्रयुक्तं चान्यत् । न च तत्रैकाधिष्ठानतया तयोरभेदः । **किञ्च** रूपभेदादपि तयोर्भेदः, एकस्य फलसाधनत्वं रूपम्, इतरस्य कृतिप्रयोजनकत्वम् । कथं विभिन्नरूपयोरभेदः ? विलक्षणाकारबुद्धिबोध्यं वस्तुविलक्षणमिति हि प्रसिद्धिः । **किञ्च** अन्योन्यव्यभिचारादपि भेदः, कार्यत्वं सुखेऽपि विद्यते, तत्रेष्टोपायत्वं नास्ति । इष्टोपायत्वं भूतभोजनादावपि वर्तते, तत्र कार्यत्वं नास्ति । अतोऽन्योन्यव्यभिचारादपि भेदः । **किञ्च** इष्टसाधनतैव कार्यतेति यो वदति स प्रष्टव्यः किं कार्यशब्दानुविद्धबोध्ये कृतिजन्यताऽतिरेकेण कश्चिद्धर्मः स्फुरति न वा ? यदि न स्फुरति, तर्हि अपुरुषार्थेऽपि कृतिजन्ये कार्यधीः स्यात् । स्फुरति चेत्, स कृतिप्रतियोगी धर्मः कार्यबुद्धिशब्दयोरर्थोऽङ्गीकृतः । **किञ्च** कार्यशब्दस्तावत् सभागशब्दः, कृतिस्तु प्रकृत्यर्थः तत्प्रयोजनं प्रत्ययार्थः, अतः प्रकृत्यर्थसंबद्ध एव प्रत्ययेन सोऽर्थोऽभिधातव्यः, इतरथा सामर्थ्याभावात् प्रकृतिप्रत्ययसमभिव्याहारो न स्यात् । अत एव 'समर्थः पदविधिः' इति । अतः कृतिसंबद्धरूपमेव कार्यशब्देनाभिधातव्यम् । अतः कार्यशब्द एवेष्टसाधनकार्ययोर्भेदे प्रमाणम् । **अथ** इष्टसाधनताऽपि कृतिजन्याधिष्ठानतया कृतिनिरूप्या, तस्मात्तदभिधानेऽपि कृतिसंबन्धः उपपद्यते इति । **तन्न** कृतिसंबन्धाभिधाने अङ्गीकृते साक्षात्कृतिसंबन्धाभिधायित्वमेवाश्रयणीयम्, व्यवधाने प्रमाणाभावात् । न च कृतिनिरूप्यधर्माभिधानं युक्तम्, अतः इष्टसाधनकार्ययोः स्फुटतर एव भेदः । एतत् सर्वमभिप्रेत्योक्तं प्रकरणपञ्जिकायाम् 'फलसाधनता नाम परा, परा च कार्यता' इति । तत्सिद्धम् 'कार्यता कृतिसाध्यत्वं फलसाधनता पुनः । कारणत्वं फलोत्पादे ते भिद्येते परस्परम् ॥' इति ।

**यत्तूक्तम्**— आद्या व्युत्पत्तिः सिद्धेऽपि युक्ता 'पुत्रस्ते जातः' इत्यादाविति, **तदयुक्तम्** । **यद्यपि** 'पुत्रस्ते जातः' इति वाक्यश्रवणसमनन्तरं श्रोतुर्मुखविकासो दृश्यताम्, मुखविकासश्च हर्षकार्यः इति निश्चीयताम्, हर्षश्च प्रियार्थज्ञानकार्यः इति, **तथापि**

हर्षहेतुविशेषनिश्चयो न घटते । न भवतु विशेषनिश्चयः, एतावतैव शब्दार्थत्वनिश्चयः कार्यव्यभिचारश्च सिद्धः । नैवम् । इदं च हर्षहेतुत्वनुमानमात्रम्, हर्षहेतुमात्रं च न 'पुत्रस्ते जातः' इति वाक्यस्यार्थः । किन्तु पुत्रजननरूपहर्षविशेषः एव, यावद्विशेषनिश्चयश्च न शक्यते, हर्षहेतूनां बहूनां संभवात् । न च पारिशेष्याद्विशेषधीः, नहि कस्य चिच्छन्तोरेकमेव प्रियम् । अथ यद्यपि बहूनां प्रियार्थानां संभावनाऽस्ति, तथापि पुत्रजननविशेषस्य दृष्टत्वात् पारिशेष्यनिश्चय इति । नैवम्, तत्रैव बहूनां हर्षहेतूनां दृष्टत्वात् । यथा पुत्रजननं हर्षहेतुस्तथा सुखप्रसवः प्रियायाः, पितामहादीन् प्रति ऋणापाकरणम्, तथा पुन्नाम्नो नरकात् त्रायते इति पुत्रः अतो नरकात् त्राणम्, अवन्ध्यात्वं चेत्येवमादीनां बहूनां दृष्टत्वान्न विशेषावधारणम् । किञ्च वर्तमान एव हर्षहेतुः हर्षोत्पादक इति नियमो नास्ति, अतीतादीनामपि स्मृतिद्वारेण हर्षहेतुत्वेन स्वस्मिन् दृष्टत्वात् । परहर्षेऽपि तथैव संभवात् । किञ्च विरक्तश्च कश्चित्सुवर्णादिलाभे सत्यपि स्ववैराग्यनिमित्तं सर्वसंन्यासं स्मृत्वा हसति विकसितमुखश्च दृश्यते, तत्र वर्तमानोऽपि सुवर्णादिलाभो न हर्षहेतुः ।

यदुक्तम्, बहुशः पुत्रजनने सति एवंविधवाक्यप्रयोगात् पुत्रजन्मविशेषावगतिरिति, तदतिमन्दम्, बहूनां हर्षहेतूनां संभवात् यदाऽनिश्चयः, तदा प्रयोगान्तरेऽपि तत्संभवादनिश्चय एव । यदि प्रयोगान्तरे निश्चयहेतुरस्ति, स च प्रथममेव वक्तव्यः । यत्तूक्तम्, यद्यपि प्रथमं कार्ये एव व्युत्पत्तिः तथाप्युत्तरकालं बहुशः सिद्धेऽपि प्रयोगदर्शनात् उभयानुगते अर्थमात्रे शक्तिर्युक्तेति, तदयुक्तम्, गङ्गाशब्दस्य नदीविशेषवाचकत्वे निश्चिते उत्तरकालं तीरादिषु बहुशः प्रयोगदर्शनात् उभयानुगते अर्थान्तरे शक्तिकल्पनाप्रसङ्गात् । तीरादिषु लक्षणादिवृत्त्या प्रयोगोपपत्तेर्न शक्तिकल्पनेति चेत्, अत्रापि तर्हि लक्षणया सिद्धार्थप्रयोगोपपत्तेर्न कल्प्यतामिति तुल्यचर्चः । गोपदे तु आनन्त्यव्यभिचाराभ्यां व्यक्तौ कल्पनाऽनुपपत्तेः सामान्ये कल्पनमिति विशेषः । यदुक्तम्, यद्यपि प्रवृत्तावेव व्युत्पत्तिः, तथापि कार्यज्ञाननियमो नास्ति, यथा वृद्धादीन् प्रति विनोदार्थम्, 'नद्यास्तीरे फलानि सन्ति' इति कार्यपदरहितवाक्यप्रयोगे यादृच्छिकः कश्चित् प्रवर्तते इति । तन्न नैवम्, तत्रापि कार्यज्ञानादेव यादृच्छिकस्य प्रवृत्तिः प्रत्यक्षाद्यवगतोदकादौ यथा पिपासोः कार्यबुद्धिरुत्पद्यते, तथाऽत्रापीति । शब्दात् कार्यबुद्धिर्नास्ति, तथापि व्युत्पित्सोः शब्दहेतुकत्वभ्रमः, सोऽपि पश्चान्निवर्तते । अतो न कार्यव्यभिचारः प्रवृत्तेः । यत्तूक्तम् अर्थान्तरान्वितपरत्वकल्पनयाऽपि कार्यपरत्वसिद्धेः वृथैव कार्यरूपविशेषे शक्तिगौरवमिति, तदपि न, प्रवृत्तेः कार्यनियतत्वेन कार्यान्विते एव कल्पनं युक्तम्, न तु अर्थान्तरान्विते । कल्पनागौरवमपि विपरीतमेव । अस्माकं तु कार्यमात्रे शक्तिरेकविषया, तव तु अर्थान्तरान्विते महाविषये शक्तिरिति, यथा वह्निरिति नियते दाहकार्ये न द्रव्यमात्रे शक्तिः, एवं कार्यपरत्वद्वारेण परस्परान्वयोऽपि व्युत्पन्नः इति न प्रतिपदाधिकरणविरोधः । न च लोकवाक्यवत् परस्परान्वयपरत्वं वेदान्तानामभ्युपगन्तुमुचितं विवक्षाऽभावात् । अतः कार्यपरत्वमेव वेदान्तानाम् । ननु सिद्धार्थव्यपदेशेषु लौकिकेषु मुख्यार्थाभावादन्विताभिधानं न स्यात् । सत्यं तत्र वक्त्रभिप्रायादेवार्थनिश्चयः, नान्विताभिधानात्, संकेतपदेष्विव सिद्धार्थेऽपि व्युत्पत्तेरितरविभक्त्यर्थानां व्युत्पत्तिरस्त्येव । तथा 'अस्य शब्दस्य अयमर्थः' इत्यप्यस्ति, तथा प्रश्नप्रतिवचनादिष्वपि । तत्र पदीया व्युत्पत्तिः आद्या कार्यविषयैवेति सिद्धं कार्ये एव व्युत्पत्तिरिति । प्रवि. पृ. ४७–५२. * कार्यशेषभावः सर्वत्र वाचनिकः । भा. १०।६।१९।७४. * कार्यसिद्ध्यर्थं हि कारणं कल्प्यते, न पुनः कार्यविनाशाय । बृहती. पृ. ५४. * कार्यानुसारेण ऋत्विजां संख्याविशेषनियमः । के. ३।७।९। २१–२४. * कार्यानुसारिणा कारणेन भाव्यम् इति नियमम् अवलम्बन्ते सांख्याः । परिमलः. २।२।७।४१ ब्र. सू. * कार्यान्तरदर्शनात्तु कारणान्यत्वकल्पना न्याय्यैव । बृहती. पृ. २१४. * कार्यान्यत्वात् एकस्यापि स्थानभेदप्राप्तिः । वा. २।२।१३।२९ पृ. ५६९. * कार्यान्वये विशेषणापेक्षणात् । सु. पृ. ८९४. * कार्यान्वितः पदार्थः सर्वशब्दाभिधेयः । कार्यावगमपूर्वकत्वात् प्रवृत्तिनिवृत्त्योः, प्रवृत्तिनिवृत्त्यात्मकत्वाच्च



व्यवहारस्य, वृद्धव्यवहारे एव च शब्दानां स्वार्थे व्युत्पत्तेः । ऋजु. पृ. १६.

* कार्यापत्तिः पञ्चधा । ऊहप्रयोजकेषु या कार्यापत्तिः सा पञ्चधा प्रमाणपञ्चकप्रमेयत्वात् । प्रत्यक्षेण अनुमानेन शब्देन अनुमितशब्देन अनुमितानुमानलब्धशब्देन चेति । बाल. पृ. १२९–१३०. * कार्यापत्तिः प्रतिपाद्यते । सा च पञ्चधा भवति । वास्तवी सा द्विविधा प्रत्यक्षानुमानाभ्याम् । शब्दात् त्रेधा । स्वशब्दात्, प्रतिषेधेन स्वशब्दानुमानम्, संख्यया प्रतिषेधानुमानम्, प्रतिषेधाच्च शब्दः । ( प्रत्यक्षात्, अनुमानात्, श्रुतस्वशब्दात्, प्रतिषेधानुमितस्वशब्दात्, अभावे विध्यनुमितप्रतिषेधकल्पितस्वशब्दात् इत्यर्थः । अस्य उदाहरणादिविस्तरः 'ऊहः स्थानिधर्माणां प्रतिनिधौ' इति बिन्दौ द्रष्टव्यः ) । वा. ९।२।१२।३९. * कार्यापत्तिप्रमाणानि मानमिकानि पञ्च । प्रत्यक्षविधिः, अभावविधिः, विकारः, स्वशब्दः, निषेधानुवादश्चेति । बाल. पृ. ८.

* कार्याभिधायकत्वं लिङादेः अवसीयते अपौरुषेये वेदे । ऋजु. पृ. ३५.

* कार्षापणः द्वात्रिंशत्कृष्णलरजतपरिमाणः । सु. पृ. १४५. * कार्षापणं शुद्धं साध्वसाधुकार्षापणमध्यात् तत्परीक्षिभिः विवेक्तुं शक्यते । वा. १।३।४।९ पृ. २२०.

* कालः अङ्गप्रधानयोर्वचनेन भिन्नोऽपि, 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । भा. ११।३। १।१. * कालः अङ्गान्तरात् बलीयान् क्रमात्तु बलिष्ठः । 'कालस्य च पूर्वाधिकरणरीत्या अङ्गान्तरादपि बलीयसः क्रमात् बलीयस्तरत्वात्' । रत्न ५।१।१८।३५. * 'कालोऽपि च प्रयोगाङ्गं सर्वान्ते सोऽपि गृह्यते । स्मार्तैः सह स साहित्यमाशुत्वं वा प्रपत्स्यते ॥' ( ननु यद्यपि प्रधानसाहित्यं शैघ्र्यं च स्मार्तैः सह यादृशं संभवति, तादृशाङ्गीकरणात् अविरोधः, तथापि पूर्वाह्णादिकालातिक्रमो भूयिष्ठाङ्गानुष्ठाने दुर्वार एव इत्याशङ्क्याह–) 'कालो ह्ययं प्रधानस्य सर्वाङ्गसहितस्य यः । अङ्गैरविप्रकृष्टत्वमीदृशस्यैव चोद्यते ॥' ( प्रधानस्यैव साक्षात् विहितः कालः । स च प्रयोगाङ्गत्वात्, प्रयोगस्य च साङ्गप्रधानविषयत्वात् प्रधानद्वारा अङ्गेषु प्राप्नोति, इति प्रधानस्य स्वकालसंपादमाहत्य अङ्गेषु यथासंभवं संपाद्यमानो न विरुध्यते इत्याशयः । साहित्यसंपत्तिं विवृणोति–अङ्गैरिति । आशुत्वमपि सर्वाङ्गसहितस्यैवेति । सु. पृ. १८० ) वा. १।३।३।७ पृ. २००. * कालः । 'आ पौर्णमास्या अमावास्या नात्येति, आ अमावास्यायाः पौर्णमासी' इति गृह्यकारवचनस्य सत्यपि दर्शपूर्णमासविषयत्वे 'स्वकालादुत्तरः कालो गौणः पूर्वस्य कर्मणः' इति वचनान्तरानुरोधात् गौणकालविषयत्वावगतेः न मुख्यकालविधायकप्रत्यक्षश्रुतिविरोधः । कौ. १।३।६।१४ पृ. ९५. * कालः इति लोके विप्रकर्ष उच्यते । ( विप्रकर्षः कालस्य विप्रकर्षः इत्यर्थः ) । वा. १।२।१।१४. * कालः इष्टेः पशोः सुत्यायाश्च 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' । भा. १२।२।९।२५, * काल एक एव आग्नेयादीनां प्रधानानां दर्शपूर्णमासचातुर्मास्यादौ । ११।२।१।१–२, ४–७. * कालः त्रिविधः प्रधानसंनिकर्षलक्षणः, प्रयोगप्रागभावलक्षणः, पूर्वाह्णादिलक्षणश्च । तत्र पूर्वाह्णादिकालः 'पूर्वाह्णो वै देवानाम्' इत्यादिश्रुतिगम्य इति निर्विवादम् । इतरौ तु प्रयोगविधिना सर्वाङ्गसहितप्रयोगानुष्ठापकेन एकस्मिन् क्षणे असंभवात् साहित्यनिर्वाहार्थमाक्षिप्तत्वात् प्रयोगविधिगम्यौ । कु. १।३। ४।५. * कालः दर्शपूर्णमासयोः 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाम् अमावास्यया यजेत' । वि. ११। २।१. * कालः दर्शपूर्णमासयोः । यदा पौर्णमासी अमावास्या च अहन्येव खण्डा सती समाप्यते तदा पूर्वेद्युर्यागः इति पूर्वपक्षः । परेद्युरेवेति सिद्धान्तः । संकर्ष. ३।१।१, तत्रापि आवर्तनात् परतो रात्रौ वा यदि संधिः, सोपवासार्हा पौर्णमासी, तस्यामन्वाधानं परेद्युर्यागः । अत्र तैने ततः पूर्वे वा यदि संधिः, तदा पूर्वा उपवासार्हा संधिदिने यागः । ३।१।२, परेद्युरपि न रात्रौ किन्तु दिवैव । ३।१।३. * कालः दर्शपूर्णमासयोः 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । भा. २।४।१।१. * कालः देशः फलं निमित्तं संस्कार्यम् इति अनुपादेयपञ्चकम् । बाल. ८८. * कालः न गुणः, निमित्तं ह्येतत् । भा.

६।२।६।२५. * कालः नञ्समभिव्याहाराभावे कालिकसंबन्धेन भावनायामन्वेति । नञ्समभिव्याहारे तु तत्कालीनाभावप्रतियोगित्वसंबन्धेन साक्षादेव वा तस्यामेव । **रहस्य.** पृ. ३९. * कालः । **ननु** नाडिकामुहूर्तप्रहरादिप्रत्ययानां परत्वापरत्व–यौगपद्यायौगपद्य–चिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययानां च कालकृतत्वेन अङ्गीकृतानां विभक्तत्वात् आकाशवदविभक्तेन कालद्रव्येण करणाशक्तेः, सूर्यादिगतिक्रियाऽवच्छेदात् विभक्तस्य कालस्य विभक्तप्रत्ययहेतुत्वाभ्युपगमे तु सूर्यादिगतिक्रियाणामेव नभःषष्टितमभागातिलङ्घनफलः सूर्यादिगतिक्षणप्रचयः नाडिका, नभस्त्रिंशत्तमभागातिलङ्घनफलः मुहूर्तः, नभोऽष्टमभागातिलङ्घनफलः प्रहरः, इत्येवं नाडिकादिप्रत्ययहेतुत्वोपपत्तेः, प्रतियोगिपदार्थापेक्षया बह्वल्पतमसूर्यादिगतिलक्षणा– ( गतिक्षणा– ) वच्छेदयोः परत्वापरत्वविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, एकभिन्नक्षणावच्छेदयोः यौगपद्यायौगपद्यविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, उत्पत्त्यादिभावविकारान्तर्गतबह्वल्पसूर्यादिगतिलक्षणावच्छेदयोः चिरत्वक्षिप्रत्वविशिष्टपदार्थप्रत्ययहेतुत्वोपपत्तेः, क्रियाव्यतिरिक्तकालाभावात् जीवनक्रियाया एव कालत्वावगतिः इति **क्रियामात्रातिरिक्तकालाभाववादिनः** । **तन्न** ( अत्र किञ्चित् परिवर्तितमस्माभिः ) । सूर्यादिस्थायाः गतिक्रियायाः युवस्थविरादिपदार्थसंबन्धाभावेन तदवच्छेदकत्वायोगात् । कालस्य तु सर्वगतत्वात् स्वसंयुक्तसूर्यादिसमवेतक्रियाऽवच्छेदलब्धविभागस्य युवस्थविरादिपदार्थावच्छेदकत्वोपपत्तेः युवस्थविरादिषु परापरादिप्रत्ययैः क्रियाऽतिरिक्तकालानुमानात् ।

पदार्थासंबद्धायाः क्रियायाः तेषु परादिप्रत्ययहेतुत्वायोगात् कालस्य अनुमेयत्वेऽपि क्रियाव्यतिरेकसिद्धिः **इत्यपि वदन्ति** । **परमार्थतस्तु** प्रत्यक्षत्वानभ्युपगमे कालस्यासिद्धिरेव स्यात् । परापरादिप्रत्ययानां हि सार्वत्रिकत्वात् सर्वगतहेत्वपेक्षत्वेऽपि आकाशादेरेव अन्यतः सिद्धात् कालवत् स्वरूपेण अभिन्नादपि सहकारिभेदापादितविलक्षणसामर्थ्यात् उपपत्तेः न कालकल्पकत्वं भवति । प्रत्यक्षत्वे तु 'सूर्योदयो वर्तते' इति क्रियाविषयोदयप्रत्ययविलक्षणा । 'वर्तते' इति अक्षजप्रत्ययवेद्यत्वात् व्यतिरिक्तकालसिद्धिः । 'भूतः सूर्योदयः भविष्यति वा' इति भूतभविष्यत्कालावच्छिन्नोदयसत्ताग्राहिणि प्रत्यये वर्तमानत्वाप्रतीतेश्च न 'वर्तते' इति बुद्धेः सत्ताऽऽलम्बनत्वं शङ्कनीयम्, 'ह्यो भूतः' 'अद्य नश्यति' 'श्वो भविष्यति' 'अद्य नोत्पद्यते' इति प्रध्वंसप्रागभावग्राहिनाशानुत्पत्तिबुद्धिवैलक्षण्याच्च भूतभविष्यद्बुद्ध्योः प्रध्वंसप्रागभावालम्बनानुपपत्तेः भूतभविष्यत्कालावच्छिन्नसत्ताऽऽलम्बनत्वं धातुप्रत्यायालोचनया भासमानं नापह्नोतुं शक्यम् । कालानवच्छेदे च सूर्योदयादिसदसत्त्वयोः आकाशशशविषाणवत् सर्वदा सदसत्त्वापत्तेः कादाचित्कत्वप्रतीतिविरोधः । स्वतश्च कालस्य एकरूपत्वेऽपि उपाधिभेदात् भूतभविष्यद्वर्तमानत्वव्यपदेशोपपत्तिः । एकफलावच्छिन्नाः हि क्रियाक्षणाः यावन्तं कालं व्याप्नुवन्ति, तावान् कालो वर्तमानत्वेन व्यपदिश्यते । क्रियाक्षणानां च अयौगपद्येऽपि एकफलोद्देशेन अनुष्ठीयमानानाम् आद्यक्षणादारभ्य फलोत्पत्तिक्षणपर्यन्तं क्रियैक्यव्यपदेशात् विद्यमानक्रियाऽवच्छेदौपाधिकं कालस्य वर्तमानत्वम्, विनष्टक्रियाऽवच्छेदौपाधिकं भूतत्वम्, भाविक्रियाऽवच्छेदौपाधिकं भविष्यत्वम् उपपन्नम् । सूर्यादिक्रियाऽवच्छेदकस्य च कालस्य अक्षिपक्ष्मादिक्रियया अवच्छेदाभ्युपगमात् नान्योन्याश्रयापत्तिः । अतश्च सूर्यादिक्रियाणामपि भूतभविष्यद्वर्तमानकालावच्छेदात् क्रियाव्यतिरिक्तस्य आकाशादिव्यतिरिक्तस्य च कालस्य प्रत्यक्षकालवादिमते विलक्षणप्रतीतिबलादेव सिद्धेः तेषां तावत् पराजयः अनाशङ्क्य एव । **अनुमेयकालवादिनोऽपि** तु आकाशादिव्यतिरेकासिद्धावपि क्रियातः तावत् व्यतिरेकसिद्धेः अशक्याः पराजेतुम् । गणनाऽपरपर्यायसंख्यानवाचित्वेन स्मृतात् कालयतेः धातोः घञि कृते कालशब्दव्युत्पत्तिः । **सु.** पृ. ९७०–७१. * कालः पशोः अग्नीषोमप्रणयनात् अनन्तरम् । **भा.** १२।१।१।१, * कालः पशुपुरोडाशस्य वपाप्रचारादूर्ध्वम् । १२।१।१।१, * कालः प्रकृतेः दर्शश्च पूर्णमासश्च । १२।२।६।२०, * कालः लक्ष्यते । यथा 'नागवेलायाम् आगन्तव्यम्, शङ्खवेलायामागन्तव्यम्, पटहवेलायामागन्तव्यम्' । यस्मिन् ग्रामे न नागाः न



शङ्खा न पटहः, तस्मिन्नपि स एव कालः । तत्र हि आगमनं क्रियते । १०।८।१८।६९.

**§ कालः संनयत्पक्षे तल्लिङ्गसंयोगात् । ६।४। १३।४१ ॥**

'वत्सैरमावास्यायां व्रतमुपयन्ति' 'पुरा वत्सानामपाकर्तोः' इति वत्सापाकरणकालः व्रतार्थे निर्दिश्यते इति पूर्वाधिकरणे सिद्धान्तितम् । स कालः संनयत्पक्षे स्यात् । यः सांनाय्यं करोति, तस्य स कालः स्यात् । तल्लिङ्गसंयोगात् तस्य सांनाय्यस्य वत्सापाकरणं लिङ्गम् । तादृशेन लिङ्गेन संयोगात् संबन्धात् संनयतः पक्षे एव स कालः स्यात्, न असंनयतः सांनाय्यमकुर्वतः इति पूर्वः पक्षः ।

**कालार्थत्वाद्वोभयोः प्रतीयेत । ४२ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निराकृत्य सिद्धान्तमाह । उभयोः संनयतः असंनयतश्च अयं कालः प्रतीयेत । कालार्थत्वात् व्रतस्य । न वत्सापाकरणेन व्रते किञ्चिदाधीयते, कालेन तु प्रयोजनम् । कथं पुनर्वत्सापाकरणं कालार्थमिति, परार्थत्वात् । पयसे हि ते अपाक्रियन्ते । तथाहि दृष्टार्थता भवति । तस्मान्नोपादेयत्वेन वत्सापाकरणं श्रूयते ।

इदं परार्थत्वात् इति हेतुपदं सूत्रगतमेव स्यात् इति भाष्यस्वारस्यात् ज्ञायते । क्वापि पुस्तके सूत्रांशत्वेनावगमाभावात्तु नास्माभिरपि सूत्रे प्रवेशितम् ।

**असंनयतोऽपि कालाह्वानात् । ४३ ॥**

यत्तु तल्लिङ्गसंयोगात् संनयत्पक्षे एवेत्युक्तम्, तन्न । असंनयतोऽपि, यस्यापि न सांनाय्यं तस्यापि, वत्सापाकरणाभावेऽपि वत्सापाकरणकालोऽस्ति । कालेन च नः प्रयोजनं न वत्सापाकरणेन । तस्मान्न संनयत एव व्रतम्, किन्तु असंनयतोऽपि । के.

* कालः सांनाय्यविकाराणां सोमात् प्रागूर्ध्वमिति न नियतः । 'तद्विकाराणामनियतकालत्वम्' । **भाट्ट.** ५।४।८. * कालो हि दुरतिक्रमः । **वा.** ३।१।१३।२३ पृ. ७४०, * अनादिर्हि कालः अस्माकम् । ६।१।२।५. * प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । **भा.** १।३।३।७ पृ. २००. * 'सूक्ष्मः कालोऽस्ति तत्र नः । दुर्लक्षस्तु यथा वेधः पद्मपत्रशते तथा ॥' श्लोवा. शून्यवादे १५७ । सन्तमपि कालभेदं अतिसौक्ष्म्यात् अलक्षयतां पद्मपत्रशतव्यतिभेदे इव यौगपद्यभ्रमः । **रत्नाकरः** । * न यावज्जीवकालः प्रकृतेः शेषभूतः, कर्तृधर्मोऽसौ इत्युक्तम् 'कर्तुर्वा श्रुतिसंयोगात्' इति ( २।४।१।२ ) । **भा.** १२।२।६।२०. * संबन्धभेदसत्त्वेऽपि वर्तमानकालः सर्वत्र कृतावेव अन्वेति इति न क्वापि तस्य विशेष्यान्तरकल्पना । अतः सिद्धं सर्वत्र वर्तमानकालस्य कृतावेवान्वय इति । **रहस्य.** पृ. ४१,४२. * **कालौ** द्वौ सोमस्य दर्शपूर्णमासयोः प्रागूर्ध्वं च । **वा.** ५।४।३।६, * भाष्यकारः 'उपसद्भिश्चरित्वा' इति तल्लक्षितकालमेव अनुपादेयरूपं भेदहेतुत्वेन दर्शयति । २।३।११।२४ पृ. ६१७. * **कालेन** सर्वमपक्षीयते । **भा.** ९।१।१६।४४. * **कालस्य** अननुष्ठेयत्वेन मन्त्रानाकाङ्क्षत्वम् । **सु.** पृ. ७२२. * कालस्य अनुपादेयत्वेन निमित्तत्वात् तदनुग्रहेण प्रणयनबाधः । तस्मादग्निहोत्रं हुत्वा सांतपनीयेष्टिः । **बिन्दुः.** ५।१।१७. * कालस्य अपरपक्षादेः नियमः पित्र्यकर्मसु । **भा.** ६।८।६।२५. * कालस्य अपि अनुष्ठेयपदार्थावच्छेदकत्वेन विधेयत्वात् । **सु.** पृ. १७५. * कालस्य अपि निमित्तवदेव अनुपादेयत्वात् । **वा.** २।४।१।१ पृ. ६२४. * कालस्य अपि षडिन्द्रियवेद्यत्वम् 'इदानीं स्पृशामि' 'इदानीं पश्यामि' इत्यादिप्रतीतेः । धारावाहिके च तत्तत्क्षणविशिष्टघटादेः पूर्वपूर्वज्ञानागृहीतस्यैव उत्तरोत्तरज्ञानविषयत्वम् । **न च** कालः अतिसूक्ष्मत्वात् कथं प्रत्यक्षग्राह्य इति **वाच्यम्** । ज्ञानधारायामुपरतायाम् 'किमत्र घटोऽवस्थितः' इति पृष्टः सन् कथयति 'अस्मिन् क्षणे मयोपलब्धः' इति, 'प्रातरारभ्यैव एतावन्तं कालं मयोपलब्धः' इति च । कालभेदे तु अगृहीते कथमेवं भवेत् । 'शतपत्रपत्रशतं मया सूच्या युगपत् भिन्नम्' इति तु स्थूलकालविषयकम् । कालभेदस्य इन्द्रियवेद्यत्वाभावेऽपि न क्षतिः । **कु.** १।१।५।५. * कालस्य असंस्कार्यत्वात् । यद्यपि कालस्य कर्माङ्गता अवगम्यते, तथापि सकृदेव वेदिते कर्म प्रस्तूयते । न तस्य भूयोभूयः स्मृत्या प्रयोजनम् । यथा अन्यान्यङ्गानि

भूयोभूयः स्मारकमपेक्षन्ते नैवं कालः। टुप्.९।२।१९।५७. * कालस्य उदगयनादिरूपस्य नियमो दैवकर्मणाम् । भा. ६।८।५।२३–२४, * कालस्य नियमविधिः 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिः, न अनुवादः । ४।२।९।२३–२४, * कालस्य वत्सबर्हिरूपलक्षितस्य दर्शपूर्णमासयोर्व्रतार्थे विधानम् 'बर्हिषा पूर्णमासे व्रतमुपैति, वत्सैरमावास्यायाम्' इति । ६।४।१२।३४–४०. * कालस्य षडिन्द्रियजन्यप्रत्यक्षविषयत्वं बाह्यविषयसंबन्धित्वेन 'इदानीं घटो ज्ञातः' इत्याद्यनुभवात् । मणि. पृ. १७०, * कालस्य षडिन्द्रियवेद्यत्वं पूर्वक्षणविशिष्टघटस्य विषयीकरणात् । पृ. १३. * कालस्य संबन्धः 'पौर्णमास्यां यजेत' इत्यादिना विधीयते, न कर्मान्तरम् । वि. २।३।१३. * कालस्य सर्वत्रैव अधिकरणत्वात् । वा. २।२।३।३ पृ. ४७८. * कालस्य सिद्धवदाकाररूपोद्देश्यत्वेऽपि स्वारसिकप्रवृत्तिविषयताऽऽपादकप्रयोजनाकाररूपेण उद्देश्यत्वाभावात् स्वरूपतश्च सिद्धवत्कृत्य निर्देशेऽपि कर्माङ्गत्वेनाप्राप्तत्वात् विधेयत्वोपपत्तिः। सु. पृ. ९५८, * कालस्य स्वतन्त्रद्रव्यत्वेन धर्मिरूपत्वात्। पृ. १७५. * कालस्य स्वर्दृक्पदपाठसंबन्धिनः वीक्षणे विधानम् । भा. १०।६।२।३. * आकाश–दिक्–कालात्मनां परमाणुदृष्टान्तबलेन नित्यत्वात् । वा. १।३।८।२७ पृ. २८५, * देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात् सर्वार्थत्वम् । ३।७।४।९, * काले निमित्ते कर्म विधीयमानं तस्मिन्नेव काले कर्तव्यम् । ५।१।१७।३३. * काले भिद्यमाने तन्त्रभेदो भवति यथा दर्शे पौर्णमासेऽपि । भा. ११।४।६।२३, * काले विहिते एव अग्निहोत्रादीनि कर्तव्यानि । ६।२।७।२३–२६.

* **कालकर्तृदेशानां** नियमविधिः । भा. ४।२।९। २३–२४.

* **कालतः** तुल्यानि दर्शपूर्णमासयोः अङ्गानि प्रधानानि च, 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायां अमावास्यया यजेत' इति । प्रधानैः सह अङ्गानाम् एकदेशकालकर्तृकत्वं वक्ष्यति । 'अङ्गानि तु विधानत्वात्' (११।२।२८) इत्यत्र । भा. ११।१। १०।५६. * कालतः वाचनिको व्यवस्थाविधिः यथा 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वर्षासु रथकारः आदध्यात्' इति । स्मार्तमपि 'दिवा संध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः । कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः॥' इति । बाल.पृ. १८, * कालतः वाचनिकः व्यवस्थितविकल्पो यथा आज्यभागयोः 'वार्त्रघ्नी पौर्णमास्याम् अनूच्येते, वृधन्वती अमावास्यायाम्' इति । पृ. १५९, * कालतः विशेषग्रहणं पशौ 'तिष्ठन्तं पशुं प्रयजन्ति' इति अपकृष्यमाणैः एकादशभिः प्रयाजैः हविरासादनोत्तरकालविहितानां पञ्चानाम् आतिदेशिकानां प्रयाजानां प्रसङ्गसिद्धौ । पृ. १४७–४८, * कालतः व्यवस्थारूपः प्रतिषेधो यथा 'सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजनं कुर्यात्' इति । पृ. ३४. * **कालदेशादेरनुपादेयसंनिधेः** कर्मभेदकत्वं नास्ति इत्यधिकरणार्थः । वा. २।३।१३।२६, * निमेषकाष्ठाकलामुहूर्ताहोरात्रमासवर्षभेदेन **कालपरिमाणं** लोकव्यवहारसिद्ध्यर्थम् । सु. पृ. १२८. * **कालपरिमाणादिकथनं** लोकज्योतिःशास्त्रव्यवहारसिद्ध्यर्थे दर्शनगणितसंप्रदायानुमानपूर्वकम् । वा. १।३।१।२ पृ. १६७।२.

* **कालपादः** । संकर्षे ३।१।१–२५ अधिकरणानि। तत्र दर्शपूर्णमासयोः कालः ३।१।१–४, अन्वाधानस्य ३।१।५, सुत्यायाः ३।१।६, नैमित्तिकेष्टीनाम् ३।१।७, आग्रयणस्य ३।१।८–१७, चातुर्मास्यानाम् ३।१।१८–२५, मासंदर्शपूर्णमासयोः ३।१।२५ इति । * 'अथादधीत' इत्यनेन आधाने एव **कालबाधः** इति वक्ष्यते । भाट्ट. ५।४।३. * आधानस्य सोमपूर्वकत्वकल्पे सोमस्य विहितकालबाधः । भा. ५।४।५।१५–१६. * **कालभेदः** दर्शपूर्णमासयोः 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति । तथा चातुर्मास्येषु पर्वणाम् 'वसन्ते वैश्वदेवेन यजेत' 'वर्षासु वरुणप्रघासैर्यजेत' 'हेमन्ते साकमेधैर्यजेत' इति । भा. ११।२।३।२३, * **कालभेदात्** अङ्गभेदः दर्शपूर्णमासयोः 'पौर्णमासकालान्यङ्गानि कालभेदात् न दर्शस्योपकुर्वन्ति।' ११।४। १।२, * कालभेदात् कर्मणां तन्त्रभेदः । ११।२।४।२२.



⧗ **'कालभेदात् गृह्यमाणविशेषस्य आवृत्त्या भवितव्यम्'** इति इह इतरो न्यायः । भा. ११। ३।१।३०.

⧗ **कालभेदात् त्वावृत्तिर्देवताभेदे** । ११।२।६। २६॥

देवतानां भेदे तु सति पशुषु ऐकादशिनेषु भिन्नप्रदानेषु भिन्ना याज्याऽर्धर्चान्ताः । तस्मात्तत्र कालभेदात् वसाहोमानाम् आवृत्तिः स्यात् न तन्त्रम् इति सिद्धान्तः। के.

* **कालमात्रं** विधीयते जुह्वामौपभृताज्यस्य समानयने 'बर्हिः प्रति समानयते जुह्वामौपभृतम्' इत्यनेन । भाट्ट. ४।१।१५ पृ. १०४ पं. १४–१५.

* **कालरूपधर्मविधिर्न** काम्ये 'यावज्जीवमग्निहोत्रं जुहोति' इति, किन्तु नित्याग्निहोत्रप्रयोगविधिः । वि. २।४।१.

* **काललक्षणार्थं** 'सहविष्कृता विसृजति' (वाचम्) इति हविष्कृद्ग्रहणं इत्युक्तम् 'न कालविधिश्चोदितत्वात्' (३।२।३।६) इति । भा. ११।३। ७।१५.

* **कालविधानार्थं** सहशाखयेति वाक्यम् (इति अधिकरणार्थः)। भाट्ट. ६।४।१३. * **कालविधिः** अर्थवादः 'तावब्रूतामग्नीषोमौ आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति दशमे उक्तम् (१०।८।१७)। बाल. पृ ५६. * कालविधिः 'पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिः दर्शपूर्णमासादौ नियमार्थः। वि ४।२।९. * **कालविधिसरूपः** अर्थवादः 'अपहतपाप्मानो वा ऋतवः इति, यदा क्व चन कदा चन उपनमेत्, अथादधीत अथ यजेत'। रत्न. ५।४।५, बाल. पृ. ५६. * **कालविशेषबाधः** सोमस्यैव, नाधानस्य 'यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्तुं प्रतीक्षेत न नक्षत्रम्' इति । भा ५।४।५।१५–१६. * **कालविषयको** विचारः कियांश्चित् यावज्जीवाधिकरणे वार्तिके द्रष्टव्यः। वा. २।४। १।२. * **कालश्रुतयो** निमित्तार्थाः । भा. ६।२।८।२७. * **कालसूक्तं** 'कालो अश्वो वहतु सप्तरश्मिः' इति आथर्वणे । **श्राद्धमयूखः** पृ. ५२. * **कालादेः** कृतिकारकत्वघटिताङ्गत्वसत्त्वेऽपि प्रयोज्यत्वाभावः । भाट्ट. ४।१।१. * **कालादिचाक्षुषे** महत्त्वोद्भूतरूपादीनां न हेतुता इति केचित् । मणि. पृ. २१, * **कालादिप्रत्यक्षं** विशेषगुणसंबन्धित्वेन आत्मनः इव बाह्यविषयसंबन्धित्वेन इष्यते । 'इदानीं घटो ज्ञातः' 'घटाकाशे ध्वनिरुत्पन्नः' इत्यनुभवात् । पृ. १७०. * **कालादृष्टादिसापेक्षत्वं** ब्रह्मणोऽपि जगत्सृष्टौ, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' इति न्यायात् (२।१।१२।३४ ब्रसू.)। पराक्रमः ५।३।२. * **कालानादरः** सोमान्यवहितपूर्वकालीनाधाने निमित्ते विधीयते 'नर्तुं पृच्छेन्न नक्षत्रम्' इत्यनेन । भाट्ट. ५।४।३, * **कालानादरस्य** 'यदहरेवैनं श्रद्धोपनमेत् अथादधीत' इति वचनान्तरेण आधानमात्रे विहितत्वात् तत एव सोमान्यवहितपूर्वाधानेऽपि कालानादरप्राप्तिः । ५।४।५. * **कालानुरोधेन** पदार्थो नान्यथात्वमभ्युपगच्छेत् । प्रयोगाङ्गं हि कालः पदार्थानामुपकारकः । अतो न कालानुरोधेन व्यथयितव्यः पदार्थः । भा. १।३।३।७ पृ. २००.

⧗ **कालान्तरविधिन्यायः** । न च कालस्यानुपादेयत्वेन यथाशक्तिन्यायाविषयत्वस्य षष्ठे वक्ष्यमाणत्वात् न मुख्यकालासंभवे कालान्तरप्रतिनिधिनियमो युक्तः इति वाच्यम् । प्रतिनिधिनियमत्वासंभवेऽपि मुख्यकालाभावे कालान्तरविधिन्यायेन उपपत्तेः । कौ. १।३।६।१४ पृ. ९५.

* **कालान्तरानवस्थायिनः** न अन्वयव्यतिरेकनिश्चयः । बृहती. पृ. २४०, * **कालान्तरावस्थितिः** सप्रत्यभिज्ञप्रत्यक्षसमधिगम्या इत्युक्तम् । पृ. २४०.

* **कालापकं** नाम शाखान्तरम् । भा. २।४।२।८ पृ. ६३१. * 'एककालाभिसंयोगाद् भिन्नानामपि कर्मणाम् । समुदायार्पणं शक्यमेकदेशस्थवृक्षवत् ॥' यथैव हि एकदेशावस्थितान् वृक्षान् आलोच्य वनमिति समुदायबुद्धिर्भवति एवमेककालयुक्तकर्मसमुदायनामधेयबुद्धिः । वा. २।२।३।३ पृ. ४८०.

* **कालामीज्या** पार्वणौ होमौ इति पूर्वः पक्षः । समुदायामीज्या इति सिद्धान्तः । इति विकृतिषु तयोर्न प्रवृत्तिः । भा. ९।२।१८।५०–५५.

**कालाभ्यासेऽपि बादरिः कर्मभेदात् । ८।३।३।६॥**

षट्त्रिंशद्रात्रे श्रूयते 'षडहा भवन्ति चत्वारो भवन्ति' इति । किमत्र विधीयते, किं द्वादशाहिकानामह्नां प्रवृत्तिः, उत षडहस्येति । तत्र पूर्वपक्षमाह । चत्वारः षडहाः इति तावत् कालस्य अभ्यासः श्रूयते । षडहरूपस्य कालस्य चतुर्वारमभ्यासोऽयम् । अस्मिन् कालाभ्यासेऽपि जनकसप्तरात्रवत् द्वादशाहिकानां नाना अह्नां प्रवृत्तिः स्यात् इति बादरिराचार्य आह स्म । षडहशब्देन एकैकेनाह्ना निर्वर्त्यानि षट् सौत्यानि कर्माणि उच्यन्ते । तेषां च षण्णां कर्मणां भेदः कर्मभेदः गम्यते, चत्वारः षडहा इति संख्यायाः पृथक्त्वनिवेशात् । तस्मात् द्वादशाहिकानां नाना अह्नां प्रवृत्तिः ।

**तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात् । ७ ॥**

षट्त्रिंशद्रात्रे चत्वारः षडहा भवन्ति इति न द्वादशाहिकानां अह्नां प्रवृत्तिः, किन्तु जैमिनिराचार्यः तदावृत्तिं तस्य प्रज्ञातस्य पृष्ठ्यस्यैव षडहस्य आवृत्तिं मन्यते स्म । अह्नाम् अप्रत्यक्षसंख्यत्वात् । अह्नां चतुर्विंशतिसंख्या प्रत्यक्षं साक्षात् नोच्यते, अप्रत्यक्षा अनुमेया इयं संख्या, चत्वारः षडहा इत्युक्तत्वात् । तच्चानुमानं षडहचतुष्टयेनैव । तत्र प्रथमं षडहस्य प्रत्ययः, ततः तच्चतुष्टयस्य । एवं सति षडहप्रत्ययादेव प्राथमिकात् षडहप्रवृत्तिः प्रसज्यते । तस्मात् षडहाभ्यासः । इति सिद्धान्तः । तुशब्दः पक्षव्यावृत्तये । षट्त्रिंशद्रात्रस्य अहःक्लृप्तिस्तु 'अतिरात्रः, चत्वारोऽभिप्लवाः, द्वादशाहस्य दशाहानि, अतिरात्रः' ( १+२४+१०+१=३६ ) इति । सेयं सत्याषाढीये श्रौतसूत्रे १८।२।१३ इत्यत्र द्रष्टव्या । के.

* **कालार्थः संयोगः** 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति अनुयाजानाम् आग्निमारुतोर्ध्वसमयेन सह । वि. ४।३।१४. * कालार्थः संयोगः आग्निमारुतानुयाजयोः हारियोजनपरिधिप्रहरणयोश्च । भा. ४।३।१४।३६, * कालार्थः संयोगः 'उत्तिष्ठन् अन्वाह अग्नीदग्नीन् विहर' इति, तथा 'व्रतं कृणुतेति वाचं विसृजति' इति । उत्थानकाले व्रतकरणकाले च प्रैषादि कर्तव्यम् । ३।२।४।१०, * कालार्थः संयोगो न 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति, किन्तु अङ्गप्रयोजनसंबन्धः । ४।३।१२।२९–३१, * कालार्थः संयोगो न 'संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपति' इति किन्तु पौर्णमास्या एवाङ्गं वैमृधः । ( परंतु वैमृधस्य पृथगनुष्ठानं स्यात् । याज्ञिकास्तु पौर्णमास्या तन्त्रमपि कुर्वन्ति ) । ४।३।१३।३२–३५, * कालार्थः संयोगो न 'सूक्तवाकेन प्रस्तरं प्रहरति' इति सूक्तवाकप्रहरणयोः, किन्तु प्रहरणमन्त्रः सूक्तवाकः । ३।२।५।११–१५. * कालार्थः संयोगः स्वरुक्शब्दवीक्षणयोः । १०।६।२।३, * सर्वत्र च कृतार्थयोः संबन्धे **कालार्थत्वं** स्यास्यति ( ४।३।१२– १५ अधि० ) । वा. ३।२।५।११ पृ. ७५९.

* 'कालेयत्ताक्रमाणां हि सर्वान्ते प्राप्तिरिष्यते' । (सु. पृ. १८० 'ननु वैदिकपदार्थप्राप्त्युत्तरकालीनानामपि क्रमादीनाम् आचमनादिभिः स्मार्तैः पदार्थैः सह यौगपद्यात् विरोधो भविष्यति इत्याशङ्क्याह—कालेति । प्रयोगावस्थायां क्रमाद्यपेक्षा, स च सकलपदार्थप्राप्त्युत्तरभावी इत्याशयः । ) वा. १।३।३।७ पृ. १९९.

* **कालैकत्वमङ्गानां प्रधानैः सह** । भा. ११।२।२।३.

* **कालिदासादिवाक्यं पौरुषेयम्**, वेदवाक्यं तु अपौरुषेयम् । वि. १।१।८.

* **कालेयं** साम 'तरोभिर्वो विदद्वसुम्' ( सासं. ६८७ ) इति बृहतीपङ्क्तिच्छन्दस्कऋग्द्वयात्मके सूक्ते प्रग्रथनेन तृचात्मके गीयते । तच्च माध्यंदिने पृष्ठस्तोत्रेषु चतुर्थम् । वि. १।४।३, ९।२।६ वर्णकं २.

* **कावं** साम 'अभि प्रियाणि पवते' (सासं. ५५४, ७००) इति जगतीत्रयरूपे सूक्ते गेयं ज्योतिष्टोमे तृतीयसवने आर्भवपवमाने । वि. ९।२।६ वर्णकं ३.

* **काविराट्** अनुष्टुप् । पादेषु अक्षराणि ९।१२।९ उदा० ता विद्वांसा ( ऋसं. १।१२०।३ ) । के.

* **काव्यम्**—( काव्यविशेषोदाहरणम् ) 'निदाघसमयसंबन्धिमध्यंदिनार्कविकीर्णखरतरकरनिकरनिपाताहितदुःसहसंतापदूनतनवो हि पिहितगगनमण्डलं बलाहकोन्नतिम् आकस्मिकीम् अम्भःसंभारगम्भीराम् अभिनवतमालमालाभाम् अतिरुचिरां रोचयन्ते, न च कर्तव्यतामस्या रोचयन्ते । न च अवग्रहविशोषितसस्यसीमानः कृषीवलाः यजमानसमर्पितां अभिमतवर्षोपायभूतामपि कारीरीं कर्तव्यतया अवगच्छन्ति ।' कणिका. पृ. ३७४.



**काव्यनाटकलक्षणव्याकरणद्विपदीरासकादिलक्षणन्यायेन** । वा. १।३।८।२८ पृ. २६३ । सुधा–( पृ. २७९ ) काव्यस्य नाटकस्य वा लक्षणम्, प्राकृतभाषायाश्च व्याकरणम्, शुद्धा खण्डा मात्राऽऽदिः संपूर्णा इति चतुर्विधा द्विपदी करुणाख्येन तालेन परिगीयते इत्यादि च द्विपदीनां लक्षणम् । अष्टादशमात्रा विरतिरपि यस्य रासकनामा सः, चतुरङ्घ्रिर्व्याकशी इत्यादि च व्यासकानां लक्षणम् । आदिशब्दाच्च ध्रुवकादीनां लक्षणम् । पृ. २७९ । ( अत्र **संगीतरत्नाकरे** प्रबन्धाध्याये 'शुद्धा खण्डा च मात्राऽऽदिः संपूर्णेति चतुर्विधा । द्विपदी करुणाख्येन तालेन परिगीयते ॥' श्लो. २१३. । रासको द्व्यशीतिभेदः १७५–१७८ श्लोकैरुक्तस्तत्रैव । करुणतालस्तु 'गुरुणा [ ऽ ] करुणो मतः ।' इति तालाध्याये श्लो. ३०१ । के. ) ।

**काव्यन्यायः** । तथा अर्थवादाः के चित् ( भारतादिषु ) वैदिका एव, के चिल्लौकिका एव, के चित्तु स्वयमेव **काव्यन्यायेन** रचिताः, सर्वे च स्तुत्यर्थेन प्रमाणम् । वा. १।२।१।७ पृ. ११६.

* '**काव्यशोभास्वपि** त्वेतत् ( व्याकरणं ) नैवातीवोपयुज्यते । वैयाकरणदोषाद्धि कष्टान् शब्दान् प्रयुञ्जते ॥' वा. १।३।८।२४ पृ. २६३.

* **काशाः** ( दर्भविशेषः ) दीर्घश्लक्ष्णपत्राः अश्वकेशसदृशाः । **सोम**. १।३।५ पृ. ३६.

**काशकुशावलम्बनन्यायः** । अयमेव **कुशकाशावलम्बनन्यायः** । निर्दोषकारणासंभवे काशकुशावलम्बनन्यायेन अनुमानं मया वाच्यम्, शब्दस्य करणस्य सद्भावात् अनुमानस्य च बहुदोषत्वेन मयाऽपि ज्ञातत्वात् नानुमानमहं ब्रवीमि । **सु**. पृ. ८४०.

* '**काष्ठानि** आहर्तुकामः अरण्यं गच्छेत्' इति यथा, तथा यस्य स्वर्गो इष्टः स्यात् स यागं निर्वपेत् । प्रमाणान्तरेण अरण्यगमनस्य काष्ठाहरणसामर्थ्यं विद्यते । भा. ६।१।१।३. * **काष्ठैः** **पचति** इत्यादौ व्यापारावेशात् साध्यरूपप्रतीतेः साक्षात् पच्यर्थे करणभावः काष्ठादेः उपपन्नः । **कणिका**. पृ. ४६४.

* **काष्ठा** ( 'अष्टादश निमेषास्तु काष्ठा' ) कालविशेषः । **सु**.

**किमज्ञानस्य दुष्करम् इति न्यायः** स्पष्टार्थः । **साहस्री**. ७७८.

* '**किम्**' इत्यज्ञानवचनम् । भा. ९।१।६।२५ । किंशब्दोऽयम् अज्ञाते ज्ञातुमिष्टे वर्तते । **टुप्**.

**'किमिव हि कवनं न कुर्यात्, नास्ति वचनस्यातिभारः' इति न्यायेन** ब्रह्महा इत्यादौ यत्र प्रायश्चित्तस्य विधिः, तत्र कामकृते प्रायश्चित्ते न व्यवहार्यतामात्रसिद्धिः, बालघ्नादीनां तु कृतप्रायश्चित्तानामपि असंव्यवहार्यत्वम् । **सनातनधर्मप्रदीपे** शुद्धिप्रकाशे३८४, विवाहप्रकाशे १८९ ( न्यायवाक्यमिदं शाबरभाष्यवाक्यं नानास्थले समायाति 'इतस्ततः' इतिशब्दे द्रष्टव्यम् ) * किं–केन–कथमिति इतिकर्तव्यता भावनया आकाङ्क्षिता । वा. ७।१।१।१ पृ. १५२५. * किं केन कथम् । ज्योतिष्टोमः इत्यभिधाय कर्तव्यः इत्युच्यते । केन ह्याकाङ्क्षिते सोमेनेति । किमर्थम् इति स्वर्गायेति । कथमिति इत्थमनया इतिकर्तव्यतयेति । भा. १।१।८।३२. * किं–केन–कथम्भावैः यावत् भावना न पूर्यते, तावद्विधिर्न प्रवर्तते । वा. ३।६।६।१७ पृ. १०४१.

* '**किं ते कृण्वन्ति** कीकटेषु गावः ( नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥ ( ऋसं. ३।५३।१४ ) इति । कीकटा नाम जनपदाः । नैचाशाखं नाम नगरम् । प्रमगन्दः राजा इति । भा. १।२।४।३१ 'किं ते कृण्वन्ति कीकटेषु गावः' इति । अयं हि ( मन्त्रः ) दृढेन अध्येतॄणां स्मरणेन विश्वामित्रस्य आर्षे गम्यते । तेन किल कर्मार्थे धनं प्रार्थयमानेन इन्द्रोऽभिहितः । त्रैलोक्याधिपते याः कीकटेषु जनपदेषु गावः, तास्तत्र किं कुर्वन्ति । ते हि नास्तिकाः 'किं क्रतुना' इति वदन्तः न किं चित् कर्मानुतिष्ठन्ति । अतश्च ताः नाशिरं सोमसंस्कारार्थं दुह्रते । न घर्मे तपन्ति, न घर्म-

तपने पयोदानेन साधनीभवन्ति। तस्मात् प्रमगन्दस्य कीकटाधिपतेः यत् वेदः धनम्, तदस्माकं नैचाशाखं नगरम् आभर। 'हृग्रहोर्भश्छन्दसि' इति भकारः। अथवा अस्मान् प्रति तत् बिभृहि धारय पोषय च (वा) इत्येतत्। नो मघवन् रन्धय साधय अस्माकमिति। छान्दसं दीर्घत्वम्। वा. पृ. १४९। **सुधा**– ऋषिप्रत्ययाधीनत्वात् अर्थतश्च निर्णयस्य आर्षकथनम्। अपहारसामर्थ्यद्योतनार्थे त्रैलोक्यैश्वर्यवचनम्। 'किं कृतेन इति वदन्तः' इति कीकटशब्दनिर्वचनम्। तप्ते घर्मे पयोनिक्षेपेण निष्यन्दिते यत् शिष्टम्, तत् घर्मशब्देनोच्यते। 'भृञ् भरणे' इति भौवादिकस्य भृञो धात्वन्तरेणार्थकथनं व्याख्यानार्थम्। 'डुभृञ् धारणपोषणयोः' इति जौहोत्यादिकस्य भृञो रूपं बिभृहि इति दर्शितम्। पृ. १०१। यजमानस्तावत् प्रार्थयिता, इन्द्रश्च प्रार्थ्यमानः सर्वदा अस्ति। कीकटाः नाम यद्यपि जनपदाः, तथापि नित्याः। अथवा सर्वलोकस्याः कृपणाः कीकटाः। प्रमगन्दः कुसीदवृत्तिः। स हि प्रभूततरमागमिष्यति इत्येवं ददाति। नीचाशाखः षण्ढः। तदीयं धनं नैचाशाखम्। तच्च सर्वम् अयज्ञाङ्गभूतम्, तेषां कर्मणि अप्रवृत्तेः। तत् अस्माकमाहर इति। शेषं गतार्थम्। वा. १।२।४।४२। **सुधा**– प्रमगन्दनैचाशाखशब्दयोः राजनगरविशेषसंज्ञत्वे सति अनित्यसंयोगापत्तेः अन्यथा व्याख्यानम्। पृ. ११२.

⧗ **कस्मै चिद्दत्तस्य** पुनः कस्मै चिद्दानं कर्तुं न शक्यम्। **वि.** ३।४।२१। अस्यापवादः स्विष्टकृद्धोमः। ३।४।१९.

⧗ '**कस्मै देवाय** हविषा विधेम' (ऋसं. १०।१२०।१–९) इति। एकस्मै देवाय इत्यर्थः। एकारलोपेन एतच्छब्दविज्ञानात् एतदर्थप्रत्ययो भवति। एकस्मै देवाय हविर्दातव्यमिति। **भा.** १०।३।२।१५ पृ. १८७०.

* **किञ्चित्** इति वीप्सार्थे वर्तते। **टुप्.** ९।१।६।२५ पृ. १६६७. * किञ्चित्–पदस्य अज्ञातप्रकारावच्छिन्ने शक्तिः। **मणि.** पृ. १६४.

⧗ **किञ्चित्प्रकरणाम्नातैकस्य शब्दस्य प्रदेशान्तराम्नातानेकवाक्यशेषभावादपि पापीयान् विकल्पः इति न्यायः।** परिमलः. ३।३।१५।२६ ब्र. सू.

⧗ '**किञ्चित् वस्तु स्वत एव विलक्षणम्**' इति न्यायेन प्रपञ्चस्य सदसद्रूपत्वोपपत्तेः। **सिद्धिव्याख्या.** पृ. ८१.

* किञ्चिन्निरस्ते अभ्युदये अवशिष्टस्य तूष्णीं निर्वापः। **वि.** ६।५।५.

* यत्र स्ववाक्ये एव विधीयमानस्यैव **किमंशपूरणं** पदान्तरेणोपनीयते यथा 'युवं हि स्थः स्वर्पती' इति प्रतिप्रत् विधीयमानैव वाक्येन द्वियजमानेन क्रतुना संबध्यते, तत्र प्रकरणबाधो युक्तः। यथा च द्वादशोपसत्त्वस्य विधीयमानस्यैव किमंशपूरणम् अहीनशब्दः करोति। **टुप्.** १०।५।९।३७.

⧗ **किमु ज्ञानस्य दुष्करम् इति न्यायः।** संग्रहः.

* **किण्वमवहन्ति** इति विनाऽपि तण्डुलैः प्रयोगो दृश्यते अवहन्तेः। न चायं गौणः प्रयोगो विशेषाभावात्। **भा.** ११।१।६।२८.

* **किशोरत्वम्** अश्वत्वैकार्थसमवायिनी बाल्यावान्तरजातिः। **सु.** पृ. १४११. * **किशोरशब्दः** अश्वस्य वयोविशेषवचनः। **वा.** ३।४।४।१३ पृ. ९२०.

* **कीकटाः** नाम जनपदाः। 'किं ते कृण्वन्ति कीकटेषु गावः।' **भा.** १।२।४।३१। ते हि नास्तिकाः किं क्रतुना इति वदन्तः न किं चित् कर्म अनुतिष्ठन्ति वा। 'किं कृतेनेति वदन्तः' इति कीकटशब्दनिर्वचनम्। **सु.** पृ. १०१.

⧗ **कीटभृङ्गन्यायः।** यथा 'कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते' एवंच कीटो भ्रमरेण गृहीतस्तद्भिया तमभिध्यायन् तत्स्वरूपतामेति, तथा हरिहरौ प्रेम्णाऽन्योन्यमभिध्यानादन्योऽन्यात्मकतां प्राप्तावित्यर्थः। **साहस्री.** ११०.

⧗ **कीटोद्धारन्यायः।** यथा नदीप्रवाहपतिताः कीटा आवर्तादावर्तान्तरमाशु व्रजन्तो दुःखिताः सन्तः सत्कर्मपरिपाकात् (पूर्वोपार्जितपुण्यकर्मपरिपाकात्) कृपालुना केन चित् पुरुषविशेषेणोद्धृता नदीप्रवाहाद्बहिर्निःसारिताः सन्तः तीरतरुच्छायां प्राप्य सुखं यथा भवति तथा विश्राम्यन्ति, तथैवमाशु स्वकृतकर्मजन्यफलभोगाय मनुष्यादियोनिषु जन्मनो जन्म व्रजन्तो जीवाः संसारानलदग्धा दुःखं लभमानाः पूर्वोपार्जितपुण्यकर्मपरिपाकादेव तत्त्वदर्शिनः प्रत्यगभिन्नब्रह्मसाक्षात्कारवदाचार्यात् सद्गुरोः सकाशादुपदेशं तत्त्वमस्यादिमहावाक्यार्थजन्यज्ञानरूपमवाप्य मोक्षसुखं प्राप्नुवन्तीति। **साहस्री.** ५५०.



⧗ **कीलप्रतिकीलन्यायः।** अयं यथा 'अन्तःकरणसंबन्धात् निखिलानीन्द्रियाण्यपि। रथाङ्गनेमिवलये किलिता इव कीलकाः॥' इति। **साहस्री.** ९१०.

⧗ '**कुकर्म सर्वं सर्वस्य फलत्यात्मनि सर्वदा**' इति न्यायः। स्पष्टार्थः। **साहस्री.** ७३५.

* **कुक्कुटश्च** कुक्कुटी च कुक्कुटौ, शूकरश्च शूकरी च शूकरौ, एवं क्षौमं वसानश्च वसाना च वसानौ। **भा.** ६।१।५।२२–२३. * **कुक्कुटावानय** मिथुनं करिष्यामः इत्यादिविरूपैकशेषस्य अर्थप्रकरणसापेक्षत्वात् विलम्बेनावगतिः। **सु.** ८१०.

⧗ **कुक्कुटध्वनिन्यायः।** आदौ लघुरपि पश्चात् दीर्घो भवति, तद्वत् सज्जनमैत्री। **संग्रहः.**

⧗ **कुक्कुटध्वानन्यायः।** यथा कुक्कुटध्वनिर्ह्रस्वदीर्घप्लुतभेदेन क्रमेण वर्धते, तथा साधुमैत्री। कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेः अकारादयो नोक्ता इति 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' (पा० १।२।२७) इति सूत्रे शब्देन्दुशेखरे इति। **साहस्री.** ३३३.

⧗ **कुञ्जरस्नानन्यायः।** अयं स्वच्छकर्म कृत्वा तदनु तत्कृतकर्मविघातककर्मकरणविषये प्रवर्तते। यथा हस्ती स्नानं कृत्वा जलाशयाद्बहिर्विनिर्गम्य स्वशुण्डादण्डेन धूलिं निजशीर्षपृष्ठोपरि क्षिपति मलिनीकरोतीति यावत्। इत्येवं प्रकृतेऽपि बोध्यम्। **साहस्री.** ८९४.

* **कुठारादीनां** छेदनादौ करणत्वात् उद्यमनादौ च कर्मत्वात् भिन्नविषयत्वेन अविरोधः (कर्मत्वकरणत्वयोः)। **सु.** पृ. ३९९.

* **कुण्डगोलकवचनमपि** सत्येव ब्राह्मण्ये अवान्तरसंज्ञाविशेषप्रतिपादनपरम्। **सु.** पृ. १३.

⧗ **कुण्डधारोपास्तिन्यायः।** यथा कुण्डधारो हि कश्चिद्यक्षो धनार्थं स्वविषयकोपासनां कृतवतः कस्य चित्प्रत्यक्षीभूय धनादिरूपपुरुषार्थमल्पं मन्वानस्तेन सह देवसंमतिं प्राप्य, देवताः प्रार्थ्य, तत्प्रसादेन ज्ञानानुष्ठानभाजं कृत्वा तं मोक्षभागिनमकरोदिति भारते प्रसिद्धिः। तथा शिवशक्त्यादिमन्त्रग्रहीतुरपि तत्तद्देवताः स्वप्रसादेन मोक्षोपायानुष्ठानादिविरोधिरजस्तमोनिबर्हणसत्त्वाभिवृद्धिद्वारा चिराय मोक्षं संपादयन्तीति रामानुजीया इति। **साहस्री.** ८४३.

* **कुण्डपायिनामयनम्** इति क चित्, कौण्डपायिनामयनम् इति च क चित् व्यपदिश्यते। **के.** * कुण्डपायिनामयनम्, 'मासमग्निहोत्रं जुहुति' इत्यारभ्य यावत् 'दशरात्रो महाव्रतम् उदयनीयोऽतिरात्रः' इति। **भा.** ८।२।६।२९. * **कुण्डपायिनामयने** अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते। **वा.** ५।३।९।३२. * कुण्डपायिनामयने अत्सरुकैः चमसैः सोमान् भक्षयन्ति। **भा** १०।२।९।३३ (३४). * कुण्डपायिनामयने पशौ आध्वर्यवम् 'परिवीरसि०' इति यूपपरिव्याणकरणमन्त्रं होता पठेत्, 'युवा सुवासाः०' इति क्रियमाणपरिव्याणानुवादिनं हौत्रं मन्त्रं कश्चित् होतृपुरुषः पठेत्। ऋत्विजां व्यत्यासविधानात्। **के.** ३।८।११.

⧗ **कुण्डपायिनामयने प्राजहितेऽग्नौ मासाग्निहोत्रश्रपणम्॥**

**श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्, प्राजहितस्य विद्यमानत्वात्।** १२।१।६।३॥

**भाष्यम्**— कौण्डपायिनामयने अग्निहोत्रे चिन्त्यते किं तदीयस्य द्रव्यस्य शालामुखीये श्रपणम्, अथवा प्राजहिते इति। प्राजहितः इति गार्हपत्यस्य पूर्वाचार्यसंज्ञा। अत्रापि स एव न्यायः। गार्हपत्ये श्रपणं श्रुतम्, स एव प्रयुक्तो विद्यते, अप्रयुक्ते च प्रसङ्गः स्यात् इति। भूयांश्चात्र परिहारः। चोदकेन शालामुखीयः प्राप्यते। ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतम्। तच्च चोदकपरंपरया कौण्डपायिनामयनमागतम्। नामधेयेन तु प्राजहिते श्रपणं प्राप्यते। चोदकाच्च नामधेयशब्दो बलवत्तरः। तस्मात्तत्र श्रपणं कर्तव्यमिति।

शा—(**प्राभाकरास्तु** नामप्राबल्यस्य सप्तमे एव स्थितत्वेन पूर्वपक्षानुत्थितेः कृत्वाचिन्तेत्याहुः। तन्मतमाह—) **केचित्तु** कृत्वाचिन्तामाहुः। असत्यपि नामधेये 'गार्हपत्ये हवींषि श्रपयति' इत्यस्य अनारभ्यवादस्य सर्वार्थ-

त्वात् उपदेशतः प्रासः प्राजहितः चोदकप्रासं शालामुखीयं बाधते इति। **तत्तु नैवम्** । अनारभ्यवादस्य हविःश्रपणद्वारकत्वात् , कुण्डपायिनामयने च हविःश्रपणस्य अश्रुतत्वात् प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेः द्विरुक्तत्वात् नोपदेशसंभवः । तस्मात् नाम्नैव प्राजहितप्राप्तिः ।

**ननु** कुण्डपायिनामयनगताग्निहोत्रे न चोदनालिङ्गातिदेशेन अन्यतः श्रपणप्राप्तिः, तस्य दर्विहोमत्वेन अपूर्वत्वात् । नापि नामधेयात् नैयमिकाग्निहोत्रतः श्रपणप्राप्तिः, परैः नाम्ना अतिदेशो नास्ति इति कृत्वाचिन्तया अधिकरणस्य प्रवर्तितत्वेन नाम्ना श्रपणप्राप्त्यसंभवात् । तस्मात् प्रकृतितः प्राप्यमाणस्य सह प्राजहितेन प्राप्तेः द्विरुक्तत्वम् इत्येतदयुक्तम् । **इति चेत्, सत्यम्** । परैरपि नाम्ना अतिदेश एव नास्ति इति कृत्वाचिन्तया अधिकरणं न प्रवर्तयितुं शक्यम् । तथा सति श्रपणस्यैवात्र प्राप्त्यभावेन 'कुत्र श्रपणम्' इति विचारस्यैवानुपपत्तेः । श्रपणस्यात्र प्रत्यक्षविध्यभावात् , दर्विहोमत्वेन चोदनालिङ्गातिदेशाभावाच्च । तस्मात् परैरपि नामधेयेन नैयमिकाग्निहोत्रतः श्रपणप्राप्तिमङ्गीकृत्य सत्यपि नाम्ना अतिदेशे तस्य प्राबल्यं नास्ति इति कृत्वाचिन्ता प्रवर्तनीया । तथा सति यदा नैयमिकात् श्रपणं प्राप्यते , तदा सहैव प्राजहितेन प्राप्नोति इति युक्तमेव द्विरुक्तत्वाभिधानमिति । न च एवं नाम्ना प्राजहितप्राप्तिसंभवेऽपि तस्य प्राबल्याभावेन कुण्डपायिनामयने चोदकतः शालामुखीय एव प्राप्नुयात् , इति तद्बाधनार्थम् अनारभ्यविधेः आतिदेशिकश्रपणविषयत्वमपि संभवति , इति न द्विरुक्तत्वमिह दोषावहम् इति वाच्यम् । तथा सति द्वादशाहादिष्वपि श्रपणस्य आतिदेशिकतया तत्रापि चोदकप्राप्तशालामुखीयबाधेन अनारभ्यविधिना मुख्यगार्हपत्यस्यैव विधिप्रसङ्गेन चोदकपरंपरया कुण्डपायिनामयनगते श्रपणे शालामुखीयप्राप्तेरेव संभवापत्त्या अनारभ्यविधेः तत्र शालामुखीयबाधनार्थत्वानुपपत्तेः । तथा सति द्वादशाहादिष्वेव अस्य विचारस्य प्रवर्तयितुं शक्यत्वेन सूत्रभाष्ययोः कुण्डपायिनामयनपर्यन्तधावनानुपपत्तिः , तत्र कृत्वाचिन्ता श्रपणक्लेशाभावात् इति दिक् ) । ननु सिद्धं नाम्नः प्राबल्यं सप्तमे । सत्यम् । इह तु प्रसङ्गनिराकरणार्थं सूत्रम् । 'शालामुखीयस्तावत् अस्मिन् तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः, स एव प्रसङ्गात् अग्निहोत्रश्रपणमपि साधयिष्यति विनाऽपि तादर्थ्येन' इति शङ्का । सेयं निराक्रियते । अन्यार्थस्य नामप्राप्तेन प्राजहितेन बाधितत्वात् इति । पूर्ववत् **'साद्गुण्यसंभवे वैगुण्यानाश्रयणात्' इत्यस्यैव न्यायस्य** ( पात्रेषु च० १२।१।४ इत्यत्र सिद्धस्य ) प्रपञ्चोऽयम् ।

**सोम**— पूर्ववत् इहापि शालामुखीये पाकः इत्युत्थितेः **संगतिः** ।

**वि**— 'शालामुखीयवह्नौ किं श्रप्यतां कौण्डपायिने । किंवा प्राजहिते वह्नौ , चोदकाप्राप्तितोऽग्रिमः ॥ , प्राग्वंशे पश्चिमो वह्निर्भवेत् प्राजहितोऽत्र सः । अग्निहोत्रेतिनाम्नाऽऽसौ नामाप्तो लिङ्गतो बली ॥ ' तस्मात् प्राजहिते श्रपणम् ।

**भाट्ट**— सोमे आहवनीयादुत्तरवेद्याम् अग्निप्रणयनोत्तरम् अवशिष्टाहवनीयस्य शालामुखीयः इति संज्ञा । स एव च 'शालामुखीयः एव अत ऊर्ध्वं गार्हपत्यो भवति' इति वचनेन अग्निप्रणयनादूर्ध्वं गार्हपत्यकार्ये विनियुक्तः । गार्हपत्यस्य तु तदारभ्य प्राजहितः इति संज्ञा । कौण्डपायिनामयने च परंपरया सर्वमिदमतिदिष्टम् , तत्र मासाग्निहोत्रमपि सर्वोपसदुत्तरकालीनसायंकालकत्वात् अग्निप्रणयनोत्तरमिति तदीयं श्रपणं शालामुखीयस्य प्रवृत्तत्वात् तत्रैव स्यात् । नह्यत्र शामित्रवत् मासाग्निहोत्रीयश्रपणे तस्याङ्गताग्राहकप्रमाणाभावः, चोदनालिङ्गातिदेशस्यैव प्रमाणत्वात् । न च तदपेक्षया प्रबलनामातिदेशप्रापितप्राजहितेन तस्य बाधादनङ्गत्वम् , कार्यान्तरे प्रवृत्तस्यैव शालामुखीयस्य लाघवादुपजीवनेन नामातिदेशस्यैव प्राजहितविषयत्वाकल्पनात् , शालामुखीयस्य प्रकृतौ अग्निप्रणयनोत्तरकालीनयज्ञभागधर्मत्वेन प्रधानाश्रितत्वात् , तेन नामातिदेशप्रापितस्य बाधोपपत्तेश्च , प्राजहितसमाख्यया तस्य कार्यसाधनत्वाभावप्रतीतेश्च । अतश्चोपादानलाघवानुरोधेन शालामुखीयस्यैव प्रसङ्गेन ग्रहणात् प्राजहितस्य निवृत्तिः । **इति प्राप्ते** , नात्र किञ्चिदुपादानलाघवम् , शालामुखीयस्य



कार्यान्तरे प्रवृत्तत्वेऽपि एतत्कार्यस्य पृथगनुष्ठेयत्वेन लाघवाभावात् , संनिहितत्वमात्रस्य प्राजहितेऽपि सत्त्वाच्च । न च भागधर्मत्वेन प्रधानाश्रितत्वात् शालामुखीयस्य प्राबल्यम् , प्रधानाश्रितस्यापि अङ्गेषु कल्प्यत्वेन स्वाश्रितप्राजहितापेक्षया दुर्बलत्वात् , मासाग्निहोत्रस्यापि कौण्डपायिनामयने प्रधानत्वेन प्रकरणान्तराधिकरणवार्तिके स्थापितत्वाच्च । वस्तुतस्तु नायं भागधर्मः, पदार्थवत् भागस्यापि स्ववाक्ये श्रुतत्वाभावात् , योग्यतया साक्षात्पदार्थधर्मत्वस्यैव युक्तत्वाच्च । अतश्च अपूर्वमासाग्निहोत्रे न शालामुखीयस्याङ्गत्वप्रसक्तिः । वस्तुतस्तु न कौण्डपायिनामयनत्वेन एकोऽतिदेशः, प्रमाणाभावात् । अपि तु तद्वृत्तितत्तत्सोमयागत्वेन भिन्न एव । अतश्च शालामुखीयस्य प्रकृतौ प्रकृतापूर्वसंबन्धिगार्हपत्ये एव विनियोगः, न तु असंबन्धितत्तत्कार्ये । अतश्च मासाग्निहोत्रे तदतिदेशप्रवृत्तौ प्रमाणाभावात् स्वातिदेशेन प्राजहितप्राप्तिरविकलैव । अत एव प्राजहितसंज्ञाऽपि सोमयागापूर्वसाधनीभूततत्तत्कार्ये एवेति ध्येयम् ।

**मण्डन**— 'सत्रे पचिः प्राजहितेऽग्निहोत्रके ।'

**शंकर**— 'नाम्ना पाकोऽपराग्निगः ।' ७.

**कुण्डपायिनामयने 'मासं दर्शपूर्णमासाभ्यां यजेत' इति प्रत्यहं यागः ॥**

'मासं दर्शपूर्णमासाभ्याम्' इत्यादिवाक्यविहितदर्शादेः प्रकृतिप्राप्तकालानुग्रहाय त्रिंशत्पर्वस्वनुष्ठानम् 'चत्वारोऽभिप्लवाः एक पृष्ठ्यः, स मासः' इत्यादौ त्रिंशत्कर्मस्वपि मासपदप्रयोगात् । **इति प्राप्ते**, 'मासं त्रिवृतः' इत्यादिप्राये पाठात् अत्यन्तसंयोगद्वितीयया च संततमेव यागः इति । **संकर्ष.** ३।१।२५.

* कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इति कर्मविधिः, न मासगुणविधिः । **वि.** २।३।११. * कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इति यथाप्रकृति अनुष्ठानम् । **वा.** ३।२।५।१६ पृ. ५०९. * कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्येवमादीनि प्रागग्नीषोमीयात् । तत्रोपांशुत्वसंबन्धो न भवति सिद्धान्ते । **भा.** ९।१।७।२५. * कुण्डपायिनामयने 'यो होता सोऽध्वर्युः स पोता, य उद्गाता स नेष्टा सोऽच्छावाकः, यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता , यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत् , यः प्रतिप्रस्थाता सोऽग्नीत् स उन्नेता, गृहपतिर्गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्यः' इत्यृत्विक्समासे सामाम्नाते होत्रादिशब्दानां मुख्यार्थत्वमङ्गीकृत्य तत्सामानाधिकरण्याय अध्वर्य्वादिशब्दानां लक्षणाऽऽर्थत्वं तृतीये 'विप्रतिषेधे करणः समवायविशेषात्' ( ३।८।१०।२२ ) इति समवायविशेषं व्याचक्षाणेन भाष्यकृता उक्तम् । **सु.** पृ. ४९६ * कुण्डपायिनामयने सत्रात्मकद्वादशाहधर्माणामतिदेशः, तस्य सत्रत्वात् अहीनत्वाभावात् । **भा.** ८।२।६।३०–३३, * **कुण्डपायिनामयनगतमग्निहोत्रं** नैयमिकादग्निहोत्रात् कर्मान्तरम् इति समधिगतम् ( २।३।११ ) । मासाग्निहोत्रन्यायोऽयम् । ७।३।१।१.

**कुण्डबदरन्यायः** । 'ऋचि प्रणवं दधाति' इति विधानात् सामिधेनीषु प्रत्यृचं प्रणवः प्रयोज्यः । स च यद्यपि कुण्डबदरन्यायेन ऋगक्षरासंमिश्रो वा दधनिसितान्यायेन तत्संमिश्रो वा इति द्वेधाऽपि संभाव्यते , तथापि प्रकृतेरुपांशुयाजपुरोवाक्योत्तरमिव कुण्डबदरन्याय एव युक्तः इति पूर्वपक्षः । **संकर्ष.** ४।१।११.

**'कुब्जोऽपि चित्रं शयितुं समीहते' इति न्यायः** । कुब्जः नाम हस्तेन विकृतः । **साहस्री.** ९०४–९०५.

* **कुमार**- करभ–कलभ–किशोर–वत्स–बर्करादयः । विशिष्टजातिसंबद्धवयोविशेषवचनाः मनुष्योष्ट्रहस्त्यश्वादीनाम् । ( अश्वशब्दोत्तरं गोअजयोरुपलक्षणं कार्यम् ) । **वा** ३।४।४।१३ पृ. ९२०. * **कुमारत्वं** मनुष्यत्वैकार्थसमवायिनी बाल्यावान्तरजातिः । **सु.** पृ. १४११.

* **कुमारिलपादा** अपि 'उपाख्यानानां न तत्त्वान्वाख्याने तात्पर्यम्' इति अर्थवादाधिकरणे विवेचयन्ति । मना. प्रदीपे प्रमाणप्रकाशे पृ. ४८.

**कुमारीकङ्कणन्यायः** । अयं श्लोकेन विवृतः । तथाहि 'बहूनां कलहो नित्यं द्वाभ्यां संघर्षण तथा । एकाकी विचरिष्यामि कुमारीकङ्कणं यथा ॥' इति । **साहस्री.** ८१६.

⧗ **कुमारीन्यायः** । कुमारीकङ्कणन्यायार्थक एवायम् । **संग्रहः.**

* **कुम्भकारः** घटादीन् उत्पाद्योत्पाद्य विक्रीणाति ददाति च । **वा.** २।३।३।४ पृ. ५९१.

⧗ **कुम्भीधान्यन्यायः** । कुम्भी उखा, रन्धनस्थालीति यावत् । यथा कुम्भीधान्याय विप्रायेयं धेनुर्देयेत्यत्र विशेषणसाफल्याय कुम्भ्यामेव धान्यं यस्येति विगृह्यते, तथा 'तं त्वौपनिषदं पुरुषं पृच्छामि' इत्यत्र औपनिषदमिति उपनिषन्मात्रैकगम्यमिति विगृह्यताम्, अन्यथा विपुलधान्यवतामपि सर्वेषां विप्राणां कुम्भीधान्यत्वसंभवेन कुम्भीधान्यायेति विशेषणवैयर्थ्यवत् जीवतदुपाध्यादेरपि औपनिषदबोधविषयत्वसंभवेन विशेषणवैयर्थ्यापातात् । अयं च– 'चुटू' (पा. १।३।७) इति सूत्रमहाभाष्येऽप्यभिहितः । तथाहि– 'कुम्भीधान्यः श्रोत्रिय इत्युच्यते । यस्य कुम्भ्यामेव धान्यं स कुम्भीधान्यः । यस्य पुनः कुम्भ्यां चान्यत्र च धान्यम्, नासौ कुम्भीधान्यः । नायम् इद्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञातुम्' इत्यादि । **साहस्री.** २०२.

* **कुम्भीशूलवपाश्रपणीनां** तन्त्रं वाजपेयप्राजापत्यादिपशवङ्गश्रपणायार्थम् । **भा.** ११।४।८।३३, * **कुम्भ्यादीनां** तन्त्रं भिन्नदेवताकेषु पशुषु एकजातीयेषु । ११।४।९।३४–३९, * कुम्भ्यादीनां तन्त्रं न नानाजातीयेषु पशुषु, पाकवैषम्यात् । ११।४।१०।४०–४१.

⧗ **कुरुपाण्डवन्यायः** । (यद्यपि) आचारोऽपि कर्मविशेष एव, तथापि (करणचरणयोः) भेदोक्तिः कुरुपाण्डवन्यायेन । **गोविन्दभाष्यं** ३।१।१२ ब्र. सू. । यद्यपि पण्डुपुत्रा अपि कुरुवंशीया एव तथापि पण्डुपुत्रत्वेन विशेषेण तेषां पृथक् ग्रहणम् । एवं समानधर्मवत्त्वेऽपि यत्र अवान्तरधर्मेण भेदेन निर्देशो भवति, तत्रायं न्यायः । **के.**

* '**कुर्यात्** क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमम् । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥' एवं हि पदवाक्यार्थन्यायविदः श्लोकमामनन्ति । विधिविभक्तिं हि विधायिकां लिङ्गं मन्यमानाः त एवं समामनन्ति । **भा.** ४।३।१।३ पृ. १२४७.

* **कुले** संततार्ध्ययनात् मेधावी जायते, इति स प्रतिग्रहादन्नं प्राप्नोति । **भा.** १।२।१।१५.

⧗ **कुलकन्यान्यायः** । यथा कुलकन्यका सह सौन्दर्यादिगुणैर्निजजनकहर्म्ये एव गौरवं प्राप्नोति, तथा विवक्षायामयमवतरतीति । प्रोक्तं च रुद्रकविना– 'सत्यं सन्ति गृहेगृहे सुकवयो येषां वचश्चातुरी, स्वे हर्म्ये कुलकन्यकेव लभते जातैर्गुणैर्गौरवम् ॥' इति । **साहस्री.** ७१७.

* **कलकल्पः** यदेकेनारब्धं पुत्रपौत्रादिभिः समाप्यते स कुलकल्पः । **रत्नाकरः** आत्मवादे ३६.

* **कुलपरीक्षापूर्वकः** इदानींतनपुरुषगतविवाहादिव्यवहारः । **सु.** पृ. १३. * **कुलशब्दो** हि समुदायवचनः समानजातीयेषु दृष्टः ब्राह्मणकुलम् इत्यादौ । **रत्नाकरः** स्फोटवादे श्लो. ४९.

* '**कुलत्थाश्चणकाः** श्राद्धे न देयाश्चैव कोद्रवाः ।' मरीचिः । अयं क्रत्वर्थः जातिविषयकः स्मृतिकल्प्यः प्रतिषेधः । **बाल.** पृ. ३१.

* **कुलाययज्ञे** 'अनेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' अत्र राजा च पुरोहितश्च इति द्वयोः कर्तृत्वम् । भिन्नकल्पयोरपि सहाधिकारः । प्रयाजेषु तु नाराशंसतनूनपातौ विकल्पितौ (भिन्नकल्पत्वं तु क्व चित् क्षत्रियस्य ब्राह्मणस्य च प्रयोगभेदेन) । **वि.** ६।६।२.

* **कुलाययागे** द्वियजमानके तावत्संख्याकाञ्जनाद्यनुसमयः न प्रत्येकम् । ततश्च पदार्थानुसमयः एवात्र । एकपदार्थस्तु त्रिवृद्विशिष्टाञ्जनमेव । **सोम.** ५।२।२. * **कुलायादौ** प्रतिपदोरुत्कर्षः ज्योतिष्टोमात्, 'युवं हि स्थः' 'एते असृग्रम्' अनयोः प्रतिपदोः प्रथमायाः द्वियजमानविषयत्वात् द्वितीयस्याश्च बहुयजमानविषयत्वात् । **भा.** ३।३।९।१७–१९.

* **कुलायिनी विष्टुतिः** त्रिवृत्स्तोमस्य । तत्र प्रथमसूक्ते पाठक्रमः एव प्रथमे पर्याये । द्वितीये पर्याये द्वितीये सूक्ते मध्यमोत्तमप्रथमाः इति क्रमेण गानम् । तृतीये पर्याये तृतीये सूक्ते उत्तममध्यमप्रथमा इति क्रमेण गानमिति । **वि.** १।४।३.



⧗ **कुलालचक्रकीटन्यायः** । यत्र शीघ्रगत्या आधाराश्रयेण आधेयस्य प्रतीपगतिः प्रतीयते, तत्रायमवतरतीति । ज्योतिःसिद्धान्तेऽयं व्यवहृतः । तथाहि 'यान्तो भचक्रे लघुपूर्वगत्या खेटास्तु तस्यापरशीघ्रगत्या । कुलालचक्रे भ्रमिवामगत्या यान्तो न कीटा इव भान्ति यान्तः ॥' इति सिद्धान्तशिरोमणिगोलाध्याये **भास्कराचार्येणोक्तः** इति । एवं हि **श्रीमद्भागवते** पञ्चमस्कन्धे द्वाविंशतितमाध्यायेऽपि 'यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशान्तरेष्वप्युपलभ्यमानत्वात्, एवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण' इत्यादि । **साहस्री.** ५९७.

⧗ **कुलालचक्रन्यायः** । यथा हस्तदण्डादिभ्रमिप्रेरितं कुलालचक्रमुपरतेऽपि तस्मिंस्तद्बलादेव आसंस्कारक्षयं भ्रमति, तथा भवस्थेनात्मना अपवर्गप्राप्तये बहुशो यत्कृतं प्रणिधानं मुक्तस्य तदभावेऽपि पूर्वसंस्कारादालोकान्तं गमनमुपपद्यते इत्यार्हता आहुः । **साहस्री.** ७०३.

⧗ **कुलालचक्रभ्रमणन्यायः** । जीवन्मुक्तिः सिध्यति न्यायेनानेन । **संग्रहः.**

* '**कुशा** दूर्वादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनः ॥' इति वचनेन विनियुक्तविनियोगेऽपि शिष्टाचारविरोधाभावः । **भाट्ट.** ११।३।१२. * **कुशाः** प्रास्ता एव शरैर्बाध्यन्ते इत्युक्तं बलाबलाधिकरणे । **वा.** ३।६।१।८. * **कुशानाम्** आतिदेशिकानां सोमारौद्रयागे उपदिष्टैः शरैर्बाधः । **भा.** १०।४।१।१–२ वर्णकं २.

⧗ **कुशकाशावलम्बनम् इति न्यायः** । अयमेव काशकुशावलम्बनन्यायः । **ऋजु.** पृ. ७३. * 'अर्थवत्त्वं न चेज्ज्ञातं मुख्यैरस्य प्रयोजनैः । तस्यानुषङ्गिकेष्वाशा **कुशकाशावलम्बिनी** ॥' वा. १।३।८।२४ पृ. २६८.

* 'अवहतैरपूर्वं कुर्यात्' इति शास्त्रार्थः । साधनप्रयुक्तिपक्षे तद्वत् कुर्यात् इत्यतिदेशे 'अवहतैः कुर्यात्' इत्यर्थो भवति । तस्मात् सिध्यति विकृतौ अवघातः । तेन यस्यापूर्वस्यावघातोऽङ्गम् इत्यादि कुशकाशावलम्बनमनर्थकम्, यत् परं धर्मसाङ्कर्याय स्यात् । शा. ९।१।१. * नहि अत्र ग्रहस्य परिच्छेदानाकाङ्क्षत्वात् न तत्कर्मत्वे परंपरासंबन्धेन एकत्वान्वयः इत्यादि कुशकाशावलम्बनं शङ्कितुं शक्यम् । आकाङ्क्षाऽभावे (वाक्यभेदाभावे) वैकृताङ्गवत् आकाङ्क्षोत्पादनसंभवेन तस्याः किंचित्करत्वादिति चेत् । **कौ.** ३।१।७।१४ पृ. १८०.

* यथा नद्यादौ पतितः सन् अन्यदालम्बनमलभमानो व्याकुलचित्तः कुशकाशादीनालम्बते, तथा वादे दृढासु युक्तिषु निरस्तासु भ्रान्तचित्तः पुमान् निर्बलां युक्तिमवलम्बमानः कृतकृत्यो भवतीति भावः । **साहस्री.** ४६५.

* **यदपि** च प्राकरणिकाश्रयपक्षे अग्निष्टोमस्तोत्रमात्रवृत्तित्वासंभवे कारणम् औपदेशिकऋग्बाधायोगरूपम् उक्तं **तदपि** स्तोत्रान्तरस्याश्रयत्वे ऋचां साम्नश्च बाधापत्तेः उभयत्रबाधापेक्षया च एकस्यैवौपदेशिकस्यापि बाधौचित्यात् **कुशकाशावलम्बनम्** । **कौ.** २।२।१२।२६ पृ. २८७.

⧗ **कुशकाशावष्टम्भनन्यायः** । नद्याः वेगेन नीयमानो यः तीरगतं वृक्षमपि अवष्टभ्य स्थातुं न शक्नोति, तस्य यथा **कुशावष्टम्भनं काशावष्टम्भनं** चानर्थकं तथैतदपीत्यर्थः इति । **सु.** पृ. २९२.

* **कुशबर्हिषः** शरमयबर्हिषा बाधः सोमारौद्रे चरौ आभिचारिके । **भाट्ट.** १०।४।२.

* **कुशलवने** एव 'बर्हिर्देवसदनं दामि' इति मन्त्रः, न तु उलपराजिलवने । **मीन्या.**

* **कुशलः** इति शब्दः, बहुषु कुशानां लातुर्गुणेषु सत्सु, निपुणतायामेव कुशलशब्दप्रयोगात् रूढिशब्द एव भवति । **भा.** ६।७।१०।२२.

* **कुसुम्भकसूक्तादीनां** तु यदि क्व चिद्विशेषरूपार्थो नास्ति, ततः सामान्यविधानेन अर्थवत्ता भविष्यति । वाचःस्तोमे सर्वमन्त्रोपदेशात्, तथा आश्विने सूर्योदयावधि समाप्त्यसंभवे सर्वासामृचामुपदेशात् । **वा.** २।१।५।२४ पृ. ४२७. (कुसुम्भकसूक्तं तु 'कङ्कतो न कङ्कतः' इत्यादि, अन्तिमयोर्ऋचोः कुसुम्भकशब्दपाठात् ऋसं. १।१९१।१–१६ **के.**)

⧗ **कुसुमस्तबकन्यायः** । यथा पुष्पस्तबकं द्विगतिकं भवति सर्वलोकमूर्धस्थितिर्वा वने विशीर्णता वा, तथा महात्मनामपीत्येवंविषयेऽस्य प्रवर्तनमिति । (तदुक्तं

‘ कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः । मूर्ध्नि वा सर्वलोकस्य , शीर्यते वन एव वा ’ ॥ ) **साहस्री. ९८५.**

* **कुसुरुविन्दादयः** अष्टौ सप्तरात्राः । तत्राष्टमो जनकसप्तरात्रो नाम । **सोम.** ८।३।२.

⧗ **कुसूलधान्यन्यायः** । अयमपि **नीलकण्ठेन** व्यवहृतः । तथाहि ‘ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ’ इति गीताप्रतीकमादाय कुसूलेन धान्यमिव मयेदं जगद्विष्टब्धमित्युक्तमिति । **साहस्री. ९२२.**

* **कूटं दक्षिणा निषादेष्टयाम्** । तत्र ये एवैतेन ( कूटेन ) व्यवहरन्ति तेभ्य एव ( कूटशबल– ) अर्थतत्त्वं ज्ञात्वा दीयते । **वा.** * कूटं ( मृगबन्धनयन्त्रं ) निषादानां द्रव्यम् । निषादानामेवोपकारकं नार्याणाम् । स्वमेव तन्निषादानाम् । **भा.** ६।१।१३।५२.

* **कूटकार्षापणेन** यो हि कं चित् कालं लोकमध्ये व्यवहरति , न तेन विवेकज्ञानजनितव्युत्पत्तिनाऽपि तथैव व्यवहर्तव्यम् । न च अस्य तदानींतनज्ञानमात्रबुद्धिर्भवति । **वा.** १।३।२।३ पृ. १७९.

⧗ **कूपखानकन्यायः** । यथा कूपखानकेन पतितं पङ्कादि कूपान्निःसृतेन अम्भसा प्रक्षाल्यते , तथा तत्तद्विग्रहावच्छिन्नेशभेदबुद्धिजो दोषः तदुपासनाजन्यसुकृतमहिम्ना उत्पन्नेनाद्वैतबोधेन समूलं निवर्त्यते इति ज्ञेयम् । **साहस्री. १५०.**

* ‘कूपखानकवदेतद् भविष्यति । तद्यथा–कूपखानकः कूपं खनन् यद्यपि मृदा पांसुभिश्चावकीर्णो भवति सोऽप्सु संजातासु तत एव तद्गुणमासादयति , येन च स दोषो निर्हण्यते, भूयसा चाभ्युदयेन युज्यते (महाभाष्यमिदम् । १।१।१ पृ. ३१ ) । **सु.** पृ. ३२५. * मङ्गलश्लोके ‘ नागेशः कुरुते सुधीः ’ इति शेखरकारेणोक्तम् । तत्र ‘आत्मनाम गुरोर्नाम’ इति आत्मनामोच्चारणस्य निषिद्धत्वात् आत्मनामोच्चारणमयुक्तम् इति शङ्कायां ‘यत्तु **कूपखानकन्यायेन** समाहितं कैश्चित् तन्न । मङ्गलस्य विघ्नध्वंसादिप्रयोजकत्वस्य अनुमितश्रुत्यादिबोधितत्वेऽपि आत्मनामोच्चारणजन्यदुरितध्वंसप्रयोजकत्वस्य अप्रसक्तेः । **भूतिः.** पृ. २.

⧗ **कूपमण्डूकन्यायः** । यत्र महाजनप्रणीतसत्यपदार्थं ज्ञानलवदुर्विदग्धोऽल्पज्ञो न संमनुते तत्रास्य प्रवृत्तिः । यथा , समुद्रमण्डूकः कथंचित्तत्तीरसमीपस्थकूपे प्रविष्टस्तत्र दृष्ट्वा कूपमण्डूका अदृष्टिगोचरोऽयमिति ज्ञात्वा पप्रच्छुः कुत आगतो भवानिति , समुद्रादिति तत्प्रतिवचनं श्रुत्वा कियान् सः इति पृष्टवन्तो महानिति तेन प्रत्युक्ताः । ततस्तेष्वेकः कूपमण्डूकः स्वजङ्घां प्रसार्य किमेतावानित्युक्तवान् , ‘ नहि महान् सः ’ इति प्रतिवचनमाकर्ण्य द्वितीयजङ्घां प्रसार्य तर्ह्येतावानिति भविष्यतीत्युवाच । पुनरपि तेन निराकृतस्तृतीयजङ्घां प्रसार्य तुरीयां जङ्घां च प्रसार्योत्प्लुत्य च क्रमेण प्रादेशवितस्तिपरिमितं देशं किमेतावानिति पृच्छंस्तेन च निरस्तश्चेत्तर्हि कूपसदृशो भविष्यतीत्युवाच । भूयोऽपि भ्रातर्नास्ति अयं कूपस्वल्पः, अन्यः सरितां पतिरनवगाह्यगम्भीरोऽलक्ष्यपारावारोऽतीव महत्तम इति तेन प्रत्युक्तस्तर्हि नास्त्येव सः, यः कूपादपि महान् त्वं तु मिथ्यैव प्रलपसीति तं निराचक्रे । स च तं स्वमनसि हसितवानिति गाथा लोके गीयते । तथा च यथा समुद्रमज्ञात्वा निराकुर्वन् कूपमण्डूकः उपहास्यतां प्राप्तस्तथा अन्यमताऽनभिज्ञस्तद्दूषणपरः उपहासास्पदीभवतीति न्यायसङ्गतिरिति । **साहस्री. ७४.**

⧗ **कूपयन्त्रघटिकान्यायः** । अयं मृच्छकटिकाख्यप्रकरणदशमाङ्कैकोनषष्टितमश्लोकेन व्याख्यातः । तथाहि – ‘ कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् । अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधयन्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥’ इति । अस्यार्थः प्रकारान्तरेणापि , गम्भीरकूपादपि यन्त्रेण घटिका उत्तोल्यते , एवमतिदुर्बोधत्वेन गम्भीरादपि शास्त्रादुपदेशादिरूपयन्त्रेण सारोद्धरणं भवतीति । **साहस्री. ६६४.**

⧗ **कूर्माङ्गन्यायः** । यथा कूर्मदेहे तदिच्छया तदङ्गानि निःसरन्ति लीयन्ते च तत्रैव , एवं यस्येच्छावशात् स्वोपाध्यज्ञानकार्यजातस्य स्वोपाधौ संकोचविकासकारित्वम् एवं विवक्षाविषयेऽस्य प्रवृत्तिः । ‘ यथा संहरते चायं कूर्मोऽङ्गानीव सर्वशः’ इति भगवद्गीता । **साहस्री. १७७.**



* **कूलं** पिपतिषतीत्येवमादौ पातकालप्रत्यासत्तेः इच्छामुपचर्य एवं व्यपदेशो भवति । **वा.** ३।१।७।१३ पृ. ७००.

* **कृञ्** ‘ गन्धन–अवक्षेपण–सेवन–साहसिक्य–प्रतियत्न–प्रकथन–उपयोगेषु कृञः ’ ( पा० १।३।३२ ) उत्पूर्वस्य करोतेः अपकारप्रयुक्तहिंसात्मकसूचनाख्ये गन्धने, अवपूर्वस्य च भर्त्सनाख्ये अवक्षेपणे , प्रपूर्वस्य च अनुवृत्त्याख्यसेवने, प्रकर्षकथनाख्यप्रकथने, धर्माद्यर्थविनियोगाख्योपयोगे उपपूर्वस्य, साहसिककर्माख्यसाहसिक्ये , उपपूर्वस्य सतः गुणान्तराधानाख्ये प्रतियत्ने कृञ्–धातोः प्रयोगः । **सु.** पृ. ५५६–५७ । एष्वर्थेषु कृञः आत्मनेपदं भवति । अत्र **कौमुदी**– गन्धनं हिंसा, उत्कुरुते सूचयतीत्यर्थः । सूचनं हि प्राणवियोगानुकूलत्वात् हिंसैव । अवक्षेपणं भर्त्सनम्, श्येनो वर्तिकामुदाकुरुते भर्त्सयतीत्यर्थः । हरिमुपकुरुते सेवते । परदारान् प्रकुरुते तेषु सहसा प्रवर्तते । एधः ( इन्धनम् ) दकस्य ( जलस्य ) उपस्कुरुते गुणमाधत्ते । गाथाः प्रकुरुते प्रकथयति । शतं प्रकुरुते धर्मार्थं विनियुङ्क्ते । एषु किम् ? कटं करोति । इति । **के.** * **कृञः** यत्नाभिधायकत्वं ‘ किं करोति ’ इति प्रश्ने पचति इत्युत्तरात् । इति नैयायिकाः । **मणि.** पृ. १०६.

⧗ **कृतदेशात्तु पूर्वेषां स देशः स्यात् तेन प्रत्यक्षसंयोगान्न्यायमात्रमितरत् । ५।२।१०।२१ ॥**

राजसूयावयवभूतात् अभिषेचनीयात् सोमयागादूर्ध्वं दशपेयात् प्राक् विदेवनादयः अभिषेकान्ताः पदार्थाः पठ्यन्ते । अभिषेकश्च ‘माहेन्द्रस्य स्तोत्रं प्रति अभिषिच्यते ’ इति वाक्येन अभिषेचनीयसोमगतमाहेन्द्रस्तोत्रकाले अपकृष्टः । स च इतरानपकर्षति न वा इति विचारे वैकृतानामन्ते निवेशः इति विदेवनादयः अभिषेकेण सह नापकृष्यन्ते इति उत्सूत्रं पूर्वपक्षं तुशब्देन निरस्य सिद्धान्तमाह । कृतदेशात् इति भावप्रधानो निर्देशः । कृतो देशो यस्य अभिषेकस्य स कृतदेशः कृतदेशत्वात् । अभिषेकस्य माहेन्द्रस्तोत्ररूपदेशस्य कृतत्वात् क्लृप्तत्वात् ततः पूर्वेषां विदेवनादीनां स एव देशः स्यात् । तेन प्रत्यक्षसंयोगात् अभिषेकेण साक्षात् संयोगात् अभिषेकात् पूर्वं विदेवनादीनां प्रत्यक्षपाठात् । तथा च माहेन्द्रस्तोत्रकाले आदौ विदेवनादयः ततोऽभिषेकः इति तदन्तस्यापकर्षः । इतरत् अन्ते निवेशनं तु न्यायमात्रम् ‘ अन्ते तु बादरायणः’ इति न्यायेन प्राप्तम् । तत्तु पाठक्रमात् बाध्यते । तस्मात् अभिषेकान्तस्यापकर्षः । **के.**

* कृतदेशात्तु पूर्वेषां० ( ५।२।१०।२१ ) इत्यत्र अप्राकृतानामपि विदेवनादीनां अपकर्षवर्णनेन । **वा.** ३।६।७।२२ पृ. १०४८.

⧗ **कृतप्रणाशाकृताभ्यागमप्रसङ्गः इति न्यायः ।** कृतस्य प्रणाशः कृतप्रणाश इति । अकृतयोः पुण्यपापयोरकस्मात् फलदातृत्वेनाभ्यागमः स्वीकार इति यावत् अकृताभ्यागमः तयोः प्रसङ्गः, अन्योद्देशेन प्रवृत्तौ अन्यस्यापि सिद्धिरित्यर्थः । **साहस्री. ७०२.**

⧗ **कृतमप्यकृतं भवेत् इति न्यायः** । ‘ श्राद्धं श्रद्धाविहीनेन कृतमप्यकृतं भवेत् ।’ स्कन्दपुराणे प्रभासखण्डे वस्त्रापथक्षेत्रमाहात्म्ये १३।४१.

* अग्निहोत्रं प्रदोषादिकालादन्येषु कालेषु अविहितत्वात् **कृतमपि अकृतं स्यात्** । **भा.** ६।२।७।२५.

⧗ **कृते कार्ये किं मुहूर्तप्रश्नेनेति न्यायः ।** **साहस्री.** ३१० । कार्यनिर्वर्तनोत्तरं तत्कार्यमुहूर्तप्रश्नो निरर्थकः इत्यर्थः । ‘ वरातीमागून घोडे ’ इति भाषान्यायः । **के.**

* **कृते युगे** ‘अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः । चतुष्पात् सकलो धर्मः सत्यं चैव कृते युगे ॥ ’ इति स्मरणम् । **सु.** पृ. ६०.

* **कृताकृतम्** आज्यहोमेषु परिस्तरणम् ( आश्व-गृह्यसूत्रम् १।३।४. ) इयं संस्कार्यतः व्यवस्था । **बाळ.** पृ. ३५.

⧗ **कृताकृतप्रसङ्गी यो विधिः स नित्यः इति न्यायः** । कार्ये कृतेऽपि यो भवति अकृतेऽपि च भवति स विधिः नित्यः स्यात् इति । **संग्रहः.**

⧗ **कृतात्ययेऽनुशयवानिति न्यायः** ( ३।१।२।८ ब्र. सू. ) कृतस्य कर्मणः अत्ययो नाशः कृतात्ययः तस्मिन् अनुशयवान् भवति । ‘ भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः ’ इति मेदिनी । वेदविहितकर्मानुष्ठानं च,

तद्धानिरित्यर्थः। कर्मफलसंक्षये शेषकर्मानुभूत्यै निवर्तते इति भावः। **साहस्री.** ५४०

* **कृतार्थयोः** संबन्धे कालार्थत्वं स्थास्यति ( ४।२ प्रतिपत्तिपेटिकायाम् )। **वा.** ३।२।५।११.

* **कृतार्थद्रव्यशेषः** उपयोगापेक्षः प्रतिपत्तिमर्हति। **वि.** ३।५।१. * **कृतार्थसंयोगस्य** कालविधिहेतुत्वम् 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' 'प्रहृत्य परिधीन् हारियोजनं जुहोति' 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यादौ स्थाप्यते। **सु.** पृ. १०९९.

* **कृतिः** अनुष्टुप्। पादेषु अक्षराणि १२।१२।८ उदा० मा कस्मै धात ( ऋसं. १।१२०।८ )। **के.**

* कृतिः चेतनप्रयत्नरूपा इच्छापूर्वकत्वात् तद्गोचरमेव गोचरयितुमर्हति। इच्छा हि सुखदुःखपरिहारगोचरैव। **न्या. माला.** एकादशाध्यायः.

* **कृतिमुख्यविशेष्यकत्वमेव** भट्टसंमतम्। **रहस्य.** पृ. १७. * **कृतिविषयता** त्रिविधा साध्यता, उपादानता, उद्देश्यता चेति। तद्यथा स्वर्गमुद्दिश्य यागं साधयितुं हविरादिकमुपादत्ते इत्यादिप्रतीत्या यागे साध्यताऽऽख्यविषयता। स्वर्गे उद्देश्यताऽऽख्या, हविरादौ उपादानताऽऽख्या। **मुरारि.** पृ. ११५३. * **कृतिव्याप्यमुपादेयत्वम्।** तदव्याप्यत्वं च अनुपादेयत्वम्। **बाल.** पृ. ९८. * **कृतिसाध्यत्वापरपर्यायं** विषयस्य प्रयोज्यमपि इष्टसाधनत्वमिव प्रवर्तनारूपो विधिः आक्षिपति। **भाट्ट.** ४।१।१.

* '**कृत्तद्धितसमासाश्च**' इति प्रातिपदिकम् अभिधात्री श्रुतिः। ( कृदन्तं तद्धितान्तं समासश्च प्रातिपदिकसंज्ञकं भवति इति पाणिनिसूत्रार्थः )। **बाल.** पृ. ४१. * '**कृत्तद्धितसमासः** संबन्धाभिधानं भावप्रत्ययेन' इति स्मृतेः संबन्धवाची वाच्यत्वशब्दः। **सु.** पृ. ३६४. * **कृत्प्रत्ययानाम्** आश्रयवाचिनां कृतौ अन्वयः। **मणि.** पृ. १६२. * कृत्प्रत्ययानां कारकाख्यशक्तिवाचित्वेऽपि द्रव्योपसर्जनीभूतशक्तिवाचित्वेन शक्तौ तात्पर्याख्यवृत्त्यभावात्। **सु.** पृ. १४४०. * **कृत्प्रत्ययावृत्तिलक्षणो** वाक्यभेदः। **बाल.** पृ. १८१.

* **कृत्यः** प्रतिषेधे श्रौतो यथा 'तस्माद् बर्हिषि रजतं न देयम्'। **बाल.** पृ. ४०, * कृत्यः विधौ श्रौतो यथा 'स्वाध्यायोऽध्येतव्यः'। पृ. ३९, * कृत्यः विधौ स्मार्तो यथा 'चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये।' पृ. ४०. * **कृत्यानां** प्रैषवाचित्वात् सत्यपि भावनाऽभिधाने तावत् स्वार्थपर्यवसानं नास्ति, यावत् अंशत्रयपरिपूर्णा भावना न लब्धा। **वा.** २।१।१।११ पृ. ३८२. * **कृत्येषु** तावत् भोक्तव्यं यष्टव्यम् इति किञ्चिन्न्यूना आख्यातात् भावना गम्यते। तत्रापि कर्मोत्पन्नेषु द्रव्यप्राधान्यात् 'ब्राह्मणो न हन्तव्यः' इति भावोत्पन्नेभ्यो न्यूनतरा भावना गम्यते। २।१।१।११ पृ. ३७९, * **कृत्यप्रत्ययानां** विनाऽपि स्मरणेन न विधायकत्वम्। २।१।१।११ पृ. ३८२. * **कृत्यार्थः** प्रतिषेधः श्रौतो यथा–तवै –'तस्माद् ब्राह्मणेन न म्लेच्छितवै'। **केन**–'नावगाहे' नावगाहितव्यम् इत्यर्थः इति काशिकायाम्। केन्यत्वनौ मृग्यौ। **बाल.** पृ. ४०, * कृत्यार्थः विधिः श्रौतो यथा– तवै– 'अन्वेतवै' अन्वेतव्यम् इत्यर्थः। **केन**– 'अवगाहे' अवगाहितव्यम् इत्यर्थः। **केन्यः**– शुश्रूषेण्यः शुश्रूषितव्यमित्यर्थः। **त्वन्** 'कर्त्वं हविः' कर्तव्यमित्यर्थः इ०। पृ. ४०.

ﷺ **कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः इति न्यायः।** तद्यथा लोके गोपालकमानय, कटजकमानयेति। यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः इति। अयं संप्रत्ययः अर्थात् प्रकरणाद्वा भवतीति। यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्य अध्यापनासंभवात् कृतसंज्ञिन एव ग्रहणमिति। व्याकरणशास्त्रे तु 'उभयगतिरिह भवति' इत्युक्तम् 'बहुगणवतुडति संख्या' ( पा० १।१।२३ ) इति सूत्रमहाभाष्यकैयटयोरिति। **साहस्री.** ६५.

* ननु संख्याग्रहणे बह्वादीनामेव ( बहुगणवतुडतीनामेव ) ग्रहणं स्यात् प्रकरणस्य अभिधानियामकत्वसिद्धात् '**कृत्रिमाकृत्रिमयोः०**' इति **न्यायात्**। अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृता इति ज्ञानरूपं प्रकरणं न तु लोकप्रसिद्धद्व्यादीनाम्। **भूतिः.** पृ. ३५, **मेधातिथिः** ३।१५७. * **कृत्रिमाकृत्रिमन्यायबीजम्** अभिधानियामकत्वम्। अभिधानियामकत्वं च तात्पर्यसंकोचकत्वम्, अर्थविशेषे तात्पर्यग्राहकत्वम्। यत्तु संज्ञाशास्त्राणां ( वृद्धिरादैच् इत्यादीनाम् ) मच्छास्त्रे अनेन शब्देन एते एव इति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजम् इति, तन्न तेषाम् अगृहीतशक्तिग्राहकत्वेन विधित्वे, संभवति नियमत्वायोगात्। अत एव आम्रेडितशब्देन कृत्रिमस्यैव ग्रहणम्, न तु द्विस्त्रिर्बुद्धस्य। **भूतिः.** पृ. ३५–३६.



* **कृत्वसुच्** प्रत्ययः 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' ( पा० ५।४।१७ ) इति विहितः विनियोक्त्री श्रुतिः इति भट्टसोमेश्वरमते। पार्थसारथिमते तु तत्र वाक्यीयो विनियोगः, न श्रौतः। **बाल.** पृ. ४५, ४६. * कृत्वसुच्प्रत्ययार्थौ भावनाऽन्वयी। **मणि.** पृ. ११३.

* **कृत्वाचिन्तायां** प्रयोजनं न वक्तव्यम्। **भा.** ६।८। १०।४३.

ﷺ **कृत्वाचिन्तान्यायः।** ( यथा कृत्वाचिन्ता तथा तया रीत्या इत्यर्थः)। यत् पुनः परावृत्य भाष्यकारेणोक्तं ( पतञ्जलिना व्याकरणे ) 'अथवा पुनरस्तु ज्ञाने धर्मः' इति अभ्युपेत्यवादमात्रं तत् पूर्वोक्तदोषपरिहारसामर्थ्यप्रदर्शनार्थं कृत्वाचिन्तान्यायेनोक्तम्। **वा.** १।३।८।२७ पृ. २८७.

* **कृत्वाशब्दश्च** नैव विधौ स्मर्यते। **वा.** २।२। १२।२७ पृ. ५५८.

* यत्र संनिधौ आम्नानं निराकाङ्क्षीकरणक्षमम्, तत्र तेनैव निराकाङ्क्षत्वात् भवति **कृत्स्नविधानता।** **टुप्.** ८।१।३।५. * **कृत्स्नैकदेशभेदे** ( कपालस्य ) प्रायश्चित्तानुष्ठानम्। **भाट्ट.** ६।४।४.

ﷺ **कृत्स्नोपदेशादुभयत्र सर्ववचनम्।** ३।२। ६।१६ ॥

'सूक्तवाकेन प्रस्तरं प्रहरति' इति दर्शपूर्णमासयोः श्रूयते। स किं सर्वः सूक्तवाकः पौर्णमास्यां प्रयोक्तव्यः सर्वं एव च अमावास्यायाम्, उत यथासामर्थ्यं निष्कृष्य यथायथं प्रयोग इति विचारे पूर्वपक्षमाह। उभयत्र पौर्णमास्याम् अमावास्यायां च सर्ववचनं सर्वस्य सूक्तवाकस्य वचनं कर्तव्यम्। कुतः ? कृत्स्नोपदेशात्। दर्शपूर्णमासयोः एकमेव प्रकरणम्। तत्र च कृत्स्नस्यैव सूक्तवाकमन्त्रस्य उपदेशः कृतः।

**यथार्थं वा, शेषभूतसंस्कारात्।** १७ ॥

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। यथार्थम् अर्थमनतिक्रम्य सूक्तवाकः उभयत्र प्रयोक्तव्यः। ये पौर्णमासीदेवतावाचिनः शब्दाः, ते पौर्णमास्यां प्रयोक्तव्याः नामावास्यायाम्, ये अमावास्यादेवतावाचिनः, ते अमावास्यायां न पौर्णमास्याम्। पूर्वसूत्रात् समासैकदेशभूतं वचनशब्दमनुकृष्य यथार्थं वचनं कर्तव्यम् इति योजना। शेषभूतसंस्कारात् यागशेषभूतानां देवतानां संस्कारात् संस्कारार्थत्वात् सूक्तवाकस्य। तस्मात् विभज्य प्रयोक्तव्यः।

**वचनादिति चेत्।** १८ ॥

ननु 'सूक्तवाकेन प्रहरति' इति वचनात् सर्व एव सूक्तवाक एको मन्त्रः, तत्र विभागो न संभवति। तस्मादुभयत्र सर्वो वक्तव्यः इति चेत् पूर्वपक्षी ब्रूयात्।

**प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः।** १९ ॥

सिद्धान्ती आह। प्रकरणाविभागात् पौर्णमास्या अमावास्यायाश्च एकमेव महाप्रकरणम्। तस्य प्रकरणस्य विभागो नास्ति। तेन उभयोर्मिलित्वा यावान् सूक्तवाकमन्त्रः स सर्वोऽपि एकत्र पठितः। तस्मात् उभे प्रति दर्शपूर्णमासकर्मणी प्रति, कर्मद्वयमभिप्रेत्य, कृत्स्नशब्दः कृत्स्नसूक्तवाकपाठः। विनियोगस्तु देवताऽनुसारेण विभज्यैव कर्तव्यः। तस्मात् पौर्णमास्याम् अमावास्यायां च सूक्तवाकमन्त्रः विभज्यैव विनियोक्तव्यः।

कौस्तुभे तु –प्रकरणस्य प्रकृष्टकरणस्य अवयवशक्तिरूपस्य अविभागात् प्रत्यभिज्ञानात् रूढिकल्पनाऽनुपपत्तेः उभे प्रति अवयवप्रयोगेऽपि कृत्स्नसूक्तवाकशब्दार्थो नानुपपन्नः– इति सूत्रं व्याख्यातम्।

कुतूहले तु प्रकरणं च अविभागश्चेति समाहारद्वंद्वः। प्रकरणं प्रक्रिया अवयवव्युत्पादनम्। सु उक्तं आज्यभागादिषु निर्दिष्टम् अग्न्यादिकं वक्ति इति व्युत्पत्त्या सूक्तवाकशब्दः इष्टदेवताप्रकाशकमन्त्रवचनः। अतः पौर्णमासिकदार्शिके उभे प्रहरणे प्रति यथादेवतं विभज्य प्रयुक्ते निगदे सूक्तवाकशब्दः कृत्स्नः अविकलः। यत्र

यावत्यो देवता इष्टाः तत्र तावद्देवतापदप्रयोगस्य सत्त्वात् । अनिष्टदेवतानामपि प्रयोगे दुरुक्तवाकत्वं स्यात् । अविभागात् उभयदेवतापदसंकीर्णे कृत्स्ननिगदे सूक्तवाकशब्दस्य अध्येतृप्रसिद्धेः अध्ययनकाले विभागानाकलनेन अन्यथासिद्धत्वाच्च इति व्याख्यातम् । के.

* कृत्स्नोपदेशादुभयत्र सर्ववचनम् (३।२।६।१६) इत्यधिकरणे सूक्तवाकनिगदे अग्नीषोमादिदेवतापदं पौर्णमास्याममावास्यायां च यथालिङ्गं विनिष्कृष्य प्रयोक्तव्यम् इति स्थितम् । कु. ३।३।९।१३.

* **कृदन्तेन** हि कारकविशिष्टं द्रव्यमेवोच्यते, न विभक्तिवत् निष्कृष्टा शक्तिः । **वा.** १।४।१।२ **पृ.** ३२४, * **कृदन्तानां** शक्त्युपसर्जनद्रव्यवचनत्वम् । १।४।१।२ पृ. ३२४, * **कृदन्तेष्वपि** भावना अस्त्येव किञ्चिदपकृष्यमाणरूपा । २।१।१।१ पृ. ३७९.

**कृदभिहितो भावो द्रव्यवत् प्रकाशते इति न्यायः** । अस्य न्यायस्य तु 'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इति गौतमीयसूत्रान्तर्गतमधिगम इति पदमुदाहरणं बोध्यमिति संक्षेपः । **साहस्री.** २२७.

* **कृपा** न खलु रागपक्षे वर्तते । ननु इयं परदुःखप्रहाणेच्छा इति राग एव, मैवम् । नहीच्छामात्रं रागः । अपि तु चित्तमलम् आत्मनो दर्शनावरणम् अभूतगुणाभिनन्दनं रागमाचक्षते । **कणिका.** पृ. ११३.

* **कृमिकीटाद्यवान्तरभेदानां** विशेषवाचिशब्दरहितानामपि अनेकशो दर्शनात् सामान्यतोऽभिधानेनापि च व्यवहारसिद्धेः विशेषशब्दाभावेऽपि अवान्तरजात्यपह्नवो न युक्तः । **सु.** पृ. १४१०.

* '**कृषिषु** स्यामकृषे' इति ज्योतिष्टोमे कण्डूयनमन्त्रः । यदा अनेकस्मिन्नङ्गे युगपत् कण्डूरुत्पद्यते, तदाऽपि कण्डूयनमन्त्रस्य सकृदेव प्रयोगः, न तु प्रत्यङ्गं मन्त्रावृत्तिः । **भा.** ११।४।१६ । ५१-५२. * **कृषिकर्माणि** । 'रोहिण्यां कृषिकर्माणि कारयेत्' 'पुरस्तात् कृषिकर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत्' । **सु.** पृ. १७८३.

**कृषिन्यायः** । काम्यानां कर्मणां कामनानुरोधेन पुनःपुनरभ्यासः ॥

**कर्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः । ११।१।४।२० ॥**

**भाष्यम्**— काम्येषु कर्मसु चिन्ता किं काम्यं कर्म सकृदेव प्रयोक्तव्यम्, अथवा फलस्य भूयस्त्वमिच्छता भूयोऽभ्यसितव्यमिति । किं प्राप्तम् ? काम्ये कर्मणि प्रतिप्रयोगं फलभेदः, आरम्भभाव्यत्वात् । कर्मप्रयोगेण फलं भाव्यते । कथं ज्ञायते ? प्राक् कृतात् कर्मणः फलं नास्ति । यदि भवेत् कर्मानर्थक्यं स्यात् । कर्मोत्तरकाले चास्तीति श्रुतितोऽवगम्यते । यच्च प्राक्कर्मणो नास्ति कर्मोत्तरकालं च भवति, तत्तेन कर्मणा भाव्यते । कृषिवत् यथा कर्षणेन धान्यम् । असच्चेत् भाव्यते पुनःपुनरपि । धान्यवदेनद्भविष्यति ।

**अधिकारश्च सर्वेषाम्, कार्यत्वादुपपद्यते विशेषः । २१ ॥**

**भाष्यम्**— एवं च कृत्वा सर्वेषां कर्मणां पुनःपुनः क्रियमाणानामधिकारो भविष्यति । तत्रेमानि दर्शनान्युपपत्स्यन्ते । 'तेषां ये प्रथमं यजेरंस्तेषां गौरतिरात्रः ये द्वितीयं तेषामायुः' इति । प्रथमं यजेरन्, द्वितीयं यजेरन्, इत्येतदभ्यासे सति भवति । तस्माद्यावदिच्छमभ्यासः ।

**सकृत्तु स्यात्, कृतार्थत्वादङ्गवत् । २२ ॥**

**भाष्यम्**— सकृदेव तु काम्यं कर्म प्रयोक्तव्यम् । कुतः ? कृतार्थत्वात् । सकृत्कृतेन कृतश्चोदनाऽर्थः । न च कृते पुनः कर्तव्यमस्ति । कः पुनश्चोदनाऽर्थः ? यागस्य कर्तुः फलं होमस्य कर्तुः फलमिति । कथं कृत्वा तदुच्यते ? इह यजेन जुहुयादिति धातुना क्रियोच्यते, प्रत्ययेन कर्ता । तयोः कर्ता प्रधानभूतः, उपसर्जनभूता क्रिया । 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' । अनुप्रयोगश्च कर्तृप्राधान्ये एव भवति 'पचति देवदत्तः' इति । तेन होतुर्यष्टुश्च फलमुच्यते । सकृद्धुतेन सकृदिष्टेन चासौ होता यष्टा च जातः । तत्र द्वितीयादिप्रयोगः अनर्थकः स्यात्, कृतार्थत्वात् । अङ्गवत् । तद्यथा प्रधानस्य साद्गुण्योपपादनाय अङ्गानि क्रियन्ते । सकृत्कृतैश्च तदुपपादितमिति नाभ्यस्यन्ते, तद्वत् ।



**शब्दार्थश्च तथा लोके । २३ ॥**

**भाष्यम्**— लोकेऽपि तथैव शब्दार्थो भवति । 'काष्ठान्याहर' इत्युक्तः सकृदाहरति, न पुनःपुनः ।

**अपिवा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद्, विधिषु वचनानि स्युः । २४ ॥**

**भाष्यम्**— अपिवा नैवं स्यात्, अस्मिन् अर्थिनः कर्मणश्च संप्रयोगे सकृदेव अर्थी कर्मप्रयोगे वर्तेतेति । कथं तर्हि ? यथाकामी प्रतीयेत । सकृद्वा बहुकृत्वो वा । फलभूमार्थी बहुकृत्वः, संतुष्टः सकृत् । कुतः ? अश्रुतित्वात् । नात्र यष्टुर्होतुश्च फलं श्रूयते । यत्तु 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति, तत् कर्मनिमित्तेषु नामपदेषु पाचको लावक इत्येवमादिषु । आख्याते तु न कर्ता, न क्रिया प्रधानतः । किं तर्हि ? भावप्रधानमाख्यातं भावनां कस्यापि ब्रूते, भावप्रयुक्तस्य साधनग्रामस्य अपेक्षितत्वात् । यजेत, केन किमर्थं कथमिति । कर्तृप्राधान्ये कार्याभावात् न साधनाकाङ्क्षया भवितव्यम् । नहि भवति, पाचकः केन किमर्थं कथमिति । भावना च फलस्य उच्यते न क्रियायाः, तृतीयानिर्देशात् 'उद्भिदा यजेत, बलभिदा यजेत' इति । भाव्यत्वे हि द्वितीयया निरदेक्ष्यत । स्वर्गस्तु ईप्सितः कामसंयोगात् स्वर्गकामः इति । तदेतत् एवमापद्यते 'स्वर्गकामो यागेन स्वर्गं भावयेत्' इति । यच्च भाव्यते तत् व्यक्तम् असत् । सतो हि भावः (उत्पादनम्) नोपपद्यते । असत् चेत् कर्मणा भाव्यते, पुनःपुनरपि भावयिष्यते । कृषिवत् । तस्मात् फलार्थिना काम्यं यावदिच्छं अभ्यसितव्यमिति । यदि च नियोगतः सकृदेव कर्तव्यं भवेत्, ततः 'तेषां ये प्रथमं यजेरन्' इत्येवमादिषु गवादिविधिषु वचनानि एतानि कल्प्येरन् 'न द्वितीयं यजेरन्' इति । तथाच वाक्यानि भिद्येरन् । 'ये च द्वितीयं यजेरन् तेषां गौः अतिरात्रः' इति ।

**ऐकशब्द्यात् तथाऽङ्गेषु । २५ ॥**

**भाष्यम्**— यत्तु अङ्गवत् इति, युक्तं यत् अङ्गानां सकृत् प्रयोगः, ऐकशब्द्यात् । एकस्तत्र अङ्गानां प्रधानानां च उपदेशकः शब्दः सर्वाङ्गानि अपेक्षया गृह्णाति इत्युक्तम् । सा चापेक्षा सकृदेव एषु अङ्गेषु भवति कृतार्था । तस्मात् तत्र पुनःपुनः क्रियायाः हेतुर्नास्ति । इह तु असतः फलस्य कर्म उत्पादकम् । तस्य प्रतिप्रयोगं अन्यस्यान्यस्य उत्पत्तिः अविरुद्धा इत्येवमपदिष्टो हेतुः । तस्मात् विषमत्वमङ्गैः ।

**लोके कर्मार्थलक्षणम् । २६ ॥**

**भाष्यम्**— यच्च लोकवत् इति । लोके कर्म अर्थप्रधानम् । कार्यवशात् सकृदपि उक्तः असकृत् आहरति, असकृदपि उक्तः सकृदाहरति, नाहरति वा । अथेह शब्दलक्षणे कर्मणि यथाशब्दार्थं प्रवृत्तिः । तस्मात् लोकवत् इति अदृष्टान्तः ।

**शा**— काम्यानां कर्मणामनर्थकः पुनःप्रयोगः, सकृदेव तु प्रयोगः । इति प्राप्ते, ब्रूमः । '**आत्मन्यतिशयः कश्चित् कृते कर्मणि नैव चेत् । प्रागवस्थासमानत्वादात्मनो न भवेत् फलम् ॥ आत्मस्वरूपहेतुत्वे ह्यकर्तुरपि तद् भवेत् । तस्मादतिशयः कश्चित् कर्मभ्यो जायते नरे ॥ स च कार्यविरोधित्वात् स्वफलाप्तेर्विनश्यति । फलान्तरार्थं कर्तव्यं तस्मादतिशयान्तरम् ॥ स एवातिशयोऽस्माभिरपूर्वमिति गीयते । तस्माद् भूयः प्रयोक्तव्यं भूयःफलमभीप्सता ॥**' कर्मभ्यः फलसिद्धिप्रकारे विकल्पसमुच्चयरूपे चिन्तिते बहुफलसिद्धिप्रकारः सकृदसकृद्रूपश्चिन्त्यते इति **संगतिः** । ३.

**सोम— सूत्रार्थस्तु**– काम्यकर्मणि प्रतिप्रयोगं कृषिवत् फलानि स्युः, फलस्य कर्मप्रयोगसाध्यत्वात् इति ।

**वि**— 'काम्यकर्मप्रयोगः किं सकृदेवासकृच्च वा ।, फलसिद्धेरादिमो, ऽन्त्यो भूयः स्वेच्छाऽनुसारतः ॥'

**भाट्ट**— काम्यानां कर्मणां भूयोभूयः फलकामनायां पुनःपुनः प्रवृत्तिर्न वेति **चिन्तायाम्**, सकृत्करणेऽपि सामग्रीसत्त्वेन पुनःपुनः कामनायां पुनःपुनःफलोत्पत्तिसंभवान्नावृत्तिः । तथाहि, यदा तावत् फलोत्पत्तेः पूर्वमेव फलान्तरापेक्षा, तदा तत्फलव्यक्त्युत्पादकापूर्वस्यैव सत्त्वात् तेनैव फलान्तरोत्पत्त्युपपत्तिः । न चैकमपूर्वमेकामेव फलव्यक्तिमुत्पादयति इत्यत्र नियामकमस्ति, प्रतिबन्धकसत्त्वेन फलधाराया आपादयितुमशक्यत्वात् । प्रतिबन्धकल्पनस्य चापूर्वोत्पत्तिद्वितीयक्षणे फलोत्पत्तिप्रसङ्गेन तवापि आवश्य-

कत्वात् । न च सकृत्करणजन्यापूर्वव्यक्तेः आद्यफलव्यक्त्युत्पत्त्या नाशात् न फलान्तरोत्पत्त्युपपत्तिः, 'क्षीयन्ते चास्य कर्माणि' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इत्यादिश्रुतिस्मृतिपर्यालोचनया तत्त्वज्ञानस्यैव अपूर्वनाशकत्वेन फलस्य तन्नाशकत्वे प्रमाणाभावात् । फलैकनाश्यत्वे पशुपुरोडाशोपकारजननेनैव नाशात्, पशूपकारजनकत्वानुपपत्त्या प्रसङ्गसिद्ध्यनापत्तेश्च । अतश्च फलोत्पत्त्यनन्तरमपि अपूर्वस्य सत्त्वात् फलान्तरकामनायां सत्यां तेनैवापूर्वेण फलान्तरोत्पत्तौ न किञ्चिद्बाधकम् । यदि तु अपूर्वकल्पनायां प्रमाणाभावात् 'कृतयागादात्मन एव फलम्' इति मूलोक्तः पक्ष आश्रीयते, तदा सुतराम् । इति एकस्मिन् जन्मनि सकृदेव काम्यकरणम् । इति प्राप्ते, न तावत् कृतयागादात्मनः फलम्, यागेन आत्मनि अतिशयानाधाने यागकरणे इव यागकरणात् प्रागपि आत्मसत्त्वेन फलोत्पत्त्यापत्तेः । यागध्वंसविशिष्टस्य फलजनकत्वाङ्गीकारे ध्वंसस्यैव तदापत्तौ अपूर्वाधिकरणोक्तदूषणप्रसङ्गात् । नापि अपूर्वस्य ज्ञानैकनाश्यत्वम्, तथात्वे प्रयाजाद्यपूर्वाणामपि सत्त्वेन विकृतौ तत्करणानापत्त्या आज्यभागादेः 'न तौ पशौ करोति' इत्यादिनिषेधानुपपत्तेः, ब्रह्महत्याजन्यपापापूर्वस्य नरकभोगेऽपि सत्त्वेन पुनर्नरकान्तरप्रसङ्गाच्च । न च तत्र कामनाऽभावात् पुनरनुत्पत्तिः, फलकामनायाः प्रवृत्तिं प्रति कारणत्वेऽपि फलं प्रति अकारणत्वात् । अतोऽवश्यं यत्र समवायादिसंबन्धेन फलम्, तत्र अभावीयविशेषणतासंबन्धेन अपूर्वनाशः इत्येवं कार्यकारणभावः कल्पनीयः । अत एव जीवन्मुक्तिशास्त्रमपि उपपद्यते । अत्र च यदुद्देशेन तादृशापूर्वसाधनीभूतक्रियाऽनुष्ठानं तस्यैव फलत्वम्, न तु आनुषङ्गिकजन्यस्यापि, स्वर्गारम्भकशरीरोत्पत्त्या अपूर्वनाशानङ्गीकारात् । अतश्च पशुपुरोडाशोपकारोत्पत्तावपि तस्य फलत्वाभावान्न तेन प्रयाजाद्यपूर्वनाशः । अतश्चैकेन अपूर्वेण एकस्यैव फलस्योत्पत्तेः फलान्तरार्थे युक्तमेव पुनःपुनः काम्यकरणम् । अत एव 'तेषां ये प्रथमं यजेरन् तेषां गौरतिरात्रो, ये द्वितीयं तेषामायुः' इति लिङ्गमप्युपपद्यते । ३.

**मण्डन**— 'काम्यं यथेच्छं पुनरेव कुर्यात् ।'

**शंकर**-- 'काम्याभ्यासः प्रतिफलम् ।'

* **कृषीवलादिभिर्ऋत्विग्भिश्च** केशश्मश्रुवपनादिसंस्काररहितैरपि क्रिया निष्पाद्यमाना दृश्यते । ततो न तादृशा दृष्टार्थाः, किन्तु अदृष्टार्था एव । वि. ३।७।२. * **कृष्यादितः** कर्मणः व्रीह्यादि फलं दृष्टम् । लाङ्गलादिसाधनत्वं कृषेः । पाटनात्मकत्वं कृषेः । भा. २।२।११।२५.

* **'कृष्णस्य कृतिः'** इयं कर्तरि षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४५. * **'कृष्णानां** व्रीहीणां नैर्ऋतं चरुं निर्वपेत्'। भा. १०।७।१९।६४, * 'कृष्णानां व्रीहीणां सोमारौद्रं चरुं निर्वपेत् अभिचरन्'। १०।७।१९।६४.

* **कृष्णग्रीवयोः** आग्नेययोः प्रथमतृतीययोः प्रदानं भेदेन कर्तव्यम् । आग्नेयपशुद्वयन्यायः । भा. ११।१।११।६८, * कृष्णग्रीवयोः कालभेदेन कर्मभेदात् भेदेनावाहनं कर्तव्यम् । ११।४।७।२७,२९, * कृष्णग्रीवयोः सौम्येन व्यवायात् कालभेदात् 'अग्ने नय सुपथा' इति पुरोऽनुवाक्यायाः 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतासूक्तस्य चावृत्तिः, न तन्त्रम् । ११।४।२०। ५७-५९.

* **कृष्णद्वैपायनस्य** गृहीतनैष्ठिकब्रह्मचर्यस्य विचित्रवीर्यदारेषु अपत्योत्पादनप्रसङ्गः (धर्मव्यतिक्रमः) । वा. १।३।३।७ पृ. २०३.

अत्र **सुधा**-- विचित्रवीर्ये अनपत्ये एव मृते तद्भार्यायामम्बिकायां धृतराष्ट्रम्, अम्बालिकायां पाण्डुम्, अम्बिकाप्रेषितायां दास्यां विदुरं च कृष्णद्वैपायनो जनयामास । विधवानियोगोऽपि ब्रह्मचारिणोऽनुचितः । नियोगविधेरपि एकापत्यविषयत्वात् अनेकोत्पादनानौचित्यम् । पृ. १८५.

**वा**— द्वैपायनस्यापि गुरुनियोगात् 'अपतिः अपत्यलिप्सुः देवरात् गुरुप्रेरितात् ऋतुमतीयात्' इत्येवमागमात् मातृसंबन्धभ्रातृजायापुत्रजननं प्राक्कृतपश्चात्करिष्यमाणतपोबलेन नातिदुष्करम् । अन्योऽपि यस्तादृक्तपोबलो निर्वहेत्, स कुर्यादेव । पृ. २०८ । अत्र सुधा- कथं पराशरपुत्रस्य द्वैपायनस्य शंतनुपुत्रो विचित्रवीर्यो भ्राता इत्याशङ्क्य मातृसंबन्धवचनम् । सत्यवत्यामनूढायां पराशरात् द्वैपायनो जातः, शंतनुना पश्चादूढायां विचित्रवीर्यः । एवमपि 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥' इति नियोगस्य वाग्दत्ताविषयत्वात् अम्बिकाऽम्बालिकयोश्च विचित्रवीर्येण परिणीतत्वात् दास्याश्च भ्रातृजायात्वाभावात् ब्रह्मचारिणश्च मैथुनस्य निषिद्धत्वात् अपरितोषेण प्राक्कृतेत्याद्युक्तम् । पृ. १९१.



* '**कृष्णपक्षादिकं** मासं नाङ्गीकुर्वन्ति के चन । येऽपीच्छन्ति न तेषामपीष्टो विन्ध्यस्य दक्षिणे ॥' (त्रिकाण्डमण्डनः) अयं देशतो व्यवस्थारूपः प्रतिषेधः । बाल. पृ. ३४.

* **कृष्णमृत्तिकाप्रायः** (यो देशः) स आह्नीनैवुकादीनां (देशः) । भा. १।३।७।२२.

* '**कृष्णलं जुहोति**' सौर्ये चरौ प्रयाजेप्रयाजे । वि. ७।४।२, * **कृष्णलानां** अनदनीयानामपि प्रदानं 'सर्वं ब्रह्मणे परिहरति' इति वचनात् कर्तव्यम् । १०।२।३, * कृष्णलानां शेषभक्षणं प्राजापत्ययागे चुश्चुषाकारेण 'चुश्चुषाकारं भक्षयन्ति' इति वचनात् । इक्षुदण्डभक्षणे रसस्वीकारे यः शब्दविशेष उत्पद्यते, स चुश्चुषाकारः । १०।२।३.

※ **कृष्णलेषु मुख्यपाकासंभवात् औष्ण्यरूपः पाकः कार्यः ॥**

**कृष्णलेष्वर्थलोपादपाकः स्यात् ।** १०।२।१।१ ॥

**भाष्यम्**— 'प्राजापत्यं चरुं निर्वपेद् घृते शतकृष्णलमायुष्कामः' इति । तत्र संदेहः किं चोदकेन पाकः प्राप्यते कर्तव्यश्च, उत न प्राप्यते न कर्तव्य इति । किं तावत् प्राप्तम् ? कृष्णलेषु पाको न स्यात् । प्रकृतौ हि पुरोडाशार्थः पाकः । इह अन्तरेणापि पाकम्, कृष्णलानि कृष्णलान्येव भवन्ति । तस्मान्न प्राप्यते । अतो न कर्तव्य इति ।

**स्याद्वा प्रत्यक्षशिष्टत्वात्, प्रदानवत् ।** २ ॥

**भाष्यम्**-- स्याद्वा पाकः । चोदकेन तु न प्राप्यते । प्रत्यक्षं तु अस्य शासनम्, 'घृते श्रपयति' इति । प्राकृतस्य कार्यस्यार्थे न भवति, वचनप्रामाण्यात् अदृष्टार्थो भवति । यथा तेषामेव अनदनीयानां प्रत्यक्षशासनात् प्रदानम् । एवं पाकोऽपीति ।

**सोम**-- **ननु** न विक्लित्तिः पाकशब्दार्थः, किन्तु तद्धेतुभूतमग्निसंयोजनमेव । अन्यथा धातूपात्तस्य विक्लित्तिलक्षणव्यापारस्य तण्डुलनिष्ठत्वेन 'देवदत्तः पचति' इति देवदत्तस्य कर्तृत्वं न स्यात्, तेजःसंयोजनस्य च न कृष्णलेष्वशक्यत्वम् इति **चेन्न** । अग्निसंयोजनमात्रस्य पाकत्वे आकाशादेरपि पाकप्रसङ्गात् विक्लित्तिहेतुभूतस्तेजःसंयोगः इति वक्तव्यम् । तथा चावश्यवक्तव्यत्वात् नागृहीतविशेषणान्यायेन रूपपरावृत्तिलक्षणविक्लित्तिरेव पच्यर्थः । न चैवं देवदत्तस्य कर्तृत्वानुपपत्तिः, नहि धातूपात्तव्यापारवत्त्वेन कर्तृत्वम्, तथा सति 'देवदत्ताय रोचन्ते मोदकाः' इत्यत्र मोदकानां कर्तृत्वं न स्यात् । रुचधातोः इच्छार्थकत्वेन मोदकानां तद्वत्त्वाभावात्, किन्तु धातूपात्तव्यापारं प्रति प्रयोजकीभूतो यः प्रत्ययोक्तो व्यापारः, तद्वत्त्वेन कर्तृत्वम् । तथा च विक्लित्तेः तण्डुलनिष्ठत्वेऽपि तदनुकूलव्यापारस्य देवदत्तसमवायात् युक्तं देवदत्तस्य कर्तृत्वमिति । वस्तुतस्तु न विक्लित्तिः पाकशब्दार्थः, किन्तु अनुष्णस्पर्शवद्द्रव्यस्य उष्णीकरणम् । किमत्र प्रमाणमिति चेत्, विक्लित्त्यसंभवेऽपि कृष्णलेषु पाकप्रतिपादकम् 'कृष्णलं श्रपयति' इति वचनमेव । लक्षणायां व्यत्यये वा मानाभावात् । विक्लित्तिस्तु फलम् । एवं च 'पचेर्हि विक्लित्तिः प्रधानार्थः' इति महाभाष्यमपि फलाभिप्रायम् । यद्वा भवतु एतद्भाष्यानुसारात् विक्लित्तिरेव पच्यर्थः, तथापि न रूपरसाद्यन्यथाभावो विक्लित्तिः, किन्तु उष्णीकरणमेव, कृष्णलेषु पाकवचनादेव ।

**वि**— 'नास्त्यस्ति वा कृष्णलेषु पाकः, श्रौतोऽप्यसंभवी ।, अदृष्टार्थतया स स्यादौष्ण्ये तु सुतरां भवेत् ॥' औष्ण्ये पचधात्वर्थे स्वीकृते तु सुतरां भवेत्, न संशयः ।

**भाट्ट**-- कृष्णलचरौ पाकः कर्तव्यो न वेति चिन्तायाम्, कृष्णलानामेव हविष्ट्वात्, तेषां च श्रपणमन्तरेणापि तत्त्वादर्थलोपादकरणम् । यत्तु 'घृते श्रपयति' इति तत्प्रकरणे वचनम्, तन्न श्रपणविधायकम्, तत्तत्फलानुकूलव्यापारस्यैव पच्याद्यर्थत्वेन स्थापितत्वात्, प्रकृते

च रूपरसादिपरावृत्तिरूपविक्लृत्याख्यस्य फलस्यासंभवेन श्रपणानुपपत्तेः । अपितु कृष्णलानां घृताधिकरणकत्वविधायकम् । श्रपयतिस्तु तण्डुलपाकेऽपि द्रवसंयोगसत्त्वात् लक्षणया तदनुवादः । अतश्च न तत्राग्निसंयोगरूपस्तापोऽपि कार्यः, येन तत्पृष्ठभावेन गार्हपत्योऽपि प्राप्येत । इति प्राप्ते, घृताधिकरणत्वस्योत्पत्तिवाक्यादेव प्राप्तेः एतद्वाक्यवैयर्थ्यप्रसङ्गात् अग्निसंयोगः एवात्र पाकाविनाभूतत्वात् लक्षणया घृताधिकरणकत्वविशिष्टः शुद्धो वा विधीयते । तस्य च लाघवात् प्राकृतस्यैव प्रतिप्रसवतया विधिः । यद्यपि च नाग्निसंयोगमात्रस्य प्रकृतौ पृथग्विधिरस्ति, तथापि श्रपणविधित्वेनैव हविरारम्भकक्रियाऽन्तरविधिवत् अस्याप्यर्थतो विहितत्वात् प्रतिप्रसवत्वोपपत्तिः । अतश्च तन्मात्राङ्गभूतस्य गार्हपत्यादेरपि पेषणादिप्रतिप्रसवान्तरविधिन्यायेन प्राप्तौ न किञ्चिद्बाधकम् । अत एवात्र मुख्यश्रपणाभावात् नान्ये श्रपणधर्माः कार्याः । अपि तु अग्निसंयोगाङ्गभूतः एव, 'प्रधानं नीयमानं हि' इति न्यायेनेति ध्येयम् ।

**मण्डन**— 'वचनात् कृष्णले पाकः ।'

**शंकर**— 'पाकः स्यात् कृष्णलचरौ ।'

**कृष्णलेष्वर्थलोपादपाकः स्यात् । १०।२।१।१॥**

'प्राजापत्यं चरुं निर्वपेद् घृते शतकृष्णलमायुष्कामः' इति श्रूयते । तत्र कृष्णलेषु अपाकः पाको न स्यात् । अर्थलोपात् पाकजन्यस्य विक्लृतिरूपस्य अर्थस्य प्रयोजनस्य लोपात् असंभवात् । इति पूर्वः पक्षः ।

**स्याद्वा प्रत्यक्षशिष्टत्वात्, प्रदानवत् । २ ॥**

शतकृष्णले चरौ पाकः स्यात् 'घृते श्रपयति' इति प्रत्यक्षेण वचनेन शिष्टत्वात् विहितत्वात् । वचनप्रामाण्याददृष्टार्थः । प्रदानवत् यथा कृष्णमुखगुञ्जापरिमितानां सुवर्णशकलानाम् अनदनीयानामपि वचनबलात् प्रदानं भवति तद्वत् । इति सिद्धान्तः । के.

* **कृष्णलचरौ** अवघातस्य बाधः । भा. १०।१।१।१–३ वर्णकं २, * **कृष्णलचरौ** आग्नेयधर्मातिदेशः । ८।१।१८।३५–३९, * **कृष्णलचरौ** इडाप्राशित्रादिभक्षाः कर्तव्याः । तत्र च 'निरवधयन्तः (दन्तैः पीडामकुर्वन्तः) चुश्चुषाकारं भक्षयन्ति' इति । १०।२।३।१३–१६.

**कृष्णलचरौ उपस्तरणाभिघारणयोर्बाधः ॥**

**उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् । १०।२।२।३ ॥**

**भाष्यम्**— कृष्णलचरावेव संदेहः ये प्रकृतौ उपस्तरणाभिघारणे 'यदुपस्तृणाति, अभिघारयति, अमृताहुतिमेवैनां करोति' इति, ते उपस्तरणाभिघारणे कृष्णलचरौ कर्तव्ये, नेति । एष संशयः । किं प्राप्तम् ? उपस्तरणाभिघारणयोर्न क्रिया । कुतः ? अमृतार्थत्वात् । अमृतार्थत्वेन हि ते क्रियेते । 'यदुपस्तृणाति अभिघारयति, अमृताहुतिमेवैनां करोति' इति, अमृतेन उपमिमानः स्वादुभावार्थतां तयोर्दर्शयति । न च कृष्णलेषु स्वादुभावः संभवति । तस्मादक्रियेति ।

**क्रियेत वाऽर्थवादत्वात्, तयोः संसर्गहेतुत्वात् । ४ ॥**

**भाष्यम्**— क्रियेत वा उपस्तरणमभिघारणं च । 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' (१०।१।१।१) इति । यदुक्तम्, स्वादुत्वाय ते क्रियेते इति । न स्वादुताऽर्थः प्रकृतौ श्रुतः स्वादुः कर्तव्य इति । तस्मादर्थवादः 'अमृताहुतिमेवैनां करोति' इति । संसर्गमात्रम् आज्यस्य क्रियते हविषश्च । तच्च कृष्णलेष्वपि शक्यं कर्तुम् । तस्मादनिवृत्तिः ।

**अकर्म वा चतुर्भिराप्तिवचनात्, सह पूर्णं पुनश्चतुरवत्तम् । ५ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । अक्रिया तयोरिति । कुतः ? चतुर्भिराप्तिवचनात् 'चत्वारि कृष्णलान्यवद्यति' इति । कोऽभिप्रायः ? चत्वारि कृष्णलानि, चत्वार्यवदानानि । एकैकं कृष्णलम् एकैकस्य अवदानस्य स्थाने । तेन उपस्तरणाभिघारणयोर्निवृत्तिः । तथा च आप्तिवचनं भवति, 'चत्वारि कृष्णलान्यवद्यति, चतुरवत्तस्याप्त्यै' इति । अविद्यमानस्य अर्थान्तरेण अनुग्रहो भवति । तस्मान्निवृत्तिरेतयोः । सह पुनः उपस्तरणाभिघारणाभ्यां पूर्णं चतुरवत्तमेव स्यात् । तत्र आप्तिवचनं व्याहन्येत ।



**क्रिया वा मुख्यावदानपरिमाणात्, सामान्यात् तद्गुणत्वम् । ६ ॥**

**भाष्यम्**— क्रिया वा तयोश्चोदकानुग्रहाय । मुख्यावदानस्य हि प्रकृतौ परिमाणमुक्तम् 'अङ्गुष्ठपर्वमात्रं देवतानामवद्यति' इति । इहापि कृष्णलशब्दः परिमाणवचनः श्रूयते । स चतुःसंख्यया अनुबध्यते 'चत्वारि कृष्णलान्यवद्यति' इति । न यानि चत्वार्यवदानानि, तानि कृष्णलपरिमाणानि भवन्तीति । हिरण्यपरिमाणवचनः एष कृष्णलशब्दः, नाज्यस्य परिमाणं वदितुमुत्सहते । तच्च परिमाणं न द्रव्यं निवर्तयति । नहि द्रव्यकार्येषु गुणो वर्तितुमर्हति । परिमाणं यत् प्राकृतम्, तस्य कार्ये वर्तमानं तत् निवर्तयेत् । यथा 'इदं दधि घृतं शाकमिमे शालयः देवदत्तो भोज्यताम्, देवदत्तवत् यज्ञदत्तस्तैलेन' इति । तैलं हि भोजने स्नेहनेन उपकरोति, तत् स्नेहनार्थे प्राकृतं निवर्तयितुमर्हति घृतम्, न शाकं दधि चौदनं वा । एवमिहापि परिमाणं मुख्यावदानं परिमिमीते, न द्रव्यं निवर्तयेत् । प्रकरणात्तु मुख्यपरिमाणं स्यात्, नोपस्तरणाभिघारणयोः । तस्मात् तयोरनिवृत्तिरिति ।

**तेषां चैकावदानत्वात् । ७ ॥**

**भाष्यम्**— चतुर्णां च एकैकावदानतां दर्शयति 'चत्वारि कृष्णलानि एकमवदानम्' इति । इतरथा चत्वारि अवदानानि अभविष्यन् । तत्र एकावदानवचनम् उपरोत्स्यते । तस्मादपि अनिवृत्तिरिति ।

**आप्तिः संख्यासमानत्वात् । ८ ॥**

**भाष्यम्**— अथ यदुक्तम् आप्तिवचनं भवतीति, चतुःसंख्यासंस्तुतिरेषा । एवं चतुःसंख्यायाः माहात्म्यम्, यत् एकस्मिन् अवदाने चत्वारि अवदानानि भवन्ति इति । यथा 'यद् वैश्वदेवः प्रातःसवने गृह्यते, प्रातःसवने वा (वै) एतद् वैश्वदेवयज्ञं संस्थापयति' इति वैश्वदेवसंस्तुतिः, नान्यसवननिवृत्तिः । एवमिहापि चतुःसंख्यासंस्तवः, नोपस्तरणाभिघारणयोः निवृत्तिरिति ।

**सतोस्त्वाप्तिवचनं व्यर्थम् । ९ ॥**

**भाष्यम्**— तुशब्दः एनं चतुःसंख्यासंस्तवं व्यावर्तयति । नहि विद्यमानयोः उपस्तरणाभिघारणयोः तदाप्तिवचनेन कश्चित् संस्तवोऽस्ति । यदि अविद्यमानम् आपयति इत्युच्यते, ततो गुणवान् इत्युक्तो भवति, तत्र संस्तूयते । अथ विद्यमानम् आपयति इति, अनर्थको भवति इत्युक्तं भवति, न संस्तवः । तस्मात् विद्यमानयोः उपस्तरणाभिघारणयोः आप्तिवचनं व्यर्थमेव । अन्यः परिहारो वक्तव्यः ।

**विकल्पस्त्वेकावदानत्वात् । १० ॥**

**भाष्यम्**— तुशब्दः 'आप्तिवचनात् निवृत्तिः उपस्तरणाभिघारणयोः' इत्येतत् निवर्तयति । यथा भवान् ब्रूते, आप्तिवचनात् लिङ्गात् निवृत्तिः एतयोरिति, एवम् एकावदानवचनात् लिङ्गात् अनिवृत्तिः एतयोः इति लिङ्गविकल्पः । लिङ्गविकल्पाच्च न एकान्ततः निवृत्तिम् आप्तिवचनं कर्तुमर्हति ।

**सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यात् । ११ ॥**

**भाष्यम्**— तुशब्दः आप्तिवचनं बाधते । आप्तिवचने बाधिते सति चतुर्षु कृष्णलेषु सर्वावदानविकारेषु अभ्यासोऽनर्थकः स्यात् 'चत्वारिचत्वारि कृष्णलान्यवद्यति समृद्ध्यै' इति । अस्मत्पक्षे पुनः इतरत् हविः द्वितीयमवदानमपेक्ष्य अभ्यासोऽवकल्पिष्यते ।

**अपिवा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् । १२ ॥**

**भाष्यम्**— अथ मतम्, एतन्ममापि स्विष्टकृतमपेक्ष्य अभ्यासो भवतीति । तन्नैवम् । इतरस्य स्विष्टकृतः अपेक्षणमन्याय्यम् । प्रकरणात् प्रधानमभिसंबध्यते वचनेन । न च स्विष्टकृतः प्रकरणम् । चोदकेन हि स प्राप्यते । तस्मात् त्वत्पक्षे अभ्यासः अनर्थक एव । उपस्तरणाभिघारणे कर्तव्ये एव । (एतत् सूत्रद्वयं प्रायः सर्वत्रैकत्वेनैव मुद्रितं व्याख्यातं च । तत्तु अस्माभिः छिन्नम् । भाष्यमपि तदनुसारेण छित्वा गृहीतम् । तत्कारणं तु अस्मदीये मीमांसादर्शने अत्रैव सूत्रे टिप्पण्यां द्रष्टव्यम् । के.)

**अकर्म वाऽसंसर्गार्थनिवृत्तित्वात्, तस्मादाप्तिसमर्थत्वम् । १३ ॥**

**भाष्यम्**— अक्रिया उपस्तरणाभिघारणयोः । कुतः ? संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां मा भूदिति

उपस्तरणेन स्रुक् स्निग्धीक्रियते, अभिघारणेन हविः स्रुचि असंयुक्तं कृत्स्नं यथा अग्नौ पतेदिति । न तु विशदस्य कृष्णलस्य स्रुचि संयोगो भवति, यन्निमित्तम् उपस्तरणमभिघारणं च स्नेहनार्थं सुवर्णस्य क्रियेत । तस्मात् प्राकृतस्य प्रयोजनस्य निवृत्तत्वात् कृष्णलेषु उपस्तरणाभिघारणे निवर्तितुमर्हतः । एवं च आप्तिवचनम् उपपन्नं भविष्यति । 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति ।

**सोम**— लुप्तार्थं श्रपणमपि यदा कर्तव्यम्, तदा किं वक्तव्यमलुप्तार्थयोः उपस्तरणाभिघारणयोः इत्युत्थानात् **संगतिः** । **सूत्रार्थस्तु**— उपस्तरणाभिघारणयोः स्वादिमार्थत्वात् अनुष्ठानं स्यात् इति ।

**वि**— 'उपस्ताराभिघारौ स्तस्तेषु नो वा, द्वयं भवेत् । अदृष्टार्थं, मसंसक्तिर्दृष्टार्थो नेति लुप्यते ॥'

**भाट्ट**— तत्रैव उपस्तरणाभिघारणे कार्ये न वेति प्रकृतौ अदृष्टार्थत्वात् कार्ये एव । **न च** 'उपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति' इति वाक्यशेषेण अनयोः स्वादिमार्थत्वावगतेः कृष्णलानां च अनदनीयत्वेन तदभावाल्लोप इति **वाच्यम्** । देवताया भोगाभावेन तस्य अर्थवादमात्रत्वात् । यद्यपि च प्रकृतौ एषां नादृष्टार्थता कल्प्येत, किन्तु चतुरवत्तसंपत्त्यर्थतैव, तथापि कृष्णलचरौ अलोपः । **न च** तथापि 'चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति वचनेन अवदानानुवादेन कृष्णलचतुष्कविधानात्, तेन च चतुरवत्तसंपत्त्यनुवादात्, प्रकृतौ अवदेयचतुष्कस्थानापत्त्यवगतेः उपस्तरणाभिघारणसाधनीभूताज्यस्य बाधः इति **वाच्यम्** । तथात्वे वीप्साऽनुवादानुपपत्तेः । न च स्विष्टकृदभिप्रायेणानुवादः, प्रमाणाभावात्, हवीरूपकृष्णलचतुष्कविधानस्य अङ्गुष्ठपर्वमात्रस्थानापन्नतयाऽपि संभवेन प्रधानमात्रेऽपि वीप्सोपपत्तेश्च । चतुरवत्तसंपत्त्यनुवादस्तु कृष्णलचतुष्कद्वयवदानस्यापि चतुरवत्तसंपादकत्वम् उपस्तरणाभिघारणसाहाय्येन अस्तीति नैव विरुध्यते । अतश्च चतुरवत्तसंपत्त्यर्थत्वादपि कर्तव्ये एव उपस्तरणाभिघारणे । **नहि** तयोः प्रकृतौ सूक्ष्माणां पूरोडाशावयवानां स्रुचि संसर्गापत्तेः आहवनीयपाकासंभवेन तद्व्यावृत्त्यर्थत्वात्, कृष्णलेषु च तत्प्रसक्त्यभावात् लोपः इति **वाच्यम्** । तथात्वे उपस्तरणाभिघारणयोः अन्यतरेणापि तत्सिद्धया विकल्पापत्तेः, धानावपाऽऽदौ संसर्गाप्रसक्त्या तदनापत्तेश्च, प्रकृतौ चतुरवत्तसंपत्त्यर्थत्वाभावे वपाऽऽदौ पञ्चावदानादिसिद्ध्यर्थमभिघारणस्य वृद्ध्यनापत्तेश्च । इति **प्राप्ते**, दृष्टार्थत्वाय असंसर्गः एव तयोः प्रयोजनम्, न तु चतुरवत्तसंपत्तिः, तस्य प्रकृतौ अविहितत्वात् । 'चतुरवत्तं जुहोति' इत्यत्र अवत्तोद्देशेन प्रक्षेपो विधीयते, चतुःपदं तु उपस्तरणाद्यभिप्रायेणानुवादः, इतरथा विशिष्टोद्देशे वाक्यभेदात् गौरवाच्च । अतश्च चतुरवत्तस्य उद्देश्यत्वेनैव अप्रसिद्धौ विधेयत्वेन सुतरामप्रसिद्धेः न तत्संपत्त्यर्थता उपस्तरणाभिघारणयोः । अतः असंसर्गमात्रार्थत्वात् अकरणं कृष्णलेषु तयोरिति **मूलानुयायिनः** । **वस्तुतस्तु** चतुःशब्दस्य प्रमादपाठापत्तेः उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वमस्त्येव । कारकताऽतिरिक्तसंबन्धेन विशिष्टस्य व्युत्पन्नत्वाच्च न वाक्यभेदः । अत एव उद्देश्यत्वान्यथाऽनुपपत्त्या चतुरवदानस्य विधिकल्पना । अत एव वपायां सकृदवदानविधानेऽपि प्राकृतस्य चतुरवत्तस्य प्राप्तेः 'यद्यपि चतुरवत्ती' इति निर्देशः संगच्छते । इतरथा असंसर्गार्थे सकृदेव उपस्तरणाभिघारणप्राप्तेः द्व्यवत्तीति निर्देशापत्तेः । अतः उपस्तरणाभिघारणयोः प्रकृतौ असंसर्गवत् चतुःसंख्यासंपत्तिरपि प्रयोजनम् । तत्र तु एतावान् विशेषः, असंसर्गस्यैव मुख्यप्रयोजनता वैतुष्यवत् दृष्टार्थत्वात्, चतुःसंख्या तत्सत्त्वे एव । अतश्च यथैव नावघातादयो वैतुष्याभावे नियमादृष्टेन प्रयुज्यन्ते अपि तु तत्संभवे एव, तथा असंसर्गाख्यप्रयोजनसत्त्वे एव चतुःसंख्यासंपत्त्यै उपस्तरणाभिघारणे प्रयुज्येते, नान्यथा । अतश्च कृष्णलेषु नियमादृष्टार्थम् अवघाताकरणवत् चतुःसंख्यासंपत्त्यर्थं नोपस्तरणाभिघारणकरणम् । एवं केवलधानाऽऽदियागेऽपि सवनीयहविःषु तत्संप्रतिपन्नदेवताकत्वात् पुरोडाशाद्यर्थे तदनुष्ठानम् । वपाहृदयादौ तु कतिपयावयवसंसर्गस्यैव संभावितत्वात् तन्निवृत्त्यर्थे तदावश्यकत्वे पञ्चावदानसंपत्त्यर्थं तद्द्विवृद्धिरपि कल्पसूत्रकारादिसंमता संगच्छते । एवमेककपाले सर्वहोमेऽपि चतुरवत्तादिसंपत्त्यर्थं तद्द्विवृद्धिः,



तत्रापि संभावितत्वात् । प्रकृते तु संसर्गस्य असंभावितत्वात् प्रत्युत उपस्तरणादिकरणे एव तत्संभावनान्निवृत्तिस्तयोः ।

**मण्डन**— 'नोपस्तृत्यभिघारणे' कृष्णलेषु ।

**शंकर**— 'नोपस्ताराभिघारणे ।'

**कृष्णलचरौ चतुर्धाकरणस्य बाधः ॥**

**एकार्थत्वादविभागः स्यात् ॥ १०।२।७।२२ ॥**

**भाष्यम्**— तत्रैवेदं चिन्त्यते । प्रकृतौ व्यादेश आम्नातः 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति । स इह कर्तव्यो न कर्तव्य इति संशयः । चोदकप्राप्त्या कर्तव्य इति यस्य बुद्धिः स्यात्, तस्य निवृत्त्यर्थं सूत्रम् । प्रकृतौ बहूनां संबन्धः कर्तव्यः । स विभागमन्तरेण न सिध्यतीति विभागो बहुसंबन्धाय क्रियते । इह तु 'सर्वं ब्रह्मणे परिहरति' इति एकस्मै सर्वश्चरुः । तत्र विभागेन न प्रयोजनम् । क्रियमाणोऽपि न प्राकृतार्थः स्यात्, अदृष्टार्थमेव क्रियेत । तस्मात् कृष्णलचरौ न व्यादेशः इति ।

**सोम**— यदि अपनयमात्रं विधाय वचनस्य चरितार्थत्वात् न कालबाधः, तर्हि व्यादेशोऽपि न बाध्यः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— एकार्थत्वात् 'इदमस्मै' इत्येवंरूपो विभागो न कर्तव्यः इति ।

**वि**— 'चतुर्धाकृतिनिर्देशौ तद्वक्षे स्तो न वा, ऽग्रिमः । चोदकात्, तौ तु बह्वर्थव्यवस्थाऽर्थत्वतोऽत्र न ॥'

**भाट्ट**— प्रकृतौ पुरोडाशस्य चतुर्धाकरणं बर्हिषत्करणं च विधाय 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति व्यपदेश आम्नातः, स कृष्णलेषु सर्वस्यैव ब्रह्मणा भक्षणीयत्वान्न कर्तव्यः । नहि होत्रादिसंबन्धाभावे 'इदं होतुः' इत्यादिव्यपदेशो युज्यते । अतश्च व्यावर्तनीयाभावात् 'इदं ब्रह्मणः' इत्यपि न । न चैवं चतुर्धाकरणस्यापि प्रयोजनाभावः, सर्वपरिहरणीयोद्देशेन सहत्वविधानादेव तदावश्यकत्वात् । यदि तु तत्तत्कालकर्तव्यभक्षणार्थपरिहरणीयानामेव सहत्वविधिरिति विभाव्यते, तदा माऽस्तु सूत्रस्वारस्यात्तदपि । बर्हिषत्करणं तु सूक्ष्मत्वात् कृष्णलानां चतुर्धाकरणोत्तरकालाभावाच्च निवर्तते इत्यन्यदेतत् ।

**मण्डन**— 'न कृष्णलेषु व्यादेशः ।'

**शंकर**— 'व्यादेशो न चतुर्धाऽत्र ।'

**कृष्णलचरौ ब्रह्मभक्षाः युगपत् परिहरणीयाः ॥**

**एकधोपहारे सहत्वं ब्रह्मभक्षाणाम्, प्रकृतौ विहृतत्वात् । १०।२।४।१८ ॥**

**भाष्यम्**— तत्रैव श्रूयते, 'एकधा ब्रह्मणे परिहरति' इति । तत्र संदेहः किमेतत् सहत्वम्, उत सकृत्त्वमिति । किं प्राप्तम्? सकृत्त्वं वा, सहत्वं वा, अनियम इति । कुतः? एकप्रकारवचनः एकधेति शब्दः । सकृत्त्वमपि एकः प्रकारः, सहत्वमपि । तद्यथा, यः सकृद् गाः प्रापयति, स एकधा प्रापयतीत्युच्यते । योऽपि सह प्रापयति, सोऽप्येकधा प्रापयतीति । तस्मात् सकृत्त्वं सहत्वं वा कर्तव्यमिति । **एवं प्राप्ते**, **ब्रूमः** । एकधा ब्रह्मणे परिहरतीति सहेति गम्यते । एवं ब्रह्मभक्षस्य अब्रह्मभक्षस्यापि परिहारः कृतो भविष्यति । इतरस्मिन् पक्षे कस्य चिद्ब्रह्मभक्षस्य परिहारो न क्रियते । तत्र प्राकृतः प्रयोगवचनो बाध्येत । विहृताश्चामी भक्षाः प्रकृतौ । ते इह चोदकेन विहृता एव प्राप्ताः । तत्र सहत्ववचनः एकधाशब्दोऽवकल्पते । **ननु** वाचनिक इह भक्षः अप्राकृतः, न प्राकृता विहृताः प्राप्तुमर्हन्तीति । **उच्यते** । पुरुषसंस्कारार्थत्वेन न प्राप्नुवन्ति, द्रव्यसंस्कारार्थत्वेन तु प्राप्नुवन्तीति । यदि प्राप्नुवन्ति, किमर्थं तर्हि वचनमिति? भक्षोपायविधानार्थम् । **ननु** निर्धानं चुच्छुषाकरणं वा अर्थप्राप्तम् । अर्थप्राप्तत्वादनुवादः । **उच्यते** । न नियमेन प्राप्यते । नियमार्थश्च विधीयते इति ।

**टुप्**— 'ननु वाचनिक इह भक्षः अप्राकृतः, न प्राकृता विहृताः (भिन्नकालीनाः) प्राप्नुवन्ति' इति, कोऽभिप्रायः अस्य (भाष्य-) ग्रन्थस्य? (पूर्वाधिकरणे प्रीत्यर्थत्वात् अप्राप्तिं प्राकृतानामुक्त्वा कथमिदानीं प्राप्त्यभिधानम् इति भावः । उत्तरम्-) नैते कर्तृसंस्कारार्थाः (भक्षाः) सः (कर्ता) अत्र गुणभूतः, प्रधानभूता भक्षाः । (भक्ष्यन्ते इति भक्षाः द्रव्याणि) । कथं (प्राशित्रम् इडाम् इति) द्वितीयान्तो भक्षः (क्रियां प्रति-)

प्रधानभूतः ग्रहवत्, कर्ता (तु) क्रियायां गुणभूत उपादीयते अध्वर्युवत्। शब्दतस्तावत् एवम् (प्राधान्यम्), वस्तुतश्च (द्रव्यप्राधान्यमेव गम्यते)। कृत्स्नम् (हि) द्रव्यम् उदरप्रक्षेपेण संस्क्रियते, न तु कर्तुः कृत्स्नस्य संस्कारः (नहि एतावता तस्य सामर्थ्यं जन्यते।) दृष्टार्था च (कृतप्रयोजनस्य) द्रव्यस्य प्रतिपत्तिः। ननु कर्तृसंस्कारेऽपि दृष्टमेव (प्रयोजनम्)। सत्यम्, उक्तम् (तु) द्रव्यस्य कृत्स्नस्य संस्कारो न कर्तुः। (कृत्स्नस्यास्तीति मन्दं तत्र प्रयोजनम्)। अपिच सोमे (तिक्तकटुके) अत्यन्तमेव संस्कारो नास्ति (पूतीकानमिप्रेत्येदम्, न मुख्यं सोमम्)। अपकारस्तु कदा चित् स्यात् (संभवेत्)। अपिच (जायतां नाम कर्तुरपि संस्कारः, तथापि) कृतप्रयोजनं द्रव्यं प्रतिपत्तिमपेक्षते। तत् (वचनात्) कर्तृषु प्रतिपाद्यते। तस्य यदि कर्तृसंस्कारोऽपि (नियम- ) प्रयोजनं (अनुनिष्पादि) भवति, तथापि सति अविरोधः एव। न तु स विवक्षितः। (नैतावता द्रव्यार्थता न हीयते। तस्मात् प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि प्राप्नुवन्ति इति तेषां सहत्वविधानमुपपन्नम्। कथं तर्हि पूर्वाधिकरणम्, तत्राह- ) या चासौ (पूर्वा) चतुःसूत्री सा अनेन न्यायेन (विरुद्धा) प्रत्याख्येयैव (कृत्वाचिन्तया)।

**सोम**— पूर्वत्र यथा वचनबलात् भक्षणम्, एवमिहापि वचनस्य साधारण्यात् तद्बलादनियमः इत्युत्थिते: **संगतिः**। **सूत्रार्थस्तु**— ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् भिन्नकालत्वात् तेषाम् 'एकधा' इत्यनेन इह सहोपहारो विधीयते इति।

**वि**— 'सकृत्सहत्वयोरेकधेत्यन्यमेव वा।, एकं नियामकाभावा, दबाधादन्यमेव हि॥' अन्त्यपक्षरूपं सहत्वमेव एकधा इत्यस्य शब्दस्यार्थः।

**भाट्ट**— कृष्णलचरावेव 'एकधा ब्रह्मणे उपहरति' इति श्रुतम्। तत्रैकधाशब्दस्य एकप्रयत्नसाध्यत्वाख्ये सकृत्त्वे एककालकत्वाख्ये सहत्वे च लोके प्रयोगात् किमनेन विधीयते इति **चिन्तायाम्**, प्रकृतौ इडाप्राशित्रचतुर्धाकरणशंयुवाककालभक्षणानां मध्ये सकृत्त्वविधानात् आज्यस्यैव करणम्, इतरेषां निवृत्तिः। सहत्वविधानाद्वा सर्वेषां यौगपद्यम्। **इत्यनियमे प्राप्ते**, यत एवायं विधिः साधारणः, अत एव अतिदेशेन हविःसंस्कारकतया प्राप्तानां भक्षाणां बाधे प्रमाणाभावात् सहत्वमेव सर्वेषां विधीयते। अत्र च तत्तच्छेषभक्षणार्थानां तत्तद्धारणानामेव उद्देशेन साहित्यं विधीयते, भक्षणे नानाकालीनत्वस्य वक्ष्यमाणत्वात्। ब्रह्मसंबन्धश्च वक्ष्यमाणन्यायेन अनुवाद इति न विशिष्टोद्देशः। अतः सहत्वविधानात् कालस्यैव प्रत्याम्नानाद्बाधः।

**मण्डन**— 'एकधेति सहार्थकम्।'

**शंकर**— 'एकधेति तु सहत्वगीः।'

**॥ कृष्णलचरौ भक्षाणां न बाधः**, चुरचुषाकारेण तत्संभवात्॥

**भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात्।** १०।२।३।१४॥

**भाष्यम्**— शतकृष्णलश्चरुरुदाहरणम्। सन्ति प्रकृतौ भक्षाः, इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः। तेषु संशयः कृष्णलचरौ ते भक्षाः कर्तव्याः, उत नेति। किं प्राप्तम्? न कर्तव्याः। प्रीत्यर्थं हि प्रकृतौ ते कृताः, सामर्थ्यं जनयिष्यन्तीति। न तु हिरण्यं प्रीतिमुत्पादयति भक्ष्यमाणम्। अतो न कर्तव्याः।

**टुप्**— 'भक्षाणां तु' इत्यादिकेयं चतुःसूत्री कर्तृसंस्कारार्था भक्षा इत्येतमर्थं प्रतिपादयति। ते न कृष्णलचरौ प्राप्नुवन्ति। असंस्कारकत्वात्। तस्मात् (चोदकेन) अप्राप्तो भक्षो वचनाद्विधीयते हिरण्यस्य। (चतुर्थाधिकरणान्ते तु 'याऽसौ चतुःसूत्री (१४-१७), सा अनेन न्यायेन विरुद्धा प्रत्याख्यातव्यैव' इति टुप्टीकायामुक्तम्। कृत्वाचिन्तया इत्यपि तत्र तन्त्ररत्ने उक्तम्)।

**स्याद्वा, निर्धानदर्शनात्।** १५॥

**भाष्यम्**— स्याद्वा हिरण्यस्य भक्षः। भक्षणविशेषदर्शनात्। 'निरवधयन्तो भक्षयन्ति' 'चुच्छुषाकारं भक्षयन्ति' इति प्राप्ते भक्षे केवलं भक्षोपायं विधास्यति शब्द इति। इतरथा भक्षोपायं भक्षणं च विकृतौ विदध्यात्, तत्र वाक्यं भिद्येत। तस्माच्चोदकेन प्राप्यते भक्षः इति।



**वचनं वाऽऽज्यभक्षस्य प्रकृतौ स्यादभागित्वात्।** १६॥

**भाष्यम्**— न त्वेतदस्ति, प्राप्यन्ते भक्षाः इति, अर्थलोपादेषां निवृत्तिः। यत्तु भक्षणे विशेषवचनं भवतीति, वचनादेतत् आज्यस्य भविष्यति। निरवधयन्तो भक्षयन्ति आज्यमिति, चुच्छुषाकारं भक्षयन्ति आज्यमिति। निर्धानं चुच्छुषाकारं चार्थप्राप्तं भक्ष्यमाणस्य अनूद्यते इति न वाक्यभेदः।

**वचनं वा हिरण्यस्य, प्रदानवदाज्यस्य गुणभूतत्वात्।** १७॥

**भाष्यम्**— सत्यम्, वचनमेतत् हिरण्यस्य, न तु आज्यस्य। कुतः? भक्षयन्ति इत्येतावत् श्रूयते, न इदं वा तद् वा इति। तत्र यत् निर्दिष्टं प्रकृतम्, तस्य तेन संबन्धो भवतीति। हिरण्यं चात्र निर्दिश्यते, नाज्यम्। कथम्? 'प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलम्' इति। शतकृष्णलश्चरुः अत्र कार्यसंबन्धार्थमुच्यते, तद्विशेषणार्थेन घृतम्, न स्वनिर्देशार्थेन। तस्मात् चरुरेव शब्दान्तरैः संबध्यते, न घृतम्। तद्यथा 'एष दण्डः इष्टकाकूटे तिष्ठति, प्रहर अनेन' इति, 'दण्डेन' इति गम्यते, न 'इष्टकाकूटेन' इति। एवमिहापि चरुः भक्षणवचनेन संबध्यते, न घृतम्। तस्मात् चरोर्भक्षणम्। प्रदानवत्। यथा तेषामेव कृष्णलानाम् अनदनीयानां प्रदानं क्रियते, एवमत्रापि द्रष्टव्यमिति।

**सोम**— यथा उपस्तरणाभिघारणयोर्द्वारलोपात् अननुष्ठानम्, तथा भक्षाणामपि तृप्तिरूपद्वारलोपात् अननुष्ठानम् इत्युत्थितेः **संगतिः**।

**वि**— 'भक्षो नास्त्यस्ति वा तेषु, नास्ति प्रीतेरभावतः।, चुरचुषाकारनिर्धानवचनात् स्यात् प्रदानवत्॥' इक्षुदण्डभक्षणे तद्रसस्वीकारे च यः शब्दविशेषः, तस्यानुकरणं चुरचुषा इति। निर्धानं निःशेषेण आज्यस्य चोषणम्।

**भाट्ट**— प्रकृतौ 'शेषभक्षाः शेषप्रतिपत्त्यर्थाः' इति वक्ष्यते (१०।२।१९)। शेषप्रतिपत्त्यर्थत्वेऽपि च प्रयाजशेषन्यायेन (४।१।१४), कर्तुः करिष्यमाणकर्मणि बलाधानार्था अपि, इत्युक्तं षष्ठे (६।४।३)। तत्र च प्रतिपत्तेः प्रयोजकस्य सत्त्वात् कृष्णलेषु कर्तव्या एव ते। यदा तु कृत्वाचिन्तया शुद्धकर्तृप्रीत्यर्थत्वम्, तदा ते तत्र भवन्ति न वा इति चिन्तायाम्, कृष्णलानामनदनीयत्वेन प्रीत्ययोग्यत्वादर्थलोपाद्बाधः। न च 'हिरण्यस्य निरवधयन्तो भक्षयन्ति चुच्छुषाकारम्' इति वचनेन प्रतिप्रसवः, योग्यतया अत्र आज्यस्यैव हिरण्याधारस्य भक्षणविधानात् 'हिरण्यस्य निरवधयन्तः' इत्यस्य हिरण्यं त्यक्त्वा इत्यर्थात्। यदा तु भाष्यानुसारात् 'हिरण्यस्य' इति न पठ्यते तदा आज्यस्यैव निरवधानं दन्तासंयोगः। अत एव 'चुच्छुषाकारम्' इत्यपि अनुवादः, आज्यभक्षणे तदावश्यकत्वात्। अतश्च अप्राकृतमिदं भक्षणम् आरादुपकारकम् अधिकरणीभूताज्यप्रतिपत्तिर्वा, इति न तत्र प्राकृतभक्षधर्माः कार्याः। **इति प्राप्ते**, प्रधानान्वयस्याभ्यर्हितत्वात् हिरण्यस्यैव भक्षणम्, न तु आज्यस्य 'निरवधयन्तः' इत्यस्य दन्तेन पीडनमकुर्वन्तः इत्यर्थात्। अतो लाघवात् हविर्भक्षणस्यैव प्रतिप्रसवविधिः। स च चुरचुषाकारत्वविशिष्टस्य प्रधानान्वयानुरोधेन पञ्चमविधिप्रकारस्यापि अङ्गीकारात्। वस्तुतस्तु स्वसंपृक्ताज्याभिप्रायेण चुरचुषाकारत्वस्यापि अनुवाद एव। अतश्च पेषणन्यायेन (३।३।१३) कार्या एव भक्षधर्मा भक्षाश्च। कृत्वाचिन्तोद्घाटने तु प्राप्तभक्षानुवादेन दन्तसंयोग एव निषिध्यते इति विवेकः।

**मण्डन**— 'भक्षोऽस्ति कृष्णलचरोः।'

**शंकर**— 'भक्षस्तु तत्र स्यादेव।' तत्र कृष्णलचरौ।

**॥ कृष्णलचरौ युगपदुपहृताः सर्वे भक्षाः ब्रह्मणा तत्तद्भक्षकाले एव भक्षणीयाः॥**

**पुरुषापनयात् स्वकालत्वम्।** १०।२।६।२१॥

**भाष्यम्**— तत्रैव संदेहः समधिगते शेषापनये किमेकस्मिन् काले सर्वे भक्षा भक्षयितव्याः, उत स्वस्मिन्स्वस्मिन् काले इति। किं प्राप्तम्? भक्षयितुं तत्परिहरणं क्रियते। अतो यत् भक्षणाय परिहृतम्, तत् अनन्तरं भक्षयितव्यमेव। **एवं प्राप्ते**, **ब्रूमः**, पुरुषापनयात् स्वकालत्वमिति। पुरुषापनयं कृत्वा कृतार्थः शब्दः

स्वकालतां भक्षणानां न निवारयति । तस्मात् यथाकालमेव भक्षयितव्या इति ।

शा— ( कृष्णलचरौ ) किं युगपदुपहूतानां युगपद्भक्षणम्, उत प्रकृतिवत् नानाकालं भक्षणम् ( इति संशये ) '**भक्षार्थो ह्युपहारोऽतो भक्षोऽपि युगपद्भवेत् । सहाप्युपहूतौ शक्यं यथाकालं तु भक्षणम् ॥**' तस्माच्चोदकाबाधाय सहोपहूतानामपि प्रकृतिवत् नानाकालं भक्षणम् ।

**सोम**— गतनयद्वयोपजीवनात् **संगतिः** ।

**वि**— 'युगपत् स्वस्वकाले वा तत् सर्वं भक्षयेदयम् ।, अविलम्बादादिमो, ऽन्त्यस्तं कालमबाधितुम् ॥' अयं ब्रह्मा ।

**भाट्ट**— सर्वेषां शेषाणां युगपदुपहूतानां युगपदेव ब्रह्मणा भक्षणम्, उत तत्तत्प्राकृतकाले **इति चिन्तायाम्**, परिहारस्य भक्षार्थत्वात् तत्रैव अनेन सहत्वं नामान्तरेण विधीयते । इतरथा सर्वत्वस्यापि परिहारमात्रे विधानापत्तेः पुरुषान्तराणामपि भक्षापत्तिः । **इति प्राप्ते**, सर्वत्वस्य परिहारमात्रे विधौ अदृष्टार्थत्वापत्तेर्युक्तं भक्षे पुरुषान्तरनिवर्तकत्वम्, सहत्वस्य तु परिहारमात्रे विधावपि अदृष्टार्थत्वाभावात् युगपत् सर्वं ब्रह्मणे परिहृत्य तत्तत्काले तेन भक्षणोपपत्तेः न भक्षणे प्राकृतकालबाधः ।

**मण्डन**— 'यथाकालं तु भक्षणम् ।'

**शंकर**— 'स्वकालास्ते तु संमताः ।' ते भक्षाः ।

**✠ कृष्णलचरौ सर्वे शेषभक्षाः पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहरणीयाः ॥**

**सर्वत्वं च तेषामधिकारात् स्यात् ।१०।२।५।१९॥**

**भाष्यम्**— कृष्णलचरुरेव उदाहरणम् । तत्र श्रूयते, 'सर्वं ब्रह्मणे परिहरति' इति । तत्र संदेहः किं ब्रह्मभक्षाणामेव एष परिहारः, उत पुरुषेभ्यः शेषापनयः इति । कथं ब्रह्मभक्षाणां परिहारः, कथं वा शेषापनयः इति ? यदि ब्रह्मणे परिहरतीत्यनूद्य सर्वमिति विधीयते, ब्रह्मणे सर्वमिति वा अनूद्य परिहरतीति विधीयते, ततो ब्रह्मभक्षाणां परिहारः । अथ सर्वमिति लक्षयित्वा ब्रह्मणे परिहरतीति विधीयते, परिहरतीति वा लक्षयित्वा सर्वं ब्रह्मणे इति, ततः शेषापनयः । किं प्राप्तम् ? सर्वत्वं ब्रह्मभक्षाणां स्यात् । कुतः ? ब्रह्मणे परिहरतीति प्राप्तमेव, न विधीयते । सर्वपरिहारस्तु अप्राप्तः, तस्य विधानं भवितुमर्हति । अथवा, अस्त्येव ब्रह्मणे सर्वो भागः । तत्र कस्य चिद्भागस्य परिहारः प्राप्तः, कस्य चिन्न प्राप्तः । यस्य च न प्राप्तः, तस्य परिहारो विधीयते । तस्मादधिकृतानां ब्रह्मभक्षाणामेष वाद इति ।

**पुरुषापनयो वा तेषामवाच्यत्वात् ।२०॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । पुरुषापनयः स्यात् । यदि एवमुच्येत 'यत् ब्रह्मणे परिहरति, तत् सर्वम्' इति, सर्वमेव हि तत् विधानम् अनर्थकं स्यात् । अथ 'यत् ब्रह्मणे, तत् सर्वं परिहरति' इति, विशेष्यस्य अनिर्देशात् न ब्रह्मशब्दो विशेषणम् । अथ 'यत् ब्रह्मणे सर्वम्, तत् परिहरति' इति, एवमपि विशेष्यो नैव निर्दिष्टः स्यात् । 'यत् सर्वम्, तत् परिहरति' इति नैवं वचनमर्हति । सर्वं हि सर्वम् । ततश्च विशेषयितव्यम् । तस्मात् 'सर्वं ब्रह्मणे परिहरति' इति ब्रह्मसंबन्धः सर्वस्य विधीयते चरोः । एवं न किञ्चित् अनर्थकम् । तस्मात् पुरुषेभ्यः शेषापनयः इति ।

**टुप्**— ( यदुक्तं 'सर्वं विधीयते' इति तत्राह— ) यदि ( तावत् केवलः ) ब्रह्मशब्दोऽनुवादः, सर्वमिति विधीयते ( यत् ब्रह्मणे, तत् सर्वम् इति ), तथा सति न ज्ञायते किं (तत्) सर्वम् (यत्) विधीयते इति । अथ यदि ब्रह्मपरिहारशब्दौ अनूद्येते ( यत् ब्रह्मणे परिहरति इति ), तथापि सर्वमिति न विधीयते ( प्राप्तत्वात् ) । यदा ( हि ) कस्य चित् भागस्य परिहारः प्राप्तः, कस्य चिन्न, तदा विधानमुपपद्यते । सर्वेषां तु ( ब्रह्मभागानां तेन भक्षयितव्यत्वात् ) प्राप्त एव परिहारः । ( तस्मात् सर्वपदं तावन्न विधेयम् ) । अथापि 'ब्रह्मणे सर्वम्' ( इति ब्रह्मपदं सर्वपदं च ) अनूद्य परिहारः ( विधीयते, यत् ब्रह्मणे सर्वम्, तत् परिहरति इति ) तथापि प्रथमपक्षोक्तो यो दोषः, स तृतीयेऽपि ( पक्षेऽस्मिन् प्रसज्यते ) । तस्मात् सिद्धान्ते ब्रह्मपदं विधीयते ( न सर्वपदम्, नापि परिहरतिपदम् । प्राकृतं परिहर्तव्यमनूद्य 'तत् ब्रह्मणे' इत्येतावत् विधीयते ) ।



**सोम**— पूर्वत्र यथावचनं चोदकाविरोधेन नीतम्, एवमिहापि इत्युत्थितेः **संगतिः** । परिहरति प्रयच्छतीत्यर्थः । **सूत्रार्थस्तु**— तेषां ब्रह्मभक्षाणां सर्वत्वं विधेयं स्यात्, अधिकारात् स्वरूपेण तेषां चोदकतः प्राप्तत्वात् । ततश्च सर्वत्वं विध्यर्हम् इति ।

**वि**— 'सर्वे ब्रह्मण इत्यत्र ब्रह्मभागस्य सर्वता । अन्यभागस्यापि वा, ऽऽद्यो भागान्तरमबाधितुम् ॥, सर्वत्वमन्यभागीयं ब्रह्मणोऽत्र विधीयते । स्वमात्मीयं चोदकात्तं बाध्यतामन्यभक्षणम् ॥'

**भाट्ट**— तत्रैव ( शतकृष्णलचरौ ) 'सर्वं ब्रह्मणे परिहरति' इति श्रुतम् । तदनेन ब्रह्मभागस्य सर्वस्य परिहरणीयत्वविधाने, तस्य वा परिहरणीयस्य सर्वत्वविधाने विशिष्टोद्देशापत्तेः वाक्यवैयर्थ्याच्च सर्वोद्देशेन ब्रह्मसंबन्धो विधीयते । परिहारस्य च पूर्ववाक्ये उद्देश्यत्वेन प्रत्यभिज्ञायमानत्वादाश्रयत्वम् । अतश्च परिहरतीत्ययमनुवादः । अत एव पूर्ववाक्ये परिहारस्य कर्मापेक्षायां कृष्णलशेषस्य पूर्वप्रकृतस्य प्राधान्येनोपस्थितस्य अन्वितत्वात् तत्परिहार एवाश्रयः, न तु अन्वाहार्यादिपरिहारः । अथवा परिहरणोद्देशेनैव ब्रह्मसंबन्धः प्रकृतिप्राप्तेः पूर्वं विधीयते । तत्फलं चावच्छेदकावच्छेदेन ब्रह्मसंबन्धविधानात् ब्रह्मभागस्य तत्संबन्धप्राप्तावपि पुरुषान्तरभागस्य तत्संबन्धसिद्धिः, सर्वत्वं चानुवादः । अतश्च भागान्तरेषु प्रत्याम्नानात् पुरुषान्तरस्य बाधः । एवं च 'निरवधयन्तो भक्षयन्ति' इति बहुवचनं व्याख्येयम् । एतद्बलाद्वा पुरुषान्तरबाधो वैकल्पिकः । अपूर्वप्रवृत्त्या विशिष्टप्राकृतभक्षविधानाच्च न वाक्यभेदः ।

**मण्डन**— 'ब्रह्मणे सर्वभक्षाः स्युः ।' समर्पणीयाः ।

**शंकर**— 'भक्षाः सर्वे ब्रह्मणः स्युः ।'

* **कृष्णविषाणया** कण्डूयनं द्वादशाहे प्रथमाहे दीक्षामारभ्य उत्तमाहे दक्षिणानयनपर्यन्तम् । चात्वाले प्रासनं च उत्तमाहे दक्षिणानयनोत्तरम् । भा. ११।३।६। १५–१६, * **कृष्णविषाणायाः** कण्डूयने शेषभूतायाः ज्योतिष्टोमे माध्यंदिने सवने दक्षिणादानोत्तरं चात्वाले प्रासनम् । ४।२।६।१६, * कृष्णविषाणायाः प्रासनं द्वादशाहादौ अहर्गणे अन्त्ये एवाहनि, न प्रथमे मध्ये वा । तेन सर्वस्मिन्नेवाहर्गणे विषाणाकण्डूयनं नियम्यते । ११।३। ६।१५–१६.

**✠ कृष्णविषाणाप्रासनाधिकरणम्** । कृष्णविषाणाऽधिकरणम् । ज्योतिष्टोमे कृष्णविषाणाप्रासनं प्रतिपत्तिः ॥

**उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात्, तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिः स्यात् । ४।२।७।१९ ॥**

**भाष्यम्**— अथवा अधिकरणान्तरम् । विषाणायाः कण्डूयनं प्रासनं चोभयमपि प्रयोजकमिति पूर्वः पक्षः । एकनिष्पत्तेः सर्वं समं स्यादिति उत्तरः पक्षः । कण्डूयने तृतीयानिर्देशात् विषाणाया गुणभावः, प्रासने च द्वितीयानिर्देशादन्यत्र च कृतार्थत्वात् प्राधान्यमिति ।

**शा**— 'कृष्णविषाणया कण्डूयते' इति विधाय श्रूयते 'चात्वाले कृष्णविषाणां प्रास्यति' इति । तत्र संशयः किं चात्वाले प्रासनम् अर्थकर्म, उत प्रतिपत्तिरिति । तत्र '**न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम् । प्रतिपत्तिरतो नेयमिडा स्विष्टकृदादि च ॥**' उच्यते । '**कृतार्थमपि च द्रव्यमाकीर्णकरमित्यतः । प्रतिपत्तिमपेक्षेत तद्विधानमतो वरम् ॥**'

**सोम**— अर्थकर्मत्वप्रतिपत्तित्वविचारसमाप्त्यनन्तरं प्रतिपत्तेरेव असंभावितत्वात् कथम् अर्थकर्मत्वप्रतिपत्तित्वविचारः इति प्रत्यवस्थानात् **संगतिः** । यद्यपि अग्रिमाधिकरणेऽपि प्रतिपत्तिविचारः क्रियते, तथापि सोमलिप्तनयनस्य अर्थकर्मत्वेऽपि अर्थाभिधानकर्मतया प्रयोजकत्वाभावात् प्रयुक्तिपर्यन्तस्तद्विचारः समाप्त एव ।

इदं सूत्रं पूर्वाधिकरणे दण्डप्रदानं कृष्णविषाणाप्रासनवत् प्रतिपत्तिः स्यात् इति पूर्वपक्षे दृष्टान्तीकृतप्रासनवैषम्यपरतया व्याख्याय क्रत्वन्तःपातिसकलकण्डूयनस्य विषाणाकार्यतया प्रासनानन्तरमपि कण्डूयनसद्भावेन विषाणायाः कृतार्थत्वाभावात् न प्रासनं प्रतिपत्तिः इति पूर्वपक्षं कृत्वा द्वितीयासंयोगात् प्रासनं प्रतिपत्तिः । न च तावता विषाणासंस्कार एव प्रासनमस्तु, न तु प्रतिपत्तिः इति वाच्यम् । तथात्वे प्रासनात् पूर्वभाविषु कण्डूयनेषु केवलविषाणायाः विनियोगः, तदनन्तरभाविषु तु प्रासनसंस्कृतायाः, इति 'विषाणया कण्डूयते' इति विधिवैरूप्य-

प्रसङ्गात् । न च एवम् 'अगारे गावो वास्यन्ताम्' इतिवत् चात्वालसंस्कारः प्रासनमस्तु, द्वितीया च अनीप्सितेऽस्तु इति वाच्यम् । तथात्वे सप्तम्याः लक्षणाऽऽपातात् । तस्मात् द्वितीयाबलात् प्रतिपत्तिः प्रासनम्, तद्बलाच्च प्रासनात् प्राचीनेष्वेव कण्डूयनेषु विषाणाविनियोगपर्यवसानात् कृतार्थत्वमुपपद्यते । इत्यधिकरणान्तरत्वेनापि भाष्यकारेण व्याख्यातम् । आचार्याणां तु " इडा- प्राशित्र- चतुर्धाकरण- शंयुवाककालभक्षरूपविशेषकार्याणाम् 'उत्पत्तौ येन संयुक्तम्' इत्यनेन प्रतिपत्तित्वस्य स्थितत्वात् " इति वदताम् इदमधिकरणान्तरम् इडाभक्षणस्विष्टकृदादिसर्वविषयमेवाभिमतम् । **सूत्रार्थस्तु**– उत्पत्तिसमये यत् येन संयुक्तम्, तत् तदर्थमेव स्यात्, तादर्थ्यस्य श्रुतिहेतुकत्वात् । तस्य उत्पत्तिसंयुक्तकार्योपयुक्तत्वात् अर्थान्तरसंबन्धे तत् अर्थान्तरं प्रतिपत्तिः स्यात् । अत्र उत्पत्तिग्रहणं प्रदर्शनार्थम् । अन्यत्र कृतार्थानाम् अन्यत्र गमनं प्रतिपत्तिः इत्येव लक्षणम् । अन्यथा प्रणीतानिनयनादेः अप्रतिपत्तित्वापत्तिः ।

**वि**— 'चात्वाले कृष्णशृङ्गस्य प्रासो यः सोऽर्थकर्म वा । प्रतिपत्तिः, सार्थकत्वादाद्यो, ऽन्त्योऽस्तूपयोगतः ॥' तस्मात् प्रासनं प्रतिपत्तिः ।

**भाट्ट**— सोमे 'कृष्णविषाणया कण्डूयते' इति कण्डूयनाङ्गत्वेन कृष्णविषाणां विधाय पुनराम्नातम् 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति' इति । तत्र निनयनवत् प्रासनं प्रतिपत्तिरेव, द्वितीयासंयोगात् । न च दक्षिणादानोत्तरकालमपि दीक्षितस्य कण्डूयनसंभवात् कृतकरत्वाभावात् न प्रतिपत्त्यर्हता, अनन्यथासिद्धप्रतिपत्तिविधिबलादेव दक्षिणादानप्राक्कालभाविकण्डूयनस्यैव कार्यत्वावधारणात् । न च प्रतिपत्तिमात्रे कार्यस्य जातत्वेन संस्कारवैयर्थ्यापत्तेः विनियोगभङ्गेन सक्तुवदर्थकर्मत्वमेव स्यादिति वाच्यम् । जातेऽपि कार्ये उपयुक्तादिक निक्षेप्तव्यम् इत्यपेक्षा अस्त्येव इति प्रतिपत्तिनियमविधेरुपयोगोपपत्तेः । तज्जन्यनियमादृष्टस्य चोत्पत्त्यपूर्वे जातेऽपि तदव्यवहितकार्योत्पत्त्युपयोगियागापूर्वनिष्ठयोग्यताजनने एवोपयोगः । न तु तदकरणस्य तत्कार्यनाशकत्वकल्पनम्, प्रयाजादावपि अकरणस्य आग्नेयादिकार्यानुत्पादकत्वकल्पनाऽऽपत्तेः, अकरणत्वादेः कारणताऽवच्छेदकत्वकल्पने गौरवाच्च इत्यादि कौस्तुभे अपूर्वाधिकरणे (२।१।२) क्षुण्णम् । अत एव आहिताग्नेः परिधानीये कर्मणि पात्रासादनादिरूपप्रतिपत्तेरपि ऐहिककर्मातिरिक्तकर्माङ्गत्वस्यैव फलबलेन कल्पनात् ऐहिकफलोत्पत्तावपि न क्षतिरित्यपि तत्रैव क्षुण्णम् ।

**मण्डन**— 'प्रासो विषाणप्रतिपत्तिकर्म ।'

**शंकर**— 'विषाणप्रासनं तु न ।' अर्थकर्म न ।

* **कृष्णशकुनिः** (काकः) इत्यर्थो म्लेच्छप्रसिद्धो वराहशब्दस्य, स न ग्राह्यः, किन्तु सूकर इत्यर्थ एव आर्यप्रसिद्धो ग्राह्यः । यववराहाधिकरणम् । भा. १।३।४। ८-९.

* **कृष्णसारङ्गः** पशुरग्नीषोमीयः । 'कृष्णसारङ्गोऽग्नीषोमीयः' इति विधानात् । **मीन्या.**

* **कृष्णाजिनं** न संस्कारजनकं द्रव्यत्वात्, परन्तु तत् संस्कारव्यञ्जकं भवति । वि. ५।३।११, * कृष्णाजिनं यज्ञायुधम् । ३।१।५, * कृष्णाजिनं राजसूये नानाबीजेष्टौ तन्त्रेणैकम् (अवहननादौ) । ५।२।७, * **कृष्णाजिनास्तरणम्** अवघातपदार्थावयवः । ५।२।७.

※ **कृष्णाजिनास्तरणन्यायः** । राजसूये नानाबीजेष्टौ उलूखलमेकमेव ॥

**नानाबीजेष्वेकमुलूखलम्, विभवात् । ५।२।७।१३ ॥**

**भाष्यम्**— अस्ति राजसूये नानाबीजेष्टिः 'अग्नये गृहपतयेऽसितानामष्टाकपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुम्' इत्येवमादिः । अस्ति तु तत्र प्राकृतोऽवहन्तिः । तत्र संदेहः किं तत्र एकमुलूखलं पर्यायेण, उत यौगपद्येन बहूनि इति । कुतः संशयः ? यदि कृष्णाजिनास्तरणादयः पृथक् पदार्थाः, ततो भेदः । अथ कृष्णाजिनास्तरणादिः तण्डुलनिर्वृत्त्यन्तः एकः पदार्थः, ततस्तन्त्रमिति । किं तावत् प्राप्तम् ? एकमिति । कुतः ? पर्यायेण विभवात् । एकस्योपादानेन सिद्धेः द्वितीयस्योपादानमनर्थकं स्यात् । तस्मात् तन्त्रमिति ।



**टुप**— शूर्पमुसलकृष्णाजिनानि तन्त्रेणैव उपकुर्वन्ति (पक्षद्वयेऽपि । शूर्पादिग्रहणम्, सूत्रे उलूखलग्रहणं मुसलाद्युपलक्षणं मा विज्ञायि इति सूचयति) उलूखलम् (एव तु) चिन्त्यते (किं तन्त्रम्, उत पृथगिति) । तत्र येयं तन्त्रावापचिन्ता, इदमस्य (अधिकरणस्य) फलम् । (अधिकरणशरीरं तु अन्यदेव । तच्च संगतमेवेत्याह–) किं कृष्णाजिनास्तरणादिः तण्डुलनिर्वृत्त्यन्तः एक पदार्थः इति अयमस्य प्रसङ्गः (अवान्तरसंगतिरित्यर्थः । लक्षणसंगतिमाह–) क्रमान्यत्वमपि [दार्शिकावहननावयवक्रमात् क्रमान्यत्वम्] विद्यते एव ।

**विवृद्धिर्वा नियमानुपूर्व्यस्य तदर्थत्वात् । १४ ॥**

**भाष्यम्**— विवृद्धिः उलूखलानां स्यात् । नियतं हि आनुपूर्व्यं पाठकृतं सहत्वे सति उपपद्यते, पदार्थानां चानुसमयः । पृथक् पदार्थाश्च अधःस्तरणादयः, यतीभावस्य पर्यवसानात् । [यतिर्विच्छेदः इति छन्दोविदः । अयतेः यतेः भावः यतीभावः विच्छिन्नत्वम्, समाप्तिरिति यावत्, यतीभावस्य] अधःस्तरणादेश्च पदैरभिधानात् । तस्मात् विवृद्धिरिति ।

**एकं वाऽऽतण्डुलभावाद्धन्तेस्तदर्थत्वात् । १५ ॥**

**भाष्यम्**— एकं वोलूखलं पर्यायेण स्यात् । एको हि अधःस्तरणादिः तण्डुलपर्यन्तः पदार्थः । स्तरणादिः हन्तेरुपक्रमः, फलीकरणान्तश्च तस्यैव शेषः । यतो हन्तिः तण्डुलनिष्पत्त्यर्थः । एवं स्तरणादीनां हन्तेश्च नादृष्टार्थता भविष्यति । तस्मात् तन्त्रमिति ।

**शा**— फलविचारोऽयम् (तन्त्रावापचिन्तायाः) । '**तत्र नानापदार्थत्वं विधिभेदेन मन्यते । तण्डुलीकरणांशत्वादपृथक्त्वं तु गम्यते ॥**' यद्यपि 'कृष्णाजिनमधस्तादवस्तृणाति' 'शूर्पेण विविनक्ति' इति विधिभेदः, तथापि तण्डुलभावनाऽवयवत्वेन तद्विधानं न स्वातन्त्र्येण, अदृष्टार्थत्वप्रसङ्गात् । एका चासौ तण्डुलभावना ।

**सोम**— पूर्ववत् इहापि प्रत्येकमनुसमयः इति प्रत्यवस्थानात् संगतिः । पूर्वपक्षेऽपि एकस्मिन्नेव कृष्णाजिने बहूनामुलूखलानां अधिवर्तनसंभवात् एकेनैव मुसलेन शूर्पेण च पर्यायतः अवहननपरावपनादिसिद्धेः कृष्णाजिनमुसलशूर्पाणां तन्त्रत्वमेव इत्याशयेन **सूत्रे** उलूखलमात्रनिर्देशः ।

**वि**— 'नानाबीजेषु नानात्वमुलूखल उतैकता ।, अजिनास्तरणादीनां भिन्नत्वात् स्यादनेकता ॥, स्तरणादौ तण्डुलान्ते पदार्थैक्यादनुक्रमात् । उलूखलैक्यं नीवारश्यामाकादिष्ववस्थितम् ॥'

**भाट्ट**— राजसूये 'अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणाम्, सोमाय वनस्पतये श्यामाकं चरुम्' इति नानाबीजेष्टिराम्नाता । तत्र अतिदेशप्राप्तानि कृष्णाजिनास्तरण–उलूखलाधिवर्तन–बीजावाप–अवघात–परावपन–विवेचन– फलीकरण– पात्र्यधिकरणकतण्डुलप्रक्षालनानि तत्तद्विधिविहितत्वेन पृथक्पदार्थत्वात् प्रत्येकम् अनुसमेयानि । नहि अत्र द्व्यवदानस्य अवत्तहोमविध्याक्षिप्तत्ववत् सर्वेषाम् अवघातविध्याक्षिप्तत्वम्, येन एकपदार्थत्वं शङ्क्येत, तद्व्यतिरेकेणापि अवघातसंभवात् । नापि सर्वेषामेव अवघातपदार्थत्वम् उलूखलमुसलसंयोगविशेषस्यैव सर्वौषधावघातवत् तत्पदार्थत्वात् । **अतः प्रत्येकानुसमये प्राप्ते**, तत्तद्विधिविधेयत्वेऽपि पृथक्पदार्थत्वे अदृष्टार्थत्वापत्तेः सर्वेषामेषां तण्डुलनिष्पत्तिफलकावघातविधिशेषत्वेनैव विधेयत्वात् एकपदार्थत्वावगतेः तावता अनुसमयः । एवं सति उलूखलमपि एकमेव इति सिध्यति पात्री च । इतरथा हि कृष्णाजिनमुसलशूर्पाणाम् एकत्वेन उपकारकत्वसंभवेऽपि उलूखलपात्र्योर्भेदावश्यम्भावात् । तस्मात् कृष्णाजिनास्तरणादिपात्र्यधिकरणकतण्डुलप्रक्षालननिनयनान्तेन अनुसमयः । उत्करे तत्प्रतिपत्तिस्तु तन्त्रेण इति विवेकः । एवं कृष्णाजिनास्तरणादिपेषणान्तेन तस्याप्यनुसमयः । तेषामपि पेषणविध्येकवाक्यतया एकपदार्थत्वात् ।

**ननु** अत्र किम् अनुसमेयपदार्थानां पदार्थत्वम् ? न तावत् अनुष्ठेयत्वम्, एकमुष्टिनिर्वापादौ अतिव्याप्तेः । नापि विहितत्वघटितमङ्गत्वम्, द्रव्यादावतिव्याप्तेः । नापि क्रियात्वविशेषितं तत्, उपस्तरणकृष्णाजिनास्तरणादौ अतिव्याप्तेः । नापि परानवयवत्वे सति निरुक्तक्रियात्वम्, अवयवत्वस्यापि निर्वक्तुमशक्यत्वात् । दृष्टविधया क्रियान्तरोपकारकत्वमिति चेत्, अवघातस्यापि दृष्टविधया

यागपेषणाद्युपकारकत्वेन अवयवत्वापत्तौ अवघातादि-पेषणान्तेन अनुसमयापत्तेः। अवघातकालीनतदङ्गजपादि-मन्त्राणाम् अदृष्टविधया उपकारकत्वेन अवयवत्वाना-पत्तेश्च। किञ्च सत्यपि अवयवत्वे कृष्णाजिनास्तरणादीनां विहितत्वेन अङ्गत्वात् प्रयोगविध्युपसंग्रहेण साहित्यावगतेः प्रत्येकानुसमयः किं न स्यात्। एवं द्व्यवदानस्यापि होमवत् हविःसंस्कारकत्वात् पेषणावघातन्यायेन (३।३।१३) प्रत्येकानुसमयः किं न स्यात्। इति चेत्, न। सत्यपि कृष्णाजिनास्तरणादीनां स्वतन्त्रविधिविषयत्वे अङ्गत्वेन प्रयोगविधिप्रयोज्यत्वे वा अवघाताद्यङ्गत्वेन तद्द्वारैव प्रयोज्यत्वावगमात् तदनुसमयेनैव अनुसमयः, इति न प्रत्येकमनुसमयः, प्रत्येकं साहित्यानवगतेः। एवं परावपणादिप्रक्षालननिनयनान्तानामपि तण्डुल-रूपावघातफलोपयोगितया अवघातार्थत्वात् न पृथक्प-दार्थता। अत एव अदृष्टार्थमपि तदङ्गं न पृथक्पदार्थः। एवमुपस्तरणादेरपि स्रुचि असंसर्गद्वारा होमार्थत्वात् न स्वातन्त्र्येण प्रयोज्यता, इति न पृथगनुसमयः। द्व्यवदानस्य च हविःसंस्कारकस्यापि अवत्तोद्देशेन होमविधानात् लाघवेन अवत्तहोमस्यैव प्रयोज्यत्वम्। अवदानांशेऽपि पृथक्प्रयोज्यत्वाकल्पनात् न पृथक्पदार्थत्वम्। अत एव पदार्थत्वं नाम स्वातन्त्र्येण प्रयोगविधिविषयत्वम्। पदार्था-वयवत्वेन संमतानां हि कृष्णाजिनास्तरणादीनां न अव-घातादिनिष्ठप्रयुक्तिविषयत्वज्ञानं विना प्रयुक्तिविषयत्वं ज्ञायते। अवघातादीनां तु नान्यनिष्ठप्रयुक्तिविषयत्व-ज्ञानोत्तरकालत्वनियतं तज्ज्ञानम्, प्रयोगविधिना अङ्ग-प्रधानोभयविशिष्टभावनाप्रयुक्तिज्ञापनेन अङ्गप्रयुक्तेरपि प्रधानप्रयुक्त्यन्यथाऽनुपपत्तिप्रसूतत्वाभावात्। अतश्च यत्प्रयुक्त्यन्यथाऽनुपपत्तिं विनैव यत्प्रयुक्तविषयत्वज्ञानम्, स ततः पदार्थान्तरमिति सिद्धम्।

मण्डन— 'उलूखलैक्यं बहुबीजयागे।'

शंकर— 'नानाबीजेषु चाप्ययम्' (काण्डानु-समयः)।

* वक्ष्यमाणकृष्णाजिनास्तरणन्यायेन एकपदार्थत्वं सर्वोपधानस्य द्रष्टव्यम्। भाट्ट. ५।३।३. * कृष्णाजिना-स्तरणादिः तण्डुलप्रक्षालननिनयनान्तः एकः पदार्थः अवहननं नाम। भा. ५।२।७।१३, * कृष्णाजिना-स्तरणादितण्डुलप्रक्षालननिनयनान्तेन अनुसमयः नाना-बीजेषु। ५।२।७।१३-१५.

* कृष्णादिव्रीहिभिः सोमारौद्रादौ विहितैः प्राकृत-यवादीनां बाधः। भा. १०।७।१९।६४-७१.

* कृष्णार्जुनयोः क्षत्रियत्वात् पैष्टीपानं विरुद्धमेव। मध्वासवपानं तु अविरुद्धम्। सु. पृ. १९५.

* क्लृप्तं कल्प्याद् बलवत्। चोदकप्राप्तः क्रमः क्लृप्तः, प्रयोगवचनात्तु कल्प्यः। ततश्च अध्वरकल्पा-याम् आग्नेयविकारबार्हस्पत्यचरुनिर्वापः पूर्वम्, ततः उपांशुयाजाज्यविकारसारस्वताज्यनिर्वापः। शा. ५।१।१०. * क्लृप्तं कल्प्यात् बलीयः। न च क्लृप्ते उपपद्यमाने कल्प्यः शक्यः कल्पयितुम्। भा. ३।८।२।६, * न च क्लृप्तमुज्झित्वा कल्पनीयसंबन्धो न्याय्यः। १०।७।९।३३.

𝕏 'क्लृप्तेन विनिगमनाविरहे कल्प्यमन्यत् सिध्यति' इति न्यायः। रहस्य. पृ. ११.

𝕏 'क्लृप्ते सामान्यान्वयप्रकृतमन्त्रविधौ विशेषान्वयविधिमात्रेण आग्नेयीवत् द्व्यर्थत्वोपपत्तेः सामान्यविशेषान्वयकल्पनाऽऽपादकम् आग्नेयी-मात्रग्रहणं न युक्तम्' इत्यनेनैव न्यायेन प्रकृत-मात्रग्रहणरूपविशेषसिद्धिः। सु. पृ. ११३३.

* क्लृप्तया रूढ्या योगो बाध्यते यथा रथकारः इति। (रथकारशब्देन रूढ्या जातिविशेषस्य ग्रहणम्, न तु 'रथं करोति' इति योगेन त्रैवर्णिकस्य इति) बाल. पृ. १४५. * क्लृप्तायां सत्यां श्रुतिः कल्पयितुं न शक्यते। वा. ३।२।८।२२ पृ. ७७९.

𝕏 क्लृप्तकल्पनान्यायः (क्लृप्तं कल्प्याद् बलीयः)। यद्यपि पिकनेमादिपदे म्लेच्छप्रसिद्धिः समुदायप्रसिद्धिरूपा क्लृप्ता च, निगमादिप्रसिद्धिस्तु अव-यवप्रसिद्धिरूपा कल्प्या च। अतश्च रथकाराधिकरणन्यायेन क्लृप्तकल्पनान्यायेन च म्लेच्छप्रसिद्धेरेव बलीयस्त्वं भवेत्। तथापि निगमादिवैयर्थ्यापत्तेः आनर्थक्यप्रतिहत-न्यायेन म्लेच्छप्रसिद्धेरेव दौर्बल्यमभ्युपगन्तुं युक्तम्। कौ. १।३।५।१० पृ. ८०। अयं च न्यायः श्रताधिकरणप्रतिपाद्यः। ४।३।४।८-९. * क्लृप्तकल्प्यो-



पस्थितयोर्विशेषणयोः क्लृप्तोपस्थितिकस्यैव लाघवेन ग्राह्यत्वम्। पराक्रमः. २६।२.

* क्लृप्तजातिवाचित्वेन संस्कारनिमित्तत्वं बाध्यते यथा बर्हिराज्यपुरोडाशादौ। बाल. पृ. १४५. * क्लृप्तप्रयोगं परित्यज्य कल्प्यरूढ्याश्रयणायोगात् अग्नीवरुणौ स्विष्टकृच्छन्दसहितौ वक्तव्यौ। वि. १०।४। १९. * क्लृप्तयोगेन संस्कारनिमित्तत्वं बाध्यते यथा प्रोक्षणीशब्दे। बाल. पृ. १४५, * क्लृप्तलक्षणया अक्लृप्ता लक्षणा बाध्यते यथा 'ऋग्भिः प्रातर्दिवि देव ईयते०' इत्यत्र ऋगादिशब्दानां वेदपरा लक्षणा क्लृप्ता, 'उच्चैर्ऋचा क्रियते' इत्यत्र ऋगादिशब्दा एव वेदपराः, वेदपदं न ऋगादिलक्षणम्, तल्लक्षणायाः अक्लृप्तत्वात् इति। पृ. १४३. * क्लृप्तावयवार्थप्रत्यभिज्ञाने समुदायशक्तिकल्पनाऽयोगः। सु. पृ. १२००, * क्लृप्तो-पकारकत्वेन प्राकृतानामङ्गानां निराकाङ्क्षीकरणसामर्थ्यं गृहमेधीयाधिकरणे वक्ष्यते। पृ. ११९७.

𝕏 'क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैः सह। संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम्॥' (वा. २।१।४।१२ पृ. ४१४) इति न्यायः। आनु-मानिकेभ्यः प्राकृतेभ्यः अङ्गेभ्यः प्राक् प्रत्यक्षत्वात् वैकृता-ङ्गप्राप्तेः बर्हिर्लुनाति इत्यतिदिष्टया श्रुत्या प्राकृतवैकृतबर्हि-रुद्देशेन लवनविधानात् सर्वार्थत्वम्, इति पूर्वपक्षयित्वा क्लृप्तोपकार० इति न्यायेन आनुमानिकत्वेऽपि क्लृप्तोप-कारत्वात् प्राकृतसंस्कारविधौ अपूर्वस्य अनुद्देशः इति निराकृतम्। सु. ३१७ पृ. ७९.

𝕏 क्लृप्तोपकाराङ्गसंभवे कल्पनागौरवापाद-काक्लृप्तोपकाराङ्गानां नाकाङ्क्षा इति न्यायः 'निर्देशात्तु०' (३।८।१६।३१) इत्यधिकरणस्य स्वरूपभूतः। सु. पृ. ६३४.

𝕏 क्लृप्त्यधिकरणम्। वाजपेये क्लृप्त्यादिमन्त्र-वाचनम् अभिज्ञस्यापि यजमानस्य॥

ज्ञाते च वाचनम्, नह्यविद्वान् विहितोऽस्ति। ३।८।८।१८॥

भाष्यम्—वाजपेये श्रूयते 'क्लृप्तीर्यजमानं वाचयति' 'उज्जितीर्यजमानं वाचयति' इति। अत्र संदेहः किं ज्ञश्च अज्ञश्च सर्वो वाचयितव्यः, उत ज्ञः एवेति। किं प्राप्तम्? अविशेषात् ज्ञश्च अज्ञश्च। इति प्राप्ते, ब्रूमः। ज्ञः एवेति। कुतः? नहि अविद्वान् विहितोऽस्ति। यो हि अविद्वान् नासौ अधिकृतः, सामर्थ्याभावात्। ननु प्रयोगकाले शिक्षित्वा प्रयोक्ष्यते, सामर्थ्यात् अधिक्रियेतेति। नेति ब्रूमः। वेदाध्ययनात् उत्तरकाले प्रयोगः श्रूयते। न प्रयोगश्रुतिगृहीतं वेदाध्ययनम्। कुतः? अनारभ्य कर्माणि वेदाध्ययनं श्रूयते 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति। सति एतस्मिन् वचने 'अग्निहोत्रं जुहुयात्' इत्येवमादिभिः वेदोऽध्येतव्यः इति एतदुक्तं भवति इति न शक्यते कल्पयितुम्। तत्र होममात्रे चोदिते वेदाध्यायी शक्तः इति अधिक्रियते, नाविद्वान्। कियता पुनः विदितेन विद्वान् अधिक्रियते इति? यावता विदितेन शक्तो भवति यथोक्तं क्रतुम् अभिनिर्वर्तयितुं तावत् यो वेद, स तेन क्रतुना अधिक्रियते। ननु 'वेदमधीयीत' इति वचनात् कृत्स्नो वेदः अध्येतव्यः इति भवति, न वेदावयवेन अधिक्रियते इति। उच्यते। क्रतूनां ज्ञानार्थं वेदाध्ययनं कार्यम्। तत्र अन्यस्मिन् क्रतौ कर्तव्ये अन्यक्रतुज्ञानं न दृष्टाय भवति। तस्मात् क्रत्वन्तरज्ञानम् अधिकारे नादर्तव्यम्। क्रत्वन्तरज्ञानाय क्रत्वन्तरग्रन्थः। सर्वे क्रतवः कथं ज्ञायेरन् पृथक्पृथक् इति कृत्स्नस्य वेदस्य अध्ययनं श्रूयते। तस्मात् स्वपदार्थज्ञः अधिक्रियेत इति। तेन अस्वपदार्थज्ञस्य कर्मैव नास्ति, कथमसौ वाच्येत। तस्मात् साधु अभिधीयते ज्ञः एव वाचयितव्यः इति।

वा— यत्र 'यजमानं वाचयति' इति श्रूयते, तत्र अविद्वानपि खण्डशः शक्यो वाचयितुम् इति अनियमः। अथवा विद्वान् स्वयमेव ब्रूयात्, तत्र प्रयोजकव्यापारवैयर्थ्यं भवेत्। तस्मात् अविद्वानेव वाचयितव्यः। इति प्राप्ते-ऽभिधीयते। नहि अविद्वान् विहितोऽस्ति इति। यदि कामश्रुतिपरिगृहीतं वेदाध्ययनं भवेत्, ततः प्रयोगकाले-ऽपि अध्याप्येत, तत्तु आधानवत् अनारभ्य विधीयते 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति। तथा सति च अर्थापत्त्यभावात् सिद्धमेवेदं सर्वकर्माणि अग्निवत् गृह्णन्ति, न शिक्षणं प्रयुञ्जते। न च शिक्षितो वेदो भवति (अत्र अशिक्षितो वेदो भवति इति पाठो युक्तो भाति तथापि

सुधायाम् 'विशिष्टानुपूर्वीकस्य अक्षरराशेर्वेदत्वेन क्लृप्त्यादिमन्त्रमात्रस्य शिक्षितस्य वेदत्वाभावात् वेदात्मकानामेव च मन्त्राणां स्वाध्यायविधिसामर्थ्यात् कर्माङ्गत्वावगतेः' इति अवतरणात् यथामुद्रित एव पाठः समीचीनः— के. )। तस्मात् प्राक् कर्मणो ये मन्त्राः पठिताः, ते अङ्गत्वं प्रतिपद्यन्ते इति नाविदुषः अधिकारोऽत्र । शक्यते च तत्रापि प्रैषात् प्रयोजकव्यापारस्य अर्थवत्ता, सत्यामपि शक्तौ अप्रयुक्तो न ब्रूयात् इति । तच्च प्रयोजकत्वं द्वेधा भवति, यदि वा खण्डशः समर्प्यते, अथवा 'ब्रूहि' इत्यभिधीयते, इति यथेष्टं कर्म । 'कियता पुनः विदितेन' (इति भाष्यं), वैशेषिकादयः स्वशास्त्रेणापि अनधिगतेन अनधिकारं वदन्ति इति स्पष्टनिरूपणार्थे पृच्छति । ( वैशेषिकैः 'अथातो धर्मं व्याख्यास्यामः' १।१।१ इति स्वशास्त्रस्य धर्मव्याख्यार्थत्वोक्त्या स्वशास्त्राधीनो धर्माधिकार उक्तः । सु. ३।७ पृ. ६३ )। तत्र विद्वत्तायाः शक्त्युत्पादनद्वारेण प्रत्यक्षेणैव उपकारित्वात् 'यावता विदितेन' इत्याह (भाष्यकारः)। यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतः, तथापि दर्शपूर्णमासौ कुर्वाणस्य ज्योतिष्टोमिकमन्त्रब्राह्मणं न क्वचिदुपयुज्यते इति अमदपि नाधिकारं व्यावर्तयति, इष्टिवेदेनैव योग्यतायाः सिद्धत्वात् । तेन तद्याजिनः तावानेव स्वाध्यायः । यत्तु असौ सकलः पठ्यते, तत् नित्य-काम्य- नैमित्तिकानां कर्मणां यथोपपन्नकालत्वात् न ज्ञायते 'कतरत् कदा करिष्यते' इति । तत्र कदा चित् यत् न पठितं तत्फलप्रार्थनानिमित्तं वा अस्योपजायते, तत्र तदविद्वत्त्वात् (तस्य विद्वान् तद्विद्वान्, न तद्विद्वान् तदविद्वान्, तस्य भावः तदविद्वत्त्वम्, तस्मात् इति विग्रहः। के. ) अशक्नुवन् विहन्यते । तदानीं वा अधीयानस्य व्रतनियमवदध्ययनासंभवात्, कर्मभिश्च विशिष्टक्रियोपात्तवेदनिराकाङ्क्षैः तादृशस्य अग्रहणात् वैगुण्यप्रसङ्गः । कामश्रुत्यपरिग्रहाच्च सर्वैः अनारभ्यवादविध्यधीतो वेदः अपेक्षितः, इत्यवश्यं ब्रह्मचर्यकाले एव समस्तो वेदोऽध्येतव्यः । यदि तु कश्चित् अशक्तो नाधीते सकलम्, अग्निहोत्रदर्शपूर्णमासमात्रम् (तु) कथञ्चित् अधिगच्छति, न तस्य तत्र अनधिकारः । एवं च सति बाह्यज्ञानं दूरविप्रकृष्टमेव । यत्तु आत्मज्ञानम्, तेन विना प्रवृत्तिरेव नास्ति, अतः सर्वकर्मार्थम् अङ्गीकर्तव्यम् ।

**शा**-- याजमानमन्त्रप्रसङ्गात् चिन्त्यते । तत्र '**अविशेषादुभौ ( ज्ञः अज्ञश्च ) यद्वा स्वयमेव वदेद् बुधः । अज्ञस्तु वाच्यते, नैवं नह्यज्ञो विद्यते क्रतौ ॥ अधिकारो हि विदुषां नान्येषामिति निश्चयः । ब्रूहीति स्मारणाद् ज्ञस्य संभविष्यति वाचनम् ॥**'

**सोम**— 'आयुर्यज्ञेन कल्पताम्' इति क्लृप्त्यर्थकशब्दयुक्ता मन्त्राः क्लृप्तयः ।

**वि**-- 'वाचयेत् स्वामिनं ज्ञाज्ञौ वाचनीयौ ज्ञ एव वा ।, अविशेषादुभौ, ज्ञस्य स्वामित्वाद् वाचयेदमुम् ॥'९.

**भाट्ट**-- वाजपेयादौ यत्र 'क्लृप्तीर्यजमानं वाचयति' इति श्रुतम्, तत्र याजमानो मन्त्रः, वाचनमाध्वर्यवम् इत्यविवादम् । परन्तु वाचयतेः ब्रह्मचारिणो गायत्र्युपदेशादौ शिक्षणवाचित्वेन क्लृप्ततया प्रकृतेऽपि शिक्षणविधायित्वावगतेः, तस्य च अदृष्टार्थत्वप्रसङ्गेन ज्ञातरि असंभवात्, उक्तविधाङ्गानुरोधेन अज्ञ एव वाजपेयादौ अधिकारी । अतोऽन्येषां क्रतूनामध्ययनविधिसिद्धज्ञानोपजीवनेन ज्ञात्रधिकारिकत्वेऽपि वाजपेयादौ तदसंभवात् अज्ञस्यैव वाचनम् । इति प्राप्ते, वाचयतेः वचनानुकूलव्यापारमात्रवाचित्वेन क्वचिदन्यथाऽनुपपत्त्या शिक्षणग्रहणेऽपि स्मारणमात्रग्रहणेनापि प्रकृते वाचनोपपत्तेः अज्ञानाक्षेपकत्वे ( अज्ञस्य आक्षेपकम्, न भवति तत् अज्ञानाक्षेपकम्, तस्य भावे इत्यर्थः ) प्रमाणाभावात् तज्ज्ञे एव वाचनम् । तच्च खण्डशो वा, 'इमं मन्त्रं ब्रूहि' इत्येवं वा इत्यन्यदेतत् ।

**मण्डन**— 'क्लृप्त्यादयः स्युर्विदुषैव वाच्याः ।'९.

**शंकर**— 'ज्ञ एव वाच्यः क्लृप्तीश्च ।' ११.

* **केन्-प्रत्ययः** कृत्यार्थः प्रतिषेधो यथा 'नावगाहे' नावगाहितव्यमित्यर्थः इति काशिकायाम् । बाल. पृ. ४०, केन्- प्रत्ययः कृत्यार्थः विधौ यथा 'अवगाहे' अवगाहितव्यम् इत्यर्थः । पृ. ४०.



* **केन्य-प्रत्ययः** कृत्यार्थः प्रतिषेधे मृग्यः । बाल. पृ. ४०, * केन्यप्रत्ययः कृत्यार्थः विधौ यथा 'शुश्रूषेण्यः' शुश्रूषितव्यम् इत्यर्थः । बाल. पृ. ४०.

* **केवलान्वयिव्यतिरेकिहेत्वोः** पञ्चरूपोपपन्नत्वाभावेन अनुमापकत्वाभावात् । एवं च केवलान्वयिव्यतिरेक्यनुमानमेव नास्ति । मणि. पृ. ३१.

* **केशकीटादिभिः** दूषितमन्नम् आर्यैरभोज्यम् । तच्च 'व्यापन्नमप्सु हरन्ति' इति वचनादप्सु त्यक्तव्यम् । वि. ६।५।१६. * **केशकीटावपन्नादि** यदभोज्यमार्याणाम्, तत् व्यापन्नं नाम । भा. ६।५।१६।४८.

**केशश्मश्रुन्यायः** । स्त्रियाः यावदुक्ते एव कर्मणि अधिकारः ॥

**तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् । ६।१।६।२४ ॥**

**भाष्यम्**-- 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्येवमादिषु एतदुक्तं स्त्रीपुंसयोः सहाधिकार इति । अथेदानीं संदिह्यते किं सर्वं याजमानं पत्न्या कर्तव्यम्, उत यावदुक्तम् आशीः ब्रह्मचर्यं चेति । किं प्राप्तम् ? सर्वं याजमानं पत्न्याः स्यात् । साऽपि हि यजमाना, तुल्यत्वात् । तस्मात् सर्वं तस्याः इति । एवं प्राप्ते, ब्रूमः । तस्याः यावदुक्तं स्यात् वचनप्रामाण्यात् । आशीः ब्रह्मचर्यं च स्यात् । कस्मात् ? अतुल्यत्वात् । अतुल्या हि स्त्री पुंसा । यजमानः पुमान् विद्वांश्च, पत्नी स्त्री च अविद्या च । किमतो यदि एवमतुल्यत्वम् ? एतदतो भवति, क्रत्वर्थेषु यानि याजमानानि श्रवणानि, तेषु उपादेयत्वेन श्रवणात् विवक्षितं लिङ्गम् । तेन तेषु पत्नी न स्यात् । यानि च क्रत्वर्थानि समन्त्रकाणि, तेषु अविद्यत्वात् पत्नी न स्यात् । तत् पत्न्याः अध्ययनस्य प्रयोजकं स्यात् इति यदि उच्येत । तन्न । असत्यपि प्रयोजकत्वे तस्य निर्वृत्तिर्भविष्यति । अस्ति हि तस्य पुमान् निर्वर्तकः । यच्च क्रत्वर्थम्, तत् एकेन येनकेनचित् निर्वर्तयितव्यम् । तस्मात् प्रतिषिद्धस्य पत्न्याः अध्ययनस्य पुनः प्रसवे न किञ्चिदस्ति प्रमाणम् । अतः तदपि पत्नी न कुर्यात् । यास्तु आशिषः यच्च ब्रह्मचर्यम्, तत् पुरुषं प्रति गुणभूतम्, न तत्र अन्यतरेण कृते सिध्यति । अन्यतरस्य हि संस्कारो हीयेत । न च तत्र उपादेयत्वेन यजमानस्य श्रवणम् । तस्मात् लिङ्गमपि अविवक्षितम् । अतः आशीः ब्रह्मचर्यं च उभयोरपि स्यात्, यच्च आहृत्य उच्यते, यथा 'पत्नी आज्यमवेक्षते' इति । तस्मात् अतुल्यत्वात् असमानविधाना पत्नी यजमानेन भवितुमर्हति इति ।

**टुप्**-- ( आशीःशब्देन 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादिमन्त्रवचनमुच्यते । तच्चायुक्तम्, अविद्यायाः स्त्रियाः मन्त्रवचनासंभवात् । तत्राह– ) आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते । ( आदिशब्देन अञ्जनाभ्यञ्जनस्नानादीनां ग्रहणम् । केशश्मश्रुवपनग्रहणं च संभवत्संस्कारोपलक्षणार्थम् । नहि पत्न्याः केशश्मश्रुवपनमस्तीति द्वितीये व्याख्याने वक्ष्यामः )। ते उभयोरपि भवन्ति । पुरुषार्थत्वेन ब्रह्मचर्यमुक्तम्, तथा क्रत्वर्थत्वेनापि दृश्यते ( प्राकरणिकेन वाक्येन )। एवं चेत् ( क्रत्वर्थत्वे सति ) अब्रह्मचर्येण क्रतोः वैगुण्यम् ( स्यात् )। इतरथा ( क्रत्वर्थत्वाभावे, तस्य केवल– ) पुरुषार्थत्वात् ( तद्धानावपि क्रतोर्वैगुण्यं ) न स्यात् । ( तस्मात् आशीः ब्रह्मचर्यं च यावदुक्तं पत्न्याः स्यात् । ततोऽन्यत्तु याजमानं पुरुषे एव । कथम् ? तत्र– ) 'शुक्रं यजमानोऽन्वारभते' इत्येवमादिषु ( तावत् ) तस्य ( यजमानस्य ) उपादीयमानत्वात् पुंलिङ्गं विवक्षितम् । याजमानकाण्डेऽपि ये समाम्नायन्ते ( समाख्यायन्ते इति मुद्रितपाठो रत्नपाठश्च ) तेऽपि यजमानकर्तृका एव । ( कथम् ? ) तत्र ये मन्त्राः, ते ( तावत् ) यजमानेनैव उच्चारणीयाः । कथम् ? स हि विद्वान् ( अध्ययनवत्त्वात् ) इतरा तु अविद्या । अन्यथाऽनुपपत्त्या ( सा ) अध्येष्यते इति चेत्, ( निराकरोति– ) साऽपि ( अन्यथाऽनुपपत्तिः ) यजमानविद्वत्तया क्षीणा, तदीयेनैव अध्ययनेन ( क्रतोः ) निराकाङ्क्षत्वात् न प्रतिषिद्धमध्ययनम् ( स्त्री ) करिष्यति । एवं चेत् 'याजमानम्' इति अन्यतरस्मात् तद्धितोत्पत्तौ कृतायां येऽपि अमन्त्रवन्तः पदार्थाः, तानपि यजमान एव करिष्यति । ( तदेव व्यनक्ति– ) यद्यपि तेषु अवैद्यत्वम् ( विद्याहीनत्वम् )

नास्ति दोषः, तथापि यजमानेनैव केवलेन, तद्धितस्य उत्पद्यमानत्वात् ( उपपद्यमानत्वात् ) न पत्न्या अनुष्ठानम्। न च पत्नीयजमानयोः कृतैकशेषयोः ( यजमानश्च यजमाना च यजमानौ तयोः कर्म याजमानम् इति ) तद्धितः, प्रमाणाभावात्।

[ द्वयाधानं च० तस्या यावदुक्तं० इत्यधिकरणद्वयं वार्तिककारैः प्रकारान्तरेण पुनर्व्याख्यातम्। तत्र द्वितीयाधिकरणस्य व्याख्या इत्थम्– ] ( सर्वं याजमानम् उभाभ्यामपि कर्तव्यम् उभयोरपि यजमानत्वात्। इति प्राप्ते, सिद्धान्तमाह– ) 'शुक्रं यजमानोऽन्वारभते' इत्येवमादिषु ( तावत् यजमानस्योपादेयत्वात् तद्गतयोः ) पुंस्त्वैकत्वयोः विवक्षितत्वात् पुमान् ( एव ) प्रत्येतव्यः। न च ( 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादि– ) आशीर्वचनं तस्याः। कुतः ? 'ब्राह्मणमुपनयीत' इति आचार्यकरणे नयतेरात्मनेपदं भवति ( तेन आत्मनेपदवशात् ) देवदत्तः ( उपनयनेन ) आत्मनः आचार्यत्वं भावयति। तत्र देवदत्तः उपनयनफलम् ( आचार्यत्वम् ) भजमानः प्रधानभूतः। ( अष्टवर्षस्य ) माणवकस्य तु ( उपनयनं प्रति ) उपादीयमानत्वात् लिङ्गसंख्यं विवक्षितम्। स तु ( देवदत्तः ) वेदमध्यापयन् आचार्यो भवति नान्यथा। तस्मात् ( अध्ययनाध्यापनयोः पुंविषयत्वात् ) पुंसः ( एव ) अध्ययनं विहितम्, इतरस्याः ( तु स्त्रियाः ) विधानाभावात् अवैद्यता। न च ( आशीर्वचना– ) अन्यथानुपपत्त्या अध्ययनं तस्याः ( कल्पयितुं शक्यम् ), अन्यथाऽपि ( पुंविद्वत्तयैव आशीर्वचनस्य ) उपपद्यमानत्वात्। ( यत एवं न्यायादेव सिद्धमनध्ययनम् ) अतः प्राप्तोऽध्ययनप्रतिषेधः। ( पक्षान्तरमाह– ) अथवा स्मृतेः ( प्रमाणात् ) प्रतिषेधः। ( कथं तर्हि सूत्रमत आह– ) एवं चेत् आशीःशब्देन संस्कारा लक्ष्यन्ते, ते उभयोरपि भवन्ति। ( कुतः ? ) तत्र ( हि ) लिङ्गसंख्यमविवक्षितम्। ( संस्कारेष्वपि– ) न च पत्न्याः वपनम्। किं कारणम् ? 'केशश्मश्रु ( वपते )' इति द्वंद्वोऽयम्। तत्र ( केशश्मश्रुणोः ) इतरेतरयोगे वपनं निष्पद्यते। ( न च पत्न्याः तयोः साहित्यमस्ति श्मश्रुणः अभावात् )। ननु केशश्मश्रुणोः संस्कार्यत्वात् ( तद्गतं द्वंद्वावगतम् ) साहित्यमविवक्षितम्। उच्यते। ( न तयोः संस्कार्यत्वं भूतभाव्युपयोगित्वाभावात्। तथाहि, ) तयोः अपनीतयोः अन्यत्र किञ्चित् प्रयोजनं श्रूयते, येन संस्क्रियेयाताम्। वपनेन अपनीताश्च ( श्मश्रुकेशाः ) अमेध्या भवन्ति। न च कृतप्रयोजनाः। ततः पुरुषः वपनेन संस्क्रियते। तस्मात् केशश्मश्रुणोः संस्कारार्थत्वेन उपादानात् विवक्षितं साहित्यम्। ( एवमसंभवात् स्त्रियाः वपनस्य निवृत्तिः। एवम् आशीःपदमनुसंधाय ब्रह्मचर्यपदमनुसंधत्ते– ) ब्रह्मचर्यं क्रत्वर्थतया यदि न विधीयते, ततः ( तल्लोपेऽपि ) क्रतुरविगुणः, किन्तु पुरुषस्य वैगुण्यम्। ( विधाने तु सति क्रत्वर्थतया तद्धानौ क्रतुवैगुण्यं स्यात् ) तस्मात् ( पुरुषार्थवाक्येन ) अप्राप्तत्वात् विधेयम् ( एव )।

( एवं ब्रह्मचर्यपदं यथाश्रुतं व्याख्याय आक्षिपति– ) संस्कारेण गतार्थत्वात् ( संस्कारबोधकाशीःपदात् पृथक् ) अवाच्यम् ( आक्षेपं स्वीकृत्य ब्रह्मचर्यमन्यथा व्याचष्टे– ) अतो ब्रह्मचर्येण कामा लक्ष्यन्ते। ते ( च ) पत्न्याः अपि संभवन्ति। ( चोदयति– ) येषु नावैद्यतादोषः ( अमन्त्रकत्वात् ) न चोपादीयमानता ( शुक्रान्वारम्भणादिवत् ) तत्र ( अयम् ) नियमः इति चेत्। न। तत्रापि मुख्यत्वात् ( स्वतन्त्रत्वात् ) यजमान एव भवति ( कर्ता, न पत्नी परतन्त्रत्वात्। परिहारान्तरमाह– ) अथवा, यद्यपि अमन्त्रकास्ते पदार्थाः, तथापि विद्वत्तया तेषु यजमानेन क्रियमाणेषु ( पदार्थेषु ) प्रमादो न भविष्यति। ( पत्नी तु प्रमाद्येत )। न च ( पदार्थकरणस्य ) अन्यथाऽनुपपत्त्या तस्याः ( अध्ययनादिकल्पनया ) विद्वत्ता शक्या कल्पयितुम्, तदीयया ( यजमानसंबन्धिन्या विद्वत्तया ) क्रतोर्निराकाङ्क्षत्वात्। ( परिहारान्तरमाह– ) अथवा ( योऽयं समाख्यागतः ) 'याजमानम्' इति तद्धितः, ( सः ) स्त्रीप्रातिपदिकात् ( यजमानशब्दात् वा ) उत्पाद्यः, पुंप्रातिपदिकाद्वा ( यजमानशब्दात् ) ? तत्र स्त्रीप्रातिपदिकादुत्पत्तौ ( अभ्युपगम्यमानायाम् ) समन्त्रकेषु विरोधः ( स्यात्, स्त्रियाः अनधिकारात् )। न तु पुंप्रातिपदिकात् उत्पत्तौ कश्चित् विरोधः ( पुंसः सर्वत्र



कर्तृत्वोपपत्तेः। तस्मात् ( पुंप्रातिपदिकात् तद्धितोत्पत्तेः ) सर्वम् ( समन्त्रकममन्त्रकं च ) यजमानेन कर्तव्यम्। आहत्य विहितम् ( तु आज्यावेक्षणादि ) पत्न्या च ( यजमानेन च )। न च कृतैकशेषयोः तद्धितोत्पत्तिः, प्रमाणाभावात्। ( तस्मात् यजमान एव कर्ता, न पत्नी )।

शा— **'याजमानसमाख्यानं यजमानपदाद् यथा। निष्पद्यते, तथैवैतद् यजमानापदादपि॥' उच्यते 'विद्वत्तया पुमानेव कुर्यादविदुषीतरा। वेदाध्ययनशून्यत्वात्, प्रतिषिद्धं हि तत् स्त्रियाः॥'**

**सोम**–– पूर्वस्यैव विषयस्य विशेषविचारात् **संगतिः**।

**वि**–– 'उपस्थानादि दंपत्योरुत पुंसो, द्वयोरिदम्। यजमानत्वसाम्येन, विद्वत्त्वात् पुंस एव तत्॥'

**भाट्ट**–– स्थिते स्त्रिया सहाधिकारे यत्र तावत् स्वत्वत्यागः श्रुतः, तत् प्रधानं दक्षिणादानादि, तत् द्वाभ्यां कार्यमित्युक्तमेव। अत एव वरणादिद्वारा आर्त्विज्येषु अपि उभयोरपि प्रयोजककर्तृत्वम्। ये च फलिसंस्काराः कर्तृसंस्काराश्च, ते फलित्वकर्तृत्वयोः अविशेषात् उभयोरपि। तत्रापि यत्र 'योक्त्रेण पत्नीं संनह्यति, मेखलया यजमानम्' इत्यादौ प्रतिनियतनिर्देशः, तत्र 'अर्धमन्तर्वेदि' इतिवत् लक्षणया पुंस्त्वादेरपि उद्देश्यान्तर्भावाङ्गीकारेण सत्यपि उभयोः एकापूर्वसाधनत्वे व्यवस्थैव। विशेषनिर्देशाभावेऽपि च यत्र 'केशश्मश्रु वपते' इत्यादौ केशश्मश्रुणोः शरीरसंस्कारार्थवपनं प्रति उपादेयत्वेन द्वंद्वावगतसाहित्यविवक्षा, तत्रापि पत्न्याः श्मश्रु-अभावेन केशानां न वपनम्। नहि तत् केशश्मश्रुसंस्कारकं तेषामनुपयुक्तत्वात्। अतस्तदपि यजमानस्यैव। अत एव यजमानानेकत्वे पत्न्यनेकत्वे द्विविधस्यापि प्रत्येकं करणम्। यत्र क्रत्वर्थेषु आज्यावेक्षणादिषु प्रतिनियतनिर्देशः, तत्र उपादेयविशेषणस्य विवक्षितत्वात् तेनतेन प्रतिनियतेन एकेन च कर्त्रा करणम्। अत एव पत्न्यनेकत्वे संनिहितया ज्येष्ठयैव। यत्र तु याजमानम् इति विशेषसमाख्यया कर्तृनियमः, तत्र यजमानप्रातिपदिकस्य उभयपरत्वोपपत्तेः विरूपैकशेषाङ्गीकारेण द्विवचनबहुवचनान्तविग्रहेण च उभयोरपि वैकल्पिकं कर्तृत्वम्। इति प्राप्ते, यजमानशब्दस्य पुंस्येव प्रचुरप्रयोगात् विरूपैकशेषद्विवचनान्तादिविग्रहस्य असति तत्तात्पर्यग्राहकप्रमाणे अनाश्रयणीयत्वात्। प्रत्युत तदाश्रयणे तद्विषये ज्ञानाक्षेपशक्तिकल्पनाऽऽपत्तेः प्रसिद्धज्ञानवन्तं पुमांसमादायैव समाख्योपपत्तेः तस्यैव कर्तृत्वम्। यद्यपि स्वाध्यायविधौ लिङ्गविशेषानुपादानेन न स्त्रिया व्यावृत्तिप्रतीतिः, तथापि उपनयनवाक्ये तदुपादानात् तत्र च तस्य उद्देश्यविशेषणत्वेऽपि अष्टवर्षत्वादिवदेव 'तमध्यापयीत' इत्यत्र तच्छब्देन पुंस्त्वोपादानात् अध्ययने तद्व्यावृत्तिः। अत्र हि अध्यापनस्य वृत्त्यर्थत्वेन रागप्राप्तत्वात् लक्षणया प्रयोज्यव्यापाररूपाध्ययने एव कर्तृविधिः। अत एव उपनयनवाक्ये तत्संस्कारकत्वेन आचार्यकर्तृकमुपनयं माणवककर्तृकम् उपगमनमेव वा नियम्यते। तेन आचार्यत्वसिद्धेः आनुषङ्गिकत्वात् तामादायैव आत्मनेपदोपपत्तेः। न च आचार्यत्वकरणे नयतेर्धातोः आत्मनेपदं भवति इत्यनुशासनबलात् उपनयनस्य आचार्यत्वार्थत्वम्, तस्य रागप्राप्तत्वेन विधिवैयर्थ्यात्। अत उपनयनविधौ लिङ्गस्य अविवक्षायामपि अध्ययने तस्य विवक्षितत्वात् न स्त्रिया अधिकारः। 'स्त्रीशूद्रद्विजबन्धूनां न त्रयी श्रुतिगोचरा' इति प्रतिषेधाच्च। अतश्च ज्ञानाक्षेपकल्पनामिया यजमानस्येदम् इत्येव विग्रहात् तस्यैव तत्र कर्तृत्वम्।

**मण्डन**–– 'यावदुक्ताः स्त्रियाः क्रियाः।'

**शंकर**–– 'यावदुक्तैः स्त्रियाः सेयम्।' सा अधिक्रिया।

* ज्योतिष्टोमे 'केशश्मश्रु वपते' इत्युक्तम्। तत् यजमानस्य संभवति। पत्न्यास्तु श्मश्रूणामभावात् केशानामपि न वपनं साहित्यस्य विवक्षितत्वात् इति। 'द्वंद्वेन साहित्यस्य उपादेयकेशश्मश्रुगतत्वेन उक्तत्वात् साहित्यावच्छिन्नस्यैव क्रियाङ्गत्वेन प्रत्येकं तदङ्गत्वाभावः' इति च **केशश्मश्रुन्यायस्वरूपम्**। **भाट्ट**. ६।५। २०, * नचैवं **केशश्मश्रुन्यायेन** पुनःप्रयोगबाधः। तत्र द्वंद्वेन साहित्यस्य उपादेयकेशश्मश्रुगतत्वेनोक्तत्वात् साहित्यावच्छिन्नस्यैव क्रियाऽङ्गत्वेन प्रत्येकं तदङ्गत्वा-

भावात् । प्रकृते तु प्रत्येकमेव क्रियाऽन्वयात् नैकलोपे अपरलोपः । ६।५।२०.

* '**केशश्मश्रु वपते**' इति वपनस्य 'मृता वा एषा त्वक्' इत्यादिः फलार्थवादः, न तु फलविधिः ज्योतिष्टोमे । **भा.** ४।३।१।१-३. * **केशश्मश्रुवपनं** अस्थियज्ञे मृताधिकारपक्षे लुप्यते । **वि.** १०।२।१८. * केशश्मश्रुवपनं ज्योतिष्टोमे यजमानसंस्कारः । **भा.** ३।८।२।३-८. * **केशश्मश्रुवपनेऽपि** नित्यं नापितकर्तृकत्वम् इति नाध्वर्योः क्षुरग्रहणापत्तिः । **वा.** ३।८।२।४. * **केशश्मश्रुवपनपयोव्रतादयो** यजमानसंस्काराः ग्रहैः सोमहोमरूपमुख्यार्था एव, न तु अग्निषोमीयपश्वाद्यङ्गार्थाः । **वि.** ३।७।२. * **केशश्मश्रुसमुदायेन** वपनस्यानुसमयः यजमानानेकत्वे । **भा.** ५।२।३।४-५.

* **केशोण्डूकादा** मनुष्यमस्तकादिगतकेशेभ्यः अन्यत्वेऽपि आकाशावयवसंनिवेशविशेषरूपपरिणामात्मकानाम् अत्यन्तासतां केशानाम् आरोपो दृष्टः इति चेत्, तिमिरादिविरलीकृतालोकविच्छिन्नाः तमोऽवयवाः तत्र अत्यन्तसौक्ष्म्यकार्ष्ण्यादिदैर्घ्यादिगुणसंबन्धेन सादृश्यात् केशरूपतया आरोप्यन्ते । ( इति तत्त्वम् ) । **सु.** पृ. ५०८.

* **केसरिणः** दानं प्रतिग्रहो विक्रयश्च अनाचारः उदीच्यानाम् । **चा.** १।३।३।७ पृ. २०४.

⌛ **कैदारिकन्यायः** । यथा कैदारिकः केदारेषु कुल्याजलं संचारयन् एकस्य द्वारं पिधाय अपरस्योद्घाटयति, तद्वत् वैराग्येण विषयस्रोतः खिलीक्रियते अभ्यासेन, कल्याणस्रोतः उद्घाट्यते इति । ( **नीलकण्ठः** गीता. ६।३५ ) । **साहस्री.** ९१४.

⌛ **कैमुतिकन्यायः** । अयं दृष्टान्तदार्ष्टान्तिकयोः स्तुतिनिन्दोभयसाधारणः । 'मां हि पार्थ व्यपाश्रित्य' ( गी. ९।३२ ) इत्यपिशब्दसूचितोऽयं न्यायः । **संग्रहः.** * **कैमुतिकन्यायः** । किं च तत्, उत च, समाहारो वा, किमुत । तस्य भावः कैमुत्यं कैमुतिको वा । काव्यार्थापत्तिः अस्य नामान्तरम् । उक्तं च 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥' इति । क्व चित् अपिना अयं द्योत्यते । यथा- 'स्वामिनां निन्दनं श्रुत्वा ये न यान्ति त्वराऽन्विताः । स्थानान्तरं ह्यप्रतिष्ठास्तेऽपि स्युः पापयोनयः ॥' अयं भावः— यदीशनिन्दां श्रुत्वा ये शीघ्रं स्थानान्तरं न यान्ति, ते ह्यप्रतिष्ठाः सन्तः पापयोनयो भवन्तीति किमु वक्तव्यम् । अत्र प्रकृतन्यायद्योतकः अपिरिति । **साहस्री.** १०८. * ननु एवं न विचीयमानस्य उपद्रष्टारो भवन्ति, **किमु** वक्तव्यं विवेचनं न कर्तव्यमिति कैमुतिकन्यायेनैव अध्वर्य्वादीनामपि विवेचननिषेधसिद्धिः इति **चेन्न**, तस्य दोषाधिक्यप्रदर्शनार्थत्वेन वैयर्थ्याभावात् । **सत्या.** **श्रौ.** ज्योत्स्ना. ७।१।७५. * यद्यद् विस्तरार्थं शास्त्रं यस्मात् पुरुषविशेषात् संभवति, स ततोऽपि अधिकतरविज्ञानः इति प्रसिद्धं लोके, किमु वक्तव्यम् अनेकशाखाभेदभिन्नस्य ऋग्वेदाद्याख्यस्य यस्मात् लीलान्यायेन संभवः, तस्य सर्वज्ञत्वम् । **शांभा.** १।१।३।३ वर्णकं १, * लौकिकस्यापि पुंसः समग्दर्शनार्थवत्त्वं दृष्टम्, **किमुत** विषयशून्यादात्मनः अन्यद्रष्टव्यन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति । तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः । २।३।१७।४६. * विशेषणत्वेन श्रूयमाणस्यापि कपालादेः तुषोपवापादिविध्यप्रयोज्यत्वोक्त्या विशेषणत्वेन अश्रूयमाणस्य आर्थिकस्य साधनस्य दध्यानयनादेः वाजिनाप्रयोज्यत्वं **कैमुत्यादेव** सिध्यति । **सोम.** ४।१।१. * **कैमुतिकन्यायः** धर्मशास्त्रे नाश्रीयते इति तु आग्रहमात्रं गौरीतृतीयादिनिर्णयेषु तदङ्गीकारस्य अनेकशो दृश्यमानत्वात् । यदपि च 'ऊढाऽपि देया' इत्यत्र न कैमुतिकन्यायाङ्गीकारः, तथा सगोत्रेणोढाया अपि पुनरन्यस्मै प्रदानं प्राप्नुयात् । न चैतद्युक्तम् 'भोगतस्तां परित्यज्य पालयेज्जननीमिव' इत्युक्तेः । **सनातनधर्मप्रदीपे** विवाहप्रकाशे पृ. ७. * प्रकृतौ पृष्ठस्तुतेः एकत्वाभ्युपगमेऽपि कण्वरथंतरे धर्मविकल्पसिद्धौ किमु वक्तव्यं प्रकृतौ स्तुतिभेदे कण्वरथंतरे बृहद्रथंतरधर्मविकल्पसिद्धिः इति **कैमुतिकन्यायमभिप्रेत्य** प्रथमं स्तुत्यैक्येऽपि विकल्पमुपपादयति । **सोम.** ९।२।१६. * प्रत्यक्षवचनातिदिष्टब्राह्मणविषये यदि अवश्यमुक्तप्रकारेण ऊहबाधौ उपपादनीयौ, तदा किमु वक्तव्यम् अनुमितवचनातिदिष्टब्राह्मणविषये इति कैमुतिकन्यायमभिप्रेत्याह । **सोम.** * मुमुक्षोरपि नास्ति यथेष्टचेष्टा, कुतः



सा मुक्तस्य स्यात् इति कैमुतिकन्यायमाह । **उपदेशसाहस्री.** पद्य. १८-३१ रामतीर्थः. * सगुणब्रह्मविदामपि ब्रह्मलोकं गतानां तत्रोत्पन्नसम्यग्दर्शनप्रसादादेव मुक्तिरिति स्थितिः, सम्यग्दर्शिनाम् अनावृत्तिस्तु सुतरां सिध्यति इति कैमुतिकन्यायमाह । **न्यायनिर्णयः.** ४।४।७।२२ **ब्रसू.** * एकवाक्योपात्तयोरपि आरुण्यद्रव्ययोः परस्परनियमे एकप्रत्ययोपात्तयोः द्वित्वपुंस्त्वयोः **कैमुतिकन्यायेन** परस्परनियमात् पुंद्वयावगमः । ( 'क्षौमे वसानौ अग्निमादधीयाताम्' इत्यत्र । पूर्वपक्षे इदम् । ) **सोम.** ६।१।५. * 'गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् । आततायिनमायान्तं हन्यादेवाविचारयन् ॥' **मनुः** ( ७। ३५१ ) अत्र **विज्ञानेश्वरः**- एतादृशो ब्राह्मणोऽपि वध्यः किमुतान्यः इति कैमुतिकन्यायेन एतादृशान्यपरमाह । वस्तुतस्तु स्ववधोद्यतो ब्राह्मणोऽपि वध्य एव । **नीतिमयूखः.** पृ. ६२. * ज्ञानकर्मसमुच्चयपक्षाणामयुक्तत्वसिद्धये कैमुतिकन्यायेन ज्ञानकाले कर्मणामसंभवमाह । **सं. शारी.** रामतीर्थः ४।९. * न च अपराह्णसंधिशास्त्रेणैव कैमुतिकन्यायेन रात्रिसंधावपि परदिने यागसिद्धौ रात्रिसंधिशास्त्रमनर्थकं स्यात्, अतश्चन्द्रदर्शने निषेधबाधकतयैव रात्रिसंधिशास्त्रं सार्थकमिति वाच्यम् । **समयमयूखः.** पृ. ७२. * **कैमुतिकन्याये** हि अन्यार्थे तात्पर्यं पर्यवसीयते, स्वार्थे निषेधश्च भवति । यथा 'दोषा वाच्या गुरोरपि' इत्यत्र गुरोस्तु दोषा नैव वाच्याः छात्रत्वभङ्गापत्तेः । अन्येषां तु सर्वेषामपि वाच्या इत्यर्थः । ( **तत्त्वप्रकाशिका** पृ. २०० ) । 'अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः' इत्यत्र अपिशब्दशेषेण अर्धमात्रालाघवेनापि पुत्रोत्सवं वैयाकरणा मन्यन्ते, किमुत ततोऽधिकलाघवेन इति कैमुतिकन्यायेन मात्रादिकृतलाघवस्य आदरणीयतामाहुः । **भूतिः.** पृ. ३३७. * अन्यशेषत्वप्रत्यायकविशेषणसत्त्वेऽपि अधिष्ठानलक्षणया विरोधसमाधानेन विनियुक्तविनियोगः कर्तुं शक्यते, इह ( वाजपेयबृहस्पतिसवयोः ) तदभावे किमु ( किमुत ) वक्तव्यम् इति **कैमुतिकन्यायोद्घाटनार्थम्** अनया भङ्ग्या विरोधसमाधानतौल्यमुक्तम् । **परिमलः.** ३।३।१४।२५ **ब्रसू.** * यत्तु ब्रह्मवैवर्ते- 'अर्धरात्रे तु केषां चिद्दशम्या वेध इष्यते । कपालवेध इत्याहुराचार्या ये हरिप्रियाः ॥' इति, तत् **कैमुतिकरीत्या** अरुणोदयवेधनिन्दाऽर्थम् इति माधवः । तत्त्वं तु पूर्वैश्चतुर्यामेषु व्रतसंकल्पपूजावर्जनार्थमित्यनुपदमेव वक्ष्यते । **समयमयूखः** पृ. ४२.

* **कोकनदत्वं** पद्मत्वैकार्थसमवायिरक्तत्वान्तरजातिः । **सु.** पृ. १४१०.

* **कोटिद्वये** साधारणधर्मस्य आवश्यकत्वम् । **संकर्ष.** ३।२।२१.

⌛ **कोटिशोदृश्यमानोपबृंहणन्यायः** । एतन्न्यायानुरोधात् ईश्वरस्य अजरत्वादेर्निग्रहगुणत्वसिद्धिः । स्वधीकल्पितैः न्यायैर्व्यवस्थापनात् उपबृंहणानुरोधेन अवस्थापनं ज्यायः इत्यर्थः । ( इतिहासपुराणानि उपबृंहणपदार्थः । कोटिशो दृश्यमानम् उपबृंहणं ज्यायः इत्यक्षरार्थः । के. ) **साहस्री.** ८१४.

* **कोद्रवाः** मुद्गानां न प्रतिनिधिः 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः । ' वि. ६।३।६.

⌛ **कोषपानन्यायः** । व्यवहारे दिव्यविशेषोऽयम् । तथा च याज्ञवल्क्यः 'देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् । संश्राव्य पाययेत् तस्मात् जलं तु प्रसृतित्रयम् ॥' ( २।११२ ) 'अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥' ( ११३ ) इति । **साहस्री.** ११५.

* **कौण्डपायिनामयन**विषयकं सर्वं कुण्डपायिनामयन-शब्दे द्रष्टव्यम्, शब्दभेदेऽपि अर्थस्याभेदात् । **के.**

⌛ **कौत्सकाण्वबभ्रिवसिष्ठस्वजनित्रादिसामभिः विकृतिविशेषे प्राकृतसाम्नां बाधः ॥**

**अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात्** । १०।४।८।१७ वर्णकं २ ॥

**भाष्यम्**— एवं वा । क्वचिच्छ्रूयते 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्वजनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्ति' इति । सन्ति तु प्रकृतौ सामानि तत्र चोदकेन प्राप्तानि । किं तानि निवर्त्यन्ते, न इत्येषोऽर्थः संदिह्यते । किं प्राप्तम् ? अनिवृत्तिः समुच्चय इति । कुतः ? साममात्रं विधीयते, न 'स्तुवते' इति प्रकृतिलिङ्गसंयोगोऽस्ति । तस्मादविकृतमिति ।

**एवं प्राप्ते,** ब्रूमः। अर्थे तु अश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात्। तुशब्दः पक्षं व्यावर्तयति, अश्रूयमाणेऽपि अर्थे प्राकृतस्य विकारः स्यात्। शेषभूतं हि प्रकृतौ साम। इदमपि साम श्रूयते। तत् सामत्वेन सामान्येन साम्नः कार्ये भवितुमर्हति। तद्यथा, दधि घृतं शाकं शाल्यः, देवदत्तो भोजयितव्यः, देवदत्तवत् यज्ञदत्तस्तैलेनेति। यद्यपि तैलेन स्नेहयितव्य इति न श्रूयते, तथापि स्नेहने एव तैलं भवति, तत्समर्थत्वात्। एवं यद्यपि साम्ना ऋक् संस्कर्तव्येति न श्रूयते, एवमपि तत्समर्थत्वात् साम ऋक्संस्कारे एव भवितुमर्हति।

**सोम--** अर्थे त्वश्रूयमाणे इति इदं सूत्रं पूर्वाधिकरणे श्लोकादेः कौत्सादेश्च वैषम्यप्रतिपादनपरत्वेन व्याख्याय पुनः 'एवं वा' इत्यधिकरणान्तरत्वेन भाष्ये व्याख्यातम्। पूर्ववत् प्राकृतस्तुत्यर्थत्वाभावात् अनिवृत्तिः इत्युत्थानात् **संगतिः। सूत्रार्थस्तु--** स्तुतिरूपे प्राकृते प्रयोजने अश्रूयमाणेऽपि प्राकृतसामनिवृत्तिः स्यात्, प्राकृतस्य गायत्रादेः स्तुत्यर्थतया शेषत्वात्, इहापि तथात्वसंभवात् इति।

**वि--** 'समुच्चीयेत कौत्सादि यद्वा प्राकृतबाधकम्।, स्तुत्यभावादादिमो, ऽन्त्यो लिङ्गप्रकरणद्वयात्॥' १०.

(भाष्यस्थम् 'अर्थे तु' इति सूत्रस्थं द्वितीयं वर्णकम् 'सर्वेषां' इत्यादिसूत्रद्वयात्मकमधिकरणं च मिलित्वा एकमेवाधिकरणं दशमं भाट्टदीपिकायां भवति। तदुद्ध्रियते-)

**भाट्ट--** तत्तद्विकृतिविशेषे 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्यजनित्रे भवतः, क्रौञ्चानि भवन्ति' इत्यप्राकृतानि सामानि विहितानि। तेषां चोपहोमन्यायेन (५।२।९) संनिधानात् क्रत्वङ्गत्वेऽवगते, दृष्टे संभवति अदृष्टकल्पनाया अन्याय्यत्वात् प्राकृतऋगक्षराभिव्यक्तिद्वारकत्वावगतेः प्राकृतसाम्नां निवृत्तिः। **न च** कौत्साद्याधारभूतयोनिऋगक्षराभिव्यक्त्यर्थत्वेनैव कण्वरथन्तरवत् कौत्सादेरङ्गत्वावगतेः, तदनुरोधेन च ऋचामपि अर्थप्रकाशनद्वारा क्रतूपकारकत्वोपपत्तेर्न प्राकृतसामबाधकत्वमिति **वाच्यम्।** कण्वरथंतरयोनिवत् कौत्सादियोनेः क्रतुप्रकरणे पाठाभावेन पृथगाम्नातस्य कौत्सादेः प्रकरणे विनियोगमात्रकरणेन यावत् तदाधारभूताया ऋचोऽपि तदन्यथाऽनुपपत्त्या क्रत्वङ्गत्वमाक्षिप्यते, तावत् अतिदेशप्रमाणावगताङ्गभावानामेव ऋचां कौत्साद्याधारत्वमात्रकल्पनेन प्राकृतसामबाधोपपत्तेः, अत एव 'उद्वपन्ति' इत्युद्वापश्रवणानुरोधेनापि तस्यावश्यकत्वाच्च। अत एव न कौत्सादीनि सर्वेषां प्राकृतसाम्नां निवर्तकानि। यदि हि अत्र प्राकृतस्तोत्रानुवादेन तानि विधीयेरन्, ततः शरन्यायेन (११।४।१) उपदिष्टसाम्नैव निराकाङ्क्षत्वात् तद्विषये अतिदेशस्यैव अकल्पनेन भवेत् सर्वसामबाधः, इह तु अतिदेशकल्पनोत्तरम् उपहोमन्यायेन कौत्सादिविधिवैयर्थ्यान्यथाऽनुपपत्त्या अन्यतराकाङ्क्षयैव कौत्सादिविधानात्, तस्य च तावत्समसंख्यप्राकृतसामबाधेनापि परिहारोपपत्तौ सर्वबाधे प्रमाणाभावः। अत एव यत्र प्राकृताङ्गानुवादेन वैकृतविधिः यथा 'आग्नेया ग्रहा भवन्ति' 'आग्नेयीषु स्तुवते' इत्यादौ, तत्र प्रायशः सर्वत्रैव वैकृतविधिरिष्टः। १०.

**मण्डन--** 'कौत्सादि पूर्वं बाधेत' पूर्वं प्राकृतं प्रति। ११.

**शंकर--** 'कौत्सेन प्राकृतं बाध्यम्।' ११.

**कौत्सादिन्यायः।** कौत्सादिसामभिः विकृतिविशेषे श्रूयमाणैः तत्समसंख्याकप्राकृतसामबाधः॥

**सर्वेषामविशेषात्। १०।४।९। १८॥**

**भाष्यम्--** क्वचिच्छ्रूयते 'कौत्सं भवति, काण्वं भवति, वसिष्ठस्यजनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि भवन्ति' इति। सन्ति तु प्राकृतानि सामानि तत्र चोदकेन प्राप्तानि। तानि प्राकृतानां निवर्तकानीत्येतत् समधिगतम्। अथैषोऽर्थः संदिह्यते किं सर्वाणि सर्वेषां निवर्तकानि, अथ किम् एकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति। किं तावत् प्राप्तम्? सर्वाणि सर्वेषामपि। कुतः? विशेषाभावात्। नहि विशेषः कश्चिदस्ति, येनावगम्यते इदमस्य निवर्तकम्, नान्यस्येति। तस्मात् सर्वं सर्वस्य निवर्तकमिति।

**एकस्य वा श्रुतिसामर्थ्यात्, प्रकृतेश्चाविकारात्। १९॥**

**भाष्यम्--** न चैतदस्ति, सर्वाणि सर्वेषां निवर्तकानीति। एकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति।



कुतः? श्रुतिसामर्थ्यात्। 'कौत्सं भवति, काण्वं भवति' इत्येकैकस्य निवृत्तिं कृत्वा श्रुतिः समर्था अर्थवतीति। एवम् 'वसिष्ठस्यजनित्रे भवतः' 'शुद्धाशुद्धीये भवतः' 'भर्गयशसी भवतः' इति द्वयोर्निवृत्तौ कृतायां श्रुतिसामर्थ्यमनुगृहीतं भवति। तथा, 'क्रौञ्चानि भवन्ति' इति त्रिभिस्त्रीणि निवर्त्य कृतसामर्थ्या श्रुतिर्भवति। यदि एकस्मिन् श्रुते एकमेव निवर्त्यते, ततो यावती एवासौ अङ्गीकृता प्राकृती सामसंख्या, तावत्येव भवति। एवं सर्वत्र। किमेवं भविष्यति? प्रकृतेरविकारः, प्राकृतानामवशिष्टानां साम्नां ग्रहणं भविष्यति। तत्र चोदकोऽनुग्रहीष्यते। तस्मादेकमेकस्य निवर्तकम्, द्वे द्वयोः, बहूनि बहूनामिति।

**सोम--** पूर्वत्रैव विशेषचिन्तनात् **संगतिः।**

**वि--** 'तत् सर्वबाधकं सर्वमेकद्वयाद्युक्तितोऽथवा।, अविशेषादग्रिमो, ऽन्त्य एकाद्युक्तिविशेषतः॥' ११. तत् कौत्सादिसाम।

**भाट्टदीपिका** तु 'कौत्सकाण्व' इति विन्दौ एव संगृहीता।

**मण्डन--** 'तद्बाधः समसंख्यया। ' तद्बाधः प्राकृतसामबाधः। १२.

**शंकर--** 'तत्रापि समसंख्यकम्।' १२.

* **कौत्सादिन्यायेनैव** समसंख्यप्राकृतसामबाधकतया यत्किञ्चित्स्तोत्रे तन्निवेशप्रसक्तौ सादृश्यविशेषेण तन्नियमः (वैरूपवैराजादिनियमः)। **भाट्ट.** १०।६।६.

* **कौथुमं** साम शाखाऽन्तरम्। **वि.** १।१।८.

**कौन्तेयराधेयन्यायः।** कर्णः कौन्तेयत्वमज्ञात्वा स्वस्य राधेयत्वं मेने, तथा जीवः स्वस्य असंसारिब्रह्मात्मतामज्ञात्वा संसारित्वं मन्यते। **संग्रहः.**

* **कौपीनं** (गुह्यमिन्द्रियं) छादयितुं प्रकृतौ विकृतौ च प्रच्छादनं क्रियते वाससा। **भा.** १०।४।७।१३.

* **कौषीतकिब्राह्मणे** ज्योतिष्टोमप्रकरणे प्रवर्ग्यः अधीतः (८।३-७)। **सु.** पृ. १३२१.

* **क्त्वा।** न तावत् क्त्वाऽन्तं पूर्वं प्रयोक्तव्यमाख्यातात् इति कस्य चिदन्वाख्यानमस्ति। नापि क्त्वाऽन्तमेव लोकः पूर्वं प्रयुङ्क्ते, आख्यातादपि परस्तात् कवीनामानुपूर्वीणां आम्नाये च क्त्वाऽन्तपदप्रयोगदर्शनात्। तस्मादनन्यथासिद्धेः समानकर्तृकतावत् पूर्वकालता तदर्थः इति परमार्थः। **कणिका.** पृ. ४२०.

* क्त्वा। पूर्वकालतायां हि क्त्वा स्मर्यते, नानन्तर्ये। **बृहती.** पृ. १०। अध्ययनस्य दृष्टार्थता च क्त्वाप्रत्ययस्य आनन्तर्येऽर्थे स्वीक्रियमाणे व्याहन्येत। अतो नानन्तर्यं क्त्वाप्रत्ययस्यार्थः। यद्यपि क्त्वाप्रत्ययेन आनन्तर्यविशिष्टा पूर्वकालता उच्यते, तथापि अध्ययनविधिविरोधात् पूर्वकालतामात्रमेव अर्थो गृह्यते। **ऋजु.** पृ. १०. * क्त्वा। भवति हि 'गच्छति भुक्त्वा' इत्यपि गमनमपेक्ष्य भोजनस्य पूर्वकालत्वम्। **वा.** ३।५।१९।४८.

* **क्त्वाऽन्तानां** नास्ति परस्परसंबन्धः साकाङ्क्षत्वात् क्त्वाऽन्तस्य। ... ६।४।७।२४.

* **क्त्वापेटिका।** (१) 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति बृहस्पतिसवस्य वाजपेयाङ्गत्वमुक्तम्, (२) 'अग्निं चित्वा सौत्रामण्या यजेत' इति सौत्रामण्याः चयनाङ्गत्वमुक्तम्। ४।३।१२।३०-३२। (३) 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति' इति वैमृधस्य पूर्णमासाङ्गत्वमुक्तम्। ४।३।१३।३३-३६। (४) 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति ज्योतिष्टोमस्य दर्शपूर्णमासोत्तरकालत्वमुक्तम्। ४।३।१५।३८। **के.**

* **क्त्वाप्रत्ययः** एकस्य पूर्वकालीनतां ब्रूते, अपरस्य चोत्तरकालीनतामिति चेन्न। अङ्गत्वबोधनमेव तस्य मुख्योऽर्थः, पूर्वकालस्तु न नियतः 'मुखं व्यादाय स्वपिति' इति कालैक्येऽपि प्रयोगात्। **वि.** ४।३।१३-१४.

* क्त्वाप्रत्ययः **भट्टसोमेश्वरमते** विनियोक्त्री श्रुतिः। तत्रापि द्वयी गतिः पूर्वस्योत्तराङ्गत्वम्, उत्तरस्य वा पूर्वाङ्गत्वम्। तत्र आद्योदाहरणं यथा 'मूलतः शाखां परिवास्योपवेषं करोति' इति। उपवेषाख्याङ्गं परिवासनम्। द्वितीयोदाहरणं यथा 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। एवं तदादेशो ल्यबपि 'तस्याधारमाघार्य' इत्यादिः। क्त्वाप्रत्यये **पार्थसारथिमते** न श्रुतित्वम्। तन्त्ररत्ने चतुर्थे वाक्यीयमङ्गत्व-

मुक्तम् 'तद्वाफलं सफलवाजपेयसमभिव्याहृतं वाक्यात् वाजपेयाङ्गत्वं बृहस्पतिसवस्येति। तथा चतुर्थे एव उपवेषाधिकरणे (४।२।३।८-९) उक्तम् 'न च परिवास्येति क्त्वाप्रत्ययात् उपवेषकरणार्थे परिवासनं वाक्यसंयोगात् बलीयस्या द्वितीयया' इत्यादि। यत्तु धातुसंबन्धविहितश्च क्त्वाप्रत्ययो वाजपेयबृहस्पतिसवयोरेव संबन्धमाचष्टे इति तत् परमतम्, क्रियाऽन्वयस्य वाक्यार्थत्वोपपत्तौ वाच्यत्वायोगात्। 'धातुसंबन्धे प्रत्ययाः' (पा० ३।४।१) इति तु साधुत्वान्वाख्यानमात्रार्थम्। बाल. पृ. ४५-४६.

* क्त्वाप्रत्ययस्य मुखं व्यादाय स्वपिति इतिवत् समानकर्तृकत्वमात्रेण उपपत्तिः। सु. पृ. ८६७. * क्त्वाप्रत्ययस्य समानकर्तृकत्वे पूर्वकालत्वे च शक्तिः इति वैयाकरणाः। नैयायिकास्तु 'भुक्त्वा व्रजति' इत्यादौ भोजनोत्तरकालीनं व्रजनम् इति बोधात् उत्तरकालत्वे समानकर्तृकत्वे च शक्तिः। समानकर्तृकत्वं च समभिव्याहृतधात्वर्थजनकव्यापारयोरेकनिष्ठत्वम्। तेन 'रथो गत्वा तिष्ठति' इत्यादिप्रयोगः। उत्तरकालत्वं च तात्पर्यविषयीभूताव्यवधानविशिष्टं बोध्यम्। तेन 'अद्य गत्वा श्वस्तिष्ठति' इत्यादिप्रयोगः। 'मुखं व्यादाय स्वपिति' इत्यादौ समानकर्तृकत्वमात्रे सामानाधिकरण्ये वा लक्षणा। 'सुप्त्वा मुखं व्याददाते इति वैपरीत्येन बोधः' इति कश्चित्। 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यादौ तु अव्यवहितत्वभानम्। मणि. पृ. १६४, * क्त्वाऽर्थो भावनाऽन्वयी। पृ. ११३. * क्त्वाशब्दः पूर्वकालतां समानकर्तृतामात्रं च वदति नानन्तर्यम्। पूर्वं गृहपतेर्दीक्षा उत्तरं ब्रह्मणः इत्येतावदाह अन्तराले तु यदि पदार्थसहस्रमपि करोति, नास्ति पूर्वोत्तरबाधः। टुप्. ५।१।१।१.

* क्रतुः आमुष्मिकप्रीतिकारी, भोजनादिकं तु ऐहिकप्रीतिकारि। वि. ४।१।२ वर्णकं ४. * क्रतुः क्रत्वन्तरं नापेक्षते। वा. २।२।८।२२ पृ. ५२८. * क्रतवः अनाहिताग्नेर्न सन्ति। भा. ६।८।१।५. * क्रतवः शुद्धपुरुषधर्मातिक्रमैर्न विगुणीभवन्ति। सु. पृ. १३९४. * क्रतवः स्वसंबन्धिनौ विधिप्रतिषेधौ अपेक्षमाणाः तदतिक्रमे सति विगुणा भवन्ति। ये पुरुषगता विधिप्रतिषेधाः, ते क्रत्वन्तरगता इव अस्य सदसद्भावयोरविशिष्टाः। तेन दर्शपूर्णमासयोरनृतं वदन् नरकं च प्राप्नुयात्, दर्शपूर्णमासफलं च अविकलमेव आप्नुयात्। वा. ३।४।४।१३ पृ. ९१२, * क्रतोः तत्र न वैगुण्यम् 'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्। न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः॥' ३।४।४।१३ पृ. ९१२, * क्रतूनां क्रमविवक्षा न चेति वक्ष्यामः (५।३।१२ अधिकरणे)। २।२।८।२२. * क्रतूनां ज्ञानार्थं वेदाध्ययनं कार्यम्। तत्र अन्यस्मिन् क्रतौ कर्तव्ये अन्यक्रतुज्ञानं न दृष्टाय भवति, तस्मात् क्रत्वन्तरज्ञानम् अधिकारे नादर्तव्यम्। क्रत्वन्तरज्ञानाय क्रत्वन्तरग्रन्थः। भा. ३।८।८।१८, * क्रतौ अनध्यायेऽपि मन्त्रप्रयोगः कर्तव्यः, अनध्यायशास्त्रस्य ग्रहणाध्ययनविषयकत्वात्। १२।३।७।१८-१९, * क्रतौ जपादिमन्त्राणां प्रावचनः स्वरः एव प्रयोक्तव्यः। १२।३।८। २०-२२.

## ॾ क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः। ४।३।८।१७॥

'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' ये यजमानाः एताः रात्रीः अहोरात्रैः साध्यानि सत्ररूपाणि कर्माणि उपयन्ति अनुतिष्ठन्ति ते ह वै निश्चयेन प्रतितिष्ठन्ति प्रतिष्ठां लभन्ते। रात्रिशब्दः अहोरात्रवचनः। उपेयुः इतिशब्दात् सत्रत्वं ज्ञायते। अत्र किमेते फलार्थवादाः, उत फलविधयः इति विचारे पूर्वपक्षमाह। क्रतौ रात्रिसत्ररूपे कर्मणि 'प्रतितिष्ठन्ति' इति फलार्थवादं मन्यते कार्ष्णाजिनिराचार्यः। अङ्गवत् यथा जुहूपर्णताऽऽदिषु अङ्गेषु अपापश्लोकश्रवणादिः अर्थवादः तद्वत्। तस्मादत्र स्वर्गः कल्पनीयः।

## फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्। १८॥

सिद्धान्तमाह। रात्रिसत्रादौ क्रतौ 'प्रतितिष्ठन्ति' इत्यादि फलम् आत्रेय आचार्यो मेने, न फलार्थवादम्। कर्मणः फलेन भवितव्यम्। तच्च संनिहिते अर्थवादे श्रुतम्। अध्याहारात् वरं संनिहितफलकल्पना। सर्वथा अश्रुतौ अश्रवणे हि यस्मात् विश्वजिति इव फलस्य अनुमानं स्यात्। इह तु अर्थवादे श्रुतमेव फलम्। ततो नानुमानम्। तस्मात् रात्रिसत्रादौ अर्थवादस्थमेव फलं कल्प्यते कल्पनालाघवात्।



## अङ्गेषु स्तुतिः, परार्थत्वात्। १९॥

पूर्वपक्षोक्तदृष्टान्तवैषम्यप्रदर्शनार्थं सिद्धान्तसूत्रम्। जुहूः स्रुवः इत्येवमादिषु अङ्गेषु 'न स पापं श्लोकं शृणोति' इत्यादि यत् फलवचनं सा स्तुतिरेव, जुह्वादीनां परार्थत्वात् प्रधानार्थत्वात्। रात्रिसत्रेषु तु नैवम्, परार्थत्वाभावात्। तस्मान्नासौ 'प्रतितिष्ठन्ति ह वै' इत्येषा स्तुतिः। तस्मादत्र आर्थवादिकं फलम्। के.

## ॾ क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकः स्वरः प्रयोक्तव्यः॥

## तन्न्यायत्वाददृष्टेऽप्येवम्। १२।३।९।२३॥

**भाष्यम्**-- यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टः, तस्य तथैव प्रयोगः। यस्तु तत्र न दृष्टः, ब्राह्मणेन च भाषिकेण उपदिष्टः यथा 'तं वै प्रोहेत् वानस्पत्योऽसि' इति, तत्र का प्रतिपत्तिः? उच्यते। तन्न्यायत्वात् अदृष्टोऽपि। योऽसौ न्यायः उक्तः 'मन्त्रोपदेशोऽयं तद्रूपत्वात् शब्दस्य' इति, तेनैव न्यायेन (१२।३।८। २१ प्रथमव्याख्यायाम् आर्थिकेन) अदृष्टोऽपि मन्त्रोपदेशः एव, न भाषिकोपदेशः। तस्मात् (न इति पदं यद्यपि आनन्दाश्रमीये तस्मात् इति पदात् परस्तात् मुद्रितम्, तथापि तदयुक्तम् इति मन्यामहे) तस्यापि प्रावचनेनैव स्वरेण प्रयोगः।

## तदुत्पत्तेर्वा, प्रवचनलक्षणत्वात्। २४॥

**भाष्यम्** – तदुत्पत्तेः वा ब्राह्मणोत्पत्तेः मन्त्रस्य भाषिकेण प्रयोगः स्यात्, प्रवचनलक्षणत्वात्। प्रवचनं मन्त्राणां लक्षणम्। यथा प्रोच्यन्ते तथाविधाः विज्ञायन्ते। ते च भाषिके एव उत्पन्नाः। तेषाम् अन्यथाविधत्वे प्रमाणं नास्ति। तस्मात् यथोत्पन्नाः, तथाविधा एव प्रयोक्तव्याः।

**सोम**-- **सूत्रार्थः**--मन्त्रसमाम्नायादृष्टेऽपि मन्त्रे पूर्वन्यायात् न ब्राह्मणस्वरः इति।

**वि**--'ब्राह्मणोत्पन्नमन्त्रस्य त्रैस्वर्यं भाषिकोऽथवा। आद्योऽन्यमन्त्रवत्, मैवं स्वरान्तरविवर्जनात्॥' प्रावचनस्वरविवर्जनात् इत्यर्थः।

**भाट्ट**-- ये पुनर्मन्त्रसमाम्नाये नाधीताः ब्राह्मणे एवोत्पन्नाः जपमन्त्राः, तेषां स्वरान्तराभावात् भाषिकस्यापि स्वरश्रुतेः विनियोगविधौ यथापठितमन्त्रपाठबलेन स्वरस्यापि स्वाध्यायविधिवशेन विनियोगकल्पनात् भाषास्वरोऽपि तत्र प्रयोक्तव्य एव। भाषास्वरश्च 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः। उच्चनीचस्वरं प्राहुः, स वै भाषिक उच्यते॥' इति वचनलक्षितो ब्राह्मणस्वर एव।

**मण्डन**-- 'स्यादेवायं ब्राह्मणोत्पन्नमन्त्रे।' अयं भाषिकः स्वरः।

**शंकर**-- 'तत्रोत्पन्नास्तत्स्वरेण।' तत्र ब्राह्मणे।

* क्रतौ मन्त्रेषु प्रवचनस्वर एव प्रयोक्तव्यो न भाषिकः। वि. १२।३।८। ज्योतिष्टोमे क्रतौ सोमद्रव्यस्य इन्द्रादिदेवतानां च यजुर्वेदे विधानात् उपांशुस्वरः। ३।३।१। 'वानस्पत्योऽसि' इत्यादिब्राह्मणोत्पन्नेषु मन्त्रेषु तु भाषिकस्वरः एव प्रयोक्तव्यः, नास्त्येवात्र प्रवचनस्वरः। २।३।९.

* क्रतुषु स्त्रिया अपि अधिकारः। भा. ६।१।३। ६-१६.

* क्रतुकथंभावग्रहणात् अङ्गाङ्गिसंबन्धः स्यात्। वा. ३।२।१२।२७ पृ. ५६२.

* क्रतुजन्यमपूर्वजातं क्रतुज्ञानसाधनाध्ययननियमजन्यस्यापूर्वस्य कल्पकम्। वि. १।१।१.

* क्रतुतो वाऽर्थवादानुपपत्तेः। ३।३।११।२७॥ भाष्येण कर्तृपक्षनिरासार्थतया वाशब्दं व्याख्याय क्रतुतः इति सूत्रावयवस्य पूर्वसूत्रस्थप्रथमान्तविपरिणतविशेषशब्दानुषङ्गेण क्रतुतः एवायं विशेषः, (अभिषवफलकयोः संतर्दनम् 'दीर्घसोमे संतृद्येत् धृत्यै' इति श्रुत्युक्तः) न कर्तृतः, धृत्यै इत्यर्थवादानुपपत्तेः इत्येवं व्याख्यातम्। सु. पृ. १३०४.

* क्रतुदक्षिणायाः कृत्स्नाया आतिदेशिक्याः भूसंशकैकाहे उपदिष्टधेनुरूपदक्षिणया बाधः। भा. १०।३।१४।

५६–५८. * क्रतुदक्षिणायाः कृत्स्नायाः उपहव्ये क्रतौ श्यावेन अश्वेन बाधः । वि. १०।३।१८. * क्रतुदक्षिणायाः कृत्स्नाया ऋतपेयविहितसोमचमसदक्षिणया बाधः । भा. १०।३।१९।६८–७३, * क्रतुदक्षिणायाः कृत्स्नायाः ( ब्रह्मभिन्नस्य ) पुरुषान्तरस्य च ऋतपेयविहितसोमचमसेन निवृत्तिः । १०।३।२०।७२–७३.

* **क्रतुधर्मता** अनृतवदननिषेधस्य दर्शपूर्णमासयोः इत्यधिकरणार्थः । **भा.** ३।४।४।१२–१३.

* **क्रतुपशवः** । आग्नेयः पशुरग्निष्टोमे आलब्धव्यः ( एक एव ), ऐन्द्राग्नः पशुरुक्थ्ये ( द्वितीयः ), ऐन्द्रो वृष्णिः षोडशिनि ( तृतीयः ), सारस्वती मेषी अतिरात्रे ( चतुर्थी ) । **भा.** ९।१।१७।४५. * ' क्रतुपशवः ऐकादशिनाश्च विकल्प्यन्ते ' इति विकल्पविधानात् ऐकादशिनानां सुत्याकालत्वम् । **सोम.** ८।१।७. * क्रतुपशवः प्राजापत्यपशवश्च वाजपेये सहोपक्रम्यन्ते । तत्र क्रतुपशूनामालम्भः प्रातःसवने एव । प्राजापत्यानां तु पर्यग्निकरणान्तं प्रातः कृत्वा माध्यंदिने ब्रह्मसाम्नि आलम्भः । **वि.** ४।१।१४. * **क्रतुपशूनां** प्राजापत्यानां च वाजपेये समुच्चयो वक्ष्यते ( १०।४।४।६ ) । **भा.** ४।१।१४।३३, * **क्रतुपशुषु** वाजपेयेऽध्रिगुप्रैषस्य प्रत्येकमावृत्तिः । ११।४।२०।५७–५९. * **क्रतुप्रकरणे** यच्छ्रुतम् , तत् नियमेन क्रतुस्मारकम् । **वि.** ३।४।१२. * **क्रतुप्रक्रमे** एव सर्ववैकल्पिकानामवधारणात् अवश्यम् ऋत्विग्यजमानैः ' एवमिदं कर्तव्यम् ' इत्यवधार्य प्रवर्तितव्यम् , तद्वशेन प्रयोगकौशलाभ्यासादिसिद्धेः । **वा.** २।३।१२ पृ. ५७७.

* **क्रतुभावनाऽन्तर्भावो** नास्ति अत्यग्निष्टोमादिसंस्थानाम् , तासां फलार्थत्वात् । अग्निष्टोमसंस्था तु क्रतुभावनाऽन्तर्गता । **शा.** ५।३।१३. * **क्रतुमध्ये** अन्यप्रयोगनिषेधः ' वि वा एतद्यज्ञाच्छिद्यते , यदन्यस्य तन्त्रे प्रतते अन्यस्य तन्त्रं प्रतायते ' इति । **के.**

* **क्रतुयुक्तपुरुषधर्माणां** पुरुषद्वारा क्रत्वङ्गत्वेन अतिक्रमे क्रतुवैगुण्यापादकत्वम् । **सु.** पृ. १३९४. * **क्रतुयुक्तपुरुषधर्मत्वं** नाम प्रतिषेधस्य , क्रतुसंबन्धिपुरुषगतयोग्यतासंपादकक्रियाविषयत्वम् । **भाट्ट.** ३।४।८ पृ. ३१६.

**क्रतुवद्वाऽनुमानेनाभ्यासे फलभूमा स्यात् ।** ११।१।७।२९ ॥

वाशब्दः संशयं निरस्यति । दर्शपूर्णमासादेः सकृत्प्रयोगे प्रयाजानामङ्गानाम् अभ्यासे कृते फलभूमा फलबहुत्वं स्यात् । अनुमानेन प्राक् अङ्गप्रयोगात् प्रधानोपकारो नासीत् , ऊर्ध्वं तु भवति , तेन विज्ञायते नूनं अङ्गेन क्रियते, इति पुनःपुनः क्रियेत चेत् , उपकारोऽपि पुनःपुनः करिष्यते इति । क्रतुवत् यथा सौर्यार्यमणादिषु क्रतुषु फलं कर्मणा क्रियते इति कर्माभ्यासे फलभूयस्त्वं भवति, तद्वत् । इति पूर्वः पक्षः ।

**सकृद्वा , कारणैकत्वात् । ३० ॥**

एकस्मिन् प्रयोगे अङ्गं सकृत् प्रयोक्तव्यं नावृत्त्या । कारणैकत्वात् अङ्गानुष्ठानस्य एकं कारणं प्रधाने फलदानसामर्थ्यजननम् । तच्च सकृत्करणे निष्पन्नमिति न पुनःप्रयोगः । इति सिद्धान्तः । वाशब्दः पक्षव्यावर्तकः ।

**परिमाणं चानियमे न स्यात् । ३१ ॥**

अनियमे एकस्मिन् क्रतुप्रयोगे अङ्गानुष्ठानं सकृद्सकृद्वा इति नियमाभावे ' चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते , त्रयोदशामावास्यामाम् ' इत्युक्तं परिमाणं न स्यात्, बाधितं स्यात् । तस्मात् अङ्गानां नाभ्यासः । अत्र पौर्णमास्यां चतुर्दश आहुतयः ' पञ्च प्रयाजाः, द्वौ आज्यभागौ , आग्नेयाग्नीषोमीयौ द्वौ , उपांशुयाजः एकः, स्विष्टकृत् , त्रयोऽनुयाजाः' इति । अमावास्यायां तु उपांशुयाजाभावपक्षे त्रयोदशैव ।

**फलस्यारम्भनिष्पत्तेः क्रतुषु स्यात् फलान्यत्वम् । ३२ ॥**

यदुक्तं क्रतुवत् इति ( सू. २९ ) तत्र वैषम्यमाह । क्रतुषु सौर्यादिषु अनुष्ठानान्यत्वे फलान्यत्वं स्यात् नाम । फलस्य आरम्भेण अनुष्ठानेन निष्पत्तेः निष्पद्यमानत्वात् । अङ्गानां तु सकृत्करणेन प्रधानोपकारे सिद्धे न पुनःकरणम् ।

**अर्थवांस्तु , नैकत्वादभ्यासः स्यादनर्थको , यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् , प्रधाने च क्रियाऽर्थत्वादनियमः स्यात् । ३३ ॥**



अनियमः इति द्वितीयं पूर्वपक्षमाह । अङ्गानाम् अभ्यासः अर्थवान् सफलः । न अभ्यासः अनर्थकः स्यात् । एकत्वादभ्यासः अनर्थकः स्यात् । अभ्यासे अनभ्यासे च फलस्य एकत्वे तु अभ्यासः अनर्थकः स्यात् । यथा एकस्मिन्नेव प्रहरादिन्यूनकाले भोजनं तृप्तिरूपैकफलकत्वात् नाभ्यस्यते तद्वत् । क्रत्वङ्गेषु तु अर्थस्य फलस्य अपरिमाणत्वात् परिमाणशून्यत्वात् अपरिमितत्वात् अभ्यासो नानर्थकः । प्रधाने च प्रधाने तु क्रियाऽर्थत्वात् , प्रधाने या क्रिया सफलत्वकरणं तदर्थत्वादङ्गानां सकृत् करणमपि संभवति । तस्मात् अभ्यासस्य सकृद्वा असकृद्वा इति अनियमः स्यात् इति ।

**पृथक्त्वाद् विधितः परिमाणं स्यात् । ३४ ॥**

यदुक्तं सिद्धान्तिना ' परिमाणं च ' इति ( सू. ३१ ), तत्राह अनियमवादी । उपकारस्य पृथक्त्वात् अङ्गाभ्यासे प्राप्ते । परिमाणम् आहुतिसंख्यानियमः विधितः स्यात् । आहुतिविधीनां परिमाणमिदं नाहुतीनाम् । तेन आहुत्यभ्यासेऽपि न दोषः ।

**अनभ्यासो वा प्रयोगवचनैकत्वात् , सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियाऽर्थत्वात् । ३५ ॥**

सिद्धान्ती आह । वाशब्दः अनियमपक्षव्यावृत्त्यर्थः । अङ्गानाम् अनभ्यासः स्यात् अभ्यासो न स्यात् । अङ्गानां प्रधानानां च प्रयोगवचनैकत्वात् , प्रयोगवचनमेकं येषां तादृशत्वात् । सर्वस्य अङ्गप्रधानकलापस्य युगपत् शास्त्रात् शासनात् विधानात् । सर्वस्य युगपच्छास्त्रात् प्रयोगवचनैकत्वम्, तस्माच्च अनभ्यासः । कर्मणः अङ्गानुष्ठानस्य स्वातन्त्र्येण अफलत्वाच्च नहि केवले अङ्गे अनुष्ठिते किञ्चित् फलं स्यात् । अभ्यासे कृतेऽपि न किञ्चित् फलम् । क्रियाऽर्थत्वात् अङ्गकर्मणः प्रधानक्रियाऽर्थत्वात् । प्रधानं कथं फलप्रदं स्यात् इति अङ्गानि क्रियन्ते । तस्मात् अङ्गानामेकस्मिन् प्रयोगे सकृदेवानुष्ठानम् , नाभ्यासः ।

**अभ्यासो वा , छेदनसंमार्गावदानेषु वचनात् सकृत्त्वस्य । ३६ ॥**

वाशब्देन सिद्धान्तपक्षस्य व्यावृत्तिः । अङ्गानामभ्यासः कर्तव्यः । पितृयज्ञे ' सकृदाच्छिन्नं बर्हिर्भवति ' इति छेदने सकृत्त्वमुक्तम् । ' सकृत् परिधीन् संमार्ष्टि ' इति संमार्गे सकृत्त्वमुक्तम् । ' उत्तरार्धात् सकृदवद्यति ' इति अवदाने सकृत्त्वमुक्तम् । एवं छेदनसंमार्गावदानेषु सकृत्त्वस्य वचनात् लिङ्गात् अभ्यासस्य सिद्धिः । सकृत्त्ववचनाभावे तु अभ्यासः स्यात् इति सकृत्त्वम् आहत्य उच्यते । ततः एतत् ज्ञायते विशेषवचनाभावे अभ्यासः एवेति । तस्मादभ्यास इति पूर्वः पक्षः ।

**अनभ्यासस्तु , वाच्यत्वात् । ३७ ॥**

तुशब्दः पूर्वपक्षव्यावर्तकः । दर्शपूर्णमासयोः बर्हिश्छेदने परिधिसंमार्गे च त्रित्वस्य विधानात् स्विष्टकृति च द्वित्वस्य विधानात् पिण्डपितृयज्ञेऽपि तत्प्राप्तौ सकृत्त्वस्य वाच्यत्वात् सकृत्त्वमुक्तम् । तस्मात् यत्र आहत्य अभ्यासो न विहितः, तत्र सकृत्त्वमेव । तस्मात् एकस्मिन् प्रयोगे प्रयाजादीनां सकृदनुष्ठानम् । इति सिद्धान्तः । **के.**

* **क्रतुविधयः** अर्थज्ञानोपायाक्षेपकत्वाभावलाघवसहकृता ब्राह्मणादिपरा एव भवन्ति । **मणि.** पृ. ४.

* **क्रतुशेषाः** अनारभ्याधीता ग्रहाः , न तु सवनशेषः । तेन तेषां सकृद् ग्रहणम् , न प्रतिसवनम् । **भा.** ५।३।६।१५–१६.

* **क्रत्वन्ते** अनुष्ठानम् अग्निचिद्व्रतानाम् । **भा.** ५।३।१०।२६–२८.

* **क्रत्वन्तरम्** अवेष्टिः राजसूयान्तर्गतावेष्टेः सकाशात् ब्राह्मणाद्यधिकारात् । **भा.** २।३।२।३. * क्रत्वन्तरं नित्यात् मासाग्निहोत्रं कुण्डपायिनामयने । **वि.** २।३।११. * **क्रत्वन्तरेषु** सौर्य–आर्यमण–प्राजापत्य–नैर्ऋतादिषु यो यावन्ति कर्माणि करोति , स तावद्भ्यः फलमश्नुते । **भा.** ११।१।३।११. * **क्रत्वर्थम्** अतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता , फलार्थत्वात् । **रत्न.** ८।१।१४।२४.

**क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ।** १०।२।१९।५१ ॥

' यजमानेन संमिता औदुम्बरी भवति ' इति , ' शुक्रं यजानोऽन्वारभते ' इति च प्रकृतौ श्रुतम् । तच्च क्रत्वर्थम् , न पुरुषार्थम् । एतादृशं क्रत्वर्थं कर्म अस्मिन् यज्ञे क्रियेत । तुशब्दः पुरुषार्थकर्मवैलक्षण्यार्थः । तत्र

कर्मणि यजमानस्य गुणभूतत्वात् । एतादृशे च कर्मणि अस्थ्नां संबन्धः संभवति कथञ्चित् । तस्मात् अस्थियज्ञे क्रत्वर्थे कर्म कर्तव्यमिति सिद्धान्तः । के.

* क्रत्वर्थं निवृत्तिरूपं वैदिकं कर्म यथा 'नातिरात्रे षोडशिनं गृह्णाति' इति । बाल. पृ. ८६, * क्रत्वर्थं पुरुषार्थेन बाध्यते यथा सामिधेनीपाञ्चदश्यं वैश्यप्रयोगे साप्तदश्यं च 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति काम्येन एकविंशतित्वेन । पृ. १३१, * क्रत्वर्थं प्रवृत्तिनिवृत्त्युभयरूपं वैदिकं कर्म यथा 'यजतिषु येयजामहं करोति नानुयाजेषु' इति । 'नार्षेयं वृणीते न होतारं वृणीते' इति च । पृ. ८६. * क्रत्वर्थं शवेन कारयितव्यं शुक्रान्वारम्भणादि, सर्वस्वारे यजमाने दिष्टां गतिं गतेऽपि । भा. १०।२।२४।५९.

* क्रत्वर्थः क्रतुस्वरूपपौष्कल्याय यो विधीयते । वि. ४।१।२, * क्रत्वर्थः चक्षुषोः संस्कारः अञ्जनं ज्योतिष्टोमे, न फलप्रयुक्तः । तत्फलश्रुतिरर्थवादः । ४।३।१. * क्रत्वर्थः बलवान् पुरुषार्थात् । भा. १२।४।१४।३९. * क्रत्वर्थः समुच्चयः न्यायगम्यः, वाचनिकः, ऐच्छिकश्च प्रत्येकं पञ्चदशविधः । तदुदाहरणानि तु 'समुच्चयभेदनिरूपणम्' इति बिन्दौ द्रष्टव्यानि । (बाल. पृ. १६५-१८०.) । के. * क्रत्वर्थः हि शास्त्रादवगम्यते, नान्यथा । भा. ४।१।२।२ वर्णकं १, * क्रत्वर्थान् पदार्थान् प्रयोगवचनः प्रापयति । ५।२।१०।२७. * क्रत्वर्थेन ग्रहणेन देवताः संयुक्ताः, ता यागमभिलषन्ति, यागोऽपि देवताऽभिलाषी । तयोः संबन्धः अर्थात् भविष्यति । टुप्. ८।१।३।५. * क्रत्वर्थानाम् अनुष्ठानम् अस्थियज्ञस्य मृताधिकारिकत्वपक्षे । भा १०।२।१९।५१. * क्रत्वर्थानां क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया अभावः । वि. ४।३।१.

**ꕥ क्रत्वर्थानां नैमित्तिकानां निमित्तावृत्तौ आवृत्तिः यथा भेदनस्कन्दनाद्यावृत्तौ प्रायश्चित्तावृत्तिः ।**

तथाऽन्तःक्रतुप्रयुक्तानि । ६।२।९।२९॥

भाष्यम्— 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इति दर्शपूर्णमासयोः श्रूयते । तत्र संदेहः । सकृत् भिन्ने स्कन्ने च हुत्वा कृतार्थः, उत भिन्नेभिन्ने, स्कन्नेस्कन्ने चेति । तत्राधिकरणातिदेशः । यः पूर्वत्र पूर्वः पक्षः, स इह पूर्वः पक्षः । य उत्तरः, स इहोत्तर इति । सकृत्कृत्वा कृतार्थ इति पूर्वः पक्षः । निमित्तत्वादागते आगते काले इत्युत्तरः ।

शा— युक्तं पुरुषार्थेषु नैमित्तिकेषु निमित्तावृत्तौ आवृत्तिरिति । तत्र हि (अग्निहोत्रादौ) प्रत्यावृत्ति फलम् अन्यदन्यच्च निष्पद्यते । क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारस्यैव साध्यत्वात् सकृत्कृतेनैव तत्सिद्धेः एकस्मिन् प्रयोगे भेदनावृत्तावपि न होमावृत्तिः इति विशेषं मन्वानस्योत्तरम्, एषामपि निमित्तावृत्तौ आवृत्तिरिति ।

वि— 'क्रतौ सकृद् भेदहोमोऽसकृद्वा, क्रतुसिद्धितः । सकृत्, निमित्तभेदस्यावृत्तौ होमोऽसकृद् भवेत् ॥'

भाट्ट— पुरुषार्थनैमित्तिकवदेव क्रत्वर्थनैमित्तिकस्यापि भेदनहोमादेः एकस्मिन् प्रयोगे भेदनानेकत्वे यदि तावत् होमात् पूर्वं तदनेकता, तदा अगृह्यमाणविशेषत्वात् अश्वप्रतिग्रहेष्टिवच्च तावच्छब्दाभावात् तन्त्रेणैव होमकरणेऽपि, होमोत्तरं तदनेकत्वे नैमित्तिकावृत्तिः स्यादेव । न च तत्र क्रतुजन्यापूर्वोत्पत्तेः पूर्वं होमजन्यादृष्टस्य सत्त्वात् तेनैव प्रसङ्गसिद्ध्याशङ्का, तथात्वे निमित्ते सति नैमित्तिकाकरणे निमित्तत्वव्याघातात् । अत एव निमित्ताभावे होमाभावेऽपि क्रतूपकारसिद्धिः, तत्सत्त्वे तदनुष्ठानेन, तदावृत्तौ आवृत्तेनेत्यपि बोध्यम् ।

मण्डन— 'भिन्नादिहोमोऽपि पुनर्निमित्ते ।'

शंकर— 'होमश्च प्रतिभेदतः ।'

* क्रत्वर्थत्वम् अध्ययनस्य ज्ञानार्थत्वात् । भाट्ट. ४।१।२ पृ. ८२ पं. २३, २४. * क्रत्वर्थत्वं पयोव्रतादीनां ज्योतिष्टोमे, 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । भा. ४।३।४।८-९. * क्रत्वर्थत्वं स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वम् । क्रतुशब्दोऽत्र स्वयमप्रार्थितपरः । स्वयं प्रार्थितत्वं च शास्त्रानधीनेष्टसाधनताज्ञानजन्येच्छाविषयत्वम् । भाट्ट. ४।१।२ पृ. ८२. * क्रत्वर्थत्वे हि सति अन्तरेणापि कामपदोपबन्धं तदुपकारकमेव एतत् कर्तव्यम् इति विज्ञायते । वा. ३।६।१६।४३ पृ. १०६७. * क्रत्वर्थत्वव्यवहारः क्रतूपकारकत्वे नापि अस्मिन् शास्त्रे



बलाबलाधिकरणवार्तिके पशुकामप्रयोगे च (पृ. ८३८) उक्तः । बाल. पृ. १५७. * क्रत्वर्थनिषेधातिक्रमे क्रतोर्वैगुण्याख्यः प्रत्यवायः । सु. पृ. १३९५. * क्रत्वर्थं नैमित्तिकानां निमित्तावृत्तौ आवृत्तिः (इति शीर्षकम्) । भा. ६।२।९।२९. * क्रत्वर्थपुरुषार्थयोर्जिज्ञासा शेषलक्षणगोचरत्वात् नाध्यायान्तरं प्रयोजयति । रत्न. ५।१।१।१.

**ꕥ क्रत्वर्थपुरुषार्थजिज्ञासाऽधिकरणम् ॥**

**अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा । ४।१।१।१ ॥**

भाष्यम्— तृतीयेऽध्याये श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानैः शेषविनियोगलक्षणमुक्तम् । इहेदानीं क्रत्वर्थपुरुषार्थौ जिज्ञास्येते । कः क्रत्वर्थः कः पुरुषार्थ इति । याऽपि प्रयोजकाप्रयोजकफलविध्यर्थवादाङ्गप्रधानचिन्ता, साऽपि क्रत्वर्थपुरुषार्थजिज्ञासैव । कथम् ? अङ्गं क्रत्वर्थः, प्रधानं पुरुषार्थः, । फलविधिः पुरुषार्थः, अर्थवादः क्रत्वर्थः । प्रयोजकः कश्चित्पुरुषार्थः, अप्रयोजकः क्रत्वर्थः । तस्मात् क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति सूत्रितम् । तत्र अथातःशब्दौ प्रथमे एवाध्याये प्रथमसूत्रे वर्णितौ । अथेति पूर्वप्रकृतं शेषविनियोगलक्षणम् अपेक्षते । अत इति क्रत्वर्थपुरुषार्थजिज्ञासाविशेषं प्रकुरुते । क्रतवे यः, स क्रत्वर्थः । पुरुषाय यः, स पुरुषार्थः । जिज्ञासाशब्दोऽपि तत्रैव समधिगतः, ज्ञातुमिच्छा जिज्ञासेति । तदेतत् प्रतिज्ञासूत्रं क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति ।

टुप्— तृतीयेन अवधृते शेषत्वे कः क्रत्वर्थः, कः पुरुषार्थः इति विशेषः चिन्त्यते पूर्वम् अवधृते सामान्ये । यथा सप्तमेन सामान्यातिदेशे सिद्धे अष्टमेन विशेषातिदेशः चिन्त्यते । एवं लक्षणभेदः । अथवा 'अर्थे समवैषम्यम्' (४।१।८।२१) इति (उपक्रम्य) प्रयोजकाप्रयोजकत्वं यत्, तत् असाधारणं चिन्त्यते । भाष्यकारश्च इदमेव अभिप्रेत्य आह (अर्थे समवैषम्यम् इति सूत्रे) 'अतिक्रान्तः तृतीयविषयः' इति । पञ्चमे च (प्रथमे सूत्रे) असाधारण्येनैव एवं व्यपदेक्ष्यते 'प्रयोजकाप्रयोजकलक्षणं वृत्तम्' इति ।

सोम— क्रत्वर्थत्वे क्रतुप्रयुक्तत्वम्, पुरुषार्थत्वे तत्प्रयुक्तत्वम्, एकत्वादेः यज्ञाङ्गत्वे तत्प्रयुक्तत्वम्, स्विष्टकृदादौ त्यागांशे अपूर्वसद्भावे तत्प्रयुक्तत्वम्, नियमविधौ सति दर्शादेर्नियमेन समदेशादिप्रयुक्तत्वम्, अपापश्लोकश्रवणादीनां फलविधित्वे पर्णमयत्वादीनां फलप्रयुक्तत्वम् अर्थवादत्वे क्रतुप्रयुक्तत्वम्, विश्वजिदादीनां अफलत्वे प्रयुक्तिरेव दुर्लभा फलवत्त्वे तत्प्रयुक्तत्वम्, दर्शपूर्णमासाभ्यामिष्ट्वा इत्यस्य कालार्थत्वे सोमस्य न दर्शपूर्णमासप्रयुक्तत्वम्, सौत्रामण्यादेः अग्न्यङ्गत्वे तत्प्रयुक्तत्वम्, अनुमत्यादीनां विदेवनादीनां च समप्राधान्ये सर्वेषां फलमेव प्रयोजकं विदेवनादीनामङ्गत्वे क्रतुप्रयुक्तत्वम् इत्यादिरूपेण सर्वस्मिन् अध्याये प्रयुक्तिरेव चिन्तिता । क्रत्वर्थपुरुषार्थशब्दयोः प्रयुक्तिपरत्वात् युक्तं प्रतिज्ञासूत्रत्वम् । यद्वा प्रायेण पुरुषार्थः प्रयोजकः इति पुरुषार्थशब्देन प्रयोजको लक्ष्यते, क्रत्वर्थशब्देन च तत्प्रतिपक्षवाचकेन अप्रयोजको लक्ष्यते इति सूत्रयोजनिका । प्राभाकरास्तु उपादानाख्यं श्रुत्यादिभ्यतिरिक्तं शेषत्वे प्रमाणान्तरमस्ति इत्यवगमात् उपादानाख्यप्रमाणगम्यं शेषत्व-प्रयुक्ति-अधिकार-उत्पत्त्याख्यं चतुष्टयम् अध्यायार्थः इति वदन्ति । तन्न युक्तम् ।

वि— 'चिन्ता न कार्या कार्या वा क्रत्वर्थपुरुषार्थयोः । अफलत्वान्न कर्तव्या, प्रयुक्तौ क्रियतामियम् ॥', क्व चिदेतद्विचारेण क्व चिन् फलविधेर्वशात् । क्व चित् साक्षाद्विहाध्याये प्रयुक्तिर्बहुधोच्यते ॥' वर्णकं १.

भाट्ट— एवं सिद्धे शेषिनिरूपिते शेषत्वे प्रयोजकनिरूपितं प्रयोज्यत्वमिदानीं निरूप्यते । अत्र च यद्यपि न प्रयोज्यत्वावच्छेदेन तन्निरूपणं प्रति शेषत्वनिरूपणस्य हेतुत्वम्, निमित्ताद्यङ्गत्वाभावेऽपि नैमित्तिकस्य तत्प्रयोज्यत्वेन अङ्गत्वे व्यापकत्वस्येव पुरोडाशकपालादेः तुषोपवापं प्रति कारकत्वेन अङ्गत्वसत्त्वेऽपि तत्प्रयोज्यत्वाभावेन व्याप्यत्वस्यापि अभावात् । अतो न अवच्छेदकावच्छेदेन हेतुहेतुमद्भावः, तथापि क्व चित् दध्यानयनादिनिष्ठप्रयोज्यत्वनिरूपणे तन्निष्ठशेषत्वनिरूपणस्य उपयोगात् सामानाधिकरण्येन तन्निरूपणं प्रति अङ्गत्वनिरूपणस्य हेतुत्वात् सङ्गत्युपपत्तिः । अत्र प्रयोज्यत्वं क्व चिन् क्रत्वर्थपुरुषार्थविचारद्वारेण, क्व चित्दन्यद्वारेण निरूप्यते, क्व चित्साक्षादेवेति प्रयोज्यत्व-

मेवाध्यायार्थः । क्रत्वर्थपुरुषार्थत्वं तु तृतीयसिद्धमपि उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यते इति विवेकः ।

**मण्डन**— ' अथ प्रयोजकाध्यायः । '

**शंकर**-- 'तुर्याध्यायप्रतिश्रवः ।' प्रतिश्रवः प्रतिज्ञा ।

* **क्रत्वर्थपुरुषार्थत्वं** तृतीयाध्यायसिद्धम् । **भाट्ट.** ४।१।१.

**क्रत्वर्थपुरुषार्थलक्षणम् ॥**

**यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणा, ऽविभक्तत्वात् । ४।१।२।२ वर्णकं १ ॥**

**भाष्यम्**— अथ किंलक्षणः क्रत्वर्थः, किंलक्षणः पुरुषार्थः इति लक्षणं वाच्यम् । तथाहि लघीयसी प्रतिपत्तिः, पृष्ठाकोटेन उपदेशो गरीयसी । ( भूमिगतानामनेकेषां द्रव्याणां प्रत्येकं स्पर्शनेन प्रदर्शने कर्तव्ये पृष्ठस्य आकोटः कुटिलीकरणं कर्तव्यं भवति , इति गौरवम् ) तदुच्यते । यस्मिन् प्रीतिः पुरुषस्य, यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिर्भवति, स पुरुषार्थः पदार्थः । कुतः ? तस्य लिप्सा अर्थलक्षणा । तस्य लिप्सा अर्थेनैव भवति, न शास्त्रेण । क्रत्वर्थो हि शास्त्रादवगम्यते, नान्यथा । अविभक्तो हि पुरुषार्थः प्रीत्या । योयः प्रीतिसाधनः, स पुरुषार्थः । पुरुषार्थे लक्षिते तद्विपरीतः क्रत्वर्थ इति क्रत्वर्थस्य लक्षणं सिद्धम् ।

**टुप्**— ( भाष्यमाक्षिपति- ) यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिरुपजायते ( स्वर्गादिलक्षणा ), स पुरुषार्थः पदार्थः ( दर्शपूर्णमासादिः ) । तस्य लिप्सा अर्थलक्षणा इति । किमुक्तं भवति ? यदि लिप्साशब्देन अनुष्ठानमुच्यते, तत् अयुक्तम् । नहि क्रत्वर्थेनापि विधिना बलात् पुरुषः प्रवर्त्यते । ( समाधत्ते- ) सत्यम् । क्रत्वर्थपुरुषार्थयोः द्वयोरपि साध्यसाधनसंबन्धो वैदिकः । किन्तु पुरुषार्थे करणम् इच्छातः, न नियोगतः । क्रत्वर्थे तु अनिच्छातो नियोगतः । तेन करणमभिप्रेत्य उक्तम्, 'तस्य लिप्सा अर्थलक्षणा ' इति । दुःखाकरत्वात् कथं यागः पुरुषार्थः ? साध्येन अविनाभावात् साधनस्य पुरुषार्थता उक्ता ।

**सोम**— **सूत्रार्थः**-यस्मिन् पदार्थे कृते पुरुषस्य प्रीतिः स्वर्गादिलक्षणा उपजायते , स दर्शपूर्णमासादिः पुरुषार्थः । यतः तस्य लिप्सा अनुष्ठानम् , अर्थलक्षणं पुरुषार्थस्य प्रीत्या अविभक्तत्वात् इति ।

**वि**— 'क्रत्वर्थादेर्नास्ति वाऽस्ति लक्ष्म, नास्त्यनिरूपणात् । , क्रतवे यस्तदर्थोऽसाविति तस्य निरूपणम् ॥'

**भाट्ट**— वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते । तत्र **तन्त्ररत्ने** तावत् स्वयंप्रार्थितसाध्याधीनानुष्ठानं पुरुषार्थः । तदुपकारकं क्रत्वर्थः इत्युक्तम् । **तन्न** । फले काम्यकालादौ ' न कलञ्जं भक्षयेत् ' इति निषेधेषु च अव्याप्त्यापत्तेः, अनुष्ठेयत्वाभावात् , निषेधेषु स्वयंप्रार्थितसाध्याप्रसिद्धेश्च । क्रत्वर्थलक्षणस्य आधानादौ अतिव्याप्तेश्च । **यदपि शास्त्रदीपिकायां** इतिकर्तव्यतात्वेन अन्वितत्वं क्रत्वर्थत्वम् , तद्भिन्नत्वं करणफलवृत्तिपुरुषार्थत्वमित्युक्तम् । **तदपि न,** क्रत्वर्थनिषेधानाम् अक्रियात्वेन अनितिकर्तव्यतात्वेन तेष्वव्याप्तेः, आधानाध्ययनयोः उभयभिन्नत्वस्य तन्त्ररत्ने त्वदुक्तत्वेन तत्र पुरुषार्थलक्षणस्य अतिव्याप्तेश्च । तस्मात् स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं पुरुषार्थत्वम् । स्वयंप्रार्थितत्वं च शास्त्रानधीनेष्टसाधनताज्ञानजन्येच्छाविषयत्वम् , स्वर्गपश्वादौ हि इष्टसाधनता न शास्त्रगम्या । इदं च स्वर्गस्य देशविशेषरूपत्वे । सुखविशेषरूपत्वे तु शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वं बोध्यम् । यागक्रतूपकारादौ तु सा शास्त्रगम्येति ते न स्वयंप्रार्थिताः, स्वर्गादयश्च तथा । अतः तदुद्देशेन विधीयमानयागादिर्भवति पुरुषार्थः । फलस्य पुरुषार्थत्वव्यवहारो भाक्तः इत्युक्तमेव ' फलं च पुरुषार्थत्वात् ' इत्यत्र । उद्देश्यताविधेयत्वे च स्वरूपसंबन्धरूपविषयताविशेषात्मके लक्षणघटके , न तु साध्यत्वानुष्ठेयत्वात्मके । तेन निषेधस्थले नरकाभावोद्देशेन निवृत्तिविधानात् फलोद्देशेन च कालविधानात् नाव्याप्तिः । पुरुषार्थेषु अभ्यनुज्ञाविधिषु च दोषाभावोद्देशेन तत्तत्क्रियाविधानात् नाव्याप्तिः । एवं च स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वमेवेह क्रत्वर्थत्वम् । क्रतुशब्दो हि अस्मिन् प्रकरणे स्वयमप्रार्थितपरः । तेन आधानाध्ययनयोः ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशाग्न्यर्थत्वज्ञाना-



र्थत्वात् क्रत्वर्थत्वोपपत्तिः । क्रत्वर्थनिषेधेषु च उक्तविधया क्रतुवैगुण्यपरिहारोद्देशेन निवृत्तेर्विधेयत्वात् नाव्याप्तिः । ' नातिरात्रे ' इत्यादौ च क्रतुसाद्गुण्यस्य अङ्गान्तरजन्यत्वेऽपि षोडशिग्रहणाभावं प्रति उद्देश्यत्वाविघातान्न सा । एवं क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति सर्वं समञ्जसम् ।

**मण्डन**— ' पुमर्थे पुरुषप्रियम् । '

**शंकर**-- ' लक्षणं पुरुषार्थस्य । ' २.

* **क्रत्वर्थपुरुषार्थानुभयरूपं** प्रवृत्तिरूपं वैदिकं कर्म यथा अध्ययनम् आधानं च । **बाल.** पृ. ८१. * **क्रत्वर्थलक्षणमुक्तम्** ' असंयुक्तं प्रकरणात् ' (३।३।४) इत्यनेन श्रुत्यादिभिर्यदसंयुक्तं फलवता च क्रतुना प्रकरणे गृह्यते, तत् क्रत्वर्थम् इति । **टुप्**.५।१।१।१ पृ. १२८७. * **क्रत्वर्थविकल्पभेदाः** न्यायगम्याः वाचनिकाश्च ' विकल्पभेदनिरूपणम् ' इति बिन्दौ बालमीमांसाप्रकाशे द्रष्टव्याः । **के.** * **क्रत्वर्थविधिविषयकं सर्वम्** ' विधिः द्विविधः ' इति बिन्दौ बालमीमांसायां द्रष्टव्यम् । **के.**

* **क्रमः** आनन्तर्यलक्षणः । **सु.** पृ. १०३७. * **क्रमः** क्रियाविशेषणतया विधीयते । **वि.** ५।१।१ वर्णकं २. * **क्रमः** न कश्चित् पाठादिनियमितः काम्यानां नैमित्तिकानां च कर्मणामनुष्ठाने । यथाकामं यथानिमित्तं चानुष्ठानम् । **भा.** ५।३।१२।३२-३६.

* **क्रमः** नाम अव्यवहितोत्तरत्वरूपम् आनन्तर्यम् । तच्च एकप्रतियोगिकम् एकवृत्ति । यथा ' वेदं कृत्वा वेदिं करोति ' इत्यत्र वेदकरणप्रतियोगिकमानन्तर्यं वेदिकरणवृत्ति । अत्र च दर्शपूर्णमासोत्तरत्वस्यापि सोमाङ्गत्वात् तद्-व्यावृत्त्यर्थम् अव्यवहितेति विशेषणम् । तत्र दर्शपूर्णमासपूर्वकालिकत्वमात्रं क्त्वाप्रत्ययार्थः, न तु अव्यवहितत्वांशोऽपि । न च सोमविधेस्तदपेक्षा , येन अव्यवधाने एव तत् पर्यवस्येत् , सोमविधेः भिन्नप्रयोगविधिविधेयदर्शपूर्णमासप्रतियोगिकक्रमानपेक्षत्वात् । अतस्तत्र उत्तरकालत्वमेव विधेयम्, न क्रमः । क्रमश्च सर्वत्र उत्तरपदार्थाङ्गं तस्यैव ' काहं कर्तव्यः' इत्यपेक्षणात् , न तु पूर्वपदार्थाङ्गम् 'मदुत्तरं कः पदार्थः कर्तव्यः' इत्यपेक्षायाः क्व चिदपि अनुदयात् । पूर्वपदार्थस्तु प्रतियोगितया क्रमविशेषणं दर्शपूर्णमासादिरिव पूर्वकालतायाः ।

**एतेन** उभयपौर्वापर्यरूपोऽपि क्रमः पदार्थद्वयाङ्गम् इति केषां चिदुक्तम् **अपास्तम्** , प्रमाणाभावात् । अस्तु वा ' प्रथमभक्षः ' इत्यादौ प्राथम्यं पूर्वपदार्थाङ्गमेव । 'तत्तत्पदार्थानन्तरं तत्तत्पदार्थाः इत्येवम् अनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रमः ' इति **मूलोक्तः** पक्षः अशाब्दत्वात् विकृतौ क्व चित् एकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्य असंभवात् , व्युत्क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेः उपेक्षितः । अस्य च क्रमस्य प्रयोज्यनिष्ठत्वात् तन्निरूपणोत्तरमारम्भः । तन्नियमे च षट् प्रमाणानि श्रुत्यादीनि । तेषां लक्षणानि तत्तन्निरूपणावसरे वक्ष्यन्ते । तत्र श्रौतः क्रमः प्रातिस्विकविधिना विधीयते । आर्थादिक्रमास्तु प्रयोगविधिनैव इति **मूलानुयायिनः** । **वस्तुतस्तु** श्रौतक्रमस्थले क्त्वाऽऽदिना अवगतेः उत्पन्नस्य वाक्येन विनियोगः । क्रमान्तरे तु अर्थादिना उत्पन्नस्य प्रकरणादिकल्पितश्रुत्या विनियोगः । प्रयोगस्तु सर्वत्रैव अङ्गान्तरवत् प्रयोगविधिनैव । इदं च तत्रतत्र स्फुटीकरिष्यते । युज्यते च क्रमस्यापि द्रव्यगुणादिवत् पदार्थविशेषणत्वेन विधानम् । **भाट्ट.** ५।१।१ पृ. १५३.

* **क्रमः** नाम विततिविशेषः पौर्वापर्यरूपो वा । तत्र च षट् प्रमाणानि श्रुति-अर्थ-पाठ-स्थान-मुख्य-प्रवृत्त्याख्यानि । तत्र क्रमपरं वचनं श्रुतिः । तच्च द्विविधं केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति । तत्र ' वेदं कृत्वा वेदिं करोति ' इति केवलक्रमपरम् , वेदिकरणादेः वचनान्तरेण विहितत्वात् । ' वषट्कर्तुः प्रथमभक्षः ' इति तु क्रमविशिष्टपदार्थपरम् , एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् । सेयं श्रुतिः इतरप्रमाणापेक्षया बलवती, तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एव आश्विनस्य पाठक्रमात् तृतीयस्थाने ग्रहणप्रसक्तौ ' आश्विनो दशमो गृह्यते ' इति वचनात् दशमस्थाने ग्रहणमित्युक्तम् । यत्र तु प्रयोजनवशेन निर्णयः, स आर्थः क्रमः । यथा अग्निहोत्रहोमयवागूपाकयोः । अत्र हि यवाग्वाः होमार्थत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । स चायं पाठक्रमात् बलवान् । यथापाठं ह्यनुष्ठाने कॢप्तप्रयोजनबाधः अदृष्टार्थत्वं

च स्यात् । नहि होमानन्तरं क्रियमाणस्य किञ्चित् दृष्टं प्रयोजनमस्ति । पदार्थबोधकवाक्यानां यः क्रमः, स **पाठक्रमः** । तस्माच्च पदार्थानां क्रम आश्रीयते । येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतानि अर्थप्रत्ययं जनयन्ति, यथाऽर्थप्रत्ययं च पदार्थानामनुष्ठानात् । स च पाठो द्विविधः । मन्त्रपाठो ब्राह्मणपाठश्चेति । तत्र आग्नेयाग्नीषोमयोः ( पुरोडाशयोः ) तत्तद्याज्याऽनुवाक्याक्रमात् यः क्रमः आश्रीयते, स **मन्त्रपाठात्** । स चायं मन्त्रपाठो ब्राह्मणपाठात् बलवान्, अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्य अन्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगात् बहिरेव ' इदमेवं कर्तव्यम् ' इत्येवमवबोध्य कृतार्थम्, इति न पुनः प्रयोगकाले व्याप्रियते । मन्त्राः पुनः अनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारकाः इति वक्ष्यामः । तेन अनुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात्, तत्क्रमस्य च मन्त्रक्रमाधीनत्वात् अन्तरङ्गो मन्त्रपाठः इतरस्मात् अतिबलवान् । अत एव आग्नेयाग्नीषोमीययोः ब्राह्मणपाठात् आदौ अग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानम् इत्येवं क्रमं बाधित्वा मन्त्रपाठात् आदौ आग्नेयानुष्ठानं पश्चात् अग्नीषोमीयस्य इत्येवं क्रमः इत्युक्तम् । प्रयाजानाम् ' समिधो यजति ' ' तनूनपातं यजति ' इत्येवं विधायकवाक्यक्रमात् यः क्रमः, स **ब्राह्मणपाठक्रमः** । अत्र च यद्यपि ब्राह्मणवाक्यानि अर्थे विधाय कृतार्थानि, तथापि प्रयाजानां स्मारकान्तरस्याभावात् तान्येव स्मारकत्वेन स्वीक्रियन्ते । तथा च येन क्रमेण तानि अधीतानि तेनैव क्रमेण अर्थस्मरणं जनयन्ति, इति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति । किञ्च यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णींविहितेषु कर्मसु, तेषां क्रमो ब्राह्मणपाठक्रमात्, तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणं तु कृत्वाचिन्तया, तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् । यथा आहुः अर्थवादचरणे वार्तिककाराः 'प्रयाजादिवाक्यानि अर्थं समर्प्य चरितार्थानि स्वरूपसंस्पर्शे सत्यपि प्रयोजकतां न प्रतिपद्यन्ते ' इति । तस्मात् समन्त्रककर्मणां पाठक्रमो मन्त्रपाठात्, अमन्त्रकपाठक्रमस्तु ब्राह्मणपाठक्रमादेव इति ।

प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ वचनादेकस्मिन् देशे अनुष्ठाने कर्तव्ये यस्य देशे अनुष्ठीयन्ते, तस्य प्रथममनुष्ठानम्, इतरयोश्च पश्चात्, अयं यः क्रमः स **स्थानक्रमः** । स्थानं नाम उपस्थितिः । यस्य हि देशे योऽनुष्ठीयते, तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवति, इति युक्तं तस्य प्रथममनुष्ठानम् । अत एव साद्यस्क्रे अग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्ये आदौ सवनीयपशोरनुष्ठानम्, तस्मिन् देशे आश्विनग्रहणानन्तरं सवनीयस्यैव प्रथममुपस्थितेः, इतरयोस्तु पश्चात् । आश्विनग्रहणानन्तरं हि सवनीयदेशः । प्रकृतौ ' आश्विनं ग्रहं गृहीत्वा, त्रिवृता यूपं परिवीय, आग्नेयं सवनीयं पशुमुपाकरोति ' इत्याश्विनग्रहणानन्तरं तस्य विहितत्वात् । तथा च साद्यस्क्रेऽपि आश्विनग्रहणे कृते सवनीय एवोपस्थितो भवति, इति युक्तं तस्य स्थानात् प्रथममनुष्ठानम्, इतरयोश्च पश्चात् । प्रधानक्रमेण यः अङ्गानां क्रम आश्रीयते, स **मुख्यक्रमः** । येन हि क्रमेण प्रधानानि क्रियन्ते, तेनैव चेत् क्रमेण तेषामङ्गानि अनुष्ठीयन्ते, तदा सर्वेषामङ्गानां स्वप्रधानैः तुल्यं व्यवधानं भवति, व्युत्क्रमेण तु अनुष्ठाने केषां चिदङ्गानां स्वैः प्रधानैः अत्यन्तमव्यवधानम्, अन्येषाम् अत्यन्तं व्यवधानं स्यात्, तच्चायुक्तम्, प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽपि अङ्गक्रमे हेतुः । अत एव प्रयाजशेषेण आदौ आग्नेयहविषः अभिघारणम्, पश्चादैन्द्रस्य दध्नः, आग्नेययागैन्द्रयागयोः पौर्वापर्यात् । अतश्च आदौ आग्नेयहविरभिघारणम्, ततः ऐन्द्रस्य हविषः, ततः आग्नेययागः, ततश्च ऐन्द्रो यागः इत्येवं क्रमो मुख्यक्रमात् सिद्धो भवति । अतो युक्तः प्रयाजशेषाभिघारणस्य मुख्यक्रमात् क्रमः इति । स चासौ मुख्यक्रमः पाठक्रमात् दुर्बलः । मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिः । पाठक्रमस्तु निरपेक्षस्वाध्यायपाठक्रममात्रसापेक्षतया न तथा ( विलम्बितप्रतिपत्तिः ) इति बलवान् । अत एव आग्नेय– उपांशुयाज– अग्नीषोमीयाणां क्रमेण अनुष्ठीयमानानामपि उपांशुयाजाज्यनिर्वापः मुख्यक्रमात् न पूर्वमनुष्ठीयते तस्य दुर्बलत्वात्, पाठक्रमात्तु पश्चादनुष्ठीयते



तस्य प्रबलत्वात् । स चायं मुख्यक्रमः प्रवृत्तिक्रमात् बलवान् । प्रवृत्तिक्रमे हि आश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति । अस्मिंस्तु आश्रीयमाणे संनिकर्षः । तद्यथा दर्शपूर्णमासयोः आदौ आग्नेयानुष्ठानम्, ततः सांनाय्यस्य । तद्धर्माश्च के चित् पूर्वमनुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन्, ततः आग्नेयधर्माः, ततः आग्नेयानुष्ठानम्, ततः सांनाय्यानुष्ठानम्, तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्याम् आग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात् । यदा तु सांनाय्यधर्माणां केषां चित् पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्य आग्नेयधर्मानुष्ठानानन्तरम् अनुष्ठीयन्ते, तदा सर्वेषाम् आग्नेयधर्मसांनाय्यधर्माणाम् एकेनैव विजातीयेन व्यवधानं भवति, आग्नेयधर्माणां स्वप्रधानेन सह आग्नेयानुष्ठानेन व्यवधानात् इति न विप्रकर्षः । तस्मात् मुख्यक्रमः प्रवृत्तिकमात् बलवान् ।

सहप्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानाम् आवृत्त्या अनुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमात् यः क्रमः, स **प्रवृत्तिक्रमः** । यथा प्राजापत्याङ्गेषु । प्राजापत्याः हि ' वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति ' इति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताकाः एककालत्वेन विहिताः । अतस्तेषां तदङ्गानां च उपाकरणनियोजनप्रभृतीनां साहित्यं संपादनीयम् । अतः प्राजापत्येषु एकं पदार्थं ( उपाकरणं ) सर्वत्रानुष्ठाय द्वितीयः पदार्थोऽनुष्ठेयः । तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित् पशोः ( इच्छया ) आरभ्य कर्तव्यम् । द्वितीयस्तु पदार्थः, येन क्रमेण प्रथमोऽनुष्ठितः, तेनैव क्रमेण अनुष्ठेयः । तत् सिद्धं प्रथमानुष्ठितपदार्थक्रमात् यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः । ( अत्र सर्वो ग्रन्थो न गृहीतः किन्तु मध्यंमध्यमुपयुक्तमेवेति ध्येयम् । ) मीन्या. पृ. २२४–२३५.

* क्रमः पदार्थानां गुणभूतो भवति । भा. ५।१।२।२. * क्रमः प्रयोजकाप्रयोजकत्वादृते नास्ति । वा. ७।१।१।१ पृ. १५२४. * क्रमः भिन्नग्रन्थाम्नातानामपि कर्ममन्त्राणां उपकार्योपकारकाकाङ्क्षायां ब्राह्मणाधीतैः कर्मभिः मन्त्रसंहिताऽधीतेषु मन्त्रेषु उपकारकत्वेन, मन्त्रैश्च कर्मसु उपकार्यत्वेन, आलोच्यमानेषु आदित आरभ्य आलोचनात् आद्यग्रन्थप्रदेशाधीतयोः कर्ममन्त्रयोः अन्योन्यम्, द्वितीयप्रदेशाधीतयोश्च अन्योन्यम्, इत्येवं क्रमेण बुद्धौ विपरिवृत्तेः सर्वस्वसंवेद्यत्वेन अपह्नवायोगात् पाठसादेश्यहेतुकः क्रमोऽस्ति । सु. पृ. ११९७, * क्रमः भिन्नप्रयोगवचनगृहीतानां नास्ति । पृ. ९५१.

**क्रमश्च देशसामान्यात्** । ३।३।५।१२ ॥

श्रुतिलिङ्गवाक्यप्रकरणवत् क्रमश्च, क्रमोऽपि अङ्गाङ्गिभावे प्रमाणं भवति । क्रमः स्थानं संनिधिः इति पर्यायाः । देशसामान्यात् । क्व चित् देशः स्थानम् उभयोः समानं भवति । क्व चित्तु उभयोरपि एकस्मिन् देशे पाठो भवति । तेन तयोस्तयोः अङ्गाङ्गिभावः सिध्यति । यथा दर्शपूर्णमासयोः अनुमन्त्रणमन्त्रपाठे ' अग्नेरहम् ' इति प्रथमः पठ्यते, ' दब्धिरसि ' इति द्वितीयः पठ्यते । तेनैव क्रमेण प्रथमम् आग्नेययागः, तत उपांशुयाजः इति नियमः । यथा व्याकरणे ' यथासंख्यमनुदेशः समानाम् ' इत्युक्तम् । तेन च 'एचोऽयवायावः' इति एकारस्य स्थाने अय्, ओकारस्य अव्, ऐकारस्य आय्, औकारस्य आव् इत्यादेशा भवन्ति अचि परे तथैवायं स्थानक्रमः । के.

* क्रमः संयोगादिवत् अनेकपदार्थवृत्तिकः अभिमतः । कणिका. पृ. ४२१. * क्रमः सादेश्य-स्थानापरपर्यायो द्विविधः अनुष्ठानसादेश्यं पाठसादेश्यं चेति । पाठसादेश्यमपि द्वेधा यथाक्रमपाठः संनिधिपाठश्चेति । त्रयमपीदं उभयाकाङ्क्षा अङ्गमात्राकाङ्क्षा चेति । एवं क्रमः षड्विधः । सोऽयं स्थानापरपर्यायो विनियोजकः । यत्र फलवत् एकं समाम्नातम्, स्थलान्तरे च अनारभ्यविधया अफलमारादुपकारकम् । तयोश्च उभयोरपि वचनद्वयात् स्वतन्त्रैककालकर्तव्यता, तत्र तस्याफलस्य फलवदङ्गत्वम् अनुष्ठानसादेश्यात् इति । तच्च फलवतो दर्विहोमत्वेन अपूर्वत्वे उभयाकाङ्क्षया, विकृतित्वे तु अन्यतराकाङ्क्षयेति । यत्र विभिन्नफलकानेकप्रधानाम्नानं ब्राह्मणे, मन्त्रे च तेनैव क्रमेण जपादिमन्त्रोच्चारणविधानम्, तत्र तत्तद्विधीनां पाठक्रमेणैव तत्तत्प्रधानविध्युपस्थापकत्वात्

प्रधानाङ्गता तत्तन्मन्त्रोच्चारणस्य पाठक्रमेणैव । अत्रापि पूर्ववत् दर्वीहोमादिरूपत्वे उभयाकाङ्क्षा, विकृतिरूपत्वे तु अन्यतराकाङ्क्षा । उपहोमानां विकृत्यङ्गत्वं संनिधिपाठात्, तेषां प्रमाणान्तरेण अविनियोगात् । उभयाकाङ्क्षया संनिधेर्विनियोजकत्वे तु यद्यपि नैवोदाहरणं संभवति, तथापि तस्य अपूर्वविशेषोपस्थापनादिना तदुपयोगित्वात् विनियोजकत्वव्यवहारः । इति सिद्धं क्रमस्य विनियोजकत्वम् । ( ग्रन्थसंक्षेपोऽयम् ) । कौ. ३।३।५।१२ पृ. ३३६. * क्रमः हि आनन्तर्यम् । स च विशेषसंबन्धे कारणम् इति समधिगतम् । सत्यं कारणम्, न तु बलीयसा प्रमाणेन यत्र विरुध्यते । भा. १०।६।९।२७–२८, * अनेकस्य आम्नायमानस्य संनिधिविशेषाम्नानमात्रं हि क्रमः । ३।३।७।१४ पृ. ८५५. * उपाकरणादीनां पाठक्रमेणैव औपवसथ्याख्ये दैक्षप्रदेशे अनुष्ठानावगमात् अनुष्ठानसादेश्यलक्षणोऽपि क्रमोऽस्ति । सु. पृ. ११९७, * वैकृतकर्मसंनिधिरपि क्रम एव । पृ. ११९७. * क्रमं समाख्यां च शक्नोति लिङ्गं बाधितुमिति । तथापि काम्ययाज्याऽनुवाक्याकाण्डसमाख्या बलवती । भा. ३।२।७।२०, * क्रमेण अनुष्ठानं गम्यते वाक्यात् पदार्थानाम् । यथा लोके स्नायादनुलिम्पेत् भुञ्जीत इति । यथा च अदृष्टार्थेषु उपदिश्यमानेषु कश्चिद् ब्रूयात् देवाय धूपो देयः पुष्पाण्यवकरितव्यानि चन्दनेनानुलेप्तव्यः उपहारः अस्मै उपहर्तव्यः, एवं कृते देवस्तुष्यतीति । तमन्यः प्रतिब्रूते, नैतदेवम्, न प्रथमं धूपो दातव्यः, प्रथमं पुष्पाण्यवकरितव्यानि इति, एवं मन्यते धूपदानस्य प्राथम्यमनेनोक्तमिति । ५।१।४।४, * क्रमेण अपच्छेदे परनिमित्तकप्रायश्चित्तमनुष्ठेयम् । ६।५।१९।५४.

ꣳ क्रमेण वा नियम्येत क्रत्वेकत्वे, तद्गुणत्वात् । ५।१।४।४ ॥

दर्शपूर्णमासयोः ‘ समिधो यजति ’ ‘ तनूनपातं यजति ’ ‘ इडो यजति ’ ‘ बर्हिर्यजति ’ ‘ स्वाहाकारं यजति ’ इति पञ्च प्रयाजा नाम यागाः श्रुताः । तेषामनुष्ठानं किम् अनियतेन क्रमेण कर्तव्यम्, उत पाठेन यः क्रमस्तेनेति विचारे अनियतः क्रमः इति पूर्वः पक्षः । तं वाशब्देन निरस्य सिद्धान्तयति । क्रत्वेकत्वे क्रतोरेकत्वे सति अनुष्ठानं क्रमेण पाठक्रमेण नियम्येत । पाठक्रमेण अनुष्ठाननियमः स्वीकर्तव्यः । तद्गुणत्वात् तस्य पाठक्रमस्य पदार्थक्रमं प्रति बोधकतया गुणत्वात् । यथा स्नायात् अनुलिम्पेत् भुञ्जीत इति क्रमेणानुष्ठानं गम्यते पदार्थानां तद्वत् ।

अशाब्द इति चेत् स्याद् वाक्यशब्दत्वात् । ५ ॥

पूर्वपक्षिणः सूत्रम् । वाक्यशब्दत्वात् अशाब्दः स्यात् इति चेत् इत्यन्वयः । वाक्यमेव शब्दः शब्दरूपं प्रमाणं यस्य स क्रमः वाक्यशब्दः, तस्य भावः वाक्यशब्दत्वं तस्मात् । वाक्यार्थः पदार्थपूर्वकः, पदेभ्यश्च पदार्था एवावगम्यन्ते न क्रमः । तथा चात्र क्रमस्य वाक्यशब्दत्वमेव नास्ति इति अशाब्दोऽयं क्रमः, न शब्देन प्रतिपाद्यते । तस्मादनियम एव क्रमस्य ।

अर्थकृते चानुमानं स्यात् क्रत्वेकत्वे, परार्थत्वात् स्वेन त्वर्थेन संबन्धस्तस्मात् स्वशब्द उच्यते । ६ ॥

पाठोऽपि क्रमनियामकः इति सिद्धान्तप्रतिपादनार्थं सूत्रम् । क्रत्वेकत्वे क्रतोः कर्तुश्च एकत्वे सति अवश्यं स्वीकार्ये क्रमे अर्थकृते सति आर्थिके क्रमे स्वीकार्ये सति अनुमानं स्यात् क्रमस्य । सर्वत्र आनुमानिक एव क्रमः स्यात् । परार्थत्वात् वेदस्य इति भाष्ये सुबोधिन्यां चाध्याहारः कृतो वेदशब्दस्य । वेदस्य क्रत्वनुष्ठानोपयोगिपदार्थतत्क्रमज्ञापनार्थत्वात् स्वेन अर्थेन संबन्धो वेदस्य । यथा च पदार्थो वेदार्थः, तथा क्रमोऽपि वेदार्थः । तस्मात् वेदस्य क्रमार्थत्वात्, पदार्थानुष्ठानक्रमः स्वशब्दः, स्वः स्वीयः स्वप्रतिपादकः शब्दो यस्य तादृशः उच्यते । वेदसिद्धः पाठसिद्ध एव क्रम इत्युच्यते । एकस्य कर्मणः कर्ता एकः । अनुष्ठेयाः पदार्थास्तु बहवः, तत्र कश्चित् क्रमः स्वीकार्य एव । वेदश्च क्रत्वनुष्ठानार्थः सन् स्वार्थभूतेन क्रमेणापि प्रतिपादकतासंबन्धेन संबद्धः । अतः क्रमः वेदशब्दपाठेन बोधित एव भवति । तस्मात् पाठक्रमोऽपि नियामक इति सूत्रतात्पर्यम् ।

तथा चान्यार्थदर्शनम् । ७ ॥



दर्शपूर्णमासयोः ‘ समिधो जाति ’ इत्यादीनां प्रयाजानामनुष्ठानं पाठक्रमेण कर्तव्यमिति सिद्धान्ते हेत्वन्तरमाह । तथा च पाठक्रमेण अनुष्ठानत्वे अन्यार्थस्य दर्शनं भवति, ‘ व्यत्यस्तं ऋतव्या उपदधाति ’ ‘ आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति ’ ‘ अभिचरता प्रतिलोमं होतव्यम् ’ इत्यादि । यदि अनियमेनैव उपधानादिकं स्यात् व्यत्यस्तादिवचनमनर्थकं स्यात् । तस्मादेतस्मात् अन्यार्थस्य दर्शनात् अन्यत्र पाठक्रमेण प्रयोगः सिध्यति । तस्मात् प्रयाजानां पाठक्रमो नियामकः । के.

* क्रमात् वाक्यप्रकरणे बलीयसी । भा. ३।६।९।३०. * क्रमात् विनियोगः । प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन् अवश्यं मन्त्रसमाम्नायम् आदित आरभ्य आलोचयति । ततश्च प्रथमः एव मन्त्रः प्रथमं हृदयमागच्छति । न चास्यातिक्रमे कारणमस्ति इति स एव गृह्यते । तथा मन्त्रस्य शेषिणमपेक्षमाणस्य अनयैव प्रक्रियया आद्येन शेषिणा सह संबन्धो भवति । ततश्च तन्निराकाङ्क्षतया द्वितीयादीनामपि एवमेव द्वितीयादिभिरेव योगेन भवितव्यम् । वा. ३।३।५।१२ पृ. ८१९. * क्रमस्य आनन्तर्यलक्षणस्य सिद्धान्तेऽपि विनियोजकत्वं नाभ्युपगम्यते । सु. पृ. ११९३, * क्रमस्य पाठसादेश्यलक्षणस्य अनुष्ठानसादेश्यलक्षणस्य वा प्रकरणादिकल्पनाद्वारा विनियोजकत्वं युक्तम् । आनन्तर्यलक्षणस्य तु क्रमस्य बहुषु पठितव्येषु अवर्जनीयतया उभयाकाङ्क्षादिरूपप्रकरणाद्यभावेऽपि उपपत्तेः तत्कल्पनाऽयोगात् न विनियोजकता इत्याशङ्क्य संनिधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्य आनन्तर्येऽपि तुल्यत्वात् विनियोजकत्वं संभवति इति सूचयति । पृ. १०६७. * क्रमस्य पाठोपस्थितस्य विनियोजकवाक्यकल्पनया अङ्गत्वे अवगते प्रयोगविधानम् । भाट्ट. ५।१।४. * क्रमस्य प्रकरणेन बाधितत्वात् विधौ तुल्यत्वात् प्रकरणस्य सर्वार्थान्यङ्गानि विज्ञायन्ते, न यस्य संनिधौ तदर्थानि । भा. ११।१।१०।६५. * क्रमस्य श्रुतिवत् साक्षाद्विनियोजकत्वाभावः । सु. पृ. १०६८. * य एव पदार्थानां वाचकः शब्दः, स एव क्रमस्यापि । भा. ५।१।४।६. * यत्रोक्तवक्ष्यमाणनियमकारणाभावः, तत्रानियम एव क्रमस्य । यथा ‘ वसन्तमृतूनां० ’ इत्येवमादीनां शाखाभेदेनाम्नातानां प्रयाजानुमन्त्रणानाम् दर्शपूर्णमासयोः । शा. ५।१।३. * क्रमयोर्विरोधे काम्ये एव याज्याकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण तयोरेव ऐन्द्राग्नयोर्युगलयोः अनियमेन प्राप्नुवतोः यथासंख्यक्रमेण अत्यन्तदेशसाम्येन प्रत्यासन्नत्वात् विनियोगो भवति । वा. ३।३।७।१४ पृ. ८४०. * क्रमे वेदः प्रमाणम् । वि. ५।१।१. * क्रमकालपरिमाणानि समस्तपदार्थधर्मत्वेन निश्चितानि । वा. १।३।३।५ पृ. १९६.

ꣳ क्रमकोपाधिकरणम् । श्रुत्यर्थक्रमाभ्यां पाठक्रमस्य बाधः ॥

क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च । ५।४।१।१ ॥

भाष्यम्— इह पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां सह बाधां प्रति विचारणा । किं पाठक्रमस्ताभ्यां तुल्यः, उत बाध्यते इति । किं प्राप्तम् ? तुल्यबलावेतौ । पाठोऽपि हि कारणम्, श्रुत्यर्थावपि । न च प्रामाण्ये कश्चिद्विशेषोऽस्ति । तस्मादनियम इति । एवं प्राप्ते, ब्रूमः । पाठक्रमो हि बाध्यते श्रुत्या, अर्थेन च । कुतः ? श्रुतिविशेषात्, अर्थपरत्वाच्च । श्रुतिविशेषः कः ? यत्र श्रवणम्, तत्र प्रत्यक्षं कारणम् । पाठक्रमस्तु आनुमानिकः । पाठक्रमेण स्मरणम् एवमभिनिर्वर्तयितव्यम् इत्यवगम्यते । तस्यार्थवत्त्वेन एकया उपपत्त्या तथैवानुष्ठानम्, श्रुत्या पुनरनुष्ठानमेव एवं भवतीति प्रत्यक्षादवगम्यते । तथा अर्थेन । कुतः ? अर्थपरत्वात् । अर्थार्थं हि सर्वे प्रधानार्थम्, प्रधानमभिनिर्वर्तयतीति सर्वं क्रियते । तस्मात् पाठस्ताभ्यां बाध्यते । किमुदाहरणं प्रयोजनं च ? श्रुतौ ‘ आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति ’ । अत्र पाठक्रमस्य बलीयस्त्वे तृतीयस्य ग्रहणम्, सिद्धान्ते तु दशमस्य । अर्थे, अग्निहोत्रहोमः पूर्वमाम्नायते, पश्चात् श्रपणम् । एवं कर्तव्यम्, यदि पाठो बलवान् । सिद्धान्ते श्रपणं पूर्वम्, ततो होमः ।

शा.—‘ क्रमे श्रुत्यैव विहिते पाठतः को नु कल्पयेत् । प्रयोजनविरोधे वा कः पाठमनुरुध्यते ॥ हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम् । पाकश्चैव यवागूश्च, तां पक्त्वा जुहुयादतः ॥’

**सोम**— इह श्रुत्यादिप्रमाणानां बलाबलं चिन्त्यते । पूर्वं तु क चित्तद्विचारः प्रासङ्गिकः इति **पादान्तरत्वमानन्तर्यं च** । तत्र श्रुत्यर्थयोर्विरोध एव न संभवति, यथाश्रुत्येव प्रयोजनस्य कल्पनीयत्वात् । तदुक्तम् ( तन्त्ररत्ने ) 'श्रुत्यर्थयोर्विरोधस्तु नैव क चन संभवी । यथाश्रुत्येव हि न्याय्यमर्थस्य परिकल्पनम् ॥' इति । **सूत्रार्थस्तु**– प्रयोजनश्रुतिभ्यां पाठक्रमस्य बाधः, श्रौतक्रमस्य श्रुत्या प्रत्यक्षश्रवणेन कल्पनीयपाठक्रमात् विशेषसद्भावात् सर्वस्य प्रयोजनार्थत्वाच्चेति ।

वि— 'आश्विनो दशमः पाको यवाग्वा ऐच्छिकः क्रमः । नियतो वा, ऽग्रिमः पाठश्रुत्यर्थानां समत्वतः ॥, पाठात् क्रमः कल्पनीयः प्रत्यक्षस्तु श्रुतेः क्रमः । क्लृतिर्न शक्तिमुल्लङ्घ्य श्रुत्यर्थौ प्रबलौ ततः ॥'

**भाट्ट**— तदेवं निरूपितेषु क्रमप्रमाणेषूत्तरोत्तरस्य दौर्बल्यं प्रागेवास्माभिर्निरूपितम् । सुबोधत्वात्तु न सूत्रकारेणोच्यते । शिष्यानुग्रहार्थं तु क चिदुच्यते । श्रुतिविरोधे पाठस्य दौर्बल्यं यथा 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इति । अत्र पाठात् 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति, आश्विनं गृह्णाति' इत्येवंविधात् आश्विनग्रहणस्य तृतीयस्थाने प्राप्तस्य दशमश्रुत्या दशमस्थाने अनुष्ठानम् । 'तं तृतीयम्' इति तु पाठप्राप्तानुवाद एव, प्रवृत्तेः पाठेन बाधात् । एवमर्थेनापि पाठस्य बाधः । यथा 'अग्निहोत्रं जुहोति, यवागूं पचति' इति । व्याख्यातपूर्वमिदम् ।

**मण्डन**— 'श्रुत्यर्थाभ्यां पाठबाधः क्रमेषु ।'

**शंकर**— 'श्रुत्यर्थाभ्यां पाठबाधः ।'

**क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्च । ५।४।१।१॥**

पाठक्रमः श्रुतिक्रमेण अर्थक्रमेण च बाध्यते न वा इति विचारे क्रमस्य प्रमाणत्वाविशेषात् सर्वेषां तुल्यबलतया न बाध्यते इति पूर्वपक्षे प्राप्ते, सिद्धान्तमाह । क्रमशब्देन पाठक्रमो गृह्यते । क्रमस्य पाठक्रमस्य कोपः बाधः, अर्थशब्दाभ्याम् अर्थेन श्रुत्या च भवति । श्रुतिविशेषात् 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इति । अत्र प्रत्यक्षा श्रुतिरेव क्रममाह । सा आनुमानिकं पाठेन क्रमं बाधेत । अर्थपरत्वात् च । अग्निहोत्रहोमः पूर्वं पठ्यते, यवागूश्रपणं पश्चात् पठ्यते, तत्र यवागूश्रपणस्य प्रधानार्थत्वात् पाठक्रमो बाध्यते । तस्मात् पाठक्रमात् श्रौतक्रमः आर्थक्रमश्च बलवान् । **के.**

* **क्रमधर्मः** चोदनालक्षण एव । वि. ५।१।१ वर्णकं २. * **क्रमनियमलक्षणं** पञ्चमेऽध्याये उच्यते । तत् श्रुति–अर्थ–पाठ–प्रवृत्ति–काण्ड–मुख्यैर्वक्ष्यते । **भा.** ५।१।१।१। श्रुत्यर्थपाठक्रमाः उपदेशविषया एव । प्रवृत्तिकाण्डमुख्यक्रमास्तु अतिदेशविषया अपि प्रधानभूताः पदार्थाः । कर्ता गुणभूतः । तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव । क्रमनियमस्तु चिन्त्यते । **वा.** * **क्रमप्रमाणानां** षण्णामभावे अनियमः । यथा प्रयाजानुमन्त्रणादीनां नानाशाखाऽन्तरसमाम्नातानाम् 'वसन्तमृतूनां प्रीणामि' इत्यादीनाम् 'एको मम' इत्येवमादीनां च । **भा.** ५।१।३।३. * **क्रमबोधकानि** प्रमाणानि श्रुत्यर्थपाठस्थानमुख्यप्रवृत्तिरूपाणि षट् । **मणि. पृ.** १३.

* **क्रमवन्तः** ये आरब्धव्याः, ते प्रथमादुपक्रमितव्याः । भा. १०।५।१।६, * **क्रमवताम्** एकदेशग्रहणेषु आद्योपादानम् अन्त्यलोपश्च । १०।५।१।१–६.

* **क्रमविनियोगस्य** ( ३।१।१३।२३ ) अपवादः आनन्तर्यमचोदना इति । **भा.** ३।१।१४।२४–२५.

* **क्रमविपर्यासनिमित्तं** प्रायश्चित्तं कामं भवेत् ( अग्नीषोमीये पशौ पुरोडाशे च ) न ( तु अङ्गानाम् ) आवृत्तिः प्रायश्चित्तं तर्हि कर्तव्यम् ? क्रियते 'अयाश्चाग्नेः' इति सर्वप्रायश्चित्तं जुहोतीति । प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः । **भा.** १२।१।१।४.

**क्रमविपर्यासन्यायः** । यत्र क्रमस्य पूर्वापरविधेर्विपर्यासो व्यत्ययो भवति, तत्रायमवतरतीति । **साहस्री.** ४१०.

* **क्रमविशेषो** वाक्येन गम्यते सत्रे दीक्षाणाम् । **वि.** ५।१।१ वर्णकं ३.

* **क्रमविषये** प्रयोगविधिः प्रबलः, सर्वत्र क्रमक्लृप्तेः प्रयोगविध्यधीनत्वात् इति चेन्न, पदार्थप्राप्त्यधीनत्वात् प्रयोगविधेः तत्प्राप्तेश्चोदकाधीनत्वात् । चोदकोपजीवितया प्रयोगविधिर्दुर्बलः । **सोम.** ५।१।१०.



* **क्रमसमाख्ययोः** क्रमे वेदकल्पितमेव अङ्गाङ्गिनोर्देशसामान्यनिमित्तं परस्परपर्युपस्थानम् । सर्वत्र हि केन चित् अभिन्नदेशेन संबन्धोऽवकल्पते । न च समाख्यानवतः किं चित् देशसामान्यं वेदक्लृप्तम् उपलभामहे, येन संबन्धाभिमुख्यसंभवः । **वा.** ३।३।७।१४ पृ. ८३४.

**क्रमाधिकरणम्** । क्रमोऽपि विनियोगे प्रमाणम् ॥

**क्रमश्च, देशसामान्यात्** । ३।३।५।१२ ॥

**भाष्यम्** — अथ किं एतावन्त्येव विनियोगकारणानि ? नेत्युच्यते । किञ्च ? क्रमश्च, देशसामान्यात् । क्रमवताम् आनुपूर्व्येण उपदिश्यमानानां यस्य पर्याये यं धर्ममामनन्ति, तस्य तं प्रति आकाङ्क्षा अनुमीयते । सत्यामाकाङ्क्षायामेकवाक्यभावः, तस्मात् ततो विनियोगः इति । किमिहोदाहरणम्, किं च प्रयोजनम् । आनुपूर्व्यवतां यागानाम् अनुमन्त्रणेषु आम्नातेषु उपांशुयाजस्य क्रमे 'दब्धिर्नामाऽसि' इति ( मन्त्रः ) समाम्नातः । तस्य आकाङ्क्षामुत्पाद्य, तेन एकवाक्यतां यात्वा तत्रैव विनियोगमर्हति इति । तथा च ऐन्द्राग्नं कर्म वियातसजातस्य ( यस्य सजाताः बान्धवाः वियाताः विरोधं गताः, तस्य) अस्ति भ्रातृव्यवतः । तस्य याज्याऽनुवाक्यायुगलमपि आम्नायते ऐन्द्राग्नम् 'इन्द्राग्नी रोचना दिवः, प्र चर्षणिभ्यः' इत्येकम्, अपरम् 'इन्द्राग्नी नवतिं पुरः, श्नथद् वृत्रम्' इति । तत्र लिङ्गात् विनियोगे सिद्धे विशेषविनियोगो भवति पूर्वं युगलं पूर्वस्य ऐन्द्राग्नस्य, उत्तरमुत्तरस्य इति । एतत् उदाहरणं प्रयोजनं च इति ।

**वा**— पूर्ववदेव क्रमसमाख्ययोरपि अज्ञानादिभिः उपन्यासः कर्तव्यः । '**तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः । पाठानुष्ठानसादेश्याद् विनियोगस्य कारणम् ॥**' विनाऽपि अनुष्ठानदेशसाम्येन यावति प्रदेशे ब्राह्मणे प्रधानं पठ्यते, तावत्येव मन्त्रेषु मन्त्रः । तयोश्च अङ्गाङ्ग्यपेक्षावेलायां यथासंख्यन्यायेन समानदेशत्वात् बुद्धौ संनिधानं भवति । प्रथमस्य हि प्रधानस्य मन्त्रमन्विच्छन् अवश्यं मन्त्रसमाम्नायम् आदित आरभ्य आलोचयति । ततश्च प्रथम एव मन्त्रः प्रथमं हृदयमागच्छति । नच अस्यातिक्रमे हेतुरस्ति, इति स एव गृह्यते । तथा मन्त्रस्य शेषिणमपेक्षमाणस्य अनयैव प्रक्रियया आद्येन शेषिणा सह संबन्धो भवति । ततश्च तन्निराकाङ्क्षतया द्वितीयादीनामपि एवमेव द्वितीयादिभिरेव योगेन भवितव्यम् । तत्र आग्नेयाद्यनुमन्त्रणानां आग्नेयादिलिङ्गत्वात् तेनापि व्यवस्था सिध्यति इति अव्यक्तलिङ्गम् उपांशुयाजक्रमाधीतम् 'दब्धिर्नामाऽसि' इत्युदाहरति । ननु नास्य प्रकरणात् सर्वार्थत्वं विज्ञायते, तच्च बलीयः इत्यत्रापि विनियोगः प्राप्नोति । **अत्र केचिदाहुः** । उपांशुयाजग्रहणात् द्वयमपि अनुगृह्यते, तस्मात् तद्ग्रहणमिति । शक्यं तु वक्तुम् अननुग्राह्य एव क्रमः प्रकरणप्रत्ययविरुद्धत्वात् इति । शेषस्य हि सर्वार्थत्वं प्रतिप्रधानावृत्तेः प्रकरणावगतं न शक्यं बाधितुम् । **तत्र एतावदुत्तरं** भवति येऽन्ये शेषिणः आग्नेयादयः, ते विस्पष्टलिङ्गैः क्रमप्रकरणवद्भिः मन्त्रान्तरैः अवरुद्धत्वात् नैनमपेक्षन्ते । न च विकल्पः, अस्पष्टलिङ्गत्वेन वैषम्यात् । अदृष्टार्थानां समुच्चयः इति चेत् न । प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात् । सत्यपि च अदृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणात् । आग्नेयादिभिः कृतार्थैः उपेक्षितः सन् अगत्या पुनः तेष्वेव भवेत् । अस्ति चास्य गतिः उपांशुयाज इति । किञ्च '**न वाऽविज्ञातलिङ्गानां प्रक्रिया विनियोजिका । असीत्यस्य च सामर्थ्यं संनिधावुपसंहृतम् ॥**' 'दब्धिर्नामाऽसि' इति अस्पष्टलिङ्गोऽयम् । न च ईदृशं सन्तं प्रकरणं विनियोक्तुं क्षमम् । अयं तु असिशब्दः युष्मदर्थविषयत्वात् संनिहितम् अभिमुखं वा अभिधत्ते, नान्यम् । उपांशुयाजश्च संनिहितः अभिमुखश्च इति अभिधानसामर्थ्यं क्रमात् उपांशुयाजविषयं विज्ञायते । ततश्च लिङ्गेन प्रकरणं बाध्यते एव इत्यदोषः । काम्ययाज्याकाण्डक्रमस्तु व्याख्यात एव । अनुष्ठानदेशक्रमोऽपि पशुधर्माणाम् अग्नीषोमीयार्थत्वेन भविष्यति ।

**सोम**— **सूत्रार्थस्तु**– क्रमश्च विनियोगे प्रमाणं देशसामान्यरूपात् तस्मात् आकाङ्क्षादिक्रमेण विनियोगसंभवात् इति ।

वि— ' दब्धिर्नामेति मन्त्रोऽङ्गमुपांशुयजतेर्न वा । साधारणत्वाल्लिङ्गादेर्मानाभावादनङ्गता ॥, मन्त्राणां कर्मणां चात्र क्रमेणाम्नानमीक्ष्यते । प्रक्रियावत् क्रमो मानं यथासंख्यं ततोऽङ्गता ॥ ' ( क्रमं विभजति– ) ' क्रमः समानदेशत्वम्, पाठादर्थाच्च, पाठतः । यथासंख्यं, संनिधिश्च, यथासंख्यमुदाहृतम् ॥, शुन्धध्वमिति सांनाय्यपात्राङ्गं संनिधेर्मतम् । पशुधर्मोऽर्थसादेश्यादग्नीषोमीयतो भवेत् ॥ ' तदेवं क्रमस्य त्रैविध्यं द्रष्टव्यम् ।

भाट्ट—स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् । तच्च इतिकर्तव्यतात्वेन अयोग्यसंबन्धयोर्वाक्यार्थयोः संनिधिः । इतिकर्तव्यतात्वेनायोग्यत्वं द्वेधा । क्व चित् आकाङ्क्षाविरहात् यथा विकृतेरुपहोमादिविषये क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्व चिदव्यापारात्मकत्वात् यथा जपादिमन्त्रादौ । अत्र च एकवाक्योपात्तव्रीहियागादिसंनिधेरपि तथात्वापत्तेः वाक्यार्थेत्युक्तम् । प्रयाजादीनां स्थानविपर्यत्वापत्तिनिरासार्थमाद्यं विशेषणम् । तच्च सादेश्यापरपर्यायं द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं च । आद्यं द्विविधं यथाक्रमपाठः संनिधिपाठश्चेति । त्रयमपि इदं द्विविधम् उभयाकाङ्क्षया अन्यतराकाङ्क्षया च इति । अत्र उभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा च इतिकर्तव्यताऽऽकाङ्क्षाभिन्ना द्रष्टव्या । तत्र पाठक्रमात् काम्ययाज्याऽनुवाक्यामन्त्राणां काम्येष्ट्यङ्गत्वम् । संनिधेस्तु सांनाय्यपात्रशुन्धनविधिसंनिधौ समाम्नातस्य 'शुन्धध्वम्' इति मन्त्रस्य तदङ्गत्वम् । अनुष्ठानसादेश्यस्य तु पशुधर्माणां दैक्षपश्वङ्गत्वम् । यद्यपि चैषां लिङ्गादिप्रमाणान्तरेणैव विनियोगात्, क्रमादीनां च क्व चिदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वमात्रत्वात् नाङ्गत्वे प्रामाण्यम् । तथापि षड्विधस्यापि क्रमस्य असंकीर्णोदाहरणानि कौस्तुभोक्तरीत्या ऊहनीयानि । अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावत् इतिकर्तव्यताऽऽकाङ्क्षायाः कल्पनीयत्वात् प्रकरणकल्पकत्वम् । मन्त्रादिरूपसंनिपत्योपकारकस्थलेऽपि मन्त्रादेः स्वरूपेण यागजनकत्वेऽपि तन्नियमादृष्टोपहितस्य तदजनकत्वात् करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यताऽऽत्मकप्रकरणकल्पना आवश्यक्येव । अत एव तदपेक्षया तस्य दौर्बल्यम् । षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणात् अन्यतराकाङ्क्षालक्षणस्य, तत्रापि पाठक्रमात् अनुष्ठानसादेश्यस्य विधिसंनिधानस्य पुरःस्फूर्तिकत्वात्, तयोस्तु मध्ये संनिधानस्य प्राबल्यम्, एकग्रन्थस्थत्वात्, इत्यादि कौस्तुभे द्रष्टव्यम् ।

मण्डन— ' क्रमेण विनियोगोऽस्ति । '

शंकर— ' क्रमश्च विनियोक्ता स्यात् । '

* ' शुन्धध्वं दैव्याय कर्मणे ' यथा चात्र महाविकाराख्यगौणप्रकरणेन समाख्यां संनिधिं च बाधित्वा न सर्वसंबन्धिपात्राङ्गत्वम्, तथा **क्रमाधिकरणे** एव व्युत्पादितम् । कौ. ३।३।७।१४ पृ. ३६६.

* **क्रमानियमाधिकरणम्** । ' दर्शपूर्णमासयोः याजमानानां प्रयाजाद्यनु ' इति बिन्दौ द्रष्टव्यम् । के. ५।१।३।३. * **क्रमानुग्रहः** मुख्यः, जघन्यः छन्दसाम् । तस्मात् आद्ये तृचे गातव्यमिति । ( एकत्रिके क्रतौ माध्यंदिनपवमाने ) । भा. १०।५।२।९. * **क्रमोन्नयनं** च सर्वेषु पदार्थेषु आम्नातेषु पश्चात् पाठादिभिः संपद्यते । वि. ५।१।१६.

* **क्रयः** यागसाधनसोमप्राप्त्यर्थः । वा. ३।१।६।१२ पृ. ६९८. * क्रयः सोमस्य नित्यो ज्योतिष्टोमे स्वयं सोमवतोऽपि । भा. ६।८।७।२६–२७. * नहि विधीयमानावस्थः क्रयः गुणेन संबध्यमानं द्रव्यं विशिनष्टि इति उक्तम् अरुणाऽधिकरणे ( ३।१।६ ) । वा. ३।१।७।१४ पृ. ७१५. * **क्रयौ** द्वौ एकः अर्थहेतुकः, अन्यः शब्दकृतः । तत्र शब्दकृतः प्राक् क्रतुप्रवृत्तेः यज्ञसाधनोपार्जनकाले सोमविक्रयिणा सह संवादः । मूल्यार्पणं चार्थहेतुकः । भा. ११।२।१४।५९. * **क्रयाः** साधनद्रव्यरूपगुणभेदात् भिन्नाः । भाट्ट. ३।१।६. क्रये एव अरुणिमा निवेक्ष्यति न सर्वस्मिन् प्रकरणे । भा. ३।१।६।१२ पृ. ६९६.

* **क्रयद्रव्याणां** सोमविषयकाणां समुच्चयः । भा. ११।४।३।५, * **क्रयप्रयुक्तं** सोमक्रयणीनयनम्, न तु पदपांसुप्रयुक्तं ज्योतिष्टोमे । ४।१।१०।२५. * **क्रयसंबन्धः** आरुण्यस्य द्रव्यपरिच्छेदद्वारा लब्धः । वा. ३।२।२।३ पृ. ७५२. * **क्रयसमुच्चयपरम्** 'दशभिः क्रीणाति' इति वचनम् । भाट्ट. ३।१।६. **क्रयाभिषवादिः** मुख्यसोमधर्मः पूतीकादिषु श्रुतेष्वपि प्रतिनिधिषु तुल्यः । भा. ३।६।१५।४०, * **क्रयार्थं** सोमस्य साद्यस्के विहितेन त्रैवार्षिकपुंगवेन प्राकृतसर्वक्रयद्रव्यस्य बाधः । १०।३।१६। ६०–६१.

* **क्रयणं** सुरायाः सौत्रामण्याम् 'सीसेन क्लीबात् क्रय्या ' । भा. ८।२।१।४.

**क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् । १२।४।३।५ ॥**

'अजया क्रीणाति' 'हिरण्येन क्रीणाति' इत्यादिना उक्तेषु क्रयणेषु सोमक्रयणार्थेषु दशसु द्रव्येषु विकल्पः स्यात् । केन चित् एकेन क्रीणीयात् । एकार्थत्वात् एककार्यकरत्वात् । इति पूर्वः पक्षः ।

**समुच्चयो वा, प्रयोगे द्रव्यसमवायात् । ६ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । सोमक्रयणद्रव्याणां न विकल्पः, किन्तु समुच्चयः । प्रयोगे क्रयणस्य प्रयोगे विक्रेतुरानमनं कर्तव्यम्, तत्र द्रव्याणां समवायात् समवायस्य आवश्यकत्वात् । एकद्व्यादिना द्रव्येण विक्रेतुरानमनासंभवात् । तस्मात् विध्यनुसारेण समुच्चयः इति सिद्धान्तः । दशद्रव्याणि तु १ एकहायनी गौः, २ हिरण्यम्, ३ अजा, ४ धेनुः, ५ तद्वत्सः, ६ ऋषभः, ७ अनड्वान्, ८–९ मिथुनौ गावौ, १० वासश्च इति ।

**समुच्चयं च दर्शयति । ७ ॥**

'तं वै दशभिः क्रीणाति, दशाक्षरा विराट् विराजमेव प्राप्नोति ' इति क्रयानुवादः सोमक्रयद्रव्याणां समुच्चयं दर्शयति । तस्मात् समुच्चयः सिद्धान्तः । के.

* ' क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ' इत्यधिकरणे सोमक्रये गवादीनां न्यायेन समुच्चयः साधितः । सोऽयं जात्योः समुच्चयः । बाल. पृ. १६६. * क्रयणे तु विकल्पः स्यादेकार्थत्वात् ( क्रयणेषु विकल्पः इति सु–पाठः ) इति सूत्रेण सोमक्रयसाधनानां द्रव्याणां विकल्पः पूर्वपक्षितः । सु. पृ. १३०३. * क्रयभेदाभ्युपगमे क्रयणेषु० इत्यधिकरणस्य अनुन्मेषप्रसङ्गात् । तत्र हि क्रयसाधनेषु अजाऽऽदिद्रव्येषु विकल्पः स्यात् इति पूर्वपक्षयित्वा सोमक्रयस्य अनुष्ठाने द्रव्याणां समवायस्योपपत्तेः समुच्चय एव । कार्यप्रधानत्वात् पदार्थानां सौकर्यमालोच्य द्रव्यविधीनां सापेक्षत्वकल्पनात् समुच्चयः इति सिद्धान्तयिष्यते । कु. ३।१।६।१२ पृ. २५६.

* **क्रियते** देवदत्तेन, क्रियते स्वयमेव इति वा प्रयोगे उपसर्जनीभूतप्रयोजकव्यापारः प्रयोज्यव्यापारः विवक्ष्यते । वा. २।१।१।१ पृ. ३७८.

* **क्रियमाणता** नाम संकल्पादेः कारकप्रचलनात् प्रभृति आ समाप्तेः । वा. ३।८।१०।२२ पृ. ११२५.

* **क्रियमाणानुवादी** मन्त्रः होतुः यूपपरिव्याणे ' युवा सुवासः ' इति । भा. ३।८।१०।२२ पृ. ११२४, * **क्रियमाणानुवादिनो** मन्त्राः अध्वर्युणा क्रियमाणमनुवदन्ति ' अञ्जन्ति त्वामध्वरे देवयन्तः ' इति यथा । सोऽनुवादः अलमध्वर्योः स्मृतिं कर्तुम् । १२।३।१६।३७, * क्रियमाणानुवादिनो मन्त्राः एवं कर्तव्यमिति प्रत्ययं कुर्वन्ति, करणमन्त्रास्तु करोमि इत्येवम् । १२।३।१६।३७, * क्रियमाणानुवादिनः हौत्रा मन्त्राः अध्वर्योः स्मरणार्थाः । स्मरणार्थस्य च मन्त्रस्य आम्नानसामर्थ्यात् स्मारितं कृतम् अदृष्टार्थाय भवति । तस्मात् हौत्राणां मन्त्राणां समुच्चयः । १२।३।१६।३६–३८. * **क्रियमाणानुवादिनां** मन्त्राणाम् अनुष्ठीयमानार्थस्मृतिफलकत्वम् । सु. पृ. १०२.

* **क्रिया** अनुमानगम्या । बृहती. पृ. २४३. * क्रिया अनुष्ठेया प्रतीता सती कारकाणि प्रत्याययति इत्यवगतमेतत् । भा. ३।४।४।१३ पृ. ९२३. * क्रियाऽपि जात्यादिवत् देवदत्तादिभेदेऽपि 'चलति यजति दर्शपूर्णमासावनुतिष्ठति ' इत्येवं एकबुद्धिवेदनीया न भेदं प्रतिपद्यते । नहि अत्यन्ताभिन्नत्वं द्रव्यात् क्रियायाः, येन तद्भेदात् भेदः स्यात् । भेदोऽपि तु अस्त्येव, अनैकान्त्याभ्युपगमात् । शा. ६।३।३. सोम––यत्र तु न शब्दान्तरादिभेदकप्रमाणमस्ति, तत्र प्रत्यभिज्ञायाः क्रियाव्यक्तिरेकैव, भेदप्रत्ययस्तु कर्त्रादिभेदालम्बनः । सततानुपलब्धिश्च व्यञ्जकाभावादुपपद्यते । ततश्च शब्दवत् क्रियाया अपि नित्यत्वम् । अस्तु वा सर्वत्रैलोक्यवर्तिकर्ममात्रस्य एकव्यक्तिकत्वात् आग्नेयाग्नीषोमीययोरपि ऐक्यम् । यावत् एकापूर्वानुबद्धम् एकेन शास्त्रेण विषयीकृतम्, तावदेकं कर्म, अन्यत्तु भिद्यते । * 'क्रियाऽपि न विना कैश्चित् साध्यते कारकैः क्व चित् ।' ( कारकैर्विना

कैश्चिदपि क्रिया न साध्यते इत्यन्वयः ) । वा. ३।१।६।१२ पृ. ६९२. * क्रिया तिङन्तेन उच्यते । भा. २।२।५।१४. * क्रिया धातुवाच्या इति लौकिकाः । अन्यथा धातुसंज्ञैव न स्यात् । ऋजु. पृ. १७३. * 'क्रिया धात्वर्थमात्रं स्यात्' न तु परिस्पन्द एव । श्लोवा. आत्मवादे ७५. * क्रिया न च स्वसमवायिन्येव केवला, चलनात्मिका वा सर्वत्रेष्यते । वा. ३।१।६।१२ पृ. ६९३. * क्रिया न धात्वर्थः मीमांसकमते । 'भावार्थाधिकरणोक्तरीत्या धात्वर्थस्य क्रियात्वाभावात्... स्वमते धात्वर्थस्य क्रियात्वाभावेन कारकविशेषकर्त्राक्षेपकत्वायोगात् । सोम. ३।४।८. * क्रिया न प्रत्यक्षा, किन्तु विभागोत्तरसंयोगाभ्यामनुमेया । अतस्तत्प्रत्यक्षे महत्त्वस्य न हेतुता इति केचित् । मणि. पृ. २१. * क्रिया यत्र पुनः स्वविशेषणाविशिष्टा विधीयते, वाक्यान्तरप्राप्तस्य क्रियाऽन्तरस्य विशेषणम्, तत्रावश्यावर्तनीयो विधिप्रत्ययः । वा. ३।६।७।२२ पृ. १०४८–४९, * क्रिया यत्र विधीयते द्रव्यस्य च किञ्चित्, तत्र प्रत्ययावृत्तिलक्षणो वाक्यभेदः । ३।१।६।१२ पृ. ६८९. * क्रिया विधीयमाना कारकैर्विना न भवति । टुप्. १०।३।१७।६३ पृ. १८९८. * क्रिया संस्कारहेतुः, न द्रव्यम् । तत्तु व्यञ्जकं स्यात् । वि. ५।३।११. * क्रिया साधनविशेषणमाकाङ्क्षति । भा. ३।१।६।१२ पृ. ६९५.

**क्रिया स्याद्धर्ममात्राणाम् । १०।२।२६।६३ ॥**

द्वादशाहे सत्रे ऋतुयाज्याधरणम् आत्रेयाय हिरण्यदानम् इति किञ्चित् चोदकप्राप्तं धर्ममात्रं यद्भवति, तेषां धर्ममात्राणां क्रिया स्यात् । तत् कर्तव्यम् । नहि तत् आनर्थक्यम्, किन्तु धर्ममात्रम् । के.

* क्रिया हि कर्तारमाक्षिपति इति क्रियाद्वारा कर्ताऽपि विधेयः । वि. ६।२।२.

**क्रिया हि विकल्प्यते न वस्तु इति न्यायः ।**

तदेतदुक्तं शारीरकभाष्ये 'कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं लौकिकं वैदिकं च कर्म, यथा 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' 'उदिते जुहोति, अनुदिते जुहोति' 'रथेन पद्भ्यामन्यथा वा गच्छति, न गच्छति वा' । इति । न तु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते । विकल्पना हि पुरुषबुद्धिसापेक्षा, न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्, किं तर्हि वस्तुतन्त्रमेव, न हि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वा इति तत्त्वज्ञानं भवति । तत्र पुरुषो वाऽन्यो वेति मिथ्याज्ञानम्, स्थाणुरेवेऽति तत्त्वज्ञानम् । एवमन्यत्राप्यूह्यम् इति । साहस्री. ५१.

* नहि अन्यार्था क्रिया प्रधानं भवति, क्लेशात्मकत्वात् क्रियायाः । अन्यार्थाया एव प्राधान्यम् । ऋजु. पृ. १३. * नहि क्व चित् कर्तृरहिता का चित् क्रिया विद्यते, तन्मूलत्वात् क्रियाप्रवृत्तेः । वा. ३।४।४।१३ पृ. ९१४, * 'प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया । वाक्यान्तरगतैः पश्चात् शुद्धा सा त्ववाप्यते ॥' १।४।२।३ पृ. ३३०. * 'यदा त्वाद्यपरिस्पन्दात् प्रभृत्या फललाभतः । क्रिया पूर्वापरीभूता लक्ष्यते वर्तते तदा ॥' अनेकफलसाधनानेकक्रियाऽवयवसमूहस्यैव क्रियात्वाभिधानात्, तस्याः पूर्वापरानेकक्षणव्यासक्तरूपं पूर्वापरीभूतत्वं विशेषणम् । सु. पृ. ५५४. * विधीयमाना हि क्रिया भाव्यमानत्वात् कारकैः संबध्यते । अविधीयमानायाः न कारकैर्भवति संबन्धः । वा. ६।१।६।२४ पृ. १३७१, * 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' १।४।२।३ पृ. ३३१. * क्रियाम् अभिनिर्वर्तयतो गुणस्य एतदेव सामर्थ्यम्, यत् साधनं विशिंष्यात् । भा. ३।१।६।१२ पृ. ६९५.

**'क्रियां क्रियासंबन्धिनं वा प्रकाशयन् मन्त्रः करणत्वं भजते' इति न्यायः ।** भविष्यपुराणोक्ते संकल्पवाक्ये उपवासस्य कर्तव्यत्वेनोल्लेखात् सोऽपि प्रधानमिति चेत् न । अङ्गत्वेऽप्युपवासस्य 'क्रियां...भजते' इति न्यायात् क्रियासंबन्ध्युपवासप्रकाशकत्वेनापि मन्त्रस्य ( संकल्परूपस्य ) करणत्वोपपत्तेः, उपवासस्य पूजाकरणत्वासंभवात् । समयमयूखः.

* क्रियां प्रति द्रव्यं साक्षादुपकरोति, गुणस्तु विशिनष्टि साधनम् । भा. ३।१।६।१२ पृ. ६९५. * क्रियां विना द्रव्याणि फलं साधयितुं न क्षमन्ते, पचिक्रियामन्तरेण काष्ठस्थाल्यादीनां ओदनसाधकत्वादर्शनात् ।



वि. २।१।१ वर्णकं २. * असंबद्धेषु क्रियमाणा गुणाः क्रियां न परिच्छिन्द्युः इति क्रियासंबन्धिनमाश्रयन्ति । वा. ३।१।७।१४ पृ. ७१७. * क्रियया गुणा न संबध्यन्ते अमूर्तत्वात् । द्रव्येणैषां संबन्धो भवति । भा. १०।२।२९।६९. * क्रियया च संबन्धः समानोत्तरकालभावी । वा. ३।१।६।२५ पृ. १३७३. * क्रियया हि कारकाणां संबन्धः, न द्रव्येण । भा. ३।१।६।१२ पृ. ६८६. * क्रियया हि प्रधानस्योपकर्तव्यं गुणेनापि । वा. ३।१।७।१४ पृ. ७१८. * क्रियायाः अन्तः उभयप्रकारः । कृत्वा औदासीन्यम्, क्रियान्तरव्यवधानं च इत्युक्तमेव (पूर्वाधिकरणे) । भा. १०।६।११।३१. * क्रियायाः अपूर्वविधिर्यथा 'अग्निहोत्रं जुहोति' । बाल. पृ. २२. * क्रियाया अभिधायकं वाक्यं चोदना । भा. २।१।१।१ पृ. ३७२. * क्रियाया एव लोके कथम्भावाकाङ्क्षायामन्वयदर्शनात् । मीन्या. * क्रियायाः कारकैः सह समवायलक्षणः संबन्धः अनादिः । ऋजु. पृ. १८८. * क्रियायाः नियमविधिः यथा 'व्रीहीनवहन्ति' इति । बाल. पृ. २४. * क्रियायाः प्रतिनिधिर्नास्ति । भा. ६।३।५।१८–१९. * क्रियायाः सकर्मिकायाः कर्मप्रधानत्वात् । ऋजु. पृ. १८६. * क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यात् अरुणाऽऽदिर्गुणः उत्पत्त्यैव शेषः । वा. ३।१।३।३. * चोदना इति क्रियायाः प्रवर्तकं वचनम् । भा. १।१।२।२ पृ. १२. * न च प्रधानक्रियायाः सर्वाण्येव साक्षात् साधनानि भवन्ति । अवान्तरव्यापाराधीनत्वात् संबन्धस्य । वा. ३।१।६।१२ पृ. ६९३, * क्रियाणामपि संकल्पादिभिराप्यमानत्वात् कर्मत्वं भवति । तेन जुहोत्याक्षिप्तसंकल्पाद्यपेक्षया अग्निहोत्रमिति द्वितीयानिर्देशः । २।२।५।१६ पृ. ५०५.

**क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निर्वृत्त्याऽपवर्गः स्यात् । ११।१।५।२७ ॥**

क्रियाणामर्थः शेषत्वात् इति पाठ आवश्यकः, स तु क्वापि नोपलभ्यते । कस्य शेषत्वात् इत्याकाङ्क्षायाम् संबन्धितया अर्थ एवान्वेति । अर्थः प्रयोजनम् । तथा च क्रियाणाम् अवघातपेषणादीनाम् अर्थशेषत्वात् फलसाधकत्वात् क्रियाणामर्थः प्रत्यक्ष एव । अवघाते कृते तण्डुलाः प्रत्यक्षा भवन्ति, पेषणे च कृते पिष्टानि । अतः क्रियाणामर्थवत्त्वात् तस्य फलस्य निर्वृत्त्या निष्पत्त्या क्रियाणामपवर्गः समाप्तिः स्यात् । तण्डुलनिष्पत्तिपर्यन्तमवहननम्, पिष्टनिष्पत्तिपर्यन्तं च पेषणं कर्तव्यम् । न तु सर्वौषधावघातवत् सकृत् । क्रियाणामितिपदस्य अर्थशेषत्वे अपवर्गे चान्वयः ।

**क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् । ६।३।३।११ ॥**

क्रियाणां दर्शपूर्णमासादिकर्मणाम् आश्रितत्वात् व्रीह्यादिद्रव्याश्रितत्वात् द्रव्यान्तरे प्रतिनिधित्वादिना नीवारादिद्रव्ये अन्यस्मिन् स्वीकृते विभागः कर्मभेदः स्यात् । तस्मात् द्रव्यापचारेऽपि प्रतिनिधिर्न ग्राह्यः इति पूर्वः पक्षः ।

**अपिवाऽव्यतिरेकाद् रूपशब्दाविभागाच्च, गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् । १२ ॥**

प्रतिनिधिर्न ग्राह्यः इति पूर्वपक्षे सूत्रेण प्राप्ते अपिवा इति पदेन निरस्यन् सिद्धान्तमाह । विहितद्रव्यापचारे प्रतिनिधिर्ग्राह्य एव । अव्यतिरेकात् द्रव्यभेदेऽपि यागस्य व्यतिरेकाभावात् भेदाभावात् । रूपशब्दाविभागाच्च रूपभेदाभावात् शब्दभेदाभावाच्च । व्रीहिस्थाने नीवाराणां प्रतिनिधित्वेन ग्रहणेऽपि यागस्वरूपस्य भेदो न भवति । नापि दर्शपूर्णमासशब्दात् शब्दान्तरप्रसङ्गः । तस्मात् प्रतिनिधिना क्रियमाणेऽपि कर्मणि ऐककर्म्यं स्यात्, न कर्मभेदः । गोत्ववत् । खण्डस्थाने मुण्डे आनीतेऽपि यथा गोत्वस्य भेदो न भवति तद्वत् । नामधेयं च सत्त्ववत् । यथा आश्रयभेदेऽपि गोत्वादिसत्त्वस्य गोत्वादिसामान्यात् अभेदात् तन्निमित्तं गौः इत्यादि नामधेयं न भिद्यते तद्वत् नीवारादिद्रव्यभेदेऽपि कर्मभेदाभावात् दर्शपूर्णमासादि नामधेयं न भिद्यते । तस्मात् नीवारादिरूपप्रतिनिधिग्रहणेऽपि न यागान्तरत्वप्रसङ्गः ।

'रूपाविभागात् रूपस्य रूपणस्य अभेदप्रत्ययस्य अविभागात् बाधाभावात् । शब्दाविभागात् शब्दान्तरादीनां भेदकारणानां अभावात् । सत्त्ववत् ( गोत्ववत् इत्यस्य स्थाने पाठः ) सत्त्वशब्देन व्यक्तयो विवक्षिताः । सप्तम्यन्ताद्वतिः । यथा व्यक्तिषु भिन्नास्वपि जातिर्न भिद्यते तद्वत्' इति कुतूहलम् । शेषं समानम् । के.

* **क्रियाणामाश्रितत्वाद् द्रव्यान्तरे विभागः स्यात् ।** द्रव्यान्तरेण नीवारादिना कृतस्य कर्मणः व्रीह्यादिद्रव्यकात् दर्शपूर्णमासादेर्यागात् भेदापत्तेः न प्रतिनिध्युपादानं युक्तम् इति प्रतिपादनार्थं पूर्वपक्षसूत्रमिदम् । सु. पृ. ३४३. * **क्रियाणां यत्रैव द्रव्यादीनि प्रति प्रधानत्वम्, तत्रैव** तद्भेदनिमित्तापूर्वभेदसिद्धिः । वा. २।१।१।१ पृ. ३७१. * **क्रियायामेकस्याम् एकस्य कर्तृत्वकर्मत्वानुपपत्तिः ।** मणि. पृ. ५४. * **क्रियायां विधीयमानायां कारकाणि** उद्भूतशक्तीनि भवन्ति । तानि क्रियया संबध्यन्ते कारकत्वात् । अविधीयमानायां तु क्रियायां कारकाणि अनुद्भूतशक्तीनि भवन्ति । वा. १०।३।१७।६४, * **क्रियासु यासु फलं प्रत्यक्षतो ( वाक्यात् )ऽवगम्यते** ताः फलवत्यः, नाश्रुतफला वैदिक्यः । ६।३।१।२ पृ. १४०८.

* **क्रियाकारकयोः** शक्तिरूप एव च संबन्धः इति करणविभक्त्यन्तर्गतत्वात्, प्रत्ययार्थस्य च प्राधान्यात् प्रातिपदिकोपसर्जनः संबन्ध एव फलाय विधीयते । वा. २।२।११।२६ पृ. ५५१. * **क्रियाकारकतदन्वयाः** यथा शाब्दाः, तथा तदन्वयान्तर्गतः शेषशेषिभावोऽपि शाब्द एव । वि. ३।१।१. * **क्रियाकारकभावस्य** साक्षात्संबन्धरूपत्वम् । कु. २।२।१२।२७ पृ. १९४.

* **क्रियाकालयोरभेदात्** । ‘ न च यावच्छब्दः कालवचनः क चित् प्रसिद्धः, क्रियामेव तु समाप्तिपर्यन्तत्वेन ( यावज्जीवं ) विशिनष्टि । क्रियाकालयोरभेदात् न लक्षणेति चेत्, अत्र वैशेषिकानपराजित्य परिहारायोपस्थातव्यम् । अपि च सत्यपि क्रियाणां कालत्वे का चित् व्यवस्था विद्यते । वा. २।४।१।२ पृ. ६२५. * **क्रियाक्रियावतोर्भेदाभेदः** । मणि. पृ. २२. * **क्रियाक्षणानां संताननिमित्त एव ‘अयं चलति’** इति वर्तमानताऽवसायः । ऋजु. पृ. ७७.

* **क्रियाऽनुमेयता** । संप्रति क्रियाया अनुमेयत्वं प्रसाध्यते । तत्र तावत् गच्छति देवदत्ते संयोगविभागातिरिक्तं गमनाख्यं वस्तु नेन्द्रियेणोपलभ्यते । ननु प्रत्यक्षैव क्रिया, विवादाध्यासितम् गमनादिज्ञानम् इन्द्रियजम् इन्द्रियभावभावित्वात् रूपादिप्रतीतिवत् । मैवम्, लैङ्गिकत्वेनापि प्रतीतेरुपपत्तेः । कथम् ? ऐन्द्रियकत्वलैङ्गिकत्वयोः केन विशेषेण लैङ्गिकत्वस्वीकार इति चेत्, अस्त्येव विशेषः । ऐन्द्रियकत्वे इन्द्रियस्य क्रियाग्रहणे शक्तिरक्लृप्ता कल्प्यते । लैङ्गिकत्वेऽपि शक्तिकल्पनमविशिष्टमिति चेन्न, सामान्येन व्याप्यस्य व्यापके क्लृप्तशक्तित्वात् । इन्द्रियस्य तु सामान्ये न शक्तिः, क चित् संयुक्तस्य घटादेर्ग्रहणम्, क चित् च संयुक्तस्यैव गोलकादेः, परमाण्वादेश्च अग्रहणम्, संयुक्तसमवायाच्चक्षुषा रूपादिग्रहणम्, न रसादीनाम् । अतो यत्र प्रतीतिस्तत्रेन्द्रियस्य शक्तिरिति प्रतिविषयमिन्द्रियस्य शक्तिकल्पनया लैङ्गिकत्वेनापि उपपत्तेः ऐन्द्रियकत्वकल्पनमन्याय्यम् । किञ्च विवादाध्यासितं गमनादिकमनुमेयं क्रियात्वात् आदित्यादिक्रियावत् । अतः अनुमेयैव क्रिया । किं तर्हि क्रियाऽनुमाने लिङ्गम् ? विभागपूर्वकः संयोगः । तथाहि, यद्यत् कादाचित्कं तत्तदागन्तुकात् जायमानं दृष्टं यथा तन्तुसंयोगेभ्यः पटः, अयमप्यागन्तुककारणवानिति । आगन्तुकशब्देन असमवायिकारणमुच्यते । ननु समवायेन अनैकान्तिकः, तस्य समवायिकारणासमवायिकारणयोरभावात् । कार्यं यत्र समवैति, तत् समवायिकारणम् । असमवायिकारणं च कार्यैकार्थसमवायि, कारणैकार्थसमवायि वा । समवायस्य समवायान्तराभावादुभयमपि नास्ति । नैवम्, तस्यापि पिण्डसमवायिकारणादिना उपपत्तेः । तथा चोक्तं प्रकरणपञ्जिकायाम्, ‘ यत एव हि पिण्डस्योदयः समवायिकारणात्, तत एव तस्य जातिसमवायोऽपि संपद्यते ’ इति । समवायिकारणासमवायिकारणलक्षणं च समवायव्यतिरिक्तविषयम्, अतो नानैकान्तिकत्वम् । ननु विभागपूर्वकसंयोगस्य स्थाण्वादावपि दृष्टत्वात् तत्रापि कर्मानुमानं स्यात् । नैवम्, एकत्र कर्मानुमानेन उभयत्रापि विभागसंयोगोपपत्तेः । यत् कार्यम् तत् कारणवदिति व्याप्तिः, न पुनर्यत्र कार्यम् तत्र कारणमिति । किञ्च स्वदेशविभागपूर्वकसंयोगस्यैव लिङ्गत्वम्, स्थाणौ तु तदभावात् न कर्मानुमानमिति । किञ्च लिङ्गवत्त्वे स्थितेऽपि पूर्वकर्मवशादेव विभागसंयोगयोरुपपत्तौ कर्मान्तरानुदयाच्च, ‘न चलति’ इति प्रत्ययप्रसङ्गः । ननु कर्मकारणाभिमतात् प्रयत्नवदात्मनः शरीरसंयोगादेव विभागसंयोगयोरुपपत्तौ किमन्तर्गडुना कर्मणा ? प्रत्यक्षत्वे तु यथादर्शनं कर्माङ्गीकारेऽपि न दोषः । नैवम्, संयोगो हि स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभते इति नियतम् । यथा तन्तुसंयोगाः स्वाश्रयेषु तन्तुषु पटम्, प्रचयावयवसंयोगास्तु स्वाश्रयसमवेते अवयविनि महत्त्वम्, तन्तुतुरीसंयोगस्तु स्वाश्रये तुर्याम्, स्वाश्रयसमवेते च पटे पटतुरीसंयोगम्, अतः स्वाश्रयास्वाश्रययोः शरीरदेशयोर्विभागसंयोगौ संयोगहेतुकौ न भवतः । अत आत्मशरीरसंयोगात् स्वाश्रये शरीरे कर्मोत्पद्यते, ततो विभागसंयोगाविति न कर्मविच्छेदः । ननु यथा स्वाश्रये कार्यकरस्य संयोगस्य स्वाश्रयसमवेतेऽपि कार्यकरत्वमङ्गीकृतम्, तथैव अस्वाश्रयेऽपि कार्यकरत्वमङ्गीक्रियताम्, स्वाश्रयसमवेतेऽपि हेत्वन्तरं वा कल्प्यताम्, किमर्धवैशसेन ? नैवम्, अन्वयव्यतिरेकाभ्यां हि स्वाश्रये स्वाश्रयसमवेते च हेतुत्वम्, तत्रान्यदर्शनापेक्षा अन्यतरस्य नास्ति । आत्मशरीरसंयोगस्य विभागसंयोगहेतुत्वे नास्त्यन्वयव्यतिरेकाभ्यां हेतुत्वम्, व्यतिरेकाभावात् । आत्मशरीरसंयोगे सत्येव कार्यस्योदयात् यद्यपि सिद्धोऽन्वयः, तथापि आत्मशरीरसंयोगस्य सर्वदा सद्भावात् नास्ति तदभावे कार्याभावः । अतश्च बुद्ध्यादीनामात्मकारणत्ववत् अन्वयव्यतिरेकावसितकार्यकारणभावदृष्टान्तेन तत्समवेतकार्यत्वादित्यादिहेतुना अनुमानेन कार्यकारणभावः, इति प्रतिवक्तव्यम् । अतोऽन्वयव्यतिरेकापेक्षत्वादनुमानस्य, अन्वयव्यतिरेकाभ्यां च स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भस्य अवगतत्वात्, तदनुसारेणानुमातव्यम्, न अस्वाश्रये इति । स्वाश्रयस्वाश्रयसमवेतोदाहरणयोरन्योन्यापेक्षा नास्ति, तुल्यप्रमाणगम्यत्वात्, अतः संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्यारम्भकत्वं नास्वाश्रये इति कर्मैवानुमेयम् । अर्थेन्द्रियसंयोगस्य आत्मनि ज्ञानजनकत्वात् स्वाश्रये इति नियमो नास्तीति चेन्न, असमवायिकारणप्रयुक्तत्वात् अस्य नियमस्य । अर्थेन्द्रियसंयोगस्तु निमित्तकारणम् । असमवायिकारणस्यापि तर्हि व्यभिचारः, वेणुदलविभागसमवायिकारणेन खदलविभागोत्पत्तेः एकत्वेन च खादेः क्रियायाश्च देशविभागसंयोगोत्पत्तेश्चेति चेत्, एवं हि असमवायिकारणसंयोगप्रयुक्तः इत्यवगम्य शाम्यतु भवान् । तर्हि तन्तुद्वयसंयोगस्य असमवायिकारणभूतस्य बहुतन्तुव्यापिपटहेतुत्वात् व्यभिचार इति चेन्न, तत्रापि विभागद्वारेण उत्पादकत्वात् । तथाहि, तन्तुद्वयसंयोगः प्रथमं स्वाश्रये तन्तुद्वये पटभागमुत्पादयति, उत्पन्नेन पटभागेन तन्त्वन्तरस्य संयोगात् स्वाश्रये पटभागान्तरम् इत्येवमुत्तरत्राप्यूह्यम् । अतो न व्यभिचारः इति । एवं व्यणुकाद्युत्पत्तावपि द्रष्टव्यम् । अथवा यावतां संयोगानामेकस्मिन् कार्ये असमवायिकारणत्वम्, तावन्तमपेक्ष्य स्वाश्रयादिव्याप्तिः । अत एककार्यत्वेऽपि महापटस्य न व्यभिचारः । अथवा यत्रैकस्मिन् कार्ये एकस्यैव असमवायिकारणत्वम्, तत्रैवेयं व्याप्तिः । प्रयत्नवदात्मशरीरसंयोगस्त्वेक एवेति न कश्चिद्दोषः । ननु यदा प्रयत्नवदात्मशरीरसंयोगात् शरीरे विभागसंयोगोत्पत्तिः, तदा प्रयत्नवदात्मदेशसंयोगात् देशेऽपीति न तदतिरिक्तकर्मानुष्ठानम् । नैवम्, देशशरीरविभागसंयोगस्त्वेकं कार्यम् । अत एकस्मिन्नेव कार्ये प्रयत्नवदात्मशरीरसंयोगस्य प्रयत्नवदात्मदेशसंयोगस्य च हेतुत्वात् नात्मशरीरसंयोगस्य अस्वाश्रये देशे कार्यकरत्वम्, आत्मदेशसंयोगस्य वा अस्वाश्रये शरीरे इति । किञ्च आत्मदेशसंयोगस्यापि हेतुत्वं न क्लृप्तम्, कल्पनीयम्, तद्वरं कर्मकल्पनम् । अतः कर्मैव शरीरे अनुमेयम्, ततो विभागसंयोगाविति सर्वमुपपन्नम् । प्रवि. पृ. ३५–३८.

* **क्रियाऽन्वयं विना कारकत्वव्याघातः** । मणि. पृ. ११२ * कारकत्वं विना **क्रियाऽन्वयायोगः** । सु. पृ. ७५१.

* **क्रियाऽपचारे न क्रियाऽन्तरं प्रतिनिदध्यात्** । क्रियायां न प्रतिनिधिः । भा. ६।३।५।१८–१९.

* **क्रियापदं** विना अन्वयबोधाजननम् । मणि. पृ. ११२.

* **क्रियाप्रतिनिधिनियमविधिः** यथा ‘ यदि यजमानः प्रवसेत् प्रजापतेर्विभान्नाम लोकः इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् ’ इत्यापस्तम्बः । अत्र होमः प्रक्षेपमात्रम्, देवताऽभावात् ।

तथा आहिताग्निपात्रप्रतिपत्तेः 'दक्षिणे हस्ते जुहूमासादयति' इत्याद्यायाः प्रतिनिधिः पतिताहिताग्निपात्रेषु अन्या स्मर्यते 'पात्राणि तु दहेदग्नौ यजमाने वृथा मृते' इति। यथा वा द्विजाभावे श्राद्धान्नभोजनस्य दर्भबटुषु अग्नौ गवे अप्सु वा इति देवलः। बाल. पृ. २३.

* **क्रियाप्राधान्ये** तस्या विधीयमानत्वात् विशेषणं विवक्षितम्। गुणभूतायां तु यत् प्रधानस्य विशेषणम्, तदविवक्षितम्। वा. ६।४।६।२३ पृ. १४४२.

* **क्रियाभेदः** प्रतिकारकम्। भा. ६।१।४।१७.

**क्रियाभेदात् फलभेद इति न्यायः**। यथा-यथा यद्यत्करोति, तथा तत्तत्फलमाप्नोतीति। **साहस्री.** ५३९.

* **क्रियाभ्यावृत्तौ** हि कृत्वसुजर्थः प्रत्ययो न क्रियाभेदे। भा. ११।४।१५।४७.

* **क्रियामात्रसंबन्धे** श्रुत्या कृते विशेषसंबन्धो वाक्येन अरुणया क्रीणाति इत्यत्र। वा. ३।३।४।११ पृ. ८१७.

* **क्रियाविशेषणानि** द्वितीयाऽन्तानि। एतद्विषयो विचारः 'द्वितीया (**भाट्टरहस्यगता**)' इति बिन्दौ द्रष्टव्यः अन्त्यभागे। के. * क्रियाविशेषणानि सर्वाणि यत्र भवन्ति तत्र विशिष्टविधानात् अक्लेशो भवति। वा. ३।१।६।१२ पृ. ६८९, * यानि **एकक्रियाविशेषणानि** भवन्ति तया (क्रियया) विधीयमानया अर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति। क्रियान्तरविशेषणे पुनर्विधीयमाने तया क्रियया संबन्धरहितया अनाक्षिप्यमाणे अवश्यं विधायकस्यावृत्तिरेष्टव्या इति वाक्यभेदः प्राप्नोत्येव। २।२।१२।२४ पृ. ५५६. * **क्रियाविशेषणानां** कर्मत्वं नपुंसकलिङ्गता च इति वचनात्। के.

* **क्रियाशब्दानां** यागादिशब्दानां जातिवाचकत्वं नास्ति। सु. पृ. ३३१, वार्तिकमते तु तेऽपि जातिवाचकाः गवादिशब्दग्रहणं सर्वनामाख्यातशब्दानां अन्तर्भावार्थमित्युक्तत्वात्। पृ. ३०५

* **क्रियासंबन्धस्य** कारकविभक्तिसाध्यत्वात्। वा. ३।१।६।१२ पृ. ६७९. * क्रियासंबन्धस्य वाचिका विभक्तिः कारकलक्षणा द्वितीयाऽऽदिः। सा क्रियासंबन्धे विवक्षिते भवति। भा. ३।१।६।१२ पृ. ६८८.

**'क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे' इति न्यायः।** अयमपि पद्येन विवृतः। तथाहि– 'घटो जन्मस्थानं मृगपरिजनो भूर्जवसनं वने वासः कन्दादिकमशनमेवंविधगुणः। अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे॥' इति। **साहस्री.** ९००.

* **क्रीणातेः** प्रयोगः क्रयार्थे उपसंवादेऽपि दृष्टः। यथा देवदत्तेन सह अस्माभिर्धान्यं क्रीतम्। उपज्ञा संवृत्ता, अतस्तस्य संवादः। भा. ११।२।१४।५९. * क्रीणातेः स्वद्रव्यस्य परस्वत्वापादनेन परद्रव्यस्य आत्मस्वत्वापादने द्रव्यविनिमये वृत्तिः। कु. ३।१।६।१२ पृ. २५६.

* **क्रीते** वा राजनि यूपं छिनत्ति दीक्षासु वा। भा. ११।३।३।३. * '**क्रीतराजकः** अभोज्यान्नः' अयं निषेधः विशेषरूपः। बाल. पृ. १६, * 'क्रीतराजकः भोज्यान्नः' अयं पुरुषार्थः अभ्यनुज्ञाविधिः। पृ. १२, * 'क्रीतराजकः भोज्यान्नः' अयं प्रतिप्रसवरूपः अभ्यनुज्ञाविधिः। पृ. १५. * 'क्रीतराजको भोज्यान्नः' इति स्मृतिर्धर्मे प्रमाणं नवेति संदेहे 'तस्मादग्नीषोमीये संस्थिते यजमानस्य गृहेऽशितव्यम्' इति श्रुत्या विरुद्धत्वान्न प्रमाणम् इति सिद्धान्तः। भा. १।३।२।३ पृ. १६९. * **क्रीतराजकभोज्यान्नत्ववचनम्** अथर्ववेदेऽस्ति। वा. १।३।२।३ पृ. १८१. 'तस्माद्दीक्षितस्य क्रीतराजकस्य भोज्यं भवति।' सु. 'क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम्। न च तस्याप्रमाणत्वे किञ्चिदप्यस्ति कारणम्॥ यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः। अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते॥' 'वाक्यान्तरैर्निषिद्धं यद्दीक्षितस्यान्नभोजनम्। तस्यैव श्रूयते पश्चादभ्यनुज्ञाविधिद्वयम्। अग्नीषोमीयसंस्थायां क्रीते वा सति राजनि। सोऽयं कालविकल्पः स्यादाशौचच्छेदकालवत्॥' वा. पृ. १८९०. 'आपद्धर्मा यथैवान्ये मुख्यासंभवहेतुकाः। तत्रैव प्राणपीडायां क्रीतराजकभोजनम्॥' पृ. १९०, यत् क्रीतराजकभोज्या-



न्नत्वम्, तत् गत्यन्तरासंभवे निर्दोषत्वज्ञापनार्थमेव। पृ. १९१, निन्दितत्वान्न संभवद्भोज्यान्तरेणापि लोकयात्रादिवशेन भोक्तव्यम्। पृ. १९१.

* '**क्रौञ्चानि भवन्ति**' इति विकृतिविशेषे सामानि। वि. १०।४।११.

* **क्लिन्नकाष्ठाभ्याधाननिषेधादिव्रतम्** आहितमात्रेषु अग्निषु कर्तव्यम्, न तत्र पवमानेष्ट्यपेक्षा। अग्निहोत्रं तु पवमानेष्ट्युत्तरकालम्। भा. ५।३।९।२१–२५. * **क्षौमादयः** पश्ववयवाः वेदे चोदिताः सन्तः अध्वर्य्वादिभिः स्वयमज्ञायमानार्थत्वात् ये नित्यं प्राणिवधाभियुक्ताः, तेभ्य एवावधार्य विनियुज्यन्ते। वा. १।३।५।१० पृ. २२७.

**क्वचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते (इति न्यायः)।** (पृ. २४३. परि ६९) अपवादशब्दोऽत्र बाधकपरः। यत्तु 'काञ्चनी' इत्यादौ अपवादमयड्विषयेऽपि अणू भवति 'क्वचिदपवादविषयेऽपि' इति न्यायादिति, तन्न। 'अण् कर्मणि च' इतिसूत्रस्थभाष्यविरोधात्। तत्र हि अणः पुनर्वचनम् अपवादविषये अनिवृत्त्यर्थम् 'गोदायो व्रजति' इत्याद्युक्तम्। 'काञ्चनी' इत्यादौ काञ्चनेन निर्मिता इत्यर्थे शैषिकोऽण् बोध्यः। शेखरः.

**क्व चिदेकदेशोऽप्यनुवर्तते इति न्यायः** (परिभाषा १८)। पूर्वतः एकयोगनिर्दिष्टानाम् इति पदमनुवर्तते। एकत्र अर्थे योगः संबन्धः। तेन निर्दिष्टयोः समुदायाभिधायिद्वंद्वनिर्दिष्टयोः इत्यर्थः इति 'पक्षात्तिः' इति सूत्रे कैयटः। तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलात् लभ्यमिदम्। स्पष्टा चेयं 'दामहायनान्ताच्च' इति सूत्रे 'औतोऽम्शसोः' इति सूत्रे च भाष्ये। शेखर. पृ. ९४। (नेड्वशि कृति' इत्यतः अनुवर्तमानस्य 'आर्धधातुकस्येट्' इत्यत्र–) नञः निवृत्तिस्तु 'क्वचिदेकदेशोऽप्यनुवर्तते' इति न्यायेन सिद्धा। शेखर. पृ.९३.

* **क्व चित्** कर्मविशेषे 'ऋचा स्तुवते' 'साम्ना स्तुवते' इति श्रुतम्। नात्र ऋक्साम्नोर्विकल्पः, किन्तु साम्नैव स्तोतव्यम्। वि. ९।२।८ वर्णकं १, * क्व चित् कर्मविशेषे (विषुवति) श्रूयते 'अयं सहस्रमानवः' इत्येतया 'आहवनीयमुपतिष्ठते' इति अयंसहस्रेति ऋचा प्रगीतयैव उपस्थानम्, न तु गानविकल्पः। ९।२।८ वर्णकं २. * क्व चिद्दर्विहोमे स्वाहाकारपुनःश्रवणस्य अनारभ्याधीतस्वाहाकारानुपसंहारकत्वम्। भा. १०।८। १०।२०–२२.

* **क्षणस्य** पौर्वापर्याभावात्। ऋजु. पृ. ७७.

* **क्षणभङ्गवादः तत्खण्डनं च** (विवि.)। क्षणिकत्वे हि सिद्धे भावानामेव तद्भवेदपि, न त्वेतदस्ति। तथाहि। अस्य साधनं प्रत्यक्षमनुमानं वा भवेत्, प्रमाणान्तराभावात्। प्रमाणस्य सतः अत्रैवान्तर्भावात्। अनन्तर्भावे तत्त्वानुपपत्तेरिति स्थितेः। तत्र न तावत् प्रत्यक्षं लौकिकं नीलादिवर्ति क्षणिकतां गोचरयति। ननु न नीलादन्यत् क्षणिकत्वं नाम वस्तु सत्। अर्थक्रियाभेदे हि तथा स्यात् सितादिवत्। न च क्षणिकत्वस्य नीलसाध्याया अर्थक्रियायाः भिन्ना समस्ति अर्थक्रिया, या स्वलक्षणभेदेनावतिष्ठेत। क्षणिकत्वं पीतादिवन्नीलसाध्ययैव चेदर्थक्रियया तत् तत्त्वतो नीलाद्भिद्यते। न भिद्यते चेन्नूनं नीलग्राहिणा प्रत्यक्षेणैव क्षणिकत्वं गृहीतम्, तदव्यतिरेकात्। तदनुपपन्नम्, अनुभवानारोहात्। न खलु अनुभवो व्याख्यानमर्हति। स च नीलमिति, न तु क्षणिकवचनमिति। तदव्यतिरेकात् तद्गोचरत्वे स्थेम्नोऽपि तदभिन्नस्य तत्त्वप्रसङ्गः। मानान्तरात्तु क्षणिकस्य तद्भेदसिद्धौ प्रत्यक्षसिद्ध्यभिधानं प्रलापः, तत्र तस्यावसायाजनकत्वात्। अवसायाऽननुगतव्यापारस्य प्रत्यक्षस्य प्रवृत्तिविषयं प्रति प्रामाण्यानभ्युपगमात्।

**स्यादेतत्**। अनुभवारूढैव क्षणमात्रवर्तिता नीलादीनाम्। तथाहि। प्रत्यक्षविज्ञानं क्षणिकं स्वसमयेनैवावच्छिन्नं परिच्छिनत्ति। तद्यथा नीलाकारमालोचनं नीलं परिच्छिन्दत् तदभावं व्यवच्छिन्दत् तदभावाव्यभिचारिणः पीतादीनपि व्यवच्छिनत्ति। तथा अस्तमयावच्छिन्नं नीलं परिच्छिन्दत् समयवर्तिताऽभावमप्यस्य व्यवच्छिन्दत् तदभावाविनाभाविनीं तत्पूर्वापरसमयवर्तितामस्य व्यवच्छिनत्ति। तदव्यवच्छेदे पीतादीनामप्यव्यवच्छेदः। तथा च नीलसाध्यार्थक्रियाऽर्थिनो न क्व चिदेव नियमेन प्रवर्तेरन्। तदनुभवसिद्धैव क्षणिकता भावानामिति। **तदनुपपन्नम्**। नीलमात्रगोचरत्वात् आलोचनस्य न

खलु अतदात्मानमपि गोचरयति, दवीयसी त्वस्य स्वसमयगोचरता । स्वसंवेदनाभ्युपगमेऽपि आत्माऽनात्मप्रकाशनमात्रं नात्मानं समयेन आत्मना वा, नीलं समयेन वा घटयेत् । आलोचनमात्रतया विशेषणविशेष्यभावाऽविषयत्वात् । आलोचनस्यापि तत्समयाविच्छेदेऽपि नीलादीनां नैकक्षणमात्रवर्तित्वसिद्धिः । आलोचनस्यापि द्वित्रादिक्षणवर्तित्वात् एकक्षणमात्रावस्थानासिद्धेः । न चैकस्य क्रमवदनेकसंबन्धो विरुध्यते इति निवेदयिष्यते । तत् सिद्धं प्रत्यक्षेण क्षणविवेकाप्रतिभासमानात् न इन्द्रियविषयजविषयता मानसस्य किञ्चिदिन्द्रियविषयग्राहित्वमेवेति ।

ननु मा नाम क्षणभेदः प्रतिभासताम्, तदभेदस्तु कुतः इत्यत आह– 'अभेदप्रतिभासनात्' (विवि.) सोऽयं स्फटिकः इति प्रत्यभिज्ञैव भगवती स्थापयिष्यति स्फटिकम् । नन्वियं न स्फटिकस्य पूर्वापरक्षणावस्थानलक्षणं स्थिरत्वं गोचरयितुमर्हति । न खल्वेतद्विज्ञानमेकम्, कारणभेदात् विषयभेदात् स्वभावविरोधाच्च । तथाहि, स इति पारोक्ष्यम्, अयमिति च साक्षात्कारः । न त्वनयोः स्वभावविरुद्धयोर्दहनतुहिनयोरिव शक्या शक्रेणापि एकता आपादयितुम्, त्रैलोक्यस्यैकत्वप्रसङ्गात् । सत्यपि च 'स्फटिकः' इति व्यपदेशाभेदे देशकालभेदात् विरुद्धधर्मसंसर्गात् अनयोर्गोचरो भिद्यते । न च संस्कारः पूर्वानुभवयोनितया तद्गोचरनियतः संप्रतितनीमननुभूतचरीम् अस्य सत्ताम् अवगमयितुमर्हति । न चेन्द्रियाणि संनिहितविषयाणि प्राक्तनीं गोचरयन्ति तत्ताऽऽस्पदमस्य सत्ताम् असंनिहिताम् । न च कारणभेदेऽपि कार्याभेदसंभवः । कारणभेदाभेदाधीनत्वात् तद्भेदाभेदयोः । अन्यथा आकस्मिकत्वापत्तेः । तत्तेदन्ताऽऽस्पदे च स्वगोचरमात्रचारिणी स्मरणग्रहणे न परस्परस्य गोचरं संभिन्तः । न च आभ्यामन्यदेकं विज्ञानमुभयविषयासंभेदसमर्थं संभवति उक्तादेव क्रमात् । न चास्य प्रामाण्यम्, विकल्पत्वेन अवस्तुनिर्भासत्वात् स्मार्तादविशेषाच्च । तस्मात् प्रत्यभिज्ञा स्थापयति भावानिति मनोरथमात्रम् । अत्रोच्यते । एकमेवेदं विज्ञानं प्रत्यभिज्ञासमाख्यानम् । ननूक्तं स्वभावविरोधान्नेति, तत् किमिदानीं भवतामनुमानविज्ञानमपि नैकम् ? तदपि हि प्रत्यक्षमप्रत्यक्षं वा विकल्पोऽविकल्पश्च, समारोपोऽसमारोपश्च । स्वानुभवावस्थापिताभेदस्य स्वरूपस्य तद्ग्राह्यभेदापेक्षया प्रत्यक्षत्वादीनामविरोधः इति चेत् । न, इहापि साम्यात् । न खल्वेतदपि विज्ञानं तत्तेदन्ताऽधिकरणमेकं आभ्यामनुरक्तं स्फटिकं गोचरयति, यदभिन्नं नानुभूयते अनुभूयते वा । एकत्वेऽपि च वस्तुनः तदनुरञ्जकतत्तेदन्ताऽभेदापेक्षया प्रत्यक्षताऽपरोक्षते न विरोत्स्येते । सहसंभवाभावात्, विज्ञानैकत्वस्य च प्रमाणसिद्धत्वात् । न च स इति पूर्वदेशकालसंसर्गः, अयमिति च संनिहितदेशकालसंसर्गः एकस्य विरुध्यते । अतो युक्तं यत् पद्मरागस्य स्वरूपे परिच्छिद्यमाने तदभावो व्यवच्छिद्यते इति । तदव्यवच्छेदे तत्स्वरूपापरिच्छेदात् स्वप्रच्युतिव्यवच्छेदस्वभावत्वात् पद्मरागभावस्य, तदव्यवच्छेदे तत्परिच्छेदानुपपत्तेः । कस्मात् पुनस्तदन्ये पुष्परागादयो व्यवच्छिद्यन्ते ? तदभावाविनाभावादिति चेत्, स एव कुतः ? प्रत्यक्षेण कदा चिदपि पुष्परागपद्मरागयोः तादात्म्यानुपलम्भादिति चेत्, यत्र तर्हि सततस्तादात्म्यप्रतीतिः, तत्र न तदभावाविनाभावः । समस्ति च 'सोऽयं पद्मरागः' इति देशकालभेदानुगतमेकं पद्मरागतत्त्वमवभासयन्ती साक्षात्कारवती प्रतीतिः । तेन भवतु देशकालयोस्तत्संसर्गयोर्वा परस्परम् अतदात्मत्वम्, न तु तदवच्छिन्नस्य पद्मरागस्य तस्य भावात्, संसर्गाभ्यां चान्यत्वात् । ततोऽन्यत्वे तत्संसर्गयोः कुतस्तदीयत्वमिति चेत्, स्वभावादेवेति संसर्गपरीक्षायां निपुणतरमुपपादयिष्यते । तस्मात् तत्तेदन्ताऽऽस्पदस्य पद्मरागस्य तदवभासिनोऽनुभवस्य च एकत्वमनुभवाद्वा अनुमानाद्वा तदवभासलक्षणफलाभेदजन्मनः सिद्धम् । विशदतरकार्यसिद्धौ च अप्रतीयमानमपि कारणं कल्पनीयम्, न पुनः अप्रतीयमानकल्पनाभयात् कार्यवैशद्यमपह्नोतुमुचितम्, रूपादिविज्ञप्तीनामपि अपह्नवप्रसङ्गात् । तदिह यद्यपीन्द्रियं केवलमसमर्थम्, यद्यपि च संस्कारमात्रम्, संस्कारसध्रीचीनं तु इन्द्रियं भावयिष्यति प्रत्यभिज्ञातद्भावाभावानुविधानात् प्रत्यभिज्ञाभावाभावयोः । नहि नाजीजनत् बीजमङ्कुरम्, इति मृदादिसहितमपि न जनयति । तेन



भवतु स्थिरस्य भावस्य सहकारिप्रत्ययसमवधानसमासादितातिशयस्य कार्यकारिता, भवतु वा उपसर्पणं प्रत्ययपरंपरालब्धतथात्वादभेदस्य, उभयथाऽपि लोचनादीनां संस्कारसहितानामनुभववासनासहभुवां वा प्रत्यभिज्ञानजननसामर्थ्यसंभवः । अनुभववासनामात्रजत्वे अयमित्यनुपपत्तेः इन्द्रियमात्रजत्वे वा स इति, अनर्थजत्वे वा अर्थसंनिधानासंनिधानाभ्यां तत्प्रतिभासभेदानुपपत्तेः । न चैवमतीतकालसंबन्धिता इन्द्रियाणाम् । तदसंबन्धेऽपि अतीतकालतायाः तत्पारंपर्यसंबन्धसंस्कारद्वारेण अवभासोपपत्तेः । न चैवमतीतकालता न प्रत्यक्षेति सांप्रतम्, इन्द्रियजविज्ञानविषयत्वात् तन्मात्रानुबन्धित्वाच्च प्रत्यक्षताया इन्द्रियसंबन्धित्वे । तन्मात्रानुबन्धित्वे तु तज्जविज्ञानाविषयाणामपि तद्गन्धादीनां परमात्ममनःप्रभृतीनाम् अप्रत्यक्षत्वप्रसङ्गः । तस्मान्न कारणाभावः । नापि सामग्रीभेदः, यतः कार्यभेदः स्यात् । तस्मिन् जनयितव्ये नियमेन तत्पूर्वभाविनां संस्कारेन्द्रियादीनां एकत्र सामग्रीभावात् । तत्सिद्धमभेददर्शनं प्रत्यभिज्ञाऽऽत्मकं एकमनेकदेशकालावस्थासंबन्धं पद्मरागादि गोचरयतीति । न चेदं स्मार्तम्, पूर्वापरदेशकालावस्थाऽनुगतेः अधिकारात् । न च विकल्परूपतया अस्य अप्रामाण्यम्, अभिलापसंसर्गयोग्यप्रतिभासप्रामाण्ययोः अविरोधात् । समारोपितगोचरत्वस्य असति बाधके अनुपपत्तेः । न चैतदनुसंधानमात्रं यथा भिन्नानामपि यजमानानाम् 'एकीभूता वयमिह सत्रे' इति व्यपदेशमात्रम्, तत् केन चिद् उपाधिना न त्वेकत्वावगमः । इह तु देशकालावस्थासंसर्गभेदेऽपि पश्यन्त्येकं पद्मरागतत्त्वमभिन्नदेशकालमिव लौकिकपरीक्षकाः । तत् सिद्धम् अभेदप्रतिभासनादिति ।

ननु अस्तु अभेदप्रतिभासः, न पुनरयमक्षणिकतामावहति भावादीनाम् । बाधके सति समारोपितगोचरत्वात् । अस्ति हि बाधकम्, यत् सत् तत् क्षणिकं यथा घटादि । सन् च विवादास्पदीभूतः शब्दादिरिति स्वभावहेतुः, भावमात्रानुबन्धिसाध्यविषयत्वात् । कथं पुनरिह सत्तामात्राऽनुबन्धसिद्धिः क्षणिकतायाः पूर्वापरभागविकलकालमात्रावस्थितिलक्षणायाः ? इत्थम् । तथाहि, सर्वोपाख्यारहितविपरीतरूपनिरूपणा सत्ता भावानां नार्थक्रियाकारितायाः अतिरिच्यते, नो खलु समस्तार्थक्रियाऽनुपयोगिभावसंभवः । तथाहि स्वरूपमात्रानुबन्धिसार्वज्ञविज्ञानगोचरो न वा ? अगोचरश्चेत्, निरुपाख्यो न भावः, तद्विषयताव्याप्तस्य वस्तुरूपस्य तन्निवृत्तौ निवृत्तेः । तद्गोचरत्वे वा कथमनालम्बनम् ? आलम्बनं चेत् कथमप्रत्ययः ? प्रत्ययश्चेत् कथमर्थक्रियायां नोपयुज्यते ? तदर्थक्रियाकारिता एव सत्ता भावानाम् । सा च क्रमाक्रमाभ्यां व्याप्ता, तृतीयप्रकारविरहात् । तथाहि, भावानां तासुतासु अर्थक्रियासु क्रमाक्रमौ परस्परपरिहारवन्तौ प्रत्यक्षत एव चकास्तः । तथा च प्रकारान्तरमपि क्रमाक्रमात्मकम् ईदृशाभ्यामेवानुभूतावसिताभ्यां क्रमाक्रमाभ्यां व्यतिरिक्तमङ्गीक्रियेत, ततो दृश्यमानयोस्तयोरपि क्रमाक्रमयोः परस्परसंकरप्रसङ्ग इति दृश्यमानः क्रमः अक्रमात्मकः, अक्रमश्च क्रमात्मक इति तथैव अनुभवक्रिये प्रसज्येयाताम् । तदेवं परस्परपरिहारवन्तौ क्रमाक्रमौ परिच्छिन्दत् प्रत्यक्षमेव प्रतिक्षिपति, न मृष्यति च प्रकारान्तरमीदृक्क्रमाक्रमसंकीर्णमेकम् । तदनुपलम्भश्च दृश्यविशेषणरहितोऽपि दृश्यमानतादात्म्यनिषेधात्मकतया तदभावव्यवहाराय कल्पते । दृश्यमानस्तम्भतादात्म्येन स्वयमदृश्यानां पिशाचक्लङ्गमादीनाम् अविशेषेण अनुपलम्भमात्रेण असद्व्यवहारसिद्धेः । अनेवंभूतक्रमयौगपद्यव्यतिरेकवति तु प्रकारान्तरे क्रमयौगपद्ये एव न संभवतः । ननु मा भूताम्, अस्त्वन्य एव क्रमाक्रमाभिधानयौगपद्यादन्यप्रकारः, यमास्थाय अर्थक्रियासु उपयोक्ष्यते इति चेत् । नन्वेषां प्रकारान्तरवत् किं अर्थक्रिया पिशाचायमाना एव ? तथा चेत् किं नश्छिन्नम् । दृश्यमानास्त्वनुभूतावसितपरस्परव्यावृत्तक्रमयौगपद्यरूपप्रकारद्वयसमालिङ्गितशरीराः अर्थक्रियाः न प्रकारान्तरात् भवितुमीशते । न च तदपि । तथाहि, यत्र यत्प्रकारव्यवच्छेदेन यत् इतरप्रकारव्यवस्थानम्, तत्र प्रकारान्तरसंभवः । तद्यथा नीलप्रकारव्यवच्छेदेन अनीलप्रकारव्यवस्थानं पीते । अस्ति च क्रमयौगपद्ययोः अन्यतरव्यवच्छेदेन तदितरप्रकारव्यवस्थानं व्यवच्छिद्यमानप्रकारान्तरे अविषयीकृते अर्थक्रिया सर्वत्र कार्यकारणे, इति विरुद्धोपलब्धिः । निषिध्यमानप्रकारान्तरसंभवविरुद्धं हि

द्वयोरन्यतरनिषेधे अन्यतरव्यवस्थानमिति प्रकारान्तराभावात् भावानामर्थक्रिया क्रमाक्रमाभ्यां व्याप्ता, तौ च स्थिरात् व्यावर्तमानौ अर्थक्रियामपि व्यावर्तयतो वृक्षतेव शिंशपात्वम् एकशिलामयादचलप्रदेशात् । तथाहि, न तावत् क्रमेण अर्थक्रियासंभवः, स्वेनैव हि रूपेण भावा अर्थक्रियासूपयुज्यमाना दृश्यन्ते । यतो यत् यत्कार्यान्वयव्यतिरेकानुविहितभावाभावं तत् तत्कार्यप्रसवसमर्थम्, रूपं च तेषां कार्येण अनुकृतान्वयव्यतिरेकम् इति तदेव समर्थम् । तच्च द्वितीयादिष्विव क्षणेषु प्रथमेऽपि क्षणे सदिति द्वितीयादिक्षणजन्यं कार्यकलापं प्रथमे एव क्षणे जनयेत्, समर्थस्य क्षेपायोगादिति नाक्षणिकस्य क्रमवद्व्यापारसंभवः ।

स्यादेतत् । असमर्थोऽपि क्रमवत्सहकारिसंनिधानात् क्रमेण करोतीति । तदनुपपन्नम्, विकल्पासहत्वात् । किमस्य सहकारिणः किञ्चित् उपकारमादधति न वा ? आदधाना अपि भावाद्भिन्नमभिन्नं वा ? तत्र भिन्नोपकाराधाने भावरूपे सत्यपि अलब्धजनने सत्यप्यस्मिन् अनुपलब्धेरुत्पत्तिमतः एवोपकारात् कार्यस्य निष्पत्तेर्न तत्कारीभावः स्यात् । न चोपकारसहकारिणः कार्यजननमिति सांप्रतम् । उपकारस्योपकारान्तरजनने अनवस्थाऽऽपातात् । तत एव चोपकार्यस्योत्पत्तेर्भावस्य अतत्कारित्वप्रसङ्गः इत्युक्तम् । अभिन्नोपकाराधाने भावः एवाभिधीयेत, न च स प्राक् सिद्धः शक्य आधातुम् । अनुपकारकत्वे वा सहकारिणो भावेन नापेक्ष्येरन् इत्युत्पन्नमात्रमेव बीजमङ्कुरं जनयेत्, अनपेक्षस्य क्षेपायोगात् । क्षेपे वा पश्चादपि न जनयेत् । यदि मन्येत अनुपकारका अपि भवन्ति सहकारिणः, यस्मात्तैः सहभावः कार्यं करोति । न च नापेक्ष्यन्ते, तैर्विना कार्यस्य अनुत्पत्तेरिति । तन्न । स्वरूपेण चेत् कार्यजनको भावः, कस्मान्नैतानन्तरेण जनयति ? तेभ्यः प्रागपि रूपसद्भावात् । सहकारिरूपेण वा जनकत्वे ते एव जनकाः, न भावाः । अन्यरूपेण वा अन्यस्य जनकत्वे गगननलिनस्यापि सत्त्वेन सद्व्यवहारगोचरत्वप्रसङ्गः । न चोभयभावाभावानुविधानात् अर्थक्रियाभावाभावयोः, एकैकस्माच्च व्यभिचारात्, अस्मादुभयाधीनजन्मतेति सांप्रतम् । चरमभाविनि सति हेतौ उत्पत्तिमति कार्योत्पत्तेरवश्यम्भावनियमेन व्यभिचाराभावात् । न च स्वकारणात् कतिपयकालकलाविलम्बेन कार्यजननस्वभावो भावो जातः इति स्वभावादेव विलम्बकारीति सांप्रतम्, विकल्पासहत्वात् । किं कतिपयकालविलम्बे अस्य विलम्बनकारितास्वभावो निवृत्तो न वा, निवृत्तश्चेत् कथं स्वभावो न निवृत्तः ? स्वभावनिवृत्तेः । अनिवृत्तौ वा कथमस्य स्वभावः ? निवृत्तानिवृत्तरूपविरुद्धधर्मसंसर्गात् । अतत्स्वभावत्वे वा न विलम्बते इति जन्मानन्तरमेव कृतकृत्यः प्रसज्येत । अनिवृत्तौ कतिपयकालकलातिक्रमेऽपि न कार्यं जनयेत् । विलम्बकारिताया रूपस्य तादवस्थ्यात् । तदुक्तेन क्रमेण न क्रमेणार्थक्रियाकारिता संभवति भावस्य । नापि यौगपद्येन युज्यते । तस्मात् यावत्कार्यं किमपि प्रथमे क्षणे तेनाक्षणिकेन स्वेनात्मना संपादिता, तावत् सर्वं द्वितीयादिक्षणे संपादयेत् । तावत्कार्यसंपादनयोग्यस्य आत्मनो द्वितीयादिक्षणेषु संनिधानात् । तथा च संपादितस्य संपादनाऽनुपपत्तेः, तदन्यत्वे द्वितीयादिक्षणसंपाद्यस्य न यौगपद्येन निखिलार्थक्रियानिर्वर्तनम् अक्षणिकस्य युज्यते । तदनेन पर्यायेण नाक्षणिकस्य क्रमाक्रमाभ्यामर्थक्रियाकारिता कल्प्यते इति । विपक्षे अक्षणिकत्वे व्यापकाभावात् ततो व्यावर्तमानं सत्त्वं क्षणिकत्वेन व्याप्यते इति प्रतिबन्धसिद्धिः ।

**स्यादेतत्** । क्षणिकोऽपि भावः अर्थक्रियाजननस्वभावो न वा ? न चेदसन्नेव । जनकस्वभावश्चेत्, किमस्य सहकारिभिः ? इत्युत्पन्नमात्रमेव बीजमङ्कुरं जनयेत् । ननूत्पन्नो बीजक्षणः समर्थो जनयत्येवाङ्कुरम्, कुतः पुनस्तस्योत्पत्तिः, पूर्वस्माद्बीजक्षणात् । तर्हि तत्संतानपतितानां सर्वेषां बीजत्वाऽविशेषात् अङ्कुरजननसामर्थ्यमिति लब्धजन्ममात्रमेव बीजमङ्कुरं जनयेत् । **मैवम्** । पूर्वपूर्वक्षितिबीजपवनादिक्षणसमवधानोत्पन्नातिशयवत्तदुत्तरोत्तरक्षणपरंपरालब्धजन्मा अन्यो बीजक्षणः समर्थः समर्थक्षित्यादिक्षणसहभूतः अनपेक्ष एवाङ्कुरं जनयति । न चास्य क्षित्यादिसहभुवः तदनपेक्षस्यापि तैर्विना कार्यकरणम् । तदेकसामग्र्याधानस्य तदभावे अभावात् । न चासहकारिता क्षित्यादीनाम्, तैरेव सह अङ्कुरजननात् ।



तेषामपि तत्पूर्वभावित्वस्य नियमवत्त्वाविशेषात्, तन्मात्रत्वादेव च कारणतायाः । न च अनपेक्षाणामपि परस्परं कार्यान्तरारम्भणम्, तन्मात्रस्य तेभ्य उपलब्धेः, तत्रैव सामर्थ्यनियमात् । न च कृतकरतया इतरेषामक्रिया, सहक्रियायां कृतमित्यसंभवात् ; न च स्वकारणबललब्धपरस्परसंनिधयः अप्रेक्षावन्तः शक्यमिदमेकेनापि अस्मासु कर्तुमिति कृतं संनिधिनेति निवर्तितुमीशते । न च सहकारिकारणभेदः कार्यभेदहेतुः, अपितु सामग्रीभेदः, तस्मिन् सति कार्यभेदोपलब्धेः । अभिन्ना चेह सामग्रीति न कार्यभेदसंभवः । परस्परसमवधानं चोपसर्पणप्रत्ययेभ्यः क्षित्यादीनामिति न क्षणिकस्य अर्थक्रियाविरोधात् असाधारणता हेतोः । न च साध्यधर्मिणि दृश्यमाने शब्दादौ व्याप्तिप्रसाधनादेव साध्यसिद्धेरसाधनाङ्गहेतुवचनम् । न खलु सर्वोपसंहारवती व्याप्तिर्दृश्यमात्रविषया भवितुमर्हति । शक्यं हि शङ्कितुं परेण दृश्यमानानां सत्त्वम् अक्षणिकत्वान्न व्यावर्तितं त्वयेति सत्त्वमनैकान्तिकं न क्षणिकत्वसाधनम् इति । तस्मात् यत् सत् दृश्यमदृश्यं वा, तत्सर्वं क्षणिकमिति दर्शनीया व्याप्तिः । ननु एवमपि शब्दादेर्विवादास्पदीभूतस्य व्याप्तिदर्शनबलादेव सिद्धा क्षणिकतेति तदवस्थमेव असाधनाङ्गत्वं हेतुवचनस्य । **मैवम्** । असत्यपि शशविषाणादौ यत् सत् दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति यथा सर्वोपसंहारवती व्याप्तिः सिध्यति, न च शशविषाणादयो भवन्ति क्षणिकाः, एवमसत्यपि विवादास्पदीकृते शब्दादौ व्याप्तिसिद्धावपि न सिध्यति क्षणिकता इत्यवश्यं दर्शयितव्यमेव । तेषां क्षणिकत्वसाधनाय सत्त्वम्, इति नासाधनाङ्गता हेतुवचनस्य । **अपिच** कृतका भावाः स्वहेतुभ्यः उपजायमाना विनश्वरा जायन्ते अविनश्वरा वा ? विनश्वराश्चेत् उदयानन्तरमेव अपवृज्येरन्निति सिद्धः क्षणभङ्गः । अथ अविनश्वराः न कदा चिदपि नश्येयुः । न खल्वविनश्वरो विनष्टुमर्हति । न जातु स्वकारणादुत्पन्नं नीलं पीतं भवति । न च हेत्वन्तराधीनजन्मा विनाश एषामिति सांप्रतम्, विकल्पासहत्वात् । स हि हेत्वन्तरेण जन्यमानो विनाशो भावाद्भिन्नः अभिन्नो वा । न तावदभिन्नः, कारणभेदात् । भिन्नत्वे तु भावस्य तादवस्थ्यात् पूर्ववदुपलब्ध्यादिप्रसङ्गः । तेन भावस्तिरोधीयते इति चेत् । न । तिरोधानस्यापि भेदे भावतादवस्थ्यम् । अभेदे वा हेतुभेदाऽनुपपत्तिः । तस्मादभावस्यापि समस्तरूपविरहिणो विकल्पितस्य क्रिया अनुपपन्नेति 'अभावं करोति' इति करोतिक्रियाया अभावेन निःस्वभावेन संबन्धानुपपत्तेः, नञा सह संबन्धो भावं न करोतीति । यश्च न करोति तस्याकारकस्य अहेतुत्वमिति न विनाशहेतवः । **केचित्तु** तस्मात् स्वहेतोरयमेकक्षणस्थितिधर्मा भावो जातः इति द्वितीयक्षणे स्वयमेव न भवति, न पुनरत्र हेतुमपेक्षते । न खलु स्वकारणतः स्वभावव्यवस्थितं नीलमुपजायमानम् अपीतादिभावे हेतुमपेक्षते पर्यनुयुज्यते चेति । अपि च कृतकानां भावानामवश्यम्भावी विनाशः प्रतीयते, तेनापि शक्या क्षणिकता अनुमातुम् । तथाहि, यद्येषां ध्रुवभावि तत्र तेषां हेत्वन्तरापेक्षा नास्ति यथा रूपादीनां लोहमयत्वे । ध्रुवभावी च कृतकानां भावानां विनाश इति विरुद्धव्याप्तोपलब्धिर्विनाशस्य हेत्वन्तरायत्ततां प्रतिक्षिपति, ध्रुवभाविता हि निषिध्यमानहेत्वन्तरापेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्त्या लब्धा हेत्वन्तरानपेक्षत्वमुपस्थापयति । तच्च स्वविरुद्धं हेत्वन्तरानपेक्षत्वमपाकरोति । तथाहि । येये हेत्वन्तरापेक्षाः, न ते ध्रुवभाविनः यथा वाससि रागादयः । तथा यदि भावा अपि स्वहेतुभ्यो हेत्वन्तरं विनाशं प्रत्यपेक्षेरन् ततस्तस्य संनिधाननियमप्रमाणाभावात् कश्चित् कृतकोऽपि न विनश्येत् । सोऽयमवश्यम्भावी क्षणिकानां भावानां विनाशः स्वहेतुभ्यः एव एकक्षणावस्थायिनामुत्पत्तिं सूचयति । तथा च स्वयमेव न भवन्ति भावा द्वितीये क्षणे, इति सिद्धः क्षणभङ्गः एतेषाम् ।

( **खण्डयति–** ) नैव तावत् सत्त्वं क्षणिकत्वसाधनसमर्थम्, क्षणिकत्वे व्यवस्थाऽनुपपत्तेरसाधारणत्वात् । तथाहि अन्त्यक्षणप्राप्तानां क्षणानां कार्यजननमुपेयते । तत्रेदं भवान् पृष्टो व्याचष्टाम्, किमेकस्मादेकं कार्यमुपजायते उतानेकम् ? एवं किमनेकस्मादेकं कार्यमुतानेकम् ? इति । न तावदेकस्मात्, एककार्येण खलु अनुकृतान्वयव्यतिरेकं कारणं तदुच्यते, यस्य कार्योत्पादात् प्राक् नियमवान्

भावः। अनुकारयन्ति च वहव एव क्षितिबीजादयः स्वान्वयव्यतिरेकौ अङ्कुरम्, यत् नियमेन तदुत्पादस्य पुरस्तात् सहभवन्तः। काकतालीयन्यायेन तु क्षित्यादिक्षणानां प्राग्भावो न नियमवान् भवेत्। न चाङ्कुरमात्रं बीजक्षणस्य परस्तादवश्यम्भावि, क्षित्यादीनामपि तथाभावात्। तान्यपि खलु अङ्कुर इव बीजक्षणस्य परस्तादवश्यम्भावनियतानि। न च पौर्वापर्यनियमादन्यः कार्यकारणभावः। अपि च एकैककारणत्वाभावे न नियमेन अङ्कुरादिसहभुवो भूम्यादयो भवेयुः, तस्मादनेकस्मादेकम्। यदाह 'न कश्चिद् एकमेकस्मात्' इति। नाप्येकस्मादनेकम्, अनेकक्षितिबीजतेजोऽनिलसलिलानन्तरभावनियमात् अङ्कुरादीनामनेकेषाम्। नाप्यनेकस्मादेकस्यैवाङ्कुरस्य जन्मेति सांप्रतम्। अङ्कुरात् भिन्नानां भूम्यादीनां तेन सहैकहेतुकत्वाभावे तत्सहभावनियमाभावप्रसङ्गात्। तत्सहभावनियमस्य च अङ्कुरवत् तेषामप्यविशेषात्। तदनेकस्मादनेकोत्पत्तिः परिशिष्यते। **तत्रेदमालोचनीयम्**। किं पूर्वक्षणा उत्तरेषां क्षणानां परस्परनिरपेक्षा एव जनकाः, आहोस्वित् सापेक्षाः? इति। ननूक्तम् अन्त्यक्षणप्राप्ताः परस्परनिरपेक्षाः कार्याणि जनयन्तीति, तत् किम् अनभ्युपेतारोपितप्रतिषेधप्रपञ्चेन। तत् किमिदानीं समर्थबीजक्षणजनकोऽपि तज्जनने, इति कृतं सहकारिभिः। ननूक्तं नैते प्रेक्षावन्तः किन्तु स्वप्रत्ययाधीननियतसंनिधयो न व्यवधेः ईशते इति। किमयं कृषीवलोऽपि न प्रेक्षावान्, यः कुसूलादपनीय बीजमावपति भूमौ, परिकर्मितायां क्षित्यादिसहभाविन एवातिशयोत्पादपरंपरया अङ्कुरजननसामर्थ्यदर्शनात्, बीजात् कुसूलस्थात् वत्सरशतेनापि तददर्शनात्। तत्रावपतीति चेत्। अथ किमयं न स्वसंतानमात्रप्रभवसमर्थो बीजक्षणः? तथा चेत् कथं सन्तानान्तरं सहकारि नापेक्षेत कार्यकरणे।? ननु अपेक्षते एव चैष स्वोत्पादे, न स्वकार्ये, तत्र चास्यानपेक्षत्वमुच्यते, न तु स्वोत्पत्तौ। ननूत्पत्तावपि अस्य स्वसंतानवर्ती जागर्ति पूर्व एव निरपेक्ष क्षणः। एवं तस्य पूर्वःपूर्वः स्वसंततिपतित एवानपेक्षो जागर्ति जनने, इति कुसूलनिहितबीजे एव स्यात् कृती कृषीवलः, कृतमस्य प्रेक्षावतः कृषिकर्मणा दुःखाकरेणेति।

**यदि मन्येत**। द्विविधमिह कार्यम्। एकं सहकारिभिराहितातिशयविशेषम् अपरंपराप्रसवधर्मकम्, द्वितीयं तु सहकार्यातिशयनिरपेक्षजननम्। तत्राङ्कुरे आहितातिशयविशेषं परापेक्षजन्म। आद्योऽतिशयस्तु सहकारिकृतातिशयपरंपरानिरपेक्षोत्पादः। न चैतदुभयविधमपि कार्यं बीजस्य संतानमात्रात् उत्पत्तुमर्हतीति क्षित्यादिसंतानान्तरापेक्षमेव स्वसंतानवर्तिभिन्नसंतानवर्तित्वात् कादाचित्कं कार्यं करोतीति कल्पते कृषिकर्म। सन्तानान्तराणि तु कादाचित्ककार्योत्पत्तौ ये सहकारिप्रत्ययाः त एव, यथा अङ्कुरोत्पत्तौ सहकारिणो बीजस्य सामर्थ्यप्रबोधहेतवः, कदा चित्तु एषां क्षित्यादीनां ये मेलनहेतवस्त एव सामर्थ्यावबोधहेतवो भवन्ति, तथा बीजानामाद्यातिशयोत्पादने सामर्थ्यप्रबोधहेतवः उपसर्पणप्रत्ययाः। सर्वथा सन्तानान्तरैः अनाहितातिशयसामर्थ्यं न बीजं कार्यविशेषं कादाचित्कं करोति। सामर्थ्यप्रबोधहेतवश्च द्वये, सहकारिप्रत्यया उपसर्पणप्रत्ययाश्चेति। **तदनुपपन्नम्**। तथाहि, भवतु द्विविधं कार्यम्, अस्तु च तत् कादाचित्कत्वात् सन्तानान्तरापेक्षम्। अपेक्षार्थस्तु वक्तव्यः। कारणस्य स्वसामर्थ्यप्रबोध इति चेत्। ननु सामर्थ्यतत्प्रबोधयोः समर्थभावतत्प्राकट्यव्यतिरेकात् समर्थप्रत्ययोत्पाद इत्युक्तं स्यात्। तथा च स्वोत्पादे अपेक्षेत कारणं सहकारिप्रत्ययात्। सत्यम्। नाभ्युपगम एव दोषत्वेन चोद्यते। अथायमङ्कुरसमर्थो वा क्षण आद्यातिशयो वा, किं निरपेक्षेण स्वसन्तानमात्रजन्मना पूर्वबीजक्षणेन जन्यते निरपेक्षेण, न पुनः स्वसंतानमात्रजन्मना, तस्यापि पूर्वस्मादेव पुञ्जादुत्पत्तेः। ननु समानकुसूलजन्मसु बहुषु बीजसंतानेषु कस्मात् किञ्चिदेव बीजं परंपरया अङ्कुरजननानुगुणमुपजनयति बीजक्षणम्, नान्ये बीजक्षणा भिन्नसंताने पतिताः? न खलु उपसर्पणप्रत्ययात् प्राक् तेषां समानासमानसंतानवर्तिनां कश्चित् परस्परातिशयो बीजक्षणानाम्। अथोपसर्पणप्रत्ययात् प्राक् न तत्संतानवर्तिनो जनयन्ति परंपरया अपि अङ्कुरजननानुगुणं बीजक्षणम्, बीजमात्रजननात्तु तेषां कस्य चित् बीजक्षणस्योपसर्पणप्रत्ययसहभुवः आद्यातिशयोत्पादः। हन्त तर्हि तदभावे सति उत्पन्नोऽपि जनयेदेव। न चास्य उपसर्पणप्रत्ययेन सहभावनियमः। तत्संतानानां कुसूलवर्तिनां बीजक्षणानां तेन सह समानयोगक्षेमाणामपि उपसर्पणप्रत्ययसहभावाभावात्। क्षणस्य चैकस्य क्षणान्तरेणैकेन कार्यकारणभावनिश्चयायोगात् सामान्यविषयत्वादन्वयव्यतिरेकयोः तत्रैवोपपत्तेः, न खलु कारणभेदेन। तथा च केवलानां व्यभिचारसंभवात् आद्यातिशयोत्पादमङ्कुरोत्पादं वा प्रति क्षित्यादीनां परस्परापेक्षाणामेव उत्पादकत्वमकामेनापि अङ्गीकरणीयम्।



**अपि च** अन्त्यक्षणप्राप्तं बीजमनपेक्षम् अङ्कुरावनिपवनपाथस्तेजांसि जनयत्, किं येनैव रूपेणाङ्कुरं जनयति तेनैव तदितराण्यपि, किंवा रूपान्तरेण? न तावत्तेनैव, क्षित्यादीनामपि अङ्कुरस्वाभाव्यापत्तेः। न खलु कारणाभेदे भेदवत् कार्यं भवितुमर्हति, कार्यभेदस्याकस्मिकत्वप्रसङ्गात्। यदाह 'अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। नापि सामग्रीभेदः, तस्या अप्येकत्वात्, अन्यथा सहभावे नियमाभावात्। रूपान्तरेण तदितरेषां जनकम्। तथाहि, बीजमङ्कुरादि जनयत् उपादानम्, तद्विक्रियया तदुपपत्तेः। तदितरेषु पुनरस्य सहकारिप्रत्ययता। तेषां तु पूर्वे पवनादयो यथास्वमुपादानानि, तद्विक्रियया तदुत्पादादिति चेत्। ननु सहकारितोपादानतेति किमेकं तत्त्वम्, नाना वा? एकं चेत्, कथं रूपान्तरेण जनकम्? नानात्वेऽपि अनयोर्बीजात् भेदः अभेदो वा? भेदे कथं बीजस्य जनकत्वम्? ताभ्यामेव अङ्कुरादीनामुत्पत्तेः। अभेदे वा कथं बीजस्य नानात्वम्? भिन्नतादात्म्यात्। एतयोर्वा ऐक्यमेकतादात्म्यात्। यद्युच्येत 'क्षित्यादौ जनयितव्ये तदुपादानभूतमेव क्षित्यादिबीजस्य रूपान्तरम्' इति। न तर्हि बीजं तदनपेक्षं क्षित्यादीनां जनकम्। तदनपेक्षत्वे तेषामङ्कुराद्भेदानुपपत्तेः। न चानुपकारकाणि अपेक्ष्यन्ते इति त्वयैवोक्तम्। न च क्षणिकस्योपकारसंभवः, अन्यत्र जननात्, तस्याभेद्यत्वात्। तथा च अर्थक्रियाकारिताया एकानेकत्वसापेक्षानपेक्षत्वव्याप्तत्वात्, तृतीयप्रकारविरहात्, अनयोरन्यतरनिषेधस्य अन्यतरविधाननान्तरीयकत्वात्, क्षणिकत्वे च तद्व्यापकयोः एकानेकत्वप्रकारयोः अभावादुक्तेन क्रमेण सत्त्वं न निवृत्तम्, इत्यसाधारणानैकान्तिकं गन्धवत्त्ववदिति।

**यदि मन्येत** अनुपकारका अपि भवन्ति सहकारिणः, अपेक्षणीयाश्च कार्येणाऽनुविहितभावाभावत्वात् सहकार्यकरणाच्च। नन्वनेन क्रमेण अक्षणिकोऽपि भावः अनुपकारकानपि सहकारिणः क्रमवतः कार्येण अनुकृतान्वयव्यतिरेकान् अपेक्षिष्यते, करिष्यते च क्रमवत्सहकारिसमवधानवशात् क्रमेण कार्याणीति व्यापकानुपलब्धेः असिद्धेः संदिग्धव्यतिरेकमनैकान्तिकं सत्त्वं क्षणिकत्वसिद्धौ इति। **ननु** अयमक्षणिकः स्वरूपेण कार्यं जनयति, तच्च स्वरूपं तृतीयादिष्विव क्षणेषु द्वितीयेऽपि क्षणे सदिति तदाऽपि जनयेत्। अकुर्वन् वा तृतीयादिष्वपि न कुर्वीत, स्थिरस्य तादवस्थ्यात्। अतादवस्थ्ये वा तदेवास्य क्षणिकत्वमिति। **अत्रोच्यते**। सत्यं स्वरूपेण कार्यं जनयति, न तु तेनैव, सहकारिसहितस्य तस्य जनकत्वात्। क्रमवत्स्वप्रत्ययापेक्षिणः तत्सहकारिसमवधानस्य द्वितीये क्षणे भावात्। स्वरूपवत् सहकारिसमवधानमपि आत्मनः अन्वयव्यतिरेकौ अनुकारयति तत्कार्योत्पादने। न चैतावता सहकारिसमवधानादेवोत्पत्तिमतः कार्यसिद्धेः कृतमेतेषां स्वरूपेणेति सांप्रतम्। तत्सहितादेव ततस्तदुत्पत्तिदर्शनात्। रूपे सत्यपि अनुत्पादात् समवधाने तु उत्पादादेव कार्यस्य तदेव हेतुः, न पुना रूपमपीति चेत्। ननु एवमहेतुत्वे समानेऽपि बीजे रूपस्य रासभादिभिः सह कस्माद्बीजरूपे सत्येव अङ्कुरोत्पादः, न रासभादिषु? सत्स्वेव बीजादिस्वरूपसमवधानस्यैव हेतुत्वादिति चेत्? तद्धेतुत्वे कथं तन्निवेशि स्वरूपमपि न हेतुः? अहेतुत्वे वा कथं न रासभादितुल्यता? न चावर्जनीयतया रूपनिवेशः, समवधानमात्रस्य तदन्तरेणापि भावात्। विशेषस्तु रूपमेव। तस्माद्यथा उभयाधीननिरूपणा व्याप्तिर्व्यापकस्य व्याप्ये भाव एव नाभाव इति, व्याप्यस्य तु व्यापकः एव भावः, नान्यत्रेति निरूप्यते, तथा कार्यकारणभावः उभयाधीननिरूपणोऽपि कारणस्य कार्यात् प्राग् भाव एव नाभावः, इति कार्यस्य कारणे सत्येव नासति भावः इति अनुभवानुसारान्निश्चीयते। तथैव लौकिकपरीक्षकाणां कार्यकारणभावावगतेः।

न च कारणतैव सत्ता स्वरूपं नीलादेरनुभवावसितम्। तद्धि तेनैव स्वरूपेण स्वभावव्यवच्छिन्नं तासुतासु अर्थक्रियासूपयुज्यते, न पुनस्तत्कारिता एवास्य रूपम्। मा भूदपर्यायेण अनेकार्थक्रियाकारणे रूपभेदः, मा च भूदुपाध्यपेक्षमस्यापि निरूपणम्, कार्यत्वस्यैव सत्त्वस्य शुद्धस्यैव निरूप्यमाणत्वात्। कारणत्वे तु सत्त्वे यथा कार्यत्वं भावस्वभावोऽपि वस्तुतः कारणाधीननिरूपणम्, तथा कारणत्वमपि स्वसंबन्धिकार्यमन्तरेण अशक्यनिरूपणमिति सत्त्वं शुद्धं न निरूप्येत। ततश्चोपाध्यपेक्षः शुद्धो वा, नाशे कार्यत्वसत्त्ववदिति व्याहन्येत। तथा च यद्यस्ति सर्वज्ञः, तथापि सिद्धं सद्रूप एव भावस्तद्विज्ञानालम्बनप्रत्ययत्वम् अनुभविष्यति। अथ नास्ति, तथापि स्वस्वहेतुतो लब्धस्वरूप एवापाततः अकिञ्चित्करः, समर्थोऽपि तत्तत्सहकारिसंनिधेः तासुतासु अर्थक्रियासूपयोक्ष्यते। न च प्रथमतः कार्यानुपलब्धेरसामर्थ्यम्, तथा सति रासभादेरपि क्षित्यादिसमवधानात् अङ्कुराद्युत्पत्तिप्रसङ्गः इत्युक्तम्। ननु जनकत्वमजनकत्वं च विरुद्धौ धर्मौ कथमेकत्र समाविशतः? तथैकत्रैव बीजे अङ्कुरजनकत्वं तदजनकत्वलक्षणं च क्षित्यादिजनकत्वं कस्मान्न विरुद्धे? विरोधिनी चेत् कथमभेदः? भेदश्चेन्नैकं जगति किञ्चित् इति नानेकमपि स्यादिति सुनिरूपितमत्रभवता भावानां तत्त्वम्। सकृदुपलभ्यमाने कार्यभेदेऽपि बीजरूपस्य जनकस्य अभेदावगतेः प्रत्यक्षेण अभेद इति चेन्न। इहापि समानत्वात्। न खल्वत्रापि क्रमवत्कार्यभेदेऽपि बीजरूपमन्यदन्यदपेक्षते। न च नञः प्रयोगाप्रयोगमात्राभ्यां विरोधावगतिः, अतिप्रसङ्गात्। न च बीजस्यापि यदैव जनकत्वम्, तदैवाजनकत्वम्। न च जनकत्वमस्य स्वभावः, अपि तु बीजं जनकत्वं न तदितरप्रत्ययसमवधानं वा सामर्थ्यं वा धर्मभेदः। समवधानं चोपसर्पणप्रत्ययाधीनमस्य। न च न धर्मधर्मिणोरभेदः, तस्य ततोऽन्यत्वात्। अन्यत्वेऽपि च तदाश्रितत्वात् तस्योपलब्धेः। तेन च सह कार्यकारणात् तत्संबन्धः; तत् सिद्धमक्षणिकस्यापि क्रमाक्रमाभ्यां अर्थक्रियाकारितोपपत्तेः संदिग्धव्यतिरेकित्वात् अनैकान्तिकं सत्त्वमसाधनाङ्गं क्षणभङ्गुरत्वे भावानामिति।

यच्च विकल्पितम्, स्वभावतो भावा विनश्वरा अविनश्वरा वा जायन्ते इति, तत्रोच्यते। न वयं विनश्वरत्वमविनश्वरत्वं वा जानीमः, किन्तु सन्तः स्वहेतुभ्यो जायन्ते, ध्वसन्ते च हेत्वन्तरेभ्यः स्वप्रत्ययाधीनसंनिधानेभ्यः इति। ध्वंसश्च ध्वंस्यमानाभिन्नो हेतुभेदात् स्वभावभेदाच्च। उपपादितश्च स्वभावभेदो नियोगपरीक्षायाम्। नन्वस्मिन्नुत्पन्नेऽपि भिन्नमूर्तौ किमायातं भावस्य? न किञ्चिद् आयातम्। अस्ति अयमायुष्मान् भावः। अस्तु स्वकारणाधीनजन्मना तदभावेन तत्स्वरूपविरहलक्षणेन स्वलक्षणशालिना स्वानुरूपं व्यवहारं प्रवर्तयता निरस्ताः समस्तार्थक्रियाः, किं नच्छिन्नम्? न च ध्रुवभाविता विनाशस्य हेत्वन्तरानपेक्षतामावहति, असिद्धत्वादनैकान्तिकत्वाच्च। इदं हि भवान् निरूपयतु, किं घटसंतानात् संविभागा कपालसंततिः ध्रुवभाविनी न वा? न चेद्विनाशोऽपि घटस्याध्रुवभावी। न खलु संविभागक्षणोत्पादमन्तरेण घटविनाशमीक्षामहे अपिहितचक्षुषः। तथा चासिद्धा ध्रुवभाविता विनाशस्य। अथ ध्रुवभाविनी, तस्यामेव विभागसंततौ ध्रुवभाविन्यामपि मुद्गरापेक्षिण्यामनैकान्तिकं ध्रुवभावित्वं नानपेक्षत्वेन व्याप्तमिति हेत्वन्तरापेक्षत्वं निषेद्धुमर्हति। तस्मात् क्षणिकत्वसाधनानुमानप्रतिक्षेपात् अबाधितं प्रत्यभिज्ञानं स्थापयति भावान् इति सिद्धम्। **कणिका. पृ. १२२–१४०.**

**क्षणभङ्गवादः तत्खण्डनं च। ( शा– )** ननु सर्वभावानां क्षणिकत्वात् कथं शब्दस्य नित्यता? किं पुनः सर्वक्षणिकत्वे प्रमाणम्? प्रत्यक्षं तावत् कालसत्तां बोधयति, न कालान्तरनिषेधं करोति। नीलप्रत्यक्षमिव न पीतिमानं निषेधति। दृश्यादर्शनेन तु तस्य निषेधः। नच संप्रति कालान्तरं दृश्यम्, येन दृश्यादर्शनात् तन्निषेधः स्यात्, नचान्यदपि प्रमाणं पश्यामः, स्वभावहेतुकं प्रमाणं सत्तामात्रानुबन्धिसाध्यविषयत्वादिति। कथं पुनः सत्तामात्रानुबन्धसिद्धिः क्षणिकतायाः, विपक्षे बाधकप्रमाणप्रवृत्तेः, क्षणिकत्वविपक्षे हि अक्षणिकत्वे व्यापकानुपलब्ध्या बाध्यमाना सत्ता क्षणिकत्वेन व्याप्यमाना तदनुमापयति। किं पुनः सत्ताया व्यापकम्, क्रमाक्रमाविति ब्रूमः। तथाहि, अर्थक्रियाकारितैव सत्ता,



नान्या। नहि स भावः सत्तां लभते, यो न कां चिदर्थक्रियामारभते, यतः स्वज्ञानस्यापि सर्वे भावाः कारणम्। यदपि किञ्चित् अज्ञायमानमपि सत्त्वेन संभाव्यते, तदपि सर्वं विज्ञानं प्रति आलम्बनत्वात् अर्थक्रियाकारि, तदर्थक्रियाकारितैव सत्ता, यदेव अर्थक्रियाकारि, तदेव परमार्थसदिति। सा च क्रमयौगपद्याभ्यां व्याप्ता, न च अक्षणिकत्वे ते संभवतः। स्थायी हि पदार्थो न तावत् अर्थक्रियाः सर्वाः युगपत् कर्तुमर्हति, तथा सति द्वितीये क्षणे कृत्याभावात् अर्थक्रियाकारित्वविरहात् असल्लक्षणापत्तेः क्षणिकत्वमेव स्यात्। नापि क्रमः संभवति, स हि भावः सर्वार्थक्रियासमर्थः किमिति कां चिदेवारभते नान्याम्, समर्थस्य क्षेपायोगात्। सहकार्यपेक्षया विलम्बते इति चेत्। न। सहकारिणो हि अकिञ्चित्करा अनपेक्ष्याः। किञ्चित्कराश्चेत् यत् तैः क्रियते, तदेव कार्यसाधनं स्यात्, तदनन्तरं कार्यनिष्पत्तेः भावः तत्कारणमेव स्यात्। नहि आगन्तुके अतिशये कार्यमारभमाणे भावस्य कारणता संभवति भिन्नत्वात्, अभेदे वा भावोऽपि तत्कालजन्मा क्षणिक एव स्यात्। भेदाभेदौ तु विरुद्धावेव, तस्मान्न अक्षणिकस्य सत्ता संभवतीति सिद्धं सन्मात्रानुबन्धित्वं क्षणिकतायाः। **किञ्च** कृतकानां भावानाम् अवश्यम्भावी विनाशः, तेनापि क्षणिकत्वं घटादीनाम्। तथाहि, यत् येषां ध्रुवभावि, न तत्र तेषां हेत्वन्तरापेक्षा। ध्रुवभावी च कृतकानां विनाशः, इति विरुद्धव्याप्तोपलब्धिः। ध्रुवभाविता हि निषिध्यमानहेत्वन्तरापेक्षित्वव्याप्ता अग्न्युष्णत्वादिषु उपलब्धा स्वव्यापकमनपेक्षत्वम् उपस्थापयन्ती तद्विरुद्धं सापेक्षत्वं प्रतिक्षिपति। अथवा हेत्वन्तरापेक्षाणां वाससि रागादीनाम् अध्रुवभावित्वव्याप्तेः तद्विरुद्धं ध्रुवभावित्वं व्यापकविरुद्धोपलब्ध्या विनाशस्य हेत्वन्तरापेक्षां निवारयति, निरपेक्षश्च विनाशः स्वाभाविको जन्मानन्तरमेव भवतीति सिद्धः क्षणभङ्गः। मुसलप्रहारादयस्तु विसदृशसंतानहेतवो न विनाशस्य। प्रतिपत्तारस्तु सदृशपरापरोत्पत्त्या क्षणानां भेदमलक्षयन्तः तत्त्वभ्रान्त्या विनाशमबुध्वा मुसलप्रहारानन्तरं विसदृशसंतानदर्शिनः तदैव विनाशं मन्यमाना मुसलादेर्विनाशहेतुतां मन्यन्ते। परमार्थतस्तु न केऽपि विनाशहेतवः। हेत्वन्तरजन्मा च विनाशो न तावत् भावादभिन्नो भवितुमर्हति, हेतुभेदात्। भिन्नत्वे तु तस्मिन् जातेऽपि भावस्य पूर्ववदुपलब्धिः स्यात् पटजन्मनि घटवत्। तस्मात् स्वहेतुत एव भावा विनाशस्वभावा जायन्ते इति क्षणभङ्गसिद्धिः। **किञ्च** प्रयत्नरक्षितानामपि घटादीनां कियताऽपि कालेन अवयवक्षयविश्लेषवशेन विनाशो दृश्यते विनैव मुसलप्रहारादिभिः, सोऽयम् उत्पत्तिप्रभृति किञ्चित्किञ्चिदन्यथात्वमन्तरेण नोपपद्यते, प्रत्यक्षेणैव च अन्यथात्वम् अभिनवपुराणावस्थयोः अज्ञातघटोत्पत्तिकालैरपि पुरुषैरुपलभ्यते। न च एकस्यैव घटस्य नानारूपत्वं संभवति, नानात्वैकत्वयोर्विरोधात्, तस्मात् प्रतिक्षणमन्यत्वं घटादेः। प्रयोगश्च भवति '**विवादाध्यासिता भावाः सत्त्वात् क्षणविनाशिनः॥ दीपवत् प्रत्यभिज्ञाऽपि स्यात् प्रदीपवदेव नः॥**'

**अत्राभिधीयते।** न तावत् अर्थक्रियाकारितैव सत्ता, सतो हि अर्थक्रियाकारिता, न तु सैव सत्ता। न च सर्वस्य भावस्य अर्थक्रियाकारितानियमः, अतत्कारिणोऽपि संभवात्। न च ज्ञानकारणत्वमपि सर्वस्य नियतम्, अज्ञायमानस्यापि स्वरूपसद्भावसंभवात्। न च सर्वेषां विज्ञानं प्रति आलम्बनहेतुता अतीतानागतानां भावानां संभवति, अविद्यमानानां हेतुत्वानुपपत्तेः। हेतुत्वे वा सर्वज्ञानिष्पत्तौ सर्वेषां व्यापृतत्वात् क्रमानभ्युपगमेन च पुनर्व्यापारानुपपत्तेः, तल्लक्षणत्वाच्च सत्तायाः, सर्वज्ञानानन्तरमेव समस्तस्य जगतः शून्यताप्रसङ्गः, इति यत्किञ्चिदेतत्। संभवति च भावानां क्रमेण अर्थक्रियाकरणत्वम्, सहकारिण्यपेक्षया विलम्बोपपत्तेः। सहकारिणश्च अतिशयमागन्तुकं भावात् भिन्नाभिन्नं भिन्नमेव वा कुर्वन्त्येव, यथा बीजस्य क्षितिसलिलसंयोगे अतिशयः, तदलाभे स्थायिनोऽपि बीजस्य प्रागङ्कुरानारम्भः लाभे चारम्भः, इति न कदा चिदनुपपत्तिः। **नन्वेवं** संयोगस्यैव कारणत्वं स्यात्, न तु बीजस्य। नैवम्, संयोगमात्रात् तदुत्पत्त्यदर्शनात्। नहि क्षितिसलिलसंयोगः अङ्कुरं जनयति। बीजविशिष्टस्य तु संयोगस्य कारणत्वे विशेषणीभूतस्य बीजस्यापि कारणत्वमङ्गीकार्यम्। यस्तु सहकार्यपेक्षां नानुमन्यते, तस्य

क्षितिसलिलसंयोगानपेक्षात् कुसूलस्थादेव बीजादङ्कुरो जायेत। ननु अन्त्यक्षणप्राप्तः समर्थ एव भावः अनपेक्षो जनयितुम् । निरपेक्षोऽपि असौ सहकारिभिर्विना नास्तीति तैर्विना न करोति। कुसूलस्थं हि बीजमन्यदेव, अन्यच्चेदं क्षितिसंयुक्तम्, यतोऽङ्कुरो जायते। सत्यम्। इद तु अत्र वक्तव्यम् । यदिदम् अन्त्यक्षणप्राप्तं क्षितिसलिलसंयुक्तमङ्कुरजनकम्, तद्यदि कृषीवलप्रयत्नविरहात् कुसूलस्थमेव स्यात् तदाऽपि किमङ्कुरं जनयति ?। ओमितिचेत् किमर्थे तर्हि कृषीवलस्य प्रेक्षापूर्वकारिणः प्रयासः विदुषां च स्वर्गापवर्गार्थे चैत्यवन्दनादिप्रयासः, तदुपदेशश्च देशिकानाम् अनर्थकः स्यात्, अन्त्यक्षणप्राप्तात् विज्ञानादेव धर्माधर्मानपेक्षात् स्वर्गापवर्गसिद्धेः। तस्मात् सहकार्यपेक्षा अङ्गीकर्तव्या। ततश्च सहकारिसंनिधिक्रमेण संभवति स्थायिनोऽपि भावस्य क्रमेण अर्थक्रियाकरणम्, इति विपक्षे बाधकप्रमाणाभावात् अनियता क्षणिकत्वेन सत्ता नालं तदनुमापयितुम् । न च ध्रुवभावितया विनाशस्य हेत्वन्तरानपेक्षत्वम्, घटसंताने कपालसंतानस्य ध्रुवभाविनो मुसलप्रहारादिहेत्वन्तरापेक्षादर्शनात् अनैकान्तिकत्वात् । ननु हेत्वन्तरेण भावाद्भिन्ने विनाशे जाते, विनाशेऽपि भावस्य पूर्ववदुपलब्धिः स्यात्। तस्मात् स्वाभाविको विनाशः । किमिदं स्वाभाविको विनाश इति ? भावस्वभावादेव विनाशो जायते, न हेत्वन्तरादित्यर्थः। ननु भावादपि जातो विनाशो भावाद्भिन्नश्चेत् तुल्य एव दोषः, पूर्ववदुपलब्धिः स्यादिति । अथाभिन्न एव विनाशो भावात् ततो विनाशस्य अप्रत्यक्षत्वात् भावोऽपि अप्रत्यक्षः स्यात् । अत्यन्तविपरीतस्वभावयोश्च भावाभावयोः एकत्वाभिधानं साहसमात्रम् । अथापि विनाशो नाम न किञ्चित् भिन्नमभिन्नं वा तत्त्वम्, तुच्छत्वादिति। ततो जातस्य भावस्य असति विनाशे नित्यमेव स्यादिति सुसमर्थितः क्षणभङ्गः । तस्मात् भिन्नेनापि विनाशेन भावस्योपलब्ध्यादि निरस्यते इत्यकामेन अभ्युपगन्तव्यम् । यत्तु प्रतिक्षणम् अवस्थाभेद इति, भवतु, नैतावता अवस्थावतो भावस्य प्रतिक्षणं विनाशेन भवितव्यं प्रमाणाभावात्, नानाऽवस्थानामपि युगपदेकस्मिन् धर्मिणि विरुद्धानां क्रमेण अविरुद्धानां च संभवात् । ततश्च नूतनाद्यवस्थाः क्रमेण अनुभूय पुराणावस्थां प्राप्तस्य प्रयत्नरक्षितस्यापि युक्तः अवयवविश्लेषणाद्विनाशः । न च सत्तया दीपदृष्टान्तमात्रेण घटादेरपि क्षणिकत्वम्, सत्तायाः संदिग्धविपक्षव्यतिरेकात् अहेतुत्वात्, प्रतिज्ञायाश्च प्रत्यभिज्ञाप्रत्यक्षविरोधात् । न च सादृश्यात् तदुत्पत्तिः, अवयवसामान्यासंभवात् । अनुवृत्तं हि सामान्यं संभवति, न च सर्वक्षणिकवादिनामनुवृत्तं किञ्चित् संभवति, संभवे वा न सर्वक्षणिकत्वम्, तस्मान्न सर्वभावानां क्षणिकत्वम्, नतरां शब्दस्य। शा. १।१।६.

* क्षणभङ्गवादखण्डनम् । '**प्रभाकरगुरोर्भावं परिभाव्याभिधीयते। मीमांसाजीवरक्षेयं क्षणिकत्वनिराक्रिया ॥**' अत्र सुगतमतानुसारिणः क्षणभङ्गिनः सर्वानेव भावानभिदधति । किं पुनस्तेषां तत्र प्रमाणम् ? न तावत् प्रत्यक्षं क्षणिकतामीषितुं क्षमते । स्तम्भादिभावविषये निपुणतरनिरीक्षमाणस्य क्षणिकत्वाध्यवसायाभावात्। स्यादेषा मनीषा, न क्षणिकता नाम भावस्वभावाद्बहिर्भाविनी तेन भावानुभवादेव प्रत्यक्षं क्षणिकतामपि साक्षात्करोतीति । तदिदं मनोरथमात्रं मन्यन्ते मतिमन्तः। तथाहि । संविन्निष्ठा विषयव्यवस्थितयः इति स्थितिरियमविवादा सर्ववादिनाम्। तदियमपि क्षणिकता भावस्य स्वभावभूता सती संवित्तिमधिरोहन्ती तद्व्यतिरेकेण व्यवतिष्ठते, नान्यथा। न च तथा संविदमुदीयमानाम् उदीक्षामहे इति । कुतस्तस्या भावस्वभावान्तर्भाविता । कुतस्तरां च तदवबोधेनावबोधः । अथ मन्वीरन् क्षणिकता प्रत्यक्षमीक्षिताऽपि न निश्चयपथमवतीर्णा, तेनागृहीतेव अवभातीति। तथापि न तस्याः प्रत्यक्षं प्रमाणम् । यत्र हि प्रत्यक्षस्य स्वभावतो विकल्पविरहिणः पृष्ठभाविना सविकल्पकप्रत्ययेन व्यापारोऽनुगम्यते, तत्र प्रत्यक्षं प्रमाणमिति **सौगताः** । यत्र च दृष्टमेतत् इति प्रत्ययो नोदीयते, न तत् प्रत्यक्षमिति स्वतःसिद्धान्तध्वान्ताक्रान्ताशयानां वाङ्मात्रविलसितम् । यदपि केचिदूचिरे, प्रत्यक्षं ज्ञानं क्षणिकम्, स्वकालाकलितवस्तुविषयतया क्षणिकतामवगमयतीति । तदपि बालिशभाषितम्। एकक्षणमात्रवर्तिता हि क्षणिकता। न तत् प्रत्यक्षेणेदानीमेव



व्यवस्थितिं प्रतिपद्यते, कालान्तरं प्रति औदासीन्यात् । प्रत्युत प्रत्यभिज्ञालक्षणं प्रत्यक्षमेव क्षणिकतां दूरमुपक्षिपति। पूर्वापरकालाकलितभावावकल्पनात् । अनुमानमपि संबन्धानुसन्धाननिबन्धनं क्षणिकतां न पक्षीकर्तुं क्षमते। तया सह कस्य चिल्लिङ्गस्य सबन्धबोधविरहात् । न खलु अप्रतीते संबन्धिनि सबन्धबुद्धिराविर्भवति । न चैतदुभयातिरिक्ति प्रमाणं सुगतमतानुसारिणो मन्यन्ते । तदिदमाकाशभ्रान्तमित्यपहसन्ति सौगताः । ते हि स्वभावहेतुकानुमानसमधिगमनीयां क्षणिकतामाचक्षते । किं पुनस्तदनुमानम् ? यत् सत् तत् क्षणिकम्। सन्तश्च सर्वे भावा इति। भावमात्रानुबन्धिनि संबद्धं स्वभावो हेतुर्भवति। यथा शिंशपात्वं वृक्षत्वे । शिंशपामात्रानुबन्धि हि वृक्षत्वम् । तथेहापि सत्तामात्रानुबन्धिनी क्षणिकता । कथं पुनस्तन्मात्रानुबन्धसिद्धिः, विपक्षे साधकप्रमाणप्रवृत्तेः । अक्षणिके हि व्यापकानुपलब्धिः सत्तां बाधते। अर्थक्रियाकारिता हि सत्ता, नापरा काचिदस्ति। सा च क्रमयौगपद्याभ्यां व्याप्ता तृतीयराशिविरहात्। अनयोः परस्परप्रतिपक्षतया एकप्रतिषेधस्य इतरविधिनान्तरीयकत्वात् । न च क्रमयौगपद्ये अक्षणिकेषु संभवतः । ते तु निवर्तमाने सत्तामपि निवर्तयतः, वृक्षत्वं शिंशपात्वमिव । कथं च क्षणिकेषु क्रमयौगपद्याभ्यामर्थक्रियाविरहः ? अत्राहुः। अक्षणिको हि भवन् किमर्थे क्रियाजननस्वभावो भवेत्। अतः स्वभावो वा, नापरः प्रकारोऽस्ति। तत्राग्रिमपक्षपरिग्रहे सर्वासामर्थक्रियाणाम् एकस्मिन्नेव क्षणे कृतकत्वात् कृतस्य च कारणानुपपत्तेः, अनन्तरक्षणे अर्थक्रियासामर्थ्यशून्यत्वात् असल्लक्षणत्वापत्तेः अक्षणिकत्वहानिः। द्वितीयविकल्पावलम्बने तु काऽपि ततोऽर्थक्रिया नोदीयते इत्यसल्लक्षणत्वापत्तिरेव। स्यान्मतम्। समर्थोऽपि स्वभावतो भावः सहकारिसमवधानवशेन कदाचित् करोति तदभावाच्च तदा नेति। तदपि विमर्दं न क्षमते। स हि सहकारी किञ्चिदारभते वा न वा। आरभ्यमाणोऽपि अर्थक्रियासाधनत्वाभिमतभावस्वभावभूतः, उत अस्वभावभूतो वेति विकल्पनीयम्। अनारम्भपक्षे अपेक्षार्थोऽभिधातव्यः। न खलु अनुपकारकं प्रति अपेक्षा अर्थवती। स्वभावभूतारम्भे च भावस्य अभ्युत्पत्तिरापतति । न ह्युत्पद्यमानः अनुत्पद्यमानस्वभावो भवति, विरुद्धधर्माध्यासस्य भेदापादकत्वात् । भावोदयाङ्गीकारपक्षे लाक्षणिकत्वपरिक्षयः । अतः स्वभावभूतारम्भाभ्युपगमे भावस्य प्राग्वा साधकत्वम् । नाक्षणिकात् क्रमेणार्थक्रियासिद्धिः। तत एवाक्षाग .. रर्थक्रियोदयः। तद्भावे भावात् तदभावे चाभावात् । न च तद्व्यतिरेकाव्यतिरेकाभ्यामन्यः प्रकारोऽस्ति, परस्परविरुद्धयोः एकत्र समवायप्रतीतिविरहात् । ननु क्षणिकोऽपि भावः किमर्थक्रियाजननस्वभावः ? किं वा नेति प्राचीं विकल्पानां... नास्तीति वर्तते । तत्र समर्थस्वभावस्य सहकारिव्यपेक्षा न स्यात् । नहि असमर्थादर्थात् अर्थक्रिया उदीयते। **श्रूयतां परमरहस्यं सौगतानाम्** । अन्त्यक्षणप्राप्तः समर्थ एव भावः कार्यमपि एकैकमेवारभते । किमिति तर्हि सहकारिभिर्विनाऽपि न करोति। निरपेक्षस्य जनकत्वे सहकारिताऽपि तस्य कीदृशीति वक्तव्यम् । अत्र वदामः । यत्तावदिदमुक्तं विनाऽपि सहकारिभिः किमिति न करोति, तत् तावत् सुगतमतं कौशलविरहविजृम्भितम्। क्षणिको हि भावो न सहकारिभिर्विनाऽस्ति। कथमेतत् करिष्यति । यस्तु अस्ति, नासौ स इति। इति न किञ्चित् क्षीणम् । सहकारिभिर्विना किमिति न भवन्त्येवेति पर्यनुयोगे हेतुस्वभावैरुत्तरं वाच्यम्। तेन तथा भवन्ति, भावयन्ति चेति । एककार्यकारिता च अन्त्यक्षणवर्तिनां सहकारिता । ननु तेऽपि अन्यनिरपेक्षा एव जनकाः किमिति न कार्यान्तरमारभन्ते। अत्रापि वयमनीशाः, भावास्तु यदारभन्ते तदारभन्तामिति अनुमन्तुमेव वयं प्रभवामः। नेनामी जनका अपि तदेव जनयन्तीति पश्यतामस्माकं नान्येवाभ्युपगमाः। नन्वेकेन कृते अपरः किं करोतीति । भवेदेतदेवं पर्यायेण क्रियायाम्। सहक्रियायां तु 'कृते०' इत्येव नास्ति । नन्वेवमेकस्मादपि तत्सिद्धेः किमपरे कुर्वन्ति । नैतदेवम्। न ते प्रेक्षापूर्वकारिणः, येनैवं पर्यालोचयेयुः । अन्योऽपि ... मिद ... मस्माभिर्विना समर्था वयम्। इह तु न भवाम इति। ते तु हेत्वधीनसंनिधाना न न भवितुं न क्षमन्ते इति काऽनुपपत्तिः। ननु कथमेकं कार्यमनेकस्मादुत्पद्यते। कारणभेद एव हि कार्यस्य

भेदे हेतुः । अन्यथा आकस्मिकत्वापत्तेः। उच्यते । न सहकारिकारणभेदाद् भेदः कार्यस्य । किन्तु सामग्रीभेदादिति हेतुविन्दौ कृतपरिश्रमाणामनायाससमधिगम्यम् । तस्मान्न क्षणिकत्वेऽपि अक्षणिकत्वदक्षमदक्षपर्यनुयोगावकाशः । बीजादीनां हि क्षणपरंपरापरिणामे न तादृशाः क्षणाः संजायन्ते । यतः अनपेक्षितहेत्वन्तरप्रवृत्तेरनन्तरमङ्कुरं प्रादुर्भवति । नन्वेवमपि परापरेषु बीजादिक्षणेषु तदेवेदमिति प्रत्यभिज्ञा नोपपद्यते । अपिच सप्रत्यभिज्ञप्रत्यक्षविरोधे कथमनुमानमात्मानं लभते इत्यपि वाच्यम् । लाभे वा वह्नावपि शैत्यानुमानप्रसङ्गः । **समाधिरभिधीयते** । ये ते क्षणास्तेषामात्यन्तिकभेदसदृशतया दृष्टमपि प्रत्याकलयितुमनीशस्य भेदाग्रहणनिबन्धनः अभेदग्रहणव्यवहारः प्रवर्तते, शुक्तिकायामिव रजतव्यवहारः । न चानुमानोदयविरोधः अर्थक्रियाऽन्यथाऽनुपपत्तेः । प्रत्यभिज्ञा तु भेदाग्रहणेनापि उपपद्यते इति निरवद्यम् । अत एव च वृद्धा वदन्ति 'भवति वै प्रत्यक्षादप्यनुमानं बलीयः' इति । युक्तं चेदमेव पश्यामः । यत्तदेवेदमिति विज्ञानद्वयमिति एकविज्ञानोदये ख्यातम् । अपिच कृतकानां भावानामवश्यम्भावि विना कारणान्तराभावात् इन्द्रियं संनिहिते व्याप्रियते । न पुनः पूर्वसंबन्धितारूपतामुपस्पृशति । पूर्वानुभवभाविता च भावना नेदन्तामपरकालयोगात्मिकामिति । तदिदं ज्वालाप्रत्यभिज्ञानेन व्याख्यातम् । **अपिच** कृतानां भावानाम् अवश्यम्भाविविनाशः प्रतीयते । अतोऽपि शक्या क्षणभङ्गिता अनुमातुम् । तथाहि, यद्येषा ध्रुवभाविनी, तत्र तेषां हेत्वन्तरापेक्षा नास्ति । ध्रुवभावी च कृतकानां विनाशः, इति विरुद्धव्याप्तोपलब्धिलिङ्गमनुमानं विनाशस्य हेत्वन्तरापेक्षितां प्रतिक्षिपति । ध्रुवभाविता हि निषिद्ध्यमानहेत्वन्तरापेक्षित्वविरुद्धनिरपेक्षत्वव्याप्तोपलब्ध्या हेत्वन्तरानपेक्षितामपस्थापयति । सा च स्वविरुद्धं हेत्वन्तरापेक्षित्वं निराकरोति । ये हि हेत्वन्तरापेक्षास्ते ध्रुवभाविनो न भवन्ति । यथा वाससि रागादयः । अतो हेत्वन्तरापेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्तध्रुवभावित्वस्य या उपलब्धिः, सैवाध्रुवभावित्वस्यानुपलब्धिः । विनाशस्य हेत्वन्तरापेक्षा नास्ति । तथा यदि भावा अपि स्वहेतुभ्यो हेत्वन्तरं विनाशं प्रत्यपेक्षेरन्, ततस्तस्य हेत्वन्तरस्य संनिधाननियमे प्रमाणभावात् कश्चित् कुतोऽपि न विनश्येत् । स्वहेतोस्तु विनश्वरस्योत्पन्नस्य उदयानन्तरमप ... इति क्षणभङ्गुरत्वसिद्धिः । **अपिचेदं** चिन्तनीयम् । किं कृतका भावा स्वहेतुभ्यः समुपजायमाना विनश्वरा एव जायन्ते अविनश्वरा वा । विनश्वरा उदयानन्तरमेव लीयन्ते इति क्षणभङ्गिनः । अविनश्वरस्वभावास्तु न कदाचिद्विनश्येयुः । न च हेत्वन्तरात्तेषां विनाशादयः, विकल्पासहत्वात् । स हि जायमाने विनाशो भावात् अव्यतिरेकी व्यतिरेकी वा ? न तावदव्यतिरेकी, हेतुभेदात् । व्यतिरेकिणि तु जाते भावस्य प्राग्वत् उपलब्ध्यादिप्रसङ्गः । तेन तिरोधीयते इति कल्पनायामपि तिरोधानं प्रत्येष विकल्प इत्यलमतिप्रसङ्गेन ।

अत्र केचिदेवं समादधति । तत्तेदन्ते परस्परसंवलिते समाकलयदेकं प्रत्यभिज्ञासमाख्यातं प्रत्यक्षविज्ञानं क्षणभङ्गानुमानं निरुणद्धीति । न चेदमिह समीचीनम् । द्वे एते विज्ञाने ग्रहणस्मरणरूपे यथायथं तत्तामात्रे इदन्तामात्रे च व्याप्रियमाणे नालमुभयानुभवसंभवसमयवर्तिताम् अर्थस्य अवभासयितुमिति, प्रतीतिविरोधात् । यथैव खलु अभिन्नदेशकालं वस्तु एकतया चकास्ति, तथा अत्रापि भिन्नदेशकालमपि एकतयैव परिस्फुरतीति । तथाविधसंवेदनोदयश्च नैकविज्ञानमन्तरेण इत्येकमेवेदं विज्ञानमुररीकरणीयम् । कार्यसद्भावोपपादनाय अप्रतीतमपि कारणं परिकल्पनीयम् । न पुनः कारणमुखनिरीक्षणेन स्पष्टदृष्टकार्यविपर्ययः पर्यालोचनीयः । तेन यद्यपि केवलादिन्द्रियात् केवलात् पूर्वानुभवसमासादितजन्मनो भावनाऽभिधानात् संस्कारात् नेदमेवंविधं विज्ञानमुदेतुमर्हति, तथापि तयोरन्योन्यसमवधानसमासादितदशाऽन्तरयोः इदं कार्यमित्याचार्याः, न चेदमप्युचितम् । प्रत्यक्षमेवेदं न भवतीति । सत्यपि संस्कारोपयोगे इन्द्रियव्यापाराधीनजन्मतया अस्य प्रथमसमागमसमयभाविनः सकलवादिनामपहस्तितविवादानां प्रत्यक्षसंमतात् अविशेषात् । न चेदं प्रमाणाभासमिति किञ्चन प्रमाणमस्ति । बाधककारणदोषसंवेदनान्तरविरहाद् नेदमेवानुमानं बाधकमिति निमित्तचित्तमनुरज्यते, परस्पराश्रयदोषसमासक्तेः । यावत्



खल्वेतत् विज्ञानमबाधितम्, तावदनुमानमेव नोदेतुं प्रभवति, संजातवति चानुमाने बाधितमिदं भवति इति विशदतरमितरेतरकारणत्वम् । अबाधितविषयता चापि कारणमनुमानोदये । अन्यथा हुतवहे शीतता किमिति नानुमीयते । नन्वेवं तर्हि कथं ज्वालादीनामेकत्वात् अवधारितानामनुमानतो भेदसिद्धिः । **अत्र सिद्धान्तसारमुदीरयन्ति** । सामान्यविशेषात्मकानि सर्ववस्तूनि । तत्र ज्वालाऽऽदिषु प्रत्यक्षम्, सामान्यविषयमनुमानं तु विशेषविषयमिति भिन्नगोचरप्रचारिणोः प्रत्यक्षानुमानयोर्विरोधाभावात् न प्रत्यक्षेणानुमानोदयविरोधः । कथं पुनरक्षणिकस्य अर्थक्रियाकारिता क्रमेणेति वद । स खलु सहकारिसमवधानोपहितविशेषो भावः तांतामर्थक्रियां क्रमेणैव संपादयति । ननु विकल्पितं सहकारिभिः किं व्यतिरिक्तोऽव्यतिरिक्तो विशेष आधीयते इति । दूषणानि चेह विकल्पयुगले पूर्वमावेदितानि । अत्रापि त एव प्रतिनियामकम ... यद्विना अयमेकान्तः अस्माकं भिन्नान्येव सर्ववस्तूनि, न भिन्नानि चेति, किन्तु सर्वभावेषु भेदाभेदौ संगिरामहे । तत्र भेदमात्रविकल्पसंभावीनि दूषणानि अभेदाश्रयेण परिहृतानि । अभेदमात्राश्रितानि च भेदावलम्बनेनेति । नन्वेतेन भेदाभेदौ कथमेकत्र विरोधिनौ निविशेते । तत्राहुः । नेमौ विरोधिनौ, सहदर्शनात् । सहानवस्थानलक्षणो हि विरोधः । अनवस्थानं च दर्शननिबन्धनम्, नास्ति विरोधः । तदिदमविचारितरमणीयमिति गुरूणां नानुमतम् । स हि न ददर्श भेदाभेदावेव तावदेकत्र न संभवतः । विरोधात् । नहि तयोः सहदर्शनमुपपद्यते । एकाकारप्रतीतिरेव खलु अभेददर्शनम् । विलक्षणाकारप्रतीतिश्च भेददर्शनम् । तत्र यद्येक आकारः प्रतीतः, तदा विलक्षणाकारप्रतीतिर्नास्ति । विलक्षणाकारे च प्रतीते नैकाकारप्रतीतिरेव नास्ति (अस्ति) तेन भिन्नाभिन्नविशेषाश्रयणेन अर्थक्रियासमर्थनमघटमानम् । न च प्रत्यभिज्ञानानुमानविरोधः । प्रत्यभिज्ञाया एव परीक्षणीयत्वात् । दृष्टा शुक्तिकायां तदेवेदं रजतमिति मतिः । सा च सादृश्यवशेनैव भेदाग्रहणनिबन्धनैवेति युक्ता अत्रापि परीक्षा । तत्र परीक्ष्यमाणस्य अर्थक्रियाऽनुपपत्त्या क्षणिकत्वे निर्णीते सदृशपरंपराऽऽपत्तिविप्रलम्भः अयमिति निश्चीयते । भवति च विमृशतो ... हुतवहादिष्वनुमानवशेन जाताया अपि प्रतीतेर्विपर्ययः । हुतवहादिषु चौष्ण्यप्रतीतिरुपजाता परीक्ष्यमाणाऽपि नान्यथोपपद्यते ... इति न विपर्ययानुमानोदयः । तस्मादलमनेन नानाटकपक्षपतितेन ... दर्शनेनातिनिर्बन्धेन **गम्भीरतरगुरुदर्शनसागरपारदृश्वानस्तु संप्रति समाधिमभिदधति** । स्तम्भादिषु प्रथममनुभूतेषु पुनरन्तरा तिरोधानादिवशेन विच्छिन्नोपलम्भेषु पुनरनुभवतः स एवायमिति तावज्जायते मतिः । तत्र यदि अर्थक्रिया स्थिरादपि कथञ्चिदुपपद्यते, ततो भेदाग्रहणनिबन्धनोऽयमभेदभ्रमः इति किमिति कल्प्यते । उपपद्यते च स्थिरादपि सहकारिवशोपजातागन्तुकक्रियाऽऽदिरूपविशेषभाजः क्रमेणार्थक्रिया । स च विशेषो व्यतिरिक्त एव भावात् अर्थक्रियाकारिणम् (णः) । न च स एव अर्थक्रियाकारी, भावस्तूदास्ते इति चतुरस्रम् । तथा विधिविशेषालीढतैव तस्य साधनता, यदन्तरमर्थक्रियोदयः, तद्विशेषयोगितयैव भावेषु साधनत्वव्यवहारो लौकिकानाम् । कथं पुनरसौ विशेषः तस्येति व्यपदिश्यते, तदाश्रयतयैवानुमानात् । कथं पुनस्तदाश्रयतैव, स्वहेतुवशेनेति मत्वा निवर्ततां भवान् । अलमस्माभिर्दूरमनुयातैः । अथ कस्मात् भावस्यैव भेदो नानुमीयते ? प्रत्यभिज्ञानानुगुण्यादिति वदामः । दृष्टानुसारि चानुमानमुचितम्, दृष्टोपपत्तिमुखत्वात् । यथा च अर्थक्रियाकारिता, तथेदमपि दृश्यते स्थावरो भाव इति तदनुगुणमनुमानमुचितम् । तेन स्थावरेऽपि अर्थक्रियाव्यापकक्रमयौगपद्यानिवृत्तेरसिद्धो व्यापकानुपलम्भा···तदसिद्धेन विपर्यये बाधकाभावात् असिद्धतन्मात्रानुबन्धिनीं क्षणिकतां न सत्ता साधयितुमलम्, अनैकान्तिकत्वादिति । न च अर्थक्रियाकारितैव सत्ता, किन्तु प्रमाणसंबन्धयोग्यता । स्वरूपसत्ता च प्रमाणासंबन्धयोग्यता । अतोऽर्थक्रियामकुर्वन्नपि सन्निति न किञ्चिदवद्यम् । यत्त्विदमुदितम् । अनपेक्षाभावा विनाशप्रतीतिः, तदपि विमृश्यमानं जातुषमिवाभरणं विशीर्यते । कं खलु भवन्तो विनाशमभिमन्यन्ते । प्रध्वंसाभावो विनाश इति चेत्, कः पुनः प्रध्वंसाभावः । दधि

क्षीरं नास्तीत्येवमादिका भावविषया संविदिति यद्युच्येत, तदा अमृतकलायामुदिता नीतिरुद्धरणीया। नहि नास्तीति बुद्धिरस्ति। किन्तु दधिस्वरूपमात्रानुभवे एव स्वयंप्रकाशे शब्दप्रयोगमात्रमे...तस्यैव...पयसो नास्ति। तादृशश्चे...तस्मिन् दधिस्वरूपमात्रोपलब्धिः। न च तां प्रति पयस एव निरपेक्षस्य हेतुता। अनुपनिपतिते हेत्वन्तरे पयसः एवोपलब्धेः। न चेदं पयोऽन्तरमुपलभ्यते इति शक्यं वक्तुम्। प्रत्यभिज्ञानस्य अभेदसाधकत्वात्। ननु च हेत्वन्तरापेक्षित्वे ध्रुवभाविता नोत्पद्यते। ध्रुवभावितैव कुतोऽवगम्यते। दर्शनादिति चेत्, हेत्वन्तरेणैवावश्यं भवितव्यमिति। न च बालाः वयम्, येनैवंविधवादात् भीषयामहे। यत् पुनरिदं स्वहेतुभ्यो भावानामपि नश्वराणामुत्पत्तौ हेत्वन्तरायत्ते विनाशे व्यतिरेकिणि जातेऽपि पूर्ववत् भावस्य उपलब्ध्यादिप्रसङ्ग इति। अत्रोच्यते। उक्तमस्माभिः, यथा तन्मात्रोपलब्धितः एव विनाश इति। तेन तस्या हेतुसद्भावात् तथैव भवितव्यम्। अनुपलब्धिरपि तस्य सैवेत्युपलब्धिरेव नोपलब्धिस्तन्निबन्धनत्वाभावव्यवहार इति सर्वमनाकुलम्। सुगताशीविषविषमक्षणभङ्गविषानलावलीढायाः। मीमांसाया विहिता तत्त्वमयी जीवरक्षेयम् ॥ १ ॥ **मीमांसाजीवरक्षा** ( शालिकनाथप्रणीता ) पृ. १-१७.

* **क्षणलवत्रुटयादयः**। अक्षिपक्ष्मसंयोगविभागफलस्य अक्षिपक्ष्मगतिक्षणप्रचयात्मकनिमेषस्य चतुर्थो भागः क्षणः, क्षणद्वयं लवः, क्षणत्रयं त्रुटिः, क्षणचतुष्टयं निमेषः, पञ्चदशनिमेषाः काष्ठा, त्रिंशत्काष्ठा च कला। **सु.** पृ. ९७२.

**क्षते प्रहारा निपतन्त्यभीक्ष्णमिति न्यायः**। अयमापदि आपत्सत्त्वे प्रवर्तते इति। **साहस्री.** ९९३.

**क्षते मक्षिकापातः इति न्यायः**। अयं पिशुनकृते कर्मच्छिद्रान्वेषणेऽपि प्रवर्तते। स्पष्टः। **साहस्री.** ७५३.

* **क्षत्रियस्य** उपनयनम् आधानम् च ग्रीष्मे। **वि.** २।३।३. * क्षत्रियस्य पैष्टीपानं निषिद्धमेव मध्वासवपानं तु अनुज्ञातम्। **सु.** पृ. १९५, * क्षत्रियस्य प्रजापालनं परमो धर्मः। पृ. ९००, * क्षत्रियस्य प्रायेण वीर्यातिशयात् प्रजापालनविधानाच्च अपालयत्यपि क्षत्रियजातीयत्वेन योग्यत्वात् राजशब्दप्रयोगोपपत्तिः। पृ. ९०१. * 'अभिषेकोऽपि धर्मज्ञैः क्षत्रियस्यैव पठ्यते। सहासौ राजशब्देन तेन नाक्षत्रिये मतः ॥' **वा.** २।३।२।३ पृ. ५८२. * **क्षत्रिये** राज्यरहितेऽपि राजशब्दप्रयोगः। **सु.** पृ. ९००. * **क्षत्रियवैश्ययोः** अपि ऋणत्रयापाकरणं नित्यम्। **भा.** ६।२।११।३२ वर्णकं २. * क्षत्रियवैश्ययोः इव ब्राह्मणस्यापि इष्टिपूर्वकत्वसोमपूर्वकत्वयोर्विकल्पः। अग्नीषोमीयपुरोडाशस्य तु सोमादुत्कर्षो ब्राह्मणस्य। **वि.** ५।४।४, * क्षत्रियवैश्ययोः नार्त्विज्यम्, विप्रस्यैव तदधिकारात्। 'प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा' इति याज्ञवल्क्यः। १२।४।१६.

* **क्षयाहे** पार्वणैकोद्दिष्टव्यवस्थाविधिः। अयं व्यवस्थाविधिः पुरुषार्थः। **बाल.** पृ. १८.

**क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात्। ६।४।५।१७ ॥**

भेदनहोमात् वैलक्षण्यस्य सूचनार्थः तुशब्दः। होमः एकदेशस्य कृत्स्नस्य वा भेदने भवतु, क्षामे तु, क्षैधातोः क्तः, 'क्षायो मः' ( पा० ८।२।५३ )। हविर्दाहे सति यत् प्रायश्चित्तम्, तत् सर्वदाहे सर्वस्य हविषो दाहे एव स्यात्, नैकदेशस्य दाहे। एकदेशस्य एकदेशदाहस्य अवर्जनीयत्वात्। एकदेशस्य दाहः वर्जयितुं न शक्यते। अग्निसंयोगे सति नियतं सूक्ष्मा अवयवाः क्षायन्ते एव। तस्मात् सर्वदाहे दाहप्रायश्चित्तम्।

**दर्शनाद्वैकदेशे स्यात्। १८ ॥**

सर्वहविर्दाहे दाहप्रायश्चित्तम् इति सिद्धान्तमुक्तं पूर्वपक्षी वाशब्देन व्यावर्तयन्नाह। एकदेशे दग्धे दाहप्रायश्चित्तं स्यात्, दर्शनात्। 'यदा तद्धविः संतिष्ठेत, अथ तदेव हविर्निर्वपेत्' इति तेनैव हविषा संस्थानं दर्शयति। तत् सर्वक्षामे नावकल्पते। तस्मात् एकदेशक्षामे एव प्रायश्चित्तम्।

**अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः। १९ ॥**

एकदेशदाहे एव दाहप्रायश्चित्तम् इति पूर्वपक्षं सूत्रात् प्राप्तं वाशब्देन अपाकुर्वन्नाह सिद्धान्ती। 'यदा तद्धविः संतिष्ठेत' इति एतत् उक्तं समापनं न तेनैव



हविषा। किन्तु अन्येन हविषा आज्यादिनाऽपि संभवति। तस्मात् नैकदेशदाहे प्रायश्चित्तं किन्तु सर्वदाहे। 'यस्य पुरोडाशौ क्षायतः' इति शास्त्रात् हि यस्मात् सर्वदाहेऽपि कारणस्य प्रायश्चित्तकारणस्य दाहस्य प्राप्तिरस्त्येव। एकदेशदाहस्तु अवर्जनीयः। तस्मात् सर्वदाहे प्रायश्चित्तम्।

कुतूहले तु 'अन्येन वैतत् शास्त्राधिकरणप्राप्तिः' इति पाठः। 'अधिकरणेति कर्मणि ल्युट्। सर्वदाहे अन्येन हविषा एतद्धविः इत्येतच्छास्त्राधिकृतसंस्थाप्राप्तिः उपपद्यते' इति च व्याख्यातम्।

**तद्धविःशब्दान्नेति चेत्। २० ॥**

'यस्य पुरोडाशौ क्षायतः तं यज्ञं वरुणो गृह्णाति, यदा तद्धविः संतिष्ठेत अथ तदेव हविर्निर्वपेत्' इत्युक्तं समापनम् अन्येन हविषा स्यात् इति सिद्धान्तिना उक्ते पूर्वपक्षी शङ्कते। समापनं अन्येन हविषा कर्तुं न शक्यते। तद्धविःशब्दात् 'यदा तद्धविः संतिष्ठेत' इत्यत्र तत् हविः इति शब्दः प्रयुक्तः। इति तेनैव हविषा समापनं प्रतीयते नान्येन हविषा। सर्वदाहे तु तेनैव हविषा समापनमशक्यम्। एकदेशदाहे तु तेनैव समापनं सुकरम्। तस्मात् एकदेशदाहे एव दाहप्रायश्चित्तमिति।

**स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात्। २१॥**

यत् पूर्वपक्षिणा पूर्वसूत्रेणोक्तं तन्निरस्यति। 'यदा तद्धविः संतिष्ठेत' इत्यत्र पठितो हविःशब्दः न हविर्द्रव्यपरः किन्तु इज्यागामी यागपरः स्यात्। 'यदा तद्धविः संतिष्ठेत' यदा स यागः संतिष्ठेत इत्यर्थः। कर्मैव हि संतिष्ठते न हविः। अतः समापननिमित्तं यद्धविः इत्यनुवादः। तेन अन्यहविष्केऽपि कर्मणि समाप्ते प्रायश्चित्तमिति गम्यते। कथं पुनः हविःशब्दः कर्मणि वर्तेत तत्राह, तल्लिङ्गसंयोगात्। संतिष्ठते इति यागलिङ्गस्य संस्थानस्य समापनस्य संयोगात् संबन्धात्। तस्मात् पुनरिष्टिनिमित्तं सर्वदाह एव न एकदेशदाहः। तस्मात् सर्वदाहे प्रायश्चित्तं स्यात् इति सिद्धान्तः। स्यादन्याय्यत्वादिज्यागामी इति पाठे तु हविःशब्दस्य हविर्द्रव्यपरत्वे अन्याय्यत्वात् न्यायशून्यत्वात्। हविःशब्द इज्यागामी तल्लिङ्गसंयोगात् इति व्याख्येयम्। **के.**

* **क्षामेष्टिः** नाम न का चित् स्वतन्त्रा, किन्तु हविषः क्षामत्वे दग्धत्वे सति पूर्वैवेष्टिः पुनः कर्तव्यतया प्रायश्चित्तरूपेणोक्ता सैव क्षामनिमित्ता इष्टिः क्षामेष्टिः। पूर्णमासेष्टयनन्तरं क्षामत्वदोषनिरासार्थे पुनः पूर्णमासेष्टिरेव विहिता सैव क्षामेष्टिः। **के.** ६।४।५.

**क्षामेष्टिन्यायः**। सर्वपुरोडाशदाहे प्रायश्चित्तेष्टिः कर्तव्या नैकदेशदाहे ॥

**क्षामे तु सर्वदाहे स्यादेकदेशस्यावर्जनीयत्वात्। ६।४।५।१७ ॥**

**भाष्यम्**— दर्शपूर्णमासयोः श्रूयते 'अथ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति। यदा तद्धविः संतिष्ठेत, अथ तदेव हविर्निर्वपेत्। यज्ञो हि यज्ञस्य प्रायश्चित्तिः' इति। तत्र संदेहः किं सर्वक्षामे प्रायश्चित्तम् उतैकदेशक्षामे इति। किं प्राप्तम्? प्राप्तनिमित्तत्वात् कृत्स्ने वा एकदेशे वा। एवं प्राप्ते, ब्रूमः। क्षामे तु सर्वदाहे स्यादिति। तुशब्दः पक्षं व्यावर्तयति। क्षामे सर्वदाहे प्रायश्चित्तं स्यात्। कुतः? एकदेशस्य अवर्जनीयत्वात्। न शक्यते एकदेशक्षामो वर्जयितुम्। नियतमग्निसंयोगे दाह्यस्य सूक्ष्मा अवयवाः क्षीयन्ते। तथेषु च कपालेषु अधःपाकार्थे पुरोडाशोऽधिश्रीयते, उपरि चाङ्गारा अभ्युह्यन्ते। तदवर्जनीयम्। निमित्तत्वेनापि श्रूयमाणं नित्यमेव स्यात्। तत्र यस्येति निमित्तश्रवणमविवक्षितं स्यात्। तस्मात् सर्वक्षामे प्रायश्चित्तमिति।

**दर्शनाद्वैकदेशे स्यात्। १८ ॥**

**भाष्यम्**— न चैतदस्ति, सर्वदाहे प्रायश्चित्तमिति। एकदेशे क्षायति भवितुमर्हति। निमित्तं हि उपसंप्राप्तं क्षाणं नाम। एकदेशक्षाणमपि क्षाणमेव। यदि तत्र न क्रियते, श्रुतं न क्रियेत। न चैतद्युक्तम्। अपि च दर्शयति, 'यदा तद्धविः संतिष्ठते, अथ तदेव हविर्निर्वपेत्' इति, तेनैव हविषा संस्थानं दर्शयति। तत् सर्वक्षाणे नावकल्पते। तस्मादेकदेशे एव क्षायति प्रायश्चित्तमिति।

**अन्येन वैतच्छास्त्राद्धि कारणप्राप्तिः। १९ ॥**

**भाष्यम्**—वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, यदुक्तम् एकदेशे क्षायति प्रायश्चित्तमिति। किं तर्हि।

कृत्स्नक्षामे एव प्रायश्चित्तम् । उपसंप्राप्तं हि निमित्तं यच्छास्त्रोक्तम् , ‘ पुरोडाशौ क्षायतः ’ इति । कृत्स्नस्य क्षतिर्नावयवस्य । न चैकदेशक्षामे , तस्यावर्जनीयत्वात् । अथ यदुक्तम्, क्षामेण हविषा समाप्तिर्दृश्यते, यदा तद्धविः संतिष्ठेतेति । उच्यते । संस्थाने निमित्ते प्रायश्चित्तम् । यदाऽपि अन्येनापि हविषा तत् संस्थाप्यते , तदाऽपि प्रायश्चित्तमिति न दोषः ।

**तद्धविःशब्दान्नेति चेत् । २० ॥**

**भाष्यम्**— एवं चेदुच्यते , अन्येन हविषा यदा संस्थाप्यते इति । नैवम् । तद्धविःशब्दात् । तद्धविःशब्दोऽत्र भवति ‘ यदा तद्धविः संतिष्ठेत ’ इति । अत्रान्येन हविषा संस्थाप्यमाने तद्धविःशब्दो नावकल्प्येतेति ।

**स्यादिज्यागामी हविःशब्दस्तल्लिङ्गसंयोगात् । २१॥**

**भाष्यम्**— स्यादिज्यागामी हविःशब्दः । तद्धविः संतिष्ठेत तद्धविष्कं कर्म संतिष्ठेतेति । ननु मुख्याभावे गौणो गृह्यते , नान्यथेति । उच्यते । मुख्याभावः एवायम् । कथम् ? यदा संतिष्ठेत तत्कर्म , तेन हविषेति वाक्यं भिद्येत । अवाचकं च स्यात् । कर्मैव हि संतिष्ठते, न हविः । तेन संस्थानं निमित्तम् । तद्धविरित्यनुवादः । अनुवादश्चेत् अन्यहविष्केऽपि कर्मणि संस्थिते प्रायश्चित्तमिति गम्यते । कथं पुनः हविःशब्दः कर्मणि वर्तते इति ? तल्लिङ्गसंयोगात् । हविःसंबद्धं कर्म हविःशब्देन हविःसंबन्धादवगम्यते । यथा प्रसह्यकारितया देवदत्तसंबद्धया लक्ष्यते सिंहः । एवं हविषाऽपि कर्म लक्ष्यते । तस्मात् कृत्स्नक्षामे प्रायश्चित्तमिति ।

**सोम**—यदा अग्निः पक्ता कपालानां च साम्यम् , उदकसेचनादिकं च अपेक्षितपरिमाणम् । तदा अल्पांशदाहादेव अदनीयत्वफलकपाकोत्पत्तिः । यदा तु पक्त्रादिकमनेवंविधम्, तदा क चित् बहिः बह्वंशदाहात् अन्तरनदनीयत्वम्, क चिच्च एकस्यार्धस्य अत्यन्तदाहात् अर्धान्तरस्य अदनीयत्वम्, इति सर्वत्र एकदेशदाहस्य अदनीयत्वफलकपाकनान्तरीयकतया तद्विलक्षणस्य एकदेशदाहस्य वक्तुमशक्यात् न निमित्तत्वम् । एवं च यत्र मध्यपूर्वार्धमात्रम् अतिदग्धम् इतरत्तु अदनीयपक्वम् , तत्रापि मध्यपूर्वार्धयोः अवदानदेशमात्रतया स्वयं हविष्ट्वाभावात् पुरोडाशस्यैव हविष्ट्वात् , तस्य च सद्भावात् यथावत्पक्कांशे द्विरवदाय होतव्यम् । न च सर्वक्षाणे तस्य हविष एवाभावात् ‘ यदा तद्धविः संतिष्ठते’ इत्येतत् कथमुपपद्यते इति वाच्यम् । पुरोडाशो हविर्यस्य इति बहुव्रीहिणा तद्धविःशब्दस्य यागपरत्वात् यागस्य संस्थासंबन्धात् । तथा च सर्वक्षाणेऽपि ‘ यस्य सर्वाणि हवींषि ’ इति वचनात् आज्येन तद्धविरुपलक्षितयागस्य समाप्तिः संभवति , इति न कश्चिद्दोषः ।

**वि**— ‘क्षामे यागो द्वयोः सर्वदाहे वा , पूर्ववद् द्वयोः । , अंशदाहस्य नित्यत्वात् सर्वदाहे पुनर्यजिः ॥ ’

**भाट्ट**— ‘ यस्य पुरोडाशौ क्षायतस्तं यज्ञं वरुणो गृह्णाति , यदा तद्धविः संतिष्ठते अथ तदेव हविर्निर्वपेत् ’ इति श्रुतप्रायश्चित्ते सर्वपुरोडाशदाहरूपं क्षाणमेव निमित्तम् । अग्निपाक्ये हविषि एकदेशक्षाणस्य अवर्जनीयत्वात् । न च अवर्जनीयक्षाणातिरिक्तैकदेशक्षाणस्यैव निमित्तत्वम् , तस्यैव परिच्छेत्तुमशक्यत्वात् । न च ‘ तद्धविः संतिष्ठते ’ इति श्रवणात् अवशिष्टेन हविषा यागप्रतीतेः एकदेशक्षाणस्यैव निमित्तत्वम्, प्रयोगसमाप्तावेव एवंजातीयशब्दप्रयोगस्य सर्वत्र दर्शनेन प्रयोगसमाप्तेरेव लक्षणया प्रकृतेऽपि प्रतिपादनीयत्वात् । अतः सर्वक्षाणे एवेदं पुनःप्रयोगरूपं प्रायश्चित्तम् । ‘ यद्दैवत्यं हविर्व्यापद्येत , अन्यत्तद्दैवत्यं निर्वपेत् ’ इत्यापस्तम्बवचनात् सर्वदाहे प्रायश्चित्तम् । ‘ यदि वाऽवदानेभ्यो न प्रभवेत्’ इत्यापस्तम्बेन सर्वदाहे अवदानापर्याप्तैकदेशदाहे वा पुनःप्रयोगविधानेन तद्भिन्नैकदेशदाहे प्रायश्चित्तानुपपत्तेः । अत एव एकदेशदाहस्य परिच्छेत्तुं शक्यत्वेऽपि एतन्मूलभूतश्रुत्यैव तत्र प्रायश्चित्तासंभवः । तादृशैकदेशक्षाणे तु प्राक्तननाशाधिकरणन्यायेन आज्येन दग्धावशिष्टेन वा प्रयोगसमाप्तिमात्रम् । एवं सर्वक्षाणेऽपि प्रयोगसमाप्तिः आज्येन पुरोडाशान्तरोत्पत्त्या वा द्रष्टव्या ।

**मण्डन**— ‘ क्षामेऽत्र कृत्स्ने यजतेर्विधानम् । ’

**शंकर**— ‘ सर्वक्षाणनिमित्तता । ’

**क्षामवत्यादीनां तन्त्रमध्ये प्राप्तौ उत्कर्षः ॥**

‘ नान्यद् हविरन्तरं निर्वपेत् पौर्णमासीमेव श्वोभूते यजेत ’ इत्यनेन अन्वाधानप्रधानयोर्मध्ये इष्ट्यन्तरनिषेधस्तु अविशेषात् सर्वेष्टीनाम् । इति प्राप्ते , नहि कर्मण्युपक्रान्ते तदसमाप्य कर्मान्तरमारब्धुं युक्तम् । अतो न प्राप्तमेव नित्यं काम्यं वा कर्म । नैमित्तिक्य एव तु इष्टयो निमित्तान्तरभावित्वात् प्रसक्तासु अयं निषेधः । तास्वपि याः क्रत्वङ्गभूतास्ता भवेयुरेव । पुरुषार्थभूतानां तु क्षामेष्ट्यादीनां पर्वान्तरे करणमिति । **संकर्ष.** ३।१।७.



**क्षीरं विहायारोचकग्रस्तः सौवीररुचिमनुभवति इति न्यायः ।** यथा सुखाभिव्यक्तिर्मुक्तिरिति पक्षं परित्यज्य दुःखनिवृत्तिरेव मुक्तिरिति स्वीकारः प्रकृतन्यायमनुभावयतीति सर्वदर्शनसंग्रहे अक्षपादीयेऽभिहितः । **साहस्री.** ६६५.

**क्षीरदग्धजिह्वान्यायः ।** यथा तप्तक्षीरेण दग्धजिह्वः कश्चित् तक्रं फूत्कृत्य पिबति , तथा दैवात् सुखकारिवस्तुनः प्राप्तौ अनिष्टविवक्षायां बोध्योऽयमिति । उक्तं च– ‘क्षीरेण दग्धजिह्वस्तक्रं फूत्कृत्य पामरः पिबति । दधिभिनमवलोक्य जनस्तद्वन्मां शङ्कते त्वया त्यक्तम् ॥ ’ इति भक्तवाक्यं भगवन्तं प्रति । **साहस्री.** ४७३.

**क्षीरभोजनन्यायः ।** यस्य क्षीरेण भोजनमुदितं भवति , यदि तस्मै सशर्करं दीयते , न कश्चिद्विरोधो भवति । सशार्करमपि तत् पय एवेति । **भा.** १२।१।१।४.

**क्षीराब्धिवासिक्षीरकामन्यायः ।** अयं यत्राऽऽप्तकामोऽपि स्वीयजनतुष्टिचिकीर्षया किञ्चिद्याचेत तद्विषये प्रचरति । यथा क्षीरार्णवनिवासी श्रीकृष्णो गोष्ठे गोपीः क्षीरं याचते स्मेति शंकरजये । **साहस्री.** ८८७.

**क्षीरोदकन्यायः ।** यथा क्षीरपूर्णे घटे कतिचित् अब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति । नहि क्षीरग्रहणात् अब्बिन्दुग्रहणं परिशिष्यते , एवं ब्रह्मणा तत्कार्यैश्च अव्यतिरिक्तदेशकालत्वात् गृहीतमेव ब्रह्मग्रहणेन नमो भवति । **शांभा.** पूर्वपक्षे २।३।६ ब्रसू., * न क्षीरोदकन्यायेन इदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम् । क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात् । सावधारणा चेयम् ‘ एकमेवाद्वितीयम् ’ इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत । सिद्धान्ते । २।३।६ ब्रसू.

**क्षीरोदकसंपृक्तन्यायः ।** अयं न्यायः ‘ सन्यङोः ’ ( पा० ६।१।९ ) इति सूत्रमहाभाष्ये अभिहितः । अस्यायमर्थः । संमिश्रत्वान्न ज्ञायते कियत् क्षीरम् , कियदुदकमिति । कस्मिन् वा अवकाशे क्षीरम्, कस्मिन् वा अवकाशे उदकमिति । प्रकृतिप्रत्ययसंश्लेषेऽस्य न्यायस्य प्रवृत्तिर्दर्शिता भाष्यकारेणेत्यलमतिपल्लवितेन । किञ्चायं न्यायः ‘ तस्यादित उदात्तमर्धह्रस्वम् ’ (पा० १।२।३२) इति सूत्रमहाभाष्येऽपि विस्तरेणोक्तः इति । **साहस्री.** ४८०.

* **क्षुतस्य** श्लेष्माख्यमलबिन्दूत्सर्जनात्मकत्वेन अशुचित्वापादकत्वात् क्रतुवैगुण्यापादकत्वं युक्तम् । **सु.** पृ. १३९४, * ‘ **क्षुते** आचामेत् ’ इत्यादि स्मृतिः प्रमाणम् । **वि.** १।३।४, * **क्षुतादिनिमित्तकं** विष्णुस्मरणं पदार्थमध्ये कर्तव्यं भवति । **सु.** पृ. ११९९.

**क्षुत् स्वादुतां जनयति इति न्यायः ।** तीव्रायां क्षुधि कदन्नमपि स्वादुतया भक्ष्यते इत्यर्थः । **साहस्री.** ४११.

* **क्षुधितोऽश्नीयात् ।** अत्र क्षुधितार्थमशनम् , न तु अशनार्थे क्षुधितः । **रत्न.** ६।१।१।१.

* **क्षुरग्रहणापत्तिर्नास्ति** अध्वर्योः ज्योतिष्टोमे केशश्मश्रुवपनात्मके यजमानसंस्कारे , नापितकार्यत्वात् । **वा.** ३।८।२।४.

* ‘ ऋग्वेदादिसमूहेषु ये **क्षेत्रज्ञाः** प्रतिष्ठिताः । ’ **वा.** ३।१।७।१३ पृ. ७०२.

* **क्षेत्रिणः** मातुरेव वा यदि पुत्रः स्यात् ततस्तयोः प्रसिद्धजातित्वात् नैव ( पुत्रजातेः ) दुर्ज्ञानता भवेत् । **वा.** १।२।१।१३.

* **क्षेमसुभिक्षोऽयमतोऽहमस्मिन्** देशे प्रतिवसामि ( इति वदन्ति ) तेन अतःशब्दो वृत्तस्यापदेशको हेत्वर्थ इति ज्ञायते । **भा.** १।१।१।१ पृ. ८.

* **क्षौमाधिकरणे** ( १०।१।५ ) आधाने न पुंद्वयविधानमित्युक्तम् । **वाक्यार्थ.** पृ. २०.

---

## ख.

* **खट्वादौ** अविद्यमानमेव स्त्रीत्वं टाबादिप्रत्ययदर्शनेन आरोप्यते । **सु.** पृ. ४१४.

* ' **खण्डपर्वणि** सोमश्चेत् प्रतिपन्मिश्रपर्वणि । सोमसुत्या प्रयोक्तव्येत्याह कौषीतकी श्रुतिः ॥ ' त्रिकाण्डमण्डनः । **संकर्ष.** ३।१।६.

* **खननं** ' द्वाभ्यां खनति ' इति वचनसामर्थ्यात् द्व्यभिधानसाध्यं भवति । **भा.** १२।४।२।४. * **खननं** वेदेः दर्शपूर्णमासयोः ' देवस्य त्वा सवितुः प्रसवे इति खनति ' राजसूये रत्निनां हविःषु मैत्राबार्हस्पत्ये तु न वेदिखननम् ' स्वयंकृता वेदिः ' इति तत्र विधानात् । **वि.** १०।१।१. * **खनने** उपरवस्य प्रत्येकं उपरवमन्त्रस्यावृत्तिर्ज्योतिष्टोमे । **भा.** ११।४।१९।५५–५७, * **खनने** द्वयोर्मन्त्रयोः समुच्चयः अग्निचयने ( उखाऽऽर्थ्यर्थमृत्खनने ' द्वाभ्यां खनति ' इति विधानात् )। १२।३।१४।३०.

* **खपुष्पम्** । ' नित्यं न भवनं यस्य, यस्य वा नित्यभूतता । न तस्य क्रियमाणत्वम् ( करोतिकर्मत्वं ) खपुष्पाकाशयोरिव ॥ ' य एव हि प्रवृत्तभवनः, संभावितभवनो वा अन्येन प्रयुज्यते, स एव क्रियमाणत्वेन अवधार्यते, नान्यः । तथा च न कश्चित् खपुष्पमाकाशं वा कुर्वन्नुपलभ्यते । **वा.** २।१।१।१ पृ. ३७७. * **खपुष्पम्** । समासं विना खपुष्पशब्दात् संसर्गाप्रतीतेः समासवाच्यत्वं खपुष्पसंसर्गस्य अभ्युपगन्तव्यम् । विग्रहवाक्यार्थश्च समासवाच्यः । प्रमाणान्तरेण च खस्य पुष्पस्य खसंसर्गाप्रतीतेः खस्य पुष्पमस्ति इति विग्रहायोगात् खस्य पुष्पं नास्ति इतिवाक्यार्थे समासप्रतीतेः खपुष्पाभाव एव खपुष्पशब्दस्य वाच्यत्वात् मुख्योऽर्थः । **सु.** पृ. ५०५. * **खपुष्पादीनां** ननु स्वार्थाविनाभूतगुणाभावात् गौणप्रयोगाभावप्रसङ्गः । न । ' अध्यस्यते खपुष्पत्वमसत् कथमवस्तुनि ।' यस्तावत् ' खपुष्पस्थानीय आत्मा ' ' खपुष्पं भवत्सिद्धान्तः ' इत्यादिः प्रयोगः, तत्र कतरत् खपुष्पम् अन्यत् त्वया सिंहत्ववदवधारितम्, यदध्यारोप्येत । तेन खपुष्पस्वरूपमेव तावत् अध्यारोपात्मकमभ्युपगन्तव्यम् । न चैतस्य लोके गौणत्वप्रतीतिर्मुख्या अर्थान्तराभावात् । प्रथमप्रतीतत्वाद्धि खपुष्पादिस्वरूपं न मुख्यत्वादपैति । ...खपुष्पादौ सद्रूपप्रत्ययानुत्पादात् । ... न चार्थान्तरसद्रूपग्रहणेन खपुष्पादेः संबन्धो गृह्यते । **वा.** १।४।१३।२३–१ पृ. ३५९.

**खपुष्पन्यायः** । पक्षमध्ये तिथिद्वयवृद्धिस्तु खपुष्पन्यायतुल्यैवेत्युक्तः पीयूषधारायाम् । **साहस्री.** ५६१.

* **खपुष्पविचारः** । ' खपुष्पं भवत्सिद्धान्तः ' इत्यादौ खपुष्पादीनाम् अननुभूतपूर्वत्वात् ईदृशमिति निरूपणाशक्तेः सिद्धान्तादौ आरोपासंभवेन गौणत्वानापत्तिः । अथ तत्र समुदायरूपेण खपुष्पादेरप्रसिद्धावपि खपुष्पशब्दस्य यौगिकत्वात् विशकलितप्रसिद्धिमादाय खाधिकरणतासंसर्गारोपेण आरोपितखादिकरणताकं लतादौ प्रसिद्धं पुष्पं खपुष्पसमासार्थमङ्गीकृत्य तदारोपेण सिद्धान्ते गौणता खपुष्पशब्दस्य इत्युच्यते, ततः खपुष्पशब्दस्य आरोपितसंसर्गरूपार्थवृत्तित्वात् तदाश्रयलतापुष्पे एव खपुष्पशब्दस्य गौणत्वापत्तिः । न चेष्टापत्तिः, तस्य गौणत्वेनाप्रतीयमानत्वात् । अत एव अर्थलक्षणमपि आरोपितार्थाश्रयत्वरूपं लतापुष्पे अतिप्रसक्तम्, तस्याप्यारोपितखाधिकरणताकत्वरूपार्थाश्रयेण गौणत्वोपपत्तेः । **कौ.** १।४।१३।२३ पृ. ३७४.

पुष्पादौ खसंबन्धित्वाध्यारोपेण चारोपितं खपुष्पशब्दार्थमङ्गीकृत्य तद्वृत्तिगुणानामसत्त्वादीनां सिद्धान्ते सत्त्वाच्च न ' खपुष्पं भवत्सिद्धान्तः ' इत्यादौ अव्याप्तिः ( गौणत्वलक्षणस्य ) । **भाट्ट.** १।४।२३ पृ. ७७.

( ननु वादिना प्रतिवादिसिद्धान्तस्य अत्यन्तासत्त्वख्यापनार्थम् ' खपुष्पं भवत्सिद्धान्तः ' इति यत्र प्रयुज्यते तत्र खपुष्पादीनामत्यन्तासत्त्वेन मुख्यार्थगुणयोगस्याभावात् आरोपितार्थत्वमेव गौणत्वमङ्गीकर्तव्यम् इति शङ्कते– ) कथं तर्हि खपुष्पशशविषाणादीनां शब्दानां गौणता ' खपुष्पं भवत्सिद्धान्तः ' इत्यादिषु । नहि तेषां मुख्यमभिधेयमस्ति, येन सादृश्यात् गौणत्वं स्यात् । उच्यते । ( आरोपितार्थत्ववादिना हि परत्र मुख्यार्थारोपात् गौणत्वमिष्यते । तथा च असतां खपुष्पादीनां परत्रारोपासंभवात् तन्मतेऽपि इदं दूषणं तुल्यमित्याह– ) यदि एषामभिधेयं नास्ति, कथं तर्हि अन्यत्र तद्रूपारोपः । नहि स्वरूपेणाविद्यमानम् अन्यत्रारोपयितुं शक्यते । ( प्रतिबन्द्या अनुत्तरत्वादाह– ) तेन तद्रूपमेव आरोपितमङ्गीकर्तव्यम् । ततश्च आरोपितस्यापि तस्य मुख्यत्वात्



युक्तमन्यत्र गौणत्वम् । ( नहि मुख्यत्वमनारोपितत्वकृतम्, किन्तु वृत्त्यन्तरमनपेक्ष्य शब्दप्रयोगकृतम् । तच्च आरोपितस्यापि संभवतीति भावः । यदि च प्रागुक्तप्रतिबन्दीपरिहारार्थम् आरोपितार्थत्ववादिना परत्र मुख्यार्थारोपमादाय गौणत्वं नेष्यते, किन्तु आरोपितार्थत्वमादायेष्यते तदा दोषमाह– ) त्वत्पक्षे तु खपुष्पे एव खपुष्पशब्दो गौणः स्यात् आरोपितवचनत्वात् । भवतु इति चेन्न सर्वलौकिकविरोधात् । तस्मान्नाध्यारोपो गौणलक्षणम् । स्वार्थसादृश्यं तु भवति । खपुष्पादीनामपि मुख्यसादृश्यविवक्षयैव लौकिका गौणं प्रयोगं प्रयुञ्जते । यथा आकाशस्य पुष्पात्मना शशमूर्धवर्तिनां चावयवानां विषाणात्मना विकारः अत्यन्ताप्रसिद्धो निष्प्रमाणकः, तथा भवत्सिद्धान्तः इति । ( अनेन ग्रन्थेन आकाशस्यैव सादृश्यप्रतियोगित्वम्, तस्य तु न स्वरूपेण सादृश्यप्रतियोगित्वम्, किन्तु पुष्पादिविकारात्मना । ततश्च पुष्पादिविकारात्मना असत्त्वेऽपि स्वरूपेण सत्त्वात् अत्यन्तासतः कथं सादृश्यनिरूपकत्वम् इति शङ्का निरस्ता ) । **शा. सोम.** १।४।१३ पृ. ८५. * **खपुष्पशब्दस्य** ख–पुष्पसंसर्गात्मकारोपितार्थत्वेन खपुष्पे एव गौणत्वोपपत्तेः गौणशब्दवृत्तिविषयतया खपुष्पस्यैव आरोप्यस्य गौणत्वमापद्येत । न च एतस्य आरोप्यस्य लोके गौणत्वं प्रसिद्धम्, सिंहत्वादेः आरोप्यस्य गौणत्वप्रसिद्धेः । **सु.** पृ. ५०५.

* **खरस्य** दानं प्रतिग्रहो विक्रयश्च अनाचार उदीच्यानाम् । **वा.** १।३।३।७ पृ. २०४.

**खरीविषाणन्यायः** । असद्वस्तुसंभावनविवक्षायामयं प्रचरतीति स्पष्टः । **साहस्री.** ८८८.

**खलमैत्रीन्यायः** । खलस्य मैत्री आदौ गाढाऽपि क्रमेण ह्रसति अन्ते च नश्यति यथा, तद्वत् इति । **संग्रहः.**

**खलेकपोतन्यायः** । उक्तं च – ' वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति । तथैव सर्वे युगपत् पदार्थाः परस्परेणान्वयिनो भवन्ति ॥ ' इति न्यायः । अत्र वृद्धयुवशिशुभिः कपोतैश्चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोध्यम् । यत्र पदार्थानां युगपदन्वयस्तत्रास्य प्रवृत्तिरिति । **साहस्री.** १८३.

* **खलेकपोतन्यायेन** युगपत् सर्वेषामङ्गानां अन्वितत्वात् । **बृ.** ११।१।३।१६. * खलेकपोतन्यायेन शाब्दबोधे पदार्थानामन्वयबोधः । तदुक्तम् । ' वृद्धा युवानः शिशवः कपोताः ' इत्यादि । **मणि.** पृ. ७०. * ' अग्निहोत्रं जुहोति ' ' दध्ना पयसा जुहोति ' इति सर्वैरेव गुणविधानं विकल्पेन । तत्र **खलेकपोतन्यायेन** सर्वेषामेव युगपत् प्रवृत्तेः एकावरुद्धत्वाभावात् । **भाट्ट.** २।२।१०, * एकस्य प्रधानस्य एक एव फलाधानसामर्थ्योद्बोधाख्यः उपकारः सकृदेव स्वोपायमपेक्षते, अतश्च तया एकयैव आकाङ्क्षया खलेकपोतन्यायेन युगपत् सर्वेषामङ्गवाक्यानां प्रधानोत्पत्तिवाक्यैकवाक्यतामङ्गीकृत्य ...... । ११।१।२. * पदार्थोपस्थितेः क्रमिकत्वेऽपि क्रियायां खलेकपोतन्यायेन युगपदन्वयात् सर्वेषामेव विधेयद्रव्यसमर्पकत्वोपपत्तिः । **कौ.** ३।१।६।१२ पृ. १६३. * छत्री वासस्वी कुण्डली देवदत्तः इत्यादौ तावत्पदार्थानां स्मरणात् एकदैव **खलेकपोतन्यायान्** तावत्पदार्थानां क्रियाकर्मभावेनान्वयबोधरूपः शाब्दबोधो भवतीति केचित् । **न्यायमुक्तावली.** शब्द० * अर्थेन प्रधानोपकारेण **खलेकपोतवत्** युगपत् संनिपतन्त्यङ्गानि । तत्र न गृह्यते विशेषः इदं प्राप्यते इदं वेति । अतः सर्वाणि प्राप्यन्ते । **भा.** ११।१।३।१६.

* ' **खलेवाली यूपो भवति** ' । खलेवाल्याः यूपता विधीयते, न यूपस्य खलेवालिता । तथा अव्यवहितेन भवतिना संबन्धात् प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन परोक्षं स्यात् । **भा.** १०।२।३१।७१, **टुप्**–यूपानुवादेन खलेवालीत्वे विधीयमाने अदृष्टार्थता प्राप्नोति । खलेवाल्याः यूपकार्ये विधीयमानाया दृष्टमेव पश्वनपक्रमणं प्रयोजनम् । * खलेवाली यूपकार्ये विधीयमाना तद्धर्मान् लभते । **टुप्.** ९।१।२।३ वर्णक २ पृ. १६४७.

**खलेवाल्यां तक्षणजोषणादिधर्माणां बाधः ॥**
**परेषां प्रतिषेधः स्यात् । १०।२।३२।७२ ॥**

**भाष्यम्**— खलेवाल्यामेव संशयः किं तक्षणं जोषणमुच्छ्रयणम् इत्येवमादयः पदार्थाः कर्तव्याः, नेति । किं प्राप्तम् ? चोदकानुग्रहाय कर्तव्या इति । एवं प्राप्ते,

ब्रूमः। परेषां प्रतिषेधः स्यादिति । तथाभूतस्य हि यूपकार्ये विनियोगः । खलेवालीभूतस्य हि यूपकार्ये विनियोगे कृते कृतः शास्त्रार्थो भवति । कृते शास्त्रार्थे नापरस्मै गुणाय यतितव्यम् । अपि च तक्षणादीनि यूपकारणानि । न चात्र यूपेन प्रयोजनम् । अयूपो हि यूपकार्ये विनियोजयितव्यः । तस्मात् तक्षणादयो न कर्तव्या इति ।

**प्रतिषेधाच्च । ७३ ॥**

**भाष्यम्**-- इतश्च न कर्तव्याः । विप्रतिषेधः कुतो भवेत्, क्रियमाणेषु तस्याः खलेवाल्याः । यत् काष्ठं खले वारणप्रवृत्तम्, सा खलेवाली । तादृश्येव उपादातव्या । तक्षणे क्रियमाणे सा विनश्येत्, द्रव्यान्तरं जायेत, यच्च खले वारणे प्रवृत्तम् । जोषणं तु भ्रष्टावसरमेव । जोषितं तत् अन्यार्थेनैव । वृक्षाणां हि जोषणम्, न तु विकारस्य । उच्छ्रयणं च उच्छ्रिताया अशक्यमेव । तस्मात् तक्षणादयो न कर्तव्या इति ।

**सोम**-- यथासिद्धखलेवाल्युपादानेऽपि तक्षणादयः कर्तव्याः शक्यत्वात् इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**-- परेषां छेदनादीनां प्रतिषेधः इति ।

**वि**-- 'खलेवाल्यां जोषणं च छेदनं तक्षणोच्छ्रयौ । स्युर्वा नो, चोदकात् स्युः, नो वैयर्थ्याच्च विरोधतः ॥' वैयर्थ्यात् विरोधतश्च जोषणादि न कार्यम् ।

**भाट्ट**-- यथासिद्धखलेवाल्या एवोपादानात् छेदननिवृत्तावपि तक्षणादीनामनिवृत्तिं मन्वानं प्रति उत्तरम् । प्रयोजनाभावाच्च तक्षणादीनि । तेषां हि यदि तावत् श्लक्ष्णीभावादि दृष्टं प्रयोजनम्, ततस्तस्य खलेवारणक्रियाप्रयुक्तस्यैव सत्त्वेन प्रसङ्गसिद्ध्युपपत्तेः, न पार्थक्येन तक्षणाद्यनुष्ठापकता । यदि तु दीक्षाकालकर्तव्यपदार्थानाम् अदृष्टरूपयूपत्वोत्पादकत्वस्य स्थापितत्वात्, प्रकृते च खलेवारणक्रियाप्रयुक्तकाष्ठविधानेन छेदनादिकतिपयधर्मबाधस्य आवश्यकत्वात्, सामग्र्यभावेन यूपत्वानुत्पत्तेः अपूर्वमेव खलेवाल्यां पशुनियोजनम्, तदा सुतरां तक्षणादीनां दीक्षाकालकर्तव्यानां पदार्थानामभावः । अत एव नाष्टाश्रीकरणमपि । निखननोच्छ्रयणयोस्तु अदीक्षाकालीनयोः यूपस्वरूपार्थत्वाभावेऽपि यत्र क्षेत्रदेशे खलेवाली तत्रैव साद्यस्कविधानात् प्रसङ्गसिद्धकार्यत्वादेवाभावः । ३१.

**मण्डन**— 'नास्यां स्यात् तक्षणादिकम् ।'

**शंकर**— 'लुप्तार्थे न खलेवाल्याम् ।' लुप्तार्थे जोषणादिकं न कार्यम् ।

**☙ खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानम् ॥**

**अर्थाभावे संस्कारत्वं स्यात् । १०।२।३३।७४ ॥**

**भाष्यम्** — खलेवाल्यामेव संदेहः किं मैत्रावरुणदण्डेन भूमेः समक्रिया, अद्भिरवसेचनं बलवदवधानम् अञ्जनम् इत्येवमादयः पदार्थाः कर्तव्याः, उत नेति । किं प्राप्तम् ? न कर्तव्या इति । परेषां प्रतिषेधः स्यादित्युक्तम् । यादृशः खले वारणे वर्तते, तादृश एव यूपकार्ये विनियोक्तव्यः अयूपः । यूपार्थाश्च चोदकप्राप्ताः संस्काराः तस्मिन्निवर्तेरन्निति । एवं प्राप्ते, ब्रूमः । अर्थाभावे कार्याभावे, यदि खलेवाल्याः तैः संस्कारैः कार्यं न भवति, ततो यूपत्वमेव तेषां निमित्तं स्यात्, खलेवाल्यां न भवेयुः । इह पुनर्भूमेः समक्रियया, अद्भिरवसेचनेन, बलवदवधानेन च कार्यमस्ति दार्ढ्यम् । शिथिला हि सा खले वारणेन भवति । न च खलेवालीत्वमुपघ्नन्ति । तस्मात् कर्तव्याः । अञ्जनमपि अनुपघातकं चोदकप्राप्तं क्रियमाणमधिकाय गुणाय स्यात्, न दोषाय । तस्मात्तदपि कर्तव्यमिति ।

**सोम**— तक्षणादिवत् पर्यूहणादिकमपि खलेवाल्यां न इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु** – अर्थाभावे हि यूपस्वरूपादृष्टसंस्कारार्थतामादाय खलेवाल्यां निवृत्तिः स्यात्, न तु अत्र अर्थाभावः इति ।

**वि**-- 'पर्यूहणाद्यञ्जनादि न स्यात् स्याद्वा, ऽत्र पूर्ववत् । न स्याद्, दृष्टादृष्टभावादविरोधाच्च तत् भवेत् ॥'

**भाट्ट**-- यानि तु पर्यूहणपरिबृंहणपरिषेचनादीनि दृष्टार्थानि, यानि च प्रोक्षणाञ्जनादीन्यदृष्टार्थानि तेषां दीक्षाकालकर्तव्यत्वाभावेन यूपोत्पत्त्यर्थत्वाभावात्, यूपदार्ढ्यार्थत्वेन च अर्थलोपस्यापि अभावात्, पश्वपूर्वसाधनीभूतपशुनियोजनप्रयुक्ततया खलेवाल्यां करणमिष्टमेव । एवं परिधौ अपि प्रोक्षणादि बोध्यम् ।



**मण्डन**— 'अञ्जनादि भवेत् तस्याम् ।'

**शंकर**— 'अलुप्तार्थे भवेदिह ।' इह खलेवाल्याम् । ३४.

**☙ खलेवाल्यां प्राकृतस्य खादिरत्वस्य चित्रेष्टौ च तण्डुलानां व्रीहियवान्यतरजन्यत्वस्य नियमो नास्ति ॥**

**विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात्, तेन च कर्मसंयोगात् । १०।२।३१।७१ ॥**

**भाष्यम्**--साद्यस्के श्रूयते 'खलेवाली यूपो भवति' इति । तत्र संदेहः किं खादिरश्चोदकेन प्राप्यते स खलेवाली कर्तव्यः, अथ न प्राप्यते खादिरो अखादिरो वा खलेवाली स्यादिति । तथा **चित्रायां** श्रूयते 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत् संसृष्टं प्राजापत्यं भवति' इति । तत्रापि संदेहः किं व्रीहयश्चोदकेन प्राप्यन्ते व्रैहास्तण्डुलाः कर्तव्याः, उत न प्राप्यन्ते व्रैहा अव्रैहा वा तण्डुला उपादातव्या इति । किं तावत् प्राप्तम् ? खादिरादिः खलेवाली कर्तव्या, व्रैहास्तण्डुलाः कर्तव्याः । चोदकेन खादिरादयो व्रीहयश्च प्राप्नुवन्ति । एवं चोदकानुग्रहो भविष्यति । तेषां प्राप्तानां खलेवालीत्वं विधीयते 'यो यूपः स खलेवाली कर्तव्यः' इति । शक्यते हि यूपः खलेवाली कर्तुम्, न खलेवाली केन चित् प्रकारेण यूपो भवति । खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः, न तु अन्येषाम् । तत्र यूपो भवतीति यूपकार्ये भवतीत्युक्तं स्यात्, तथा लक्षणाशब्दो भवेत् । व्रीहीणामपि तण्डुलाश्चोदकेन प्राप्ता एव । तेषां तद्भूतानां पिष्टभावं प्रत्याख्याय देवतासंबन्धः क्रियते । तस्मात् खादिरादयः खलेवालीत्वमापादयितव्याः । व्रीहयश्च तण्डुलभावमापादयितव्याः । **एवं प्राप्ते, ब्रूमः** । विप्रतिषेधे एतस्मिन्, प्राकृतस्य गुणस्य लोपः स्यात् । कथं विप्रतिषेधः ? तद्वचनात् । खलेवाल्याः यूपता विधीयते, न यूपस्य खलेवालीता । तथा (सति) अव्यवहितेन भवतिना संबन्धात् प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन परोक्षं स्यात् । खलेवालीशब्दश्च यः खले (बलीवर्दानाम्) वारणे प्रवर्तते, तस्य वाचकः । तथाभूतश्च यूपकार्ये विनियुज्यते 'या खलेवाली स यूपः' इति । शक्यते च यूपकार्ये विनियोक्तुम् । यत्तु यूपशब्दः कार्यलक्षणार्थं इति, व्यवधानात् लक्षणाऽपि ज्यायसी । प्रत्यक्षं हि लक्षणायाम्, परोक्षं व्यवधाने वाक्यम् । तस्मात् यज्जातीयस्य वृक्षस्य खलेवाली कृता, तज्जातीयस्य यूपकार्ये विनियोक्तव्या । नैनां चोदको विशेषे अवस्थापयितुं शक्नोति । प्रत्यक्षा श्रुतिः तथा चोदकेन बाधिता स्यात् । तस्मान्न खादिरादिनियम इति ।

**टुप्**-- 'न यूपस्य खलेवालीत्वं (विधीयते) तथा अव्यवहितेन भवतिना संबन्धात् प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन (भवतिना) संबन्धात् परोक्षं स्यात्' इति (भाष्यम्) अयुक्तमिदं (पूर्वपक्षनिराकरणम्) । कथम् ? शब्दधर्मोऽयम् (क्रमः), अर्थं प्रति शब्दो गुणभूतः, शब्दं प्रति क्रमः (गुणभूतः) । तस्मात् वाच्य एव शब्दस्य योऽर्थः, स ग्रहीतव्यः (प्रधानत्वात्) । क्रमस्तु (अर्थाङ्गभूत-) शब्दधर्मत्वात् उपेक्ष्यः । तस्मात् पूर्वपक्षनिराकरणम् (एतत्) अयुक्तम् इति अन्यथा वर्ण्यते । यूपानुवादेन खलेवालीत्वे विधीयमाने (सति) अदृष्टार्थता (विधेः) प्राप्नोति । खलेवाल्याः (तु) यूपकार्ये विधीयमानायाः दृष्टमेव (पशुबन्धनपक्रमणम्) प्रयोजनम् । तस्मात् (दृष्टार्थत्वात् सिद्धान्ते) यथाश्रुतमेव (अव्यवहितसंबन्धेन) वाक्यम् (भवति) । न तु अव्यवहितकल्पनाप्रसादात् (सिद्धान्तः) । कथं तर्हि अयम् (भाष्य-) ग्रन्थः ? (उत्तरम्) उपचयत्वेन । (एतदुक्तं भवति) अयं चापरो गुणः (सिद्धान्ते लभ्यते, यदुत) अव्यवहितेन भवतिना संबन्धः इति ।

**सोम**-- किमत्र प्राकृतं खदिरादिकं प्रवर्तते, उत न इति अधिकरणाङ्गः संशयः । किं यो यूपः स खलेवाली कर्तव्यः इति वचनव्यक्तिः, उत या खलेवाली स यूपः इति तदर्थः संशयः । पूर्ववत् इहापि चोदकाबाधः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— विप्रतिषेधे संशये सति प्राकृतगुणस्य खदिरव्रीह्यादेः निवृत्तिः स्यात् तद्वचनात् खलेवाल्याः यूपत्ववचनात्, तण्डुलानां

गागीयत्ववचनात्, तेन खलेवाल्यादिद्रव्येण नियोजनादिकर्मसंयोगात् इति ।

**वि—** 'खलेवालीतण्डुलयोः खादिरव्रैहता न वा ।, यूपोक्तेर्मुख्यवृत्त्यर्थमुद्देशात् खादिरी हि सा ॥ अवघाताद्यबाधार्थे व्रैहता तण्डुलेष्वपि ।, प्रत्यक्षवचनत्वार्थे कार्ये यूपेन लक्ष्यताम् ॥ अन्तरेण हविर्देवयोगान्नात्रातिदेशनम् । न नियन्तुं शक्यतेऽतः खादिरव्रैहताऽनयोः ॥'

**भाट्ट—** साद्यस्के 'खलेवाली यूपो भवति' इति श्रुतम् । तत्रातिदेशप्राप्तं खादिरत्वं निवर्तते न वा, तथा **चित्रेष्टौ** 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत् संसृष्टं प्राजापत्यम्' इत्यत्र तण्डुले व्रीहियवनियमो निवर्तते न वेति चिन्तायाम्, आद्योदाहरणे तावत् न यूपकार्ये खलेवाली यथाऽवस्थिता विधीयते यूपपदे कार्यलक्षणाऽऽपत्तेः । किन्तु यूपोद्देशेन खलेवालीत्वं खले वारणक्रियारूपं संस्कारकतया विधीयते । न चाद्दष्टार्थत्वापत्तेः लक्षणाऽङ्गीकारेऽप्यदोषः, निषादस्थपत्यधिकरणन्यायेन तस्या दोषत्वात् । अतश्च प्रकृतिवत् खादिरमेव यूपं संपाद्य तस्य प्रयोगमध्ये एव खलेवालीत्वं संपादनीयम् । अस्तु वा खलेवाल्याः एव यूपकार्योद्देशेन विधिः, तथापि स्थानापत्त्या इतरधर्मवत् खादिरत्वस्यापि लाभात्, यैव वस्तुतः पूर्वं खादिरी खलेवाली, सैव ग्राह्येति । एवं तण्डुलेष्वपि चोदकबलेन व्रीह्यादिनियमः । **इति प्राप्ते**, न तावत् यूपोद्देशेन खलेवालीत्वविधिः, तदा हि उद्देश्यसमर्पकं यदि तावत् खलेवालीपदमेव, तदा एकप्रसरताभङ्गः । यदि तु यूपपदम्, तदा सुबन्तयोः परस्परमभेदान्वयाभावात् 'खलेवालीत्वेन यूपं भावयेत्' इत्येवंविधशाब्दबोधनिर्वाहार्थं खलेवालीपदे खलेवालीत्वस्य विशेष्यत्वप्रतिपत्त्यर्थे लक्षणाऽऽपत्तेः । न च 'दण्डी प्रैषानन्वाह' इतिवत् तदनापत्तिः, तत्र शाब्दबोधे दण्डविशिष्टपुरुषस्यैव कर्तृत्वेनान्वयेऽपि प्राप्ताप्राप्तविवेकेन दण्डे एव विधिफलोपपत्तेः । प्रकृते तु यूपकर्मकभावनायां खलेवाल्यास्तत्त्वेनान्वयानुपपत्तेः अवश्यं खलेवालीत्वस्यैव भावनायामन्वयो वाच्यः । तस्य च न विशेषणप्राधान्यं विना सिद्धिरिति लक्षणाऽवश्यम्भावः । तत्र च मुख्ये खलेवालीपदे लक्षणाऽपेक्षया जघन्ये यूपपदे एव पशुनियोजनरूपतत्कार्यलक्षणामङ्गीकृत्य तदुद्देशेन खलेवालीविधिर्युक्तः । न च तथापि स्थानापत्त्या खादिरत्वादिप्राप्तिः, प्रकृतौ हि 'यूपे पशुं नियुञ्जीत' इत्येतद्वाक्यमात्रपर्यालोचने पशुनियोजनसमर्थयत्किञ्चिल्लौकिकद्रव्यमात्रग्रहणप्रसक्तौ 'यूपं छिनत्ति' इति वचनात् प्रयोगमध्ये छेदनप्राप्तौ तत्प्रकृतिद्रव्यापेक्षायाम् 'खादिरो यूपो भवति' इत्यनेन तन्नियमनिधिः । अतश्च खादिरत्वस्य पशुनियोजनसाधनीभूतद्रव्यच्छेदनाक्षिप्तप्रकृतिद्रव्यद्वारैव विधानात् खलेवाल्यां च लौकिकखलेवारणक्रियाप्रयुक्तकाष्ठस्यैव यूपकार्ये विधानात् छेदनलोपेन द्वारलोपात् खादिरत्वनियमस्य लोपः । एवं **चित्रेष्टौ** तण्डुलेषु व्रीहिनियमस्यापि । तत्रापि हि प्रकृतौ पुरोडाशमात्रविधिपर्यालोचने लौकिकस्यैव अनोवाह्येऽन्यायेन पुरोडाशस्य ग्रहणप्रसक्तौ 'पिण्डं करोति' 'पुरोडाशं श्रपयति' इत्यनेन प्रयोगमध्ये पिण्डकरणपुरोडाशश्रपणादिप्राप्तौ प्रकृतिद्रव्यापेक्षायां व्रीह्यादिवाक्येन तन्नियमविधानात् व्रीह्यादीनामाग्नेयाद्यपूर्वसाधनयागप्रदेयघटकपाकप्रयोजकश्रपणविध्याक्षिप्तोपादानकतण्डुलव्यापारकत्वस्यैव कौस्तुभे व्यवस्थापितत्वात् । प्रकृते च तण्डुलानां पाकाभावेन उक्तविधव्यापाराभावान्न प्रकृतिद्रव्योपादानम्, न वा व्रीह्यादिनियमः, न वा तेषु प्रोक्षणादिधर्मप्राप्तिः । निर्वापस्तु लौकिकः एवार्थसिद्धस्तण्डुलानाम् । प्रदेयधर्मास्तु पर्यग्निकरणादयः के चिदर्थलोपाभावे कर्तव्याः । अतः सिद्धं चित्रेष्टौ तण्डुला व्रीहियवान्यतरभिन्नप्रकृतिका अपि ग्राह्या इति ।

**मण्डन—**'न खादिरी खलेवाली ।'

**शंकर—**'अव्रैहा अपि तण्डुलाः ।' ३२.

* **खलेवाल्यां** यूपाहुतिर्नास्ति साद्यस्के । यूपाहुतिन्यायः । भा. १०।१।५।९. * खलेवाल्यां स्थाण्वाहुतिः न कर्तव्या यूपीयात्रश्चनस्थाणुसंस्कारद्वारा यूपसंस्कारार्थत्वात् इति सिद्धान्तितं दशमे ... । स्थाण्वाहुतिश्च साक्षाद् विनियुक्तोपकारकभाव्युपयोगद्रव्यसंस्कारार्थम् अदृष्टार्थे संनिपत्योपकारकं क्रत्वर्थे प्रवृत्तिरूपं वैदिकं कर्म । स्थाण्वाहुतिन्यायः । **बाल.** पृ. ८३. * **खलेवालीशब्दः** यः खले वारणे प्रवर्तते तस्य वाचकः । भा. १०।२।३१।७१ । खलेवालीशब्दः खले वारयति बलीवर्दान् इति व्युत्पत्त्या रलयोरभेदेन खले वारणक्रियाविशिष्टे काष्ठे वर्तते । **सोम.** । यत् काष्ठं खले वारणप्रवृत्तं सा खलेवाली । **भा.** ७३.



**खादकघातकन्यायः** । यदि मांसखादका न स्युः, तदा प्राणिघातका अपि न स्युः । तस्मात् खादका एव घातकाः इति न्यायार्थः । **संग्रहः.**

* **खादिरः** अङ्गासमर्थोऽपि प्रधानपशुनियोजनसमर्थश्चेत् स एव ग्राह्यः, न प्रतिनिधिः । भा. ६।३।२०।४०–४१, * खादिरः एव यूपो वाजपेये । १०।७।१६।५७, * खादिरः पालाशो रौहितको वा यूपः तन्त्रं ज्योतिष्टोमे पशुत्रयार्थम् । ११।३।३।३–४, * खादिरः लब्धोऽपि पशुनियोजनासमर्थश्चेत् नियोजनसमर्थः कदर एवोपादेयः । ६।३।२०।४०–४१. * खादिरः स्रुवः प्रकृतौ विधीयते विकृतौ तु चोदकात् । **वि.** ३।६।१. * '**खादिरं** वीर्यकामस्य यूपं कुर्यात्' अयं जातिविषयकः अपूर्वविधिः । **बाल.** पृ. २२. * **खादिरस्य** प्रतिनिधिः कदरः । 'कदरः खदिरे सिते' इत्यमरः । **वि.** ६।३।१७. * '**खादिरे** बध्नाति' 'पालाशे बध्नाति' 'रौहितके बध्नाति' एकार्थाः सन्तो विकल्प्यन्ते एते खादिरादयः । भा. २।२।६।१७, * खादिरे स्रुवे (दर्शादौ) फलश्रुतिरर्थवादः, न फलप्रयुक्ता । ४।३।१।१–४, * **खादिरी** अग्निहोत्रसमित् भवति । ७।३।१।४, * **खादिरत्वम्** उभयार्थम् 'खादिरे बध्नाति' इति नित्यत्वम् 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति नैमित्तिकत्वम् । ४।३।३।५–७, * **खादिरत्वस्य** प्राकृतस्य साद्यस्के खलेवाल्यां न नियमः । १०।२।३१।७१.

**खादिरत्वस्य प्राकृतस्य सोमापौष्णे पशौ श्रूयमाणेन औदुम्बरत्वेन बाधः ॥**

**तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् । १०।७।१८।६१ ॥**

**भाष्यम्—** क चित् कर्मविशेषे (सोमापौष्णे पशौ) श्रूयते, 'औदुम्बरो यूपो भवति' इति । तत्र संशयः किं प्राकृतमत्र यूपद्रव्यं बाध्यते, उत न प्राप्यते इति । किं प्राप्तम् ? एकार्थविकारेऽस्मिन् औदुम्बरे – एकार्थश्चासौ खदिरादिभिर्विकारश्च – तत्र प्राकृतस्य खदिरादेरप्रवृत्तिः । यथा प्राकृतस्य द्रव्यदेवतस्य पूर्वस्मिन्नधिकरणे, तथा अस्मिन् खादिरस्य यूपद्रव्यस्याप्रवृत्तिः । प्रवृत्तौ हि तस्य विषमशिष्टो विकल्पः स्यात्, चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च । न चैष न्याय्यः । तस्मादप्रवृत्तिः ।

**यावच्छ्रुतीति चेत् । ६२ ॥**

**भाष्यम्—** इति चेत्पश्यसि, विकल्पः सदोष इति । समुच्चयो भवतु । उभयस्मिन् सह नियुज्यतां पशुः । तदा चोदकानुग्रहो भविष्यति ।

**न, प्रकृतावशब्दत्वात् । ६३ ॥**

**भाष्यम्—** नैतदेवम् । केवले औदुम्बरे नियोजनं श्रूयते । केवले च खादिरे प्रकृतौ 'खादिरे बध्नाति' इति । उभयस्मिंश्च बन्धनद्रव्ये न प्राकृतं वाक्यम्, न च प्रत्यक्षश्रुतम् । तेन समुच्चयस्य प्रमाणमेव नास्ति । अतः प्राकृतं यूपद्रव्यं निवर्तते इति ।

**सोम—** पूर्वत्र प्राकृतवैकृतद्रव्याभ्यां सहिताभ्यां वा वैकृतेन वा यागानुष्ठानेऽपि यागक्रियायां विशेषाभावात् एकेनापि तत्सिद्धेः न समुच्चयः इति युक्तम् । इह तु यूपद्वये युगपन्नियोजने सति दार्ढ्यातिशयात् पशोः अत्यन्तानपक्रमणसिद्ध्या एकयूपनियोजनापेक्षया विशेषसद्भावात् समुच्चय एव युक्तः इति विशेषाशङ्कया उत्थानात् **संगतिः** । **सूत्रार्थस्तु—** एकार्थो यूपः यत्र खादिरत्वादिना विकृतः श्रूयते, तत्र प्राकृतस्य यूपस्य निवृत्तिः, प्रवृत्तौ हि विकल्पः स्यात् इति ।

**वि—** 'औदुम्बरः खादिरेण समुच्चेयोऽथ बाधकः ।, द्वयोर्नियोजनादाद्यो, निरपेक्षत्वतोऽन्तिमः ॥'

**भाट्ट—** औदुम्बरत्वादि वैकृतं प्राकृतखादिरत्वादीनां पूर्वन्यायेनैव निवर्तकम् । न च द्वयोर्यूपयोः समुच्चयेन बन्धनसाधनता, नैरपेक्ष्येण साधनत्वविधानात्, प्राकृतयूपोद्देशेन औदुम्बरत्वमात्रविधानेन यूपद्वयाप्रसक्तेश्च । सिद्ध एव चायमर्थः शिष्यहितार्थमुच्यते इति वेदितव्यम् । १६.

**मण्डन—** 'तथा पलाशः खदिरेण बाध्यः ।' 'औदुम्बरः खादिरत्वेन बाध्यः' इति तु युक्तम् । **के.**

**शंकर—** 'समुच्चयो यूपयोर्न ।'

**खादिरत्वादिन्यायः** । ३।६।१।१–८ । खादिरत्वादिद्वारस्य स्रुवादेः अतिदेशं विना विकृतावप्राप्तेः द्विरुक्तत्वापत्तिभयात् विकृत्यर्थत्वं खादिरत्वादेर्न जातम् । आहवनीयादिद्वारस्य तु होमस्य विकृतावपि नक्षत्रेष्ट्यादौ उपदेशात् प्राप्तत्वात् तादर्थ्येऽपि आहवनीयस्य द्विरुक्तत्वानापत्तेः खादिरत्वादिन्यायाभावात् यूपोत्पादकस्य च्छेदनस्य प्रकृत्यर्थत्वात् यूपस्य प्रकृत्यर्थत्ववत् आधानस्य प्रकृत्यर्थत्वे न कश्चिद्धेतुरस्ति । सु. ३।७ पृ. ४२.

* **खादिरलाभे** तस्य तक्षणादिसंस्कारासामर्थ्येऽपि नियोजनकार्यसामर्थ्ये सति खदिर एव ग्राह्यः । के. ६।३।२०।४०–४१.

* **खादिरालाभेन** कदरयूपे पशुनियोजनानन्तरं खादिरो लब्धोऽपि नोपादेयः प्रयोजनस्य जातत्वात् । भा. ६।३।१७।३६, * खादिरालाभेन प्रतिनिधौ कदरे संस्कृते पुनः खदिरलाभे तस्य पुनः तक्षणादयः कर्तव्याः, संस्कृतोऽपि प्रतिनिधिस्त्याज्यः । वि. ६।३।१७.

* **खादिरादीनां** यूपद्रव्याणां विकल्पः एककार्यार्थत्वात् । भा. १२।३।४।१०–१५, * खादिरादीनां वाजपेयादिविकृतौ वैकल्पिकानां प्राकृतानाम् अन्यतमपुनःश्रुतौ नियमविधिः । १०।७।१६।५१–५७.

---

## ग.

* **गकारः ककारः** । प्रतिवर्णे व्यञ्जकध्वनिभेदात् भिन्नध्वनिसंनिधिजन्यत्वस्य सत्त्वेऽपि गकारोऽयं ककारोऽयम् इत्यादिप्रत्ययभेददर्शनम् । सु. पृ. ७०६. * **गकारादीनां** वर्णत्वशब्दत्वगुणत्वेषु सत्सु द्रुतादिभेदस्य परोपाधित्वात् गकारादिरूपैकत्वसिद्धेः गत्वादिमात्रं न कल्पितम् । वा. २।२।२।२ पृ. ४७१.

**गगनरोमन्थन्यायः** । असंभवद्वस्तुनि व्यर्थप्रयत्नकरणे प्रवर्तते । पशूनामुद्गीर्य चर्वणं रोमन्थ उच्यते । साहस्री. ६६६.

**गगनारविन्दन्यायः** । अयमत्यन्ताभावदृष्टान्ते प्रवर्तते । गगनकमलं हि यथा नास्त्येव तद्वदिति । साहस्री. ७१५.

**गङ्गां प्रविष्टाऽनेका नदी गङ्गाग्रहणेन गृह्यते इति न्यायः** । ( 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इतिन्यायोदाहरणरूपोऽयं न्यायः । के. ) भूतिः. पृ. २९८.

* '**गङ्गायां घोषः**' इत्यादौ लक्षणां विना पदान्तरान्वयासंभवः । सु. पृ. ७९३. * गङ्गास्रोतोवत् क्वचित् अनुवृत्तिः । ( गङ्गाप्रवाहो वहन् मार्गस्थान् सर्वानेव भूभागानार्द्रयति तद्वत् ) । मणि. पृ. ७१.

**गजघटान्यायः** । यथा 'मदान्धसिन्धुरघटा' ( गङ्गाष्टकं ) । यथा च 'यत्रैषा मेघनीला चलति गजघटा राक्षसस्तत्र यायादेतत् पारिप्लवाम्भः प्लुतितुरगबलं धार्यतां राक्षसेन । पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन् मह्यमाज्ञासीत् स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम् ॥' इति मुद्राराक्षसनाटके २ अङ्के । साहस्री. २०८.

**गजभुक्तकपित्थन्यायः** । यथा गजभुक्तं हि कपित्थफलं तद्गुदरादभग्नमेव निःसरति, तच्च भग्नं सत् मज्जाशून्यं प्रक्षालितमिवाभातीति प्रसिद्धम् ! तथा च, यथा निश्छिद्रादतिकठिनात्तस्मादतिसान्द्रं तन्मज्जाऽऽदि कथं निःसृतमिति न तर्कगोचरतामेति, तथा गताऽपि लक्ष्मीर्नैव लक्ष्यते । उक्तं च 'गता विलक्ष्यते नैव गजभुक्तकपित्थवत्' इति । साहस्री. २६९.

**गड्डुलिकाप्रवाहन्यायः** । यथा गड्डुलिकानामवीनां गणादेका चेत् कूपे पतिता, तदा वार्यमाणा अपि सर्वास्तत्र पतन्तीति तथा प्रकृतेऽपि । ( गड्डलिका इत्यपि पाठः ) । साहस्री. २३.

* **गण** एव संघातधर्मैः गणमनुग्रहीतुं समर्थः । भा. ८।१।१०।१७.

**गणादुपचयस्तत्प्रकृतित्वात्** । ८।३।५।१० ॥ शतोक्थ्यशतातिरात्रादिषु द्वादशाहिकानि दशाहानि प्रवर्तन्ते इत्यवगतम् । तानि च उक्थ्यसंस्थानि द्वौ अग्निष्टोमौ । शतोक्थ्यम् इत्युक्ते च अग्निष्टोमेषु उक्थ्यस्तोत्रोपचयः कर्तव्यः, शतातिरात्रे च सर्वेषु रात्रिपर्यायोपचयः । तत्र किं द्वादशाहादुपचयः किंवा ज्योतिष्टोमात् इति विचारे पूर्वपक्षमाह । गणात् द्वादशाहात् स्तोत्राणामुपचयः । तत्प्रकृतित्वात् अहर्गणानां द्वादशाहप्रकृतिकत्वात् । तस्मात् द्वादशाहादुपचयः ।



**एकाहाद्वा, तेषां समत्वात्** । ११ ॥ शतोक्थ्यादिषु गणेषु आगमनीयानां स्तोत्राणामुपचयः प्रकृतिभूतात् द्वादशाहात् कर्तव्यः इति पूर्वपक्षं वाशब्दो व्यावर्तयति । स्तोत्राणामुपचयः द्वादशाहात् न कर्तव्यः, किन्तु एकाहात् कर्तव्यः । तेषां द्वादशाहिकानामह्नां वैकृतैरहोभिः समत्वात् । तान्यपि संस्थासाकाङ्क्षाणि इमान्यपि । नहि भिक्षुको भिक्षुकात् याचते । द्वादशाहे संस्थास्तोत्राणि नाम्नातानि इति यत्र आम्नातानि ततो ग्राह्याणि । तानि च ज्यौतिष्टोमिके उक्थ्ये अतिरात्रे चाम्नातानि, इति तत एव एकाहात् स्तोत्राणामुपचयः कर्तव्यः इति सिद्धान्तः । अत्र उपचयश्चिन्तितः अग्रे अपचयश्चिन्तयिष्यते । के.

**गणेषु द्वादशाहस्य** । ८।१।१०।१७ ॥ गणशब्दोऽत्र द्विरात्रादीनां संवत्सरपर्यन्तानां अहर्गणानां वाचकः । तेषु गणेषु अहर्गणेषु द्वादशाहस्य विध्यन्तः प्रवर्तते । यजतिचोदनासामान्यात् 'द्वादशाहेन यजेत' 'द्विरात्रेण यजेत' इति । अहःशब्दोऽपि अहोरात्रवचनः रात्रिशब्दोऽपि तथा, इति एतत् शब्दगतं लिङ्गम् । अर्थगतमपि गणत्वम् । एवम् 'द्वाभ्यां लोमावद्यति, द्वाभ्यां मांसम्' इत्येतदारभ्यः द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति । तस्मात् अहर्गणानां द्वादशाहः प्रकृतिः । के.

**गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत्** । ८।३।२।३॥ जनकसप्तरात्रे 'चत्वारि त्रिवृन्त्यहानि भवन्ति' इति श्रूयते । तत्र किं पृष्ठ्यषडहगतस्य प्रथमस्याह्नः अभ्यासोऽयं विहितः तस्य त्रिवृत्स्तोमकत्वात्, किंवा द्वादशाहिकेषु क्रमेण चतुर्षु अहःसु चोदकेन प्राप्तेषु त्रिवृत्स्तोमकत्वं विधीयते इति संशयः । तत्र पूर्वपक्षमाह । 'चत्वारि अहानि' इति गणस्य चोदना । एवंविधायां गणचोदनायां सत्यां यस्य अह्नः लिङ्गं स्यात्, तदावृत्तिः प्रतीयेत । प्रकृते त्रिवृन्ति इति त्रिवृत्त्वं लिङ्गं षडहगतस्य प्रथमस्याह्नः । तस्मात् तस्यैव इयं चतुर्वारम् आवृत्तिः प्रतीता भवति । आग्नेयवत् यथा 'अग्नये पावकाय' 'अग्नये शुचये' इति देवतैक्यात् सामान्यात् आग्नेयस्य विध्यन्तस्याभ्यासः तद्वत् ।

**नानाऽहानि वा संघातत्वात्, प्रवृत्तलिङ्गेन चोदनात्** । ४ ॥ जनकसप्तरात्रस्य 'तस्य चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुखानि, विश्वजित्, महाव्रतं (स्तोत्रं) अतिरात्रे' इति अहःक्लृप्तिः सत्याषाढीये पठिता ( १७।८।२४ ) अग्निष्टोमः प्रथममहः, ततः चत्वारि त्रिवृन्ति अहानि इति पञ्च, विश्वजित् षष्ठम्, अतिरात्रः सप्तमं तत्र च महाव्रतं स्तोत्रम्, इति सप्त अहानि । तत्र चत्वारि अहानि इति संघात एष उच्यते । चत्वारि इति संख्या पृथक्त्वनिवेशिनी अह्नां पृथक्त्वे एव संभवति । सन्ति च सप्तरात्रे चोदनया प्रवृत्तानि द्वादशाहिकानि नाना अहानि । तानि अनूद्य त्रिवृत्त्वं विधातुं शक्यते, न तु त्रिवृन्ति बहूनि अहान्यनूद्य तत्र चतुःसंख्या विधातुं युक्ता । तस्मात् संघातत्वात् प्रवृत्तलिङ्गेन चोदनात् जनकसप्तरात्रे चत्वारि अहानि द्वादशाहिकानि नाना अहानि स्युः । तेषु च त्रिवृत्त्वं विधीयते इति विशेषः । इति सिद्धान्तः । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः ।

**तथा चान्यार्थदर्शनम्** । ५ ॥ जनकसप्तरात्रे 'चत्वारि त्रिवृन्ति अहानि' द्वादशाहिकानि नाना अहानि, न पृष्ठ्यषडहगतप्रथमाह्नाभ्यासरूपाणि इत्यत्र, 'चत्वारि त्रिवृन्त्यहानि अग्निष्टोममुखानि' इति अन्यार्थदर्शनं भवति । मुखमेव अग्निष्टोमः, उत्तराणि चत्वारि तु अग्निष्टोमभिन्नानि । अस्मात् अन्यार्थदर्शनात् ज्ञायते तानि चत्वारि अहानि द्वादशाहिकानि इति । तेषां तु त्रिवृत्स्तोमता विधीयते । इति सिद्धान्तः । के.

**गणपतिन्यायः** । 'गणः प्रमथसंख्यौघे चण्डसैन्यप्रभेदयोः' इति मेदिनी । गणस्य प्रमथाख्यरुद्रानुचरस्योद्भूतावयवभेदकसमुदायस्य प्रत्येकस्य पतिर्वा अनुद्भूतावयवभेदात्मकसमूहस्य वा पतिरिति गणपति-

शब्दार्थः इत्यर्थद्वयविवक्षायां यथा गणपतिशब्दश्चरितार्थस्तथा प्रकृतेऽपि । साहस्री. १.

* **गणयागादयः** अनेवमितिकर्तव्यताकाः ( लौकिकेतिकर्तव्यताशून्याः ) द्रष्टाः । **भा.** ७।४।२।१२.

* **गणितशास्त्रे** समविभागाभावे सैकीकृत्य निरेकीकृत्य वा उपपत्तिविभागः उक्तः । **संकर्ष.** २।३।४.

⌛ गते **कर्मास्थियज्ञवत्** ।१०।२।२४।६०॥

सर्वस्वारे क्रतौ यजमाने दिष्टं गते अवशिष्टं कर्म अस्थियज्ञवत् कर्तव्यम् इति सुहृद् भूत्वा आचार्य आह । क्रत्वर्थे कर्तव्यम् औदुम्बरीसंमानं शुक्रान्वारम्भः इति, नान्यत् इति सिद्धान्तः । **के.**

* **गतश्रियः** । 'त्रयो वै गतश्रियो ब्राह्मणः शुश्रुवान्, ग्रामणी, राजन्यः' इति श्रुतिः । 'और्वो गौतमो भारद्वाजः' इति कल्पसूत्रकारः । 'धार्यो गतश्रियः आहवनीयः' गता प्राप्ता श्रीर्यैः ते गतश्रियः । **वि.** ९।४।८. * **गतश्रिया** धार्यस्याग्नेरुद्वाने ज्योतिष्मतीष्टिर्नास्ति । ९।४।८, * **गतश्रीभिः** आहवनीयो धार्यः । स चायं पुरुषार्थः । तस्मिन्नुद्वाते तु मनस्वतीहोमः प्रायश्चित्तम् । अस्मिंश्चाग्नौ प्रत्यहं परिसमूहनं पर्युक्षणं परिस्तरणं इत्येवमादयः पदार्थाः कर्तव्याः । **के.** ९।४।८. * **गतश्रियः** ( इयं षष्ठी ) नित्यमाहवनीयो धार्यः । **वि.** १२।४।१०. * **गतश्रियां** कर्मकाले आहवनीयस्य प्रादुष्करणमेव, न पुनःपुनराधानम् । **संकर्ष.** ३।२।६.

⌛ **गतानुगतिको लोको न लोकः पारमार्थिकः इति न्यायः** । यथा केन चिद्ब्राह्मणेन कस्माच्चित् पुरुषात् श्रुतम्, यत् कस्मिंश्चित् ग्रामे कश्चिद्दाता धनाढ्यः प्रतिब्राह्मणं रौप्यकमण्डलुं ददातीति । तदाकर्ण्य स लुब्धब्राह्मणस्तत्र गन्तुकामः पथ्येव भूमौ गर्ते विधाय संस्थाप्य च तत्र स्वताम्रकमण्डलुं तदुपरि मृत्पिण्डद्वयं निधाय तत्र गतः । गते च तस्मिन् योयो जनस्तत्र समायातः, सस एव तत्र पिण्डद्वयमवलोक्य संभाव्य च तीर्थबुद्धिं तत्र मृत्पिण्डद्वयं निर्माय स्थापयामास । इत्थं कालात्यये जाते दैववशात् धनिनः सकाशादप्राप्य राजतकमण्डलुं पुनः स्वधृतताम्रकमण्डलुग्रहणेच्छुर्विप्रस्तत्र बहुलोकदत्तमृत्पिण्डव्यासक्तोशद्वयात्मकमवलोक्य भ्रान्तः सन् स्वस्थापितकमण्डलुस्थानमनवगत्य शोकाकुलचित्तः इदं पद्यं पपाठ— 'गतानुगतिको लोको न लोकः पारमार्थिकः । पिण्डद्वयप्रदानेन गतं मे ताम्रभाजनम् ॥' इति । अन्यदपि— 'एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम् । गतानुगतिको लोको न लोकः पारमार्थिकः ॥' इति । **साहस्री.** ४२१.

⌛ **गतिसामान्यात् इति न्यायः** । अनेकशाखागतवाक्योदाहरणम् 'गतिसामान्यात्' इति न्यायेन अविरोधतः स्वार्थपरत्वख्यापनार्थम् । **उपदेशसाहस्री.** गद्य ६ रामतीर्थः । गतिसामान्यात् इति ब्रह्मसूत्रम् ( १।१।१० ) गतिः अवगतिः निश्चयः । समानैव हि सर्वेषु वेदान्तेषु चेतनकारणावगतिः इति सूत्रार्थः । **के.** * **गतिसामान्यन्यायेन** सर्ववेदान्तानां ब्रह्मस्थापकत्वव्यवस्थापनात् । **श्रीकर.** १।४।२८ **ब्र. सू.** * गतिसामान्यन्यायेन सर्वासामुपासनानां ब्रह्मप्राप्तिफलमर्थात् सिद्धम् । ३।३।१८ ब्र. सू., * तस्मात् **गतिसामान्यन्यायेन** षड्विधलिङ्गैः पुरुषसूक्तस्य परशिवपरत्वमेव ज्ञेयम् । १।१।२७ **ब्र. सू.**

* **गत्व–औत्वादि**जातिनिराकरणम् । 'स्फोटवादः' इति बिन्दौ शास्त्रदीपिकाप्रघट्टके द्रष्टव्यम् । **के.**

* **गदतिर्गदनार्थः** पाठवचनः । **भा.** २।१।१३।४२, * अपादबद्धे **गदतिर्वर्तते** । अपादबद्धो हि गद्य इत्युच्यते । २।१।१३।४५.

⌛ **गन्धर्वनगरन्यायः** । गन्धर्वाणां नगरमिव गन्धर्वनगरम् । यथा राजनगराकारनीलपीतादिवर्णाकृतिपताकाध्वजतोरणान्वितसूर्यमयूखसंयुक्तमेघरचनाविशेषरूपं ह्यन्तरिक्षे प्रतीयते, दूरतो दृश्यते, उपसृत्य च नोपलभ्यते, तद्वत् असज्जगदिति ज्ञेयम् । उक्तं च तत्त्वविवेके 'अनेकवर्णं वियतीन्द्रचापं ग्रहात् समन्तात् परिवेष उक्तः । तथैव भानां पतनं च विद्युत्तथैव गन्धर्वपुरं विचित्रम् ॥' इत्यादि । **साहस्री.** ४४३.

* **गन्धर्वयजूंषि** नाम 'रन्तिर्नामासि०' इत्यादयो यजुर्मन्त्राः । **के.**

* **गन्धर्वादयः** सहस्रादिसंवत्सरदीर्घायुषः । तेषां तु आहवनीयाग्न्यधिकारो नास्ति । **वि.** ६।७।१३.



* ऐकान्तिकं हि **गमकं** भवति । **वा.** ३।४।४।१३ पृ. ९१९. * **गमकविशेषाः** त्रयः इन्द्रियम्, लिङ्गम्, अभिधायकमिति । यत् सत्तामात्रेण स्वसंनिकृष्टमर्थं गमयति तत् इन्द्रियम् । यत्तु व्याप्यतया ज्ञायमानं व्यापकं गमयति तत् लिङ्गम् । यत्तु गमकत्वावगमादेव गमयति, तत् अभिधायकम् । **रत्नाकरः** संबन्धाक्षेपवादे श्लो. ३१.

* **गमेः** स्त्रीसंयुक्तस्य मैथुनवाचित्वम् । **सु.** पृ. ९३३.

* **गम्यगमकभावः** । कार्यकारणयोरेव गम्यगमकभावो भाष्यकाराभिप्रेत इति के चिन्मन्यन्ते । तत्तु अयुक्तम् । अकार्यकारणभूतानामपि अनित्यत्वकृतकत्वादीनां गम्यगमकभावप्रसिद्धेः । कार्यकारणयोरपि च न तथा कारणं गमकम्, व्यभिचारबहुलत्वात्, यथा कार्यम् । **वा.** २।२।११।२५ पृ. ५४४, * **गम्यगमकसंबन्धे** सति लिङ्गशब्दः प्रवर्तते । १।३।७।१८ पृ. २४९.

* **गम्यमानं** च न शक्यं मिथ्येति कल्पयितुम् । **भा.** १।४।३।४ पृ. ३३४. * **गम्यमानस्यापि** तात्पर्यवृत्त्या शाब्दत्वम् । **सु.** पृ. ५७३. * गम्यमानस्यार्थस्य विशेषणादर्शनात् । तदाहुर्वार्तिककारमिश्राः '**गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् । शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत्** ॥' इति । **ऋजु.** पृ. ७०. * गम्यमानस्य विशेषणसंबन्धो नास्ति, अतस्तत्संबन्धदर्शनात् अभिधानमिति, तदपि आकृत्यरुणाधिकरणयोरुभयथाऽपि दर्शनात् निराकृतम् । **वा.** ३।४।४।१३ पृ. ९४०, * **गम्यमानानामेव** सादिनाम् 'अश्वसहस्रेण नगरं मुषितम्' इति मोषक्रियासंबन्धः । ३।४।४।१३ पृ. ९४०.

* '**गर्गाः** शतं दण्डयन्ताम्' इत्यत्र समुदाये वाक्यपरिसमाप्तिः । **भा.** ३।१।६।१२ पृ. ६९७.

⌛ **गर्गत्रिरात्रे आज्यदोहस्तोत्रकाले लौकिकाग्नेरुपनिधानम्** ॥

**विशये लौकिकः स्यात्, सर्वार्थत्वात्** । ७।३।१२।३०॥

**भाष्यम्** —— गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य श्रूयते 'अग्निमुपनिधाय स्तुवते' इति । अत्र विशयः किं लौकिकोऽग्निः उपनिधेयः, उत वैदिक इति । किं प्राप्तम् ? वैदिकः इति । कुतः ? सर्वकर्मार्थः उत्पन्नोऽसौ 'यान्यहं कर्माणि करिष्ये, वैश्वानरस्म्यधिकृतः' इति । अतो वैदिक उपनिधेय इति । **एवं प्राप्ते**, **उच्यते** । विशये लौकिकः स्यात्, सर्वार्थत्वात् । एतस्मिन् विशये लौकिकं वैदिकमिति लौकिकः स्यात् । कुतः ? सर्वार्थत्वात् । लौकिकः सर्वार्थः, न तस्य कार्यं किञ्चित् निर्दिष्टम् । अतो यद्यत् अग्निना कर्तव्यं दृष्टमदृष्टं वा, तत्तदुपादीयमानमविरुद्धम् । तस्मात् लौकिकः स्यात् ।

**न वैदिकमर्थनिर्देशात्** । ३१ ॥

**भाष्यम्**— अथ यदुक्तं वैदिकं सर्वकर्मार्थमुत्पन्नम्, तस्मात् तदुपनिधेयमिति । **अत्र ब्रूमः** । न वैदिकमग्निद्रव्यं शास्त्रेणोत्पादितम् । तस्य शास्त्रेणैव कार्यं निर्दिष्टम् 'यदाहवनीये जुहोति' इत्यारभ्य । तस्मिन् सर्वार्थे कल्प्यमाने निर्देशोऽनर्थकः स्यात् । तस्मात् लौकिकोऽग्निरुपनिधेयः । सर्वार्थत्वं चैषां स्वेस्वे कार्ये वर्तमानानां भविष्यति । एवमुभयमविरुद्धं सर्वार्थत्वं निर्देशश्चेति ।

**तथोत्पत्तिरितरेषां समत्वात्** । ३२ ॥

**भाष्यम्**— अथ धैष्ण्या अग्नयः कस्मान्नोपनिधीयन्ते ? अत्रोच्यते इतरेषामपि अग्नीनां धैष्ण्यानां तथोत्पत्तिः । न सर्वार्था इत्यर्थः । कुतः ? समत्वात् एतेऽपि इतरैरग्निभिः समाः । एतेषामपि निर्दिष्टं कार्यम् 'प्रागासीनो धिष्ण्यानाघारयति' इति । अतस्ते नोपनिधेया इति ।

**टुप्**— आहवनीयादयः कैमर्थ्याभिलाषिणः प्रयोजने दत्ते निराकाङ्क्षीभूताः, अन्यत्र शेषभावे एषां नास्ति प्रमाणम् । धैष्ण्या अपि ( अग्नयः ) व्याघारणार्थमुत्पन्नाः तेनैव निराकाङ्क्षाः नान्यत्र विनियोक्तव्याः । व्याघारणे कृते अपवृत्ते कर्मणि लौकिकः, इति प्रसङ्गात् उपनिधाने संभवति, योऽन्य आनीयते तत्र प्रयत्नः कर्तव्य इति ( स चायुक्तः ) ।

**शा**— '**वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम् । होमादिभिः फलापेक्षा संस्कृतानां निवर्तिता** ॥' तस्माल्लौकिकः उपनिधेयः ।

**सोम**— वासःप्रभृतिषु संस्कृतवचनत्वनिराकरण-प्रसङ्गात् अग्निशब्दस्यापि संस्कृतवचनतानिराकरणात् संगतिः । **सूत्रार्थस्तु**— लौकिकं वैदिकं वा इति विशये लौकिकं स्यात् । कुतः ? सर्वार्थत्वात् , न तु वैदिकम् , अर्थनिर्देशात् होमादिप्रयोजननिर्देशेन निरा-काङ्क्षत्वात् । अत्र ( मूले ) 'न वैदिकमर्थनिर्देशात्' इति गुणसूत्रमपि एकीकृत्य लिखितम् । ( मुद्रकैस्तु तथा न मुद्रितमित्यन्यदेतत्— के. )

**वि**— 'वैदिको लौकिको वाऽग्निर्निर्णेयः, संस्कृते-र्वशात् । आद्यो , होमाय संस्कारो जात्यर्थत्वेन लौकिकः॥'

**भाट्ट**— गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य 'अग्निमुपनिधाय स्तुवीत' इति श्रुतम् । तत्राग्निः किं वैदिको लौकिको वेति चिन्तायाम् , यद्यपि द्वादशे (१२। २।१।१-७) आहवनीयादीनां योग्यतया लौकिकपाकाद्यर्थत्वं निरस्यते, तथापि 'यैरस्म्यधिकृतः यांश्च शक्ष्ये प्रयोक्तुम्' इति सामान्यवचनेन वैदिककर्ममात्रार्थत्वावगतेः वैदिक एव । इति प्राप्ते, 'आहवनीये जुहोति' इत्यादिविशेष-वचनानामुपलक्षणत्वे प्रमाणाभावात् 'यैरस्म्यधिकृतः' इत्यस्य च होमादिमात्रविषयत्वेऽपि सार्थक्यात् उप-निधानविधेश्च लौकिकाग्निग्रहणेऽपि चरितार्थतया आहव-नीयादीनाम् 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहि-ताग्नेरग्निरपक्षायति' इति वचनेन निषिद्धस्य आयतनात् चलनस्य आक्षेप्तुमशक्यत्वात् लौकिकाग्नेरेव ग्रहणम् । अत एव धिष्ण्याग्नीनामपि व्याघारणमात्रप्रयोजन-त्वात् अग्रहणम् । यदि परं व्याघारणोत्तरं लौकिकत्वा-विशेषात् उपस्थितत्वात् तेषामेव ग्रहणम् इत्याशङ्क्येत, तदा अस्तु नाम तत् ।

**मण्डन**— 'स्तोत्रे त्वसौ लौकिक एव वह्निः ।'

**शंकर**— 'स्तोत्रेऽग्निर्लौकिको मतः ।'

* गर्गत्रिरात्रे द्वितीयमहर्वामदेव्यपृष्ठम् । तत्र बृह-त्सामत्वाभावेऽपि शुक्राग्रत्वम् , अनैमित्तिकविधानात् । के. १०।५।२३. * **गर्गत्रिरात्रादिषु** द्वादशाहविकारेषु द्वितीयाद्यहःसु बृहत्सामत्वाद्यभावेऽपि शुक्राग्रताद्यनु-ष्ठानं फलति । **सोम.** १०।५।२३.

* **गर्दभः** पशुः ब्रह्मचारिणः अवकीर्णित्वे प्राय-श्चित्तत्वेनोक्तः । स च लौकिकेऽग्नौ । **वि.** ६।४।८.

⌛ **गर्दभेनापनीतं हि हरेन्नाश्वश्चिरादगतः इति न्यायः** । **वा.** १।३।३।३ पृ. १७८. ( गर्दभेन प्रथम-मागतेन घासादौ पदार्थे अपनीते सति गर्दभात् श्रेष्ठ-तमोऽपि अश्वः पश्चादागतश्चेत् नासौ घासादिपदार्थं लभेत । तथा अन्यत्रापि इति । **के.** )

⌛ **गर्दभरोमगणनान्यायः** । वैयर्थ्यबोधकोऽयम् । यत्र क्रिया निष्फला , तत्रास्य प्रवृत्तिः । **साहस्री.** ३०५.

* **गर्दभाभिधान्याम्** आदानस्येव वेदेः सर्वसाधा-रण्येन तत्कारणस्यापि अङ्गतया अपेक्षासहकृतपौर्णमास-प्रकरणेन आक्षेपोपपत्तेः । **भाट्ट.** ५।१।१६. * **गर्दभारूढ-** निर्णेजकधौतवस्त्रपरिधानमनाचारः उदीच्यानां दाक्षिणा-त्यानां च । ( रजकधौतवस्त्राणि जलबिन्दुभिः अभ्युक्ष्य शिष्टा उपयुञ्जते स्म ) । **वा.** १।३।३।७ पृ. २०४.

* **गर्भः** स्त्रीणां गुणः , तेन 'गार्भिण्यो भवन्ति' इत्यनेन स्त्रीपशून् दर्शयति । **भा.** ८।१।६।१७.

* **गर्भदासः** कर्मार्थ एव स्वामिनः, अनड्वांश्च क्रीयते वक्ष्यतीति ( वहेर्लृट् ) । **ननु** गर्भदासस्यापि स्वामी संविदधानो गुणभावमायात् । **नेति ब्रूमः** । आत्मन एवासौ संविदधानो गुणभावं गच्छति, नान्तरीयकत्वात् गर्भदासस्योपकरोति अनडुहो वा । **भा.** ३।१।२।२ । स हि उत्पत्त्यैव स्वाम्यर्थेन प्रसिद्धः अनड्वांश्च वहनार्थतया । न तु स्वामी तादर्थ्येनावगम्यते। न च गर्भदासाद्युद्देशेन तदुपकाराय प्रवृत्तिः, किं तर्हि ? स्वार्थसिद्धिप्रयुक्ता । **वा.** * **गर्भदासोपकारवत्** । द्वौ हि तत्र प्रयत्नौ चेतनद्वयसमवायिनौ । तत्र स्वामिनः प्रयत्नः स्वार्थमुद्दिश्य गर्भदासोपकाराय प्रवर्तते । गर्भ-दासोऽपि च स्वयोगक्षेमसमवहितस्वान्तवृत्तिरेव प्रवर्तते स्वाम्यर्थे । **कणिका.** पृ. ९४. * **गर्भदासरूपास्तु** शूद्राः स्वत्वात् सर्वस्वदाने दातुं शक्यन्ते । **के.** ६।७।५. * **गर्भदासादिस्वामिनि** अत्यन्ताविद्यमानमेव शेष-त्वम् उपकारकत्वसंभवात् उपचरितं द्रष्टव्यम् । **वा.** ३।४।४।१२. पृ. ९०५.



* '**गर्भाष्टमेऽब्दे** कुर्वीत ब्राह्मणस्योपनायनम् । गर्भादेकादशे राज्ञो गर्भात् तु द्वादशे विशः ॥' (मनुः) इयं गर्भसंस्कार्यतः वाचनिकी व्यवस्था । **बाल.** पृ. १९.

⌛ **गलेपादुकान्यायः** । यथा कस्य चित् गृहस्थस्य गृहे अन्नाद्यार्थित्वच्छलेनागतो निषण्णश्च कश्चिद्विटः । स्तेनं तत्त्वतो ज्ञात्वा गच्छगच्छेति पुनःपुनरुच्यमानोऽपि यदा धौर्त्येन स्वेच्छया गमनं न स्वीकरोति, तदा पादुका-सहितं पादं गले निधाय तोदयित्वा च बलान्निःसार्यते, तथा प्रकृतेऽपि । **साहस्री.** ३८४.

* **गलवेणिकाबन्धं** के चित् निवीतं स्मरन्ति , के चित् पुनः परिकरबन्धम् । तत्र गलवेणिकाबन्धः युद्धादन्यत्र न प्राप्नोति । परिकरबन्धस्तु सर्वकर्मसु अभ्यग्रताकरत्वात् प्राप्तः । **वा.** ३।४।१।२.

⌛ **गवाक्षेभ्यो निःसृतदीर्घप्रभान्यायेन** श्रोत्रादिभिर्द्वारैर्निःसृता साभासा बुद्धिः सदा प्रज्वलति । **उपदेशसाहस्री.** पद्यं १५।२१ रामतीर्थः.

* **गवादयः** एकाहाः सोमविकाराः दर्शपूर्णमासा-भ्याम् ऊर्ध्वमेव कर्तव्याः न प्राक् । **भा.** ५।४।९।२६. * गवादयः ( यागाः ) दर्शपूर्णमासाभ्यामूर्ध्वं प्राग् (वा) भवन्ति इति संप्रधारणा । तत्रानियमे प्राप्ते , उच्यते । नहि वचनमस्ति यत् प्राक्कालतां सोमस्य विदध्यात् दर्शपूर्णमासयोः । कुतस्तर्हि ? अर्थप्राप्तः । न चार्थप्राप्तं चोदकः प्रापयति । अथोच्येत , आधानानन्तरः सोमस्य कालो वचनादिति । न शक्यम् । प्रकृत्यवरुद्धो नहि संभवति विकृतेः । स हि यद्वा प्रकृत्या अवरोधनीयो यद्वा विकृत्या । तत्र यदि प्रकृतिर्नावरुणद्धि , विकृतेः प्राप्तिरेव नास्ति । प्रकृत्या चेदवरुद्धं सामर्थ्यादेव इतरासां नास्ति । तस्मादूर्ध्वं दर्शपूर्णमासाभ्यां गवादय इति सिद्धम्। **वा.** ५।४।९।२६.

* **गवादीनां** ( पशूनां ) चण्डालादिस्पृष्टानां स्नान-प्रक्षालनविध्यभावात् शुद्धिर्विज्ञायते । **वा.** १।३।२।३ पृ. १८२. * गवादीनां प्रतिग्रहे निषेधाभावात् नरकाख्यो दोषो नास्ति । **सु.** पृ. १४९१.

* **गवादिप्रशंसाऽर्थः** अपशुशब्दः 'अपशवो वा अन्ये गोअश्वेभ्यः' इति । **वि.** १।४।१६.

* **गवादिसाधनकाः** क्रयाः स्वरूपतो भिन्ना एव स्वीकर्तव्याः । **वि.** ३।१।६. * **गवादिसोमानां** काम्यानामनुष्ठाने पाठक्रमो न नियामकः, किन्तु काम एव नियामकः । **भा.** ५।३।१२।३२-३६.

* **गवानयनस्य** क्रयः प्रयोजकः, न पदकर्म । **वि.** ४।१।१०.

⌛ **गवामयनस्य दीक्षा माघ्याः पौर्णमास्याः पुरस्तात् चतुरहे, न चैत्र्याः ॥**

**पौर्णमास्यामनियमोऽविशेषात्** । ६।५।९।३० ॥

**भाष्यम्**— गवामयने श्रूयते 'पुरस्तात् पौर्णमास्या-श्चतुरहे दीक्षेरन्' इति । तत्र संदेहः कस्याः पौर्णमास्या इति । किं प्राप्तम् ? पौर्णमास्यामनियमः इति । कुतः ? अविशेषात् । नात्र कश्चित् विशेषवचनः शब्द उपादीयते ।

**आनन्तर्यात्तु चैत्री स्यात्** । ३१ ॥

**भाष्यम्**—तुशब्दः पक्षं व्यावर्तयति । नैतत् अनियम इति । चैत्री पौर्णमासी तु भवेत् । कुतः ? आनन्तर्यात् । पौर्णमासीमुक्त्वा अनन्तरं वाक्यशेषे चैत्री संकीर्त्यते । 'पुरस्तात् पौर्णमास्याश्चतुरहे दीक्षेरन् । ऋतुमुखं वैषा पौर्णमासी संवत्सरस्य , या चैत्री पौर्णमासी' इति । अत्र 'संदिग्धेषु वाक्यशेषात्' इति चैत्री नियम्येत ।

**माघी वैकाष्टकाश्रुतेः** । ३२ ॥

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति चैत्रीति । किं तर्हि ? माघी इति । कुतः ? एकाष्टकाश्रुतेः । क्रये हि एकाष्टकाश्रुतिर्भवति 'तेषामेकाष्टकायां क्रयः संपद्यते' इति । तस्मात् माघ्याः पुरस्ताच्चतुरहे दीक्षितस्य एकाष्टकायां क्रयः शक्यते कर्तुम् , न चैत्र्याः । तदेतत् सामर्थ्यं नाम लिङ्गम् , तत् वाक्यस्य बाधकं भवति । तस्मात् माघी पौर्णमासीति ।

**अन्या अपीति चेत्** । ३३ ॥

**भाष्यम्**— इति चेत् पश्यसि , माघी पौर्णमासी , एवम् एकाष्टकायां क्रयः संपत्स्यते इति । तन्न । सर्वा अपि अष्टम्य एकाष्टकाः, 'द्वादश एकाष्टकाः' इति । तेन न दोषः ।

**न, भक्तित्वादेषा हि लोके । ३४ ॥**

**भाष्यम्**-- नैतदेवम् । भाक्तो हि अन्यासु अष्टमीषु एकाष्टकाशब्दः । एषा हि मुख्या, या माघ्यां वृत्ता । मुख्यगौणयोश्च मुख्ये संप्रत्ययः । तस्मात् माघी एव पौर्णमासीति ।

**दीक्षाऽपराधे चानुग्रहात् । ३५ ॥**

**भाष्यम्**--'एकाष्टकायां दीक्षेरन्, एषा वै संवत्सरस्य पत्नी, यदेकाष्टका' इत्युक्त्वा पुनः 'चतुरहे पुरस्तात् पौर्णमास्याः' दीक्षां विधाय 'तेषामेकाष्टकायां क्रयः संपद्यते, तेन एकाष्टकां न छंबट् कुर्वन्ति' इति दीक्षातः प्रच्युतामेकाष्टकां क्रयेण तु गृह्णन् ( क्रयेणानुगृह्णन् इति चित्रलकरीये शुद्धः पाठः ) माघ्याः पौर्णमास्याः अधिकारं दर्शयति । अस्यां च माघ्यामष्टम्याम् अमीज्यमानायां भवति मन्त्रः 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥ अष्टकायै सुराधसे स्वाहा' इति । या असौ माघ्यष्टमी, तामेकाष्टकां दर्शयति ।

**उत्थाने चानुप्ररोहात् । ३६ ॥**

**भाष्यम्**— उत्थाने च अनुप्ररोहं दर्शयति 'तानुत्तिष्ठतः ओषधयो वनस्पतयोऽनूत्तिष्ठन्ति' इति वसन्ते उत्थानं दर्शयति । तस्मिन् ओषधयो वनस्पतयश्च उत्तिष्ठन्ति । तस्मादपि सा नियम्यते ।

**अस्यां च सर्वलिङ्गानि । ३७ ॥**

**भाष्यम्**--'आर्ते वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' इति । आर्ता यस्मिन् काले भवन्ति, स आर्तः कालः । शीतेन च आर्ता भवन्ति । तस्मात् माघी अष्टमी एकाष्टकेति । तथा 'व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' इति । अयनपरिवृत्तिः व्यस्तशब्देनोच्यते । तथा 'अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति' इति । चैत्र्यां दीक्षिता अभिनन्दन्तोऽभ्यवेयुः । तस्मादपि माघी पौर्णमासीति ।

**शा**-- दीक्षाप्रसङ्गात् इदमधिकरणम् ।

**सोम**-- अत एव आपस्तम्बाचार्यैः 'या माघ्याः पौर्णमास्या उपरिष्टादष्टमी, तामेकाष्टकेत्याचक्षते' इत्युक्तम् । १०.

**वि**—'गवामयन उक्ता या का चित् पूर्णिमाऽथवा । चैत्री माघ्युत, का चित् स्यादविशेषात् प्रशंसया ॥ चैत्री स्यात्, क्रय एकाष्टकायामित्युपवर्णितम् । माघकृष्णाष्टमी त्वेकाष्टकाऽतो माघपूर्णिमा ॥' १०.

**भाट्ट**-- गवामयने 'एकाष्टकायां दीक्षेरन्, एषा वै संवत्सरस्य पत्नी यदेकाष्टका' इत्युपक्रम्य 'आर्ते वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' 'व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते, य एकाष्टकायां दीक्षन्ते' 'अपो नाभिनन्दन्तोऽवभृथमभ्यवयन्ति' इत्यनेन तत्र दोषानभिधाय 'चित्रापूर्णमासे दीक्षेरन्, मुखं वा एतत्संवत्सरस्य यच्चित्रापूर्णमासस्तस्य न का चन निर्या भवति' इत्यनेन चैत्रीं स्तुत्वा 'चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्, तेषामेकाष्टकायां क्रयः संपद्यते, तेनैकाष्टकां न छम्बट् कुर्वन्ति' इति श्रुतम् । आर्ते दुःखयुक्तं शीतात् । व्यस्तम् अयनपरावृत्त्या । अपो नाभिनन्दन्ति शीतादेव । निर्या दोषः । छम्बट् रिक्तम् । अत्र जर्तिलयवागून्यायेन सर्वमिदमेकवाक्यमिति तावदविवादम् । अतश्चतुरहे इत्येव विधिः पयोहोमन्यायेन । तत्र पौर्णमासीवाक्यशेषे चैत्र्याः स्तुतत्वाच्चैत्र्येव । न च वाक्यशेषे एव उपक्रमोपसंहारयोः एकाष्टकाया माघ्युत्तराष्टमीरूपायाः परामर्शात् तस्याः क्रयसंपत्त्यनुग्राह्यत्वोक्तेश्च माघ्येव ग्राह्येति वाच्यम् । अष्टकाशब्दस्य कर्मविशेषनामतया तत्कालत्वेन अष्टम्यामष्टकाशब्दप्रयोगे 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' ( आश्वगृ. २।४।१ ) इति चतसृष्वपि तदष्टमीषु प्रयोगेण माघ्युत्तराष्टमीग्रहणे एव प्रमाणाभावात् 'द्वादश पौर्णमास्यो द्वादशैनाष्टकाः' इति श्रुत्यन्तरे सर्वत्रैव प्रयोगाच्च । अतश्चैत्र्युत्तराष्टम्या अपि तत्त्वानपायात् चैत्र्या एव पौर्णमासीपदेन ग्रहणात् तस्याः पुरस्ताच्चतुरहे एकादश्यां दीक्षा । इति प्राप्ते, वृद्धव्यवहारेण एकाष्टकाशब्दस्य माघ्युत्तराष्टम्यामेव प्रयोगात्, तस्याश्च संवत्सरपत्नीत्वेन उपक्रमे स्तुतत्वात्, माघ्युत्तराष्टमीस्थकर्माङ्गदेवतायाश्च 'यां जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् । संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥' इति तन्मन्त्रे संवत्सरपत्नीत्वेन संकीर्तनात् माघ्युत्तराष्टम्यामेव एकाष्टकात्वप्रतीतेः, तस्यां



क्रयसंपत्त्यनुरोधेन उपक्रमोपसंहारयोः श्रुतत्वेन माघ्या एव पौर्णमासीपदेन अभिधानात्, ततः पुरस्तादेकादश्यां दीक्षेति सिद्धम् । अत एव सर्वोऽयमर्थवादः एवं व्याख्येयः, यद्यपि दोषान्तराभावादेकाष्टकैव दीक्षायां प्रशस्ता, तथापि आर्तत्वव्यस्तत्वानभिनन्दकत्वरूपदोषत्रयात् तामतिक्रम्यापि चैत्र्येव परं प्रशस्ता, माघ्येकादशी तु तदपेक्षयाऽपि प्रशस्ततरा, एकाष्टकाया द्वादशदीक्षोत्तरं त्रयोदशदिनरूपायाः क्रयसंपत्त्यनुगृहीतत्वादिति । १०.

**मण्डन**-- 'माघी दीक्षासु पूर्णिमा ।' १०.

**शंकर**-- 'गव्यदीक्षा पुरा माघ्याः ।' १०.

* गवामयनस्य धर्माः सत्रेष्वतिदेष्टव्याः, संवत्सरसाध्यत्वषष्ट्युत्तरशतत्रयदिनसाध्यत्वपत्न्युपगानलिङ्गेभ्यः । वि. ८।१।११, * गवामयनस्य समूढद्वादशाहः प्रकृतिः । १०।५।२४, * गवामयने 'अभीवर्तो ब्रह्मसाम भवति' । अभीवर्तं नाम साम द्वयोर्ऋचोः पादप्रग्रथनेन गातव्यम्, न तु ऋक्त्रये । ९।२।६ वर्णकं ४. * गवामयने अह्नामुत्पत्तिं ताण्डकिशाखिनः समामनन्ति । प्रायणीयचतुर्विंशे आद्ये द्वे अहनी, ततश्चत्वारोऽभिप्लवाः एकः पृष्ठ्यः षडहः स एको मासः । तादृशाः पञ्च मासाः । ततः त्रयोऽभिप्लवाः षडहाः, एकः पृष्ठ्यः षडहः, अभिजिन्नामा एकाहः, त्रयः स्वरसामानः, इत्यष्टाविंशतिरहानि । आद्याभ्यां अहोभ्यां सह षण्मासाः । तदिदं पूर्वं पक्षः ( सान्तो नपुंसकोऽयं शब्दः ) । ततो विषुवान् । अथ उत्तरं पक्षः । त्रयः स्वरसामानः, विश्वजित्, पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः, त्रयोऽभिप्लवाः षडहाः इत्यष्टाविंशतिरहानि । पुनः पृष्ठ्यः षडहः त्रयस्त्रिंशारम्भणः त्रयोऽभिप्लवाः षडहाः स मासः । तादृशाः चत्वारो मासाः । ततः त्रयोऽभिप्लवाः, आयुर्गौः इति द्वे अहनी, द्वादशाहदशाहानि, महाव्रतं च अतिरात्रश्च इति द्वात्रिंशदहानि । आद्यैरष्टाविंशत्यहोभिः सह षण्मासाः । उत्तरे पक्षसि पूर्वस्य पक्षसः संबन्धिनामेव प्रायः यागानां प्रातिलोम्येनानुष्ठानम् । रत्न. १०।५।२५।८३. * गवामयने आद्ययोरह्नोः ऐन्द्रवायवाग्रता, प्रत्यक्षाम्नानात् । टुप्. १०।५।२५।८५ पृ. १९०९. * गवामयने आवृत्ते पृष्ठ्ये षडहे अनुपरतस्य पृष्ठ्यस्य आवृत्तिः । पराचि षडहे तु चतुर्भिरभिप्लवैर्व्यवधीयते । भा. १०।६।११।३१, * गवामयने उत्तरे पक्षसि 'आवृत्तं पृष्ठ्यं षडहमुपयन्ति' तत्र रसभोजनं द्वादशाहात् प्राप्तम् । तत् सर्वषडहान्ते सकृदेव, न प्रतिषडहान्ते । १०।५।१०। २९–३०. * गवामयने उत्तरे पक्षसि पृष्ठ्यषडहे 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति विहितं मधुभोजनं त्रिवृत्संनिधौ कर्तव्यम्, न तु त्रयस्त्रिंशसंनिधौ । तत्र हि त्रयस्त्रिंशः स्तोमः प्रथमेऽहनि, त्रिवृत्स्तोमश्च षष्ठेऽहनि । वि. १०।६।९. * गवामयने एकादशिनी ( पशूनाम् ) अभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्ध्या । भा. १०।५।२५।८३ । 'पुनः पर्यावृत्तेषु आग्नेयमेव प्रथमेऽहन्यालभेत' इति वचनात् परिवृत्तिः ऐकादशिनेषु । ८६. * गवामयने 'चतुरहे पुरस्तात् पौर्णमास्या दीक्षेरन्, तेषामेकाष्टकायां क्रयः संपद्यते' । एकादश्यां दीक्षा, पूर्णिमोत्तरं सप्तमीदिने द्वादश दीक्षाः पूर्यन्ते, अष्टम्यां सोमक्रयः । सा च पौर्णमासी माघी एव ग्राह्या, न याकाचित्, नापि चैत्री । माघकृष्णाष्टमी एकाष्टका इति याज्ञिकसमाख्या, तस्यां सोमक्रयः । वि. ६।५।१०, * गवामयने चत्वारः अभिप्लवाः षडहाः एकश्च पृष्ठ्यः षडहः स एको मासः । एवमुत्तरे चत्वारो मासाः । तत्र प्रतिमासमभ्याससमाप्तिः इति प्रतिमासान्ते मध्वशनम् । १०। ६।११. * गवामयने त्र्यनीका प्रत्यक्षेण वाक्येन विधीयते । टुप्. १०।५।२५।८५ पृ. १९८१. * गवामयने त्र्यनीकायाः स्वस्थानविवृद्ध्याऽभ्यासः । त्र्यनीकाऽधिकरणम् । भा. १०।५।२५।८३–८७.

**☒ गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन ब्रह्मसामगानम् ॥**

**प्रागाथिकं तु । ९।२।६।२५ वर्णकं ४ ॥**

**भाष्यम्** — एवं वा । गवामयने ब्रह्मसाम प्रकृत्य समामनन्ति 'चतुःशतमैन्द्रा बार्हताः ( १०४ ) प्रगाथाः । त्रयस्त्रिंशच्च सतोबार्हतास्तृचाः' इति । तत्र संदेहः किं द्वयोर्द्वयोर्ऋचोः प्रग्रथनं कृत्वा गातव्यम्, उत तिसृषु ऋक्षु गातव्यमिति । किं प्राप्तम् ? तिसृषु ऋक्षु इति । कुतः ? एवं प्रकृतौ श्रूयते 'तस्मादेकं साम तृचे

क्रियते ’ इति । तदिह चोदकेन प्राप्तम् । तस्मात् तिसृषु गातव्यमिति । **एवं प्राप्ते, ब्रूमः । प्रागाथिकं तु, स्वे च, प्रगाथे च ।** द्वयोर्द्वयोर्ऋचोर्गेयम् । एवं स्वे गानं कृतं भविष्यति । कस्मिन् स्वे ? प्रगाथे । कथं प्रगाथः स्वः ? विहितो हि गवामयने ब्रह्मसाम प्रकृत्य, तस्माद् ब्रह्मसाम्नः स्वः प्रगाथः । प्रगाथशब्देन च वचनात् स्वः प्रगाथ इत्युच्यते । **लिङ्गदर्शनाद्व्यतिरेकाच्च ।** भवति हि लिङ्गदर्शनम् । ‘ पञ्चसु मा:सु बार्हताः प्रगाथा आप्यन्ते ’ इति । तच्च प्रग्रथने युज्यते, न तृचगाने । कथम् ? चतुरुत्तरं हि शतं ते प्रगाथाः । तत्र बृहद्रथंतरयोः ज्योतिष्टोमे प्रगाथद्वयम् । नौधसकालेययोरपि तत्रैव प्रगाथद्वयम् । इन्द्रक्रतुः ( नाम ) प्रगाथः उत्तरस्मिन् पक्षसि भवति । ते एते नवनवतिः प्रगाथाः । शिष्टा अभिप्लवेषु कर्तव्याः । पृष्ठ्येषु सतोबृहत्यो विधीयन्ते । अभिप्लवानां तृतीये दिवसे सतोबृहत्यः । एवमविशिष्टानि अभिप्लवानां शतमहानि । तेषामन्त्ये सतोबृहत्यः । अन्येषु नवनवतौ दिवसेषु ‘ नवनवतिः प्रगाथा आप्यन्ते ’ इति लिङ्गमपि उपपन्नं भवति । तृचे पुनर्गाने क्रियमाणे षट्षष्टिस्तृचाः त्रिषु सप्ताधिकेषु मासेषु समाप्येरन् । तदेतस्माल्लिङ्गदर्शनात् प्रगाथे गानं कर्तव्यमिति मन्यते । **आह, अथ** कस्मान्न प्रथमतृचे गानं कृत्वा ततः तस्मात्तृचात् एकामृचमादाय अन्ये द्वे ऋचौ गृहीत्वा तृचे गानं क्रियते, तथाहि तृचगानप्रापी चोदकोऽनुगृहीतो भवति । लिङ्गं चोपपत्स्यते ‘ पञ्चसु मा:सु बार्हताः प्रगाथा आप्यन्ते’ इति । **उच्यते,** अव्यतिरेकेण लिङ्गं दर्शयति ‘ अन्याअन्या ऋचो भवन्ति, तदेव साम ’ इति । तस्मात् द्वयोर्द्वयोर्ऋचोः प्रग्रथनं कृत्वा गानं कर्तव्यमिति ।

**शा**-- ‘ अन्याअन्या ऋचो भवन्ति ’ इति वचनात् नैकस्यामृचि द्विर्गानं संभवति । तस्मात् द्वयोः प्रग्रथनम् ।

**सोम**-- इह तिसृषु गानेऽपि प्रगाथसमाख्या उपपद्यते इत्युत्थानात् **संगतिः** ।

**वि**--- ‘चतुःशते (१०४) प्रग्रथनमृचः पादस्य वा, ऽग्रिमः । तृचे मुख्यत्वतो, मैवमृगन्यत्वस्य वर्णनात् ॥’

**भाट्ट**— एवं वा । गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके अशीतिशतं ( १८० ) पूर्वे पक्षः, तथोत्तरम्, मध्ये विषुवान् । तत्र पूर्वस्मिन् पक्षसि प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयम्, चत्वारोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः स मासः, स द्वितीयः, स तृतीयः, स चतुर्थः, स पञ्चमः, त्रयोऽभिप्लवाः षडहाः एकः पृष्ठ्यः षडहः, अभिजिन्नामा एकाहः, त्रयः स्वरसामानः इति अष्टाविंशतिरहानि आद्याभ्यामहोभ्यां सह षण्मासाः ।

गवामयनप्रकरणे ब्रह्मसामस्तोत्रावान्तरप्रकरणे च ‘ चतुःशतमैन्द्रा बार्हताः प्रगाथाः’ इति श्रुतम् । तत्र किं तिसृषु ऋक्षु गानम्, उत द्वयोः प्रग्रथनेन इति चिन्तायाम्, प्रगाथस्मरणात् प्रग्रथनेनैव इति सिद्धान्तः । प्रग्रथनं च रौरवादिवत् द्विरावृत्त्या बोध्यम् । एवं च पञ्चसु मा:सु ‘ बार्हताः प्रगाथा समाप्यन्ते ’ इति लिङ्गमपि उपपद्यते । तथाहि, सत्यपि ब्रह्मसामस्तोत्रावान्तरप्रकरणे ‘ त्रयः प्रगाथाः न ब्राह्मणाच्छंसिस्तोत्रस्थाः, अपितु बृहद्रथंतरकालेयस्तोत्रीया इन्द्रक्रतुश्च अन्यत्रस्थानाः’ इति वाक्यात् अवान्तरप्रकरणं बाधित्वा ज्योतिष्टोमात्मकप्रथमदिनस्थस्तोत्रान्तरेष्वेव निविशन्ते भाष्यलेखनात् । **छन्दोगसूत्रानुसारात्तु** चतुर्विंशस्तोमकद्वितीयदिनस्थस्तोत्रान्तरेष्वेव । तत्रापि पवमाने रथंतरस्य प्रगाथः, होतुः पृष्ठे बृहतः, अच्छावाकस्य पृष्ठे कालेयस्य इत्येवं बोध्यम् । एवं उक्तवचनादेव इन्द्रक्रतुप्रगाथोऽपि उत्तरस्मिन् सर्वस्मिन् पक्षसि । एतस्य च ब्रह्मसामस्तोत्रस्थत्वेऽपि, तत्र अभीवर्तसामाभावात् ‘ अभीवर्तादन्यत्रस्थानाः’ इति वचनार्थो न विरुध्यते । अवशिष्टाः शतं प्रगाथाः । तत्र शतस्य एकः भाष्यकारलेखनात् प्रथमदिनीयब्रह्मसामस्तोत्रे । परन्तु भाष्यकारीयं नौधसग्रहणं नौधसस्मारकब्राह्मणाच्छंसिस्तोत्रोपलक्षणार्थम् । वस्तुतः तस्य बृहत्सामकपृष्ठवत्त्वेन श्यैतस्यैव प्रसक्तौ नौधसप्रसक्त्यभावात् । गवामयने अभीवर्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च । **छन्दोगसूत्रानुसारात्तु** द्वितीयदिनीयब्रह्मसामस्तोत्रे शतस्यैकः प्रगाथो बोध्यः । अवशिष्टा नवनवतिप्रगाथाः, ते पञ्चसु मासेषु यावन्तोऽभिप्लवाः तेषां



प्रतिषडहं तृतीयदिनवर्जं प्रतिमासं विंशत्यहानि पञ्चसु मासेषु शतम् । तेषु उत्तमवर्जं नवनवतिप्रगाथाः इन्द्रदेवत्याः बृहतीछन्दस्काश्च समाप्यन्ते । षडहतृतीयेषु उत्तमे च सतोबृहतीनां तृचानामाम्नानात् । अत एव ‘ तान्येकविंशतिर्दिनानि, षष्ठमासस्य आद्यानि द्वादश, इत्येवं त्रयस्त्रिंशतं सतोबार्हतास्तृचाः ’ इति वाक्येन तेषां सतोबृहतीनां विधानम् । एवं पञ्चममासपर्यन्तं पृष्ठ्यषडहेष्वपि सतोबृहतीनां विधानं भाष्यकारलेखनात् अवगन्तव्यम् । शेषेषु तु अहःसु विशेषवचनाभावे तिसृणामुष्णिहां त्रिभिर्गायत्रीपादैः संयोगेन बृहतीत्रयसंपादनम् । न तु क्वापि ब्रह्मसामस्तोत्रे प्रगाथः । तदेतत् ‘ पञ्चसु मास्सु बार्हताः प्रगाथाः समाप्यन्ते ’ इति लिङ्गं द्वयोः प्रग्रथने उपपद्यते, न तु तृचगाने क्रियमाणे भाष्यलेखनात् । अष्टोत्तरशतद्वयसंख्याकानाम् ऋचां पञ्चप्रगाथसंपादकदशर्ङ्न्यूनत्वात् अष्टनवत्यधिकशतावशिष्टानां षट्षष्टिः तृचा भवन्ति । ते च सप्ताधिकेषु त्रिषु मासेषु समाप्येरन् । तथाहि, पूर्वोक्तरीत्या प्रतिमासं दशदिनानां सतोबृहतीछन्दस्कत्वात् विंशतिदिनानि अवशिष्टानि । तानि मासत्रयेण षष्टिः संपद्यन्ते । अवशिष्टानि षट् चतुर्थमासस्य अभिप्लवतृतीयवर्जम् उपादेयानि, इति सप्ताधिकेषु त्रिषु मासेषु समाप्तिः स्यात् । यदा तु तुल्यन्यायत्वात् पञ्चस्वपि प्रगाथेषु मुख्यतृचे गानम्, तदा पञ्चदशानामृचां न्यूनत्वात् अवशिष्टाः त्रिणवतिशतम् ऋचः, तासां तृचाः चतुःषष्टिरेका च ऋक्, इति पञ्चाधिकैः त्रिभिर्मासैः तृचसमाप्तावपि एका ऋगवशिष्यते इति तद्वैयर्थ्यं च । सर्वथा लिङ्गानुपपत्तिः, प्रगाथशब्दानुपपत्तिश्च । **न च** एकं तृचं पठित्वा, अन्त्यामृचं पुनरुपादाय अग्रिमऋग्द्वयपाठः इत्येवम् ऋक्प्रग्रथनमेव किं न स्यादिति **वाच्यम्** । ‘ अन्याअन्या ऋचो भवन्ति ’ इतिवचनेन तन्निरासात् । अतः पादप्रग्रथनमेवेति सिद्धम् । इयं च लिङ्गानुपपत्तिः भाष्यकारलेखनानुसारात् प्रकरणे एव तावत्संख्याकऋक्पाठमङ्गीकृत्य । यदा तु ‘ चतुःशतमैन्द्रा बार्हताः प्रगाथाः दाशतयीषु ’ इति कल्पसूत्रकारवचनात् दाशतयीभ्यः समानयनम्, तदा पूर्वपक्षिणोऽपि चतुःशतं तृचानामेव समानयनोपपत्तेः लिङ्गोपपत्तिरविकलैव । इति प्रगाथपदादेव प्रग्रथनम् ।

**मण्डन**-- ‘ द्वयोः प्रगाथे गातव्यम् । ’ ११.

**शंकर**--- ‘गव्ये चैन्द्रेषु स (प्रगाथः) द्वृचे ।’ ११.

* गवामयने द्वयोर्मासषट्कयोर्मध्ये विषुवन्नामकं प्रधानभूतमेकमहः । ततः प्राचीनाः स्वरसामनामकाः अहर्विशेषास्त्रयः । तथा उपरिष्टादपि त्रयः स्वरसामानः । तेषां स्वरसाम्नां ग्रहसातत्यसप्तदशस्तोमादयो धर्मा विहिताः । वि. ७।३।१०, * गवामयने द्वादश दीक्षाः । ८।१।१०. * गवामयने द्वादशाहिकं द्वादशोपसत्त्वं धर्मं दर्शयति ‘ द्वाभ्यां लोमावद्यति ’ इत्यादिना । **भा.** ८।१।१०।१७, * गवामयने द्वादशाहिकं प्रथममहः प्रायणीयोऽतिरात्रः । तस्य धर्मो द्वादशोपसत्त्वम् । ७।४।३।१९, * गवामयने द्वादशाहिको विध्यन्त इति वक्ष्यति ( ८।१।१७ ) । ७।४।३।१३. * गवामयने धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन् पक्षसि निविशन्ते । अतश्च पूर्वे पक्षो नवधा विभज्य नवापि त्र्यनीकानि निवेशनीयानि । तत्र चान्त्ये भागे आग्रयणाग्रता भवति । उत्तरस्मिंश्च पक्षसि यत् पूर्वस्मिन् पक्षसि विहितं तत् प्रातिलोम्येनानुष्ठेयम् । **शा.** १०।५।२५ पृ. ७३९. * गवामयने नामधेययुक्तेषु अहःसु अविरुद्धा धर्माः द्वयेऽपि कर्तव्याः । विरुद्धास्तु नामधेयप्रापिताः । विरुद्धा अपि असुत्याकाला ये सर्वेषामह्नां तन्त्रेणानुष्ठेया धर्माः, ते भूयोऽनुग्रहन्यायेन चोदकप्रापिता एव कर्तव्याः, न नामप्रापिताः । **सोम.** ७।४।२. * गवामयने पूर्वे पक्षसि त्रयस्त्रिंशान्तः पृष्ठ्यः षडहः । उत्तरे पक्षसि च प्रातिलोम्येन त्रयस्त्रिंशादिः पृष्ठ्यः षडहः । **वि.** १०।६।९. * गवामयने पृष्ठ्यः षडहः प्रतिमासम् (चतुर्भिरभिप्लवैः) सव्यवधान आवर्तते । तस्मिन्नावर्तमाने रसभोजनमपि प्रतिमासमावर्तते । **भा.** १०।६।११।३१. * गवामयने ‘ पृष्ठ्यः षडहो बृहद्रथंतरसामा ’ । तत्र प्राकृतवैरूपादीनां निवृत्तिः । तत्र च पूर्वपक्षसि प्रथमतृतीयपञ्चमेषु रथंतरं गातव्यम्, द्वितीयचतुर्थषष्ठेषु अहःसु बृहत् गातव्यम् । उत्तरपक्षसि तदेव वैपरीत्येन गातव्यम् । **सोम.** १०।६।३.

**卐 गवामयने पृष्ठ्ये षडहे बृहद्रथंतरयोः प्रत्यहमेकैकस्यैवानुष्ठानम् ॥**

**पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् । १०।६।३।४ ॥**

**भाष्यम्**— इदमाम्नायते 'पृष्ठ्यः षडहो बृहद्रथंतरसामा ' इति । तत्र अयमर्थः सांशयिकः किं अहरहः द्विसामकं कर्तव्यम्, उत केषु चित् अहःसु रथंतरम्, केषु चित् बृहत् इति । कुतः संशयः ? यदि एते समस्ते सामनी यदि विभक्ते, उभयथा पृष्ठ्यः षडहो बृहद्रथंतरसामा इति शब्दः अवकल्पते । तत्र एष विचारः किं द्वंद्वगर्भो बहुव्रीहिरयं बृहद्रथंतरे सामनी यस्य इति, उत अनेकपदो बहुव्रीहिः बृहत् अस्य रथंतरं अस्य इति । यदि द्वंद्वगर्भो बहुव्रीहिः प्रत्यहं समस्ते सामनी, अनेकपदे बहुव्रीहौ विभक्ते इति । किं तावत् प्राप्तम् ? समस्ते इति । ततः एतत् वर्ण्यते द्वंद्वगर्भो बहुव्रीहिः इति । कुतः ? बृहद्रथंतरशब्दयोः आनन्तर्यात् वृत्तिपक्षस्य आश्रितत्वात्, वृत्तिपक्षे च समासस्य नित्यत्वात् । द्वंद्वे च स्वार्थाभिधानात् श्रुत्यनुग्रहः अन्तरङ्गता च । इतरथा च उभयमपि बाध्येत । अतो द्वंद्वगर्भो बहुव्रीहिः । एवं चेत् प्रत्यहं समस्ते सामनी भवेताम् । कुतः ? इतरेतरयोगद्वंद्वस्य भावात् । यत्र रथंतरम्, तत्र बृहत्सहितम् । स एव युगपद्विधिः, यत् इतरेतरयोगः । तस्मात् प्रत्यहं समस्ते इति । एकाहवत् । यथा ' ज्योगामयाविनः उभे कुर्यात् ' ' संसवे उभे कुर्यात् ' ' अपचितावपि एकाहे बृहद्रथंतरे कुर्यात् ' इति ।

**टुप्**— किं द्वंद्वगर्भो बहुव्रीहिरयम्, अथवा अनेकपदविशिष्टः इति ( संशयः ) । तत्र पूर्वः पक्षः । बृहच्छब्द उच्चरितः संबन्धिनमपेक्षते, रथंतरशब्दोऽपि । तयोः ( आनन्तर्येण उच्चरितत्वात् प्रथमं तावत् आनन्तर्येण ( द्वंद्वलक्षणः ) संबन्धः ( भवति ) पश्चात् अस्यशब्देन । ' वृत्तिपक्षस्य आश्रितत्वात् ' इति ( भाष्ये ) वृत्तिशब्देन समासं ब्रवीति । सः प्रागन्यपदार्थसंबन्धात् ( बहिरङ्गात् ) द्वंद्वसमासो भवति, पश्चात् अन्यपदार्थसंबन्धः । ननु ' विभाषा ' (पा०२।१।११) इत्यनेन ( अधिकारेण ) वैकल्पिकः समासः स्यात् ( न नित्यः ) । तत्र यदा वाक्यम् ( आश्रितम् ), तदा अन्यपदार्थसंबन्ध एव ( भवति ), न अवान्तरसंबन्धः ( द्वंद्वनिमित्तः इतरेतरयोगाख्यः ) । यदा समासः ( आश्रितः ) तदा ( अवान्तरसंबन्धः ) लभ्यते । ( तत्र वाक्यं समाश्रीयतां समासो वा इति- ) एतस्मिन् द्वैते ( प्रत्येकसाधनत्वप्राप्ति– ) चोदकसामर्थ्यात् वाक्यमेव आश्रयामो न समासम् इत्याशङ्कां निराकर्तुम् '**वृत्तिपक्षे च समासस्य नित्यत्वात्** ' ( इत्यनेन भाष्यकारः–) नित्यं समासं प्रतिपादयति ईदृशेषु ( वाक्येषु ) । कथम् ( नित्यत्वम् ? उत्तरम् – ) एवमाह ( कात्यायनः ) ' द्वंद्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ' ( तद्धितार्थोत्तरपदेति सूत्रे पा० २।१।५१ वार्तिकम् । उदाहरणमाह–द्वंद्वे– ) वाक्त्वचप्रियः, ( तत्पुरुषे– ) पञ्चगवधनः दशगवधनः इति । यदि पूर्वं समासो न क्रियेत, तथा सति अप्रयोगः (समासान्तस्य) प्राप्नोति (अप्रयोगोऽपि कदा चित् स्यादित्यर्थः ) । तस्मात् ( समासस्य नित्यत्वात् ) द्वंद्वभाविनोः ( ययोर्द्वंद्वः संभवति, तयोः ) पूर्वपदयोः अवान्तरसमासः ( द्वंद्वः ) नित्यः इति ।

**विभक्ते वाऽसमस्तविधानात् तद्विभागेऽविप्रतिषिद्धम् । ५ ॥**

**भाष्यम्**— न च एतदस्ति अहरहः द्विसामकमिति । केषु चिदहःसु रथंतरम्, केषु चित् बृहत्, न समस्ते सामनी विधीयेते । कुतः ? यदि उभयोरपि पक्षयोः ' बृहद्रथंतरसामा ' इति शब्दः अवकल्पते, विभक्ते सामनी इति न्याय्यम् । कुतः ? प्रकृतौ एकेन साम्ना पृष्ठं साधितम्, विकृतावपि एकेन साधितव्यं चोदकानुग्रहाय । तथा च सति बृहन्निमित्तं रथंतरनिमित्तं च सकलम् अभिनिर्वर्तयिष्यते । अथ बृहद्रथंतरसमुदायः पृष्ठं साधयति, न बृहत् साधनम्, न रथंतरं साधनमिति तत् निमित्तं न प्रकल्पेत । तत्र चोदकोपरोधः स्यात् । न केवलं तन्निमित्तं न प्रकल्पते, बृहत्पृष्ठताऽपि न प्रकल्पते, रथंतरपृष्ठताऽपि । तत्र वैषम्यात् स्यात् अन्यदेव प्रयोगान्तरम् । अपिच समस्तं पृष्ठमिति उपचर्यमाणे लक्षितम्, बृहत् पृष्ठं भवति, रथंतरं पृष्ठं भवतीति, तत् असमुदायाभिधाने लिङ्गम् । अपिच बृहच्छदः सामशब्देन संबन्धमपेक्षमाणो न रथंतरशब्देन संबद्धः स्यात् । आनन्तर्ये च तुल्यं रथंतरशब्दस्य सामशब्देन । अपिच वृत्तिपक्षाश्रये सुतरां द्वंद्वपदेन असामर्थ्यम् । न चैष नियोगो वृत्तिपक्षे नित्यः समास इति । विभाषां हि स्म भगवान् पाणिनिरधीते । सामशब्दश्रुतिश्च बृहद्रथंतरयोर्लक्षणताम् आचष्टे । तस्मादसमस्ते सामनी स्यातामिति । एतच्चोक्तमेव विभागेऽपि साम्नोः अविप्रतिषिद्धो बृहद्रथंतरसामशब्द इति । यथा ' मासं घृततैलाभ्यां देवदत्तो भोजयितव्यः ' इत्युक्ते अर्धमासं घृतेन अर्धमासं तैलेन, एवमपि शब्दः अवकल्पते । एकाहे तु एकत्वादेव विभागासंभवात् समस्ते, 'ज्योगामयाविन उभे कुर्यात् ' इति ।

**सोम**— पूर्वत्र वीक्षणस्य अर्थप्राप्तत्वात् अविधेयत्वेऽपि इह समुच्चयस्य अप्राप्तत्वात् विधेयत्वम् इत्युत्थितेः **संगतिः** । बृहद्रथंतरोभयसामत्वेऽत्र प्रथमे तृतीये पञ्चमे च रथंतरम्, द्वितीये चतुर्थे षष्ठे च बृहत् इति नियम एव । **सूत्रार्थस्तु**— पृष्ठ्यस्य बृहद्रथंतरस्य युगपद्विधौ संसवगोसवाद्येकाहवत् एकैकस्मिन्नहनि सामद्वयं स्यादिति । न च द्वंद्वगर्भबहुव्रीहौ बृहद्रथंतरशब्दस्य अन्तोदात्तत्वम्, अनेकपदबहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण बृहच्छब्दाकारस्य उदात्तत्वम् इति स्वरभेदात् यः समासः अध्ययनसिद्धस्वरानुगुणः, स एव ग्राह्यः इति कथमयं विचार इति वाच्यम् । वेदे बहुषु स्थलेषु स्वरव्यत्ययदर्शनेन स्वरमात्रात् अर्थनिर्णयासंभवेन न्यायत एव अर्थनिर्णयस्य वाच्यत्वात् । अन्यथा पूर्वोत्तरपक्षयोः समासभेदेन प्रवृत्तानां बहूनामधिकरणानामनुन्मेषप्रसङ्गात् ।

**वि**— ' गावामयनिके पृष्ठ्यषडहे प्रत्यहं द्वयम् । बृहद्रथंतरं चोत भवेत् किं चित् क चिद्दिने ॥, द्वंद्वगर्भबहुव्रीहेराद्यो, ऽन्त्येऽपि समो ह्यसौ । अन्योन्यनिरपेक्षस्य चोदकादन्तिमो भवेत् ॥ '

**भाट्ट**—द्वादशाहे रथंतरबृहद्वैरूपवैराजशाक्वररैवताख्यषट्सामयुक्तः पृष्ठ्यः षडहः समाम्नातः । गवामयने च ' पृष्ठ्यः षडहो बृहद्रथंतरसामा कार्यः ' इति श्रुतम् । तेन च वैरूपादीनां निवृत्तिरित्यविवादम् । निवर्तकं च किं समुच्चितं बृहद्रथंतरम्, उत एकैकम् ? इति **चिन्तायाम्**, अस्य द्वंद्वगर्भबहुव्रीहित्वात् द्वंद्वेन च बृहद्रथंतरयोः परस्परसाहित्यावगतेः एकैकस्मिन् अहनि द्वयोः संसवादिवत् समुच्चयप्रतीतेः समुच्चितमेव निवर्तकम् । समासेन च समुच्चयविशिष्टयोरेव विधेयषडहविशेषणत्वेन विधानान्न विधेयानेकता उद्देश्यानेकता एकप्रसरताभङ्गो वा । **न च** अस्य शुद्धत्रिपदबहुव्रीहितयाऽपि उपपत्तेः अतिदेशप्राप्तनिरपेक्षसाधनत्वानुरोधेन एकैकस्मिन् अहनि एकैकस्यैव करणप्रतीतेर्न समुच्चितयोर्निवर्तकता इति **वाच्यम्** । 'द्वंद्वतत्पुरुषयोरुत्तरपदे नित्यं समासवचनम्' इति कात्यायनवचनेन त्रिपदबहुव्रीहौ द्वंद्वस्यावश्यकत्वात् । **न च** अस्य यत्र द्वंद्वाभावेऽन्यथारूपम्, द्वंद्वकरणे चान्यथा यथा वाक्त्वचप्रिय इति द्वंद्वकरणे । तथात्वे समासान्तत्वसिद्ध्या तन्निमित्तटच्–प्रत्ययकरणेन वाक्त्वचम् इति रूपसिद्धेः । अन्यथा द्वंद्वाकरणे वाक्त्वक्प्रिय इति रूपापत्तेः । तत्र टच्प्रत्यययुक्तरूपस्यैव साधुत्वं नान्यस्येति वक्तुं द्वंद्वविधायकत्वम्, अपेक्षितविधेर्न्याय्यत्वात् । न तु प्रकृते उभयथाऽपि रूपस्याविशेषेण द्वंद्वविधिप्रयोजनाभावादिति मूलोक्तं युक्तमिति **वाच्यम्** । प्रकृतेऽपि शुद्धबहुव्रीहिपक्षे पूर्वपदप्रकृतिस्वरत्वापत्तेः, द्वंद्वकरणे चान्तोदात्तत्वप्राप्तेः स्वरविशेषस्यैव प्रयोजनत्वात् । अतो द्वंद्वस्यावश्यकत्वात्, तेन च साहित्यप्रतीतेः सहितयोरेव निवर्तकता । **इति प्राप्ते**, द्वंद्वावगतसाहित्यस्य षडहापेक्षयाऽपि उपपत्तेः अतिदेशप्राप्तपृष्ठस्तोत्रगतनैरपेक्ष्यबाधेन तन्निरूपितत्वकल्पने प्रमाणाभावेन नैकैकस्मिन्नहनि उभयोः समुच्चयः । किञ्च नात्र पूर्वं द्वंद्वं कृत्वा पश्चाद्बहुव्रीहिः, तथात्वे द्विपदबहुव्रीहेरेवापत्तौ उत्तरपदे इत्यस्य असंगतत्वापत्तेः । उत्तरपदशब्दो हि व्याकरणे व्यवह्रियते । तद्यदि बहुव्रीहिः पूर्वम्, ततस्तदन्तरूपे उत्तरपदे निमित्ते द्वंद्वो विधीयेत, नान्यथा । अत एव **पार्थसारथेः** पूर्वं द्वंद्वोक्तिरपास्ता । अतश्च पूर्वं त्रिपदबहुव्रीहिं कृत्वा पश्चात् प्रयोजनसिद्ध्यर्थं द्वंद्वविधिः । तेन बहुव्रीहिवेलायामन्यपदार्थे परस्परानन्वितयोरेव बृहद्रथंतरयोः अन्वयात्, पश्चादवगम्यमानसाहित्यस्य च षडहापेक्षयाऽपि उपपत्तेः नैकस्मिन् दिने तयोः समुच्चयः । अत एव अतिदेशानुरोधात् ' आद्ये रथंतरं द्वितीये बृहत् '

इत्येव क्रमावगतेः द्वंद्वावगतः क्रमोऽपि अल्पान्तरत्वादेव व्याख्येयः ।

**मण्डन**--' प्रत्यहं न द्विसामत्वम् ।'

**शंकर**--' पृष्ठ्ये साम्नोर्विभज्योक्तिः ।'

**§ गवामयने पृष्ठ्यषडहान्ते वैकल्पिकमध्वशनघृताशनयोरनुष्ठानम् ॥**

**पृष्ठ्ये रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात् तदानन्तर्यात् प्रकृतिवत् । १०।६।९।२७ ॥**

**भाष्यम्**-- क्व चित् कर्मविशेषे श्रूयते , ' पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः ' इति । द्वादशाहे वचनं ' संस्थिते पृष्ठ्ये षडहे मध्वाशयेद् घृतं वा ' इति । तदिदं मध्वशनं घृताशनं च चोदकप्राप्तं सत् संदिह्यते किं त्रयस्त्रिंशान्ते कर्तव्यम्, उत षडहान्ते इति । किं प्राप्तम् ? ततः सूत्रेणैवोपक्रमः, पृष्ठ्ये रसभोजनमावृत्ते षडहे त्रयस्त्रिंशेऽहनि संस्थिते कार्यम् । कुतः ? तदानन्तर्यात् । प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं वृत्तम्, प्रकृतिवदिहापि कुर्वाणो यदि त्रयस्त्रिंशानन्तरं करोति, चोदकमनुगृह्णाति । अथ तु अन्यस्याह्नोऽनन्तरं कुर्यात् चोदकं बाधेत । आनन्तर्यं हि क्रमः । स च विशेषसंबन्धे कारणमिति समधिगतम् । एतदानन्तर्यं च रसभोजनस्य त्रयस्त्रिंशेन सह दृष्टमिति । अतस्त्रयस्त्रिंशानन्तरं क्रियते इति ।

**अन्ते वा, कृतकालत्वात् । २८ ॥**

**भाष्यम्**— न चैतदस्ति त्रयस्त्रिंशानन्तरं रसभोजनमिति । किं तर्हि ? षडहान्ते स्यात् । कुतः ? संस्थिते षडहे इत्युच्यते, न संस्थिते त्रयस्त्रिंशे इति । षडहाभिगमलक्षिते पर्यवसाने, न त्रयस्त्रिंशाद्युपलक्षिते । षडहश्च षट्सु अहःसु पर्यवसितो भवति, नैकस्मिंस्त्रयस्त्रिंशे अहनि । यदुक्तं त्रयस्त्रिंशानन्तर्यदर्शनात् प्रकृतिवदिहापि तदानन्तर्ये एव भोजनेन भवितव्यमिति । नैतद्युक्तम् । तत्र हि अर्थात् त्रयस्त्रिंशानन्तर्यं वृत्तम् । कुतः ? तस्मिन्नहनि तत्र द्वादशाहे षडहः पर्यवसित इति । इहापि यत्र पर्यवस्यति, तत्र भोजनं भविष्यति । ततः षडहावसानलक्षितेन भोजनस्य संबन्धः संस्थिते षडहे इति, न त्रयस्त्रिंशावसानलक्षितेनेति । यत्तु क्रमः कारणं विशेषसंबन्ध इति, सत्यं कारणम्, न तु बलीयसा प्रमाणेन यत्र विरुध्यते । इह तु वाक्येन षडहावसाने विधीयते इत्युक्तम् । तस्माद्वाक्येन विशेषसंबन्धे सति न आनन्तर्यमात्रं कारणम् । अतः षडहान्ते भोजनं स्यादिति ।

**शा**-- सिद्धान्तस्तु-- ' द्वादशाहाङ्गता ह्यस्य गम्यते प्रक्रियावशात् । वाक्याद्वा षडहाङ्गत्वं त्रयस्त्रिंशाङ्गता क्रमात् ॥ ' तस्मात् षडहान्ते रसभोजनं स्यात् ।

**सोम**— पूर्वत्र चोदकप्राप्तविकल्पबाधेऽपि इह तत्प्राप्तक्रमस्य न बाधः इत्युत्थितेः **संगतिः** । **सूत्रे**– रसभोजनं मध्वशनं घृताशनं वा आवृत्तेः प्रातिलोम्येनानुष्ठीयमाने इत्यर्थः ।

**वि**-- ' त्रयस्त्रिंशारम्भणे किं तदन्ते मधुभोजनम् । षडहान्तेऽथवा, ऽऽद्यः स्यात् सांनिध्याद्, वाक्यतोऽन्तिमः ॥ '

**भाट्ट**-- प्रकृतौ द्वादशाहे 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः' इति षडहः श्रुतः । तस्य गवामयनोत्तरे पक्षसि प्रातिलोम्ये त्रयस्त्रिंशस्य आद्यत्वम् । प्रकृतौ च ' संस्थिते षडहे मध्वाशयेत् घृतं वा ' इति श्रुतम् । अत्र च विकल्पविशिष्टघृतमध्वशनभावनाविधानात् न वाक्यभेदः । तदिदं प्रकृतौ त्रयस्त्रिंशान्ते कृतमपि अत्र त्रिवृदन्ते एव कार्यम्, प्रकृतौ त्रयस्त्रिंशस्यैव षडहान्तत्वेन तदन्तत्वस्य आर्थिकत्वात् । ' संस्थिते षडहे ' इत्यनेन षडहान्तत्वस्यैव विधेयत्वाच्च । नहि इदम् अनुष्ठानसादेश्यात् त्रयस्त्रिंशाङ्गम्, येन विकृतौ तदन्ते एवापद्येत, अपि तु वाक्यात् वैमृधन्यायेन षडहाङ्गम् । अनुष्ठानसादेश्यस्य वाक्येन बाधात् । अत एव न संस्थाऽङ्गत्वमपि शङ्कनीयम्, संस्थाया उपरमरूपाया अनुपयोगेन अनुद्देश्यत्वात् । अत एव संस्थायाः क्तप्रत्ययोपात्तभूतकालोपलक्षकत्वम्, ' पुत्रे जाते ' इतिवद्वा निमित्तत्वमेव । अतश्च हविरार्तिन्यायेन निमित्तविशेषणतया अन्वितस्यापि षडहस्य उपस्थितत्वात् वैमृधवत् पदान्तरकल्पनया तदङ्गत्वमेव । यत्तु **भाष्यकारेण** प्रकरणात् द्वादशाहाङ्गत्वमित्युक्तम्, तद्वैमृधेऽपि



तदापत्तेः **उपेक्षितम्** । यदपि तेन मध्वशनस्य यां च यावतीं च मात्रां तृप्तिजननात् तदुत्तरकर्तव्यपदार्थोपकारकत्वप्रतीतेः द्वादशाहाङ्गत्वमित्युक्तम् , तदपि तथात्वे तादृशद्वित्रिपदार्थमात्राङ्गत्वापत्तेः **उपेक्षितम्** । सर्वथा गवामयने त्रिवृदुत्तरमेव मध्वशनम् ।

**मण्डन**--' षडहान्ते चाशनं स्यात् ।'

**शंकर**— ' षडहान्ते मध्वशनम् ।'

* गवामयने प्रथममहः प्रायणीयम् , द्वादशाहे च प्रथममहः प्रायणीयम् , अनयोः प्रकृतिविकृतिभावो नास्ति, इति न धर्मातिदेशः । वि. ७।३।२. * गवामयने प्रायणीयातिरात्रे ज्योतिष्टोमिको विध्यन्तः । टुप् . ७।४।३।१९. * गवामयने महाव्रताख्ये उपान्त्ये अहनि ' पत्नय उपगायन्ति ' । तत्र उपगातृपत्नीभिः प्राकृतानामुपगातॄणां न बाधः । दुन्दुभिगानान्नामिदमुपगानम् । वि. १०।४।६, * गवामयने ये त्रयः स्वरसामानः, तेषां धर्माः, अष्टरात्रे यौ अन्तिमौ स्वरसामानौ , तत्रातिदिश्यन्ते । ७।३।१०.

**§ गवामयने विजातीयषडहव्यवधानेन पृष्ठ्यषडहावृत्तौ मध्वशनादेरपि आवृत्तिः ॥**

**आवृत्तिस्तु व्यवाये कालभेदात् स्यात् । १०।६। ११।३१ ॥**

**भाष्यम्**— गवामयने श्रूयते ' चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः स मासः, स द्वितीयः, स तृतीयः, स चतुर्थः, स पञ्चमः' (इति) । तत्रैतत् चोदकेन प्राप्तम् 'संस्थिते पृष्ठ्ये षडहे मधु आशयेत् घृतं वा ' इति । तत्र संदिह्यते किं प्रतिमाससमावर्तते रसभोजनम्, उत सर्वान्ते सकृदेव कार्यमिति । किं पुनर्युक्तम् ? उक्तेन न्यायेन सकृदिति । सर्वान्ते हि असौ षडहगतात् व्यापारात् उपरमते , न प्राक् । अर्वाक् असौ कृत्वाऽपि षडहं पुनः षडहाय प्रवर्तते एव । न चासौ षडहः संस्थितो भवति , यदि पुनः तदर्थं प्रयतते एव । सर्वान्ते तु न पुनः प्रयतते इति । अतः सर्वान्ते कुर्यात् इत्येवं प्राप्तम् । **एवं प्राप्ते , ब्रूमः** । आवृत्तिस्तु व्यवाये कालभेदात् स्यात् । आवृत्तिः रसभोजनस्य स्यात् , न सकृत् क्रिया । कुतः ? निमित्तावृत्तेः । षडहसंस्था निमित्तम् । स च षडहः पुनरावर्तते । तस्मिन् आवर्तमाने संस्था निमित्तम् आवर्तते , इत्यत आवर्तेत । यदुक्तं सर्वान्ते हि असौ षडहात् उपरतो भवति , न प्राक्, कृत्वाऽपि असौ पुनः तदर्थं प्रयतते एवेति , **अत्राभिधीयते** । यद्यपि असौ पुनः प्रवर्तते, तथापि तं परिसमाप्य पुनरारभते । पुनश्च परिसमापयति , न यथा आवृत्ते षडहे । तत्र हि अनुपरतस्य पृष्ठ्यस्य आवृत्तिः । इह चतुर्भिः अभिप्लवैः व्यवधीयते । तेन उत्तरक्रियाऽन्तरव्यवधानात् पृष्ठ्यगतो व्यापारः पर्यवसितः, इति गृह्यते विशेषः । न च तस्मिन् अपर्यवसिते क्रियाऽन्तरं शक्यं कर्तुम् । उभयप्रकारश्च अन्तः क्रियायाः, कृत्वा औदासीन्यम् , क्रियाऽन्तरव्यवधानं चेत्युक्तमेव । तस्मात् प्रतिमासं सव्यवधानः पृष्ठ्यः आवर्तते । तस्मिन् आवर्तमाने संस्थानिमित्तं भोजनमपि आवर्तते इति । अतः प्रतिमाससमावर्तते इति ।

**शा**-- यत्र गवामयनादौ अभिप्लवादिभिर्व्यवेतस्य पृष्ठ्यषडहस्याभ्यासः, तत्र निमित्तभूतसंस्थाऽऽवृत्तेः नैमित्तिकस्य मध्वशनस्यावृत्तिः ।

**सोम**— पूर्वापवादात् **संगतिः** ।

**वि**— ' सर्वान्ते प्रतिमासं वा पृष्ठ्यान्ते मधुभोजनम् ।, सर्वान्ते पूर्ववत् , मैवं संस्थितानां पृथक्त्वतः ॥ '

**भाट्ट**-- यत्र गवामयनादौ षडहान्यैरहोभिर्व्यवहितः पृष्ठ्यः षडहः, तत्र आद्यषडहोत्तरमपि व्यापारान्तरकरणेन तदुद्देश्यकव्यापारोपरमसत्वात् मध्वशनस्यापि आवृत्तिः । अत्राभिप्लवषडहस्यापि द्वादशाहिकषडहविकारत्वात् तत्रापि मध्वशनप्राप्तेः तेन व्यवधानोक्तिः **पार्थसारथेश्चिन्त्या** ।

**मण्डन**--' प्रतिमासं तदावृत्तिः ।'

**शंकर**--' पुनःपुनर्व्यवाये तु ।'

* गवामयने वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति । भा.७।३।२।५. * गवामयने समूढद्वादशाहत्र्यनीका चोदकप्राप्ता । त्र्यनीकायाश्चावृत्तिः कर्तव्या । सा च क्रमयुक्तानाम् अग्रत्वविशेषोपेतानां नवानामह्नां चोदकप्राप्तानां तथैवानुष्ठाने पुनःपुनश्चोदकेन तथैव प्राप्तेः दण्डकलितवदावृत्तिः इति पूर्वपक्षः । प्रायणीयोदयनीयान्तरालपूर्तिस्तावत् कर्तव्या । सा च स्वस्थानविवृद्ध्यैव कर्तव्या । अन्तरालं नवधा विभज्य

प्रथमभागगतेषु अहःसु ऐन्द्रवायवाग्रत्वम्, द्वितीयभागगतेषु शुक्राग्रत्वम्, तृतीयभागगतेषु आग्रयणाग्रत्वम्, पुनरप्येवम् इति क्रमेणानुष्ठानं कर्तव्यमिति **भाष्यसंमतः** सिद्धान्तः। पूर्वस्य पक्षस्य नवधा विभागं कृत्वा विंशतिसुत्यात्मके एकैकस्मिन् भागे एकैकाग्रता इति स्वस्थानविवृद्धिः इति **वार्तिकानुसारी** सिद्धान्तः। **वि.** १०।५।२५.

*** गवामयनाङ्गेषु** ज्योतिरादिषु अहःसु नाम्ना एकाहरूपज्योतिरादिधर्मेषु चोदकाच्च द्वादशाहधर्मेषु प्राप्तेषु चोदकबलीयस्त्वात् द्वादशाहधर्माः कार्याः, नामबलीयस्त्वाद्वा एकाहधर्माः इति संदिग्धे, प्रत्येकं फलसाधनत्वाभावेन नामावगतप्रात्यात्मिकधर्मानाकाङ्क्षत्वात्, अविरुद्धाधिकधर्मातिदेशकत्वे च नामोपपत्तेः, द्वादशाहिकद्वादशोपसत्त्वैकादशिनीविहारदर्शनाभ्यां च लिङ्गाभ्यां चोदकानुग्रहेण द्वादशाहिकधर्मातिदेशे **प्राप्ते**, फलवाक्ये साधनभूतानामह्नां साहित्यावगमेऽपि उत्पत्तिवाक्येषु प्रत्येकमेव साधनत्वावगमात् धर्माकाङ्क्षोपपत्तेः, नाम्नां च प्रत्यक्षत्वेन आनुमानिकात् यागत्वाव्यक्तचोदितत्वाहर्गणत्वाद्यनेकलिङ्गापेक्षात् चोदकात् बलीयस्त्वात्, ज्योतिरादिनाम्नां च यागवाचित्वेन अधिकधर्मातिदेशकत्वायोगात्, एकाहरूपज्योतिरादिधर्मातिदेशः सिद्धान्तितः सप्तमान्त्ये (७।४।३) अधिकरणे। **सु. पृ.** ७३०-३१.

**ऋ गवामयनादौ पृष्ठ्यषडहावृत्तौ सर्वषडहान्ते सकृदेव मध्वशनम्, न तु प्रतिषडहान्तम्॥**

**अभ्यासे च तदभ्यासः, कर्मणः पुनः प्रयोगात्। १०।६।१०।२९॥**

**भाष्यम्**— 'आवृत्तं पृष्ठ्यं षडहमुपयन्ति' इति श्रूयते। तत्र एतत् चोदकेन प्राप्यते 'संस्थिते पृष्ठ्ये षडहे मधु आशयेत् घृतं वा' इति। तत् संदिह्यते किं षडहावृत्त्या आवर्तेत भोजनम्, उत षडहान्ते सकृदेव क्रियेत इति। किं प्राप्तम्? षडहावृत्तौ सत्याम् आवर्तेत भोजनम्। कुतः? कर्मणः पुनःपुनः प्रयोगात्। तत् हि कर्म पुनरावर्तते। तदावृत्त्या यदपि तत्संबद्धम्, तदपि आवर्तेत यथा स्तोमशस्त्रादि षडहसंबद्धमावर्तते, एवं षडहसंबन्धि भोजनमपि आवर्तेत इति।

**अन्ते वा, कृतकालत्वात्। ३०॥**

**भाष्यम्**— न चैतदस्ति यदुक्तम् 'षडहावृत्त्या भोजनमपि आवर्तेत' इति। किं तर्हि? षडहान्ते सकृदेव अनुष्ठीयेत। कुतः? कृतकालत्वात्। कृतो हि भोजनस्य कालः 'संस्थिते षडहे' इति। संस्थानं पर्यवसानं षडहगतस्य व्यापारस्य उपरमः। न च पुनः षडहं कुर्वाणः षडहगतात् व्यापारात् उपरत इत्युच्यते। न च अनुपरतौ कर्तुः षडहः संतिष्ठते। संस्था हि क्रियां प्रति औदासीन्यं व्यापारान्तरकरणं वा पूर्वस्मात् कर्मणः। न च पुनः षडहं कुर्वाणः औदासीन्यं भजते, न वा व्यापारान्तरं करोति, तस्यैव कर्मणः आवृत्तिं करोति। अतः अपर्यवसितः। अपर्यवसिते च संस्थाऽभावात् अश्रुतमेव प्राशनम् इति न क्रियते। यदुक्तम् 'यथा अन्ये षडहधर्माः स्तोत्रशस्त्रादयः आवर्तन्ते, तद्वत् प्राशनमपि आवर्तेत' इति, नैतत् युक्तम्। ते हि अहःसंबद्धाः, तेषामह्नाम् आवृत्तिः, इति स्तोत्रादीनामावृत्तिः इति युक्तम्। नहि ते अहःसु अवसानसंयोगेन चोद्यन्ते। इह तु अवसानसंयोगेन भोजनस्य चोदना इत्युक्तो हेतुः। तस्मात् न भोजनस्य आवृत्तिर्युक्ता इति। अपिच यद्येतत् भोजनं षडहाङ्गं भवेत्, ततः प्रधानावृत्त्या आवर्तेत। न चैतदङ्गम्। कुतः? अङ्गत्वप्रत्यापकस्य कारणस्य अभावात्। प्रकरणात् अङ्गता स्यात्, वाक्यसंयोगाद्वा, प्रत्यक्षोपकारदर्शनाद्वा। एतेषां चेह न किञ्चित् कारणं पश्यामः। प्रकरणं तावत् द्वादशाहस्य, न षडहस्य। वाक्यसंयोगोऽपि 'संस्थिते षडहे' इति षडहस्य संस्थायां भोजनमाचष्टे। संस्थितश्चैवं षडहो भवति, यदि अस्य न किञ्चिदपरमङ्गजातं परिशिष्यते। न च मध्वशनघृताशने प्रत्यक्षेण उपकुरुतः षडहस्य। कुतः? निवृत्ते करणात्। कामं यया च यावत्या च तर्पणमात्रया कर्तृणां यानि परस्तात् कर्माणि वर्तन्ते, तेषां सामर्थ्योपजननेनोपकुर्यात्, नातिवृत्तस्य षडहस्येति। यान्यपि क्रमादीनि कारणानि, तान्यपि प्रमाणान्तरसंबन्धमुपादाय विशेषसंबन्धे कारणानि भवन्ति, न केवलानि। तस्मात् षडहावसानलक्षिते काले पुरुषाणां भोजनक्रिया विधीयते इत्यतो न आवर्तेत भोजनमिति।



**शा**— (रसभोजनस्य षडह-) अङ्गत्वनिराकरणं तु भाष्ये अतिशयोक्तमिति नातीवादर्तव्यम्।

**सोम**— पूर्वोक्तषडहाङ्गत्वोपजीवनात् **संगतिः**। **सूत्रार्थस्तु**— 'आवृत्तं पृष्ठ्यमुपयन्ति' इति यत्र षडहाभ्यासः, तत्र मध्वशनस्याप्यभ्यासः स्यात्, कर्मणः पुनः प्रयोगात् इति।

**वि**— 'अभ्यासे षडहे भुक्तिमभ्यस्येत् किं न वा, ऽग्रिमः। स्तोत्रशस्त्रादिवत्, मैवं संस्थिते तद्विधानतः॥'

**भाट्ट**— यत्र 'आवृत्तं षडहमुपयन्ति' इत्यादौ नैरन्तर्येण षडहावृत्तिः श्रुता, तत्र सर्वान्ते एव मध्वशनम्, षडहसंस्थायाः षडहविषयकव्यापारोपरमरूपायाः सर्वान्ते एव सत्त्वात्। अतः प्रतिषडहं निमित्ताभावादेव तस्याकरणम्। नहि अत्र प्रयोगसमाप्तिः तदुत्तरकालतामात्रं वा संस्थापदार्थः, येन प्रतिषडहान्ते तत्सत्त्वात् आवर्तेत मध्वशनम्। व्यापारोपरमवाची तु संस्थाशब्दो वृद्धव्यवहारात्। न च षडहे कर्तव्ये तदुद्देश्यकव्यापारोपरमः संभवति। अतः सर्वषडहान्ते सकृदेव मध्वशनम्।

**मण्डन**— 'नावृत्तिरशनस्य तु।'

**शंकर**— 'सकृत् तत् षडहे पुनः।' तत् मध्वशनम्।

*** गवाश्वादिशब्दा** जातिवाचकाः। पाठकादिशब्दास्तु क्रियाप्रवृत्तिनिमित्तकाः। **वि.** ७।३।११.

*** गवीधुकाः** आरण्यगोधूमाः। (कशेड कशाड इति कोङ्कणप्रदेशे तादृशस्य तृणविशेषस्य नाम) 'अनाहुतिर्वै जर्तिला गवीधुकाश्च'। **वि.** १०।८।४.

*** गव्यम्** इति गवामयनं ब्रूमः गोसंबन्धात् 'गावो वा एतत् सत्रमासत' इति। तस्य धर्माणामतिदेशः 'आदित्यानामयनम्' इत्यादिषु सत्रेषु। **भा.** ८।१।११।१८.

**ऋ गव्यस्य च तदादिषु। ८।१।११।१८॥**

गव्यमिति गोशब्दात् संबन्धसामान्ये अत्र यत्प्रत्ययः। 'गावो वा एतत् सत्रमासत' इति गवामयनस्य सत्रस्य गोसंबन्धात्। तदादिषु इति तत् गव्यं सत्रम् आदिः येषां तानि तदादीनि आदित्यानामयनं इत्यादीनि सत्राणि। अतद्गुणसंविज्ञानो बहुव्रीहिः। तदादिषु आदित्यानामयनम् इत्यादिषु सत्रेषु गव्यस्य गवामयनस्य विध्यन्तः स्यात्, संवत्सरसामान्यात्। 'पत्नय उपगायन्ति' इति माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति, 'ऋत्विज उपगायन्ति' इति च संवत्सरसत्रे। ततश्च गवामयनं संवत्सरसत्राणां प्रकृतिः। **के.**

*** गानम्** उद्गानम्। अन्यत् हि गानम्, अन्यदुद्गानम्। गीतिमात्रं गानं लौकिकं वैदिकं च। द्वितीयं साम्नः पर्व उत्पूर्वस्य गायतेरभिधेयं प्रसिद्धम्। **भा.** ३।५।८।२६. ***** गानम्, उपगानम्, काण्डवीणाभिः पत्नीनामुपगानम्, दुन्दुभिगानम्, शारीरगानम्, तन्त्रीगानम्। **वि.** १०।४।६. अत्र गानम् उद्गातारः कुर्वन्ति। तत्साहाय्यम् उपगानं नाम ऋत्विजः होशब्देन यजमानश्च ओशब्देन कुर्वन्ति। काण्डवीणाभिः नाम वाद्यविशेषैः पत्नयः उपगायन्ति। दुन्दुभिध्वानः एव दुन्दुभिगानं महाव्रते। शारीरगानं शरीरावयवैः कण्ठादिभिः गायकैः कृतं गानम्। इति अनेके गानप्रकाराः प्रदर्शिताः। **के.** ***** गानम् एकत्रिके क्रतौ एकस्या एव ऋचः त्रिरभ्यासेन धुर्ये। **भा.** १०।५।३।१०-११, ***** गानम् एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे आद्ये एव निखिले तृचे। अन्त्यलोपाधिकरणम्। १०।५।२।७-९. ***** गानं ज्योतिष्टोमे यज्ञायज्ञीये गिरापदस्थानापन्ने इरापदे कर्तव्यम्। **वि.** ९।१।१९. ***** गानं त्रैशोकसाम्नो द्वादशाहे उत्तरग्रन्थपठितयोर्बृहत्योरेव। अतिजगतीषु इति बहुवचनं तु प्रथमाया अतिजगत्याः ससकृत्वोऽभ्यासात्। **भा.** ९।२।५।२१-२४ वर्णकं २, ***** गानं प्रत्यृचं परिसमाप्तं कर्तव्यं तृचे कर्तव्यमपि। ९।२।३।२०, ***** गानं बृहद्रथंतरयोः स्वयोन्युत्तराप्रग्रथनेन संपादितककुभोरेव ज्योतिष्टोमे। ९।२।६।२५-२८, ***** गानं ब्रह्मसाम्नः गवामयने द्वयोर्द्वयोर्ऋचोः प्रग्रथनेन। ९।२।६।२५-२८ वर्णकं ४, ***** गानं महाव्रते श्रूयते 'पत्नय उपगायन्ति, पिच्छोलाभिरुपगायन्ति, काण्डवीणाभिरुपगायन्ति, आपाटलिकाभिरुपगायन्ति' इति। प्रकृतौ ऋत्विज उपगायन्ति। १०।४।५।८, ***** गानं योनिसाम्नः उत्तरावर्णवशोनोत्तरयोर्ऋचोः। ९।२।९।३२-३३, ***** गानं रथंतरादिसाम्नां तृचे। १०।६।१।१-२, ***** गानं रौरवयौधाजय-

साम्नोः बृहतीविष्टारपङ्क्त्योरेव प्रग्रथनेन संपादिते बार्हते तृचे कार्ये ज्योतिष्टोमे । ९।२।६।२५–२८ वर्णकं २, * **गानं** श्यावाश्वान्धीगवसाम्नोः अनुष्टुप्–गायत्रीद्वय-प्रग्रथनेन ( एका अनुष्टुप् ततो गायत्रीद्वयम् इति तिसृणां प्रग्रथनेन ) संपादिते आनुष्टुभे तृचे कार्यम् । ९।२।६।२५–२८ वर्णकं ३, * **गानं** समानच्छन्दस्कास्वेव तिसृषु ऋक्षु । ९।२।४।२१–२२, * **गानं** स्वयोनावेव, न रथंतरादियोनौ कण्वरथंतरस्य वैश्यस्तोमे पृष्ठस्तोत्र-साधनतया विहितस्य । १०।४।२२।४३–४६ । उत्तरयोरपि स्वयोन्युत्तरयोरेव, न रथंतराद्युत्तरयोः । १०।४।२३। ४७–४८. * **गानं** स्वरादिविशेषानुपूर्वीमात्रम् ऋगक्षर-व्यतिरिक्तम् । **वि.** ७।२।१. * **गानस्य** उपांशुता आधाने । **भा.** ३।३।२।९. * **गानस्य** फलं दृष्टम् ऋगक्षराणां स्वरविशिष्टत्वाकाराभिव्यक्तिः । **वि.** ९।२।२, * **गानस्य** संस्कारकर्मत्वम्, न तु मुख्यत्वम् । ९।२।२. * **गानकर्मणो** वाचकः सामशब्दः इति सिद्धम् । **भा.** ९।२।१।१, * **गानकाले** साम्नाम्, ज्योतिष्टोमे बृहद्रथंतरधर्माणां व्यवस्थया अनुष्ठानम् । ९।२।१५। ४६–४७, * **गानशब्दो** हि शारीर्यां गीतौ प्रसिद्धः । १०।४।५।८ । भवति च तन्त्रीगाने गानशब्दः । ९, * **गानशास्त्रम्** औक्थिक्यम् अनर्थकं स्यात् इति वृत्तिकारः ( शास्त्रं चैवमनर्थकं स्यात् इति सूत्रस्यार्थम् ) मेने । ७।२।१६.

⧗ **गायत्रमेतदहर्भवति इति न्यायात्** आनुष्टुभम् इति अनुष्टुप्छन्दउपाधिकं ऋग्विशेषमाह । **नृ. पू. भा.** १।१ । एतत् बृहस्पतिसवाख्यमहः एकाहसाध्यं कर्म, गायत्रं गायत्रीच्छन्दस्काभिर्ऋग्भिः साध्यम् इत्यक्षरार्थः । * ' गायत्रमेतदहर्भवति ' इति वचनात् बृहस्पतिसवे दाशतयीभ्यः उत्पत्तिगायत्रीणामागमः कर्तव्यः, न तु प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपेन गायत्रीत्वसंपा-दनम् । **भा.** ८।३।६।१२–३६.

* **गायत्रं** साम ज्योतिष्टोमे प्रातःसवने ' उपास्मै गायत ' ' दविद्युतत्या ' ' पवमानस्य ते ' इति त्रिषु तृचेषु गीयते । **वि** १।४।३ । माध्यंदिने पवमाने ' उच्चा ते जातम् ' इति गायत्रे तृचे गेयम् । आर्भवपवमाने च ' स्वादिष्ठया मदिष्ठया ' इति गायत्रे तृचे गेयम् । ९।२।६ वर्णकं २.

* **गायत्रचितं** चिन्वीत ब्रह्मवर्चसकामस्य, त्रिष्टुप्चितं वीर्यकामस्य, जगतीचितं पशुकामस्य । **संकर्ष.** २।१।३७. * **गायत्रच्छन्दसः** इति सोमभक्षमन्त्रगतं पदम् अनेकच्छन्दस्केऽपि सोमे स्यात् । **भा.** ३।२।१८।४२–४३, * **गायत्रविकारात्मकानि** सामानि धूर्गानशब्दे-नोच्यन्ते ' गीतिविकारो गात्रयस्य धुरः' इति वचनात् । **सोम.** १०।५।३. * **गायत्रादीनि** बहूनि सामानि ज्योतिष्टोमे । २।३।१।१ पृ. ५७२.

* **गायत्री** छन्दःसु मुख्या, प्रजापतेर्मुखतः सृष्ट-त्वात् । **वि.** १।४।१४. * **गायत्री** त्रिपदा । पादेषु अक्षराणि ८।८।८. उदा० ' अयं देवाय ' ( ऋसं. १।२०।७ ) । **के.**

⧗ **' गायत्री पुरोऽनुवाक्या भवति ' इत्येवमादि-लक्षणानि अनुपदिष्टयाज्याऽनुवाक्यासु विकृतिषु ज्ञेयानि ॥**

दर्शपूर्णमासप्रकरणे ' गायत्री पुरोऽनुवाक्या भवति, त्रिष्टुब् याज्या ' ' त्रिपदा पुरोनुऽवाक्या भवति, चतु-ष्पदा याज्या ' ' पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति, उप-रिष्टाल्लक्ष्मा याज्या ' ' मूर्धन्वती पुरोऽनुवाक्या भवति, नियुत्वती याज्या ' इत्येवंजातीयकानि बहूनि वाक्यानि श्रूयन्ते । ' अग्निर्मूर्धा० ' इत्येषा ऋक् त्रिपदा गायत्री, प्रथमपादे एव देवतापदवती मूर्धपदवती च । ' भुवो यज्ञस्य ' इति तु चतुष्पदा त्रिष्टुप्, उत्तरार्धे देवतापदवती नियुत्पदवती च । एवमन्या अप्यृचो यथासंभवं वर्तन्ते । तेनैनयोरेव क्रमप्रकरणाभ्यां प्राप्ताङ्गताकयोर्ऋचोः स्तावकानि नित्यानुवादरूपाणि वाक्यानीमानि । इति प्राप्ते, क्रमादिना तत्तद्व्यक्तित्वस्य अङ्गताऽवच्छेदकत्वेन बोधितस्य बाधेन गायत्रीत्वादिधर्माणामङ्गताऽवच्छेदकत्व-बोधनेन सार्थक्यसंभवेन केवलं नित्यानुवादः । तेन भावनासंस्पर्शेन विवक्षिततया आर्थिकत्वाभावेन चोदकत-स्तेषामपि अतिदेशे यस्यां विकृतौ एतद्विरुद्धा ऋचः आम्नाताः तत्र उपदेशेनैव अतिदेशबाधः । यास्तु अनाम्नातयाज्याऽनुवाक्याका विकृतयः, तत्र सति संभवे



आनीयमाना ऋचश्चोदकातिदिष्टधर्मका एवानेया इति सिध्यति, तेन धर्माणां विकृतौ संभवत्समुच्चयो यथायथं बोध्यः । **संकर्ष.** ४।३।४.

⧗ **गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात् संख्यातत्वादग्निष्टोमवदव्यतिरेकात् तदाख्यत्वम् । ८।३।६।१२ ॥**

उपचयश्चिन्तितः, इदानीमपचयश्चिन्त्यते । बृहस्पति-सवे समाम्नातम् ' गायत्रमेतदहर्भवति ' इति । प्रकृतौ च गायत्रीत्रिष्टुब्जगत्यो भवन्ति, बृहस्पतिसवे तु गायत्र्य एव । तत्र गायत्री चतुर्विंशत्यक्षरा, त्रिष्टुप् चतुश्चत्वारिं-शदक्षरा, जगती च अष्टाचत्वारिंशदक्षरा । अथ बृह-स्पतिसवे सर्वा गायत्र्यः कथं कर्तव्याः ? किं त्रिष्टुप्सु विंशतेरक्षराणां लोपं कृत्वा, जगतीषु च चतुर्विंशतेरक्षराणां लोपं वा कृत्वा द्वेधा भित्त्वा वा इति । अथवा दाशतयीभ्यः उत्पत्तिगायत्रीणाम् आगमं कृत्वा इति स्यान्मतिः । तथा च लोपो वा आगमो वा इति विचारे पूर्वपक्षमाह । बृहस्पतिसवे गायत्रीषु कर्तव्यासु प्राकृतीनां ज्योतिष्टोम-गतानां त्रिष्टुभां जगतीनां च अवच्छेदः अक्षरलोपः स्यात् । त्रिष्टुब्जगतीनाम् अधिकाक्षराणां लोपं कृत्वा गायत्र्यः संपादनीयाः । प्रकृत्यधिकारात् प्रकृतेः सकाशात् बृहस्पतिसवे त्रिष्टुब्जगतीनां चोदकेन प्राप्तत्वात् । **ननु** प्रत्यक्षश्रुतेन गायत्रीशब्देन त्रिष्टुब्जगत्यो बाधिताः स्युः । **नैवम्** । ' गायत्रम् ' इति गायत्रीशब्दस्य संख्यात्वात् संख्यावाचकत्वात् । गायत्री नाम चतुर्विंशतिः । कथम् ? अव्यतिरेकात् गायत्रीशब्दस्य चतुर्विंशतिसंख्यया व्यति-रेकः व्यभिचारः नास्ति यतः । संख्यात्वात् अव्यतिरेकात् गायत्रीशब्दस्य तदाख्यत्वं चतुर्विंशतिसंख्यावाचकत्वम् । अग्निष्टोमवत् । यथा ' शताग्निष्टोमम् ' इत्युक्ते द्वादशा-हिकानामह्नामुक्थ्यस्तोत्रावलोपः, एवमत्र गायत्री इत्युक्ते त्रिष्टुब्जगतीनामक्षरावलोपः । तस्मात् त्रिष्टुभां जगतीनां च अक्षरावलोपं कृत्वा गायत्र्यो निष्पादनीयाः । इति पूर्वः पक्षः ।

**तं नित्यवच्च पृथक् सतीषु तद्वचनम् । १३ ॥**

गायत्रीशब्दः चतुर्विंशतिसंख्यावाचकः इति पूर्वपक्षे हेत्वन्तरमाह । तं गायत्रीशब्दं नित्यवत् नियमेन संख्या-मात्रं ब्रुवन्तं मत्वा, तद्वचनं गायत्रीवचनं गायत्रीशब्दः पृथक् सतीषु गायत्रीभ्यो भिन्नासु जगतीषु भवति ' ये हि द्वे गायत्र्यौ सैका जगती ' इति । यदि संख्यायां गायत्रीशब्दः, ततो जगत्यां द्वे चतुर्विंशतिसंख्ये इति एतद्वचनमुपपन्नं स्यात् । अथ ऋचि, ततो द्वे ऋचौ जगत्यां न स्तः, इति तद्वचनमनुपपन्नं स्यात् । एवं ' तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति ' इति । तस्मात् संख्यायामेष गायत्रीशब्दः ।

**न विंशतौ दशेति चेत् । १४ ॥**

सिद्धान्ती शङ्कते । विंशतौ संख्यायां दश संख्या न विद्यते । न संख्या संख्याऽन्तरे विद्यते । एवमष्टा-चत्वारिंशत्संख्यायां चतुर्विंशतिसंख्या नास्ति । तस्मात् एका जगती द्वे गायत्र्यौ इत्येतदनुपपन्नमेव इति । अथवा अन्योऽर्थः । न इति पृथक् वाक्यम् । न अक्षरा-वलोपः कर्तव्यः, यद्यपि गायत्रीशब्दः संख्यायां स्यात् । यतः विंशतौ दश विद्यन्ते । द्वौ दशकौ एका विंशतिः । येन विंशतिः उपात्ता, उपात्ता एव तेन दश भवन्ति । एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्ता एव तेन तदन्तर्गता गायत्र्यो भवन्ति । तस्मादविकारेण प्रयोगः । एवं चोदकानुग्रहश्च भवति, गायत्रं चाहः कृतं भवति । इति ।

**ऐकसंख्यमेव स्यात् । १५ ॥**

न संख्यायां संख्या विद्यते, अष्टाचत्वारिंशत्संख्यायां चतुर्विंशतिसंख्या न विद्यते इति शङ्कायां पूर्वपक्षी उत्तर-यति । संख्यायां संख्या वर्तते इति न ब्रूमः । किन्तु अष्टाचत्वारिंशत्संख्यापरिच्छिन्नेषु अक्षरेषु अवयवभूते द्वे चतुर्विंशतिसंख्ये वर्तेते, न तु द्वे ऋचौ इति ब्रूमः । न च संख्या संख्याऽन्तरं निवर्तयति । यदि निवर्तयेत् ऐकसंख्यमेव स्यात् । यस्य दश गावः, तस्य द्वौ पञ्चकौ गवाम्, इति वचनं न स्यात् । भवति च तत् वचनम् । अथवा, उत्तरस्यां संख्यायामुपात्तायां न पूर्वाः संख्याः उपात्ता भवन्ति । यदयम् ' एका च दश च शतं च सहस्रं च परार्धं च ' इति सर्वाः संख्या अनुक्रामति । यदि च उत्तरस्यां संख्यायामुपात्तायां पूर्वाः संख्या उपात्ता भवेयुः, ऐकसंख्यमेव स्यात्, एकैव परार्धम् इति संख्या भवेत् । सा हि सर्वाभ्य उत्तरा । तस्मान्नोत्तरस्यां पूर्वा

उपात्ता भवन्ति इति । सर्वथाऽपि बृहस्पतिसवे प्राकृतीनां त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वा गायत्र्यो निष्पादनीयाः संख्यायां च गायत्रीशब्दः इति पूर्वः पक्षः ।

**गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् । १६ ॥**

बृहस्पतिसवे ' गायत्रमेतदहर्भवति ' इति गायत्रीशब्दः संख्यावाचक इति पूर्वपक्षं वाशब्दो व्यावर्तयति । न संख्यायामयं गायत्रीशब्दः किन्तु गुणात् चतुर्विंशतिसंख्यारूपात् भिन्नोऽयं द्रव्यशब्दः चतुर्विंशत्यक्षरयुक्तस्य ऋग्द्रव्यस्य वाचकः स्यात् । असर्वविषयत्वात् । नास्य चतुर्विंशतिसंख्याकगवादिसंख्येयं विषयः । नहि ' अस्माकं चतुर्विंशतिर्गावः ' इति वक्तव्ये ' अस्माकं गायत्री गावः ' इति कश्चित् ब्रवीति । सर्वविषयत्वाभावात् नायं गायत्रीशब्दः संख्याशब्दः । इत्याह सिद्धान्ती ।

**गोत्ववच्च समन्वयः । १७ ॥**

गायत्रीशब्दः ऋग्द्रव्यवाचकः इति सिद्धान्ते हेत्वन्तरमाह । गायत्रीशब्दस्य ऋग्द्रव्ये समन्वयः वाचकत्वेन संबन्धः गोत्ववत् । गमधातोर्निष्पन्नो गोशब्दः गमननिमित्तोऽपि सामान्यद्रव्याभिधाने सास्नाशृङ्गवत्येव समन्वेति तद्वत् । गोत्वस्य इव गोत्ववत् इति विग्रहः ।

**संख्यायाश्च शब्दवत्त्वात् । १८ ॥**

सिद्धान्ते हेत्वन्तरमाह । संख्यायाः चतुर्विंशतिसंख्यायाः वाचकः शब्दः अस्ति, नास्या अपरेण गायत्रीशब्देनार्थः । तस्मात् छन्दोविशेषविशिष्टऋग्द्रव्यवाचक एव गायत्रीशब्दः । शब्दः अस्याः अस्ति इति शब्दवती संख्या, तस्या भावः शब्दवत्त्वं तस्मात् इति विग्रहः ।

**इतरस्याश्रुतित्वाच्च । १९ ॥**

सिद्धान्ते हेत्वन्तरमाह । इतरस्य पूर्वसूत्रोक्तायाः संख्यायाः इतरस्य भिन्नस्य ऋग्द्रव्यस्य अश्रुतित्वात् गायत्रीशब्दभिन्नशब्दशून्यत्वात् , तस्यापि च संव्यवहारार्थं संज्ञाशब्दस्य कस्य चिदावश्यकत्वात् गायत्रीशब्दः सार्थको भवति । संख्यायां तु निष्प्रयोजनः । तस्मात् गायत्रीशब्दो ऋग्द्रव्यवाचकः । अथवा प्रकृतौ अग्निष्टोमे गायत्र्यः प्रयुज्यन्ते ताभ्योऽधिकाः गायत्र्यो बृहस्पतिसवे अपेक्ष्यन्ते । परन्तु इतरस्य अधिकस्य ऋक्समुदायस्य अश्रुतित्वात् विधायकश्रुतेरभावात् अधिकाः कुतो ग्राह्या इति विचारे ता ऋग्वेदादेव ग्राह्याः इति सिद्धान्तः । चकारो हेत्वन्तरसमुच्चयार्थः ।

**द्रव्यान्तरेऽनिवेशादुक्थ्यलोपविशिष्टं स्यात् । २० ॥**

बृहस्पतिसवे त्रिष्टुब्जगतीनामक्षरावलोपेन गायत्रीनिष्पादने अग्निष्टोमदृष्टान्त उक्तः । तमन्यथयति सिद्धान्ती । अग्निष्टोमशब्दस्य कस्मिंश्चित् द्रव्यान्तरे अनिवेशात् प्रयोगाभावात् शताग्निष्टोमे द्वादशाहिकानामह्नाम् उक्थ्यलोपमन्तरेण अग्निष्टोमता न संभवति इति अग्निष्टोमपदम् उक्थ्यलोपविशिष्टमुक्थ्यस्तोत्राणां लोपेन विशिष्टं यज्ञायज्ञीयस्तोत्रान्तं यत् कर्म, तद्वाचकं स्यात् इति युक्तम् । गायत्रीशब्दस्तु ऋग्द्रव्यवाचकः प्रसिद्धः । तस्मान्नाक्षरलोपेन गायत्रीत्वसंपादनम् ।

**अशास्त्रलक्षणत्वाच्च । २१ ॥**

शताग्निष्टोमे द्वादशाहिकानामह्नाम् उक्थ्यस्तोत्रलोपेन अग्निष्टोमतासंपादने हेत्वन्तरमाह । शताग्निष्टोमे उक्थ्यस्तोत्राणाम् अशास्त्रलक्षणत्वात् शास्त्रलक्षणत्वाभावात् शास्त्रीयत्वाभावात् अग्निष्टोमशास्त्रान्तत्वेन बाधः । बृहस्पतिसवे तु ' गायत्रमेतदहर्भवति ' इति शास्त्रलक्षणा एव गायत्र्यः । ततस्तासाम् आनुमानिकीभिः त्रिष्टुब्जगतीभिर्न बाधो भवितुमर्हति, अशास्त्रलक्षणत्वात् त्रिष्टुब्जगतीनाम् ।

**उत्पत्तिनामधेयत्वाद् भक्त्या पृथक्सतीषु स्यात् । २२ ॥**

' तं नित्यवच्च पृथक् सतीषु ' इति सूत्रे यदुक्तं संख्यायां गायत्रीशब्दो दृष्टः इति तत्परिहारार्थमाह सिद्धान्ती । छन्दोविशेषविशिष्टायाः ऋचः उत्पत्तित एव नामधेयं गायत्रीशब्दः । उत्पत्त्या नामधेयं यस्याः सा उत्पत्तिनामधेया , तादृशत्वात् गायत्र्याः सकाशात् पृथक्सतीषु त्रिष्टुब्जगतीषु गायत्रीशब्दो भक्त्या गौण्या वृत्त्या स्तुत्यर्थः स्यात् । गायत्रीद्वयप्रशंसार्थम् ' ये हि द्वे गायत्र्यौ सैका जगती ' इति । तस्मात् गायत्रीशब्दो न संख्यावचनः ।

**वचनमिति चेत् । २३ ॥**

वचनात् गायत्रीशब्दः संख्यावाचकः स्यात् इति पूर्वपक्षी शङ्कते । ' तिस्रोऽनुष्टुभः चतस्रो गायत्रीः



करोति ' इति वचनम् । न विधौ परः शब्दार्थः । तिस्रः अनुष्टुभश्च चतस्रो गायत्र्यः कर्तुं न शक्याः । शक्यास्तु तिसृषु अनुष्टुप्सु षण्णवतिसंख्यायां चतस्रश्चतुर्विंशतयः । तस्मात् तत्र संख्यायां गायत्रीशब्दः इति चेत् ।

**यावदुक्तम् । २४ ॥**

तत्राह सिद्धान्ती । यावत् उक्तम्, तावदेव तत् । ' चतस्रो गायत्रीः करोति ' इति इहैव एकत्र संख्याऽर्थो गायत्रीशब्दः, नान्यत्र, क्व चिदेव संख्यावाचकत्वस्य दर्शनात् ।

अत्र क्व चित् पुस्तके ' यावदुक्तमिहैवैकत्र संख्यार्थो नान्यत्र क्व चिद्दर्शनात् ' इत्येतावत् सूत्रमेव । क्व चित्तु ' यावदर्थमिहैवैकत्र संख्यार्थो नान्यत्र क्व चिद्दर्शनात् ' इति सूत्रम् । बहुत्र तु ' यावदुक्तम् ' इत्येव सूत्रम् । भाष्ये तु 'यावदुक्तम् इहैवैकत्र संख्यार्थो नान्यत्र क्व चिद्दर्शनात् ' इत्येव ग्रन्थः । परंतु संशोधकैः ' यावदुक्तम् ' इत्येव सूत्रम्, अवशिष्टं तु व्याख्या इति विभागः कृतः । सोऽस्माभिरनुसृतः व्याख्येयव्याख्यानभावं समञ्जसं मन्यमानैः । विवलकरीयेऽपि ' यावदुक्तम् ' इत्येतावदेव सूत्रं कृतम् ।

**अपूर्वे च विकल्पः स्याद् यदि संख्याविधानम् । २५ ॥**

बृहस्पतिसवे ' गायत्रमेतदहर्भवति ' इति गायत्रीशब्देन यदि संख्यायाः विधानं स्यात्, तदा अपूर्वे प्रकृतिशून्ये स्वतः प्रकृतिभूते दर्शपूर्णमासे ' आजुहोता दुवस्यताग्निं प्रयत्यध्वरे , वृणीध्वं हव्यवाहनम् ' इत्यस्याः गायत्र्याः यत्किञ्चिदृग्गतानां च चतुर्विंशत्यक्षराणां विकल्पः स्यात् । स चायुक्तः सत्यां गतौ । तस्मात् गायत्रीशब्दः न संख्यावाचकः ।

**ऋग्गुणत्वान्नेति चेत् । २६ ॥**

बृहस्पतिसवे ' गायत्रमेतदहर्भवति ' इति गायत्रीशब्दे संख्यावाचके स्वीकृते दर्शपूर्णमासयोः सामिधेनीनां परिधानीयायां विकल्पः प्रसज्येतेति सिद्धान्तिना उक्ते पूर्वपक्षी आह । तत्र प्रयोगस्य ऋग्गुणत्वात् न विकल्पो भविष्यति इति । ऋचस्तत्र सामिधेन्य आम्नाताः । तस्मात्तत्र ' आजुहोता दुवस्यत ' इति गायत्र्या ऋचैव परिधानमिति । ऋक् गुणो यासां सामिधेनीनां ता ऋग्गुणाः । तासां भावः ऋग्गुणत्वम् , तस्मात् ।

**तथा पूर्ववति स्यात् । २७ ॥**

सिद्धान्ती आह । यदि दर्शादौ सामिधेनीनाम् ऋग्गुणत्वात् न ऋचो विकल्पः प्राप्नोति, तर्हि पूर्ववति पूर्वा प्रकृतिः यस्यास्ति सः पूर्ववान् बृहस्पतिसवः ज्योतिष्टोमस्य विकृतिभूतः, तस्मिन् पूर्ववति तथा दर्शादिसामिधेनीवत् ऋग्गुणत्वं स्यात् । बृहस्पतिसवे 'गायत्रमेतदहर्भवति ' इति गायत्रीशब्दः ऋग्वाचक एव स्यात् । दर्शादिप्रयोगवत् बृहस्पतिसवप्रयोगस्यापि ऋग्गुणत्वात् । तस्मात् न त्रिष्टुब्जगतीनां अक्षरलोपेन गायत्रीत्वसंपादनम् ।

**गुणावेशश्च सर्वत्र । २८ ॥**

सिद्धान्ती आह । दर्शपूर्णमासयोः ' आजुहोता दुवस्यत ' इति गायत्र्या सामिधेनीः परिदधाति । तत्र सर्वत्र कृत्स्नायाम् आजुहोतायां गुणावेशः गुणस्य चतुर्विंशतिसंख्यायाः आवेशः निवेशो भवति , नावयवे । तेन ऋग्गुणत्वं च संख्या च उभे अनुगृहीते भवतः । बृहस्पतिसवे तु या ऋचः चोदकेन प्राप्ताः, तासां त्रिष्टुब्जगतीनामेव अवयवे संख्या निविष्टा । तत्र ऋग्गुणत्वं नानुगृह्यते । प्रकृतिगायत्रीषु उपादीयमानासु तु उभयमनुगृह्येत तस्मात् प्रकृतिगायत्रीणामागमः स्यात् । अथवा सिद्धान्ती शङ्कते । गुणावेशश्च सर्वत्र । ननु भवान् अक्षरगतायामेव संख्यायां कुतोऽभिनिविष्टः । ग्रहाणां वा चमसानां वा अन्येषां वा पदार्थानां चतुर्विंशतिसंख्या गृह्यताम् । ' गायत्रमेतदहर्भवति ' इति सामान्यश्रवणात् । तस्मात् गुणस्य चतुर्विंशतिसंख्यायाः आवेशः सर्वत्र ग्रहादिष्वपि प्राप्नोति इति ।

**निष्पन्नग्रहणान्नेति चेत् । २९ ॥**

पूर्वपक्षी ब्रूते । बृहस्पतिसवे ' गायत्रमेतदहर्भवति ' इति गायत्रीशब्दः यद्यपि संख्यावाचकः, तथापि अक्षरगतायामेव संख्यायां निष्पन्नः प्रसिद्धः । निष्पन्नस्य च ग्रहणात् न ग्रहाणां चमसादीनां वा संख्या गायत्रीशब्देन ग्रहीतुं शक्यते । तस्मात् ऋग्गतानामेव अक्षराणां संख्यां गायत्रीशब्दो ब्रवीति । तस्मान्न सर्वत्र निवेशः । गायत्री-

शब्दस्य संख्यावाचकत्वाच्च न प्रकृतिगायत्रीणामागमः । इति चेत् ।

**तथेहापि स्यात् । ३० ॥**

सिद्धान्ती आह । बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इति गायत्रीशब्दः अक्षरसंख्यायामेव यथा प्रसिद्धः, तथा इहापि स्यात्, इहैव ऋक्ष्वेव प्रसिद्धो नान्यस्मिन् चतुर्विंशत्यक्षरे गद्ये वा ।

**यदि वाऽविशये नियमः प्रकृत्युपबन्धनाच्छरेष्वपि प्रसिद्धः स्यात् । ३१ ॥**

बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इति गायत्रीशब्दः यद्यपि ऋक्षु प्रसिद्धः, तथापि चोदकेन प्राकृत्यः गायत्रीत्रिष्टुब्जगत्यः प्रापिताः । तत्र त्रिष्टुब्जगतीनामक्षरावलोपं कृत्वैव तावत्यो गायत्र्यो निष्पादनीयाः । एवं सति प्राकृतश्च वैकृतश्च विधिः अनुगृहीतो भविष्यति इति पूर्वपक्षिणः शङ्कायामाह सिद्धान्ती । अविशये विशयाभावे गायत्रीशब्दार्थे अत्र संशयाभावेऽपि, यदि प्रकृत्या उपबन्धनात्, प्रकृत्या नियमितत्वात्, चोदितत्वात्, चोदकेन प्राप्तत्वात् नियमः स्यात् अगायत्र्यामपि त्रिष्टुभि जगत्यां च गायत्रीशब्दः कल्पितः स्यात्, तदा 'शारमयं बर्हिर्भवति' इत्यत्र शरेषु प्रसिद्धः शरशब्दोऽपि कुशेषु बर्हिष्ट्वेन कल्पयितव्यः स्यात् । तच्चानिष्टम् ।

**दृष्टः प्रयोग इति चेत् । ३२ ॥**

पूर्वपक्षी शङ्कते । ननु अगायत्र्यामपि गायत्रीशब्दस्य प्रयोगो दृष्टः 'ये द्वे गायत्र्यौ सैका जगती' इति । इति चेत् ।

**तथा शरेष्वपि । ३३ ॥**

गायत्रीशब्दस्य अगायत्र्यामपि प्रयोगो दृश्यते इति पूर्वपक्षिणः शङ्कायां सिद्धान्ती आह । यदि अक्षरगतायां चतुर्विंशतिसंख्यायां गायत्रीशब्दस्य प्रयोगो दृश्यते, तथा शरेषु प्रसिद्धस्य शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते । कुशवनमपि शरवणम् इति उच्यते । इदं प्रतिबन्द्युत्तरम् ।

**भक्त्येति चेत् । ३४ ॥**

पूर्वपक्षी आह । कुशेषु शरशब्दो भक्त्या प्रयुज्यते । गौणोऽयं प्रयोगः । दीर्घपत्रत्वात् पृथुपत्रत्वात् सादृश्यवादोऽयम् । तस्मात् शरशब्दः नोदाहरणम् । इति चेत् ।

**तथेतरस्मिन् । ३५ ॥**

आह सिद्धान्ती । तथा शरशब्दवत् इतरस्मिन् अपि गायत्रीशब्दस्यापि जगत्यां गौणः प्रयोगः स्यात् । न चैतत् सर्वं युक्तम् ।

**अर्थस्य चासमाप्तत्वान्न तासामेकदेशे स्यात् । ३६ ॥**

सिद्धान्ती अधिकरणार्थमुपसंहरन् पूर्वपक्षं निरस्य अर्थात् सिद्धान्तं सूचयति । बृहस्पतिसवे चोदकेन याः त्रिष्टुब्जगत्यः प्राप्ताः तासामेकदेशे चतुर्विंशत्यक्षरावच्छिन्ने अर्थः समाप्तो न भवति । मन्त्रप्रयोगश्च अर्थाभिधानार्थः । तत्र मन्त्रप्रयोग एव अनर्थकः स्यात् । एवमेकदेशे अर्थस्य असमाप्तत्वात् तासां त्रिष्टुब्जगतीनामेकदेशे चतुर्विंशत्यक्षरात्मके गायत्रीशब्दस्य प्रयोगो न स्यात् । तस्मात् बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इति उक्ता गायत्र्यः अपेक्षितसंख्यापूरणार्थम् उत्पत्तिगायत्रीणामेव दाशतयीभ्यः आगमः कर्तव्यः । न तु त्रिष्टुब्जगतीनामक्षरलोपेन गायत्र्यो निष्पादनीयाः । 'गायत्रम्' इति उपदेशेन त्रिष्टुब्जगतीनां चोदकस्य बाधः इति सिद्धान्तः । के.

* **गायत्रीद्वयमुत्तरम्** अनुष्टुप् च प्रथमा, तासां प्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानम् । भा. ९।२।६।२५–२८ वर्णकं ३, * **गायत्रीबृहत्यनुष्टुप्सु** एव आगम्यमानानां साम्नां निवेशः त्रिवृद्धस्तोमकेषु क्रतुषु माध्यंदिनार्भवपवमानयोः, न तु अन्त्ये तृचे । ५।३।५।१३–१४, * **गायत्रीशब्दः** ऋग्द्रव्यस्य वाचक इत्युक्तम् । ८।३।६।२० । यत्र तु विधिः 'तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति' इति तत्र संख्यायां गायत्रीशब्दः । २३.

* **गार्हपत्यः** । आधाने ब्राह्मौदनिके अरणी संताप्य मथित्वा सर्वेण मथितेन गार्हपत्यः एव आधेयः, न तु सर्वे अग्नयः । **संकर्ष.** ३।२।१. * गार्हपत्यः दृष्टौ पश्चिमोऽग्निः । ज्योतिष्टोमे च महावेदिनिष्पत्त्यनन्तरं प्राचीनवंशशालास्थः आहवनीयोऽपि गार्हपत्य एव संपद्यते तस्य 'शालामुखीयः' इति नाम । प्राचीनवंशस्थः प्राक्तनो गार्हपत्यश्च प्राजहितः नाम । **वि.** १२।१।५–६. * '**गार्हपत्यादाहवनीयं** ज्वलन्तं उद्धरति' अत्र अग्निहोत्रप्रकरणस्थवचनेन गार्हपत्ये आहवनीयस्य लयो ध्वनितः । **संकर्ष.** ३।२।७, * गार्हपत्यादेव आहवनीयः आधेयः आधाने, न तु लौकिकात् । ३।२।२, * गार्हपत्यादेव दक्षिणाग्नेराधानम्, न तु दक्षिणदिगाहृतात् लौकिकात् । ३।२।४, * गार्हपत्यादेव प्रतिकर्म आहवनीयस्य समुद्धरणम्, न तु अरणीभ्याम् । ३।२।७. * **गार्हपत्यस्य** अङ्गत्वम्, 'द्रव्याणां कर्मसंयोगे' इत्यनेन ( पूर्वपक्षे ) (६।१।१) भविष्यति । **वा.** ३।२।२।३ पृ. ७५२. * गार्हपत्यस्य 'प्राजहितः' इति पूर्वाचार्यसंज्ञा । **भा.** १२।१।६।१३. * गार्हपत्यस्य सदा प्रदीपनं अरणिर्वा सदा धारणोपायः । **संकर्ष.** ३।२।६. * 'गार्हपत्ये पत्नीसंयाजान् जुहोति' अत्र होमविशेषमनूद्य गार्हपत्यो विहितः । **वि.** १०।८।८.

**꣸ 'गार्हपत्ये श्रपणं श्रुतम्, स एव प्रयुक्तो विद्यते, अप्रयुक्ते च प्रसङ्गः स्यात्' इति ( यः ),** स एव न्यायः अत्रापि ( कुण्डपायिनामयने अग्निहोत्रश्रपणे ) । भा. १२।१।६।१३. * 'गार्हपत्ये हवींषि श्रपयति' इति गार्हपत्यस्य कर्मसु उपयोगः । ११।३।१२.

* **गार्हपत्यन्यायः** । अयमेव ऐन्द्रीन्यायः । भा. ३।२।२।३४. * **गार्हपत्यशब्दः** संस्कारनिमित्तकः संस्कृतमग्निं ब्रूते । वि. ७।३।१२.

* **गार्हपत्याद्यग्निषु** लौकिककर्माननुष्ठानम् । विहाराधिकरणम् । भा. १२।२।१।१–७. * **गार्हपत्यान्वाहार्यपचनयोः** दर्शपूर्णमासादौ प्रधानकर्माधिकरणत्वाभावव्याप्तेः । सु. पृ. ७८०. * **गार्हपत्याहवनीयौ** उभावेकस्थौ । आहवनीयेऽप्यतिते परिशिष्टो गार्हपत्यो भवति । भा. १२।१।१।५, * **गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो** विना एतानि ( अग्निहोत्रदर्शपूर्णमासादीनि ) कर्माणि न सिध्यन्ति । २।३।३।४.

* **गार्हपत्योपस्थाने** 'निवेशनः संगमनः' इति मन्त्रो वचनात् विनियोक्तव्यः, न तु लिङ्गात् इन्द्रोपस्थाने । भा. ३।२।२।३–४.

* **गावी गोणी गोपोतलिका** इत्यादयः शब्दाः गोशब्दस्यापभ्रंशाः न प्रमाणम् । भा. १।३।८।२४–२९, * **गाव्यादिभ्यः** सास्नादिमानवगम्यते अनुरूपो हि गाव्यादिर्गोशब्दस्य । १।३।८।२८, * गाव्यादिदर्शनात् ( गावीशब्दश्रवणात् ) गोशब्दस्मरणम्, ततः सास्नादिमानवगम्यते । १।३।८।२९.

* **गिरागिरा** । 'न गिरागिरेति ब्रूयात्' 'ऐरं कृत्वोद्गेयम्' इत्यत्र गिरापदनिषेधपुरःसरम् इरापदे विहिते सति निषिद्धस्य नित्यनिवृत्तिः । उच्यते । अप्राप्तत्वात् इरापदमत्र विधीयते, तेन विहितेन पाठप्राप्ते गिरापदे बाधिते स बाधो 'न गिरा' इति प्रतिषेधेन अनूद्यते । **वि.** ९।४।२. * **गिरापदं** प्रतिषिध्य इरापदं विधीयते, तत्र इरापदस्य गिरापदकार्ये लक्ष्यति प्रतिषिध्यमानम् । **टुप्.** ६।४।१०।३१. * गिरापदं विकृतीरमिनिवेष्टुमर्हति, इरापदं तु प्रकृतौ । **भा.** ९।१।१८।५३.

* अग्नौ 'यज्ञायज्ञीयं पुच्छे गायति' । तत्र यथाम्नातमेव **गिरापदं** प्रयोक्तव्यम् । यत्र हि अग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते, तत्रैव इरापदेन गिरापदं बाध्यते नान्यत्र । **टुप्.** ९।१।१८।५३.

**꣸ गिरापदस्य इरापदेन बाधः ज्योतिष्टोमे यज्ञायज्ञीये ॥**

**आम्नातादन्यदधिकारे वचनाद् विकारः स्यात् । ९।१।१८।५० ॥**

**भाष्यम्** — अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्र यज्ञायज्ञीयं प्रकृत्य आमनन्ति 'न गिरागिरेति ब्रूयात् । यद् गिरागिरेति ब्रूयात्, आत्मानं तद् उद्गातोद्गिरेत् । ऐरं कृत्वोद्गेयम्' इति । तत्र संशयः किमिरापदं गिरापदं वा कर्तव्यम्, अथवा इरापदमेवेति । किं प्राप्तम् ? यत्र अधिकारे आम्नातात् अन्यत् उच्यते, तत्र तत् विकारभूतं स्यात् । ज्योतिष्टोमाधिकारे आम्नातात् गिरापदात् अन्यदुच्यते इरापदम् । तत् विशेषे उच्यमानं सामान्येन प्राप्तं गिरापदं बाधेत ।

**द्वैधं वा तुल्यहेतुत्वात्, सामान्याद् विकल्पः स्यात् । ५१ ॥**

**भाष्यम्** — वाशब्दः पक्षं व्यावर्तयति । न इरापदं नियम्येत, द्वैधं स्यात्, द्वौ प्रकारौ स्यातामित्यर्थः । कौ द्वौ प्रकारौ ? इरापदवचनं गिरापदवचनं च ।

तुल्यो हि हेतुः। गिरापदमाम्नातम्, तद्वता साम्ना ज्योतिष्टोमः साधयितव्यः इत्येतदपि अवगम्यते, इरापदेन साधयितव्यमित्येतदपि। समानार्थे चैते द्वे पदे, एकमपि स्तुत्यर्थम् अपरमपि। तस्मात् विकल्पः स्यात् इरापदं गिरापदं वेति।

**टुप्** — (द्वितीयपादे 'सामप्रदेशे' (९।२।९।३२) इत्यारभ्य सामोहं प्रतिपादयिष्यति, इदानीं तदुपोद्घातं चिन्तयति– ) यज्ञायज्ञीयं प्रकृत्य 'ऐरं कृत्वोद्गेयम्' इति ( इत्यन्तं भाष्यवदेव )। अत्र पूर्वः पक्षः। 'ऐरं कृत्वा उद्गेयम्' इति इरापदस्थानेन उत्पत्तिः केवलं क्रियते ( न विनियोगः ) [ इरापदस्थानेन इरापदस्थानापत्त्या इत्यर्थकरणेन पङ्क्तिर्योजयितुं शक्यते, तथापि 'इरापदस्थानेन ( वाक्येन ) उत्पत्तिः केवलम्' इति पाठः पूर्वोत्तरग्रन्थस्वरसात् समीचीन इति भाति। नहि इरापदस्थानापत्तिः अत्र, किन्तु इरापदस्य गिरापदस्थानापत्तिः अत्रोक्ता ] उत्पत्त्युत्तरकालं च प्रयोजनं प्रति साकाङ्क्षस्य यज्ञायज्ञीयस्य ( यज्ञायज्ञीयेन स्तुवीत इत्यनेन) प्रयोगवचनेन अङ्गता विधीयते, गिरापदस्यापि ( यज्ञायज्ञीयस्य प्रयोगवचनेनैव अङ्गता )। तस्मात् उभयोः तुल्यप्रमाणत्वात् विकल्पः। अथवा, यद्यपि इरापदम् ( ऐरं कृत्वा इति– ) अनेन वाक्येन विधीयते स्तोत्राङ्गत्वेन ( न तु प्रमाणान्तरेण ), तथापि न अनुत्पन्नं श्रुतिः शक्नोति निर्वर्तयितुम्, इति अर्थात् उत्पत्तिः अपेक्षितव्या। 'यज्ञायज्ञीयेन स्तुवीत' इत्यनेन गिरापदस्य स्तुतिसाधनत्वमुपपद्यते। पाठात्तु गिरापदस्य उत्पत्तिः सिद्धा। तस्मात् एकत्र ( इरापदे ) उत्पत्तिः अपेक्षितव्या, अपरत्र ( गिरापदे ) विनियोगः ( अपेक्षितव्यः )। तस्मात् एकाङ्गविकलत्वात् द्वयोरपि प्रत्ययविप्रकर्षः। विप्रकर्षाच्च विकल्पः।

**उपदेशाच्च साम्नः। ५२॥**

**भाष्यम्** — अत्राह। नैतयोस्तुल्यता विद्यते। गिरापदे समाम्नानमात्रम्, न कर्तव्यता विधीयते। इरापदे तु कर्तव्यता विधीयते। तन्न। कुतः? उपदेशात् साम्नः। उपदिश्यते हि साम 'यज्ञायज्ञीयेन स्तुवन्ति' इति। गिरापदवच्च यज्ञायज्ञीयम्। तस्मिन् उपदिश्यमाने गिरापदमपि उपदिष्टं भवति। तस्माद्विकल्प इति।

**नियमो वा श्रुतिविशेषादितरत् साप्तदश्यवत्। ५३॥**

**भाष्यम्** — नियमो वा स्यात् इरापदस्य। कुतः? श्रुतिविशेषात्। श्रुतिविशेषेण इरापदमुपदिष्टम् ऐरं कृत्वेति, सामान्येन गिरापदम्। तत् कथं साम्नः कर्तव्यतोच्यते। गिरापदस्य पाठमात्रम्, न कर्तव्यता। न तु अन्यथा साम कृतं भवतीति अर्थापत्त्या गिरापदस्य कर्तव्यता कल्प्यते। इरापदस्य पुनः श्रुत्यैव कर्तव्यता। तेन साम्नि सिद्धे नास्ति अर्थापत्तिर्गिरापदस्य। अथ यः सामान्येनोपदिष्टः तस्य को विषयः? तदुच्यते। इतरत् साप्तदश्यवदिति। इतरदिति गिरापदमुपदिश्यते। तद्यथा साप्तदश्यम्, तथा स्यात्। विकृतिषु साप्तदश्यं निविशते। इतरदपि विकृतीः अभिनिवेष्टुमर्हतीति।

**टुप्**— यदुक्तं 'ऐरं कृत्वोद्गेयम्' इत्यनेन उत्पत्तिः, ( केवला क्रियते ), यज्ञायज्ञीयप्रयोगवचनेन ( तु ) स्तुतिसाधनत्वमिति, तन्न। यदि एवं श्रूयेत 'ऐरं भवति' इति, तदा उत्पत्तिः स्यात्। इह तु ऐरं कृत्वा ऐरमभिनिर्वर्त्य उद्गेयमिति श्रुत्यैव अस्य साधनता विधीयते। यज्ञायज्ञीयेन तु अन्यथाऽनुपपत्त्या गिरापदस्य श्रुतिसाधनता विधीयते। सा च प्रत्यक्षेण इरापदेन अन्यथाऽनुपपत्तिर्बाध्यते। यदपि अपरमुक्तम् इरापदादपि अर्थादुत्पत्तिरपेक्षितव्येति, उच्यते। श्रुत्या इरापदविशेष एव ( स्तोत्रे ) विहितः। तस्य अर्थादुत्पत्तिः। यदुच्यते शब्दस्य तत्र नास्ति व्यापारः, इह तु ( गिरापदे ) शब्देनैव कस्मिंश्चित् कार्यविशेषो विधातव्यः। तत्र गिरापदस्य ( कार्यविशेषविनियोजकः क्लृप्तः ) शब्दो न विद्यते। ( स हि न श्रुतो नापि कल्पयितुं शक्यते प्रत्यक्षश्रुतेन, इरापदेनैव स्तोत्रस्य निराकाङ्क्षत्वात्। तस्मादिरापदस्यैव नियमः )। 'इतरत् गिरापदं साप्तदश्यवत्' इति न तुल्यो दृष्टान्तेन दार्ष्टान्तिकः। कथम्? 'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्य श्रूयते, 'पञ्चदशानुब्रूयात्' इति दर्शपूर्णमासयोः। तत्र ( प्रकरणात् ) क्लृप्तसंबन्धेन पाञ्चदश्येन साप्तदश्यं



बाधितम्। तत्र कासु चिद्विकृतिषु (पशुमित्रविन्दाऽऽदिषु) साप्तदश्यं पुनः पठ्यते। तेन चोदकप्राप्तं निवर्त्यते प्रत्याम्नातेन। गिरापदं पुनः न कस्य चिद्विकृतौ, येन इरापदं बाध्येत। अपिच इरापदं क्लृप्तोपकारं विकृतौ चोदकेन प्राप्यते। गिरापदं पुनः नोपदेशेन नातिदेशेन (प्राप्नोति)। तस्मात् विकृतिषु इरापदमेव। इति सूत्रं भाष्यं चानुपपन्नमेव। उच्यते। यथा प्रकृतौ साप्तदश्यं पाञ्चदश्येन बाध्यते, एवं गिरापदमिरापदेनेति तद्बाधितम् ( एतावता दृष्टान्तः )। यासु विकृतिषु प्रमाणं भवति, तासु भविष्यति। प्रमाणाभावेन क्व चिदपि मा भवतु। अथवा विनाऽपि स्तुतिसाधनत्वेन प्रमाणान्तरेण भवति कासुचित् विकृतिषु गिरापदम्। तथाह्यग्नौ श्रूयते 'यज्ञायज्ञीयं पुच्छे गायति' इति। तत्र यथाऽऽम्नातमेव गिरापदयुक्तं प्रयोक्तव्यम्। यत्र हि अग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते, तत्रैव क्लृप्तोपकारेण इरापदेन गिरापदं बाध्यते। तत्रैव तस्य प्रकृतौ उपदेशात् नान्यत्र प्राप्तिरिति।

**शा** — साम्नामिदानीम् ( ९।२।९ सामप्रदेशे विकारः इत्येतस्मात् प्राक् ) ऊहमारिप्स्यमानः उपोद्घातं चिन्तयति। तानि हि अक्षरान्तरेषु समाम्नातानि अक्षरान्तरेषु ऊह्यन्ते। तत्र इह गिरापदगीतेः इरापदे स्थानापत्त्या प्राप्तिं वक्तुं स्थानापत्तिमेव चिन्तयति। १६.

**सोम**-- यथा अध्रिगुवचनस्य मेष्यामप्राप्तिः, एवमिरापदे गिरापदगीतेरप्राप्तौ गिरापदस्थानापत्त्या तत्प्राप्तिम् उत्तराधिकरणे प्रतिपादयितुमिह तदुपयोगितया स्थानापत्तिर्विचार्यते इति **संगतिः**। **सूत्रार्थस्तु**--ज्योतिष्टोमाधिकारे आम्नातात् गिरापदात् अन्यत् इरापदं प्रत्यक्षवचनविहितत्वात् नित्यं गिरापदविकारः तद्बाधकः इति।

**वि**-- 'इरागिराविकल्पः स्यादुतेरैवा, विशेषतः। आद्यो, मैवं बाधपूर्वमिराया विहितत्वतः॥' इरा–गिरा अनयोर्विकल्पो वा स्यात्, उत इरा एव स्यात् इति संशयः। अविशेषतः आद्यः इति पूर्वपक्षः। 'आयीरा यीरा' इति गातव्यम्, न तु 'गायीरा यीरा' इति सिद्धान्तः।

**भाट्ट**-- मन्त्रोहप्रसङ्गात् साममन्त्रोहं विचारयितुमुपोद्घातः आरभ्यते। ज्योतिष्टोमे अग्निष्टोमस्तोत्रावान्तरप्रकरणे श्रुतम् 'न गिरागिरेति ब्रूयात्, ऐरं कृत्वोद्गेयम्' इति। तत्र गिरापदगीतेः इरापदे ऊहः इति वक्ष्यते। स च इरापदस्य गिरापदस्थानापत्तिं विना नेति साऽपि वक्ष्यते। तत्रेह सा किं नियता स्थानापत्तिः, उत अनियतेति चिन्त्यते। तत्र यद्यपि तावत् न 'ऐरं कृत्वोद्गेयम्' इत्यत्र इरापदविशिष्टोद्गानान्तरस्य स्तोत्राङ्गतया आरादुपकारकत्वादिना विधिः, अग्निष्टोमस्तोत्राङ्गभूतयज्ञायज्ञीयगानापेक्षया गानान्तरत्वे प्रमाणाभावात्, 'न गिरागिरा' इति निषेधानुवादानुपपत्तेश्च। अत एव न गानोद्देशेन इरापदविधिः, तथात्वे इरापदस्य स्तोभाक्षरविधया गानाङ्गत्वेऽपि तत्संस्कार्यस्य गिरापदस्य बाधे प्रमाणाभावेन निषेधानुवादानुपपत्तेः। अतो निषेधानुवादबलेन इरापदमात्रं गुणाभिधानात्मकस्तोत्ररूपे गिरापदकार्ये विधीयते। उद्गेयमिति तु तत्संस्कारकतया प्राप्तगानानुवादः। संभवति च इरापदस्य गिरापदकार्यकारित्वम्, तदर्थाभिधानात्। यथैव हि इष्कर्तारमिति पदं ( ऋसं. १०।१४०।५ ) महाभाष्यकारेण नकारलोपेन निष्कर्तारमित्यस्यार्थे व्याख्यातम्, ( 'सन्यङोः' ६।१।९ इति पाणिनिसूत्रे महाभाष्ये छान्दसवर्णलोपोदाहरणेषु 'इष्कर्तारमध्वरस्य निष्कर्तारमध्वरस्य इति प्राप्ते' इत्युक्तम् ) तथैव गकारलोपे इरापदस्यापि गिरापदार्थे व्याख्यानं नानुपपन्नम्। ततश्च यद्यपि प्रत्यक्षविधिना इरापदस्योत्पत्तिः स्तोत्राङ्गत्वं च, गिरापदस्य तु पाठादुत्पत्तिः क्रमाच्च स्तोत्राङ्गत्वम्, 'यज्ञायज्ञीयेन स्तुवीत' इति सामविध्यन्यथाऽनुपपत्त्या वा आक्षिप्तं – साम्नो हि ऋगक्षराभिव्यक्तिद्वारैव स्तोत्राङ्गतेति ऋगक्षराणामपि तदङ्गत्वसिद्धिः – उभयथाऽपि गिरापदस्य तादृक्पदान्तरसाधारणमपि दुर्बलमेव। तथापि गिरापदकार्ये इरापदं विधीयमानं तत्कार्यस्य गिरापदीयत्वप्रसिद्धिमुपजीवतीति उपजीव्यविरोधापत्तेर्न गिरापदस्य नित्यं बाधः, अपितु 'न तौ पशौ करोति' इतिवत् विकल्प एव। इति प्राप्ते, न तावदत्र गिरापदकार्यस्योद्देश्यत्वं श्रुतम्, अपितु निषेधानुवाद-

बलेन गिरापदबाधकत्वमात्रम् । तेन च यथैव तत्कार्यस्य साधनसाकाङ्क्षत्वात् इरापदस्य च कार्यसाकाङ्क्षत्वात् तत्कार्यजनकत्वं कल्प्यते, तथा तद्बलेनैव गिरापदपाठस्यापि अग्निष्टोमस्तोत्रापूर्वसाधनत्वकल्पनाप्रतिबन्धोऽपि । अत एव कार्यस्यापि उद्देश्यता न गिरापदीयत्वेन, अपितु अग्निष्टोमस्तोत्रापूर्वसाधनीभूतविजातीयगुणाभिधानत्वेनैव । तत्कार्यापन्नत्वव्यवहारस्तु निषेधानुवादाभावे तत्कार्यव्यक्तेर्गिरापदीयत्वप्रसक्तिमात्रेण । अत एव पाठोऽपि गिरापदस्य यत्र 'यज्ञायज्ञीयं पुच्छे गायति' इति चयने यज्ञायज्ञीयं साम विहितम्, तत्र तस्य दृष्टविषया पुच्छाभिधानजनकक्कगकाराभिव्यक्तिजनकत्वेनैव उपयोगात्, तत्र च इरापदविध्यभावेन गिरापदस्यैव आम्नानसिद्धस्य विनियोगात् सार्थकः । अतः सिद्धं निषेधानुवादबलेन गिरापदपाठादेः अग्निष्टोमस्तोत्राङ्गतया गिरापदविनियोजकत्वाभावात् इरापदस्य 'ऐरं कृत्वोद्गेयम्' इति प्रत्यक्षविधिना विशिष्य विहितस्य नियतमेव तद्बाधकत्वं तत्कार्यापत्तिश्चेति । **यत्तु अत्र तन्त्ररत्नशास्त्रदीपिकयोः** उद्गानमुद्दिश्य इरापदविधिरित्युक्तम्, **तत्** स्तोभविधया गानाङ्गत्वे गानसंस्कार्यगुणाभिधानजनकगिरापदबाधकत्वानुपपत्तेः उत्तरयोरपि च गानातिदेशे तदङ्गस्तोभातिदेशवत् अतिदेशापत्तेः उपेक्षितम् । **यदपि** कैश्चित् गानसंस्कार्यैरापदस्य स्तोभाङ्गतया विधिः, अभिषवसंस्कृतपूतीकानामिव यागसाधनतया तद्वदेव संभवत्यास्तिकस्यापि गानस्य शीघ्रप्रवृत्त्या पुनर्विधानं गिरापदस्य गानसंबन्धवारणार्थमित्युक्तम्, **तदपि** गानवारणेऽपि गिरापदवारणानापत्तेः अस्य प्रकृतगानसंबन्धेऽपि गिरापदमात्रगानवारणे तन्निषेधानुवादस्यैव शरणीकरणीयतया तत एव उभयवारणे गानविधिवैयर्थ्यादुपेक्षितम् । तस्मादस्य इरापदमात्रविधायकत्वम्, उद्गेयमिति तु स्थानापत्तिप्रासानुवादः, इत्येव तत्त्वम् । १७.

**मण्डन**—'प्रयोज्यता नित्यमिरापदस्य ।' २०.

**शंकर**—'गिराबाधस्त्विरापदात् ।' २६.

*** गिरापदधर्माः** इरापदे भवेयुः ज्योतिष्टोमे यज्ञायज्ञीये । भा. ९।२।१२।३९.

**※ गिरापदस्थानापन्ने इरापदे गानं कर्तव्यं ज्योतिष्टोमे यज्ञायज्ञीये ॥**

**अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् । ९।१।१५।५४ ॥**

**भाष्यम्** — ज्योतिष्टोमे यज्ञायज्ञीयं प्रकृत्य आमनन्ति 'न गिरागिरेति ब्रूयात्, यद् गिरागिरेति ब्रूयात् आत्मानमेव तद् उद्गातोद्गिरेत्, ऐरं कृत्वा उद्गेयम्' इति । ज्योतिष्टोमे गिरापदस्य स्थाने इरापदं कर्तव्यमिति समधिगतम् । इदानीमिदं संदिग्धं किं प्रगीतम् इरापदं कर्तव्यम्, उत अप्रगीतमिति । किं प्राप्तम् ? गिरापदात् अन्यस्मिन् शब्दे श्रूयमाणे ब्रूमः अप्रगीतम् इरापदं कर्तव्यमिति । कुतः ? अप्रगाणात् । नहि तत् प्रगीतमुपदिश्यते । सर्वे हि यत् यथाभूतमुपदिश्यते, तत् तथाभूतमुपयोक्तव्यम् । **ननु** नैव तत् अप्रगीतमुच्चार्यते, तद्धितशब्देन अयं निर्देशः क्रियते । तेन स्वरविशेषः कश्चित् निर्दिष्टो भवति । **अत्रोच्यते** । यद्यपि चास्ति स्वरविशेषः, अन्ये तु गीतिविकाराः आईभावादयो न निर्दिश्यन्ते । अविकृतात् तद्धित उत्पादितः । तस्मात् अविकृतं प्रयोक्तव्यम् । अथोच्यते तद्भूतनिर्देशः अविवक्षितः इति । उच्यते । अविवक्षायां कारणं वक्तव्यम् । विवक्षायां तु निर्देश एव कारणम् । तस्मात् अप्रगीतं प्रयोक्तव्यमिति ।

**टुप्** — गिरापदगीतिः इरापदे न स्यात् । कुतः ? गीत्या वर्णाः संस्क्रियन्ते । गिरापदवर्णानां च या संस्कारिका गीतिः, सा तानेव वर्णान् संस्करोति, तैरेव वर्णैः प्रयुज्यते, इरापदवर्णैः न प्रयुज्यते, गिरापदवर्णस्वरूपयुक्तत्वात् गीतेः । तस्मात् यथाभूतम् (यथाम्नातम्) इरापदम्, तथाभूतमेव प्रयोक्तव्यम् । **ननु** च 'ऐरम्' इति विकारे तद्धित उत्पन्नः । वर्णानां च स्वर एव विकारः । तस्मात् तद्धितशब्देनैव गीतिः उपदिश्यते । (**उच्यते**) नात्र विकारे तद्धित उत्पन्नः, किं तर्हि ? स्वार्थे एव । यावदेव उक्तम् 'इरां कृत्वा उद्गेयम्' (इति) तावत् ऐरम् इति । यदि च प्रगीतात् तद्धित उत्पद्यते, तथा सति 'वृद्धं तालव्यं प्रथमस्वरं वा' कृत्वा इकारस्य आयीभावः स्यात् । ('तालव्यमायी यद्



वृद्धम्' इति छन्दोगसूत्रेण गीतिदशायां यत् त्रिमात्रात्मकतया वृद्धं तालव्यम्, तत् आयी भवति इत्यर्थकेन) । तत्र 'वृद्धाच्छः' (पा० ४।२।१२०) इति छः (ईय) भवति । तथा च आयीरीयं इति स्यात् । न चैवं श्रूयते । तस्मात् स्वार्थे तद्धितः (ऐरम् इत्यत्र) ।

**यत्स्थाने वा तद्गीतिः स्यात्, पदान्यत्वप्रधानत्वात् । ५५ ॥**

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति । यस्य पदस्य स्थाने इरापदं प्रयुज्यते, तस्य पदस्य या गीतिः, सा इरापदे स्यात् । कुतः ? पदान्यत्वप्रधानत्वात् । पदान्यत्वप्रधानं हि इदं वाक्यम्, गिरापदस्य स्थाने इरापदं भवतीति । नाप्रगीतं प्रयोक्तव्यमिति । अन्या हि वचनव्यक्तिः इरापदस्य विशेषे विधीयमाने, अन्या इरापदे । एवं हि श्रूयते इरापदस्य विकारं कृत्वा उद्गेयमिति । तत्र अनेन प्रकारेण इरापदं विधीयते, नान्यं प्रगाणात् इरापदस्य विकारं ब्रूयात्, न गिरापदस्य इत्येतत् तद्धितेन उच्यते । नात्र गीतस्य इरापदस्य विकारः तद्धितशब्देन अध्यवसीयते । पश्चात् तद्धितार्थो विकारं ब्रूयात् इति असौ अनूद्यते एव । यः प्रकृत्यर्थः इरापदस्य इति, स विधीयते । तेन पदान्यत्वपरम् एतत् वचनम्, न गीत्यनन्वयपरम् । गीतिर्हि विकारः सामान्यात् निर्दिश्यते ।

**टुप्**— गिरापदे कर्तव्या गीतिः (गिरापदे या गीतिः, सा इरापदे कर्तव्या इत्यर्थः) । कुतः ? स्तोत्रापूर्वप्रयुक्ता हि गीतिः, न वर्णस्वरूपप्रयुक्ता । तस्मात् गिरापदाभावेऽपि गीतिरवतिष्ठते । सा च साकाङ्क्षा (गेयं प्रति) । इरापदमपि विधीयमानं गीतिं प्रति साकाङ्क्षम् । तस्मात् तयोः संबन्धः । ननु विकारतद्धितोऽयम्, न स्वार्थिकः, आनर्थक्यप्रसङ्गात् । तस्मात् शब्देनैव गीतिर्विधीयते इति (चेत्) । **सत्यम्** । अत्र चतस्रो वचनव्यक्तयः प्रतिभान्ति । (१) यद्वा इरापदगीतिविकारे तद्धितोऽयम् अनूद्य इरापदं विधीयते, (२) अथवा इरापदमनूद्य गीतिः (विधीयते) । (३) अथवा उभयम् (गीतिमिरापदं च विधीयते 'गीतम् इरापदं कर्तव्यम्' इति) । (४) अथवा शुद्धमिरापदम् (विधीयते । प्रथमपक्षं निरस्यति-) तत्र इरापदस्य न लोकवेदयोः गीतिः प्रसिद्धा । अप्रसिद्धत्वाच्च न शक्या अनुवदितुम् । (द्वितीयपक्षं दूषयति-) इरा (पदमपि) अप्रसिद्धत्वादेव न शक्या अनुवदितुम् । अपिच यदि इरापदमनूद्य गीतिर्विधीयते, गिरापदस्य निवृत्तिर्न प्राप्नोति । न गीत्या वर्णा निवर्त्यन्ते, अतुल्यकार्यत्वात् । तत्र गिरापदप्रतिषेधानुवादो न प्राप्नोति । तत्र गिरापदस्य भेदेन प्रतिषेधो वक्तव्यः । तस्मिन् उच्यमाने वाक्यभेदः । अपिच गिरापदे निषिद्धे अनियमेन तत्स्थाने वर्णाः प्राप्नुवन्ति, नावश्यमिरापदम् । (तृतीयं निरस्यति-) अथ उभयं प्रगीतम्, इरापदं च (इति) तथा वाक्यभेदः । तस्मात् ('ऐरम्' इति पदे-) इरैव प्रातिपदिकं विधीयते । तच्च विधीयमानं गिरापदस्य या गितिः, तां कार्यापत्त्या लभते ।

**गानसंयोगाच्च । ५६ ॥**

**भाष्यम्**— गानसंयोगो भवति । 'उद्गेयम् आइरा चा दाक्षासा' इति इरागानं दर्शयति ।

**वचनमिति चेत् । ५७ ॥**

**भाष्यम्**—इति चेत् पश्यसि, गानदर्शनम् एतद्वचनमिति । नैवम् । वचनं भविष्यति 'उद्गेयम् आइरा चा दाक्षासा' इति ।

**न, तत्प्रधानत्वात् । ५८ ॥**

**भाष्यम्**— नैतदेवम् । तत्प्रधानं हि इदं वाक्यम् । किंप्रधानम् ? इरापदप्रधानम्, निर्देशात् । न गीतिप्रधानम् अनिर्देशादित्युक्तम् । तथा इरापदस्य अर्थवादो भवति, न गीतेः । 'इरामहं यजमाने ददानि' इति । पदस्य चायमर्थवादो न गीतेः । तस्मात् प्रगीतं प्रयोक्तव्यमिति । किं भवति प्रयोजनं चिन्तायाः, नात्र कश्चिद्विशेषः । अन्यस्मिन् एतत्सदृशे प्रयोजनमस्ति, 'न प्रप्रेति ब्रूयात्, प्रप्रीति ब्रूयात्' । यदि पूर्वः पक्षः प्रप्रपदं वा वक्तव्यम्, प्रप्रीपदं वा । यदि सिद्धान्तः, प्रप्रीपदमेव वक्तव्यमिति ।

**टुप्** —(यद्यपि अव्यवहितोत्तरं वार्तिकम् आनन्दाश्रमीये ५५ सूत्रे एव मुद्रितम्, तथापि वस्तुतः ५८ सूत्रस्थमेवेदम् । प्रप्र-प्रप्री इत्यादिप्रयोजनस्य ५८ सूत्रभाष्ये एव प्रतिपादनेन प्रयोजनवार्तिकस्यापि तत्रैव लेखनी-

यत्वावश्यम्भावात् । अत एव अस्माभिः ५८ सूत्रे एव लिख्यते इति ज्ञेयम् )। 'यदि पूर्वपक्षः प्रप्रपदं प्रप्रीपदं वा प्रयोक्तव्यम् । यदि सिद्धान्तः प्रप्रीपदमेव प्रयोक्तव्यम्' ( इति किञ्चित् पाठभेदेन भाष्यम् )। नैतत् अनन्तराधिकरणस्य प्रयोजनम् । पदप्रयोगविकल्पमाह, न प्रगाणे । तस्मात् पूर्वाधिकरणस्य प्रयोजनमिदम् 'आम्नातादन्यत्' इत्यस्य 'प्रप्रपदं प्रप्रीपदं वा पूर्वपक्षे, सिद्धान्ते प्रप्रीपदमेव' इति । ( अत्र ) प्रमादात् लिखितम्। 'अप्रगाणात्' इत्यस्य प्रयोजनम् ( तु ) अप्रगीतम् इरापदं पूर्वपक्षे, सिद्धान्ते तु प्रगीतं प्रयोक्तव्यम् । यत् पुनरिदम् 'नात्र कश्चित् विशेषः, अन्यस्मिन् तत्सदृशे प्रयोजनमस्ति' इति इदम् 'वचनमिति चेत्' इत्यस्य सूत्रद्वयस्य ( ५७–५८ ) प्रयोजनम् । इरापदे वचनात् प्रगाणम्, यदि वा स्थानापत्त्या, सर्वथा इरापदं प्रगीतं प्रयोक्तव्यम् । प्रप्रीपदे तु न वाचनिकं प्रमाणमस्ति । किं तर्हि ? न्यायात् । तत्र ( इरापदे ) यदि वचनेन गानं प्राप्यते, प्रप्रीपदादीनां तु वचनाभावात् अप्रगीतता स्यात् । '**तस्मात् प्रप्रीपदादीनां नैव स्यादप्रगीतता! । पदान्यत्वप्रधानत्वाद् वाक्यस्य स्यात् प्रगीतता ॥**'

शा— नियतमिरापदम् इति स्थिते किं तत् अप्रगीतं प्रयोक्तव्यम्, उत प्रगीतमिति संशयः । ( तथा च प्राप्तावसरोऽयं विचारः इति **अवसरसंगतिः** )। तत्र '**न प्रगाणं भवेत्, कस्मादप्रगीतस्य चोदनात् । प्रगीतात् तद्धितोत्पत्तावायीरीयं प्रसज्यते ॥**' (छन्दोगानां क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रातिस्वार्यलक्षणाः सप्त स्वराः । तत्र क्रुष्टप्रथमद्वितीयाः उत्क्षेपिणः आयामदारुण्यादिभिः उत्क्षेपकारणैरुत्क्षिप्यमाणत्वात् । चतुर्थमन्द्रातिस्वार्याः स्वरा अवक्षेपिणः अन्ववसर्गमार्दवादिभिः अवक्षिप्यमाणत्वात् । तृतीयस्तु उत्क्षेपावक्षेपावधित्वेन स्थितो मध्यमः स्वरः । तथाच तृतीयनामकान्मध्यमस्वरात् द्वितीयः उत्क्षिप्तः, द्वितीयात् प्रथमः उत्क्षिप्ततरः, क्रुष्टः उत्क्षिप्ततमः । एवम् अवक्षेपिष्वपि तारतम्यं द्रष्टव्यम् । अतश्च उत्क्षिप्तस्य द्वितीयनामकस्य उदात्तत्वात् उत्क्षिप्ततरस्य उदात्ततरत्वं पर्यवस्यति । तथा 'वृद्धं वृद्धो वृद्धिः प्लुतः' इति त्रिमात्रभूतानां वर्णानां पर्यायसंज्ञाः इति **फुल्लसूत्रव्याख्यातृभिरुक्तम्** । तथा च तालव्यम् उक्तलक्षणप्रथमस्वरं च वृद्धं भवति प्लुतं प्राप्नोति इति इरापदे इकारस्य तालव्यत्वात् ऊहगाने 'योनिवत् स्वराः' इति सूत्रेण अतिदेशात् इरापदगतप्रथमस्वरप्राप्त्या प्रथमस्वरत्वाच्च प्लुतलक्षणवृद्धौ सत्याम् 'वृद्धं तालव्यमायी भवति' इति वचनान्तरेण आयीभावे आयीराशब्दस्य 'वृद्धिर्यस्याचामादिस्तद् वृद्धम्' ( पा० १।१।७३ ) इति वृद्धत्वात् 'वृद्धाच्छः' ( पा० ४।२।११४ ) इति छप्रत्यये तस्य आयनेयीसूत्रेण ( पा० ७।१।२ ) ईयादेशे आयीरीयम् इति प्रसज्येत । वस्तुतस्तु प्रगीतात् तद्धितोत्पत्तिपक्षे स्वार्थिके अणि आयीरं प्रसज्येत इत्येवात्र आपादनं युक्तम् । **सोम.** ) तस्मादप्रगाणम् । '**गिरापदस्य यत् स्थानम्, तत्र हीदं विधीयते । इरापदमतस्तस्य या गीतिस्तां लभेत तत् ॥**' तस्मात् प्रगीतं प्रयोक्तव्यम् । १७.

वि—'इरापदं न गेयं स्याद् गेयं वा, गीत्यनुक्तितः । न गेयम्, गीयमानस्य स्थाने पातात् प्रगीयते ॥' 'विमुक्तादिभ्योऽण्' ( पा० ५।२।६१ ) इति सूत्रेण अण्प्रत्ययेऽपि 'मतौ छः सूक्तनाम्नोः' ( पा० ५।२।५९) इति सूत्रात् सामानुवृत्तेः ऐरं साम इत्यर्थो भवति, सामत्वं च गीतिसाध्यम् । यदा तु 'तस्य विकारः' ( पा० ४।३।१२४ ) इत्यस्मिन्नर्थे अण्प्रत्ययः, तदानीम् इराया विकारः इति विग्रहे यथोक्तं गानं लभ्यते । तस्मात् गातव्यम् ।

भाट्ट—तत् इरापदम् अप्रगीतं प्रयोक्तव्यं प्रगीतं वेति संदेहे ऐरमिति अप्रगीतश्रवणात् अप्रगीतम् । यदि हि अयं स्वार्थे तद्धितः, तदा इरां कृत्वा इत्यर्थावगमात् इरापदमात्रविधिः स्पष्ट एव । नहि प्रगीतेरापदात् अयं तद्धितः, तथात्वे इकारस्य तालव्यत्वात् गीतिदशायां च वृद्धत्वापत्तेः 'तालव्यमायी यद् वृद्धम्' इति छन्दोगसूत्रेण गीतिदशायां यत् त्रिमात्रात्मकतया वृद्धं तालव्यम्, तत् आयी भवतीत्यर्थकेन आयीभावविधानात् आकारादित्वेन 'वृद्धाच्छः' इति पाणिनिसूत्रेण छप्रत्ययोत्पत्तौ आयीरीयम् इति रूपापत्तेः । अथ स्वार्थतद्धिते वैयर्थ्यापत्तेः विकारार्थः



एवायं तद्धितः, विकारश्च इरापदस्य प्रगाणरूपः धर्म एवेति चेत्, तथात्वेऽपि प्रगाणरूपधर्माङ्गीकारे विशिष्टविधिगौरवापत्तेः अप्रगाणरूपस्य गिरापदबाधकत्वरूपस्य वा धर्मस्य तद्धितार्थत्वमङ्गीकृत्य तद्धितस्य अनुवादोपपत्तेः । न च अप्रगीतेरापदमात्रविधाने 'उद्वेयम्' इत्यनुवादानुपपत्तिः, तस्य ऐरं कृत्वा अक्षरान्तरे उद्वेयम् इत्येवमर्थाङ्गीकारेण अनुवादोपपत्तेः । न च प्रकारान्तरेण गीतेः अप्राप्तावपि गिरापदकार्यापत्त्या तत्प्राप्तिः, गिरापदस्य अग्निष्टोमस्तोत्रसाधनत्वाभावेन इरापदस्य तत्कार्यापत्तौ प्रमाणाभावात् । तद्गीतेः तद्द्वारा तदपूर्वसाधनत्वाभावेन इरापदे प्रसक्त्यभावाच्च । अत एव ऊहग्रन्थे 'आईरा- आईरा चा दाक्षासा' इति गानाम्नानमपि अप्रमाणमेव । न च एतस्य श्रुतिमूलकत्वात् न्यायस्यैव अप्रामाण्यम्, ऊहग्रन्थसमाख्यया अस्य तर्कमूलत्वेन श्रुतिमूलत्वाभावात् । अत एव सन्न्यायविरोधे अस्य अप्रामाण्यमेव । यत्तु तन्त्ररत्नादिग्रन्थवशात् अस्य गीत्याम्नानस्य वेदत्वकथनम्, तत् वैदिकानां ऊहग्रन्थे पाठात् अनादरणीयम् । इति प्राप्ते, सत्यम्, इरापदस्वरूपस्यैव विधिः न तु प्रगाणस्य, तथापि प्रगाणाभावस्यापि अविधेयत्वात् कार्यापत्त्या गीतेरपि प्राप्तिर्न विरुध्यते । तथाहि, यद्यपि न गिरापदस्य स्तोत्रापूर्वे उपयोगः, तथापि गुणाभिधानरूपस्य कार्यस्य गिरापदेरापदयोः एकत्वात् युक्तस्तया धर्मलाभः । यद्यपि च न गुणाभिधानस्वरूपार्था धर्माः, तथापि गुणाभिधानजन्यस्य अपूर्वस्य एकस्यैव अग्निष्टोमस्तोत्रे चयनादौ चोपयोगात्, धर्माणां च गीत्यादीनां गिरापदकार्यगुणाभिधानजन्यावान्तरापूर्वप्रयुक्तत्वस्यैव दीक्षणीयाप्राङ्नियमन्यायेन अङ्गीकारात् चयनापूर्वसाधनीभूतगिरापदावान्तरकार्यापन्ने अग्निष्टोमस्तोत्रापूर्वसाधनीभूततादृशकार्यजनके इरापदे युक्तैव तद्धर्मप्राप्तिः । माऽस्तु वा अवान्तरकार्यभेदमङ्गीकृत्य कार्यापत्तिः, तथापि गिरापदबाधकतया तत्स्थानापत्तिः तावदस्त्येव इरापदस्य । अतश्च इरापदस्य प्रकरणात् स्तोत्राङ्गत्वे अवगते गीतिरूपधर्माकाङ्क्षायां बाधकत्वरूपस्थानापत्त्या उपस्थितस्य गिरापदस्य धर्मातिदेशे न किञ्चिद्बाधकमस्ति । आवश्यकं च गीतेः चयनापूर्वसाधनीभूतगिरापदाङ्गत्वम् । वस्तुतस्तु, यथैव 'यज्ञायज्ञियं पुच्छे गायति' इति वचनेन यज्ञायज्ञियस्य चयने उपयोगः, तथैव 'यज्ञायज्ञियेन स्तुवीत' इति वचनेन अग्निष्टोमस्तोत्रेऽपि । अतश्च तद्गतगीत्यंशस्य यावत् चयने स्वाश्रयगिरापदोपयोगकल्पनाद्वारा चयनोपयोगकल्पनम्, तावत् तत्पूर्वमेव अग्निष्टोमस्तोत्राङ्गभूतेरापदद्वारकत्वकल्पनया स्तोत्रोपयोगोऽपि इति उपदेशेनैव तत्प्राप्तेर्न गिरापदगीतेः इरापदे अतिदेशः । यद्यपि च अग्निष्टोमस्तोत्रेऽपि आर्चिके पुरस्तादुपरिष्टाच्च गिरापदस्यापि उपयोगात् तत्स्थानापत्तिः इरापदस्य अग्निष्टोमस्तोत्रसाधनत्वस्य समानत्वादित्याशङ्क्येत, तथापि आर्चिकोद्गीथयोः अवान्तरकार्यभेदात् अभेदेऽपि वा अप्रगीतस्यैव गिरापदस्य आर्चिके पाठात् गिरापदगीतेः गिरापदद्वारा चयनादावेव उपयोगेन अग्निष्टोमस्तोत्रे उपयोगाभावात् तत्कार्यापत्त्या अतिदेशेन तद्गीतेः इरापदे अतिदेशः ऊहो वा, अपितु उक्तरीत्या उपदेशेनैव । तत्त्वं तु 'ऐरं कृत्वोद्गेयम्' इत्यत्र न इरापदाक्षराणि विधीयन्ते, गिरापदयुक्तपाठेऽपि तत्सत्त्वात्, अपितु निषेधानुवादबलात् गकारपरिसंख्यामात्रं विधिफलम्, अतश्च गीतेः 'गाइरागाइरा चा दाक्षासा' इत्येवंविधाया गिरापदवृत्तित्वेन संमताया वस्तुतः इराक्षरधर्मत्वात् गकारसत्त्वे इव तदसत्त्वेऽपि स्वाश्रयवृत्तित्वाक्षतेः न गिरापदगीतेः इरापदे स्वतन्त्रः उपदेशः, न वा अतिदेशः ऊहो वा । यत्र तु 'न प्रप्रेति ब्रूयात्, प्रप्रीति ब्रूयात्' इत्यादौ अकारबाधेन इकारविधिः, तत्र पूर्वोक्तविधया स्वतन्त्रोपदेशो गीतेः । सर्वथा प्रगीतमेव इरापदम् । १८.

**मण्डन**— 'गीत्या समेतं तदिरापदं स्यात् ।' २१.

**शंकर**— 'इरापदे प्रगाणं स्यात् ।' २७.

**⌛ गिरिमुत्पाट्य मूषिका उद्धृता इति न्यायः।** यत्र कृतेऽपि बह्वायाससाध्ये कर्मणि, तुच्छफलोपलब्धिः तत्रायं प्रवर्तते इति । तथा चोक्तं पञ्चतन्त्रे 'खनन्नाखुबिलं सिंहः पाषाणशकलाकुलम् । प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥' **साहस्री.** ९३१.

* **गीतिः** आभ्यन्तरप्रयत्नजनितस्वरविशेषाणाम् अभिव्यञ्जिका । सा सामशब्दाभिलप्या । **भा.** ९।२।७।२९. * गीतिः षड्जादिस्वरसमाहाररूपा । **सु.** पृ. ८५५. * गीतिः स्तोत्रापूर्वप्रयुक्ता, न वर्णस्वरूपप्रयुक्ता । **टुप्**.९।१।१८।५५, * **गीत्या** वर्णा न निवर्त्यन्ते, अतुल्यकार्यत्वात् । ९।१।१९।५५, * गीत्या वर्णाः संस्क्रियन्ते । ९।१।१९।५४. * **गीतेः** ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टायाः वाचकः सामशब्दः । भा. ९।२।१०।३५. * गीतेः षड्जादिस्वरसमूहात्मकत्वेन सिद्धरूपत्वम् । **सु.** पृ. ८६१. * **गीतिषु** सामरूपासु ऋचः न प्रधानभूताः, किन्तु गुणभूताः । **भा.** ९।२।११ वर्णकं १.

**⌛ गीतिषु सामाख्या । २।१।११।३६ ॥**

अथ साम किंलक्षणम् । इदानीमनुप्रसङ्गेनैव सामशब्दार्थो निरूप्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । 'अद्दे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रैविदा विदुः, ऋचः सामानि यजूंषि' इति मन्त्रसामानाधिकरण्यं सामशब्दस्य श्रूयते । मन्त्रश्च वर्णात्मकः, न तु गानमात्रम् । किञ्च 'साम्ना स्तुवीत' इति श्रूयते । स्तुतिश्च गुणगुणिसम्बन्धकीर्तनम् । न च गानमात्रेण तत् संभवति । तथा 'सामानि अध्यापयामः, सामान्यधीमहे' इति गीयमाने एव मन्त्रे अभियुक्तोपदेशात् गीयमानः एव मन्त्रः सामशब्दाभिधेयः, न तु गीतिमात्रमिति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि उभयाभिधानशक्तिगौरवं न स्यात् । तथाहि, गीतिविशिष्टमन्त्राभिधाने विशेषणभूता गीतिस्तावत् अवश्यम् अग्रतोऽभिधातव्या । तथाहि 'ऋच्यध्यूढं साम गायति' इत्यृगक्षरनियतवर्तित्वात् गानविशेषस्य तदभिधानादेव मन्त्रप्रतीतिसिद्धेः आकृत्यधिकरणन्यायेन गीतिवचनत्वमेव सामशब्दस्य । तदुक्तम् **'एकखण्डेन शब्देन विशिष्टो यत्र लभ्यते । विशेषणस्य वाच्यत्वं तत्र सर्वत्र जायते ॥' इति** । तत्र यद्यपि सामशब्दात् गीतिविशिष्टो मन्त्र एव प्रतीयते, तथापि वाचकशक्तिः सामशब्दस्य गोशब्दस्येव विशेषणमात्रविषया । विशेष्यभूतमन्त्रप्रतीतिस्तु व्यक्तिवदेव । अतो 'गवा यजेत' इतिवत् 'साम्ना स्तुवीत' इति स्वाश्रयभूतऋग्द्वारेण उपपन्नमेव स्तुतिसाधनत्वं गानस्य, मन्त्रशब्दसामानाधिकरण्यं च सामशब्दस्य । **प्रयोजनं** पूर्ववत् प्रतिपत्तिलाघवम् । **सूत्रं तु**— सामशब्दस्य गाने वाचकशक्तिनिरूपणपरं सुबोधमेवेति । **तौता.**

**⌛ गीतिषु सामाख्या । २।१।११।३६ ॥**

अथ सामाख्यमन्त्रलक्षणमुच्यते । रथंतर-बृहद्-वैरूपादिसंज्ञकगीतिषु गानविशेषेषु साम इति आख्या । ऋगादिषु यत् गानम्, तत् साम । **के.**

* **गीत्युपायाः** अन्यवहितोत्तराधिकरणभाष्ये नाममात्रेण द्रष्टव्याः । **के.**

**⌛ गीत्युपायानां विश्लेषादीनां शाखाभेदेन समाम्नातानां विकल्पः ॥**

**अर्थैकत्वाद् विकल्पः स्यात् । ९।२।७।२९ ॥**

(यद्यपि 'अर्थैकत्वाद् विकल्पः स्यादृक्सामयोस्तदर्थत्वात्' इत्येतावत् सूत्रम्, तथापि 'अर्थैकत्वाद् विकल्पः स्यात्' इत्येतावन्तमेवावयवं गृहीत्वा सप्तममधिकरणं भाष्यादौ रचितम्, इति अत्रापि तथैव गृह्यते)।

**भाष्यम्**— सामवेदे सहस्रं गीत्युपायाः । आह, क इमे गीत्युपाया नाम ? उच्यते । गीतिर्नाम क्रिया । सा आभ्यन्तरप्रयत्नजनितस्वरविशेषाणामभिव्यञ्जिका । सा सामशब्दाभिलप्या । सा नियतपरिमाणा, ऋचि च गीयते । तत्संपादनार्था ऋगक्षरविकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभः इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते । तेषु संशयः किं समुच्चीयन्ते, उत विकल्प्यन्ते इति । किं तावन्नः प्रतिभाति ? सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति । **एवं प्राप्ते, ब्रूमः** । अर्थैकत्वाद्विकल्पः स्यादिति । एकार्था हि गीत्युपायाः । गीतिः कथं निर्वर्तेतेति प्रयुज्यन्ते । तत्र अन्यतमेन गीतौ निर्वृत्तायाम्, नेतरे प्रयोगमर्हन्ति । तस्माद्विकल्प इति ।

**शा**— छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वात् युगपत् प्रयोगासंभवात् तदनुरोधेन च सामवृत्तेः अन्याय्यत्वात् सिद्ध एव विकल्पः सामप्रसङ्गात् विस्पष्टीकाराय दर्शितः ।



**वि**— 'समुच्चेया विकल्प्या वा विभिन्ना गीतिहेतवः ।, आद्यः प्रयोगग्रहणा, दर्थैकत्वाद् विकल्पनम् ॥'

**भाट्ट**— सामवेदे शाखाभेदेन एकस्यैव स्वरसमूहात्मकस्य साम्नः आरोहावरोहादिभेदेन प्रकारभेदा आम्नाताः, एकस्यैव रागस्य देशभेदेन प्रकारभेदवत् । तेषां च प्रकाराणाम् एकगीत्यर्थत्वात् व्रीहियवादिवदेव विकल्पः सिद्ध एव प्रसङ्गात् स्मार्यते । (इति प्रथमं वर्णकम्)।

**मण्डन**— 'गीत्युपाया विकल्पिताः ।' १२.

**शंकर**— 'गीतिभेदविकल्पः स्यात् ।' १२.

**⌛ गुडजिह्विकान्यायः** । यथा कटुताभीत्या निम्बादिकटुद्रव्यपानमकुर्वाणस्य माणवकस्य जिह्वायां गुडलेपनं कृत्वा निम्बादि कटुद्रव्यं पाययन्ति पित्रादयः, तथा अर्थवादवाक्यानि कष्टे कर्मणि अप्रवर्तमानं पुरुषं स्वर्गाद्यक्षय्यादिकं श्रावयित्वा तस्मिन् प्रवर्तयन्तीति संक्षेपः । अत्र गुड इति मधुरद्रव्यमात्रस्योपलक्षणम् । फलश्रुतिरपि रोचनार्था । तदुक्तमभियुक्तैः 'वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितुमीश्वरः । नैष्कर्म्यांल्लभते सिद्धिं रोचनार्था फलश्रुतिः ॥ फलश्रुतिरियं नृणां नाश्रेयोरोचनं वरम् । श्रियो विवक्षया प्रोक्ता यथा भैषज्यरोचनम् ॥' अस्य तात्पर्यमुक्तं तत्रैव 'पिब निम्बं प्रदास्यामि खलु खण्डकलड्डुकान् । पित्रैवमुक्तः पिबति तिक्तमप्यति बालकः ॥' तत्र यथा निम्बादिपानस्य न खलु खण्डादिलाभ एव प्रयोजनम् । किं तर्हि ? आरोग्यम्, तथा वेदोऽपि अवान्तरफलैः प्रलोभयन् मोक्षायैव कर्माणि विधत्ते । उक्तं च अनर्घराघवटीकाकाररुचिपतिना— 'उभयेऽप्येते अभिमतवस्तुपुरस्कारेण गुडजिह्विकायां रसास्वादसुखं मुखे दत्त्वा कटुकौषधपानादाविव प्रवर्तयितव्याः' । यदाहु 'स्वादुकाव्यरसोन्मिश्रं शास्त्रमप्युपयुञ्जते । प्रथमं लीढमधवः पिबन्ति कटुकौषधम् ॥' इति । **साहस्री.** १५९.

* एवकारे प्रयोक्तव्ये इवकारो **गुडजिह्विकया** प्रयुक्तः । **भामती.** ३।१।२।८ ब्रसू. । अत्र कल्पतरुः— गुडजिह्विका मधुरोक्तिः । 'नैवं युक्तम्' इत्युक्ते नैष्ठुर्यं स्यात् इति । * सविकल्पकवत् निर्विकल्पकस्य आभासत्वमेव सूत्रकारेण विवक्षितम्, तत्प्रामाण्याभिधानं तु 'भावाच्चोपलब्धेः' इत्यत्र **गुडजिह्विकान्यायेन** । **संक्षेपशारीरके.** २४५ रामतीर्थः.

**⌛ गुडश्लेष्मन्यायः** । यथा गुडः श्लेष्मिणः श्लेष्माणं वर्धयित्वा पश्चात् श्लेष्माणं निपातयति, तद्वत् प्रथमं विश्वासमुत्पाद्य शत्रून् संवर्ध्य विनाशने प्रवर्तते इति । तथोक्तम् 'उच्छेद्यमपि विद्वांसो वर्धयन्त्यरिमेकदा । गुडेन वर्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥' इति । **साहस्री.** ६३०.

* **गुणः** अपि न धात्वर्थमनुपनीय स्वतन्त्रः शक्नोति इतिकर्तव्यतां ग्रहीतुम् इति धात्वर्थमाश्रयति । **वा.** ३।६।१६।४३ पृ. १०६९, * गुणः अपि 'यथा च द्रव्यमिच्छन्ति साधकत्वेन कर्मणाम् । तथा गुणमपीत्येवं नारुण्यस्यान्यसंगतिः ॥' यथैव द्रव्येण विना क्रियाऽनुपपत्तेः एकहायनीं क्रयो गृह्णाति 'तथा गुणविशेषेण द्रव्यं यावदलक्षितम् । तावत् तेन क्रियासिद्धिर्नास्त्यतोऽपेक्ष्यते गुणः ॥' तस्मात् सोऽपि क्रियाऽङ्गम् । ३।१।६।१२ पृ. ६९२, * गुणः अपूर्वः कर्मान्तरसंयोगान्नर्हो वा कर्मान्तरं कल्पयति । २।२।९।२३ पृ. ५३२, * गुणः अरुणादिः क्रियायाः साधनभूतद्रव्यपरिच्छेदसामर्थ्यात् उत्पत्त्यैव शेषः । ३।१।३।३, * गुणः उपादेयः तिरोहितकर्मानुवादेन शक्यो विधातुं नानुपादेयः, इत्येतदेव पुरस्तात् (प्रकरणान्तराधिकरणे) स्थितम् । ३।६।७।२२ पृ. १०४९. * गुणः कर्मभेदकं प्रमाणम् । **बाल.** पृ. ८. * गुणः काम्यः । 'प्रासङ्गिकीं क्रतोः सिद्धिं काम्यो हि कुरुते गुणः । गृह्णन्ति न च सिद्धार्थाः क्रतवः स्वगुणं तदा ॥' **वा.** ३।६।४।१० पृ. १०३६, * गुणः क्रियाऽङ्गम्, तथा च 'द्रव्यगुणसंस्कारेषु' इति गुणग्रहणं कृतम् । ३।१।६।१२ पृ. ६९२. * गुणः गुणान्तरावरुद्धे कर्मणि असंभवात् स्वविशिष्टकर्मोत्पत्तिमाक्षिपन् उत्पन्नस्य उत्पत्त्यसंभवात् कर्मान्तरेभ्यो भेदं बोधयति । **सु.** पृ. ५४१.

* **गुणश्चापूर्वसंयोगे** इत्येवं ब्रह्मादिवरणानि (सत्रे) यथाश्रुति क्रियन्ते । **वा.** ३।७।९।२४, * 'गुणश्चापूर्वसंयोगे नामधेयं च भेदकम्' । ३।१।१।१ पृ. ६५०, * अष्टाकपालस्य उत्पत्तिवाक्यशिष्टत्वात् आमिक्षावत्

बलीयस्त्वे सति द्व्यवदानं तेन सह बाधविकल्पसमुच्चयान् न प्रतिपद्यते इति '**गुणश्च**' इत्येवं कर्मान्तरं कल्पयेत् । ३।४।१४।४१ पृ. ९७९. * न चैवमपि गुणात् भेदः स्यात् 'गुणश्चापूर्वसंयोगे' इत्यधिकरणे गुणस्यापि कर्मभेदकतायाः वक्ष्यमाणत्वादिति वाच्यम् । कु. २।२।१।१.

**गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् । २।२।९।२३ ॥**

चातुर्मास्येषु वैश्वदेवपर्वणि 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्याम्नायते । अत्र किं आमिक्षागुणके कर्मणि वाजिनगुणस्य विधिः, उत वाजिनगुणकं कर्मान्तरं विधीयते इति विचारे सिद्धान्तमाह । गुणश्च संज्ञावत् कर्मभेदकः । अपूर्वसंयोगे अपूर्वेण अप्रकृतेन देवताऽभिधानेन संयोगे सति गुणोऽपि कर्म भिनत्ति । वाक्ययोः समत्वात् । उभे अपि वाक्ये अपूर्वयोर्यागयोर्विधायके मिथोऽनपेक्षे । आमिक्षावाक्ये तद्धितेन विश्वेषां देवानां देवतात्वम्, वाजिनवाक्ये चतुर्थ्या वाजिनाम् । एकत्र आमिक्षया सह एकवाक्यत्वम्, परत्र वाजिनेन । तस्मात् आमिक्षावाक्ये विश्वेषां देवानां देवतात्वम्, न वाजिनवाक्ये । तस्मात् 'वाजिभ्यो वाजिनम्' इति कर्मान्तरमिति सिद्धान्तः । के.

**गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात् । २।२।९।२३ ॥**

चातुर्मास्येषु वैश्वदेवे पर्वणि समामनन्ति 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति ! तत्र संदिह्यते किम् आमिक्षागुणके कर्मणि वाजिनं गुणविधिः, उत तस्मात् वाजिनगुणकं कर्मान्तरमिति । पूर्वे संज्ञानिबन्धनकर्मभेदं निरूप्य इदानीं गुणप्रकरणाभ्यां भेदे वक्तव्ये वस्तुत्वात् गुणनिबन्धन एव कर्मभेदः प्रतिपाद्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । 'वाजिभ्यो वाजिनम्' इत्यवगम्यो वाजिशब्दाभिधेयदेवताया वाजिनसंबन्धः प्रतीयते । अश्वश्च वाजिशब्दाभिधेयः । न चासौ देवतात्वेन प्रसिद्धः, नाकसदामेव देवतात्वात् । न च 'वसन्ताय कपिञ्जलानालभते' इतिवत् अश्वस्यापि देवतात्वमिति **वाच्यम्** । यतः अगत्या रूढया तत्र तथा आश्रितम् । इह तु अवयवशक्तिद्वारेण विश्वे देवा एव वाजिशब्दभिधेयाः सन्ति । तथाहि, वाजोऽन्नम्, आमिक्षाऽपि चान्नमेव । अनन्तरवाक्ये च तेषामेव आमिक्षावत्तया वाजोऽस्यास्तीति व्युत्पन्नवाजिशब्दाभिधेयत्वात् पूर्व-(वाक्यानुमिते) यागे विश्वदेवदेवताके वाजिनमात्रं विधीयते इति । तदुक्तम् '**अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः । विश्वे देवाः प्रतीयन्ते तच्च कर्मेह वाजिनम् ॥**' इति (वा. पृ. ५३२) । **न च** उत्पत्तिशिष्टामिक्षागुणावरुद्धत्वेन निराकाङ्क्षत्वात् न वाक्यान्तरोपात्तवाजिनगुणसंबन्ध इति **वाच्यम्** । उत्पत्तिशिष्टगुणावरोधेऽपि निष्कृष्य अनुवादेन क्रयवत् गुणान्तरोपपत्तेः । ननु 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इत्यत्र निष्कृष्टस्यैव क्रयस्य क्रीणातिपदेन आम्नातत्वात् 'वाससा क्रीणाति' इत्यादिष्वपि क्रीणातिपदेन निष्कृष्टक्रयानुवादात् तत्र युक्तं वासःप्रभृतीनां विधानम् । इह तु वाक्यद्वयेऽपि यजिपदाभावात् कथं निष्कृष्टयागप्रतिपादकत्वमस्ति । तथा 'वाजिभ्यो वाजिनम्' इत्यत्रापि द्रव्यदेवताप्रतिपादककर्मकारकसंप्रदानकारकयोः संबन्धस्य यागक्रियामन्तरेण असंभवात् यागकल्पनाऽवसरे वाजिपदस्य आमिक्षायागीयविशेषदेवतापरत्वात् आमिक्षायागेनैव द्रव्यदेवतासंबन्धोपपत्तौ तत्प्रतिपादकमेव श्रुतार्थापत्त्या वाजिपदं कल्प्यते । एतावानयं विशेषः, पूर्वस्मिन् वाक्ये अप्रकृतत्वात् द्रव्यदेवताविशिष्टयाग एव विधीयते । वाजिनवाक्ये तु देवतायाः प्राक् अस्य प्राप्तत्वात् कल्पितयजिपदेन निष्कृष्टयागमनूद्य वाजिनमात्रं विधीयते इति । किन्तु निष्कृष्टानुवादसाम्येऽपि अयमत्र विशेषः, भिन्नानतिप्रयोजनत्वात् क्रयेण द्रव्याणां समुच्चय एव, इह तु उपकार्यत्वात् आमिक्षावाजिनयोर्विकल्प एव । **न च** 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' इतिवत् तुल्यकालत्वेऽपि समुच्चय इति **वक्तव्यम्** । तुल्यकार्याणामपि एकवाक्योपादानेन परस्परसापेक्षाणां विशेषतश्च कारकसमुच्चितानां भवतु समुच्चयः । इह तु उक्तन्यायेन वैश्वदेववाक्ये द्रव्यदेवताविशिष्टयागविधानम्, न वाजिनवाक्ये तदनुवादेन वाजिनमात्रविधानमिति वाक्यभेदे सिद्धे भिन्नवाक्यविहितयोस्तुल्यकार्ययोः व्रीहियवयोर्विकल्प एवेति । समुच्चयाभिधानं तु वार्तिके प्रौढवादमात्रेणेति



मन्तव्यम् । **ननु** देवतासंबन्धद्वारको हि द्रव्यस्य यागसंबन्धः । तत्र आमिक्षायां तद्धितश्रुत्या देवतासंबन्धः, वाजिनस्य तु वाक्येन । अतः कथं विषमशिष्टयोर्विकल्प इति । **मैवम्** । एवं हि मन्यते । स्यादेवं हि यदि वैश्वदेवपदेन आमिक्षासंबन्धः प्रतीयते । किं तर्हि ? आमिक्षासमभिव्याहारलक्षणात् वाक्यादेवायम् । वैश्वदेवीपदात् सामान्येन द्रव्यसंबन्धेऽवगते विशेषमात्रम् आमिक्षापदात् प्रतीयते, तर्हि वाजिभ्य इत्यत्रापि चतुर्थीतः सामान्येन प्रदेयद्रव्यावगतौ वाजिनपदात् विशेषावगम इति नास्ति वाक्यगम्यत्वे कश्चिद्विशेष इति । **न च** 'विधिशब्दस्य मन्त्रत्वे भावः स्यात्' (१०।४।१२।२३) इत्यनेन न्यायेन वाजिनानुवादेन वाजिशब्देनैव देवतोपादानमिति **वाच्यम्** । वाजिशब्दस्य आमिक्षायागीयदेवतोपलक्षणत्वात् । आमिक्षायागीयदेवतायाश्च विश्वदेवशब्दाभिहितत्वात् विश्वदेवशब्देनैव उपात्तस्य वाजिनान्वय इति । **न चैवं** देवताऽन्वयेऽपि 'ऐन्द्रं दध्यमावास्यायाम्' इतिवत् कर्मभेद इति **वाच्यम्** । यतस्तत्र निरपेक्षवाक्यद्वयेन इन्द्रसंबन्धावगमात् दधिपयोद्रव्यकयागभेदो युक्तः । इह तु वाजिपदेन आमिक्षासंबद्धपूर्वयागीयविश्वदेवसंबन्धप्रतिपादनात् कर्माभेद इति । अतः पूर्ववाक्यविहिते एव यागे वाजिनमात्रगुणविधानमिति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि श्रौतोत्पत्तिशिष्टामिक्षाऽवरुद्धे कर्मणि वाजिनगुणविधिः उपपत्स्यते । तथाहि, न तावत् वाजिनस्य पूर्वस्मिन् कर्मणि समुच्चयेन विधानं संभवति, भिन्नवाक्योपात्तयोस्तुल्यकार्ययोः समुच्चयाभावस्योक्तत्वात् । नापि विकल्पेन, विषमशिष्टत्वेन विकल्पासंभवात् । श्रौतो हि विश्वदेवानामामिक्षासंबन्धः । वाजिनसंबन्धस्तु वाक्यादुत्पन्नः । ननु आमिक्षासंबन्धोऽपि वाक्यीय इत्युक्तम्, स्यादेवं यदि विश्वे देवा देवता अस्येति सर्वनामपदेन द्रव्यमात्रमुन्नीयेत । द्रव्यविशेषविषयत्वात् तद्धितस्य, तद्धितश्रुतिगम्यः एव विश्वेषां देवानामामिक्षासंबन्धः । तदुक्तम् '**नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते । अस्यशब्दाभिधेयस्य विशेषस्यैव देवता ॥ आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः । आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम् ॥**' इति । (वा. पृ. ५३३, ५३४) । वाजिभ्य इत्यत्र न प्रातिपदिकेन विभक्त्या वा हविर्द्रव्यमभिहितम् । नापि तस्यैव देवताऽन्वयित्वम्, किन्तु वाजिनपदसमभिव्याहारलभ्यत्वात् वाक्यगम्यमेवेति । तदुक्तम् '**न प्रातिपदिकेनोक्तं न विभक्त्या हविः स्वतः । न चास्य देवतायोग इति वाक्यात् प्रतीयते ॥**' इति । (वा. पृ. ५३५.) । **ननु** 'वारुण्या निष्कासेन तुषैश्चावभृथमवयन्ति' इत्यत्र श्रौतामिक्षासंबन्धेऽपि वरुणस्य प्रकारान्तरेणापि निष्कासतुषसंबन्धो दृष्ट एव, तद्वदिहापि वाजिभ्यो वाजिनसंबन्धो भविष्यतीति । **मैवम्** । तत्राप्यवश्यं कल्पनीये निष्कासतुषयोः देवतासंबन्धे संनिहितदेवतापरित्यागे कारणाभावात् अगत्या तथा आश्रितम् । अत्र तु कर्मान्तरविधानेनैव उपपत्तेर्वैषम्यमिति । किञ्च उत्पत्तिशिष्टामिक्षाऽवरुद्धयागस्य उत्पन्नशिष्टवाजिनसंबन्धः एव नास्तीति कथं विकल्पः ? इति । इदं तु इह **वक्तव्यम्** । कः पुनरुत्पत्तिशिष्टगुणावरोधो नाम विरोधप्रकारः ? तत्रोच्यते, प्रतिपत्तिविरोध एवायम् । आकाङ्क्षानिबन्धनो हि शब्दस्यान्वयः । न चोत्पत्तौ गुणविशिष्टे कर्मणि अवरोधे तत्समानकार्यगुणान्तराकाङ्क्षा समस्तीति नोत्पन्नशिष्टान्वयः । यत्र तु कार्यभेदः, तत्रोत्पत्तिशिष्टेऽपि द्रव्यान्तरे उत्पन्नशिष्टानामपि द्रव्याणां संबन्धो भवत्येव । तेन उत्पत्तिशिष्टैकहायन्यवरुद्धे क्रये उत्पन्नशिष्टानामपि वासःप्रभृतीनां कार्यभेदेन आकाङ्क्षासंभवात् समुच्चयो युक्त एवेति वैषम्यम् । किञ्च वाजिशब्दो हि 'रूढिर्योगमपहरति' इति न्यायेन अश्वमेव प्रतिपादयति, न च विश्वान् देवान् । न च नाकसदामेव देवतात्वम्, किन्तु या यस्य हविष उद्देश्यतया चोद्यते, सा तस्य देवतेति शार्दूलवसन्तादिवत् अश्वस्यापि देवतात्वमविरुद्धम् । भवतु वा यौगिको वाजिशब्दः, तथापि कथं देवतात्वप्रसङ्गः ? आमिक्षायागे हि तेषां स्वरूपेण देवतात्वम्, वाजिने तु वाजयोगित्वेन । ततश्च इन्द्रमहेन्द्रवत् देवताभेद एवेति । वाजपेयन्यायानादरेण निर्निमित्ताधिक्येन लक्षणायां लक्षणैव दोषः । तेन सर्वथा श्रौतोत्पत्तिशिष्टामिक्षाऽवरुद्धे कर्मणि प्रवेशमलभमानं वाजिदेवताकं वाजिनद्रव्यकं कर्मान्तरमेव कल्पयतीति सिद्धम् ।

तदुक्तम् '**गुणान्तरावरुद्धत्वात् पूर्वकर्मण्यसंभवात्। कर्मान्तरमति कुर्यादात्मसंगतये गुणः॥**' इति। (वा. पृ. ५३२) गुणश्चात्र विवक्षितो भेदकः पूर्वकर्मसंबन्धानर्हः अपूर्वकर्मसंबन्धार्हश्च। तदुक्तं **बृहट्टीकायाम्** 'न शक्नोति च संबद्धुं गुणः पूर्वेण कर्मणा। अपूर्वकर्मसंबन्धं यो वाऽर्हति स भेदकः॥' इति। अत्र पूर्वकर्मसंयोगानर्हस्य गुणस्य प्राप्ते कर्मणि अनेकगुणविधानासंभवात् भेदकत्वं पौर्णमास्यधिकरणे एव प्रपञ्चितत्वान्नेह प्रपञ्चितमिति। **प्रयोजनम्**— पूर्वपक्षे एकस्मिन्नेव कर्मणि आमिक्षावाजिनयोर्विकल्पः। सिद्धान्ते तु भेदेन कर्मद्वयानुष्ठानम्। **सूत्रं तु**— गुणश्च कर्मभेदकः, अपूर्वकर्मसंयोगे वाक्ययोः समत्वात् परस्परनिरपेक्षत्वादित्यर्थः। **तौता.**

**॥ गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात्। २।३।१।१ ॥**

अस्ति ज्योतिष्टोमः— 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तं प्रकृत्य श्रूयते 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति। तत्र संदिह्यते किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथंतरसाम्नो बृहत्साम्नश्चेति। अत्र तु गुणनिमित्तकर्मभेदापवादात् अध्यायसंगतिः। प्रकृतसंगतिश्चापवादः। अत्रायं पूर्वपक्षिणोऽभिसंधिः, 'रथंतरसामा सोमः' इति बहुव्रीहिसमासोऽयमन्यपदार्थप्रधानः। अन्यपदार्थश्चात्र सोमशब्दलक्षितो रथंतरसामविशिष्टो याग एव। विशेषणं च स्वजातीयान्ययोगव्यवच्छेदेनैव भवति। तेन रथंतरमेव साम अस्य यागस्य असौ रथंतरसामा यागः। न च प्रकृतौ ज्योतिष्टोमो रथंतरैकसामा। तेन रथंतरैकसामत्वलक्षणस्य गुणस्य वाजिनस्येव प्रकृतकर्मासंयोगात्, विशिष्टकर्मान्तरविधानमेवैतत्। तदुक्तम् '**समासः सति सामर्थ्ये तथापीष्टं विशेषणे। विशेषणं व्यवच्छेत्तृ ज्योतिष्टोमे च नास्ति तत्॥**' इति। (वा. पृ. ५७१) ननु यदिशब्दसंयोगात् निमित्तत्वमत्र प्रतीयते। तच्च पूर्वसिद्धस्यैव भवति। अतः कथं कर्मान्तरविधानम्? नैवम्। नहि प्रतीतमित्येतावतैव सर्वं क्रियते। किं तर्हि? यद्युपपद्यते। न च प्रकृतमप्रकृतं वा रथंतरैकसामकं कर्मास्ति, यस्य यदिशब्दात् निमित्तत्वमवगम्येत। तेन निमित्तरूपप्रसिद्धार्थपरित्यागेन 'अथैष ज्योतिः' इतिवत् विधास्यमानकर्मपरामर्शक एवायं यदिशब्दः। निपातानामनेकार्थत्वात् एवकारार्थ एवायम्। यथा 'यदि वेदाः प्रमाणम्, तदा अवश्यमेव यागात् फलेन भवितव्यम्'। अथवा विधिर्हि रुचिमुत्पाद्य प्रवर्तयति। तेन विध्याक्षिप्ताया एव रुचेर्निमित्तत्वं यदिशब्दोऽनुवदति। तेन रुचिपदाध्याहारेण अयं वाक्यार्थः, यदि रोचते ततो रथंतरैकसामानं क्रतुं कुर्यादिति। अत्र च पक्षद्वयेऽपि 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति वाक्यान्तरमेव। तदर्थस्य ऐन्द्रवायवाग्रतायास्तु ज्योतिष्टोमस्य क्रमान्तरयुक्तग्रहश्रवणेन निराकाङ्क्षत्वात् प्रकृतयागाङ्गत्वमवान्तरप्रकरणेनेति। यदि वा एकवाक्यत्वमेव अङ्गीकृत्य यदिशब्दस्य व्यवधानेन संबन्धः कर्तव्यः यद्यैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् ग्रहीतुमिच्छेत्, रथंतरैकसामानं क्रतुं कुर्यादित्यर्थः। अत्र च 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इत्ययं लिङ्शब्दः कामप्रवेदने। 'रथंतरसामा सोमः स्यात्' इति तु विधायक इति। अथवा हेतौ हेतुमति वा लिङ्शब्दः। तत्र यदि स्यादिति लिङ्शब्दो हेतुत्वप्रतिपादकः, गृह्णीयादिति तु विधायकः। तदा अयमर्थः, ऐन्द्रवायवाग्रताहेतुभूतः सोमयागः कर्तव्य इति। अत्रापि पक्षे कल्पितविधिना ऐन्द्रवायवाग्रताविधानमिति। अत्र च उभयत्रापि यदिशब्दो रथंतरैकसामयागस्य ग्रहाग्रतानिमित्तत्वानुवादकः। उभयपक्षेऽपि यद्येवं तदा ग्रहाग्रता इत्यस्यार्थस्य अविशेषादिति। एकवाक्यत्वपक्षे च ऐन्द्रवायवग्रहाग्रताया अङ्गत्वं वाक्येनैव। तदुक्तम् '**यदिशब्दपरित्यागो रुच्यध्याहारकल्पना। व्यवधानेन संबन्धो हेतुहेतुमतोश्च लिङ्॥**' इति। (वा. पृ. ५७४) किञ्च प्रातःसवने ग्रहाग्रता भवति, माध्यंदिने रथंतरम्। न च अनिष्पन्नं निमित्तं भवति। अतोऽपि न रथंतरं निमित्तम्, किन्तु याग एव। किञ्च जगत्सामेति यदुक्तम्, तन्न ज्योतिष्टोमविषयम् इत्युभयवादिसिद्धमेव। तत्समाननिर्देशयोरपि रथंतरसामबृहत्सामपदयोर्न ज्योतिष्टोमविषयत्वमिति। तेन रथंतरैकसामत्वलक्षणो गुणः कर्मान्तरं ज्योतिष्टोमव्यतिरिक्तं गमयेत्। रथंतरसंयोगस्य विशेषणत्वेन नाविशेषणभूतत्वात् कृत्स्नक्रतुसंयोगादिति।

**एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात्। २॥**

**एवं प्राप्ते, अभिधीयते।** अयमभिप्रायः। भवेदेवं यदि अत्र रथंतरसामत्वलक्षणो गुणः यदिशब्दोपबन्धो निमित्तत्वेन प्रतीयमानः प्रकृते कर्मणि न संभवेत्। संभवति तु 'रथंतरं पृष्ठं भवति' इति वचनेन ज्योतिष्टोमे रथंतरस्य विहितत्वात्। **ननु** 'रथंतरसामा सोमः' इत्यत्र रथंतरैकसामत्वमवगम्यते इत्युक्तम्। न च तथाभूतो ज्योतिष्टोमः, इति कथं तत्रास्य निमित्तार्थतया संबन्धः? इति। **उच्यते।** द्विविधं हि विशेषणं भवति व्यापकमव्यापकं च। तत्र व्यापकं विशेषणं सजातीयान्ययोगव्यवच्छेदकमेव। यथा नीलमुत्पलमिति। अत्र उत्पलस्य नीलत्वम्। अव्यापकं तु विशेषणं स्वायोगव्यवच्छेदेनैव यथा 'दण्डी पुरुषः' इत्यत्र पुरुषस्य दण्डः। ज्योतिष्टोमे च 'रथंतरं पृष्ठं भवति' 'बृहत् पृष्ठं भवति' इति वैकल्पिकत्वात् रथंतरस्य स्वायोगव्यवच्छेदेनैव रथंतरस्य विशेषणत्वम्। तत्र यद्यपि इतराण्यपि सामानि रथंतरस्य सजातीयानि, तथापि बुद्धिसंनिहितं व्यवच्छेद्यं व्यवच्छेदकेन व्यवच्छिद्यते। इतरसाम्नां च बुद्धिसंनिधानं ज्योतिष्टोममहाप्रकरणेन बहिरङ्गम्, पृष्ठावान्तरप्रकरणेन च बृहद्रथंतरयोः बुद्धिसंनिधानम् अन्तरङ्गम्। अतो बृहद्व्यवच्छेदेनैव रथंतरस्य विशेषणत्वम्, रथंतरव्यवच्छेदेन बृहतो विशेषणत्वमिति। अथ क्रतुविशेषितस्य रथंतरस्यैव यदिशब्देन निमित्तत्वं प्रतिपाद्यते, तथा च सति ज्योतिष्टोमस्य रथंतरव्यापकत्वात् क्रत्वन्तरव्यवच्छेदेनैव विशेषणत्वम्। तेनायमर्थः ज्योतिष्टोमस्यैव रथंतरमैन्द्रवायवाग्रतानिमित्तम्। **ननु** 'रथंतरसामा सोमः' इत्यत्र रथंतरस्यैव विशेषणत्वं प्रतीयते, न तु सोमयागस्य। **सत्यं** समासपदान्न प्रतीयते, विग्रहवाक्यात् प्रतीयते एव। एवं हि विग्रहवाक्यम्, रथंतरं साम यस्येति। अत्र च षष्ठ्यन्तत्वात् क्रतोरेव विशेषणत्वमवगम्यते। एतच्च समासपदात् अप्रतीयमानमपि यदिशब्दप्रतिपादितनिमित्तत्वानुरोधेन ज्योतिष्टोमप्रकरणानुरोधेन च स्वीक्रियमाणं कर्मान्तरकल्पनातो लघुतरमिति न दोषायेति। **ननु** निमित्तस्य उद्देश्यत्वात् तद्विशेषणविवक्षायां वाक्यभेदः स्यात्। तेन रथंतरस्य निमित्तत्वे कथं क्रतोर्विशेषणत्वम्? क्रतोर्वा निमित्तत्वे कथं रथंतरस्य विशेषणत्वम्? इति। (**मैवम्**) उद्देश्यविशेषणविवक्षायां हि वाक्यभेदो भवति, न पुनर्विशिष्टोद्देशे। यथोक्तम्, मृष्यामहे हविर्विशेषणमिति। तेन यथा आर्तेः केवलाया निमित्तत्वासंभवात् हविर्विशेषणभूताया एव निमित्तत्वेन उद्देश्यत्वम्, तथा इहापि केवलस्य क्रतोर्बृहद्रथंतरसामाधारस्य वैकल्पिकग्रहाग्रतानिमित्तत्वासंभवात्, केवलस्य रथंतरस्य क्रतुसंबन्धे ग्रहाग्रतानिमित्तत्वासंभवात् युक्तं विशिष्टस्यैव उद्देश्यत्वमिति। तच्च निमित्तत्वं यद्यपि प्रातःसवने ग्रहाग्रता माध्यंदिने रथंतरम्, तथापि बुद्धिस्वीकृतस्यापि निमित्तत्वोपपत्तेर्नानुपपन्नम्। ननु जगत्सामाशब्दस्य न ज्योतिष्टोमपरामर्शकत्वम्, तदसंभवात् तथा भवतु नाम। नहि ज्योतिष्टोमे जगन्नाम सामास्ति, अस्ति तु विषुवन्नामके कर्मणि। जगत्याधारे गीयमानं साम जगत्साम। तेन भवतु तस्य तद्विषयत्वम्, न चेह तथेति वैषम्यम्। अतो नात्र कर्मान्तरत्वमिति सिद्धम्। **प्रयोजनम्**—पूर्वपक्षे रथंतरैकसाम्नो बृहदेकसाम्नश्च कर्मणि भेदेनानुष्ठानम्। सिद्धान्ते तु ज्योतिष्टोमस्यैव वैकल्पिकग्रहणानुष्ठानमिति। **सूत्रं तु**—एकस्यैव ज्योतिष्टोमस्य तेनतेन रथंतरसामत्वेन बृहत्सामत्वेन च चिह्नभेदेन ग्रहाग्रत्वगुणविधानार्थमुच्येत अभिधानं क्रियेत, एकत्वं कर्मान्तरत्वम्, गुणवाक्यत्वात् गुणविधानपरत्वादित्यर्थः। **तौता.**

**॥ गुणस्तु क्रतुसंयोगात् कर्मान्तरं प्रयोजयेत्, संयोगस्याशेषभूतत्वात्। २।३।१।१ ॥**

'यदि रथंतरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' 'यदि बृहत्सामा, शुक्राग्रान्' इति ज्योतिष्टोमे श्रूयते। तत्र किं ज्योतिष्टोमात् कर्मान्तरं रथंतरसामा इति बृहत्सामा इति च विधीयते, उत प्रकृते ज्योतिष्टोमे एव नैमित्तिकः ऐन्द्रवायवाग्रताऽऽदि-

गुणविधिः इति विचारे पूर्वपक्षमाह । तुः प्रत्यवस्थाने । रथंतरसामादिः गुणः कर्मान्तरं प्रयोजयेत्, क्रतुसंयोगात् क्रतुना ज्योतिष्टोमात् क्रत्वन्तरेण रथंतरसामादिगुणवता संयोगात् प्रकृतकर्मणा च संयोगासंभवात् । संयोगस्य रथंतरादिसंयोगस्य अशेषभूतत्वात् शेषभूतत्वाभावात् क्रतुविशेषणत्वाभावात् । ज्योतिष्टोमे रथंतरं साम न केवलमस्ति किन्तु गायत्रवामदेव्यादिसामान्तरसहितमेव, इति सामान्तरसापेक्षत्वेन रथंतरसामा इति पदगम्यं विशेषणत्वं रथंतरस्यानुपपन्नम् । तस्मात् रथंतरसामा इत्यादिना कर्मान्तरं विधीयते ।

**एकस्य तु लिङ्गभेदात् प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् । २ ॥**

तुशब्दात् पक्षोऽन्यथा भवति । रथंतरसामा बृहत्सामा इति न ज्योतिष्टोमात् क्रत्वन्तरं विधीयते । किंतु ज्योतिष्टोमस्यैव गुणविधानं ग्रहाग्रताविशेष उच्यते यदि रथंतरसामा ऐन्द्रवायवाग्रता, बृहत्सामत्वे शुक्राग्रता इत्यादि । एकस्य ज्योतिष्टोमस्य लिङ्गभेदात् रथंतरादिनिमित्तभेदात् प्रयोजनार्थं ग्रहाग्रताविशेषविधानरूपप्रयोजनार्थतया 'यदि रथंतरसामा' इत्यादिवाक्यमुच्येत समवेतं स्यात् । ननु कर्मान्तरत्वात् एकत्वमेव असिद्धमिति चेन्न । गुणवाक्यत्वात् एकत्वं विज्ञायते । यदिशब्दस्वारस्येन ग्रहाग्रतारूपगुणविधिपरत्वस्य वक्तव्यतया कर्मान्तरत्वबुद्धौ निवृत्तायां कर्मैकत्वं विज्ञायते इत्यर्थः । तस्मात् प्रकृतज्योतिष्टोमे रथंतरादिनिमित्ते ग्रहाग्रताविशेषगुणविधिः इति सिद्धान्तः । यदि प्रधानभूते पृष्ठस्तोत्रे रथंतरमेकमेव साम गीयेत, तदा धाराग्रहेषु ऐन्द्रवायवग्रहः प्रथमं ग्रहीतव्यः । यदि तु पृष्ठस्तोत्रे बृहदेव साम गीयेत तदा शुक्रग्रहः धाराग्रहेषु प्रथमं ग्रहीतव्यः इति उदाहरणश्रुत्यर्थः । के.

* गुणस्तु विशिनष्टि साधनम्, साक्षात् द्रव्यं क्रियां प्रति उपकरोति । भा. ३।१।६।१२ पृ. ६९५ । द्रव्यं साक्षात् साधनम्, गुणस्तत्परिच्छेदार्थः । वा. * गुणः द्रव्यव्यतिरेकेण क्रियायां पृथक् न व्याप्रियते । वा. ३।१।६।१२ पृ. ६९२. * गुणः धर्मभेदे प्रमाणम् । मणि. पृ. १३. * गुणः न धात्वर्थमनुपनीय स्वतन्त्रः शक्नोति तन्निरपेक्षभावनारहितत्वात् निर्विशेषस्य च करोत्यर्थमात्रस्य अननुष्ठेयत्वात् अव्यापारत्वाच्च (इतिकर्तव्यताम्) ग्रहीतुम् इति (धात्वर्थम्) आश्रयति । वा. ३।६।१६।४३. * गुणः नहि द्रव्यकार्येषु वर्तितुमर्हति । भा. १०।२।२६, * गुणः नाम स भवति, यः स्वकार्ये कुर्वतामुपकारे वर्तते । २।१।१३।४२, * गुणः प्रधानसंनिधौ शिष्यमाणः प्रतिप्रधानमुपदिष्टो भवति । (न्यायोऽयम् 'गुणत्वाच्च वेदेन' इत्यस्याधिकरणस्य)। ३।८।४।१२, * गुणः बाधितव्यो न्याय्यः, न मुख्यः । १०।१।१०।३९ (४१), * गुणः विधीयमानः प्रतिप्रधानं भिद्येत, यथा गणाय स्नानमुपलेपनं वा विधीयमानं गणिनां भवति । १०।६।१७।६२, * गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम् । लक्षितेन च तेन प्रयोजनम्, विशिष्टस्य क्रियासाधनत्वात् । तस्मात् सोऽपि द्रव्यद्वारेण क्रियाया उपकरोति इति क्रियार्थ एव । (तस्मात् गुणस्यापि शेषत्वम्)। ३।१।३।३, * गुणः संख्यामात्रमनूद्य न शक्यते विधातुम् । १०।४।४।७, * गुणः साकंप्रस्थायीयत्वं फलाय दर्शपूर्णमासयोः, न कर्मान्तरम् । २।३।४।११. * अनङ्गमाश्रितो गुणोऽपि अनङ्गमेव स्यात् । वा. ३।१।७।१४ पृ. ७१६, * 'अनूद्य चापि धात्वर्थे गुणः सर्वो विधीयते ।' १।४।४।४ पृ. ३३४, * 'गुणान्तरावरुद्धत्वात् पूर्वकर्मण्यसंभवात् । क्रियाऽन्तरमतिं कुर्यादात्मसंगतये गुणः ॥' अपूर्वः कर्मान्तरसंयोगानर्हो वा गुणः कर्मान्तरं कल्पयति । २।२।९।२३ पृ. ५३२. * चिह्नभूतो हि गुणः साधनं लक्षयति । असति चिह्ने, न लक्ष्येत कतमत् साधनं क्रियायाः इति । ततः क्रियां नाध्यवस्येम कर्तुम्, इति भवति क्रियासाधनं गुणः । भा. ३।१।६।१२ पृ. ६९५, * न च अविशिंषन् साधनं गुणः क्रियामभिनिर्वर्तयति, इति अर्थात् साधनविशेषणता प्रतिपद्यते । ३।१।६।१२ पृ. ६९६. * न च गुणः आकृष्यमाणो गुणिनमाकर्षति, अतादर्थ्यात् । टुप्. ८।१।१३।२०. * न च प्रधानं प्रतिगुणं भिद्यते, प्रतिप्रधानं हि गुणो भिद्यते । भा. ३।१।६।१२ पृ. ६९७, * नहि अनुपदिष्टः अर्थप्राप्तश्च गुणो



भवति । ६।१।१।३. * 'निर्व्यापारो गुणः कामं न साधयति कश्चन । करणत्वं न तस्यास्ति निष्क्रियस्य फलं प्रति ॥' वा. ३।६।३।१० पृ. १०३५, * यथा शुक्लादिगुणो द्रव्येण विना न भवति, इत्यविनाभावात् द्रव्यं लक्षयति । ६।१।५।२३ पृ. १३६८. * यदा तु स्वप्राधान्येन विवक्ष्यते गुणः, तदा द्रव्यस्य यत् लिङ्गसंख्यम्, तन्न लभते । टुप्. १०।३।१४।५७. * **गुणाः** अमूर्तत्वात् न क्रियया संबध्यन्ते । द्रव्येणैषां संबन्धो भवति । भा. १०।२।२९।६८, * गुणा गुणेषु न वर्तन्ते । न संख्या संख्याऽन्तरे वर्तते, गुणो हि संख्या । भा. ८।३।६।१४, * गुणा न शक्नुवन्ति प्रधानमावर्तयितुम् । १।४।१०।१६, * गुणा भूयांसो यत्र समाम्नाताः, तत्र क्रियाऽर्था चोदना इति गम्यते । ३।३।३।१०. * गुणाः रूपरसगन्धस्पर्शपरिमाणसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारादृष्टबुद्धिसुखदुःखेच्छाद्वेषयत्नाः इति विंशतिः । (अत्र संख्यापृथक्त्वशब्दा न सन्ति । अदृष्टशब्देन धर्माधर्मौ द्वावपि)। मणि. पृ. २१. * असंबद्धेषु क्रियमाणा **गुणाः** क्रियां न परिच्छिन्द्युः इति क्रियासंबन्धिनमाश्रयन्ति । वा. ३।१।७।१४ पृ. ७१७. * **गुणेन** श्वेतेन द्रव्यस्य प्राकृताजस्य न बाधो वायव्यपशौ । भा. १०।२।३०।६९. * गुणेन हि मुख्यस्यानुसरणं न्याय्यम् । गुणमुख्यव्यतिक्रमन्यायोऽयम् । वि. ३।३।२. * क्रियया हि प्रधानस्योपकर्तव्यम्, **गुणेनापि** । वा. ३।१।७।१४ पृ. ७१८, * 'आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया ।' दधिगोदोहनादीनि क्रियया विना करणत्वमलभमानानि तामपेक्षन्ते । २।२।१२।२७ पृ. ५५६, * न हि व्यापारसामान्यस्य गुणैः उत्पत्तिः शक्या । न च क्रियाविशेषमसाधयन् गुणः सामान्यसाधनत्वं भजते । ३।६।१६।४३ पृ. १०६९. * **गुणात्** अनेकार्थोपादानलक्षणादपि कर्मान्तरविधिसिद्धिः । सु. पृ. ८८९. * गुणादपि अभिधानं भवति यथा सिंहो देवदत्तः, अग्निर्माणवकः इति । भा. ३।२।२।४.

* **गुणादविप्रतिषेधः स्यात्** (१२।४।४७) इति सूत्रस्य 'यस्तु अर्थविप्रतिषेधः शङ्कितः, स गौणत्वात् परिहर्तव्यः' । सु. पृ. ११०, * गुणात् केवलरथंतरसामकत्वलक्षणात् केवलबृहत्सामकत्वलक्षणाद्वा भेदसिद्धिः । पृ. ८८७. * गुणात् फलमुच्यते 'दाक्षायणयज्ञेन यजेत प्रजाकामः' इति प्रकृतयोर्दर्शपूर्णमासयोः, न यागान्तरम् । एवं साकंप्रस्थायीये संक्रमयज्ञे च द्रष्टव्यमिति । भा. २।३।५।११. * गुणात् फलं भवति इति इन्द्रियकामाधिकरणे (२।२।११) द्रष्टव्यम् । वा. ३।६।१६।४३ पृ. १०६७. * **गुणस्य** अपूर्वविधिर्यथा 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैस्तस्य सदो मिनुयात्' । बाल. पृ. २२. * गुणस्य उत्पत्त्यन्वयिनः कर्मभेदकत्वम् । भाट्ट. ६।५।१ पृ. २८४. * गुणस्य क्रियामभिनिर्वर्तयतः एतदेव सामर्थ्यम्, यत् साधनं विशिंष्यात् । भा. ३।१।६।१२ पृ. ६९५. * गुणस्य क्रियासाधनद्रव्यान्वयं विना श्रुत्यन्तगतक्रियाऽङ्गत्वानिर्वाहात् । सु. पृ. ११९२. * गुणस्य तु क्रियासंबन्धोत्तरकालं करणत्वं निष्पद्यते इति चिरतरेण (करणापेक्षा निवर्त्यते) । वा. २।२।११।२६ पृ. ५४९ । गुणस्य अव्यापाररूपत्वात् काष्ठादिवत् साक्षात् कारकत्वानुपपत्तेः भावनाऽवच्छेदकत्वानुपपत्तेश्च भावनाऽऽख्यक्रियाऽवच्छेदकधात्वर्थसंबन्धोत्तरकाले करणत्वनिष्पत्तेः चिरेण करणाकाङ्क्षानिवर्तकता । सु. पृ. ८४७, * गुणस्य देवतात्वान्तर्गतौ स्वरूपेणापि देवतायाः यागसमवायः । पृ. ६५१ । गुणस्य देवतात्वानन्तर्गतिवादिना स्तुत्यर्थकीर्तनस्य अवश्यवाच्यत्वात् । पृ. ६५४. * गुणस्य देवतानिष्ठस्य वाचकं पदम् आवाहनादिमन्त्रेषु प्रयोज्यम् । भा. १०।४।१४।२६-२९. * गुणस्य धात्वर्थानपेक्षस्य भावनाऽवच्छेदकत्वायोगात् होमद्वारा गुणस्य फलसाधनता उपवर्षेण उक्ता । सु. पृ. ८४६, * गुणस्य निराश्रयस्य फलसाधनत्वायोगः । पृ. ८४५. * गुणस्य भेदकत्वं द्वेधा । कश्चित्तावत् गुणः पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात् तत्र निवेशमलभमानः आत्मसंगतये विधेः कर्मान्तरपरतां कल्पयन् भेदको भवति (यथा वाजिनगुणः आमिक्षाऽवरुद्धे वैश्वदेवयागे निवेशमलभमानः स्वात्मसंगतये स्वविधेः आमिक्षायागात् यागान्तरपरतां कल्पयति । अन्यस्तु—) अनेकत्वात् गुणानां प्राप्तकर्मानुवादेन विध्ययोगात्

सर्वेषां विधिसिद्धये विधेः कर्मान्तरपरत्वं कल्पयति। स च पौर्णमास्यधिकरणे प्रसङ्गात् प्रतिपादितः। शा. २।२।९. * गुणस्य भेदकत्वं सगुणकर्मोत्पत्तौ पूर्वसंयोगानर्हत्वात्। सु. पृ. ८३५, * गुणस्य विधित्सितस्य अन्यतः प्राप्तौ नामत्वस्य उक्तत्वात्। पृ. ४५८, * गुणस्य विधेयस्यैव भेदकता। पृ. ८८७. * गुणस्य श्वेतस्य वायव्ये पशौ ( द्रव्ये ) नियमविधिः 'वायव्यं श्वेतमालभेत' इत्यादौ। वि. ४।२।१०. * गुणस्य साक्षात् ( भावनाऽन्वयं विना ) फले विध्यनुपपत्तेः। सु. पृ. ८५२, * आख्यातस्य भेदकत्वसंभवे तत्पारतन्त्र्यात् गुणस्य भेदकत्वं नास्ति। पृ. ७१२. * उत्पत्त्यवगतस्य गुणस्य ( आमिक्षारूपस्य ) पाक्षिकबाधम् अष्टदोषदुष्टं च विकल्पं परिहर्तुं गुणान्तरं वाजिनं कर्मान्तरं कल्पयति। **रत्नाकरः** संबन्धाक्षेपवादे श्लो. १३. * **गुणानामनुपादेयानां संनिधौ** कर्मान्तरत्वासाधकत्वम्। ( इति अधिकरणार्थः )। **भाट्ट.** २।३।१३. * गुणानामेकस्मिन् कर्मणि भिन्नकार्याणां समुच्चयः। ( 'एकस्मिन् कर्मणि भिन्नकार्याणाम्' इत्यत्र अधिकरणं द्रष्टव्यम् )। **भा.** १२।३।३।९, * गुणानामेकस्मिन् कर्मणि विहितानां समुच्चयः। यथा आघारे ऋजुमाघारयति, संततमाघारयति, प्राञ्चमाघारयति इति। १२।३।३।९, * गुणानामेकार्थानामेकस्मिन् कर्मणि विकल्पः, व्रीहियवयोः, खादिरादीनां यूपद्रव्याणाम्, बृहद्रथंतरयोश्च। विकल्पाधिकरणं द्रष्टव्यम्। १२।३।४। १०–१५. * गुणानां कारकविभक्तिः न कारकविशेषणत्वात्, किं तर्हि ? कारकत्वादेव। एतदपि पश्वेकत्वविवक्षाऽधिकरणे वक्ष्यते ( ६।८।१०।३५ )। वा. ३।१।६।१२ पृ. ६८८. * गुणानां गुणिभिः सह समवायलक्षणः संबन्धः अपौरुषेयः। **ऋजु.** पृ. १८८.

**गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्। ३।१।१२।२२॥**

अग्न्याधेये वारणकाष्ठपात्राणि अहोमार्थानि वैकङ्कतकाष्ठपात्राणि होमार्थानि च श्रूयन्ते। अग्न्याधेयेन तु तेषां पात्राणां नास्ति संबन्धः। तस्मात् तानि पवमानेष्टिषु निविशन्ते, उत दर्शपूर्णमासादिषु सर्वयागेषु इति विचारे आधानाङ्गेषु पवमानहविःषु पात्राणां निवेशः। **इति प्राप्ते, सिद्धान्तमाह।** यथा आधानम् अग्नीनां संस्कारार्थम् अग्नीनां गुणभूतम्, एवं पवमानहवींष्यपि अग्निसंस्कारार्थानि अग्नीनामङ्गम्। गुणानां च परार्थत्वात् आधानस्य पवमानहविषां च अग्न्यर्थत्वात् परार्थत्वेन च समत्वात् परस्परम् असंबन्धः स्यात् संबन्धो न स्यात्। तस्मात् आधाने श्रूयमाणानि पात्राणि न पवमानहविःषु भवितुमर्हन्ति। किन्तु दर्शादिसर्वयागेषु इति भाष्यानुसारी पन्थाः।

वार्तिके तु पवमानहविषां आधानाङ्गत्वेऽपि पात्राणां सर्वयागेष्वेव निवेशः पूषाद्यनुमन्त्रणन्यायेन ( ३।२।१। १–२ )। सूत्रं तु पूर्वाधिकरणस्य शेषतया 'ननु निविदां सामिधेन्यङ्गत्वात् न व्यवधायकत्वं स्यात्' इति शङ्कोत्तरत्वेन नेयम्। निविदोऽपि अग्निसमिन्धनार्थाः सामिधेन्योऽपि। तथा च गुणानां निविदां सामिधेनीनां च परार्थत्वात् अग्निसमिन्धनार्थत्वात्, परार्थत्वेन च समत्वात् तासां परस्परमसंबन्धः स्यात्। इति निविदो न सामिधेन्यङ्गम्। इति निविद्भिः सामिधेनीनाम् उपवीतस्य च व्यवधानं भवत्येव इति सूत्रार्थः इति उक्तम्। **के.**

* संमार्गविशेषणत्वं भाष्ये संशिष्यमाणं धात्वर्थस्यापि भावनाविशेषणत्वात् 'गुणानाम्' इत्यनेन न्यायेनैव विशेषणानन्वयात् धात्वर्थानवच्छिन्नाया भावनायाः विशेषणान्वयोक्त्यर्थम्। **सु.** पृ. १०२१. * **गुणानां च** आधानगुणभूतानां पवमानेष्टीनां परार्थत्वेन अयज्ञतया आधानसमत्वात् यज्ञसंयोगेन श्रुतैः पात्रैः असंबन्धः स्यात् इति सूत्रव्याख्या। यज्ञशब्दस्य प्रधानयागवाचित्वेन पवमानेष्टीनां यज्ञत्वाभावप्रदर्शनार्थमेतत् सूत्रम्। **सु.** पृ. १०६२. * गुणानां च इति न्यायेन सर्वे सेवका राजानमिव भावनायामेव परस्परनिरपेक्षाणि कारकाणि अन्वियन्ति। **भूषणसारः।** दर्पणः–– विशेषणानां परार्थत्वात् अन्योपकारकत्वात्, अत एव समत्वात् समानधर्मत्वात् तेषां परस्परं संबन्धो न भवेत् इति न्यायार्थः। धात्वर्थनिर्णयः. कारिका १७. * 'गुणानां च' इत्यनेन न्यायेन अभ्यासानां यागगुणत्वात् गुणरूपधर्मान्वयानर्हत्वोक्त्यर्थतया मासमानगुणानामपि प्रयाजानां गुणान्वयाभ्युपगमेऽपि। **सु.** पृ. ११५७.



* दधित्वसिद्ध्यर्थास्तु के चित् तस्य ( पयसः ) धर्माः पूर्वेद्युः क्रियन्ते। न च ते शाखाऽऽहरणादीनां ग्राहकाः 'गुणानां च' इति स्थितत्वात्। **वा.** ३।६।८।२९, * ननु निविदां सामिधेन्यङ्गत्वात् न व्यवधायकत्वं स्यात्, अत आह– गुणानां च इति। सूत्रं तु पूर्वस्यैव पदोत्तरत्वेन नेयम्। ३।१।१२।२२ पृ. ७३८. * सामिधेन्यावाहनयोर्भिन्नकार्यार्थत्वेन गुणानां च इति न्यायेन परस्पराङ्गाङ्गीभावे मानाभावात् नावाहनबाधः। **संकर्ष.** ४।४।७. * स्तोभाश्च उच्चैर्गेयत्वादयश्च साम्नि गुणभूताः। 'गुणानां च' इत्युक्तम्। **टुप्.** ९।२।१५।४७ पृ. १७३६. * **'गुणानां च परार्थत्वा**दित्यनेनापि हेतुना। संबद्धं नाज्यभागाभ्यामनुवाक्याचतुष्टयम्॥' वार्त्रघ्न्यौ द्वे वृधन्वत्यौ द्वे इति चतुष्टयम्। पूर्वपक्षे इदम्। **वा.** ३।१। १३।२३ पृ. ७३९, * गुणानां च परार्थत्वात् इत्यनेनैव ( आधानस्य पवमानेष्टीनां च ) परस्परानङ्गत्वम्। ३।६।४।१२ पृ. १०३८, * गुणानां च परार्थत्वात् इति आनर्थक्यात्तदङ्गेषु ( ३।१।९।१८ ) इत्यस्यापवादः। ३।१।१२।२२. * 'गुणानां च परार्थत्वात्' इति सूत्रं स्वतन्त्राधिकरणत्वेन भाष्ये व्याख्यातम्। पूर्वाधिकरणान्तर्गतमिति वार्तिकमतम्। 'मिथश्चानर्थसंबन्धात्' इत्युत्तराधिकरणस्य पूर्वपक्षत्वेनापि योजयितुं शक्यम् इति सुधायां वार्तिके चोक्तम्। **के.** * ननु च यथा प्रयाजादयः एकप्रयोगवचनपरिगृहीतत्वेऽपि 'गुणानां च परार्थत्वात्' इत्येवं परस्पराङ्गत्वं न प्रतिपद्यन्ते, तथा अङ्गहविःसंबन्धं बर्हिः न प्रतिपद्यते। नैतदेवम्। **वा.** ३।७।१।४. * प्राप्तकर्मानुवादेन गुणविधिस्थले भावनारूपस्य कर्मरूपस्य विशेष्यस्य अन्यतः प्राप्ततया विधेर्विशिष्टपरत्वाभावात् केवलगुणपरत्वमेव वाच्यम्, तत्र एकस्य इतरविशिष्टस्य विधिर्न भवति 'गुणानां च परार्थत्वात्' इति न्यायेन तेषां परस्परवैशिष्ट्याभावात्। **कु.** २।२।३।६. * यदि पवमानेष्टिवत् दर्शपूर्णमासादीन्यपि निष्फलानि भवेयुः, तेषां तु ( दर्शपूर्णमासादीनां ) फलवत्त्वात् 'गुणानां च परार्थत्वात्' इत्येष न्यायो नास्ति। **वा.** ३।६।५।१५ पृ. १०३९, * गुणानां परस्परं संबन्धो न विद्यते। १।४।२।३ पृ. ३२९. * गुणानां बहूनां विधौ ( प्राप्ते कर्मणि ) वाक्यभेदापत्तिः। **वि.** १।४।१२. * गुणानां भूयस्त्वेन कर्तव्यतालिङ्गेन ज्योतिष्टोमस्य याजुर्वेदिकस्य चोदना अनुमीयते। **भा.** ३।३।३।१०.

* **गुणानां मिथः असंबन्धः इति न्यायः।** वारणाधिकरणम्। **भा.** ३।१।१२।२२. * 'गुणानां यत्र भूयस्त्वमितिकर्तव्यतात्मकम्। तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते॥' **वा.** ३।३।३।१०. * अवयविविशेषगुणानामवयवगुणपूर्वकत्वमिति नियमः। **मणि.** पृ. ५४, * कार्यद्रव्यवृत्तिविशेषगुणानां पाकादिना, विरोधिगुणान्तरोत्पत्त्या, द्रव्यनाशेन वा नाश्यत्वमिति नियमः। पृ. ५३. * परगुणानां परत्राभावात् अवश्यं गुणेभ्य आयातः इत्येवंलक्षणं गौणत्वम्। **वा.** ३।२।१।१ पृ. ७४६, * प्रस्तुतगुणिद्वारेण अप्रस्तुतानामपि गुणानां प्रस्तुतव्यवहारः संभवति। ३।६।१६।४७, * 'लिङ्गसंख्याऽऽदिसंबन्धो गुणानां न च विद्यते। तद्योगादपि शुक्लादेर्द्रव्यवाचित्वमिष्यते॥' ३।१।६।१२ पृ. ६८२. * गुणे गुणानङ्गीकारस्य निर्युक्तिकत्वेन अश्रद्धेयत्वात्। श्रद्धेयत्वेऽपि वा। **रहस्य.** पृ. १५.

**'गुणे त्वन्यायकल्पना' इति न्यायः।** गुणे बहुवचने अन्यायकल्पना, न प्रधाने प्रातिपदिकार्थे ( अदितिः पाशान् इत्यत्र )। **सूत्रं.** ९।३।५।१५. * 'गुणे त्वन्यायकल्पना' इति प्रातिपदिकार्थप्राधान्यात् 'उद्गातारं वृणीते' इति च उत्पत्तौ एकत्वात् एकस्मै एव उद्गात्रे चमसो दातव्यः श्रूयते ( पूर्वपक्षे इदम् )। **वा.** ३।५।८।२३, * न च वाजपेयशब्दवेलायां कश्चित् विरोधः ( सप्तदशारत्नित्वेन ) येन लक्षणा (वाजपेयशब्दस्य) आश्रीयते **'गुणे त्वन्याय्यकल्पना'** इति, तद्वरं यूपशब्दे एव लक्षणा। ( इदं पूर्वपक्षे )। ३।१।९।१८. * वेदसूत्रयोर्विरोधे सूत्रे एव 'गुणे त्वन्यायकल्पना' इति न्यायेन अध्याहारादिकल्पनमिति मीमांसकानां भामतीकारादीनां च सिद्धान्तः। **सनातनधर्मप्रदीप**–प्रमाणप्रकाशे पृ. ४४. * आग्नेयं चतुर्धा करोति। प्रधानभूतद्रव्यसंकोचपरिहारार्थं संबन्धसामान्ये तद्धितस्यानुशासनिकीं लक्षणामङ्गीकृत्य अग्नि-

संबन्धित्वमात्रं तद्विशेषणम् 'गुणे त्वन्याय्यकल्पना' इति न्यायात्। **कौ.** ३।१।१५।२६ पृ. २१७, * ऐन्द्या गार्हपत्यम्। द्वितीयैव प्रतियोगित्वलक्षिका गार्हपत्यसमीपे स्थित्वा इन्द्रं प्रकाशयेत् इति। गुणे० इति न्यायात् गार्हपत्यप्रातिपदिकमेव इन्द्रे गौणम्, यज्ञसाधनत्वसादृश्यात्। (पूर्वपक्षे)। ३।२।२।३ पृ. २३०. * यथा लक्षणातो वाक्यभेदस्य जघन्यत्वात्। लक्षणा हि पददोषः, वाक्यभेदस्तु वाक्यदोषः। पदवाक्यदोषयोर्मध्ये पदे एव दोषकल्पनाया उचितत्वात् 'गुणे त्वन्याय्यकल्पना' इति न्यायादित्युक्तं न्यायप्रकाशे। **साहस्री.** ८४८. * गुणे फलकल्पनायां यजतेर्न विवक्षा। **भा.** १।४।३।३ पृ. ३२८. * गुणे विधिशक्तिः संचरति। **वा.** ३।३।१०।२१ पृ. ८६९.

ꕥ **'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः। यत्र स्यात्, तत्र विज्ञेयं गुणधर्मस्य बाधनम्॥'** (वा. ३।३।२।९ पृ. ८१०) **इत्यनेन न्यायेन** उच्चैस्त्वस्य उपांशुत्वात् बलीयस्त्वात्, प्रमाणबलाबलाच्च प्रमेयबलाबलबलीयस्त्वस्य उक्तत्वात् वाचनिकस्यापि उपांशुत्वस्य न्यायप्राप्तेन उच्चैस्त्वेन युक्तो बाधः यजुरन्तरविषयत्वाच्च वचनानर्थक्यपरिहारः। **सु.** पृ. ६७९, * स्वरूपतोऽङ्गविधायिना वेदेन अङ्गस्य स्वरविधौ उपलक्षणं बलवत्प्रधानद्वारा अङ्गविधायिना वेति चिन्तायाम् **'गुणे स्वरूपतो धर्मः'** इत्यनेनैव न्यायेन प्रधानद्वारा अङ्गविधायिना इति निर्णयात् प्रात्यात्मिकवेदधर्मबाधेन प्रधानवेदधर्मः कार्यः। पृ. ११८५. * एकान्तद्रव्यसंबन्धिनि तावत् गुणे विशेषणत्वात् पूर्वतरमभिहिते तत्संबन्धादेव प्रतीयमानस्य द्रव्यस्य न शक्यं वाच्यत्वं कल्पयितुमित्युक्तम्। **वा.** ३।१।६।१२ पृ. ६८२. * यत्रयत्र गुणे कामो भवति, तत्रतत्र क्रियायां साध्यमानायाम्, नान्यथा। **भा.** ३।६।१६।४३ पृ. १०६९. * **गुणकरणत्वं** 'फलश्रुतेश्च कर्म० (२।२।११।२५–२६)' इत्यधिकरणे व्युत्पाद्यते। **सु.** पृ. ८४८. * **गुणकर्म** दृष्टोपकारकम्। **कु.** २।१।४।७. * **गुणकर्माणि** एव संनिपत्योपकारकाणि आश्रयिकर्माणि इति चोच्यन्ते। **मीन्या.** * यैः कर्मभिः द्रव्यमुत्पादयितुं संस्कर्तुं वा शक्यते, तानि **गुणकर्माणि**। यूपतक्षणम् आहवनीयाधानं वा, अवघातः पेषणं वा। **वि.** २।१।४. * **गुणकर्मरूपं** वैदिकं कर्म यथा आधानम्। **बाल.** पृ. ८१. * **गुणकल्पना** सूत्रेषु कृता यथा 'गुणकल्पास्त्वमी कृताः। ५७॥ औत्पत्तिकस्तु गव्यस्य तथोष्णिक्ककुभोरिति। दर्शनाच्च विशेषस्य तथाऽभ्युदय इत्यपि॥ ५८॥ **श्लोवा.** १।१।१ औत्पत्तिकसूत्रे (१।१।५) लक्षणया उत्पत्तिशब्देन स्वभावाभिधानम्। 'गव्यस्य च तदादिषु' (८।१।११।१८) इत्यत्र गव्यशब्देन गोविकारतदवयववाचिना 'गावो वा एतत् सत्रमासत' इत्यर्थवादोदितगोसंबन्धमात्रेण गवामयनस्याभिधानम्। तथा सामिधेनीविवृद्धौ आगम्यमानानामृचां सर्वासां समिध्यमानवतीं समिद्धवतीं चान्तरा निवेशः इति पूर्वपक्षमुक्त्वा 'या एव धाय्याशब्दिताः तासामेव तत्र निवेशः नान्यासाम्, आगन्तूनामन्ते निवेशः' इति सिद्धान्तमुक्त्वा तल्लिङ्गमिदमुच्यते 'उष्णिक्ककुभोश्चान्ते दर्शनात्' (५।३।३।६) इति। अत्र उष्णिक्ककुप्शब्देन त्रिष्टुबुच्यते इत्युक्तम्। तथा 'दर्शनाच्च विशेषस्य तथाऽभ्युदये' (१०।३।१३।५५) इत्यत्र अभ्युदयशब्देन अभ्युदयसाधनभूतो द्वादशाहो लक्षितः। **रत्नाकरः।** * **गुणकल्पनया** विधिर्यथा 'सृष्टीरुपदधाति' 'प्राणभृत उपदधाति' इति। अत्र सृष्टिशब्दे प्राणभृच्छब्दे च गौणी कल्पना। तथा 'श्येनचितं चिन्वीत'। अत्र चयने श्येनसादृश्यं गुणो विधीयते फलाय। पुरुषार्थोदाहरणमेतत्। पूर्वे तु क्रत्वर्थे। **बाल.** पृ. २७.

* **गुणकामा** याजमानाः। काण्डाधिकरणम्। तथाकामाधिकरणम्। गुणेन साध्याः कामाः गुणकामाः। **भा.** ३।८।५।१३–१४, * **गुणकामानां** फलचमसे न प्रवृत्तिः। 'सोमं ते क्रीणामि' इत्यादेश्च ऊहेन प्रवृत्तिः 'फलानि ते क्रीणामि' इति। ३।६।१३।३६, * गुणकामानां बाधः अस्थियज्ञस्य मृतकर्तृकत्वपक्षे। १०।२।२०।५१, * गुणकामानां होतृकामनयाऽनुष्ठीयमानानां लोपः अस्थियज्ञस्य मृतकर्तृकत्वपक्षे। १०।२।२२।५६–५७.



ꕥ **गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात्। ८।१।१४।२३॥**

'गोदोहनेन प्रणयेत् पशुकामस्य' 'उपास्मै गायता नरः इति ग्रामकामाय प्रतिपदं कुर्यात्' इत्यादयो गुणकामाः। गुणः गोदोहनं प्रतिपत् इत्यादिः। गुणैः साध्याः कामाः पशुग्रामादयः गुणकामाः। गुणकामेषु इति निमित्तसप्तमी। प्रवृत्तिः कस्य इत्याकाङ्क्षायां गुणकामानामिति षष्ठ्यन्तेन विपरिणामः। गुणकामशब्देन गोदोहनादय एव गृह्यन्ते। गुणकामेषु गुणकामार्थं पश्वाद्यर्थं गुणकामानां गोदोहनादीनां प्रकृतिगतानां सौर्यादिविकृतौ प्रवृत्तिः स्यात्। आश्रितत्वात् गोदोहनादेः प्रणयनाद्याश्रितत्वात्, प्रणयनादेश्च प्रकृतिवत् विकृतावपि सत्त्वात्। गोदोहने च प्रवृत्ते तदाश्रितः कामोऽपि प्रवर्तितुमर्हति। यथा 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति वीर्यफलकस्य खादिरत्वस्य प्रवृत्तिः, तद्वत्। तस्मात् गुणकामानां विकृतौ प्रवृत्तिः, इति पूर्वः पक्षः।

**निवृत्तिर्वा, कर्मभेदात्। २४॥**

पूर्वपक्षं प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह। गुणकामानां न सौर्यादौ प्रवृत्तिः, किन्तु निवृत्तिः, प्रवृत्तिर्न स्यादित्यर्थः। कुतः? कर्मभेदात् कार्यभेदादित्यर्थः। अन्यत् कार्यं गोदोहनस्य, अन्यच्च चमसस्य। चमसः क्रत्वर्थः, गोदोहनं तु पुरुषार्थम्। तस्मात् विकृतौ गुणकामा न प्रवर्तेरन्।

**अपिवाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिः स्यात्। २५॥**

पूर्वपक्षे 'खादिरं वीर्यकामस्य यूपं कुर्यात्' इति दृष्टान्त उक्तः। तद्वैषम्यप्रदर्शनार्थं सूत्रमिदम्। अपिवा इतिपदेन दृष्टान्तपरिहारः सूच्यते। खादिरस्य अतद्विकारत्वात्। तस्य क्रत्वर्थस्य विकारः तद्विकारः। न तद्विकारः अतद्विकारः। खादिरः न क्रत्वर्थविकारः। किन्तु क्रत्वर्थ एव। एवं च खादिरस्य अतद्विकारत्वात् क्रत्वर्थत्वाच्च तस्मिन् वीर्यफलस्य प्रवृत्तिः स्यात् इति युक्तम्। गोदोहनादेस्तु क्रत्वर्थत्वाभावात् न विकृतौ प्रवृत्तिः। तस्मात् गुणकामानां विकृतौ न प्रवृत्तिः इति सिद्धान्तः। **के.**

* गुणकामेष्वाश्रितत्वात्। गुणकामानां आष्टमिकन्यायेन प्रणयनवत् लौकिकचयनस्य आश्रयत्वव्यावृत्त्यर्थं चयने अपूर्वीयत्वविवक्षा। **कौ.** २।३।१०।२२ पृ. ७०.

* गुणकामेषु याज्ञिकानां द्वयी प्रतिपत्तिः। केषांचित् मीमांसकवत् गुणात् फलम्। अपरेषां तु गुणः क्रत्वर्थः एव, तद्वतस्तु क्रतोः फलान्तरसंबन्धः। **वा.** २।२।१२।२७ पृ. ५६१.

* **गुणकामाधिकरणम्।** गुणफलाधिकरणम्। इन्द्रियकामाधिकरणं इत्यत्र द्रष्टव्यम्। **के.** २।२।११।२५–२६. * **गुणकामाधिकरणे** आश्रयत्वेन धात्वर्थान्वय उक्तः। **मीन्या.** पृ. ७२.

* **गुणक्रिययोः** ऐच्छिकः पुरुषार्थः समुच्चयः वत्सजान्वाकारवेदस्य सामिधेन्येकविंशत्यनुवचनस्य च पशुप्रतिष्ठोभयकामनायां समुच्चयः। **बाल.** पृ. १७६, * गुणक्रिययोः न्यायगम्यः क्रत्वर्थः समुच्चयः यथा 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति'। अत्र वसनशब्दोक्तपरिधानक्रियायाः लौहित्यगुणस्य च प्रचारक्रियायां समुच्चयः अरुणान्यायेन। पृ. १६७, * गुणक्रिययोः न्यायगम्यः पुरुषार्थः समुच्चयः यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। एकत्वं यागश्च फलभावनायां समुच्चित्य विधीयते। पृ. १७०, * गुणक्रिययोः वाचनिकः क्रत्वर्थः समुच्चयः। सौरपुराणे 'विविधं पायसं दद्यात् भक्ष्याणि विविधानि च। लेह्यं चोष्यं यथाकाममुष्णमेव फलं विना॥'। पायसशब्दप्रत्ययोपात्ता पाकक्रिया उष्णगुणश्च। पृ. १७२.

* **गुणगुणिनोर्भेदाभेदः।** **मणि.** पृ. २२. * **गुणगुणिसंबन्धकीर्तनं** स्तुतिः। **सु.** पृ. ३९५.

* **गुणजन्यकामानां** याजमानत्वमित्यधिकरणार्थः। **भा.** ३।८।५।१३–१४.

* **गुणतद्भावयोः** न्यायगम्यो विकल्पः क्रत्वर्थः यथा दार्शिकवेदिमाने 'व्याममात्री पश्चात् स्यात्' इत्याहुः 'नात्र मात्राऽस्ति' इति च शतपथे। **बाल.** पृ. १५३.

* **गुणत्वम्।** गकारादीनां वर्णत्वशब्दत्वगुणत्वेषु सत्सु द्रुतादिभेदस्य परोपाधित्वात् गकारादिरूपैकत्वसिद्धे-

गौत्वादिमात्रं न कल्पितम्। वा. । २।२।२।२ पृ. ४७१, * गुणत्वं प्रधानाश्रयित्वम् ।३।१।७।१४ पृ. ७१८. * गुणत्वं विशेषणत्वम्, न शेषत्वम् । रत्नाकरः. श्लोवा. अनुमाने ३. * **गुणत्वेन** प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यमिष्यते यथा पशुपुरोडाशादौ देवताऽऽदेः । भाट्ट. ३।४।८ पृ. ३१८.

**गुणत्वाच्च वेदेन न व्यवस्था स्यात्। ३।८।४।१२ ॥**

इदं सूत्रं पूर्वाधिकरणगुणसूत्रत्वेन पूर्वं व्याख्यातम्। अथवा अनेन सूत्रेण अधिकरणान्तरमेव रचयितव्यम्। तदित्थम् – उद्गातृवेदे श्येनयागप्रकरणे 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति' इति श्रूयते। अध्वर्युवेदे च वाजपेयप्रकरणे 'हिरण्यमालिनः ऋत्विजः प्रचरन्ति' इति। तत्र औद्गात्रसमाख्यया उद्गातॄणामेव लोहितोष्णीषवत्ता स्यात्, न सर्वेषामृत्विजाम्, एवमाध्वर्यवसमाख्यया अध्वर्यूणामेव हिरण्यमालाधारित्वं स्यात्, न सर्वेषामिति समाख्यया उत्सूत्रे **पूर्वपक्षे** प्राप्ते, सूत्रेण सिद्धान्तयति। गुणत्वात् लोहितोष्णीषस्य हिरण्यमालायाश्च ऋत्विग्गुणत्वात् 'ऋत्विजः प्रचरन्ति' इति ऋत्विक्पदस्य च बाधायोगात् वेदेन औद्गात्रम् आध्वर्यवम् इति समाख्यारूपेण व्यवस्था न स्यात् उद्गातृमात्रधर्मता अध्वर्युमात्रधर्मता च न स्यात्, किन्तु सर्वेषामेव षोडशानामृत्विजां लोहितोष्णीषता हिरण्यमालित्वं च धर्मः स्यात्। इति सिद्धान्तः। के.

* गुणत्वाच्च इत्यनेन न्यायेन आध्वर्यवादिसमाख्यानां गुणभूतेष्वेव कर्तृषु व्यापारेण प्रधानभूतकर्तृरूपवस्त्वविनियोजकत्वात्। सु. ३।७ पृ. ५१. * **गुणत्वे** विनियोक्त्री शेषषष्ठी यथा 'आज्यस्यैव नावुपांशु पौर्णमास्यां यजन्'। बाल. पृ. ४५. * **गुणत्वप्राधान्ये** एकस्य कर्मणो न युक्ते। वा. ४।२।८।२२, * 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात्। गुणद्रव्ये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' १।४।२।३ पृ. ३३१, * **गुणधर्मः** अतिक्रमितव्यः ( न प्रधानधर्मः ) अवश्यं कर्तव्ये अन्यतरधर्मातिक्रमे। तथाहि प्रधानमविगुणं कृतं भवति। ३।३।२।९ पृ. ८१०.

* **गुणनिमित्तो** भेदाभेदविचारः अतः परं (२।२।९।२३ आरभ्य ) प्राक् प्रकरणभेदात् ( २।३।११।२४ ) वर्तिष्यते। वा. २।२।९।२३ पृ. ५३१. * **गुणनिषेधः** पुरुषार्थो यथा 'शुक्तं न भक्षयेत्' इति। बाल. पृ. ३१, * गुणनिषेधः प्रत्यक्षः पुरुषार्थो यथा रजस्वलाव्रतेषु 'न खर्वेण पात्रेण पिबेत्' इति। पृ. ३२, * गुणनिषेधः प्रत्यक्षः यथा पूर्वपक्षे आधाने 'अपरिमितं देयम्'। अत्र पूर्वोक्तिकादिसर्वसंख्यानिषेधोऽयम् इति क्रत्वर्थोऽयम्। पृ. ३२.

**गुणन्यायः**। गुणाधिकरणम्। गुणाधिकरणन्यायः। वाजिनन्यायः। वाजिनाधिकरणम्। आमिक्षाऽधिकरणम्। वाजिनयागः आमिक्षायागात् कर्मान्तरं द्रव्यदेवतारूपगुणभेदात् ॥

**गुणश्चापूर्वसंयोगे, वाक्ययोः समत्वात् २।२।९।२३ ॥**

**भाष्यम्**— चातुर्मास्येषु वैश्वदेवे ( पर्वणि ) समामनन्ति 'तप्ते पयसि दधि आनयति, सा वैश्वदेवी आमिक्षा, वाजिभ्यो वाजिनम्' इति। तत्र संदिह्यते किम् आमिक्षागुणके कर्मणि वाजिनं गुणविधिः, उत तस्मात् वाजिनगुणक( कं ) कर्मान्तरमिति। किं प्राप्तम्? गुणविधिरिति। कुतः? वाजेन अन्नेन आमिक्षया वाजिनो विश्वे देवाः,ताननूद्य वाजिनं विधीयते। तेन उभयं वैश्वदेवम्, आमिक्षा वाजिनं च। तस्मिन्नेव च कर्मणि वाजिनगुणविधिः। यथा 'अग्निहोत्रं जुहोति' इत्युक्ते 'दध्ना जुहोति' 'पयसा जुहोति' इति। **एवं प्राप्ते, ब्रूमः**। गुणश्च अप्रकृतेन देवताऽभिधानेन संबध्यमानः कर्मान्तरं विदध्यात्। समे हि तदा एते वाक्ये भवतः। उभे अपि अपूर्वयोर्यागयोः विधातृणी। कथं पुनः अपूर्वदेवताऽभिधानम्, यदा इदानीमेवोक्तं विश्वेषां देवानाम् अनुवादो वाजिभ्यः इति। तदुच्यते। इह विश्वेषां देवानां देवतात्वं क्व चित् श्रुत्या, क्व चित् वाक्येन। तद्धितनिर्देशे श्रुत्या, चतुर्थीनिर्देशे वाक्येन। यत्र श्रुत्या देवतात्वम्, तत्र आमिक्षया सह एकवाक्यत्वम्। यत्र चतुर्थी, तत्र वाजिनेन। तत्र एषामेकत्र श्रुत्या देवतात्वम्, वाक्येन द्रव्यविशेषसंबन्धः, एकत्र उभयमपि वाक्येन। तदिह देवतात्वं प्रति श्रुतिवाक्ययोर्विरोधः। विरोधे च श्रुतिर्बलीयसी, इति आमिक्षावाक्ये देवतात्वं विश्वेषां देवानाम्, न वाजिनवाक्ये इति अध्यवसीयते। तेन अवगम्यते अप्रकृतेन देवतापदेन अस्य संबन्धः इति। तस्मात् कर्मान्तरमिति।

वा— अतः परं प्राक् प्रकरणभेदात् गुणनिमित्तो भेदाभेदविचारो वर्तिष्यते।

चातुर्मास्येषु वैश्वदेवे पर्वणि 'वैश्वदेवी आमिक्षा' इति द्रव्यदेवतासंयोगानुमितं यागं विधाय उच्यते 'वाजिभ्यो वाजिनम्' इति। तत्र संदेहः किं तस्मिन्नेव कर्मणि गुणविधिः, उत अनेनापि द्रव्यदेवतासंयोगेन यागान्तरं कल्प्यते। तत्र उभयमपि द्रव्यदेवतं पूर्वत्र विधीयते इति पक्षः संभवन्नपि नोपन्यस्तः, प्रमाणान्तरप्राप्ते कर्मणि अनेकगुणविधानस्य पौर्णमास्यधिकरणे ( २।२।३।६ ) निराकृतत्वात्। तेन वाजिनमेव केवलं किं पूर्वस्मिन् कर्मणि तया च देवतया संबध्यते, उत देवताऽन्तरेण यागान्तरेण च अपूर्वेण संबध्यते इति। किं प्राप्तम्? पूर्वत्रैव वाजिनगुणविधानमिति। कुतः? '**अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः। विश्वे देवाः प्रतीयन्ते तच्च कर्मेह वाजिनम् ॥**' वाजिनो नाम केचन नैव देवताविशेषाः प्रसिद्धाः। न च अप्रसिद्धाः पदार्था वाक्यार्थे निष्पादयन्ति। सर्वत्र समुदायप्रसिद्धौ अलभ्यमानायाम् अवयवप्रसिद्धिर्गृह्यते। तदिह 'वैश्वदेवी आमिक्षा' इत्यनेन वाक्येन आमिक्षावत्तया वाजिनो विश्वे देवाः कल्पिताः। ते च वाजिनसंयोगेन अवगम्यमाना न शक्याः परित्यक्तुम्। ते च तेन पूर्वानुमितेन यागेन अनुरक्ताः। तत्र वाजिनसंयोगान्यथाऽनुपपत्त्या यागे कल्प्यमाने वाजिपदोपात्तयागातिक्रमकारणाभावात् तत्सद्भावे च अन्यविषयार्थापत्त्यनुत्थानात् स एव यागः, तदेवापूर्वम्, सैव देवता इति निश्चयात् न व्यतिरिक्तकल्पनं लभ्यते। तस्मात् तत्रैव कर्मणि आमिक्षावाजिनयोः विकल्पः समुच्चयो वा। सत्यपि च उत्पत्तिवाक्यशिष्टत्वे निष्कृष्य यागम्, गुणान्तरं विधास्यते। यद्यपि च द्रव्यदेवतासंयोगानुमितत्वात् असौ न निष्कृष्टः श्रुतः, तथापि क्रियाऽऽत्मना अस्त्येव आनुमानिकी व्यतिरेकबुद्धिः। यागपदमेव वा अत्र अनुमीयते, तदा आमिक्षापरित्यागेऽपि न विनश्यति ( दुष्यति )। वाजिशब्दोऽपि च तदनुमितयागप्रतिपत्त्यर्थमेव उच्चार्यते। नहि तन्निरपेक्षो वाजिवाजिनसंबन्धः अवकल्पते, कारकाणां परस्परसंबन्धाभावात्। तस्मात् न कर्मान्तरमिति।

अत्राभिधीयते। '**गुणान्तरावरुद्धत्वात् पूर्वकर्मण्यसंभवात्। क्रियाऽन्तरमतिं कुर्यादात्मसंगतये गुणः ॥**' अपूर्वः कर्मान्तरसंयोगानर्हो वा गुणः कर्मान्तरं कल्पयति। 'वाक्ययोः समत्वात्' इतरेतरनिरपेक्षत्वात्। उभौ हि द्रव्यदेवतासंयोगौ आत्मविरोधेन अन्योन्यावकाशमप्रयच्छन्तौ पृथक् कर्मणी विधत्तः। **सत्यम्**, पूर्वत्र असंभवन् गुणः अन्यत् कल्पयति। कथं पूर्वकर्मणा तद्देवतया वा वाजिनं न संबध्यते? तत्कार्यवर्तिगुणावरोधात्। कथं न समुच्चयः? 'एकार्थास्तु विकल्पेरन्' इति हि स्थास्यति एतत् ( १२।३।४।९ )। विकल्पः एवास्तु इति चेन्न, अतुल्यबलत्वात्। तत् दर्शयति ( भाष्यम् ) 'श्रुत्या विश्वेषां देवानां तदुपात्तस्य च कर्मणः आमिक्षासंबन्धः, वाजिनसंबन्धस्तु वाक्येन' ( इति )।

सर्वत्रैव तावत् '**तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते। देवतासंगतिस्तत्र दुर्बलं च परंपरम् ॥**' **आह**, मन्त्रस्य तावत् अविधायकत्वात् लिङ्गवत् श्रुतितो दौर्बल्यं भवेत्, चतुर्थीतद्धितयोस्तु को विशेषः इति वक्तव्यम्। तदुच्यते '**देवतासंगतिः श्रुत्या तद्धितान्तात् प्रतीयते। चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः ॥**' वैश्वदेवी इति हि श्रुत्यैव देवतासंबन्धः प्रतीतः, इतरत्र तु 'वाजिभ्यो वाजिनम्' इति पदद्वयसामीप्यात् गम्यते। ननु इहापि आमिक्षापदसंनिधानवशेनैव द्रव्यदेवतासंबन्धः प्रतीयते, इति तुल्यं वाक्यगम्यत्वं भवेत्। **अथ** वैश्वदेवी इति श्रुत्या देवतात्वम्, वाक्येन द्रव्यसंबन्धः, **स इहापि** अविशिष्टः, चतुर्थीश्रुत्या देवतात्वे अभिहिते वाक्येन द्रव्यसंगतिमात्रकरणात्। **अथ** द्रव्यमात्रसंबन्धे तद्धितान्तेनैव कृते विशेषमात्रम् आमिक्षापदसंनिधेः भविष्यति इत्युच्यते, तदपि अविशिष्टमितरत्रापि, 'वाजिभ्यः' इत्येकपदेनैव संप्रदानं

ब्रुवता संप्रदेयात् विना तदनुपपत्तेः सामान्यापेक्षे सति वाजिनपदसंनिधानेन विशेषमात्रप्रतीतेः। **अपिच** भवतु नाम तद्धितश्रुतेः द्रव्यमात्रसंबन्धः, तत्र द्रव्यमात्रं वाजिनेऽपि अविशिष्टमिति न विरुध्यते, विशेषयोस्तु आमिक्षावाजिनयोः विरोधः । तयोश्च उभयत्र वाक्यलभ्यसंबन्धत्वात् अविशेषः। तेन विकल्पः प्राप्नोत्येव। तदुच्यते। '**नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते । अस्यशब्दाभिधेयस्य विशेषस्यैव देवता ॥**' विश्वे देवा देवता अस्याः इति हि न सर्वनाम्ना द्रव्यसामान्यमभिधीयते, किं तर्हि ? संनिहितो विशेषः, स एव व्यवहारक्षमः, न अनिरूपितं द्रव्यमात्रम्। अतः प्रातिपदिकेन योऽर्थः उपात्तः, स प्रमाणान्तरगम्यस्य द्रव्यविशेषस्य देवता, इत्येतत् तद्धितेन श्रुत्यैव उच्यते । ततश्च अन्तर्णीतसंबन्धदेवतोपसर्जनद्रव्यविशेषप्रत्यये पदान्तरनिरपेक्षेण तद्धितान्तेन पदेन निवर्तिते कः पुनरसौ द्रव्यविशेषः, यस्य तद्धितेन देवता उक्ता इत्यन्वेषणायाम् अयमिति आमिक्षापदेन उपनीयते। तत्र यदा तावत् प्रागेव विशिष्टप्रत्ययात् संबन्धः अभिहितः, तदा न लक्ष्यमाणो भवति। **अथापि** प्रकृतिप्रत्यययोः स्वार्थवृत्तयोरेव नैरन्तर्यात् अन्तराले संबन्धः अवगम्यमानो भवति, **तथापि** अत्र एकपदस्थत्वात् पदद्वयसंनिधिगम्यात् बलीयान् विज्ञायमानः श्रौतः इत्युच्यते। तेन एतौ द्वौ संबन्धौ। एको द्रव्यदेवतासंबन्धः, अपरो विशेषणविशेष्यभावः । तत्र पूर्वः श्रौतः, उत्तरो वाक्यलक्षणः इति विशेषः। अतश्च नैवात्र नीलोत्पलादिवत् अर्थद्वारं वैश्वदेव्यामिक्षाशब्दयोः विशेषणविशेष्यत्वम्, किं तर्हि '**आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः। आमिक्षापदसांनिध्यात् तस्यैव विषयार्पणम् ॥**' नैवात्र तद्धितान्तेन एकोऽर्थः अभिहितः आमिक्षापदेन अन्यः पश्चात् तयोर्विशेषणविशेष्यता, तद्धितान्तवाच्यस्य प्रथमप्रतीतेः, किं तर्हि ? तद्धितान्तस्य अनुपयुक्तानभिधानशक्तेरेव प्रतीक्षमाणस्य उपपदेन विषयदानमात्रं क्रियते। तेन आमिक्षापदसंनिधिबलात् वैश्वदेवीशब्दः एव तामभिधत्ते। न चेदानीम् आमिक्षापदस्य अनुवादत्वम्, तेन विना तद्धितान्तस्य तद्विषयत्वाप्रतीतेः। न च वाक्यार्थत्वम्, तद्धितान्तपदार्थस्य पृथक् अप्रसिद्धेः। नहि द्वौ स्वतन्त्रौ पदार्थौ अगृहीत्वा वाक्यार्थः प्रतीयते। तेन अभिधेयोपनयमात्रकारित्वात् न तद्धितश्रुतेः आमिक्षापदेन अर्थविप्रकर्षः क्रियते। तथा चाह '**श्रुत्यैवोपपदस्यार्थः सर्वनाम्नाऽभिधीयते । तदर्थस्तद्धितेनैवं त्रयाणामेकवाक्यताता ॥**' (त्रयाणाम् उपपद–सर्वनाम–तद्धितानाम् इति)। तेन यैव आमिक्षा, सैव देवतासंबन्धं यास्यति इत्येवमुक्ता सती वैश्वदेवीशब्देन उच्यते। तेन शब्दयोरेवात्र सामानाधिकरण्यम्, नार्थयोः। इतरत्र तु (वाजिने) '**न प्रातिपदिकेनोक्तं न विभक्त्या हविः स्वतः। न वाऽस्य देवतायोग इति वाक्यात् प्रतीयते ॥**' वाजिभ्यः इति तु नात्र प्रातिपदिकेन विभक्त्या वा उभाभ्यां वा द्रव्यसामान्यविशेषतत्संबन्धानाम् अन्यतममपि अभिधीयते, किं तर्हि ? प्रातिपदिकार्थः संप्रदानम् इत्येतावन्मात्रमित्युक्तम् । तत्र न कथञ्चित् द्रव्यसंबन्धः पदे अन्तर्गतः, इति अवश्यं वाक्येनैव वाजिनपदसामीप्यात् प्रत्याययितव्यः। **अपिच** '**यथेहास्य पदार्थोऽपि तद्धितेऽन्तर्गतः स्मृतः। न संप्रदानमस्येति चतुर्थ्येवं विधीयते ॥**'

'साऽस्य देवता' (पा० ४।२।२४) इति अस्यपदार्थे (अस्य इति पदस्य अर्थे) देवतातद्धितो विधीयते, न तु एवम् 'तत् संप्रदानमस्य' इति चतुर्थी विधीयते, येन अस्यपदार्थोऽपि उपादीयेत, किं तर्हि संप्रदानमात्रमेव तदभिधेयत्वेनोक्तम्, तथा च प्रतीयते। तेन तु अन्यथाऽनुपपद्यमानेन संप्रदेयविषयम् आकाङ्क्षामात्रं केवलमुत्पाद्यते। न चैतावता अभिधेयत्वं भवति, सर्ववाक्यार्थानां पदार्थत्वप्रसङ्गात्। आकाङ्क्षया तु एतावत् क्रियते, येन पदान्तरोच्चारणे सति संबन्धो जायते। निराकाङ्क्षत्वे सति पुनः सोऽपि न स्यात्। तेन यद्यपि चतुर्थीश्रुत्या देवतात्वमुक्तम्, तथापि द्रव्यसंबन्धो वाक्येनैव। तत्र चास्माकं विवादः, इति दुर्बलो वाजिनसंबन्धः।

किञ्च '**श्रुत्यर्थः संनिकृष्टत्वं वाक्यार्थो विप्रकृष्टता। विप्रकृष्टप्रकारोऽतः सर्व एव प्रपञ्च्यते ॥**'



(पूर्वार्धे भाष्यस्थश्रुतिवाक्यशब्दाभ्यां संनिकर्षविप्रकर्षौ उक्तौ इत्यर्थः। उत्तरार्धेन तु अष्टप्रकारं संनिकर्षविप्रकर्षाभिधानं प्रतिज्ञातम्) सर्वप्रकारम् आमिक्षासंबन्धस्य संनिकर्षलक्षणं श्रौतत्वम्, वाजिनसंबन्धे च विप्रकर्षात् वाक्यीयत्वम्। (आमिक्षायां सामान्यतो देवताऽन्वयाभिधानम्, न वाजिनस्य इति प्रथमं प्रकारमाह–) तद् यथा. यद्यपि तावत् द्रव्यविशेषस्य तद्धितो न ब्रूयात् देवतात्वम्, तथापि सामान्यस्य तावत् ब्रवीति, न चतुर्थ्यन्तेन सामान्यमपि उच्यते इति विशेषः। यत्तु सामान्यं वाजिनेऽपि अविरुद्धमिति, तदयुक्तम्। वैश्वदेवी इति हि स्त्रीप्रत्ययेन समानपदगतेनैव स्त्रीद्रव्यं किमपि संनिहितमित्यवधार्यते। न च वाजिनस्य स्त्रीत्वं संनिधिर्वा अस्ति इत्यनाश्रयणम्। (ददातिकल्पनाकल्पनरूपं द्वितीयं प्रकारमाह–) अपिच '**वाजिभ्यो वाजिनं कुर्यादिति नैवास्ति संगतिः। तत्र तत्सिद्धयेऽवश्यं दानाध्याहारकल्पना ॥**' कर्तव्यतावचनम् आमिक्षावाक्येऽपि अध्याहारात् प्रयोगवचनाद्वा लब्धव्यमिति न पर्यनुयुज्यते। 'वाजिभ्यो वाजिनम्' इति तु ददातिमनध्याहृत्य न शक्यः संबन्धः प्रत्येतुं यथा 'वैश्वदेवी आमिक्षा' इति । कुतः ? '**नाम्नां द्विधैव संबन्धः सर्ववाक्येष्ववस्थितः । सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते ॥**' न चात्र सामानाधिकरण्यं षष्ठीं वा पश्यामः। न च वाजिभ्यः इति कारकविभक्तिः क्रियापदात् अन्येन संबध्यते, न चेह तदुपात्तम्। तत्र अध्याहारकल्पनात् एको विप्रकर्षः, त्रिपदसंबन्धगौरवात् अपरः। इतरत्रापि यजिकल्पनात् अविशेष इति चेत् न, तस्य संबन्धोत्तरकालानुमेयत्वात्। वैश्वदेव्यामिक्षा इति हि निष्पन्ने संबन्धे यजिः अनुमीयते, न तदधीना संबन्धप्रतीतिः। तव तु परस्वत्वापादनासंभवात् स च भविष्यति अर्थसंबन्धार्थम्, आदितश्च द्रव्यदेवतापदैकवाक्यत्वसिद्धये ददातिः इति विशेषः। कल्पिते च ददातौ कारकयोः परस्परसंबन्धाभावात् तेन तावत् सह संबन्धः, ततः एकार्थत्वात् परस्परनियमः इति विप्रकृष्टता। न तु आमिक्षायां तद्वत् किञ्चित् इति संनिकर्षः। (सामानाधिकरण्यवैयधिकरण्यलक्षणं तृतीयं प्रकारमाह–) सत्यपि च वाजिवाजिनयोः साक्षात्संबन्धे वैयधिकरण्यात् विप्रकृष्टत्वम्। वैश्वदेवी अमिक्षा इति तु सामानाधिकरण्यात् संनिकृष्टता। तथा च वक्ष्यति (३।१।६।१२ इत्यत्र भाष्यम्) '**समर्थतराणि हि समानविभक्तीनि भवन्ति, दुर्बलो विविभक्तिः**' इति। (श्रुतिलक्षणाऽऽत्मकं चतुर्थं प्रकारमाह–) किञ्च '**संप्रदानत्वमात्रं च चतुर्थी वाजिनां वदेत्। देवता लक्ष्यमाणा तु पुनर्दूरेण वाजिने ॥**' नहि तद्धितवत् देवतायां चतुर्थ्युत्पत्तिः स्मर्यते । क्व तर्हि ? संप्रदाने। न च संप्रदानस्यैव देवतात्वम्, मा भूत् 'हिरण्यमात्रेयाय ददाति' इत्यत्र आत्रेयो देवता। यदि च देवता संप्रदानं स्यात्, ततो यागदानयोरभेद एव स्यात्। प्रतिग्रहे व्यापृतं च कारकं संप्रदानं भवति। न च देवतायाः प्रतिग्रहीतृत्वं संभवति। तेन अवश्यं यः संप्रदानत्वात् प्राग्भावी तदुद्देशः (तस्याः देवतायाः उद्देशः), स चतुर्थ्या लक्षयितव्यः। यद्वा परस्वत्वापादनसंबन्धोत्तरकालभावि ऐश्वर्यम्, तादात्म्यप्रसिद्धेर्देवतात्वस्य। यद्यपि अनिराकरणात्मकसंप्रदानमेव देवता इत्यभ्युपगमः, तथापि सामान्येन व्यभिचारिविशेषलक्षणात् विप्रकृष्टत्वम्। (संदिग्धत्वासंदिग्धत्वलक्षणं पञ्चमं प्रकारमाह–) अपिच '**चतुर्थीपञ्चमीरूपसंदेहाद् विप्रकृष्टता। तद्धितस्य त्वसंदेहात् न बुद्धिर्विप्रकृष्यते ॥**' वाजिभ्यः इति रूपसामान्यात् प्रसक्तं सत् यावत् पञ्चमीत्वमपनीय चतुर्थीत्वं साध्यते, तावत् मतिविक्षेपः। **ननु** तद्धितेऽपि अनेकापत्याद्यर्थसंदेहात् तुल्यमेतत्। **विषम** उपन्यासः। शब्दसंदेहो मया उपन्यस्तः, त्वया अर्थसंदेहः। सर्वथा तावत् तद्धितत्वमसंदिग्धम्। अर्थः पुनः योग्यत्वात् इतरासंभवेन देवतात्मको निर्णेष्यते। भवतस्तु निर्णीतेऽपि शब्दे चतुर्थ्यर्थानेकत्वात् उपपदकारकलक्षणसंदेहात् अस्त्येव विप्रकर्षः। तेन अर्थसंदेहः उभयोः समत्वात् नैकश्चोद्यते। शब्दसंदेहस्तु असाधारणत्वात् चोदितः। (उत्पत्त्युत्पन्नशिष्टत्वलक्षणं षष्ठं प्रकारमाह–) किञ्च '**आमिक्षोत्पद्यमानेन कर्मणा सह युज्यते।** ततो वाक्यान्तरोपात्त-

**मुत्पन्नेन तु वाजिनम् ॥** ' यथा च उत्पत्तिशिष्टस्य बलीयस्त्वम् , न च क्रियामात्रं निष्कृष्य गुणान्तरं विधातुं शक्यते, तयोक्तं चित्राऽधिकरणे वैश्वदेवाधिकरणे च । वैश्वदेवाधिकरणन्यायेन च प्रकरणमपेक्षितव्यमपरं वाजिनवाक्येन । कुतः ? ' **द्रव्यदेवतसंबन्धो यागमात्रमपेक्षते । आमिक्षायाग एवेति तत्र प्रकरणाद् भवेत् ॥**' वाजिनं हि विना यागेन वाजिभिर्न संबध्यते, इति कश्चित् यागमपेक्षते । तत्र यत् आमिक्षायागस्यैव तदपि अङ्गम् इति कल्प्यते तत्प्रकरणात् , ततश्च यद्यपि वाक्येनैव आमिक्षायागे विश्वे देवा विधीयन्ते , तथापि अन्यनिरपेक्षविहितत्वात् आमिक्षायाः प्रकरणसापेक्षवाक्यविहितात् वाजिनात् बलीयस्त्वं भवेत् इति विशेषः । प्रकरणानपेक्ष्यागसंबन्धे च अन्येषामिह अप्रतीतेः अपूर्वयागः संबन्धी भवति इति भेदः । न च एवमादीनामनुपात्तपुरुषव्यापाराणाम् अननुमिते यागे वाक्यान्तरापेक्षा अस्ति, इत्युक्तमाग्नेयादिषु (१।४।६।९)। (रूढियौगिकत्वलक्षणं सप्तमं प्रकारमाह–) '**विश्वे देवाश्च रूढयैव संबध्यन्ते पयस्यया । वाजिनेन तु संबन्धो भवेदवयवानुगः ॥**' वाजिनः इति हि अवयवप्रसिद्ध्या विश्वे देवाः प्रत्याय्यन्ते । वाक्यार्थवच्च अवयवार्थौ समुच्चित्य संबन्धं कल्पयित्वा सा भवन्ती ( अवयवप्रसिद्धिः ) श्रुतिमात्रोपनिपातलभ्यायाः समुदायप्रसिद्धेर्दुर्बला भवति, इति दुर्बलतरः संयोगो वाजिनस्य । ' **वाजिशब्दोऽपि वाऽश्वादौ सुनिरूढः स्वभावतः । क्लेशेनैव विना कार्याद् विश्वदेवेषु वर्तते ॥** ' देवतात्वं नाम यस्यैव शब्देनोक्तं तस्यैव योग्यस्य अयोग्यस्य वा भवति इति न जातिनिमित्तम्, येनायं वाजिशब्दो बलात् अन्यत्र नीयेत । अतश्च वाजिशब्दः अश्वानां देवतात्वं वदन् विना कार्येण दुर्बलया अवयवप्रसिद्ध्या विश्वदेवेषु कल्प्यते इति विप्रकर्षः । ' **सत्यव्यवयवार्थे च वाजिन्यन्याऽपि ( वाजिनी अन्या ) देवता । पुरोडाशादिनेत्येवं क्लेशात् प्रकृतनिश्चयः ॥**' सर्वे हि अग्न्यादयः पुरोडाशादिभिरन्नैः वाजिनो विज्ञायन्ते । तत्र आमिक्षायां तावत् अन्नशब्दः प्रयुक्तः, न पुरोडाशादौ इत्येकः क्लेशः । पुनरपि च आमिक्षामात्रग्रहणे सति वैश्वदेव्या आमिक्षयैव तद्वतां ग्रहणम्, इत्यपरः । ततश्च स्वरसेन श्रुतिः अन्यत्रापि वर्तमाना सती प्रकरणेनैव विशेषे स्थापयितव्या न च तत्र किञ्चिन्निमित्तमस्ति , गुणभावेनोपादीयमानत्वात् देवतायाः । संस्कार्यत्वे च 'व्रीहीन् प्रोक्षति' इत्यादिष्विव कथञ्चित् अपूर्वसाधनलक्षणायां प्राकृतग्रहणं भवेत् , न चात्र तदस्ति विनाऽपि तेन कर्मणः प्रयोजनवत्त्वोपपत्तेः । कामं वाजिनस्यैव प्रतिपत्तिः संस्कारो भवेत् , न देवतायाः । प्रकृतग्रहणे च अग्न्यादीनां सद्भावात् अनवधारणम् । अथ विश्वदेवेषु सर्वे संगृहीता भविष्यन्ति इति तेषां ग्रहणम्, **तदयुक्तम्**, सर्वसंग्रहस्य अप्रमाणकत्वात् । बहुवचनश्रुत्या सर्वग्रहणमिति चेत् , न । तस्य त्रिष्वेव चरितार्थत्वात् । न च त्रिषु अवधारणज्ञानमिति चेत् , न । ' मुख्यं वा पूर्वचोदनाल्लोकवत् ' ( १२।२।८।२३ ) इत्यवधारणहेतुसद्भावात् । तस्मात् न विश्वदेवग्रहणे किञ्चित् प्रमाणम् । साकाङ्क्षा च देवता द्रव्येण संबध्येत, सा चात्र वाजिशब्देन द्रव्यवती एव उपादीयमाना निराकाङ्क्षैव प्रत्यायिता इति न द्रव्यान्तरसंबन्धं क्षमते । ( सप्तमं प्रकारमुपसंहरति– ) तस्मात् अतुल्यबलत्वम् ।

किञ्च ' **श्रुत्यैव समवायित्वं देवतानां स्वकर्मसु । विश्वदेवश्रुतिस्तत्र वाजिशब्देन दुर्लभा ॥** ' यदि हि वाजिनयागेऽपि विश्वे देवा एव देवतात्वेन अभ्युपगम्यन्ते, ततोऽवश्यं निगमस्थानेषु विश्वदेवश्रुतिरेव उच्चारणीया । सा चात्र विधिशब्दे अनुच्चारितत्वात् अशक्या लब्धुम् । तत्र एवं क्लेशेन लभ्येत, वाजिशब्दः किञ्चिदर्थं वदति , सोऽपि रूपासमवायात् विश्वदेवशब्दं लक्षयति, ततोऽसौ वाजिनत्यागवेलायां उच्चार्यमाणत्वेन विधीयते इति क्लेशः । तत्रापि च अर्थेन शब्दलक्षणायामविशेषात् ' सर्वे देवाः ' ' निःशेषा देवाः ' इत्यादयः सर्वे पर्यायाः प्राप्नुवन्ति , इति विश्वदेवशब्दो दुर्लभः । न च अन्यशब्दोच्चारणे तेषां देवतात्वं भवति ' विधिशब्दस्य मन्त्रत्वे भावः ' ( १०।४।१२।२३ ) इति वक्ष्यति । वाजिनशब्दे एव अत्र पुरुषः शास्त्रेण प्रवर्तितः इति तदुच्चारणेनैव वाजिनस्य देवता संपादनीया । ततश्च यद्यपि विश्वदेवार्थ एव इह वाजि-



शब्देन उच्यमानो देवता भवति , इतरत्र विश्वदेवशब्देन, तथापि महेन्द्रन्यायेन ( २।१।५।१३ ) विनियोगभेदात् विस्पष्टं देवतापृथक्त्वम् इति अपरोऽयं द्रव्यदेवतासंबन्धो विज्ञायते । न च प्राप्ते कर्मणि अनेकार्थगुणविधानं संभवति । इति उपपन्नमेतत् ' गुणश्चापूर्वसंयोगे भेदकः ' इति ।

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत । २४ ॥**

**भाष्यम्**— अथ यदुपवर्णितं यथा ' अग्निहोत्रं जुहोति ' इत्युक्ते ' दध्ना जुहोति ' इत्येवमादयो गुणविधयः इति, **तत्रोच्यते** । युक्तं यत् तत्र गुणविधानम्, न तत्र अप्रकृतेन केन चित् गुणेन संबन्धः, प्रकृतेन तु अस्ति यागेन । तस्मात् अनुपवर्णनमेतत् ।

**शा**— ' **वाजेनामिक्षया योगाद् विश्वे देवा हि वाजिनः । प्रकृतांस्तान् वदेच्छ्रुत्या वाजिशब्दश्च यौगिकः ॥** ' तस्मात् उभयोस्तुल्यबलत्वात् पूर्वस्मिन्नेव कर्मणि विकल्पः समुच्चयो वा । इति प्राप्ते, अभिधीयते ' **आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनात् श्रुतेः । उत्पन्ने वाजिनं वाक्यात्, तेन तद् दुर्बलं मतम् ॥** ' तस्मात् आमिक्षाऽवरुद्धे पूर्वकर्मणि असंनिवेशात् वाजिनगुणात् कर्मभेदः इति ।

**सोम**— संज्ञाऽनन्तरं संनिहितात् कर्मणो भेदकत्वसामान्यात् गुणस्यैव व्युत्पादनं युक्तम् इति **संगतिः** । **सूत्रार्थस्तु**– अपूर्वसंयोगे पूर्वकर्मणि निवेशासंभवे गुणोऽपि भेदकः । पूर्वकर्मनिवेशाभावश्च उभयोरपि वाक्ययोः समत्वात् मिथोऽनपेक्षत्वात् अनुवादकतया एकस्य वाक्यस्येतरापेक्षायां पूर्वकर्मनिवेशः स्यात् न त्विह इति भावः ।

**वि**— ' गुणः कर्मान्तरं वा स्याद् वाजिभ्यो वाजिनं त्विति । , गुणो देवानन्द्योक्तः समुच्चयविकल्पतः ॥ , आमिक्षोत्पत्तिशिष्टत्वात् प्रबला तत्र वाजिनम् । गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजिदेवकम् ॥ ' अतो द्रव्यदेवतालक्षणस्य रूपस्य भिन्नत्वात् कर्मान्तरम् । ( तच्च प्रतिपत्तिकर्मेति अष्टमद्वितीयाद्ये वक्ष्यते ) ।

**भाट्ट**— ' वैश्वदेव्यामिक्षा ' इत्यत्र द्रव्यदेवताविशिष्टे यागे विहिते तदनुवादेन ' वाजिभ्यो वाजिनम् ' इत्यत्र न गुणमात्रविधिः । प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदापत्तेः । **न च** वाजम् अन्नम् आमिक्षारूपं विद्यते येषामिति व्युत्पत्त्या विश्वान् देवान् तद्विशिष्टयागं वा उद्दिश्य वाजिनमात्रस्य समुच्चयेन विकल्पेन वा विधिरस्त्विति **वाच्यम्** । वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः । उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य निवेशानुपपत्तेश्च । **एतेन** आमिक्षाऽनुनिष्पन्नवाजिनसंबन्धप्राप्त्या वाजिनपदम् आमिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यपास्तम् । उत्पत्तिशिष्टदेवताऽवरोधे देवताऽन्तरस्य निवेशानुपपत्तेः । **किञ्च** , आमिक्षायाः पार्ष्ठिको देवतासंबन्धः पदश्रुत्या , वाजिनस्य तु वाक्येनेति दौर्बल्यम् । तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः, आमिक्षापदं च तात्पर्यग्राहकमिति **प्राञ्चः** । आमिक्षाऽऽदौ द्रव्ये देवतात्वे च भिन्ना शक्तिः, निरूपकत्वं तु संसर्गः । देवतात्वे एव वा शक्तिः, द्रव्ये लक्षणा । द्रव्यविशेषे एव वा शक्तिः, देवतात्वे लक्षणा । द्रव्यसामान्ये एव वा शक्तिः, आमिक्षापदेन विशेषनिर्णयः इति एते पक्षास्तु कौस्तुभे एवोपपादिताः । सर्वथा आमिक्षाद्रव्यस्य देवतासंबन्धः पदश्रुत्येति सिद्धम् । **किञ्च**, विश्वेषां देवानां तद्धितेन देवतात्वं शक्त्या उक्तम्, अनुशासनसत्त्वात् । वाजिनां तु संप्रदानत्ववाचिन्या चतुर्थ्या साम्प्रतिकलक्षणया, त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वरूपसंप्रदानत्वैकदेशत्वात् देवतात्वस्य, तस्याः प्रतिग्रहीतृत्वाभावात् । निरुक्तधर्मसमनियतसंप्रदानत्वव्याप्यदेवतात्वरूपाखण्डोपाधिस्वीकारे तु सुतरां लक्षणा । अतोऽपि दुर्बलत्वम् । तस्मात् वाजिनवाक्येऽपि गुणात् द्रव्यदेवताविशिष्टं कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थमामिक्षायागाङ्गत्वेन विधीयते । गुणस्य च सर्वत्र अनिविशमानत्वेन भेदकता । सा च क्व चिद्वाक्यभेदापत्त्या क्व चित् प्रबलगुणावरोधात् क्व चिदेकप्रसरताभङ्गात् इत्यनेकप्रकारिकेति ध्येयम् ।

**मण्डन**— ' भिन्ना विरुद्धगुणभागिति वाजिनेज्या । '

**शंकर**— ' गुणाच्च कर्मभेदः स्यात् । '

* 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येन' इति स्मृतेः प्रत्ययार्थत्वेन भावनायाः प्राधान्यात् फलवाक्यविहितशुद्धभावनाऽनुवादेन सोमादिवाक्यैः अनादृतपौर्वापर्यैः युगपत् सर्वधात्वर्थविधानात् न **गुणन्यायो**ऽस्ति । **सु.** पृ. ७०१-७०२. * एकधात्वर्थानुरक्तायां भावनायां धात्वर्थान्तरस्य **गुणन्यायेन** अनिवेशात् । पृ. ७०६. * 'ऐन्द्रवायवम्' इत्यत्र तद्धितार्थद्रव्यभेदस्तावत् प्रकृत्यर्थदेवताभेदात् शब्दान्तरन्यायेन गुणन्यायेन वा सुप्रसिद्ध एव । **कौ.** २।२।६।१९ पृ. २२७. * ननु एकधात्वर्थानुरक्तायां भावनायां धात्वन्तरार्थानवकाशात् गुणन्यायेनैव भावनाभेदसिद्धेः पूर्वपक्षासंभवात् भावनाभेदाभेदसंदेहो न युक्तः इत्याशङ्क्य । **सु.** पृ. ७००. * न च 'दशभिः क्रीणाति' इति वचनमेव निवेशतात्पर्यग्राहकम्, तस्य क्रयसमुच्चयपरत्वेनापि उपपत्तौ **गुणन्यायसिद्धभेदा**पवादकत्वायोगात् । **भाट्ट.** ३।१।६. * ननु ज्योतिष्टोमवाक्येऽपि यागानुरक्तभावनाप्रतीतेः धात्वर्थान्तरानुरागायोगात् **गुणन्यायातिक्रमो** नास्ति इत्याशङ्क्य । **सु.** पृ. ७०१. * फलवाक्ये स्वर्गोद्देशेन शुद्धभावनाविध्यङ्गीकारेण तदनुवादेन सोमादिवाक्यैर्गुणविशिष्टधात्वर्थविध्युपगमे सर्वेषामुत्पन्नशिष्टत्वेन **गुणन्यायानवतारात्** ( पूर्वपक्षे ) । **कौ.** २।२।१।१ पृ. १३८. * फलवाक्ये शुद्धभावनाविधाने अवगते सोमादिवाक्यस्थतिप्प्रत्ययस्य प्रत्येकं तामनूद्य तत्करणतया सोमादिविशिष्टधात्वर्थविधानोपपत्तेः, सर्वेषां चोत्पन्नशिष्टत्वेन **गुणन्यायाभावात्** भेदकप्रमाणाभावेन भावनैकत्वसिद्धिः ( पूर्वपक्षे उक्तम् )। २।२।१।१ पृ. १३९. * **न चैवं** एकस्यैव ग्रहणस्य अनेकसंस्कार्यसंबन्धोपपत्तावपि उत्पत्तिशिष्टैकदेवताऽवरोधे देवताऽन्तरनिवेशानुपपत्तेः गुणाद्भेदोपपत्तिरिति **वाच्यम्** । ग्रहणे देवतासंयोगानां अदृष्टार्थत्वेन एककार्यत्वे प्रमाणाभावेन **गुणन्यायाविषयत्वात्** । २।२।६।१९ पृ. २२५. * **गुणाधिकरणे** उत्पत्ति-उत्पन्नशिष्टयोः प्राबल्यदौर्बल्ये व्यवस्थापयिष्येते । **कु.** १।४।११।१२. * गुणाधिकरणे "ननु यथा 'वाजिभ्यो वाजिनम्' इत्यत्र स्ववाक्यगतेन वाजिशब्देन आमिक्षायागं लक्षयित्वा विधीयमानस्य वाजिनस्य प्रकरणापेक्षाऽभावात् तन्निमित्तदौर्बल्याभावेन उत्पत्तिशिष्टामिक्षाऽवरुद्धस्यापि यागस्य विधीयमानद्रव्यान्तराकाङ्क्षावशेन 'आकाङ्क्षोत्थापनात् तस्मिन्नेव यागे वाजिनस्य निवेशोपपत्तिः" इति पूर्वपक्षयिष्यते । **सु.** पृ. ४७७. * **गुणाधिकरणे** हि उत्पन्नशिष्टो गुणः उत्पत्तिशिष्टगुणावरुद्धे कर्मणि निवेशमलभमानः कर्म भिनत्ति इति वक्ष्यते । **कु.** २।२।२।२. * ननु उत्पत्तिशिष्टामिक्षाऽवरुद्धे यागे वाजिनस्योत्पन्नशिष्टस्य विधानायोगेन भेदकत्वं **गुणाधिकरणे** वक्ष्यते ( **इति चेन्न** ) 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति तद्धितचतुर्थीकृतं बलाबलं तत्र वक्ष्यते, नोत्पत्त्युत्पन्नशिष्टकृतमिति । **सु.** पृ. ४७३. * संनिहितोपलक्षितशक्तिविशेषत्वस्य तद्धितवाच्यत्वेन गुणाधिकरणे व्यवस्थापनात् । **कौ.** ३।२।८।२१ पृ. २६२. * पूर्वकर्मणि विधेयालाभादपि 'गुणश्चापूर्वसंयोगे' इति **गुणाधिकरणन्यायेन** यागान्तरविधिपरमेव पर्यग्निकृतवाक्यम् ( पर्यग्निकृतं पात्नीवतमुत्सृजन्ति ), इति पूर्वपक्षः । **कु.** २।३।८।१९. * **गुणाधिकरणपूर्वपक्षे** वाजम् आमिक्षारूपमन्नं येषां विश्वेषां देवानां ते वाजिनः विश्वे देवाः । तेभ्यो वाजिनम् इत्यर्थाङ्गीकारेणैव उत्पत्तिशिष्टप्राबल्यशङ्का निरस्ता । सिद्धान्ते च वाजिशब्दस्य रूढत्वोपपादनेन प्रत्यभिज्ञापकाभाव एवोपन्यस्तः । **कौ.** १।४।११।१३.

* **गुणाधिकरणपूर्वपक्षन्यायः**: 'अनन्तरोपदिष्टेन वाजेनान्नेन वाजिनः । विश्वे देवाः प्रतीयन्ते, तच्च कर्मेह वाजिनम् ॥' इति (वा). । **के.** * न च **गुणाधिकरणपूर्वपक्षन्यायेन** उत्पन्नशिष्टस्यापि देवताऽन्तरस्य विधानोपपत्तिरिति **वाच्यम्** । सर्वनाम्नः ( सा वैश्वदेव्यामिक्षा ) स्ववाक्योपात्तद्रव्यपरत्वासंभवेऽपि स्ववाक्योपात्तयागपरत्वस्यैवोपपत्तेः असंभवन्निवेशप्राकरणिकद्रव्यपरत्वकल्पनाऽयोगात् । **कौ.** १।४।११।१४ पृ. २४९.

* **गुणाधिकरण- (२।२।९।२३) सिद्धान्तन्यायः** । 'गुणान्तरावरुद्धत्वात् पूर्वकर्मण्यसंभवात् । क्रियाऽन्तरमतिं कुर्यादात्मसंगतये गुणः ॥' इति ( वा ) । **के.** * **गुणपदार्थः** अनेकद्रव्याश्रितः यथा संयोगवियोगद्वित्वादिसंख्यात्मकः अनेकद्रव्याश्रितः, रूपादिः एकद्रव्याश्रितः । **ऋजु.** पृ. १९८. * **गुणप्रतिनिधिनियमविधिर्यथा**- 'यदि कृष्णसारङ्गं न विन्देत अथो लोहितसारङ्गः स्यात्' इति **शतपथे** । **बाल.** पृ. २३.



**गुणप्रत्युदाहरणम्** । गुणशेषाधिकरणम् । गुणाधिकरणापवादः । अग्निहोत्रे 'दध्ना जुहोति' इति गुणविधिः ॥

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत । २।२।१०।२४ ॥**

**भाष्यम्**-- अथवा अधिकरणान्तरम् । 'दध्ना जुहोति' इत्येवमादीनि कर्मान्तराणि विकल्पपरिजिहीर्षया अवकल्प्यन्ते । तदेव तु कर्म 'जुहोति' इति शब्दादवगम्यते, न कर्मान्तरम् । तस्मात् तत्रैव गुणविधिः वचनाद्विकल्पश्चेति सिद्धम् ।

**वा**— अगुणे तु कर्मशब्दे इति प्रत्युदाहरणसूत्रम् । **'अन्येनानवरुद्धे हि गुणो यत्र विधीयते । तस्मिन् गुणविधिः शक्य इति कर्म न भिद्यते ॥'**

**सोम**-- एकैकस्माद्वाक्यात् एकैकस्य गुणस्योपस्थित्या सर्वेषां युगपदन्वयासंभवात् यस्य प्रथममन्वयः, तदवरुद्धे पूर्वन्यायेन अन्यान्वयासंभवात् कर्मान्तरत्वम् इत्युत्थानात् **संगतिः** । **प्रयोजनं** पूर्वपक्षे दध्यादिविशिष्टानां कर्मणां सर्वेषामनुष्ठानम् । सिद्धान्ते तु एकस्यैव विकल्पितदध्यादिद्रव्यकस्यानुष्ठानमिति । **सूत्रार्थस्तु**-- ( पूर्वाधिकरणप्रत्युदाहरणसूत्रत्वपक्षे ) 'अग्निहोत्रं जुहोति' इति गुणरहिते कर्मणि उत्पन्ने दध्यादिवाक्यैः गुणविधिः संभवति, न तु सगुणश्रुतामिक्षावाक्ये इति ।

आघाराग्निहोत्राधिकरणे गुणकर्मसंनिधौ सगुणश्रुतिः गुणविधानार्था इत्युक्तत्वात् इदमधिकरणमनर्थकम् । **न च** यत्र निर्गुणसंनिधौ एकमेव सगुणवाक्यम्, तत्र आघाराग्निहोत्राधिकरणोक्तिः सावकाशा । प्रकृते तु सगुणवाक्यानां बहुत्वात् सर्वेषामेककर्मान्वये विकल्पापत्त्या कर्मान्तरत्वशङ्कायां तन्निराकरणार्थत्वात् न वैयर्थ्यमिति **वाच्यम्** । निर्गुणसंनिधौ श्रुतानां बहूनामपि सगुणवाक्यानां गुणमात्रविधायकत्वस्य तत्रैव वक्तव्यत्वात्, अन्यथा आघाराग्निहोत्रवाक्ययोः समुदायानुवादपूर्वपक्षस्य निराकर्तुमशक्यत्वात् ।

**वि**-- 'दधिहोमेऽन्यकर्मत्वं गुणो वा, ऽन्यत्तु पूर्ववत् । , निर्गुणत्वादग्निहोत्रे युक्तो दध्यादिको गुणः ॥'

**भाट्ट**-- यत्र तु नोत्पत्तौ गुणश्रवणं यथा 'अग्निहोत्रं जुहोति' इति, तत्र तदनुवादेन 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिभिः सर्वैरेव गुणविधानं विकल्पेन । तत्र खलेकपोतन्यायेन सर्वेषामेव युगपत्प्रवृत्तेः एकावरुद्धत्वाभावात् । इति प्रत्युदाहरणमात्रम् ।

**मण्डन**-- 'दध्ना जुहोति पयसेति न होमभेदः ।'

**शंकर**— 'अग्निहोत्रे तु नास्त्ययम् ।' कर्मभेदः ।

* **गुणप्रधान**विध्यनुवादोद्देश्योपादेयानां युगपदेकत्र विरोधः । ( गुणप्रधानयोः विध्यनुवादयोः उद्देश्योपादेययोश्च एकत्र न संभवः इत्यर्थः) । **वा.** ३।१।१२।२२ पृ. ७३७. * **गुणफलोपबन्धः** नाम्नां प्रयोजनम् । **मणि.** पृ. ५.

* **गुणफलसंबन्धपरः** काम्यः पुरुषार्थाधिकारविधिः 'दध्नेन्द्रियकामस्य जुहुयात्' इति । **बाल.** पृ. १४. * **गुणफलसंबन्धपरे** वाक्ये सति न कर्मान्तरम् । **वा.** २।२।८।२२ पृ. ५२८.

* **गुणभूतः** हि पदार्थानां क्रमो भवति । यश्च यस्य निर्वर्त्यमानस्योपकरोति, स तस्य गुणभूतः । यस्मिंश्च आश्रीयमाणे पदार्थः एव न संपद्यते, न स गुणभूतः । विनाऽपि तेन न वैगुण्यम् । **भा** ५।१।२।२, * यः स्वभावतो **गुणभूतो**ऽर्थः नासौ आख्यातशब्दाभिधानेन प्रधानभूतो भवति । १०।३।१।१०. * नहि यदेकत्र **गुणभूतं** दृष्टम्, तेनान्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यम् इति किञ्चित् प्रमाणम् । यथावचनं हि गुणप्रधानभावौ स्वाभाविकौ । **वा.** २।३।५।१३ पृ. ५९९. * **गुणभूते**ऽपि द्वितीया भवति यथा 'सक्तून् जुहोति' 'मारुतं जुहोति' 'एककपालं जुहोति' इति । **भा.** २।१।४।११, * **गुणभूता** देवता कर्मणि याज्याऽनुवाक्याद्वयेन कर्मसिद्ध्यर्थमुपलक्ष्यते । १२।४।२।३. * **गुणभूतदेवताविधिः** मन्त्रः 'समिधोऽग्न आज्यस्य व्यन्तु' इति । **बाल.** पृ. ६३, * **गुणभूतद्रव्यविधिः** मन्त्रः 'प्रैतु होतुश्चमसः प्र ब्रह्मणः, प्रोद्गातॄणां प्र यजमानस्य' इति । पृ. ६४.

* **गुणभेदनिमित्तककर्मभेदन्यायः** ( २।२।२ ) अभ्यासाधिकरणभाष्योक्तः । **सु. पृ. ८०१.**

* **गुणमात्रविधौ** लाघवम्, गुणविशिष्टाङ्गविधौ तु गौरवम् । चोदकप्राप्तप्रयाजाद्यङ्गमनूद्य संख्यारूपगुणमात्रविधिः अग्नीषोमीयपशवादौ 'एकादश प्रयाजान् यजति' इति । **वि. १०।३।१.**

**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः । ३।३।२९ ॥**

आधानं याजुर्वेदिकम् । तत्र 'वारवन्तीयं गायति' 'यज्ञायज्ञीयं गायति' इति सामानि विहितानि । तानि उच्चैर्गेयानि, सामवेदगतत्वात् साम्नाम्, सामवेदस्वरस्य च 'उच्चैः साम्ना' इति उच्चैष्ट्वात् । इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । गुणः अङ्गम्, मुख्यं प्रधानं तयोः विधायकवेदप्रयुक्ते व्यतिक्रमे विरोधे सति मुख्येन प्रधानानुसारेण वेदसंयोगः वेदनिबन्धनस्वरसंबन्धः स्वीकार्यः । तदर्थत्वात् प्रधानार्थत्वात् अङ्गानाम् । तस्मात् आधानविधायकयजुर्वेदसंबन्धी उपांशुः स्वरः आधानाङ्गे वारवन्तीयादिसाम्नि अनुष्ठेयः इति भाष्यानुसारी पन्थाः । वार्तिकानुसारी तु गुणः उत्पत्तिविधिः, मुख्यः विनियोगविधिः । तयोर्व्यतिक्रमे विरोधे वारवन्तीयादिसाम्नः सामवेदे पाठात् उत्पत्तिविधिः, यजुर्वेदे तु 'वारवन्तीयं गायति' इत्यादिः विनियोगविधिः । तस्मात् मुख्येन विनियोजकवेदानुसारेण वेदसंयोगः वेदनिबन्धनस्वरसंयोगः स्वीकार्यः । तदर्थत्वात् विनियोगविध्यर्थत्वात् उत्पत्तिविधेः इति । उभयथाऽपि आधानसामानि उपांशु गेयानि । **के.**

* गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः । ३।३।२९ ॥ अङ्गप्रधानयोः भिन्नवेदविहितत्वरूपे व्यतिक्रमे, अङ्गे स्वरूपनिबन्धनधर्मानुरोधेन प्रधानद्वारप्राप्तस्य धर्मस्य बाधलक्षणः अतिक्रमः कार्यः, प्रधानद्वारधर्मानुरोधेन वा स्वरूपनिबन्धनस्य इति संदेहे प्रधानसाद्गुण्यार्थत्वात् अङ्गधर्मानुष्ठानस्य प्रधानद्वारधर्मानुरोधेन स्वरूपनिबन्धनधर्मव्यतिक्रमस्य न्याय्यत्वात् प्रधानद्वारकः प्रयोगवेदसंयोगः क्रियते इत्येवं सूत्रव्याख्या । **सु. पृ. ११७५.** * गुणमुख्यव्यतिक्रमे इत्यत्र व्याख्यातं यथा अङ्गानि प्रधानवेदव्यपदेशं लभन्ते इति । **वा. ३।७।२३।५० पृ. ११०९.**

**गुणमुख्यव्यतिक्रमन्यायः** । गुणमुख्याधिकरणम् । गुणमुख्यव्यतिक्रमाधिकरणम् । गुणमुख्यव्यतिक्रमाधिकरणन्यायः । आधानसामानि उपांशु गेयानि ॥

**गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः । ३।३।२९ ॥**

**भाष्यम्**— अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति । तत् याजुर्वेदिकम् । तत्र सामगानमामनन्ति 'य एवं विद्वान् वारवन्तीयं गायति' 'य एवं विद्वान् यज्ञायज्ञीयं गायति' 'य एवं विद्वान् वामदेव्यं गायति' इति । तत्र संदेहः किमाधाने सामगानमुच्चैः, उत उपांशु इति । उच्चैरिति प्राप्तम् । कुतः ? सामवेदेन एतत् क्रियते यत् वारवन्तीयादिभिः । तस्मादुच्चैरेतानि सामानि गेयानीति । **एवं प्राप्ते, ब्रूमः** । गुणानुरोधेन वा मुख्यं व्यतिक्रमेत् मुख्यानुरोधेन वा गुणम् इति गुणो व्यतिक्रमितव्यो न्याय्यः, मुख्यश्चानुग्रहीतव्यः इति । कुतः ? मुख्यार्थत्वात् गुणस्य । गुणस्यानुष्ठानेन मुख्यः सगुणः कथं स्यात् इति गुणे प्रवर्तते । गुणप्रवृत्त्या चेन्मुख्यस्य गुणहानिर्भवति गुणप्रवृत्तौ फलमेव नावाप्तं भवति । अथ प्रधानं सगुणं करिष्यामि इति गुणे प्रवर्तमानो गुणस्य गुणं विनिपातयति नास्य स्वार्थो हीयते । नासौ गुणं सगुणं कर्तुं प्रवर्तते । गुणश्च सामगानम्, प्रधानमाधानम् । आधानस्य याजुर्वेदिकत्वात् उपांशुता गुणः । स गुणधर्ममुच्चैस्त्वं सामवेदिकं बाधते । तस्मात् उपांशु सामानि गेयानि इति ।

**वा**—– इदानीं यत्र वेदान्तरीयस्य प्रधानस्य वेदान्तरीयमङ्गं भवति, तत्र अङ्गस्य वेदधर्मः कतमः कर्तव्य इति संदेहे, प्राप्त्यात्मकत्वात् व्यपदेशधर्माणाम्, यस्य यत्र समाम्नानम्, तदीयो धर्मः स्यात् । इति प्राप्ते, **अभिधीयते । 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः । यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम्'** ॥ अवश्यं कर्तव्ये अन्यतरधर्मातिक्रमे गुणधर्मोऽतिक्रमितव्यः । तथाहि प्रधानमविगुणं कृतं भवति । तच्च गुणस्यापि कार्यम् । सोऽपि हि तदर्थमेव प्रवर्तते । यदि तु आत्मीयधर्मानुरोधेन प्रधानं विगुणं कुर्यात्, ततोऽस्य यदर्थैव प्रवृत्तिः, तदेव हीयेत । तत्स्वरूपे सगुणे जाते यद्यपि अङ्गं विगुणमेव, तथापि तत्र गुणत्वस्य अचिकीर्षितत्वात् न कश्चिद्विरोधः । तस्मादाधानस्य याजुर्वेदिकत्वात् तदङ्गभूतानां साम्नामुपांशुत्वं कर्तव्यमिति । **ननु** यावन्मात्रमाधानस्य यजुर्वेदविहितं तन्मात्रस्यैव उपांशुत्वमित्यवगमात् नैव सामगानस्य प्राप्नोति । प्रधानमात्रं च अङ्गान्तराणि च याजुर्वेदिकानि, तेन तेषां केवलमुपांशुत्वमिति । **नैतदेवम्** । वक्ष्यति हि 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इति ( ११।२।१।८ ) । तथा 'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्' ( ११।१।२।१६ ) इति । तस्मात् प्रधानप्रयोगवचनपरिगृहीतत्वात् अन्यत्रापि उत्पन्नानामङ्गानां यत्रैव प्रधानम्, तत्रैव विधिः । अतश्च साङ्गस्यैव प्रधानस्य याजुर्वेदिकत्वात् उपांशुत्वेनैव भवितव्यमिति । **एवं तर्हि** स्वयमेव अङ्गानां याजुर्वेदिकत्वात् उपांशुत्वं न गुणप्रधानधर्मविरोधद्वारम् । यच्च सामगतमुपांशुत्वम्, तत् अङ्गवर्तित्वात् उच्चैस्त्वेन तुल्यम् । नैतत् तत्र वर्तमानं प्रधानस्येति शक्यं वदितुम् । नापि तद्गते बाधिते प्रधानधर्मबाधः । नहि तदा प्रधानमुपांशु न कृतं स्यात् । अथ केन चित् प्रकारेण अङ्गधर्मोऽपि प्रधानस्याभिधीयते, ततः उच्चैस्त्वमपि प्रधानधर्म एव स्यात् इति पुनस्तुल्यबलत्वम् । **उच्यते 'उत्पत्तिविधिमालोच्य साम्नां वेदान्तरीयता । साङ्गप्रधानसंबन्धादुपांशुत्वं तु गम्यते ॥'** यदि हि यजुर्वेदे एव एषामुत्पत्तिः स्यात्, तत् स्वरूपनिमित्तमेव उपांशुत्वं स्यात् । एतेषां तु सामवेदोत्पन्नानां स्वरूपतः उच्चैस्त्वप्रसङ्गे प्रधानसंस्पर्शनिमित्तमुपांशुत्वम् इति प्रधानधर्मता । **ननु** यजुर्वेदेन साङ्गं कुर्यात् इत्युपबन्धात् साङ्गस्यैवोपांशुत्वमित्यवधारणात् अस्त्येव अङ्गस्वरूपसंस्पर्शः इति, न, साङ्गकथनेनैव अप्राधान्यनिर्देशात् । उपसर्जनभूताङ्गं हि प्रधानम् एवं निर्दिश्यते । तेन प्रधानमेव याजुर्वेदिकम्, उपांशुत्वं तु तद्धर्म एव सन् अङ्गानि उपसर्पन् एवं कथ्यते । न तु एवमेव चोदनाऽप्यस्ति । ततः प्रधानधर्मोऽयम् अङ्गं प्राप्तः अतिक्रम्येत । प्रधानेन हि स्वधर्मः अङ्गेषु विक्षिप्तः । स यत्रैव बाधितः, तत्रैव प्रधानं विगुणम्, न तु एवमुच्चैस्त्वं प्रधानधर्म इत्यवधार्यते । नहि अङ्गधर्माः प्रधानानि संक्रामन्ति । **ननु** एवमपि अङ्गधर्मः साक्षात् प्राप्नोति, प्रधानधर्मः पुनः परद्वारेण परोक्षः, इति विपरीतं बलाबलं प्राप्नोति । **सत्यं** साक्षात् प्राप्ताङ्गधर्मः शीघ्रतरमवगम्यते । प्रयोगवचनग्रहणोत्तरकालं तु पश्चात्तन एव प्रधानधर्मः 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' ( ६।५।१४।५४ ) इत्येवं बाधते । **ननु** याजुर्वेदिकज्योतिष्टोमाद्यङ्गानां स्तोत्रशस्त्रादीनामपि अनेनैव न्यायेन उपांशुत्वं प्राप्नोति । **सत्यं** प्राप्नोति, वचनात्तु सर्वत्र स्वरान्तरलाभः । कथम् ? दर्शपूर्णमासयोस्तावत् वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्मं उपांशुत्वं प्राप्नोति । ततो वाचनिकः स्वरो भवति 'मन्द्रया आज्यभागान्तम्, परं मध्यमया, उत्तमया अनुयाजादि' इति ।

तथा विकृतीनां इष्टिपशुबन्धादीनां एतस्मिन्नेव प्राकृते स्वरत्रये प्राप्नुवति प्रत्यक्षोपदेशवशेन प्रधानवेदस्वरप्रसक्तौ 'तद्ग्रहणाद्वा स्वधर्मः स्यात्' ( ३।७।२४।५१ ) इत्यनेन न्यायेन प्रयोगवचनस्य चोदकापेक्षितत्वेन दुर्बलत्वात् चोदकप्रापितस्वरग्रहणमेव इष्टम् ।

एवं ज्योतिष्टोमाङ्गानामपि दीक्षणीयाऽऽदीनां प्राकृते स्वरे प्राप्ते, प्रत्यक्षोपदेशवशेन बाध्यमाने, चोदकबलीयस्त्वेन पुनरुपस्थिते, ज्योतिष्टोमस्य याजुर्वेदिकत्वात् क्लृप्तोपकारप्राकृतधर्माग्रहणाच्च गुणमुख्यव्यतिक्रमन्यायेनैव तद्गतोपांशुत्वधर्मप्रसङ्गे सति, 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्' इत्येते स्वराः गुणमुख्यव्यतिक्रमन्यायबाधेनैव साङ्गानां प्राप्ताः । तथा ( प्राप्ते सति ) ज्योतिष्टोमस्य वाचनिकसवनविभागविहितमन्द्रमध्यमोत्तमोच्चारणावधारणात् तदङ्गानामपि सर्वेषां प्राकृततुल्यमन्द्रमध्यमोत्तमोच्चारणान्येव प्रधानद्वारेण प्राप्तानि । ततो 'यत्किञ्चित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति' इत्युपांशुत्वे साङ्गानां दीक्षणीयाऽऽदीनां प्राप्ते, प्रधानमात्रवाचिदीक्षणीयाऽऽदिशब्दोद्देशेन विहिताः प्रधानमात्रेषु एते स्वरविशेषा भवन्ति 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायाम्, मन्द्रतरमातिथ्यायाम्, उपांशूपसत्सु' इति । तत्र उपांशुत्वस्य

पूर्वेणैव सर्वव्यापिना उपांशुत्वविधिना प्राप्तत्वात् दीक्षणीयाऽऽदिस्वरप्रशंसाऽर्थः नित्यानुवाद एव । अग्नीषोमीये तु सवनविभागस्वरेणैव 'मन्द्रया आज्यभागान्तम्' इत्यादि-प्राकृतस्वरप्रतिप्रसवः । सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणसंपादनं कार्यम् । एतेन अनूबन्ध्याऽवभृथोदयनीयोदवसानीयास्वपि उच्चारणविशेषा व्याख्याताः । सुत्याकालसवनीयादीनामपि एवं स्वरे प्राप्ते, प्रातःसवनाद्यन्तर्गतत्वात् यथासवनमेव स्वरा भवन्ति । **ननु** सवनशब्दानां सोमयागावयववचनत्वात् दीक्षणीयाऽऽद्यङ्गवत् तदीयस्वराभावप्रसङ्गः इति चेत्, **न ।** सप्तमीनिर्देशेन तत्कालप्रयुज्यमानत्वमात्राश्रयणात् । '**यदि षष्ठी भवेदत्र सवनेभ्यः परा, ततः । तदङ्गमन्त्रमात्रेषु मन्द्रत्वादिविधिर्भवेत् ॥, सप्तम्यां तु तदाधारो यावान्मन्त्रः प्रयुज्यते ।, तस्य सर्वस्य मन्द्रादिस्वरयोगोऽङ्गमाश्रितः ॥ केचिदाहुर्यदाधारमात्रत्वं सवनेष्विह । तदा तेषां न मन्द्रादिः स्यादनाधेयताश्रुतेः ॥ आधारे सवने भिन्नं यदाधेयतया श्रुतम् । सवनीयादि, तस्यैव मन्द्राद्युच्चारणं भवेत् ॥ स्तोत्रशस्त्रानुवाक्याऽऽदिशेषस्तु सवनस्य यः । षष्ठ्यभावान्न तस्यैते युक्ता मन्द्रादयः स्वराः ॥ इत्युक्ते, नैष दोषोऽस्ति यतः षष्ठ्या विनाऽप्ययम् । षष्ठ्यर्थः संभवत्येव तदाधारत्वकल्पितः ॥ यथाहि शकुनिर्वृक्षे पुष्पाद्यपि तथेष्यते । ततश्चाधेयधर्मोऽर्थः स द्वयेऽपि विधीयते ॥ यदि वा स्तोत्रशस्त्रादि कृत्स्नं सुत्याऽऽङ्गमेव नः । आधार एव तस्यापि सवनानीतराङ्गवत् ॥ नानावेदस्वरस्तस्मात् स्तोत्रादेः प्राप्त आदितः । प्रधानाङ्गतया पश्चादुपांशुत्वेन बाधितः ॥ ततो वाचनिकेनैव यथासवनभाविना । मन्द्रादिना समस्तानि सुत्याऽङ्गानि प्रयुञ्ज्महे ॥**' एतेन सर्वे ज्योतिष्टोमविकारा व्याख्याताः ।

क्व पुनरिदानीं नानावेदस्वरस्य अवकाशो भविष्यति । उच्यते । 'तद्ग्रहणाद्वा स्वधर्मः स्यादधिकारसामर्थ्याद्व्यक्तः शेषे' (३।७।२४।५१) इतिवत् कल्पनीयः, यत् प्राकृतस्वराङ्गयुक्तायां विकृतौ वेदान्तरीयमपूर्वमङ्गं चोद्यते इति । (इमं पक्षं दूषयति–) ननु तत्रापि गुणमुख्यव्यतिक्रमन्यायेन प्रधानधर्मभाव एव । (पक्षान्तरं शङ्कते–) एवं तर्हि या विकृतिः यस्मिन् वेदे भवति, तस्याः शेषेष्वङ्गेषु यथाप्रकृति प्राप्तेषु, यत् तस्मिन्नेव वेदे अङ्गान्तरम् अपूर्वं चोद्यते, स विषय इति । (एतमपि पक्षं दूषयति–) सोऽपि प्रधानद्वारेणैव लब्धत्वात् । (पक्षान्तरं शङ्कते–) तदेव तर्हि प्रधानं विषयः इति । (एतमपि पक्षं दूषयति–) न, तस्यापि प्राकृतावरुद्धत्वात् । (अपूर्वाङ्गविषयवादी पुनः प्रत्यवतिष्ठते–) न तर्हि प्रधानद्वारेण अपूर्वस्याङ्गस्य प्राप्तिः इति तदेव विषय इति । (परिहरति–) नैवमपि यः प्रधानस्य धर्मः, तस्यैव तत्रापि भावात् । अपिच त्रेधा विभक्तेषु यज्ञभागधर्मे च स्वरे स्थिते यदपूर्वमपि तद्भागपाति भवति, तस्य न यूपावटस्तरणबर्हिस्तुल्यत्वमिति भवितव्यमेव प्राकृतेन धर्मेण । (नानावेदस्वरस्य निर्विषयत्वशङ्काम् उपसंहरति–) तस्मादपि नास्ति विषयः । प्रकरणाम्नानं च अत्यन्तमेवानर्थकं स्यात् । (शङ्काद्वयपरिहारं प्रतिजानीते–) **अत्र समाधिः ।** (निर्विषयत्वशङ्कां निराचष्टे–) 'उपांशु यजुषा' इति तावत् सर्वदर्विहोमेषु अर्थवत् । (प्रकरणाम्नानानर्थक्यशङ्कां परिहरति–) ऋक्सामवेदयोः (तत्स्वरयोः) अपि काम्यनैमित्तिकेषु अङ्गेषु अर्थवत्ता । 'मन्द्रं प्रातःसवने' इत्यादि हि नित्यत्वात् अनित्यैः काम्यनैमित्तिकैः असंबध्यमानं नित्याङ्गविषयमेव भवति । तेन यत् ऋग्वेदसामवेदाभ्यां किञ्चित् काम्यं नैमित्तिकं वा चोद्यते, तत् सर्वमुच्चैः कर्तव्यम् । तथा 'तं (महावीरं) मित्रममिमृशेत् यदृते चिदभिश्रिषः' इत्यादि । एवं याजुर्वेदिकमपि उपांशुत्वमुदाहर्तव्यम् । तथा यानि सुत्योत्तरकालानि अङ्गानि, तेषु सवनग्रहणाभावात् यथावेदमेव स्वरः इति अवभृथसामादीनामपि उच्चैस्त्वसिद्धिः । अन्यथा हि यथेष्टं प्रयोगः स्यात् । दीक्षणीयाऽऽदिपरिसामसु तु 'प्राचीनमग्नीषोमीयात्' इत्यनेन उपांशुत्वम् । प्रवर्ग्यसाम्नां पुनः 'उच्चैः प्रवर्ग्येण' इत्येवमुच्चैस्त्वम् ।

आधानसाम्नां तु याजुर्वेदिकप्रधानविधिविहितत्वादेव उपांशुत्वम् । 'य एवं विद्वान् वामदेव्यं गायति'



इत्यादीनि यजुर्वेदवाक्यान्येव । तस्मादिह अनुदाहरणम् । तत्र **केचिदाहुः** । स्वरूपोत्पत्तिमात्रापेक्षया तेन क्रियते, इति न कारकत्वाभिप्रायेणोपन्यास इति । **तत्तु न युक्तम् ।** एवं सति हि उत्पत्तिविनियोगबलाबलचिन्तैव क्रियते, न गुणमुख्यविरोधचिन्ता । तत्र च विनियोगाधीनत्वात् अनुष्ठानस्य, तद्बलीयस्त्वम् इत्येष निर्णयः स्यात् । 'तस्मात् सामवेदशाखायामपि कस्यांचित् अस्त्येषां विधिः अत उदाहरणम्' **इत्यपरे ।** तदा तु यजुर्वेदपुनःश्रुतेः मन्दं फलं स्यात् । अथापि शाखाऽन्तरविधिवदाश्रीयेत स्वरविकल्पश्च पूर्वपक्षे क्रियेत यदि उदाह्रियेत । अनुदाहरणात्तु नैतदुपपद्यते । तस्मात् उत्पत्तिविनियोगयोरेव गुणमुख्यत्वम् इत्येवमधिकरणमारभ्यते । यत्र वेदान्तरोत्पन्नं वस्तु वेदान्तरेण विनियुज्यते तत्र किमुत्पत्तिवेदधर्मः कर्तव्यः, उत विनियोगवेदधर्म इति । उत्पत्तिपूर्वकत्वाद् विनियोगस्य उत्पत्तिवेदधर्मः । **इति प्राप्ते,** विनियोगवेदधर्म इति गृह्यते । कुतः ? उत्पत्तेस्तदर्थत्वात् विनियुज्यमानस्य च स्वरापेक्षित्वात् तदानीमेव यः स्वरोऽवगम्यते, स एव चोदितः, नोत्पत्तिस्थः, तत्काले विधानाभावात् । **अथवा** नैवात्र व्यतिक्रमशब्देन बाधो विरोधो वा अभिधीयते, किं तर्हि ? व्यभिचारः अन्यत्रान्यत्र च वृत्तिः । तेन एवं चिन्त्यते, यत्रोत्पत्तिविनियोगौ व्यतिक्रान्तौ, अन्यत्रोत्पत्तिः अन्यत्र विनियोगः, तत्र कतरवेदसंयोगो भवतु इति । तथैव उत्पत्तिसंयोगे विकल्पे वा प्राप्ते, विनियोगवेदसंयोगः प्राधान्यात् इत्युत्तरम् । **अथवा** एवं चिन्ता । यत्र अन्यत्र च प्रधानम्, अन्यत्र च अङ्गम्, तत्र अङ्गस्य केन वेदेन व्यपदेशोऽस्तु इति । ततश्च तथैव प्रधानवेदेन व्यपदेशः इति निर्णयः । अस्मिंस्तु पक्षे 'तद्ग्रहणाद्वा स्वधर्मा स्यात्' (३।७।२४।५१) इत्येतद् बाधित्वा प्रधानसमाख्यात एक एव प्रकृतौ विकृतौ च कर्ता प्राप्नोति । अथ तु चोदकबलीयस्त्वात् अङ्गवेदसमाख्यातकर्तृग्रहणं ततः स्वरोऽपि तथैव इत्ययुक्तं प्रधानस्वरग्रहणम् । अतः उत्पत्तिविनियोगापेक्षयैव एष विचारः इत्येषैव व्याख्या शोभना । तथैव आधानोदाहरणं समर्थितं भवति । यदि तु गुणमुख्यव्यतिक्रमः अङ्गप्रधानधर्मविरोधो व्याख्यायते, ततः 'अङ्गगुणविरोधे च तादर्थ्यात्' (१२।२।९।२७) इत्यनेन सह अपौनरुक्त्यं संप्रधारणीयम् ।

**शा—** (वार्तिकमतेन) यस्य मन्त्रस्य वेदान्तरे समाम्नानम् उत्पत्तिः, वेदान्तरे च विनियोगविधिः, तस्य किम् उत्पत्तिवेदनिबन्धनः स्वरः, अथवा विनियोगवेदनिबन्धनः इति संशयः । तत्र '**उत्पत्तेः पूर्वभावित्वात् तन्निबन्धन एव हि । स्वरः प्रथमभावित्वाद् युक्तो, नान्यो विलम्बितः ॥**' नैतदेवम् । '**न खल्वाम्नानमात्रेण मन्त्रस्य स्यात् प्रयोज्यता । तेन क्रियत इत्येवमतो वक्तुं न शक्यते ॥ तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते । विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितः स्वरः ॥**' तस्मात् वारवन्तीयादेः सामवेदेन अक्रियमाणत्वात् अनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैस्त्वम् । यजुर्वेदेन तु क्रियमाणत्वात् स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ।

**सोम—** पूर्ववत् इहापि प्रथमोपस्थितत्वात् अङ्गवेदस्वर एव ग्राह्यः इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु**—गुणप्रधानयोर्व्यतिक्रमे धर्मविरोधे गुणस्य मुख्यार्थत्वात् मुख्येन निमित्तेन वेदसंयोगः वेदसंयुक्तः स्वरः स्यादिति । आचार्यमते तु गुणमुख्यशब्दयोः उत्पत्तिः विनियोगविधिश्च अर्थः ।

**वि—** 'यजुर्वेदस्थमाधानं तदङ्गं साम तत्र किम् । उच्चैरुपांशु वा गानं, मुच्चैः शीघ्रप्रतीतितः ॥, उत्पत्तेर्विनियोगोऽत्र प्रबलोऽनुसृतिर्यतः । मुख्यस्याङ्गेन कर्तव्या तस्माद् गान उपांशुता ॥ आधानस्यात्र मुख्यत्वं गानस्य गुणताऽथवा । विनियोगस्य मुख्यत्वमुत्पत्तेर्गुणताऽस्त्विह ॥'

**भाट्ट—** याजुर्वेदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामानि अङ्गत्वेन श्रुतानि । तेषु सामवेदिकः स्वरः स्ववेदनिबन्धनत्वात् शीघ्रमुपस्थितः, न तु प्रधाननिबन्धनो याजुर्वेदिकः, प्रधानैकवाक्यताऽपेक्षितत्वेन विलम्बोपस्थितिकत्वात् । **इति प्राप्ते,** साङ्गस्यैव आधानस्य यजुर्वेदेन विधानात् अङ्गेषु विलम्बोपस्थितिरपि अयं प्रधानाश्रितत्वात् बलीयान् । अतः तेषु याजुर्वेदिक एव स्वरः उपांशुत्वम् । इति **भाष्यकारः । वार्तिककारस्तु** प्रयोगविध्याश्रितस्य स्वरस्य प्रधाने श्रुतस्यापि अङ्गे

कल्प्यत्वेन दौर्बल्यमेव । इतरथा ज्योतिष्टोमाङ्गभूतहौत्रादेरपि अध्वर्युकर्तृकत्वापत्तेः । वारवन्तीयस्यापि यजुर्वेदे 'वारवन्तीयं गायति' इति विनियोगविधेः आम्नानाच्च । अतः एवं चिन्तनीयम्, यत्र वेदान्तरे उत्पत्तिः वेदान्तरे च विनियोगः, तत्र वारवन्तीयादौ कः स्वरः इति चिन्तायाम्, उत्पत्तेः पूर्वभावित्वात् असंजातविरोधित्वेन तन्निबन्धन एव स्वरो बलीयान् । अतश्च ऋचा ऋग्वेदेन क्रियते उत्पाद्यते इति ( उच्चैर्ऋचा क्रियते इति– ) श्रुत्यर्थः । इति प्राप्ते, आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वात् विनियोगोत्तरकालमेव स्वरसंबन्धात्, 'क्रियते' इत्यस्य प्रयुज्यते इत्यर्थावगतेः, प्रयोगस्य च विनियोगाधीनत्वेन विनियोगस्यैव अव्यवहितपूर्वं पुरःस्फूर्तिकत्वात् । तस्मात् विनियोगनिबन्धन एव स्वरः असति बाधके अनुष्ठेयः इत्याह ।

**मण्डन**— 'स्वरोऽङ्गे मुख्यहेतुकः ।'

**शंकर**—— 'उपांश्वाधानसाम च ।'

* ऋग्वेदादिसमाख्यानामपि प्रधानद्वारा अङ्गेष्वप्रवृत्तेः **गुणमुख्यव्यतिक्रमन्यायः** ( ३।३।२।९ ) निर्विषयः स्यात् इत्याशङ्क्य तासां प्रधानेष्वपि विनियोजकत्वाविरोधात् प्रयोगवाचिक्रियतेशब्दव्यपदेशाच्च उच्चैस्त्वादीनां प्रयोगवेदधर्मत्वावगतेर्वैषम्यमाह । सु. ३।७ पृ. ५१. * मन्द्रादिस्वरकाणामुच्चारणानां सर्वेषां ज्योतिष्टोमाङ्गानामपि गुणमुख्यव्यतिक्रमन्यायेन प्रतिस्वं साङ्गं प्रयोगं त्रेधा विभज्य ... । पृ. ११७९. * वेदद्वयविहितेषु अङ्गेषु नानावेदस्वरे प्राप्ते गुणमुख्यव्यतिक्रमन्यायेन याजुर्वेदिकप्रधानधर्मः उपांशुत्वं प्राप्नोति, ततो वाचनिकः स्वरः भवति 'मन्द्रया आज्यभागान्तं, परं मध्यमया, उत्तमया अनुयाजादि' इति । वा.३।३।२।९ पृ. ८११. * **गुणमुख्यव्यतिक्रमन्यायात्** प्रधानद्वारैव अपूर्वेऽङ्गे तद्वेदस्वरलाभोपपत्तेः । सु. पृ. ११८१.

* **गुणमुख्यव्यतिक्रमन्यायस्य स्वरूपम्** 'गुणेन हि मुख्योऽनुसर्तव्यः' इति । वि. ३।३।२ । 'प्रधानसाद्गुण्यार्थत्वात् अङ्गधर्मानुष्ठानस्य प्रधानद्वारधर्मानुरोधेन स्वरूपनिबन्धनधर्मस्य व्यतिक्रमः कार्यः' इति । सु. पृ. ११७५। 'गुणे स्वरूपतो धर्मः प्रधानद्वारतोऽपरः । यत्र स्यात् तत्र विज्ञेयं गुणधर्मस्य बाधनम् ॥' इति । वा. ३।३।२।९ पृ. ८१० । 'उत्पत्तिविनियोगयोर्विनियोगो बलवान्' इति च । के. ३।३।२।९. * **गुणमुख्यव्यतिक्रमाधिकरणे** उत्पत्ति–विनियोगबलाबलस्यैव चिन्तनीयता । सु. पृ. ११८४. * **गुणमुख्याधिकरणेन** ( तत्सिद्ध्यधिकरणस्य ) गतार्थत्वं निरस्तम् । गौणवृत्तिसंभवमात्रस्य तत्र ( गुणमुख्याधिकरणे ) प्रतिपादितत्वेऽपि लक्षणाव्यावृत्तगौणवृत्तिस्वरूपव्युत्पादनार्थत्वात् । ( तत्सिद्ध्यधिकरणस्य ) । कु. १।४।१३।१९ पृ. ११३.

**गुणलोपन्यायः** । अग्निहोत्रहवणीन्यायः । आधाने पवमानेष्टिषु अग्निहोत्रहवण्यभावेऽपि निर्वापोऽस्त्येव ॥

**गुणलोपे च मुख्यस्य । १०।२।२७।६३ ॥**

**भाष्यम्**—— सन्ति अग्न्याधाने पवमानेष्टयः । 'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तत्र चोदकेन प्राप्तम् 'अग्निहोत्रहवण्या हवींषि निर्वपेत्' इति । तत्र तावदग्निहोत्रस्य कालः । तस्मादग्निहोत्रहवणी नास्ति पवमानेष्टिषु । तदभावे किं निर्वापोऽपि न कर्तव्यः, उत कर्तव्य इति । किं प्राप्तम् ? यथाश्रुतोऽसौ न शक्यते कर्तुम् । न च अयथाश्रुतेन कृतेन किञ्चिदस्ति प्रयोजनम् । तस्मात् विगुणत्वान्न कर्तव्यः इति । **एवं प्राप्ते, ब्रूमः** । गुणलोपे च मुख्यस्य क्रिया स्यादिति । गुणः अग्निहोत्रहवणी, प्रधानं निर्वापः । यदि निर्वापो न संभवेत् ततस्तदसंभवात् अग्निहोत्रहवण्यपि न संभवतीति निवर्तेत । न तु गुणलोपे मुख्यं न संभवतीति । तस्मान्निर्वापः कर्तव्यः । अग्निहोत्रहवणीसाधनता च तस्य न संभवतीति निवर्तते ।

**टुप्**—— ननु ( यौगिकी ) समाख्या त्रिकालविषयाऽपि ( संभवति ) । सत्यम् ( संभवति किं नश्छिन्नम् ? । उत्तरम्— ) तत्र वर्तमानस्तावत् ( कालः ) न संभवति ( निर्वापवेलायाम् अग्निहोत्रसंबन्धस्य ) । भूतः ( अपि ) न विद्यते ( पवमानेष्ट्यवसरे ) । भविष्यत्कालताम् ( तु ) गृह्णीमः,



निर्वापस्य ( पवमानेष्टिषु ) सगुणत्वाय । ( अतो गुणलोपाभावात् अनर्थकमिदमधिकरणम् ) । उच्यते । भविष्यत्कालतायास्तु भूतकालता न्याय्या । ( कथम् ? ) अनित्यः संबन्धो भविष्यत्काले ( समाश्रीयमाणे स्यात् । स हि– ) कदा चिन्न स्यादपि । पुरोडाशकपाले तु भूतस्य ( कालस्य ) भावः, एतस्मात् ( कारणात् तत्र भविष्यत्ता आश्रीयते इति विशेषः । चोदयति– ) अग्निहोत्रहवण्यपि भूतकाला (पवमानेष्ट्यवसरे) नास्ति । ( परिहरति– ) प्रकृतौ अग्निहोत्रहवणी वचनादस्ति । सा च ( तत्र ) भूतकालसंबद्धा । इह चोदकेन ( प्राप्नुवती ) तथाभूता ( एव ) प्राप्नोति । न च प्राक् पवमानहविर्भ्यः अग्निहोत्रम् ( अस्ति ) । तस्मात् ( विकृतिषु प्राकृती ) न ( अस्ति अग्निहोत्रहवणी ) । यत्तु पूर्णाहुत्यन्ते अग्निहोत्रम्, सः अपूर्व एव होमः ( न मुख्यमग्निहोत्रम् । जुहूवा च तत् हूयते । तस्मात् अग्निहोत्रहवण्यभावात् युक्ता चिन्ता ) ।

**सोम**— पूर्वत्र ऋतुयाज्यावरणादेः वैगुण्याभावात् अनिवृत्तावपि इह वैगुण्यात् निर्वापस्य अकरणम् इति उत्थानात् **संगतिः** ।

**वि**—— 'लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा ।, लुप्यते साधनाभावात्, तेन मुख्यो न लुप्यते ॥'

**भाट्ट**—— यत्र प्रकृतौ गुणविशिष्टं कर्म स्वतन्त्रविधिना प्रयोगविधिना वा विहितम्, तत्र विकृतौ विशेषणीभूतगुणलोपे विशिष्टलोपात् विशेष्यस्यापि कर्मणो लोपः । **इति प्राप्ते, उच्यते** । उपकारपृष्ठभावेन पदार्थानामतिदेशात् सत्यपि विशेषणबाधे विशेष्यबाधस्य अन्याय्यत्वात्, सत्यपि च प्रकृतौ विकृतौ वा विशिष्टविधौ विशिष्टस्य अनतिरिक्तत्वात् विशेषणबाधेऽपि प्रकृतौ विकृतौ वा न विशेष्यलोपः । अत एव प्रकृतौ निर्वापानुवादेन 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति वचनेन विहिताया अपि अग्निहोत्रहवण्याः पवमानेष्टिषु अग्निहोत्राभावेन असंभवेऽपि न निर्वापलोपः ।

**ननु** अग्निहोत्रहवणीशब्दस्य णत्वश्रवणबलेन संज्ञात्वावगतेः अग्निहोत्रस्य ततः पूर्वमकरणेऽपि कथमग्निहोत्रहवणीत्वस्य तासु बाधः । अस्तु वा अवयवार्थस्यापि प्रतीयमानत्वात् योगरूढत्वम् । तथापि अग्निहोत्रं होष्यते अनया इति व्युत्पत्त्या पवमानेष्टिष्वपि अवयवार्थसंभवात् विशेषणबाधानुपपत्तिः । **न च** भाविव्युत्पत्तेः पुरोडाशकपालादौ अगत्या अङ्गीकारेऽपि भाविनि प्रमाणाभावेन अन्यत्र तदङ्गीकारे प्रमाणाभावात् भूतव्युत्पत्तेरेव प्रकृतौ आश्रितायाः इहासंभवात् विशेषणबाधोपपत्तिः । नहि पवमानेष्टिषु भूतव्युत्पत्तिः संभवति । तूष्णींहोमस्य कर्मान्तरत्वेन अग्निहोत्रत्वाभावात् इति **वाच्यम्** । प्रकृतावपि खण्डपौर्णमास्यामाधाने तदहःक्रियमाणसेष्टिसान्वारम्भणीयसद्यस्कालपौर्णमासप्रयोगे भूतव्युत्पत्तेरसंभवेन भाविव्युत्पत्तेरेव आश्रयणीयत्वात् पूर्वपर्वण्यपि **मानवसूत्रे** अग्निहोत्रहोमस्य पौर्णमासोत्तरं विहितत्वाच्च । वस्तुतस्तु प्रोक्षणीशब्दवत् ल्युडन्तत्वात् नैवात्र कस्यापि कालस्य बोधः । अपि तु स्वरूपयोग्यतया होमसाधनत्वमात्रबोधः । तच्च अकृतेऽपि होमे अस्त्येव । इति **चेत्**, पुरोडाशकपालन्यायेन (४।१।११) निर्वापवाक्ये अग्निहोत्रसंबन्धित्वश्रवणात् तत्प्रयुक्तत्वावगतेः न निर्वापः अग्निहोत्रहवण्याः प्रयोजकः । अतः तद्वदेव येनकेनचित् ( पात्रेण ) निर्वापः । अत एव 'अग्निहोत्रहवण्याऽग्निहोत्रं जुहोति' इत्यत्र 'परिधीन् परिदधाति' इतिवत् पुरोडाशकपालन्यायाभावात् अग्निहोत्रस्य प्रयोजकत्वावगतेः आद्याग्निहोत्रप्रयोगे भूतव्युत्पत्तेरसंभवेऽपि न अग्निहोत्रहवणीबाधः । **याज्ञिकास्तु** आधानाङ्गसंभाराहरणकाले एव पात्राणामुत्पादनात् लाघवेन भाव्यग्निहोत्रहवण्यैव पवमानेष्टिषु निर्वापादिकं कुर्वन्ति । २६.

**मण्डन**——'गुणलोपे च मुख्यं स्यात् ।'

**शंकर**— 'निर्वापो निर्गुणेऽपि च ।' ( निर्गुणे अग्निहोत्रहवणीरूपगुणाभावेऽपि ) ।

**गुणलोपे च मुख्यस्य । १०।२।२७।६४ ॥**

क्रिया स्यात् इति पूर्वसूत्रादनुवर्तते । प्रकृतौ 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति विहितम् । तत् आधाने पवमानेष्टिषु प्राप्तम् । परन्तु नाद्यापि अग्निहोत्रस्य कालः, तेन नास्ति पवमानेष्टिषु अग्निहोत्रहवणी । तदभावे च निर्वापो न कर्तव्यो विगुणत्वात् इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह ! गुणलोपेऽपि मुख्यस्य क्रिया स्यात् ।

अग्निहोत्रहवणी गुणः, निर्वापः प्रधानम् । तथा च गुणलोपेऽपि मुख्यं कर्तव्यमेव । पवमानेष्टिषु निर्वापः कर्तव्यः पात्रान्तरेण । के.

* अर्थवादगुणस्य यथाश्रुतत्वस्य विधिसादृगुण्यार्थत्वाभावेऽपि अर्थवादस्य विधिसादृगुण्यार्थत्वसद्भावात् **'गुणलोपे च मुख्यस्य क्रिया स्यात्' इत्यनेन न्यायेन** निर्वापेणाग्निहोत्रहवणीबाधवत् विधिना अर्थवादबाधावगमात् पूर्वापरोच्चारणकृतविशेषायोगमाशङ्क्य अर्थावधारणात् प्राक् विध्यर्थवादयोर्गुणप्रधानत्वानवगतेः गुणलोपन्यायाविषयत्वम् । **सु. पृ. १५००.** * पौर्णमास्यां यथाशक्तिप्रयोगे प्रस्तराभावेऽपि गुणलोपे चेतिन्यायेन शाखाप्रहरणम् । **भाट्ट.** ६।४।१३, * यत्र तु ( पतिपत्न्योः ) अन्यतररोगनिवृत्त्यर्थमेव दर्शादिप्रयोगः, तत्र इतरस्य पत्नीत्वाद्यभावेऽपि 'गुणलोपे च' इति न्यायेन परिक्रयाद्युपात्तेतरकर्तृकाज्यावेक्षणेऽपि न सर्वत्र तथा कल्पनायां प्रमाणमस्ति। ६।१।४, * सोमाभावे सोममात्रसुसदृशम्, पूतीकत्वावच्छिन्नसंसर्गस्य सोमावयवाङ्गत्वेन 'गुणलोपे च' इति न्यायेन बहुतरसोमावयवानामेव अनुग्राह्यत्वात् । ६।३।१३. * यदपि यजमानस्य भ्रष्टावसरं क्रियायां विगुणं भवतीति, तदपि **'गुणलोपे च मुख्यस्य'** इत्यनेन विरुद्धम् । वा. ३।५।१८।४६. * यदा नियोजनादिकार्यमात्रयोग्यः मुख्यः, तक्षणादिसकलसंस्कारयोग्यस्तु प्रतिनिधिः, तदा मुख्यस्यैवोपादानम्, संस्काराणां तु 'गुणलोपे च मुख्यस्य' इति न्यायेन लोपेऽपि न दोषः। **भाट्ट.** ६।३।१५, * लोके पूर्वं किञ्चिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते कृते एव धानात्वप्रसिद्धेः प्रयोजनानुरोधेन प्राकृतक्रमं बाधित्वाऽपि 'गुणलोपे च मुख्यस्य' इति न्यायेन भर्जनोत्तरमपि प्राकृतः सधर्मकोऽवघातः कर्तव्य एव । १०।२।३३, * वायव्यादिपशौ परप्रयुक्तदीक्षाऽभावादेव काललोपः। यूपच्छेदनादिकं तु 'गुणलोपेऽपि मुख्यस्य क्रिया स्यात्' **इति न्यायात्** कार्यमेव । ११।३।३, * मन्थे भर्जितयवतण्डुलानां पिष्टे एव सक्तुत्वप्रसिद्धेः भर्जनोत्तरमेव पेषणम्, प्राकृतक्रमबाधेऽपि हविःसंपत्त्यर्थं पेषणस्य **गुणलोपाधिकरणन्यायेनैव** भर्जनोत्तरं करणोपपत्तिः । १०।२।३३.

* **गुणवचनः** कश्चित् संसृष्टगुणवचनो भवति द्रव्येण यथा शुक्लः पट इति । कश्चित् निष्कृष्टगुणवचनः यथा शौक्ल्यं पटस्य इति । **टुप्.** ९।४।१।१२. * गुणवचनः शब्दः स्तुतिनिर्वर्तनार्थो दृष्टमर्थं करिष्यति । **भा.** २।१।५।२४, * नहि केवल**गुणवचनः** शब्दः शक्नोति द्रव्यमभिधातुम्। ३।१।६।१२ पृ. ६८६. * येऽपि तावत् स्वप्रधान**गुणवचनाः** तेऽपि कथञ्चित् लिङ्गसंख्याभ्यां युज्यन्ते, किं पुनर्येषु द्रव्यप्राधान्यम् । **वा.** ३।१।६।१२ पृ. ६८५. * **गुणवचनस्यापि** स्त्रीलिङ्गता भवति यथा करुणा बुद्धिः इति, तथा अरुणा इति । **भा.** ३।१।६।१२. * **गुणवचनाना**माश्रयतो लिङ्गवचनानि भवन्ति । गुणवचन इति न गुणाभिधानमात्रेणोच्यते, किं तर्हि गुणमुक्त्वा यो द्रव्ये वर्तते । **वा.** ३।१।६।१२ पृ. ६८२. * गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानाम् आश्रितगुणवचनेन यथा 'विश्वे देवा देवता' इति । **भा.** १०।३।१४।५७, * गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । अविशेष्यमाणायामपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गम् तदाश्रयभूतं गुणस्य भवति । अविधित्सितेऽपि तस्मिन् लिङ्गविशेषनिर्देशः अनुवादभूतो भवत्येव । यथा शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकम्। शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहवः इति । शुक्लां शाटीमानय इति । ९।१। १०।३३ पृ. १६७५. * गुणवचनानाम् इत्यादौ आश्रयनिष्ठलिङ्गसंख्यावाचिपदप्रयोजकीभूतगुणवचनशब्दार्थस्तु स्वशक्यार्थविशिष्टशक्तिविषयकलक्षणावृत्तियोग्यं यत्प्रकारतया व्यक्त्यनन्वय्यर्थकं पदम्, तद्रूपः । अत्र योग्यान्तमात्रविवक्षायाम् 'अजायाः शुक्लः' इत्यादावपि टाबाद्यापत्तिः, तस्य तदा लक्षकत्वाभावेऽपि अरण्यस्थदण्डवत् योग्यत्वस्य सत्त्वात् । अतः तद्व्यावृत्त्यर्थमन्त्यविशेषणम् । अत एव तत्र आश्रयगतलिङ्गाभावे 'गुणे शुक्लादयः पुंसि' ( अमरः १।५।१७ ) इत्यनुशासनेन पुंलिङ्गमेव साधुत्वार्थं नियम्यते । 'रूपमस्ति' इत्यादावपि च प्रकारतया द्रव्यानन्वयात् आद्यम् ( विशेषणम् ) । अतश्च व्यक्तिलक्षणाऽभावेऽपि टाबाद्युपपत्तेः गुणस्यैव करणत्वान्वयपरः अरुणाशब्दः । **कौ.** ३।१।६।१२ पृ.



१६७–१६८. * गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । महाभाष्ये 'विशेषणानां चाजातेः' ( पा० १।२।५२ ) इति सूत्रं यथाश्रुतं प्रत्याख्याय विशेषणशब्दस्य गुणवाचित्वाभिप्रायेण 'गुणवचनानाम् ( शब्दानाम् ) आश्रयतो लिङ्गवचनानि भवन्ति' इत्येतदर्थकतया व्याख्यातत्वात् ( त्रिःप्रथमामन्वाह इति ) आश्रयतो लिङ्गमुपपन्नम् । यद्यपि शाब्दिकैः गुणविशिष्टाभिधानदशायामेव आश्रयतो लिङ्गवचनप्राप्तिर्व्यवह्रियते, न तु केवलगुणाभिधानदशायाम्, तथापि गुणशब्दानां विशेषणशब्दत्वात् गुणविशिष्टद्रव्याभिधाने वचनेन विनाऽपि विशेष्यभूताश्रयवाचकशब्दान्तरसामानाधिकरण्येन लिङ्गवचनप्राप्तिसंभवात् इदं सूत्रं वाक्यसंस्कारपक्षे अनुवादकं स्यात् । तस्मादस्य सूत्रस्य विधायकत्वसिद्ध्यर्थं केवलगुणाभिधानदशायामपि विशेष्यभूतात् आश्रयतो लिङ्गवचने भवतः इत्यत्रापि तात्पर्यं वक्तव्यम् । **सोम.** ९।१।१०. ( अत्र **कैयटः**— पदसंस्कारपक्षे वाचनिकमेतत् । यदा तु वाक्यसंस्कारः तदा अयमनुवाद एव । आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात् तद्गतयोर्लिङ्गसंख्ययोः सिद्धत्वात् इति ) । * **गुणवचनता**ऽपि अरुणाऽऽदिषु दृष्टा । व्यक्तिवचनता उद्भिदादिषु । **बृहती.** पृ. १२४. * **गुणवचनशब्दश्च** द्रव्यप्राधान्ये वर्तते वैयाकरणानां गुणमुक्त्वा गुणिनि वर्तमानत्वात् । नहि वैयाकरणानां वैशेषिकवत् गुणाः परिसंख्यायन्ते । किं तर्हि अङ्गाङ्गिभावापेक्षया गुणगुणिव्यवहारः । **वा.** ३।१।६।१२ पृ. ६८५.

* **गुणवाक्यानामन्योन्यान्वयायोगः** । **सु.** पृ. १४८७.

* **गुणवादः** अर्थवादः प्रमाणान्तरेण विरोधे सति, 'विरोधे गुणवादः स्यात्' । यथा– 'धूम एवाग्नेर्दिवा ददृशे नार्चिः' । **बाल.** पृ. ४८. * **गुणवादा** हि प्रमाणान्तरप्रतिपत्तिबलेन उपजायन्ते । **बृहती.** पृ. १०१. * **गुणवादस्य** फलं अन्यत्र प्रशंसा । अत्र तु गुणसारूप्यादिवत् प्रवृत्तिनिमित्तम् ( अपशवो वा अन्ये इत्यादौ ) । **वा.** १।४।१२।२३–४.

* **गुणवादसूत्रेण** अर्थवादाधिकरणे ( १।२।१।१-१८ ) 'आपो वै शान्ताः' इति अभिजनस्तुतिद्वारेण अवकानामेव स्तुतिः इति विधिस्तुत्या वैयधिकरण्यपरिहारात् । **परा.** ४४।२. * **गुणवादसूत्रे** ( गुणवादस्तु १।२।१। १० ) तत्सिद्धिसूत्रसिद्धायाः गौण्या वृत्तेः स्तुत्युपयोगमात्रकथनात् **न पौनरुक्त्यम्** । **कौ.** १।४।१३।२३ पृ. २६९.

* **गुणविधानं** वाक्यान्तरस्थेन विधिशब्देनापि भवति 'इन्द्राय राज्ञे सूकरः' इति यथा । **भा.** ४।३।६।१३, * अविहिते कर्मणि **गुणविधानमनर्थकम्** । १।४।१।१. * **गुणविधायकमाख्यातम्** 'व्रीहीनवहन्ति' इत्यादि । **वि.** २।१।६.

* **गुणविधिः** अर्थवादः 'सृष्टीरुपदधाति' 'यत्सप्तदशेष्टका उपदधाति' इति सृष्ट्यधिकरणे सोमेश्वरः । **बाल.** पृ. ५४.

**गुणविधिस्तु न गृह्णीयात् समत्वात् । ७। ३।६।१८ ॥**

ज्योतिष्टोमे आतिथ्येष्टौ 'वैष्णवो नवकपालो भवति' इति श्रुतम् । राजसूये च पूर्वस्मिन् त्रिसंयुक्ते 'वैष्णवस्त्रिकपालः' इति श्रुतम् । तत्र त्रिसंयुक्तगतवैष्णवशब्दः आतिथ्यागतवैष्णवधर्माणां ग्राहको न वेति विचारे सिद्धान्तमाह । तुशब्देन ग्राहकत्वपूर्वपक्षस्य निरासः सूचितः । गुणविधिः राजसूयगतपूर्वत्रिसंयुक्तगतवैष्णवशब्दः गुणं विष्णुदेवतासंयोगं विदधाति । स आतिथ्यागतवैष्णवधर्मान् न गृह्णीयात् समत्वात् । समो हि अयमातिथ्यायां त्रिसंयुक्ते च । यथा तत्र विष्णुदेवतां विदधाति एवमत्रापि । तस्मात् त्रिसंयुक्तगतवैष्णवशब्दः आतिथ्यागतवैष्णवधर्माणां नातिदेशकः । वैष्णवनाम्ना न धर्मातिदेश इति सिद्धान्तः । **के.**

* गुणविधिः न आग्नेय– ऐन्द्र– वैश्वदेवशब्दाः, किन्तु ब्राह्मणादिस्तुत्यर्थाः 'आग्नेयो वै ब्राह्मणः, ऐन्द्रो राजन्यः, वैश्यो वैश्वदेवः' इति। **वि.** १।४।१४. * गुणविधिः मन्त्रः 'दर्भैः स्तृणीत हरितैः सुपर्णैः' इति । **बाल.** पृ. ६४. * यत्र तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयते, तत्र भवति **गुणविधिः**, यथा 'दध्ना जुहोति', 'शरमयं बर्हिर्भवति' इति । **वा.** ७।३।८।२२ पृ. १५५८, * व्रीह्यादयो हि अत्यन्तरूढाः, ते स्वार्थमपरित्यजन्तः सामानाधिकरण्य-

मप्रतिपद्यमाना: गत्यन्तराभावात् **गुणविधयो** विज्ञायन्ते ! १।४।१।२ पृ. ३२५. * **गुणविधिना** विशिष्टविधिः बाध्यते दध्ना जुहोतीत्यादौ । बाल पृ. १४०, * **गुणविधित्वं** नामधेयत्वेन बाध्यते तत्प्रख्यादिषु । पृ. १४५, * **गुणविधित्वेन** नामधेयत्वं बाध्यते निरूढेषु सोमादिषु । पृ. १४५. * **गुणविधिनामधेयत्वयोः** संशये उद्भिदादिशब्दे यागपदेन सामानाधिकरण्यं नामधेयत्वनिर्णायकम् । वि. १।४।२. * **गुणविधिसरूपः** अर्थवादः ‘ यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति ’ । वैश्वानराधिकरणे इदम् । बाल. पृ. ५४, * गुणविधिसरूपः मन्त्रः ‘ षड्विंशतिरस्य वङ्क्रयः’ इति । पृ. ६४.

* **गुणविशिष्टधात्वर्थविधिः** भावनानिरपेक्षो न युक्तः । सु. पृ. ७६७. * **गुणविषयकः** प्रतिनिधिप्रतिपत्तिव्यतिरिक्तनियमविधिः प्रत्यक्षविधिः क्रयवाक्ये ‘ अरुणया ’ इति । बाल. पृ. २४, * गुणविषयकः स्मृत्यादिकल्प्यः प्रतिषेधो यथा श्राद्धे ‘ कटुकानि च सर्वाणि विरसानि तथैव च । न देयानि । ’ पृ. ३१.

* **गुणवृत्तयः** । ‘ जहत्स्वार्थाभिधायित्वम् , संघातः, परिकल्पना ।, तथा सोपपदा वृत्तिः, समुदायप्रसिद्धिता ॥ , वाक्यार्थो, ऽल्पप्रसिद्धित्व, मेवमल्पप्रयोगिता । अष्टावेतान्निराकृत्य साधिता गुणलक्षणा ॥ ’ सादृश्यं नवमम् । एते च तत्सिद्धिसूत्रोक्तैः सह नव गौणपक्षा द्रष्टव्याः । वा. ३।२।१।१ पृ. ७४९ । ( १ ) **जहत्स्वार्थाभिधायित्वम्**– स्वार्थं जहाति इति जहत्स्वार्थः अर्थान्तराभिधायी च, तस्य भावः जहत्स्वार्थाभिधायित्वं गुणिरूपाग्न्यादिस्वार्थत्यागेन गुणरूपे पैङ्गल्यादौ वृत्तिः गौणत्वे कारणम् । ( २ ) **संघातः** । अग्न्यादिजाति–पैङ्गल्यादिगुणसंघातः अग्न्यादिशब्दवाच्यः सन् जातिरहितगुणमात्रे शब्दप्रवृत्तिहेतुत्वात् गौणत्वकारणम् । ( ३ ) **परिकल्पना** । अग्न्यादिशब्दवाच्यस्य अग्नित्वादेः माणवकादौ अग्न्यादिगुणदर्शनेन कल्पना गौणत्वकारणम् । ( ४ ) **सोपपदा वृत्तिः** । माणवकाद्युपपदसहायस्य अग्न्यादिशब्दस्य पैङ्गल्यादौ वृत्तिः अङ्गाख्यगुणभूतोपपदाधीनत्वात् गौणत्वकारणम् । ( ५ ) **समुदायप्रसिद्धिता** । अग्निर्माणवकः इत्यादिशब्दस्य अवयवार्थानपेक्षवर्णसमुदायरूपेण पैङ्गल्यादौ या प्रसिद्धिः, तस्याः भावः समुदायावयवभूतस्य अग्न्यादिशब्दस्य पैङ्गल्यादौ समुदायावयवभूतत्वाख्यगुणवत् प्रवृत्तिहेतुत्वात् गौणत्वकारणम् । ( ६ ) **वाक्यार्थः** । पैङ्गल्यादेः अग्निर्माणवकः इत्यादिवाक्यार्थत्वमग्न्यादिशब्दस्य पैङ्गल्यादौ वाक्यावयवत्वाख्यगुणवत्वात् गौणत्वकारणम् । ( ७ ) **अल्पप्रसिद्धित्वम्** । अग्न्यादिशब्दस्य पैङ्गल्यादौ अल्पश्रोतृप्रसिद्धत्वम् अङ्गाख्यगुणभूतोपपदापेक्षत्वप्रतिनिमित्तात् गौणत्वकारणम् । ( ८ ) **अल्पप्रयोगिता** । यस्मिन् पैङ्गल्यादौ अग्न्यादिशब्दस्य अल्पैर्वक्तृभिः प्रयोगः स अल्पप्रयोगी, तस्य भावः अल्पप्रयोगिता अल्पप्रसिद्धत्वम् गौणत्वकारणम् । एतान् गौणत्वकारणपक्षान् निरस्य ( भाष्ये ) अग्न्यादिशब्दवाच्येन अग्नित्वादिना अग्न्यादिगुणस्य पैङ्गल्यादेः लक्षणा माणवकादौ अग्न्यादिगुणवति अग्निशब्दप्रवृत्तिहेतुत्वात् गौणशब्दवाच्यरूपगौणत्वकारणत्वेन साधिता । सु. पृ. १०८३.

**गुणशब्दस्तथेति चेत् । ९।१।१३।३८ ॥**

दर्शपूर्णमासयोः निर्वापमन्त्रे ‘ अग्नये जुष्टं निर्वपामि ’ इति पठ्यते । सोऽयमग्निशब्दः विकृतौ नोह्यते सोऽपि न कर्मसमवेतवचनः , उत ऊहितव्यः कर्मसमवेतवचनोऽसौ , इति विचारे पूर्वपक्षमाह । जुष्टपदार्थे जोषणे गुणभूतोऽग्निः । तद्वाचकः अग्निशब्दः गुणशब्दः । सोऽयं गुणशब्दः तथा सवित्रादिशब्दवत् कर्मासमवेतवचनः इति विकृतौ नोहितव्यः । तथाहि , ‘ अग्नये जुष्टं निर्वपामि ’ इत्यनेन जुष्टस्य निर्वाप उच्यते । न चेह जुष्टस्य निर्वापोऽस्ति । अजुष्टम् अद्यापि असेवितं हि निर्वप्तव्यम् । निर्वापेणैव तत् जोषिष्यते । तस्मान्न समवेतवचनः । तस्यापि वचनमितरार्थं प्रयुज्येत निर्वापस्तुत्यर्थम् । इति चेत् ।

अथवा । दर्शपूर्णमासयोः ‘ धान्यमसि धिनुहि देवान् इति दृषदि तण्डुलानावपति ’ इति श्रूयते । तत्र धान्यशब्दः समवेतवचनो न वेति विचारे पूर्वपक्षमाह । गुणवचनः धान्यशब्दः अत्र अभिप्रेतः देवप्रीणने गुणत्वात् । सोऽयं गुणशब्दो धान्यशब्दः, तथा न समवेतवचनः इति



शाक्यानामयनादौ नोहितव्यः । सतुषेषु हि धान्यशब्दो वर्तते । न तण्डुलेषु निस्तुषेषु इति असमवेतवचनत्वं बोध्यम् । इति चेत् ।

**न, समवायात् । ३९ ॥**

दर्शपूर्णमासयोर्निर्वापमन्त्रे ‘ अग्नये जुष्टं निर्वपामि ’ इत्यत्र अग्निशब्दः न असमवेतवचनः, समवायात् । कर्मणा विधिविहितस्याग्नेः समवायात् संबन्धात् संबद्धत्वात् । न च एतेन वाक्येन जुष्टस्य निर्वाप उच्यते । किन्तु निर्वापेण जुष्टकरणमुच्यते । जुष्टमित्यस्य अभिरुचितमित्यर्थः । “ रुच्यर्थानां प्रीयमाणः ’ इति अग्नेः संप्रदानत्वाच्चतुर्थी । अभिरुचिश्च दास्यमानपुरोडाशप्रकृतिद्रव्ये निर्वापात् प्रागपि अग्नेरस्ति इति भूतार्थकक्तप्रत्ययस्य नानुपपत्तिः ” इति **कुतूहलम्** । अतः अग्निशब्दः समवेतवचनः सौर्यादिविकृतौ ऊहितव्य इति सिद्धान्तः । **अथवा** । दर्शपूर्णमासयोः ‘ धान्यमसि धिनुहि देवान् इति दृषदि तण्डुलानावपति ’ इति धान्यशब्दो न समवेतवचनः विकृतौ नोहितव्य इति यदुक्तं तन्न । व्रीहिवाचकस्यापि धान्यशब्दस्य तद्विकारत्वात् तण्डुलेषु समवायात् । यथा कोङ्कणेषु ‘ शाल्यो भुज्यन्ते ’ इति सतुषा न भुज्यन्ते । तस्मात् धान्यशब्दः समवेतवचनः । शाक्यानामयने ‘मांसमसि धिनुहि देवान्’ इत्यूहितव्यः । इति सिद्धान्तः । के.

* **गुणाधिकरणापवादः**, गुणशेषाधिकरणं गुणप्रत्युदाहरणाधिकरणं गुणविरोधन्यायः इति वा , ‘ अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ’ ( २।२।१०।२४ ) इति सूत्रम् । * न च **गुणानुग्रहार्थं** प्रधानस्य आवृत्तिर्युक्ता । न च गुणवशवर्ति प्रधानम् । भा. १२।१।१।४. * **गुणानुरोधेनापि** प्रधानावृत्तिर्युक्ता असत्यां गतौ । क्लृप्त्यादौ विशेषणान्वयाभिधानावृत्तिर्दृष्टा । अनन्यगतिगुणसंपादनार्था चानुष्ठानावृत्तिरपि दृष्टा । सु. पृ. ७०२.

* **गुणानुरोधेन** पदार्थः न न कर्तव्यो भवति । भा. १।३।३।७. * गुणानुरोधेन प्रधानं नावर्तनीयम् । वा. ३।३।१५।४०. * ‘ गुणानुरोधेन प्रधानपरित्यागो न युक्तः ’ इति द्रव्यसंस्कारविरोधाधिकरणन्यायः । परा. ५६।२, * **गुणानुसारेण** प्रधानसंकोचायोगात् । इन्द्रपीताधिकरणन्यायोऽयम् । ४३।१.

* न च क्रियामात्रं निष्कृष्य **गुणान्तरं** विधातुं शक्यते इत्युक्तं वैश्वदेवाधिकरणे । ( १।४।१० ) । वा. २।२।९।२३ पृ. ५३७, * **गुणान्तरोपजननेन** यजमानस्य फलग्रहणयोग्यता भवति । तत्र संस्काराः गुणान्तरमुपजनयन्ति । ३।८।३।९.

* **गुणाभावात्** । ३।२।३।७॥ अवघाते हविष्कृत्पत्नीगतहविःसंपत्तिहेतुत्वलक्षणगुणयोगसंभवेऽपि आह्वानामन्त्रणविभक्तिप्रैषविषयत्वलक्षणाभावात् हविष्कृत्प्रातिपदिकस्य गौणसामर्थ्यसंभवेऽपि संबुद्ध्याख्यातपदयोः गौणस्यापि सामर्थ्यस्य असंभवात् सकलमन्त्रविषयत्वाच्च वचनस्य सकलमन्त्रसामर्थ्यं विना विनियोजकत्वाशक्तेः मन्त्रविनियोगः न संभवति इति सूत्रार्थः । हविष्कृत्प्रातिपदिकस्य अवघातप्रकाशनसामर्थ्येऽपि एहि इत्यस्य तदेकवाक्यत्वबाधापत्तेः पत्न्याह्वानाङ्गत्वपक्षे च लिङ्गवाक्ययोः द्वयोरपि अनुग्रहसंभवे वाक्यबाधापत्तेः एकस्य पक्षस्य अनभ्युपगमनीयत्वात् लिङ्गेनापि अवघाताङ्गता न युक्ता इति वा सूत्रार्थः । सु. पृ. १०९५.

**गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्, तयोरेकार्थसंयोगात् । ३।२।१०।२७ ॥**

ज्योतिष्टोमे भक्षानुवाके ‘ मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः अग्निष्टुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि ’ ( तैसं. ३।२।५।१– ) इति श्रूयते । तत्र ‘ तृप्यतु ’ इत्यन्त एको मन्त्रः वसुमद्गणस्य इत्यादिः ‘ भक्षयामि ’ इत्यन्तः अपरः । ततः अर्थभेदात् वाक्यभेदः । तस्मात् स्वस्वार्थभेदेन प्रयोक्तव्यौ इति पूर्वपक्षे उत्सूत्रे प्राप्ते सिद्धान्तमाह । मन्द्रादिः भक्षयाम्यन्तः एकमन्त्रः स्यात् । गुणाभिधानात् गुणस्य वाक्तृप्तिरूपस्य विशेषणस्य प्राशस्त्यस्य वा तृप्यतुइत्यन्तेन भक्षयत्येकवाक्यताऽऽपन्नेन अभिधानात् । तयोः तृप्यतु, भक्षयामि इत्यन्तयोर्वाक्ययोः एकार्थसंयोगात् विशिष्टैकार्थवृत्तित्वोपपत्तेः । तस्मात्

मन्द्रादिः भक्षयाम्यन्तः एको मन्त्रः, न द्वौ। स सर्वोऽपि भक्षणे विनियोक्तव्यः। के.

* गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्। सोमभक्षणस्य आनुषङ्गिकभक्षयितृसंस्कारार्थत्वकल्पनेऽपि भक्षयितृसंस्कारस्य स्वर्गवत् फलत्वाभावेन उत्साहनार्थं प्रकाशनानर्हत्वात्, तर्पयतेश्च तल्लक्षणार्थत्वहेत्वभावात्, तृप्तेश्च 'अल्पं भक्षयति' इति यावत्तृप्तिनिषेधेन अनाशङ्कनीयतया अननुष्ठेयत्वात् प्रकाशनार्हत्वानुपपत्तेः, अभिधानसामर्थ्यात्मकस्य लिङ्गस्य आनर्थक्यापरत्या विनियोजकत्वात्, तदविरोधिना एकवाक्यतोपगमनसामर्थ्यात्मकेन लिङ्गेन मन्द्रादेर्भक्षणे विनियोगात्, तृप्यत्वन्तवसुमद्गणाद्योः मन्त्रभागयोः एकतृप्तिफलकभक्षणरूपार्थसंयोगात् तर्पयतेर्भक्षणगुणत्वेन तृप्त्यभिधानावगमात् मन्द्रादिः एक एव मन्त्रः इति सूत्रार्थः। सु. पृ. ११४०.

⌛ गुणाभिधानाधिकरणम्। मन्द्राभिभूतिः इत्यादेरेकमन्त्रता॥

गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्, तयोरेकार्थसंयोगात्। ३।२।१०।२७॥

भाष्यम्— भक्षानुवाके श्रूयते 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु। वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः अग्निष्टुतः इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति। तत्र संदेहः किं मन्द्रादिः तृप्यतु इत्येवमन्तः एको मन्त्रः वसुमद्गणादिः अपरः, उत मन्द्रादिः भक्षयाम्यन्तः एक एव मन्त्रः इति। किं तावत् प्राप्तम्? द्वौ मन्त्रौ, द्वौ हि एतौ अर्थौ। अन्या तृप्तिः अन्यत् भक्षणम्। ततः अर्थभेदात् वाक्यभेदः। तदुक्तम् 'तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात्' इति (३।२।९।२६)। एवं प्राप्ते, ब्रूमः। गुणाभिधानात् मन्द्रादिः एकमन्त्रः स्यात् इति। तृप्तिः भक्षणविशेषणत्वेन अभिधीयते भक्षयामि वाक् तर्प्स्यति इति। ननु 'तृप्यतु' एष अन्यः शब्दः, अन्यश्च 'तर्प्स्यति' इति एषा भविष्यन्ती (लृट्) क्रियायामुपपदभूतायां भवतीति। तत्र द्वयोः क्रिययोः अस्ति संबन्धः, 'भक्षयामि वाक् तर्प्स्यति' इति। इह पुनः भक्षयति तृप्यतु इति नास्ति कश्चित् संबन्धः। उच्यते। नहि अयं विधौ 'तृप्यतु' इति विज्ञायते, क्व तर्हि? प्रार्थनायां वा प्राप्तकाले वा। यदि 'भक्षयामि वाक् तर्प्स्यति' इत्येवम् अभिसंबन्धः क्रियते, यदि वा 'भक्षयामि वाचः तर्प्तुं प्राप्तः कालः' इति, तेन विशेषणविशेष्यभावात् एकार्थतायामेकवाक्यत्वे मन्त्रैक्यमुपपद्यते। ननु निराकाङ्क्षे एते वाक्ये, भङ्क्त्वा रूपं साकाङ्क्षे क्रियेते। अत्रोच्यते। यद्यपि एते वाक्ये भिन्नार्थे निराकाङ्क्षे द्वौ अर्थौ अभिवदेयाताम्, तथापि भक्षणस्य प्रकाशनं दृष्टं प्रयोजनं न तर्पणस्य, इति कृत्वा ऐकार्थ्यमेव भवेत्, किमङ्ग पुनः गुणभावे गम्यमाने एवात्र। तस्मात् गुणाभिधानात् मन्द्रादिः एकमन्त्रः स्यादिति।

वा—'ग्रहणादिवदेकार्थाक्षिप्ततृप्तिप्रकाशनात्। तृप्यत्वन्तः पृथङ्मन्त्र इति प्राप्तेऽभिधीयते॥ (पूर्वपक्षन्यायोऽत्र)। येषां पृथगनुष्ठानमर्थाक्षिप्तं प्रतीयते। तेषां मन्त्रप्रकाश्यत्वं नानुनिष्पादिनां भवेत्॥' (सिद्धान्तन्यायोऽयम्)। ग्रहणादीनि अकृत्वा भक्षानुष्ठानाशक्तेः तेषु पृथक् पुरुषस्य शास्त्रस्य च व्यापारो युज्यते। न त्वेवं भक्षणादन्यः तृप्तौ व्यापारः, इति नार्थस्तत्प्रकाशनेन। तस्मात् प्रार्थनायां प्राप्तकालतायां वा लोटम् अन्वाख्याय एकवाक्यतामापाद्य तृप्तिविशिष्टभक्षप्रकाशनार्थः सकलः (मन्त्रः) इत्यभ्युपगम्यते।

शा—'तृप्तिर्भक्षानुनिष्पन्ना न व्यापारान्तरार्थिनी। तेन स्मृत्यनपेक्षत्वान्न मन्त्रोऽत्र प्रयुज्यते॥'

सु—अपवादत्वेन अवान्तरसंगतिः।

सोम—प्रयोजनं पूर्वपक्षे भक्षणानन्तरभावित्वात् तृप्तेः भक्षणानन्तरं मन्त्रः प्रयोज्यः, सिद्धान्ते तु भक्षणात् प्रागेव इति।

वि—'मन्द्रेति वसुमच्चेति द्वयं तर्पणभक्षयोः। विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे॥', लिङ्गाद् विभागो, मैवं नो तृप्तिर्भक्षणतोऽन्यतः। लिङ्गस्यासंभवे वाक्यशेषात् सर्वोऽस्तु भक्षणे॥'

भाट्ट— तस्मिन्नेवानुवाके 'मन्द्राऽभिभूतिः' 'तृप्यतु' इत्यन्तः तृप्तौ विनियोक्तव्यः ग्रहणादाविव। इति प्राप्ते, ग्रहणादिवत् अनुष्ठेयत्वाभावात् तृप्तेः अप्रकाश्यत्वम्। न च सम्यग्जरणवत् तृप्त्यनुकूलव्यापाररूपभक्षणबाहुल्याक्षेपकत्वम्, 'अल्पं भक्षयति' इति वचनविरोधेन तत्कल्पनाऽनुपपत्तेः। अत एव तृप्तेर्भक्षणेन अजननात् तस्याः स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपपत्तिः। अतश्च लिङ्गविनियोगासंभवात् सत्यपि आख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यतु इत्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैकवाक्यतां प्रकल्प्य स्वार्थविशिष्टभक्षणप्रकाशकत्वमेव अङ्गीकर्तव्यम्। स्वार्थश्च श्रुत्या तृप्तिरेव, तत्प्रकाशनांशे चादृष्टार्थत्वम्। अथवा लक्षणया भक्षणस्तुतिः। सर्वथा न लिङ्गाद्विनियोगः।

मण्डन—'मन्द्रादिरेकः खलु भक्षमन्त्रः।'

शंकर—'भक्षमन्त्रेऽविभागः स्यात्।'

* गुणाभिमुखं गच्छन्ती इतिकर्तव्यता धात्वर्थमुल्लङ्घ्य न शक्नोति गन्तुम्, इति धात्वर्थमुखे तावत् पतति। वा. ३।६।१६।४३ पृ. १०६९.

⌛ 'गुणादीनां त्वसंबन्धात्' इति वार्तिकोक्तेन न्यायेन इन्द्रियवाक्यस्य दधिहोमान्वयकारिवाक्यैकवाक्यत्वाभावात् नेन्द्रियवाक्ये तत्कारितहोमान्वयग्रहणम्। सु. पृ. ८५०। 'गुणादीनां त्वसंबन्धाद् व्यवधिः स्यात् परस्परम्'। गुणादीनां च परार्थत्वादसंबन्धे सति एकेनापि व्यवहितानाम् अननुषङ्गान्न केन चिदेकवाक्यत्वमस्ति इति न 'दध्नेन्द्रियकामस्य' इत्यत्र 'दध्ना जुहोति' इत्येतदुपतिष्ठते। वा. २।२।११।२५ पृ. ५४१.

* गुणावृत्तिः प्रधानानुरोधेन उचितैव। सु. पृ. ११३३.

⌛ गुणोपसंहारन्यायः। 'उपसंहारोऽर्थाभेदाद् विधिशेषवत् समाने च।' ३।३।२।५ ब्रसू. सर्वविज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञाने उपसंहारो भवति, अर्थाभेदात्। य एव हि तेषां गुणानामेकत्र अर्थः विशिष्टविज्ञानोपकारः, स एव अन्यत्रापि। उभयत्रापि हि तदेव एकं विज्ञानम्। तस्मात् उपसंहारः। विधिशेषवत्। यथा हि विधिशेषाणाम् अग्निहोत्रादिधर्माणां तदेव एकमग्निहोत्रादि कर्म सर्वत्र इति अर्थाभेदात् उपसंहरणम्, एवमिहापि। शांभा.। (गुणानां विशेषणानां शाखादिभेदेन भिन्नानामपि गुणिनः एकत्वे उपसंहारः एकत्र संचयः कर्तव्यः। इति गुणोपसंहारो नाम.)। * गुणोपसंहारन्यायेन द्वारसमुच्चयस्य स्थापितत्वात्। अद्वैत. २।२।५००. * अश्रवणं श्रवणानुसारेण नेयम् इति गुणोपसंहारन्यायेन दूषयति। न्यायनि. २।४।१।१ ब्रसू. * उद्योगपर्वणि सनत्सुजातीये भाष्यकारादिभिर्व्याख्यातान् संप्रतितनपुस्तकेषु च स्थितान् पाठान् श्लोकांश्च गुणोपसंहारन्यायेनैकीकृत्य व्याख्यायते। नीलकण्ठः १।१. * कलिवर्ज्यप्रकरणस्यापि पराशरस्मृतौ गुणोपसंहारन्यायेन अनुकर्षणस्य उक्तत्वात् एतद्विषये आदित्यपुराणानुसारिण्येव व्यवस्था युक्ता। सना. ध. प्र. विवाहप्र. पृ. २७.

* गुणोपसर्जनप्रधानद्रव्यविवक्षायां द्रव्यशब्दस्य प्राधान्यात् तदनुरोधेन द्रव्यशब्दसामानाधिकरण्यवत् गुण्युपसर्जनगुणविवक्षायां गुणशब्दस्य प्राधान्यात् तदनुरोधेन गुणशब्दसामानाधिकरण्यं कादाचित्कमविरुद्धम्। सु. पृ. १४२३.

* गुणशब्देन एतेन (अरुणाशब्देन) कारकाभिधानमविवक्षितम् इति द्रव्यमभिधातुमिष्यते, तदा प्रातिपदिकार्थस्य अव्यतिरेकः इति प्रथमा विभक्तिः प्राप्नोति। नहि तृतीयान्तः तमभिसंबन्धं शक्नोति वक्तुम्। भा. ३।१।६।१२ पृ. ६८७, * द्रव्यगुणशब्देभ्यो द्रव्यगुणप्रत्ययो न भावनायाः, अतस्ते न भावशब्दाः। २।१।१।१ पृ. ३७५. * गुणशब्दस्य अत्र (गुणाभावात् ३।२।७ सू.) सामर्थ्यवाचित्वात् सामर्थ्यलभ्यत्वं गौणशब्देन उक्तं भाष्ये। सु. १०९५, * गुणशब्दानां जातिवाचित्वायोगात् नाकृत्यधिकरणोदाहरणत्वम् (केचिन्मतेन)। वार्तिकमते तु गुणकर्मणामपि अवान्तरभेदाभ्युपगमात् उदाहरणत्वमस्त्येव। पृ. ३३१. * गुणशेषाधिकरणम्। गुणप्रत्युदाहरणं द्रष्टव्यम्। के. २।२।१०।२४.

* गुणश्रुतिर्द्रव्येषु नियमविधानार्था। भा. ४।२।१०।२५. * द्रव्यगुणसंस्काराः फलवन्तं यागं प्रति नियोगतः शेषभूताः सत्यपि स्वाङ्गानि प्रति शेषित्वे, तं प्रति नास्ति इत्यभिधीयते। वा. ३।१।३।६ पृ. ६६४.

* **गुणसमुदाय एव** पृथिव्यादि द्रव्यम्, नातिरिक्तमिति केचित्। तन्न। पृथिव्यादौ पाकादिना पूर्वरूपनाशस्य उत्तररूपोत्पत्तेश्च अनुभवसिद्धत्वात्। **मणि.** पृ. २२.

* **गुणसामान्यवाचकाः** चोदकं न बाधन्ते। 'वायव्यं श्वेतमालभेत' अत्र श्वेतः अज एव चोदकप्राप्तः, न तु यः कश्चित् श्वेतः पशुः। **वि.** १०।२।३०.

**गुणिनि गुणज्ञो रमते** इति न्यायः। स्पष्टार्थः। **साहस्री.** ८४२.

* **गुण्यमानं** न भ्रश्यते इति प्रत्यक्षं चैतत् (गुण्यमानं पुनःपुनरावर्त्यमानम्)। **भा.** १।३।२७.

* **गुदस्य** प्रतिपत्तिनियमोऽयं दृष्टार्थः अग्नीषोमीये पशौ (उपयाजेषु)। **भा.** १२।४।४।८, * **गुदानां** उपयाजसाधनानां पशुगणे समुच्चयः उपयाजगुदसमुच्चयन्यायः द्रष्टव्यः। १२।४।४।८. * **गुदकाण्डस्य** प्रतिपत्तिः उपयड्होमः अग्नीषोमीये पशौ। **वि.** १२।४।४.

* **गुरुरनुगन्तव्यः** इत्यादिः स्मृतिः धर्मे प्रमाणम्। **भा.** १।३।१।१-२. * 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च' इति स्मार्तनियमे उपनीतस्याधिकारः, नानुपनीतस्य। **त्रि.** ६।२।६, * 'गुरुरनुगन्तव्योऽभिवाद्यश्च'। अस्य दृष्टप्रयोजनत्वेऽपि विहितत्वेन नियमापूर्वजनकत्वात् निमित्तावृत्तौ नैमित्तिकावृत्तिः कर्तव्या, न तु इच्छया सकृदसकृद्वा अनुगमनादिकम्। ६।२।१०.

* **गुरवस्तु** (प्रभाकरगुरवः) सर्वज्ञानानां त्रिपुटीविषयत्वमङ्गीकुर्वन्ति। त्रिपुटी च ज्ञानात्मविषयरूपा। **मणि.** पृ. १८. * **गुरोः** अनुगमात् प्रीतो गुरुरध्यापयिष्यति। ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यतीति। **भा.** १।३।१।२ पृ. १६५. * **गुर्वनुगमनादेः** निष्पन्नविद्यैरपि अनुष्ठीयमानस्य दृष्टार्थत्वायोगात् अवश्यकर्तव्यताऽन्यथाऽनुपपत्तेः अकरणनिमित्तप्रत्यवायपरिहार्यत्वावसायात्, तस्य च अनन्यप्रमाणकत्वात् वेदमूलत्वसिद्धिः। **सु.** पृ. १२६. * गुर्वनुगमनादेर्नैमित्तिकत्वात् अक्रियायां प्रत्यवायः, करणे च न भवति। दृष्टं च प्रीतौ गुरुरध्यापयिष्यति इत्येवमादि निष्पद्यते। **वा.** १।३।१।२ पृ. १६६. * **गुर्वनुगमनादीनामुपनयनोत्तरकालं** कर्तव्यता। 'अधिकारः उपनीतस्यैव स्मार्तादिकर्मसु' इति बिन्दौ द्रष्टव्यम्। **भा.** ६।२।६।२२-२३.

**गुर्वनुगमनादीनां निमित्तावृत्तौ आवृत्तिः॥**

**आचाराद् गृह्यमाणेषु तथा स्यात्, पुरुषार्थत्वात्। ६।२।१०।३०॥**

**भाष्यम्**— 'गुरुरनुगन्तव्यः अभिवादयितव्यश्च' 'वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्च' इति। तत्र संदेहः किमागतेआगते गुरौ वृद्धवयसि च यदुक्तं तत् कर्तव्यम्, उत सकृत्कृते कृतार्थतेति। आचारात् गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात् इत्यधिकरणातिदेशः। तत्र यः पूर्वः पक्षः, स इह पूर्वः पक्षः। यः उत्तरः, स उत्तरः। सकृत् कृत्वा कृतार्थः, इति पूर्वः पक्षः। निमित्तत्वात् पुनः प्रयोगः, इत्युत्तरः।

**सोम**— नैमित्तिकत्वात् प्रत्यवायपरिहार एव गुर्वनुगमनादीनां वैधं फलम्, गुरुप्रीतिस्तु आनुषङ्गिकं फलम्। अत एवोक्तमाचार्यैः (१।३।१।२ पृ. १६६) 'गुर्वनुगमनादीनां नैमित्तिकत्वात् अक्रियायां भवति प्रत्यवायः, करणे न भवति। दृष्टं च, प्रीतो गुरुः अध्यापयिष्यति इत्येवमादि निष्पद्यते। नियमाच्च अविघ्नपरिसमाप्त्यर्थापूर्वसिद्धिः' इति। न्यायसुधायां च 'निष्पद्यते' इति आनुषङ्गिकत्वं दर्शितम् इति व्याख्यातम् इति ध्येयम्।

**वि**— 'याथाकाम्यमुतावृत्तिर्गुरोरनुगमादिषु।, स्यादाद्यः प्रीतिहेतुत्वा, न्नियमाद्दृष्टतोऽन्तिमः॥'

**भाट्ट**— आचारप्रमाणकेषु गुरुगमनादौ शिष्यानुगमनादिषु आवृत्तस्यैवाचारस्य दर्शनात् तन्मूलभूतश्रुतौ गुरुगमनादेर्निमित्तत्वकल्पनाऽवगतेः प्रतिनिमित्तमावृत्तिः। न च आचरितृणामावृत्तेर्दृष्टविधया गुरुप्रीत्यर्थत्वेनापि उपपत्तेर्निमित्तत्वे प्रमाणाभावः गुरुप्रीतेरुपायान्तरेणापि सिद्धेः अधीतविद्येनापि अनुष्ठानात् नियतानुष्ठानबलेन नैमित्तिकत्वप्रतीतेः। यत्तु **तन्त्ररत्ने** शास्त्रेणैव सप्तमीशतृप्रत्ययादिना निमित्तत्वावगतिः गुरुगमनादेरित्युक्तम्, तच्छ्रुतिरूपशास्त्रसत्त्वे सूत्रकारोक्तस्य आचारप्रमाणकत्वस्य अनुपपत्तेरुपेक्षितम्।



**मण्डन**— 'अभ्यासो निमित्ते गुरुवन्दनादेः।'

**शंकर**— 'एवं गुर्वनुगत्यादौ।' एवं प्रतिभेदतः।

**गुर्वपि विरहदुःखमाशाबन्धः साहयति'** इति न्यायः। अयमभिज्ञानशाकुन्तले चतुर्थाङ्के (१५) उक्तः। तथाहि, 'एसा हि पियेण विणा गमेइ रअणिं विसाअदीहअरम्। गुरु अपि हि विरहदुःखं आसाबन्धो सहावेदि॥' इति प्राकृतगाथा। अस्याः संस्कृतं यथा 'एषाऽपि प्रियेण विना गमयति रजनिं विषाददीर्घतराम्। गुर्वपि विरहदुःखमाशाबन्धः साहयति॥' इति। **साहस्री.** ७७९.

**'गुरुकृतदण्डो न दोषावहः'** इति न्यायः। अयम् 'वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु' (पा० ८।१।८) इति सूत्रमहाभाष्ये ध्वनितः। तथाहि असूयाकुत्सनयोः कोपभर्त्सनयोश्च एकार्थत्वात् पृथक्त्वनिर्देशस्य अनर्थकत्वमाशङ्क्य 'एवं तर्हि आह "सामृतैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः। लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः॥" इति प्रतिवाक्येन' इति। **साहस्री.** ६३३.

* **गुरुगमनावृत्तौ** तदनुगमनमावर्तनीयं न वा इति संदिह्य गुरुगमनस्य निमित्तत्वाभावेऽपि तदभावे अनुगमनस्य असंभवात् तत्काले अनुष्ठेयत्वोपपत्तेः निमित्तत्वे प्रमाणाभावात् सकृदनुष्ठानेन शास्त्रार्थसिद्धेः अनावृत्तिप्राप्तौ, वक्ष्यते आचारानुमितस्य विधेः अधिकारिविशेषणापेक्षायाम् आवश्यकत्वोपपत्तये गुरुगमनस्य निमित्तत्वेन अधिकारिविशेषणत्वावसायात् भेदनहोमादिवत् नैमित्तिकत्वात् गुर्वनुगमनस्यापि आवृत्तिः सिद्धा। **सु.** पृ. १२७.

* **गुरुमतं** (प्रभाकरमतं) स्वतःप्रामाण्यविषयकं 'प्रामाण्यवादः' इति बिन्दौ द्रष्टव्यम्। **मणि.** पृ. १८.

* **गुरुलघुपक्षयोरपि** एकविंशतिसर्ववेदसयोरिव विकल्पो भवति। **संकर्ष.** ३।२।३६. * **गुरुशब्दस्य** हि शिष्यापेक्ष एवात्मलाभः। **वा.** १।३।७।१८ पृ. २४९.

* **गुरुशुश्रूषा**निष्पन्नस्य गुरुसंतोषस्य कुतश्चिदपराधात् नाशः। **सु.** पृ. १५३९.

* **गृञ्जनं** न भक्षयितव्यम्। **भा.** ६।२।५।१९। (गृञ्जनं नाम 'तमाखुः' इति केचित्, लशुनसदृशः कन्दविशेषः इत्यन्ये। 'गाजर' इत्यपि केचित्। **के.**).

* **गृहदाहं** निमित्तीकृत्य विहिता क्षामवती इष्टिः अवश्यं कर्तव्या। **वि.** ६।३।२. * **गृहदाहादौ**। युगपदनेकगृहदाहादौ नैमित्तिकस्य तन्त्रेण सकृदनुष्ठानम्। 'अनेकनिमित्तसंनिपाते नैमित्तिकसाहित्यम्'। **भाट्ट.** ५।२।२. * **गृहदाहेष्टिः** गृहदाहनिमित्ता, न तस्याः फलापेक्षा। इयमेव क्षामेष्टिर्नाम। **वि.** १०।२।१२, * गृहदाहेष्टिः स्वतन्त्रैव, न कस्य चिदङ्गम्। ६।५।१५.

* **गृहनिर्माणादि** लौकिकं कर्म प्रारब्धं सत् समापनीयमेवेति न नियमः। तक्षाऽधिकरणं द्रष्टव्यम्। **भा.** ६।२।४।१६-१८.

* **गृहपतिः** 'यो वै बहूनां यजमानानां गृहपतिः स सत्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमार्ध्नोत्'। **भा.** १०।६।१४।५०, * गृहपतिः सत्रे। अनेन गृहशब्देन कर्म उच्यते, न शाला। शालायामभिधीयमानायामविशेषः स्यात्, सर्वे हि ते शालायाः पतयः। १२।४।१४।३५, * गृहपतिः। सत्रे च तेनार्थः क्रत्वर्थान् याजमानान् कर्तुम्, अन्येषां यजमानानां व्यावृत्तत्वात्। ८।२।६।३२, * **गृहपतिना** सत्रे शुक्रान्वारम्भणौदुम्बरीसंमानादीनि परार्थानि कर्माणि कर्तव्यानि। १२।४।११।३२। नहि तेन आर्त्विजीनाः पदार्थाः कर्तव्याः। ऋत्विजां तु स्वपदार्थसंनिपाते विप्रतिषेधः स्यात्। एवं तर्हि गृहपतेरर्थवत्त्वम्, क्रत्वर्थानि याजमानानि करिष्यतीति। १२।४।१३।३४, * **गृहपतिकर्तृकत्वं** शुक्रान्वारम्भादौ नियोगेन सत्रे। १२।४।१३।३४, * अवयवप्रसिद्ध्याऽपि **गृहपतिशब्दस्य** पतिर्वाच्यः इति यजमानाभिधेयता उपपत्स्यते। प्रकृतावपि स्वामिनि चायं प्रयुक्तः 'गृहपतिर्यजेत' इति। १०।६।१५।५६, * **गृहपतिसप्तदशाः** सत्रमुपेयुः। ८।२।६।३२, * **गृहपतिसमाख्यानात्** प्रकर्षगतिर्विज्ञायते। यथा देवदत्तो मथुरायां ब्राह्मण इति। प्रकर्षश्च फलभूयस्त्वात्। १२।४।१४।३५.

* **गृहमेधीयं कर्म** 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम्' इति चातुर्मास्यान्तर्गतसाकमेधेषु

विहितम् । वि. १०।७।९. * गृहमेधीयं नाम कर्मान्तरमेव, न तु विकृतिः । 'आज्यभागौ यजति' इति तु तत्र अपूर्वमेवाङ्गम् । के. १०।७।९. * गृहमेधीयस्य अपूर्वत्वज्ञापनार्था आज्यभागपुनःश्रुतिः । सु. पृ. ९३९. * गृहमेधीये आज्यभागौ अपूर्वविधानात् कर्तव्यौ 'अग्नये स्विष्टकृते समवद्यति' 'इडामुपह्वयते' इति विधानात् स्विष्टकृद्भक्षौ अपि कर्तव्यावेव । तथा च यावदुक्तं कार्यम् । वि. १०।७।१०. * गृहमेधीये 'आज्यभागौ यजति' । तत्र अतिदेशप्राप्तयोः आज्यभागयोः अनुवादमात्रमेतत् इत्याद्यः पक्षः । आनर्थक्यपरिहाराय उभयत्र विहितयोः आज्यभागयोः इह अभ्युदयकारित्वकल्पनया प्रकृतिवत् इत्थं कर्तव्यम् इत्युपदेशातिदेशाभ्यां संहत्य विधिः इति द्वितीयः । उभाभ्यां विधानस्य अदृष्टार्थत्वापत्तेः 'आज्यभागौ यजति यज्ञतायै' इति च स्तुतिदर्शनात् प्रकृतगृहमेधीयस्तुत्यर्थमिति तृतीयः । गृहमेधीयविध्येकवाक्यत्वाभावेन तत्प्रशंसाऽर्थत्वायोगात् 'यज्ञतायै' इति आज्यभागस्तुतिप्रतीतेः अनन्यपरं पुनःश्रवणम् आज्यभागधर्मककर्मान्तरविधानार्थमिति चतुर्थः । आज्यभागशब्दस्य धर्मलक्षणाऽर्थत्वापत्तेः कर्मान्तरविध्ययोगात् अतिदेशेन आज्यभागयोः प्रयाजादिषु च प्राप्तेषु आज्यभागपुनःश्रवणम् अन्यपरिसंख्याऽर्थमिति पञ्चमः । चोदकप्राप्तेः प्राथम्यात् फलतः परिसंख्याऽनुपपत्तेः त्रिदोषत्वापरिहारात् उपदिष्टाज्यभागवर्जमतिदेशः इति षष्ठः । अखण्डकरणोपकारातिदेशद्वारेण युगपत् सर्वपदार्थप्राप्तेः तद्वर्जनपक्षस्य तृतीये 'चोदनाऽर्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थम्' (३।६।१।१८) इत्यत्र निराकृतत्वात् आज्यभागयोरेव अतिदेशोपसंहारः इति सप्तमः । अतिदेशस्य क्रत्वर्थपदार्थविशेषगोचरत्वेन 'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः' इत्युपसंहारायोग्यत्वात् सप्तममपि पक्षं निराकृत्य क्लृप्तोपकारप्राकृताज्यभागनिराकाङ्क्षत्वेन अतिदेशाभावात् गृहमेधीयस्य अपूर्वत्वज्ञापनार्थमिदं वचनम् इति सिद्धान्तो वक्ष्यते दशमे (१०।७।९।२४-३३) । सु. पृ. १०६.

**गृहमेधीये आज्यभागपुनःश्रवणस्य परिसंख्याऽर्थत्वमिति पञ्चमे पक्षे स्विष्टकृच्छ्रवणमपि स्वसजातीयप्रतिपत्त्यन्तराणां शेषकार्याणां निवर्तकमिति प्रयोजनप्रतिपादनम् ॥**

**स्विष्टकृति भक्षप्रतिषेधः स्यात्, तुल्यकारणत्वात् । १०।७।११।३५ ॥**

**भाष्यम्**— अस्ति गृहमेधीयः । तत्रैषोऽर्थः समधिगतः अपूर्वो गृहमेधीय इति । तत्रेदमामनन्ति 'अग्निं स्विष्टकृतं यजति' इति । तत्रेदं संदिह्यते किमन्येषां शेषकार्याणां भक्षणस्य च परिसंख्यापकः स्विष्टकृच्छब्दः, उत नेति । आह, ननु अपूर्वत्वात् गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते । अत्रोच्यते । पूर्ववान् गृहमेधीय इति कृत्वाचिन्तेयम् । पूर्वस्याधिकरणस्य प्रयोजनं चिन्त्यते । यदि परिसंख्या भवेत्, आज्यभागाभ्यां यागाः परिसंख्यायेरन्, नान्ये इति । इदमपि प्रयोजनं भवति । स्विष्टकृच्छ्रवणेन शेषभक्षाः किं परिसंख्यायन्ते नेति । किं प्राप्तम् ? स्विष्टकृति श्रूयमाणे परिसंख्या स्यात् भक्षाणाम् । कुतः ? तुल्यकारणत्वात् । तुल्यं हि कारणं स्विष्टकृतो भक्षाणां च । उभयमपि शेषसंस्कारार्थम् । तत्र वचनादयं शेषसंस्कारो भवति नान्यः, इति प्रतिषिध्येरन् भक्षाः ।

**अप्रतिषेधो वा, दर्शनादिडायां स्यात् । ३६ ॥**

**भाष्यम्**— यथैव स्विष्टकृच्छ्रवणे अन्येषां शेषकार्याणामदर्शनमिति शेषभक्षा न सन्ति इत्युच्यते । एवं भक्षणदर्शनात् भक्षाः सन्तीति गम्यते । दर्शनादर्शनयोश्च दर्शनं प्रमाणम् । किं तद्दर्शनम् ? 'इडामुपह्वयति' इति । उपह्वानं हि अनुज्ञापनम् । तत् सति भक्षणे भवति, नासति । तस्मान्न प्रतिषेधः ।

**प्रतिषेधो वा, विधिपूर्वस्य दर्शनात् । ३७ ॥**

**भाष्यम्**— प्रतिषेधो वा । तुल्यकारणेन हि प्रत्यक्षश्रुतेन आनुमानिकं बाध्यते । अथ यद्दर्शनमुक्तम्, तत् विधिपूर्वस्य भक्षस्य भविष्यति । एवं हि आम्नायते 'अथेडामेवावद्यति, न प्राशित्रमुपहूय (इडाम्) प्राश्नाति' इति, तस्य दर्शनम् । कृत्वाचिन्तायाः प्रयोजनं न वक्तव्यम् । पूर्वाधिकरणस्य हि तत् प्रयोजनम् । न च प्रयोजनस्य प्रयोजनमुच्यते । यत् प्रयोक्तव्यम्, तस्य प्रयोजनम् । तच्च पूर्वाधिकरणम् ।



**सोम**—परिसंख्याप्रयोजनकथनपर्यवसानात् **संगतिः** । **सूत्रार्थस्तु**—स्विष्टकृति श्रूयमाणे भक्षणनिवृत्तिः स्यात्, उभयोरपि शेषप्रतिपत्तिकारणत्वेन तुल्यजातीयत्वात् इति ।

**वि**—'तत्रैव (गृहमेधीये एव) परिसंख्यात्वे प्राशित्राद्यस्ति वा न वा ।, अस्तीडादर्शना, न्नैवं तदुक्त्याऽत्रास्ति नेतरत् ॥'

**भाट्टे** इदमधिकरणं नवमाधिकरणे एव एकीकृत्य व्याख्यातम् ।

**मण्डन**—'नास्विष्टकृच्छेषकृतिः सपूर्वे ।' (सपूर्वे गृहमेधीयस्य अपूर्वत्वाभावे) ।

**शंकर**—'स्विष्टकृच्छेषकार्यह्वत् ।' शेषकार्यबाधकः स्विष्टकृत् ।

**गृहमेधीये यावदुक्तं कर्तव्यम् ॥**

**ततोऽपि यावदुक्तं स्यात् । १०।७।१०।३४ ॥**

**भाष्यम्**— गृहमेधीयः एवोदाहरणम् । तत्रैषोऽर्थः समधिगतः, आज्यभागाभ्यामेव एतन्निराकाङ्क्षम् अन्यान्यङ्गानि न गृह्णातीति । तदुच्यते । किमेष एवोत्सर्गः सर्वाण्येव अन्यान्यङ्गानि न गृह्णातीति ? एवं खलु प्राप्ते, उच्यते । ततोऽपि यावदुक्तं स्यात् । तत एवमुक्तम्, अङ्गानि नान्यानि गृह्णातीति । अगम्यमाने विशेषे न गृह्णीयात् । गम्यते चात्र विशेषः प्रत्यक्षविहितत्वादाज्यभागयोरिति । अतो यस्ययस्य प्रत्यक्षवचनम्, सर्वेषु तेषु पुनर्गम्यते विशेषः । तस्माद्यावदुक्तं स्यात् । यथा 'अग्नये समवद्यति' इति, 'इडामुपह्वयति' इति ।

**सोम**— प्राकृताङ्गस्य पुनः श्रूयमाणस्य अपूर्वताऽऽपादकत्वं यदुक्तम्, तत् किम् एकैकस्य, उत सर्वेषामिति विशेषविचारणात् **संगतिः** । **सूत्रार्थस्तु**—आज्यभागौ अधिकमपि यावदुक्तं स्विष्टकृदादि स्यादिति ।

**वि**—'तत्रान्यदङ्गं नो कार्यं कार्यं वा, ऽन्यानपेक्षणात् । न कार्यम्, विहितत्वेन कार्यं स्विष्टकृदादिकम् ॥'

**भाट्टे** तु एतदधिकरणं नवमे एवाधिकरणे व्याख्यातम् इति तत्रैव द्रष्टव्यम् ।

**मण्डन**—'तद् यावदुक्ताङ्गयुतं प्रकुर्यात् ।'

**शंकर**—'तत्रापि यावदुक्तं स्यात् ।'

**गृहमेधीये सामिधेनीनिषेधेऽपि नावाहनबाधः ॥**

'न सामिधेनीरन्वाह' इति गृहमेधीये सामिधेनीनिषेधात् आवाहनमपि न कार्यम् । कौषीतके आवाहनविधिभ्यः परतः 'अथ यत् परस्तात् सामिधेनीनां जपति, वज्रो वै सामिधेन्यः'(३।३)इति सामिधेनीपरामर्शेन तदवान्तरप्रकरणे पाठेन तदङ्गत्वावगतेः । इति प्राप्ते, उभयोर्भिन्नकार्यार्थत्वेन 'गुणानां च परार्थत्वात्' इति न्यायेन परस्पराङ्गाङ्गिभावे मानाभावात् परस्ताज्जपविधेर्दूरस्थानुवादेनापि उपपत्तौ अवान्तरप्रकरणाभावान्नावाहनबाधः । **संकर्ष.** ४।४।७.

**गृहमेधीयाज्यभागन्यायः** । आज्यभागन्यायः । गृहमेधीयन्यायः । गृहमेधीयाज्यभागविधिन्यायः । गृहमेधीयस्य आज्यभागपुनःश्रवणेन अपूर्वत्वम् ॥

**विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् । १०।७।९।२४ ॥**

**भाष्यम्**— चातुर्मास्येषु श्रूयते 'मरुद्भ्यो गृहमेधिभ्यः सर्वासाम् (गवां) दुग्धे सायमोदनम्' इति । तत्रेदं समामनन्ति 'आज्यभागौ यजति' इति । तत्र संशयः किं चोदकेन प्राप्तयोः आज्यभागयोः अनुवादमात्रमेतत्, किंवा चोदकेन अनेन च द्वाभ्यामेकं कर्म चोद्यते, किंवा अर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्मान्तरयोः उत्पत्तिः, अथ परिसंख्याऽर्थम्, अथवा आज्यभागौ वर्जयित्वा अन्यत् चोदकः प्रापयति, अथवा चोदकेन आज्यभागौ एव प्राप्येते, चोदक एव वा नास्ति अपूर्वो गृहमेधीयः इति । (अष्टौ पक्षाः) । किं प्राप्तम् ? विकृतौ एतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणम् अनर्थान्तरं स्यात् अनुवादमात्रमेव, सुहृद् भूत्वा आचार्य उपदिशति स्म, नार्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतत् अनुवादमात्रमेतत् इति, अन्यत् चिन्त्यतामिति । कथम् ? तद्धि गम्यते, अन्यच्च नावगम्यते इति । यथा अस्मिन् गृहे ये ब्राह्मणाः, ते आनीयन्तां देवदत्तो यज्ञदत्तो विष्णुमित्रः इति भवन्ति लोके अनुवादमात्रस्य वक्तारः । एवमेतदपीति ।

**अपिवाऽऽग्नेयवद् द्विशब्दत्वं स्यात् । २५ ॥**

**भाष्यम्**— ( द्वितीयं पक्षमाह– ) यदि हि एतावदेव अस्य सामर्थ्यं गम्येत उदितमनुवदितुम्, ततोऽस्य नान्योऽर्थः स्यात् । अथ तु अन्यदपि कर्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशङ्का न भवतीति । अस्ति च सामर्थ्यं चोदकेन अनेन च द्वाभ्यां संहत्य एकोऽर्थ उच्यते । गृहमेधीयो हि भवति प्रकृतिवत्, किं तत्सादृश्यम् आज्यभागौ 'यजति' इति । प्रकृताविदं श्रूयते 'आज्यभागौ यजति' ( इति ) । एवं प्राकृतेन यागेन स्वकार्यं करोति इति । इह पुनः आज्यभागौ यजति इति स प्रकारः अतिदिश्यते, एवम् अनेन प्रकारेण यागः स्वकार्यं करोति । यथा द्वाभ्यां शब्दाभ्यां एकोऽर्थः उच्यते आग्नेयवत् । आवाहने 'अग्निमग्न आवह' इति य एवं संबोध्यते स एवोच्यते आत्मानमावह इति । यथा वा 'एष दण्डः, दण्डेन प्रहर' इति द्वाभ्यामेक एव दण्ड उच्यते । एवमिहापि प्राकृतौ आज्यभागौ यजति इति विकृतौ अपरेण आज्यभागवचनेन तदन्तं गृहमेधीयं करोति इति वाक्यं पूर्यते, न यागान्तरं चोद्यते, नापि चोदकप्राप्तस्य अनुवादमात्रमिति ।

**टुप्**— अगत्या अनुवादाश्रयणं कल्प्येत । अस्ति चात्र गतिः । ( गतिमाह– ) यथा ( सौर्यं चरुं निर्वपेत् इति ) निर्वपतिशब्दः श्रूयमाणः दर्शपूर्णमासविध्यन्तं नियमयति ( पुनःश्रवणात् ), एवमाज्यभागौ (श्रूयमाणौ) ऐष्टिकविध्यन्तं नियमयतः । ( तथाहि, ) सादृश्येन विध्यन्तो नियम्यते । न च ( आज्यभागाभ्यामन्यत् लिङ्गं गृहमेधीयस्य ) सादृश्यकारणमस्ति । ( तस्मात् चोदकनियमः आज्यभागश्रवणात् ) ।

**न वा, शब्दपृथक्त्वात् । २६ ॥**

**भाष्यम्**–– ( तृतीयं पक्षमाह– ) वाशब्दः पक्षं व्यावर्तयति । नैतत् आग्नेयावाहनेन तुल्यम् । तत्र हि 'अग्ने आवह' इत्येतावता आवोढा अग्निरुक्तः, 'अग्निमावह' इत्येतावता वोढव्यः अग्निः उच्यते । न ताभ्यामेकोऽर्थः क्रियते । इह तु 'प्रकृतिवत्' इति एकेनैव वचनेन आज्यभागवत्ता अवगम्यते । पुनः 'आज्यभागौ यजति' इति कृतकरं शास्त्रमनर्थकं स्यात् । तस्मात् अनुवादमात्रम् इति अध्यवसातव्यम् । ननु अनुवादः अनर्थकः । नेत्युच्यते । अर्थवादार्थेन भविष्यति 'आज्यभागौ यजति यज्ञतायै' इति । यदेतत् प्रकृतिवत् करोति, तथा कुर्वन् आज्यभागौ यक्ष्यति । तत्र यज्ञता संपत्स्यते इति ।

**टुप्**–– 'अग्ने आवह' इति आवाहनक्रियां प्रति अग्निः कर्ता । तस्यां च न ज्ञायते कः आवोढव्यः ( इति ) । तत्र 'अग्निम्' इति निर्दिश्यते किञ्चित् आवोढव्यम् । तत्र एतौ भिन्नार्थौ शब्दौ एकः कर्ता, अपरः कर्म । इह तु चोदकेन आज्यभागौ ( प्राप्येते ) प्रत्यक्षेणापि ( आज्यभागौ एव ), तत्र एकार्थौ द्वावपि शब्दौ ( पुनरुक्तौ स्याताम् ) । यदपि उच्यते, चोदकनियमं करिष्यति आज्यभागश्रवणम्, निर्वपतिवत् इति । तदपि न ( युक्तम् ), ओदनशब्दस्य ( गृहमेधीयोत्पत्तिवाक्ये ) श्रुतत्वात्, स एव ( औषधद्रव्यकत्वम् ) सादृश्यमापादयन् विध्यन्तनियमं करिष्यति, निर्वपतिशब्दे तु ( युक्तं विध्यन्तनियमार्थत्वम् । तत्र हि ) नान्यः शब्दो विद्यते ( यो विध्यन्तनियमं कुर्यात् ) । तस्मात् इह ( आनर्थक्यात् ) न द्वाभ्यामेकोऽर्थो गम्यते इति युक्तम् । किं तर्हि ( युक्तम् ? ) प्राकृतविधिस्तुत्यर्थोऽयम् ( प्राकृतस्य विधेः विधायाः प्रकारस्येति यावत्, स्तुत्यर्थः अयमित्यर्थः ), ईदृशोऽयम् ( दार्शपौर्णमासिको विध्यन्तः ) शोभनः, यदत्र आज्यभागावपि ( स्तः ) तौ च यज्ञतासंपत्तये, ( इति– ) अनेन द्वारेण स्तुतिः ।

**अधिकं वाऽर्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे, तेषु हि तादर्थ्यं स्यादपूर्वत्वात् । २७ ॥**

**भाष्यम्**––– ( चतुर्थं पक्षमाह – ) अथवा अधिकयोः कर्मान्तरयोः उत्पत्तिः, नानुवाद इति । आज्यभागौ अत्र क्रियेते एवेति । किं तर्हि ? उपदिश्येते यागौ अत्र कर्तव्यौ इति । कुतः ? अनुवादमात्रं हि अनर्थकम् । शब्दपृथक्त्वात् न द्वाभ्यामेकं कर्म उच्यते । अथ कस्मात् न अर्थवादार्थता, गुणार्थता, विकारार्थता वा भवतीति ? उच्यते । अर्थवादासंकीर्तनात् नार्थवादार्थता । ननु अत्र 'यज्ञतायै' इत्यर्थवादः संकीर्त्यते । उच्यते । न वाक्यान्तरेण विहिते अर्थे वाक्यान्तरेण अर्थवादेन किञ्चित् प्रयोजनमस्ति । तस्मात् यागान्तरविधानार्थः एवायं नार्थवादः । ननु यागान्तरं नास्ति आज्यभागसंज्ञकम् । उच्यते । आज्यभागधर्मकं भविष्यति । न च गुणसंकीर्तनमस्ति, यथा 'अप्सुमन्तौ आज्यभागौ यजति' इति । न च अन्यो वचनप्रकारोऽस्ति । यथा 'नान्यामाहुतिं पुरस्तात् जुहुयात्' इति प्रतिषिद्धप्रतिप्रसवार्थम् 'यदन्यामाहुतिं पुरस्तात् जुहुयात्' इति निन्दित्वा 'स्रुवेणाघारमाघारयति' इति वचनम् ( उपसत्सु इदम् । १०।४।१४।४५ सूत्रे भाष्ये द्रष्टव्यम् ) । तेषु हि सत्सु एवमर्थवत्ता स्यात् । तस्मात् कर्मान्तरवचनम्, अपूर्वत्वात् । एवमपूर्वमर्थं करिष्यति । इतरथा न विशिष्टा उत्पत्तिः स्यात् । किं पुनरत्र कर्मान्तरे लक्षणमिति ? 'एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्' ( २।२।२।२ ) इति । अतः क्रमेण प्रधानयागात् उपरिष्टात् अपरौ यागौ आज्यभागधर्मकौ विधीयेते, अज्ञातौ ज्ञाप्येते इत्यर्थः ।

**टुप**–– अर्थवादोऽपि न ( घटते ) भिन्नवाक्यत्वात् ( गृहमेधीयवाक्येन । ) । तस्मात् कर्मान्तरम् ( आज्यभागधर्मकम् । भाष्योक्तं भेदसाधकमभ्यासं दर्शयति– ) चोदकेन आज्यभागौ, प्रत्यक्षेणापि 'एकस्यैवं पुनःश्रुतिः' इति न्यायेन कर्मान्तरम् । ( प्रकरणान्तरं कुतो नोक्तम्, अत आह– ) यदि ( गृहमेधीये चोदकेन ) दार्शपौर्णमासिको विध्यन्तो न स्यात् ( तदा ) प्रकरणान्तरे इति न्यायेन ( २।३।११।२४ ) कर्मान्तरं स्यात् ।

**प्रतिषेधः स्यादिति चेत् । २८ ॥**

**भाष्यम्**— ( पञ्चमं पक्षमाह ) इति चेत् पश्यसि कर्मान्तरचोदनेति, तन्न । तस्य आज्यभागौ इति नामसंकीर्तने सति अनाज्यभागौ न शक्यौ प्रतिपादयितुम् । तद्धर्मकत्वे सति लक्षणाशब्दः, आज्यभागौ इति च विशेषणस्य अविवक्षा स्यात् । तस्मात् न कर्मान्तरवचनम् । किन्तु परिसंख्यया प्रतिषेधः स्यात् यथा 'पञ्च पञ्चनखा भक्ष्याः' इति शशादीनां पञ्चानाम् ( शशशल्यकगोधाकच्छपखड्गानाम् ) कीर्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यते इति । एवमिहापि अन्येषामङ्गानां प्रतिषेधो भविष्यति इति ।

**टुप्**— ( कर्मान्तरत्वे सति ) आज्यभागशब्दो लक्षणार्थो भवेत् । अप्राकृतश्च अदृष्टार्थः सन् अधिको भवेत् ( इति गौरवम् ) तस्मात् पुनर्वचनं परिसंख्याऽर्थम् अन्येषाम् ( चोदकप्राप्तानाम् ) निवर्तकम् । ननु नात्र निवर्तकः शब्दो ( नञादिः ) नापि निवर्त्यशब्दः । उभयोरभावात् भ्रान्तिरेषा निवृत्तिः ( वाक्यार्थः ) इति । उच्यते । आज्यभागविधानं तावदेतत् न भवति ( चोदकेन ) प्राप्तत्वात् । कि तर्हि ? एतस्मात् वाक्यात् ( उच्चरितात् ) अन्यनिवृत्तिः अवगम्यते । सा च अप्राप्ता, सैव विधीयते ।

**नाश्रुतत्वात् । २९ ॥**

**भाष्यम्**— नैतदेवम् । नहि अत्र प्रतिषेधवाचि किञ्चित् पदं श्रूयते, नापि इतराङ्गवचनम् । न च असंप्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति । पदार्थो हि वाक्यार्थस्य मूलम्, नास्य पृथक् सिद्धिरस्ति इति, तदुक्तम् 'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्' इति ( १।१।७।२५ ) । तस्मात् न प्रतिषेधः । तत्र हि त्रयो दोषाः अस्वार्थग्रहणम्, परार्थकल्पना, प्राप्तबाधश्च । तस्मात् कर्मान्तरवचनमेतत् इति । ( नाश्रुतित्वात् इति सूत्रे पाठः क्व चित् । श्रुतिशून्यत्वात् इति तदर्थः ) ।

**अग्रहणादिति चेत् । ३० ॥**

**भाष्यम्** –– ( षष्ठं पक्षमाह– ) इति चेत् पश्यसि कर्मान्तरचोदनेति, उक्तस्तत्र दोषः स एव महान् । तस्मात् किं भवतु ? आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषामङ्गानां चोदकेन । स्वशब्देन आज्यभागौ गृहीतौ दृष्ट्वा चोदकः तौ न प्रापयति । अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यतीति । किमेवं भविष्यतीति ? संहत्यकारिता न कल्पयिष्यते । चोदकप्राप्तयोः वाक्यान्तरेण अर्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति, विस्पष्टं संज्ञाग्रहणेन पुनःश्रुतिः इत्येतत्, न कर्मान्तरं कल्पयिष्यते । यथा 'देवदत्तोऽत्र तिष्ठति' इत्युक्ते न तिष्ठन्नेव तिष्ठति इत्युक्तः, एतावता देवदत्तात् अन्योऽयमभिधीयते इति गम्यते । न च परिसंख्या त्रिदोषा सती

कल्पिता भविष्यति । तस्मात् चोदकेन अगृहीतौ आज्यभागौ गृहीतौ इति । **आह**, कस्मात् इदं गौरवमाश्रितम् । यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्याताम्, चोदक एव तौ शक्नुयात् ग्रहीतुम् । प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनमिति । उच्यते । न गौरवस्य किञ्चित् साधु प्रयोजनम् । न तु गौरवेण यत् कृतम्, तत् न कृतं भवति । गौरवस्य तु दोषोऽस्ति । न तु दोषेऽपि सति चोदकः आज्यभागौ गृह्णाति । यः परिहारेण पथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति । तस्मात् अग्रहणात् आज्यभागयोर्ग्रहणमिति ।

टुप् --प्रत्यक्षेण आज्यभागौ ( गृह्मेधीये ) प्राप्येते, अन्यानि ( तु ) अङ्गानि चोदकेन । ननु आज्यभागावपि ( चोदकेन ) प्राप्नुतः । सत्यम्, प्रत्यक्षेण ( तु ) शीघ्रं प्राप्तिः, विलम्बिता चोदकेन । तस्मात् आज्यभागवर्जम् ( अन्यत् ) चोदकः प्रापयति । एवं च कर्मान्तरमपि ( परिसंख्या न त्रिदोषा ) न भविष्यति ।

**न, तुल्यत्वात् । ३१ ॥**

**भाष्यम्** — नैतदेवम् । यदि हि चोदकः पृथक्पृथक् प्राकृतान् पदार्थान् अपेक्षेत तत्र आज्यभागौ गृहीतौ इति कृत्वा तौ नापेक्षेत, अन्यांश्च गृह्णीयात् । न तु असौ पृथक्पृथक् पदार्थानपेक्षते । किन्तु प्राकृतमपूर्वमपेक्षते 'यद्वत् तेन, तद्वत् अनेन' इति । तस्मिन् अपेक्ष्यमाणे आज्यभागवत्ताऽपि अपेक्षिता भवति । तत्र एतदेवमागच्छति 'कृतकरं शास्त्रमनर्थकं भवति' इति । तस्मात् अन्यैरङ्गैः तुल्यत्वात् न चोदकेन अगृहीतयोराज्यभागयोः ग्रहणम् इति ।

टुप् — यदि विकृतिः शास्त्राणि अपेक्षेत पदार्थान् वा, ततः आज्यभागौ न प्रापयेत् ( प्रत्यक्षाम्नानात् । न त्वेवमस्ति ) किं तर्हि ( विकृतिः ) प्रकारम् ( यागगतं व्यापारविशेषं ) अपेक्षते । स च एकः ( प्रकारः, न बहवः ) प्रकारापेक्षायां प्रमाणमस्ति, न शास्त्रापेक्षायाम् । ( संनिधिमाह— ) सौर्येण साधयेत् । कथं ? सादृश्येन । ( प्रथमं तावत् ) आग्नेये बुद्धिर्भवति ( न पदार्थेषु ), आग्नेयेनापि प्रकाराः ( स्वसमवेताः उपस्थाप्यन्ते ), तान् गृह्णाति विकृतिः । ते च ( प्रकाराः ) अपेक्षिताः, शास्त्राणि पदार्थाश्च अनपेक्षितानि व्यवहितानि च । ( चशब्दात् अयोग्यानि च ) । तस्मात् कृत्स्नं ( अङ्गजातं ) चोदकः प्रापयति ।

**तथा तद्ग्रहणे स्यात् । ३२ ॥**

**भाष्यम्** — ( सप्तमं पक्षमाह— ) अथ यदि उच्येत आज्यभागावेव चोदकेन गृहीतौ । प्रकृतिवत् गृह्मेधीयो भवति । कथम् ? आज्यभागौ यजति एवमिति । यथा 'सप्तदश सामिधेन्यो भवन्ति' अध्वरकल्पाऽऽदिषु इति वाक्यशेषात् नान्यासु इष्टिषु साप्तदश्यम् । यथा शिंशपामानय वृक्षम् इति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति, एवमिहापि चोदकेन आज्यभागावेव गृहीतौ इति द्रष्टव्यम् । **एवं प्राप्ते, ब्रूमः** । तथा तद्ग्रहणे स्यात् । तुल्यम् अग्रहणेन तद्ग्रहणम् । पृथक् पदार्थापेक्षिणि चोदके स्यात् अग्रहणम् अन्येषामङ्गानाम् । प्राकृतापूर्वापेक्षिणि तु नैतत् उपपद्यते इति ।

**टुप्**— ( यद्यपि उत्तरो ग्रन्थः आनन्दाश्रमीये 'न तुल्यत्वात्' इति सूत्रान्ते एव मुद्रितः, तथापि तन्त्ररत्ने 'तथा तद्ग्रहणे' इति सूत्रं पठित्वैव उत्तरो ग्रन्थो व्याख्यातः । तस्मात् तन्त्ररत्नानुसारेण अत्रैव तं टुप्ग्रन्थं निवेशयामः ) ।

( तत्रेयमाशङ्का मा भूत् आज्यभागार्थं पुनर्वचनं चोदकादेव सिद्धत्वात् । उपसंहारार्थं तु भविष्यति इति । अत्रोत्तरम् ) कृत्स्नप्राप्तित्वात् नोपसंहारः इति । ननु सामान्यस्यापि विशेषेण उपसंहारः संभवति । एवं तर्हि अनर्थकश्चोदकः । ( प्रत्यक्षेणैव आज्यभागसिद्धेः नोपसंहारो युक्तः इति भावः ) ।

**अपूर्वतां तु दर्शयेद्, ग्रहणस्यार्थवत्त्वात् । ३३ ॥**

**भाष्यम्**— ( सिद्धान्तभूतमष्टमं पक्षमाह— ) एवं तर्हि अपूर्वो गृह्मेधीयः । कुतः ? ग्रहणस्य अर्थवत्त्वात् । एवं ग्रहणम् 'आज्यभागौ यजति' इति अर्थवत् भविष्यति । पूर्ववत्त्वे तत् अनर्थकं स्यात् आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृह्मेधीयो निराकाङ्क्षो न चोदकेन अन्यानि अङ्गानि गृह्णाति इति । यस्यां तु विकृतौ अपूर्वं किञ्चिदङ्गमुक्तम्, तेन सह एकवाक्यताम् अगत्वा प्राकृतानि



अङ्गानि गृह्णातीति । कुतः ? 'केन प्रकारेण कुर्यात्' इति तस्य आकाङ्क्षा, न 'किं कुर्यात्' इति । प्रकृतौ च अङ्गवत्ता नाम प्रकारो विदितः, प्रयोगवचनेन च आकाङ्क्ष्यते । न तु विकृतौ अङ्गवत्ता क्लृप्ता । सा कल्पयित्वा आकाङ्क्षिता भवति । न च क्लृप्तामुज्झित्वा कल्पनीयसंबन्धो न्याय्यः । तस्मात् तत्रापि चोदकेन अङ्गानि गृह्यन्ते इति । गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूत् इति तेषामङ्गतां कल्पयित्वा सर्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियते एवेति ।

टुप्— भावयेत् फलम् । केन ? गृह्मेधीयेन । कथम् इति ( अपेक्षायाम् ) आज्यभागौ गृह्णाति ( प्रकरणेन ) । तौ च क्लृप्तोपकारौ ( प्रकृतौ ) दृष्टौ । तस्मात् तौ गृह्णाति । उपमितप्रापणम् ( उपमितया प्रकृत्या लक्षणाद्वारा विध्यन्तस्य प्रापणमित्यर्थः । उपमानप्रमाणकं प्रापणमिति सरलोऽर्थः ) यावत् गृह्मेधीयकथम्भावो नैव गच्छति, तावत् प्रत्यक्षाभ्यामाज्यभागाभ्यां गृह्मेधीयः एकवाक्यतां गतः । तस्मात् आनुमानिकेन प्रकृतिवच्छब्देन न संबध्यते ( गृह्मेधीयः । 'यस्यां तु विकृतौ' इत्यादिभाष्यार्थमाह— ) यत्तु अपूर्वमङ्गम्, तत् क्लृप्तोपकारं न भवति । अक्लृप्तोपकारत्वात् ( च ) कथम्भावाकाङ्क्षां न शक्नोति पूरयितुम् । तत्र अवश्यम् ( याकाचित् ) प्रकृतिः अपेक्षितव्या ( पूरणसमर्था । तस्याम् ) अपेक्षितायां च चोदकेन निराकाङ्क्षीक्रियते ।

शा— 'तत्र **प्रकृतितः प्राप्तेश्चोदकेनाज्यभागयोः । गुणान्तरस्य चाभावादनुवादत्वमिष्यताम् ॥ आनर्थक्यप्रसङ्गात्तु न त्वेतद् हृदयंगमम् । तस्मादुभाभ्यां विध्यन्तो दार्शिकोऽत्र विधीयते ॥**' सिद्धान्तस्तु '**तस्मादपूर्वतैव स्याद् गृह्मेधीयकर्मणः । प्राकृताङ्गनिराकाङ्क्षं न तच्चोदकमर्थयेत् ॥**' इति ।

**सोम**--प्रतिप्रस्थातुर्भक्षवाधेऽपि आज्यभागव्यतिरिक्तानामङ्गानां गृह्मेधीये न बाधः इत्युस्थितेः ( प्रत्युदाहरण- ) **संगतिः । सूत्रार्थस्तु**— विकृत्यां प्राकृतेतिकर्तव्यताया ग्रहणात् पुनःश्रुतिरनुवादमात्रं स्यादिति ।

**वि**— 'गृह्मेधीयके त्वाज्यभागावित्यनुवादगीः । स चोदकविधिर्वाऽर्थवादो वाऽधिककर्म वा ॥ परिसंख्योत संकोचश्चोदकोऽन्यत्र वाऽत्र वा । अपूर्वो गृह्मेधीयः स्याद्वाऽतो लुप्तचोदकम् ॥, अनुवादः पुनःश्रुत्या द्वितीयः सार्थतावशात् । निर्वापवच्चोदकस्य लिङ्गत्वेन सहायकृत् ॥ ओदनेनैव तत्सिद्धेरैष्टिकस्य प्रशंसनम् । विध्येकवाक्यता नास्ति तेनात्राङ्गान्तरे विधिः ॥ प्रत्यभिज्ञानतोऽङ्गस्य परिसंख्येतरस्य हि । चोदकस्य च संकोच इतराङ्गनिषेधतः ॥ न्यायारीक्याच्चोदकस्य स्वार्थसंहरणं भवेत् । वैरूप्याच्च निरर्थत्वादपूर्वं कर्म युज्यते ॥ आज्यभागेतिनाम्नोपकारक्लृप्तिस्मृतेरिह । नामताऽऽदि समं तस्माल्लुप्यते तेन चोदकः ॥ '

**भाट्ट**-- चातुर्मास्येषु 'मरुद्भ्यो गृह्मेधिभ्यः सर्वासां दुग्धे सायमोदनं निर्वपेत्' इति गृह्मेधीयेष्टिं विधाय 'आज्यभागौ यजति यज्ञतायै' इति श्रुतम् । तत्रातिदेशप्राप्तेष्वप्याज्यभागेषु पुनः किमर्थमिति बाधोपयोगितया चिन्तायाम् अनुवादमात्रमित्याद्यः **पक्षः** । अनुवादमात्रत्वे वैयर्थ्यापत्तेः सौर्यादौ निर्वपत्यादेः प्रकृतिसादृश्यबोधनद्वारा प्रकृततानियामकत्ववदस्यापि तादृशवाक्यवत्त्वसादृश्येन अस्याप्याज्यभागविधायकत्वमङ्गीकृत्य तादृशार्थवत्त्वसादृश्येन वा प्रकृतिनियम **इत्यपरः** । औषधद्रव्यकत्वेन अनेकदेवताकत्वेन चैव प्रकृतिविशेषनियमोपपत्तेः 'आज्यभागौ यजति' इत्यस्य वैयर्थ्यापत्तेः निर्वपत्यादेश्च यागलक्षकतया साधुत्वाद्यर्थं च सार्थकस्य सादृश्योपपादकत्वेऽपि बाधकाभावादुपदेशातिदेशाभ्यां विधानस्य विहितविधानायोगेनानुपपत्तेः, चोदकप्राप्तस्यैष्टिकविध्यन्तस्य प्रशंसाऽर्थमिदं सार्थवादकं वचनम् । इत्थमयं विध्यन्तः प्रशस्तः यत्राज्यभागौ विधेते, तौ च 'यज्ञतायै' इति विध्यन्तप्रशंसाद्वारा यागस्तुतिरिति **तृतीयः** । असंनिधिवाचनिकगुणव्यवहितत्वेन गृह्मेधीयविध्येकवाक्यत्वाभावादर्थवादत्वानुपपत्तेः अभ्यासात् कर्मान्तरमेवेदम् अप्राकृतकार्यमाज्यभागधर्मकं गृह्मेधीयाङ्गतया विधीयते इति **चतुर्थः** । न तावदभ्यासात् कर्मान्तरं वक्ष्यमाणरीत्या अनन्यपरत्वाभावात्, नापि प्रकरणान्तरात् अनुपादेयगुणाभावेन तदसत्त्वात्, उपादेयगुणा-

भावस्यैव प्रकरणान्तरप्रयोजकत्वेऽपि अतिदेशोपस्थितत्वेन असंनिधेरभावाच्च। प्रकरणान्तराधिकरणस्थकौस्तुभोक्तरीत्या सिद्धान्तेऽपि असंनिधेरभावाच्च । अतः प्राप्ताज्यभागे पुनःश्रवणं परिसंख्याऽर्थमिति **पञ्चमः** । परिसंख्याऽपीयं विकृत्यन्तरे नाज्यभागाविति शेषिपरिसंख्या वा स्यात्, आज्यभागातिरिक्तप्रयाजादिरूपशेषपरिसंख्या वा ? नोभयथा, त्रैदोष्यापत्तेः । आद्ये विकृत्यन्तराणामनुपस्थितेश्च । गृहमेधीयाज्यभागविधिना विकृत्यन्तरे नैराकाङ्क्ष्यापादनासंभवेन चोदकपरिलोपकत्वानुपपत्तौ फलतः परिसंख्याऽनुपपत्तेः । नान्त्यः, प्राप्तपरिसंख्यात्वे शास्त्रप्राप्तस्यात्यन्तं बाधायोगेन 'न तौ पशौ करोति' इतिवत् विकल्पापत्तेः क्लृप्तोपकारकेणापि आज्यभागमात्रेण गृहमेधीयस्य नैराकाङ्क्ष्यापादनायोगेन चोदकपरिलोपकतया अपूर्वत्वज्ञापनद्वारा फलतः परिसंख्यारूपसिद्धान्तस्यापि अनुपपत्तेश्च । नहि प्रकृतावाज्यभागमात्रस्य नैराकाङ्क्ष्यापादकत्वं दृष्टम्, अपितु प्रयाजादिसहितस्यैव । अतः कथमपि परिसंख्यात्वायोगात् अतिदेशस्य विशेषशास्त्रेणानेन उपदेशेनोपसंहारः । अस्मिंश्च पक्षे उपदेशातिदेशाभ्यां प्रमितस्यैवाज्यभागस्यानुष्ठाने फलमिति अभ्युदयशिरस्कत्वकल्पना सिद्धान्तापेक्षया अनुष्ठाने विशेष इति **षष्ठः** । उपदेशस्य प्रत्यक्षत्वेन झटितिप्रवृत्तौ तन्मात्रविषयस्यातिदेशस्य कल्पने प्रमाणाभावात् आज्यभागमात्रेण नैराकाङ्क्ष्यापादनायोगेन च इतराङ्गविषये अतिदेशस्यावश्यकत्वात् तद्वर्ज्यातिदेशः । न च प्रत्यङ्गमतिदेशभेदे प्रमाणाभावात् एकव्यापारेण एकेनैव वा अतिदेशेन सर्वाङ्गप्राप्तौ आज्यभागयोरपि प्राप्त्युपपत्तेः इतराङ्गमात्रविषयत्वानुपपत्तिरिति **वाच्यम्** । विरोधिशरदर्शनेन अतिदेशस्यैकस्यैव कुशविषयत्वाकल्पनेन तस्येतराङ्गविषयत्ववत् आज्यभागयोरपि प्रथमप्रवृत्तप्रत्यक्षविधिदर्शनेन एकस्यैवातिदेशस्य तद्विषयत्वाकल्पनेन तस्य तदितराङ्गविषयत्वोपपत्तेः । न चैवमपि तेनैव आज्यभागप्राप्त्युपपत्तेरुपदेशानर्थक्यम्, 'तमुक्थ्येन' इत्यादिवत् आज्यभागाश्रितगुणकामप्राप्त्यर्थं तदुपपत्तेः । न चैवं गुणकामप्राप्तिफलकत्वेऽपि चोदकपरिलोपकत्वेन परिसंख्याफलकत्वस्यापि अवर्जनीयत्वापत्तिः, आज्यभागमात्रेण नैराकाङ्क्ष्यापादनायोगेन तस्य चोदकपरिलोपकत्वानुपपत्तेः । **यदि तु** नाज्यभागाश्रिता गुणकामाः के चिद् दृष्टचरा इत्युद्भाव्येत, **ततो** यजुर्भ्रेषप्रायश्चित्तसिद्ध्यर्थोऽयमुपदेशः । आतिदेशिकत्वे हि तस्य कल्पितत्वेन यजुर्वेदत्वाभावात् यजुर्वेदप्रमिताङ्गताकपदार्थभ्रेषनिमित्तकप्रायश्चित्तानुपपत्तिरिति **सप्तमः** । **सिद्धान्तस्तु** न गुणकामप्राप्तिरिह उपदेशप्रयोजनम्, तत्सत्त्वेऽपि गुणकामप्राप्त्यनुपपत्तेः । दर्शपूर्णमासप्रकरणपठितानां हि गुणकामानां प्रकरणात् दर्शपूर्णमासापूर्वसाधनीभूताज्यभागयोरेव आश्रयत्वं नाज्यभागमात्रस्य, तथात्वे गृहमेधीयेऽपि अतिदेशप्राप्ताज्यभागाश्रितगुणकामप्राप्त्यापत्तौ तत्र तदुपदेशानर्थक्यात् । नापि यजुर्भ्रेषप्रायश्चित्तप्राप्तिः, विकृत्यङ्गत्वस्य यजुर्वेदप्रमितत्वाभावेऽपि आज्यभागोत्पत्तेर्यजुर्वेदप्रमिततया सौर्यादाविव इहाप्यातिदेशिकत्वे तत्प्राप्त्युपपत्तेः । अपितु क्लृप्तोपकारप्राकृताज्यभागविधिना प्रथमप्रवृत्तेन झटित्याज्यभागोपस्थापनात् तेनैव निराकाङ्क्षस्य गृहमेधीयविधेर्नातिदेशकल्पकत्वम् । न च प्रकृतौ यावत्प्रमाणप्रमिताङ्गैरेव नैराकाङ्क्ष्यदर्शनात् इहापि नाज्यभागग्रहणमात्रेण नैराकाङ्क्ष्यम्, गौरवेण प्रकृतौ यावत्प्रमाणप्रमितत्वस्य नैराकाङ्क्ष्यप्रयोजकत्वाकल्पनात् । अपितु परप्रयुक्ताङ्गान्तरसहितप्रयाजादित्वस्यैव, तेनैव रूपेण जनकतया क्रतूपकारोद्देशेन विहितत्वात् । वस्तुतस्तु सहितत्वमपि न तन्त्रम्, अपितु प्रयाजादिजन्यादृष्टत्वमेव । तच्च साङ्गजन्यमेवेति प्रकृतौ साहित्यस्याप्यङ्गत्वात् न तद्विना एकेनाङ्गेन तत्सिद्धिः । अत एव च विकृत्यन्तरे उपहोमानन्वयेऽपि प्राकृताङ्गमात्रेण प्रकृतौ तेषामाकाङ्क्षाशामकत्वदर्शनात् विकृतावपि आकाङ्क्षाशामकत्वं नानुपपन्नम् । अत एव तत्संनिधिपठितोपहोमविधिं दृष्ट्वा तदन्यथाऽनुपपत्त्यैव विकृतेः आकाङ्क्षामुज्जीव्य तेषां तदङ्गत्वेऽवगते तत्साहित्यस्यापि अङ्गत्वावगमात् न प्राकृताङ्गमात्रेण क्रतूपकारसिद्धिः । एवं च प्रकृतेऽपि आज्यभागान्वयात् पूर्वमन्याङ्गानन्वयात् तत्साहित्यस्य अङ्गत्वानवगतेः आज्यभागजन्यादृष्टत्वेन प्रकृतौ आकाङ्क्षाशामकत्वस्य क्लृप्तत्वात् युक्तं तन्मात्रेणाकाङ्क्षाशान्तेः अतिदेशपरिलोपकत्वम् । अत एव तत्संनिधिपठितोपहोम-



विधिवशेन तेषामङ्गत्वावगतावेव तत्साहित्यस्य अङ्गत्वावगतिः, न तु प्राकृताङ्गान्तरसाहित्यस्यापि, तेषामाकाङ्क्षाविरहेण अतिदेशस्यैवाकल्पनेन अङ्गत्वस्यैवानवगतेः ।

न चैवं पाठक्रमेण प्रथमावगताङ्गेनैव प्रकृतेरपि नैराकाङ्क्ष्यात् तदुत्तराङ्गानां प्रकरणग्राह्यत्वानापत्तिः, प्रकरणस्य युगपत् सर्वाङ्गग्राहित्वेन पाठक्रमस्य दुर्बलस्य अनियामकत्वात् । अन्यथा प्रथमेनैव नैराकाङ्क्ष्ये इतरस्य कर्मान्तरत्वापत्तौ व्रीहियवयोर्विकल्पानापत्तेः । अत एव गृहमेधीयस्य प्रकरणे आम्नातानाम् आज्यभागस्विष्टकृदादीनामपि नान्यतरेणैव नैराकाङ्क्ष्यम्, अपितु प्रकरणाविशेषात् क्लृप्तोपकारकत्वाविशेषाच्च पाठक्रमम् अतन्त्रीकृत्य सर्वैरेव । अतश्च क्लृप्तोपकारैराज्यभागादिभिरेव नैराकाङ्क्ष्यात् गृहमेधीयस्य अतिदेशकल्पकत्वाभावेन अपूर्वत्वावगतेः आज्यभागाद्यतिरिक्ताङ्गानां प्रमाणाभावेनैवाप्राप्तेः फलतः शेषान्तरपरिसंख्येति सिद्धम् ।

न चैवं पञ्चमपक्षाविशेषः, तत्र चोदकप्राप्तपरिसंख्यात्वाङ्गीकारेण चोदकपरिलोपपूर्वकाप्राप्तपरिसंख्यारूपसिद्धान्तापेक्षया तस्य भेदात् । न चैवं तयोः पक्षयोरनुष्ठाने विशेषाभावः । प्राप्तपरिसंख्यापक्षे आज्यभागविधेर्लक्षणया तदितरपरिसंख्यार्थत्वेन 'अब्राह्मणमानय' इत्यत्र ब्राह्मणभिन्नस्य तत्सजातीयस्यैव मनुष्यादेर्ग्रहणवत् आज्यभागभिन्नस्याज्यभागसमानजातीययागान्तरस्यैव परिसंख्यापत्तेः । सिद्धान्ते प्रापकप्रमाणाभावेन तद्भिन्नस्य सर्वस्यैव परिसंख्याऽऽपत्तेः विशेषसत्त्वात् । अत एव स्विष्टकृच्छ्रवणमपि पञ्चमपक्षे समानजातीगत्वात् प्राशित्रादिशेषकार्याणां निवर्तकमेव । अथ 'इडामवद्यति' इति तु स्विष्टकृद्विधिनिवर्तकेडाभक्षे अर्थान्तरविहितत्वात् इडाभक्षप्रतिप्रसवार्थमिति **प्राञ्चः** । वस्तुतस्तु इडाश्रवणस्यैव शेषकार्यान्तरपरिसंख्याऽर्थत्वम्, स्विष्टकृच्छ्रवणस्य च प्रतिप्रसवार्थत्वमित्यत्र विनिगमनाविरहात् उभयोरपि परिसंख्याऽर्थत्वमेव आज्यभागश्रवणवत् । तत्रावान्तरसादृश्यात् आज्यभागश्रवणम् अर्थकर्मभूतयागान्तरपरिसंख्याऽर्थम् । स्विष्टकृच्छ्रवणं च आश्रयिकर्मान्तरपरिसंख्याऽर्थम् । इडाश्रवणं च भक्षान्तरपरिसंख्याऽर्थं पञ्चमे पक्षे । सिद्धान्ते तु युगपत् सर्वैरेव क्लृप्तोपकारप्राकृताङ्गपुनःश्रवणैर्नैराकाङ्क्ष्यापादनेन चोदकलोपावगमात् सर्वाङ्गनिवृत्तिरेव प्रापकप्रमाणाभावात् फलम् । न चैवं 'तमुक्थ्येन' इत्यादावपि सत्यपि गुणकामप्राप्तिफलकत्वे चयनस्य क्लृप्तोपकारकत्वेन चोदकपरिलोपापत्तिः, तस्याहवनीयसंस्कारकत्वेन तत्प्राप्त्यर्थमतिदेशोपजीवित्वेन तत्परिलोपकत्वानुपपत्तेः, प्रकृत्यङ्गताबोधकविधिसमकालीनविधिबोधितस्यास्य चयनस्य उक्थ्यादौ क्लृप्तोपकारकत्वानिश्चयाच्च । प्रकृते त्वेवं विशेषाभावात् चोदकपरिलोपकत्वेन सिद्धं गृहमेधीयस्यापूर्वत्वम् ।

**मण्डन**— 'भवेदपूर्वं गृहमेधिकर्म ।'

**शंकर**— 'अपूर्वत्वं प्राकृतश्रुतौ ।' ( 'प्राकृतस्य पुनः श्रवणे सति कर्मणः अपूर्वत्वम् )।

* 'शंय्वन्ता प्रायणीया संतिष्ठते'। अत्र संतिष्ठतिविधाने चोदकोऽङ्गानि प्रापयति, तस्मात् **आज्यभागन्यायो**ऽत्र नास्ति । **टुप्.** १०।७।१४।४१.

* अवभृथे 'अग्नीवरुणौ स्विष्टकृतौ यजति'। यागश्चायम् अतिदेशाभावेऽपि **आज्यभागन्यायेन** प्राकृत एव स्विष्टकृद्यागान्तरं वा तत्कार्यापन्नम्, अप्राकृतकार्यमेव वा प्राकृतस्विष्टकृद्विकाररूपम् । **भाट्ट.** १०।४।१८, * 'ईशानाय परस्वत आलभेत' 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इत्यत्र आज्यभागन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानेऽपि नात्र पशोः प्रदेयता प्रमाणाभावात् । ९।४।१२.

* द्वादशाहे आद्ययोरह्नोः रथंतरबृहत्सामकत्वात् तन्नैमित्तिकयोः ऐन्द्रवायवाग्रत्वशुक्राग्रत्वयोः अतिदेशेनैव प्राप्तिसंभवे पुनस्तत्र तच्छ्रवणं आज्यभागन्यायेन अङ्गान्तरपरिसंख्यार्थम् इत्याद्यः पक्षः। **भाट्ट.** १०।५।२३. * क्लृप्तोपकारत्वेन प्राकृतानामङ्गानां निराकाङ्क्षीकरणसामर्थ्यस्य **गृहमेधीयाधिकरणे** वक्ष्यमाणत्वात् । **सु. पृ. ११९७.** * **गृहमेधीयाज्यभागन्यायेन** अपूर्वत्वं वैमृधादीनाम् इति प्राप्ते । **भाट्ट.** १०।८।९. * अश्वमेधे 'ईशानाय परस्वत आलमेत' 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इत्यत्र पर्यग्निकरणान्ताङ्गरीतेः चोदकतः प्राप्तत्वेऽपि गृह०न्यायेन चोदकलोपे सति चोदकतः अङ्गान्तराणामप्राप्त्या फलतः अङ्गान्तरप्रतिषेधार्थ-

त्वात् । **सोम.** ९।४।१३. * त्वाष्ट्रं पात्नीवतम् । ‘ पर्यग्निकृतं पात्नीवतमुत्सृजति ’ इति पूर्वकर्मानुवादेन गुण एव विधीयते । न च विधेयाभावः वृत्तपर्यग्निकरणत्वस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात्, तस्य च गृह०न्यायेन प्राकृतस्यैव अतिदेशतः पूर्वप्रवृत्त्या विधेयत्वात् । **भाट्ट.** २।३।८. * ‘ त्वाष्ट्रं पात्नीवतमालभेत, पर्यग्निकृतं पात्नीवतमुत्सृजन्ति ’ अत्र गृह०न्यायेन अपूर्वताज्ञापनद्वारा इतराङ्गपरिसंख्याफलकः पर्यग्निकरणमात्रविधिः तदङ्गकलापविधिर्वा अस्तु । **कौ.** २।३।८।१९ पृ. ५६, * न चैवं क्लृप्तोपकाराग्निपुनःश्रवणात् गृह०न्यायेन अङ्गान्तरपरिसंख्याफलकत्वस्याप्यापत्तिः, तद्वदिहापि अतिदेशाधीनप्राप्तिकाहवनीयप्राप्त्युपजीवकत्वेन अतिदेशबाधकत्वानुपपत्तेः द्विरात्रादिषु अतिदेशप्राप्ताङ्गविषयलिङ्गसद्भावाच्च । २।३।१०।२२ पृ. ७१. * ‘यज्ञो बभूव स आ बभूव ’ इति याजमानमन्त्रस्य ज्योतिष्टोमाङ्गदर्शपूर्णमासविकारेषु पुनर्विधानात् याजमानमन्त्राणामितरेषां परिसंख्या गृह०न्यायेन । इति पूर्वपक्षः । **संकर्ष.** २।२।४. * वाजपेये ‘ तान् पर्यग्निकृतानुत्सृजति , ब्रह्मसाम्न्यालभते ’ इत्यत्र पूर्ववाक्येन पर्यग्निकरणान्ताङ्गरीतिविधानात् गृह०न्यायेन अपूर्वत्वापत्तौ उत्तराङ्गानामकर्तव्यत्वावगतेः उत्तरवाक्येन कर्मान्तरविधिः इति प्राप्ते । **भाट्ट.** ११।२।११, * विकृतौ ‘ एकादश प्रयाजान् यजति ’ इत्यत्र एकादशत्वविशिष्टप्रयाजविधिः । तदा च गृह०न्यायेन क्लृप्तोपकारप्रयाजपुनर्विधानात् तेनैव पश्वादिभावनायाः निराकाङ्क्षत्वात् अतिदेशाकल्पनेन अपूर्वत्वावगतेर्न प्रयाजाद्यतिरिक्ताङ्गकरणम् इति प्राप्ते । १०।३।१.

* **गृहमेधीयाज्यभागविधिन्यायः** । **रसायनं** पृ. १९.

* यत्र वैशेषिकगुणरहितं प्राकृतं श्रूयते , तत्रैव **गृहमेधीयन्यायः**, तत्र धात्वर्थविध्यवश्यम्भावात् । **सोम.** १०।३।१. * **गृहमेधीयन्यायेन** अपूर्वत्वम् अवसीयते । **सु.** पृ. ९४०. * गृहमेधीयन्यायेन कतिपयाङ्गैरेवोपकाराकाङ्क्षाशान्तिः । **सोम.** १२।१।२. * सर्वत्रैकत्वे कर्मणः स्थिते गृहमेधीयन्यायेन नोपकारावच्छेदो युज्यते। नहि तदेव कर्म सत् तदङ्गमपेक्षते नोपेक्षते चेति युज्यते। **भामती.** ३।३।२।५ ब्र. सू.

* **गृहमेधीया** इष्टिः सायं कर्तव्या सद्यस्कालैव । भा. ५।१।११।१९–२२.

* **गृहसंनिवेशः** वास्तुविद्याविषयः । **सु.** पृ. १३०.

**‘गृहस्थः स्त्रियमुद्वहेत्’ इति न्यायः ।** यथाऽयम् ‘ गृहिणी गृहमुच्यते ’ इत्युक्ते गृहे तिष्ठतीति गृहस्थः सन् स्त्रियमुद्वहेदिति वाक्ये भविष्यद्विवाहित्वमादाय गृहस्थत्वव्यपदेशः, तथा प्रकृतेऽपीति बोध्यम् । **साहस्री.** ५२३.

**गृहार्थमारोपितस्य दीपस्य रथ्योपकारकत्वम् इति न्यायः ।** स्पष्टार्थः । **साहस्री.** ४२५.

* **गृहाच्छादनार्थं** लौकिकं बर्हिः । **वा.** ३।७।१।१.

* **गृह्णातेर्यागानभिधायकत्वम्** । ‘ ऐन्द्रवायवं गृह्णाति ’ इत्यादौ । **सु.** पृ. ७८९.

* **गृह्यं सूत्रं** गौतमीयं गोभिलीयं च छन्दोगैरेव परिगृहीतं, वासिष्ठं ( धर्मसूत्रं ) बह्वृचैरेव , शङ्खलिखितोक्तं च ( धर्मसूत्रं ) वाजसनेयिभिः । आपस्तम्बीयबौधायनीये तैत्तिरीयैरेव प्रतिपन्ने । **वा.** १।३।७।१५ पृ. २४४. * **गृह्याणि** कर्माणि गृहाय हितानि इत्यर्थः । **टुप्.** ६।८।३।२१. * **गृह्यस्यापि** आचारमूलत्वात् । **सोम.** ७।४।२, * **गृह्यादौ** एव लौकिक्या इतिकर्तव्यतायाः बहुकर्मान्वियदर्शनम् । ७।४।२.

* **गृह्यशब्दस्य** औपासनाग्न्यधिकरणककर्मविषयत्वम् । **सु.** पृ. २४२.

* **गृह्यमाणे** च विशेषे भेदो दृष्टः । **भा.** ११।४।१२।४२ ( ४५ के. ).

* **‘ गौरनुबन्ध्यः ’** इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः । **भा.** १०।२।१७।४७. * **‘गौरनुबन्ध्यः’** इत्यनेन ‘ न हिंस्यात् ’ इत्यस्य ‘ गां न हन्यात् ’ इत्यस्य वा बाधे प्रसक्ते ‘ अक्षता गोपशुश्चैव ’ इति प्रतिप्रसवरूपः प्रतिषेधः । **बाल.** पृ. ३.

**‘ गौरश्व इति वा श्रुत्या यद् गोत्वाद्यवधारितम् । विशेषे यदि तत्र स्यात् ततः स्याच्छ्रुतिबाधनम् ॥ ’** इति तद्भूताधिकरणोक्तन्यायेन ( श्लोवा.



३४७ गोत्वाद्यवबोधितम् इति तत्र पाठः ) अविरोधः श्रुतिप्रकरणयोः । **सु.** पृ. ११२३–२४.

* **गौः** अश्वः इत्येवमादयः शब्दाः आकृतेरभिधायकाः इति सिद्धम् । **भा.** १।३।९।३५. * **‘ गौः ’** इति शब्दः साधुः ‘ गावी गोणी गोता गोपोतलिका ’ एते शब्दा असाधवः । **वि.** १।३।९. * **गौः** इति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयो नान्यत्रेति तद्वचन एव गोशब्दो विज्ञायते । **भा.** ८।३।६।१७, * **गौः** इत्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति भगवानुपवर्षः । १।१।५।५ पृ. ४५, * **गौः** इत्यस्य शब्दस्य कोऽर्थः ? सास्नादिविशिष्टा आकृतिः इति ब्रूमः । १।१।५।५ पृ. ४९. * **‘ गौरित्युच्चरिते सप्त वस्तूनि प्रतिभान्ति नः । जातिर्व्यक्तिश्च संबन्धः समूहो लिङ्गकारके । संख्या च सप्तमी तेषामष्टपक्षी द्वयोर्द्वयोः ॥’** **वा.** १।३।९।३३ पृ. ३११, * **‘ गौः न पदा स्प्रष्टव्यः ’** इति योयो गौः, सस पदा न स्पृश्यते । ६।४।६।२३ पृ. १४४२.

* **गौः** नाम अतिरात्रः भ्रातृव्यवतः । कातीये । **बाल.** पृ. ३४. * **गौः** नाम एकाहो यागः । गवामयने च गौर्नामको यागः । तत्रैकाहिकीतिकर्तव्यता ग्राह्या , न तु द्वादशाहिकी । **वि.** ७।४।३, * **गौः** नाम ज्योतिष्टोमविकारः अष्टरात्रादौ । ६।७।८. * **गौर्वाहीकः** इति गोशब्दो वाहीके तिष्ठन्मूत्रभक्षणादि यत्, तत् लक्षयति । **टुप्.** ११।३।१५।४८. * **गौर्वाहीकः** इति संवाहे वाहीके गौणः शब्दः प्रवर्तते । ( संवहति प्रवासिनामुपकरणादि वा काष्ठपाषाणादि वा, स संवाहः ) । **भा.** १०।२।२३।४७.

* **गावः** सूकरमनुधावन्ति । “तस्माद्वराहं गावोऽनुधावन्ति ’ इति सूकरे वराहशब्दं दर्शयति । सूकरं हि गावः अनुधावन्ति ।” **भा.** १।३।४।९, * **गावः** । ‘ सोमापहारे एका , अभिदग्धे च पञ्च ’ इयं दक्षिणा कृत्स्नस्य क्रतुदाक्षिण्यस्य न निवर्तिका , किन्तु केवलं गवाम् । १०।३।१५।५९, ६२, * **गावः** हि भगवत्यो महाभागाः महत्युपकारे वर्तन्ते । १०।३।११।४७. * ‘ गां न हन्यात् ’ इत्यस्य गौरनुबन्ध्यः इति बाधे प्रसक्ते ‘ अक्षता गोपशुश्चैव ’ इति प्रतिप्रसवरूपः प्रतिषेधः । **बाल.** पृ. ३. * **‘ गां पश्य , पश्य गाम् । ’** सत्यमेवमपि प्राप्स्यत् यदि नित्यम् आख्यातोपक्रमाण्येव वाक्यानि प्रायोक्ष्यन्त , तेषां त्वनियमेनैव प्रयोगः सर्वदा स्थितः गां पश्य , पश्य गाम् इति च । **वा.** ३।४।४।१३ पृ. ९२९. * **‘गवा अभिचरन् यजेत’** इति गोशब्दः कर्मनामधेयम्, न गुणविधिः । **भा.** १।४।४।५. * ‘ गवा अभिचर्यमाणो यजेत ’ इति गोशब्दः कर्मनामधेयं न तु धेनोर्वाचकः, ‘ यथा गावो गोपायन्ति ’ इति वाक्यशेषात् उपमानोपमेयभावाभिधानात् । ( यमभिचरति कश्चित्, सः अभिचर्यमाणः ) । **वि.** १।४।५.

* ‘ **गवा क्रीणाति** ’ इति क्रयवाक्ये , अयं नियमविधिः जातेः । **बाल.** पृ. २४. * **गोः** अभिधानानि– उस्रा उस्रिया अही मही अदितिः इला इति । **भा.** १०।४।१६।३२, * गोः प्रस्नावनं दोहधर्मः । ३।६।८।२८. * गोः बालः वत्सः । **वा.** ३।४।४।१३ पृ. ९२०.

* **गवामयुतस्य** अश्वसहस्रस्य च पौण्डरीके प्रत्यहं विभज्य नयनम् । **भा.** १०।६।१८।६९–७२, * **गवामयुतस्य** अश्वसहस्रस्य च पौण्डरीके सकृत् दानम् । १०।६।१७।६२–६८, * **गवामेतानि** नामानि ‘ इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतिः अदिति सरस्वति महि विश्रुति , एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं कृतात् ’ इति । १०।३।११।४९, * **गवां** तिसृभ्यः उत्तरासां यावत्स्वं दोहः सांनाय्ये । ११।१।९।४७–५३, * **गवां** प्रस्थापनं दोहधर्मः । ३।६।८।२८, * **गवां** प्रस्थापनं प्रस्नावनं च सांनाय्यधर्मः । ३।१।४।७, * **गवां** सार आज्यम् । ८।१।१८।३५, * **गोषु** एव ज्योतिष्टोमदक्षिणागतासु द्वादशशतसंख्यानिवेशः ( ११२ ) । १०।३।११।३९–४९.

* **‘ गोअश्वाः’** अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः । अत्र गवाश्वयोः प्रशंसार्थमन्येषां पशूनामपि अपशुत्वमुक्तम् । **वि.** १।४।१६.

**‘ गोक्षीरं श्वदृतौ घृतम् ’** इति न्यायः । स्वयं पवित्रमपि गोक्षीरं श्वचर्मपात्रे धृतं चेत् उपाधितस्त्याज्यं

भवति, तथा सदुपदेशोऽपि खलजनकृतः त्याज्य एवेति। संग्रहः.

§ **गोक्षीरन्यायः**। गोरपि क्षीरं श्वदृतौ स्थितं दुष्टमेव यथा, तद्वत्। 'स्वरूपेण धर्मस्यापि अहिंसादेः गोक्षीरन्यायेन शाक्यसंबन्धे सति अधर्मत्वप्रसङ्गात्'। वि. १।३।४ वर्णकं २. * **गोगतद्वादशशतसंख्यामात्रस्य** नैमित्तिकैकादिगोदक्षिणया बाधः। भा. १०।३।१५।५९. * **गोगर्भदासादिस्वामिनि** अत्यन्ताविद्यमानमेव शेषत्वं यत्रापि, तत्रापि उपकारकत्वसंभवात् उपचरितमिति द्रष्टव्यम्। वा. ३।४।४।१२ पृ. ९०५.

§ **गोगवयन्यायः**। 'यथा गोगवयभ्रान्तिः कस्य नाम न जायते। दोहने ज्ञायते सम्यग् गौरेषा गवयो नहि॥' इति। **साहस्री.** ६५२.

* **गोत्रम्**। दक्षिणारूप औदुम्बरः सोमचमसः 'स प्रियाय सगोत्राय ब्रह्मणे देयः' इति ऋतपेये (सोमयागे) श्रूयते। भा. १०।३।१९।६८. * **गोत्रचिह्नं** शिखाकर्म। तत्रापि आचारनियमस्य अदृष्टार्थत्वात् नैव तावन्मात्रमेव प्रयोजनम्। शक्यं हि उपायान्तरेणापि गोत्रं स्मर्तुम्। वा. १।३।१।२ पृ. १६६. * गोत्रचिह्नं शिखाकर्म। दर्शनं च 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव' इति। (अत्र विशिखाः शिखारहिताः कुमारा इव इति बाणानामुपमानं कृतम्, तेन केषां चित् शिखाराहित्यमपि लक्ष्यते इति लिङ्गदर्शनम्)। भा. १।३।१।२ पृ. १६६, * **गोत्रव्यवस्थया** शिखाकल्पव्यवस्थायां दर्शनं स्पष्टम्। १।३।७।१७.

* **गोत्वमनेकासु व्यक्तिषु प्रतीयमानम्** अनेकप्रदेशमिव प्रतीयते। अथ अनेकासु व्यक्तिषु गोत्वं न प्रतीयेत, कथं तर्हि सर्वेषु पिण्डेषु गौर्गौः इति बुद्धिः। विशेषसमवायपरिकल्पननिबन्धना हि विशिष्टबुद्धिः। ऋजु. पृ. १९७. * गोत्वमश्वादिभ्यो व्यतिरिच्यते शाबलेयादीनन्वेति। तच्च गोत्वं प्रत्यक्षेणोपलभ्यते। टुप्. १०।८।८।१६ पृ. २०७२. * '**गोत्वस्य** नहि संबन्धः शुक्लत्वारुणिमादिभिः।' वा. १।३।९।३१ पृ. २०१. * **गोत्वादेः** पदार्थस्य गौः इत्याद्यभिन्नं नामधेयम् अभेदापादकम्। तेन तस्य आश्रयभेदेऽपि न भेदः। सु. पृ. ३४४. * **गोत्वादिसामान्यवाचि**गवादिशब्दश्रवणे व्यक्तिविशेषो लक्षणया लभ्यते। **सोम.** ६।१।१ पृ. ४४७. * **गोत्ववच्च समन्वयः**। यथा "गौः इति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव समन्वयो नान्यत्र इति तद्वचन एव गोशब्दो विज्ञायते, एवं 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' 'गायत्रमेतदहर्भवति'" इत्यत्र गायत्रीशब्दः ऋग्वचन एव विज्ञातुं न्याय्यः, न तु चतुर्विंशतिसंख्यावचनः। भा. ८।३।६।१७, * **गोदक्षिणायाः** द्वादशोत्तरशतसंख्यायाः विभज्य दानं ज्योतिष्टोमे। १०।३।१२।५०–५२, * **गोदानं** दक्षिणाविधाने विहितम्। २।१।६।३१. * **गोदानगोयागौ**। 'मन्त्राणामपि यत् कार्यं विहितार्थप्रकाशनम्। तेन गोदानगोयागौ नाम्यासाद्भेदमागतौ॥' 'देवांश्च याभिर्यजते ददाति च' इत्येवमादिभिः पुनःश्रुतेरपि न कर्मान्तरं कल्पयन्ति। वा. ३।१।१।१ पृ. ६४९.

* **गोदोहनम्** आश्रयक्रियाऽपेक्षं प्रसङ्गात् क्रत्वर्थेन अप्प्रणयनेन निराकाङ्क्षत्वात् न क्रियाऽन्तरमाक्षिपति। क्रतुगतमेव अप्प्रणयनं गोदोहनस्याश्रयः, न प्रणयनमात्रम्। बहिःप्रणयने गोदोहनस्य वैगुण्यम्। **सोम.** ६।१।७. * गोदोहनं काम्यं प्रकृतौ नित्यस्य चमसस्य बाधकम्। **वि.** ३।६।३, * गोदोहनं दर्शपूर्णमासयोः अपां प्रणयने विधीयमानं पुरुषार्थम् 'चमसेनापः प्रणयेद् गोदोहनेन पशुकामस्य'। ४।१।२ वर्णकं ३. * गोदोहनं दर्शपूर्णमासाङ्गप्रणयनेन नैराकाङ्क्ष्यात् बहिःप्रणयनेन विगुणं भवति। वा. ६।१।७।३७. * गोदोहनं पशुप्रयुक्तमिति स्वतन्त्रकामनायामेव तत् कर्तव्यम्। भाट्ट. ४।१।२ वर्णकं ३. * गोदोहनं पुरुषार्थम्। तत् आश्रयमपेक्षमाणं प्रणयनं प्रसक्तं गृह्णाति। टुप्. ८।१।३।५. * गोदोहनं विकृतिषु न प्रवर्तते, 'गोदोहनेन (प्रणयेत्) पशुकामस्य' इति। भा. ८।१।१४।२३–२५. * गोदोहनं सर्वकामवाक्यप्राप्तं पशुप्रयोजकप्रणयनजनकत्वसंबन्धेनैव प्रकरणानुरोधेन पशूद्देशेन विधीयते इति प्राप्ते, साक्षादेवोद्देश्यत्वं पशूनाम्, पशुप्रयुक्तमेव च गोदोहनम् इति सिद्धान्तः। भाट्ट. ४।१।२ वर्णकं ३.



* '**गोदोहनेन** पशुकामस्य' इति गोदोहनं नाम यस्मिन् पात्रे अग्निहोत्री गौः अग्निहोत्रपयो वा सांनाय्यं वा दुह्यते, तत् पात्रम्। के. * 'गोदोहनेन पशुकामस्य प्रणयेत्।' अयं द्रव्यस्य अपूर्वविधिः। बाल. पृ. २२.

§ **गोदोहनाधिकरणम्**। काम्यं नित्यस्य बाधकम्। गोदोहनादीनां प्रकृतिगामिता। दर्शपूर्णमासयोरेव वैश्यस्य सामिधेनीसाप्तदश्यम्। सामिधेनीसाप्तदश्यादेर्नैमित्तिकस्य प्रकृत्यर्थता॥

**नैमित्तिकं तु प्रकृतौ, तद्विकारः संयोगविशेषात्।** ३।६।३।१०॥

**भाष्यम्**— दर्शपूर्णमासयोराम्नातम् 'गोदोहनेन पशुकामस्य प्रणयेत्' इति। तथा अग्नीषोमीये पशौ श्रूयते यूपं प्रकृत्य 'बैल्वो ब्रह्मवर्चसकामेन कर्तव्यः' इति। एवंजातीयकेषु संदेहः किं प्रकृतौ निवेशः, विकृतौ वेति। किं प्राप्तम्? विकृताविति। प्रकृतिरन्येन पात्रेण यूपेन च निराकाङ्क्षा। एवं प्राप्ते, ब्रूमः। प्रकृतौ नैमित्तिकं निविशते, निमित्तसंयोगेन विधानात्। खादिरपालाशरौहितकाः अविशेषेणोक्ताः चमसश्च। गोदोहनं बैल्वश्च विशेषविहितौ। विशेषविधिना च अविशेषविधिर्बाध्यते। प्रकरणं सामान्यम्, निमित्तसंयोगो विशेषः। सामान्येन यत् प्राप्नोति तत् परोक्षं लक्षणया, यत्तु विशेषेण तत् प्रत्यक्षं श्रुत्या। श्रुतिश्च लक्षणाया बलीयसी, प्रत्यक्षं च परोक्षात्। तस्मात् प्रकृतावेव स्यात्।

**वा**— '**यद् वैश्यादिनिमित्तेन साप्तदश्यं विधीयते। तत्तु स्यात् प्रकृतावेव पाञ्चदश्यस्य बाधकम्॥ तस्य प्रकरणं तुल्यं प्रकृतौ विनियोजकम्। निमित्तेन तु संबन्धाश्रित्यात् तद् बलवत्तरम्॥ पाञ्चदश्यमबाधित्वा ह्यात्मानं न लभेत तत्। रुद्धेन तेन सर्वेषु प्रयोगेषु श्रुतं हि तत्॥ साप्तदश्यविधानं तु प्रयोगे वैश्यकर्तृके। अबाधेनापि तस्यात्मा पाञ्चदश्येन लभ्यते॥ प्रयोगाः सन्ति तस्यान्ये विप्रराजन्यकर्तृकाः। साप्तदश्यमबाधित्वा येष्वात्मा तेन लभ्यते॥ अतश्च शक्तिवैषम्ये विकल्पो न मतस्तयोः। समुच्चयोऽपि नैकार्थ्यात् सामिधेनीषु युज्यते॥ नैकत्रैकेन संख्याताः संख्यायन्ते परेण ताः। नित्यस्य बाधशक्तिर्हि नार्थापत्त्याऽवकल्पते॥ पौर्वापर्ये यथा पूर्वनिविष्टस्यैव बाधनम्। काम्यनैमित्तिकाभ्यां हि तथा नित्यस्य बाधनम्॥ असंजातविरोधं हि नित्यं सर्वं विधीयते। नैमित्तिकं तु तद्व्याप्तविषयत्वाद् विरुध्यते॥ तेनैकविषयत्वेन विरोधस्यैकबाधनम्। विरोधायौगपद्यात्तु न विकल्पप्रसञ्जनम्॥ किञ्च प्रयोगसामान्ये नित्यं सर्वं विधीयते। नैमित्तिकं विशेषे तु तस्मात्तद् बलवत्तरम्॥ नित्यमङ्गं च दूरस्थप्रधानापूर्वचोदितम्। क्रियते तत् प्रमाणं च परं प्रकरणं मतम्॥ काम्यनैमित्तिकानां तु वाक्योपात्तं प्रयोजनम्। अतः शीघ्रं प्रयुक्तत्वान्नित्याच्ते बलवत्तराः॥ आसन्नपुरुषार्थत्वात् विप्रकृष्टफलात्तथा। बलवच्छीघ्रकारित्वात् काम्यं नैमित्तिकादपि॥ श्रुत्यैव पुरुषार्थे हि शीघ्रं कर्ता प्रवर्तते। नैमित्तिके हि दूरस्थे चिरेणासौ प्रवर्तते॥** नैमित्तिके श्रुते (नैमित्तिकं तु इति प्रकृतसूत्रे) यच्च काम्यमेव विचारितम् (भाष्ये)। तन्नित्यं प्रति तुल्यत्वादविरोधात् परस्परम्॥ पूर्वाधिकरणेनैव पूर्वपक्षोऽत्र सूत्रितः। (तमेवाह–) नित्यस्यास्ति विशेषो हि काम्यात् प्रकरणे यतः। चमसः खादिरत्वं च क्रत्वर्थं हि विधीयते॥ बैल्वगोदोहनादीनां काम्यत्वात् पुरुषार्थता। बाध्येत फललोभेन नित्यं काम्येन तत्र चेत्॥ पश्यतो मधु दुर्बुद्धेर्विनिपातस्ततो भवेत्॥ क्रत्वर्थाङ्गप्रहाणे हि नश्येत् तस्य क्रतोः फलम्। गुणाच्च न फलं सिध्येत् विगुणं क्रतुमाश्रितात्॥ आश्रयस्तादृशो हीष्टो यादृशः प्रकृतः क्रतुः॥ खादिरत्वादिभिर्नित्यैर्व्याप्तश्चासौ प्रतीयते। ततश्चानवरुद्धत्वात् काम्यस्य विकृतिर्गतिः। अस्ति स्वार्थे विशेषो हि क्रतोः प्रकरणं प्रति। तेन गृह्णाति हि स्वार्थं न तु काम्यं कथंचन॥ इतिकर्तव्यताऽर्थित्वात् संयुक्तं हि न गृह्यते। (असंयुक्तं प्रकरणादितिकर्तव्यतार्थित्वात् ३।३।४।११) तेन प्रकरणप्राप्तं संयुक्ताद् बलवत्तरम्॥ नहि प्रकरणं यस्य विनियोगक्षमं मतम्। क्रत्वर्थे-

आश्रयोऽप्यस्य स्वार्थरुद्धो न लभ्यते ॥ पूर्वाधिकरणन्यायस्तस्मान्नैमित्तिकेष्वपि ॥'

इति प्राप्ते, उच्यते । 'नैमित्तिकं तु प्रकृतौ वर्तते नित्यबाधया । हेतवोऽत्र त्रयः पूर्वा व्याख्याता एव संमताः ॥ असंयोगादबाधेन संयोगोऽस्य विशिष्यते । पुनः कर्तृविशिष्टस्य प्रयोगस्य परिग्रहात् ॥ साक्षाच्च पुरुषार्थत्वादनन्याश्रयगामिनः । एवं सिद्धे बलीयस्त्वे निवेशः प्रकृतौ स्थितः ॥'

'नन्वतुल्यार्थयोर्बाधः क्रत्वर्थपुरुषार्थयोः । न युक्तो, न विरोधोऽस्ति भिन्नगोचरयोस्तयोः ॥ अतश्च पुरुषार्थत्वात् पृथक् प्रणयनक्रिया । प्राप्नोति चमसेनैव क्रत्वपूर्वस्य साधनात् ॥ न साधयति पश्वादीन् क्रत्वर्थश्चमसो यथा । गोदोहनं तथाऽन्यार्थं न क्रत्वर्थस्य साधनम् ॥ न चोभयार्थता तस्य वाक्यभेदप्रसञ्जनात् ॥ विधिर्नास्त्येकवाक्यत्वे फलप्रणयने प्रति । अन्या हि वचनव्यक्तिः फलोद्देशेन तद्विधौ । अन्या प्रणयनोद्देशे, तस्मान्न द्वयसंभवः ॥ आसन्नासंभवे चेष्टा ( च इष्टा ) विप्रकृष्टेन संगतिः । युगपत् तेन न स्यातां संभवासंभवावुभौ ॥ अतः कमिपदाक्षेपान्नास्य प्रणयने विधिः । अविधानादशेषत्वान्न शेषान्तरबाधनम् ॥ ( गोदोहनेन पशुकामस्य इत्येवं कमिपदसमभिव्याहारात् फलपदवैयर्थ्यपरिहारार्थं पशूद्देशेनैव गोदोहनस्य विधेयत्वावगतेः नास्य पुनः प्रणयनोद्देशेन विधिः संभवति इत्यर्थः ) । अबाधाच्चमसोऽवश्यं कर्तव्यश्च क्रतुं प्रति । न चान्यस्यावकाशोऽस्ति क्रत्वर्थेऽन्येन साधिते ॥ तेन प्रणयनाभ्यासः कार्यः काम्यगुणं प्रति ॥ यथेन्द्रवायुदेवत्ये ग्रहे मित्राद्यसंभवात् । भिन्नं मित्रादिदेवत्यं ग्रहाभ्यासान्तरं विधेः ॥ एवं प्रणयनाभ्यासः पुरुषार्थवशाद्भवेत् । द्वयोरेवमवैगुण्यं क्रतोश्च स्यात् फलस्य च ॥ नहि स्वसाधनत्यागादन्यसाधनसाधितैः । कर्मभिः साध्यते स्वार्थश्चोदनाभिरलक्षितः ॥ उच्यते यो गुणः काम्यः क्रत्वर्थेन न गृह्यते । क्रत्वर्थं कर्म गृह्णाति स एव स्वार्थसिद्धये ॥ निर्व्यापारो गुणः कामं न साधयति कञ्चन । करणत्वं न तस्यास्ति निष्क्रियस्य फलं प्रति ॥ तेनावश्यं क्रिया काचित् ग्राह्या या सप्रमाणिका ॥ सा च प्रकरणेनास्मै दत्ता प्रणयनात्मिका । तस्यां च चमसः पूर्वप्राप्तोऽन्यो विद्यते गुणः ॥ तदबाधादशक्यश्च विधिर्गोदोहनादिनः ॥ गोदोहनाद्यबाधित्वा यथाऽसौ विहितस्तथा । तदबाधेन नैवेह तस्य कश्चिद् विधिः श्रुतः ॥ काम्येन गृह्यमाणा च क्रिया प्रणयनात्मिका । विप्रकृष्टफलं शक्ता स्वगुणं नोपजीवितुम् ॥ क्रियया वा गृहीतस्य गुणस्याकरणे गुणः । करणे तस्य दोषः स्यान्निषिद्धस्येव संगतौ ॥'

भिन्नप्रयोजनोऽपि हि काम्यो गुणः अवान्तरकार्यैकत्वात् विरोधिगुणान्तरज्ञानमिथ्यात्वावधारणसमर्थः । तथाहि 'प्रासङ्गिकीं क्रतोः सिद्धिं काम्यो हि कुरुते गुणः । गृह्णन्ति न च सिद्धार्थाः क्रतवः स्वगुणं तदा ॥ सर्वस्यैव हि कार्यार्थः स्वगुणग्रहणादरः । अन्यार्थगुणसिद्धे तु कार्ये, ऽस्य स्वगुणेन किम् ? ॥ हविःसंयवनार्थानामपां प्रणयनं हि यत् । तद् गृहीत्वा गुणः काम्यः प्रयुङ्क्ते न क्रियाऽन्तरम् ॥ ततश्चास्य प्रयोगस्य नैवाङ्गं चमसो मतः । तदग्रहे कुतोऽर्थेन वैगुण्येन क्रियेत सः ॥ तेन प्रणयनाभ्यासः क्रत्वर्थोऽपि न विद्यते । निष्फलत्वादतो बाधः प्रयोगात् कर्मणः सकृत् ॥'

तथा प्रणयनमपि निर्वर्त्यमानमेव गोदोहनस्य आश्रयत्वं प्रतिपद्यते नान्यथा, इति पशुकामप्रयोगे अन्यार्थेन सता गोदोहनेन निर्वर्तितत्वात् न चमसमुपसंगृह्णाति । कार्यार्थं हि सर्वत्र साधनग्रहणम्, न स्वरूपमात्रसंभावनाऽर्थम् । तत्र यथैव प्रसङ्गलक्षणे अन्यार्थैरेवाङ्गैः उपक्रियमाणाः पशुपुरोडाशादयः न स्वाङ्गानि उपसंगृह्णन्ति, न तद्धान्या किञ्चिद्वैगुण्यं भवति, तथाऽत्र चमसहान्या न इति द्रष्टव्यम् । उत्पत्तिप्राप्तमपि विध्यनुपसंगृहीतं नैवाङ्गं भवति । न चानङ्गमगृह्णतो दोषः । सुतरां वा न तद्ग्रहणे वैगुण्यप्रसङ्गः । न च सिद्धस्य प्रधानस्य प्रणयनस्य गुणानुरोधेन आवृत्तिः । न चैकान्तेन चमसः



प्रणयनस्य अङ्गम् । न चात्र चमसेन कृते ( प्रणयने ) गोदोहनेन पुनः करणमाशङ्क्यते । किं तर्हि ? गोदोहनेन कृते चमससंपादनार्था पृथक्करणशङ्का । कथं पुनः गोदोहनप्राप्तिर्बलीयसी, न चमसप्राप्तिरिति । तदुच्यते 'विशेषविहितं ह्येतत् प्राप्ते चानवकाशकम् । पुरुषार्थसमीपे च, चमसं तेन बाधते ॥' प्रयोगमात्रे हि चमसो, गोदोहनं विशेषे । पूर्वप्राप्तश्चासौ तदबाधेन लब्धात्मा । नैवं गोदोहनम् । सावकाशश्चासौ, नेतरत् । दूरे चासौ पुरुषार्थस्य, गोदोहनं तु संनिकृष्टार्थम् । पुरुषार्था च सर्वशास्त्रप्रवृत्तिः । यश्च तादर्थ्यातादर्थ्यकृतो विशेषः, नासौ तन्त्रमिति वक्ष्यति 'अर्थस्याविकृतत्वात्' ( १२।१।१।४ ) इति । मन्दो ह्येष विशेषः, क्रत्वर्थेनैव क्रत्वर्थो विशेषादिविहितेन बाधितव्यः, नान्यार्थेनेति ; तेन उभयोः संनिधिवशात् परस्परशक्तिविलोपात् नियमः । प्रणयनस्यापि अन्यत्र प्रयोगे सिद्धात्मकस्य स्वसाधनोपसंहारशक्तिलोपः । गोदोहनस्यापि प्रणयनान्तरकल्पनाशक्तिविघातः । पशुकामव्यतिरिक्तेष्वेव चमसस्य शास्त्रीयत्वम् । तस्मात् तद्विकारो गोदोहनम् । यथा तु विकृतौ चमस एव भविष्यति, तथा अष्टमे वक्ष्यति 'निवृत्तिर्वा कर्मभेदात्' इति । तेन प्रकृतावेव एतत् विकारकम् इति ।

शा— वैश्यनिमित्तकं सामिधेनीसाप्तदश्यं प्रकृतावेव नित्यं पाञ्चदश्यं विकृत्य निविशते । 'तुल्यप्रकरणत्वात् तन्नोत्कर्षं तावद्गच्छति । प्रकृतौ निविशेतातस्तत्रापि न विकल्प्यते ॥ पाञ्चदश्येन, किन्त्वस्य बाधकत्वेन वर्तते । नित्यं सामान्यतः पूर्वं सावकाशं विधीयते ॥ नैमित्तिकं विशेषेण पश्चान्निरवकाशकम् । नैमित्तिकमतो हेतुत्रयान्नित्यस्य बाधकम् ॥' ( एवं यथासूत्रं नैमित्तिकविषयतया अधिकरणमुपवर्ण्य न्यायसाम्यात् काम्येऽपि सिद्धान्तमतिदिशति– ) एतेन काम्यस्यापि गोदोहनादेर्गुणस्य नित्यचमसादेर्बाधकत्वं व्याख्यातम् । पूर्वपक्षस्तु नैमित्तिके अतिमन्दः इति कृत्वा भाष्यकारः सूत्रितमपि नैमित्तिकम् अतिक्रम्य तुल्यन्यायं काम्यमुदाजहार । 'मधुदृष्टिवदेवास्य गुणकामं प्रपश्यतः । क्रियाफलविनाशात्मा विनिपातः प्रसज्यते ॥' तस्मान्न प्रकृतौ निवेशः संभवति, इति विकृतिरेव गतिः । निराकरणहेतवश्च नैमित्तिकवत् त्रयोऽपि सामान्यविशेषभाव– पौर्वापर्य– सावकाशनिरवकाशन्यायाः अनुसंधेयाः । 'आसन्नपुरुषार्थत्वमपरं चापि कारणम् । येन काम्यं बलीयः स्यान्नित्यनैमित्तिकादपि ॥ गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा । गोदोहनं च न गुणः क्रतोः कामाय चोदनात् ॥ किन्तु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा । काम्यनैमित्तिके तस्मात् प्रकृतौ नित्यबाधके ॥'

सोम—सूत्रार्थस्तु—नैमित्तिकं तस्य नित्यस्य विकारो बाधकं सत् विकृतावेव निविशेत निमित्तसंयोगकृतविशेषात् इति ।

वि— 'साप्तदश्यं तु वैश्यस्य विकृतौ प्रकृतावुत ।, पूर्ववच्चे, न्न संकोचान्नित्ये नैमित्तिकोक्तितः ॥ गोदोहनेन प्रणयेत् कामीत्येतदुदाहरन् । भाष्यकारस्तदप्यस्तु न्यायस्यात्र समत्वतः ॥'

भाट्ट— यत्तु प्रकरणे एव 'सप्तदश वैश्यस्य' इति नैमित्तिकं ( सामिधेनीनां ) साप्तदश्यम्, तत् पाञ्चदश्यबाधकम् । अत्र हि षष्ठ्या निमित्तत्वमेव वैश्यस्य उच्यते । विजातीयत्वाच्च सामिधेन्युद्देशोऽपि न वाक्यभेदः । वैश्यस्वामिकसामिधेन्युद्देशेन वा साप्तदश्यविधिः । षष्ठ्या परस्परसंबन्धस्य प्राचां व्युत्पन्नत्वेन च विशिष्टोद्देशो युक्तः । वैश्योद्देशेनैव वा स्वस्वामिकसामिधेनीकत्वसंबन्धेन तद्विधिः, 'सामिधेनीरनुब्रूयात्' इत्यस्य तात्पर्यग्राहकत्वात् । अन्त्यपक्षद्वये च वैश्याभावे साप्तदश्याननुष्ठानात् निमित्तत्वं तस्यार्थिकम् ।

तथा काम्यमपि गोदोहनादि एकविंशत्याद्यनुवचनादि च नित्यस्य चमसपाञ्चदश्यादेः नैमित्तिकस्य च साप्तदश्यादेः बाधकम् । नित्यस्य सामान्यविहितत्वेन ब्राह्मणादिप्रयोगे सावकाशत्वेन च विशेषविहितात् निरवकाशाच्च काम्यनैमित्तिकात् दुर्बलत्वावगतेः । न च एवमपि नैमित्तिकस्य कामनारहितप्रयोगे सावकाशत्ववत् काम्यस्यापि ब्राह्मणादिकाम्यप्रयोगे सावकाशत्वाद्यविशेषेण नैमित्तिकापेक्षया बलवत्त्वानापत्तिः, साक्षात् पुरुषार्थसाधने पुरुषस्योन्मुख-

त्वेन काम्यस्य पुरःस्फूर्तिकतया बलवत्त्वोपपत्तेः । न च काम्यस्य क्रत्वनङ्गत्वात् तेन क्रत्वङ्गभूतनित्यादेर्बाधे विगुणक्रत्वाश्रितात् काम्यादपि फलानापत्तिः, काम्यस्य लाघवेन परप्रयुक्ताश्रयोपजीवितया स्वातन्त्र्येण अनुष्ठान-शङ्काऽनुपपत्तेः । आश्रयस्यापि परप्रयुक्तकाम्यगुणेनैव उपकारसिद्धौ नित्यनैमित्तिकचमसाद्यनुष्ठापकत्वाकल्पनात् काम्यप्रयोगे चमसादेः अङ्गत्वाभावेनैव वैगुण्याप्रसक्तेः । अतो दुर्बलस्य नित्यादेः प्रबलानास्कन्दितप्रयोगविषय-त्वकल्पनया प्राप्तबाधविधया बाधकत्वं काम्यनैमित्तिकादेः इति सिद्धम् ।

**मण्डन**— ' गोदोहनादेर्विकृतौ विधिर्नो । '

**शंकर**— ' नित्यं नैमित्तिकं जयेत् । ' ( नैमित्तिकं कर्ता, नित्यं कर्म ) ।

* गोदोहनाधिकरणम् । **भा.** ४।१।२।२ वर्णकं २ अत्र गोदोहनस्य पुरुषार्थता प्रतिपादिता । ३।६।३।१० अत्र गोदोहनस्य प्रकृतिगामिता इत्युक्तम् । * यथा गुणात् फलं भवति , यथाच काम्यो गुणो नित्यमर्थं विकरोति तत् इन्द्रियकामाधिकरणगोदोहनाधिकरणाभ्या-मुपसंहर्तव्यम् । **वा.** पृ. १०६७. * **गोदोहनाधिकरण-सिद्धः** नित्यत्वानित्यत्वविचारः । **सु.** पृ. ९४९.

* **गोदोहनादि** काम्यं कामाभावे नित्यप्रयोगे न ग्राह्यम् । **भाट्ट.** ४।३।२. * गोदोहनादि पुरुषार्थत्वात् चमसं विकृत्य निविशते । खदिरस्तु क्रत्वर्थत्वात् न कं चित् विकरोति । **वा.** ८।१।१४।२५. * **गोदोहना-दीनि** नैमित्तिकानि न नित्यार्थानि । भा. ४।३।२।४, * **गोदोहनादेः** नैमित्तिकात् नित्यार्थमन्यत् । तच्च वारणम् ( वारणाख्यवृक्षजन्यम् ) दर्शपूर्णमासयोः । ४।३।२।४. * गोदोहनादेः पुरुषार्थतैव , उत क्रत्वर्थताऽपि इति क्रत्वर्थपुरुषार्थचिन्ता चतुर्थे करिष्यते । **सु.** पृ. ८३६. * **गोदोहनादीनां** गुणकामानां विकृतौ नाति-देशः । **भा.** ८।१।१४।२३-२५. * गोदोहनादीनां प्रकृति-गामिता । गोदोहनाधिकरणे इदम् । **के.** ३।६।३।१०.

* **गोदोहनगुणः** नित्यं चमससाधनकमपां प्रणयनं विकृत्य निविशते । **वि.** ३।६।१६.

* **गोदोहनचमसन्यायः** । गोदोहनवर्णकं द्रष्टव्यम् । **भा.** ४।१।२।२ वर्णकं २.

**गोदोहनन्यायः** । भा. ४।१।२।२ वर्णकं २. काम्यसूक्तानां महाव्रते आज्यशस्त्रत्वेन यथोक्तानां गोदोहनन्यायेन पुरुषार्थत्वमेव न क्रत्वर्थत्वम् । **तैआसा.** १।१।१।१६. * यदि पुनर्निविदः ( सामिधे-नीनाम्- ) अङ्गं भवेयुः ततो **गोदोहनन्यायेन** आश्रयग्रहणादपि तावत् काम्येषु प्रकरणानुवृत्तिः स्यात् । **वा.** ३।१।११।२१ पृ. ७३४. * **गोदोहनपदं** यौगिक-त्वात् द्रव्यवाचि । **बाल.** पृ. २२.

**गोदोहनवर्णकम्** । टुप्- एवं वा । फलार्थवाद-त्वात् अनुदाहरणमनतिदृश्यत्वादि । ( इति भाष्योदाहरणं दूषयित्वा आह- ) गोदोहनादीनि वाक्यात् पुरुषार्थानि प्रत्यक्षेण क्रतूपकारकाणि दृश्यन्ते । तस्मात् ( फल्योः ) समुच्चयेन पूर्वः पक्षः । सिद्धान्तस्तु अवधारणया । पुरुषार्थान्येव तादर्थ्यलक्षणेन शेषत्वेन । अस्माच्च ( भाष्य- ) ग्रन्थादनुमीयते बादरिमते पूर्वः पक्षस्तत्रेति । ४।१।२।२ वर्णकं २.

**सोम**-- गावो यस्मिन् पात्रे दुह्यन्ते, तत् गोदोहनं नाम ।

**वि**— तृतीयं वर्णकमारचयति- ' गोदोहनं द्व्यर्थं स्यान्न वा, मानाद् द्व्यर्थता ।, अन्यथाऽपि (चमसेनापि) क्रतोः सिद्धेः केवलं पुरुषाय तत् ॥ '

**भाट्ट** — ( ४।१।२ वर्णकं ३ ) यद्वा । गोदोहना-दीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात् क्रत्वङ्ग-त्वम्, इतरथा प्रणयनस्य चमसलोपेन अङ्गाभावात् वैगुण्यापत्त्या विगुणप्रणयनाश्रितात् गुणादपि फलानुपपत्तेः । अतः उपजीव्यत्वात् दुर्बलमपि प्रकरणं विनियोजकम् । अथवा षष्ठी संबन्धमात्रवाचिनी हीषादिन्यायेन ( २।२।१३।२८ ) स्वर्गकामवाक्यप्राप्तपशुप्रयोजकप्रणयनजनकत्व-संबन्धेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधीयते , न तु साक्षात् । इति प्राप्ते, दुर्बलप्रकरणानुरोधेन परं-परासंबन्धाङ्गीकारे प्रमाणाभावात्, हीषादिवत् नियम-विधिलाघवाभावाच्च साक्षादेव उद्देश्यत्वं पशूनाम् । प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोप-



जीवनेन प्रणयनस्य तत्प्रयोगे अनङ्गचमसाग्राहितया अना-शङ्क्यत्वात् पुरुषार्थत्वमेव तस्य इति पशुप्रयुक्तमेव गोदोहनम् , इति स्वतन्त्रपशुकामनायामेव तत् कर्तव्यम् ।

**मण्डन**-- ' गोदोहनं क्रतोर्नाङ्गम् । '

**शंकर**— ' काम्यो गुणो न क्रत्वर्थः । ' ४.

* **गोद्रव्येण** धेनु-वत्स-ऋषभ-शब्दोपदिष्टेन प्राकृतस्य अजद्रव्यस्य बाधो द्यावापृथिव्यादौ । **भा.** १०।२।२९।६९.

* ' **गोधाकालकादार्वाघाटास्ते वनस्पतीनाम्** ' इयं संप्रदाने षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । **बाल.** पृ. ४५.

**गोन्यायः** । गवां न्यायः स्वाधीनतया शिक्षि-तत्वम् । यथा धेनवः शिक्षिताः प्रतिदिनमरण्ये गत्वा यत्र क्वापि पलायनचापल्यं परित्यज्य काले स्वगृहमेव आयान्ति अनायासेन च दुह्यन्ते । यथा वा बलीवर्दाः शिक्षिताः सन्तः रथादीन् स्वामिन इच्छाऽनुसारेण वहन्ति । तथा सेनायाः स्ववशत्वेन कार्यकारित्वम् । **तैसंसा.** १।७।१३. * गोन्यायः । गुरुः शिष्ये शक्तिपातं करोति, तत्र चतुर्थस्य तत्प्रकारस्य दृष्टान्तो गौः । **श्रीकर.** ३।२।५ ब्र. सू.

**गोपगृहिणीन्यायः** । अयं पद्येनोपनिबद्धः । तथाहि- ' हत्वा नृपं पतिमवाप्य भुजङ्गदष्टं देशान्तरे विधिवशाद्गणिकाऽस्मि जाता । पुत्रं स्वकं समधिगम्य चितां प्रविष्टा शोचामि गोपगृहिणी कथमद्य तक्रम् ॥ ' अस्य आख्यायिकेत्थम्- का चिन्नृपपत्नी व्यभिचारिणी दुष्टा निजपतिं नृपं विषेण हत्वा स्वेष्टोपपतिं प्रति गता । तं तत्र दैवात् सर्पेण दष्टं मृतं प्राप्य निराशा सती देशा-न्तरे गत्वा वेश्या जाता । तत्र दैवाद्वार्धक्यवस्थायां पूर्वपति-नृपोत्पन्ननिजसुतं वेश्याधर्मेण संगता । तत्र वार्तालापन-द्वारा तद्द्वयोर्मिथो मातापुत्रत्वप्रत्यभिज्ञा जाता । ततस्त-त्पापप्रायश्चित्तार्थं मातापुत्रौ नदीतीरे चितां प्रविष्टौ । पुत्र-स्त्वग्निना दग्धो मृतः, इयं दुष्टा तु चितासकाशादुत्प्लुत्य नद्यां पतिता । ततः केन चित् गोपेन निजगृहिणी कृता । तत्र सा कदा चित् तक्रविक्रयार्थं मन्थनीं शिरसि धृत्वा गता । तत्र रथ्यायां दैवात् तच्छिरसो मन्थनी पतिता भग्ना च । तक्रं च नष्टं दृष्ट्वा स्वपूर्ववृत्तान्तं स्मृत्वा प्रोवाच-हत्वा नृपमित्यादि । अयं न्यायः अनिष्ट-परंपराप्राप्तिविषये प्रवर्तते इति । **साहस्री.** ९७७. * **गोपथ-राजमार्ग-जलशयादि-सहिता** महाभूमिः न राज्ञः स्वम् । किन्तु सर्वेषामेव प्राणिनां साधारणं स्वम् । **वि.** ६।७।२. * **गोपदस्य सैव** ( विशेषणभूता जातिः ) वाच्यत्वेनेष्टा । **वा.** ३।१।६।१२ पृ. ६७४.

**गोबलीवर्दन्यायः** । गामानय बलीवर्दं चानय इत्यत्र गोपदेनैव बलीवर्दबोधसिद्धौ बलीवर्दपदं दुर्दम्यत्व-ज्ञापनपरत्वेन सफलमिति । यत्र विशेषणोपात्तस्य प्राशस्त्यमभिप्रेतं तत्र ब्राह्मणवसिष्ठन्यायप्रवृत्तिः, यत्र तन्नास्ति किन्तु प्रसिद्ध्यप्रसिद्धिनिबन्धनं भवेत् तत्र अयं प्रवर्तते । गोपदस्य हि स्त्रीव्यक्तौ प्रसिद्धिः, अप्रसिद्धिः पुंव्यक्तौ इति । **साहस्री.** २०५.

* परापरजातिविषयो **गोबलीवर्दन्यायः** । **कल्पतरुः** ३।१।२।११ ब्र. सू. * **गोबलीवर्दन्यायेन** मन्त्रोह-सामोहयोः पृथगुक्तिः तत्साधकनावमिकन्यायभेदात् । **बाल.** पृ. १२६. * ' एकचित्यां समारुह्य मृतयोरेकबर्हिषि । पित्रोः पिण्डान् पृथग् दद्यात् । ' ' तां मृताहनि संप्राप्ते पृथक् पिण्डे नियोजयेत् । प्रत्यब्दं च । ' अत्र ' मृता-हनि ' इत्यस्य मासिकपरत्वेन **गोबलीवर्दन्यायेन** च सर्वविषयत्वात् । **श्राद्धमयूखः.** पृ. ३०. * ' दृष्टः श्रुतो वाऽर्थः ' इति भाष्यम् । दृष्ट इति प्रमित इत्यर्थः । श्रुत इति पृथगुपादानात् प्रमितमात्रवचनोऽपि दृष्टशब्दः गोबलीवर्दन्यायेन श्रुतातिरिक्तप्रमितमात्रपरो ज्ञेयः । **वैद्यनाथी.** १।१।५।५ पृ. ३८. * न च ज्योतिष्टोमादेः ' सर्वेभ्यो ज्योतिष्टोमः ' इत्यादिना सर्वकामार्थत्वे स्वर्गार्थत्वबोधकविधिवैयर्थ्यम् , गोबलीवर्दन्यायेन भिन्न-विषयकत्वकल्पनया अभ्युदयशिरस्कत्वोपपत्तेः । **भाट्ट.** ४।३।८. * पुण्यं कर्माचरति , पापं कर्माचरति इति कर्मणि चरतेः प्रयोगात् ... ( कर्म-चरणयोः ) गोबलीवर्दन्यायेन उपपत्तेः । **श्रीकर.** ३।१।११ ब्र. सू. * प्रतिप्रसवविधेरपि च सामान्यविधिविशेषविधिभेदौ संभवतः, तथापि भेदं विनाऽपि सामान्यसंभवात् गोबलीवर्दन्यायेन पृथगुद्देशः । **बाल.** पृ. १५. * ' संहिते-

कपदे नित्या, नित्या धातूपसर्गयोः। नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ॥' अत्र समासस्य पृथक् ग्रहणं गोबलीवर्दन्यायेन, एकपदे इत्यनेनैव तत्संग्रहसिद्धेः। **शब्दकौस्तुभः** 'अइउण्'. * **गोभिलीयः** धर्मगृह्य-ग्रन्थः छन्दोगैरेव परिगृहीतः। वा. १।३।७।१५ पृ. २४४.

* **गोमान्** देवदत्तः। '**विशेषणाद् विना नेष्टो विशेष्यप्रत्ययोद्भवः। विशेषणं च गावोऽत्र न संबन्धः कथं चन ॥**' देवदत्तो हि गोमिरवच्छिन्नो विवक्षितः। ताश्च प्रातिपदिकेनोपात्ताः सन्त्येव। यत्तु नासंबद्धाभिरवच्छिद्यते इति, सत्यं नावच्छिद्यते। तेनैव ताभिः संबन्धाक्षेपः (संबन्धप्रतीतिः) अर्थात् लभ्यते। सर्वथा तावत् गोमच्छब्देन गोविशिष्टोऽयं इत्येतदभिहितं कथम् अनवस्थितास्ता गावः तं विशिषन्ति इति तासामेवैष व्यापारो न शब्दस्य। तथाहि, '**न विशिषन्ति गावोऽर्थं पृथिव्यामनवस्थिताः। तत्र किं शक्यते वक्तुं पृथिव्यप्यभिधीयते ॥**' नहि येन विना अर्थात्मलाभो नास्ति तत्तदभिधातव्यम्, किं तर्हि, यावता विना विशिष्टबुद्धिर्नोत्पद्यते। गोभिश्चाप्रतीताभिः तद्वति बुद्धिर्नोत्पद्यते, न संबन्धेनापि। किञ्च '**वक्तृव्यापारमात्रं च संबन्धप्रत्यवेक्षणम्। स हि गोभिरसंबद्धं न गोमन्तं विवक्षति ॥**'... वस्तुधर्मश्चैष यदसंबद्धा गावो न विशिषन्ति। स तासां व्यापारो न शब्दस्य। तेन यं यथाऽवस्थितं शक्नुवन्ति विशेष्टुम्, स तथाऽवस्थास्यते। संबन्धी चासौ विशेष्यत्वं प्रतिपद्यते इत्यर्थात् संबध्यते। '**विशेष्यत्वेन संपन्नं तद्विशेषणसंगतम्। गोविशिष्टोऽयमित्येवं गोमच्छब्दोऽभिधास्यति ॥**' तस्मादपि अनभिधेयः संबन्धः। वा. ३।१।६।१२ पृ. ६७५–७६.

⧗ **गोमयपायसन्यायः**। गोमयं पायसम्, गोविकारत्वात् संमतवत् इति अनुमानं यथा प्रत्यक्षेण बाध्यते। तद्वत्। **संग्रहः**.

⧗ **गोमयवृश्चिकन्यायः**। 'अचेतनत्वेन प्रसिद्धेभ्यो गोमयादिभ्यः (चेतनानां) वृश्चिकादीनां उत्पत्तिः दृश्यते, तेन उपादानोपादेययोः अत्यन्तसादृश्यं नापेक्ष्यते। तस्मात् जगद्–ब्रह्मणोः चेतनाचेतनत्वेन वैलक्षण्येऽपि उपादानोपादेयभावः स्यात्। इदं (२।१।५६ ब्र. सू.) शांकरभाष्ये विस्तरेणोक्तम्। **के.**

⧗ **गोमहिषन्यायः**। गोमहिषयोर्नैमित्तिको विरोधः। सहवासेन तु मित्रताऽपि भवति। तद्वदन्यत्र। **संग्रहः**.

⧗ **गोमहिषीन्यायः**। यथा गवादेर्महिष्यादेश्च न केन चिन्निमित्तेन अन्योऽन्यं मैत्री भवति, न केन चिच्च विरोध इति, तथा प्रकृतेऽपि। गोमहिषन्यायस्य शब्दभेदोऽयम्। **साहस्री.** ३९८.

* **गोमृगः** अश्वमेधे सवनीयः पशुः तृतीयः। तस्य वङ्क्रयः षड्विंशतिः। **भा.** ९।४।२।१७.

* **गोयागः** अनुबन्ध्यायां विहितः ज्योतिष्टोमे। **भा.** २।१।६।३१.

* **गोलक्षणान्यपि** 'कर्तरीकर्ण्यः कर्तव्याः' इत्येवमादीनि। (कर्तरी नाम शस्त्रं कर्णयोः यासाम्, ताः। कर्णस्य स्वाङ्गत्वात् बहुव्रीहौ ङ्यन्तत्वम्। यासां कर्णौ कर्तर्या बहिर्नेमि किञ्चित्किञ्चित् कर्तित्वा क्रकचाकारता उत्पादिता ता गावः।) **भा.** ४।१।३।३ पृ. ११९९.

* **गोवधादेः** (यागस्थस्य मधुपर्कगतस्य च इ०) युगान्तरधर्मत्वम्। **भाट्ट.** ६।७।१२.

* **गोशब्दस्य** गाव्यादयः अपभ्रंशाः इति एवंविदः तत्त्वविदः। **बृहती.** पृ. २३७. * **गोशब्दस्य** द्विलिङ्गत्वात्। **सु.** पृ. १४१४. * **गोशब्दस्य** प्रवृत्तिनिमित्तं सास्नादिमद्गमनम्। **वा.** ३।७।१७।३७. * **गोशब्दे** एकोऽर्थः प्रतीयते। तत्र यस्यानुगमः स साधुः, इतरे अपभ्रंशाः। यथा एको गोणीशब्दः आवपने साधुः, न सास्नादिमति। **टुप्.** १०।८।१।४.

⧗ **गोशब्दत्वायोगन्यायः**। '**विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि। व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते ॥ अनारब्धे च गोशब्दे गोशब्दत्वं कथं भवेत् ॥**' (स्फोटवादे श्लोवा. ६५–६६) इति वार्तिकोक्तन्यायेन ऋगादिजात्ययोगमुपपादयितुम् ...। **सु.** पृ. ११७०.

⧗ **गोशृङ्गग्राहिकान्यायः**। यथा केन चिदसाकं गौः केति पृष्टः कश्चित् तस्याः गोः शृङ्गमादाय हस्तेन इयं



गौर्भवताम् इति गां दर्शयति, तथा आत्मा क इति शिष्यपृष्टो गुरुः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, 'यतो वा इमानि भूतानि जायन्ते' इति च स्वरूपतटस्थलक्षणाभ्यां ब्रह्मोपदिशतीति भावः। **साहस्री.** ५१४.

* '**गोसवे उभे कुर्यात्**' इति बृहद्रथंतरसामद्वयसाध्यं पृष्ठस्तोत्रम्। तत्रापि प्रत्येकमुभयधर्मसमुच्चयो न कर्तव्यः, किन्तु स्तोत्रस्यैकत्वेऽपि साम्नोर्भेदात् धर्मव्यवस्थैव। **वि.** ९।२।१६. * गोसवे क्रतौ बृहद्रथंतराभ्यां पृष्ठनिर्वृत्तिः। तस्मात् नोपवती प्रतिपत् (उपास्मै) नाग्रियवती (प्रयुजो वाचो अग्रियः), किन्तु अन्यैव क्रतुनिमित्ता भवितुमर्हति। **भा.** १०।५।१६।६, * गोसवे बृहद्रथंतरयोः होतुः पृष्ठस्तोत्रे एव समुच्चित्य निवेशः। १०।६।८।२४–२६, * गोसवे बृहद्रथंतरोभयसामके प्रकृतिवत् उभयोरुभयधर्मव्यवस्था। ९।२।१७। ४९–५०.

* **गौग्गुलवेन** (तैलेन) अभ्यञ्जनं सुत्याकालं विरूक्षीकरणार्थम्। **भा.** १०।४।६।१२. * '**गौग्गुलवेन** प्रातःसवने अभ्यञ्जते' एकोनपञ्चाशद्रात्रे अञ्जनाभ्यञ्जनसंज्ञके सत्रे सुत्यायाम्, तेन शैत्योत्पत्तिः। **वि.** १०। ४।७, * **गौग्गुलस्नेह** –पौतुदारवस्नेह–सौगन्धिकस्नेहानामेकमेव कार्यं शैत्यम्, नावनीतस्नेहकार्यं तु न शैत्यम्। अतः तेषां नवनीतेन समुच्चयः अञ्जनाभ्यञ्जने नाम सत्रे। १०।४।७.

* **गौडमैथिलाः** साध्यवदन्यावृत्तित्वं व्याप्तिः इति वदन्तः केवलान्वयिव्यतिरेकिहेत्वोः पञ्चरूपोपपन्नत्वाभावेन अनुमापकत्वं नास्ति, एवं च केवलान्वयिव्यतिरेक्यमनुमानमेव नास्तीति वदन्ति। **मणि.** पृ. ३१.

* **गौडी सुरा** ब्राह्मणस्यैव निषिद्धा, न क्षत्रियवैश्ययोः। गौडी एव सीधुर्नाम। **वा.** १।३।३।७ पृ. २०९–२१०, **सु.** पृ. १९४.

* **गौणं** मुख्येन बाध्यते अप्राप्तबाधः। **वा.** ३।३।७। १४ पृ. ८६०.

* **गौणः**। अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गौणः शब्दः संबध्यते। यथा 'गौरनुबन्ध्यः' इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः। 'गौरयं वाहीकः' इति तु संवाहे (वहनकर्तरि) वाहीके गौणः शब्दः प्रवर्तते। **भा.** १०।२।१७।४७. * **गौणः** 'पराधीनप्रवृत्तिश्च गौणो नित्यं प्रतीयते'। नहि यथा केवलादग्निशब्दात् ज्वलनप्रत्ययः भवति, एवं माणवकप्रत्ययः, पदान्तराधीनत्वात्। यत्रापि पदान्तरं न श्रूयते, तत्रापि अर्थप्रकरणादिलभ्यं तदेव व्याप्रियते इति अव्यभिचारः। तदेव च सामान्यं नाम प्रवृत्तिहेतुः गुण इति। **वा.** ३।२।१।१ पृ. ७४६. * **गौणः** मुख्याभावे गृह्यते नान्यथा। **भा.** ६।४।५।२१, * **गौणः**। यस्तु खलु प्रतीतादर्थात् केन चित् संबन्धेन गम्यते, स पश्चाद् भावात् जघन्यः गुणसंबन्धाच्च गौणः। किंवा यस्मिन् सोपपदात् शब्दात् संप्रत्ययः स गौणः। योऽर्थः मनागिव प्रसिद्धः, स गौणः इति। किंवा अल्पशः प्रयुज्यमानः गौणः। ३।२।१।१ पृ. ७४६–४८. * गुणवृत्तिप्रयोजनः **गौणः** इत्येव लक्षणं न्याय्यं नान्यथा। **वा.** १।४।१२।२३ पृ. ३५९. * न च गौणोऽर्थो विधिशब्दादवगम्यते। **भा.** १०।२।१७।४७, * न च विद्यमाने मुख्ये गौणः उपादीयते। १०।३।१९। ७१. * **गौणम्** अर्थे वेदः (क्व चित्) आश्रयति 'यथा वै श्येनो निपत्यादत्ते' इति। **वाल.** पृ. ११४.

⧗ '**गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम्। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥**' (वा. १।३।४।९ पृ. २२३) इति **न्यायेन** वाक्यभेदत्रयाभ्युपगमवत् ('गौण्या लक्षणया वाऽपि वाक्यशेषेण वा पुनः' इति पूर्वार्धे पाठान्तरं परिमले ३।३।२९।५२ ब्र. सू.)। **सु.** ३।७ पृ. ८६३, * गौणं लाक्षणिकं वाऽपि० इत्यनेन न्यायेन (सवनीयपुरोडाशेषु) पुरोडाशशब्दस्यैव मुख्यस्यापि वेदक्लृप्तत्वात् गौणत्वमुचितम्। ३।७ पृ. ८५. * **गौणस्य अर्थस्य** प्रत्यायने सामर्थ्यात् बहवोऽभ्युपायाः प्राप्नुवन्ति। **भा.** ३।२।१।१ पृ. ७५०. * **गौणेऽर्थे** सिद्धे तन्निमित्तभेदः स्वार्थापरित्यागवृत्तित्वं च तत्सिद्धिसूत्रे व्याख्यातम्। **वा.** ३।२।१।१ पृ. ७४६,

* **गौणत्वम्**। कश्चित्पुनराह समारोपिततद्भावो गौणः इति सिंहादिसदृशक्रियागुणदर्शनेन देवदत्तादयः सामस्त्यपरिकल्पनया सारूप्यमापद्यन्ते। ततश्च स्वार्थ एव शब्दः

प्रयुज्यते। न चैतावता मुख्यप्रसङ्गोऽर्थस्य, अध्यारोपितत्वात्। यत्र तु स एवार्थो न समारोप्यते, तत्र मुख्य इत्यदोषः। इति तन्न। १।४।१२।२३ पृ. ३५७. * गौणत्वं (वृत्तिः) प्रसिद्धार्थत्यागेन अप्रसिद्ध-तद्गुणवृत्तित्वम्, समुदायवाचिन एकदेशवृत्तित्वम्, आरोपितार्थवृत्तित्वम् इति त्रयं न योग्यम्। किन्तु गुणयोगनिमित्तवृत्तित्वं गौणवृत्तेर्लक्षणम्। सु. पृ. ४९२–९३. * गौणत्वं वाक्यदोषः। के. * गौणत्वं वाक्यार्थस्य एकं पदं प्रति वाक्यावयवात्मकगुणवशात् प्रतीतेर्गौणता इति के चित्। सु. पृ. १०८१, * गौणत्वं वाच्यगुणयोगेन प्रतीयमानत्वम्। पृ. १०८२. * 'अर्थगम्यस्य गौणत्वं गुणागमनहेतुकम्।' परगुणानां परत्राभावात् अवश्यं गुणेभ्य आयातः इत्येवंलक्षणं गौणत्वम्। वा. ३।२।१।१ पृ. ७४६, * अश्वकर्णादिवत् समुदायवाच्यत्वे सति अवयवस्य गौणत्वम्। पृ. ७४७। शब्दद्वयसमुदायावयवत्वं गुणशब्दात् प्रतीतेर्गौणता इति के चित्। सु. पृ. १०८१. * गौणत्वदोषः न्यूनस्य अधिकार्थविषयत्वकल्पने यथा 'सृष्टीरुपदधाति' 'प्राणभृत उपदधाति'। अत्र सृष्टिपदेन सृष्टिशब्दवन्त एव मन्त्रा उच्यन्ते इति न्यूनस्य गौण्या सृष्टिशब्दशून्यानामपि मन्त्राणां ग्रहणेन अधिकार्थत्वे गौणत्वमेव दोषः। स च अगत्या स्वीक्रियते। बाल. पृ. ३. * गौणप्रत्ययाय यदा मुख्यमुपास्ते, तदैतदापतितं भवति 'मुख्ये एव विनियोगः' इति। भा. ३।२।१।१ पृ. ७५१.

**गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः।** (परिभाषा १५)। गुणादागतो गौणः। यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः। अप्रसिद्धश्च संज्ञाऽऽदिरपि तद्गुणारोपादेव बुध्यते। मुखमिव प्रधानत्वात् मुख्यः प्रथम इत्यर्थः। गौणे ह्यर्थे शब्दः प्रयुज्यमानः मुख्यार्थारोपेण प्रवर्तते। एवं च अप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्। तेन प्रियत्रयाणाम् इत्यादौ त्रयादेशो भवत्येव। तत्र त्रिशब्दार्थस्य इतरविशेषणत्वेऽपि उक्तरूपगौणत्वाभावात्। किञ्च अयं न्यायः न प्रातिपदिककार्ये, किन्तु उपात्तं विशिष्य अर्थोपस्थापकं विशिष्टरूपं यत्र, तादृशपदकार्ये एव। श्वशुरसदृशस्यापत्यं इत्यर्थके श्वाशुरिः इत्यादौ अत इञः सिद्धये उपात्तमित्यादि। 'अग्नीषोमौ माणवकौ' इत्यत्र प्रसिद्धदेवताद्वंद्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽपि अन्तरङ्गत्वात् ईत्वषत्वे भवत एव। सदृशलाक्षणिकाग्निसोमपदयोः द्वंद्वे तन्नामकौ इत्यर्थके च नेत्वषत्वे, आद्ये गौणलाक्षणिकत्वात्, अन्त्ये अप्रसिद्धत्वात्। अत एव 'अग्निसोमौ माणवकौ' इत्यत्र गौणमुख्यन्यायेन षत्ववारणपरम् 'अग्नेः स्तुत्स्तोमसोमाः' इति सूत्रस्थं भाष्यं संगच्छते। **परिभाषेन्दुः.** पृ. ८४–८८ (८४ पृ.) गोवृत्तिजाड्यादिगुणसत्ताप्रयोज्यारोपविषयीभूतगोत्वादिः अर्थः गौणः। तद्वृत्तिगुणानां सत्ता च वास्तविकी आरोपिता चेत्युभयविधा ग्राह्या। संज्ञाऽऽदौ आरोपिता गुणसत्ता। वाहीके च गोवृत्तिजाड्यादिगुणानां सत्ता वास्तविकी इति विवेकः। 'गौर्वाहीकः' इत्यस्य आरोपितगोत्ववान् वाहीकः इत्यर्थः। के चित्तु गोत्ववान् वाहीकः इत्येव बोधः, न तु आरोपितत्वं शाब्दविषयः इति वदन्ति। गौणलाक्षणिकत्वं सदृशलाक्षणिकत्वं सादृश्यमूलकारोपविषयत्वम् इत्यर्थः। पदकार्ये एवायं न्यायः प्रवर्तते, परं तु पदकार्ये एव यत्र वक्ष्यमाणप्रातिपदिककार्यम्, तत्र न प्रवर्तते। यत्र तु प्रातिपदिकसंस्कारवेलायां प्रत्येकम् अग्निसोमादिपदयोः सदृशतात्पर्यकत्वग्रहः, तत्र पूर्वमेव गौणार्थप्रतीत्या गौणमुख्यन्यायेन व्यावृत्तेः प्रातिपदिककार्येऽपि न्यायः प्रवर्तते एव। (भूतिः). * कः पुनर्मुख्यः को वा गौण इति। उच्यते। यः शब्दादेवावगम्यते स प्रथमोऽर्थो मुख्यः। मुखमिव भवति इति मुख्य इत्युच्यते। यस्तु खलु प्रतीतादर्थात् केन चित् संबन्धेन गम्यते, स पश्चाद्भावात् जघनमिव भवतीति जघन्यः। गुणसंबन्धाच्च गौण इति। भा. ३।३।१।१ पृ. ७४६. * कैयटश्च, 'तथासति गौण० इति न्यायेन इच्छासदृशो प्रयोगो न स्यात्' इत्याशङ्क्य 'गौणमुख्यन्यायश्च क्व चित् लक्ष्यानुरोधेनाप्यङ्गीक्रियते' इति समादधे। श्रीकर. १।१।१ ब्र. सू. * गौणमुख्ययोश्च मुख्ये संप्रत्ययः, विरोधे मुख्येन गौणो बाध्येत। भा. ३।३।७।१४ पृ. ८४४। (३।२।१।१ पृ. ७४१ इत्यत्र



६।५।९।३५ इत्यत्र च भाष्ये 'मुख्यगौणयोर्मुख्ये कार्यसंप्रत्ययः' इति पठितम्। के.).

* **गौणमुख्याधिकरणम्।** बर्हिर्न्यायः। भा. ३।२।१।१–२. * **गौणमुख्याधिकरणे** गौणमुख्यविषयमन्त्रविनियोगविचारसिद्ध्यर्थे गौणवृत्तिसद्भावमात्रं प्रतिपादयिष्यते। इह तु गुणयोगनिमित्तवृत्तित्वं लक्षणं प्रतिपाद्यते इति ततो भेदो बोध्यः। सोम. १।४।१३. * गौणमुख्याधिकरणे लिङ्गविनियोज्यानां मन्त्राणां मुख्याभिधानकार्यत्वं स्थितम्। सु. ३।७ पृ. ७३, * गौणमुख्याधिकरणे स्वाभिधेयलक्ष्यमाणगुणयोगनिमित्तलक्षणायाः गौण्या वृत्तेः साधयिष्यमाणत्वात्। पृ. ४९२. * **गौणमुख्यविभागः** श्रोतॄणामर्थविशेषावधारणे व्याप्रियते। वा. १।४।१२।२३ पृ. ३५८. * **गौणमुख्यसाधारणश्रुतिविनियोगोपयोगि**–अङ्गाङ्गित्वयोः अवच्छेदकविचारः 'तेषामर्थाधिकरणम्' (३।१।४) इत्यत्र भाष्ये द्रष्टव्यः। के. * **गौणी** अपरा पदवृत्तिः। सादृश्यरूपशक्यसंबन्धेन अशक्योपस्थितिः गौणी इति के चित्। तन्न वृत्तेः उपस्थितिहेतुत्वेन उपस्थितिरूपत्वानुपपत्तेः। यदा तु सिंहनिष्ठक्रौर्यसजातीयक्रौर्यवत्त्वेन देवदत्तप्रतीतिः, तदा गौणी इति वक्ष्यते। मणि. पृ. ७५. * गौणी लक्षणया बाध्यते लक्षणायां शक्यसंबन्धमात्रापेक्षणात्, गौण्यां शक्यसंबन्धिगुणापेक्षाऽऽधिक्यात्। बाल. पृ. १४१. * गौणी वृत्तिः। अथ केयं गौणी नाम? सादृश्यरूपशक्यसंबन्धो गौणी। तेन लक्षणाऽन्तर्गतिः इति नैयायिकाः। के चित्तु लक्ष्यमाणगुणयोगनिमित्तवृत्तित्वं गौणत्वम्। 'सिंहो देवदत्तः' इत्यत्र सिंहपदलक्षिता सिंहगुणक्रौर्यादिसंबन्धनिमित्ता अपरा अत्र वृत्तिः इत्याहुः। तन्न। सिंहनिष्ठक्रौर्यादीनां देवदत्ते असंभवात्। प्रसिद्धार्थत्यागेन अप्रसिद्धगुणवाचित्वं तत्त्वम् (गौणत्वम्)। सिंहपदेन प्रसिद्धार्थसिंहत्वत्यागेन देवदत्तनिष्ठक्रौर्यादि शक्त्या उच्यते। सामानाधिकरण्यं च मत्वर्थलक्षणया उपपद्यते इत्यपरे। तदपि न। प्रसिद्धार्थत्यागस्य तात्पर्यग्रहाधीनतया वेदे तदसंभवात्। एतेन समुदायवाचिनः एकदेशे वृत्तिर्गौणी, सिंहशब्दो न जातिमात्रवाचकः, किन्तु जातिव्यक्त्याकृतिक्रौर्यादिगुणसमुदायवाचकः, अन्यथा शक्तसिंहादिशब्दे देवदत्तपदसामानाधिकरण्यानुपपत्तेः। एवं च समुदायवृत्तिनः एकदेशार्थलक्षणया देवदत्तपदसामानाधिकरण्यमित्यपास्तम्। तात्पर्यग्रहं विना तज्ज्ञानस्य असंभवात्। आरोपितार्थवृत्तित्वं गौणत्वम्। 'सिंहो देवदत्तः' इति प्रयोक्ता सिंहत्वादि देवदत्ते आरोप्य वाक्यं प्रयुङ्क्ते। बोद्धा च तथैव प्रतिपद्यते। आरोपश्चाहार्यो बोध्यः। एवं च आलंकारिकाणाम् 'चन्द्रो मुखम्' इत्यादौ आरोपेण गौणबोधः। परं तु अयमारोपः आलंकारिकैः वासनाविशेषजन्यत्वोत्प्रेक्षितः आहार्य इत्युच्यते। अत एव शुक्तिरजते न गौणत्वम्, तदारोपस्य कारणदोषजन्यत्वेन आहार्यत्वाभावात् इत्यपरे। तन्न। आरोपकपुरुषाभावेन वेदे तदसंभवात्। किञ्च 'खपुष्पं भवत्सिद्धान्तः' इत्यादौ अननुभूतपूर्वतया आरोपासंभवात् गौणत्वानुपपत्तिः। अथ तत्र विशकलितप्रसिद्धभवदाकाशाधिकरणत्वरूपसंसर्गस्य आरोपेण आकाशाधिकरणकवृक्षादौ वर्तमानं पुष्पं खपुष्पपदार्थमङ्गीकृत्य तत्तादात्म्यारोपेण सिद्धान्ते गौणता इत्युच्यते, तदा आरोपितसंसर्गरूपार्थवृत्तितया खपुष्पे खपुष्पशब्दस्य गौणत्वापत्तिः। अतो गौणत्वनिरुक्तिरशक्या इति चेत्। न। स्वशक्यसंबन्धिगुणसजातीयगुणवद्–वृत्तित्वं गौणत्वम्। शक्यसंबन्धश्च एकार्थवृत्तित्वसमवेतत्वादिः। एवम् 'सिंहो माणवकः' इत्यादिवाक्यजन्ये सिंहत्वैकार्थसमवेतक्रौर्यादिसजातीयगुणवत्प्रकारके गुणप्रकारके वा माणवकादिविशेष्यके शाब्दे सिंहपदजन्यगुणवदुपस्थितेः गुणोपस्थितेर्वा हेतुत्वम्। तत्र च सिंहपदेन 'एकसंबन्धिज्ञानात् अपरसंबन्धिस्मरणम्' इति रीत्या सिंहगुणतत्सजातीयगुणानां लक्षणया उपस्थितिः। एवम् 'योषा वाव गौतमाग्निः' इत्यादौ अग्निशब्दो योषायां गौणः। एवम् 'खपुष्पं सिद्धान्तः' इत्यादौ खपुष्पसमासार्थस्य अलीकत्वस्य सिद्धान्ते संबन्धात् गौणता। 'खपुष्पं नास्ति' इत्यत्र तु नास्तिपदम् अनुवादः। अतः स्वशक्यसंबन्धिगुणसजातीयगुणवदुपस्थितिहेतुवृत्तिः गौणी इति सिद्धम्।

एवंविधगौणत्वाङ्गीकारे च शक्यार्थत्यागाभावेन न वेदाप्रामाण्यापत्तिलेशोऽपि। अत एव 'यजमानः प्रस्तरः'

इत्यादौ यजमानप्रस्तरयोः यागकारणत्वरूपगुणयोगेन यजमानपदं प्रस्तरे गौणम्। अतो भिन्ना लक्षणातो गौणी। उपपादयिष्यन्ते च तन्निमित्तानि तत्सिद्ध्यादीनि। इति दिक्। **मणि.** पृ. ७६–७८.

* **गौणी वृत्तिः**। उपपदाधीनवृत्तित्वादीनां गौणवृत्तिलक्षणानां वेदाप्रामाण्यापादकत्वात् इह अनिराकरणेऽपि गौणमुख्याधिकरणे निराकरिष्यमाणत्वात्। **सु.** पृ. ५०३, * **गौणी वृत्तिः**। गुणयोगनिमित्तायाः शब्दप्रवृत्तेः गौणत्वेन इष्टत्वात् वाच्यगुणानां प्रभूतानाम् अर्थान्तरे वृत्तिः योगः प्रयोजनं प्रवृत्तौ निमित्तं यस्य स गौणः इत्येवं व्याख्येयम्। पृ. ५०३. * **गौणी वृत्तिः** जहत्स्वार्था। **वा.** ३।२।१।१ पृ. ७५०, * **गौणी वृत्तिः** 'लक्ष्यमाणगुणैर्योगाद् वृत्तेरिष्टा तु गौणता'। १।४।१२।२३ पृ. ३५४. * **गौणी वृत्तिः** शब्दानां प्रसिद्धा। तत्र गुणवृत्तिहेतवः षड् भवन्ति। तथा चोक्तम् 'तत्सिद्धि-जाति-सारूप्य-प्रशंसा-लिङ्ग-भूमभिः। षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता॥' इति। **तत्सिद्धिः** 'यजमानः प्रस्तरः' इत्यादौ। प्रस्तरः दर्भमुष्टिविशेषः। तस्य कर्मणः सिद्धिः तत्सिद्धिः। प्रस्तरोऽपि जुहूधारणेन कर्म साधयति, यजमानस्तु कर्मसाधकः प्रसिद्धः। तथा च प्रस्तरयजमानयोः तत्सिद्धिरेको गुणः। तेन यजमानशब्दस्य प्रस्तरे गौणः प्रयोगः। **जातिः** जन्म 'आग्नेयो वै ब्राह्मणः' इत्यादौ। अग्निः प्रजापतिमुखादजायत ब्राह्मणोऽपि। इति अग्निब्राह्मणयोः एकस्मात् जन्म समानो गुणः। तेन आग्नेयपदस्य ब्राह्मणे सामानाधिकरण्येन प्रयोगः। **सारूप्यम्** 'आदित्यो यूपः' इत्यादौ। समानं रूपमनयोस्तौ सरूपौ, तयोर्भावः सारूप्यम्। आदित्यस्तेजस्वी, यूपोऽपि आज्येन हरिद्रया च अक्तत्वात् तेजस्वी। तथा च तेजस्वित्वेन सारूप्येण आदित्यशब्दः यूपे सामानाधिकरण्येन प्रयुक्तः। **प्रशंसा** 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः।' 'सर्वत्र विभाषा गोः' (पा० ६।१।१२२) इति प्रकृतिभावः। गोभ्यः अश्वेभ्यश्च अन्यान् पशून् अपशुत्वोक्त्या निन्दित्वा गवामश्वानां च पशुत्वोक्त्या प्रशंसा कृता। तथा च पशवः प्रशस्ताः गोअश्वाश्च प्रशस्ताः ततश्च पशूनां गवाश्वानां च प्राशस्त्यं समानो गुणः। तस्मात् प्रशंसा अत्र गौणप्रयोगहेतुः। **भूमा** 'सृष्टीरुपदधाति' इत्यत्र। भूमा बहुत्वं गुणः। सृष्टिशब्दबोध्याः सप्तदश मन्त्राः। तेषु प्रथम–चतुर्दश-षोडश-अन्तिमेषु चतुर्षु मन्त्रेषु सृजधातुर्नास्ति, इतरेषु त्रयोदशसु सृजधातुर्वर्तते। सृष्टिशब्देन च सृजधातुघटितमन्त्रैरुपधेयाश्चयनगता इष्टका उक्ताः। 'तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः।' (पा० ४।४।१२५)। मत्वन्तात् प्रथमासमर्थात् आसाम् इति षष्ठ्यर्थे यत्प्रत्ययः स्यात्, तत् प्रथमासमर्थम् उपधानकरणभूतो मन्त्रश्चेत्, आसाम् इति यन्निर्दिष्टम्, ता इष्टकाश्चेत्। मतोश्च लुक् स्यात्। इति पाणिनिसूत्रार्थः। तथा च सृष्टिशब्दात् परस्य मतुपो लुक्, यत्प्रत्ययस्य च छान्दसो लोपः। अत्र यद्यपि सर्वे मन्त्रा न सृष्टिपदघटिताः, तथापि सृजधातुघटितानां भूमा भवति। तेन सर्वेऽपि सप्तदशमन्त्राः सृष्टिशब्दबोध्या भवन्ति, सृजधातुयुक्तानां बहुत्वात्। तथा च बहुत्वमेवात्र गुणः असृष्टिमन्त्रेष्वपि सृष्टिशब्दस्य। **लिङ्गम्** 'प्राणभृत उपदधाति' इत्यादौ। पञ्चाशत् इष्टकाः तावद्भिर्मन्त्रैरुपधीयन्ते। तत्र प्राणं प्राणशब्दं बिभ्रति इति केचिन्मन्त्राः प्राणभृतः द्वितीयतृतीयदशमाः। अन्ये च सप्तचत्वारिंशन्मन्त्राः न तथा। तथापि पञ्चाशता मन्त्रैः उपधेया इष्टकाः प्राणभृच्छब्देन गृह्यन्ते। नात्र प्राणशब्दवतां मन्त्राणां बहुत्वम्। तथापि तेषु तल्लिङ्गं वर्तते एव। इति सर्वे मन्त्राः तदुपधेयाश्चेष्टकाः प्राणभृतः इत्युच्यन्ते। तथाच लिङ्गमेवात्र गुणः पञ्चाशत्सु प्राणभृच्छब्दस्य प्रयोगे। सर्वथाऽपि गौणवृत्तिनिमित्तभूताः षट् गुणा अत्रोक्ताः। **के.** १।४।२३ (२३–२८ वि.). * **गौणी वृत्तिः** स्वाभिधेयलक्ष्यमाणगुणयोगनिमित्तलक्षणा गौणमुख्याधिकरणे (३।२।१) साधयिष्यते। **सु.** पृ. ४९२. * **गौणी** श्रुत्या (अभिधया) बाध्यते। **बाल.** पृ. १४१, * **गौण्या** मत्वर्थलक्षणा बाध्यते। पृ. १४५। 'श्येनेनाभिचरन् यजेत' इत्यत्र श्येनपदेन श्येनवान् यागो ग्राह्यो मत्वर्थलक्षणया, किंवा निपत्यादानरूपगुणेन श्येनपदं यागे प्रवृत्तमिति श्येनपदमेव यागबोधकमिति विचारे गौण्या वृत्त्या मत्वर्थलक्षणाया बाधः स्वीकृतः। तथा च श्येनाख्येन यागेन शत्रुनाशं भावयेत् इति वाक्यार्थः। **के.**



‡ **'गौण्या लक्षणया वापि वाक्यशेषेण वा पुनः। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥'** ('गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा पुनः' इति पूर्वार्धपाठो वार्तिके पृ. २२३)। यदि राजसूयवाक्यशेषानुग्रहः स्यादार्यप्रसिद्धेः, तदा तद्वाक्यगतराजशब्दस्य वक्ष्यमाणरीत्या प्रवृत्तिनिमित्तगौरवं गौणवृत्त्यापत्तिं चाविगणय्य पालक एवार्थो ग्राह्यः स्यात् 'गौण्या लक्षणया०' इति न्यायात्। **परिमलः**. ३।३।२९।५२ ब्र. सू. * **गौण्याः** वृत्तेर्लक्षणं लक्ष्यमाणगुणयोगनिमित्तत्वम् इति गुणस्य अवाचकोऽपि स्वार्थमभिधाय लक्षणया गुणं ब्रवीति इति वदता सूचितम्। **सु.** पृ. ४९८. * **गौणीनां** वृत्तीनां मध्ये भूमलिङ्गसमवायाभ्यां या गौणी, तया इतरा गौणी बाध्यते। पूर्वस्यां मत्वर्थलक्षणायामिव शक्यस्यापि वाक्यार्थान्वयात्, उत्तरस्यां च तदभावात्। तथा भूमलिङ्गसमवाययोरपि पूर्वया उत्तरा बाध्यते, पूर्वस्यां बहूनां शक्यानां वाक्यार्थान्वयात् उत्तरस्यां तदभावात्। **बाल.** पृ. १४३. * **गौणवृत्तीनां** सर्वासां लक्षणाऽभिन्नगौणवृत्तीनामेव वा लक्षणं निमित्तं वा तत्सिद्धिपेटिकायाम् उच्यते। **वा.** १।४।१२।२३ पृ. ३५४. * **गौणवृत्तिनिमित्तानि** सहचरणस्थानादीनि अन्यान्यपि (तत्सिद्धिजात्यादिभ्यः) अक्षपादप्रभृतिभिः उक्तानि (वा. १।४।१२।३१ पृ. ३५४) 'सहचरण–स्थान–तादर्थ्य–वृत्त–मान–धारण–सामीप्य–योग–साधन–आधिपत्येभ्यो ब्राह्मण–मञ्च–कट–राज–सक्तु–चन्दन–गङ्गा–शाटक–अन्न–पुरुषेष्वतद्भावेऽपि तद्वदुपचारः' (न्यासू. २।२।६०) इति सूत्रेण। (१) यष्टीः प्रवेशय इति सहचरणात् ब्राह्मणेषु यष्टिशब्दस्य, (प्रयोगः इति सर्वत्र योज्यम्।) (२) मञ्चाः क्रोशन्ति इति स्थानात् पुरुषेषु मञ्चशब्दस्य, (३) कटं छिनत्ति इति तादर्थ्यद्वारेण वेण्वादिषु कटशब्दस्य, (४) यमोऽयं राजा इति वृत्तात् (आचारात्) राज्ञि यमशब्दस्य, (५) आढकमश्नाति इति मानात् (परिमाणात्) सक्तुषु आढकशब्दस्य, (६) तुलयाऽनुलिम्पति इति धारणात् चन्दने तुलाशब्दस्य, (७) गङ्गायां घोषः इति सामीप्यात् तीरे गङ्गाशब्दस्य, (८) नीलः शाटकः इति योगात् (संबन्धात्) शाटके नीलशब्दसामानाधिकरण्यस्य, (९) अन्नं बलम् इति साधनात् (साधनत्वात्) बले अन्नशब्दसामानाधिकरण्यस्य, (१०) अयं पुरुषः कुलम् इति आधिपत्यात् कुले पुरुषशब्दसामानाधिकरण्यस्य प्रयोगः इति वदद्भिः नैयायिकादिभिः अन्येषामपि गौणवृत्तिनिमित्तानामुक्तत्वात् न षट्कस्यापि सर्वगौणवृत्तिव्यापकता इत्याशङ्का। **सु.** पृ. ४९४. * **गौणवृत्तिनिमित्तभेदः** स्वार्थापरित्यागवृत्तित्वं च तत्सिद्धिसूत्रे व्याख्यातम्। **वा.** ३।२।१।१ पृ. ७४६. * **गौणवृत्तिलक्षणम्**। लक्ष्यमाणगुणयोगनिमित्तवृत्तित्वस्य गौणवृत्तिलक्षणस्यायोगात् प्रसिद्धवाच्यत्यागेन तद्गुणवाचित्वं गौणवृत्तिलक्षणम् अभ्युपगन्तव्यम्। सिंहशब्दस्य हि स्वार्थवाचित्वे देवदत्तसामानाधिकरण्यायोगात् तद्गुणप्रसञ्जकारित्ववाचित्वकल्पनायां देवदत्तेऽपि तत्सद्भावात् 'गौरो देवदत्तः' इतिवत् सामानाधिकरण्यमुपपादयितुं शक्यते। **सु.** पृ. ४९८. * गौणवृत्तिलक्षणं समुदायवाचिनः तदेकदेशवृत्तित्वम्, तच्च समुदायानित्यत्वेन शब्दार्थसंबन्धानित्यत्वापत्तेः अप्रामाण्यापादकत्वात् वेदे न संभवति। **सु.** पृ. ४९९. * **गौणवृत्तिविचारो** भूयान् तत्सिद्धिसूत्रे वार्तिके कृतः। **के.** * **गौतमीयगोभिलीये** धर्मगृह्यसूत्रे छन्दोगैरेव परिगृहीते। **वा.** १।३।७।१५ पृ. २४४. * **गौरत्वं** मनुष्यत्वैकार्थसमवायिशुक्लावान्तरजातिः। **सु.** पृ. १४१०, * **गौरवम्**। एकार्थवाच्यनेकपदकल्पकार्थापत्तिप्रसवशक्तिकल्पनलक्षणम्। अनेकविधिकल्पकार्थापत्तिप्रसवशक्तिकल्पकत्वं गौरवमिति वा। पृ. ८५२, * यागान्तरविधौ अप्राप्तानेकार्थविशिष्टयागविधानात् **गौरवम्**। पृ. ८६०. * न **गौरवस्य** किञ्चित् साधु प्रयोजनम्। न तु गौरवेण यत् कृतम्, तन्न कृतं भवति। गौरवस्य तु दोषोऽस्ति। यथा यः परिहारेण पथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। **भा.** १०।७।९।३०. * **गौरवातिशय**मुत्पादयितुं देवदत्तं राजादिसभायाम् आचार्योपाध्यायादिशब्दैर्व्यवहरन्ति। **के.**

* ग्रथधातोः एकस्यैव चैत्रनिष्ठव्यापारवाचित्वरूपधर्मपुरस्कारेण कर्मसाकाङ्क्षत्वात् सकर्मकत्वम्। पुष्पनिष्ठव्यापारवाचित्वेन कर्मानाकाङ्क्षत्वात् अकर्मकत्वम्। रहस्य. पृ. ५१.

* ग्रहः षोडशी ज्योतिष्टोमाङ्गम्। भा. १०।५।१। ३४–४१. * ग्रहः षोडशिग्रहः सस्तोत्रः ज्योतिष्टोमे उक्थ्योत्कर्षे उत्कृष्टव्यः उक्थ्योत्तरत्वरूपमुख्यकालानुग्रहाय। वि. ५।१।१८. * ग्रहाः। अंशुः अदाभ्यः अन्तर्यामः आग्रयणः आदित्यः आश्विनः उक्थ्यः उपांशुः ऐन्द्रः ऐन्द्रवायवः दधिग्रहः ध्रुवः मन्थी त्रयो मरुत्वतीयाः मैत्रावरुणः शुक्रः इति ज्योतिष्टोमे। अर्कः विषुवति। बार्हस्पत्यः बृहस्पतिसवे। महिमानौ अश्वमेधे। सुराग्रहाः सोमग्रहाश्च वाजपेये। इ० । के. * ग्रहा विधिकाण्डे उपांशुः प्रथमः, अन्तर्यामो द्वितीयः, ऐन्द्रवायवस्तृतीयः, मैत्रावरुणश्चतुर्थः (वि. १०।५।१७), शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, आश्विनश्च दशमः एते दशग्रहाः क्रतुशेषाः। वि. ५।३।६. * ग्रहाः सौत्रामण्यां आश्विन–सारस्वत–ऐन्द्राः श्रूयन्ते। भा. ३।५।३।१४, * ग्रहमुद्दिश्य संमार्गे विधीयमानेऽपि दशापवित्रतदेकत्वादीनां विवक्षा अभ्युपगम्यते। वा. ३।१।७।१४ पृ. ७१८. * 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति ग्रहग्रहणोत्तरं स्तोत्रम्। वि. १०।५।१२. * 'ग्रहं वा गृहीत्वा०' इति वचनं स्तोत्रशस्त्रोभयवत्सु स्तोत्रोपाकरणे विकल्पितकालमात्रविधानार्थम्। संकर्ष. ३।३।१६. * 'ग्रहं संमार्ष्टि' इति सर्वग्रहाणां संमार्गः अभिधीयते। भा. १०।४।२।३, * ग्रहं संमार्ष्टि। ग्रहः प्रातिपदिकार्थः, एकत्वं विभक्त्यर्थः। किमतो यद्येवम्? एतदतो भवति, प्रातिपदिकार्थगतं हि विभक्तिः स्वमर्थं श्रुत्यैव वदति। अथैवं सति किम्? न संमार्गेण संभन्त्स्यते इति। तेन हि संबध्यमानं वाक्येन संबध्येत। न च श्रुत्या अन्येन संबध्यमानं वाक्येन आच्छिद्य अन्येन संबन्धमर्हति। असंबध्यमानस्तु एकत्वेन संमार्गः यदि नैकत्वविशिष्टः क्रियते, न किञ्चित् विपन्नं भवति। ३।१।७।१४ पृ. ७२३, * ग्रहं संमार्ष्टि। नहि एतत् द्रव्यैकत्वसंबन्धस्य विधायकम्। कस्य तर्हि? द्रव्यसंमार्गसंबन्धस्य विधायकम्। एवं श्रुत्या स्वपदार्थो विहितो भवति, इतरथा वाक्येन परपदार्थो विधीयेत। श्रुत्यसंभवे च वाक्यं क्रमते, न संभवन्त्यां श्रुतौ। ३।१।७।१४ पृ. ७१४. * 'ग्रहं संमार्ष्टि' संमार्गो ग्रहं प्रति गुणः। ग्रहः प्रधानं च उद्देश्यश्च। वि. ३।१।७. * 'यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्'। यत्र जगत्यामुत्पन्नं साम, स जगत्सामा। स विषुवान्। भा. १०।५।१५।५८. * ग्रहाभ्याम् अश्वमेधोपदिष्टाभ्यां महिमभ्यां सौवर्णराजताभ्याम् उपदिष्टाभ्याम् अतिदिष्टैन्द्रवायवादिग्रहाणां समुच्चयः। भा. १०।४।२।३–५, * ग्रहैः सोमहोमो ज्योतिष्टोमे मुख्यः। पशुः इष्टिः इत्यादिकं तु अङ्गम्। के. * ग्रहस्य ऐन्द्रवायवस्य मैत्रावरुणाद्यपेक्षया प्रथममनुष्ठानं ज्योतिष्टोमे। कामसंयोगेऽन्यैवम्। भा. १०।५।१७-१८। ६२–६६, * ग्रहस्य मानसस्य द्वादशाहगतदशमाहाङ्गत्वम्। १०।६।१३।३४–४४, * ग्रहस्य शुक्रादेः ज्योतिष्टोमे काम्याग्रताविधौ प्राक् प्रतिकर्षः। १०।५।१९।६७–६९। प्राकृतं चैन्द्रवायवाग्रत्वात्। १०।५।२०।७०–७२, * ग्रहाणाम् आतिदेशिकानामैन्द्रवायवादीनां बृहस्पतिसवादिविकृतौ औपदेशिकैर्ग्रहैः समुच्चयः। समुच्चयबिन्दौ द्रष्टव्यम्। १०।४।२।३–५.

ॐ ग्रहाणां देवताऽन्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्। १०।४।२४।५० ॥

अग्निष्टुति एकाहे 'आग्नेया ग्रहा भवन्ति' इति श्रूयते। तत्र ग्रहाणां देवताऽन्यत्वे ज्योतिष्टोमदेवताभ्यः अन्यदेवताकत्वे सत्यपि स्तुतशस्त्रयोः कर्मत्वात् प्रधानकर्मत्वात् अविकारः विकारः ऊहः न भवति इति सिद्धान्तः। अथवा 'स्तुतशस्त्रयोस्तु संस्कारः' (२।१।५।१३–) इति स्तुतशस्त्राधिकरणस्य प्रयोजनमाह। स्तुतशस्त्रयोः संस्कारकर्मत्वे यथादेवतम् ऊहः फलम्, प्रधानकर्मत्वसिद्धान्ते तु अविकारः फलम्। अक्षरार्थ उक्त एव। के.

* ग्रहाणां द्विदेवत्यानां प्रतिग्रहणे होतुर्मन्त्राः, अध्वर्युः यैः प्रयच्छति, ते एव। के. * ग्रहाणां ध्रुवव्यतिरिक्तानाम् अधस्तात् मृत्तिकोपवेशनं कृत्वा तदुपरि उपोप्ते



सादनम्, ध्रुवस्य तु अनुपोप्ते सादनम्। वि. ३।६।९. * ग्रहाणां येषामनारभ्याधीतमेव वाक्यं यागाङ्गतयाऽपि विनियोजकम्, तेषां न प्रतिसवनमावृत्तिः, किन्तु अन्ते एवानुष्ठानम्। भाट्ट. ५।३।६. * ग्रहाणां सवनान्तरवर्तिनां प्रातःसवनिकैः सह समानविधित्वं षष्ठपादाधिकरणे (३।६।९।३०) वक्ष्यते। सु. पृ. ११५७, * ग्रहाणां (रविचन्द्रादीनाम्) सौस्थित्यदौःस्थित्यरूपः संनिवेशः ज्योतिःशास्त्रविषयः। पृ. १३०.

* ग्रहाग्रताः काम्याः 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' 'शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकामः' 'मन्थ्यग्रानभिचरन्'। वि. १०।५।१८, २२.

ॐ ग्रहाग्रतासु सादनापकर्षेऽपि प्रदानस्य नापकर्षः ॥

प्रदानं चापि सादनवत्। १०।५।२२।७५॥

भाष्यम्—इदमाम्नायते 'आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रानभिचरतः, मन्थ्यग्रानभिचर्यमाणस्य' इति। तत्र ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते इत्युक्तम्। अथेदानीमिदं संदिह्यते ग्रहणे प्रतिकृष्यमाणे प्रदानं प्रतिकृष्यते, नेति। किं प्राप्तम्? प्रतिकृष्यते इति। कुतः? संबन्धात्। संबद्धं हि ग्रहणं प्रदानं च। प्रदातुं हि तत् गृह्यते। तथाहि दृष्टार्थे तद्भवति। इतरथा यत् सादनादूर्ध्वं तददृष्टार्थं भवेत्। न चेदमदृष्टार्थम्। तस्मात् यतरस्मिन् काले प्रदानं क्रियते, तत्र ग्रहणं कर्तव्यम्। एवं चेत् यत्र ग्रहणम्, तत्र प्रदानमपि भवितुमर्हतीति संबन्धात्। सादनवत्। यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते, एवं प्रदानमपीति।

न वा, प्रधानत्वाच्छेषत्वात् सादनं तथा। ७६॥

भाष्यम्— न चैतदस्ति प्रदानं प्रतिकृष्यते इति। प्रधानं हि तत्। नहि तत् ग्रहणस्योपकारकम्। तस्मान्न प्रतिकृष्यते। यदुक्तं सादनवदिति, शेषो हि सादनम्। तस्मात् प्रतिकृष्यते।

सोम— सादनवत् प्रदानस्यापि प्रतिकर्षः इत्युत्थितेः संगतिः। सूत्रे प्रतिकृष्यते इति शेषः।

वि— 'प्रदानस्यापकर्षोऽस्ति न वा, सादनवद् भवेत्।, प्रदानस्य तु मुख्यत्वान्नापकर्षोऽत्र युज्यते ॥' न शेषानुसारेण शेषिणोऽपकर्षो युक्तः।

भाट्ट— प्रदाने तु नैव प्रतिकर्षः प्रमाणाभावात्। न ह्यत्रावदानादिप्रदानान्तस्य एकपदार्थत्ववत् ग्रहणादिप्रदानान्तस्यैकपदार्थत्वे प्रमाणमस्ति, अनेकपदार्थान्यवधानाच्च। अतस्तस्य स्वस्थाने एव करणम्।

मण्डन—'न तु प्रदानं प्रतिकर्षणीयम्।' २३.

शंकर—'प्रदानं तत्र नैव हि।' २४.

* ग्रहाग्रताविशेषः ज्योतिष्टोमस्यैव विधीयते। 'यदि रथंतरसामा' 'यदि बृहत् सामा' इतिशब्दाभ्यां च ज्योतिष्टोमः एवाभिधीयते। भा. २।३। ११–२.

* ग्रहाधिकरणे विभक्तिवाच्यस्यैकत्वस्याविवक्षोक्ता, न प्रातिपदिकार्थेलिङ्गस्य। वा. ६।१।३।६, * न चानूद्यमानस्य श्रुतमपि विशेषणं भवति इति ग्रहाधिकरणे साधितम्। ३।४।४।१३ पृ. ९४३. * न चोद्दिष्टस्य विशेषणं शक्यं विवक्षितुमिति ग्रहाधिकरणे स्थितम्। रत्न. ६।१।३. * 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' अवत्तेत्यनेन द्रव्यमवदानसंयुक्तम्, स्त्रीलिङ्गमेकसंख्यायुक्तं चोच्यते। तच्च अनूद्य पञ्चसंख्या विधीयते। तस्य चानूद्यमानस्य यदि लिङ्गसंख्यं विवक्ष्येत वपया च विशिष्येत, वाक्यभेदः स्यात् ग्रहाधिकरणन्यायेन। (३।१।७) तस्मादवदानप्रातिपदिकस्य पञ्चसंख्या विधीयते। टुप्. १०।७।२०।७३, * ग्रहाधिकरणवार्तिकोक्तेन 'अथापि शास्त्रतन्त्रत्वं तथापि तदनेकता' इति न्यायेन सकृदुच्चरितस्यापि प्रत्ययस्य एकपदोपात्तानेकार्थविधिशक्तत्वेऽपि एकेनैव व्यापारेण अनेकविध्यशक्तेर्व्यापारभेदकल्पना अवश्यम्भाविनी। ('अथापि शास्त्रतन्त्रत्वात् संमार्गः स्यात् प्रतिग्रहम्' इति वार्तिके पाठः पृ. ७०५)। सु. पृ. ४१९.

ॐ ग्रहार्थे च पूर्वमिष्टेस्तदर्थत्वात्। १२।१।१२। २४ ॥

'धारणार्थत्वात्' इति सूत्रे (१२।१।१०।१९) सोमे दीक्षणीयाऽऽदिषु अन्वाधानं न कर्तव्यं धारणार्थत्वात्

इत्युक्तम्, तत् आक्षिपति । पूर्वं प्राथमिकमन्वाधानं न केवलमग्निधारणार्थम्, किन्तु देवतापरिग्रहार्थमपि । प्रसङ्गेन च देवतापरिग्रहो न सिध्यति सौमिकदेवतानामैष्टिकदेवतानां च भेदात् । तस्मात् अन्वाधानं ग्रहार्थे देवतापरिग्रहार्थे पृथक् कर्तव्यमिति । अस्मिन्नाक्षेपे समाधानमाह । इष्टेः दीक्षणीयेष्टेः । तदर्थत्वात् देवतापरिग्रहार्थत्वात् ‘ आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, अग्निः प्रथमो देवतानाम्, विष्णुः परमो, यदाग्नावैष्णवमेकादशकपालं निर्वपति, देवता यज्ञ च तदुभयतः परिगृह्य दीक्षते ’ इति । सैव देवतापरिग्रहणार्था प्रसङ्गात् ऐष्टिकानां कार्यं साधयिष्यति । इति अन्वाधानं पृथङ् न कार्यमिति सिद्धान्तः ।

**शेषवदिति चेत् । २५ ॥**

दीक्षणीया यद्यपि देवतापरिग्रहार्था, तथापि प्रधानार्था सा । शेषास्तु अङ्गाङ्गदेवताः अपरिगृहीताः । तत्परिग्रहार्थे दार्शिकमन्वाधानं सोमे ऐष्टिकेषु पृथक् कर्तव्यम् । शेषवत् शेषः अङ्गदेवता अस्ति अस्मिन् तत् शेषवत् । अङ्गदेवताविशिष्टमन्वाधानं पृथक् स्यात् इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, वैश्वदेवो हि । २६ ॥**

सोमे दीक्षणीयाऽऽदिषु देवतापरिग्रहार्थमपि अन्वाधानं न कर्तव्यम् । दीक्षणीया प्रधानदेवताऽर्था सती अङ्गदेवता ग्रहीष्यति । कथम् ? वैश्वदेवो हि । हि यस्मात् अस्ति सोमे वैश्वदेवो ग्रहयागः तत्र सर्वदेवता इज्यन्ते, तत्र अङ्गदेवता अपि । तस्मात् ऐष्टिकेषु अग्न्यन्वाधानं न कर्तव्यम् । इति सिद्धान्तः ।

**स्याद्वा, व्यपदेशात् । २७ ॥**

यदुक्तं सिद्धान्तिना वैश्वदेवग्रहयागविषये, तत्राह पूर्वपक्षी । वाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः । स्यात् प्रयोजनम् ऐष्टिकेन अग्न्यन्वाधानेन, नाङ्गदेवतापरिग्रहणम् । वैश्वदेवस्तु विशेषदेवतागणः, व्यपदेशात् । ‘अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृहस्पतिर्विश्वैर्देवैः ’ इति । एवं च वैश्वदेवशब्दो गणवचन एव । एवं च अङ्गदेवता अपरिगृहीता एव । तदर्थमैष्टिकमग्न्यन्वाधानं कर्तव्यम् ।

**न, गुणार्थत्वात् । २८ ॥**

‘ बृहस्पतिर्विश्वैर्देवैः ’ इति विशेषव्यपदेशात् वैश्वदेवो गणविशेष इति यदुक्तं पूर्वपक्षिणा तन्न । नानेन व्यपदेशेन गणो वैश्वदेवः शक्यः कल्पयितुम् । गुणार्थत्वात् । गुणार्थः बृहस्पतिप्रशंसाऽर्थः अयं व्यपदेशः । अग्न्यादयो वस्वादिभिः केवलैः समेताः, बृहस्पतिस्तु विश्वैर्देवैः सर्वैर्देवैः तैश्चान्यैश्चेति । तस्मात् वैश्वदेवो न गणः । अतो दीक्षणीयया अङ्गदेवतापरिग्रहोऽपि प्रसङ्गात् सिध्यति इति न कर्तव्यं सोमे ऐष्टिकेषु अग्न्यन्वाधानमिति सिद्धान्तः । भाष्यीयमधिकरणं तु ‘ज्योतिष्टोमे दीक्षणीयाऽऽदिषु अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम्’ इति बिन्दौ । के.

**ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् । ५।३।६।१५ ॥**

ग्रहाश्च इष्टकाश्च तेषां समाहारः ग्रहेष्टकम् इति समाहारद्वंद्वे नपुंसकैकवचनम् । अनारभ्यविधिकाण्डं औपानुवाक्यमित्युच्यते । तदिदं तैत्तिरीयसंहितायां तृतीयं काण्डम् । अंशुः अदाभ्यः इत्यादयो ग्रहाः, चित्रिण्यः वज्रिण्यः भूतेष्टका इत्याद्य इष्टकाश्च औपानुवाक्ये नाम काण्डे समाम्नाताः । तदिदम् औपानुवाक्यं ग्रहेष्टकं सवनचितिशेषः स्यात् । ग्रहाः सवनशेषाः स्युः, न क्रतुशेषाः । इष्टकाश्च चितिशेषाः स्युः, न तु अग्निशेषाः संपूर्णाग्निचयनशेषाः इति पूर्वः पक्षः ।

**क्रत्वग्निशेषो वा, चोदितत्वादचोदना तु पूर्वस्य । १६ ॥**

औपानुवाक्यकाण्डपठितं ग्रहेष्टकं सवनचितिशेषः स्यात् इति पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तयति । ‘ औपानुवाक्यं ग्रहेष्टकम् ’ इत्यनुवर्तते । तत् क्रत्वग्निशेषः स्यात् । ग्रहाः क्रतुशेषाः इष्टकाश्च अग्निशेषाः स्युः । अग्निरिति अग्निचयनमुच्यते । चोदितत्वात् ‘ अग्निं चिनुते ’ इति इष्टकाचयनेन अग्निश्चेतव्य इति चोदितम् । ‘ योऽदाभ्यं गृहीत्वा सोमाय यजते ’ इति अदाभ्यस्य यजतिना संबन्धश्चोदितः तथा अंशुग्रहस्य । तस्मात् क्रत्वग्निशेषता । पूर्वस्य पूर्वोक्तस्य



पूर्वपक्षिणा उक्तस्य सवनचितिशेषत्वस्य तु अचोदना नास्ति चोदना । परार्थे हि तयोः श्रवणम् । के.

**ग्रहेष्टकाधिकरणम्** । ग्रहेष्टकयोरनारभ्याधीतयोः क्रत्वग्निशेषता ॥

**ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् । ५।३।६।१५ ॥**

**भाष्यम्**— औपानुवाक्ये काण्डे ग्रहा इष्टकाश्च समाम्नाताः । ‘ एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते ’ इति । तथा ‘परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाति’ इति । तथा इष्टकाः ‘चित्रिणीरुपदधाति’ ‘ वज्रिणीरुपदधाति ’ ‘ भूतेष्टका उपदधाति ’ इति । तत्र संदेहः किं ग्रहेष्टकम् औपानुवाक्यं सवनशेषः चितिशेषश्च, अथ किं क्रतुशेषः अग्निशेषश्चेति । किं प्राप्तम् ? सवनचितिशेषः । कुतः ? ग्रहैः सवनानि आरभ्यन्ते, इष्टकाभिः चितयः । यच्च येनारभ्यते तत् तदङ्गम् ।

**टुप्**— ग्रहैः सवनानि प्रत्यक्षमारभ्यमाणानि दृश्यन्ते, इष्टकाभिश्चितयश्च । तस्मात् तदुपकारकत्वात् एतेषां तदर्थता । इतरस्तु आह, अग्नियागयोः फलवत्त्वात् तदर्थं ग्रहेष्टकम् । औपोद्घातिकमिदम् । स्थिते एतस्मिन् क्रमविचारः ।

**क्रत्वग्निशेषो वा, चोदितत्वादचोदना तु पूर्वस्य । १६ ॥**

**भाष्यम्**— क्रत्वग्निशेषः स्यात् । कुतः ? चोदितत्वात् । अग्निश्चेतव्यः श्रूयते ‘ य एवं विद्वानग्निं चिनुते ’ इति । न चितिश्चेतव्या । इष्टकाचयनेन अग्निश्चेतव्यः श्रूयते, ‘ अग्निम् ’ इति द्वितीयानिर्देशात् तथा ‘ योऽदाभ्यं गृहीत्वा सोमाय यजते ’ इति अदाभ्यस्य यजतिना संबन्धः, तथा अंशोः । तस्मात् सकृद्यागसंबन्धं कृत्वा कृतार्थः शब्दो भवति श्रुतं संबन्धमभिनिर्वर्त्य । यथा सकृत् अग्निसंबन्धं कृत्वा कृतो ( कृती ) मन्येत । अचोदना चितिसवनयोः । नहि ते कर्तव्यतया चोद्येते । परार्थे हि तयोः श्रवणम् । किं प्रयोजनम् ? सवनचितिशेषत्वे प्रतिसवनं ग्रहणम्, प्रतिचिति च इष्टकोपधानम् । क्रत्वग्निशेषत्वे सकृत् ग्रहणोपधाने ।

**सोम**— ‘ त्रीणि ह वै ’ इत्यस्य विधेयत्वेऽपि ‘ यां वै कां चन ’ इत्यस्य विधित्वासंभवात् चित्रिण्यादीनाम् अन्तिमायां चितौ निवेशः स्यात् इति पूर्वसंगत्या प्रवर्तयिष्यमाणाग्निमाधिकरणोपोद्घातत्वात् अस्य **संगतिः** ।

**वि**— ‘अदाभ्यग्रहचित्रिण्यावङ्गे किं सवने चितौ । यागेऽग्नौ वा, ऽत्र दृष्टत्वादाद्य आवर्त्यतां ततः ॥, यागाग्न्योः फलवत्त्वेनानारभ्योक्ते तदङ्गके । सवनेसवने तस्मान्नैवावृत्तिश्चितौचितौ ॥ ’

**भाट्ट**— यानि प्राकरणिकानि ग्रहणानि ऐन्द्रवायवादीनि, तानि यथापाठमेव व्यवस्थितानि इति न तेषु चिन्ता । यानि तु अनारभ्याधीतानि तेष्वपि यत्र अंशवदाभ्यादौ प्राकरणिको विनियोगः, तत्रापि विधिपाठबलादेव अनुष्ठानसिद्धेर्न चिन्ताविषयत्वम् । अत एव न तयोरन्ते करणम्, अपितु प्रातःसवने एव धाराग्रहेभ्यः पूर्वमेव । यत्र तु अनारभ्याधीतमेव तेषां यागाङ्गतयाऽपि विनियोजकं वाक्यम्, तत्र ग्रहणस्य यागाभ्यासोपकारकस्य सामर्थ्यात् अभ्याससमुदायात्मकसवनद्वारकतयैव यागाङ्गत्वात् द्वारभूतसवनभेदेन प्रतिसवनं ग्रहणानुष्ठानम्, निर्वापाङ्गस्य मन्त्रस्येव मुष्टिरूपद्वारभेदेन । एवम् अनारभ्याधीतानाम् ‘ चित्रिणीरुपदधाति ’ इत्यादीनामपि प्रतिचिति भेदेनानुष्ठानम् । चित्रिण्यादीष्टकानां हि अनारभ्याधीतानामपि उपधानसंस्कृतानामुपयोगापेक्षायाम् ‘ तस्मादग्निचित् सर्वमायुरेति ’ इत्याद्यर्थवादवशात् अग्न्यङ्गत्वप्रतीतावपि अग्निपदाभिधेयस्थण्डिलारम्भकचितिद्वारकतयैव तदङ्गत्वावगतेः प्रतिचिति आवृत्तिः । ‘ यां कां चन ’ इति वचनं तु प्राकरणिकेष्टकाभिप्रायम् । इति **प्राप्ते**, ऐन्द्रवायवादिग्रहणवदेव अभ्याससंपादनद्वारा यागोपकारकत्वस्यैव सिद्धेः सवनारम्भस्य आनुषङ्गिकत्वेऽपि द्वारत्वे प्रमाणाभावात् न प्रतिसवनमावृत्तिः, अपितु अन्ते एवानुष्ठानम् । एवं चित्रिण्यादेरपि न प्रतिचिति अनुष्ठानम् ।

**मण्डन**— ‘ यागाग्न्यर्था ग्रहेष्टकाः । ’

**शंकर**— ‘ ग्रहेष्टकं तु सोमाग्न्योः । ’

* **ग्रहैकत्वम**प्राप्तत्वात् नानुवदितुं शक्यते, संमार्गभावनया गुणत्वेन प्रधानत्वेन वा अन्वयायोगात् न विधिना स्पृश्यते । सु. पृ. ४७, * **ग्रहैकत्वस्य** कारक-

त्वेनैव विधेयत्वम् । पृ. १०१२, * ग्रहैकत्वस्य । यद्यपि द्रव्यविशेषणपर्यन्तं विधिप्रत्ययो न गच्छेत् ततश्च स्वविशेषणविशिष्टक्रियान्यथाऽनुपपत्तिलक्षणयैव अर्थापत्त्या संख्याऽऽद्यपि विधातुमिष्यते, तथापि ग्रहैकत्वस्य भावनाविशेषणता । पृ. १०१२.

* **ग्रहैकत्वाधिकरणे** प्रत्येकवाक्यपरिसमाप्ति–समुदायवाक्यपरिसमाप्तिन्याययोः विषयभेदः उक्तः । प्राधान्ये पूर्वः, गुणत्वे तु उत्तरः यथा 'ग्रहं संमार्ष्टि' 'अरुणयैकहायन्या क्रीणाति' इति । बाल. पृ. १६५. * अनेकाग्न्युत्पादकत्वं तु 'आयतनेषु संभारान् निदधाति' इत्यायतनबहुत्वविवक्षाबलात् इत्युक्तं **ग्रहैकत्वाधिकरणे** कौस्तुभे । भाट्ट. ५।४।२ * 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र एकत्वादिविशिष्टपशोरिव (पशुना यजेत) दधिविशिष्टकारकविधानान्न वाक्यभेदः । यथा चैतत् तथा ग्रहैकत्वाधिकरणे स्फुटीभविष्यति । कु. २।२।११।२६. * यथा च व्यासज्यवृत्तिधर्मस्योद्देश्यताऽवच्छेदकत्वेऽपि एकैकविकारे अतिदेशः, तथा कौस्तुभे ग्रहैकत्वाधिकरणे निरूपितम् । भाट्ट. ४।२।११, * **ग्रहैकत्वाधिकरणन्यायेन** ईप्सितोद्देश्यविशेषणस्यापि विवक्षाऽयोगात् ... एकैकहविर्नाशेऽपि इदं प्रायश्चित्तम् 'यस्योभयं हविरार्तिमार्च्छेत्' । ईप्सितोद्देश्यविशेषणस्येव (उभयं हविः इत्यत्र उभयत्वस्य) निमित्तरूपोद्देश्यविशेषणस्यापि विवक्षाऽयोगात् । ६।४।६.

* **ग्रहैकत्वन्यायः** । **'प्रकृत्यर्थोऽपि खल्वेत–(लिङ्गं) दुद्देश्यस्य विशेषणम् । संख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते ॥'** इति । शा. ६।१।३.

* 'हविरार्तिमार्च्छेत्' इत्यनूद्य पञ्चशरावो विधीयते । तच्च 'उभयम्' इति उभयम्, (तच्च हविरुभयम् इति हविरनुवादेन उभयं विधीयते ततो हविःशब्दस्य विधिप्रत्ययस्य च आवृत्तेः वाक्यभेदः स्यात्) ततो वाक्यभेदः **ग्रहैकत्वन्यायेन** । टुप्. ६।४।६।२३ पृ. १४३९. * प्रधानगामिनी च संख्या ग्रहैकत्वन्यायेन न विवक्षितुं शक्या । **सोम.** ६।२।२.

* **ग्रहचमसेन** तु हविर्यज्ञे न क चिद्धोमः श्रुतः । **भा.** १२।१।४।११, * **ग्रहचमसैः** सौमिकपात्रैः जुह्वादीनां दार्शिकपात्राणां प्रसङ्गसिद्धिर्नास्ति सवनीयपुरोडाशादिषु । ज्योतिष्टोमे । १२।१।४।१०–११. * **ग्रहचमसानां** रात्रिपर्यायेषु समुच्चय एव । **संकर्ष.** ३।३।१६. * **ग्रहचमसाभावात्** स्तोत्राभावः, स्तोत्राभावात् शस्त्राभावः । **भा.** ९।२।१२।४०.

* **ग्रहधर्माः** अंशुअदाभ्ययोरपि कर्तव्याः, तयोरपि ज्योतिष्टोमार्थत्वात् । **भा.** ३।६।११।३२-३४, * ग्रहधर्माः 'उपोप्ते अन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवः' 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यादयः । ३।६।९।३०, * ग्रहधर्माः न फलचमससाधारणाः । सोमधर्मासमानविधित्वाधिकरणं द्रष्टव्यम् । ३।६।९।३६. * ग्रहधर्माः सादनसंमार्गादयः प्रातःसवने पठिता अपि वाक्यप्रकरणाभ्यां सवनत्रयेऽपि संबध्यन्ते । वि. ३।६।९.

☒ **ग्रहधर्माधिकरणम्** । सवनत्रयार्था ग्रहधर्माः । ग्रहधर्माणां सवनत्रयसंबन्धिग्रहार्थता ॥

**तद्वत् सवनान्तरे ग्रहाम्नानम्** । ३।६।९।३० ॥

**भाष्यम्**— अस्ति ज्योतिष्टोमः 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तत्र ऐन्द्रवायवाद्या ग्रहाः प्रातःसवने दश आम्नाताः । तत्र धर्माः श्रूयन्ते 'उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवः' 'दशापवित्रेण ग्रहं संमार्ष्टि' इति । सन्त्यपरे माध्यंदिने सवने, अपरे तृतीयसवने ग्रहाः । तेषु माध्यंदिनीयेषु तार्तीयसवनीयेषु च संदेहः किं सर्वेषु ग्रहधर्माः कर्तव्याः, उत प्रातःसवने ये ग्रहास्तेष्विति । किं प्राप्तम् ? प्रातःसवनग्रहेषु भवेयुः । तेषां हि क्रमे समाम्नाताः, नेतरेषाम् । एवं प्राप्ते, ब्रूमः । सवनान्तरे प्रातःसवनात्, माध्यंदिने तृतीयसवने च ग्रहाम्नानं तद्वदेव भवितुमर्हति । सर्वेषां हि तुल्यं प्रकरणम्, यत्रैते धर्माः समाम्नाताः । वाक्येन ग्रहमात्रस्य विधीयन्ते । क्रमाच्च वाक्यप्रकरणे बलीयसी । तस्मात् सर्वार्था ग्रहधर्मा इति ।

**वा**— ग्रहधर्माणां प्रातःसवनस्य च समानदेशे समाम्नानमनुष्ठानं च इत्यनेन अतुल्याशङ्कायां तुल्यत्वमापाद्यते । प्रकरणं तावत् सवनत्रयोपेतस्य ज्योतिष्टोमस्य समानम् । न च प्रातःसवनस्य निष्फलस्य अवान्तरप्रकरणम् । न च प्रकरणविरोधि स्थानं विनियोजकं भवति । तस्मात् सवनान्तरग्रहाणामपि धर्माः स्युरिति । एतेन आग्नेयाग्नीषोमीयादिपुरोडाशधर्मसाधारण्यमुक्तम् ।

**शा**—पूर्वत्र स्थानमपि नास्तीत्युक्तम् । इह तु असंदिग्धं स्थानम्, इति विशेषाशङ्का । प्रकरणाविशेषात्तु सर्वार्थाः इति सिद्धान्तः ।

**सोम—सूत्रार्थस्तु**— माध्यंदिनादिसवने आम्नातं ग्रहजातमपि शृतवत् धर्मयुक्तं स्यात् इति ।

**वि**—'ग्रहधर्माः सादनाद्याः प्रातःसवन एव ते । त्रिषु वा, निश्चितस्थानादाद्यः, पूर्ववदुत्तरः ॥'

**भाट्ट**—ज्योतिष्टोमे प्रातःसवनिकग्रहसंनिधौ ग्रहधर्माः 'उपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवः' इत्याद्याः श्रुताः । ते निःसंदिग्धस्थानात् प्रातःसवनिकग्रहमात्रार्थाः । इति प्राप्ते, माध्यंदिनसवनिकादीनामपि प्रकरणात्, तेन च स्थानबाधात् सर्वार्थत्वं प्रयाजादीनामिव अग्नीषोमीयार्थत्वमिति ।

**मण्डन**—'सर्वग्रहार्थाः सवनस्थधर्माः ।'

**शंकर**—'ग्रहधर्माश्च सर्वार्थाः ।' १०.

☒ **ग्रहन्यायः** । ग्रहसंमार्जनन्यायः । ग्रहाधिकरणम् । ग्रहैकत्वन्यायः । एकत्वयुक्तमेकस्य इति न्यायः ॥

**एकत्वयुक्तमेकस्य श्रुतिसंयोगात्** । ३।१।७।१३ ॥

**भाष्यम्**— अस्ति ज्योतिष्टोमः 'य एवं विद्वान् सोमेन यजते' इति । तत्र श्रूयते 'दशापवित्रेण ग्रहं संमार्ष्टि' इति । तथा **अग्निहोत्रे** श्रूयते 'अग्नेस्तृणान्यपचिनोति' इति । तथा **दर्शपूर्णमासयोः** श्रूयते 'पुरोडाशं पर्यग्नि करोति' इति । तत्र संदेहः किं एकस्य ग्रहस्य, एकस्याग्नेः, एकस्य पुरोडाशस्य च संमार्जनादि कर्तव्यम्, उत सर्वेषां ग्रहाणां सर्वेषामग्नीनां सर्वेषां पुरोडाशानामिति । किं प्राप्तम् ? एको ग्रहः, एकोऽग्निः, एकः पुरोडाश इह ग्रहीतव्यः । कुतः ? श्रुतिसंयोगात् । एकत्वश्रुतिसंयुक्ता एते पदार्थाः । एकं हि द्रव्यमेषु श्रूयते । शब्दलक्षणे च हि कर्मणि यच्छब्द आह तदस्माकं प्रमाणम् । यथा 'पशुमालभेत' इत्युक्ते एक एव पशुः पुमांश्च आलभ्यते । एवमत्रापि एको ग्रहः संमार्जनीयः, एकस्याग्नेस्तृणानि अपचेयानि, एकः पुरोडाशः पर्यग्नि कर्तव्य इति ।

**वा**— एवं यथासंयोगं शेषविनियोगः स्थितः । इदानीं तद्विशेषचिन्ता । किमेकस्य ग्रहस्य संमार्गः, उत प्राकरणिकग्रहमात्रस्य इति । यथा च एकत्वयुक्तम्, तथा द्वित्वबहुत्वयुक्तमपि उदाहर्तव्यम् 'यस्य पुरोडाशौ क्षायतः' (दाहं प्राप्नुतः) 'यस्य सर्वाणि हवींषि नश्येयुः दुष्येयुः' 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यादि । सर्वत्र च किञ्चित् उद्दिश्य क्रिया विधीयते । तत्र उद्दिश्यमानस्य किं संख्या विवक्ष्यते, उत नेति संशयः ।

**(विवक्षाऽविवक्षयोः वेदे संभवासंभवविचारः)**

ननु च वेदवाक्येषु अयुक्तोऽयं विचारः । कुतः ? **'प्रतीतिव्यतिरेकेण विवक्षाऽन्या न विद्यते । नित्यत्वाद् वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥'** यानि पुरुषप्रणीतानि, तानि पुरुषविवक्षाऽधीनवचनत्वात् संभवत्प्रमादाभिप्रायान्तरप्रमाणान्तरगम्यार्थानि भवन्ति (प्रमादश्च अभिप्रायान्तरं च संभवन्ती येषाम्, तानि संभवत्प्रमादाभिप्रायान्तराणि, तानि च प्रमाणान्तरगम्यार्थानि च इति विग्रहः) । तत्र प्रतीतोऽपि अर्थः वक्तुः अनभिप्रेतत्वात् अविवक्षां लभेत । सा च द्वेधा विज्ञायते । यद्वा वक्तैव कथयति 'अन्यपरं ममेदमभिप्रेतं प्रमादेन वा, तस्मात् एतावन्मात्रमिह न ग्रहीतव्यम्' इति, यद्वा प्रमाणान्तरवशेन अन्यथाऽर्थे अवधारिते वक्त्रनपेक्षाः श्रोतारः एव अभिप्रायान्तरं प्रमादं वा अध्यवस्यन्ति । न तु वेदवाक्येषु अभिप्रायान्तरं प्रमादो वा कस्य चिदस्ति । न च वक्ता, यः अन्यथात्वम् कथयेत् सर्वपुरुषाणाम् । 'उक्तं तु शब्दपूर्वत्वम्' (१।१।८।२९) इति केवलश्रोतृत्वाश्रयणात् । न च प्रमाणान्तरगम्योऽर्थः, यतः तद्वशेन स्वयमेव श्रोतारः अन्यथात्वं प्रतिपद्येरन् । विवक्षाऽविवक्षे च वक्तॄणां प्रत्ययविशेषौ, इच्छाऽनिच्छाविशेषौ वा । तेन विवक्षितम् अविवक्षितमिति द्वयमपि एतत् वक्त्रभावादनुपपन्नम् । अतः श्रुताश्रुतयोरेव केवलयोः अत्र ग्रहणाऽग्रहणे । नातः परं किञ्चित् कारणमस्ति । **'पुंवाक्येऽप्यन्यथोक्तत्वं यावन्नान्येन गम्यते । तावद् यथाश्रुतं मुक्त्वा नान्यथात्वपरिग्रहः ॥'**

उच्यते ‘प्रतीतिं प्रति नैवात्र विसंवादोऽस्ति कस्य चित्। प्रतीतेऽपि तु सत्येषा (सति प्रतीते एषा) विध्यविध्योर्विचारणा ॥’ एकत्वं तावत् अत्र असंशयमुक्तम्। तच्च ग्रहसंबन्धि इत्येतदपि असंदिग्धम्। इह तु सर्वार्थानाम् ‘अभिधात्री श्रुतिः का चिद् विनियोक्त्र्यपरा तथा। विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः ॥’ प्रकृतिप्रत्ययश्रुत्योः स्वस्वार्थाभिधातृत्वम्। पदस्य कारकविभक्तीनां च विनियोजकत्वम्। लिङ्–लोट्–तव्य–पञ्चमलकाराणां तु विधिसामर्थ्यम्। तत्र अनुष्ठानकाले विधिश्रुत्यधीनः पुरुषः। स हि यत्र तया प्रवर्त्यते, तत्र अभिहिते अनभिहिते वा विनियुक्ते अविनियुक्ते वा तुल्यत्वात् प्रवर्तते। यत्र तु विधिना न नियुज्यते, तत्र अभिहिते विनियुक्तेऽपि न प्रवर्तते। नहि असौ (पुरुषः) अनुष्ठानं प्रति तयोः (अभिधात्रीविनियोक्त्रीश्रुत्योर्मध्ये) एकयाऽपि प्रेर्यते। ‘इदमिहास्ति, अस्येदम्’ इति च एतन्मात्रपरिच्छेदात् (निर्णयात्) विषयकर्तव्यताबुद्ध्यनुत्पत्तेः। तेन अभिहितविनियुक्तस्यापि विधिमनुष्ठानं च प्रतीत्य विवक्षाऽविवक्षे विधित्सिताविधित्सितचिकीर्षिताचिकीर्षितात्मिके भवतः। ननु इदमपि इच्छया विना नैवोपपद्यते। उच्यते। नैवात्र पारमार्थिकीमिच्छां वदामः। किं तर्हि? ‘परिग्रहपरित्यागाविच्छाऽनिच्छाफले स्थिते। तल्लक्षणाऽर्थता त्वत्र स्याद् विवक्षाऽविवक्षयोः ॥’ यथैव ‘कूलं पिपतिषति’ इत्येवमादौ पातकालप्रत्यासत्तेः इच्छामुपचर्य एवं व्यपदेशो भवति, तथा पौरुषेयेषु वाक्येषु परिग्रहापरिग्रहौ विवक्षाऽविवक्षयोः फलत्वेन प्रज्ञातौ, इति तौ आभिप्रेत्य अयं विवक्षाऽविवक्षोपन्यासः। कथं श्रुतस्य अपरिग्रहः स्यात् इति चेत्। नैष दोषः, विध्यधीनः परिग्रहः इति प्रागेवोक्तत्वात्, ‘यथैव पौरुषेयेषु पुरुषो हि प्रवर्तकः। उक्तेऽप्यर्थे, तथैवेह लिङादिर्विधिशक्तितः ॥’ पुरुषस्थानीयो हि वेदे विधायकः, पुरुषेच्छास्थानीयं विधित्वम् (अयमत्र प्रवर्तताम् इत्याकारकः प्रेरणाऽऽख्यो लिङादिनिष्ठो व्यापारः)। अतो यत् विधित्वेन संस्पृष्टम्, तत् कर्तव्यं नेतरत्, इत्यवधारणात् विधिव्यापारसंस्पर्शपरिमाणमन्वेष्टव्यम्। कथं पुनः तुल्यायां समानवाक्यगतोक्तिप्रतीतौ किञ्चित् विधिः संस्पृशति, किञ्चिन्न इति?। तदुच्यते। ‘विधानाय प्रवर्तन्ते स्वशक्त्यैव विधायकाः। योग्यशब्दोपनीतेऽर्थे सर्वस्मिन् नास्मदिच्छया ॥’ यदि अस्मदभिप्रायानुरोधेन अभिधानविनियोगश्रुतिवशेन वा लिङादयो विदध्युः, ततः सर्वं विधीयेत। ते तु स्वशक्तिमनुरुध्यमानाः किञ्चिदेव विदधति, न सर्वम्। तथाहि ‘विधित्वं श्रौतमार्थं च भावनाकारकाश्रयम्। ताभ्यां तु व्यतिरिक्तेऽर्थे नैकमप्येतदिष्यते ॥’ श्रुत्या तावत् प्रयोजनभावना विधीयते, तदन्यथाऽनुपपत्तेस्तु अर्थात् कारकान्तराणि। यस्तु श्रुतोऽपि अर्थः भावनाकारकतदाश्रयत्वेन नावधार्यते, तत्र एकमपि विधित्वम् (श्रौतमार्थं वा) नास्ति, इति अनुष्ठानं प्रति अनङ्गत्वम्।

तेन संमार्गाद्यनुष्ठाने किं ग्रहैकत्वाद्यपि कर्तव्यम्, उत नेति जायते संदेहः। तत्र यदि एकत्वादि कारकत्वेन भावनाविशेषणम्, ततो विधिसंस्पर्शात् विवक्षितं भविष्यति। अथ द्रव्यविशेषणम्, ततो न विवक्षितमिति।

तदेतत् अप्रसिद्धालौकिकवेदवाक्यार्थव्याख्यानप्रकारकरणाशक्तिः पौरुषेयवाक्यव्याख्यासादृश्यापादनार्थम् अन्तर्णीतोपमानगौणवृत्त्याश्रयणेन फलसामान्यदर्शनात् विधिशक्त्यशक्त्यधीनपरिग्रहापरिग्रहयोरेव (विधिशक्त्यधीनस्य परिग्रहस्य, अशक्त्यधीनस्य अपरिग्रहस्य चेत्यर्थः) विवक्षिताविवक्षितवाचोयुक्त्युच्चारणं मन्दबुद्धिशिष्यप्रतिपादनार्थं ग्रन्थकाराणां व्याख्यातॄणां च अन्यत्रापि वेदविषयम् एवमेव गमयितव्यम्।

(वेदव्याख्यातृगते वा विवक्षाऽविवक्षे) अथवा ‘न्यायेन संप्रदायाद्वा ये मीमांसकयाज्ञिकाः। वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यते ॥’ (तत्र मीमांसकाः न्यायेन, याज्ञिकास्तु संप्रदायात् व्याचक्षते इत्युत्सर्गः।) ‘शब्दशक्त्यनुसारेण वाक्यार्थं गमयन्ति ते। तत्र यः शक्त्युपारूढः स तैर्व्याख्यातुमिष्यते ॥ यस्तु शक्त्या परित्यक्तो न व्याचिख्यास्यते स तैः ॥ तेन व्याख्यातुमिष्टोऽर्थो यस्तेषां स विवक्षितः। अनिष्टो यस्त्वशक्तित्वादविवक्षित



एव सः ॥ अतः पूर्वसमावृत्तव्याख्यातृिष्टं विवक्षितम्। (पूर्वासु समासु संवत्सरेषु वृत्ताः संभूताः ये व्याख्यातारः प्राचीनाः तैः इष्टं नवीनानां विवक्षितं नाम इत्यर्थः) तेनोच्येत, तथा तेषां त्वनिष्टं त्वविवक्षितम् ॥’ तस्मात् व्याख्यातृगतमेव विवक्षिताविवक्षितत्वमुपन्यस्य विचारकरणात् वेदेऽपि अविरोधः।

(वेदक्षेत्रज्ञात्मनो वा विवक्षाऽविवक्षे) ‘ऋग्वेदादिसमूहे तु क्षेत्रज्ञा ये प्रतिष्ठिताः। तेषां वाऽयमभिप्रायः स्याद् विवक्षाऽविवक्षयोः ॥ महाभौतिकदेहस्था यथाऽऽत्मानः सचेतनाः। कंचिदर्थं विवक्षन्ति, न विवक्षन्ति चापरम् ॥ तेषामन्तर्गताऽपीच्छा तद्वाक्यार्थविचारिभिः। ज्ञायते शब्दशक्त्यैव स्फुरन्तीव बहिःस्थिता ॥ देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः। प्रकृत्यारम्भवैचित्र्याद् दृश्यन्ते परमात्मनाम् ॥ पार्थिवावयवप्रायाः शेषतोयाद्यनुग्रहात्। जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः ॥ भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः। श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः ॥ अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः। भ्रमन्ति लघुभिः सूक्ष्मैर्देहैर्भूम्याद्यनुग्रहात् ॥ स्वर्लोके तैजसप्राया देहाः शुद्धप्रभाऽन्विताः। आप्यायन्ते विकीर्णेन भानवीयेन तेजसा ॥’ तथा च नक्षत्रेष्टिवाक्यशेषे अभिहितम् ‘ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति, तेषामेतानि ज्योतींषि, यत् नक्षत्राणि’। तथा च मनुनाऽपि स्वर्गं लोकं गच्छन् अभिहितः (३।९३) ‘तेजोमूर्तिः पथर्जुना’ (ऋजुना पथा) इति। ‘तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः। इज्यते वारिणा नित्यं यः खं ब्रह्मेति चोदितः ॥ रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः। प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः ॥ शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते।, तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥ तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक्। भोग्यत्वेनात्मनाम्, तेऽपि चैतन्यानुगताः सदा ॥ तेषां चान्तर्गतेच्छानां वाक्यार्थप्रतिपादने। विवक्षा वाऽविवक्षा वा ज्ञायते शब्दशक्तितः ॥ विधिशक्त्या गृहीतं यत्, तत् सर्वं हि विवक्षितम्। तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ॥ शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः। विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः। अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे। व्याख्यानं मुख्यवृत्त्याऽपि स्याद् विवक्षाऽविवक्षयोः ॥’

‘ततश्चैतद् ग्रहैकत्वं किं वेदेन विवक्षितम्। किं नेति न्यायमार्गेण विचार्य स्थापयिष्यति ॥ किं तावत् प्राप्तम्? ‘स्यात् कर्मैकत्वयुक्तं यद् विधानं वाऽपि वैदिकम्। द्रव्यस्यैकस्य तत् ज्ञेयमनुष्ठेयं च कर्तृभिः ॥’ सर्वत्र विधिप्रतिषेधात्मकत्वात् वेदस्य यावत्किञ्चित् श्रूयते, तत् सर्वं तत्संबन्धित्वेन गम्यते। तत्र येन प्रकारेण विधिप्रतिषेधविषयं भवति, तथा सर्वात्मना योजनीयम्।

तत्र एकस्तावत् पक्षः। सत्यपि द्रव्यविशेषणत्वे यथैव द्रव्यादिविशिष्टभावनाविधौ अर्थात् विशेषणेषु विधिर्भवति न तु अन्यथा विशिष्टा विहिता स्यादिति, एवं एकत्वविशिष्टग्रहविशिष्टसंमार्गविध्यन्यथाऽनुपपत्तेः अर्थापत्त्यन्तरेण एकत्वविधानम्। एवं विशेषणमालायामपि सत्यां संयुक्तसंयोगपारंपर्येण सर्वविधिप्रत्ययः। परस्परसंबन्धिषु गुणेषु एकस्मिन् विहिते, अन्यो विधीयते इत्युक्तम्। अथवा यदि नाम द्रव्यविशेषणं यावत् विधिप्रत्ययो न गच्छेत्, ततः एकयैव अर्थापत्त्या सर्वं विधातुमिष्यते। ततो यथा दशापवित्र–तदेकत्व–ग्रह–संमार्गाणां भावनाविशेषणत्वम्, एवं ग्रहैकत्वस्यापि प्रतिपादनीयम्। ननु च एकपदलक्षणया श्रुत्या एकत्वं ग्रहविशेषणं गम्यमानं न युक्तं वाक्येन भावनाविशेषणमापादयितुम्। नैष दोषः, विरोधाभावात्। ग्रहसंबन्धाविच्छेदेनैव हि भावनासंबन्धः अवकल्पिष्यते। भिन्नविषयत्वाद्वा विरोधाभावः। यदि हि उभयत्रापि तादर्थ्यलक्षण एव आश्रयाश्रयिविशेषणविशेष्यरूपो वा संबन्धः स्यात्, ततः समानविषयत्वं प्रतीयेत, न तु एवमप्यस्ति, ग्रहैकत्वयोः आश्रयाश्रयिरूपेण विशेषणविशेष्यभावात् भावनया च सह

स्वमर्थे श्रुत्यैव वदति । अथ एवं सति किम् ? न संमार्गेण संभन्त्स्यते इति । तेन हि संबध्यमानं वाक्येन संबध्येत । न च श्रुत्या अन्येन संबध्यमानं वाक्येन आच्छिद्य अन्येन संबन्धमर्हति । असंबध्यमानस्तु एकत्वेन संमार्गो यदि नैकत्वविशिष्टः क्रियते, न किञ्चित् विपन्नं भवति । न च एकत्वविशिष्टः संमार्गादिः, ग्रहादिमात्रस्य च विधीयते, इति किमिति द्वितीयस्य तृतीयस्य च न क्रियेतेति ।

वा— ( सिद्धान्तमारभते— ) '**व्यक्तीरुद्दिश्य यत् कर्म स्वजात्याद्युपलक्षिताः । विहितं गुणभावेन तत् सर्वार्थं प्रतीयते ॥**' ( ग्रहाधिकरणसिद्धान्तन्यायोऽयम् )। इह तावत् 'तुल्यश्रुतित्वाद्वेतरैः सधर्म स्यात्' ( २।१।४।१० इत्यत्र 'सधर्मः' इति पाठः । सधर्मा सधर्म इति च अनिच्प्रत्ययान्तं पुंलिङ्गं नपुंसकं च पाठद्वयमन्यत्र । 'स धर्मः' इति तु अत्रत्यं आनन्दाश्रमीयं मुद्रणम् अशुद्धमेव ) इत्येवं द्वितीयानिर्देशात् प्रयोजनवत्त्वाच्च ग्रहप्राधान्यं संमार्गस्य च गुणभावो विज्ञायते । तत्रापि ग्रहत्वस्य संमार्गानर्हत्वात् व्यक्तयः संस्कार्यत्वेन अवतिष्ठन्ते । तासां साक्षात् प्रत्यायनाभावात् ग्रहत्वं लक्षणत्वेन आश्रितम् । एष चोदनाऽर्थः अवगम्यते । यत् ग्रहकार्यम्, तत् संमार्गेण सगुणं भवति । तत्र य एव न संमृज्येत, तस्यैव कार्यं विगुणं भवेत् । अतः सर्वे संमार्जनीयाः । यदि तु संमार्गगुणत्वेन यागाङ्गपशुवत् ग्रहः चोद्येत, ततः एकेनैव सिद्धे कार्ये नापरो गृह्येत । नहि तदानीं ग्रहान्तरेषु अगृह्यमाणेषु कस्य चित् वैगुण्यं दृश्यते, शास्त्रार्थस्य निर्वृत्तत्वात् । प्राधान्यपक्षे तु प्रतिप्रधानं शास्त्रभेदात् एकस्मिन्नपि असंस्क्रियमाणे तद्गतशास्त्रबाधप्रसङ्गः । '**अथापि शास्त्रतन्त्रत्वात् संमार्गः स्यात् प्रतिग्रहम् । तथाप्यकरणे तस्य ज्ञानं बाध्येत तद्गतम् ॥ अबाधिते तु विज्ञाने योऽन्यो न क्रियते तथा । विहिताकरणात् तत्र प्रत्यवायः प्रसज्यते ॥**' ( सिद्धान्तमुपसंहरति— ) तस्मात् ग्रहत्वापूर्वसंयोगात् प्रकरणाविशेषाच्च सर्वप्रत्ययः ।

'ननु च एकवचनं श्रूयते' इति अविवक्षाकारणमपश्यन् आह । तत्रोत्तरम् '**श्रुतमात्रस्य सर्वस्य नानुष्ठेयत्वमुच्यते । विधानविनियोगौ हि तत्रापेक्ष्यौ श्रुताश्रुता ॥ विहितो विनियुक्तश्च गृह्यते ह्यश्रुतोऽपि सन् । श्रुतोऽपि तु न गृह्येत योऽर्थस्ताभ्यामुपेक्षितः ॥**' तत् ( इदं तस्मादित्यर्थे अव्ययम् ) एकस्मिन् वाक्ये प्रकृतिप्रत्ययपदश्रुतिप्रतिपादितानां बहूनामर्थानां को विधिविनियोगाभ्यां परिगृहीतः, को वा त्यक्तः इति चिन्तायाम् '**वचनव्यक्तिभेदेन सर्वेषामेव दर्शनात् । विहितो विनियुक्तश्च कः, को नेति विचार्यते ॥ मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति । लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्तिपांसुभिः ॥ वर्तमानसरूपेण लिङर्थस्मृतिसाधुना । पञ्चमेन लकारेण ( लेटा ) किं नामात्र विधीयते ॥ केवला भावना तावन्न कदा चिद् विधीयते । अननुष्ठेयरूपत्वाद् विशिष्टा सा विधीयते ॥ सा किं धात्वर्थमात्रेण संसर्गेण विशेष्यते । लोकप्रसिद्धरूपेण शक्यानुष्ठेयताऽऽत्मना ॥ ग्रहद्रव्येण किं, किंवा तदीयैकत्वसंख्यया । दशापवित्रशब्दस्तु सर्वार्थेषु विवक्षितः ॥ तुल्यार्थत्वात् स भेदेन नान्यैः सह विचार्यते ॥**'

'**ग्रहादीनां च किं चेह नियोगेन निरूपणा ॥ संमार्गग्रहयोः किंवा विकल्पोऽथ समुच्चयः । संबन्धः समुदायो वा विशिनष्टीह भावनाम् ॥ अथवाऽन्यतरेणैको विशिष्टोऽन्यतरस्तयोः । विशिषन् भावनामेव तद्द्वारेण विधीयते ॥**' ( ग्रह-तदेकत्वसंमार्गाणां मध्ये ग्रहसंमार्गयोस्तावत् किं ग्रहः एव भावनां विशिनष्टि, संमार्गः एव वा इति नियोगेन विशेषणत्वम् । किंवा ग्रहो वा संमार्गो वा इति विकल्पः । तथा ग्रहश्च संमार्गश्च इति समुच्चयः । अथ ग्रहसंमार्गयोः संबन्धः, अथ समुदायो वा । अथवा ग्रहविशिष्टः संमार्गः, संमार्गविशिष्टो वा ग्रहः । इति अष्टपक्षीनिरूपणा कार्या । इयं ग्रहसंमार्गयोः अष्टपक्षीविचारणा । संमार्गैकत्वयोरपि अष्टपक्षीमतिदिशति— ) '**संमार्गैकत्वयोरेवमष्टपक्षीविचारणा ।**' ( ग्रहैकत्वयोरपि अतिदिशति— ) '**विचार्यैवं पुनः सैव ग्रहत्वैकत्वयोरपि ।**' ( अष्टपक्षी विचार्या ॥ तथा किं संमार्गविशिष्टो ग्रह एव भावनां विशिनष्टि, एकत्वमेव वा इत्यादिः



नियोग-विकल्पादिरूपा प्रथमा अष्टपक्षी, किं ग्रहविशिष्टः संमार्ग एव, एकत्वमेव वा इत्यादिरूपा द्वितीया, किं एकत्वविशिष्टो ग्रह एव, संमार्ग एव वा इत्यादिरूपा तृतीया, किं ग्रहविशिष्टम् एकत्वमेव, संमार्ग एव वा इत्यादिरूपा चतुर्थी, किमेकत्वविशिष्टः संमार्ग एव, ग्रह एव वा इत्यादिरूपा पञ्चमी, किं संमार्गविशिष्टमेकत्वमेव, ग्रह एव वा इत्यादिरूपा षष्ठी । इति पूर्वोक्ताभ्यः तिसृभ्यः अष्टपक्षीभ्यः अन्याः षट् अष्टपक्ष्यः विचार्याः इत्याह— ) '**तथा कृत्वा द्वयोः पूर्वं विशेषणविशेष्यताम् । तृतीयेन सहैकेन तादृश्येव विचारणा ॥**' ( कार्या ) ।

( ग्रहतदेकत्वयोः संहत्य, प्रत्येकं वा संमार्गान्वयः इति विवेकाय उपादेयत्वोद्देश्यत्वे अपि विचार्ये इत्याह— ) तथा '**किमुपादेयता तेषां स्यादथोद्दिश्यमानता । संमार्गं प्रति संहत्य प्रत्येकं वा समागमे ॥**' ( कस्मिन् पक्षे संहत्यान्वयः, कस्मिन् वा प्रत्येकमित्यपेक्षायामाह— ) '**तत्र क्रियाप्रधानत्वे साहित्यं द्रव्यसंख्ययोः । सकृच्च तादृशीं कृत्वा कृत्स्नां कर्ता कृती भवेत् ॥ ग्रहैकत्वे यदोद्दिश्य संमार्ग उपदिश्यते । एकैकस्मिन् समाप्येते क्रियावाक्ये तदा तयोः ॥**'

( उद्देश्यत्वोपादेयत्वयोरपि विशेषणत्ववत् विचारमन्तरेण असिद्धेः उद्देश्यत्वे तावत् ( १ ) किं ग्रह एव उद्देश्यः संमार्गं प्रति, ( २ ) एकत्वमेव वा, ( ३ ) अथ ग्रहो वा एकत्वं वा, ( ४ ) अथ ग्रहश्च एकत्वं च, ( ५ ) अथ ग्रहैकत्वयोः संबन्धः, ( ६ ) अथ समुदायः, ( ७ ) अथ एकत्वविशिष्टो ग्रहः, ( ८ ) अथ ग्रहविशिष्टमेकत्वम्, इति विशिष्टा अष्टपक्षी विचार्या इत्याह- ) '**तत्रापि तु ग्रहस्यैव संमार्गः किं विधीयते । एकत्वस्यैव किम्, किंवा विकल्पेन द्वयोरपि ॥, किं समुच्चितयोः, किंवा संबन्ध-समुदाययोः ।, किंवैकत्वविशिष्टस्य ग्रहस्यैव विधीयते ।, ग्रहेण वा विशिष्टां किं संख्यां प्रति विधीयते ॥**'

( उपादेयत्वेऽपि ईदृश्येव अष्टपक्षी विचार्येत्याह— ) '**क्रियां वा प्रत्युपादानं किं ग्रहस्यैव गम्यते ।, एकत्वस्यैव किम्, किंवा विकल्पेन द्वयोरपि ॥, किं समुच्चितयोः, किंवा विकल्पेन द्वयोरपि ।, किं समुच्चितयोः, किं वा संबन्ध-समुदाययोः ।, किमेकत्वविशिष्टस्य ग्रहस्यैव विधीयते ।, किं वा ग्रहविशिष्टैकसंख्या संमार्गगामिनी ॥**'

'**एवं संदेह एताभिर्वचनव्यक्तिभिः कृते । उपादेयतया संख्यां विधेयां मन्यते परः ॥ येनयेन प्रकारेण संख्योपादीयते ग्रहे । संमार्गे वा विधीयेत स तमापादयिष्यति ॥ यथा वोद्दिश्यमानत्वे विधानं देशकालयोः । क्रियाद्वारं तथैव स्याद् ग्रहत्वैकत्वयोरपि ॥ यांयां स वचनव्यक्तिं विधेये रचयिष्यति । वाक्यभेदेन तांतां तु सिद्धान्ती दूषयिष्यति ॥ प्राधान्यान्न ग्रहस्तावदुपादेयो भविष्यति । तद्वशत्वात् तथैकत्वमुपादातुं न शक्यते ॥ ग्रहं चोद्दिश्य संमार्गविधानाश्रयणे सति । तन्मात्रक्षीणशक्तित्वादेकत्वं न विधास्यते ॥ न तावत् तद् ग्रहे शक्यं विधातुमपुनःश्रुतेः । द्वौ तत्रावर्तनीयौ हि स्यातां ग्रहविधायकौ ॥ ध्रुवं विधीयमाने हि संबन्धे ग्रहसंख्ययोः । ग्रहसंमार्गसंबन्धादधिकेऽर्थे विधित्सिते ॥ ग्रहोऽप्यावर्तनीयः स्यात् संबन्धद्वयसिद्धये । विधायकश्च नैकेन विधिना तौ हि सिध्यतः ॥ विदधद् द्वौ हि संबन्धौ युगपद्वा क्रमेण वा । द्विरनुच्चार्यमाणस्तौ विदध्यात् प्रत्ययः कथम् ॥ संख्यासंमार्गसंबन्धौ ग्रहोऽपि प्राप्नुवन्नुभौ । द्विरनुच्चार्यमाणस्तौ प्राप्नुयान्न सकृच्छ्रुतः ॥ ग्रहे विधाय संमार्गं क्षीणमुच्चारणं यदा । तदैकत्वविधानाय कार्यमुच्चारणान्तरम् ॥ पुनरुच्चार्यमाणश्च समाम्नायाद् बहिः स्थितः । प्रत्ययः पौरुषेयत्वादप्रमाणं प्रसज्यते ॥ सर्वप्रकारमन्विष्टं वचनव्यक्तिभिः पृथक् । न शक्यते विधातुं चेदेकत्वं न ग्रहीष्यते ॥ केन चित्तु प्रकारेण विधिरस्य भवेद् यदि । ग्रहादिवदनुष्ठाने क एकत्वं परित्यजेत् ॥ तत्र क्रियाप्रधानत्वे तद्विशिष्टविधेर्बलात् । विशेषणविधानं स्यादार्थविध्यन्तरोद्भवम् ॥ यदि क्रियाप्रधानत्वं लप्स्यते पूर्वपक्षिणा । ततः सर्व-**

शेषशेषित्वाभ्युपगमात् । तेन 'ग्रहाश्रितेन एकत्वेन संमार्गभावनां कुर्यात्' इत्येवमवगमयिष्यामः । तादर्थ्य-संबन्धे च भावनां प्रति निर्वृत्ते अरुणैकहायनीन्यायेन पश्चात्तनो विशेषणविशेष्यभावः । सोऽयं पदेन प्रत्याय्यते । अथवा यदा एकत्वं स्वार्थत्वेन ग्रहो नोपजीवितुं समर्थः इत्यवधारितं भवति, तदा असौ तद्भावनां वाक्येनापि गच्छन् न निवारयति । यद्वा सुतरां प्रेरयति 'भावनाऽर्थे हि सत् एतत् विधिना गृह्यमाणं पश्चादपि तावत् नियम्यमानं मां परिच्छेत्स्यति, अन्यथा तु मया अगृहीतं विधिना उपेक्षितं तावत् भावनायाः न मम स्यात् ।' अथवा ग्रहार्थमेव एतदस्तु । तच्च ग्रहार्थत्वं येन प्रकारेण उपपद्यते, स दर्शयितव्यः । तत्र यदि ग्रहः स्वरूपमात्रेण भावनायामनुप्रविशेत्, ततः एकत्वं पश्चात् भविष्यत् अगृहीतं भावनया भावनागतं न स्यात्, ग्रहस्वरूपस्यैव स्यात् । अतः असौ एकत्वपुरःसरमेव तत्समानदेशं वा पृथक्पदोपात्तारुणादिवदेव आत्मानं प्रतिपद्यते । कुतः ? '**विशिष्टो हि विधिः कृत्स्नो नाग्रवलृप्तविशेषणः । विशिष्टो विशिनष्टीति तत्पूर्वं प्रविशत्यसौ ॥ गृह्णती भावनाऽप्येवमेकसंख्यं ग्रहं श्रुतम् । न गृह्णाति विशिष्टं तमगृहीतविशेषणम् ॥**' एवं च सति भावनाप्रविष्टं तद्विधिनाऽपि संस्पृश्यमानं द्रव्यगुणयोर्नियमे सति ग्रहस्य जातं भवति । अथ श्रुतिबलीयस्त्वात् अस्य द्रव्यसंबन्ध उच्यते, तदेव अत्यन्तविपरीतम् । प्रातिपदिकोपात्तं हि द्रव्यं समानपदोपात्तत्वेन प्रत्यासन्नं स्यात् । इह तु समानविभक्त्युपादानात् । एकत्वं कारकविशेषणं शीघ्रतरं गम्यते । कारकं च विभक्तिप्रतिपादितं आविर्भूतपूर्वापरीभूतभावनैकदेशः इत्युक्तम् । प्रत्ययार्थत्वात् एतदेव प्रधानम् । सर्वं च संभवत् प्रधानगामि भवति । तेन ग्रहश्च एकत्वं च उभयमपि कारकीभूतं विभक्तिश्रुत्यैव भावनायां प्रक्षिप्यते इति विधीयते । तत्तु विशिष्टविधानात् । वक्ष्यति हि 'शब्दवत्तूपलभ्यते, तदागमे हि तद् दृश्यते, तस्य ज्ञानं यथाऽन्येषाम्' (४।१।५।१५) इति । यथैव दशापवित्रेण श्रुतो नान्येन क्रियते, संमार्गश्च श्रुतो नावघातः क्रियते, ग्रहस्य श्रुतो नाग्रहस्य क्रियते, तथा एकस्य श्रुतो नानेकस्य कर्तव्यः । सर्वेषां च एतेषां पूर्वाधिकरणन्यायेन परस्परनियमः । (**पूर्वपक्षमुपसंहरति–**) तस्मात् उपादीयमानपश्वादिवत् एव उद्दिश्यमानस्यापि संख्या विवक्षिता । (भाष्ये–) पुंपशुश्चेति प्रसङ्गात् उदाहृतम्, न तु अत्र लिङ्गमपि तुल्यन्यायत्वात् संख्याविचारेण विचारितप्रायमेव इत्युदाह्रियते, मा भूत् 'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः' (६।१।३।६) इत्यस्य पुनरुक्तता ।

**सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् । १४ ॥**

**भाष्यम्**— नैतदस्ति, यदुक्तं ग्रहादिषु एकत्वयुक्तेषु अमी पदार्थाः कर्तव्या इति । सर्वे ग्रहाः संमार्ष्टव्याः, सर्वेभ्योऽग्निभ्यः तृणानि अपचेयानि, पुरोडाशमात्रं च पर्यग्नि कर्तव्यमिति ; कुतः ? ग्रहजात्या द्रव्यं लक्षयित्वा संमार्गादि विधीयते । अविशिष्टं च लक्षणं सर्वद्रव्येषु । तत्र न गम्यते विशेषः, को ग्रहः संमार्ष्टव्यः को नेति । सामान्यावगमात् विशेषानवगमाच्च सर्वप्रत्ययः । तथा अग्निपुरोडाशानामपि । ननु एकवचनं श्रूयते, तत् विशेक्ष्यति । नैतदस्ति । एकत्वं हि श्रूयमाणं ग्रहादिषु एकत्वं ब्रूयात्, न द्वितीयादीन् प्रतिषेधेत् । एकत्वस्य असौ वाचकः, न द्वितीयादेः प्रतिषेधकः । तेन अप्रतिषिद्धे द्वितीयादौ सामान्यवचनेन प्राप्तं संमार्जनादि किमिति न क्रियेत । तत्र एतत् स्यात्, एकवचनमिह श्रूयमाणं प्राप्ते एव एकस्मिन् द्रव्ये द्वितीयादिषु च किमन्यत् कुर्यात् अन्यतः परिसंख्यायाः । न चेत् एकवचनं परिसंचक्षीत द्वितीयादीन्, अनर्थकमेव स्यात् । शक्नोति च द्वितीयादीन् निवर्तयितुम् । यथा 'अश्वाभिधानीमादत्ते' इति गर्दभाभिधानीं परिसंचष्टे, एवमत्रापि द्रष्टव्यमिति । **नैतदेवम्** । तत्र मन्त्रस्य अभिधान्याश्च यः संबन्धः, तदभिधानपरं वचनम् 'इमामगृभ्णन् इति अश्वाभिधानीम्' इति, न 'अनेन मन्त्रेण आदत्ते' इति, लिङ्गेनैव आदाने प्राप्तत्वात् मन्त्रस्य, परिसंख्या युक्ता । इह पुनः यत् एकवचनं द्रव्ये श्रूयते, तत् श्रूयमाणमपि अविधीयमानत्वेन न निवर्तकं भवितुमर्हति । यथा कश्चित् ओदनं निर्दिश्य ब्रूयात् 'य एनं भक्षयेत् कश्चित् श्वा मार्जारो



वा, स निवारयितव्यः' इति । तत्र यदि भक्षणं निमित्तत्वेन विधीयते न श्वमार्जारसंबन्धः, ततः काकोऽपि आगच्छन् निवार्यते, श्रूयमाणेऽपि शुनि मार्जारे वा श्वमार्जारसंबन्धस्य निमित्तत्वेन अविधीयमानत्वात् । एवमिहापि एकत्वसंबन्धस्य अविधीयमानत्वात् श्रूयमाणेऽपि एकत्वे ग्रहमात्रं संमृज्येतेति । न चात्र द्रव्यैकत्वसंबन्धविधायकः कश्चित् शब्दोऽस्ति । ननु 'संमार्ष्टि' इति (अस्ति विधायकं पदम्) । नहि एतत् द्रव्यैकत्वसंबन्धस्य विधायकम् । कस्य तर्हि ? द्रव्यसंमार्गसंबन्धस्य विधायकम् । एवं श्रुत्या स्वपदार्थो विहितो भवति, इतरथा वाक्येन परपदार्थो विधीयेत । श्रुत्यसंभवे च वाक्यं क्रमते, न संभवन्त्यां श्रुतौ । अतः अविधीयमानं विशेषणत्वेन एकत्वं न द्वितीयादीन् प्रतिषेद्धुमर्हति । एवं सति न द्वितीयादौ संमार्गादि क्रियमाणमचोदितं भवति, प्रतिषिद्धं वा । यथैव हि तत् एकस्य श्रुतमवगम्यते, तथा द्वितीयादेरपि । अयं च अपरो दोषः न तत् एकत्वं द्रव्यस्य संमार्गादौ विषये नियम्येत । नहि संमार्गादिः यस्मिन् द्रव्ये एकत्वं नियम्येत, तस्य विशेषणत्वेन भवति । विधीयते हि अत्र संमार्गादिः, न प्राप्तो लक्षणत्वेन द्रव्यस्य आम्नायते, नहि यौगपद्येन विधातुं शक्यते लक्षणत्वेन च उच्चारयितुम् । प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुम् । न च अविहितः एवंजातीयकः शब्दावगम्यः प्रसिद्धसंबन्धो भवति । विधीयते च संमार्गादिः । तस्मात् न विशेषकः । न चेत् विशेषकः, न द्रव्ये एकत्वं नियम्यते इति शक्यमाश्रयितुम् । अथ एकत्वं संमार्गे उच्यते, तत्रापि द्वयी गतिः स्यात्, एकत्वं प्रधानं संमार्गो वा । तच्च उभयमपि अनुपपन्नम् । न तावत् एकत्वस्य संमार्गः शक्यते कर्तुम् । न च द्रव्ये क्रियमाणः एकत्वस्य उपकरोति केन चित् प्रकारेण । न च एकत्वस्य उपकृतेन किञ्चित् प्रयोजनमस्ति, नहि तत् गुणभूतं श्रुतम् । अथ एकत्वं संमार्गं प्रति गुणभूतमिति, तदपि न । कथम् ? अमूर्तत्वात् । नहि तत् संमार्गं निष्पादयति । यद्यपि अन्यत् अमूर्तं क्रियां निष्पादयति साधनं विशिंषत्, तथापि एतत् न भवितुमर्हति । नहि अत्र ग्रहः संमार्गार्थः, संमार्गः अत्र ग्रहाय चोद्यते, स हि प्रयोजनवान् । कल्प्यप्रयोजनः संमार्गः । यदि ग्रहः संमार्गस्य उपकुर्यात्, तत् उपकारिणः उपकरोति इति संमार्गस्य उपकारकमेकत्वं भवेत्, न तु एतदेवम् । तस्मात् एकत्वसंमार्गयोः असंबन्धः । **ननु** प्रधानभूतमपि ग्रहादि, संमार्गं निष्पादयत्येव, अतस्तत् साधनम्, तच्च विशिंषत् तत् उपकरिष्यति । यथा इज्यार्थे दधनि पयसि च प्रणीताधर्माः पाके उपकुर्वन्ति, परिधानार्थे च परिधौ यूपधर्मा बन्धने । तस्मात् अयमसमाधिः इति । **अत्रोच्यते** । न ब्रूमः अतदर्थे साधके न शक्नुवन्ति उपकर्तुमिति, किं तर्हि ? यदा प्रधानभूतं ग्रहादि लक्षणत्वेन उच्यते, न तदा एकत्वस्य ग्रहादिना संबन्धः, न संमार्गादिना इति । कथम् ? यावदिह लक्षणत्वेन किञ्चिदुच्यते, संवादस्तत्र भवति, न तु तत् विधीयते विज्ञानाय । किमर्थं तर्हि उच्चार्यते ? अन्यत् तस्य किञ्चित् विधास्यते इति । तदेतत् ग्रहादि लक्षयित्वा, तस्य संमार्गादि विधीयते । तत् यदि एकत्वसंबन्धः अपरो द्रव्ये संमार्गादौ वा विधीयेत, द्वयोः संबन्धयोः विधानात् भिद्येत वाक्यम् । **अथोच्यते** ग्रहादि लक्षयित्वा तस्य एकत्वसंबन्धो विधीयते, न संमार्गादिसंबन्ध इति । **तथा च** संमार्गादीनामध्ययनं प्रमादः इति अभ्युपगतं स्यात्, न चैतदेवम् । तस्मात् उभाभ्यामेकवचनस्य असंबन्ध इति । एवमेतत् एकत्वं ग्रहस्य न किञ्चित् उपकारं करोति न संमार्गस्य, एवमेव सत् अनूद्यते । तस्मात् नैतत् किञ्चिदपि कर्तुं विवक्ष्यते इति सर्वेषां ग्रहादीनां संमार्गादि कर्तव्यमिति । कुतः । संयोगतोऽविशेषात् प्रकरणाविशेषाच्च । **यदि** अविवक्षितमेकत्वम्, कथं तर्हि एकवचनमुच्चार्यते, (स एवाह–) ननु बहुषु विवक्षितेषु बहुवचनेन भवितव्यम् । **उच्यते** । न वयम् एतत् विचारयामः एकवचनमुच्चारयितव्यं नोच्चारयितव्यमिति । उच्चार्यमाणे सति किं प्रतिपत्तव्यम् एकस्मिन्नेव संमार्गादि उत सर्वेष्विति, तच्च सर्वेषु इति स्थापितम् । अपिच न विभक्तेः वचनमेव एकं प्रयोजनम्, किं तर्हि कारकसंबन्धोऽपि । अविवक्षिते एकत्वे कारकसंबन्धार्थमस्योच्चारणं भविष्यति । तस्मात् नानर्थकम् । अपिच ग्रहः प्रातिपदिकार्थः, एकत्वं विभक्त्यर्थः । किमतो यदि एवम् ? एतदतो भवति, प्रातिपदिकार्थगतं हि विभक्तिः

विवक्षाऽपि तद्-द्वारेणास्य सेत्स्यति ॥ तस्मान्न श्रुतमात्रत्वं विधिग्रहणकारणम् । अतः शुक्लादिभिस्तुल्यं नैतदन्यैर्विशेषणैः ॥ द्रव्यस्य क्रिययोर्वैतदेकत्वं स्याद् विशेषणम् । येनेदमात्मसात् कुर्युर्ग्रहसंमार्गभावनाः ॥'

तत्र द्रव्यविशेषणं तावत् निराक्रियते । तत् हि स्वरूपप्रक्षेपेण वा भवेत् अनेकत्वनिराकरणेन वा । तत्र स्वरूपप्रक्षेपविशेषणफलं तावत् सर्वेष्वपि संमृज्यमानेषु संभवत्येव । कथम् ? यो हि बहून् ग्रहान् संमार्ष्टि, संमार्ष्टि असौ एकम् । अतश्च ग्रहत्वसंबन्धेन प्राप्तः एकवचनेन च अप्रतिषिद्धः किमिव द्वितीयादेः संमार्गो न क्रियेत । तत्र एतत् स्यात् प्रातिपदिकादेव एकस्मिन् अनेकस्मिंश्च ग्रहे संमार्जनीये प्राप्ते, पुनः एकवचनश्रुतिः गुणार्थवादत्वेन असंभवन्ती परिसंख्याऽर्था भविष्यति । नैतदेवम् । कुतः ? 'यत्र सामान्यतः प्राप्स्यन् विशेषे श्रूयते पुनः । परिसंख्येष्यते तत्र, न त्विहैवं पुनःश्रुतिः ॥' तच्च नानावाक्यत्वे सत्येव भवति । इह तु एकेनैव वाक्येन प्राप्तिः परिसंख्या च क्रियते इत्युक्तम्, तच्च अत्यन्तमेव अनुपपन्नम् । 'न चैकवाक्यमात्रेण द्वयमेतत् चिकीर्षितम् । किं त्वेकेन पदेनापि तच्चाश्चर्यमतीन्द्रियम् ॥' प्रातिपदिकेन हि सर्वग्रहसंबन्धः प्राप्यते । प्रत्ययैकवचनेन तत्रैव पदे निवर्त्यते । न च एतत् उत्प्रेक्षितुमपि शक्यते । 'अन्या हि वचनव्यक्तिर्वाक्ये प्रापकहायके (ह्रापके) । यथा, तथा पदव्यक्तिभेदोऽप्यत्र प्रसज्यते ॥ तत्रैव च क्षणे प्राप्तिस्तत्रैव च निवर्तनम् । कथमेकपदेनैतद् विरुद्धमभिधीयते ॥' किञ्च 'सामान्यप्रापणाशङ्का वाक्याद् यत्रानुमानिकात् । श्रुतात् प्राप्तिर्विशेषे च परिसंख्या तदाश्रया ॥ निर्दोषत्वं हि तत्रास्या विधाने सति लभ्यते । कल्प्यत्वेन हि तस्यैषा क्लृप्तादाश्रीयते फलात् ॥' समानवाक्यपदपूर्वभागावस्थितप्रातिपदिकप्रापितसर्वग्रह-संमार्गज्ञानप्रत्याख्यानेन (ने त) तदधीनात्मलाभप्रत्ययप्रतिपाद्यायाः परिसंख्यायाः त्रिदोषत्वम् अपरिहार्यम् ।

यत्तु भाष्यकारेण निर्दोषपरिसंख्याविषयं प्रदर्शयता इष्टानिष्टवचनव्यक्तिद्वयं प्रदर्शितम् 'इत्यश्वाभिधानीम् इति, न इत्यादत्ते ' इति । मन्त्रस्य रूपादेव आदाने प्राप्तत्वात् इति च कारणमुक्तम् । (अक्षरपरिवर्तनेन भाष्यानुवादोऽयम् ) । तदयुक्तम् । कुतः ? 'इत्यादत्त इति ह्यस्मादाख्याताद् विधिसंभवः । संबन्धेऽश्वाभिधान्यां तु नास्ति कश्चिद् विधायकः ॥ आदाने च यथा प्राप्तिरगृणन्निति रूपतः । तथैवाश्वाभिधान्यां सा तुल्या स्याद् रशनापदात् ॥ न वाऽर्थविप्रकर्षोऽस्य रशनां प्रति कश्चन । संयोगतो विशेषेण (तोऽवि) युगपत् प्रत्ययाद् द्वयोः ॥ सुतरां विधिवाक्ये तु विशेषः श्रुतिवाक्ययोः । धात्वर्थनामसंबन्धविवेकेनोपलभ्यते ॥ पदत्रयाद् विना नामसंबन्धो नावकल्पते । इत्यादत्त इति त्वेष द्वाभ्यामेव समाप्यते ॥ प्रत्ययश्च यथा मन्त्रं विधत्ते धातुगोचरे । स्वपदार्थे श्रुते शीघ्रं न नामार्थे तथा श्रुते ॥ मन्त्रोऽपि रशनां शीघ्रं यथा याति स्फुटश्रुताम् । न तथा ग्रहणं कष्टं छान्दसीयपदोदितम् ॥ न चाश्वरशनायां स प्राप्त्यन्तरमपेक्षते । विशेषशब्दतुल्यं हि प्रापणं रशनापदात् ॥ अपूर्वसाधनत्वांशलक्षणाऽवश्यमेव हि । सर्वत्रैवाश्रिता श्रुत्या विधिः स्यान्निष्प्रयोजनः ॥ तत्राश्वरशनाशब्दो लक्षणां याति यावता । तावता रशनाशब्द इति तुल्यार्थता तयोः ॥ तस्मान्नादत्त इत्येतद् रूपात् प्राप्तमनूद्यते । न वेत्यश्वाभिधानीमित्येतदत्र विधीयते ॥ किन्त्वश्वरशनामन्त्रधात्वर्थैर्युगपत् त्रिभिः । विशिष्टा भावनैवैका प्रत्ययेन विधीयते ॥ न चादानेऽस्ति मन्त्रस्य रूपात् प्राप्तिः कथञ्चन । नहि श्रुत्यनुमानात् प्राक् स्वयं मन्त्रो विधीयते । रूपप्रकरणद्वारा श्रुतियाश्चस्तु कल्प्यते । तावत् प्रत्यक्षया श्रुत्या विधिः शीघ्रं समाप्यते ॥ अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः । परिसंख्या फलेनोक्ता, न विशेषपुनःश्रुतेः ॥ प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे । न गर्दभाभिधानीतः फलमन्यन्निवर्तनात् ॥ न तु वाक्यार्थ एवान्य-



निवृत्तिर्भेदपक्षवत् । अप्रवृत्त्यैव तत्सिद्धेः, प्रवृत्तो हि निवर्त्यते ॥ न च गर्दभबन्धन्यां प्राप्तोऽननुमितश्रुतिः । मन्त्रो येन निवर्त्येत वाजिरज्जुपुनःश्रुतेः ॥ शीघ्रश्रुत्या पुरा प्राप्ते पश्चिमा स्यात् पुनःश्रुतिः । न गर्दभश्रुतिप्राप्त्या युक्ता त्वश्वपुनःश्रुतिः । अश्वश्रुत्यैव शीघ्रत्वान्मन्त्रे प्राग् विहिते सति । निराकाङ्क्षीकृताम्नाये तथा प्रकरणिन्यपि ॥ लिङ्गप्रकरणद्वारा श्रुतिर्नैवानुमीयते । सत्यामप्रापितायां च मन्त्रप्राप्तिर्न गर्दभे ॥ सोऽयमाभाणको लोके 'यदश्वेन हृतं पुरा । तत् पश्चाद् गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ॥' प्रयोजनं तु प्रत्यक्षश्रुतेरालोच्यते यदा । भवत्या किं प्रभुत्वेन निरुद्धा लैङ्गिकी श्रुतिः । यदाऽनुमितयाऽप्येष श्रुत्याऽश्वरशनां प्रति । प्राप्नुयादेव मन्त्रः किं त्वरया विहितस्त्वया ॥ सत्यं त्वद्विहितस्यास्य श्रुतिर्नास्त्यानुमानिकी । तथापि तन्निरोधस्य फलं किमधिकं तव ॥ यद्यश्वरशनाप्राप्तिं केवलामानुमानिकीं । प्रत्यक्षश्रुतिवत् कुर्यात् ततः सा स्यादनर्थिका ॥ लिङ्गानुमितया श्रुत्या प्राप्नुयाद् रशनाद्वये । स मा प्रापत् तयेत्येवं प्रत्यक्षा त्वरिता श्रुतिः ॥ केवलाश्वाभिधान्यां हि विधिः प्रत्यक्षया यथा । न स्यात् तथाऽनुमानिक्या श्रुत्येत्याम्नायते ह्यसौ ॥ अतश्चापुनरुक्तत्वात् प्रत्यक्षाऽर्थवती श्रुतिः । तस्यां सत्यां निराकाङ्क्षान्मन्त्रान्नान्याऽनुमीयते ॥ यद्यस्य विनियुक्तस्य प्रत्यक्षा स्यात् पुनःश्रुतिः । ततश्च परिसंख्यानात् प्रसज्येत त्रिदोषता ॥ यदा तु प्रतिबद्धत्वात् सामान्यविनियोगकृत् । नैव चेच्छ्रुतिरस्तीह न प्राप्नोति त्रिदोषता ॥ तदिदं परिसंख्येति सूत्रेऽस्मिन्नुपवर्णितम् । निर्दोषत्वं तथैवेह वाच्यं न पुनरन्यथा ॥' (यथाश्रुतभाष्यदूषणमुपसंहरति— ) 'तत्रश्च भाष्यकारेण यदिहोक्तमचिन्तितम् । वाक्यभङ्ग्यन्तरम्, तत्र कर्तव्योऽतीव नादरः ॥'

न च एकत्वसंबन्धमात्रविधिः शक्यः, संमार्गग्रहसंबन्धमात्रविधानोपक्षीणशक्तित्वात् विधायकस्य । यथा ओदनोपघातनिवारणविधिपरे वाक्ये श्रुतानामपि श्वमार्जारादीनामविधीयमानत्वात् अविशेषणत्वम् । कुतः ? 'नह्यन्नभक्षणाद् रक्ष्याः श्वमार्जारादयोऽत्र नः । तुल्यान्नाद्योपघातात्तु काकादेरपि वारणा ॥' तथा चाह 'काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि चोदितः । उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' न तु इदमत्र उदाहरणं घटते । कुतः ? 'पदार्थ एव काकादिः सर्वो ह्यत्राविवक्षितः । संख्यामात्राविवक्षा तु ग्रहस्येति विलक्षणम् ॥ चमसेष्वपि संमार्गप्रसङ्गो यत्र वक्ष्यते । तत्रैवैतदुदाहार्यं स्थालसंमार्जनादिवत् ॥' स्थितसिद्धान्तोदाहरणमपि पशुप्रकरणे श्रूयते 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति । 'यत् अवत्तम्, तत् पञ्चसंख्यं कार्यम्' इत्येतद्विधिपरे वाक्ये वपाग्रहणमविवक्षितं वाक्यभेदप्रसङ्गात् इति दशमे (१०।७।२०।७३) वक्ष्यति । तत्र श्वमार्जारादिसंबन्धाविवक्षोदाहरणं घटते । इह तु 'संख्यामात्रविवक्षायां लोके यच्छ्रूयते वचः । तदुदाहरणं देयं वृषलस्य बहुत्ववत् ॥ वृषलैर्न प्रवेष्टव्यं गृहेऽस्मिन्निति चोदिते । प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते ॥' बहुत्वस्य अविवक्षितत्वात् ।

'ननु संमार्ष्टि इति' अयमेव ग्रहैकत्वसंबन्धमपि विधास्यति । न, श्रुतिविप्रतिषेधात् । नहि एको विधायकः शक्नोति संमार्गभावनां च विधातुं ग्रहैकत्वसंबन्धं च । तत्र विरोधे सति संनिकर्षतत्तीयस्त्वात् संमार्गभावनाविधाने आश्रीयमाणे विध्यन्तरानुपपत्तेः अग्रहणम् एकत्वस्य । यत्तु उक्तं विशेषणविशेषणमपि विधीयते इति, तत् अनुपपन्नम् । 'यदि तावद् ग्रहः संख्यां क्रियायै न प्रयच्छति । शुद्धेनैव विशिष्टत्वान्न विशिष्टविशिष्टता ॥' यदा हि एकत्वविशिष्टमात्मानं ग्रहो भावनायां प्रक्षिपति, तदा अवश्यं विशेषणं पूर्वतः प्रक्षेप्तव्यम् । नहि अन्यथा विशिष्टेन विशेषिता स्यात् इति, एवं भावनाऽपि एकत्वविशिष्टं ग्रहं गृह्णती न एकत्वमगृहीत्वा तद्विशिष्टं ग्रहं शक्नोति ग्रहीतुम् । तद्यथा शब्दो जात्यादिविशिष्टं द्रव्यमभिदधत् न विशेषणमनभिधाय विशिष्टे वर्तते । तेन अवश्यं भावनाविशेषणं तावत्

एकत्वम् इति आश्रणीयम् । तच्च उपरिष्टात् निराकरिष्यामः । शुद्धद्रव्यविशेषणत्वे तु भावनाऽपि ग्रहमात्रेण संबद्धा न संख्यया, संख्याऽपि ग्रहमात्रेण संबद्धा न भावनया । तत्र विशिष्टविधिना भावनाविशेषणमात्राक्षेपपर्यवसायिना न अर्थान्तराक्षेपः शक्यः कर्तुम् । नहि भावनां विशिषतः तस्य तदेकत्वं विशेषणम् । **'न चकत्वविशिष्टं तं ग्रहं गृह्णाति भावना । स्वरूपान्तरितत्वाद्धि** ( ग्रहविशेषणीभूतायाः संख्यायाः ग्रहस्वरूपेण भावनाविशेषणेन व्यवहितत्वात् इत्यर्थः) **सा संख्यां नैव पश्यति ॥'** नापि भावनाविशिष्टस्य ( भावनां प्रति विशेष्यभूतस्यापि ग्रहस्य एकत्वं विशेषणम् इत्यध्याहारः ), मा भूत् पुनरपि भावनाविशेषणत्वमेव । नहि भावना ( एकत्वेन ) अविशिष्टं ग्रहं विशेष्टुं शक्नोति । तस्मात् मौलिकेन विधिना अनाकाङ्क्षितत्वात् न द्रव्यविशेषणाक्षेपः संभवति । तथा सत्यपि चेत् विधिरभ्युपगम्यते तत् प्रत्ययावृत्तिमन्तरेण तदनुपपत्तेः वाक्यभेदः स्यात् । अभ्युपेत्यापि तु संमार्गवेलायां नैकत्वमादर्तव्यम्, स्वतन्त्रस्य ग्रहस्यैव एकत्वसंबन्धविधानात् । ' नहि विधीयमानावस्थः क्रयः गुणेन संबध्यमानं द्रव्यं विशिनष्टि ' इत्युक्तम् अरुणाधिकरणे ( ३।१।६।१२ पृ. ६८९ ' विशेषणं हि प्रसिद्धं भवति । न च विधीयमानावस्थः क्रयः प्रसिद्धः ' इत्युक्तं वार्तिके एव । सु. पृ. १०२७ ) । तस्मात् तावत् न द्रव्यविशेषणभूतस्य ग्रहणम् । अथ एतदेकत्वं संमार्गभावनायाः चोद्यते, तथापि न गुणत्वेन, नापि प्रधानत्वेन संभवति । तत्र प्राधान्यं तावत् अनुपपन्नम् अमूर्तस्य संस्कर्तुमशक्यत्वात् । न च द्रव्यसंस्कारेण तत्संस्कारः, ( द्रव्यात्– ) अन्यत्वात् । ग्रहस्य वा अयमेकत्वद्वारेण विधीयते, तस्य च स्वयमेव विहितत्वात् पुनर्विधानानर्थक्यम् । अनुष्ठानकालेऽपि च ग्रहस्य आत्मीय एव संमार्गः प्रत्यभिज्ञायते इति न एकत्वनिमित्तबुद्धिः स्यात् । एवं गुणाभावोऽपि निराकर्तव्यः । कथमरुणत्वस्य गुणत्वमिति चेत्, अत आह **'क्रयद्रव्यपरिच्छेदाद् गुणोऽपि गुण इष्यते । न तु निष्फलसंमार्गगुणो ग्रह इहेष्यते ॥'** ( क्रयाङ्गैकहायनीद्रव्यपरिच्छेदद्वारा आरुण्यं गुणोऽपि क्रयाङ्गमिष्यते । ग्रहस्य तु निष्फलसंमार्गं प्रति अङ्गत्वायोगात् न तत्परिच्छेदद्वारा एकत्वस्य संमार्गाङ्गता युक्ता इत्यर्थः ) अनङ्गमाश्रितो हि गुणोऽपि अनङ्गमेव स्यात् । ' ननु प्रधानभूतमपि ' इति ( भाष्यम् ) । यत् द्रव्यस्य आदौ निर्वर्तकत्वं प्रासङ्गिकम्, तद्द्वारेण एकत्वं संमार्गस्य उपकरिष्यति । प्रधानभूतोऽपि च ग्रहः गुणभूतद्रव्यधर्मे क्रियाऽङ्गगुणपरिच्छेद्यत्वं प्रतिपत्स्यते । नहि शेषमाश्रितः शेषः, किं तर्हि ? उपकारिणमाश्रितः उपकरोति इति सर्वत्र स्थापयिष्यामः । शेषत्वं तु श्रुत्यादिप्रमाणकमेव भविष्यतीति । सिद्धान्तवादी तु वस्तुनि उपपद्यमानेऽपि अनेकार्थत्वे विधिशब्दस्य असामर्थ्यात् व्यवहितो वा गुणो वा हातव्यो भवति इत्येवं एकत्वपरित्यागं वदति ।

( एकत्वस्य क्रियाविशेषणत्वपक्षे विवक्षानिरासभाष्यम् आक्षिपति–) न तु एतदेवम् अविवक्षितं भवितुमर्हति । कथम् ? **'अविवक्षोपपन्ना स्यात् सत्यं द्रव्यविशेषणे । संमार्गेण तु संबन्धो न द्वेधाऽपि निराकृतः ॥'** यत् तावदुक्तम् अमूर्तत्वात् संस्कर्तुं न शक्यते इति, तत् प्रातिपदिकार्थेऽपि ग्रहत्वे तुल्यम्, जातेरमूर्तत्वात् । अथापि व्यक्तिद्वारेण अस्याः संस्कारः, स संख्यायामपि तुल्यः । अथ व्यक्तौ कृतो जातेः कृतो भवतीति, तथा एकत्वस्यापि । तथा यदि जातिर्द्रव्यलक्षणार्था, तथा एकत्वमपि । अथ जातेर्मूर्तत्वं द्रव्यव्यतिरेकं चाश्रित्य साक्षादेव संस्कार इत्युच्यते, तदपि एकत्वस्य अविशिष्टम् । यदप्युक्तं न च द्रव्ये क्रियमाणः संख्यायाः कृतो भवतीति, तदपि त्वत्पक्षे जातेरविशिष्टम् । अथ ग्रहशब्दस्य व्यक्तिवाचित्वात् परिहार उच्यते, ततः आकृत्यधिकरणन्यायो बाध्येत, नहि अनेकदेशकालवर्तिज्योतिष्टोमप्रयोगस्थग्रहव्यक्तिसंबन्धानुभवोऽस्ति, अद्य दृष्टेषु ग्रहेषु प्रथमः शब्दप्रयोगो न स्यात् । अतोऽवश्यं सामान्यं किञ्चिद् उपलक्षणमाश्रयितव्यम् । न च तत् ग्रहत्वादन्यत् संभवति इति तदेव विशेषणत्वात् पूर्वमभिधेयमापद्यते । न च आकारवचनत्वं ग्रहशब्दस्य, प्रतिग्रहम् अवयवसंनिवेशस्य किञ्चिन्न्यूनातिरिक्तावयवत्वेन भिन्नत्वात् । न च तत् सामान्यं द्रव्यान्तरेभ्यो निवृत्तं तेषुतेषु चानुवृत्तं ग्रहत्वात् अन्यदस्ति, तस्मात्



तदेव वाच्यम् । यत्तु ग्रहस्य क्रियमाणः संमार्गः तदीयत्वावधारणेन एकत्वविषयो विज्ञायते इति मन्दफला च पुनःश्रुतिरिति, तत्राभिधीयते **' एकत्वेनापि संबध्य तावत्येव क्रिया यदि । ततो निष्फलतोच्येत भेदस्त्वस्त्येकसंस्कृतेः ॥ '** अयमेव एकत्वसंबन्धात् विशेषः, यत् एकस्मिन् क्रियते, अन्यथा हि ग्रहमात्रसंस्कारः स्यात् । तस्मात् द्रव्यगुणयोः नियमसिद्धेः अस्ति अरुणाशब्दस्येव एकत्वसंबन्धस्य पृथक् प्रयोजनमिति संस्कार्यत्वोपपत्तिः । गुणत्वप्रतिज्ञानं तु प्रणीताधर्मवत् भाष्यकारेणैव प्रतिपादितम् । मन्दयुक्तिक एवायमभ्युपगमः, यत् गुणमेव आश्रितेन गुणेन उपकर्तव्यमिति । कुतः ? **' साक्षादयोग्यसंबन्धाः क्रियासंबन्धिनि स्थिताः । असंबद्धैरसंबद्धाः साधयन्ति गुणाः क्रियाम् ॥ '** असंबद्धेषु क्रियमाणा गुणाः क्रियां न परिच्छिन्द्युः, इति क्रियासंबन्धिनम् आश्रयन्ति, न तु तद्गतगुणप्रधानत्वयोः कश्चित् विशेषः. इति तयोरुपेक्षा । यथा च क्रियासाधनं किंसंख्यमेतत् भविष्यति इत्येतमपेक्ष्यते, तथैव प्रधानमपि किंसंख्यं यस्य मया ( क्रियासाधनेन ) उपकर्तव्यमिति, एतावच्च संबन्धे कारणम् । अपिच **' या गुणस्योपकुर्वाणमात्मसात् कुरुते गुणम् । ग्रहीष्यतितरामेषा तं तु संस्कार्यवर्तिनम् ॥ '** क्रियया हि प्रधानस्योपकर्तव्यम्, गुणेनापि । न च साधनगतोऽसौ तथागतां याति, यथा प्रधानगतः । ' को नु खलु मम प्रधानस्य उपकुर्वत्याः किञ्चिदनुग्रहं कुर्यात् ' इति । महांश्चायमनुग्रहः यत् प्रधानेयत्ताऽवधारणं नाम । यजमानसंस्काराणां च यागगुणभूतकर्त्रंशातिरेकेण फलप्रतिग्रहणयोग्यपुरुषकरणात् भोक्तृत्वांशपातिनामपि यागाङ्गत्वं वक्ष्यते ( ३।७।२।६ ) । स एवात्र न्यायः, इति अविरुद्धं प्रधानाश्रयिणां गुणत्वम् । एवं स्थितेषु तु यत् विधेः असामर्थ्यमित्युक्तम्, तत् उपादीयमानेष्वपि पश्वादिषु अविशिष्टम् । तत्रापि हि द्रव्यदेवतायागविशिष्टभावनाविधिपरे वाक्ये यदि लिङ्गसंख्यासंबन्धः अपरः क्रियायां द्रव्ये वा विधीयते, ततो वाक्यं भिद्येत इति शक्यं वदितुम् । अथ तु विशिष्टविधानात् अवाक्यभेदः, स संमार्गेऽपि अप्राप्तत्वात् अविशिष्टः । तदिह एतावानेव विशेषः अवशिष्यते, यत् ग्रहः उद्दिश्यमानः, पशुः उपादीयमानः, न चैतावता किञ्चित् सिध्यति, अन्यथा पशुग्रहसंबन्धमात्रभेदेनापि विवक्षिताविवक्षितत्वसिद्धिः स्यात् । अपिच अस्मिन्नेव वाक्ये ग्रहमुद्दिश्य संमार्गे विधीयमानेऽपि दशापवित्रतदेकत्वादीनां विवक्षा अभ्युपगम्यते, न च वाक्यभेदः, तथा ग्रहैकत्वेऽपि भविष्यति । यस्तु पदान्तरोपादानात् विशेषं ब्रूयात्, तस्य सर्वत्र यःकश्चित् विशेषोऽस्ति इति न क्वचित् दृष्टान्तो नोपमा, तुल्यन्यायानां विषयाभावात् । किञ्च **'पदान्तरगतो यस्य गुणोऽभीष्टो विवक्षितः । तस्य तुल्यपदोपात्तः कथं स्यादविवक्षितः ॥'** ( उद्देश्योपादेययोर्विशेषणविवक्षायाम् अविशेषमुपसंहरति आक्षेप्ता–) तस्मात् ग्रहैकत्वमपि विवक्षितम् । अस्ति हि उद्दिश्यमानस्यापि ग्रहस्य विधिसंस्पर्शः, अन्यथा हि विनाऽपि ग्रहेण संमार्गे कृते तत्कृतः शास्त्रार्थो भवेत् । अथ प्राप्तत्वात् ग्रहस्य अविधानमुच्येत, तदयुक्तम्, संमार्गं प्रति अप्राप्तत्वात् । अथ ज्योतिष्टोमे प्राप्तेः अविधिरुच्यते, स पश्वादेरपि लोके प्राप्तत्वात् प्राप्नोति । अथासौ यागे अप्राप्तो विधीयते, तत् ग्रहस्यापि अविशिष्टम् । अथ संमार्गस्य ज्योतिष्टोमप्रकरणाद्बहिर्भावात् ग्रहविधानमुच्येत, तत् पशुयागस्यापि लोकान्तर्गतत्वात् अविशिष्टम् । शक्यं हि ' यो ग्रहः ' इतिवत् ' यः पशुः ' इत्यपि वक्तुम् । उद्दिश्यमानत्वात्तु या अत्र ग्रहस्य अविधानाशङ्का, सा विध्यनुवादयोः उद्दिश्यमानोपादीयमानयोश्च अत्यन्तभेदात् अयुक्ता । तथाहि **' उद्देश्यस्यापि देशादेरेकान्तेन विधिः स्थितः । उपादेयोऽपि चालम्भः प्राप्तत्वान्न विधीयते ॥ '** तस्मात् विशिष्टसंमार्गविध्याक्षेपात् ग्रहत्ववत् एकत्वस्यापि विधिसंस्पर्शे सति अर्थात् गुणप्रधानभावः इति एकत्वं निष्प्रयोजनत्वात् गुणभूतम्, ग्रहश्च प्रयोजनवत्त्वात् प्रधानभूतः । किञ्च **' सह विध्यविधी युक्तौ न चैकपदगोचरौ । पदभेदो न च न्याय्यः प्रकृतिप्रत्ययौ प्रति ॥ '** ( कर्मव्युत्पन्नौ विध्यविधिशब्दौ ) एकस्मिन्नेव च पदे युगपदुच्चरिते ग्रहानुष्ठानं प्रति विधिराश्रीयते, नैकत्वम् इति विप्रतिषिद्धम् ।

न च विभक्तिः पदान्तरम्, स्वातन्त्र्येण अनियतपूर्वापरत्वेन च अप्रयुज्यमानत्वात्। गमकत्वात् पदमिति चेन्न, धूमादिषु अतिप्रसङ्गात्। एकस्मिन्नपि च आख्यातादिप्रत्यये अनेकोऽर्थः प्रतीयते इति प्रत्यर्थे पदत्वप्रसङ्गः। (अत्र आनन्दाश्रमीये 'आख्यातादिप्रत्ययेनैकोऽर्थः' इति मुद्रितम्। अस्माभिस्तु वाक्यार्थानुसारेण विपरिवर्तितम्। 'प्रत्यये नैकोऽर्थः' इति वा छेत्तव्यम्)। पदमिति च लौकिकः शब्दः, स यत्र लोकेन प्रयुज्यते, यत्र च स्मर्तृभिः स्मर्यते, न ततः अपनेतुं शक्यते। 'सुप्तिङन्तं पदम्' इति च स्मृतिः (पा० १।४।१४)। तत्रैव च पदशब्दः प्रयुज्यते। तस्मात् प्रकृतिप्रत्ययसमुदायः पदम्, नावयवः। अभ्युपेत्यापि तु '**विभक्त्युपात्तकर्मत्वविवक्षा चेदिहेष्यते। संख्याऽपि तदुपात्तत्वान्न शक्या न विवक्षितुम्**। अविवक्षायां शब्दस्य अश्रुतसमत्वमाश्रीयते। '**यावच्छ्रुतोऽपि शब्दः सन् नाश्रुतः परिकल्प्यते। तावत् तदुक्तमर्थं को वाक्यार्थादपनेष्यति** ॥' तदिह यदि तावत् संख्यापरित्यागात् विभक्तिः परित्यक्ता, ततः कर्मत्वपरित्यागोऽपि प्राप्नोति, ततश्च ग्रहस्य संस्कार्यत्वं हीयेत। प्रयोजनवत्त्वात् संस्कार्यत्वमिति चेन्न, कारकविभक्तिमन्तरेण क्रियासंबन्धाभावात्। नहि अविभक्तिकस्य 'ग्रह' इत्येतावतः 'संमार्ष्टि' इत्यनेन संबन्धः अवकल्प्यते। ततः अवश्यं कर्मत्वं विवक्षितव्यम्। अतश्च आदृतायां विभक्तौ एकदेशपरित्यागाभावात् संख्याविवक्षा दुर्निवारा, इति अशक्यः सर्वेषां संमार्गः। तथाहि '**संमार्गो यदि सर्वेषामेकत्वस्याविवक्षया। न कस्य चिद्भवेदेष ग्रहकर्माविवक्षया ॥ नह्येकस्मिन् पदे युक्तः प्रकृतौ प्रत्ययेऽपि वा। श्रुताश्रुतत्वसंकल्पो, विरोधात् सदसत्त्ववत् ॥ श्रुतशब्दाभिधेयानां नार्थानां युगपत् तथा। ग्रहणाग्रहणं युक्तमर्धकुक्कुटिपाकवत्** ॥' (अर्धं कुक्कुट्याः पच्यते भक्षार्थम्, अर्धं च स्थाप्यते प्रसवार्थम् इति यथा न युक्तं शक्यं वा तद्वत् इत्यर्थः)।

(आक्षिप्तं सिद्धान्तं समादधाति–) अत्र प्रतिविधीयते। '**प्राप्नोति हि प्रधानस्य विस्पष्टा सर्वसंस्क्रिया। गुणभूतविवक्षा तु न द्वितीयाविरोधतः** ॥' यदा हि ग्रहैकत्वोद्देशेन संमार्गो विधीयते, तदा उद्दिश्यमानयोः परस्परसंबन्धाभावात् प्रत्येकं वाक्यपरिसमाप्तिलक्षणस्तावत् एको वाक्यभेदः। उपादेयनानात्वे पुनः सर्वविशिष्टभावनाप्रयोजनत्वात् एककार्यत्वे सति आञ्जस्येनैव एकवाक्यत्वं स्यात्। अस्मिन्नेव च पक्षे प्रधानभूतक्रियावशीकारात् विशेषणानामन्योन्यनियमसिद्धिः। उद्दिश्यमानानां पुनः अवशीकृतत्वात् प्रत्येकं क्रियाग्रहणसामर्थ्यात् क्रियैव वशीकृता तैराकृष्यते इति एकैकस्य अन्योन्यनिरपेक्षस्य कर्तव्यता अवगम्यते। तदिह ग्रहः एकत्वनिरपेक्षः संस्कर्तव्यः, एकत्वमपि ग्रहनिरपेक्षं संस्कर्तव्यम्। तत्र यदि तावत् ग्रहगतमेव एकत्वं संस्क्रियते, ततः सापेक्षकरणात् उभयोः निरपेक्षसंबन्धावधृतं प्राधान्यं विहन्येत। अथ द्रव्यान्तरगतम्, तन्न ज्ञायेत किमिति। नहि ग्रहवत् किञ्चित् एकं नाम प्रकरणे पश्यामः। यदेव हि एकम्, तदेव अन्यापेक्षया अनेकम्। न च अत्रच्छेदे कारणं किञ्चिदस्ति, येन अन्यनिरपेक्षत्वेन एकमवधार्येत। ननु उत्पत्तौ यत् एकवचनान्तशब्दचोदितम्, तत् एकं भविष्यति। न, तेषामपि बहुत्वात् 'किम्' इति निरूपणाशक्तेः। अथ सर्वेषां कस्मान्न भवति? न, तत्रापि चोदितहान्यचोदितकरणापत्तेः। तथाहि, '**यदि तावद् विकल्पेन किञ्चित् संस्कृत्य तिष्ठति। अन्येषां चोदितं सन्तं विना हेतोस्तत्स्त्यजेत्** ॥' गुणभूतेन हि एकेन एकत्वयुक्तेन क्रिया साध्यमाना नान्यमपेक्षते, इति यत्किञ्चिदपि उपादाय शास्त्रार्थः कृतः स्यात्। प्राधान्ये पुनः यदेव एकत्वयुक्तं न गृह्येत, तस्यैव वैगुण्यं प्रसज्येत। यदि तु अन्यदपि संस्क्रियेत, ततः अनेकैकत्वसंनिपातात् संख्याऽन्तरोपजनने सति श्रुतैकत्वपरित्यागेन अनेकसंस्कारात् श्रुतं हीयेत, अश्रुतं च परिगृह्येत, वीप्साऽर्थश्च कल्प्येत 'एकैकं संमार्ष्टि' इति। जात्युद्देशेन शुक्लादिगुणान्तरोद्देशेन वा संस्कारे विहितेन संस्कृतावपि न जातिगुणान्तरापत्तिर्भवति। तथाहि '**न ग्रहान्तरसंमार्गे तस्माज्जात्यन्तरोद्भवः। संख्याऽन्तरवदित्येवं नैवावृत्तिर्विरुध्यते** ॥' तत्र एतत् स्यात्, सर्वेष्वपि संस्क्रियमाणेषु अनुष्ठानवेलायाम्



एकैक एव दृश्यते, तस्मादविरोध इति। उच्यते। '**तथा सति ग्रहैकत्वमस्तु नाम विवक्षितम्। सर्वः संमार्गवेलायां ग्रह एको भविष्यति** ॥' नहि कश्चिदपि युगपत् अनेकं ग्रहं संमार्ष्टि। ततश्च विवक्षितेऽपि तादृशमेव, इति मन्दं विवक्षाफलम्। ननु युगपत्संमार्गविरोध एव फलं भवति। नैतदस्ति, प्रत्येकं गृह्यमाणानां तद्वदेव संस्कारे सति यौगपद्यप्रसङ्गाभावात्। अभ्युपेत्यवादमात्रं चैतत् स्वतन्त्रैकत्वाप्रतीतेः। अतश्च एकत्वांशसंबन्धस्य अनवधारणेन अशास्त्रविषयत्वात् केवलग्रहपरमेव शास्त्रं विज्ञायते। यद्यपि च द्रव्यान्तरगतत्वेन तत् विवक्षितमेव, तथापि ग्रहस्य तावत् अविवक्षितमिति सिद्धः सर्वेषां संमार्गः। '**तस्माल्लक्षणमेवैतद् द्रष्टव्यं हि स्वगोचरे। संख्योद्देशेन संस्कारो नैव कश्चिद् विधीयते** ॥' अथ तु गुणभूतमेकत्वं विधीयेत, तत्र 'द्वितीया तावत् गुणभावं नैव ब्रवीति' इति व्याख्यातं सक्त्वधिकरणे (२।१।४।१२)। सा (द्वितीया) यदि अविवक्षितेप्सितार्था कारकमात्रलक्षणार्था (अर्थौ यस्याः इति बहुव्रीहिः) इति विवक्ष्यते, ततः स एव तावत् एको दोषः इति, एकत्ववच्च ग्रहस्यापि गुणत्वप्रसङ्गः। अथ ग्रहस्य प्राधान्यम्, एकत्वस्य च गुणत्वं परिगृह्येयाताम्, तथापि सकृदुच्चारणे गुणप्रधानत्वश्रुतिलक्षणाऽऽश्रयणात् विभक्तिवैरूप्यादिनिमित्तो वाक्यभेदः। तत्र एतत् स्यात्, ऐकरूप्यार्थमेकत्ववत् ग्रहस्यापि तावत् गुणत्वमेव अवगमयेत्, ततः प्रयोजनवत्तावशेन ग्रहस्य प्राधान्यम्। न च अर्थात् भवत् शब्दस्य वैरूप्यमापादयति इति। अत्र ब्रूमः। '**कथमादावसन्नेव गुणभावो विवक्ष्यते**। (कथम् आदौ असन् एव)। **कथं च संभवच्छब्दादर्थात् प्राधान्यमिष्यते** ॥' सर्वैव शब्दप्रवृत्तिः असंभवात् विप्रकर्षं प्रतिपद्यते, नास्मदिच्छामात्रेण। तदिह यदि तावत् श्रुतिवशात् प्राधान्यं परिगृह्यते, ततः तदेवैकम्। अथास्य कथञ्चित् असंभवं कल्पयित्वा लक्षणा आश्रीयते, ततः पुनः संभवकल्पनाविरोधात् सत्यपि प्रयोजनवत्त्वे शास्त्रवशेन गुणत्वप्रसङ्गः। युगपत्संभवासंभवपरिग्रहात् प्राधान्यगुणत्वयोः प्राधान्यालोचनेन विशेषाच्च शब्दक्लेशः। प्रथमं हि श्रुतिवशात् प्राधान्यं प्रतीयते, ततः तत् उज्झित्वा मध्ये गुणत्वम्, ततः तस्यापि असंभवात् अन्ते पुनः प्राधान्यमिति विक्षेपः। पश्चात्तनमपि च प्राधान्यम् अवश्यं शब्दे एव आरोपयितव्यम्। नहि अर्थो नाम किञ्चित् प्रमाणम्, किं तर्हि? शब्दशक्तिकल्पनाहेतुः। अतश्च अनेककल्पनानिमित्तो हि अस्त्येव वाक्यभेदः। किञ्च, '**विधीयमानमप्यर्थमन्यतो वाऽवधारितम्। अवश्यम्भाविनं प्राप्य न शब्दोऽन्यत्र वर्तते** ॥' यद्यपि च ग्रहस्य प्राधान्यं प्रयोजनवत्तयैव सिद्धम्, तथापि द्वितीया तत् आपादयन्ती सती नानुवादमात्रमपि लभमाना अर्थान्तरे वर्तेत। तद्यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्र प्रकरणप्राप्तमपि सन्तं होममेव धातुरनुवदति, न विधानार्थमपि अन्यदेव गमनादि धात्वर्थान्तरं ब्रवीति इति। ततश्च ग्रहस्य प्राधान्यानुवादात्, एकत्वस्य च गुणभावविधानात्, अपरो वाक्यभेदः। श्रुत्या च अवश्यम्भाविनि ग्रहप्राधान्यविधाने लभ्यमाने को जातु चित् अर्थात् क्लेशेन कल्पयिष्यति? '**क्वचिद् द्रव्यपरिच्छेदादेकत्वमपि चार्थवत्। अतो न तद्वशेनापि द्वितीया स्वार्थमुज्झति** ॥' तस्मात् शब्दसामर्थ्यात् उभयत्र प्राधान्यं ग्रहीतव्यम्। तत्र च अनिरूपणात् अविवक्षा इत्युक्तम्। भाष्यमपि एतेष्वेव वाक्यभेदेषु योजयितव्यम्।

ननु च 'अग्नेस्तृणानि' इत्यत्र द्वितीयासंयोगाभावात् यथोक्तवाक्यभेदाभावात् एकत्वविवक्षा स्यात्। नैष दोषः। यद्यपि एषा षष्ठी विशेषणत्वात् गुणभूतमिव अग्निं प्रतिपादयति, तथापि संबन्धान्तराभावात् अङ्गाङ्गिसंबन्ध एव ज्ञायते। तत्रापि अग्नेः प्रयोजनवत्त्वात्, तृणापचयस्य तदभावात्, 'राज्ञः पुरुषः' इत्यत्र यथा राजा पुरुषस्य स्वामी, एवमग्निः तृणापचयस्य स्वामी इत्येतदेव गम्यते। यद्यपि चैषा पञ्चमी स्यात्, तथापि अग्न्यपादानकस्य तृणापचयस्य फलाभावात् अवश्यम् 'मध्यात् पूर्वार्धाच्च द्विरवद्यति' इतिवत् अविवक्षितगुणार्था कार्यवशेन अग्निप्राधान्यं लक्षयन्ती प्रवर्तते। ततश्च अग्नेः प्राधान्यम्, एकत्वस्य च गुण-

भाव: इत्यादि पूर्ववदेव योजनीयम् । तृणानि इत्येतदपि बहुवचनमविवक्षितमिति व्याख्येयम् । तथा 'मित्रे जुहोति' इत्यादिषु । यदि तावत् भिन्नत्वैकत्वयोः नियोगविकल्पसमुच्चयादिभिः निमित्तत्वं सप्तम्या उच्येत, ततः प्रत्येकं वाक्यपरिसमाप्तेः परस्परसंबन्धाभावः । अथ एकत्वमुपादेयत्वेन प्रतिपाद्येत भिन्नमनुपादेयत्वेन, ततो यद्यपि गुणत्वप्रधानत्वविरोधो नास्ति, तथापि पूर्ववदेव विरोध: । एकवाक्यत्वे नानारूपत्वं नाम ( उपादेयानुपादेयत्वात्मकम् ) इत्यविवक्षा । सत्यां च आकाङ्क्षायां विवक्ष्येत । सा च उपादीयमानेषु आकाङ्क्षा उपजायते, नोद्दिश्यमानेषु । उद्दिश्यमाने हि प्रातिपदिकार्थसंबन्धिमात्रापेक्षित्वात् न संख्याऽऽकाङ्क्षा, प्रमाणान्तरादेव विज्ञातसंख्यत्वात् । अतो यादृशं ग्रहादि प्रमाणान्तरे ( रेण ) अवधृतं तादृशस्य संमार्गादय इति निश्चीयते । सर्वलक्षणेषु प्रतीतिमात्रौपयिकत्वात् अनुष्ठानानङ्गत्वम् । तथा 'योऽयं शुक्लवासा दृश्यते तमानय' इत्यादिषु वासःप्रभृतीनाम् । तत्र यावता विना अनुष्ठानं न सिध्यति तावत् उपादातव्यम्, इति ग्रहादिमात्रं परिगृह्यते । '**ननु बहुषु विवक्षितेषु**' बहुवचनम् इति अविवक्षितोऽपि अविद्यमानोऽर्थः न शक्यो वक्तुमिति मन्यते । तत्र वेदस्य नित्यत्वात् यथोच्चरितार्थान्वेषणमात्रे पुरुषाणां व्यापारः, इति न कर्तेव पर्यनुयुज्यते । तेन प्रातिपदिकार्थानुग्रहार्था विभक्तिः इति द्रष्टव्यम् । कारकप्रतीतिपरा वा सती नान्तरीयकत्वात् संख्यां प्रतिपादयति । यथा प्रकाशनार्थं प्रज्वालितोऽग्निः इन्धनं भस्मीकरोति, एवमत्रापि 'प्रथमं वा नियम्येत' (११।१।८।४३ कपिञ्जल ) इत्येवं कर्मत्वप्रतिपादकमेकवचनम् । 'यस्य पुरोडाशौ' इत्यादिषु च आधिकारिकं हविरुभयत्ववत् द्विवचनम् । अन्यथा हि 'मुख्यं वा' ( १२।२।८।२३ ) इति कदाचित् आग्नेयग्रहणभ्रान्तिः स्यात् । '**अपिच ग्रहः प्रातिपदिकार्थः**' इति । यदा अन्विष्यमाणमपि क्रियासंबन्धित्वं न घटते, तदा तुल्यायामविवक्षायां वरं द्रव्यविशेषणमेवेदम् इत्यभिप्रायः । ततश्च संमार्गः तेन विनाऽपि अविगुणः । जातिसंख्या चैषा प्रत्येकं संसृज्यमानव्यक्तिगता वा समर्थनीया ।

**चोदिते तु परार्थत्वाद् यथाश्रुति प्रतीयेत ।१५॥**

**भाष्यम्**— अथ यदुक्तम् 'यथा पशुमालभेत इत्येकः एव पशुः पुंपशुश्च आलभ्यते, एवमिदमपि' इति । **अस्त्यत्र वैपरीत्यम्** । इह ग्रहार्थः संमार्गः, तत्र पुनः यागार्थः पशुः । किमेवं सति भवति ? यो यागार्थं परिच्छिनत्ति, स यागस्य उपकरोति, अपरिच्छिन्नेन न शक्यो यागः कर्तुमिति । न तु ग्रहेण केन चित् विशिष्टेन संमार्गः कर्तव्यः, यत् ग्रहं विशिंषत् संमार्गस्योपकुर्यात् । पशोश्च एतदेकत्वं यागं प्रति ऽपदिश्यते । ननु उक्तं प्रातिपदिकार्थगतं स्वमर्थं विभक्तिः श्रुत्यैव अभिवदति इति । यागे एतत् वाक्येन विधास्यति, तत्र वाक्यात् श्रुतिर्बलीयसी इत्युक्तम् । **सत्यम्** । यत्र श्रौतः अभिसंबन्धो विवक्ष्यते । अविवक्ष्यमाणे च वाक्यावगतः सन् अपर्युदसितव्यो भवति । तस्मात् एकः ( पशुः ) पुंपशुश्च आलभ्यते इति । ग्रहैकत्वं न संमार्गस्योपकरोति इति न ग्रहं शक्नोति विशेष्टुम् । तस्मात् अविवक्षितमिति ।

वा— पशौ पुनः द्रव्यस्य निष्प्रयोजनत्वात् सक्तुवत् अविवक्षिता ईप्सिततमार्थया द्वितीयया कारकसामान्यं लक्षयित्वा तद्विशेषाकाङ्क्षायां सत्यां भूतभव्यसमुच्चारणद्रव्यकर्मसंयोगन्यायेन ( भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते इति भाष्योक्तः 'द्रव्याणां कर्मसंयोगे' (६।१।१।१ ) इति सूत्रोक्तश्च एक एव न्यायः उक्तोऽत्र, न भिन्नौ) करणत्वेन गुणाभावे अवगमिते सर्वेषामेव जातिद्रव्यसंख्यालिङ्गानां भावनां यागं च प्रति उपादीयमानत्वात् अवैरूप्येण विशिष्टैकभावनाविधानात् अर्थापत्तिलभ्यविशेषणविध्यन्तराविर्भावाच्च एकवाक्यत्वसिद्धिः ।

शा— एवं त्रिभिरधिकरणैः (६।१।४-५-६ ) क्रमेण संस्कारद्रव्यगुणानां यथासंयोगं व्यवस्था उक्ता । संयोग एवेदानीं चिन्त्यते किं विवक्षितविशेषणेन शेषिणा शेषस्य संयोगः, किमविवक्षितविशेषणेनेति । '**तत्र श्रुतिबलाद् यद्वत् संख्योपादेयगामिनी । विवक्षिता, तथोद्देश्यगता श्रुत्यविशेषतः ॥**' इति प्राप्तेऽभिधीयते '**उद्देश्यलक्षणं जातिर्यद् द्रव्यं लक्ष्यते तया । तस्याङ्गमेव संमार्गः सर्वस्येति विनिश्चयः ॥**' ... न चैकस्मिन् वाक्ये संमार्गविधिः परिसंख्या च संभवति, वचनव्यक्तिभेदात् । न चास्य विधिरपि संभवति । कुतः ?



'**ग्रहस्य संसृजेवैतत् प्रधानं गुण एव वा । सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता ॥**'

**सोम**— संमार्गस्य 'तेषामर्थेन' इत्यधिकरणन्यायात् (३।१।४) यथासंयोगं ग्रहशेषत्वे सिद्धे संयोगप्रकारविशेषः इदानीं चिन्त्यते इति श्रौतविनियोगचिन्तारूपत्वात् अध्याये संगतिः । यथासंयोगं शेषत्वे सिद्धे एव तद्विशेषचिन्ता संगच्छते इति अवान्तरसंगतिश्च । **सूत्रार्थस्तु**— एकत्वसमभिव्याहृतं संमार्गादिकम् एकस्यैव स्यात् श्रुतिसंयोगात् इति ।

**वि**—'संमार्ष्टि ग्रहमित्येको ग्रहः शोध्य उताखिलः।, एक उद्देश्यसंख्याया उपादेयवदादरात् ॥, प्राधान्यात् तद्गुणावृत्तेरेकत्वमनपेक्षितम् । तद्विधौ वाक्यभेदोऽतो द्रव्योक्त्या सर्वशोधनम् ॥'

**भाट्ट**— ज्योतिष्टोमादिषु 'ग्रहं संमार्ष्टि' इति श्रुतम् । तत्र संमार्गादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यताऽवच्छेदकता, उत तस्यैव सा, एकत्वं तु कथमपि विध्यन्वयासंभवादविवक्षितमिति चिन्तायां पश्वेकत्ववत् ग्रहैकत्वस्यापि अविवक्षाकारणाभावादुद्देश्यताऽवच्छेदकता । अतश्चैकस्यैव ग्रहस्य संमार्गः । इति प्राप्ते, यत्र हि समासादौ परस्परान्वयो व्युत्पन्नः यथा 'अश्वाभिधानीम्' 'यत्किञ्चित् सोमलिप्तम्' इत्यादौ, तत्र भवत्येव विशिष्टोद्देशः । यत्र तु स न व्युत्पन्नः, तत्र परस्परान्वयेन विशिष्टोद्देशे अव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तेर्न विशिष्टोद्देशः । यथा 'यस्योभयं हविरार्तिमार्च्छति' 'ग्रहम्' इति च द्वयोः सुबन्तयोर्भावनाऽन्वयस्यैव व्युत्पन्नत्वेन परस्परान्वयस्याव्युत्पन्नत्वात् । अन्यथा 'पञ्चदशान्याज्यानि' इत्यत्रापि विशिष्टविधानापत्तिः । एकवचनाद्युपात्तसंख्याऽऽदेस्तु समानाभिधानश्रुत्या करणत्वकर्मत्वादिरूपे प्रत्ययार्थे एवान्वितस्य पदश्रुत्या प्रातिपदिकार्थान्वयो नैव व्युत्पन्नः । एवम् 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ एकपदात् यत्रानेकार्थप्रतीत्युत्तरं लक्षणया प्रातिपदिकादेव साहित्यप्रतीतिः, तत्रापि साहित्यस्य प्रत्ययार्थे एवान्वयः, न प्रातिपदिकार्थे इति **कौस्तुभे** स्पष्टम् । अतश्च नैतादृशस्थले विशिष्टोद्देशसंभवः । अथ विशिष्टोद्देशासंभवेऽपि उभयोरपि प्रातिपदिकवचनार्थयोः प्रत्ययार्थे कर्मत्वादौ अन्वयेन तद्द्वारा भावनाऽन्वयोपपत्तेः संमार्गस्य पार्ष्ठिकोद्देश्यद्वयसंबन्धे बाधकाभावः । न चोद्देश्यानेकत्वे वाक्यभेदः, भावनायामनेककारकसंबन्धवत् अनेकोद्देश्यसंबन्धे बाधकाभावात् । न च तस्यामेकोद्देश्यताऽवच्छेदकत्वनियमः, 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ पुत्रत्वपशुत्वादेरनेकस्यापि तस्य दर्शनात् । विधेस्तु अनेकोद्देश्यकत्वे नैव का चित् क्षतिः । न चैकत्वावच्छिन्नस्य विनियोगाभावादसंस्कार्यता, पशुत्वेन विनियुक्तस्यापि लोहितादेः संस्कार्यत्ववत् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः । न च एवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियया वशीकाराभावात् कथं परस्परनियम इति वाच्यम् । वैकृताङ्गवत् गुणानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरपि आकाङ्क्षां प्रकल्प्य तदुपपत्तेः । इष्यते च यत्र भिन्नवाक्यस्थलेऽपि 'आग्नेयं चतुर्धा करोति' 'पुरोडाशं चतुर्धा करोति' इत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयः, तत्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविशेष्यभूतया क्रियया वशीकारः । एकत्वाविवक्षाऽपेक्षया च वशीकारकल्पनायां न कोऽपि दोषः । अत एकत्वादेरपि स्वातन्त्र्येणोद्देश्यताऽवच्छेदकत्वोपपत्तिः इति **चेत्**, भावनायाः करोतिपर्यायत्वेन एककर्मकत्वावसायात् उद्देश्यानेकत्वे तन्द्भङ्गनिबन्धनवाक्यभेदापत्तिः । एककर्मकत्वं च एकबोधविषयकर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्मवत्त्वम् । अत्र च 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ सत्यपि पुत्रत्वपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणताऽवच्छेदकधर्माणां भेदे, एकेनैव सर्वपदेन युगपद्बोधान्नैककर्मत्वहानिरिति आद्यं विषयेत्यन्तम् । पर्याप्तिपदकृत्यं तु कौस्तुभे द्रष्टव्यम् । ( यत्र 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यादौ द्वंद्वोपात्तोद्देश्यस्थले द्वंद्वावगतसाहित्यविशिष्टानां अवैयग्र्यसंपादकवाग्यमकर्मत्वान्वयात् देवतात्ववत् व्यासज्यवृत्तिकर्मत्वावगतेः सत्यपि तदधिकरणानां भेदेन बोधे तेषां पर्याप्तिसंबन्धेन कर्मत्वाधिकरणत्वाभावात् न एककर्मकत्वभङ्गः इति न तत्रानेकोद्देश्यता इति कौस्तुभे उक्तम् । ३।१।७।१४ पृ. १८१ ) । अतश्च फलद्वये संस्कार्यद्वये फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिः स्पष्टा । निमित्त-

द्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन ( २।४।१ ) निमित्तस्य फलद्वयाक्षेपकत्वात् वाक्यभेदापत्तिर्द्रष्टव्या । यथा च निमित्तद्वयेन नैकस्यैव फलस्याक्षेपस्तथा कौस्तुभे स्पष्टम् । अत एव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावान्न वाक्यभेदः । न वा कालदेशाद्युद्देश्यानेकत्वे सः । यथाऽत्र फलादिसाहित्यस्य नैकबोधविषयता, तथा कौस्तुभे स्पष्टम् । अतश्च तत्साहित्यविवक्षायां वाक्यभेदो दुष्परिहर एवेत्यन्यत्र विस्तरः । **ननु** तथापि नैकत्वादीनामविवक्षा, संमार्गभावनायां गुणत्वेन विवक्षोपपत्तेः । **न च** एवमेकत्वांशे द्वितीयया करणत्वलक्षणात् ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः, युगपत् वृत्तिद्वयविरोधापत्तिश्चेति **वाच्यम्** । ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाः शक्तत्वेन प्रमाणान्तरात् विशेषावगमेऽपि ऐकरूप्येण उभयोरप्यन्वयोपपत्तेः । न चैवमपि संमार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासंभवः, अङ्गत्वाद्यभावेऽपि संनिधितामात्रेण ' अगन्म ' इति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः । अतश्च विवक्षितमेकत्वम् । **इति चेत्**, गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाऽङ्गीकारस्य युगपद्वृत्तिद्वयविरोधवैरूप्यादेश्च अन्याय्यत्वात् । तद्वरमनुवादके तस्मिन्नेव पाशाधिकरणन्यायेन ( ९।३।४ ) लक्षणामात्रम् । न चेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानान्नोक्तदोषप्रसङ्गः, तथात्वे निरुक्तैककर्मकत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्धयर्थे लक्षणाऽऽश्रयणे पूर्वोक्तदोषापत्तेरेकवचनं बहुत्वलक्षणार्थे सत् साधुत्वार्थमनुवादः अविवक्षितः । यथा चैवं सति ' अष्टवर्षं ब्राह्मणमुपनयीत ' इत्यादौ अष्टवर्षत्वादेर्विवक्षा तथा कौस्तुभे एवोपपादितम् ।

**मण्डन**— ' न ग्रहैक्यं विवक्षितम् । ' ६.

**शंकर**— ' ग्रहैकत्वविवक्षा न । '

* **ग्रहयागाभ्यासाः** यजुर्वेदे येन क्रमेण विहिताः, तेनैव क्रमेण सामवेदे तदङ्गभूतानि स्तोत्राणि ब्राह्मणेन विहितानि, तेनैव च क्रमेण उत्तराग्रन्थे स्तोत्रसाधनभूता ऋचः पठिताः । सु. पृ. ६४१.

* **ग्रहशब्दः** अपूर्वविधेयग्रहणक्रियां ब्रूते ( बार्हस्पत्यः ग्रहः इत्यादौ ) । वि. १०।४।३. * ग्रहशब्दः पूर्णे ग्रहे भवति, तेन न शक्यानि न्यूनानि पात्राणि ग्रहीतुम् ( उक्थ्यादिषु ) । भा. ३।३।११।२९.

* **ग्रहसंमार्जनन्यायः** । ग्रहन्याय एवायम् । **के.**

**ग्रहसमुच्चयन्यायः** । बृहस्पतिसवादौ औपदेशिकैर्बार्हस्पत्यादिग्रहैः आतिदेशिकानामैन्द्रवायवादिग्रहाणां समुच्चयः ॥

**सर्वत्र तु ग्रहाम्नानमधिकं स्यात्, प्रकृतिवत् । १०।४।२।३ ॥**

**भाष्यम्— बृहस्पतिसवे** श्रूयते ' बार्हस्पत्यं ग्रहं गृह्णाति ' । **विषुवति** 'अर्के ग्रहं गृह्णाति' इति । **महाव्रते** ' शुक्रं ग्रहं गृह्णाति ' इति । **अश्वमेधे** ' सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाति ' इति । सन्ति तु **प्रकृतौ** ऐन्द्रवायवादयो ग्रहाः । ते इह चोदकेन प्राप्ताः । तत्र संशयः वैकृतैस्ते निवर्त्यन्ते, उत अनिवृत्तिः समुच्चय इति । किं प्राप्तम् ? प्रत्यक्षश्रुता वैकृताश्चोदकप्राप्तान् प्राकृतान् निवर्तयितुमर्हन्ति । अस्ति हि तेषां प्रकृतिलिङ्गेन ग्रहशब्देन संयोग इति । **एवं प्राप्ते, ब्रूमः** । तत्रतत्र सर्वत्र ग्रहाम्नानमधिकं भवितुमर्हति । प्राकृतस्य अनिवृत्तिरिति । कुतः ? उभयेषां प्रमाणावगतत्वात् । चोदकोऽपि प्रमाणम्, प्रत्यक्षश्रवणमपि । ग्रहशब्दः प्रकृतिलिङ्गमिति चेत्, नैवम् । यदि ग्रहशब्दमुच्चार्य गुणो विधीयते, ततः प्राकृता एव ग्रहा गुणविकृता भवेयुः । अथ ग्रहसंबन्धेन अग्रहो विधीयते, ततो ग्रहकार्ये वर्तते इति प्राकृतं निवर्तयेत् । यथा खलेवाली यूपः इति । अन्यः पुनरेष ग्रहशब्दो ग्रहणवचनः । अर्के नाम ग्रहं गृह्णाति, महिमानौ नाम ग्रहौ गृह्णातीति । अत्र अपूर्वा ग्रहणक्रिया विधीयते । तस्मान्न ग्रहशब्दश्चोदनालिङ्गम् । एकार्थानां हि विकल्पो वा बाधो वा भवति । न चैषां वैकृतैरेकार्थता । ननु यागनिर्वृत्त्यर्थाः सर्वे, तेनैषामेकार्थतेति । उच्यते । यागं प्रति संहत्यकारिण एते, न निरपेक्ष एकैक एषां साधकः । नहि एषां पृथक्त्वेन यागसंबन्धः अर्केण यजेत, शुक्रेण यजेतेति । कथं तर्हि ? प्रयोगवचनः एषां ग्राहकः । स च संनिहितानाम् । न च



संनिधाने विशेषोऽस्ति । तस्मात् सर्वेषां प्राकृतानां वैकृतानां च संग्राहकः । प्रकृतिवत् । यथा प्रकृतौ ऐन्द्रवायवग्रहणं चोदितम्, मैत्रावरुणग्रहणं पुनश्चोद्यते । विभागश्चादृष्टार्थः संस्कारो देवतोद्देशश्च । अदृष्टत्वात् कार्यस्य, न ज्ञायते पूर्वः उत्तरस्य कार्ये भवतीति । प्रयोगवचनग्रहणाच्च समुच्चयः, न केवलं मैत्रावरुणादिभिः सह, अप्रकरणाधीताभ्यामंश्वदाभ्यामपि । एवं विकृतावपि समुच्चयो भवितुमर्हति । **आह** । ननु ग्रहं संकीर्त्य गुणो विधीयते अश्वमेधे सौवर्णराजताभ्यामिति । **अत्रोच्यते** । न तौ प्राकृतौ ग्रहौ । 'संज्ञा चोत्पत्तिसंयोगात् ' ( २।२।८।२२ ) इति ग्रहकर्मणी भिद्येते । आह । इह तर्हि, बार्हस्पत्यं गृह्णातीति देवताविधानार्थं स्यात् । उच्यते । ग्रहे विधीयमाने श्रुतिरनुगृहीता, देवतायां वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । **आह** । आग्नेयवत् । यथा अग्निष्टुति ' आग्नेया ग्रहा भवन्ति ' इति देवताविधानं भवति, एवमेकवचनान्तेनापि, तस्याविवक्षितत्वात् । यथा ग्रहं संमार्ष्टीति सर्वग्रहाणां संमार्गोऽभिधीयते, एवमिहापि सर्वग्रहाणां देवता विधीयते । **अत्रोच्यते** । उक्तमेतत् श्रुतेर्बलीयस्त्वादिति । ' आग्नेया ग्रहा भवन्ति ' इति तु वाक्यमविरुद्धं श्रुत्या । नहि तत्रास्ति आग्नेयं ग्रहं गृह्णातीति । आग्नेयसत्ता तत्र वाक्येन श्रुत्यविरुद्धेन चोद्यमाना युक्तैवेति । तस्मात् प्राकृतेभ्यो व्यतिरिक्तो बार्हस्पत्यः समुच्चीयते । यथा प्रकृतौ अंशुं गृह्णाति, अदाभ्यं गृह्णाति इति अप्राकरणिकौ प्राकरणिकैः समुच्चीयेते, एवमिहापि वैकृताः समुच्चीयेरन्निति ।

**टुप्**— **प्रकृतिं** तावन्निरूपयामः । ' ऐन्द्रवायवं गृह्णाति ' ' मैत्रावरुणं गृह्णाति ' इत्येवमादीनि वाक्यानि प्रकृतौ श्रूयन्ते, ऐन्द्रवायवेन यजेत, मैत्रावरुणेन यजेतेति । यद्येवं श्रूयेत, तथा सति खादिरादिवत् विकल्पः स्यात्, किं तर्हि ? इन्द्रवायू देवता अस्येति तद्धितो देवतां द्रव्योपसर्जनीभूतां ब्रवीति । तच्च ( द्रव्यम् ) द्वितीयया गृह्णातिं प्रति प्रधानभूतम् । गृह्णातिश्च द्रव्यस्य पृथक्प्रकल्पनम् । स च ( गृह्णातिः ) दृष्टार्थः । यः अत्र देवतानिर्देशः, सः अदृष्टार्थः । [ एतच्च अभ्युपेत्यापि दृष्टार्थत्वं गृह्णातेः देवतासंयोगाददृष्टार्थत्वादेव शक्यते समुच्चयो वक्तुमित्यभिप्रायेणोक्तम् । परमार्थतस्तु गृह्णातिरदृष्टार्थ एव । तदुक्तम् ' **शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते । द्रव्येऽस्मिन् देवतोद्देष्टुमित्यदृष्टार्थता विधेः** ॥ ' ( वा. पृ. ५२० ) इहापि च भाष्यकारेणोक्तम् ' विभागश्चादृष्टार्थो देवतोद्देशश्च ' (भा. पृ. १९१३ ) । **रत्न.** ] अन्यत्र ( वाक्यान्तरे ) देवताया अचोदितत्वात् । तस्मात् ( अचोदितत्वात् ) द्वितीयादिष्वपि ग्रहणेषु अयमेव न्यायः ( ' अदृष्टार्थो देवतासंयोगः' इति । सति चादृष्टार्थत्वे– ) न चैन्द्रवायवोऽयं मैत्रावरुणकार्ये वर्तते इति प्रमाणमस्ति ( येनैकार्थ्यात् विकल्पः स्यात् ) । तस्मात् (देवतासंयोगसंपाद्यादृष्टभेदात्) भिन्नान्येतानि ग्रहणानि ( भेदेन कर्तव्यानि समुच्चेतव्यानि इति यावत् ) । यागोऽत्र देवताम् ( स्ववाक्ये अश्रवणात् ) अपेक्षते । देवताश्च ( तद्धितोक्ताः) यागमन्तरेण न संभवन्तीति यागमपेक्षन्ते । तयोः ( यागदेवतयोः ) संनिधानेन संबन्धो भवति ( न वाक्येन ) । तच्च ( संनिधानम् ) सर्वेषाम् (ग्रहाणाम्) अविशिष्टम् (तस्मात् समुच्चयो ग्रहाणां देवतानां चेति ) । ईदृशी तावत् प्रकृतिः । यागः प्रधानभूतः, फले चोदितत्वात् । देवतावाक्यानि ( सर्वाणि ) तदर्थानि ( संनिधानाविशेषात् ) । तस्मात् प्रधानभूत एव यागः अर्थादभ्यस्यते । **विकृतौ तु** ' ऐन्द्रवायवं गृह्णाति ' इति चोदकेन प्राप्तानि संनिहितानि । इतराण्यपि ( बार्हस्पत्यादीनि ) आम्नानसामर्थ्यात् (संनिहितान्येव ) तेन तत्रापि सर्वाणि युगपत् गृह्णाति प्रयोगवचनः संनिधानाविशेषात् । **ननु** बृहस्पतिर्देवता चोदकप्राप्तेषु ग्रहेषु विधीयते ( तेन तत्र ग्रहान्तरत्वाभावात् अनुदाहरणत्वमिति ) । **उच्यते** । न संभवति (देवता–) विधानम् (द्रव्यवचनत्वात् बार्हस्पत्यशब्दस्य । चोदयति–) तस्योपसर्जनार्थो विधीयते । यथा ' दण्डी ' इति पुरुषोपसर्जनभूतो दण्ड एव विधीयते पुरुषस्य प्राप्तत्वात् । एवमिहापि । कथम् ? ( शङ्काकारस्योत्तरम्– ) द्रव्यदेवतासंबन्धं चोदकप्राप्तमनूद्य बृहस्पतिः (उपसर्जनीभूतः) विधीयते । ( उत्तरवादी आह– ) उच्यते । उपसर्जनार्थोऽत्र न शक्यते विधातुम्, असामर्थ्यात् । कथमसामर्थ्यम् ? ( उत्तरमाह ) तत्र ( बृहस्पतिर्देवता अस्य इति

विग्रहवाक्ये ) यदा 'अस्य देवता' इत्ययं संबन्धः, अस्यशब्दो देवताविशेषणत्वेन उच्चार्यते तदा परार्थमुच्चारणम् ( देवताविशेषणार्थम् ) न स्वार्थम्। न विधानार्थम्। यदा ( तु ) बृहस्पतिरस्य इति ( बृहस्पतिशब्देन अस्यशब्दस्य संबन्धः ) तदा स्वार्थम् ( आत्मीयमर्थं बृहस्पतिविशिष्टतया विधातुम् ) उच्चारणम् , न परार्थम् ( विशेषणार्थम् ) सकृदुच्चारणे च स्वार्थवत् परार्थवच्चोच्चारणं विरुध्यते । ( इदम् ) तदसामर्थ्यम् ( यत् पूर्वमुक्तम् ) । यदा तु न ( अस्यशब्दः ) देवताविशेषणत्वेनोच्चार्यते ( सिद्धान्ते , ) तदा ( अस्यशब्दः ) प्रधानभूतः ( एव, न विशेषणम् । तदा हि न केवलं बृहस्पतिपदं तदर्थम्, अपि तु ) देवताप्रातिपदिकम् ( देवताशब्दोऽपि ) तदर्थम् । तस्मात् द्वाभ्याम् ( विशेषणाभ्याम् ) विशिष्टस्तद्धितार्थो ( द्रव्यं ) विधीयते ( बृहस्पतिदेवत्यं द्रव्यं कुर्यात् इति ) नोपसर्जनम्। तस्मात् बार्हस्पत्यं गृह्णाति इति ( वाक्यार्थः। ग्रहणमेवात्र विधीयते इत्यर्थः । भाष्ये च– ) श्रुत्यैव विधानम् इति अनेनैवाभिप्रायेणोच्यते । ( ननु यदिदमुक्तम्, 'संनिधानात् ग्रहाणां यागसंबन्धः प्रकृतौ' इति , तदयुक्तम् , अपूर्वाय द्रव्यशेषतया द्वितीययैव विनियोगात् प्रोक्षणादिवत् । अत आह– ) न चैतत् 'व्रीहीन् प्रोक्षति' इत्यनेन तुल्यम् । तत्र ( हि ) वाक्यान्तरेण व्रीहयो यागसाधनत्वेनानवगताः, तेषां स्वरूपमपि विद्यते ( श्रौतम् ), लक्षणया अपूर्वसाधनत्वमपि । तत्र द्वितीया प्रोक्षणस्य गुणभावं ब्रवीति व्रीहिलक्षितापूर्वं प्रति ( इति युक्तम् ) न तु इह ऐन्द्रवायवम् ( वाख्यम् ) द्रव्यं प्रमाणान्तरेणावगतं यागसाधनत्वेन, येन गृह्णातिक्रिया अपूर्वांशेन संबध्येत प्रोक्षणवत् । तस्मात् ऐन्द्रवायवद्रव्यं गृह्णातिक्रियां प्रति प्रधानभूतम् , द्वितीयाविभक्तिसामर्थ्यात् । ( ऐन्द्रवायवस्वरूपमेव द्वितीयया प्रधानं भवति , नापूर्वीयं रूपमित्यर्थः । ननु एवं अपूर्वासंबन्धिनः संस्कारायोगात् आरादुपकारकं ग्रहणं प्रकरणविनियोज्यं स्यात् अत आह– ) न च प्रयाजादिवाक्येन तुल्यम् । तत्र ( हि ) द्रव्यदेवतेन क्रिया निर्वर्त्यते । सा च आरादुपकारिका । इह तु विपरीतम् । न चाग्नेयादितुल्यम् । तत्र ( हि ) 'आग्नेयोऽष्टाकपालो भवति' इति साकाङ्क्षम् ( अपरिपूर्णम् ) एव वाक्यम् ( पुंव्यापाराश्रवणात् ) । तच्च यागमन्तरेण निराकाङ्क्षं न भवति ( इति यागकल्पनया पूर्यते ) । परिपूर्णं च वाक्यं वाक्यान्तरेण संबध्यते , प्राक् च यागात् परिपूर्णमेव न भवति । न च यागमन्तरेण अन्येन प्रकारेण ( देवतासंयुक्तं वाक्यम् ) पूर्यते ( तस्माद्यागविधानम् )। तत्र आग्नेयादयो यागा उत्पन्नाः 'दर्शपूर्णमासाभ्याम्' इति ( अनेन ) प्रकृता एव ( सन्तः केवलम् ) फले विधीयन्ते ( न तु उत्पाद्यन्ते ) । न त्विह तथा, ऐन्द्रवायवादीनां यागविधानाभावात् । अन्यथाऽनुपपत्त्या ( अत्र ) यागकल्पना । परिपूर्णम् ( हीदं वाक्यम् ) 'ऐन्द्रवायवं गृह्णाति' इति ( पुरुषव्यापारश्रवणात् ), न तु आग्नेयादिवाक्यं परिपूर्णं साकाङ्क्षत्वात् ( तत्परिपूरणाय ) यागकल्पना । इह तु परिपूर्णस्य ( एव वाक्यस्य ) अर्थानुपपत्तिवेलायाम् 'सोमेन यजेत' इति यागो विद्यते संनिहितः । स च देवतामपेक्षते ( आत्मनिर्वृत्त्यर्थम् । तथा– ) ऐन्द्रवायवादीन्यपि ( वाक्यानि प्रकृतद्रव्यविषयाणि ) यागमपेक्षन्ते । तयोः ( द्वयोः ) साकाङ्क्षयोः एकाङ्गविकलयोः संबन्धो भवति । तस्मान्न ( प्रयाजादिवत् ) प्रकरणेन ऐन्द्रवायवादीनां संबन्धः । वाक्येन च ( न संबन्धः । श्रुतिरेव वाक्यशब्देनोच्यते । किन्तु– ) संनिधानेन संबन्धः । न चैतैः ( देवतावाक्यैः ) पूर्वमसंबध्यमानः ( यागः ) फलेन संबध्यते । ( कथम् ? ) देवतया विना हि अरूपत्वात् न फलेन संबध्यते । अपि तु 'ऐन्द्रवायवं गृह्णाति' इत्यपरिपूर्णं वाक्यम् । ( यद्यपि वाक्यं परिपूर्णमेव, तथापि अर्थानुपपत्त्या पुनरपरिपूर्णं भवति । तच्च– ) सोमयाजिना ( सह ) शीघ्रम् ( फलसंबन्धात् प्रागेव संनिधानात् ) संबध्यते , न प्रकरणेन ( संनिधानाविशेषाच्च समुच्चयः । तथा विकृतावपि अदृष्टार्थत्वात् उपदेशातिदेशाभ्यां चोभयेषां संनिहितत्वात् ग्रहशब्दस्य च विधीयमानार्थत्वेन प्रकृतिलिङ्गत्वाभावात् समुच्चयः ) ।

**अधिकैश्चैकवाक्यत्वात् । ४ ॥**

**भाष्यम्** — इतश्च पश्यामः समुच्चय इति । कुतः ? निःसंदिग्धैश्च अधिकैः सुराग्रहैः एकवाक्यत्वं भवति ;



कथम् ? सप्तदशैते ग्रहा गृह्यन्ते , द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च । अत्र व्यक्तमधिकाः सुराग्रहाः । तेषु 'गृह्यन्ते' इति ग्रहणं चोद्यते , नानूद्यते । सकृदुच्चरितो 'गृह्यन्ते' इति शब्दः सोमग्रहैरपि संबध्यते । तस्मात् चोदनाऽन्तरं ग्रहाणाम् । अनेन असंदिग्धेन अन्यदपि एवमेवावगम्यते ।

**लिङ्गदर्शनाच्च । ५ ॥**

**भाष्यम्**— लिङ्गमपि एतमर्थं दर्शयति । किम् ? 'विरण्यो वा एष यज्ञक्रतुर्यद्वाजपेयः । अतीव ह्यग्निष्टोमं क्रामति ( अति ) उक्थ्यम् अति षोडशिनम् , नातिरात्रमाप्नोति' इति । विरण्यशब्दो विस्तीर्णे भवति । यथा 'विरण्यानि अरण्यानि' विस्तीर्णानीति गम्यते । यदि समुच्चयः , एवं विस्तीर्णता , बाधायां नोपपद्यते । तस्मादपि समुच्चय इति ।

**शा**— वैकृता ग्रहा ( बार्हस्पत्यादयः ) प्राकृतानां ऐन्द्रवायवादिग्रहाणां निवर्तका न वेति संशये , ग्रहाणां यागनिर्वृत्त्यर्थत्वेन एककार्यत्वात् प्रत्यक्षश्रुतैर्वैकृतैर्ग्रहैः निर्वृत्ते यागे चोदकप्राप्ता निवर्तन्ते । इति प्राप्ते, ब्रूमः । '**येषां मिथोऽनपेक्षाणां कार्येणैकेन संगतिः । तेषां बाधो विकल्पो वा नैवमस्ति ग्रहे पुनः ॥**' नहि यागनिर्वृत्तौ ग्रहा वाक्येन विधीयन्ते 'बार्हस्पत्येन यजेत' इति , येन निरपेक्षा यागं निर्वर्तयेयुः । प्रयोगवचनस्तु चोदकप्राप्तान् उपदिष्टांश्च ग्रहान् यौगपद्येन गृह्णन् सहितानामेव यागान्वयं गमयति ।

**सोम**— पूर्ववत् इहापि प्राकृतबाधः ( रथघोषेण यथा मन्त्रदर्भबाधः, तथा बार्हस्पत्यादिग्रहेण ऐन्द्रवायवादेर्बाधः ) इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**– सर्वत्र विकृतौ ग्रहान्तराम्नानं प्राकृतादधिकं समुच्चितं स्यात् , प्रकृतौ अनेकग्रहाम्नानवत् इति ।

**वि**— 'बार्हस्पत्यादयः किं स्युः प्राकृतग्रहबाधकाः । समुच्चिता उत, ऽऽद्योऽस्तु कार्यैक्याद् ग्रहलिङ्गतः ॥, समुच्चयः प्रमाणाभ्यां ग्रहाणां प्रकृतौ यथा । विधेयोक्तेर्न लिङ्गं तच्चोक्तं लिङ्गं सुराग्रहे ॥'

**भाट्ट**— बृहस्पतिसवे 'बार्हस्पत्यं ग्रहं गृह्णाति' इति, विपुवति 'अर्के गृह्णाति' इति, अश्वमेधे 'सौवर्णराजताभ्यां महिमानौ गृह्णाति' इति श्रुतम् । तदत्र वैकृतग्रहणानां दृष्टार्थत्वात् प्राकृतैन्द्रवायवादिग्रहणबाधकत्वे प्राप्ते , पशुसोमाधिकरणव्युत्पादितकौस्तुभोक्तरीत्या ( २।२।६ ) सत्यपि ग्रहणानां तदीयदेवतासंयोगस्य च दृष्टार्थत्वे 'ऐन्द्रवायवं गृह्णाति' इत्यादिवाक्यवैयर्थ्यभिया ग्रहणानामदृष्टार्थतया आरादुपकारकत्वस्यापि स्थापितत्वात्, तस्य च वैकृतेन ग्रहणेनोत्पत्तौ प्रमाणाभावात् उपहोमादिवदेव समुच्चयः । न च 'अर्के गृह्णाति' इत्यादौ संज्ञया अभ्यासाद्वा ग्रहणान्तरत्वेऽपि 'बार्हस्पत्यं गृह्णाति' इत्यादौ 'आग्नेया ग्रहा भवन्ति' इतिवत् प्राकृतग्रहणानुवादेन देवतामात्रविधिसंभवात् न ग्रहणान्तरविधिसंभवः, तद्धितोपात्तद्रव्यस्य द्वितीयया कर्मत्वावगमेन देवताविधौ ग्रहणस्य कर्मत्वानुपपत्तेः । तद्धितोपात्तद्रव्योद्देशेनैव देवताविधौ ग्रहणाश्रितत्वे प्रमाणाभावः । 'एकां गाम्' इत्यादौ दक्षिणादानं प्रक्रम्यैवाम्नानात् दानाश्रितत्वलाभः इत्युक्तो विशेषः । द्रव्योद्देशेन देवताविधौ एकप्रसरताभङ्गापत्तेश्च । अतोऽवश्यं द्रव्योद्देशेन देवताविशिष्टं ग्रहणमेव 'ऐन्द्रवायवं गृह्णाति' इतिवद्विधीयते । तच्च न प्राकृतमेव ग्रहणम् , तथात्वे प्राप्तग्रहणोत्पत्त्यनुवादेन देवताविधिः द्रव्योद्देशेन तद्विनियोगविधिश्चेति वाक्यभेदात् । अतोऽत्रापि गुणात् ग्रहणान्तरमेवेति अदृष्टार्थत्वात् न तेन प्राकृतग्रहणबाधः । वस्तुतस्तु 'बृहस्पते जुषस्व नः' इत्यादिग्रहणे मन्त्राम्नानादेव मान्त्रवर्णिकदेवताकल्पनया प्राकृतमन्त्रतद्देवतयोर्बाधोपपत्तेः एतद्विधिवैयर्थ्यापत्तेरेव ग्रहणान्तरत्वम् । 'आग्नेया ग्रहाः' इत्यत्र तु ग्रहोद्देशेनैव देवताविधानान्न ग्रहणान्तरत्वशङ्का । अत एव ग्रहणानां बहुत्वात् तत्र बहुवचनम्, प्रकृते चैकवचनं स्वारसिकतया संगच्छते । अत एव तत्र प्राकृतदेवताबाध एव । प्रकृते तु ग्रहणान्तरत्वात् न कस्य चिद्बाधः । उपपादकीभूतप्रकृतयागाभ्यासस्तु प्रकृतिवन्नैव विरुध्यते ।

**मण्डन**— 'बार्हस्पत्यो न बाधकः ।' ४.

**शंकर**— 'शुक्रादिर्न ग्रहान्तरम् ।' ४.

* **ग्रहणम्** आज्यस्य औपभृतस्य चतुःसंख्याद्वयविशिष्टद्वित्वविशिष्टम्, न तु अष्टत्वविशिष्टमेकम् । **भा.** ४।१।१७।४६-४८, * ग्रहणं प्रदानार्थम् । सादनेन ग्रहणं

होमयोग्यं भवति । तस्मात् ग्रहणशेषः सादनम् । १०।५। २१।७३, * ग्रहणं षोडशिनः आग्रयणपात्रादेव । १०। ५।१०।४२-४३, ४५-४८, * ग्रहणं षोडशिनः तृतीयसवने एव । ज्योतिष्टोमे । १०।५।११।४४. * ग्रहणं सोमभक्षव्यापारविशेषः । तत्र 'भक्षेहि मा विश०' इत्यादिर्मन्त्रः । वि. ३।२।९.

* **ग्रहणावेक्षणसम्यग्जरणेषु** भक्षानुवाकः यथालिङ्गं ( विभज्य ) विनियोक्तव्यः । वा. ३।२।९।२५.

* **ग्रहणादौ** भक्षमन्त्राणां यथालिङ्गं विनियोगो ज्योतिष्टोमे । वि. ३।२।९.

**ग्रहणप्रतिकर्षे सादनस्यापि प्रतिकर्षः ॥**

**सादनं चापि शेषत्वात् । १०।५।२१।७३ ॥**

**भाष्यम्**— इदमाम्नायते 'आश्विनाग्रान् गृह्णीयात् आमयाविनः, शुक्राग्रान् गृह्णीयात् अभिचरतः, मन्थ्यग्रान् गृह्णीयात् अभिचर्यमाणस्य' इति । ( आमयावी बद्धकोष्ठः । अभिचर्यमाणः अभिचारविषयः ) । पुरस्तात् ऐन्द्रवायवस्य प्रतिकर्षः इत्युक्तम् । तत्र अयमर्थः सांशयिकः ( संशयमापन्नः । पा० ५।१।७३ संशयविषयीभूतः सांशयिकः ) । किं सादनमपि प्रतिकृष्यते नेति । अवचनात् नेति ब्रूमः । शब्दप्रमाणका वयम् । शब्दश्च ग्रहणस्य प्रतिकर्षमाह , न सादनस्य । तस्मात् न सादनं प्रतिकृष्यते इति । एवं प्राप्ते , ब्रूमः । सादनमपि प्रतिकृष्यते इति । कुतः ? ग्रहणशेषो हि सादनम् । ग्रहणं हि प्रदानार्थम् । तत् अनेकस्य द्रव्यस्य युगपत् प्राप्तमसादयित्वा न शक्यं युगपत् होमार्थे कर्तुम् । सादनेन ग्रहणं होमयोग्यं भवति । तस्मात् ग्रहणशेषः सादनम्, इति ग्रहणे प्रतिकृष्यमाणे अवश्यं प्रतिकृष्टव्यम् इति ।

**लिङ्गदर्शनाच्च । ७४ ॥**

**भाष्यम्**— लिङ्गमपि दृश्यते यथा सादनं प्रतिकृष्यते इति । किं लिङ्गम् ? 'धारयेयुः तम्, यं कामाय गृह्णीयुः । ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेत्, यं कामाय गृह्णीयुः' इति सादनस्यापि प्रतिकर्षं दर्शयति ।

**सोम**— पूर्ववैषम्येण उत्थानात् **संगतिः** । **सूत्रार्थस्तु**— सादनमपि प्रतिकृष्येत सादनस्य ग्रहणाङ्गतया तदपकर्षेऽपि वचनतात्पर्याविशेषात् इति ।

**वि**— 'नापकर्षोऽपकर्षो वा , सादनस्याश्रुतत्वतः । न, मैवं ग्रहशेषत्वात् तच्चाशक्तेर्ग्रहान्तरम् ॥' ग्रहान्तरं ग्रहीतुमशक्तेः ।

**भाट्ट**— धाराग्रहाणां पूर्वपूर्वं गृहीत्वा खरे सादयित्वा उत्तरोत्तरस्य ग्रहणम्, सर्वेषु च गृहीतेष्वासादितेषु च पश्चात् कालान्तरेषु क्रमेण प्रदानमित्येषा नित्यक्लृप्तिः । कामाय तु शुक्रादिग्रहणेषु अपकृष्यमाणेषु न ग्रहणमात्रस्य प्रतिकर्षः, अपि तु सादनस्यापि । पूर्वग्रहानासादने उत्तरस्य ग्रहीतुमशक्यतया एतत्सोमसंस्कारकस्यापि सादनस्य उत्तरग्रहणोपकारकतया सादनाभावे आश्रयभूताग्रिमग्रहणानुष्ठानानुपपत्तेः । सादननियमस्य च एतद्ग्रहणे उत्तरग्रहणसाहित्यसंपत्त्यर्थत्वस्यापि क्लृप्ततया ग्रहणशेषत्वात् सर्वान्ते तत्करणे तद्बाधापत्तेः अर्थक्रमेण पाठक्रमबाधात् तस्यापि प्रतिकर्षः । वस्तुतस्तु 'गृहीत्वा सादयति' इति ग्रहणोत्तरत्वश्रुतेः पाठक्रमाभावाच्च न प्रतिकर्षे किञ्चित् बाधकम् ।

**मण्डन**— 'तत्सादनं च प्रतिकृष्यतेऽर्थात् ।' २२.
**शंकर**— 'सादनं चापि तत्रैव ।' २३.

* **ग्रहणप्रतिकर्षेऽपि** प्रदानानपकर्षः । भा. १०।५। २२।७५-७६.

* **ग्रहणसूतकेऽपि** ( चन्द्रसूर्ययोः ) श्राद्धविधिः । अयं प्रतिप्रसवविधिः पुरुषार्थः । बाल. पृ. १५.

**ग्रामं गच्छन् वृक्षमूलान्युपसर्पति, इति न्यायः** । अनिष्टादिकारिणां तु शुभमार्गेण गतिर्वा , 'ग्रामं गच्छन्०' इति न्यायेन स्वर्गप्राप्तिमात्रं वा नास्ति इति तृतीयाधिकरणे वर्णितम् । परिमलः. ३।२।१।१ ब्रसू.

* **ग्रामादागतानां** पुरुषाणां पर्यग्निकरणेन अदृष्ट उपकारः क्रियते । भा. २।१।४।१२ पृ. ४१३. यथा ग्रामादागतानां शान्त्यर्थं अग्निलवणदध्यक्षतप्रभृतेः शिरसः उपरि भ्रामणं शुचिदेशप्रतिष्ठापनं च । वा.

* **ग्रामकामः** 'मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रैयङ्गवम्' । भा. १०।१।१०।४१. * ग्रामकामः



सांग्रहणीं नाम इष्टिं निर्वपेत् । वि. ४।४।४. * 'उपास्मै गायता नरः' इति **ग्रामकामाय** प्रतिपदं कुर्यात् । भा. ८।१।१४।२३.

* **ग्रामभृत्यस्य** अनेकस्वाम्यन्वयेऽपि अन्योन्यानपेक्षानेकस्वामिकत्वं नैव युज्यते । सु. ३।७ पृ. २६.

* **ग्रावाणः** ( उपलाः वरवंटे इति भाषा ) अवभृथदेशे नीयन्ते । सा च प्रतिपत्तिः । वि. ४।२।८.

* '**ग्रावस्तुत्** ग्रावस्तोत्रीयाः अन्वाह' । भा. ३।७।९।२२. * ग्रावस्तुत् होतुः पुरुषः । चतुर्थवर्गस्थोऽयम् । अयं पादी चतुर्थांशभाक् । तिस्रो गा लभते । 'ग्रावस्तुतमुन्नेता दीक्षयति' सत्रे । वि. ३।७।१७.

* **ग्रावस्तुते** द्वादशाहादौ अहर्गणे सोमोपावहरणवासांसि देयानि । भाट्ट. १०।६।१९.

**ग्रावस्तुतोऽपि हारियोजने सोमभक्षः** । सर्वशब्दन्यायः । हारियोजनन्यायः । हारियोजनगतसर्वशब्दन्यायः ॥

**ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् । ३।५।९। २७ ॥**

**भाष्यम्**—ज्योतिष्टोमे ग्रावस्तुत् नाम होतृपुरुषः । तत्र संदेहः किं स सोमं भक्षयेत्, नेति । उच्यते । ग्रावस्तुत् न भक्षयेत् । कुतः ? यतोऽस्य भक्षं नामनन्ति । हारियोजने चमसिनामधिकारः इति मन्यमानः ( सूत्रकारः ) एवं ह स्माह नास्य आम्नायते भक्ष इति ।

**वा**— गतः समाख्याभक्षः । इदानीं वाचनिकमेव अनुगच्छति । तत्र 'यथाचमसमन्यांश्चमसान् चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इत्येतत् वचनं किं प्रकरणात् अशेषविषयं सत् ग्रावस्तुतोऽपि भक्षं प्रापयति, उत स्ववाक्योपात्तचमसिविषयत्वात् न इति संदेहे, तेनैव तावत् अभिप्रायेण न विद्यते इत्याह ।

**हारियोजने वा, सर्वसंयोगात् । २८ ॥**

**भाष्यम्**— हारियोजनस्य वा ग्रावस्तुतं भक्षयितारं मन्यामहे । एवं हि आमनन्ति । 'यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति । अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इति । यदा हारियोजनस्य सर्वे लिप्सन्ते, तदा ग्रावस्तुदपीति ।

**वा**— न शक्यं सर्वशब्दो विना कारणेन प्राकृतकर्तृमात्रवचनः सन् एकदेशे स्थापयितुम् । अतो हारियोजनं ग्रावस्तुदपि भक्षयेत् ।

**चमसिनां वा, संनिधानात् । २९ ॥**

**भाष्यम्**—वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति, ग्रावस्तुतो हारियोजने भक्ष इति । चमसिनां तत्राधिकारो न सर्वेषाम् । कथम् ? चमसिनामेष विभागः । 'चमसिनः अन्यांश्चमसान् यथाचमसं भक्षयन्ति' इत्यनूद्य चमसिनः एव वदति, 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते' इति । एकं हीदं वाक्यम् । 'अथैतस्य' इति अथशब्दयोगात् अनन्तरवृत्तमपेक्षते । 'सर्व एव' इति एवशब्दः सामर्थ्यात् सर्वान् पूर्वप्रकृतान् अपेक्षते । अतो मन्यामहे 'यथाचमसम् अन्यांश्चमसान् चमसिनो भक्षयन्ति' इत्यनेन पूर्वेण 'अथैतस्य हारियोजनस्य' इत्येतस्य एकवाक्यता भवतीति । तेन चमसिनां संनिहितानामेष विभागो यथाचमसमन्यत्र, हारियोजने तु सर्वे एवेति ।

**वा**—पूर्वपक्षाभिप्रायविवरणम् । 'यथाचमसमन्यान्' इति पुनःश्रुतेः न किञ्चित् प्रयोजनमस्ति अन्यदतः सर्वशब्दविशेषणत्वात् । अथशब्दैवकाराभ्यां सुतरां तेष्वेव प्रत्ययः । ये हि अन्यत्र प्रत्येकरूपेण उपात्ताः, तेषु एवकारो भवति । तस्मात् न ग्रावस्तुत् प्रत्येतव्यः ।

**सर्वेषां तु विधित्वात्, तदर्था चमसिश्रुतिः । ३० ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, चमसिनः एव हारियोजने लिप्सन्ते इति । सर्वे तु विधीयन्ते हारियोजने । सर्वे भक्षयन्ति इति । न पुनः चमसिनः इति संबन्धः शक्यते विधातुम् । द्वौ हि संबन्धौ अस्मिन् वाक्ये अपूर्वौ न शक्येते विधातुम् । तस्मात् अन्या वचनव्यक्तिः । का पुनरसौ ? 'यथाचमसम् अन्यान् चमसान् चमसिनो भक्षयन्ति' इत्यनुवादः । चमसिनः चमसान् भक्षयन्त्येव, ते भक्षयन्तो यथाचमसमेव । अथ एतस्य हारियोजनस्य न केवलं चमसिनः, सर्वे एवेति । किमेवं भविष्यति ? सर्वशब्दश्च सर्वान्

वदन् नैकदेशे कल्पितो भविष्यति , न च द्वौ संबन्धौ अपूर्वौ एकस्मिन् वाक्ये भविष्यतः। तस्मात् एष पक्षो ज्यायानिति । तदर्था ह्येषा चमसिश्रुतिः हारियोजनस्य प्रशंसार्था । चमसिनः कीर्त्यन्ते हारियोजनं प्रशंसितुम् । कथम् ? महाभागो हि हारियोजनः, यस्मात् तत्र सर्वे लिप्सन्ते । अन्यान् चमसान् एकैकः, न ते महाभागाः , न्यूना हारियोजनादिति ।

वा—न युक्तः सर्वशब्दः पुरुषमात्रगामी सन् अधिकारेण विशेषितः पुनः चमसिशब्देन प्रयोजनान्तरौपाधिकेन सता विशेष्टुम् । यावद्यावत् हि शब्दः अल्पविषयी क्रियते , तावत्तावत् श्रुतिर्बाध्यते । तस्मात् चमसिनो न प्रत्येकं चमससंबन्धार्थमुपात्ताः । तेऽपि च अल्पविषयत्वेन प्रतिपाद्यन्ते हारियोजनस्य महाविषयत्वेन प्रशंसां कर्तुम् । अतो हारियोजने सर्वे एव इत्येतदेव सिद्धम् ।

शा—'संनिधेः सर्वशब्दोऽयं चमसिष्वेव वर्तते। **तेन तेषामयं भक्षो ग्रावस्तुत् नैव भक्षयेत्॥ उच्यते सर्वशब्दोऽयं कृत्स्नार्थवचनो यतः। तेन सर्वेषु वर्तेत, न संकोचोऽस्य युज्यते ॥'** तस्मात् ग्रावस्तुतोऽपि भक्षः ।

वि—' किं स्याच्चमसिनामेव हारियोजनभक्षणम् । सर्वेषां वा, ऽग्रिमस्तेषां पूर्ववाक्येण संनिधेः ॥, लिप्सन्ते सर्व एवेति हारियोजनवाक्यतः । ग्रावस्तुतोऽप्यस्ति भक्षश्चमसित्वमकारणम् ॥ '

भाट्ट— भक्षे समाख्यां प्रमाणमुक्त्वा वचनमिदानीमभिधीयते । ' यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते ' इति श्रुतम् । तत्र लिप्साशब्देन उपक्रमस्यार्थवादानुरोधात् , लिप्सामात्रग्रहणे अदृष्टार्थत्वापत्तेश्च लक्षणया भक्षणमभिधीयते । तच्च हारियोजने वक्ष्यमाणविधया वषट्कारनिमित्तं होमाभिषवनिमित्तं च यद्यपि प्राप्तम् , तथापि अत्र विशिष्टोद्देशे वाक्यभेदापत्तेर्भक्षान्तरमेव सर्वकर्तृविशिष्टं विधीयते । अथवा हारियोजनावान्तरप्रकरणे पाठात् तदीयभक्षानुवादेनैव ' पुरस्तादैन्द्रवायवस्य भक्षयति ' ' सर्वतः परिहारमाश्विनं भक्षयति ' इत्यादिवत् गुणमात्रं विधीयते । विशेषधर्मपुरस्कारेण कर्तृविधानाच्च नैककर्त्रवरोधे कर्त्रन्तरविधानानुपपत्तिशङ्का । सर्वथा वाचनिकः कर्तृविशेषः । तदिह सर्वपदं किं चमसिमात्रपरम् , किंवा प्रकृतसर्वार्त्विक्परमिति **चिन्तायाम्** , सर्वशब्दस्य सर्वनामत्वादुपस्थितपरामर्शित्वावगतेः, चमसिनामेव च पूर्वमुपस्थितत्वात् तेषामेव ग्रहणम् । इति प्राप्ते , चमसिशब्दस्य अन्यचमसेषु एकैकस्यैव चमसिनो भक्षणं न्याय्यम् , अत्र तु चमसिनामन्येषां च सर्वेषामेव तत् युक्तमित्येवं स्तुत्यालम्बनत्वेनैव उपपत्तेर्न पुनः सर्वपदसंकोचकत्वम् । अतश्च परमसर्वेण ( जगतीतलवर्तिना सर्वेण ) व्यवहारासंभवात् आवश्यकेन प्रकरणादिनैव प्रकृतकर्मकरमात्रग्रहणोपपत्तौ पुनश्चमसिभिर्विशेषणे प्रमाणाभावः । न च एवं पत्न्या अपि ग्रहणापत्तिः, मेषीवदेव पुंलिङ्गेन पत्न्याः ग्रहणानुपपत्तेः । चमसाध्वर्यूणां तु याज्ञिकाचाराभावादेव अग्रहणमिति ध्येयम् । नहि ऋत्विजः एव सर्वशब्देन ग्राह्या इत्यत्र अन्यत् किञ्चित् प्रमाणमस्ति । ७.

मण्डन—' ग्रावस्तुतो विधेर्भक्षः । '

शंकर—' भक्षो ग्रावस्तुतो भवेत् ।'

⌛ **ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् । ३।५।९।२७ ॥**

पूर्वपक्षसूत्रम् । ज्योतिष्टोमे ग्रावस्तुत् नाम होतृगणस्यश्चतुर्थः पुरुषः । तस्य सोमशेषभक्षो विद्यते नवेति संशये नास्तीति पूर्वः पक्षः । ग्रावस्तुतः नाम ऋत्विजः भक्षः सोमभक्षः न विद्यते । अनाम्नानात् यतस्तस्य भक्षो नाम्नातः ।

**हारियोजने वा, सर्वसंयोगात् । २८ ॥**

पूर्वपक्षस्य निरासार्थो वाशब्दः । ग्रावस्तुतः सोमभक्षो नास्तीति न मन्तव्यम् । हारियोजनो नाम यः सोमः, तस्मिन् सर्वेषामेव ऋत्विजां संयोगात् ' अथैतस्य हारियोजनस्य सर्वे एव लिप्सन्ते ' इति सर्वशब्देन संबन्धस्य उक्तत्वात् ग्रावस्तुदपि सर्वशब्देन उक्त एव भवति । तस्मात् ग्रावस्तुतोऽपि हारियोजनसोमभक्षः । हारियोजनो नाम न स्वतन्त्रं पात्रम् , किन्तु द्रोणकलश एव । तत्र एवं विशेषः, परिधिप्रहरणानन्तरम् उन्नेता द्रोणकलशेन सर्वम् आग्रयणपात्रगतं सोमं गृह्णाति । तं बह्वीभिर्धानाभिः



श्रीत्वा शीर्षणि निधाय उपनिष्क्रम्य संप्रेष्यति । वषट्कृते अनुवषट्कृते च हुत्वा हरति भक्षम् । तं सर्वे समशः प्रतिविभज्य चुस्चुषाकारं धाना भक्षयन्ति इति ।

**चमसिनां वा, संनिधानात् । २९ ॥**

पूर्वपक्षसूत्रम् । पूर्वसूत्रोक्तं सिद्धान्तपक्षमाक्षेप्तुं वा-शब्दः । चमसिनामेव हारियोजनेऽपि अधिकारः । तेषामेव संनिधानात् । ' चमसिनोऽन्यांश्चमसान् यथाचमसं भक्षयन्ति अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते ' इति एकमेवैतद्वाक्यम् । तेन सर्वशब्देन चमसिनामेवानुवादः । ततश्च नास्ति ग्रावस्तुतो भक्षः ।

**सर्वेषां तु विधित्वात्, तदर्था चमसिश्रुतिः ।३०॥**

पूर्वसूत्रोक्तपूर्वपक्षं तुशब्दो व्यावर्तयति । हारियोजने न केवलं चमसिनामेव संनिधानम् । किन्तु सर्वेषामेव संनिधानमृत्विजां यजमानस्य च । सर्वेषां विधित्वात् ' सर्व एव लिप्सन्ते ' इति वाक्यस्य सर्वविधानार्थत्वात् । ' चमसिनोऽन्यांश्चमसान् यथाचमसं भक्षयन्ति, अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते ' इति वाक्यस्य तु इत्थं स्वारसिकी योजना–चमसिनश्चमसान् भक्षयन्त्येव, ते च भक्षयन्तो यथाचमसमेव इत्यनुवादः । अथैतस्य हारियोजनस्य न केवलं चमसिनः, किन्तु सर्वे एव ऋत्विजो यजमानश्चेति । अर्थात् ग्रावस्तुदपि । तदर्था हारियोजनार्था हारियोजनस्तुत्यर्था चमसिश्रुतिः । महाभागो हारियोजनः, यस्मात्तत्र सर्वे लिप्सन्ते , अन्यांस्तु चमसान् एकैक एवेति । के.

* **ग्रावस्तुत्सहिताः** सर्वे एव हारियोजने भक्षयितारः । भा. ३।५।९।२७-३०.

* **ग्राहकग्रहणं** नाम साधिकारस्य विधेः प्रयोजनरूपस्य संनिधिसमाम्नातैः स्वयमप्रयोजनभूतैः प्रयोजनप्रयोजनीभावेन अन्विताभिधानम् ( इदं प्राभाकरोक्तम् )। **सोम.** ५।२।१ पृ. ४०६, * **ग्राहकग्रहणाख्ये** अन्विताभिधाने आकाङ्क्षा-योग्यता-संनिधानानि प्रयोजकानि , न तु शब्दोपात्तत्वमपि । ५।१।१ वर्णकं ३.

* **ग्रीष्मे** क्षत्रियस्योपनयनमाधानं च । वि. २।३।२.

* **ग्रमुष्टिः** महान् दर्भमुष्टिः । ' ग्रमुष्टिना अवोक्षति ' अग्निचयने अग्निम् । के.

---

## घ

* **घञादयः** प्रत्ययाः सिद्धस्वभावधात्वर्थद्योतकाः । वि. २।१।१ वर्णकं २. * ' **घटो भवति** ' इत्यत्र आक्षिप्तप्रयोजकव्यापारं प्रयोज्यव्यापारमात्रं विवक्ष्यते । **वा.** २।१।१।१. पृ. ३७८. * अपवरके **घटो नास्ति** इति निषेधः अपवरकाख्यस्य निषेधाश्रयस्य निषेध्यघटप्रदेशात् प्रदेशान्तरस्य सद्भावम् निषेध्यस्य च घटस्य प्रदेशान्तरे सद्भावमपेक्षते । **सु.** पृ. ५०७. * **घटौ** आनीयेताम् इत्युक्ते द्वितीयो घट एवानीयते नाश्वादिर्यथा, तथा वसानौ इत्यत्र द्वितीयः पुमानेव ग्राह्यः । पूर्वपक्षे । **रत्न.** ६।१।५. * ' **घटं करोति** ' इत्यत्र अभिधीयमानकर्मशक्त्या आक्षिप्तप्रयोज्यव्यापारो वा स्वयमेव आक्षिप्तप्रयोज्यव्यापारो वा केवलं प्रयोजकव्यापार एव विवक्ष्यते । वा. २।१।१।१ पृ. ३७७–३७८.

⌛ **' घटायोन्मीलितं चक्षुर्नहि पटं न पश्यति ' इति न्यायेन** तत्र चारितार्थ्येऽपि कल्पितस्य अग्रहणे किं मानम् ? **भूतिः.** पृ. ५९.

⌛ **घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः इति न्यायः** । अस्य न्यायस्याल्पशक्तिमतो बहुशक्तिमता सह विग्रहविवक्षायामवतार इति । **साहस्री.** ८८५.

⌛ **घटाल्पदर्पणन्यायः** । यथा घटानां कुम्भानामिभशिरसां वा अद्रिशृङ्गाणां वा विशालता अल्पेऽपि दर्पणे विलोक्यते , तथा प्रकृतेऽपि । यत्र लघ्वाधारे विशालाधेयमापनविवक्षा , तत्रायमवतरतीति शंकरजये । **साहस्री.** ८८४.

⌛ **घटाकाशन्यायेन** उपाध्युपधेययोः परस्परपरिच्छेदकत्वे अन्यतरस्यापि पूर्णत्वं न युज्यते अत उपाधिरपि अध्यस्त एव । तथा चाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वात् न परस्परपरिच्छेदकत्वम्, किन्तु इतरेतरतिरोधायकत्वमेवास्ति । **सनत्सु.** नी. ४।३, * घटाकाशन्यायेन एकोऽप्यात्मा भिन्नोपाधियोगेन अनेको भाति । १।२०.

* **घटादयो** हि प्रत्यभिज्ञायमाना अपि अवयवसंयोगलक्षणस्य असमवायिकारणस्य दर्शनात् अनित्याः,

तद्विनाशे विनाशसंभवात्। **ऋजु.** पृ. २५२, * **घटादयो** हि स्वरूपतो नोपलब्धियोग्याः, सतामपि आलोकविरहे विस्फारितलोचनैरपि अदर्शनात्। आलोकस्तु अविकलव्यापृतेन्द्रियस्य आसन्नः सन् उपलब्धिगोचर एव। पृ. २२०. * **घटादीनि** द्रव्यान्तरेण गैरिकादिना रक्तानि संयुक्तसमवेतद्वारेण अरुणादिशब्दैः अभिधीयन्ते। **वा.** ३।१।६।१२ पृ. ६८३. * **घटादिपदानि** घटत्वादिजातिस्मरणद्वारा घटादेः कार्यान्वयानुभवजनकानि इति प्राभाकराः। **मणि.** पृ.८२.* **घटादिवत्**। यथा निष्पन्नरूपाणां घटादीनाम् 'दश घटा आनीयन्ताम्' इत्यादौ आनयनादिक्रियाऽवच्छेदात् दशत्वसंख्याऽन्वयः, एवमिह प्रयाजानां निष्पन्नरूपाणामभावेन उत्पत्तिव्यतिरिक्तक्रियाऽन्तरावच्छेदात् संख्याऽन्वयानुपपत्तिः। **सोम.** १।५।३.

* **घटत्वत्वं** घटेतरासमवेतत्वे सति घटनिष्ठान्योन्याभावप्रतियोगिताऽनवच्छेदकत्वे सति समवेतत्वम्। **मणि.** पृ. १६१.

* **घटत्वसामान्यप्रत्यासत्त्या** नीलघटादिज्ञानम्। **मणि.** पृ. ५२.

**घटदर्शनायोन्मीलितं चक्षुरिति न्यायः।** अयं न्यायः, न च सन्ध्यावन्दनत्यागजन्यप्रत्यवायपरीहारनिमित्तकप्रायश्चित्तेन कथं ब्राह्मण्यमुत्पाद्यमिति वाच्यम्। घटदर्शनायोन्मीलितं चक्षुरिति न्यायेनोत्पादनीयत्वादित्युक्तः ध्वान्तखण्डननिबन्धने। **साहस्री.**८४४.

* युगपत् **घटपटसंयुक्तेन** इन्द्रियेण घटपटविषयैकज्ञानोत्पत्तावपि ज्ञानजन्यार्थप्रकाशाख्यस्य फलस्य आश्रयभूतघटपटभेदेन भेदात् घटप्रकाशांशे घटस्यानुरञ्जकत्वं घटप्रकाशांशे पटस्य इत्यंशभेदेन उभयोरेकज्ञानानुरञ्जकत्वं युक्तम्। **सु.** पृ. ७०४.

**घटप्रदीपन्यायः।** 'नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरम्' इति दक्षिणामूर्तिस्तोत्रीयचतुर्थश्लोके समायातः। **संग्रहः.** * घटप्रदीपन्यायः। यथा घटनिष्ठो दीपो घटस्योदरमात्रं भासयति, तथा प्रकृतेऽपि। **साहस्री.** ३६२.

**घटीयन्त्रनयः।** घटीन्यायः। 'स्वल्पैर्हि कर्मभिर्शनैरपि प्राप्ताः पुनःपुनः। घटीयन्त्रनयाज्जन्ममरणे नैव शाम्यतः॥' **स्कंदपु.** महेश्वरखण्डे अरुणाचलमाहात्म्ये उत्तरार्धे २।४. * घटीयन्त्रन्यायः। यथा 'जीवनग्रहणे नम्रा गृहीत्वा पुनरुत्थिताः। किं कनिष्ठाः किमु ज्येष्ठा घटीयन्त्रस्य दुर्जनाः॥' इत्यनेन विवृतोऽयमिति। **साहस्री.** ४१.

**घटीयन्त्रस्थितघटभ्रमणन्यायः।** अयं न्यायः स० द० सं० पातञ्जलदर्शनेऽभिहितः। तथाहि, 'श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः' इति। स च वायुः सूर्योदयमारभ्य सार्धघटिकाद्वयं घटीयन्त्रस्थितघटभ्रमणन्यायेनैकैकस्यां नाड्यां भवति। एवं सति अहर्निशं श्वासप्रश्वासयोः षट्शताधिकैकविंशतिसहस्राणि जायन्ते इत्यन्यत्र विस्तरः। **साहस्री.** ७२६.

**घट्टकुट्यां प्रभातम् इति न्यायः।** नन्वेवं प्रकरणाम्नातानृतवदननिषेधवाक्यार्थकथने अनारभ्याधीतहिंसानिषेधवाक्यस्य अनया प्रक्रियया इत्थमर्थो भवति। हिंसया पुरुषस्योपकुर्यादिति यत्, तन्न इति। तथा च पुरुषार्थहिंसानिषेध एव वाक्यार्थ इति क्रत्वर्थहिंसायाः तदविषयत्वात् तत्र नोत्सर्गापवादन्यायप्रवृत्तिः। अत इदं घट्टकुट्यां प्रभातम् इति चेन्न। **परिमलः** ३।१।६। २५ ब्र. सू. * घट्टकुटीप्रभातन्यायः। घट्टो नदीतीरादिस्थानम्, 'घाट' इति भाषायां प्रसिद्धः। तत्र कुटी वणिगादिभ्यो राजग्राह्यभागग्राहकराजभृत्यनिवासार्थमल्पः स्थानविशेषः। यथा घट्टकुटीस्थेभ्यः करग्राहिभ्यो भीत्या रात्रौ पलायितानां पथित्यजां वणिजां दूरे गत्वाऽपि यथा भ्रान्तिवशात्तत्र घट्टकुट्यामेव प्रभातोदयस्तथा प्रकृतेऽपि। **साहस्री.** १५२.

* **घर्मः**। प्रवर्ग्ये तप्ते घृते पयोनिक्षेपेण निष्यन्दिते यच्छिष्टं तत् घर्मशब्देनोच्यते। **सु.** पृ. १०१.

* 'महापापसमाचारः पापिष्ठो वाऽतिकिल्बिषी। **घुणाक्षरमिव** प्राच्यां प्राणान्मुक्त्वा शिवं व्रजेत्॥' (प्राच्यां प्राची सरस्वती नाम तीर्थस्थानम्, तत्रेत्यर्थः)। श्रीसोमनाथसमीपे। **स्कं. पु.** प्रभासखण्डे ६।३२.



**घुणाक्षरन्यायः।** घुणः कीटभेदः। यथा घुणेन भक्षिते काष्ठादौ ह्यकस्मात् ककारादिसदृशच्छिद्रेषु सत्सु घुणेनाक्षराणि निर्मितानि इति मूर्खैः कल्पयते तथा प्रकृतेऽपि। **साहस्री.** ८२.

* अबुद्धिपूर्वकस्य हि प्रामाण्यं **घुणाक्षरन्यायेन** क्वचिद् भवेदपि न सार्वत्रिकं भवेत् इति बौद्धः। **परिमलः.** २।२।८।४२ ब्र. सू., * न चैवमपि घुणाक्षरन्यायेन वेदसमानानुपूर्वीकस्य वाक्यस्य अर्थान्तरविवक्षया प्रयोक्तरि व्यभिचारः। सकलवेदवक्तृत्वस्य विवक्षितत्वात्। १।१।३ वर्णकं १ ब्रसू.

* '**घृतं** देवानां मस्तु पितॄणाम्' इत्ययं दीक्षार्थाभ्यङ्गसंबन्धिनवनीतविधेः अर्थवादः। **के.** ३।४।३।११. * 'घृतं प्रोक्षणम्' इति विहिते घृते प्रोक्षणे 'आपो देवीः शुद्धाः स्थ' इति प्रोक्षण्यभिमन्त्रणार्थो मन्त्रः 'घृत देव शुद्धमसि' इति ऊह्यते। **बाल.** पृ. १२७. * 'घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' (प्रदाने च) 'चत्वारिचत्वारि कृष्णलान्यवद्यति'। (कृष्णमुखगुञ्जापरिमितान् सुवर्णकणान् शतसंख्याकान् घृते प्रक्षिप्य गार्हपत्यादौ प्रखरोष्णीकरणे चरुत्वं सिद्धमिति ज्ञेयम्। के.)। **भा.** १०।१।१०।४०, * '**सौमारौद्रं घृते चरुं** निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः' अत्र प्राकृतयवनिवृत्तिः। १०।७।१९।६४. * 'घृते श्रपयति' कृष्णलचरुम्। अयं लुप्तार्थः प्रतिप्रसवविधिः। **बाल.** पृ. १६. * **घृताशने** षडहधर्मा भवन्ति। **भा.** ९।२। १२।४०, * **घृताशनमध्वाशनयोर्वैकल्पिकयोर्गवामयने** षडहान्तेऽनुष्ठानम्। १०।६।९।२७–२८. * '**घृतेष्टकाः** उपदधाति' इति घृतद्रव्यस्यैवोपधानं घटे पूरणेन संभवात् न तु मृन्मय्यः घृतेष्टकाः। **संकर्ष.** २।१।२४. * **घृतयागः** पशुकामेष्टौ सप्तयागगतः उपांशुयाजस्य विकृतिः। **वि.** १२।२।७ वर्णकं २. * '**घृतवतीमध्वर्यो** स्रुचमास्यस्व' स्रुगादापनमन्त्रोऽयम्। **संकर्ष.** ४।४।१०.

**घोटारूढस्य विस्मृतो घोटः इति न्यायः।** **बृहती.** पृ. १३५। लोके शून्यमनःकथासु श्रूयते घोटारूढस्य भवतो विस्मृतो घोटः इति। विस्मृतः चित्तादपक्रान्तः। **ऋजु.** पृ. १३५.

* **घ्राणमिन्द्रियं** गन्धमात्राभिव्यञ्जकतया गन्धवत्त्वानुमानेन पृथिवीप्रकृतिकम्। **मणि.** पृ. १९.

---

## च

* **चार्थे** इतरेतरयोगे (द्वंद्व–) समासविधानात्। **भा.** ६।१।५।२२ पृ. १३६६. * **चादीनां** निपातोपसर्गाणां पृथक् पदत्वेऽपि केवलाप्रयोगित्वेन स्वातन्त्र्येण अर्थप्रतिपादकत्वाभावात् पदान्तरार्थातिशयद्योतनार्थत्वावधारणात् तत्समभिव्याहृतस्य नामपदस्य आख्यातपदस्य वा तन्नैरपेक्ष्येण स्वार्थासमाप्तत्वात् पदान्तरान्वयानुपपत्तेः चादिशब्दोपहितयोरेव अन्वयः। **सु.** पृ. ४३४.

* **चशब्दः** अपिशब्दार्थवाची क्व चित् 'कुमाराश्च न पयो लभेरन्' कुमारा अपीत्यर्थः। **वि.** ११।१।९. * चशब्दः। तन्त्ररत्ने (१०।३।११ अधिकरणे) 'यथा प्रकृतेः परस्तादुच्चार्यमाणः प्रत्ययः स्वार्थे प्रकृत्यर्थान्वितमेव अभिधत्ते, तद्वत् चशब्दः यस्मात् पर उच्चार्यते तदर्थम् अर्थान्तरान्वितम् उच्चारितमात्रः एवाभिधत्ते, इति प्रकृतिप्रत्ययवत् चशब्दस्थलेऽपि मुख्यमेव श्रुतित्वम्। अन्यथा पुरस्तादपि उच्चार्यमाणः स्वार्थे कुर्यात्' इत्युक्तम्। तच्चिन्त्यम्। लोकवेदयोः चशब्दस्य व्यवहिततयाऽपि प्रयोगदर्शनेन पुरस्तात् प्रयोगेऽपि तदर्थप्रतीतेरिष्टत्वात्। तथा सति सर्वेषामपि निपातानां श्रुतित्वापत्तिः, ससंबन्धिकशब्दमात्रस्य श्रुतित्वापत्तिश्च। इति दिक्। **सोम.** १०।३।११. * चशब्दस्तावत् समुच्चयस्य न पर्यायवचनः। **टुपू.** १०।३।१४।५६. * चशब्दः तुशब्दस्य स्थाने 'किञ्चेह भवतः' इतिवत् गमयितव्यः (अचोदितं च कर्मभेदात् ३।४।३० इत्यत्र)। **वा.** ३। ४।११।३० पृ. ९६४. * चशब्दः तुशब्दस्थाने दृष्टश्च यथा 'किञ्चेह भवति' इति। 'गुणावेशश्च सर्वत्र' (गुणावेशस्तु सर्वत्र इत्यर्थः)। **भा.** ८।३।६।२८, * चशब्दः यस्मात् पर उच्चार्यते तस्य अर्थान्तरसंबन्धं श्रुत्यैवाह, न वाक्येन। यदि हि वाक्येन स्यात्, पुरस्तादपि उच्चार्यमाणः एतमर्थं कुर्यात्। १०।३।११।४२. * चशब्दः यस्मादर्थे (क्व चित्)। **ऋजु.** पृ. १६७. * चशब्दः समुच्चयं ब्रुवन् उपसर्जनत्वेन ब्रवीति, न

स्वं प्राधान्येन । तस्मात् यस्योपसर्जनं चशब्दः, सोऽत्र क्रियागुणाभ्यां संबध्यते । प्रधाने कार्यसंप्रत्ययात् सिद्धमिति । टुप्. १०।३।१४।५६. * चशब्दः समुच्चयं ब्रूते, परंतु न प्राधान्येन । समुच्चयशब्दस्तु समुच्चयं प्राधान्येन ब्रूते । चकारस्तु कारकद्वयोपसर्जनत्वेन समुच्चयं ब्रूते । **मीन्या.** * चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः । परपदविशेषणार्थं तु समुच्चयमुपादत्ते । यदि हि निर्दिशेत् क्रियागुणैः समुच्चयः संबध्येत । 'समुच्चयः शोभनः, समुच्चयो द्रष्टव्यः' इति यथा भवति, एवम् 'च शोभनः' 'च द्रष्टव्यः' इति वा भविष्यति । तथा यथेह समुच्चेययोः षष्ठी भवति, धवखदिरयोः समुच्चय इति एवं धवः खदिरश्च इत्यत्राप्यभविष्यत्, न तु भवति । तस्मान्न चशब्दः समुच्चयं निर्दिशति । **भा.** १०।३।१४।५६. * **चशब्दस्य द्योतकत्वम्** । **टुप्.** १०।३।१४।५६. * चशब्दस्य निपातत्वेन अवाचकत्वम् ( निपाता द्योतकाः ) । **सोम.** ६।१।१३. * चशब्दस्य यद्यपि पदात् परत्वं न स्मर्यते, तथापि प्रयोगनियमात् अनभिधानाच्च परस्तादेव प्रयुज्यते । नहि असौ पुरस्तात् प्रयुज्यमानः अर्थमभिधत्ते । **रत्न.** १०।३।१४।५६. * **चशब्दे** उच्चरिते इतरेतरयोगः प्रतीयते, स तस्यार्थः । **टुप्.** १०।३।१४।५६.

**चक्रकन्यायः** । अन्योन्याश्रय एवावर्तितः चक्रकं भवति । तच्च स्वापेक्षापेक्ष्यपेक्षित्वरूपमिति । अस्यापि हि आत्माश्रयवत् त्रैविध्यमिति । **साहस्री.** ६११.

**चक्रनाभिन्यायः** । मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे ( ११८।१ टीकायां ) अव्यक्तमव्याकृतमायाशबलं हार्दाकाशः इति पर्यायाः त्रिगुणात्मकस्य कारणस्य ब्रह्मणो वाचकाः । 'चक्रे नाभिरिव श्रिता' इति प्रयोगदर्शनात् । तत्र विशिष्टे निकृष्टं चक्रनाभिन्यायेन श्रितं वस्तु अव्यक्ताख्यम् । 'किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम्' इति पृष्टः ते त्वया अहमिति । **साहस्री.** ७६१.

**चक्रभ्रमणन्यायः** । यथा चक्रभ्रान्तिहेतौ कुलालव्यापारे निवृत्तेऽपि भ्रान्तिक्षयो वेगक्षयादेव भवति, तथा प्रकृतेऽपि । ( अज्ञाने नष्टेऽपि जीवन्मुक्तिः । **संग्रहः** ) **साहस्री.** २७९.

**चक्रवाकीचक्रवाकन्यायः** । श्रूयते हीमौ जलचरपक्षिदम्पती दिने संपृक्तौ सन्तौ यथेच्छं नदीतीरे विहरतः, सूर्यास्तवेलायामन्यतरः उड्डीय नद्याः परे पारे गत्वा शब्दायते, इहत्यस्तदनुकृत्योड्डीय परे पारे याति, परस्थः अवारतीरे आयाति, पुनः परस्थः अवारमवारस्थः पारं यात्यायाति चैवं रात्रिपर्यन्तं कुरुतः । दिने पुनर्मीलतो रात्रौ वियुज्यते इत्येवं विषयविवक्षायामयमवतरतीति । **साहस्री.** ५५६.

* '**चक्षुषी वा एतौ** यज्ञस्य यदाज्यभागौ' इति आज्यभागयोः फलार्थवादः, न तु फलविधिः दर्शपूर्णमासयोः । भा. ४।३।१।१–३, * **चक्षुषा** रूपमुपलभ्यते इति दर्शनादेवावगतम् । १।१।२।२ पृ. १६. * **चक्षुषः** प्रकाशानुग्रहापेक्षितत्वेऽपि रूपमर्थः । (अर्थो विषयः) । **वा.** ३।२।१।१ पृ. ७४७, * चक्षुषः सामान्यम् अनित्यत्वमगृह्णतोऽपि रूपग्रहणशक्तिर्न विरुध्यते । ३।४।४।१३ पृ. ९४०. * योग्यतालक्षणसंबन्धेन **चक्षुषो** ग्राहकत्वात् चक्षुर्ग्राह्यरूपसमानदेशस्यापि स्पर्शादेः अयोग्यत्वेन अग्रहणं युक्तम् । **सु.** पृ. ७७२. * **चक्षुषोरञ्जनं** संस्कारः न फलप्रयुक्तः ( दीक्षायाम् ) । **भा.** ४।३।१।१–३. * **चक्षुरादेः** उत्पन्नस्यापि स्वाभाविकं रूपग्रहणसामर्थ्यं नैव विहन्यते । **बृहती.** १९४. * **चक्षुरादिपदानां** संसर्गिद्रव्यवाचकानां पशुगणस्याध्रिगुप्रैषगतानां नोहः । **भा.** ९।३।१०।२७–२८. * **चक्षुरादिशब्दा** न गोलकवाचकाः, किन्तु रूपदर्शनसामर्थ्यरूपतेजोमात्रादिवाचकाः । **वि.** ९।३।१०. * **चक्षुरिन्द्रियं** तेजोरश्मिरूपम् । 'तेजोरश्मिवचनस्तु अयं ( चक्षुःशब्दः )' । **भा.** ९।३।१०।२७. * चक्षुरिन्द्रियं रूपमात्राभिव्यञ्जकतया रूपमत्त्वानुमानेन तेजःप्रकृतिकम् । **मणि.** पृ. १९.

**चक्षुर्दीपन्यायः** । यथा अन्धकारावृतघटादिदर्शने चक्षुर्दीपौ उभावपि अपेक्ष्येते, दीपदर्शने तु तथा न, किन्त्वेकं चक्षुरेवापेक्ष्यते । तथा 'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता । स्वयंस्फुरणरूपत्वान्नाभास उपयुज्यते ॥' इति ( पञ्चदश्याम् ) । **साहस्री.** ४५३.



* **चक्षुष्कामेष्टौ** 'अग्नये भ्राजस्वते' इति द्विः, मध्ये च सौर्यश्चरुः । तत्र अग्न्योर्भ्राजस्वतोः आवाहनं प्रदानं च न तन्त्रम् । **संकर्ष.** ४।४।९.

* **चणकाः** मुद्गानां न प्रतिनिधिः, 'अयज्ञिया वै माषाश्चणकाः कोद्रवाः' । **वि.** ६।३।६.

**चण्डालधृतैकहस्तन्यायः** । अयं श्लोकेन विवृतः । तथाहि, 'यथाहि चण्डालधृतैकहस्तो मज्जन्नगाधेऽपि सरित्प्रवाहे । भवेन्न पूतः शशिभोगतोऽपि तथा न शुध्येद्दुष्ट पापयुक्तम् ॥' इति **ज्योतिश्चिन्तमणौ** विस्तर इति । **साहस्री.** ५७६.

* ननु 'वस्त्रान्तरितचण्डालस्पर्शेऽप्यापतिते क्वचित् । साक्षात्स्पृष्टवदेवेष्टा सचेलस्नानशुद्धता ॥ सत्यं तत्रेष्यते स्नानं तद्वस्त्रस्पर्शकारितम् । अशुद्धिकारणं तद्धि चण्डालस्पर्शवन्मतम् ॥ तथा च तद्वियुक्तेऽपि वस्त्रे तत्स्पर्शदूषिते । स्पृश्यमाने भवत्येव दोषः संयुक्तवस्त्रवत् ॥' चण्डालस्पृष्टवाससश्च अस्त्येवामेध्यता । तस्मादस्ति सलिलादिशुद्धिः । **वा.** १।३।२।३ पृ. १८१. * युगपदनेक**चण्डालादिस्पर्शादौ** नैमित्तिकस्य स्नानादेः तन्त्रेण सकृदनुष्ठानम् । अनेकनिमित्तसंनिपाते नैमित्तिकसाहित्यम् । **भाट्ट.** ५।२।१२.

* **चत्वारि शृङ्गा** चत्वारो होत्राः शृङ्गाणीवास्य, त्रयो अस्य पादा इति सवनाभिप्रायम्, द्वे शीर्षे इति पत्नीयजमानौ, सप्त हस्ता इति छन्दांसीत्यभिप्रेत्य, त्रिधा बद्ध इति त्रिभिर्वेदैर्बद्धः, वृषभः कामान् वर्षतीति, रोरवीति शब्दकर्मा, महो देवो मर्त्यानाविवेश इति मनुष्याधिकाराभिप्रायम् । **भा.** १।२।४।३८. चत्वारि शृङ्गेति रूपकद्वारेण यागस्तुतिः कर्मकाले उत्साहं करोति । हौत्रे तु अयं ( मन्त्रः ) विषुवति होतुराज्ये विनियुक्तः । तस्य च आग्नेयत्वात् अहश्च आदित्यदेवतत्वसंस्तवात् आदित्यरूपेण अग्निस्तुतिरुपवर्ण्यते । तत्र चत्वारि शृङ्गा इति दिवसयामानां ग्रहणम् । त्रयो अस्य पादा इति शीतोष्णवर्षाकालाः । द्वे शीर्षे इत्ययनाभिप्रायम् । सप्त हस्ता इति अश्वस्तुतिः । त्रिधा बद्ध इति सवनाभिप्रायेण । वृषभ इति वृष्टिहेतुत्वेन स्तुतिः । रोरवीति स्तनयित्नुना । सर्वलोकप्रसिद्धेः महान् देवो मर्त्यानाविवेश इत्युत्साहकरणोपकारेण सर्वपुरुषहृदयानुप्रवेशात् । **वा.**

* **चत्वारोऽभिप्लवाः** एकः पृष्ठ्यः षडहः स मासः ( गवामयने ) । **संकर्ष.** ३।१।२५.

* '**चतुर्भिरभ्रिमादत्ते**' अत्र मन्त्रचतुष्टयान्ते अभ्यादानसंनिपातः । न तु प्रतिमन्त्रं मन्त्रविकल्पो वा, वाचनिकसंख्यया प्रतिसंनिपातस्य बाधितत्वात् । मन्त्रास्तु देवस्यत्वा, अभ्रिरसि, बभ्रिरसि, हस्त आदाय इति च । **भा.** १२।३।१४।३०. * चतुर्भिरभ्रिमादत्ते इत्यादौ मन्त्राणां समुच्चयः । **वि.** १२।३।१४.

* '**चतुर्भिश्च चतुर्भिश्च** द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥' 'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम्, ये यजामह इति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः ।' **वि.** १०।८।१.

* **चतुःसंख्याऽनुग्रहो** निर्वापे मुष्टिलोपेन वाजपेयगतसप्तदशशरावे **चरौ** । **भा.** १०।२।२८।६४–६७. * चतुःसंख्याविशिष्टो निर्वापः एकः पदार्थः । **टुप्.** ५।२।३।५.

* **चतुरवत्तम्** उपस्तरणाभिघारणाभ्याम् । **भा.** १०।८।१२।२९–३२, * चतुरवत्तम् उपांशुयाजेऽपि कर्तव्यमेव उपस्तरणाभिघारणयोरभावेऽपि । १०।८।१३।३३–३४. * 'चतुरवत्तं जुहोति' अत्र जुहोतेः प्रक्षेपमात्रपरत्वं स्वीक्रियते, तत्र अधिकार्थस्य न्यूनार्थकत्वे लक्षणादोषः । **बाल.** पृ. ४. * 'चतुरवत्तं जुहोति' ( उपस्तृणाति, द्विर्हविषोऽवद्यति, अभिघारयति, चतुरवत्तं जुहोति ) अत्र होमस्याप्राप्तत्वात् न तमुद्दिश्य द्रव्यं विधीयते । चतुरवत्तं च पूर्ववाक्यकल्पितं प्रयोजनापेक्षमस्ति । तस्मात्तस्य अनेन प्रक्षेपमात्रं शक्यं विधातुम्, इति न चतुरवत्तविशिष्टहोमविधानमवकल्पते । **वा.** ३।४।१४।४१ पृ. ९८१. * 'चतुरवत्तं जुहोति' इदं आग्नेयचोदनया विहिते यागे होमरूपा प्रधानसमकालीना प्रतिपत्तिः । इदं सर्वप्रदानाधिकरणे वार्तिके प्रतिपादितम् । **बाल.** पृ. ८२. * 'चतुरवत्तं जुहोति' दर्विहोमेषु इदं विधानम् । **संकर्ष.** २।२।५. * चतुरवत्तं

होमे श्रूयते 'चतुरवत्तं जुहोति' इति, न होमार्थे पुरोडाशे सांनाय्ये वा । भा. १०।८।१२।३१.

* अष्टाकपालादीनां हविष्ट्वात् 'द्विर्हविषोऽवद्यति' इति अवदाने गृहीते चोदनाऽन्तरेण तत्संस्कारार्थोपस्तरणाभिघारणग्रहणात् चतुरवत्तं निष्पन्नम् । वा. १।४।६।९ पृ. ३४०. * यत्र पुनः प्रधानद्रव्यात् चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्यात् चतुरवदातव्यम् । चतुरवत्तमिह होतव्यं विवक्ष्यते, न इतस्ततो वा चतुरवदातव्यमिति । भा. १०।८।१३।३४.

* **चतुरवत्तचोदनया** अर्थप्राप्तावदाने संख्यामात्रम् 'द्विर्हविषः' इति विधीयते, न तु द्वित्वविशिष्टमवदानम् । इति टुप्टीकार्थः । **के.** ५।२।३।४.

* **चतुरवत्तवाक्ये** चतुरवत्तानुवादेन होमविधिः इति पक्षे द्व्यवदानवाक्ये द्व्यवदानविध्यवश्यम्भावेऽपि चतुरवत्तहोमावयवतया विधानान्न पृथक् पदार्थत्वम्, इति प्रदानान्तानुसमय एव नानाबीजेष्ट्यधिकरणन्यायेन । **सोम.** ५।२।३, * चतुरवत्तवाक्ये जुहोतिना देवतोद्देशत्यागांशानुवादेन प्रक्षेपः अवत्तसंस्कारो विधीयते । ५।२।३, * चतुरवत्तवाक्ये 'यच्चतुरवत्तम्' इत्यनूद्य तत्संस्कारतया होमविधिः इति पक्षम् अवत्तहोमविधिः इति पक्षं च दशमे वक्ष्यति । ५।२।३.

* 'यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या' ( आज्यं हिरण्यं वपा हिरण्यम् आज्यमिति पञ्चावत्तता ) । भा. १०।७।१९।६४.

* '**चतुरस्राः** भवन्ति' इष्टकाः । अयम् आक्षिप्ताश्न्युद्देशेन गुणमात्रविधिः । **संकर्ष.** २।१।२.

* **चतुरहे** पुरस्तात् माघ्याः पौर्णमास्याः, गवामयनस्य दीक्षा । भा. ६।५।९।३०–३७. * 'चतुरहे सुत्यामागच्छ मघवन्' इति प्रकृतौ कालेयत्ता विवक्षिता । **टुप्.** ११।४।७।२७.

**चतुरुपह्वयते इति इडोपहूतेति पदविषय एवाभ्यासः ॥**

'चतुरुपह्वयते' इति विधिना इडानिगदः सर्वोऽपि चतुर्वारमावर्तनीयः । चतुरनुवाकः पठ्यतामित्यादौ तथा दर्शनात् । इति प्राप्ते, इडोपहूतेति पदे एव प्रकृत्य अस्य पाठात् पदविषयिण्येव आवृत्तिः । समिद्घृतन्यायेनायं प्रवादः । **संकर्ष.** ४।३।१८.

* **चतुर्गृहीतद्वयस्य** उपभृति विधानम् । **भा.** ४।१।१७।४६–४८. * **चतुर्गृहीतद्वयाधिकरणविचारः** । ( ४।१।१७।४६–४८ ) । चतुर्थाध्यायाद्यपादे अन्त्याधिकरणे अनारभ्याधीतम् 'चतुर्गृहीतं जुहोति' इति वाक्यं सिद्धान्तसाधकत्वेनोपन्यस्तम् । 'चतुर्गृहीतं जुहोति' इति हि अनारभ्याधीतेन होमाङ्गं चतुर्गृहीतं प्राप्तम्, तेन 'अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्' इति होमाङ्गभूतग्रहणाङ्गभूताष्टसंख्या बाधिता चतुष्ट्वद्वयलक्षणार्था इति । तदनुपपन्नम् । 'चतुर्गृहीतं जुहोति' इति हि होमानुवादेन चतुर्गृहीतं विधत्ते । न च प्रयाजानुयाजयोर्होमः केन चित् प्राप्तः । एवम् आज्यभागयोः उपांशुयाजे च होमस्याप्राप्तेः न चतुर्गृहीतं विधीयते । अथ 'चतुर्गृहीतं जुहोति' इति चतुर्गृहीतविशिष्टहोमविधिः इत्युच्यते, तदपि अनुपपन्नम् । नहि अत्र दर्शयागादि किञ्चिदनूदितम्, न वा 'यस्य पर्णमयी जुहूः' इत्यादिवत् कर्माव्यभिचारि किञ्चित् द्वारमनूद्य होमविधानम् । कर्माङ्गत्वैव अस्य होमस्य न स्यात् । किन्तु विश्वजिद्वत् कल्प्यफलं स्वतन्त्रमेवेदं होमान्तरमापद्येत ।

**अथ** मतम् 'चतुर्गृहीतम्' इति द्वितीयाबलात् तदनूद्य तत्संस्कारकत्वेन प्रतिपत्तिभूतो होमो विधीयते । चतुर्गृहीतस्य होमाङ्गत्वोक्तिस्तु तन्त्ररत्ने होमोपकारकत्वमात्राभिप्राया इत्युच्यते, **तदप्ययुक्तम्** । एवमपि अस्य अनारभ्याधीतत्वात् चतुर्गृहीतस्य भोजनादौ लोकेऽपि संभवात् निर्वापालम्भवत् ( २।३।५।१२–१५ ) न वैदिककर्माङ्गचतुर्गृहीतोपस्थितिरस्ति इति नास्य होमस्य प्रयाजाद्यङ्गता सिध्येत् । अथ चतुर्गृहीतस्य होमाङ्गत्वोक्तिवत् अनारभ्यवादत्वोक्तिर्नाद्रियते, ततोऽस्तु नाम कर्माङ्गचतुर्गृहीतोपस्थितिः, तथापि यत्र चतुर्गृहीतं विहितमस्ति 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इत्यत्र, तत्रैव विनैव चतुर्गृहीताक्षेपेण होमविध्युपपत्तौ नोपांशुयाजाज्यभागादौ चतुर्गृहीताक्षेपो होमविधिना उपपद्यते शूद्रस्य विद्याऽऽक्षेपवत् कर्मभिः । एतेन इदमपि निरस्तम्, यथा "अध्ययनस्य स्वाध्यायार्थत्वविधिरेव सामर्थ्यदृष्टार्थत्वसनाथः



स्वाध्यायस्यार्थज्ञाने विनियोगमाक्षिपति, यथा वा 'चरुमुपदधाति' इति चर्वर्थोपधानविधिरेव सामर्थ्यदृष्टार्थत्वप्रकरणैश्चरोः, एवं होमोऽपि उपांशुयाजाद्यर्थः सन् स्वभाव्यस्य चतुर्गृहीतस्योपांशुयाजाद्यर्थतामाक्षिपति' इति ।

**अथ** मतम् उपांशुयाजाज्यभागादिष्वपि ध्रौवमेव चतुर्गृहीतमङ्गमस्ति इति तदनूद्यैव होमविधिरयम् । **एवमपि** औपभृते चतुर्गृहीतस्यानेन विध्यभावात् नाष्टत्वस्य चतुष्ट्वद्वयलक्षणार्थता सिध्येत् । किञ्च एवं सति उपांशुयाजादौ ध्रौवस्यैव एकदेशं सकृदेव जुह्वां गृह्णीयात् समानयनवत्, न तु अपरं चतुर्गृहीतं सिध्येत् । **अथ** एवमेतद्दोषद्वयोद्धारोऽभिमतः । औपभृते होमस्यैव असिद्धेः न होममनूद्य चतुर्गृहीतं विधीयते, किन्तु चतुर्गृहीतमनूद्य होमो विधेयः । तत्र च अन्योन्याश्रयापत्तिः, अष्टत्वेन चतुष्ट्वद्वयलक्षणायां सत्यां प्राप्तं चतुर्गृहीतमनूद्य होमो विधेयः, होमविधौ च तस्याङ्गत्वनिर्वाहाय चतुर्गृहीतस्य आक्षेपतः प्राप्तौ तल्लक्षणा अष्टत्वेनेति । अतः समानयनदृष्टार्थत्वादेव औपभृते होमप्राप्तौ चतुर्गृहीतविधिः इत्याद्यदोषरिहारः । किञ्चेत्यादिद्वितीयदोषस्य परिहारस्तु, उपांशुयाजादौ ध्रौवैकदेशस्य चतुर्गृहीतत्वाभावात् । अतः तदनूद्य होमविध्ययोगात् होमानुवादेनैव चतुर्गृहीतं विधेयमिति । **एतदप्ययुक्तम्**, उपांशुयाजादौ होमाप्राप्तेरेव । किञ्च यदुक्तं ध्रौवैकदेशस्य चतुर्गृहीतत्वाभावादिति, तदपि न, प्राक्तनप्रयाजत्रयविषयजौहवेऽपि चतुर्गृहीतैकदेशस्यैव चतुर्गृहीतशब्देन लक्षणयोक्तेः तद्वदेव ध्रौवेऽपि संभवात् । एवमपि औपभृते चतुर्गृहीतस्य अनेन विध्यभावात् नाष्टत्वस्य चतुष्ट्वद्वयलक्षणार्थता सिध्येत् इति दोषः पूर्वोक्तः स्यादेव । किञ्च एवं ध्रौवात् जुह्वामुपांशुयाजाद्यर्थं चतुर्गृहीतं न सिध्येत् इत्यपि पूर्वोक्तो दोषः प्रसज्येत । यदि च तत्र कृत्स्नचतुर्गृहीतसंस्कारकहोमस्य अङ्गत्वानुपपत्त्या चतुर्गृहीतं प्रति होम आक्षिप्येत, ततः प्रयाजत्रयेऽपि प्रत्येकं तादृशहोमस्य अङ्गत्वानुपपत्त्या प्रत्येकं चतुर्गृहीतमाक्षिप्येत । **अथ** 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति सामान्यतः, 'अभिक्रामं जुहोति' इत्यादि विशेषतो लिङ्गदर्शनैरेव उपांशुयाजप्रयाजानुयाजाज्यभागेषु होमप्राप्तिः । 'चतुर्गृहीतं जुहोति' इत्यनेन तु प्राक्तनप्रयाजत्रये चतुर्गृहीतसत्त्वात् तद्व्यतिरिक्तेषु होमवत्सु चतुर्गृहीतं विधीयते, प्राक्तनप्रयाजत्रये तु 'चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इत्युद्देश्यभूतप्रयाजसाहित्यस्य अविवक्षितत्वेन प्रतिप्रयाजं चतुर्गृहीतप्राप्त्याशङ्कायामपि जुह्वेकत्वात् एकस्यैव चतुर्गृहीतस्य तन्त्रेण लिङ्गदर्शनप्राप्तहोमसाधनतासिद्धेः न तत्र 'चतुर्गृहीतं जुहोति' इत्यस्य व्यापारः इति । **तदप्ययुक्तम्** । लिङ्गदर्शनमात्रस्य होमप्रापकत्वायोगात् । अत एव तत्रतत्र भाष्यकारेणोक्तम् 'लिङ्गमसाधकं प्राप्तिरुच्यताम्' इति । **न च** सप्तमे 'स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्' इत्यत्र लिङ्गमात्रस्य प्रापकत्वमिव अत्रापि तथा स्यात् इति **वाच्यम्** । तत्रापि इतिकर्तव्यताऽऽकाङ्क्षाभावनाविध्यन्यथाऽनुपपत्त्या सामान्यतः अतिदेशकल्पने 'अक्ताः शर्कराः' इत्यत्र अर्थवादेनेव लिङ्गैः विशेषमात्रावगमात् इति । **अत्र ब्रूमः** । यजतिचोदनाचोदितेषु द्रवद्रव्यकेषु प्रतिपत्तिरूपे आचारात् होमे प्राप्ते अनारभ्यवादेन 'चतुर्गृहीतं जुहोति' इत्यनेन चतुर्गृहीतमात्रविधिः । सोऽपि उक्तरीत्या आद्यप्रयाजत्रयव्यतिरिक्तेषु इति ।

यत्तु शास्त्रदीपिकायां सर्वप्रदानाधिकरणे "ननु आचारादेव होमः प्राप्तः' इत्याशङ्क्य दूषितम् 'न आचारस्य स्वतः प्रामाण्याभावात् श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावे अनुपपत्तेः । यदि च आचारप्रमाणको होमः स्यात् ततस्तस्य प्रकृतिविकृतिसाधारणत्वात् विकृतिष्वपि औपदेशिक एव होमः इति प्रत्यक्षद्वारत्वात् आहवनीयादयः पवमानेष्ट्यादिषु उपदेशादेव प्राप्येरन् 'अग्नयश्च स्वकालत्वात्' इति न्यायात्, तत्र 'तासामग्निः प्रकृतितः प्रयाजवत्' इति सूत्रकारव्यवहारो नोपपद्येत" इति । **तदपि** चतुरवत्तहोमविषयमेव, तत्रैव प्रत्यक्षश्रुत्या उपस्तरणादिवाक्यप्राप्तचतुरवत्तानुवादेन होमविधिसंभवात् आद्यदूषणापातात् । 'चतुर्गृहीतं जुहोसि' इत्यत्र तु न तदापत्तिः, चतुर्गृहीतप्राप्त्यभावात् तदनुवादेन होमविधेरसंभवस्योक्तत्वात् । नापि द्वितीयदोषप्रसक्तिः 'तासामग्निः' इति सूत्रस्य चतुरवत्तहोममात्रविषयतयाऽपि उपपत्तेः इति । (इति चतुर्गृहीतद्वयाधिकरणविचारः) । **बाल.** पृ. १०९

–१११. * चतुर्थं चतुर्गृहीतम् अनूयाजार्थम् इतरच्च प्रयाजार्थम् इति सिद्धं भवति । भाट्ट. ४।१।१०.

* चतुर्थे अध्याये प्रयोगरूपा विधेरवस्था निरूपिता । कणिका. पृ. ४१२. * चतुर्थे अध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तम्, तत्र प्रसर्तव्यम् । भा. ५।१।१।१. टुप्— भाष्यकारेण चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तमित्युक्तम्, तदयुक्तम् । कुतः ? क्रत्वर्थपुरुषार्थजिज्ञासा हि सूत्रकारेण प्रतिज्ञाता । सैव उपसंहर्तव्या । उच्यते । प्रयोजकाप्रयोजकमपि प्रतिज्ञातम् 'अर्थे समवैषम्यम्' ( ४।१।८।२१ ) इत्यत्र । द्वयोरेकस्मिन्नपि उपसंह्रियमाणे इतरत् लक्ष्यते एव । अथवा प्रयोजकाप्रयोजकेत्येवोपसंहर्तव्यम् । यतः असाधारण्येन लक्षणभेदः । इतरथा द्वादशपादम् ( तृतीयस्य अष्टौ चतुर्थस्य चत्वार इति ) एकं लक्षणं स्यात् । यावच्च ( तन्त्ररत्नानुसारेण ) शेषी नावधार्यते, न तावच्छेषभावः । नहि सामान्येन व्यवहारः । 'कर्माण्यपि जैमिनिः' ( ३।१।३।४ ) इत्यनेन कर्मणां फलशेषभाव उक्तः । अतः शेषत्वावगमेनैव अस्य पुरुषार्थतायाः सिद्धत्वात् पुरुषार्थजिज्ञासया अध्यायभेदो नोपपद्यते । तेन सा तेनैव गतत्वात् नाध्यायान्तरेण कार्या । 'असंयुक्तं प्रकरणात्' ( ३।३।४।११ ) इति चानेन क्रत्वर्थलक्षणमुक्तम् । श्रुत्यादिभिर्यदसंयुक्तं फलवता च क्रतुना प्रकरणेन गृह्यते तत् क्रत्वर्थम् । प्रयोजकाप्रयोजकत्वं तु नोक्तम् । तदिहोच्यते । 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इति सूत्रं किंपरतया उपादीयते ? क्रत्वर्थपुरुषार्थयोर्हि अनन्तरं प्रयोजकाप्रयोजकौ, तयोर्लक्षणार्थम् । ५।१।१।१. * चतुर्थे अध्याये प्रवृत्तिलक्षणे प्रयोज्यवर्गनिर्णयः प्रयोज्यगोचरः, क्रमस्तु अतः परं निरूप्यते । ( पुनरपि 'चतुर्थाध्याय'शब्दे इदं द्रष्टव्यमुपरिष्टात् ) । भा. ५।१।१।१, * चतुर्थे अहनि द्वादशाहगते त्रैशोकं नाम साम 'विश्वाः पृतना अभिभूतरं नरम्' इत्यतिजगत्यामुत्पन्नम् । ९।२।५।२१ वर्णकं २. * चतुर्थे च एवंकामशब्दरहितस्य फलविधित्वनिराकरणात् । वा. ११२। २१२२ पृ. १३६.

* 'चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यते' इत्यत्र षोडशी नाहीनस्य चतुर्थेचतुर्थेऽहनि ग्राह्यः एकस्मिन् अहीने चतुर्थेऽहनि, अन्यस्मिन्नहीनेऽपि चतुर्थेऽहन्येव इति । न तु एकस्मिन् अहीने चतुर्थे अष्टमे द्वादशेऽहनि इति । भा. १०।५।१४।५५–५७. * चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यते इत्यधिकरणे एकस्याहीनस्य एकमेव चतुर्थम् । वीप्सा तु अहीनान्तरमादाय इति । कौ. २।३।१०।२२ पृ. ७४.

**चतुर्थेचतुर्थेऽहन्यहीनस्य गृह्यते इत्यभ्यासेन प्रतीयेत भोजनवत् । १०।५।१४।५५ ॥**

'चतुर्थेचतुर्थे अहनि अहीनस्य गृह्यते' इति श्रुत्या एकैकस्मिन् अहीने चतुर्थे पुनस्ततश्चतुर्थे अहनि इति अभ्यासेन षोडशी ग्रहः प्रतीयेत, न तु एकस्मिन् अहीने चतुर्थेऽहनि, द्वितीयेऽहीने चतुर्थेऽहनि, एवं तृतीये चतुर्थे अहीने इति अभ्यासः । भोजनवत् । यथा 'चतुर्थेचतुर्थेऽहनि देवदत्तो भुङ्क्ते' इत्युक्ते चतुर्थेऽहनि भुक्त्वा पुनः ततश्चतुर्थेऽहनि इति गम्यते तद्वत् । तस्मादेकस्मिन्नहीने इति पूर्वः पक्षः ।

**अपिवा संख्यावत्त्वान्नानाऽहीनेषु गृह्यते, पक्षवदेकस्मिन् संख्यार्थभावात् । ५६ ॥**

पूर्वपक्षव्यावृत्त्यर्थः अपिवाशब्दः । चतुर्थे अहनि इति षोडशिग्रहणस्य संख्यावत्त्वात् संख्यासंबन्धात् नाना अहीनेषु एव षोडशी गृह्यते इति सिध्यति । नाना अहीनेषु एकस्मिन् अहन्येव चतुर्थे संख्यायाः अर्थस्य प्रयोजनस्य भावात् विद्यमानत्वात् । एकस्मिन्नेव अहीने तु चतुर्थे अष्टमे इति वक्तव्यं स्यात् द्वादशाहाविकस्य अहीनस्य अभावात् चतुर्थेचतुर्थे इति वीप्सा व्यर्था स्यात् । एकस्मिन् अहीने आदितश्चतुर्थेऽहनि, तथा अन्यस्मिन्नहीनेऽपि आदितश्चतुर्थेऽहन्येव, अपरस्मिन्नपि अहीने तथैव, एवं अन्यत्रान्यत्र इत्येव श्रुतिवाक्यार्थः । पक्षवत् यथा पञ्चम्यांपञ्चम्यां भुङ्क्ते इति वीप्सायाः एकस्मिन् शुक्ले कृष्णे वा पक्षे पञ्चमीद्वयाभावात् पक्षान्तरं ज्ञायते, एवं चतुर्थेचतुर्थेऽहनि इति वीप्सया अहीनान्तरं ज्ञायते । तस्मात् नाना अहीनेषु ग्रहीतव्यः इति सिद्धान्तः ।



**भोजने तत्संख्यं स्यात् । ५७ ॥**

पूर्वपक्षिणा 'चतुर्थेचतुर्थेऽहनि देवदत्तो भुङ्क्ते' इति भोजनवत् इति यदुक्तं ( ५५ सू. ), तत्राह । भोजने तत्संख्यं भोजनदिनमारभ्य चतुष्ट्वसंख्यावत्त्वं स्यात् लोकाभिप्रायात् । अहीने तु शब्दाभिप्रायं ग्राह्यम् । तस्मात् नानाऽहीनेषु चतुर्थेऽहनि षोडशिग्रहणम् इति सिद्धान्तः ।

अत्र कुतूहले 'भोजने संख्यावत्त्वात्ततोऽधि संख्या स्यात्' इति सूत्रानुपूर्वी । तदर्थश्च– उदाहृते भोजनवाक्ये प्रकरणादिगम्यतात्पर्यवशेन संख्यावत्त्वात् व्रतविशेषारम्भमारभ्य पूर्वपूर्वभोजनदिनापेक्षचतुर्थत्वसंयोगावगमात् ततोऽधि पूर्वपूर्वभोजनदिनापेक्षया संख्या स्यात् एकस्मिन्नेव देवदत्ते चतुर्थेचतुर्थे इति वीप्सा स्यात् इति वैषम्यम् इति । के.

* चतुर्थे ( अध्याये ) न स्वरूपेण प्रयुक्तिर्विचारिता, किं तर्हि प्रयुज्यमानपदार्थेयत्तया । कणिका. पृ. ४१८. * चतुर्थाध्याये प्रथमद्वितीयपादाभ्यां क्रतुप्रयुक्तिः । तृतीयपादे पुरुषार्थप्रयुक्तिः नाम फलप्रयुक्तिः । चतुर्थे तु फलप्रयुक्त्यपवादः । सोम. ४।३।१, ४।४।१. * 'अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरः ।' वा. २।२।३।३ पृ. ४७३.

* चतुर्थाध्यायाद्यपादान्त्याधिकरणाक्षेपसमाधानम् । यजतिचोदनाचोदितेषु द्रवद्रव्यकेषु प्रतिपत्तिरूपे आचारात् होमे प्राप्ते, अनारभ्यवादेन 'चतुर्गृहीतं जुहोति' इत्यनेन चतुर्गृहीतमात्रविधिः । सोऽपि आद्यप्रयाजत्रयान्यतिरिक्तेषु इति । बाल. पृ. १११. * चतुर्थाध्यायार्थः प्रयोज्यत्वमेव । क्रत्वर्थपुरुषार्थत्वं तु उदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यते । भाट्ट. ४।१।१.

* चतुर्थाध्यायार्थविचारः । ( न्यायरत्नमालास्थः । ) एवं श्रुत्यादिभिः उपनीते अंशत्रये अनुष्ठानयोग्या भावना संजाता विधीयते, अनुष्ठाप्यते इत्यर्थः । अनुष्ठापकत्वमेव हि विधेः स्वरूपम् । अवगते च फले, तत एव अनुष्ठानसिद्धेः नार्थो विधिना इति चेत् न, साधनत्वावगतिमात्रेण प्रवृत्त्यसंभवात् । साधनत्वमात्रं हि यागस्य फलं प्रति अवगम्यते । तत् किं दैवनिर्मितस्येव निदाघसमयवर्तिमध्यंदिनतपनातपनिपातसंततततनोरिव मेघपुष्पगर्भमेघसंघस्य ( मेघपुष्पं घनरसः । मेघपुष्पगर्भाणां जलगर्भाणां सजलानां मेघानां संघस्य इत्यर्थः ) संतापस्य उत्पादकत्वम् ( मेघसंघः संतापम् उत्पादयति इति ) कर्मणः फलजनकत्वम्, उत अन्यकृतस्य प्रपाऽऽदिवत्, भोजनादिवद्वा स्वयंकृतस्य इति विशेषानवगमात् न प्रवर्तेत । विधिस्तु प्रवर्तकस्वभावात् 'कर्तुरेव इदं फलं साधयति' इति कल्पयति इति भवति अनुष्ठापकः । विशिष्टानुष्ठानं च विशेषणानुष्ठानमन्तरेण अनुपपन्नमिति विशेषणेष्वपि अनुष्ठापकः अर्थात् भवति । तत्र केषां केन प्रकारेण अनुष्ठापको भवति इत्येतत् चतुर्थे चिन्त्यते । तत्र फलांशे तावत् पुरुषस्य स्वयमेव प्रवृत्तत्वात् न विधिः अनुष्ठापको भवति । कथं तर्हि लक्ष्यमाणत्वं उभयोरिति साध्यांशस्यापि साधनांशवत् चोदनालक्षणत्वमुच्यते ? नैष दोषः । चोदनाप्रमेयं हि तल्लक्षणम् । तत्र ज्योतिष्टोमादेः प्रमाणान्तरगम्यमानस्यापि यथा फलसाधकत्वं विधिप्रमाणकमिति तल्लक्षणत्वम्, एवं फलस्यापि तत्साध्यत्वमन्यतः अनवगतमिति विधेरेवावगम्यते इति भवति तदपि तल्लक्षणम् । न च एतावता विधेयत्वम् । नहि अज्ञातज्ञापनं विधिः, येन तद्विषयतया फलस्य विधेयत्वं स्यात् । किन्तु अप्रवृत्तप्रवर्तनम्, तेन यत्र पूर्वमप्रवृत्तः पुरुषो विधिवशात् प्रवर्तते, तत् विधेयम् । फले च पूर्वमेव प्रवृत्तिः मानसी संजाता । ज्योतिष्टोमसाध्यत्वावगमेऽपि तत्र तावत्येव प्रवृत्तिः । नहि कायवचनचेष्टाः फलमवगाहन्ते । साधनत्वे तु तत्त्वतो ज्ञाते सति पूर्वमप्रवृत्त एव प्रवर्तते । तस्मात् तत् विधेयम्, न फलमिति । एवम् अङ्गानामपि दध्यानयनादीनामामिक्षाऽऽद्यर्थमेव अनुष्ठापनम्, न वाजिनाद्यर्थतया । प्रतिपत्त्यर्थं च प्रतिपाद्यं द्रव्यं नानुष्ठापयति । नहि शेषार्थे शेष्यनुष्ठानम्, शेष्यर्थे तु शेषानुष्ठानम् । शेषिणोऽपि यत्र अन्यसाधनस्यैव अन्यत्र विनियोगः यथा पुरोडाशकपालस्य तुषोपवापे, तत्रापि परप्रयुक्तस्यैव । सत्यं शेषत्वेऽपि प्रयाजशेषस्य साधनत्वात् न स्वयं प्रयोजकत्वम् । किमर्थं तर्हि प्रयाजशेषाभिघारणस्य प्रतिपत्तित्वप्रतिपादनं शेषस्यापि प्रयाजशेषस्य तत्प्रयुक्तस्यैव विनियोगात् नाभिघारणेन प्रयुक्तिसंभवः । सत्यं शेषत्वेऽपि प्रयाजशेषस्य

न द्रव्यप्रयोजकत्वम्, अभिघारणस्य तु प्रयोजकं स्यात्। ततश्च वाजपेये प्राजापत्यवपाऽभिघारणार्थं प्रयाजशेषं धारयितुं पात्रान्तरमुत्पाद्यं स्यात्। तन्निवृत्त्यर्थं प्रयाजशेषस्य प्रतिपाद्यत्वं संपाद्यते। **ननु** प्रतिपत्तिरपि धारणं प्रयुङ्क्ते एव, अन्यथा वैगुण्यप्रसङ्गात्, तस्य चान्याय्यत्वात्। अत एव सत्रे साधारणपात्रोत्पादनम्। तद्धि एवमर्थम्, यदि कस्य चित् यजमानस्य पात्रैः प्रयोगः प्रारभ्यते, ततः कदा चित् तेषु प्रयुक्तेषु तस्य यजमानस्य प्रमादसंभवे पात्राणां परिधानीये कर्मणि ( अन्त्येष्टौ ) विहिता प्रतिपत्तिर्लुप्येत ततश्च वैगुण्यं स्यादिति। यदि प्रतिपत्तिः न धारणस्य प्रयोजिका, ततः प्रतिपत्तिलोपमनादृत्य कस्य चिदेकस्य पात्रैः प्रयोगः स्यात्। तस्मात् अनर्थकं प्रयाजशेषस्य प्रतिपाद्यत्वाभिधानमिति। **सत्यमुक्तं** श्रुतवता, किन्तु अत्र प्रयाजशेषस्य क्रतुपशुवपाऽभिघारणेन प्रतिपत्तिः सिद्धा इति न धारणमर्थवत्। हविषां तु प्राधान्ये प्राजापत्यवपानामवैगुण्यार्थं धारणं भवेत् इति युक्तमेव प्रतिपत्तित्वाभिधानम्। यदि प्रयोजकाप्रयोजकत्वचिन्ता चतुर्थे, कथं तर्हि क्रत्वर्थ–पुरुषार्थत्व–यज्ञाङ्गत्वायज्ञाङ्गत्व– अपूर्वसदसद्भाव– नियमविधिव्युत्पादन– फलविध्यर्थवादत्व–फलवत्त्व– कालार्थाङ्गप्रधानार्थत्व–समप्रधानत्व–गुणप्रधानत्वादीनि चिन्त्यन्ते ? प्रयोजकाप्रयोजकत्वसिद्ध्यर्थमेव तत्। तथाहि, क्रत्वर्थत्वे गोदोहनादेः क्रतुविधिप्रयोज्यत्वम्, नान्यथा। **तथा** एकत्वादेः यज्ञार्थत्वे तत्प्रयुक्तम् ( क्रत्वम् )। स्विष्टकृति अपूर्वसद्भावे त्यागांशस्य अपूर्वं प्रयोजकम्। **एवं तर्हि** हविर्विनाशेऽपि हविरन्तरमुत्पाद्य अदृष्टसिद्ध्यर्थं स्विष्टकृद्यागः कर्तव्यः स्यात्। **नैतदेवम्**। यद्यपि अपूर्वं यागस्य प्रयोजकम्, यागस्तु न द्रव्यस्य प्रयोजकः, एकदेशद्रव्यत्वात्। तस्माददोषः। एवम् 'अर्थे समवैषम्यम्' ( ४।१।८।२१ ) इत्यतः पूर्वं शेषशेषित्वविचारेण प्रयोजकाप्रयोजकत्वं निरूपितम्। अत एवोक्तम् 'अतिक्रान्तस्तृतीयविषयः' इति ( भाष्ये )। ततः ( समवैषम्यसूत्रोत्तरं ) साक्षादेव लक्षणार्थनिरूपणम्। सोमलिप्तानां तु प्रतिपाद्यत्वं कृष्णविषाणाप्रसङ्गेनोक्तम्। **तथा** कर्तृदेशकालगुणद्रव्यसंस्काराणां दृष्टार्थानामर्थप्राप्तत्वात् न विधानं संभवति, देशान्तरादिनिवृत्त्यर्थत्वेऽपि परिसंख्या स्यात्। न च अन्यो विधिप्रकारः संभवति, तस्मादनुवादः इत्याशङ्क्य अस्ति अन्यो विधिप्रकारः नियमो नाम यत् पाक्षिकाप्राप्तांशपरिपूरणमिति यावत्। तस्मात् विधिरिति। यदिदं नियमविधिव्युत्पादनम्, तदपि दर्शपूर्णमासादिविधीनां नियमेन समादिप्रयोजकत्वसिद्ध्यर्थम्। **तथा** अपापश्लोकश्रवणादीनामर्थवादत्वे पर्णमयीत्वादीनां क्रतुविधिप्रयुक्तिः, न फलविधित्वे। विश्वजिदादीनामफलत्वे प्रयोजकत्वमेव विधेर्दुर्लभम्, फलवत्त्वे तु तत् भवति। ततः फलगतविशेषानुसंधानं प्राक् अङ्गप्रयोजनसंबन्धविचारात्। **तथा** 'अग्निं चित्वा सौत्रामण्या यजेत' इत्यादीनाम् अङ्गप्रयोजनसंबन्धपरत्वे अग्निविधिप्रयुक्तिः सौत्रामण्यादीनाम्। कालार्थत्वे दर्शपूर्णमासयोः सोमप्रयोजकत्वं च न भवति। **तथा** जातेष्टेः शेषिविरोधेन निमित्तानन्तर्यबाधमभिधाय शौचकालप्रयोजकत्वमुक्तम्। तदुपोद्घातत्वेन च पुत्रगामिफलप्रतिपादनम्। पुत्रफलत्वे हि शेषिविरोधः शक्यते वक्तुम्, न पितृफलत्वे इति। ततः अङ्गभूतायामपि सौत्रामण्यां स्वकालप्रयोजकत्वमुक्तम्। **तथा** अनुमत्यादीनां विदेवनादीनां च समप्राधान्ये सर्वेषां फलमेव प्रयोजकं स्यात्, गुणप्रधानभावे तु अनियोज्यानां क्रतुप्रयुक्तत्वमिति। **ननु** प्रधानेषु विधिरेव प्रयोजकः, न फलम्। तत् कथं प्रधानेषु फलं प्रयोजकम्, अङ्गेषु विधिरिति ? **वालिश्यमेकदेशिवत्** आचर्यते। नैवास्माभिः प्रधानेषु विधेः अप्रयोजकत्वमुच्यते, किं तर्हि ? प्रयुक्तिविशेषचिन्ता क्रियते इति। **यथा** चातुर्मास्यप्रयोगविधिः दध्यानयनप्रयोजकोऽपि किम् आमिक्षाऽर्थे प्रयुङ्क्ते, उत वाजिनार्थमपि इति विचार्यते, यदर्थं च प्रयुङ्क्ते, तत् प्रयोजकमित्युच्यते, आमिक्षा प्रयोजिका, न वाजिनमिति, **तथा** अत्रापि 'किं विदेवनादीनां फलं प्रयोजकम्, उत क्रतुः' इत्यस्य अयमेवार्थः 'किं फलसिद्ध्यर्थं प्रयुज्यते, उत क्रतूपकारसिद्ध्यर्थम्' इति। एवमुत्तरत्रापि विदेवनादीनां शेषविचारेण प्रयुक्तिविशेषचिन्तैव क्रियते। **तथा** दधिग्रहस्य नित्यत्वात् नित्यवत् ज्योतिष्टोमादिप्रयुक्तिः, वैश्वानरादेस्तु नैमित्तिकत्वात् न नित्यवत् प्रयुक्तिः, पितृयज्ञस्य अनङ्गत्वात् न दर्शपूर्णमासप्रयुक्तिः। तथा स्वरुशनयोः पशुयूपप्रयुक्तत्वम्। सांग्रहणीदर्शपूर्णमासज्योतिष्टोमविचाराः राजसूयवत् द्रष्टव्याः। इति। **न्यायरत्नमाला.**



* **चतुर्थी** तद्धितेन बाध्यते देवताविधौ। **बाल.** पृ. १४४. * **चतुर्थी** त्यज्यमानद्रव्योद्देश्यत्व–प्रतिगृहीतत्वसमुदायात्मकसंप्रदानत्ववाचिनी, लक्षणया वाच्यैकदेशत्यज्यमानद्रव्योद्देश्यत्वात्मकं देवतात्वं वदति। **सु.** पृ. ७४८.

* **चतुर्थी**। संप्रदानं चतुर्थ्यर्थः 'चतुर्थी संप्रदाने' ( पा० २।३।१३ ) इति सूत्रात्। संप्रदानत्वं च धात्वर्थकर्मणा व्याप्यमानत्वम्। व्याप्यमानत्वमभिप्रेयमाणत्वम्। धात्वर्थकर्मजन्यव्यापारोद्देश्यत्वम् इति यावत्। यथा 'विप्राय गां ददाति' दानकर्मीभूतगोजन्यपयोदोहनादिव्यापारोद्देश्यत्वात् विप्रस्य संप्रदानत्वम्। 'रजकाय वस्त्रं ददाति' इत्यत्र तु ददातेर्लाक्षणिकत्वात् चतुर्थ्यपि संबन्धमात्रे लाक्षणिकी। एवं च दानकर्मीभूतगवादिप्रतिगृहीतत्वं संप्रदानत्वम्। 'कर्मणा यमभिप्रैति स संप्रदानम्' ( पा० १।४।३२ ) इति सूत्रस्यापि अयमर्थः। दानकर्मणा गवादिना यमभिव्याप्नोति इति **जीर्णाः**। **अभिनवास्तु** दृष्टद्वारकधात्वर्थोद्देश्यत्वं संप्रदानत्वम्। धात्वर्थजन्यदृष्टफलशालित्वमिति यावत्। तत्फलं सकर्मकेषु धात्वर्थताऽवच्छेदकम्, अकर्मकेषु जन्यमात्रम्। सूत्रस्यापि कर्मणा धात्वर्थेन इत्यर्थः। तेन 'विप्राय गां ददाति, पत्ये शेते, कृष्णाय रोचते भक्तिः' इत्यादौ मुख्यः प्रयोगः। अत्र विप्रनिष्ठस्वत्वोत्पत्त्याद्युद्देश्यको दानानुकूलो व्यापारः, पतिनिष्ठसुखोद्देश्यकशयनानुकूलो व्यापारः इत्यादिबोधः। एवंच कर्मकारकापेक्षया संप्रदानस्य प्राधान्यम्। अत एव 'मैत्रावरुणाय दण्डं प्रयच्छति' इत्यत्र न दानस्य दण्डप्रतिपत्त्यर्थत्वं किन्तु उपयोक्ष्यमाणसंस्कारत्वम् ( इति ) सिद्धान्तितम्। 'आत्रेयाय हिरण्यं ददाति' इत्यत्र तु आत्रेयस्य संप्रदानत्वेऽपि न भावनोद्देश्यत्वम्, भूतभाव्युपयोगाभावेन इष्टत्वाभावात् इति दिक्।

'रुच्यर्थानां प्रीयमाणः' ( पा. १।४।३३ ) रुच्यादिधातुसमभिव्याहारे तु प्रीयमाणस्यैव संप्रदानत्वम्। 'देवदत्ताय वने रोचन्ते फलानि' इति रुचिमत्त्वस्य अवच्छेदकतासंबन्धेन वननिष्ठत्वेऽपि न संप्रदानत्वम्।

'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' ( पा० १।४।३४ ) ज्ञीप्स्यमानस्य संप्रदानत्वम्। 'गोपी स्मरात् कृष्णाय श्लाघते निह्नुते तिष्ठते शपते वा' इति। स्मरहेतुकगोपीकर्तृकश्लाघनादिज्ञापनवत्त्वात् कृष्णस्य संप्रदानत्वम्। 'इतीव पान्थं शपतः पिकान् द्विजान्' इत्यत्र पान्थस्य शापज्ञापनाभावात् न संप्रदानत्वम्। श्लाघनं स्तवनम्। निह्नवः अपनयः।

'धारेरुत्तमर्णः' ( पा० १।४।३५ ) धारयतिसमभिव्याहारे उत्तमर्णस्य संप्रदानत्वम्। 'मह्यं सुवर्णशतं धारयति देवदत्तः' देवदत्तकर्तृकधारणकर्मीभूतसुवर्णशतव्याप्यमानत्वात् सुवर्णशतधारणजन्यदुःखवत्त्वाद्वा। अत एव 'वने धारयति' इत्यत्र वनस्य न तत्। उत्तमर्णत्वं च गृहीतधनवृद्धिभागित्वं वृद्धिजन्यसुखभागित्वं वा। एतेन 'भक्ताय धारयति मोक्षं कृष्णः' इत्युदाहरणं सूत्रविरुद्धम्।

'स्पृहेरीप्सितः' ( पा० १।४।३६ ) स्पृहयतिसमभिव्याहारे इच्छासामान्यविषयस्य संप्रदानत्वम्। प्रकृष्टेच्छाविषयस्य कर्मत्वम्। 'पुष्पेभ्यः स्पृहयति'। 'वने स्पृहयति' इति वने तदभावः।

'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः' ( पा० १।४।३७ ) 'क्रुधद्रुहोरुपसृष्टयोः कर्म' ( पा० १।४।३८ ) 'अरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति'। उपसर्गरहितक्रोधाद्यर्थकधातुसमभिव्याहारे कोपकर्मणः अरेः संप्रदानत्वम्। 'वने क्रुध्यति' इत्यादौ वनस्य न तत्। 'शिष्यमभिक्रुध्यति' इत्यादावपि न। क्रोधः अमर्षः, द्रोहः अपकारः, ईर्ष्या अक्षमा, असूया गुणेषु दोषाविष्करणम्। एते कोपविशेषा एव।

'राधीक्ष्योर्यस्य विप्रश्नः' ( पा० १।४।३९ ) राधि–ईक्ष्योः समभिव्याहारे विविधप्रश्नविषयशुभाशुभाधिकरणस्य संप्रदानत्वम्। 'कृष्णाय राध्यति ईक्षते वा। गर्गकर्तृकगोपीकृतविविधप्रश्नविषयशुभाशुभपर्यालोचनाधिकरणहरिसंप्रदानकं राधनम् ईक्षणं वा' इति बोधः।

'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' ( पा० १।४।४० ) आङ्प्रतिपूर्वकश्रुधातुसमभिव्याहारे धात्वर्थप्रतिज्ञाजनकयाचनकर्तुः संप्रदानत्वम् । 'देवदत्ताय गामाशृणोति प्रतिशृणोति वा' । प्रतिश्रवणादिधात्वर्थेन व्याप्यमानत्वात् याचकस्य ।

'अनुप्रतिगृणश्च' ( पा० १।४।४१ ) प्रत्यनुपूर्वकगृणातेः समभिव्याहारे पूर्वशंसनादिकर्तुः होतुः संप्रदानत्वम् । 'अध्वर्युः होत्रेऽनुगृणाति प्रतिगृणाति' ( होता शंसति तमध्वर्युः प्रोत्साहयतीत्यर्थः ) इति धातुलक्ष्यप्रोत्साहनव्याप्यमानत्वात् । एवं च मुख्यैव चतुर्थी ।

"यत्र तु धात्वर्थकर्मण्याप्यमानस्य असंभवेन अन्यत्रान्वयः, तत्र उपपदविभक्तिः तादर्थ्यादिलक्षणया उपपदार्थे अन्वयेन प्रधानक्रियायामनन्वयात्, 'मुक्तये हरिं भजति' 'भक्तिर्ज्ञानाय कल्पते' इत्यादौ । अत्र कल्पितप्राप्तिक्रियाऽन्वयेन श्रुतभजनादिक्रियायां कारकत्वेन साक्षादनन्वयात् साध्यत्वमात्रे लाक्षणिकत्वाच्च" इति **वैयाकरणाः** । **अन्ये तु** अत्र चतुर्थ्या नोपपदविभक्तित्वम्, किन्तु साध्यत्वलक्षणया कारकविभक्तित्वमेव । अत एव 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादौ साध्यत्वेन भावनाऽन्वयः अङ्गीक्रियते इत्याहुः । **परे तु** तत्रापि सर्वान् कामान् इत्यर्थात् उपपदविभक्तित्वमेव इत्याहुः । तत् 'अग्निमाधत्ते' इत्यादौ द्वितीयाया अपि उपपदविभक्तित्वापत्त्या उपेक्षणीयमेव ।

एवम् 'वाताय कपिला विद्युत्' इत्यत्र कल्पितज्ञानक्रियाऽन्वयेन 'फलेभ्यो याति' इत्यादौ अप्रयुज्यमानतुमुन्नन्तकर्तृककल्पिताहरणक्रियाऽन्वयेन उपपदविभक्तिः ।

'तुमर्थाच्च भाववचनात्' ( पा० २।३।१५ ) 'यागाय याति' इत्यादौ कल्पितदर्शनादिक्रियाऽन्वयेन उपपदविभक्तित्वम् । 'यागसाधकं यानम्' इत्यर्थे तु पूर्ववत् कारकविभक्तित्वमेव । 'जनार्दनायार्घम्' इत्यत्रापि उपपदविभक्तित्वम्, पक्षे कारकत्वं च ।

'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' ( पा० २।३।१६ ) इति विहिता नमःपदादियोगे चतुर्थी उपपदविभक्तिः । यथा 'हरये नमः, स्वयंभुवे नमस्कृत्य' हरिमनुकूलयितुमित्यर्थः । 'नारायणं नमस्कृत्य' इत्यत्र तु छान्दसः प्रयोगः ( चिन्त्यमिदम् ) । 'प्रजाभ्यः स्वस्ति' । स्वस्तिपदं कल्याणवाचकमिदम्, द्वितीयं सुबन्तम्, 'स्वस्ति न इन्द्रो वृद्धश्रवाः' 'वैश्वानरो वसुरग्निः स्वस्तये' इति उभयथा प्रयोगात् । उभयत्रापि मङ्गलवाचकत्वमेव । 'अग्नये स्वाहा, पितृभ्यः स्वधा, इन्द्राय वषट्' । स्वाहापदं स्वधापदं वषट्पदं च प्रदानार्थकम् । अलम् इति पर्याप्त्यर्थसमर्थादिपदान्तरोपलक्षणम् । अत एव स्वामिवाचकप्रभुपदसमभिव्याहारे षष्ठ्येव साधुः न चतुर्थी । 'इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता । अधिभूर्नायको नेता प्रभुः परिवृढोऽधिपः ॥' इत्याद्यनुशासनात् प्रभुपदस्य स्वामिनि शक्तिग्रहात् 'प्रभुर्बुभूषुर्भुवनत्रयस्य' ( माघ. १।४९ ) इति प्रयोगाच्च । 'तस्मै प्रभवति' ( पा० ५।१।१०१ ) इति तु अलंपदार्थकप्रभुपदसमभिव्याहारात् चतुर्थ्येव साधुः । साऽपि जनयितुं पालयितुं वा इति कल्पितक्रियाऽन्तरान्वयात् उपपदविभक्तिरेव । 'प्रभ्वादियोगे षष्ठ्यपि साधुः' इति वार्तिकस्य तु भावं नाकलयामः ।

'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' ( पा० २।३।१७ ) मन्यधातुसमभिव्याहारे तद्धात्वर्थकर्मणि विकल्पिता चतुर्थी उपपदविभक्तिः । 'न त्वां तृणाय तृणं वा मन्ये' अत्र विकल्पितानादरक्रियाऽन्वयात् उपपदविभक्तित्वम् । [ 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' ( पा० २।३।१२ ) अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तः चेष्टायां गम्यमानायाम् । ग्रामं ग्रामाय वा गच्छति । मणि पृ. १३२ ( इदं पाठान्तरम् ) ] एवं 'ग्रामं ग्रामाय वा गच्छति' इति विकल्पिता चतुर्थी कल्पितचेष्टाऽध्वादिपदार्थान्तरान्वयात् उपपदविभक्तिः । 'मनसा हरिं व्रजति' इत्यत्र चेष्टाध्वाभावात् द्वितीयैव साधुः इति दिक् ।

अत्र **मीमांसकाः** । चतुर्थ्या देवतात्वे शक्तिः । 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः । देवतासंगतिस्तत्र दुर्बलं तु परंपरम् ॥' इति वार्तिकात् ( वा. पृ. ५३३ 'मन्त्रवर्णेन चेष्यते' 'दुर्बलं च परंपरम्' इति च मूले पाठः ) । तथाहि 'सूक्तहविषोः' इतिवार्तिकात् 'आग्नेयं सूक्तम्, आग्नेयोऽष्टाकपालः' इत्यादिप्रयोगाच्च सूक्तप्रकाश्यत्वं त्यज्यमानहविःसंबन्धित्वरूपं च देवतात्वं द्विविधं तद्धितवाच्यम्, 'साऽस्य देवता' (पा० ४।२।२४) इत्यनुशासनेन देवताऽधिकारे 'अग्नेर्ढक्' ( पा० ४।२।३३ ) इत्यादिभिः सूत्रैः अनेकढगादिप्रत्ययविधानात् । 'साऽस्य देवता' इत्यत्र सूक्तहविषोः षष्ठ्यन्तनिर्दिष्टत्वेन विशेषणत्वप्रतीतावपि उक्तप्रयोगेषु सामानाधिकरण्येन अग्न्यादिपदार्थविशेष्यत्वेन प्रतीतेः तत्पदनिर्दिष्टाग्न्यादीनां देवतात्वमात्रबोधकत्वात् । तेन तद्धितस्य देवतात्वविशिष्टाग्न्यादिविशिष्टसूक्तहविर्वाचकत्वे सिद्धे नागृहीतविशेषणान्यायेन देवतात्वे शक्तिः । एवम् 'अग्नये स्वाहा' इत्यादावपि स्वाहाशब्दार्थहविस्त्यागे अग्नेश्च विशेषणत्वेन प्रतीतेः संबन्धान्तरत्वाभावेन देवतात्वेनैव विशेषणता इति तत्र चतुर्थ्याः शक्तिः । एवं मन्त्रवर्णस्यापि इति **जीर्णाः** ।



अत्र **पितृचरणाः** । नेदं वार्तिकं चतुर्थ्या देवतात्वे शक्तिबोधकम्, किन्तु देवताप्रतिपादकान्तरोपलक्षणं सत् चतुर्थीमन्त्रवर्णादौ देवतालाक्षणिकत्वपरम् । 'दुर्बलं तु परंपरम्' इत्यभिधानात् । तथाहि देवताशब्दतद्धितचतुर्थीद्वितीयामन्त्राः देवतात्वबोधकाः । तत्र 'अग्निर्देवता वातो देवता' इत्यादौ अग्न्यादीनां देवतात्वप्रकारकभानात् उभयरूपे देवतात्वे शक्तिः । 'सूक्तप्रकाश्योऽग्निः, द्रव्यत्यागसंबन्धी वा' इति बोधः । तद्धितस्य तु हविषः अग्न्यादिनिष्ठत्वबोधानन्तरं त्यागादिकल्पनात् ततो दुर्बलत्वम् । चतुर्थ्यास्तु त्यज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिग्रहीतृत्वरूपसंप्रदानत्ववाचिन्याः प्रतिग्रहीतृत्वत्यागेन एकदेशलक्षणया ततोऽपि दुर्बलत्वम् । 'विष्णुं यजति' इत्यादौ द्वितीयायास्तु उद्देश्यत्वमात्रवाचिन्याः विशिष्टे लाक्षणिकत्वात् दुर्बलत्वम् । मन्त्रकर्मसंबन्धज्ञानानुपपत्तिकल्प्यमन्त्रप्रकाश्यकर्मसंबन्धज्ञानानुपपत्तिकल्प्य — मन्त्रप्रकाश्यकर्मसंबन्धज्ञानानुपपत्तिकं देवतात्वम् इति ( मन्त्रस्य ) अत्यन्तं दुर्बलत्वम् । तेन संप्रदानत्वे एव चतुर्थ्याः शक्तिः न देवतात्वे इत्याहुः ।

अत्र तद्धितादियुक्तवाक्येषु देवताविधिः अपूर्वः इति **के चित्** । यागविधिनैव द्रव्यसामान्यस्येव देवतासामान्यस्यापि आक्षेपात् इन्द्रादिदेवताविशेषनियमपरतया नियमविधिः इत्याहुः ।

तद्धितचतुर्थ्यादिभिः उक्तव्युत्पत्त्या स्वप्रकृत्यर्थस्य देवतात्वं प्रतिपाद्यते । अत एव इन्द्राग्नीतिप्रातिपदिकोत्तरतद्धितेन इन्द्राग्निरूपप्रातिपदिकार्थद्वयनिष्ठमेकं व्यासज्यवृत्ति देवतात्वं प्रतिपाद्यते । एवं महेन्द्रपदोत्तरतद्धितेन महेन्द्रस्यैव देवतात्वम् इति तत्र न इन्द्रस्य देवतात्वमिति । उद्देश्यत्वं च त्यागाव्यवहितपूर्वकालीनस्ववाचकवैधपदोच्चारणवत्त्वम् । तेन देवतायाः प्रयोगसंबन्धित्वम् इति प्रकृतिविकृतिसंबन्धिनिगमेष्वपि वैधपदसिद्धिः इति दिक् । अधिकं **मत्कृतकुसुमाञ्जलौ** अवधेयम् । **मणि. पृ.** १३४–१३९.

* '**चतुर्थी** संप्रदाने' ( पा० २।३।१३ ) इति सूत्रात् संप्रदानत्वार्थिका चतुर्थी भावनाऽन्वयिन्येव । तच्च 'कर्मणा यमभिप्रैति स संप्रदानम्' ( पा० १।४।३२ ) इति सूत्रे निरुक्तम् । दानक्रियाकर्मकारकेण यम् अभिप्रैति संबध्नाति स संप्रदानम् इति सूत्रार्थः । संप्रदीयते अस्मै इति अन्वर्थसंज्ञाबलात् दानक्रियालाभः । तथा च त्यज्यमानद्रव्योद्देश्यत्वे सति स्वीकारवत्त्वं संप्रदानत्वम् इति **न्यायसुधाकारादयः** । तेषामयमाशयः । स्वीकारो यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः । 'विप्राय गां ददाति' इत्यत्र लक्षणसमन्वयः स्फुटः । उद्देश्यत्वस्वीकारौ च गवा विप्रस्य संबन्धः । तत्र उद्देश्यत्वं त्यागकालीनचतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वम् । न च तत्र प्रमाणाभावः, शिष्टाचारस्यैव प्रमाणत्वात् । 'नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो वदेत् । संकीर्त्य देशकालादि तुभ्यं संप्रददे इति ॥ न ममेति स्वस्वताया निवृत्तिमपि कीर्तयेत् । दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः ॥' इति **हेमाद्रिधृतवृद्धवसिष्ठवचनाच्च** । अत एव पूर्वदलम् इन्द्रादिदेवतायामतिव्याप्तम्, अतः स्वीकारेति । तत्र प्रतिग्रहस्य नवमे निषेधात् । अत एव त्यज्यमानद्रव्योद्देश्यत्वम् उक्तविधमिन्द्रादिरूपे अर्थे शब्दे च । त्यागकालीनचतुर्थ्यन्तपदोच्चारणकर्मत्वरूपं वा देवतात्वं तद्धितवाच्यं वृद्धव्यवहारात् । 'प्रजापतये जुहोति' इत्यादौ च तादृशदेव-

तात्वे लक्षणा इति तस्याः ततो ( चतुर्थ्याः तद्धितात् ) दौर्बल्यमुक्तमाकरे । विक्रेत्रादौ च स्वीकारसत्त्वेऽपि पूर्वदलनैयत्याभावात् आद्यदलम् । तत्रापि सर्वे त्यागादिकम् अन्यलभ्यम् । केवलमुद्देश्यत्वं स्वीकारश्च चतुर्थ्यर्थः । तयोश्च उक्तपरंपरासंबन्धेन विषयताघटितसामानाधिकरण्येन च त्यागद्वारको भावनाऽन्वयः । एवं च एतादृशलक्षणानाक्रान्ते यत्रयत्र चतुर्थीप्रयोगः तत्र सर्वत्र लक्षणेति । **काशिकावृत्तिकारस्यापि** अयमेवाभिप्रायः । **वैयाकरणनव्यास्तु** —यत्क्रियाकर्मसंबन्धजन्यफलभागित्वेन उद्देश्यं यत्, तत् तत्क्रियासंप्रदानम् । ' विप्राय गां ददाति ' इत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यः स्वत्वाख्यो विप्रस्य संबन्धः, तज्जन्यं फलं सुखादि, तद्भागित्वरूपेण उद्देश्यत्वं विप्रे इति स दानक्रियासंप्रदानम् इति लक्षणसमन्वयः । पितृस्वर्गोद्देशेन ब्राह्मणसंप्रदानकधनदाने पितुः स्वर्गादिरूपफलभागित्वेऽपि न संप्रदानत्वम्, तत्फलस्य पितरि धनसंबन्धाभावेन तत्संबन्धाभावात् । अत एव कर्मकारकजन्यत्वं पितृस्वर्गादावपि कदा चित् संभाव्येत इति संबन्धजन्यत्वानुधावनम् ।

अत्र ' कर्मणा यम् ' इति द्वितीयानिर्देशात् कर्मकारकं प्रति संप्रदानस्य ईप्सितत्वं लभ्यते । तेन फलभागित्वेन ईप्सितत्वं संप्रदानत्वम् इत्यर्थः । ' विप्राय गां ददाति स्वर्गकामः ' इत्यादौ च कर्मकारकस्य स्वर्गाङ्गभूतदानाङ्गत्वेऽपि तत्संबन्धस्य आनुषङ्गिकविप्रप्रीतिजनकत्वात् तस्यापि दानसादृगुण्यजनकत्वेन ईप्सितत्वात् विप्रे संप्रदानत्वाविघातः । ' अजां ग्रामं नयति ' इत्यत्र अजासंबन्धजन्यफलवत्त्वेन ग्रामस्य ईप्सितत्वाभावात् न ग्रामस्य संप्रदानत्वप्रसङ्गः । तादृशफलवत्त्वेन ग्रामस्य ईप्सितत्वे तु ' अजां ग्रामाय नयति ' इति प्रयोग इष्ट एव । एवमेव च ' रजकाय वस्त्रं ददाति, रजकस्य वस्त्रं ददाति ' इत्यादयः प्रयोगा अपि उपपादनीयाः । एवम् ' उपाध्यायः तस्मै चपेटिकां ददाति ' इति महाभाष्यप्रयोगोऽपि संगच्छते । इतरथा स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपदानघटितसंप्रदानत्वे ईदृशप्रयोगाणां भाक्तत्वापत्तेः । अतः बहुतरप्रयोगसाधारणमिदं संप्रदानत्वम् ।

अत्र च ' विप्राय गां ददाति ' इत्यत्र फलजनकत्वरूपम् उद्देश्यत्वनिरूपितत्वं च चतुर्थ्यर्थः । प्रकृत्यर्थः चतुर्थ्यर्थे फले निरूपितत्वे च साक्षात् संबन्धेन अन्वेति । चतुर्थ्यर्थयोश्च परस्वत्वापादकस्वस्वत्वनिवृत्त्यनुकूलक्रियावाचिधात्वर्थताऽवच्छेदकपरस्वत्वे अन्वयः । द्वितीयाऽऽर्थवृत्तित्वस्यापि तत्र स्वस्वत्वे च अन्वयः । तथा च विप्रवृत्तिसुखजनकविप्रनिरूपितगोवृत्तिजनकक्रिया चैत्रनिष्ठा इति शाब्दबोधः । ' रजकाय वस्त्रं ददाति ' इत्यादौ समर्पणे एव धात्वर्थताऽवच्छेदके चतुर्थ्यर्थयोरन्वयः । ' चपेटां ददाति ' इत्यत्रापि चपेटासंयोगे एव धात्वर्थताऽवच्छेदके तयोरन्वयः । ' वृक्षायोदकं सिञ्चति ' इत्यत्रापि वृक्षनिष्ठपुष्टिजनकत्ववृक्षनिरूपितत्वयोः धात्वर्थताऽवच्छेदके उदकनिष्ठसंयोगे अन्वयः— इत्याहुः । **तन्न** । संप्रदानशब्दस्य अवयवार्थबाधेन शक्त्यन्तरकल्पने प्रमाणाभावात् । ' ग्रामं गच्छति ' इत्यत्र चैत्रस्य गमनक्रियाकर्मकारकग्रामजन्यसंयोगजन्यसुखभागित्वेन संप्रदानत्वापत्तेश्च । न च इष्टापत्तिः । ' ग्रामं गच्छति चैत्राय ' इति प्रयोगापत्तेः । न च ' आकडारादेका संज्ञा ' ( पा० १।४।१ ) इत्यनुशासनात् संज्ञाद्वयप्रयुक्तकार्यानुपपत्तेः ' विप्रतिषेधे परं कार्यम् ' ( पा० १।४।२ ) इति स्मृतिवचनात् गच्छति इति कर्त्राख्याते कर्तृसंज्ञायाः आवश्यकत्वे पूर्वायाः संप्रदानसंज्ञायाः बाधोपपत्तिः इति **वाच्यम्** । तथात्वे ' चैत्रेण ग्रामो गम्यते ' इतिवत् ' चैत्राय ग्रामो गम्यते ' इति प्रयोगापत्तेः । कर्तृत्वविवक्षायां तृतीयाप्रयोगवत् संप्रदानत्वविवक्षायां चतुर्थीप्रयोगस्य निवारयितुमशक्यत्वात् । इतरथा ' ग्रामं गच्छति, ग्रामे गच्छति ' इति विवक्षाभेदेन प्रयोगद्वयानापत्तेः । न च ' चैत्रः स्वस्मै गच्छति ' इतिवत् तादृशप्रयोगे इष्टापत्तिः, ' स्वस्मै गम्यते ' इत्यस्य ' स्वार्थं गम्यते ' इति विवरणानुरोधेन तादर्थ्यचतुर्थीत्वेन संप्रदानविभक्तित्वानुपपत्तेः । **न च** एतद्दोषवारणाय क्रियाकरणत्वं कर्मविशेषणम्, ग्रामश्च न गमनकरणम्, देयं तु दानक्रियाकरणम् इति नासंभवः इति **वाच्यम्** । देयस्यापि स्वत्वरूपफलांशे करणत्वम्, न तु तदनुकूलक्रियांऽशे इति गमनेऽपि तदविशिष्टम् । गमनफलस्य संयोगस्यापि ग्रामजन्यत्वाविशेषात् । विप्रनिष्ठ-



फलसामान्याभावेऽपि ' विप्राय मया गौर्दत्ता, न तु तस्य कश्चित् भोगो जातः ' इत्यादिव्यवहारानुपपत्तेः न फलघटितसंप्रदानत्वं युक्तम् । यत्तु प्रतिग्रहाभावेऽपि ' मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ' इति वचनात् पात्रोद्देश्यकत्यागमात्रेण ' अस्मै मया दत्ता, न तु अनेन गृहीता ' इति व्यवहारः, स दानस्यैव तत्र परस्वत्वोत्पत्त्यभावेन अजातत्वात् भाक्त एव इति न पूर्वमते तादृशस्थले अव्याप्त्यापत्तिः । वस्तुतस्तु मतद्वयेऽपि पदार्थद्वयेऽपि शक्तिद्वयकल्पनस्य आवश्यकत्वात् अन्यमते च पदार्थैकदेशे फले प्रकृत्यर्थस्य अन्वयापत्तेः, निरुक्तसंप्रदानत्वाज्ञानेऽपि च ' विप्राय गां ददाति' इति वाक्यात् ' विप्रसंप्रदानकं गोकर्मकं दानम् ' इति बोधोदयात् देयद्रव्यनिष्ठत्वनिरूपकत्वरूपं तत्समनियतम् अखण्डोपाधिरूपमेव वा संप्रदानत्वं युक्तमाश्रयितुम् । तदेव च शाक्तः चतुर्थ्यर्थः । तत्र प्रकृत्यर्थो विप्रः साक्षात् आधेयत्वेनैव अन्वेति । तस्य च धर्मिग्राहकप्रमाणेन ससंबन्धिककल्पनात् निरूपकापेक्षायाम् ' कर्मणा यमभिप्रैति ' ( पा० १।४।३२ ) इतिसूत्रात् कर्मकारकनिरूपकत्वावगतेः स्वनिरूपकदेयद्रव्यकर्मकदानानुकूलत्वसंसर्गेण कृतौ अन्वयः । मुख्यदानातिरिक्ते च सर्वत्र भाक्तः संप्रदानत्वव्यवहारः । अत एव ' प्रजापतये जुहोति ' इत्यादौ लक्षणयैव देवतात्वं प्रतिपाद्यते इति चतुर्थ्याः तद्धितापेक्षया दौर्बल्यम् । अत एव दानातिरिक्तयत्किञ्चित्क्रियाजन्यफलभागित्वरूपभाक्तसंप्रदानत्वेऽपि चतुर्थीविधानार्थम् ' क्रियाग्रहणं कर्तव्यम् ' इति वार्तिकम् ' क्रियया यमभिप्रैति सोऽपि संप्रदानसंज्ञः स्यात् ' इत्यर्थकम् । न चैवं क्रियाफलशालित्वेन ' घटं करोति ' इत्यादौ चतुर्थ्यापत्तिः, परत्वेन द्वितीयया चतुर्थ्याः बाधात्, यत्किञ्चित्क्रियाजन्यफलशालित्वात्मकस्य भाक्तसंप्रदानत्वस्य सकर्मकाकर्मकसाधारणस्य सकर्मकमात्रविषयिण्या द्वितीयया बाधोपपत्तेश्च । अत एव ' पत्ये शेते ' इत्यत्र चतुर्थी । अत एव मुख्यदानातिरिक्तसकर्मकधातुस्थलेऽपि यत्र ' वृक्षायोदकं सिञ्चति ' इत्यादौ कर्मकारकान्तरं लब्धम्, तत्रापि वृक्षे निरुक्तभाक्तसंप्रदानत्वविवक्षायां चतुर्थी भवत्येव । कर्मान्तराभावे तु द्वितीयैव । तत्रापि गत्यादि-

सकर्मकधातुविशेषस्थले पुनः प्रतिप्रसवार्थम् ' गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ' ( पा० २।३।१२ ) इत्यनुशासनं चेष्टारूपकर्मणि अध्वभिन्ने द्वितीयाचतुर्थ्यौ स्यातामित्यर्थकम् । ' ग्रामं गच्छति, ग्रामाय गच्छति ' अचेष्टायां तु ' मनसा हरिं व्रजति ', अध्वनि तु ' पन्थानं गच्छति ' । यन्त्राधिष्ठिते एव पथि अयं चतुर्थीपर्युदासः । यदा तु उत्पथात् पन्था एव क्रमितुमिष्यते, तदा ' उत्पथेन पथे गच्छति ' इति भवत्येव चतुर्थी । अत्र सर्वत्र आश्रयत्वं लक्षणया चतुर्थ्यर्थः । तच्च स्वनिरूपकफलजनकक्रियाऽनुकूलत्वसंसर्गेण कृतौ अन्वेति ।

यत्तु ' कर्मणा यमभिप्रैति ' इति सूत्रस्ययथाश्रुतभाष्यस्वरसात् वाक्यपदीयकैयटादौ ' क्रियाग्रहणं कर्तव्यम् ' इति वार्तिकप्रत्याख्यानं कृतम् । तथाहि, सर्वा हि पाकादिक्रिया ज्ञानेच्छादिक्रियाकर्म । तद्यत्र ' पत्ये शेते ' इत्यादौ चतुर्थ्यन्तप्रयोगः, तत्र अनुमेयां ज्ञानादिक्रियां विवक्षित्वा तत्कर्मत्वेन शयनं विवक्ष्यते, तत्र ज्ञानादिक्रियाकर्मकारकभूतशयनं प्रति ईप्सितत्वेन पत्युः संप्रदानत्वोपपत्तेः नार्थो वार्तिकेन । यत्र तु ' घटं करोति, ओदनं पचति, हरिं मनसा व्रजति, पन्थानं गच्छति ' इत्यादौ द्वितीयाप्रयोगः, तत्र ज्ञानादिक्रियया अभेदं पाकादिक्रियायां विवक्षित्वा तां प्रति ईप्सिततमस्य ओदनादेः कर्मत्वम्, ' ग्रामं गच्छति ' इत्यादौ तु द्विविधप्रयोगसत्त्वात् भेदाभेदोभयविवक्षया उभयसंप्रदानस्य दानक्रियामात्रनिरूपितत्वानङ्गीकाराच्च ' पत्ये शेते ' इत्यादावपि मुख्यसंप्रदानत्वाविरोध इति । **तन्न** । पच्यादिधातुभ्यो ज्ञानाद्यनुभवाभावात्, नियमेन आरोपे प्रमाणाभावाच्च, विध्यभावे कारणाभावेन प्रयोगगतसाधुत्वज्ञानाभावात् भेदाभेदव्यवस्थाप्रतीत्यनुपपत्तेश्च । तस्मात् ' क्रियाग्रहणं कर्तव्यम् ' इति न प्रत्याख्येयम् । अत एव भाष्यकारेणापि ' कर्मणा ' इति सूत्रे प्रत्याख्यातमपि ' गत्यर्थकर्मणि ' इति सूत्रे ' क्रियाग्रहणमपि तत्र चोद्यते ' इति ग्रन्थेन विधित्वं तस्य आश्रितमेव । न चैवम् ' गत्यर्थकर्मणि ' इति सूत्रप्रत्याख्यानानुपपत्तिः, धात्वर्थताऽवच्छेदकफलशालित्वरूपे तत्समनियताखण्डोपाधौ वा विवक्षिते द्वितीया, तदनवच्छेदकक्रियाजन्यफलभागित्वे

विवक्षिते चतुर्थी इत्येव उभयोपपत्तेः सूत्रवैयर्थ्यम् इत्याशयात्। गमनजन्यस्वास्थ्याद्याश्रयत्वेन 'ग्रामाय गच्छति' इति प्रयोगोपपत्तेः। न चैवम् अध्वादिरूपापवादविषयेऽपि प्रयोगद्वयापत्तिः, तदंशे अप्रत्याख्यानस्य भाष्यसिद्धत्वात्। भाष्यकारो हि अध्वादीनां न स्वरूपेण अपवादविषयता 'स्त्रियं गच्छति' इत्यत्र द्वितीयानियमानापत्तेः। अपितु संप्राप्तत्वेन प्राप्त एव पन्थाः स्त्री च, तत्र 'पन्थानं गच्छति, स्त्रियं गच्छति' इति द्वितीयानियमः इति प्रतिपादयन् 'असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवतः इति वक्तव्यम्' इत्याह। वृत्तिकारोऽपि अमुमेवार्थमनुमन्यते। अतः सिद्धं धात्वर्थताऽनवच्छेदकं यत् क्रियाफलम्, तदाश्रयत्वमेव एवमादिस्थले भाक्तं संप्रदानत्वम् इति।

एवम् 'रुच्यर्थानां प्रीयमाणः' (पा० १।४।३३) इत्यनुशासनात् रुच्यर्थधातूनां योगे प्रीयमाणः रुचिविषयीभूतद्रव्यजन्यप्रीतिमान् अर्थोऽपि संप्रदानसंज्ञः स्यात् इत्यर्थकात् 'चैत्राय रोचते मोदकः' इत्यादौ चतुर्थी। अत्र मोदकेऽपि धातुयोगस्य सत्त्वात् तद्वारणाय प्रीयमाण इति वास्तवं च विशेषणम्। वृत्तित्वं लक्षणया चतुर्थ्यर्थः। स्वनिरूपकरुचिनिरूपकत्वेन आख्यातान्वयिविषयत्वं लक्षणया आख्यातार्थः। अभिलाषो धात्वर्थः। चैत्रवृत्तित्ववद्रुचिविषयत्वं मोदकवृत्ति इति शाब्दबोधः।

एवम् 'श्लाघ–ह्नुङ्–स्था–शपां ज्ञीप्स्यमानः' (पा० १।४।३४) इत्यनुशासनात् एषां धातूनां प्रयोगे बोधयितुमिष्टः संप्रदानसंज्ञः स्यात् इत्यर्थकात् 'कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा' इत्यादौ चतुर्थी। श्लाघा स्तुतिः। ह्नुवनं संगोपनम्। अत्र वास्तवे ज्ञापयितुमिष्यमाणे सति चतुर्थी। अत्र आद्यधातुद्वये सकर्मकत्वात् कर्मत्वं चतुर्थ्यर्थः। द्वितीयाबाधेन च चतुर्थी। तृतीयचतुर्थयोस्तु अकर्मकत्वात् षष्ठीबाधेन संबन्धः चतुर्थ्यर्थः। अथवा सर्वत्र श्लाघाऽऽदिज्ञापनं लक्षणया धात्वर्थः। तं प्रति कृष्णस्य कर्मत्वेन द्वितीयाप्राप्तौ चतुर्थी।

एवम् 'धारेरुत्तमर्णः' (पा० १।४।३५) इति सूत्रेण धारयतेर्योगे उत्तमर्णः उक्तसंज्ञः स्यात् इत्यर्थकेन 'चैत्राय शतं धारयति' इत्यत्र चतुर्थी। अत्र चतुर्थ्यर्थः उत्तमर्णत्वापरपर्यायप्रत्यर्पणीयत्वाख्यः संबन्धः। तस्य च स्वनिरूपकद्रव्यकर्मकधारणानुकूलत्वेन कृतौ अन्वयः। तथा च चैत्रप्रत्यर्पणीयं शतं धारयतीत्यर्थः। यदा तु स्वत्वाख्यसंबन्धविवक्षा, तदा 'चैत्रस्य शतं धारयति' इति प्रयोगः। न चास्य मुख्यसंप्रदानत्वविवक्षयैव चतुर्थ्युपपत्तेः सूत्रान्तरवैयर्थ्यम्, दानक्रियाऽभावेन तस्याप्राप्तेः, प्रत्यर्पणीयत्वविवक्षया तत्सार्थक्याच्च। अत एव 'क्रियाग्रहणं कर्तव्यम्' इत्यनेनापि न वैयर्थ्यम्।

एवम् 'स्पृहेरीप्सितः' (पा० १।४।३६) इत्यनुशासनात् स्पृहयतियोगे इष्टः संप्रदानसंज्ञः स्यात् इत्यर्थकात् 'पुष्पेभ्यः स्पृहयति' इत्यत्र चतुर्थी। अत्र चतुर्थ्यर्थः कर्मत्वम्, संबन्धत्वेन विषयत्वरूपसंबन्धश्च। तयोश्च तात्पर्यानुरोधेन एकैकशः समुदितयोर्वा बोधः। तेन निरवकाशत्वात् संप्रदानसंज्ञा कर्मसंज्ञाशेषषष्ठयोर्बाधिका इति वाक्यपदीयप्रभृतयः। वस्तुतस्तु ईप्सितग्रहणात् ईप्सिततमत्वप्रयुक्तकर्मसंज्ञायाः संबन्धसामान्यप्रयुक्तशेषषष्ठ्याः वा बाधे प्रमाणाभावः। तेन विषयित्वमेव तत्त्वेन चतुर्थ्यर्थः। तस्य च स्वाश्रयस्पृहावत्त्वेन आख्यातार्थाश्रयत्वे अन्वयः। कर्मत्वविवक्षायाम् 'पुष्पाणि स्पृहयति' इति प्रयोगः। शेषत्वविवक्षायां च 'पुष्पस्य स्पृहयति' इति। अत एव 'स्पृहणीयशोभः' इति कर्मत्वार्थकः प्रत्ययः। 'कुमार्यं इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इति षष्ठीप्रयोगोऽपि संगच्छते। हरदत्तादयोऽप्येवम्।

एवम् 'क्रुधद्रुहेर्ष्याऽसूयाऽर्थानां यं प्रति कोपः' (पा० १।४।३७) इत्यनुशासनात् क्रुधद्रुहाद्यर्थानां धातूनां योगे यं प्रति कोपः, स संप्रदानसंज्ञः स्यात् इत्यर्थकात् 'शत्रवे क्रुध्यति द्रुह्यति ईर्ष्यति असूयति' इत्येवं चतुर्थी। अत्र क्रोधः अमर्षः, द्रोहः अपकारः, ईर्ष्या असहनम्, असूया गुणेषु दोषारोपः। अत्र आद्ययोः अकर्मकत्वात् तद्योगे षष्ठीप्राप्तौ, अन्त्ययोश्च सकर्मकत्वात् द्वितीयाप्राप्तौ चतुर्थीविधिः। तद्बाधेन यं प्रति कोपः इत्यनेन यत्संबन्धित्वयत्कर्मत्वयोः उपादानात्। अत एव नात्र पूर्ववत् द्वितीयाऽन्तादिप्रयोगोऽपि। चतुर्थ्यर्थोऽपि स एव। वास्तवो यत्र कोपः, तत्र कर्मत्वादौ चतुर्थी इत्यर्थः। कोपपदोपादानात् 'भार्यामीर्ष्यति मैनामन्योऽद्राक्षीत्' इत्यत्र न



चतुर्थी। अत एव आद्ययोर्धात्वर्थयोः उपसर्गयोगे कर्मसंज्ञाविधिः 'शत्रुमभिक्रुध्यति अभिद्रुह्यति' इत्यादौ 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (पा० १।४।३८) इत्यनेन।

एवम् 'राधीक्ष्योर्यस्य विप्रश्नः' (पा० १।४।३९) इत्यनेन एतयोर्योगे विविधप्रश्नसंबन्धी संप्रदानसंज्ञः स्यात् इत्यर्थकेन 'कृष्णाय राध्यति ईक्षते वा' इत्यत्र चतुर्थी। विविधं पृष्टो गर्गः कृष्णसंबन्धिशुभाशुभं पर्यालोचयति इत्यर्थः। अत एव संबन्धित्वं चतुर्थ्यर्थः।

एवम् 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' (पा० १।४।४०) इत्यनुशासनात् आभ्यामुपसर्गाभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनारूपव्यापारस्य कर्ता संप्रदानसंज्ञः स्यात् इत्यर्थकात् 'विप्राय गां प्रतिशृणोति' इत्यत्र चतुर्थी। अत्र अन्यदीयप्रवर्तनापूर्वकः अभ्युपगमो धात्वर्थः, वृत्तित्वं चतुर्थ्यर्थः। स च स्वाश्रयप्रवर्तनाजन्याभ्युपगमानुकूलत्वसंसर्गेण कृतौ अन्वेति। चैत्रनिष्ठप्रवर्तनाप्रवर्तितः प्रतिजानीते इत्यर्थः।

एवम् 'अनुप्रतिगृणश्च' (पा० १।४।४१) इत्यनेन आभ्यां परस्य गृणातेर्योगे पूर्वव्यापारस्य कर्तृभूतकारकं संप्रदानसंज्ञं स्यात् इत्यर्थकेन 'होत्रे अनुगृणाति, प्रतिगृणाति' इत्यत्र चतुर्थी। शंसनपूर्वकप्रोत्साहनं धात्वर्थः, वृत्तित्वरूपः संबन्धः, कर्मत्वं च चतुर्थ्यर्थः। तयोश्च क्रमेण शंसनप्रोत्साहनद्वारकः भावनाऽन्वयः। होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः।

एवम् 'परिक्रयणे संप्रदानमन्यतरस्याम्' (पा० १।४।४४) इत्यनेन यत् नियतकालं भृत्या स्वीकरणं परिक्रयणम्, तस्मिन् साधकतमं कारकं विकल्पेन संप्रदानसंज्ञकं स्यात् इत्यर्थकेन 'शतस्य शतेन वा परिक्रीणीते' इत्यत्र विकल्पेन चतुर्थी। करणत्वं चतुर्थ्यर्थः।

एवम् 'तादर्थ्ये चतुर्थी वाच्या' इति वार्तिकात् उपकारकापकारकसाधारणं तदुद्देश्यकत्वं लक्षणया चतुर्थ्यर्थः। 'मुक्तये हरिं भजति, मशकाय धूमः' इत्यादौ। तच्च जनकत्वादिना अनेकप्रकारेण। तेन 'ब्राह्मणाय दधि तिष्ठति' इत्यादावपि द्रव्यद्वारकक्रियासंबन्धेऽपि चतुर्थी। अत एव 'क्रियाग्रहणं कर्तव्यम्' इत्यनेनापि न गतार्थत्वम्।

एवम् 'क्लृपि संपद्यमाने च' इत्यनेन प्रकृतिरूपं कारणं कार्यात्मना यदा संपद्यते, तदा कार्यवाचकात् चतुर्थी स्यात् क्लृप्त्यर्थकधातुयोगे। 'मृत् घटाय कल्पते संपद्यते जायते वा' इत्यादौ मृत् घटाकारेण परिणमते इत्यर्थः। इदं च कार्यकारणयोः भेदविवक्षायाम्। पार्ष्ठिकाभेदविवक्षायाम् 'मृद् घटः कल्पते' इति प्रथमैव। 'जनिकर्तुः प्रकृतिः' (पा० १।४।३०) इत्यनेन मृदः अपादानत्वविवक्षायां तु 'मृदो घटः कल्पते' इत्यत्र कारणे पञ्चमी, कार्ये तु अभिहितत्वात् प्रथमैव। न च 'तादर्थ्ये चतुर्थी' इत्यनेन गतार्थत्वम्, परिणामत्वेन बोधस्य विवक्षितत्वात्। एवमग्रेऽपि।

तथा 'उत्पातेन ज्ञापिते च' इत्यनेन उत्पातेन ज्ञापनविषये चतुर्थी इत्यर्थकेन 'वाताय कपिला विद्युत् विद्योतते' इत्यत्र चतुर्थी। तत्त्वेन ज्ञापकत्वं चतुर्थ्यर्थः।

एवम् हितसुखादियोगेऽपि चतुर्थी, ब्राह्मणाय हितं सुखं वा इत्यादौ। इदं च तद्योगे चतुर्थीसमासविधानरूपज्ञापकवशात्। संबन्धित्वं चतुर्थ्यर्थः।

एवम् 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा० २।३।१४) इत्यनेन क्रियावाचि उपपदं यस्य, तस्य स्थानिनः तुमुन्ण्वुल्रूपस्य अप्रयुज्यमानस्य कर्मणि चतुर्थी स्यात् इत्यर्थकेन 'फलेभ्यो याति, नमस्कुर्मो नृसिंहाय' इत्यादौ चतुर्थी। फलानि आहर्तुम्, नृसिंहमनुकूलयितुम् इत्यर्थः। इदं च तुमुन्नन्तस्य अप्रयोगे। ण्वुलन्तस्य अप्रयोगे तु फलानि आहारक इत्यर्थः। द्वितीयाऽपवादार्थं कर्मग्रहणम्। प्रयुज्यमाने तु द्वितीयैव। अत्र अप्रयुज्यमानाहरणनिरूपितं कर्मत्वं चतुर्थ्यर्थः। तस्य च स्वनिरूपकाहरणक्रियोद्देश्यकयानानुकूलत्वं कृतौ संसर्गः। संसर्गकोटिप्रविष्टत्वादेव च आहरणस्य अशाब्दत्वेऽपि न क्षतिः।

एवम् 'तुमर्थाच्च भाववचनात्' (पा० २।३।१५) इति सूत्रेण, 'भाववचनाश्च' (पा० ३।३।१२) इति सूत्रेण विहितो यः तुमुना समानार्थकः प्रत्ययः, तदन्तात् चतुर्थी स्यात् इत्यर्थकेन 'यागाय याति'

इत्यादौ चतुर्थी । 'यष्टुं याति' इति तदर्थः । स च प्रकृते घञ् । न च 'तादर्थ्ये चतुर्थी' इत्यनेन गतार्थत्वम्, तुमुनेव तादर्थ्यस्यापि घञा उक्ततया साधुत्वार्थे प्रथमातिक्रमे कारणाभावेन प्रथमाप्राप्तौ चतुर्थीविधिसार्थक्यात् । न च शुद्धभावे एव घञं व्युत्पाद्य तादर्थ्यचतुर्थ्युपपत्तेः 'भाववचनाश्च' इति सूत्रवैयर्थ्यम्, क्रियार्थायां क्रियायां विशेषविहितेन तुमुना घञो बाधापत्तेः, तदन्तोपरि तादर्थ्यचतुर्थ्यप्रसक्तेः । अतः तद्बाधार्थे घञादेरपि तदर्थे विधाने कृते प्रथमाबाधार्थं चतुर्थीविधिसार्थक्यात् ।

एवम् 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' (पा० २।३।१६) इति शास्त्रेण एभिः शब्दैर्योगे चतुर्थी स्यात् इत्यर्थकेन 'हरये नमः' इत्यादौ चतुर्थी । उद्देश्यत्वं चतुर्थ्यर्थः । तस्य च स्वनिरूपकनमनास्तित्ववैशिष्ट्यमाख्यातार्थे संसर्गः । उपपदस्य संसर्गघटकत्वे तात्पर्यग्राहकत्वाच्च उपपदविभक्तित्वम् । न च तादर्थ्यचतुर्थ्यैव 'ब्राह्मणाय दधि' इत्यादाविव गतार्थत्वम्, नमःपदयोगे षष्ठीव्यावृत्त्यर्थत्वेन नमनार्थकपदान्तरयोगे वा चतुर्थीव्यावर्तकत्वेन च सार्थक्यात् । यदा तु नमनस्य धात्वर्थत्वम्, तदा धातोः संसर्गघटकत्वतात्पर्यग्राहकत्वात् कारकविभक्तित्वेन 'देवान् नमस्करोति' इत्यादौ कर्मत्वार्थिका द्वितीयाऽपि नानुपपन्ना । प्रजाभ्यः स्वस्ति, अग्नये स्वाहा, पितृभ्यः स्वधा, दैत्येभ्यो हरिरलम् । पर्याप्त्यर्थकश्चायम् अलंशब्दः । उपलक्षणं च प्रभु-समर्थ-शक्तादिशब्दानाम्, 'तस्मै प्रभवति' इतिप्रयोगात् । न तु अत्र षष्ठीव्यावृत्तिः । तेन 'प्रभुर्बुभूषुर्भुवनत्रयस्य' (माघ० १।४९) इति न विरोधः । वषडिन्द्राय । चकारः षष्ठीनिषेधार्थकः ।

एवम् 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' (पा० २।३।१७) इत्यनेन प्राणिवर्जिते मन्यतेः कर्मणि तिरस्काररूपानादरे विवक्षिते चतुर्थी वा स्यात् इत्यर्थकेन 'न त्वां तृणं तृणाय वा मन्ये' इत्यत्र वैकल्पिकी चतुर्थी । अत्र कर्मत्वं चतुर्थ्यर्थः । अत्र च तृणपदं तृणसदृशपरम् । तथा च तृणसदृशकर्मभिन्नं त्वत्कर्मकं ज्ञानम् इत्यर्थः । त्वत्कर्मकज्ञाने तृणसदृशकर्मभेदश्च अत्र त्वयि तृणसदृशभेदे पर्यवस्यति । तत्र च अनादरविवक्षायाम् 'त्वां तृणसदृशमपि न मन्ये' इत्यर्थः फलितः । अतो नोत्कृष्टत्वविवक्षायां चतुर्थीप्रयोगः । अत्र मन्ये इत्युपादानात् 'मन्वे' इत्यत्र न चतुर्थी । तेन 'त्वां तृणं मन्वे' इत्येव प्रयोगः । अत्र 'अप्राणिषु इत्यपनीय नौ-काक-अन्न-शुक-सृगालवर्ज्येषु इति वाच्यम्' तेन अप्राणित्वेऽपि 'न त्वां नावम् अन्नं वा मन्ये' इत्यादौ न चतुर्थी । प्राणित्वेऽपि च 'न त्वां शुने मन्ये' इत्यादौ भवत्येव चतुर्थी । न चैवं मन्यतिकर्मत्वाविशेषात् युष्मच्छब्दादपि चतुर्थ्यापत्तिः, अनादरे इत्यस्य कर्मविशेषणत्वेन अनादरव्यञ्जके कर्मणि चतुर्थीविधिप्रतीतेः तदप्रसङ्गात् ।

तत् सिद्धं सर्वत्र चतुर्थ्याः भावनाऽन्वय इति । **भाट्टरहस्यं.** पृ. १०१-११२.

* **चतुर्थ्या** मन्त्रवर्णो बाध्यते । 'यदग्नये च प्रजापतये च सायं जुहोति' इति चतुर्थ्या केवलस्याग्नेः देवतात्वप्रापिकया अग्निर्ज्योतिरितिमन्त्रवर्णः ज्योतिष्ट्वविशिष्टस्याग्नेर्देवतात्वप्रापकः । **बाळ.** पृ. १४४.

**चतुर्थ्यन्तदेवताप्राधान्यम् इति न्यायेन** कर्मण एव सर्वभूतोत्पत्तिस्थितिलयहेतुत्वेन सर्वातिशयत्वमनिवार्यम् इत्याशङ्कायाम् । **श्रीकर.** ३।२।३७ ब्रसू.

* **चतुर्थ्याद्युपवासाः** कन्यकानां सर्वासां सदाचारः । **वा.** १।३।३।७ पृ. २०५. * **चतुर्थीनिर्देशे** देवानां देवतात्वं वाक्येन, तद्धितनिर्देशे श्रुत्या । **भा.** २।२।९। २३ पृ. ५३३ । 'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन चेष्यते । देवतासंगतिस्तत्र दुर्बलं च परंपरम् ॥' **वा.**

* '**चतुर्दश** पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्' आहवनीयगतवषट्काराहुतिपरिगणनमेवेदम् । पञ्च प्रयाजाः, द्वौ आज्यभागौ, स्विष्टकृत्, त्रयोऽनूयाजाः, प्रधानाहुतित्रयमिति चतुर्दश पौर्णमास्याम् । सांनाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयं शेषं समानम् इति त्रयोदश अमावास्यायाम् । **के.** (**भा.** २।२।३।८) । * '**चतुर्दशभिर्वपति**' चयने कृष्टे देशे ग्राम्यान्यारण्यानि च बीजानि चतुर्दशभिर्मन्त्रैर्वपति । **संकर्ष.** २।१।१५.

* '**चतुर्दशरात्रं** प्रतिष्ठाकामा आसीरन्' । सत्रमेतत् । सत्रभूतद्वादशाहधर्मातिदेशोऽत्र । **वि.** ८।२।५.



* **चतुर्दश्याद्युपवासफले** इव अग्निहोत्रादिफलेऽपि जन्मान्तरवासनोद्भवात् कामनासंभवात् श्वादीनाम् । पूर्वपक्षे । **सोम.** ६।१।२.

* **चतुर्धाकरणम्** आग्नेयपुरोडाशस्यैव दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' । **वि.** ३।१।१५, * चतुर्धाकरणं दर्शपूर्णमासयोराग्नेयपुरोडाशस्य बहूनामृत्विजां विभागार्थम्, निर्देशश्च 'इदं ब्रह्मणः' इत्यादिः भागानामसांकर्यार्थः । कृष्णलेषु तु ब्रह्मेतरेषामृत्विजां विभाग एव नास्ति ब्रह्मण एव समर्पणीयत्वान्निर्देशोऽपि नावश्यकः इति तौ न भवतः । १०।२।७, * चतुर्धाकरणं दर्शपूर्णमासयोः हस्तेन । मन्त्राश्च 'इदं ब्रह्मणः, इदमध्वर्योः' इत्यादयः । वैश्वदेवचरौ काम्ये शत्रुक्षयार्थे चतुर्धाकरणे व्यूहनं स्फ्यसहितशम्यया, मन्त्रश्च 'इदमहं ब्रह्मभागं व्यूहामि, इदमहमध्वर्युभागं व्यूहामि' इत्यादिः । १०।१।१ वर्णकं ३, * चतुर्धाकरणम् । 'पुरोडाशं चतुर्धा करोति' 'आग्नेयं चतुर्धा करोति' अनयोरुपसंहारः । १०।८।९.

**चतुर्धाकरणं भक्षार्थम् ॥**

**भक्षाश्रवणाद्दानशब्दः परिक्रये । ३।४।१७।४८॥**

**भाष्यम्**—दर्शपूर्णमासयोः श्रूयते 'इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीधः' इति । तत्र संदेहः किमयमृत्विजां विभागः परिक्रयाय, उत भक्षणायेति । किं प्राप्तम् ? परिक्रयार्थो विभागः । कुतः ? भक्षाश्रवणात् । न श्रूयते भक्षयितव्यमिति । य एव श्रुतस्य उत्सर्गे दोषः, स एव अश्रुतपरिकल्पनायाम् । कर्मकरेभ्यश्च दीयते । तस्मात् परिक्रय एषः ।

**वा**— पुरोडाशस्य चतुर्धाकरणे 'इदं ब्रह्मणः' इत्यादिर्निर्देशः श्रूयते । कथं च तत्तत् ब्रह्मादिव्यपदेश्यं भवति यदि तेभ्यो न दीयते, तेन दानं विहितम् । तत्तु किम् ऋत्विजां यथेष्टविनियोगार्थं परिक्रयाय आम्नायते, अथ भक्ष्यमाणशेषप्रतिपत्त्यर्थमिति । परिक्रयार्थमित्याह । नहि अत्र 'यजमानपञ्चमा इडां प्राश्नन्ति' इतिवत् द्रव्यप्राधान्यं भक्षणं वा श्रूयते । तस्मात् द्रव्याणां कर्मशेषत्वात् कर्मयुतेभ्यश्च दानात् अन्तरेणापि परिक्रयश्रुतिं दक्षिणादानवत् परिक्रयार्थमिति ।

**तत्संस्तवाच्च । ४९ ॥**

**भाष्यम्**—'एषा वै दर्शपूर्णमासयोर्दक्षिणा' इति दक्षिणासंस्तवाच्च परिक्रयार्थं मन्यामहे ।

**वा**— 'एषा वै दर्शपूर्णमासयोर्दक्षिणा' इति । दक्षिणा हि ऋत्विजामुत्साहकारिणी । परिक्रयस्य च एतद्रूपम् ।

**भक्षार्थो वा, द्रव्ये समत्वात् । ५० ॥**

**भाष्यम्**— भक्षार्थं एष विभागः । कुतः ? दानस्य अभावात् । कथमभावः ? प्रभवता हि शक्यं दातुम्, न अप्रभवता । कथं न प्रभुत्वम् ? संकल्पितं हि यजमानेन 'देवतायै एतत्' इति । न च देवतायै संकल्पितेन शिष्टाः स्वेनेव व्यवहरन्ति । तस्मात् शिष्टाचारमनुवर्तमानेन अशक्यं प्रभवितुम् । तस्मात् न परिक्रयः । अथ यदुक्तं न श्रूयते भक्षयितव्यमिति, यावांश्च श्रुतस्य उत्सर्गे दोषः, तावान् अश्रुतपरिकल्पनायामिति । उच्यते । 'इदं ब्रह्मणः' इत्येवमादिभिः ब्रह्मादीनां भागैः अभिसंबन्धः । तत्र भागाः ब्रह्मादीनामुपकुर्युः, ब्रह्मादयो वा भागानाम् । ब्रह्मादिभिः भागानामुपकुर्वद्भिः न किञ्चित् दृष्टमस्ति, भागैस्तु ब्रह्मादीनामुपकारकैः शक्यते केन चित् प्रकारेण दृष्ट उपकारः कर्तुं भक्ष्यमाणैः । तस्मात् भक्षणाय विभाग इति । कः पुनरुपकार इति चेत्, तृप्तानां कर्मशेषपरिसमापने सामर्थ्यं भवतीति ।

**वा**— न चैष विभागः परिक्रयार्थः । कुतः ? '**परिक्रयो हि सर्वत्र स्वेन द्रव्येण कल्पते । देवताऽर्थे परित्यक्ते स्वामित्वं न च कस्य चित् ॥**' समस्तस्य पुरोडाशस्य देवतोद्देशेन त्यक्तत्वात् अस्वामी यजमानः इति ब्रह्मादिभिः समः । तत्र यथैव तेषां दातृत्वं न संभवति, तथा यजमानस्यापि । तेन हि परिक्रीणानः पुनः तद् द्रव्यं स्वीकुर्यात्, तत्र पौरस्त्यः संकल्पो विनश्येत् । तस्मात्तावन्न परिक्रयः । कथं खलु भक्षार्थमिति ? तदुच्यते । '**योग्यता लिङ्गमित्युक्तं तच्चेष्टं विनियोजकम् । भक्षयोग्यः पुरोडाशः स्वरूपेण च दृश्यते ॥**' (ब्रह्मादिभिः इत्यादिभाष्यं द्रव्यप्रतिपत्त्यर्थत्वत्यागेन कर्तृसंस्कारमात्रार्थत्वोक्त्यर्थतया

अन्येषां व्याख्यां दूषयितुमाह– ) ' ब्रह्मादिभिर्भागानामुपकुर्वद्भिः न किञ्चित् दृष्टम्' इत्ययुक्तं वदति द्रव्यक्षपणस्यापेक्षितस्य दृष्टत्वात् । ( अत्र आनन्दाश्रमीये टिप्पणी " दृष्टमित्यनेन कर्तृसंस्कारमात्रार्थत्वं न वदति' इत्यादिरूपा पङ्क्तिः प्रलीनेति भाति " इति । वयं तु ' दृष्टमित्युक्तं वदति' इत्यस्य स्थाने ' दृष्टमित्ययुक्तं वदति ' इति वार्तिके पाठं कल्पयामः । अत एव 'द्रव्यक्षपणस्य' इत्यादिना प्रयुक्तो हेतुः संगच्छते, ठिप्पणीपाठे तु असंगतः स्यात् हेतुः) । 'भागैस्तु ब्रह्मादीनामुपकारकैः ' इत्यनेनापि सुतरां परिक्रयः आपद्यते । न च अवश्यं भक्षणेनैव तेषामुपक्रियते । गृहानयनादिनाऽपि उपकारोपपत्तेः । सर्वत्र च द्रव्यसंस्कारार्थतां भक्षस्य वक्ष्यति (१२।१।१५। ३१–३२ इत्यत्र । ३२ सूत्रे ' नान्यार्थत्वात् ' इत्यत्र एवमुक्तं न सः [ शेषभक्षः ] वृत्त्यर्थः, नहि अलं वृत्तये। संस्कारार्थोऽसौ उपयुक्तसंस्कारार्थत्वात् भक्षाणाम्। इति ) । व्रतादिभिः निवृत्त्यनभिधानात् । पुरुषसंस्कारा हि व्रतैर्निवर्तेरन् । ( स्वमतेन भाष्यार्थमाह– ) तत एवं वक्तव्यम् । सत्यं भागानां प्रतिपत्तिः, तथापि तु प्रकृतकर्तृनियमस्य प्रयोजनापेक्षावेलायां दृष्टे सति अदृष्टदौर्बल्यात् दृष्टः एव कर्तृणां सामर्थ्यरूपः संस्कारः कल्प्यते। कर्तृसंस्कारश्च सर्वान्तरङ्गो भक्षणं नाम। गृहमपि च नीत्वा यावत् भक्षणं न क्रियते, तावत् तदनुपयोगात् अनुपकारः । तेन अवश्यं सुदूरमपि गत्वा भक्षणे पर्यवसितव्यम् । तत्र प्रथमातिक्रमे कारणाभावात् योग्यतावशेन च व्यादेशद्वारप्रक्रान्तभक्षसमापनस्य अवश्यं कर्तव्यत्वात् ब्रह्मादीनामेव भक्षणेन उपकर्तव्यमिति गम्यते। शेषस्यापि च क्षपणापेक्षस्य भक्षणकृतमेव क्षपणं योग्यतया अवधार्यते ।

**व्यादेशाद् दानसंस्तुतिः । ५१ ॥**

**भाष्यम्**— अथ यत् दक्षिणासंस्तव इति, व्यादेशसामान्यात् तदपरिक्रयार्थेऽपि भविष्यतीति ।

**वा**–– दक्षिणा इति प्रासङ्गिकोपकारापेक्षया ' ब्रह्मणः' इत्यादिनिर्देशसारूप्याद्वा भविष्यति । तस्मात् भक्षार्थोऽयं उपदेश इति सिद्धम् ।

**शा**–– **' भक्षस्याश्रवणात् तावत् तादर्थ्यं नावगम्यते ॥ कियत्यप्यानतिस्तावद् भवतीति तदर्थता । ' मैवम् । ' स्वामी हि द्रव्यदानेन परिक्रीणीत, न त्विह । स्वामित्वं कस्य चिद्, दत्तं देवतायै हविर्यतः ॥ '**

**सोम**–– **प्रयोजनम्** । आनत्यर्थत्वे सत्राङ्गभूताग्नेयविकारे न कर्तव्यम्, प्रतिपत्त्यर्थत्वे तु कर्तव्यमिति ।

**वि**— ' इदं ब्रह्मण इत्युक्तिः क्रयार्था भक्षणाय वा ।, भक्षाश्रुतेः क्रयार्थाऽतो यथेष्टं तैर्नियुज्यताम् ॥, देवतायै समस्तस्य क्लृप्तत्वात् स्वामिता नहि । शेषस्य प्रतिपत्त्यर्थे भक्षणं तत्र युज्यते ॥ '

**भाट्ट**— आग्नेयस्य पुरोडाशस्य चतुर्धाकृतस्य ' इदं ब्रह्मण इदं होतुः ' इत्यादिमन्त्रवर्णकल्पितो विभागरूपो व्यादेशः श्रुतः । स किं दक्षिणारूपतया परिक्रयार्थः सन् ऋत्विक्संस्कारार्थः, उत भक्षणरूपतया प्रतिपत्त्यर्थः सन् शेषसंस्कारार्थः इति **चिन्तायाम्** , भक्षस्याश्रवणात् ' ब्रह्मणः ' इत्यादिषष्ठीश्रुत्या च वासिष्ठादिवत् ( ? ) ब्रह्मादीनां स्वामित्वावगमात्, तस्य च दानमन्तरेण अनुपपत्तेः, तस्य च त्वत्पक्षेऽपि पुरोडाशे स्विष्टकृद्देव स्वीकारकल्पकत्वोपपत्तेः, सोमचमसवत् ऋत्विक्संस्कारार्थं दक्षिणादानविधिरेवात्र कल्प्यते । अत एव ' एषा वै दर्शपूर्णमासयोर्दक्षिणा ' इत्यपि लिङ्गमुपपद्यते । अतः परिक्रयार्थः । **इति प्राप्ते**, सकलस्यैव पुरोडाशस्य अग्नये त्यक्तत्वात् अनीशो यजमानो न शक्नोति अन्यांस्तेन परिक्रेतुम् । अतः तव मते पुनःस्वीकारो दानमानतिश्चेति अनेककल्पना । स्विष्टकृति तु यागस्य श्रुतत्वात् स्वीकारकल्पनेऽपि न दोषः । अतो वरं भक्षणकर्तृत्वमेव संबन्धसामान्यवाचिषष्ठ्याः अर्थं परिकल्प्य अपेक्षितशेषप्रतिपत्तिरूपं भक्षणमेव ब्रह्मादिकर्तृकं मान्त्रवर्णिकविधिना विधीयते । अवश्यं च आनतिरपि अनेन भक्षणोपयोगित्वेन अवर्जनीया, न तु गृहसुवर्णादिवत् क्रियाऽन्तरोपयोगिनी, अयोग्यत्वात् । अतश्च आवश्यकत्वाद्भक्षणमेव संबन्धघटकत्वेन कल्प्यते, न क्रियाऽन्तरं समर्पणादिगौरवात् । अतश्च ब्रह्मसंबन्धिसमर्पणमेव शेषप्रतिपत्तिः । तेन तु गृहीत्वा स्वयमन्यद्वारा वा भक्षणं संपादनीय-



मित्यपि अपास्तम् । आवश्यकभक्षणस्यैव तत्कर्तृकस्य प्रतिपत्तित्वोपपत्तौ क्रियाऽन्तरकल्पने गौरवात् । दक्षिणाश्रुतिस्तु आनुषङ्गिकानतिसाधनत्वात् अर्थवादः । २१.

**मण्डन**— ' परिक्रियार्थो न भवेद्विभागः । '

**शंकर**— ' चतुर्धाकरणे भक्षः । ' २३.

* **चतुर्धाकरणं** यथा मिश्रदेवतत्वात् ऐन्द्राग्ने न भवति, तथा उपांशुयाजाज्यस्य मिश्रदेवतत्वात् नोत्कर्षः । **भा.** ५।४।६।२१. * चतुर्धाकरणं शेषकार्यम् । **वा.** ३।४।१४।३७.

* **चतुर्धाकरणाधिकरणम्**। आग्नेयचतुर्धाऽधिकरणन्यायोऽयम् । **भा.** ३।१।१५।२६–२७. * **चतुर्धाकरणाधिकरणन्यायः** । ऐन्द्राग्नेऽपि अभ्यासे ' इन्द्रपीतस्य ' इत्येवं समन्त्रकं भक्षणम्। त्यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदलक्षितस्वीकारस्य वा प्रत्येकवृत्तित्वेन डित्थमातृवत् एकेन पदेन व्यपदेष्टुं शक्यत्वात् त्यागस्य हुताहुतसमुदायविषयत्वेन भक्ष्यमाणाहुतावयवमात्रविषयत्वाभावात् न पीतपदेन त्यक्तत्वलक्षणा । अतः चतुर्धाकरणाधिकरणविषयत्वाभावात् तस्यापि समन्त्रकं भक्षणम् इति प्राप्ते । **भाट्ट.** ३।२।१८. * **चतुर्धाकरणाधिकरणन्यायेन** इन्द्राग्न्योर्व्यासज्यवृत्तिदेवतात्वात् । **कौ.** ३।२।१८।३९ ( ४० ). * चतुर्धाधिकरणन्यायेन अग्निसमिन्धनप्रकाशनार्थसामिधेन्यनुवचनवत् काम्ये सामिधेन्यनुवचने अनुप्रयोगवशात् प्रयोगमध्यपात्यग्निसमिन्धनाधीनत्वं कर्मान्तरभूतस्यापि काम्यस्य सामिधेन्यनुवचनस्य इत्युक्तम्। **सु. पृ.** १०५८. * द्विदेवत्ये च **चतुर्धाकरणाद्यधिकरणन्यायेन** केवलस्य पूष्णो देवतात्वाभावात् यत्र केवलः पूषा तत्रैव पेषणम् । **भाट्ट.** ३।३।१५.

* **चतुर्धाकरणन्यायः** । अयमेव आग्नेयचतुर्धाकरणन्यायः । **भा.** ३।१।१५।२६–२७. * **चतुर्धाकरणविधौ** आग्नेयशब्देन द्विदेवत्यो न गृह्यते किन्तु आग्नेय एव एकदेवत्यः । **वा.** ३।१।१५।२६–२७.

* **चतुर्मुष्टिनिर्वापेणैवानुसमयः** तावानेकः पदार्थः दर्शपूर्णमासयोः । **भाट्ट.** ५।२।३.

* **चतूरात्रे** चयनं कर्तुं शक्यते । **भा.** १०।५। २३।७८.

* **चतुर्विंशतिमानं** हिरण्यं दक्षिणा श्येनीयप्रायणीयायाम् । **भा.** ८।१।१०।१६.

♅ **चतुर्वेदविन्न्यायः** । यथा गोहिरण्यादिरूपं बहुधनं चतुर्वेदविदे देयं भवतीति कस्य चिद्दातुर्वचनं श्रुत्वा कश्चिन्मुग्धो ' वेदाश्चत्वारः ' इत्यहं जाने , मह्यं देयमिदमिति वदन्न तु लेभे तत् , प्रत्युतोपहास्यतां प्राप्तः, तथा यः सच्चिदानन्दरूपं प्रत्यगभिन्नं ब्रह्मेत्यादिशब्दमात्राभिज्ञस्तदर्थाभिज्ञो वा तत्त्ववित्त्वाभिमानेन तद्गतिमिच्छति , न स तामेति उपहसनीयश्च भवतीति ज्ञेयमिति । **साहस्री.** ७८.

♅ **चतुर्व्यूहन्यायः** । चत्वारो व्यूहाः, विभागा इति यावत् । यथा पाञ्चरात्रमते—वासुदेवसंकर्षणप्रद्युम्नाऽनिरुद्धाख्यमूर्तयश्चतुर्व्यूहशब्देनोच्यन्ते । बह्वृचोपनिषदि च शरीरपुरुषच्छन्दःपुरुषवेदपुरुषमहापुरुषाश्चतुर्व्यूहशब्देनोक्ताः । सांख्यपातञ्जलदर्शनयोश्च हेयम्, हानम्, हेयहेतुः, हानोपायश्चेति चत्वारो व्यूहाः प्रतिपाद्या भवन्ति । तत्र त्रिविधं दुःखं हेयम्, तदत्यन्तनिवृत्तिर्हानम्, प्रकृतिपुरुषसंयोगद्वारा चाविवेको हेयहेतुः, विवेकख्यातिस्तु हानोपाय इति । चिकित्साशास्त्रे तु रोगः, आरोग्यम्, निदानम्, भैषज्यमिति चत्वारो व्यूहत्वेन प्रोक्ता इति । तथाऽन्यत्रापि शास्त्रे यथासंभवं चतुर्व्यूहमूहनीयमित्येवमस्य न्यायस्यावतार इति । **साहस्री.**४७२.

* ' **चतुर्होत्रा** पौर्णमासीमभिमृशेत् । पञ्चहोत्राऽमावास्याम् ' । ' पृथिवी होता चतुर्होतृणाम्, अग्निर्होता पञ्चहोतृणाम् ' । **वि.** ३।७।४. * ' चतुर्होत्रा पौर्णमास्यामभिमृशेत्, पञ्चहोत्राऽमावास्यायाम् ' अयं व्यवस्थाविधिः क्रत्वर्थः अनुभयप्राप्तौ । **बाल. पृ.** १७. * **चतुर्होतृपञ्चहोतृ**मन्त्राभ्यामभिमर्शनमपूर्वप्रयुक्तम्, न समुदायप्रयुक्तं दर्शपूर्णमासयोः । **भा.** ९।१।५।११–१९, * चतुर्होतृपञ्चहोतृमन्त्रयोर्हविरभिमर्शने करणमन्त्रयोः सौर्ययागे विकल्पः । ८।१।१५।२६, * **चतुर्होतृहोमेषु** अनाहिताग्नेरेवाधिकारः । ६।८।१।१–१०.

* **चतुष्कपालानां** वारुणानां भेदेन प्रयोगः साहित्यस्याविवक्षितत्वात् न सहप्रयोगः । तथापि साहित्य-

विधायकं वचनान्तरम् इति तन्त्ररत्ने समार्थितम् । **सोम.** ५।२।१.

* ' **चतुष्पथे** एकोल्मुकमुपनिधाय जुहोति ' इति चतुष्पथोऽपि होमाधारत्वेनोक्तः । **संकर्ष.** २।४।१५, * ' चतुष्पथे जुहोति, एष वा अग्नीनां पड्बीशो नाम, अग्निवत्येव जुहोति ' । अत्राहवनीयनिवृत्तिः । ( पड्बीशः अश्वपादबन्धनकीलकः ) । २।४।१४.

* '**चतुस्त्रिंशद्वाजिनो** देवबन्धोः' इत्यादिर्ऋक् अश्वमेधे सवनीयाश्वस्य कृते अध्रिगुप्रैषे विकल्पेन पठनीया । **टुप्.** ९।४।२।१०.

* **चतुस्त्रिंशन्मन्त्रप्रतिषेधन्यायः** । ' अश्वमेधे अध्रिगुप्रैषे ' इति विन्दौ अधिकरणम् । **के.** * चोदकप्राप्तक्रत्वर्थहोमप्रतिषेधे, पर्युदासाधिकरणपूर्वपक्षन्यायेन प्रत्यक्षशिष्टहोमप्रतिषेधे च **चतुस्त्रिंशन्मन्त्रप्रतिषेधन्यायेन** अनिवार्यो विकल्पः । **परिमल.** ३।३।१५।२६ ब्रसू.

⧗ **चन्दनगुणन्यायः** । अयं भर्तृहरिणा विवृतः । तथाहि ' किं तेन हेमगिरिणा रजताऽद्रिणा वा यत्राश्रिताश्च तरवस्तरवस्त एव । मन्यामहे मलयमेव यदाश्रयेण कंकोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ' इति । **साहस्री.** ९८५.

* **चन्द्राभ्युदये** अर्धनिरुप्ते सति जायमाने तूष्णीमवशिष्टनिर्वापः । ( अभ्युदितेष्टिशब्दे द्रष्टव्यम् ) । **भा.** ६।५।५।१८–२०, * चन्द्राभ्युदये असंनयतोऽपि प्रायश्चित्तम् । ६।५।६।२१–२४.

⧗ **चन्द्रातपमलन्यायः** । ' सितेतर इव त्वेष पक्षश्चित्तं न कर्षति । चन्द्रातपमलन्यायप्रवासमलिनीकृतः ॥ ' ( सितात् शुक्लपक्षात् इतरः कृष्णपक्षः । चन्द्रातपस्य चन्द्रप्रकाशस्य यो मलः अन्धकारः, तन्न्यायेन यः प्रवासः किञ्चित्प्रकाशयुक्तः, तेन मलिनीकृतः कृष्णपक्षः इति अक्षरार्थः ) । **शालिकनाथः** नियोगविधिवादे. पृ. १९३.

⧗ **चन्द्रचन्द्रिकान्यायः** । यथा सर्वदेवकारणस्य रुद्रस्य या शक्तिश्चन्द्रचन्द्रिकान्यायेन तदुद्बोधरूपिणी स्वाधीनवल्लभेति प्रसिद्धा, सैव भवानीति । **साहस्री.** ६८९.

⧗ **चन्द्रज्योत्स्नान्यायः** । ' चन्द्रिका कौमुदी ज्योत्स्ना ' इति कोशात्तथा । यथा– ' चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वा वादद्यूतं चिरतरमभूत् सिद्धयूनोः कयोश्चित् । एको वक्ति प्रथमनिहतं कैटभं कंसमन्यः स त्वं तत्त्वं कथय भगवन् को हतस्तत्र पूर्वम् ॥ ' इति । **साहस्री.** २१०.

* **चन्द्रसूर्यान्तरालदेशपरिमाणं** ज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं गणितविषयसंप्रदायोत्थानुमानपूर्वकम् । **सु.** पृ. १२८.

* **चमस** इति आदानार्थस्य चमेरौणादिके अधिकरणसाधने असन् प्रत्यये कृते प्रैषवेलायां भूतभविष्यद्वर्तमानानां क्व चित्संबन्धे अपेक्ष्यमाणे भूतवर्तमानयोरदर्शनात् भविष्यत्त्वमनुमीयते । नह्यन्यथा होतुश्चमसः प्रैतु इत्येतस्य अनुष्ठानं शक्यते । तस्माच्चमितव्यं होत्रादिभिः । **वा.** ३।५।७।२२. * चमसः । ऋतपेये 'औदुम्बरः सोमचमसो दक्षिणा, स प्रियाय सगोत्राय ब्रह्मणे देयः ' । अनेन चमसेन सर्वेतरदक्षिणाबाधः । ऋत्विजां तु लौकिकेन दानेनानतिः । **वि.** १०।३।१९, * चमसः एकैकः दशभिर्दशभिः पीयते दशपेये राजसूयगते । तत्र यजमानचमसोऽपि ब्राह्मणैरेव पातव्यः । ३।५।२०. * चमसः क्रत्वर्थः, गोदोहनं तु पुरुषार्थम् । 'चमसेनापः प्रणयेत् ' । **भा.** ८।१।१४।२४. * चमसः चम्यते भक्ष्यते सोमोऽस्मिन् पात्रविशेषे सः । दीर्घचतुरस्रः समुष्टिकः औदुम्बरादिकाष्ठमयः पात्रविशेषः । **वि.** ३।५।७. * चमसः प्रणयनाश्रितत्वात् प्रणयने प्रवृत्ते प्रवर्तते विकृतिषु । **भा.** ८।१।१४।२३. * चमसः सशेषः हूयते ' अल्पं जुहोति ' इति वचनात् । **वा.** ३।५।७।२२. * **चमसाः** ज्योतिष्टोमे दश । तत्र मध्यतःकारिणां होतृब्रह्मोद्गातृयजमानानां चत्वारः, मैत्रावरुण–ब्राह्मणाच्छंसि–पोतृ–नेष्टृ–अच्छावाक–आग्नीध्राणां होत्रकाणां षट् । **कु.** ३।२।१२।२७. * चमसाः पात्रविशेषस्थिताः सोमरसाः । तैश्च वषट्कारानुवषट्कारयोर्होतव्यम् । **वि.** ३।२।१२. * चमसाः प्रातःसवने शुक्रामन्थिग्रहप्रचारे अच्छावाकचमसवर्जं नव सवनमुखीयाः प्रथममिन्द्राय हूयन्ते । **कु.** ३।२।१२।२७. * चमसाः सोमशेषवन्तः प्रेषिताः,



इति तस्यैव अपेक्षितप्रतिपत्तिविशेषस्य प्रत्यासत्तेर्भक्ष्यत्वं गम्यते । **वा.** ३।५।७।२२.

⧗ **चमसांश्चमसाध्वर्यवः समाख्यानात्** । ३।७। २२।४६ ॥

ज्योतिष्टोमे ये चमसाध्वर्यवो भवन्ति, ते किं चमसान् जुहुयुः अध्वर्युरेव वा चमसान् जुहुयात् इति चमसाध्वर्युकर्मज्ञानार्थे विचारे पूर्वपक्षसूत्रमिदम् । चमसान् सोमचमसान् चमसाध्वर्यवो जुहुयुः, समाख्यानात् चमसाध्वर्यवः इति नामधेयात् यौगिकात् । यदि तेषां सोमसहितचमसहोमरूपं कर्म न स्यात् चमसाध्वर्युसमाख्या तेषां व्यर्था स्यात् । तस्मात् ते जुहुयुः ।

अत्र **सुधा**—–चमसाध्वर्युसमाख्यानात् सर्वेषु चमसकार्येषु चमसाध्वर्युविनियोगप्रतीतेः चमसान् इति द्वितीयोक्तस्य च कर्मत्वस्य व्यापारमात्रवाचकत्वेन उपपत्तेः चमसान् चमसाध्वर्यवो 'व्यापारयेयुः' इति क्रियाध्याहारेण सूत्रार्थः इति ।

**अध्वर्युर्वा तन्न्यायत्वात्** । ४७ ॥

सिद्धान्तयति । वाशब्देन पूर्वपक्षं निरस्यति । चमसान् अध्वर्युरेव जुहुयात् , न चमसाध्वर्यवः । तन्न्यायत्वात् । सः न्यायः यस्मिन् तत् होमकर्म तन्न्यायम्, तस्य भावः तन्न्यायत्वं तस्मात् । न्यायश्च 'आध्वर्यवपदार्थम् अध्वर्युः कुर्यात् आध्वर्यवश्च होमः ' इति भाष्योक्तः । 'सामान्यसमाख्यासापेक्षविशेषसमाख्या सामान्यसमाख्यां न बाधते' इति न्यायो वा वार्तिककारोक्तः । न्यायः अबाध्यत्वम् इति च सुधा । ' नीयते प्राप्यते इति न्यायः कर्मणि घञ् । तथा च न्यायशब्दोऽत्र कर्मपरः । तन्न्यायत्वात् अध्वर्युकर्मत्वात् होमस्य ' इति तु कुतूहले व्याख्यातम् ।

**चमसे चान्यदर्शनात्** । ४८ ॥

सिद्धान्ते होत्रन्तरप्रतिपादनार्थं सूत्रमिदम् । चमसे च चमसाध्वर्योः अन्यस्य दर्शनात् न चमसाध्वर्युः चमसं जुहुयात् । ' चमसांश्चमसाध्वर्यवे प्रयच्छति, तान् स वषट्कर्त्रे हरति ' इति वचनं होमोत्तरं चमसं चमसाध्वर्यवे प्रयच्छति इति गम्यते । ' यो वा अध्वर्योः स्वं वेद स्ववानेव भवति , चमसोऽस्य स्वम् ' इत्युक्तम् । न तावदस्य चमसः स्वम् । यजमानस्य हि सः । चमसोऽस्य स्वम् इति तु ब्रुवन् अध्वर्योः चमसेन होमं दर्शयति । तस्मात् चमसाध्वर्युभ्योऽन्यस्यैव अध्वर्योः चमसहोमः कर्म इति गम्यते । चकारः हेत्वन्तरपरो भिन्नक्रमः अन्यदर्शनात् इत्यस्यानन्तरं योज्यः । ' चमसाध्वर्युभ्योऽन्यस्य चमसे होमकारित्वदर्शनात् ' इति सुधा ।

**अशक्तौ ते प्रतीयेरन्** । ४९ ॥

ज्योतिष्टोमे चमसहोमः अध्वर्योरेव कर्म न चमसाध्वर्यूणाम् इति सिद्धान्ते उक्ते ननु तर्हि चमसाध्वर्यवः इति कथं समाख्यानं प्रवर्तते इति शङ्कायामुच्यते । अशक्तौ अन्यत्र कर्मणि व्यापृतत्वात् अध्वर्योः चमसहोमशक्तेरभावे ते चमसाध्वर्यवः चमसहोमे कर्तृतया प्रतीयेरन् । तदा ते जुहुयुः । **के.**

* **चमसान्** भक्षितान् आप्यायितान् दक्षिणस्यानसोऽवलम्बे सादयन्ति ज्योतिष्टोमे । **भा.** ३।५।६।२०. * **चमसैः** ग्रहैश्च ये सोमा युगपद् हूयन्ते, तेषु 'उक्थशा यज सोमानाम् ' इति मन्त्रः । केवलग्रहकरणकहोमे तु ' उक्थशा यज सोमस्य ' इति मन्त्रः । **संकर्ष.** २।३।१२. * चमसैः पूर्वस्मिन् वषट्कारे इन्द्रः इष्टः । पुनरभ्युन्नीय मित्रावरुणाद्या देवता इष्टाः । शेषास्तत्र इन्द्रस्य मित्रावरुणादीनां च । **भा.** ३।२।१२।३०. * **चमसानाम्** ऐन्द्रश्चमसः प्रकृतिः । अनैन्द्राश्चमसाः चोदकेन सधर्मकाः । **वि.** ३।२।१६, * चमसानामैन्द्रत्वात् होतुर्वषट्कारे प्रथममिन्द्रो हुतः । अनन्तरं चमसस्थिते हुतशेषे पुनः सोमान्तरमभ्युन्नीय देवतान्तरेभ्यो होत्रका अनुवषट्कारे जुह्वति । ३।२।१२. * चमसानां ग्रहाणां च रात्रिपर्यायेषु समुच्चय एव । **संकर्ष.** ३।३।१६. * **चमसेषु** ग्रहेषु च सोमस्य शेषो भवति ' सोमस्याग्ने वीहि इत्यनुवषट्करोति ' इति चोदनया । **के.** * चमसेषु तावत् यद्यपि ब्राह्मणगतः प्रत्यक्षोपदेशो ( भक्षविषयः ) नोपलभ्यते , तथापि प्रैषगतया ( प्रैतु होतुश्चमसः० ) समाख्यया अनुमीयते । होतृचमसत्वविशिष्टं हि द्रव्यनयनप्रेषणं न कथञ्चित् उपपद्यते यदि तेषु होत्रादयः सोमं न चमन्ति......तस्मात् चमितव्यं होत्रादिभिः । **वा.** ३।५।७।२२.

**॥ चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वात् । ३।५।७।२२ ॥**

सिद्धान्तसूत्रम् । ज्योतिष्टोमे सोमशेषभक्षोऽस्ति इति पूर्वाधिकरणे साधितम् । अत्र तु चमसिनां सोमभक्षोऽस्ति न वा इति विचार्य अस्तीति साध्यते । चमसिनः नाम येषां चमसाः सन्ति, यैः चम्यन्ते भक्ष्यन्ते चमसनामकपात्रस्थाः सोमरसाः । ते च होता, ब्रह्मा, उद्गाता, यजमानः सदस्यः, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्रश्चेति (सत्याषाढः ८।६।४०) तेषां चमसिनां चमसेषु अस्ति भक्षः । समाख्यानात् होतृचमसः ब्रह्मचमसः उद्गातृचमसः इत्यादेः चमसानां नामधेयात् । नहि चमसभक्षणसंबन्धं विना चमसानां सासा समाख्या उपपद्यते । तदेतदुक्तं संयोगस्य चमसेषु होत्रादिसंबन्धस्य तन्निमित्तत्वात् भक्षनिमित्तकत्वात् इति । तस्मादस्ति चमसिनां भक्षः ।

**तस्माच्चाब्राह्मणस्य सोमं प्रतिषेधति । २३ ॥**

इदम् अधिकं सूत्रं सुबोधिनीवृत्तौ वर्तते । भाष्यादपि तत् सिध्येत् । 'चमसेषु समाख्यानात्' इति सूत्रे चमसिनामस्ति ज्योतिष्टोमे सोमशेषभक्ष इति सिद्धान्तितम् । तत्र हेत्वन्तरपरमिदं सूत्रम् । अब्राह्मणस्य ब्राह्मणभिन्नस्य राजन्यस्य वैश्यस्य वा सोमं सोमभक्षं प्रतिषेधति वचनम्, प्राप्तिपूर्वकश्च निषेधः । तेन ब्राह्मणस्य यजमानस्य अस्ति सोमभक्षः इति सिध्यति । यस्मात् ब्राह्मणस्य सोमभक्षोऽस्ति तस्मादेव अब्राह्मणस्य सोमं प्रतिषेधति । वचनं तु 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिमीराहृत्य, ताः संपिष्य, दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति । के.

**॥ चमसाधिकरणम् ।** चमसादिसंमार्गो नानुष्ठेयः ॥

**संस्काराद्वा गुणानामव्यवस्था स्यात् । ३।१।८।१६ ॥**

**भाष्यम्**—अस्ति ज्योतिष्टोमः । तत्र श्रूयते 'दशापवित्रेण ग्रहं संमार्ष्टि' इति । तत्र एषोऽर्थः अधिगतः 'सर्वे ग्रहाः संमार्जितव्याः' इति । इदमिदानीं संदिह्यते किं चमसा अपि संमार्ष्टव्याः, उत नेति । किं तावत् प्राप्तम् ? चमसाद्यपि सर्वे संमार्ज्यमिति । कुतः ? संयोगतोऽविशेषात् प्रकरणाविशेषाच्च इति । यथैव हि ग्रहाणाम् अपूर्वसंबन्धः, एवं चमसानामपि । यथैव च ग्रहा अस्मिन् प्रकरणे, एवं चमसा अपि । तस्मात् सर्वत्र संमार्गः । ननु ग्रहाः श्रूयन्ते, ते चमसानां निवर्तका भविष्यन्ति । उच्यते । प्रदर्शनार्थं ग्रहग्रहणं भविष्यति । ग्रहादि सोमपात्रम् । यस्मिन् गृह्यमाणः सोमो व्यवसिच्येत इत्येवमाशङ्क्यते, तत् सर्वं संमार्जितव्यम् । यथा 'भोजनकालो वर्तते स्थालानि संमृज्यन्ताम्' इत्युक्ते यानियानि भोजने उपयोगमर्हन्ति, तानितानि सर्वाणि संमृज्यन्ते; स्थालग्रहणं लक्षणाऽर्थमिति गम्यते, एवमिहापि द्रष्टव्यमिति । उच्यते । लोके अर्थलक्षणः संव्यवहारः येनयेनार्थः संमृष्टेन उक्तोऽनुक्तो वा, स संमृज्येतैव । इह तु वेदे शब्दलक्षणः । शब्दश्च ग्रहस्य संमार्गमाह । तत्र किमर्थं श्रुतौ संभवन्त्यां ग्रहशब्दो लक्षणया कल्प्यते । उच्यते । संमार्ष्टीति संमार्गे पुरुषप्रयत्नं विधातुमेष शब्दः शक्नोति श्रवणेनैव, ग्रहसंबन्धे तु वाक्येन । श्रुतिश्च वाक्याद्बलीयसी । तस्माल्लक्षणया ग्रहशब्दो वर्ण्यते, न यथाश्रुतः इति । तेन योयः संमार्जनसंस्कारार्हः, ससः संमार्जितव्यः । न ग्रहेष्वेव व्यवतिष्ठेत एवंजातीयको गुण इति ।

**वा**—एकत्ववदेव ग्रहत्वस्यापि प्रदर्शनार्थत्वात् चमसेष्वपि संमार्गः इत्युपन्यस्य प्रदर्शनार्थत्वे प्रमाणाभावात् वाक्येन च संबन्धोपादानात् ग्रहादवच्छिद्य श्रुत्या केवलसंमार्गविधानात् पूर्वपक्षः परिगृहीतः । इह तु अवघातादिवदेव भङ्गोद्धारौ (आक्षेपपरिहारौ 'विधीयतेऽवघातादिः श्रुत्या व्रीह्यादिसंगतः' इत्यादिवार्तिकोक्तप्रकारेण ३।१।४।७ पृ. ६६६) कर्तव्यौ । ननु एवं सति तेनैव गतत्वात् अधिकरणमेव नारब्धव्यम् । सत्यं नारभ्येत, यदि ग्रहाधिकरणेन अविवक्षाकालुष्यबुद्धिः न स्यात् । एवं तु एकत्वविवक्षासंत्रासितः सर्वमेव अविवक्षितं मन्यते । अथवा आग्नेयाद्यपूर्वाणां कर्मभेदात् भेदे सति युक्ता अवघातादीनां व्यवस्था । ज्योतिष्टोमकर्मणस्तु एकत्वात् एकापूर्वसाधनयोर्ग्रहचमसयोः धर्मसंकरः इत्यभिप्रायः । संस्काराद्वा इति च (सूत्रं) अपूर्वसाधनत्वप्रयुक्तत्वेन प्रतिप्रधानावृत्तिक्रियोपपादनार्थम् ।



**व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्, तस्य शब्दप्रमाणत्वात् । १७ ॥**

**भाष्यम्**—व्यवतिष्ठेत वा ग्रहेष्वेव संमार्गः, न चमसेष्वपि प्रसज्येतेति । कुतः ? अर्थस्य श्रुतिसंयोगात् । श्रूयमाणो हि ग्रहो नोत्स्रष्टव्यः । उत्सृज्यमाने श्रुतिरेव बाध्यते ग्रहमिति । प्रमत्तगीतं तत्रभवतामित्यवगम्यते । न चैतन्न्याय्यम् । तस्मात् ग्रहशब्देन ग्रहं लक्षयित्वा तस्य संमार्गसंबन्धो विधीयते । न च अविदधत् संमार्गं शक्नोति तत्संबन्धं विधातुम् । अतो विदधात्येवैष शब्दः संमार्गम् । न च श्रुतिर्बाधिष्यते । कुतः ? संमार्ष्टीति संमृजिगतं पुरुषप्रयत्नं श्रुत्या शक्नोति विधातुम् । न तत्र कश्चिद्विशेषः, उत्पाद्यमाने वा संमृजौ, परेण वा संबध्यमाने इति । तेन न ग्रहसंबन्धेऽपि श्रुतिर्बाधिता भवति । अतो ग्रहेष्वेव संमार्गो व्यवस्थातुमर्हतीति । ननु अपूर्वसंयोगाविशेषात् प्रकरणाविशेषाच्च चमसेष्वपि प्रसज्यते, न ग्रहेष्वेव अस्य विधानमित्युक्तम् । अत्रोच्यते । प्रकरणवद्भिः एकवाक्यतां कृत्वा शक्नोति तत्र विधातुम्, नाकृत्वा एकवाक्यताम् । सा च प्रकरणादनुमीयते । इयं पुनर्ग्रहशब्देन सह प्रत्यक्षा । तस्मान्न प्रकरणे विधानम् । ग्रहैकत्वसंबन्धे पुनः उत्सृज्य स्वार्थं न शक्नोति विधातुम् । तस्माद्वैषम्यं ग्रहैकत्वविधानेन । यदुक्तम्, 'यथा स्थालानि संमृज्यन्तामिति लक्षणा, तद्वदिहापीति' परिहृतमेतत् 'लोके कर्म अर्थलक्षणम्, शब्दलक्षणं पुनर्वेदे' इति ।

**वा**—यथास्थूलं तावदुत्तरम् । ग्रहासंबन्धे सति संमार्गविधानाभावात् अवश्यम्भावित्वाच्च संबन्धयन्तरस्य न केवलसंमार्गविधानम् । अथवा ग्रहशब्देन यदपूर्वं लक्षितम्, तत्प्रयुक्तत्वात् व्यवस्था । ननु 'अपूर्वसंयोगाविशेषात्' इत्येकापूर्वाभिप्रायम् । सत्यपि तु कर्मैकत्वे तदपूर्वाभेदे च ग्रहचमसाभ्यासानाम् अयुगपत्कालत्वात् स्वरूपसाहित्यमेकस्मिन् कर्मणि अपूर्वे वा न संभवति इत्यवश्यं प्रत्यभ्यासम् अवान्तरापूर्वभेदेन भवितव्यम् । विनाऽपि चाभ्यासेन यागस्वरूपसिद्धेरदृष्टार्थः एवाभ्यासः । ततश्च ग्रहशब्दोपस्थापितप्रत्यासन्नावान्तरापूर्वातिक्रमकारणाभावात् व्यवस्थासिद्धिः । अवघातादिवदेव 'फलं तु सह चेष्टया' (३।१।४।१०) इत्येषोऽर्थो योजयितव्यः । न चैकत्वविवक्षावत् ग्रहत्वविवक्षायां वाक्यभेदो भविष्यतीति पूर्वाधिकरणेन भ्रमितव्यम् ।

**शा**—संमार्गः चमसेष्वपि स्यात् इति प्राप्ते, अभिधीयते '**नहि ग्रहविवक्षायां वाक्यभेदः प्रसज्यते । यागैकत्वेऽप्यपूर्वाणि भिद्यन्तेऽभ्यासभेदतः ॥**' तस्मात् संमार्गो न चमसेषु कर्तव्यः ।

**सोम**—**सूत्रार्थस्तु**—गुणानां संमार्गादीनाम् अव्यवस्था चमसादिसाधारण्यं स्यात्, तेषां संस्कारत्वेन अपूर्वसाधननिवेशित्वेन चमसानामपि तत्साधनत्वाविशेषात् इति ।

**वि**—'चमसादि च संमृज्यान्नो वा, तस्यास्ति मार्जनम् । एकत्ववद् ग्रहत्वस्याप्यनादरणसंभवात् ॥, अबाधोऽत्रादरे हेतुर्वाक्यभेदस्तु नैव हि । चमसादौ न संमार्गः श्रुत्या तद्विषयार्पणात् ॥'

**भाट्ट**—एकत्ववत् ग्रहत्वस्याप्यविवक्षा लिङ्गादेव संमार्गस्य सोमावसेकनिर्हरणप्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्कार्यत्वावगतेः, उभयोरपि ग्रहचमसयोरेकज्योतिष्टोमापूर्वसाधनत्वेन यवेष्विव (ग्रहेष्विव) चमसेष्वपि संमार्गापत्तेश्च । इति प्राप्ते, ग्रहत्वविवक्षायां वाक्यभेदाद्यभावात् सत्यपि ज्योतिष्टोमैक्ये तत्तदभ्यासापूर्वाणां भेदात् 'पयसा मैत्रावरुणं श्रीणाति' इतिवत् ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु संमार्गः ।

**मण्डन**—'चमसानां न संमार्गः ।'

**शंकर**—'चमसेषु न संमृजिः ।'

* **चमसाधिकरणे** ग्रहेष्वेव संमार्गो न चमसेषु इत्युक्ते, तत्प्रसङ्गात् सतदशारत्निता षोडशिपात्रे निविशते यूपे वा इति चिन्तायाम् आनर्थक्याचदङ्गेषु इत्यनेन यूपनिवेशोऽभिहिते अभिक्रमणोपवीताधिकरणाभ्यां च अङ्गावतारविशेषे अभिहिते वारणाधिकरणापोदितस्य अङ्गावतारस्य अनुवाक्याधिकरणेन उज्जीवनात् वाक्यविरोधे क्रमस्य परिहृते मुष्टिकरणादेरपि अविरोधिना क्रमेण विनियोगमाशङ्क्य आनन्तर्यरूपक्रमस्य आनन्तर्याधिकरणेन अविनियोजकत्वोक्त्या चमसाधिकरणप्रसङ्गागतविचारेण समाप्तेः बुद्धिस्थचमसाधिकरणप्रसङ्गेन अस्य (चतुर्थाकरणाधिकरणस्य) संगतिः । सु. पृ. १०७२. * चमसाधि-

करणन्यायेन अर्थस्योद्दिश्यमानस्यापि ग्रहादेः प्रातिपदिकाभिहितस्य यथा विवक्षा, एवं तद्वाच्यस्य लिङ्गस्यापि। रत्न. ६।१।३।६. * चमसाधिकरणन्यायेन वपाऽभ्यासापूर्वसाधनत्वस्यैव लक्षणात् नाङ्गेषु पञ्चावदानप्रसक्तिः। (पञ्चावत्तैव वपा)। भाट्ट. १०।७।१८. * इष्टकासंस्काराणाम् इष्टकाकार्यार्थत्वेऽपि द्वारांशे नियमविधेरावश्यकतया **चमसाधिकरणन्यायेन** इष्टकात्वस्याविवक्षाभावात् दूर्वाघृतादिषु आकृतेरभावेन इष्टकात्वजातेरभावात् न तेषु इष्टकाधर्मा इति पूर्वपक्षः। **संकर्ष.** २।१।८.

**चमसाध्वर्यवः अध्वर्योरन्यत्र व्यापृतत्वे चमसहोमेषु कर्तारः ॥**

**चमसांश्चमसाध्वर्यवः, समाख्यानात्। ३।७।२२। ४६ ॥**

**भाष्यम्**— सन्ति चमसाध्वर्यवः। तेषु संदेहः किं चमसाध्वर्यवः चमसान् जुहुयुः, उत अध्वर्युरिति। चमसाध्वर्यवः इति ब्रूमः। कस्मात् ? चमसेषु आध्वर्यवं ते कुर्वन्ति इति चमसाध्वर्यवः; तस्मात् ते जुहुयुरिति।

**वा**— उन्नयनासादनहोमादि यावत्किञ्चित् अध्वर्योः चमसेषु प्राप्नोति, तत् सर्वं विशेषसमाख्यानात् चमसाध्वर्युभिः कर्तव्यम्।

**अध्वर्युर्वा, तन्न्यायत्वात्। ४७ ॥**

**भाष्यम्**— अध्वर्युर्वा जुहुयात्। एष हि न्यायः, यत् 'आध्वर्यवपदार्थम् अध्वर्युः कुर्यात्' आध्वर्यवश्च होमः। तस्मात् अध्वर्युर्जुहुयात्। ननु चमसाध्वर्यवः इति विशेषसमाख्यानात् चमसाध्वर्यवो होष्यन्तीति। नेत्युच्यते। चमसेषु एते अध्वर्युवत् भवन्ति इति चमसाध्वर्यवः। यदि तैः अध्वर्युर्जुहोति, ततः तैश्चमसाध्वर्युभिरपि होतव्यम्। यदि चमसाध्वर्यवो जुह्वति नाध्वर्युः, तदा ते न तद्वत् स्युः चमसाध्वर्यवः। तस्मात् न जुहुयुरिति।

**वा**— सा नाम विशेषसमाख्या सामान्यसमाख्यां बाधते, या तन्निरपेक्षा प्रवर्तते। चमसाध्वर्युसमाख्या तु चमसेष्वध्वर्युवत् वृत्तिं प्रतिपादयति। तद्यदि तावदध्वर्युर्नैव जुहुयात्, न तर्हि तान् जुह्वतस्ते चमसाध्वर्यवो भवन्ति। कामम् अजुह्वत एव तद्वद्भावं लभेरन् नान्यथा। यदि तु स जुहोति, ततः कदा चित्तस्य व्यापृतत्वेन अशक्तौ सत्यां ते जुह्वतः तद्वद्भवेयुः, तस्मात् जुहोत्यध्वर्युः।

**चमसे चान्यदर्शनात्। ४८ ॥**

**भाष्यम्**— चमसे चान्यं चमसाध्वर्योः दर्शयति। कथम् ? 'चमसान् चमसाध्वर्यवे प्रयच्छति, तान् स वषट्कर्त्रे हरति'। स हुत्वा चमसाध्वर्यवे प्रयच्छति इति गम्यते। एवं स वषट्कर्त्रे हरति भक्षयितुमिति गम्यते। तस्मात् हुतस्य चमसाध्वर्यवे प्रदानम्। यो जुहोति, स प्रयच्छति। तस्मात् अन्यो जुहोतीति। अपिच 'यो वा अध्वर्योः स्वं वेद, स्ववानेव भवति। स्रुग् वा अध्वर्योः स्वम्, वायव्यमस्य स्वम्, चमसोऽस्य स्वम्' इति। न तावत् अस्य चमसः स्वम्। यजमानस्य हि सः। 'चमसोऽस्य स्वम्' इति ब्रुवन् अध्वर्योः चमसेन होमं दर्शयति।

**वा**— वषट्कारिणं प्रति प्रयोजनान्तराभावात् भक्षार्थे नयने चमसाध्वर्युं नेतारं ब्रुवन् अहुतस्य भक्षणासंभवात् य एव जुहोति, स एव प्रयच्छति भक्षणार्थम्, तं च ग्रहीतृत्वेन चमसाध्वर्यूणां व्यापृतत्वात् तेभ्यः अन्यमध्वर्युं दर्शयति।

**अशक्तौ ते प्रतीयेरन्। ४९ ॥**

**भाष्यम्**— अथ कथं चमसाध्वर्यव इति समाख्यानम्। उच्यते। अशक्तौ ते प्रतीयेरन्। यदा व्यापृतत्वात् न शक्नोति अध्वर्युर्होतुम्, तदा समाख्यासामर्थ्यात् ते होष्यन्ति।

**वा**— (४७ सूत्रे एव 'कदाचित् तस्य' इति वार्तिकावयवेन अस्य सूत्रस्य व्याख्यातत्वात् पाठमात्रं कृतमत्र, इति **सुधा.**) **अशक्तौ ते प्रतीयेरन्।**

**शा**— आध्वर्यवसमाख्यां सामान्यभूतां बाधित्वा विशेषसमाख्यया चमसाध्वर्यव एव तैर्जुहुयुः। मैवम्, **'सामान्यनिरपेक्षो हि विशेषस्तस्य बाधकः। चमसाध्वर्युसंज्ञेयमध्वर्युप्राप्त्यपेक्षिणी ॥ चमसेऽध्वर्युवद्भावात् चमसाध्वर्यवो यतः। ततः साऽध्वर्य्वपेक्षत्वान्न तद्बाधेन वर्तते ॥'**

**सोम**— पूर्ववत् सामान्यसमाख्याबाधः इति प्रत्यवस्थानात् **संगतिः।**



**वि**— 'चमसैश्चमसाध्वर्युर्जुहोत्यध्वर्युरेव वा।, संज्ञाविशेषादाद्योऽस्तु, मैवमध्वर्युसंज्ञया ॥ विशेषस्यानपेक्षत्वात् तेनान्यस्या अपेक्षणात्। अध्वर्युर्जुहुयाच्छक्तेस्तदशक्तौ परोऽपि वा ॥'

**भाट्ट**—चमसे विशेषसमाख्यया चमसाध्वर्युरूपया तेषामेव होमादौ कर्तृत्वम्, समासान्तर्गताध्वर्युपदस्य रूढ्या शुद्धाध्वर्युपदवदेव वरणादिनिमित्तत्वाविशेषात्। इयांस्तु विशेषः, यत् तस्य सर्वकार्येषु विनियोगः, एतेषां तु चमसेष्वेव इति। यदि तु तत्तद्वरणानां भेदादनेकशक्तिकल्पने गौरवमाशङ्केत, ततोऽस्तु एषु अध्वर्युशब्दस्य गौणत्वम्। न च विनिगमनाविरहः, चमसाध्वर्युवरणवाक्ये रूढिकल्पने चमसाध्वर्युपदस्यैव तत्कल्पनाऽऽपत्तेः, अध्वर्युपदस्य ततो भिन्नस्य शक्त्यन्तरकल्पनाऽवश्यम्भावात्। अतो लाघवात् प्रचुरप्रयोगाच्च अध्वर्युपदस्यैव प्रसिद्धाध्वर्यौ एव शक्तिः, इतरेषु तु गौणी। तथापि तु ग्रहादौ तस्यापि होमादिकर्तृत्वात् होमकर्तृत्वसादृश्यमात्रेण एतेषु गौणत्वोपपत्तेः सामान्यसमाख्यां बाधित्वा चमसेषु एतेषामेव होमादिकर्तृत्वम्। इति प्राप्ते, गौणत्वस्य आवश्यकत्वे चमसवृत्तिहोमादिकर्तृत्वेनापि गौणत्वोपपत्तौ स्वोपजीव्यसामान्यसमाख्याबाधे प्रमाणाभावात् चमसेष्वपि अध्वर्युरेव होमादिकर्ता। तस्यान्यत्र व्यापृतत्वे तु गौणसमाख्यया चमसाध्वर्यवः। तेषामप्यसंभवे 'इतरमन्यः' इत्येवं प्रतिप्रस्थात्रादयः।

**मण्डन**—'अध्वर्योश्चमसाहुतिः।'

**शंकर**—'चमसेऽध्वर्युबाधो न।'

* **चमसाध्वर्यवः** इति समाख्या चमसेषु अध्वर्युवत् वृत्तिं प्रतिपादयति। **वा.** ३।७।२२।४७. * चमसाध्वर्यवः ऋत्विग्भ्योऽन्ये सन्ति। 'मध्यतःकारिणां चमसाध्वर्यवः' 'होत्रकाणां चमसाध्वर्यवः' इति षष्ठ्या भेदावगमात्। **वि.** ३।७।१०. * चमसाध्वर्यवः कदा चित् अध्वर्योर्व्यापृतत्वेनाशक्तौ सत्यां चमसैर्जुहुयुः। **भा.** ३।७।२२। ४६–४९.

**चमसाध्वर्यवश्च तैर्व्यपदेशात्। ३।७।१०।२५॥**

ज्योतिष्टोमे 'चमसाध्वर्यून् वृणीते' इत्युक्तम्। त एते चमसाध्वर्यवः पूर्वाधिकरणोक्तेषु षोडशस्वेव ऋत्विक्षु अन्यतमा भवेयुः, न तेभ्योऽन्ये इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमिदम्। चकारः 'भिन्नाः स्युः' इति साध्यस्य अनुकर्षणार्थः। चमसाध्वर्यवः ऋत्विग्भ्यो भिन्नाः स्युः। कुतः ? तैर्व्यपदेशात्, मध्यतःकारिभिः होत्रकैश्च व्यपदेशात्, 'मध्यतःकारिणां चमसाध्वर्यवः, होत्रकाणां चमसाध्वर्यवः' इति। किञ्च वरणाख्यकर्त्रुत्पत्तिभेदस्य कर्तृभेदहेतुत्वेन पूर्वाधिकरणोक्तस्य अनुकर्षणार्थोऽपि सूत्रे चकारः। तथा च 'चमसाध्वर्यून् वृणीते' इति उत्पत्तिवाक्ये एव चमसाध्वर्यूणां भेदेन उक्तेरपि ते ऋत्विग्भ्यो भिन्नाः। **के.**

* चमसाध्वर्यवः दशसंख्याकाः कर्तव्याः चमसानां दशत्वात्। **वि.** ३।७।१०. * चमसाध्वर्यवः बहवः एव। न तु एको द्वौ वा अनियमो वा। **भा.** ३।७।११।२६. * चमसाध्वर्यवः यजमानेन तुल्यकल्पाः। **वा.** ३।७।१८। ३८. * चमसाध्वर्यवः यद्यपि यजमानेन व्रियन्ते, तथापि ऋत्विगाज्ञाकरत्वेन व्रियमाणत्वात् भवत्येव तदीयत्वव्यपदेशः 'मध्यतःकारिणां चमसाध्वर्यवः, होत्रकाणां चमसाध्वर्यवः' इति। **के.**

**चमसाध्वर्युदशत्वन्यायः ॥**

**दशत्वं लिङ्गदर्शनात्। ३।७।१२।२७ ॥**

**भाष्यम्**— ज्योतिष्टोमे सन्ति चमसाध्वर्यवः। ते च बहव इत्युक्तम्। कियन्तो बहव इति संदेहे त्रयः, बहुवचनसामर्थ्यात्। इति प्राप्ते, ब्रूमः। दशत्वं लिङ्गदर्शनात्। ते दश भवेयुः। तथाहि लिङ्गं ज्योतिष्टोमविकारे दशपेये श्रूयते 'दश चमसाध्वर्यवो दशदश एकैकं चमसमुपसर्पन्ति' एतस्मात् कारणात् दशपेयो भवति इति ब्रुवन् दश चमसाध्वर्यून् दर्शयति। यदि त्रयो भवेयुः, एतद्दर्शनं नोपपद्येत। तस्मात् त्रीनतीत्य एषा संख्या। यदि च दश न भवेयुः, नोपपद्येत एतद्दर्शनम्। तस्मात् भवन्ति दश। दश चैषां स्वामिनः। तस्मात् प्रयोजनभावात् दशसंख्या उपादीयते। तस्यां चोपादीयमानायाम् अपराऽपि संख्या अनुगृह्यते। तेनापि दश भवेयुः।

**वा**— बहुत्वनियमे 'प्रथमं वा नियम्येत' (११।१।८।४३) इति त्रित्वे प्राप्ते दशपेये ज्योतिष्टोमविकारे

दशत्वानुवादात् प्रकृतौ च दश म्रियन्ते इति विज्ञायते । स्वामिदशत्वात् चमसदशत्वाच्च दशत्वप्राप्तिः ।

**सोम**— पूर्वत्रैव विशेषविचारात् **संगतिः** । **सूत्रार्थस्तु**— दशपेये ज्योतिष्टोमविकृतिभूते 'दशदश एकैकं चमसमनु प्रसर्पन्ति' इति विधिशेषे दशदश चमसाध्वर्यवः इति दशत्वानुवादात् लिङ्गात् प्रकृतौ दशत्वं स्यादिति ।

**वि**— 'नेयत्ताऽस्त्यस्ति वा तेषाम्, न नियामकवर्जनात् ।, चमसानां दशत्वेन चमसाध्वर्यवो दश ॥'

**भाट्ट**— ते च दश एकादश वा, न तु त्रयः, चमसानां तावत्त्वात् । अत एव मध्यतःकारिणां होत्रादीनां चतुर्णां होत्रकाणां च मैत्रावरुणादीनां षण्णां चमसाध्वर्यव इति व्यपदेशोऽपि संगच्छते । सदस्यपक्षे तच्चमसे एकादशः । एवं च दशपेये क्रतौ सिद्धवत् 'दश चमसाध्वर्यवः' इत्यनुवादोऽपि सदस्याभावपक्षे संगच्छते । त्रित्वपक्षे न कथञ्चिदस्योपपत्तिः ।

**मण्डन**— 'दश ते लिङ्गदर्शनात् ।'

**शंकर**— 'तत्रापि दश ते मताः ।'

**♅ चमसाध्वर्युपृथक्त्वन्यायः** । चमसाध्वर्यवः ऋत्विग्भ्योऽन्ये ॥

**चमसाध्वर्यवश्च, तैर्व्यपदेशात्** । ३।७।१०।२५॥

**भाष्यम्**—सन्ति ज्योतिष्टोमे चमसाध्वर्यवः 'चमसाध्वर्यून् वृणीते' इति । तेषु संदेहः किं एषामन्यतमाः, उत एतेभ्यः अन्ये इति । किं तावत् प्राप्तम् ? एतावतां संकीर्तनात् एषामेव (षोडशानामृत्विजाम्) अन्यतमाः । **इति प्राप्ते, ब्रूमः** । चमसाध्वर्यवश्च अपरे भवेयुः तेभ्योऽन्ये इति । कुतः ? तैर्व्यपदेशात्, तैः परिगणितैः एषां व्यपदेशो भवति । मध्यतःकारिणां (ब्रह्म-यजमान-होतृ-उद्गातॄणाम्) चमसाध्वर्यवः, होत्रकाणाम् (मैत्रावरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अच्छावाक-आग्नीध्राणाम्) चमसाध्वर्यवः इति । ननु ये एव प्रकृताः, ते चमसाध्वर्यवो भवेयुः । नेति ब्रूमः । कुतः ? तैर्व्यपदेशात् मध्यतःकारिणां चमसाध्वर्यवः, होत्रकाणां चमसाध्वर्यवः इति । षष्ठी संबन्धे सति भवति । ऋत्विग्भिस्ते व्यपदिश्यन्ते । ऋत्विजस्तेषां स्वामिनः, न यजमानः । यजमानपुरुषेभ्यश्च एते अन्ये इति नः प्रतिज्ञातम् । न यजमानेन चमसाध्वर्युत्वं कर्तुं वरीतव्याः, ऋत्विग्भिस्ते वरीतव्या इति । अपिच एषामुत्पत्तिवाक्ये एव भेदः 'चमसाध्वर्यून् वृणीते' इति ।

**वा**—अध्वर्यव इति समाख्यानात् तेषां चमससंबन्धात् अध्वर्युपुरुषा एव चमसाध्वर्यवः । **इति प्राप्ते, अभिधीयते** । पृथक्त्वनियतत्वात् व्यपदेशानां सर्वैश्च इतरैस्तुल्यवत् पृथक्त्वेन व्यपदेशात् उत्पत्तौ च वरणान्तराम्नानात् पूर्ववदेव भेदः । यद्यपि च यजमानेन म्रियन्ते, तथापि तदाज्ञाकरत्वेन म्रियमाणत्वात् भवत्येव तदीयत्वव्यपदेशः ।

**शा**— अध्वर्युपुरुषा एव चमसाध्वर्यवः । इति प्राप्ते, ब्रूमः । '**संज्ञा नामास्तु योगेन, वरणं तु पृथक्पृथक् । तत् तेष्वसंभवात् तेषां तेभ्यो भेदं करिष्यति** ॥' एतेन सदस्यो व्याख्यातः, तस्यापि वरणसमाम्नानात् ।

**सोम**—पूर्ववत् संज्ञया भेदो न संभवति इति शङ्कानिराकरणार्थत्वात् न गतार्थत्वम् । ब्रह्मातिरिक्तः सदस्यो नास्तीति प्राभाकरमतं न युक्तम् । **सूत्रार्थस्तु**—चमसाध्वर्यवश्च भिन्नाः, तैः ऋत्विग्भिः सह 'मध्यतःकारिणां चमसाध्वर्यवः', 'होत्रकाणां चमसाध्वर्यवः' इति भेदव्यपदेशात् इति ।

**वि**— 'चमसाध्वर्यवो नान्य ऋत्विग्भ्योऽन्येऽथवा, ऽग्रिमः । यौगिक्या संज्ञया, मैवं षष्ठ्या तेभ्यो विभेदनात् ॥' मध्यतःकारिणः अध्वर्युहोत्रादयः । होत्रकाः प्रतिप्रस्थातृमैत्रावरुणादयः ।

**भाट्ट**— अध्वर्य्वादिसंज्ञानां रूढत्वादस्तु भेदकत्वम् । चमसाध्वर्युसंज्ञायास्तु चमसेषु अध्वर्युरित्येवं यौगिकत्वादध्वर्युपुरुषादय एव एते । **इति प्राप्ते**, सत्यपि संज्ञाया यौगिकत्वे 'चमसाध्वर्यून् वृणीते' इति पृथग्वरणाम्नानात् वरीतव्यानां चमसाध्वर्यूणां पूर्ववदेवान्यत्वम् । एवं 'सदस्यं वृणीते' इति वचनात् सदस्यस्यापि । एवं च 'मध्यतःकारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यवः' इति ऋत्विक्संबन्धव्यपदेशोऽपि भेदे एवोपपद्यते ।

**मण्डन**— 'चमसाध्वर्यवः पृथक् ।'

**शंकर**— 'चमसाध्वर्यवस्तथा ।' भिन्नाः ।



**♅ चमसाध्वर्युबहुत्वन्यायः** ॥

**उत्पत्तौ तु बहुश्रुतेः** ।३।७।११।२६ ॥

**भाष्यम्**—तेष्वेव (चमसाध्वर्युष्वेव) संदेहः किमनियमः एको द्वौ बहवो वा, उत बहवः एवेति । अनियमः इति प्राप्ते, उच्यते बहवः इति । कुतः ? उत्पत्तौ बहुश्रुतेः । 'चमसाध्वर्यवः' इति एषामुत्पत्तौ बहुश्रुतिर्भवति । तस्मात् बहव इति ।

**वा**— **उत्पत्तौ तु बहुश्रुतेः** । (भाष्यस्य स्पष्टत्वात् सूत्रपाठमात्रं कृतम्) ।

**सोम**— प्रासङ्गिकी **संगतिः** । **सूत्रार्थस्तु** 'चमसाध्वर्यून् वृणीते' इति उत्पत्तौ बहुत्वश्रुतेः बहव एव चमसाध्वर्यवः इति ।

**वि**— 'तान् वृणीतेति बहुता नास्ति वाऽस्ति, ग्रहैक्यवत् । नेति चे, न्नात्र वैषम्यादुत्पत्तौ बहुताश्रुतेः ॥'

**भाट्ट**— ते चमसाध्वर्यवो वरणवाक्ये बहुत्वश्रुतेर्बहवः । यद्यपि तत्रोद्देश्यविशेषणत्वात् बहुत्वाविवक्षा, तथापि 'स्वाध्यायोऽध्येतव्यः' इतिवत् संस्कारविध्यन्यथाऽनुपपत्त्या विनियोगकल्पनदशायां तद्विवक्षोपपत्तिः । अनयैव दिशा 'पुरोहितं वृणीते' 'अध्वर्युं वृणीते' इत्यादावपि एकत्वविवक्षा द्रष्टव्या । वस्तुतस्तु तत्रतत्र विनियोगेऽपि 'चमसाध्वर्यवश्चमसाननुन्नयन्ति' 'अध्वर्युः पुरो विभजते' इत्यादौ बहुत्वैकत्वश्रुतेः तद्विवक्षोपपत्तिः ।

**मण्डन**— 'बहवस्ते बहुश्रुत्या ।'

**शंकर**— 'बहुश्रुतेस्तेऽपि नाना ।'

* **चमसाध्वर्युबहुत्वन्यायेन** उपादीयमानस्याध्वर्योः एकत्वं विवक्षितम् । शा. ५।१।११ वर्णकं ३.

* ('यस्योभावग्नी अनुगतौ अभिनिम्लोचेत्') आहवनीयाग्न्युद्देश्यस्वरूपस्य प्रागविज्ञातत्वे अविज्ञातोद्देश्यगतसंख्यासाहित्ययोः **चमसाध्वर्युबहुत्वन्यायेन** विवक्षितत्वात् नैकाग्न्युत्पादनसामर्थ्यम् । **सोम**. ६।४।८, * **चमसाध्वर्युबहुत्वन्यायस्वरूपम्** "चमसाध्वर्यून् वृणीते' इत्यत्र चमसाध्वर्यूणां क्रतुसंबन्धस्य प्रागसिद्धतया चमसाध्वर्यूद्देशेन वरणमात्रविधानानुपपत्त्या चमसाध्वर्यून् नाम कर्तॄन् क्रत्वर्थतया उपाददीत" इति । अनेनैव वाक्येन चमसाध्वर्यूणामुत्पाद्यत्वात् उत्पत्तौ श्रूयमाणं बहुत्वम् उपादेयगतत्वात् विवक्षितम् इति । ५।१।११.

* **चमसादौ** दशापवित्रैः संमार्गो नास्ति प्रमाणाभावात् । ग्रहेष्वेव हि संमार्गो विहितः । **वि**. ३।१।८, * **चमसेडादिभक्षाः** सत्रेष्वपि सन्त्येव, तेषां प्रतिपत्तिरूपत्वात् । १०।२।९.

* **चमसिनः** होतृब्रह्मादयः । **वि**. ३।५।९, * **चमसिषु** समाख्या भक्षहेतुः । ३।५।१२, * **चमसित्वं** न भक्षणे कारणम्, ग्रावस्तुतोऽपि (हारियोजने) भक्षणसत्त्वात् । ३।५।९. * **चमसिसमाख्या** वषट्कारश्च भक्षकारणम् । **भा**. ३।५।१०।३१.

**♅ चम्पकपटन्यायः** । यथा दूरीकृतेष्वपि पटनिष्ठचम्पकपुष्पेषु पटे उपलभ्यमानो गन्धो निराश्रयगुणावस्थायोगात् स्वाश्रयं द्रव्यं कल्पयति, तथा प्रकृतेऽपि । **साहस्री**. २८६.

* **चयने** 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति । अथैतद्रुपदधाति' । अत्र अदृष्टमात्रार्थत्वात् सकृदेवावघातः । **वि**. ११।१।६. * चयने लोकम्पृणायाः मन्त्रस्यावृत्तिः, मन्त्रार्थस्य नानात्वात् । **भा**. ११।४।१२।४२. * चयने श्रूयते 'यज्ञायज्ञीयं पुच्छे गायति' इति । तत्र यथाम्नातमेव गिरापदयुक्तं प्रयोक्तव्यम् । यत्र हि अग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते, तत्रैव क्लृप्तप्रकारेण इरापदेन गिरापदं बाध्यते । तत्रैव तस्य प्रकृतौ उपदेशात् नान्यत्र प्राप्तिरिति । **टुप्**. ९।१।१७।५३.

* **चयनविषयकं सर्वम्** अग्निचयनशब्दे द्रष्टव्यम् । **के**.

* **चरकशाखासु** आध्वर्यवं बहु, वाजसनेयिशाखायाम् अल्पम् । **वा**. १।३।८।२७ पृ. २८६.

* **चरणं** शाखा । चरणान्तरं शाखान्तरम् । 'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥' इति 'जातेरस्त्रीविषयात्' (पा०४।१।६३) इति सूत्रभाष्ये उक्तत्वात् । **के**.

* **चरन्ति** इति च प्रयोग उच्यते । **भा**. ११।२।८।३२.

* 'चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये' अयं स्मार्तः कल्पः विधौ । बाल. पृ. ४०.

* चरुः अनवस्रावितान्तरूष्मपक्वः जीवतण्डुलः विशदसिद्धः ओदनः इति याज्ञिकाः । निघण्टुकाराः 'उखा स्थाली चरुः' इति पर्यायानुपदिशन्ति 'हव्यपाके चरुः पुमान्' इति च । वि. १०।१।१०, * चरुः ओदनत्वात् उदकगतोष्मणा पक्तव्यः । १०।१।११. * चरुः ( ओदनस्य पाकोपयुक्तं पात्रम्, स्थाली ) मृन्मयः । भा. १०।१।१०।४१.

卐 **चरुर्हविर्विकारः स्यादिज्यासंयोगात्** । १०।१।१०।३६ ॥

'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति चरुः श्रुतः । स किं कपालविकारो हविर्विकारो वा हविर्विकारत्वेऽपि किं स्थालीविकारः ओदनविकारो वा इति विचारे सिद्धान्तमाह । चरुः हविर्विकारः स्यात्, न कपालविकारः । इज्यासंयोगात् सौर्यम् इति तद्धितेन चरोरिज्याऽर्थत्वं गम्यते तस्मात् चरुः हविः ।

**प्रसिद्धग्रहणत्वाच्च** । ३७ ॥

'सौर्यं चरुं निर्वपेत्' इति चरुशब्दः स्थालीवाचकः स्यात् प्रसिद्धं ग्रहणं यस्य तादृशत्वात् । स्थाल्यां चरुशब्दः आ च हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः । तस्मात् चरुः स्थाली इति पूर्वः पक्षः ।

**ओदनो वाऽदनीयसंयोगात्** । ३८ ॥

'सौर्यं चरुं निर्वपेत्' इति चरुः ओदनः स्यात्, न स्थाली । अदनीयेन अत्तुं योग्येन संयोगात् । अदनीयेन द्रव्येण देवतायागमाचरन्ति शिष्टाः । स्थाली च नात्तुं योग्या । वाशब्दः स्थालीपक्षव्यावृत्त्यर्थः । तस्मात् चरुर्नाम ओदनः इति सिद्धान्तः ।

**न द्व्यर्थत्वात्** । ३९ ॥

'सौर्यं चरुं निर्वपेत्' इति चरुशब्दः न ओदनवाचकः । स्थाल्यां स प्रसिद्धः । अन्यथा द्व्यर्थत्वं तस्य स्यात् । न च एकस्य पदस्य द्वावर्थौ युक्तौ ग्रहीतुम् । तथा च द्व्यर्थत्वप्रसङ्गात् चरुः स्थाली एव । इति पूर्वः पक्षः ।

**कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम्** । ४० ॥

'सौर्यं चरुं निर्वपेत्' इति चरुः हविर्विकारः कपालविकारो वा इति विशये संशये कपालविकारः स्यात् । अर्थोपपत्तिभ्याम् अर्थात् उपपत्तेश्च । प्रदेयत्वाभावेऽपि स्थाल्यां चरुशब्दार्थे 'सौर्यम्' इति तद्धितार्थस्य संभवात् । स्थाल्यां श्रपितस्य प्रदेयहविष्ट्वेन यागकल्पनाया अपि उपपत्तेश्च । तस्मात् चरुः कपालविकारः चरुशब्दार्थश्च स्थाली । इति पूर्वपक्षः ।

**गुणमुख्यविशेषाच्च** । ४१ ॥

'सौर्यं चरुं निर्वपेत्' इति चरुशब्देन प्रदेयार्थत्वेन विधौ चोदकप्राप्तः मुख्यः पुरोडाशो बाध्येत । श्रपणार्थत्वेन विधौ तु पुरोडाशस्य गुणभूतानि कपालानि बाध्येरन् । प्रसङ्गे गुणो बाधनीयः न मुख्यम् इति गुणमुख्ययोर्विशेषस्य सत्त्वात् चरुशब्देन स्थाली श्रपणार्थत्वेन विधीयते इति युक्तम् । तस्मात् चरुशब्दार्थः स्थाली कपालविकारः इति पूर्वपक्षः ।

**तच्छ्रुतौ चान्यहविष्ट्वात्** । ४२ ॥

तच्छ्रुतौ तस्य चरुशब्दस्य श्रुतौ श्रवणेऽपि अन्यस्यैव द्रव्यस्य क्व चित् हविष्ट्वं दृश्यते । यथा 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलम्' इति विधाय 'चत्वारि-चत्वारि कृष्णलान्यवद्यति' इत्युक्तम् । अत्र चरुशब्दे श्रुतेऽपि कृष्णलानामेव हविष्ट्वं प्रसिद्धम् । एवं प्रकृतेऽपि 'सौर्यं चरुं निर्वपेत्' इत्यत्रापि चरुः स्थाली स्यात् स्थाल्यां च शृतं हविः स्यात् । तस्मात् चरुशब्दार्थः स्थाली, सा च कपालविकारः ।

**लिङ्गदर्शनाच्च** । ४३ ॥

'मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रैयङ्गवं ग्रामकामः' इति वाक्ये चरुशब्दार्थः स्थाली तथा प्रियङ्गवः हविः इति अन्यश्चरुः अन्यत् हविः, तच्च चरौ नाम स्थाल्यां निष्पादितः स्यात् । इदं लिङ्गं हविरन्यत्वे दृश्यते । तथा 'सौर्यं चरुं निर्वपेत्' इत्यत्रापि स्यात् । तस्मात् चरुशब्दार्थः स्थाली । सा च कपालविकारः ।

**ओदनो वा प्रयुक्तत्वात्** । ४४ ॥

'सौर्यं चरुं निर्वपेत्' इत्यत्र चरुः ओदन एव स्यात्, न स्थाली । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । चरुशब्दस्य



ओदनेऽर्थे आ हिमवत आ च कुमारीभ्यः प्रयुक्तत्वात् । अनवस्रावितान्तरूष्मपक्वो विशदसिद्ध ओदनश्चरुः । तस्मात् ओदने चरुशब्दः । हविर्विकारो न कपालविकारः । न चात्र स्थाली चरुशब्दार्थः । इति सिद्धान्तः ।

**अपूर्वव्यपदेशाच्च** । ४५ ॥

'पुरोडाशेन वै देवा अस्मिन् लोके आर्ध्नुवन्, चरुणा अमुष्मिन् लोके' इति चरोः ओदनस्य अपूर्वत्वेन व्यपदेशो भवति । पुरोडाशेन ऋद्धिर्भवति चरुणा तु परलोकेऽपि ऋद्धिः इति चरुः श्रेष्ठः इत्युच्यते । पुरोडाशस्थाने यश्चरुः, स ओदन एव स्यात् न स्थाली । तस्मात् चरुर्नाम ओदन एव हविर्विकारः इति सिद्धान्तः ।

**तथा च लिङ्गदर्शनम्** । ४६ ॥

'आदित्यः प्रायणीयश्चरुः आदित्य उदयनीयः' इति विधाय 'अदितिमोदनेन' इत्युक्तम् । तथा च इदं लिङ्गदर्शनम् चरुर्नाम ओदन एवेत्यत्र । तस्मात् सौर्यश्चरुः ओदन एव हविर्विकारः, न कपालविकारः, न चरुः स्थाली अत्र । इति सिद्धान्तः । के.

* चरूणां सर्वेषामेकः, पुरोडाशानामेकः इति द्वावेव राशी युगपत् कर्तव्यौ यत्र चरवः पुरोडाशाश्च व्यतिषक्ताः । तत्र च 'इदममुष्य, इदममुष्य' इत्यादिरीत्या देवतानिर्देशः समुच्चित्य कार्यः । संकर्ष. १।३।२३. * चरौ एतावन्तो धर्माः:- स्थालीसादनम्, प्रोक्षणम्, 'आ देवयजं वह' इति अङ्गारनिरूहणम्, 'ध्रुवाऽसि' इत्यूहेन स्थाल्यधिश्रयणम्, तस्यां लौकिकं जलं तप्तं कृत्वा 'घर्माः स्थ' इत्यूहेन तण्डुलप्रक्षेपः, पर्यग्निकरणम्, 'अग्ने हव्यं रक्षस्व' इति प्रैषः, 'आप्यायताम्' इति अभिघारणम्, 'शृत उत् स्नाति' इति उद्वासनम्, 'आर्द्रः प्रथस्नुः' इति पुनरभिघारणम् इत्यादयः प्रत्येतव्याः । बाध्यास्तु- प्रणीताः, पेषणम्, स्थाल्या उपरि अङ्गारस्थापनम्, कपालयोगजपः, संवापः, संयवनम्, पिण्डीकरणम्, प्रथनम्, त्वक्करणम्, हविषि अङ्गारभस्माध्यारोपः, आज्यनिनयनम्, सदनकरणम्, भस्माद्युद्धारः, न्युद्धरणं तस्य प्रकृतौ आर्थिकत्वात्, 'यस्त आत्मा' इत्यधस्तात् प्रत्यञ्जनम् इत्यादयः । अत्र सर्वत्र अर्थलोपः बुद्ध्या अनुसंधेयः । भाट्ट १०।१।१०. * चरौ एव विनियोगः पेषणस्य पौष्णस्य । वि. ३।३।१९. * चरौ कृष्णलानाम् अवघातबाधः । भा. १०।१।११।१-३ वर्णकं २, * चरौ कृष्णलानाम् आग्नेयधर्मातिदेशः । ८।१।१८।३५-३९, * चरौ कृष्णलानां युगपदुपहृतानां सर्वभक्षाणां ब्रह्मणा स्वस्वकाले भक्षणम् । १०।२।६।२०, * चरौ घृतपके सौमारौद्रे शुक्लव्रीहिभिः प्राकृतयवानां बाधः । १०।७।१९।६४-७१, * चरौ नैर्ऋतादौ विहितकृष्णादिव्रीहिभिः प्राकृतयवबाधः । १०।७।१९।६४-७१, * चरौ मौद्गे प्राकृतबर्हिःस्तरणमन्त्रे हरितपदस्थाने रक्तपदोहः । ९।३।२।३, * चरौ राजसूये 'नैर्ऋतं चरुं नखावपूतानाम्' इत्यत्र नखेषु उलूखलमुसलधर्मः प्रोक्षणं भवति । ९।२।१२।४०, * चरौ वाजपेयगतसप्तदशशरावे मुष्टिलोपेन चतुःसंख्याऽनुग्रहः । १०।२।२८।६४-६७, * चरौ शतकृष्णले उपस्तरणाभिघारणयोर्बाधः । १०।२।२।३-१२, * चरौ शत० चतुर्धाकरणादीनां नानुष्ठानम् । १०।२।७।२१, * चरौ शत० पाकानुष्ठानम् उष्णीकरणात्मकम् । १०।२।१।१-२, * चरौ शत० ब्रह्मभक्षाणां युगपत्परिहारः । १०।२।४।१७, * चरौ शत० भक्षणं चुच्छुषाकारेण कर्तव्यम् । १०।२।३।१३-१६, * चरौ शत० सर्वभक्षाणां पुरुषान्तरेभ्योऽपनीय ब्रह्मणे परिहारः । १०।२।५।१८-१९, * चरौ सौर्ये अवज्वलनबाधः । १०।१।१९।५७, * चरौ सौर्ये आग्नेयधर्मस्यैवातिदेशः । ८।१।१६।२७-३१, * चरौ सौर्ये कपालोपधानबाधः । १०।१।१६।५४, * चरौ सौर्ये निर्वापमन्त्रे सूर्यपदस्योहः । ९।३।१।१-८, * चरौ सौर्ये पेषणस्य बाधः । १०।१।१२।४९-५०, * चरौ सौर्ये प्रथनश्लक्ष्णीकरणयोर्बाधः । १०।१।१७।५५, * चरौ सौर्ये भस्माङ्गाराध्यारोपबाधः । १०।१।१८।५६, * चरौ सौर्ये न्युद्धरणस्य बाधः । १०।१।२०।५८, * चरौ सौर्ये संतापनस्य बाधः । १०।१।१५।५३, * चरौ सौर्ये संयवनस्य बाधः । १०।१।१३।५१, * चरौ सौर्ये संवपनस्य बाधः । १०।१।१४।५२, * चरौ सौर्ये स्थाल्यामेव पाकः । १०।१।११।४५-४८.

* **चरु-अधिकरणम्** । वा. १।३।४।९ पृ. २२१.

🕉 चरूपधानाधिकरणम् । अग्निचयने नैवारचरुः उपधानार्थः ॥

**संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ।** २।३।७।१८ ॥

**भाष्यम्—** अस्ति अग्निः । तत्र 'नैवारश्चरुर्भवति' इत्युक्त्वा 'यदेनं चरुमुपदधाति' इति समामनन्ति । तत्र संदिह्यते किं चरुः यागार्थः यागं कृत्वा अवशिष्ट उपधातव्यः, उत उपधानार्थ एवेति । यागार्थ इति ब्रूमः । चरोर्हि प्रसिद्धं कार्यं यागः, नोपधानम् । उच्यते । यद्यपि यागार्थता चरोः प्रसिद्धा, तथापि देवतावचनसंबन्धाभावात् यजतिशब्दासंबन्धाच्च न यागार्थता इति गम्यते । तदुच्यते । तस्यैव वाक्यशेषे श्रूयते 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति, तेन देवतावचनेन संनिहितेन एकवाक्यता भविष्यति इति बृहस्पतिदेवताक उपधातव्यः इति । तस्मात् यागार्थश्चरुः इत्येवं प्राप्तम् । एवं प्राप्ते, ब्रूमः । संयुक्तस्तु अर्थशब्देन कार्यशब्देन उपदधाति इति, तदर्थ एव स्यात् उपधानार्थः । उपदधातिना च अस्य प्रत्यक्षमेकवाक्यत्वम् । परोक्षं देवतावचनेन अनुमेयम् । 'चरुमुपदधाति' इति हि प्रत्यक्षं वाक्यम् । बार्हस्पत्यमुपदधाति इत्यानुमानिकम् । तस्मात् कृत्स्नः चरुः उपधातव्यः । ततश्च किञ्चिदिज्यायां विनियुज्येत, तत् अन्यत्र श्रुतम् अन्यत्र कृतं भवेत् । यत्तु बार्हस्पत्या नीवारा इति, अर्थवादः स इति । यत्तूक्तं प्रसिद्धा चरोर्यागार्थता इति, प्रसिद्धिर्वाक्येन बाध्यते । तस्मात् उपधानार्थ इति सिद्धम् ।

**वा—** पूर्वम् आलम्भस्य प्रत्युदाहरणम् । इदं तु चरुद्वारेण निर्वापस्य । देवताशङ्का चात्र अभ्यन्तरे अधिका इति आरम्भः । तत्र औत्पत्तिकमेव चरुपुरोडाशादीनां यागाङ्गत्वम् । सर्वथा च एतस्य आत्मीयत्वपरित्यागः कर्तव्यः । 'चरुमुपदधाति' इति च द्वितीयानिर्देशात् उपधानं प्रतिपत्तिः । न च अन्यत्र अनुपयुक्तस्य प्रतिपत्तिर्युक्ता । इति आकाङ्क्षिते योग्यत्वात् यागोपयोगित्वमेव विज्ञायते । वाक्यशेषे च बृहस्पतिः श्रूयमाणो यदि विध्युद्देशेन न संबध्यते, आनर्थक्यमेव स्यात् । तस्मात् आग्नेयप्रकृतिकं बार्हस्पत्यचरुयागं निर्वर्त्य शेषकार्यान्तराणि अकृत्वा उपधातव्यश्चरुः, इत्येवं प्राप्तम् । एवं प्राप्ते, ब्रूमः । '**चर्वादीनां स्वभावेन नैदमर्थ्यमवस्थितम् । यथाप्रमाणमेवैषां विनियोगोऽवगम्यते ॥**' 'नैवारश्चरुर्भवति' इति हि उत्पन्नमात्रस्यैव प्रयोजनापेक्षायां सत्यां यागाङ्गभूताग्निधारणार्थस्थलनिर्वृत्तिशेषत्वेन प्रत्यक्षविधानं दृश्यते 'यदेनं चरुमुपदधाति' इति । तथा निराकाङ्क्षस्य च चरोः श्रुतेनापि कार्यान्तरेण संबन्धो न स्यात्, किमुत अश्रुतेनैव यागेन । न चेयं प्रतिपत्तिः इति, प्रथमं प्रयोजनवत्त्वानवगमात् । अर्थकर्मण्यपि च उपधानं प्रति प्राधान्यमस्ति, तेन असंस्कृतस्थलं न निर्वर्तयति इति द्वितीयानिर्देशाविरोधः । '**त्रेधा च देवतायोगश्चरोरस्यानुमानिकः । नीवारस्थार्थवादस्थतद्धितादिविवर्जनात् ॥**' नीवारसंबद्धः सन् बृहस्पतिः चरौ अनुमातव्यः । तथा वाक्यशेषस्थो विध्युद्देशम् अनाकाङ्क्षितदेवतासंबन्धं नेतव्यः । तद्धितचतुर्थीमन्त्रवर्णादिभिश्च विना कथमपि देवतात्वं कल्पनीयम् । यागाद्यनुमानक्लेशश्च स्थित एव । तस्मात् उपधानार्थत्वमेव युक्तमिति ।

येषां च 'बार्हस्पत्यो भवति' इति चरुसमानाधिकरणेन तद्धितेन वाक्यशेषे देवताश्रवणम्, तेषामपि प्रथममुपधानार्थत्वे विध्युद्देशात् सिद्धे अनाकाङ्क्षितत्वात् देवता विधातुमशक्या इति वर्तमानापदेशानुरोधेन यादृशं वयमस्य बार्हस्पत्यत्वं वर्तमानं पश्यामः तादृशमेवैतत् प्रशंसाऽर्थं कीर्तितमित्यवगमात्, य एव शाखाऽन्तरीयस्य वचनस्य 'बृहस्पतेर्वा एतदन्नम्' इत्येतस्यार्थः, स एव 'बार्हस्पत्यो भवति' इत्यस्यापि तैत्तिरीयवचनस्य निश्चीयते । तस्माद्देशोऽपि न यजिमद्वचनः इति यावदुक्तत्वसिद्धिः ।

**सोम—** पूर्ववैषम्येण प्रत्युदाहरणात् **संगतिः** । **सूत्रार्थस्तु—** चरुः अर्थशब्देन कार्यशब्देन उपदधातिना संयुक्तस्तदर्थ एव, न तु यागार्थः, श्रुतिसंयोगात् । उपधानार्थत्वं च उपधानसंस्कारार्थस्यापि चरोः आर्थिकसाधनत्वाभिप्रायेण बोध्यम् ।

**वि—** 'चरुर्भवति नैवार उपधत्ते चरुं त्विति । यागः स्यादुपधानं वा, यागः शेषोक्तदैवतः ॥, यागत्वा-



निश्चये शेषो नापेक्ष्योऽतो यजिः कुतः । किन्तूपधानमात्रत्वं यावदुक्तं चरौ स्थितम् ॥'

**भाट्ट—** अग्नौ श्रूयते 'चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति । अत्र यजमानस्य अन्नं बृहस्पतेः कथं स्यात्, यदि न बृहस्पतिर्देवता, इति अर्थात् बृहस्पतेर्देवतात्वावगतेः, तैत्तिरीयशाखायाम् 'बार्हस्पत्यो भवति' इति तद्धितपदयुक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासंबन्धानुमितयागविधानमेवेदम् । तस्य च औषधद्रव्यकत्वेन आग्नेयातिदेशतः स्विष्टकृदादिप्रतिपत्तिप्राप्तौ 'चरुमुपदधाति' इत्यनेन उपधानं प्रतिपत्तित्वेन विधीयते । इति प्राप्ते, यद्यपि तैत्तिरीयशाखायां तद्धितश्रवणं तथापि विध्यभावात्, विधन्तरैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः । 'चरुमुपदधाति' इत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतया उपधानविधानात् देवताऽनाकाङ्क्षतया नार्थवादोन्नीतस्यापि देवताविधेः कल्पनम् । अत एव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवाररूपस्य विधिकल्पनम् । अतश्च बृहस्पतेः ब्राह्मणस्यान्नं नीवारः इत्येवं स्तुत्युपपत्तेः न 'बृहस्पतेर्वै' इत्ययं देवताकल्पनद्वारा यागकल्पकः इति सिद्धम् ।

**मण्डन—** 'चरूपधाने न यजिः ।'

**शंकर—** 'चरूपधानेऽप्येवं स्यात् ।' एवं यज्यभावः ।

* **चरूपधानाधिकरणम्** । अर्थवादस्थबृहस्पतेः अन्यपरत्वासंभवात् आर्थवादिकदेवताकल्पनाऽवश्यम्भावेन यागकल्पनोपपत्तेर्युक्ता भेदकता ( इति न्यायशरीरं स्यात् ) । कौ. २।३।७।१८.

* **चरुत्वं** नाम अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वम् । अत्र भक्तव्यावृत्त्यै अनवस्रावितेति । मण्डकव्यावृत्त्यै अन्तरिति । सूपशाकादिव्यावृत्त्यै तण्डुलेति । भाट्ट. ३।३।१४.

चरु– ( बार्हस्पत्य )– **धर्माः** पूर्वमनुष्ठेया अन्तरङ्गत्वात्, ततः सारस्वताज्यधर्माः । अध्वरकल्पायां प्रथमभाविनः आग्नेयस्य विकृतिर्बार्हस्पत्यश्चरुः, पश्चाद्भाविनश्चोपांशुयाजस्य विकृतिः सारस्वतमाज्यम् । वि. ५।१।१०.

* **चरुपुरोडाशाधिकरणन्यायः** ( संकर्ष. १।३।२१ ) । न्यायस्तु 'विभागमन्त्रस्य व्रीहिनिर्वापादितण्डुलीकरणान्तक्रियासमनन्तरं करणेऽपि प्राकृतत्वानपायात् तदङ्गमन्त्राणां च प्रधानानुसारित्वात् तत्रैव प्रवृत्तिः न प्रदानकाले' इति । * बहुपुरोडाशानामेक एव पिण्डो यत्र विहितः, तत्र प्रदानकाले हविर्विभागस्यावश्यकत्वात् **चरुपुरोडाशाधिकरणन्यायेन** ( संकर्ष. १।३।२१ ) प्रदानकाले एव विभागमन्त्रः प्रयोक्तव्यः इति पूर्वपक्षः । **संकर्ष.** १।३।२४.

* **चरुपुरोडाशादीनां** यागाङ्गत्वम् औत्पत्तिकमेव इति के चित् । 'चर्वादीनां स्वभावेन नैवमर्थ्यमवस्थितम् । यथाप्रमाणमेवैषां विनियोगोऽवगम्यते ॥' वा. २।३।७।१८.

🕉 **चरुपुरोडाशोभयसत्त्वे राशिद्वये देवतानिर्देशः समुच्चित्य कार्यः ॥**

तेष्वेव देवतानिर्देशो न कार्यः, अव्यतिषक्तेषु तेष्वनध्यवसानाभावात् । व्यतिषक्तेषु तु क्रमविरोधापत्तेः । इति प्राप्ते, चोदकप्राप्तस्य बाधे मानाभावात् 'इदममुष्यामुष्य च' इत्यादिरीत्या समुच्चित्य देवतानिर्देशः कर्तव्य एव । तदभावे कस्य राशेरधिवापः कार्य इति संदेहापत्तेः तत्रानुष्ठाने क्रमस्यानङ्गत्वात् । **संकर्ष.** १।३।२३.

🕉 **चरुपुरोडाशोभयसत्त्वे हविषामवहननाद्यर्थं राशिद्वयं कार्यम् ॥**

यत्र चरवः पुरोडाशाश्च व्यतिषक्तास्तत्र क्रमानुग्रहाय एकैकशो विभागः कर्तव्यः । इति प्राप्ते, चरूणां सर्वेषामेकः, पुरोडाशानामेकः इति द्वावेव राशी युगपत् कर्तव्यौ तन्त्रभावे क्रमविपर्यासाभावात् । **संकर्ष.** १।३।२२.

* **चरुशब्दः** औषधस्य वक्ता । भा. ८।१।१८।३८, * चरुशब्दः पिष्टसिद्धेऽपि प्रयुज्यते पिष्टकचरुः साध्यते इति । ३।३।१४।३८, * **चरुशब्दं** विशदसिद्धे ओदने उपचरन्ति । पिष्यमाणो हि पिष्टकं यवागूर्वा स्यात् खलिर्वा । ३।३।१४।३७. * लौकिकाः आ हिमवतः आ च कुमारीभ्यः सर्वेऽपि स्वस्वदेशीयभाषाप्रसिद्ध्या यत्किञ्चित् गकारवकाराद्यक्षरम् उपरि प्रक्षिप्य ( चरुगी–चरुव–चर्वी ) **चरुशब्दम्** अल्पे पात्रे पाकाधिकरणे ताम्रादिमये

प्रयुञ्जते। एवं चरुः स्थाली। तथापि 'सौर्यं चरुं निर्वपेत्' इत्यादौ अनवस्रावितान्तरूष्मपक्वे जीवतण्डुले विशदसिद्धे ओदने चरुशब्दो ज्ञेयः। वि. १०।१।१०.

**चरुशब्दवाच्येनौदनेन सौर्ययागे प्राकृतहविषो बाधः ॥**

**चरुर्हविर्विकारः स्यादिज्यासंयोगात्। १०।१।१०।३६ ॥**

**भाष्यम्**— चरुः श्रूयते। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति। सौर्यः आग्नेयविकारः इत्येतत् समधिगतम्। 'ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि' इति। तत्रैषोऽर्थः सांशयिकः किं चरुः कपालविकारः, हविर्विकार इति। यदा हविर्विकारः तदा किं स्थाल्या हविर्विक्रियते, उत ओदनेनेति। किं तावत् प्राप्तम्? हविर्विकारः स्यादिति। कुतः? इज्यासंयोगात्। तद्धितार्थो विधीयते चरोः, सौर्यं चरुं निर्वपेदिति। एवमिज्यार्थश्चरुः। तस्माद्धविर्विकार इति।

**टुप्**— (सिद्धान्तमाह–) चरुशब्दस्य उभयत्र प्रयोगः (अस्ति लोके स्थाल्यामोदने च) न च प्रयोगमात्रेण शब्दार्थो भवति। कथं खलु नियमः? उच्यते। प्रयोगतोऽज्ञानात् स्मृतेः (एव) नियमः। ओदने च चरुशब्दस्मरणम्, न स्थाल्याम्। (तस्मात् ओदनेन पुरोडाशस्य बाधः)।

**प्रसिद्धग्रहणत्वाच्च। ३७ ॥**

**भाष्यम्**— एवं स्थिते विशेषः उच्यते हविर्विकारः। प्रसिद्धग्रहणत्वाच्च। स्थाल्या हविर्विकारः क्रियते। प्रसिद्धस्य ग्रहणं न्याय्यम्। प्रसिद्धश्च स्थाल्यां चरुशब्दः, आ हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः। तस्मात् स्थाल्या हविर्विक्रियते इति।

**ओदनो वाऽदनीयसंयोगात्। ३८ ॥**

**भाष्यम्**— ओदनेऽपि चरुशब्दः प्रयुज्यते। तत्रौदनस्यैव ग्रहणं न्याय्यम्, न स्थाल्याः। कुतः? अदनीयसंयोगात्। अदनीयेन हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, नानदनीयेन। तत्रभवतामाचारात्तेषां स्मृतिरनुमीयते। स्मृतेः श्रुतिः। तस्मादोदनेन हविर्विक्रियते इति।

**न, द्व्यर्थत्वात्। ३९ ॥**

**भाष्यम्**— न ओदनस्य वाचकश्चरुशब्दः। कुतः? द्व्यर्थः एवं स भवेत्। स्थाल्यां हि स प्रसिद्धः समधिगतः। तस्मादोदने लक्षणाशब्दः तत्संयोगादित्येवं मन्तव्यम्। अन्यायो हि एवंजातीयकेषु अनेकार्थभावः। तस्मात् स्थाल्या हविर्विक्रियते इति। यदुक्तम्, अदनीयेन शिष्टा देवतायागमाचरन्तीति ध्रुवमेषां स्मृतिरिति। उच्यते। अनुमानमेतत् प्रत्यक्षेण वचनेन बाध्यते। वचनादवगम्यते स्थाल्या यागः कर्तव्य इति। कथम्? तस्यां हि चरुशब्दः प्रसिद्धः। नासौ आचारानुरोधेन लक्षणाशब्दः कल्पनीयः। कल्प्यमाने वा आचारेण शब्दो बाध्येत। न चैतत् न्याय्यम्। शब्दानुरोधेन हि व्यामोहादाचार इति कल्पयितुं न्याय्यम्। यथा 'शूलैश्च मासरेण चावभृथमभ्यवयन्ति' इति 'प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति च।

**कपालविकारो वा, विशयेऽर्थोपपत्तिभ्याम्। ४० ॥**

**भाष्यम्**— हविर्विकारपक्षो न सिध्यति। स्थाल्या विकारे स्मृतिहेतुः आचारात् श्रुतिराशङ्क्यते। ओदनेन विकारे स्थालीसंयोगात् लक्षणाशब्द आशङ्क्यः। अस्ति चान्या गतिः कपालविकारो भवेदिति। तस्मात् वाशब्देन पक्षं व्यावर्त्य कपालविकारश्चरुरिति ब्रूमः। कपालविकारोऽपि अर्थः सूर्यस्य। तेन सौर्य इति शक्यते व्यपदेष्टुम्। उपपत्तिश्चास्ति। शक्यते स्थाल्यां श्रपयितुम्। तस्माद्धविर्विकारपक्षे संशये कपालविकारः आश्रयणीयः।

**गुणमुख्यविशेषाच्च। ४१ ॥**

**भाष्यम्**— अस्ति च गुणमुख्ययोर्विशेषः। गुणो बाधितव्यो न्याय्यः, न मुख्यः। तदुक्तम्, अङ्गगुणविरोधे च तादर्थ्यादिति।

**तच्छ्रुतौ चान्यहविष्ट्वात्। ४२ ॥**

**भाष्यम्**— चरुश्रुतौ च अन्यद्धविर्दर्शयति। 'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति। शतकृष्णलानि हविः। चरुरेषां संबन्धी। 'चत्वारिचत्वारि कृष्णलान्यवद्यति' इति कृष्णलानां हविष्ट्वम्।



**लिङ्गदर्शनाच्च। ४३ ॥**

**भाष्यम्**— एवं हि आह 'मारुतं चरुं निर्वपेत् पृश्नीनां (श्वेतानां गवां) दुग्धे प्रैयङ्गवं ग्रामकामः' इति। मृन्मयो हि चरुः न प्रियङ्गुविकारः। तस्मात् अन्यत् हविः। चरुरपि कपालविकारः इति।

**ओदनो वा प्रयुक्तत्वात्। ४४ ॥**

**भाष्यम्**—हविर्विकार एवात्र चरुः तद्धितसंयोगादवगम्यते। सौर्यश्चरुः कर्तव्यः इति। यदि पुरोडाश उत्सृज्येत, चरुः उत्स्रष्टव्यः अवगम्यमानो बाध्येत। सूर्यसंबद्धो हि चरुः कर्तव्यः। तस्मिन् अशक्ये सौर्यसंबद्धः क्रियेत, न शक्ये। यदा च हविर्विक्रियते तदा ओदनेन। ओदने हि चरुशब्दः प्रसिद्धः आ हिमवतः आ च कुमारीभ्यः। तत्र अदनीयसंयोगो युक्तो भविष्यति।

यत्तु, द्व्यर्थत्वमन्याय्यमिति। अन्याय्यमेव द्व्यर्थत्वम्। तत्र कुत एतत् स्थालीसंयोगेन ओदने भविष्यतीति, न पुनरोदनसंयोगात् स्थाल्यां स्यात्। स्मरन्ति च पाके चरुशब्दम्। अनवस्रावितान्तरूष्मपक्वो विशदसिद्ध ओदनश्चरुरिति। तदुक्तम्, 'न पक्तिनामत्वात्' इति। आचाराच्च स्मृतिर्बलीयसी। तस्मादोदने चरुशब्दः। ओदनेन हविर्विक्रियते इति। तत्रायमप्यर्थः अदनीयेन यागो भविष्यतीति। अपिच सूर्यस्य अन्यत् द्रव्यं नैवास्ति, येन चरुः संबध्येत। चोदकप्राप्तः पुरोडाश इति चेत्, नैतदेवम्। कर्मचोदनायां हि निष्पन्नायां चोदको भवति। प्राक् चरुशब्दवचनान्न यजतिचोदना। द्रव्यदेवतासंबन्धो हि यज्यर्थः। तेन चोदनाविधिशेषः चरुशब्दः न पुरोडाशविशेषणं भवति, जघन्यत्वात् चोदकस्येति।

**अपूर्वव्यपदेशाच्च। ४५ ॥**

**भाष्यम्**— इतश्च पश्यामः ओदनेन हविर्विक्रियते इति। कुतः? अपूर्वव्यपदेशो भवति। एवं हि आह 'पुरोडाशेन वै देवा अस्मिन् लोके आर्ध्नुवन्, चरुणाऽमुष्मिन् लोके' इति। पुरोडाशेन आर्ध्नोति, चरुणा अमुष्मिन् इति। यदि स्थाल्यां चरुशब्दः, कपालविकारश्चरुः। ततो यस्मिन्नेव पक्षे पुरोडाशः, तस्मिन्नेव पक्षे चरुः। पुरोडाशेन वै देवाः अस्मिन् लोके आर्ध्नुवन् इति, चरुणा अमुष्मिन् लोके इति गम्यते। तत्र चरुणा अमुष्मिन् इति अन्यवत् व्यपदेशो नावकल्पते। तस्मादपि ओदनेन हविर्विक्रियते इति।

**तथा च लिङ्गदर्शनम्। ४६ ॥**

**भाष्यम्**— एवं च कृत्वा लिङ्गदर्शनमपि उपपन्नं भविष्यति। कथम्? 'आदित्यः प्रायणीयश्चरुः, आदित्य उदयनीयः' इति। तत्रैतच्छ्रूयते। 'आज्यस्यैव चरुमभिपूर्य चतुर आज्यभागान् यजति। पथ्यां स्वस्तिमिष्ट्वा अग्नीषोमौ यजति। अग्नीषोमाविष्ट्वा सवितारं यजति। अदितिमोदनेन' इति। चतुर्षु आज्यभागेषु विधिः। अदितेः आदित्यश्चरुरिति प्राप्तत्वादनुवादः। तत्र चरुमोदनशब्देन ब्रुवन् ओदनेन हविर्विक्रियते इति दर्शयति। तथा इदमपरं लिङ्गं भवति 'यदि तण्डुलो विद्यते, आमं तद्धविः स्यात्' इति तण्डुले हविःशब्दं ब्रुवन् ओदनेन हविर्विक्रियते इति दर्शयति।

**सोम**— पूर्वत्र दृष्टार्थवत्त्वाय संनिपातित्ववत् इह दृष्टद्वारा सूर्यसंबन्धनिर्वाहाय हविराधारतया कपालविकारत्वमेव वक्तव्यमित्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— देवतासंबन्धावगतयागसंबन्धात् चरुः हविर्विकारः इति।

**वि**—'सौर्ये चरौ चरुः स्थाली किंवाऽन्नम्, लौकिकोक्तितः। स्थाल्यस्यां श्रपणं योग्यं कपाल–(ला इति पाठः) विकृतित्वतः ॥, विद्वच्छ्रुतिप्रसिद्ध्याऽन्नं देवतातद्धितोक्तितः। योग्यत्वेन प्रदेयं तत् पुरोडाशहविर्यथा ॥'

**भाट्ट**— अत्र त्रिवृच्चर्वश्वबालाधिकरणे (१।३।४।९ वा. पृ. २२१–२२४) चरुशब्दस्यौदनवाचित्वम्, वाक्यशेषात्, न तु लोकप्रसिद्ध्या स्थालीवाचकत्वम्, लोकप्रसिद्धेर्लाक्षणिकत्वेनाप्युपपत्तेः इत्यस्यार्थस्य विचारितस्य प्रयोजनं बाधोपयोगितया कथ्यते। स्थालीवाचित्वे हि 'सौर्यं चरुम्' इत्यादौ स्थाल्या अनदनीयत्वात् हविष्ट्वानुपपत्तेः संबन्धसामान्ये तद्धितमङ्गीकृत्य स्थाली सूर्यदेवत्यहविःपाकसाधनत्वेन विधीयते। ततश्च कपालस्य बाधः। वस्तुतस्तु तदाऽपि आग्नेयविकारत्वे एव प्रमाणाभावात् सांनाय्यविकारत्वे च स्थाल्याः प्राप्तत्वेनाविधेयत्वात्

संबन्धसामान्ये तद्धिताङ्गीकारे प्रमाणाभावाच्च कृष्णलवत् स्थाली हविष्ट्वेनैव विधीयते। अतश्च प्राकृतस्य हविष एव वा बाधः। ओदनवाचित्वे तु तस्य हविष्ट्वेनैव योग्यत्वात् पुरोडाशस्य बाधः। तत्रापि चरुशब्दस्य याज्ञिकप्रसिद्धया अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकौदनवाचित्वस्य तृतीये स्थापितत्वात्तस्य च स्थालीमन्तरेण एकस्मिन्नपि कपाले पाकानुपपत्तेः कपालस्य तद्गताष्टत्वादेश्चार्थलोपाद्बाधः। अत एव स्थाल्याश्चरुपाकान्यथाऽनुपपत्त्यैव अर्थप्राप्तत्वेन कपालस्थानापन्नत्वाभावात् न कपालधर्मा आसादनप्रोक्षणादयस्तत्र कार्याः। एवं चरौ संयवनाभावात् तदर्थाः प्रणीतास्तद्धर्माश्च न भवन्तीत्युक्तमेव। एवं पेषणस्यापि पुरोडाशसिद्ध्यर्थत्वेन चरुसिद्धेः तद्व्यतिरेकेणापि जायमानत्वात् चरौ पेषणस्य बाधः। एवमुपधानादीनां कपालधर्माणामपि। वस्तुतस्तु 'कपालान्युपदधाति' इत्यत्र कपालत्वस्य व्रीहित्ववदविवक्षितत्वात्, हविःपाकाधिकरणत्वस्य च स्थाल्यामपि सत्त्वात्, हविःपाकसाधनीभूतगार्हपत्यादेरिव उपधानस्यापि याज्ञिकाचारसिद्धस्य प्राप्तिरविरुद्धा। अत एव तत्र न कपालविशेषत्वस्यापि व्रीहित्वादिवदेव विवक्षा। एवम् 'पात्राण्यासादयति' इत्यादावपि पात्रत्वस्याविवक्षितत्वात् तत्साधनताऽऽश्रयत्वस्यैव विवक्षितत्वेन स्थाल्यामपि तद्धर्मप्राप्तिरविरुद्धा। अतश्च चरौ एतावन्तो धर्माः स्थालीसादनम्, प्रोक्षणम्, 'आदेवयजं वह' इति अङ्गारनिरूहणम्, 'ध्रुवाऽसि' इत्यूहेन स्थाल्यधिश्रयणम्, तस्यां लौकिकजलं तप्तं कृत्वा 'घर्माः स्थ' इत्यूहेन तण्डुलप्रक्षेपः, पर्यग्निकरणम् 'अग्ने हव्यं रक्षस्व' इति प्रैषः, 'आप्यायताम्' इत्यभिघारणम्, 'शृत उत्स्नाति' इत्युद्वासनम्, 'आर्द्रः प्रथस्नुः' इति पुनरभिघारणमित्यादयः प्रत्येतव्याः। बाध्यास्तु प्रणीताः, पेषणम्, स्थाल्या उपरि अङ्गारस्थापनम्, कपालयोगजपः, संवापः, संयवनम्, पिण्डीकरणम्, प्रथनम्, त्वक्करणम्, हविष्यङ्गारभस्माद्यारोपः, आप्यनिनयनम्, सदनकरणम्, भस्माद्युद्धारः, व्युद्धरणं तस्य प्रकृतौ आर्थिकत्वात्, 'यस्त आत्मा' इत्यधस्तात् प्रत्यञ्जनमित्यादयः। अत्र सर्वत्रार्थलोपो बुद्ध्याऽनुसंधेयः।

मण्डन— 'सौर्ये हविः स्याच्चरुरोदनस्तु।' १२.
शंकर–– 'सौर्ये चरुरिहौदनः।' १२.

* **चरुसंज्ञकः** पाकः स्थाल्यां निर्वर्त्यते, न कटाहे न कपाले। **भा.** १०।१।११।४८.

**चर्मतन्तौ महिषीं हन्तीति न्यायः।** सप्तमीह निमित्ते। निमित्तं च फलम्। तथा च चर्मतन्त्वर्थमित्यर्थः। अयं न्यायः 'योऽल्पस्य हेतोर्बहु हातुमिच्छति' तत्र विषये प्रवर्तते इति। तथा चोक्तं रघुवंशे 'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्वम्' इति। **साहस्री.** ८९.

**चलं गुणवृत्तम् इति न्यायः।** अयं नीलकण्ठीयभगवद्गीताटीकायाम् (४।१८) उक्तः। तथाहि— कर्मणीति। कर्मणि कर्माकर्मविकर्मात्मके देहेन्द्रियादिव्यापारे अविद्यया प्रत्यगात्मन्यारोपिते सति तत्र अकर्म कर्माभावं नौस्थेन तीरतरौ चलने आरोपिते सति तत्त्वबुद्ध्या तत्र चलनाभावमिव यः पश्येत्, तथा चलं गुणवृत्तमिति न्यायेन त्रिगुणात्मकेषु इत्याद्युक्तम्। विस्तरस्तु तत्रैवेति। **साहस्री.** ९१३.

* **चलति** इति प्रत्ययः कथम्? उच्यते। देशान्तरे संप्रतिपत्तिदर्शनात्। तद्देशान्तरं गच्छदागच्छच्च चलतीत्युच्यते। तत्र गन्ताऽपि प्रत्यक्षो देशान्तरमपि, तेन गत इति चोच्यते, आगत इति चोच्यते। **भा.** ६।३।३।१२. * **चलतिगच्छत्योः** एकार्थत्वेऽपि सकर्मकाकर्मकत्वे। **मणि.** पृ. ५४. * **चाक्षुषादिसामग्री** मानसे ज्ञाने प्रतिबन्धिका शाब्दसामग्र्या च प्रतिबध्या। पृ. ६३, * **चाक्षुषत्वमानसत्वयोर्विरोधेन** वह्न्यंशे मानसत्वमपास्तम्। पृ. ३०.

* **चाण्डालादिस्पर्शनाश्या** प्रतिष्ठादिजन्या पाषाणनिष्ठा पूजाहेतुः आधेयशक्तिः आवश्यकी। **मणि.** पृ.४४. * **चाण्डालयाजनम्** अनाचारः विश्वामित्रस्य। **वा.** १।३।३।७ पृ. २०३.

* **चातकयोः** पिपासाकालः प्रावृडिव लक्ष्यते। (वस्तुतस्तु प्रावृषि श्रूयमाणस्तस्य विशिष्टः शब्दः प्रियाऽऽराधनाय इति वस्तुस्थितिः। पुंचातकस्य च स शब्दः। प्रावृडेव हि चातकानां ऋतुकालः। के.) सोम.



**चातकजीमूतन्यायः।** जीमूतो मेघः। यत्राभीष्टसिद्धौ सत्यां बहुकालिक्यपि तत्तृष्णोपशाम्यति, तत्रास्य प्रवृत्तिरिति। 'शमयति जलधरधारा चातकयूनां तृषां चिरोपगताम्। क्षपयति च वधूलोचनजलधारा कामिनां प्रवासरुचिम्॥' इति। 'सर्वसहापतितमम्बु न चातकानाम्' इत्यादि। **साहस्री.** ४२०.

* **चातुःस्वर्यवान्** ऋङ्मन्त्रो यथा 'अग्निमीळे पुरोहितम्' इत्यादिः। 'ळे, तं' इत्येतयोः प्रचयत्वात्। **बाल.** पृ. ६०, * चातुःस्वर्यवान् यजुर्मन्त्रो यथा 'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' इति। आद्ययकारस्य प्रचयत्वात्। पृ. ६०.

* **चातुर्थिकन्यायेन** (४।४।१२।३९–४१) ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसंबन्धः, अन्येषां तु (इष्टिपशुहोमानाम्) तदङ्गत्वम्। **भाट्ट.** २।२।१. * तत्तद्वाक्येनैव तत्तद्धात्वर्थविशिष्टभावनाविधानमङ्गीकृत्य फलवाक्ये लाघवात् फलसंबन्धमात्रविधानम्। तदपि च ज्योतिष्टोमपदानुरोधात् **चातुर्थिकन्यायेन** सोमद्रव्यकयागस्यैव। **कौ.** २।२।१।१ पृ. १४१. * सिद्धान्ते तु विद्यमानशेषत्वात् चातुर्थिकन्यायेन प्रतिपत्तिकर्मत्वात् सर्वेभ्यः स्विष्टकृत्करणम्। **भाट्ट.** ३।४।१९.

* **चातुर्मास्यानि।** आदौ अन्वारम्भणीया, वैश्वानरो द्वादशकपालः, पार्जन्यश्चरुः। अथ **वैश्वदेवं पर्व** 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम् (एतानि पञ्च संचराणि नाम), मारुतं सप्तकपालम्, वैश्वदेवीमामिक्षाम्, द्यावापृथिव्यमेककपालम्' इति। **अथ वरुणप्रघासाः**– पञ्च संचराणि, ऐन्द्राग्नमेकादशकपालम्, मारुती मेषी, वारुणो मेषः, कायमेककपालम्। अवभृथः। इति। **अथ साकमेधाः**– अग्नयेऽनीकवते पुरोडाशमष्टाकपालं साकं सूर्येणोद्यता, मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुम्, सायं हुतेऽग्निहोत्रे गृहमेधीयम्। श्वोभूते मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं साकं सूर्येणोद्यता, महाहविर्भिर्यजते, पञ्च संचराणि, ऐन्द्राग्नमेकादशकपालम्, ऐन्द्रं चरुम्, वैश्वकर्मणमेककपालम् (निर्वपेत् इति सर्वत्र अन्वयः), महापितृयज्ञेन यजते (तत्र सोमाय पितृमते, पितृभ्यो बर्हिषद्भ्यः, पितृभ्योऽग्निष्वात्तेभ्यः इति), रौद्राः त्र्यम्बकाः प्रतिपूरुषं एकाधिकाः। **अथ शुनासीरीयः**— पञ्च संचराणि, ऐन्द्राग्नं द्वादशकपालम्, वैश्वदेवं चरुम्, इन्द्राय शुनासीराय द्वादशकपालम्, वायव्यं पयः, सौर्यमेककपालम्, वायव्या यवागूः इति। चातुर्मास्यानि पाशुकानि च भवन्ति, तत्र इष्टिस्थाने पशवः। सौमिकेषु तु चातुर्मास्येषु इष्टिस्थाने सोमयागा भवन्ति। **के.** * '**चातुर्मास्यैः** स्वर्गकामो यजेत' एकत्वात् फलस्य एकः प्रयोगः। **भा.** ११।२।३।१२.

**चातुर्मास्यानां पशुकामप्रयोगे सहस्रपशुप्राप्तिपर्यन्तं वैश्वदेवमेव अभ्यस्य स्वस्वकाले वरुणप्रघासादीनि पर्वाणि अनुतिष्ठेत्॥**

तत्रैव पशुकामप्रयोगेन वरुणप्रघासैरित्यादिना पर्वत्रयनिषेधाः श्रूयन्ते। न स्वातन्त्र्येण फलार्थतया तैर्यजेत, किं त्वङ्गत्वेनेति तदर्थः, अन्यथा प्रतिषेधे विकल्पस्य पर्युदासे वाक्यवैयर्थ्यस्यापातात्। तेनाङ्गानां प्रधानसमकालत्वात् वसन्ते एव इतराणि पर्वाणि कुर्यात्। इति प्राप्ते, तत्तत्कालेष्वपि वैश्वदेवस्याभ्यासविधानार्थाः प्रतिषेधवादाः। आ पशुलाभादभ्यस्य पश्चाद्यथाकालं तैरपि यजेत। 'यदा सहस्रं पशूनाप्नुयादथ वरुणप्रघासैर्यजेत' इत्यादिश्रुतेः। **संकर्ष.** ३।१।२४.

* चातुर्मास्यानां पाञ्चसांवत्सरिकः प्रयोगः। तत्र त्रीन् इष्ट्वा चतुर्थमुत्सृजेत्, द्वौ परौ इष्ट्वा तृतीयमुत्सृजेत्, एष वै त्रयोदशो मासः तमतियजते इत्युक्तम्। **संकर्ष.** ३।१।१८. * चातुर्मास्यानां प्रथमोत्तमयोः पर्वणोः उत्तरवेदिः पर्युदस्यते। **वा.** ७।३।८।२१ पृ. १५५९. * 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः'। अध्वर्युः, प्रतिप्रस्थाता, होता, ब्रह्मा, आग्नीध्रश्चेति। **वि.** ११।२।१०. * 'चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः' इति कर्तॄणां नियमविधिः, नानुवादः। **भा.** ४।२।९।२३–२४. * चातुर्मास्यानां यथा पाञ्चसांवत्सरिकः पक्षः, तथा यावज्जीवपक्षोऽप्यस्ति। **संकर्ष.** ३।१।२०.

**☒ चातुर्मास्येषु अग्निप्रणयनं मध्यमयोरेव द्वयोः पर्वणोः ॥**

**प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् । ७।३।९।२४ ॥**

**भाष्यम्**— 'द्वयोः प्रणयन्ति' इति श्रूयते । तत्र संदेहः कतरयोर्द्वयोरिति । **अनियमे प्राप्ते, उच्यते ।** प्रथमोत्तमयोः प्रणयनम् ! कुतः ? उत्तरवेदिप्रतिषेधात् । तत्र उत्तरवेदिः प्रतिषिध्यते 'न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति । अस्मिन् प्रणयने उत्तरवेद्याम् अग्निनिधानं विहितम् । अतो यत्र प्रणयनं तत्र उत्तरवेदिप्राप्तिः । प्राप्तौ च सत्यां प्रतिषेधः । प्रथमोत्तमयोश्चासौ । तस्मात्तयोः प्रणयनमिति ।

**मध्यमयोर्वा गत्यर्थवादात् । २५ ॥**

**भाष्यम्**— मध्यमयोर्वा पर्वणोः प्रणयनम् । कुतः ? गत्यर्थवादात् । गत्यर्थवादेन एतत् द्वयोः प्रणयनमुच्यते 'तस्मात् द्वाभ्यामेति' इति । ऊरुसंस्तुते चैते पर्वणी 'ऊरू वा एतौ यज्ञस्य, यद्वरुणप्रघासाः साकमेधाश्चेति'। ऊरू च गमनसाधने । तत्रैवं स्तुतिसंबन्धो विज्ञायते । ऊरू यज्ञस्य वरुणप्रघासाश्च साकमेधाश्चेति । तयोर्द्वयोः प्रणयन्ति । तस्मात् द्वाभ्यामूरुभ्यां यज्ञः समाप्तिं याति । प्रणयनेन हि तौ बलवन्तौ भवतः, अङ्गभूयस्त्वादिति । एतत्तत् अर्थवादस्य प्रयोजनम् ।

**औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः । २६ ॥**

**भाष्यम्**— अथ यदुक्तम् 'उत्तरवेदिप्रतिषेधात्' इति, तत्र ब्रूमः । अनारभ्य कं चित् पर्वविशेषं चातुर्मास्येषु उत्तरवेदिराम्नाता 'उपात्र वपन्ति' इति । तस्य अनारभ्यविधेः अयं प्रतिषेधः । ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेव अयं तेषामेव 'अत्र' इति वादः स्यात् । नैतदेवम् । प्रकरणात् चातुर्मास्यानामेव । यदि वरुणप्रघासानां वादः स्यात्, तत्र प्रतिषेधे त्रीण्यपि पर्वाणि उत्कीर्तयेत् । अथोच्येत द्वयोः पर्वणोर्वादो भवतु इति, अत्र ब्रूमः । न द्वयोः पर्वणोः प्रकरणम्, वरुणप्रघासानां वा । वरुणप्रघासानां प्रकरणे द्वयोः पर्वणोः उत्कीर्तनं प्रतिषेधे न स्यात् । तस्मात् चातुर्मास्यानामेव वादः । ननु एवमपि अर्थवादेन एतत् ज्ञातं मध्यमयोः प्रणयनमिति । किमर्थं प्राप्तस्य प्रणयनस्य पुनःश्रवणमिति । अत्र प्रयोजनं नोक्तम् । असति प्रयोजने अन्यस्मिन् परिसंख्यार्थमेव भवति । तत्र दोषाः उक्ताः । तस्मात् गुणार्थमेव एतच्छ्रवणम् । ननु नास्ति कश्चित् गुणः । उच्यते । गुणः श्रूयते उत्तरवेद्यामग्निनिधानम् । तस्मात् तदर्था पुनःश्रुतिः ।

**टुप्**— ( अत्र सौमिकम् इत्यादिभिः चतुर्भिः सूत्रैः अष्टमम्, प्रथमोत्तमयोः इत्यादिभिश्च त्रिभिः सूत्रैर्नवमम् इति अधिकरणद्वयं भाष्यकारैर्व्याख्यातम् । तत् दूषयित्वा सप्तभिरपि सूत्रैः एकमेवाधिकरणं वार्तिककारैर्व्याख्यातम् । तदिदं वार्तिकमित्थम्–) प्राकृते प्रणयने स्थिते परिसंख्याऽर्थे श्रवणम् इत्येवमादीनि सूत्राणि परस्परेण असंबद्धानि । कथम् ? यदा परिसंख्या भवति ( द्वयोरेव मध्यमयोः प्रणयन्ति इति ) तदा ( इतरयोः ) द्वयोः प्रणयनाभावात् आहवनीयाभावः, आहवनीयाभावात् यागाभावः । न च धर्मवत् दर्शपूर्णमासयोः प्रणयनम् । येन धर्म–( मात्र–) परिसंख्यायां कृतायां केवलम् ( अधर्मकं ) प्रणयनं ( इतरयोः ) क्रियेत । गुणार्थमपि नोपपद्यते । कथम् ? यत्र तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयते यथा 'दध्ना जुहोति' 'शरमयं बर्हिर्भवति' इति, तत्र भवति गुणविधिः । इह (तु) प्रणयनमुच्चार्य न किञ्चित् विधीयते । उत्तरवेदिविधिः ( अस्ति ) इति चेत्, न । प्रणयनवाक्यात् वाक्यान्तरे उत्तरवेदिश्रवणात् । अर्थवादोऽपि अनुपपन्नः, यत्र ( हि किञ्चित् ) विधीयते, तत्र अर्थवादः (भवति) । प्रणयनम् ( च ) दर्शपूर्णमासयोर्विधीयते, इह तु अविधानात् किमर्थवादेन ? । (अत्रैव अर्थवाददूषणप्रस्तावात् 'प्रथमोत्तमयोः' इति अनन्तराधिकरणपूर्वपक्षसूत्रमुल्लङ्घ्य तदीयं सिद्धान्तसूत्रं दूषयति–) 'मध्यमयोर्वा गत्यर्थवादात्' इति ( अपि अनुपपन्नम् । कथम् ? ) वरुणप्रघाससाकमेधयोः विधीयमाने पुनःश्रवणात् ( प्रणयनविध्येकवाक्यतया ) उपपद्यते एवार्थवादः । तस्मिंश्च ( विधि– ) पक्षे उक्तो दोषः ( परिसंख्येति ) । ( तथा ) 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्' इति इदमपि ( सूत्रं ) प्राकृते प्रणयने स्थिते न संबध्यते । ( अस्य हि सूत्रस्य अयमर्थः प्रणयनेन अग्निः



प्राप्यते इति । अतः ) यत्र प्रणयनम्, तत्राग्निः, तत्रैव चोत्तरवेदिः प्राप्नोति । अग्निसंस्कारिका ( हि ) सा । ( तेन सा ) यत्र (वैश्वदेवशुनासीरीययोः) प्रतिषिध्यते, तत्र अग्निर्विद्यते ( प्राप्तिपूर्वको हि प्रतिषेधः । तेन तयोः तस्याः प्राप्तिरनुमीयते ) तत्रैव च प्रणयनम् ( अनुमीयते । नहि प्रणयनमन्तरेण अग्निर्भवति ) । अनेन ( उत्तरवेदि– ) प्रतिषेधलिङ्गेन ( अनुमानपरंपरया ) प्रथमोत्तमयोः प्रणयनम् ( अवसीयते इति । तच्चेदमसंबद्धं सूत्रम् । कथमित्याह– ) प्राकृते प्रणयने स्थिते संशयाभावः । नियमपक्षस्य चानुत्थानम् । ( तेन 'प्रथमोत्तमयोः' इति तदुत्तरार्थे सूत्रमसंगतम् । स्वयमपि तदनुपपन्नमित्याह– ) उत्तरवेदेश्च अप्रसङ्गात् । उत्तरवेदिप्रतिषेधेन यः पक्षः प्रथमोत्तमयोरिति, तस्य मूलाभावः । ( अतः परं तु यत्– ) 'मध्यमयोर्वा गत्यर्थवादात्' इति ( सूत्रम्, तत्र अर्थवादत्वदूषणप्रस्तावे दूषणम् उक्तम् । तदेव स्मारयति– ) अविधानात् प्रणयनस्य अर्थवादो न घटते । ( तथा 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्रमपि असंगतम् इति दर्शयन् सूत्रार्थं भाष्यव्याख्यया दर्शयति– ) '**ननु वरुणप्रघासानां गुणवाक्यप्राप्तावेव अयं तेषामेव अत्र** ( अत्र वपन्ति ) इति **वादः स्यात्**' ( इति भाष्यम् ) । कोऽयमर्थः ? ( अर्थं दर्शयति– ) 'उपात्र वपन्ति' इति ( अत्र ) अवान्तरप्रकरणात् वरुणप्रघासानामेव उत्तरवेदेः प्राप्तत्वात् ( ल्यब्लोपे पञ्चमी उत्तरवेदिप्राप्तिं चोदयित्वा ) प्रथमोत्तमयोः प्रतिषेधानुपपत्तिम् ( चोद्यनिराकरणत्वेन भाष्यम्– ) आह । '**तत्र प्रतिषेधे त्रीण्यपि पर्वाणि अनुकीर्तयेत्**' इति । ( इति निराकरणभाष्यं व्याचष्टे–) यदि अवान्तरप्रकरणेन वरुणप्रघासानाम् ( एव ) उत्तरवेदिः ( स्यात् ), तत्र ( इतरेषाम् ) त्रयाणामपि ( पर्वणाम् ) उत्तरवेदेरभावात् कार्यः प्रतिषेधः सामर्थ्यात् ( इतरेषां प्राप्त्यभावात् सामर्थ्यात् प्राप्तस्य प्रतिषेधः कार्यः स्यात् इत्यन्वयः ) । न चायं नित्यानुवादः ( आनर्थक्यापत्तेः ) । यत्र अर्थवादत्वेन प्रतिषेधः ( यथा गिरापदप्रतिषेधः इरापदस्तुत्यर्थः ) तत्र नित्यानुवादः ( प्रतिषेधो ) भवति । ( न तु इह एवमस्ति ) । तस्मात् अनारभ्यश्रवणात् चातुर्मास्यानाम् ( अविशेषेण प्राप्ता ) उत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते ।

एवं प्राकृते प्रणयने सूत्राणि न घटन्ते । इति अन्यथा वर्ण्यते । इह हि त्रयः पक्षाः ( द्वयोः प्रणयन्ति इति– ) किं दार्शिकं प्रणयनं ( अनूद्यते, किंवा ) सौमिकम् अपूर्वं वा ( प्रणयनधर्मकं प्रणयनान्तरं विधीयते ) इति । ( तत्र ) दार्शिकम् ( एवेदं इति प्रथमम् ) उत्सूत्रम् ( पूर्व- ) पक्षं कृत्वा '**प्रणयनं तु सौमिकम्**' ( इति तन्त्ररत्ने पाठः । अत्रैव टुप्टीकायां तु 'सौमिकं तु प्रणयनम्' इति पाठः ) इत्यनेन तुशब्देन निवार्यते । एवं तुशब्दः अर्थवान् भवति प्रणयनं तु इति । '**उत्तरवेदिप्रतिषेधश्च तद्वत्**' ( इति सूत्रे ) भाष्यव्याख्यानमेव । '**प्राकृतं वाऽनामत्वात्**' इति ( च सिद्धान्तसूत्रम् । तस्यार्थः– ) अपूर्वं ( अप्रकृतिपूर्वम् ) प्रणयनान्तरं वरुणप्रघाससाकमेधयोर्विधीयते । ( शाखान्तरे हि ) अग्निप्रणयनोत्तरकालम् आहवनीयात् द्वौ ( अध्वर्युप्रतिप्रस्थातारौ ) 'अग्नी प्रणयतः' इति श्रूयते । प्रागपि होमात् आहवनीयः ( घृत– ) श्रपणनिर्वापोपस्थानप्रायश्चित्तैः प्रयुक्तो विद्यते । तस्मात् न देशलक्षणार्थः आहवनीयशब्दः । एवं चेत् प्रणयनान्तरम् ( अदार्शिकं असौमिकं च ) विधीयते । 'प्राकृतं वा' इति स्वाभाविकमित्यर्थः ( यदेव प्रणयतिशब्दात् चोदकस्वभावमालोच्य स्वतः प्रणयनमात्रं गम्यते तदेव विधीयते इत्यर्थः ) । 'अनामत्वात्' इति भाष्यव्याख्यानमेव ।

प्रथमस्य ( पक्षस्य ) प्रयोजनसूत्रमिदम् 'परिसंख्याऽर्थे श्रवणं गुणार्थमर्थवादो वा' इति । यथासंभवम् एतेषु प्रयोजनेषु पुनःश्रुतिर्योजनीया । 'प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्' इति मध्यमस्य पक्षस्य प्रयोजनसूत्रमिदम् । द्वयोः पर्वणोः प्रणयनान्तरं भवति ( इत्यर्थकम् 'मध्यमयोर्वा गत्यर्थवादात्' इति सूत्रं तृतीयस्य सिद्धान्तपक्षस्य प्रयोजनम् ) । 'उत्तरवेदिप्रतिषेधश्च तद्वत्' इति ( अस्य 'सौमिकं तु प्रणयनम्' इत्यत्रोक्तस्य– ) 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इत्येतत् परिहारसूत्रम् । ( तत् ) भाष्यव्याख्यातमेव । तस्मात् एकमिदं सप्तसूत्रं त्रिपक्षमधिकरणम् ।

**शा**— प्रथमोत्तमयोः सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयते । इति प्राप्ते , अभिधीयते । **' नहि प्रणयतीत्येतत् सौमिकस्याभिधायकम् । प्राकृतस्यानुवादे च वचनं स्यादनर्थकम् ॥ तस्मात् प्रणयतीत्येतदप्राकृतमसौमिकम् । अपूर्वमग्नेर्नयनं वदत्याहवनीयतः ॥ '**

**सोम**— प्रासङ्गिकी संगतिः ।

**वि**— ' आद्यन्तयोर्मध्ययोर्वा पर्वणोस् , तत्प्रसङ्गात् । आद्यन्तयो , रूरुगत्या मध्ययोः पर्वणोर्भवेत् ॥ ' प्रसङ्गकात् प्राप्तिप्रसङ्गकात् प्रतिषेधात् । ( इदं भाष्यानुसारेणोक्तम् । वार्तिकानुसारेण तु ) ' अनामत्वाच्च वैयर्थ्यात् सौमिकं प्राकृतं न च । अपूर्वं तत् प्रणयनं शाखाऽन्तरसमोक्तितः ॥' 'आहवनीयाद् द्वावग्निं प्रणयतः' इति शाखाऽन्तरोक्तिः । तत्समा उक्तिः अत्र ' द्वयोः प्रणयन्ति ' इति ।

**भाट्ट**— द्वितीयाधिकरणे तु ( भाष्यमतेन ) सोऽयमनुवादः प्रथमोत्तमयोः मध्यमयोर्वा इति चिन्तायाम्, मध्यमविषयत्वे तत्रैव उत्तरवेदिप्राप्तेः प्रथमोत्तमयोः तत्पर्युदासानुपपत्तिप्रसङ्गात् प्रथमोत्तमविषयत्वमेव । ततश्च तत्रैव उत्तरवेदिप्राप्तौ तत्रैवायं निषेधः इति तयोरुत्तरवेदेर्विकल्पः । ' द्वाभ्यामेति, ऊरू वा एतौ यज्ञस्य, यद् वरुणप्रघासाः साकमेधाश्च ' इति प्रणयनार्थवादस्तु लक्षणया प्रथमोत्तमपरः । इति प्राप्ते , लक्षणाया विकल्पस्य च अन्याय्यत्वात् मध्यमविषय एवायमनुवादः उत्तरवेद्युपसंहारार्थः । एवं च प्रथमोत्तमयोः उत्तरवेदिप्राप्त्यभावात् तत्र तत्प्रतिषेधो नित्यानुवादः । तत्प्रयोजनं च ' उपात्र वपन्ति ' इत्यादेः वरुणप्रघासावान्तरप्रकरणबाधः । एतदभावे हि तदवान्तरप्रकरणे पठितायाः उत्तरवेदेः तन्मात्राङ्गत्वप्रसक्तौ तदितरेषु त्रिषु पर्वसु नित्यानुवादः स्यात् , न द्वयोः । अतः द्वयोर्नित्यानुवादबलात् अवान्तरप्रकरणबाधेन महाप्रकरणात् सर्वाङ्गत्वप्रसक्तौ ' द्वयोः प्रणयन्ति ' इत्यनेन मध्यमयोः उत्तरवेद्युपसंहारो युज्यते । न च एवमपि प्रथमोत्तमयोः पर्युदासवशेन अवान्तरप्रकरणबाधवत् मध्यममात्रविषयत्वस्यापि उत्तरवेद्युत्पत्तिविनियोगयोः सिद्धेः ' द्वयोः प्रणयन्ति ' इत्यस्य वैयर्थ्यमिति वाच्यम् । ' उत्तरवेद्यामग्निं निदधाति' इत्यनेन हि न निधानानुवादेन उत्तरवेदिर्विधीयते अतिप्रसङ्गात् । नापि अग्निनिधानानुवादेन , विशिष्टोद्देशापत्तेः । नापि अग्निमात्रोद्देशेन, गार्हपत्यादावपि उत्तरवेद्यापत्तेः । किन्तु अतिदेशप्राप्तेः पूर्वप्रवृत्त्या उत्तरवेदिविशिष्टप्राकृतनिधानमेव अग्न्युद्देशेन विधीयते उत्तरवेदिमात्रफलकम् । अतश्च औपदेशिकप्रणयनविध्यभावे प्रणीताग्निनिधाने इव कपालतापार्थाग्निनिधानेऽपि तदापत्तिः । औपदेशिकप्रणयनविधित्वे तु तस्यैव पुरःस्फूर्तिकस्य देशापेक्षायाम् आतिदेशिकविधितः पूर्वम् उत्तरवेदिरूपदेशविधानात् , न तापाद्यर्थाग्निनिधाने उत्तरवेदिप्राप्त्यापत्तिः । अत एव औपदेशिकप्रणयनविधित्वेऽपि इतरयोः आतिदेशिकप्रणयनसत्त्वात् उत्तरवेद्यापत्तिः इत्यपास्तम् । औपदेशिकप्रणयनस्य पुरःस्फूर्तिकत्वेन तत्रैव उत्तरवेदिविधानात् । अतः भाष्यकारमतेऽपि न वार्तिकोक्तदूषणावकाशः ।

**वार्तिककारमतोपपादनं तु एवम्**— सप्तमिः सूत्रैः त्रिपक्षकम् एकमधिकरणम् । तत्र प्राकृतं सौमिकं वा प्रणयनम् इति पूर्वपक्षद्वयं कृत्वा अपूर्वं प्रणयनान्तरमत्र विधीयते न तु सौमिकम् , तस्यानुपस्थितत्वात् । नापि प्राकृतम् , प्राकृतप्रणयनस्य आहवनीयोत्पादकत्वेन आहवनीयापादानकत्वासंभवात् , ' आहवनीयात् द्वावग्नी प्रणयतः अध्वर्युश्च प्रतिप्रस्थाता च ' इति शाखाऽन्तरवचने अवश्यं प्राकृतप्रणयनोत्तरम् आहवनीयापादानकप्रणयनान्तरविधानावगतेः । साकमेधेऽपि च बोधायनादिकल्पसूत्रानुसारेण एतत्समानार्थकस्य आहवनीयापादानकप्रणयनान्तरविधायकविधेः कल्पनेन प्रणयनान्तरविधानावगतेः तदुभयसमानार्थकतया ' द्वयोः प्रणयन्ति ' इत्यस्यापि आहवनीयापादानकप्रणयनान्तरविधायकत्वस्यैव निश्चयेन प्राकृतप्रणयनानुवादकत्वानुपपत्तेः । अतः प्राकृतप्रणयनोत्तरम् आहवनीयापादानकं प्रणयनान्तरमपूर्वं विधीयते । तच्च गत्यर्थवादात् मध्यमयोरेव । तस्य च अपेक्षितो देशविशेषः उत्तरवेदिः उत्पत्तिविनियोगविधिभ्यां विधीयते इति तावपि मध्यमविषयावेव । एवं च प्रथमोत्तमयोः



तत्प्रतिषेधोऽपि नित्यानुवाद एव भाष्यकारमते इव अवान्तरप्रकरणबाधार्थम् इति सर्वमनाकुलम् ।

**याज्ञिकास्तु** पशुबन्धवत् सौमिकानेव धर्मान् अनुतिष्ठन्ति । उत्तरवेदिपरिमाणं परं शम्यामात्रमौपदेशिकं कुर्वन्ति । तन्मते ' प्रणयन्ति ' इति बहुवचनमपि ब्रह्महोत्रादिसद्भावात् उपपद्यते इति ध्येयम् ।

**मण्डन**— ' गतिस्तुतेर्मध्यमपर्वणोः । ' सा उत्तरवेदिः ।

**शंकर**— ' तत् पर्वणोर्मध्यमयोः । ' तत् अग्निप्रणयनम् ।

* चातुर्मास्येषु अग्निप्रणयने सौमिकाग्निप्रणयनधर्मातिदेशो नास्ति । भा. ७।३।८।२०–२२, * चातु० अङ्गानां न तन्त्रम् । ११।२।३।१२–१८. * चातु० आमिक्षाऽनुनिष्पन्नस्य वाजिनस्य यागे उपसेचने च विनियोगः, न उपसेचनार्थं वाजिनान्तरमुत्पादनीयम् । संकर्ष. १।४।१. * चातु० आवाहन – स्वाहाकार – अयाट्जोषणविषयेषु अतिदिष्टनिगदेषु आज्यपशब्द एव प्रयोक्तव्यः, न तु पृषदाज्यपादिशब्दः । वि. १०।४।२७. * चातु० उत्तमप्रयाजस्य निगदः संप्रतिपन्नदेवताको दृश्यते, ' स्वाहाऽग्निम् , स्वाहा सोमम् , स्वाहा सवितारम् , स्वाहा सरस्वतीम् , स्वाहा पूषणम् ' इत्येवंलक्षणकः । भा. १०।१।७।१५, * चातु० गृहमेधीयं कर्म अपूर्वमेव, न प्रकृतिर्न विकृतिः 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् ' । १०।७।९।२४–३३, * चातु० गृहमेधीये यावदुक्तं स्यात् ' आज्यभागौ यजति , अग्नये समवद्यति , इडामुपह्वयति ' इति । १०।७।१०।३४, * चातु० गृहमेधीये स्विष्टकृच्छ्रवणं शेषकार्याणां निवर्तकम् , आज्यभागपुनःश्रवणं परिसंख्याऽर्थमिति पञ्चमे पक्षे । ( क्त्वाचिन्ता ) । १०।७।११। ३५–३७.

**चातुर्मास्येषु चान्द्रो मासः स्वीकार्यः ॥**

'फाल्गुन्यां पौर्णमास्यां प्रयुङ्क्ते ' इत्यनेन चातुर्मास्यारम्भं विधाय चतुर्षुचतुर्षु मासेष्वन्यानि पर्वाणि विहितानि । तेषु मासानामपि चान्द्रादिभेदेन अनेकविधत्वात् अन्यतमोपादाने ' यज्ञादौ सावनः स्मृतः ' इति स्मृत्या ' त्रिंशद्वै रात्रयो मासाः ' इति प्राकरणिकश्रुत्या च गवामयनादौ इव सावनमासे एव वा प्राप्ते , चान्द्र एव मासो ग्राह्यः । पाञ्चसांवत्सरिकप्रयोगे 'त्रीनिष्ट्वा चतुर्थमुत्सृजेद् द्वौ परौ इष्ट्वा तृतीयमुत्सृजेदेष वै त्रयोदशो मासस्तमतियजते ' इत्येकमासत्यागस्य उत्सृज्य उभौ मासौ इत्यनेन मासद्वयत्यागस्य च विधानात् । मातुलातुलविमलसंख्याका हि सौरसावनपार्वणवत्सराणां दिवसाः । तेन षष्ट्या सौरैर्मासैरेकषष्टिः सावनाः, द्विषष्टिः पार्वणा मासा भवन्ति । सौराभिप्रायेण मासद्वयोत्सर्गस्य सावनाभिप्रायेण एकमासोत्सर्गस्य च कथनेन चान्द्रमासस्यैव उपादेयत्वमवसीयते , अन्यथा विकल्पाद्यापत्तेः । **संकर्ष.** ३।१।१८ ( 'कादि नव, टादि नव, पादि पञ्च, याद्यष्टौ ' इति सूत्रोक्तमार्गेण, 'अङ्कानां वामतो गतिः' इति परिभाषया च मातुल- ( म. त. ल ) शब्दस्य ३६५ इत्यर्थः । अतुलशब्दस्य ३६० इत्यर्थः । विमलशब्दस्य ३५४ इत्यर्थः । के. )

* चातु० पर्वाणि चत्वारि वैश्वदेवम् , वरुणप्रघासाः, साकमेधाः, शुनासीरीयं चेति । भा. ११।२।३।१२, * चातु० पर्वणां कालभेदः, ' वसन्ते वैश्वदेवेन यजेत , वर्षासु वरुणप्रघासैर्यजेत , हेमन्ते साकमेधैर्यजेत ' इति । ११।२।३।१३.

**चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे इव यावज्जीवाभ्यासपक्षोऽपि विज्ञायते ॥**

षष्ठस्य कर्मण आरम्भप्रतिषेधोऽयं पञ्चभिर्वर्षैः कर्मापवर्गात् । इति प्राप्ते, पाञ्चसांवत्सरिकपक्षवत् यावज्जीवाभ्यासपक्षोऽपि विज्ञायते । ' स त्रिषुत्रिषु संवत्सरेषु मासंमासम् उत्सृजेत् ' इति वचनात् । पाञ्चसांवत्सरिकातिरिक्तपक्षाभावे त्रिषुत्रिषु इत्याद्यभ्यासानुपपत्तेः । **संकर्ष.** ३।१।२०.

**चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे मध्ये मासस्यैवोत्सर्गः न तु संवत्सरस्य ॥**

त्रीनिष्ट्वेति वाक्ये संवत्सरत्रयं चातुर्मास्यैरिष्ट्वा चतुर्थत्यागविधानात् चतुर्थपदेनैकः संवत्सरः एवोपरमणीयत्वेन प्रतीयते । इति प्राप्ते , चतुर्थशब्दोऽत्र मासपर एव । ' एष वै त्रयोदशो मासः ' इति श्रुत्य-

न्तरात्। चतुर्थमिति सप्तम्यर्थे द्वितीया। एवमेव 'द्वौ परौ इष्ट्वा' इत्यत्रापि ज्ञेयम्। संकर्ष. ३।१।१९.

**ꕥ चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तावपि वैश्वानरपार्जन्यपञ्चहोतृहोमानां सकृदेवानुष्ठानम् ॥**

पाञ्चसांवत्सरिकप्रयोगारम्भे विहितानां वैश्वानरपार्जन्यपञ्चहोतृहोमानां षष्ठे संवत्सरे प्रयोगान्तरारम्भात् पुनःकरणम्। इति प्राप्ते, 'चातुर्मास्यान्यारभमाणः' इति श्रुत्या चातुर्मास्यविषयकप्रथमप्रवृत्तेरेव कर्तृविशेषणत्वेन कीर्तनात् प्रयोगान्तरारम्भस्य च अतथात्वादारम्भणीयावत् सकृदेव। संकर्ष. ३।१।२१.

* चातु० पाशुकेषु परिधौ यूपधर्माः कार्याः। भा. ९।२।१२।४०। परंतु परिधित्वाविरोधिन एव। किञ्च परिधौ अञ्जने 'यूपायाज्यमानाय' इति यूपशब्देन ऊहः कार्यः। ९।२।१३।४१–४३.

**ꕥ चातुर्मास्येषु पाशुकेषु परिधौ यूपपरिध्युभयधर्माणामविरुद्धानामनुष्ठानम् ॥**

**परिधिर्व्यर्थत्वादुभयधर्मा स्यात्।१२।२।१०।२६॥**

**भाष्यम्**— पशुमत्सु चातुर्मास्येषु श्रूयते 'परिधौ पशुं नियुञ्जीत' इति। स परिधिः उभयधर्मा स्यात् परिधिधर्मा यूपधर्मा च। कस्मात्? द्व्यर्थत्वात्। स करोति अग्नेश्च परिधानम्, पशोश्च अप्राबल्यम्। अर्थप्रयुक्ताश्च धर्माः। तस्मादुभये कर्तव्याः अविरुद्धाश्च ये यथा यवमतीभिरद्भिः प्रोक्षणम्, अञ्जनम्, परिव्याणमिति यूपधर्माः। इध्मसंनहनम्, संमार्जनम्, जुह्वा वसुरसि इत्येवमादिभिरञ्जनम्, अभ्याश्रावणमिति परिधिधर्माः।

**वि**—'पश्वर्थपरिधौ स्वीयधर्मो यद्वा द्विधर्मता।, मुख्यत्वादादिमो, ऽन्त्यः स्यान्नियोजनविधानतः॥'

**भाट्ट**— पाशुकचातुर्मास्येषु 'परिधौ पशुं नियुञ्जीत' इति श्रुते परिधौ अग्निपरिधानपशुनियोजनरूपोभयकार्यकारित्वादविरुद्धधर्मविषये उभयधर्मा इत्यविवादमेवेति उत्तरविवक्षया प्राप्यते।

**मण्डन**—'द्वयोर्गुणाः स्युः परिधौ।'

**शंकर**—'परिधिर्द्वयधर्मा स्यात्।'

**ꕥ चातुर्मास्येषु पाशुकेषु परिधौ स्वधर्मविरोधे यूपधर्मा नानुष्ठेयाः ॥**

**यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात्। १२।२।११।२७॥**

**भाष्यम्**—विरोधे तु सति यूपधर्मः कर्तव्यः, न परिधिधर्मः। कस्मात्? मुख्यानन्तर्यात्। मुख्यः पशुः। स हि यजिं निर्वर्तयति। तस्य अनन्तरो यूपः संनिपातित्वात्। तेन सः अन्तरङ्गः। परिधिस्तु अग्निना संबध्यते, अग्निर्हविषा। स बहिरङ्गः। अन्तरङ्गबहिरङ्गयोश्चान्तरङ्गं बलीयः। तत् कस्य हेतोः? अत्र हि पूर्वः प्रत्ययो भवेत्। ये धर्मा अपूर्वार्थाः, ते साक्षात् अपूर्वेण असंबध्यमानाः तदङ्गेषु विज्ञायन्ते। अतस्तत्र बुद्धिः अपूर्वासंभवेन निवर्तमाना अङ्गेषु प्रवर्तमाना अन्तरङ्गे तावत् आपतति, ततो व्यवहिते बहिरङ्गे। यत्र च पूर्वमापतति तत्रैव तिष्ठति, तदतिक्रमे कारणाभावात्। तस्मात् विरोधे यूपधर्मः कर्तव्यः। कः पुनरसौ? तक्षणम् उच्छ्रयणं निखननम् इति।

**इतरो वा, तस्य तत्र विधानात्। २८॥**

**भाष्यम्**—इतरो वा यूपधर्मो वा अविरोधी कर्तव्यः। कुतः? तस्य तत्र विधानात्। तस्य यूपकार्यस्य पशुनियोजनस्य तत्र परिधौ विधानात् 'परिधौ पशुं नियुञ्जन्ति' इति अवस्थाप्य परिधित्वं नियोजनमुच्यते। तत् परिधित्वानुपमर्देन विज्ञायते, तथाभूतोपदेशात्। यथा 'खलेवाली यूपो भवति' इति। यदि उच्छ्रयेत तक्षेत् वा परिधित्वमेव व्याहन्येत। सत्वकोऽसौ उपशयश्च (शयानः)। तत्र 'परिधौ पशुं नियुञ्जन्ति' इत्येतदेव अयथाऽर्थं स्यात्।

**उभयोश्चाङ्गसंयोगः। २९॥**

**भाष्यम्**—उभयोश्च पक्षयोः अङ्गेनैव धर्मस्य संयोगः। न कचित् प्रधानेन प्रत्यासत्तिरिति। न आसत्त्या उपकारविशेषः। तस्मात् अकारणं सा। अतः परिधिधर्मः कर्तव्यः।

**सोम**—दृष्टान्तसंगतिः। **सूत्रे** मुख्यस्यानन्तर्यात् प्रधानाव्यवहितत्वादित्यर्थः।



**वि**—'विरोधि तक्षणाद्यत्र कार्यं नो वा, यतो यजौ। यूपासत्तिस्ततः कार्यम्, न तद्रूपोपमर्दनात्॥'

**भाट्ट**—विरोधे तु तक्षणनिखननादौ किं यूपधर्माः, उत परिधिधर्माः सत्वकत्वोत्तराग्रत्वादयः इति चिन्तायाम्, यूपधर्माणां यागसाधनपशुसंबन्धियूपवृत्तित्वेन अन्तरङ्गत्वात् बहिरङ्गाणां यागाङ्गप्रक्षेपसाधनाग्निपरिधानसंबन्धिकाष्ठनिष्ठानां परिधिधर्माणां दौर्बल्यावगतेर्यूपधर्मा एव कार्याः। इति प्राप्ते, पुरोडाशकपालन्यायेन अग्निपरिधानसाधनरूपपरिधित्वेनैव पशुनियोजनसाधनत्वावगतेः परिधानप्रयुक्तत्वावसायात् तद्धर्माणामेव पुरःस्फूर्तिकतया बलवत्त्वम्, स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वव्यवस्थापनाच्च। एवमुभयोरप्यङ्गधर्मत्वाच्च न प्राधान्यकृताऽपि व्यवस्था। प्रथमप्रवृत्तत्वात्तु परिधिधर्माणां बलवत्त्वमित्यपि शक्यं वक्तुम्। तक्षणस्य यूपत्वोत्पादकत्वात् प्रकृते च यूपबाधेन परिधिविधानात् तत्प्राप्तिस्तावदनाशङ्क्यैवेति सत्वकत्वादीनामविरोध एव। उत्तराग्रत्वादीनां तु बाधे अग्निपरिधानस्यैवानुपपत्तेरावश्यकत्वम्। नहि निखननं विना पशुनियोजनं न संभवति, स्थूलकाष्ठग्रहणेन तत्संभवात्। अतः परिधानधर्मा एव कार्याः। नह्यत्र 'यो होता सोऽध्वर्युः' इत्यत्राध्वर्युपदार्थे होतुर्वाचनिकत्ववत् निखननादौ परिधेर्वाचनिकत्वम्, येन उपदेशेनातिदेशबाधः शङ्क्येत। परिधेः पशुनियोजने एव विनियुक्तत्वात्तु निखननादेः स्थानापत्त्यतिदेशेनैव लाभान्न प्राबल्यशङ्का।

**मण्डन**—'विरोधे परिधेर्गुणाः।'

**शंकर**—'विरोधे यौप्यबाधनम्।'

* चातु० 'पृषदाज्येनानुयाजान् यजति'। वि. १०।४।२७. * चातु० प्रयाजानाम् अनुयाजानां च नवसंख्या सर्वसंपाद्या, न प्रत्येकम्। प्रयाजैकादशत्वन्यायः। भा. ५।३।१।१–२, * चातु० प्रयाजानुयाजानां नवत्वगुणविधिः, न च तेन प्राकृताङ्गान्तरबाधः। (अग्नीषोमीयपश्वादौ – इत्यत्र द्रष्टव्यम्)। १०।३।१।१–१२. * चातु० 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति वैश्वदेवे पर्वणि देशस्य नियमविधिः। वि. ४।२।९. * चातु० 'प्राचीनप्रवणे वैश्वदेवेन यजेत' 'वसन्ते वैश्वदेवेन यजेत' 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चार्त्विजः' इति देशकालकर्तॄणामैक्यम्। भा. ११।२।१।१–२. * चातु० मध्यमपर्वणोः यदग्निप्रणयनम्, तल्लौकिकमेव, न तु तत्र सौमिकाग्निप्रणयनधर्मातिदेशः। दर्शपूर्णमासगतं च प्रणयनं चोदकप्राप्तम्। वि. ७।३।८. * चातु० महापितृयज्ञः पित्र्या नाम साकमेधपर्वणि भवति। के.

**ꕥ चातुर्मास्येषु 'यदि प्रावृषि यजेत सकृदुपस्तीर्य द्विरभिघारयेत्' इत्यत्र वरुणप्रघासग्रहणम् ॥**

चातुर्मास्येष्वेव 'यदि वसन्ता यजेत द्विरुपस्तीर्य द्विरभिघारयेत्' इत्यादि उपक्रम्य 'यदि प्रावृषि यजेत सकृदुपस्तीर्य द्विरभिघारयेत्' इति श्रुतम्। तत्र वसन्तकाले क्रियमाणस्य वैश्वदेवपर्वण उपस्थितत्वात् यदि प्रावृषीति वाक्येऽपि यजिना तदेवोच्यते। तस्यैव पशुकामप्रयोगे आ पशुप्राप्तेरभ्यसनीयत्वेन वर्षास्वपि तत्प्रसक्तेः। इति प्राप्ते, 'प्रावृषि वरुणप्रघासैः' इति विधिप्रतीतासाधारणलिङ्गेन वरुणप्रघासानामेवोपस्थितत्वात् एष वादः, चातुर्मास्यत्वेन तेषामपि प्रकृतत्वात्, अप्रकृतत्वेऽपि वा 'जटिलं भोजयेत्' इत्यादौ जटाविशिष्टस्यैव प्रतीतिसंभवाच्च। **संकर्ष.** ३।१।२२.

* चातु० यावज्जीवाभ्यासपक्षे 'त्रिषुत्रिषु संवत्सरेषु मासंमासमुत्सृजेत्'। **संकर्ष.** ३।१।२०. * चातु० वाजिनयागे विशेषविधानात् अनुवषट्कारः कर्तव्यः। विध्यन्तस्तु सांनाय्यस्यैव, न सोमस्य। भा. ८।२।१।१–९.

**ꕥ चातुर्मास्येषु वैश्वदेवेन गोषु प्रभूतपयस्कत्वे वसन्ते यजेत ॥**

'वैश्वदेवेन पशुकामो यजेत यस्मिन् ऋतौ प्रभूतं गोषु पयः स्यात्' इति श्रुत्या वसन्तानादरप्रतीतेः ऋत्वन्तरेऽपि स्वायां गवि पयोवृद्धौ सत्यां काम्यप्रयोगारम्भः स्यात्। इति प्राप्ते, 'यस्मिन् काले बहुव्रीहिः स्यात्तदा यष्टव्यम्' इत्युक्ते विहितकालत्यागस्याप्रतीतेः यस्मिन् वर्षे वसन्ते प्रभूतं पयः स्यात्, तस्मिन्नेव वसन्ते इज्येत। **संकर्ष.** ३।१।२३.

* चातु० 'वैश्वदेवेन यजेत' इति वैश्वदेवशब्दः कर्मनामधेयम्। वैश्वदेवाधिकरणम्। भा. १।४।१०।

१३–१६. * चातु० वैश्वदेवे वरुणप्रघासेषु च अग्निमन्थनम्। के. ७।१।३।१७. * चातु० संघातानेकत्वेऽपि कर्मैक्यम्। कर्मैक्येऽपि च कालभेदोक्त्या प्रयोगभेदेन प्रयोगशेषाणां प्रयाजादीनामावृत्तिरेव। वि. ११।२।३. * चातु० साकमेधपर्वणि अनीकवत्यादीनां सद्यस्कालता। भा. ५।१।११।१९–२२. * चातु० साकमेधपर्वणि त्र्यम्बकनामका एककपालाः पुरोडाशा बहवो विहिताः। तेषु अभिघारणविधिनिषेधविशिष्टा मीमांसा विधित्सिताभिघारणस्तुत्यै अर्थवादः। वि. १०।८।५, * चातु० साकमेधपर्वणि माध्यंदिनीयायाः सांतपनीयायाः कदा चिदुत्कर्षे अग्निहोत्रहोमकाले च प्राप्ते इष्टिमध्ये एव स्वकाले सायमग्निहोत्रं हुत्वा पश्चादिष्टिशेषः समापनीयः, न तु अग्निहोत्रमुत्कष्टव्यम्। ( सांतपनीयान्यायः। ) ५।१।१७, * चातु० सामिधेनीसासदश्यम्। १०।८।९. * चातु० सौमिकेषु उत्करे वाजिनासादनं न धर्ममात्रं न च क्रियाऽन्तरम्, किन्तु तस्य होमनिर्वृत्तिः दृष्टं प्रयोजनम्। गुणविधिरयम्। पृथ्वग्रमुत्करं करिष्यामः। भा. १०।३।३।१८–२२, * चातुर्मास्येषु सौमिकेषु परिधौ पशुनियोजनं गुणविधिः। तस्य पश्वनपगमः दृष्टं प्रयोजनम्। महान्तं परिधिं करिष्यामः। १०।३।३।१८–२२.

**ꣻ चातुर्मास्येषु सौमिकेषु प्राकृतासादननियोजनानुवादेन विहिताभ्यामुत्करपरिधिभ्यां प्राकृतयोर्वेदियूपयोर्बाधः ॥**

**संस्कारे तु क्रियाऽन्तरं तस्य विधायकत्वात्। १०।३।३।१८ ॥**

**भाष्यम्**— सन्ति चातुर्मास्याः सोमाः। तत्र श्रूयते 'उत्करे वाजिनमासादयन्ति' 'परिधौ पशुं नियुञ्जन्ति' इति। तत्र एषोऽर्थः सांशयिकः किमेतत् आसादनान्तरं नियोजनान्तरं च, उत प्राकृतयोः आसादननियोजनयोर्गुणविधिः इतरश्च इतरश्चेति। तत्र एतत्तावत् नः परीक्ष्यं किं धर्ममात्रमासादनं नियोजनं च, उत दृष्टकार्यमिति। यदि धर्ममात्रम्, ततः क्रियाऽन्तरम्। अथ दृष्टकार्यम्, ततो गुणविधिरिति। तत उभयं संदिग्धम् इति उभयं संहृत्य परीक्ष्यते किं धर्ममात्रम् इतरच्च इतरच्च क्रियाऽन्तरम्, उत दृष्टकार्ये गुणविधिरिति। किं प्राप्तम्? तुङ्गत्वात् तीक्ष्णाग्रत्वाच्च उत्करस्य दृष्टकार्यमासादनं न शक्यं कर्तुम्। तथा उपशयत्वात् ( शयानत्वात् ) परिधेः दृष्टकार्यकं नियोजनम् अशक्यं कर्तुम्। तस्मात् धर्ममात्रम्। यथा सौत्रामणीकरणे 'ब्राह्मणस्य मूर्धनि आसादयति' इति धर्ममात्रमासादनम्, एवमिहापि धर्ममात्रं चेत्, क्रियाऽन्तरम्। तथाच सति आसादनं नियोजनं च विधायिष्यते, तत्र श्रुत्या विहितं भविष्यति, इतरथा वाक्यं विधायकं स्यात्। अपिच अस्मत्पक्षे आसादननियोजने गुणविधिलक्षणाऽर्थे न भविष्यतः। भवत्पक्षे तु गुणविधिं लक्षयेयाताम्। तस्मात् क्रियाऽन्तरं इतरदितरच्च, तस्य विधायकत्वात्। स्वपदगतस्य भावप्रत्ययस्य पदोत्तरस्य न यथा आघारे गुणविधिः, तथा अस्मिन् संस्कारे आसादननियोजनाख्ये।

**टुप्**—ननु वाजिने विशिष्टानुवादः ( आसादनविशिष्टोत्करानुवादः दोषः ), वाक्यभेदो वा। उच्यते। 'वाजिनं निषिच्य अभिघार्य' इति प्रकृत्य श्रूयते 'वाजिनमुत्करे आसादयति' इति। उत्करः एव ( केवलः ) विधीयते, वाजिनं तु प्रकरणात् लभ्यते। 'परिधौ पशुम्' इत्यपि यत् नियुञ्जन्ति, तत् परिधौ इति ( एतावदुच्यते ) पशुः ( तु ) सामर्थ्येन ( एव लभ्यते )।

**प्रकृत्यनुपरोधाच्च। १९ ॥**

**भाष्यम्**— एवं च प्राकृतस्य धर्मस्य प्रापकश्चोदको नोपरोत्स्यते 'वेद्यां हवींषि आसादयति' 'यूपे पशुं नियुञ्जन्ति' इति। तस्मादपि क्रियाऽन्तरमिति।

**विधेस्तु तत्र भावात् संदेहे, यस्य शब्दस्तदर्थः स्यात्। २० ॥**

**भाष्यम्**— तुशब्दः पक्षं व्यावर्तयति, नासादनान्तरं नियोजनान्तरं चेति। किं तर्हि? प्राकृतयोः आसादननियोजनयोः गुणविधिः। तत्र एतत् वर्ण्यते दृष्टकार्यके आसादननियोजने इति। कुतः? कार्यस्य दृष्टत्वात्। आसादनं समीपानयनम्। तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनम्, नियोजनस्यापि पश्वनपगमः। एवं चेत्, तस्मात् गुणविधिः इतरश्च इतरश्च। कुतः? विधेस्तत्र भावात् आसादननियोजनविधेः तत्र दृष्टत्वात् चोदकेन तत्र प्राप्तत्वात्। संदेहे तत्र गुणविधिः कर्मान्तरमिति, न



कर्मान्तरविधानं युक्तम्। अज्ञातस्य हि ज्ञापनं विधिः। ज्ञाते च चोदकेन आसादननियोजने। तस्मात् यस्य गुणस्य चोदकः शब्दः, तदर्थतया उच्चारणं स्यात्। तस्मात् गुणविधिरिति। अथ यदुक्तम् 'श्रुतिरेवं विधायिका, त्वत्पक्षे तु वाक्यम्' इति, उच्यते। यद्यपि वाक्यम्, तथापि अल्पीयसी अदृष्टानुमानकल्पना भविष्यतीति। यावती केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्येति।

**संस्कारसामर्थ्याद् गुणसंयोगाच्च। २१ ॥**

**भाष्यम्**—अथ यदुक्तम् 'तीक्ष्णाग्रत्वादुत्करस्य उपशयत्वाच्च परिधेः, दृष्टकार्ये आसादननियोजने न शक्येते कर्तुम्' इति। अत्रोच्यते। यथा शक्येते उत्करे च परिधौ च आसादननियोजने कर्तुं तथा करिष्येते, पृथ्वग्रम् उत्करं करिष्यामः महान्तं च परिधिम्। अतः पृथ्वग्रतया स्थविम्ना च गुणेन संयोगात् आसादननियोजनसंस्कारसामर्थ्ये भविष्यति। तस्मात् न कर्मान्तरमिति।

**विप्रतिषेधात् क्रिया प्रकरणे स्यात्। २२ ॥**

**भाष्यम्**—अथ यदुक्तम् 'यथा सौत्रामणीप्रकरणे धर्ममात्रमासादनमेवमिहापि' इति, तत् परिहर्तव्यम्। अत्रोच्यते। सौत्रामणीप्रकरणे विप्रतिषेधात् न शक्यं दृष्टकार्यकमासादनं कर्तुम्। तस्मात् क्रियामात्रमदृष्टकार्यकं सौत्रामणीप्रकरणे स्यात्। न तु इह दृष्टकार्यकमशक्यम्। तस्मात् गुणविधिः।

**सोम**— पूर्वत्र क्लृप्तप्राकृतकार्ये उत्तराघारे मन्त्रविधावपि इह न प्राकृतकार्ये कर्मणि गुणविधिः इत्युत्थितेः संगतिः। **सूत्रार्थस्तु**—आसादनादिसंस्कारश्रवणे क्रियाऽन्तरमेव विधेयं स्यात् न गुणमात्रम्, श्रुत्या तद्विधायकत्वावगमादिति।

**वि**—'किमुत्करे सादनं च परिधौ च नियोजनम्। कर्मान्तरे प्राकृतयोर्गुणो वा, ऽऽद्योऽस्त्वसंभवात् ॥, पृथुतामुत्कराग्रस्य परिधेश्च स्थविष्ठताम्। आश्रित्य संभवात् कर्तुं गुणौ तौ लाघवान्मतौ ॥'

**भाट्ट**—सौमिकचातुर्मास्येषु 'उत्करे वाजिनमासादयति' 'परिधौ पशुं नियुञ्जीत' इति श्रुतम्। तत्र प्राकृतवाजिनासादनपशुनियोजनोद्देशेन उत्करपरिधिविधाने वाक्यभेदापत्तेः, आसादननियोजनमात्रोद्देशेन तद्विधाने च स्रुगासादने शाकटीयवृषभनियोजने च अतिप्रसङ्गापत्तेः, आसादनान्तरनियोजनान्तरे एवात्र उत्करपरिधिविशिष्टे विधीयेते, वाक्यभेदापादकस्यैव गुणस्य भेदकत्वात्। तयोरपि च न प्राकृतकार्यापन्नतया विधानम्, उत्करस्य देशविशेषवृत्तिशङ्कुरूपस्य ( मृत्कूटस्य ) तीक्ष्णाग्रत्वेन तत्र चिरकालीनप्राकृतकार्यापन्नासादने वाजिनावस्कन्दनापत्तेः, परिधेश्च तनुतरस्य अनिखातस्य च पश्वनपक्रमणसाधनीभूतनियोजनसाधनत्वासंभवात्। अतश्चादृष्टार्थमासादनं नियोजनं च क्षणमात्रं कृत्वा पुनः प्राकृतं वेद्यां यूपे चासादनं नियोजनं च कार्यमिति न ताभ्यां तयोर्बाधः। इति प्राप्ते, यद्यपि आसादनान्तरं नियोजनान्तरं च विधेयम्, तथापि प्राकाशदानवत् प्राकृतकार्यार्थतयैव तद्विधिः, लाघवात्। न चाशक्यता, पृथ्वग्रतासंपादनेनापि तदुपपत्तेः, परिधेः परिमाणविशेषानाम्नानेन स्थौल्यकरणेऽपि बाधकाभावाच्च। अतो युक्तः प्राकृतासादननियोजनयोर्बाधः। वस्तुतस्तु प्राकृतासादनादेरेवातिदेशतः पूर्वं प्रवृत्तेः, नानेन गुणविशिष्टस्य वाजिनाद्युद्देशेन विधानान्न कर्मान्तरत्वमपि। तत्त्वं तु वाजिनोदाहरणे आसादनोद्देशेन उत्करविधानेऽपि 'वाजिनं निषिच्य अभिघार्य' इति वाजिनस्यैव पूर्वं प्रक्रान्ततया विषयत्वोपपत्तेरतिप्रसङ्गाभावान्न विशिष्टविधिस्वीकारोऽपि। अत उत्करपरिधिभ्यामेव वेदियूपयोर्बाधः।

**मण्डन**—'आसादने स्याद् विधिरुत्करस्य।'

**शंकर**—'नोत्करादौ क्रियाविधिः।'

* चातुर्मास्येषु सौमिकेषु वाजिनासादने उत्कररूपगुणस्य, पशुनियोजने च परिधिरूपगुणस्य विधानम्। भा. १०।३।३।१८–२२.

* **चातुर्मास्यावयवयोः** अनीकवत्सांतपनीययोर्बर्हिषः साधारण्यवचनम् 'यदनीकवतो बर्हिस्तत् सांतपनीयस्य' इति। भा. ११।२।३।१७. * **चातुर्मास्याख्यानां** वैश्वदेवादिपर्वणां कालभेदात् अङ्गावृत्तिः ( ११।२।३।१२–१८ इत्यत्र ) सिद्धान्तिता। सु. पृ. ७७९. * **चातुर्मास्यादौ** प्रधानानामेकदेशकालकर्तृकत्वम्। भा. ११।२।१।१–२, ४–७, * **चातुर्मास्यादिषु** तत्तद्व्याप्यप्रयोगानुरोधेन

अङ्गानामावृत्तिः। ११।२।३।१२–१८. * चातुर्मास्यारम्भे वैश्वानरपार्जन्यपञ्चहोतृहोमानां प्रथमप्रवृत्तावेव सकृदेव करणम्। ( यावज्जीवप्रयोगे इदम्)। **संकर्ष. ३।१।२१.**

*** चातुर्मास्यगते** अवभृथे एव एककपालस्य द्विरवद्यति। **भा. ७।१।५।२३, (उत्तरत्र, प्रतिलघुसिद्धान्तं 'चातुर्मास्यगत' इति विशेषणं प्रारम्भे अनुवर्तिष्यते)** * त्र्यम्बकपुरोडाशेषु अभिघारणानभिघारणमीमांसा अर्थवादः। १०।८।५।८, * वरुणप्रघासेषु अग्निमन्थनादेः पुनर्विधिः दक्षिणवैहारिकस्य मारुतीहविरर्थम्। ७।१।३।२१, * वरुणप्रघासेषु अवभृथधर्मककर्मान्तरविधानम्। ११।२।१५।६३–६५, * वरुणप्रघासेषु कर्तॄणां तन्त्रम्। अध्वर्युप्रतिप्रस्थात्रोस्तु भेदः। ११।२।१०।४४–४८, * वरुणप्रघासेषु के चिद्वैश्वदेविका धर्मा विधीयन्ते 'अग्निं मन्थन्ति' 'प्रसुवो भवन्ति' इति (दर्भाः प्रसुवः पुष्पिताः)। ७।१।३।१७, * वरुणप्रघासेषु दक्षिणविहारे प्रतिप्रस्थात्रा अध्वर्योः पृथक् मन्त्रोच्चारणं कार्यम्। १२।१।९।१८, * वरुणप्रघासेषु दक्षिणविहारे मारुत्यर्थमङ्गानां पृथगनुष्ठानम्। ११।२।९।३५–४३, * वरुणप्रघासेषु पत्नीसंयाजानां तन्त्रं न। ११।२।११।४९–५०, * वरुणप्रघासेषु 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' इत्यत्र न शूर्पप्रयुक्तो धर्मः, किन्तु अपूर्वप्रयुक्तः। ६।१।५।११–१९, * वरुणप्रघासावभृथे तुषाः वारुण्यामिक्षानिष्कासश्च द्रव्यम्। ७।३।५।१६, * वरुणप्रघासकायैककपालैन्द्राग्नसार्थवादविधिकाण्डस्य साकमेधीयैन्द्राग्नैककपालयोरतिदेशः। भा. ७।१।४।२२, * वरुणप्रघासगतः काय एककपालः आग्रयणगतद्यावापृथिव्यैककपालश्च वैश्वदेविकद्यावापृथिव्यैककपालधर्मान् गृह्णाति। ७।३।१०।२६–२७, * वरुणप्रघासगते अवभृथे अवभृथनाम्ना सौमिकधर्मातिदेशः। ७।३।४।१२–१५, * वरुणप्रघाससाकमेधयोः 'द्वयोः प्रणयन्ति' इति प्रणयनशब्देन सौमिकाग्निप्रणयनधर्मातिदेशो नास्ति। ७।३।८।१९–२२, * वरुणप्रघासिकैककपालस्य वैशेषिका धर्माः 'हिरण्मयः स्रुचो भवन्ति शमीमय्यो वा' इत्येवमादयः। ७।१।५।२३, * वैश्वदेवपर्वणि 'त्रेधा संनद्धं बर्हिर्भवति, त्रेधा संनद्ध इध्मः, नव प्रयाजा इज्यन्ते, नवानुयाजाः' इत्येवमादयो विधयः। ७।१।३।१७. * वैश्वदेवपर्वणि दध्यानयनस्य आमिक्षैव प्रयोजिका, न वाजिनमपि। **वि. ४।१।९.** * वैश्वदेवपर्वणि द्यावापृथिव्य एककपालः, वरुणप्रघासेषु काय एककपालः, साकमेधेषु वैश्वकर्मण एककपालः, शुनासीरीये च सौर्य एककपालः। **भा. ७।१।४।२२.** * वैश्वदेवपर्वणि 'प्राचीनप्रवणे वैश्वदेवेन यजेत' इति देशविधानेन अनेकेषां प्रधानानां साहित्यावगमात् पदार्थानुसमयः। **सोम. ५।२।१.** * वैश्वदेवपर्वणि वाजिने सांनाय्यधर्मातिदेशः। **भा.** ८।२।१।१–९, * वैश्वदेवपर्वणि वाजिननाशे वाजिनयागस्य आज्येन समापनम्। ४।१।९।२४, * वैश्वदेवपर्वणि वैश्वदेव्यामिक्षा दार्शिकसांनाय्यपयस एव विकारः, न दध्नः नापि उभयोः। ८।२।४।१९–२३. * वैश्वदेवपर्वणि 'वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र द्रव्यदेवतालक्षणरूपभेदात् कर्मभेदः। **वि. २।२।९.** * वैश्वदेवपर्वणि वैश्वदेव्यामिक्षाविध्यन्तः मैत्रावरुण्यामिक्षायामतिदिश्यते। **भा. ७।३।१०।२६–२७.** * साकमेधीयानीकवत्यादीष्टयः सद्यस्काला एव, विशेषणस्य 'प्रातः, मध्यंदिने, सायम्' इत्येकत्वस्य विवक्षितत्वात्। **भाट्ट. ५।१।११.** * चातुर्मास्यसौत्रामण्योरैष्टिकधर्मातिदेशः। **बृ. ८।२।१।१–९.**

*** चातुर्वर्ण्यमविशेषात्। ६।१।७।२५ ॥**

अग्निहोत्रादिषु कर्मसु चातुर्वर्ण्ये चत्वारोऽपि वर्णा अधिकारिणः स्युः। न त्रैवर्णिका एव। अविशेषात् यजेत, जुहुयात् इत्येवमादिषु कर्तृविशेषस्य अनुक्तत्वात्। इति पूर्वः पक्षः। चत्वारो वर्णा एव चातुर्वर्ण्यम् इति स्वार्थे तद्धितः।

**निर्देशाद्वा त्रयाणां स्यादग्न्याधेयेऽप्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः। २६ ॥**

सूत्रेण पूर्वपक्षे प्राप्ते वाशब्देन तं निरस्य सिद्धान्तमाह। त्रयाणां वर्णानामेव अग्न्याधेये निर्देशात् त्रयाणामेव कर्माधिकारः स्यात्। शूद्रस्य तु अग्न्याधेयेऽपि असंबन्धः, न संबन्धः, नाधिकार इत्यर्थः। यदि च अग्न्याधेयेऽपि शूद्रस्य संबन्धः, तदा क्रतुषु नास्त्यधिकारः इति किमु वक्तव्यमिति भावः। 'वसन्ते ब्राह्मणः



अग्नीनादधीत' 'ग्रीष्मे राजन्यः' 'शरदि वैश्यः' इति त्रैवर्णिकस्यैव आधाने निर्देशः। तेन शूद्रस्य आधानाधिकारो न भवति। क्रतुषु च ब्राह्मणश्रुतिः। ब्राह्मणग्रहणमुपलक्षणम्। अग्निष्टोमादिषु क्रतुषु च ब्राह्मणक्षत्रियविशामेव विशेषा विहिताः। तेन शूद्रस्य क्रतुषु नतरामधिकारः। क्षत्रियवैश्ययोः अग्निष्टोमे 'अदीक्षिष्टायं ब्राह्मणः' इत्येव दीक्षाऽऽवेदने ब्राह्मणपदेनैव निर्देशो विहितः ऐतरेयके। तदेषा ब्राह्मणश्रुतिः, शूद्रस्य नास्त्येवाधिकारः क्रतुषु इत्यत्र लिङ्गम्। इति आत्रेय आचार्यो मन्यते। इति सिद्धान्तः।

**निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात्। २७ ॥**

पूर्वपक्षी आह। अग्न्याधेये वर्णत्रयोक्तिः निमित्तार्थेन। यदि ब्राह्मण आदध्यात् वसन्ते आदध्यात् इति रीत्या ब्राह्मणादीनां वसन्तादिभिः संबन्धो गम्यते। अथ यदि शूद्र आदध्यात् न तस्य ऋतुनियमः, इतरेषां तु नियमः इति भावः। तस्मात् कर्मशास्त्रं सर्वाधिकारं सर्वमनुष्याधिकारं स्यात् इति बादरिराचार्यो मन्यते। सर्वस्य अधिकारो यस्मिन् तत् सर्वाधिकारं शास्त्रम्।

**अपि वाऽन्यार्थदर्शनाद् यथाश्रुति प्रतीयेत। २८ ॥**

अग्निहोत्रादिषु वैदिकेषु कर्मसु चतुर्णामपि वर्णानामधिकारः, उत शूद्रभिन्नानां त्रयाणामेवेति विचारे बादरिमतेन शूद्रसहितानां चतुर्णामपि इति पूर्वः पक्षः। तन्निरासार्थः अपिवाशब्दः। यथाश्रुति श्रुतिमनतिक्रम्य अधिकारः प्रतीयेत। अन्यार्थदर्शनाच्च शूद्रवर्जितानां त्रयाणामेव अधिकारो ज्ञायते। आधाने, सामसु, व्रतेषु, अग्न्यायतननिर्माणे प्रक्रमेषु च, शूद्रभिन्ना एव त्रयो वर्णाः श्रूयन्ते। आधानादिवाक्यानि आधानाद्यर्थान्येव न निमित्तार्थानि इति तानि शूद्रविषयात् अन्यार्थानि दृश्यन्ते। तेषु शूद्रभिन्नानामेव ग्रहणात् शूद्रस्याधिकारो नास्तीति ज्ञायते। तत्र आधाने 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति श्रुतिः। 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति सामविषया श्रुतिः। 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति व्रतविषया श्रुतिः। 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः' इति प्रक्रमविषया श्रुतिः।

**निर्देशात्तु पक्षे स्यात्। २९ ॥**

सिद्धान्तिना उक्तं पूर्वपक्षी निराकरोति। 'य एवं विद्वानग्निमाधत्ते' इति सामान्यशास्त्रम्। तेन शूद्रस्य आधानं प्राप्नोति। 'वसन्ते ब्राह्मणः, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति तु ब्राह्मणादीनां निर्देशात् पक्षे ब्राह्मणादिनिमित्ते कालविधानार्थं स्यात्। तथा च ब्राह्मणादीनां नियतः कालः, शूद्रस्य तु न नियतः इति विशेषः। तस्मात् शूद्रस्याप्यधिकारः।

**वैगुण्यान्नेति चेत्। ३० ॥**

सिद्धान्ती शङ्कते। ब्राह्मणादेः बार्हद्गिरादि साम, पयआदि व्रतम्, अष्टादिप्रक्रमाश्च भवन्ति, शूद्रस्य तच्छून्यत्वात् तत्कर्मणो वैगुण्यं स्यात्। वैगुण्यात् वैगुण्यप्राप्तेः न शूद्रस्य कर्म संभवति इति चेत् सिद्धान्ती ब्रूयात्।

**न, काम्यत्वात्। ३१ ॥**

सिद्धान्तिनः शङ्कां पूर्वपक्षी निराकरोति। न वैगुण्यदोषः प्राप्नोति। काम्यत्वात्, कामयिष्यते शूद्रः। 'अभीवर्तं नाम ब्रह्मसाम कं चिद्विशेषमनारभ्य आम्नातम्'। तत् शूद्रः कामयिष्यते। 'चक्षुर्निर्मितं आदधीत' इति अनियतप्रक्रमकमाधानं शूद्रः कामयिष्यते। 'मस्तु शूद्रस्य' इति शूद्रस्य व्रतमुक्तमेव। तत् स कामयिष्यते। तथा च वैगुण्यं न स्यात्। साद्गुण्यसंभवाच्च तस्यापि कर्माधिकारः।

**संस्कारे च तत्प्रधानत्वात्। ३२ ॥**

तत्रैव हेत्वन्तरमाह पूर्वपक्षी। हेत्वन्तरसमुच्चयार्थश्चकारः। व्रतरूपे पुरुषस्य संस्कारे तत्प्रधानत्वात् पुरुषप्रधानत्वात् व्रतभक्षणाभावेऽपि न वैगुण्यम्। सामर्थ्योपजननाय हि पयआदेर्भक्षणम्। यस्य तु पुरुषस्य व्रतभक्षणं विनाऽपि सामर्थ्यम्, स तदनपेक्ष्यैव यागमभिनिर्वर्तयति। तस्मात् व्रताभावेऽपि न वैगुण्यम्। तस्मात् शूद्रस्यापि कर्माधिकारे न विरोधः।

**अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत । ३३ ॥**

पूर्वपक्षनिरासार्थः अपिवाशब्दः । अपशूद्राणाम्, अपगताः शूद्राः येभ्यः तेषां वर्णानाम् आदितस्त्रयाणामेव उपनयनप्रकरणे वेदे निर्देशात्, अपशूद्राणामेव वैदिकं कर्म प्रतीयेत, न शूद्राणाम् । उपनयनोत्तरं वेदाध्ययनम्, तदुत्तरं वेदार्थज्ञानम्, ततः परं वैदिकं कर्म अनुष्ठेयम् । शूद्राणां च उपनयनमेव नास्तीति कुतस्त्यं वैदिकं कर्म । उपनयनप्रकरणे 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्' इति त्रयो वर्णा एव निर्दिष्टाः ।

**गुणार्थित्वान्नेति चेत् । ३४ ॥**

पूर्वपक्षी आह । शूद्रस्य मा भूदुपनयनम्, तथापि कर्मगुणं वेदाध्ययनं शूद्रोऽपि यदा अर्थयिष्यते तदा तस्य गुणार्थित्वात् अध्ययनार्थित्वात् स्वयमुपेत्यैव अध्येष्यते, तेन कर्मसामर्थ्यं तस्य भविष्यति । किमुपनयनेन । गुणार्थित्वात् अध्ययनाभावो न शङ्कितव्यः । इति चेत् पूर्वपक्षी ब्रूयात् ।

**संस्कारस्य तदर्थत्वात् विद्यायां पुरुषश्रुतिः ।३५॥**

सिद्धान्ती आह । उपनयनरूपस्य संस्कारस्य तदर्थत्वात् अध्ययनार्थत्वात् 'वसन्ते ब्राह्मणम्' इत्यादौ ब्राह्मणादिरूपा पुरुषस्य श्रुतिः श्रवणं विद्यायां विद्यानिमित्तमेव सिध्यति । उपनयनमाचार्यकरणप्रयुक्तम् । वेदाध्यापनेन च आचार्यो भवति । तस्मात् वेदाध्ययने ब्राह्मणादयः पुरुषाः श्रुताः । शूद्रस्य तु न श्रुतं वेदाध्ययनम् । अतः अनुपनीतत्वेन अवेदत्वात् असमर्थः शूद्रो नाधिक्रियते कर्मसु ।

**विद्यानिर्देशान्नेति चेत् । ३६ ॥**

शूद्रो विद्यां निर्देक्ष्यति, अनुक्तामपि अध्येष्यते इति **भाष्यम्** । विद्यानिर्देशात् विद्याकल्पनात् इति **सुबोधिनी** । विद्यायाः वेदाध्ययनस्य अनिर्देशात् क्रत्वर्थतया निर्देशस्य अभावात् शूद्रः पुस्तकनिरीक्षणादिना उपायान्तरेण वेदं लब्ध्वा कर्माणि करिष्यति, न च वैगुण्यं भविष्यति इति **कुतूहलम्** । तथाच शूद्रस्यापि विद्यावत्त्वात् कर्माधिकारः इति चेत् पूर्वपक्षी ब्रूयात् ।

**अवैद्यत्वादभावः कर्मणि स्यात् । ३७ ॥**

शूद्रः पुस्तकनिरीक्षणादिना विद्यां लब्ध्वा कर्माणि करिष्यति इति पूर्वपक्षिणा उक्ते सिद्धान्ती आह । विद्या अस्य अस्ति स वैद्यः । शूद्रस्तु अवैद्यः । 'शूद्रेण नाध्येतव्यम्' इति प्रतिषिद्धमस्याध्ययनम् । पुस्तकनिरीक्षणादिना लब्धायामपि विद्यायां फलं न भविष्यति दोषश्च जायेत । तस्मात् शास्त्रतः अवैद्य एव शूद्रः । अवैद्यत्वात् कर्मणि अधिकारस्य अभावः स्यात् । अतः शूद्रस्य नाधिकारः ।

**तथा चान्यार्थदर्शनम् । ३८ ।**

तथा च इत्यस्य 'शूद्रस्य अध्ययनं नास्ति इत्यत्र' इत्यर्थः । अस्मिन् अर्थे अन्यार्थस्य लिङ्गस्य दर्शनं भवति । 'पद्यु ह वै एतत् श्मशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति । 'वेदश्रवणे त्रपुजतुभ्यां श्रोत्रप्रपूरणम्' 'उच्चारणे जिह्वाच्छेदः, धारणे शरीरभेदः' इति च । अस्मात् लिङ्गदर्शनात् शूद्रस्य विद्यायाः अभावः स्पष्टः । विद्याशून्यत्वात् शूद्रस्य अग्निहोत्रादिषु अधिकारस्य अभावः । इति सिद्धान्तः । **के.**

* **'चातुर्वर्ण्यं चरेद् भैक्षम्'** 'भवत्पूर्वं चरेद् भैक्षम्' 'ब्राह्मणेषु चरेद् भैक्षम्' इत्यत्र उपसंहारव्यावर्तितः अभ्यनुज्ञाविधिः । **बाल. पृ. १७.**

* **चातुर्वर्ण्यातिरिक्तस्य** रथकारस्य आधानेऽधिकारः । **भा. ६।१।१२।४४.**

* **चातुर्विद्यधनवत्** अवयवशः संबन्धो भवति ( सूक्तवाके । **सुधा–** यथा च लोके चातुर्विद्येभ्यो धनं देयम् इति चतुर्वेदविद्देयत्वेनोक्तस्य धनस्य एकैकवेदविदे चतुर्थश्चतुर्थो भाग इति अवयवशोऽन्वयः प्रसिद्धः । ) **वा. ३।२।६।१९.**

* **चात्वालमवेक्षमाणाः** क्रौञ्चेन साम्ना स्तुवते महाव्रते । **के.** * **'चात्वाले** कृष्णविषाणां प्रास्यति' अयं प्रतिपत्तिरूपः गुणकर्मविधिः दृष्टार्थः । ( कृष्णविषाणा कृष्णमृगस्य शृङ्गम् ) । **बाल. पृ. १३,** * 'चात्वाले कृष्णविषाणां प्रास्यति' इयं साक्षाद्विनियुक्तप्रतिपाद्यविषयकप्रतिपत्तिः । पृ. २४, इदं प्रधानोत्तरकालं प्रतिपत्तिकर्म । पृ. ८२. * चात्वाले कृष्णविषाणायाः प्रासनं दक्षिणादानोत्तरं ज्योतिष्टोमे । **वि. ४।२।७.** * चात्वाले कृष्णविषाणायाः प्रासनं द्वादशाहे उत्तमाहे दक्षिणानयनोत्तरम् । कृष्णविषाणा च प्रथमाहदीक्षाकालमारभ्य प्रवर्तते । **भा. ११।३।६।१३–१४.** * चात्वाले प्रासनं कृष्णविषाणायाः न प्रयोजकम् । **बाल. पृ. १०७.**



* **चान्द्रमसोऽपि** संवत्सरः ( तस्य च चतुष्पञ्चाशदधिकशतत्रयमिताः दिवसाः ) । **भा. ६।७।१३।३८.** * **चान्द्रमासानामेव** मासानां चातुर्मास्यपर्वसु ग्रहणम्, न तु सावनानाम् । **संकर्ष. ३।१।१८.**

* **चान्द्रायणं** प्रायश्चित्तविशेषो माससाध्यः । तत्र भोजने ग्रासानां वृद्धिः ह्रासो वा क्रियते । तद्भेदाश्च पिपीलिकामध्यम्, यवमध्यम्, मुनिचान्द्रायणम् इत्यादयः । **के.**

* **चार्वाकस्य** शरीरमात्रान्तर्गतात्मवादिनः मतं निरासश्च । आत्मवादः इत्यत्र द्रष्टव्यम् । **वा. २।१।२।५ पृ. ४०१–०२.** * **चार्वाकैकदेशिनः** जातिः नास्त्येवेति वदन्ति । **मणि. पृ. २२,** * चार्वाकैकदेशिनः स्वलक्षणरूपशुद्धविषयकमेव निर्विकल्पकं प्रमा इति वदन्ति । पृ. २२. * **चार्वाकमतम्** । आश्रीयतां वा सुरगुरोर्दर्शनम्, व्यवहारमात्रमेवेदं वेदत्रयाभिहितं पश्यामः । प्राज्ञैः लोकयात्रासिद्ध्यर्थं सुप्रतिबन्धं अनुपाल्यमानमिति । दृष्टश्चायमर्थः यत् 'प्राज्ञैः ऋत्विजः उपजीव्यन्ते' इति । **बृहती. पृ. २०८** । संव्यवहारार्थमेवेदं अदृष्टप्रयोजनरहितं वेदत्रयाभिहितमर्थं सुप्रतिबन्धं सुप्रयुक्तं डम्भात्मकम् अनुपाल्यमानं पश्याम इति । यथा आहुः 'अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् । बुद्धिपौरुषहीनानां जीविकेति बृहस्पतिः ॥' इति । **ऋजु.**

**चालनीन्यायः** । यथा चालनी सारं परित्यज्य असारमात्रं गृह्णाति, तथा प्रकृतेऽपि । किञ्च, चालनीभ्रामणे तत्स्थतण्डुलादीनां तच्छिद्रद्वारा सर्वेषां यथा पतनम्, एवं क्वचित्स्थितवस्तूनां सर्वेषां लक्षणादिबहिर्भावो यत्र संभाव्यते, तत्रास्य प्रवृत्तिः । यथा—व्यापकतालक्षणे साध्यप्रतियोगिताकाभावप्रवेशे महानसीयवह्न्यधिकरणे पर्वतीयवह्न्यभावस्य सत्त्वेन वह्निप्रतियोगिकाभावस्य तत्तदधिकरणे सत्त्वात् सर्वेषां वह्नीनां व्यापकतालक्षणबहिर्भाव इति । **साहस्री. ३२७.**

* **'चिकीर्षया च संयोगात्'** इत्यत्र सौमिकवेदेर्देशत्वेन अङ्गप्रधानार्थत्वस्य वक्ष्यमाणत्वात् । **कौ. २।१।५।१२ पृ. ८४.** * चिकीर्षया च संयोगात् ( ३।७।३।७ ) इत्यधिकरणे 'इयति शक्ष्यामहेऽस्यां कर्तुम्' इत्ययम् 'षट्त्रिंशत्प्रक्रमा' इति सौमिकमहावेदिमानविधेर्वाक्यशेषः देशविधिसरूपोऽर्थवाद इत्युक्तं **भट्टसोमेश्वरेण** । **बाल. पृ. ५७.**

**चिकीर्षया च संयोगात् । ३।७।३।७ ॥**

ज्योतिष्टोमे वेदिः आम्नाता 'षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंशज्जघनेन, इयति शक्ष्यामहे' इति । इयं वेदिः प्रधानार्थैव न अङ्गार्था इति पूर्वः पक्षः । तत्रेदं सूत्रम् । प्रधानस्य इति पदं पूर्वसूत्रादनुवर्तते । महावेदिः इति पदं तु विषयवाक्यानुसारेण अध्याह्रियते । ज्योतिष्टोमे महावेदिः प्रधानस्यैव स्यात् । कुतः ? चिकीर्षया संयोगात्, 'समानकर्तृकेषु तुमुन्' ( पा० ३।३।१५८ ) इच्छाऽर्थेषु एककर्तृकेषु उपपदेषु धातोः तुमुन् स्यात् इति सूत्रेण इच्छाऽर्थविहिततुमुन्-प्रत्ययान्तेन कर्तुम् इति पदेन चिकीर्षा उक्ता । तद्घटितेन 'इयति शक्ष्यामहे अस्यां कर्तुम्' इति वाक्यस्य श्रवणात्, प्रधानमात्रस्य च फलसाधनत्वेन चिकीर्षितत्वात् । तस्मात् फलप्रधानमात्रार्था वेदिः इति पूर्वः पक्षः । पूर्वसूत्रे फलसंयोगात् इति हेतुरुक्तः, तद्दृष्टान्तार्थः अत्र चशब्दः ।

**तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात् । ९ ॥**

सूत्रेण प्राप्तं पूर्वपक्षं तुशब्देन निरस्यन् सिद्धान्तमाह । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति या फलस्य श्रुतिः, सा तद्युक्ते अङ्गयुक्ते प्रधाने सति । साङ्गात् फलं श्रूयते, न प्रधानमात्रादित्यर्थः । तस्मात् साङ्गस्य फलवत्त्वात् सर्वचिकीर्षा अङ्गानां प्रधानस्य चेति सर्वेषां चिकीर्षा कर्तुमिच्छा 'इयति शक्ष्यामहेऽस्यां कर्तुम्' इति वाक्येन उक्ता स्यात् । तस्मात् साङ्गप्रधानार्था महावेदिः इति सिद्धान्तः ।

**अत्र सुधा—** अनुकृष्टया प्रधानोक्त्या स्वार्थप्रतियोगितया उपस्थापितस्य अङ्गस्य तच्छब्देन परामर्शात् ज्योतिष्टोमेन इति तृतीयाश्रुत्या करणीभूतस्य ज्योति-

ष्टोमस्य फलभावनाऽन्वयोक्तेः करणत्वस्य च आपेक्षिकसाधनत्वातिशयाख्यसाधकतमत्वरूपत्वेन अपकृष्टसाधकाङ्गापेक्षत्वात् अङ्गयुक्ते प्रधाने फलश्रुतिः, तस्मात् अङ्गस्य साक्षात् फलानन्वयेऽपि फलान्वयिप्रधानद्वारा फलान्वयात्, सर्वस्य प्रधानस्य अङ्गस्य च चिकीर्षा संभवति इति चिकीर्षासंयोगस्य अङ्गव्यावृत्तिहेतोः अङ्गेऽपि सद्भावात् अव्यावर्तकता । अत्र चिकीर्षासंयोगस्य परिमाणस्तुत्यर्थत्वेन वेदेः चिकीर्षितार्थत्वे प्रामाण्याभावात् लिङ्गमात्रत्वावगतेः प्रधानमात्रार्थत्वपूर्वपक्षनिरासार्थेन तुशब्देन प्रयोगाङ्गत्वाख्यः न्यायः एव मुख्यसिद्धान्तयुक्तित्वेन आक्षिप्तः । पृ. ३।७,८. के.

चिकीर्षान्यायः । सौमिकवेदेः अङ्गप्रधानार्थता ॥

**चिकीर्षया च संयोगात् । ३।७।३।७ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिरग्रेण, त्रिंशज्जघनेन इयति शक्ष्यामहे' इति । तत्र संदेहः किमेषा वेदिः अङ्गप्रधानार्था, उत प्रधानार्थेति । किं तावत् प्राप्तम् ? चिकीर्षया च संयोगात् प्रधानार्थेति । का चिकीर्षा ? इयति शक्ष्यामहे इति । यच्चिकीर्षितम्, तस्यार्थेन एषा श्रूयते, शक्ष्यामहेऽस्यां कर्तुमिति । प्रधानं च तस्य चिकीर्षितम्, नाङ्गानि । प्रधानं हि फलवत् नाङ्गानि । आह, यदि अङ्गानि न चिकीर्षितानि, किमर्थं क्रियन्ते इति । उच्यते । अचिकीर्षितान्यपि अङ्गानि क्रियन्ते । यद्यपि तानि न चिकीर्ष्यन्ते, तथापि तैरचिकीर्षितैः अन्यच्चिकीर्ष्यते । तस्मात्तानि क्रियन्ते इति । यच्चिकीर्षितं तस्य वेदिः । तस्मात् प्रधानार्थेति । स्थितं तावदपर्यवसितम् ।

**वा**— पूर्वेणैव न्यायेन सौमिकी वेदिः केवलप्रधानार्था विज्ञायते । इयति शक्ष्यामहेऽस्यां कर्तुमिति यच्चिकीर्षितं तदुद्देशेनैव एवमभिधीयते । फलवच्चिकीर्षितम्, नाङ्गानि । अचिकीर्षितत्वे सति चिकीर्षितसिद्ध्यर्थत्वेन करणात् । एवमपर्यवसिते चिन्ताऽन्तरं तावत् प्रस्तौति ।

**तद्युक्ते तु फलश्रुतिस्तस्मात् सर्वचिकीर्षा स्यात् । ९ ॥**

**भाष्यम्**— स्थितादुत्तरम् । यदुक्तं प्रधानं चिकीर्षितं नाङ्गानि, तस्मात् प्रधानस्य वेदिरिति, तन्न । तद्युक्ते फलश्रुतिः । साङ्गात् फलं श्रूयते । तस्मात् साङ्गं चिकीर्षितम् । यद्यपि अङ्गानि न चिकीर्षितानि, तथापि वेद्यां कर्तव्यानि । अन्यथा न साङ्गं वेद्यां कृतं भवति ।

**वा**— वेदेः देशविशेषात्मकत्वात् देशकालयोश्च साङ्गप्रधानप्रयोगविषयत्वावधारणात् सर्वार्थत्वम् । योऽपि चिकीर्षासंयोगः, सोऽपि फलप्राप्तेः प्रयोगाधीनत्वात् तद्विषयः एव ज्ञायते । तस्मात् साङ्गप्रधानार्थेयम् इत्यवधारणात् अङ्गार्थाऽपि स्यात् ! एवं च सति अग्नीषोमीयादिविकारेषु निरूढपशवादिषु कर्तव्या ।

**सोम**— यथा प्रधानमात्रस्य सफलत्वात् फलसिद्ध्युपयोगिनां वपनादीनां प्रधानमात्रार्थत्वम्, तथा तत एव हेतोः प्रधानमात्रार्थस्यैव चिकीर्षितत्वात् तत्संयुक्ता वेदिरपि तन्मात्रार्था इति प्रत्यवस्थानात् संगतिः ।

**वि**—'मुख्यार्था सौमिकी वेदिरुभयार्थोत, मुख्यगा । चिकीर्षितत्वान्मुख्यस्य वेद्यां तत्कृतिसंभवात् ॥, मुख्यपौष्कल्यहेतुत्वात् तदङ्गं च चिकीर्षितम् । मुख्यवत् तेन तद्वेदिरङ्गेष्वप्युपकारिणी ॥'

**भाट्ट**— सोमे षट्त्रिंशत्प्रक्रमादिपरिमाणां वेदिं विधाय श्रुतम् 'इयति शक्ष्यामहेऽस्यां कर्तुम्' इति । सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रसज्यते, तथापि दीक्षादक्षिणन्यायेन उक्तवचनात् प्रधानमात्रार्था । 'कर्तुम्' इति हि तुमुना इच्छार्थकेन चिकीर्षितार्थत्वप्रतीतेः, प्रधानस्यैव चिकीर्षितत्वात्, अङ्गानां च अचिकीर्षितानाम् अपि चिकीर्षितप्रधानार्थत्वेनैव अनुष्ठानात्, प्रधानमात्रार्थैव वेदिः । (उच्यते) यद्यपि चिकीर्षितार्था वेदिः, तथापि साङ्गस्यैव फलसामग्रीत्वेन चिकीर्षितत्वात् अङ्गप्रधानार्थैव सा । वस्तुतस्तु देशत्वात् तस्याः प्रकरणादेव अङ्गप्रधानार्थत्वासिद्धेः अर्थवाद एवायम् 'इयति शक्ष्यामहे' इति । अत एव 'शक्ष्यामहे' इति वचनात् कर्तृप्रचारमात्रार्थत्वमङ्गीकृत्य अङ्गप्रधानार्थत्वमपि अपास्तम् । अतः सर्वार्थाया वेदेः अग्नीषोमीयादौ प्राकृतहविरासादनार्थवेदिबाधकत्वम्, तद्विकृतौ च अतिदेशः सिद्धो भवति । यत्तु द्वादशे प्राकृतवेदेः प्रसङ्ग इति वक्ष्यते, तत् कर्तृप्रचारमात्रार्थत्वं कृत्वाचिन्तया ।



**मण्डन**— 'साङ्गार्था सौमिकी वेदिः ।'

**शंकर**— मण्डनवत् ।

* **चिकीर्षान्यायेन** (३।७।३।७,९) साङ्गप्रधानप्रयोगविषयत्वम् (दक्षिणानाम्) इति सर्वार्थत्वप्रसक्तिः । वा. ३।७।५।११.

* चितिः नाम लाङ्गलेन कृष्टे व्याममात्रे भूप्रदेशे नानाविधाभिरिष्टकाभिः पक्ष्याद्याकारेण वेदिर्निष्पाद्यते सा । तत्रापि प्रत्येकः स्तरः चितिः इत्युच्यते प्रथमा चितिः, द्वितीया चितिः इत्यादि । (एवं पञ्च चितयो भवन्ति । एकैकचितेरुपरि च पुरीषम् [ चिखल इति भाषा ] भवति । एवं पञ्च चितयः, पञ्च च पुरीषाणि भवन्ति ) । वि.४।४।७. * चितिः मध्यमा प्रत्यक्षब्राह्मणोक्तानाम् इष्टकानामाश्रयः । भा. ५।३।७।१९. * चितिः षष्ठी नैमित्तिकी प्रतिष्ठाऽर्था । ४।४।७।१४–१८. * चितयो नित्याः पञ्च । प्रतिष्ठाऽभावनिमित्ता तु षष्ठी चितिः । वि. ४।४।७. * **चितीनां** पञ्चधा विभागः पुरीषव्यवधानेन । ( पुरीषं नाम स्तरयोःस्तरयोर्मध्ये स्तरसंधानार्था स्थाप्यमाना आर्द्रा मृत् ) । संकर्ष. २।१।१८.

चित्यधिकरणम् । षष्ठी चितिर्नैमित्तिकी ॥

**षट्चितिः पूर्ववत्त्वात् ४।४।७।१४ ॥**

**भाष्यम्**— अस्त्यग्निः 'य एवं विद्वानग्निं चिनुते' इति । तत्र श्रूयते 'संवत्सरो वा एनं प्रतिष्ठायै नुदति, योऽग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते' इति । तत्र संदेहः किं योऽयं नित्य एवाग्निः, स एवायं षट्चितिक उच्यते, उत एकचितिको नैमित्तिक इति । किं प्राप्तम् ? तस्मिन्नेव नित्येऽग्नौ षष्ठी चितिरेषा विधीयते । नित्यायामेव षष्ठ्यां एषोऽर्थवादः । योऽपि न प्रतिष्ठाऽर्हः सोऽपि अनया षष्ठ्या चित्या प्रतिष्ठातुमर्हति इति चितिप्रशंसा । किमर्थमेवं वर्ण्यते ? षष्ठीशब्दश्रवणात् । षण्णां हि पूरणी षष्ठी । एकस्यां हि चितौ षष्ठीशब्दो न सामञ्जस्येन स्यात् । तस्मात् षट्चितिकोऽग्निर्नित्य इति ।

**ताभिश्च तुल्यसंख्यानात् । १५ ॥**

**भाष्यम्**— ताभिश्च पूर्वाभिः अस्यास्तुल्यवत् प्रसंख्यानं भवति । कथम् ? 'इयं वाव प्रथमा चितिः, ओषधयः पुरीषम् । अन्तरिक्षं वाव द्वितीया चितिः, वयांसि पुरीषम् । असौ वाव तृतीया चितिः, नक्षत्राणि पुरीषम् । यज्ञो वाव चतुर्थी चितिः, दक्षिणा पुरीषम् । यजमानो वाव पञ्चमी चितिः, प्रजाः पुरीषम् । संवत्सरो वाव षष्ठी चितिः, ऋतवः पुरीषम्' इति । तुल्यानां च तुल्यवदनुक्रमणं भवति यथा 'देवा ऋषयो गन्धर्वास्तेऽन्यत आसन्, असुरा रक्षांसि पिशाचाः तेऽन्यत आसन्' इति । तुल्यवच्चामूषां चितीनामनुक्रमणमनया षष्ठ्या, तस्मादेतया तत्तुल्यया भवितव्यम् । यदि च यस्मिन्नेव क्रतौ तास्तस्मिन्नेवैषा, तत एताभिस्तुल्या । तस्मादपि स एव नित्योऽग्निः षट्चितिक इति ।

**अर्थवादोपपत्तेश्च । १६ ॥**

**भाष्यम्**—अर्थवादश्च भवति 'षट् चितयो भवन्ति, षट् पुरीषाणि, तानि द्वादश संपद्यन्ते, द्वादश मासाः संवत्सरः, संवत्सरे एव प्रतितिष्ठति' इति । तत् एकचितिके अग्नौ न सामञ्जस्येन वचनं भवति । तस्मात् नित्य एव षट्चितिकः ।

**एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन । १७ ॥**

**भाष्यम्**— एकचितिर्वा नैमित्तिकः स्यात् । कुतः ? अपवृक्ते हि यागे चोद्यते अप्रतिष्ठया निमित्तेन । यो न प्रतितिष्ठति तस्य एषा चितिः उच्यते नैमित्तिकी । सा न नित्या भवितुमर्हति । अपिच अपवृक्ते यागे चोद्यते सा, न वर्तमाने भवितुमर्हति । ननु चित्वा इति चयने निर्वृत्ते, न यागे । उच्यते । नैतत् पदार्थे निर्वृत्ते चित्वा इति, किं तर्हि ? वाक्यार्थे । अग्निं चित्वा इति अग्नेश्चयनेन अर्थमभिनिर्वर्त्य इति । कृते च यागे चयनेनाग्नेरर्थो निर्वर्तितो भवति, नान्यथा । षष्ठीशब्दश्च पञ्च पूर्वाश्चितय उक्ताः, ता अपेक्ष्य अवकल्पिष्यते । तस्मात् निर्वृत्ते यागे इत्युच्यते । तस्मात् वचनात् एकचितिरग्निः ।

**विप्रतिषेधात् ताभिः समानसंख्यत्वम् । १८ ॥**

**भाष्यम्**— द्वयोः सूत्रयोरिदमुत्तरम् 'ताभिश्च तुल्यसंख्यानात्, अर्थवादोपपत्तेश्च' इति । ताभिर्नित्याभिः समानसंख्यत्वं भविष्यति । अर्थवादश्चोपपत्स्यते । पञ्च पूर्वाश्चितयो भवन्ति, याभिरसौ चितिभिः न प्रतितिष्ठति ।

अथेयं षष्ठी प्रतिष्ठाऽर्थमिति । ताश्च सपुरीषाः अपेक्ष्य द्वादशत्वेन संस्तवो भविष्यति । विप्रतिषेधात् एकस्य षट्संख्याया द्वादशसंख्यायाश्चेति । अतुल्यानामपि तुल्यवदनुक्रमणं भवति, यथा 'देवा मनुष्याः पितरः तेऽन्यत आसन्' इति ।

शा—तत्र '**पूरणप्रत्ययो न स्यात् षट्संख्यापूरणाद्विना । पञ्चभिः सहिता चैषा पूरयेत् तां न केवला ॥**' नैवम् '**यच्छन्दो ह्यप्रतिष्ठायाः स्पष्टमाह निमित्तताम् । अभिधानक्रियाऽपेक्षं षट्संख्यापूरणं भवेत् ॥**'

**सोम**— आतिदेशिकी **संगतिः** । **सूत्रार्थस्तु**—षट्चितिकोऽग्निः पूर्ववत् दधिग्रहवत् नित्यः स्यात् । यद्वा पूर्ववत् पञ्चचितिवत्, पञ्च चितय इव षष्ठ्यपि चितिः नित्या स्यादिति यावत् इति ।

**वि**—'नित्या षष्ठी चितिर्नो वा, पञ्चापेक्षत्वतोऽग्रिमः ।, अपवृक्तावप्रतिष्ठानिमित्तीकृतितोऽन्तिमः ॥'

**भाट्ट**— तत्रैव 'योऽग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते' इति श्रुता षष्ठी चितिरपि उपक्रमस्थकर्तृसमानाधिकरणयच्छन्दबलेन अप्रतिष्ठायाः निमित्तत्वावगतेः नैमित्तिकी एव । यस्तूपसंहारे षष्ठीम् इति षण्णां पूरणार्थकः प्रत्ययः, सोऽभिधानापेक्षः, न त्वनुष्ठानापेक्षः । पञ्च चितयः पूर्वमभिहिताः, इदानीमियं षष्ठी अभिधीयते इति । तस्मात् अग्निचयनोत्तरम् अप्रतिष्ठायां निमित्ते एकैव चितिरदृष्टार्था, चयनाङ्गतया प्रयोगभेदेन प्रतिष्ठाफलार्थे वा विधीयते ।

**मण्डन**— 'षट्चितिकोऽग्निरयं नहि नित्यः ।'

**शंकर**— 'षष्ठी नैमित्तिकी चितिः ।'

⧗ **'चित्तं च चित्तिश्च' इत्यादौ न चतुर्थ्या विपरिणामः ॥**'

'चित्तं च चित्तिश्चाकूतं चाकूतिश्च' इत्यादयो जयाः । 'इह धृतिः स्वाहेह विधृतिः स्वाहा' इत्यादयो धृतिमन्त्राश्च । एषु प्रथमान्तशब्दा होमार्थं प्रयोगकाले चतुर्थ्यन्तत्वेन विपरिणमयितव्याः । 'स्वाहाकारेण वषट्कारेण वा देवेभ्योऽन्नं प्रदीयते' इति श्रुत्या अनुपात्तस्वाहाकारेषु स्वाहाकारस्येव 'नमः स्वस्ति स्वाहा' इति स्मृत्या चतुर्थ्या अपि अध्याहरणीयत्वात् । अत एव 'चित्ताय स्वाहा' इत्यादिरेव शाखाऽन्तरे पाठः । इति **प्राप्ते**, छिनद्मीत्यादेरिव अश्रुतपदस्य पल्लवत्वसंभवेऽपि श्रुतविभक्त्याः परित्यागे आम्नायत्वस्यैव भङ्गापत्तेः छन्दसि वहुलस्मृतेश्च यथासमाम्नानमेव प्रयोगः । अत एव 'धृतिहोमेन प्रयुञ्ज्याद्धोनामसु तथाऽष्टसु चतुर्थीम्' इति सूत्रमेतदधिकरणन्यायसिद्धार्थनिबन्धनम् । **संकर्ष**. २।४।२१.

⧗ **'चित्ताय स्वाहा चित्तये स्वाहा' इत्यादिभिः शाखाऽन्तरीयमन्त्रैः 'चित्तं च स्वाहा' इत्यादीनां न समुच्चयः ॥**

शाखाऽन्तरीयमन्त्राणां विभक्तिभेदात् चकाराभावाच्च भिन्नानुपूर्वीकतया मन्त्रभेदात् मन्त्रस्वरूपस्य यूपाहवनीयवत् अलौकिकत्वात् अदृष्टार्थानां समुच्चयः । इति **प्राप्ते**, मन्त्राणामलौकिकशब्दत्वेऽपि 'जयान् जुहुयात्' इत्यनेन होमकरणत्वेन विनियोगात् दृष्टार्थतयैकार्थत्वात् विकल्पः । **संकर्ष**. २।४।२२.

* **'चित्पतिस्त्वा पुनातु**, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इत्यत्र अच्छिद्रेण इत्यादेः पुनातुद्वयेन प्रत्येकम् अनुषङ्गः कर्तव्यः । **भा**. २।१।१६।४८.

* '**चित्रमगोपेन** दोहो गवाम्' इयं कर्मणिषष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । (गोपभिन्नः गाः दोग्धुं न शक्नोति, दुर्दोहत्वात् गवाम् । अतस्तथाभावे चित्रमाश्चर्यम्) । **बाल**. पृ. ४५.

* **चित्र** इद् राजा राजका इदन्यके यके सरस्वतीमनु । पर्जन्य इव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥' **ऋसं**. ८।२१।१८। हे राजकाः चित्रो नाम राजा सरस्वतीदेशे अन्यस्मिंश्च यस्मिन्कस्मिंश्चित् पुण्यदेशे सहस्रं गवामयुतानि दत्तवान् । **सु**. पृ. ६७३.

⧗ **चित्राङ्गनान्यायः** । यथा चित्ररूपा अङ्गना स्त्री दृश्यमाना न चुम्बनालिङ्गनादिफलं जनयितुं शक्नोति, तथा निरहंकारतया तत्त्वविदा कृतान्यपि विहितनिषिद्धानि कर्माणि स्वफलजन्यदेहान्तरमारब्धुं न क्षमन्ते । अत एव



तत्त्ववित् स्वकृतकर्मफलेन न युज्यते इति भाव इति वदन्ति । **साहस्री**. २८९.

⧗ **चित्रानलन्यायः** । चित्रगतः अनलो यथा न दहति, तथा जीवन्मुक्तगतः संसारः तं न तापयति । **साहस्री**. २९१.

⧗ **चित्रामृतन्यायः** । चित्रानलन्यायवत् अर्थः । अयं सुखविषये इति विशेषः । **साहस्री**. २९०.

⧗ **चित्रपटन्यायः** । उक्तं च पञ्चदश्यां चित्रदीपे 'यथा चित्रपटे दृष्टं ह्यवस्थानां चतुष्टयम् । परमात्मनि विज्ञेयं तथाऽवस्थाचतुष्टयम् । १ ॥ यथा धौतो घट्टितो हि लाञ्छितो रञ्जितः पटः । चिदन्तर्यामी सूत्रात्मा विराडात्मा तथेर्यते । २ ॥ स्वतः शुभ्रोऽत्र धौतः स्याद् घट्टितोऽन्नविलेपनात् । मष्याकारैर्लाञ्छितः स्याद् रञ्जितो वर्णपूरणात् । ३ ॥' इति । **साहस्री**. २८५.

* **चित्रा पौर्णमासी** । 'मुखं वा एतत् संवत्सरस्य, यत् चित्रा पौर्णमासी' । **वि**. ६।५।१०. * **'चित्रया यजेत'** इति चित्रेष्टिरुक्ता चित्राशब्दस्य यजिसामानाधिकरण्येन यागनामधेयत्वात् । चित्रत्वं च हविर्वैचित्र्यात् । तत्र 'दधि मधु घृतमापो धानास्तण्डुलाः, तत् संसृष्टं प्राजापत्यम्' इति विस्तरे वाक्यपाठः । १।४।३ । 'दधि मधु घृतं पयो धाना उदकं तण्डुलाः' इति पाठः शास्त्रदीपिकायाम् । 'दधि मधु पयो घृतमुदकं धानास्तण्डुलाः' इति भाट्टकौस्तुभे च (१।४।३।३ पृ. १७६.) पाठः । **के**. * 'चित्रया यजेत' 'त्रिवृद्बहिष्पवमानम्' 'पञ्चदशानि आज्यानि' 'सप्तदशानि पृष्ठानि' इति चित्रा–पवमान–आज्य–पृष्ठ–शब्दाः कर्मनामधेयानि । **भा**. १।४।२।३. * 'चित्रया यजेत पशुकामः' । अत्र पशुफलम् असति प्रतिबन्धे ऐहिकम्, सति प्रतिबन्धे तु आमुष्मिकम् । **वि**. ४।३।१२.

⧗ **चित्राऽधिकरणम्** । चित्राऽऽज्याधिकरणम् । चित्रान्यायः । चित्रेष्टिन्यायः । चित्रादिपदं यागनामधेयम् ॥

**यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः । १।४।२।३ ॥**

**भाष्यम्**— 'चित्रया यजेत पशुकामः' 'त्रिवृद् बहिष्पवमानम्' 'पञ्चदशानि आज्यानि' 'सप्तदशानि पृष्ठानि' इत्युदाहरणम् । (चित्रा नाम काचित् इष्टिः । बहिष्पवमानं नाम अग्निष्टोमे प्रातःसवने स्तोत्रविशेषः । पञ्चदशानि पञ्चदशस्तोमकानि । एवं सप्तदशानि सप्तदशस्तोमकानि) किं चित्राशब्दः पवमानशब्दः आज्यशब्दः पृष्ठशब्दश्च गुणविधयः, उत कर्मनामधेयानि इति संशयः । प्रसिद्धेः, अर्थवत्त्वात्, प्रवृत्तिविशेषकरत्वाच्च गुणविधयः । न च एते कर्मणि प्रसिद्धाः । न च अमी यौगिकाः । जातिशब्दा हि एते । चित्रा इति च गुणशब्दः । 'चित्रया यजेत' इति च यागानुवादः । विज्ञातत्वात् न यागविधिः । गुणे फलकल्पनायां यजतेर्न विवक्षा । तथा 'आज्यानि भवन्ति' 'पृष्ठानि भवन्ति' इति च । गुणविधिकल्पनायामपि न लक्षणा । तस्मात् गुणविधयः, इत्येवं प्राप्तम् । **एवं प्राप्ते, ब्रूमः** । यस्मिन् गुणविधिः नामधेयम् इति संदिग्धे गुणः अपर उपदिश्यते, प्रधानेन कर्मणा तस्य संबन्धः, कर्मनामधेयमित्यर्थः । गुणविधौ हि सति वाक्यं भिद्येत । पुंपशौ प्राप्ते स्त्रीपशुः, पशवः फलम्, चित्रो गुणः, इति न शक्यमेकेन वाक्येन विधातुम् । चित्रो गुणो विधीयमानः स्त्रियां विधीयेत, नासौ अग्नीषोमीये । पशुकामे च विधीयेत, सोऽपि नाग्नीषोमीये । तथा 'पञ्चदशानि आज्यानि भवन्ति' इति आज्येषु पञ्चदशता । न च अविहितानि स्तोत्रेषु आज्यानि भवन्ति । न च अन्यत् विधायकं वाक्यम् । तच्च एतत् आज्यानि विदध्यात्, विहितेषु च पञ्चदशताम् । गम्यते च पञ्चदशतायाः आज्यानां च संबन्धः । स्तोत्रसंबन्धश्च आज्यानामविज्ञातः पञ्चदशतासंबन्धश्च । द्वावेतौ अर्थौ एकवाक्यस्य अशक्यौ विधातुम् । अथ तु कर्मनामधेयम्, नैष विरोधो भवति । केवलः संख्यासंबन्धः तदानीं विधीयते । अपिच आज्यानि स्तोत्राणि इत्यनेन शब्देन लक्षणयैव गुणो विधीयेत । अतः कर्मणां नामधेयानि वाक्यान्तरैः 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इत्येवमादिभिः विहितानाम् । यत्तु अप्रसिद्धं कर्मणां नामधेयमिति,

अवयवप्रसिद्धया । आजिगमनात् आज्यानि । कथमाजिगमनमिति ? अर्थवादवचनात् ' यदाजिमीयुः, तदाज्यानामाज्यत्वम्' इति । स्पर्शवचनात् पृष्ठानि । पवमानार्थमन्त्रकत्वात् बहिःसंबन्धाच्च ( सौमिकवेदेः बहिर्देशसंबन्धात् ) बहिष्पवमानम् । ' दधि मधु पयो घृतं धानाः तण्डुला उदकं तत् संसृष्टं प्राजापत्यम् ' इति नानाविधद्रव्यत्वात् चित्रा । तस्मात् एवंजातीयकानि कर्मनामधेयानीति ।

अथ कस्मात् पञ्चदशसंख्याविशिष्टानि आज्यानि स्तोत्रकर्मसु विधीयन्ते ? विशिष्टानां वाचकस्य शब्दस्याभावात् । **ननु** पदद्वयमिदं वाचकं भविष्यति ' पञ्चदशानि आज्यानि ' इति विशिष्टानाम्, तत् ( पदद्वयं ) एतेषु स्तोत्रेषु विधास्यति । **नैतत्** पदद्वयमपि विधायकम् । एकमत्र विधायकम्, एकमुद्देशकम् । उभयस्मिन् विधायके परस्परेण संबन्धो न स्यात् । अविधायके स्तोत्रसंबन्धो न विधीयते । न चात्र एकं पदं विशेषणं प्रति उद्देशकम्, स्तोत्रं प्रति ( च ) विधायकं भवितुमर्हति । वचनव्यक्तिभेदात् । अतोऽयम् असमाधिः ।

वा-- इदानीमयौगिकेषु व्रीह्यादिवत् लोकरूढेषु जातिगुणशब्देषु चिन्ता । नहि आनुमानिककरणत्वानुरोधेन प्रत्यक्षप्रसिद्धयभावः संभवति इति पूर्वाधिकरणेन असिद्धिः । ननु ' आज्यैः स्तुवते ' ' पृष्ठैः स्तुवते ' ' बहिष्पवमानेन स्तुवते ' इति उत्पत्तिवाक्यत्वात् एतानि उदाहर्तव्यानि । तथाहि, **' उत्पत्तौ नामधेयं वा गुणो वाऽप्यवधारितः । व्यवहाराङ्गतां याति सैवोदाहरणक्षमा ॥ '** सा तु ( उत्पत्तिः ) नोदाहृता सूत्रकारेण ' यस्मिन् गुणोपदेशः ' इति गुणवाक्यस्य आश्रितत्वात् । अथ किमर्थं तेनैव तत् आश्रितम् ? यत्रक्कचन प्रतिपादिते फलाविशेषात् । पूर्वपक्षनिराकरणहेतुर्वा वाक्यभेदः तत्र संभवति इत्युदाहृतम् । ( स्वमतेन अन्यथा परिहरति- ) अथवा उत्पत्तिवाक्यस्थस्य आज्यादिपदस्य पक्षद्वयेऽपि साकाङ्क्षत्वात् एकस्यापि निश्चयहेतुर्नास्ति, इति अन्यतः सिद्धयपेक्षणात् अनुदाहरणत्वम् । घृतवाचित्वात् तावत् न स्तोत्रनामत्वं विज्ञायते । ' यानि आज्यानि, तैः स्तुवते ' इति च श्रूयते, तत्र कान्येव नामानि, कथं वा तेनाभिधीयन्ते इति सहापि उत्पत्तिवाक्येन अन्यतः सिद्धिरवासन्या । उत्पत्तिवाक्यस्थितमेव च आज्यादिपदं यथा रूढिं परित्यज्य स्तुतिनामतां प्रतिपद्यते, तथा हेतुर्वाच्यः इत्यपेक्षा । गुणविधित्वेऽपि घृतस्य स्तुतौ अकरणत्वात् तत्संबद्धमन्त्रलक्षणया अवश्यं संबन्धकृत् वाक्यमपेक्षणीयम्, इह विधाने मत्वर्थलक्षणाप्रसङ्गात् । अनुवादत्वे तु नायं दोषो भवति । तेन स्तोत्राणामपि आज्यवत्ता अन्यत एव लब्धव्या, इति तदुभयपक्षेऽपि सापेक्षता । ततश्च ' स्तुवते ' इत्येतावन्मात्रमत्र विवक्षितम्, इति आज्यादिशब्दः अन्यतो निर्णीयते ।

पवमानशब्दस्तु यौगिकत्वात् पूर्वाधिकरणसिद्धेः अनुदाहरणमिति **के चित्** । **अपरे तु** मन्यन्ते, न उद्भिदादिवत् पवनक्रियां प्रति कर्तृत्वं स्तोत्रस्य उपपद्यते, सोमो हि तत्र पवते । ततश्च न कर्मणि अवयवप्रसिद्धिरस्ति, इति पवमानार्थमन्त्रकत्वात् लक्षितलक्षणा मत्वर्थलक्षणातो दुर्बलतरा, इति वाक्यभेदेनैव सिद्धेः उदाहरणम् । ( पूर्वपक्षभाष्यं व्याचष्टे- ) तत्र प्रसिद्धयादयः पूर्वपक्षे पूर्ववदेव व्याख्येयाः । चित्रा इति उत्तरपक्षे ( भाष्यकारेण ) द्योतनात् अग्नीषोमीये गुणविधिः इष्टः । अत्र कारणमुच्यते । **' चित्रत्वस्त्रीत्वयोगो हि प्राणिजातौ स्वभावतः । तेनैते प्राणियागाङ्गं प्रकृतिं दैक्षमाश्रिते ॥ '** ( दैक्षः अग्नीषोमीयः ) । स्त्रीत्वादिविभागो हि प्राणिव्यतिरिक्तेऽर्थे शब्दानुकरणमात्रेण विज्ञायते, पश्वादिषु तु अर्थरूपेण । प्रकृतं च दध्यादिद्रव्यात्मकत्वात् नैतद्योग्यं कर्म इत्यनुकृष्यमाणे ( चित्रत्वस्त्रीत्वे ) वाक्यात् यागमात्रसंबन्धिनी ( नपुंसकद्विवचनमिदम् ) प्रसक्ते, सामर्थ्यात् प्राणियागमाकाङ्क्षन्ती ' प्रकृतौ वा द्विरुक्तत्वात् ' इत्यनेन न्यायेन सर्वप्राणियागपरमप्रकृतिम् ( सर्वेषां प्राणियागानां परमां प्रकृतिं प्रकृतिभूतम् ) अग्नीषोमीयं गच्छतः । तत्र यद्यपि उत्पत्तिवाक्यशिष्टं कृष्णसारङ्गलोहितसारङ्गादि गुणान्तरं पुंस्त्वं च बाधकम् संभाव्यते ( उत्पत्तिवाक्यशिष्टं पुंस्त्वं गुणान्तरं च बाधकम् इत्यन्वयः ), तथापि पूर्ववदेव बाधविकल्पौ वक्तव्यौ ( फले विधौ उद्भिदा इव सोमस्य बाधः, यागे तु विधौ



विकल्पः इति पूर्ववच्छब्दस्यार्थः ) । सासदश्यपूर्वपक्षन्यायश्चात्र द्रष्टव्यः ( ३।६।२।९ ) । एकपदोपात्तानेकार्थाविधानाच्च एककारकनिबन्धनत्वात् अवाक्यभेदाभिप्रायः । पशुकामशब्दोऽपि च स्वर्गकामाधिकरणपूर्वपक्षन्यायेन अर्जनाङ्गत्वात् अनुवादोऽभिमतः, न यागफलम् । ( **सुधा**-- स्वतन्त्रकर्मविधौ कामिपदस्य फलपरत्वाभावे नैष्फल्यात् विधानानर्थक्यापत्तेः, फलपरत्वेऽपि फलवज्ज्योतिष्टोमाङ्गभूते अग्नीषोमीये गुणविधौ साक्षात् फलाभावेऽपि ज्योतिष्टोमफलेन परंपरया फलवत्त्वोपपत्तेः, अयं पशुकामशब्दो न पशुयागफलं प्रतिपादयति, इति शेषः । इति ) नहि पशुयागः पशुम् अकामयमानेन अनुष्ठातुं शक्यते ।

**' यागानुवादो विज्ञातत्वात् '** इति ( भाष्यम् ) **' सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे । विधिशक्त्युपसंक्रान्ते स्याद् धातोरनुवादता ॥ '** यावद्यावत् विधेयान्तरमुपादीयते, तावत्तावत् पूर्वत्र अनेकशक्तिकल्पनाभयात् अनुवादत्वाकाङ्क्षा भवति । अगत्या तु तत्रापि विध्यङ्गीकरणम् । अस्ति चात्र स्त्रीत्वचित्रत्वभाक् अग्नीषोमीययागः, इत्यनूद्यते । **' गुणे फलकल्पनायां यजतेः अविवक्षा '** इति । किमर्थं गुणविधित्वपक्षः एव सन् निराक्रियते ? सिद्धान्तग्रन्थोऽयं प्रमादात् ( अत्र ) लिखितः इति **के चित्** । **अपरे तु** आहुः, फलसंबन्धे किल प्रधानत्वात् गुणोक्तिविघातः स्यात् इति । तदयुक्तम् । सर्वथा नामधेयप्रतिपक्षो गुणविधिः । स च फलसंबन्धेऽपि अनपगतः । तथा च वक्ष्यति **' स्थिते एतस्मिन् अधिकरणे गुणविधिर्नामधेयम् इति विचारः '** इति ( २।१।१ पृ. ३८६ ) । फलसंबन्धे हि एकान्तेन यागसामानाधिकरण्याभावात् गुणविधिरेव स्यादिति । ( **स्वयं समाधत्ते** ) तेन एवं वाच्यम्— इह तु त्रयः पक्षाः प्रतिभान्ति गुणविधिः फले, यागे वा, नामधेयं वा, इति । एकैकस्य च द्वयंद्वयं निराकर्तव्यम् । तत्र पूर्वपक्षस्थः एव दुर्बलतरत्वात् तृतीयं पक्षं निराकरोति ( यजतेः न विवक्षा इत्यनेन । तदर्थमाह- ) धातुपारार्थ्यप्रसङ्गात् इति । अतश्च ' व्रीहिभिर्यजेत ' इतिवत् यागे गुणविधानम् । करणभूतस्यापि च यागस्य उत्पत्तिवाक्यावगतकरणत्वार्थाक्षिप्तसाध्यांशानुवादेन गुणे विधीयमाने, न मत्वर्थलक्षणा । गुणवादी एव वा अनभिभवसमर्थे यागे गुणविधानमाश्रयति । फले गुणविधिकल्पनायां पूर्वाधिकरणोक्तदोषप्रसङ्गात् इति ।

तथा ' पञ्चदशानि आज्यानि ' इत्यत्र ' अस्तिर्भवन्तीपरः ' इति ( पा० २।३।४६ सूत्रे महाभाष्ये ' अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति इति गम्यते । वृक्षः प्लक्षः, अस्तीति गम्यते ' इति उक्तम् । तत्र भवन्तीपरः इत्यस्य वर्तमानताबोधकलडन्तः इत्यर्थः । अस्तिः अस् धातुः । के. ) सत्तोपकल्पनम्, प्रयोगवचनाच्च विधिः । **ननु च** ' पञ्चदशानि, सप्तदशानि ' इति च एवंरूपः शब्दो न संख्यामात्रवाची ' स्तोमे डविधिः पञ्चदशाद्यर्थः ' इति स्मरणात् ( पा० ५।१।५८ अत्र वार्तिकम् । अत्र भाष्यम्—स्तोमे [ वाच्ये संख्यायाः स्थाने ] डो विधेयः । किं प्रयोजनम् ? पञ्चदशाद्यर्थे पञ्चदशः स्तोमः, सप्तदशः स्तोमः इति— इति ) नहि स्तोम इति स्तोत्रीयासंख्यातः अन्या विधीयते । **नैष दोषः** । स्तोत्रसाधनमात्रपरिच्छेदेन स्तुतिमानात्मकस्तोमसिद्धेः ( स्तुतेर्मानं स्तोमः इति स्मृतेः— सुधा. पृ. ४१७ ) सदृशं ऋक्परिच्छेदे घृतपरिच्छेदे च स्तुतिमाननिमित्तस्तोमवाचित्वम् । न चात्र मत्वर्थलक्षणा । कुतः ? **' श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो, नानुमिते ह्यसौ ॥ '** ( सु. पृ. ४१७— विवक्षितार्थापेक्षया न्यूनत्वाभ्युपगमे लक्षणावाक्यभेदौ, आधिक्याभ्युपगमे तु आदिशब्दोक्तम् आनर्थक्यम् । अथवा न्यूनस्य अधिकार्थविषयत्वकल्पने लक्षणावाक्यभेदौ गौणत्वाध्याहारौ दोषौ इत्यर्थः । न्यूनत्वे लक्षणावाक्यभेदौ, आधिक्ये तु आनर्थक्यम्, अन्यथात्वकल्पने विपरिणामव्यवहितकल्पना व्यवधारणकल्पना दोषः इति वा योज्यम् । अनुमिते तु विवक्षितार्थाभिधानशक्तस्यैव अनुमानात् न कश्चिद्दोषः इति भावः । इति )

इह तावत् आज्यादीनां श्रुतवाक्यसंयोगाभावात् अवश्यं प्रकरणाम्नानानुमितवाक्यसंबन्धपूर्वकः प्रयोगवचनविधिः आश्रयितव्यः । तेन मत्वर्थ एव प्रतिपाद्यते इति न

लक्षणा । ( शङ्कते– ) तत्र एतत् स्यात्, द्रव्यत्वात् आज्यादीनां कर्तव्यताविशेषात्मकेतिकर्तव्यताऽर्थिना प्रकरणेन न ग्रहणमिति । ( परिहरति– ) सत्त्वैवात्र क्रिया इत्यनुपालम्भः । प्रधानदेशत्वाच्च अङ्गानाम् आज्यादिभिरवश्यं स्तोत्रसमीपे भवितव्यम् । अतश्च यथैव 'अग्निमुपनिधाय स्तुवते' इत्यत्र अग्निः सत्तामात्रेण उपकरोति, एवमिहापि इति निर्दोषम् । तस्मात् गुणविधानमिति । **अत्राभिधीयते** । 'प्रधानतोऽभिसंबन्धः' इति ( सौत्रं पदम् ) । अनेकार्थविधानं हि प्रधानकर्मविधाने सति उपपद्यते । अत्र पुनः कर्मानुवादेन गुणो विधीयते । न च गुणानां परस्परं संबन्धो विद्यते । तत्र एकगुणविधाने गुणान्तरानाक्षेपात् अर्थापत्त्यभावे श्रौतानेकविधिव्यापारकल्पनायां पुनःपुनरुच्चारणं प्रत्ययस्य कर्तव्यमिति वाक्यभेदः स्यात् । **आह च** 'अर्थादनेकमप्यर्थं विधापयति भावना । विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम् ॥' एकपदोपात्तेऽपि च अनेकविधिशक्तिकल्पनागौरवमस्त्येव । उत्पत्तिवाक्यशिष्टे गुणान्तरा( र )विरोधाच्च अशक्तिः ( विधातुम् ) । तथाहि '**उत्पत्तिवाक्यविज्ञातं कर्म सर्वं ह्यनूद्यते । न चाश्रितगुणे शक्यं तद्विरोधि गुणान्तरम् ॥**' यत्र अनूद्यमानः एव अवश्यं गुणोऽपि अनुवदितव्यः, तत्र नैरपेक्ष्यदर्शनात् आकाङ्क्षाऽधीनसंबन्धगुणान्तरविधानानुपपत्तिः । न च निष्कृष्य क्रियामात्रं गुणविधिः शक्यः कर्तुम् । कुतः ? '**प्रथमं हि स्ववाक्यस्थैर्गुणैः संबध्यते क्रिया । वाक्यान्तरगतैः पश्चान्न शुद्धा सा ह्यवाप्यते ॥**' यानि परस्परनिरपेक्षाणि व्रीहियवादिवाक्यवत् प्रवर्तन्ते, तेषां तुल्यबलत्वात् भवति विकल्पः । इह च उत्पत्तिवाक्यम् अन्यनिरपेक्षं विदध्यात् नोत्पन्नवाक्यम्, अनुत्पन्ने अनुवादानुपपत्तेः । पशुकामसंबन्धाच्च पदान्तरगतार्थग्रहणनिमित्तोऽपि वाक्यभेदो विद्यते । यद्यपि च फलं न विधीयते, तथापि तत्र कर्मविधानात्, कर्मणि च गुणविधेः, अस्त्येव गौरवम् । अपिच कर्मणः फलगुणौ प्रति युगपद्विध्यनुवाददोषः अपरः स्यात् । न च पशुकामपदम् अर्जनाङ्गत्वात् प्राप्तमनूद्यते । कथम् ? '**पुरुषार्थो हि सर्वेण स्वरसादेव काम्यते । तत्साधनतदङ्गेषु प्रवृत्तिः प्रार्थनादृते ॥**' नहि साधनभूतं पशुं कश्चित् कामयते । विनैव तु कामेन प्रार्थितान्यथाऽनुपपत्त्या तमुपादत्ते, गौणी वा तस्य काम्यता भवेत् । अतः स्वातन्त्र्येण यत् मुख्यया वृत्त्या काम्यते, तदेव कामशब्दोपबन्धात् फलं प्रतीमः । विस्तरेण चैतत् 'असाधकं तु तादर्थ्यात्' (६।१।१।२) इत्यत्र वक्ष्यामः । फलं च अग्नीषोमीयस्य क्रत्वङ्गत्वात् नैतत् अन्यद्वा अस्ति इत्यनुवादासंभवः । प्रकरणं च बाध्येत प्राजापत्यस्य यागस्य । नामधेयत्वे तु कर्मफलसंबन्धमात्रकरणात् न कश्चिद्दोषः । 'पञ्चदशान्याज्यानि' इति द्रव्यसंख्ययोः उभयोः स्तोत्रेषु अप्राप्तत्वात् नान्यतरानुवादेन इतरविधानसंभवः, कर्मान्तरस्थं च न प्रतीयते, तदनुवादेन च विधौ अकर्माङ्गत्वप्रसङ्गः प्रकरणबाधश्च । न च विशिष्टद्रव्यविधिः उपपद्यते इति वक्ष्यते 'तत्रैकत्वमयज्ञाङ्गभूतम्' इति ( ४।१।५।११ ) । न च अक्रियाविशेषणं विधीयते, विधायकस्य नामपदैः साक्षादसंबन्धात् । न चेह क्रिया उपात्ता, या विधीयमाना अर्थात् अनेकमपि गुणमाक्षिपेत् । न चैषां स्तुतिप्रयोगवचनेन ग्रहणम्, अक्रियाऽऽत्मकत्वात् । आह च 'नावान्तरक्रियायोगादृते वाक्योपकल्पितात् । गुणद्वये कथम्भावैर्गृह्णन्ति प्रकृताः क्रियाः ॥' न च भवतिक्रियां प्रति अङ्गत्वमुपपद्यते । सर्वोऽपि हि लब्धात्मकः अन्यत्र व्याप्रियते । सत्तायास्तु वस्त्वात्मलाभमात्रापवर्गात् न साध्यत्वम् । तद्व्यतिरिक्तसाध्यान्तरानपेक्षणाच्च उपकारासंबन्धात् न इतिकर्तव्यतात्वम् । यत्तु 'रथंतरं भवति' इत्येवं चोदितानामपि प्रकरणेन ग्रहणम्, तत् अतिदेशप्राप्तावान्तरक्रियासंबन्धविज्ञानात् । न वा आज्यादीनां लोके सत्ता न सिद्धा, येन इदानीं भाव्येत । स्तुतिप्रयोगसंनिधिस्थापनभावना करिष्यते इति चेन्न, अचोदितत्वात् । 'अग्निमुपनिधाय' इति तु स्पष्टं विधानम् । आत्मलाभव्यतिरिक्ता चेयं क्रिया शक्यते कथम्भावेन ग्रहीतुम् । सिद्धान्तेन च ( अत्र 'ग्रहीतुं सिद्धान्ते । न च' इति आनन्दाश्रमीये मुद्रितम् । परंतु सुधायाम् ( पृ. ४२४ ) 'शङ्कानिरासार्थत्वेन व्याख्यातुमाह सिद्धान्तेन चेति' इत्युक्तम् । तदनुसृतमस्माभिः ) वाक्यस्य अर्थवत्त्वात् नान्यथाऽनुपपत्त्या



विनियोजकवाक्यकल्पना । यदि तु 'आज्यैः स्तुवते' इत्यनेन विहितानां पञ्चदशत्वविधिरुच्येत, ततः पूर्वाधिकरणन्यायेन सैव मत्वर्थलक्षणा इति मत्वा वदति '**अपि च आज्यानि स्तोत्राणि**' इत्यादि । संसर्गिद्रव्यत्वाच्च आज्यानां साक्षात् पञ्चदशत्वयोगाभावात् अश्रुतपलादिपरिमाणकल्पना अवश्याश्रयितव्या भवेत् । तेन एवं ज्ञायते "यद्यपि उत्पत्तौ नामत्वं न ज्ञातं गुणवाक्ये च तस्यानधिकारः, तथापि एतद्गुणविधानमेवं सिध्यति 'यदि उत्पत्तौ आज्यशब्दो नामधेयम्' नान्यथा" इति । '**गुणवाक्योपपत्त्यर्थं समभिव्याहृतेन च । अन्वाख्यानार्थवादाच्च नामधेयत्वमाश्रितम् ॥**'

'**यदाजिमीयुः, तदाज्यानामाज्यत्वम्**' इति । यस्मात् देवाः प्रजापतिवचनात् एतेषु स्तोत्रेषु आजिमधावन्, ततः तदर्हत्वात् एतानि आज्यानि इति । तथा 'तासां वायुः पृष्ठे व्यवर्तत' इति 'यस्मात् अपां वायुना पृष्ठे स्पृष्टे रथंतरादीनि जातानि, तस्मात् तानि पृष्ठानि' इति अर्थवादात् विज्ञातम् । तत्प्रकृतित्वाच्च वामदेव्यादिषु पृष्ठशब्दप्रसिद्धिः । '**द्वौ एतौ अर्थौ एकस्य वाक्यस्य अशक्यौ**' इत्यस्य ( भाष्यस्य ) अनन्तरम् '**अथ कस्मान्न पञ्चदशसंख्याविशिष्टानि**' इत्येवमादि द्रष्टव्यम् । '**विशिष्टानां वाचकस्य अभावात्**' इति प्रधानाख्यातानुच्चारणाभिप्रायम् । '**ननु पदद्वयम्**' इति भवतिक्रियासंबन्धाभिप्रायम् । '**नैतत् पदद्वयमपि विधायकम्**' इति, प्रधानक्रिया हि विशेषणानि पिण्डीकरोति । सत्तायास्तु प्रत्येकवर्तित्वात् न समुदाये वाक्यपरिसमाप्तिः, अतश्च परस्परसंबन्धाभावः । पञ्चदशानि यानिकानिचित् भवन्ति, आज्यान्यपि यावन्तितावन्ति भवन्ति इति कल्पना । तस्मात् नोभयं विधायकम् । न च अनुवादकम्, स्तोत्रेषु तादृशस्याभावात्, अनर्थकत्वप्रसङ्गाच्च । तस्मात् एकानुवादेन इतरविधिः नामधेयत्वे अवकल्पते । 'विधायकम्' इति चात्र विधेयार्थोपनयनव्यापारात् पुनःपुनः अभिहितम्, न तु नामपदस्य विधिशक्तिरस्ति । पञ्चदशानि इति च स्तुतिसाधकतमस्तोत्रीयऋक्परिच्छेदात् मुख्यं स्तुतिमाननिमित्तं स्तोमत्वम् इति शब्दसामञ्जस्यं भविष्यति ।

**शा**— तत्र सिद्धान्तः '**वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः । अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते ॥**' इति ।

**सोम**— पूर्वाधिकरणवैषम्येणोत्थानात् **संगतिः** । **सूत्रार्थस्तु**– यस्मिन् वाक्ये रूढया गुणोपदेशः प्रतीयते, तत्र नासौ गुणोपदेशः, किन्तु तस्य नामत्वेन प्रधानसंबन्धः इति ।

**वि**— 'यच्चित्रया यजेतेति तद् गुणो नाम वा भवेत् ।, चित्रस्त्रीत्वगुणो रूढेरग्नीषोमीयके पशौ ॥, द्वयोर्विधौ वाक्यभेदो वैशिष्ट्ये गौरवं ततः । स्यान्नाम पृष्ठाज्यबहिष्पवमानेषु तत् तथा ॥' १।४।३.

**भाट्ट**— अत्र गुणे एव रूढानाम् 'चित्रया यजेत पशुकामः' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'त्रिवृद् बहिष्पवमानम्' इत्यादौ चित्राज्यपृष्ठत्रिवृद्बहिष्पवमानशब्दानां गुणविधित्वं कर्मनामधेयत्वं वेति चिन्तायाम्, दध्यादिवत् रूढेषु कर्मनामधेयत्वासंभवात् गुणविधित्वमेवैषाम् । तत्र चित्रापदे तावत् प्रातिपदिकेन चित्रत्वम्, स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते, विधेययोः परस्परसाहित्यावगतेः विधेयसामर्थ्यानुरोधेन प्राणिद्रव्यकयागस्यैवोद्देश्यत्वावगतेः । प्रकृतानाम् 'दधि मधु घृतमापो धानास्तण्डुलास्तत् संसृष्टं प्राजापत्यम्' इत्येतद्वाक्यविहितानां यागानामुद्देश्यत्वासंभवेऽपि सर्वप्रकृतिभूताग्नीषोमीययागोद्देशेन सर्वपशुयागोद्देशेन वा विधीयते । न चानेकगुणविधाने वाक्यभेदः 'धेनुर्दक्षिणा' इतिवत् उभयविशिष्टैककारकविधानेन अवाक्यभेदात् । एवमाज्यपदेन घृतम्, पृष्ठपदेन शरीरावयवः । स च संख्याविशिष्टः प्रकरणात् 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' इत्येतद्वाक्यविहितस्तोत्राङ्गतया यथाक्रमं विधीयते । एवं त्रिवृच्छब्दवाच्यं त्रिमिण्डिद्रव्यं पवनक्रियाविशिष्टं तथैव तद्वाक्येन विधीयते । सर्वत्र द्रव्याणां स्तोत्रसमीपदेशे अदृष्टार्थे स्थापनेनैव स्तोत्रोपकारकता । उत्पत्तिवाक्येषु तु आज्यादिपदं गुणवाक्यप्राप्तत्वादनुवादः । स्तोत्रमात्रं तु विधीयते । इति प्राप्ते, प्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वरूपानेकगुणविधाने वाक्य-

मेदात्, करणत्वस्यापि पशुगतस्य प्राप्तत्वेन अविधेयतया उभयविशिष्टैककारकविध्ययोगात् । अतश्च 'अजोऽग्नीषोमीयः' इति प्राकरणिकवचनेन विहितप्राकरणिकपुंस्त्वावरोधे स्त्रीत्वस्य विध्ययोगाच्च न गुणविधिः । अतः प्रकृतानामेव यागानां विचित्रद्रव्यकत्वेन लक्षणात् चित्रापदं नामधेयम् । इष्टयभिप्रायेण च स्त्रीप्रत्ययः । एवमाज्यादिपदेष्वपि । असमस्तत्वेन विशिष्टस्यानुत्पन्नत्वात् प्राप्तस्तोत्रानुवादेन द्रव्यसंख्याद्यनेकगुणविधौ वाक्यमेदः । **न च** उत्पत्तिवाक्ये एव द्रव्यविशिष्टस्तोत्रविधिः, अत्र तु संख्यामात्रविधिरस्त्विति **वाच्यम्** । घृतादीनां स्तोत्रे करणत्वासंभवेन विशिष्टविध्ययोगात्, पञ्चदशानीत्यादिस्तुतिगतसंख्यारूपस्तोत्रवाचिडप्रत्ययस्य गुणविधित्वे अनुपपत्तेश्च । अत आज्यादिपदं वाक्यद्वयेऽपि शक्त्यैव स्तोत्रनामधेयम् । आज्यादिपदाभिधेयस्तोत्रानुवादेन गुणवाक्ये सर्वत्र संख्यामात्रविधिः । आज्योत्पत्तिवाक्ये च तत्संज्ञकानि चत्वारि स्तोत्राणि गमकसहकृतबहुवचनेन तावत्त्वावगमात् । एवं पृष्ठोत्पत्तिवाक्येऽपि षट् । अनुष्ठेयानि तु नियतानि चत्वारि । आद्ययोर्द्वयोर्बृहद्रथंतरयोः अन्त्ययोः नौधसश्यैतयोर्वचनेन विकल्पविधानात् । यथा चात्र तत्तद्दूषणानां निरासो मतान्तरदूषणानि च, तानि कौस्तुभे द्रष्टव्यानि । १।४।३.

**मण्डन**— 'नाम चित्रापदं तथा ।' तथा उद्भित्पदवत् ।

**शंकर**— 'चित्रादेश्चापि नामता ।' ३.

* **चित्राऽधिकरणेऽपि** चित्रत्वस्त्रीत्वावच्छिन्ने, द्रव्यविशिष्टकर्मान्तरविधिपक्षेऽपि मत्वर्थलक्षणादोषस्यापि उद्भावयितुमशक्यत्वात् । **कौ.** १।४।६।६ पृ. २२०. * चित्राऽधिकरणे एकवाक्यत्वबलादेव कथञ्चित् पशुवाचकत्वम् (पूर्वपक्षे) । **वाक्यार्थ.** पृ. २०. * चित्राऽधिकरणे 'यदि पञ्चदशाज्यानि' इति समासः स्यात् ततो न वाक्यमेदो भवेत् इति पार्थसारथिना उक्तम् । **कौ.** २।२।३।६ पृ. १७८. * चित्राऽधिकरणे 'श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यमेदादिदोषो नानुमिते त्वसौ ॥' इति कल्पितवाक्ये उद्देश्यसाहित्यविवक्षायामपि वाक्यमेदाभाव उक्तः । **बाल.** पृ. १२२.

* न च 'पृष्ठैः स्तुवते' इत्यस्योत्पत्तिवाक्यतया **चित्राऽधिकरणे** वार्तिककारेणोदाहृतत्वात् तत्र बहुत्वमस्त्येवेति वाच्यम् । **सोम.** ७।३।३. * वैयर्थ्यपरिहाराय कण्वरथंतरादीनां स्वकार्यकारित्वमित्युक्तं चित्राऽधिकरणे कौस्तुभे । **भाट्ट.** १०।६।६, * पाडहिकेषु रथंतरादिषु षट्सु पृष्ठशब्दान्वाख्यानार्थार्थवादवशेन निरूढलक्षणायाः चित्राऽधिकरणे कौस्तुभे व्यवस्थापितत्वात् । ७।२।१२. * **चित्राऽधिकरणोक्तरीत्या** आरुण्यस्त्रीत्वोभयवृत्तिकरणत्वद्वयं तृतीययोच्यते, पार्ष्ठिकान्वये च तदाश्रययोः सामानाधिकरण्येनान्वयः । कौ. ३।१।६।१२ पृ. १५७. * पृष्ठैरुपतिष्ठते इत्यत्र **चित्राऽधिकरणन्यायेन** स्तोत्रवचनः पृष्ठशब्दः । **बाल.** पृ. १४१. * 'श्येनेनाभिचरन्' इत्यत्र नापि वाक्यमेदः, येन **चित्राऽधिकरणन्यायप्रवृत्तिः** शङ्क्येत । **कौ.** १।४।५।५ पृ. २१४, * न च 'सोमेन यजेत' इत्यत्र **चित्राऽधिकरणपूर्वपक्षे** इव (१।४।२।३) विशिष्टैककारकविधिः शङ्कितुं शक्यः, विभक्तिमेदात् । १।४।४।४ पृ. १९७.

* **चित्राऽऽज्याधिकरणं** चित्राऽधिकरणम् । **भा.** १।४।२।३. * अर्थवादानाम् अवयवार्थपरत्वाभावे चित्राऽऽज्याधिकरणविरोधः । **कु.** १।२।१।१८ पृ. ३०. * **न च चित्राऽऽज्याधिकरणस्यापि** तन्मात्राक्षेपकत्वाविशेषेण विनिगमनाविरह इति **वाच्यम्** । 'चित्रया यजेत' इत्युदाहरणान्तरे तदाक्षेपकात् चित्राऽऽज्याधिकरणात् उद्भिदधिकरणविषयवाक्ये तदाक्षेपकस्यास्य अभ्यर्हितत्वात्, इति शङ्काया अप्यनवकाशः । **सोम.** १।४।६ पृ. ७० * 'श्येनेनाभिचरन् यजेत' इत्यत्र ज्योतिष्टोमसाधनेन श्येनेन शत्रुवधं कुर्यात् इत्यर्थे कृते वाक्यमेदाभावात् न **चित्राऽऽज्याधिकरणन्यायः** । **कु.** १।४।५।५.

* **चित्राऽऽदीनां** ऐहिकफलत्वमेव अभ्युपयन्तः अक्षपादीयाः, 'किमिति तर्हि तत्कारिणां सर्वेषामनन्तरमेव फलं न भवति इति चोद्यम्' कर्मवैगुण्येन समादधते, तन्मते इह अकृतकर्मणां फलं स्वभावाद्भवतीति स्वीकार्यं स्यात् इत्याह '**सर्वेषां कर्मवैगुण्यात् फलाभावं वदन्ति ये । आनन्तर्यमुपेत्यैव ते स्वाभाविकवादिनः** ॥' (स्वभाववादस्तु नैव युक्तः) । **श्लोवा.** चित्राक्षेपपरिहारे



२२. * चित्राऽऽदीनां फलं किमिहैव जन्मनि, उत इह वा जन्मान्तरे वा इति चिन्तने **भर्तृमित्रादयः** इहैव इति मन्यन्ते । तान् प्रत्याह '**येषां त्विहफलान्येव चित्राऽऽदीनीति कल्पना । निर्निमित्तं फलं तेषां स्यादिहाकृतकर्मणाम्** । १४ ॥ **चित्राऽऽदीनां फलं तावत् क्षीणं तत्रैव जन्मनि** ।' १५ ॥ **श्लोवा.** चित्राऽऽक्षेपपरिहारे ।

* **चित्राऽऽदिचोदनाऽऽक्षेपः** परिहृतः यज्ञायुधिनः यजमानस्य स्वर्गगमनसिद्धयर्थः । **बाल.** पृ. ७.

**चित्रेष्टौ 'अग्ने गोभिर्न॰' इत्यादिभिः पुष्टिमन्त्रैरेव होमाः** ॥

चित्रेष्टौ 'अथैता आहुतीर्जुहोति' इति विधाय 'एता वै देवताः पुष्टिपतयः' इति श्रुतम् । तत्रानियमेन के चित्पुष्टिलिङ्गा उपादेयाः । **इति प्राप्ते**, 'अग्ने गोभिर्न आगहीन्द्रपुष्टया जुषस्व नः' इत्यादिमन्त्राणामेव क्रमेणाङ्गत्वात् पुष्टिलिङ्गत्वाच्च नानियमः । **संकर्ष.** २।४।५.

* चित्रेष्टौ आज्यभागयोर्याज्यापुरोनुवाक्ये वार्त्रघ्न्यौ । वार्तिकमतेन । **वि.** १२।२।७. * चित्रेष्टौ तण्डुलेषु प्राकृतव्रीहियवान्यतरनियमो नास्ति । (अधिकरणं तु 'खलेवाल्यां प्राकृतस्य' इत्यत्र) । **भा.** १०।२।३१।७१. * चित्रेष्टौ निर्वापमन्त्रे तद्देवतापदोहः । **भा.** ९।३।१। १–२, ४–८. * चित्रेष्टौ मान्त्रवर्णिक्य एव इन्द्रादयो देवताः, न तु अन्या एव काश्चित् । **संकर्ष.** २।४।५. * **चित्रेष्टिद्रव्याणाम्** 'दधि मधु पयो घृतं धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यम्' इत्येतेषां तुल्यार्थत्वेऽपि अन्योन्यसापेक्षत्वेन विकल्पाभावः । **सु.** पृ. ८००.

* 'अथैष ज्योतिः' 'एतेन सहस्रदक्षिणेन यजेत' इति एतच्छब्दपरामृष्टानां गुणानां सहस्रदक्षिणायाश्च प्राप्तकर्मानुवादेन विधाने वाक्यमेदापत्तेः **चित्रान्यायेन** (चित्राधिकरणेन १।४।२।३) नामधेयत्वम् । **कौ.** १।४। ५।५ पृ. २१७. * **चित्रायागे** चतुर्थपञ्चमे हविषी 'सारस्वतौ भवतः' इति । तत्र याज्यानुवाक्याक्रमेण स्त्रीयागस्य प्राथम्यावगमात् मुख्ययागक्रमेण स्त्रीयागस्य प्रथमं निर्वापः कार्यः । **वि.** ५।१।७, * चित्रायागे मधुनि उदके च प्राकृतोपांशुयाजगताज्यधर्माः कर्तव्याः, शुक्लवर्णत्वात् उत्पवनादीनां संभवाच्च । न पयोधर्माः दोहनादीनामसंभवात् । ८।१।१९.

* **चित्रावादः** । (अत्र 'अनिमित्तं विद्यमानोपलम्भनत्वात्' इत्यस्य 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानम्' इत्येतावतः सूत्रांशस्य च वृत्तिकारमतेन अर्थः संगृह्यते । अत्रैवार्थे प्रसङ्गेन चित्रावादस्य पूर्वपक्ष उपन्यस्त इति कृत्वा चित्रावाद इत्येवास्य नाम अनेकेषु ग्रन्थेषु आहितम् । अर्थादेव चात्र चित्राक्षेपवादः चित्राक्षेपपरिहारश्च संगृहीतावेव ।) **भाष्यम्**— ननु प्रत्यक्षादीनि अन्यानि भवन्तु नाम प्रमाणानि । शब्दस्तु न प्रमाणम् । कुतः? 'अनिमित्तं विद्यमानोपलम्भनत्वात्' । अनिमित्तम् अप्रमाणं शब्दः । यो हि उपलम्भनविषयो नोपलभ्यते, स नास्ति यथा शशस्य विषाणम् । उपलम्भकानि च इन्द्रियाणि पश्वादीनाम् । न च पशुकामेष्टयनन्तरं (चित्रेष्टयनन्तरमित्यर्थः) पशव उपलभ्यन्ते । अतो नेष्टिः पशुफला । कर्मकाले च फलेन भवितव्यम् । यत्कालं हि मर्दनम्, तत्कालं मर्दनसुखम् । कालान्तरे फलं दास्यति इति चेन्न । न कालान्तरे फलमिष्टेः इत्यवगच्छामः । कुतः? यदा तावदसौ विद्यमाना आसीत्, तदा फलं न दत्तवती, यदा फलमुत्पद्यते तदाऽसौ नास्ति । असती कथं दास्यति । प्रत्यक्षं च फलकारणमन्यदुपलभामहे । न च दृष्टे कारणे सति अदृष्टं कल्पयितुं शक्यते प्रमाणाभावात् । एवं दृष्टापचारस्य वेदस्य स्वर्गाद्यपि फलं न भवतीति मन्यामहे । दृष्टविरुद्धमपि भवति किञ्चिद्वचनम् । पात्रचयनं विधायाह (अन्त्येष्टौ) 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरकं व्यपदिशति (नात्मानम्) । न च तत् स्वर्गं लोकं यातीति । प्रत्यक्षं हि तत् दह्यते । न च 'एप याति' इति विधिशब्दः । एवंजातीयकं प्रमाणविरुद्धं वचनमप्रमाणम् । 'अम्बुनि मज्जन्त्यलाबूनि, ग्रावाणः प्लवन्ते' इति यथा । तत्सामान्यात् अग्निहोत्रादिचोदनास्वपि अनाश्वासः । तस्मात् न चोदनालक्षणोऽर्थः धर्मः । (इति पूर्वपक्षः) ।

(**सिद्धान्तमाह**) 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धस्तस्य ज्ञानम्' तुशब्दः पक्षं व्यावर्तयति । अपौरुषेयः

शब्दस्य अर्थेन संबन्धः । तस्य अग्निहोत्रादिलक्षणस्य अर्थस्य ज्ञानं प्रत्यक्षादिभिरनवगम्यमानस्य । तथा च चोदनालक्षणः सम्यक् संप्रत्ययः इति । पौरुषेये हि शब्दे यः प्रत्ययः, तस्य मिथ्याभाव आशङ्क्येत, परप्रत्ययो हि तदा स्यात् । अथ शब्दे ब्रुवति कथं मिथ्येति । नहि तदानीमन्यतः पुरुषात् अवगतिमिच्छामः । ब्रवीति इत्युच्यते, बोधयति, बुध्यमानस्य निमित्तं भवति इति । शब्दे च निमित्ते स्वयं बुध्यते । कथं विप्रलब्धं ब्रूयात्, नैतदेवमिति । न चास्य चोदना, 'स्याद्वा न वा' इति सांशयिकं प्रत्ययमुत्पादयति । न च 'मिथ्यैतत्' इति कालान्तरे देशान्तरे अवस्थाऽन्तरे पुरुषान्तरे वा पुनः अव्यपदेश्यप्रत्ययो भवति । योऽपि अस्य प्रत्ययविपर्यासं दृष्ट्वा अत्रापि विपर्यंसिष्यति इत्यानुमानिकः प्रत्यय उत्पद्यते, सोऽपि अनेन प्रत्यक्षेण प्रत्ययेन विरुध्यमानो बाध्यते । तस्मात् चोदनालक्षण एव धर्मः । ( पृ. ३९–४२ ).

अथ यदुक्तम्, अनिमित्तं शब्दः कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावात् प्रमाणं नास्तीति । तदुच्यते । न स्यात् प्रमाणम्, यदि पञ्चैव प्रमाणानि अभविष्यन् । येनयेन हि प्रमीयते तत्तत् प्रमाणम् । शब्देनापि प्रमीयते, ततः शब्दोऽपि प्रमाणं यथैव प्रत्यक्षम् । न च प्रमाणेनावगतं प्रमाणान्तरेण अनवगतमित्येतावता अनवगतं भवति । न चैवं श्रूयते कृते कर्मणि तावतैव फलं भवति, किन्तु कर्मणः फलं प्राप्यते इति । यच्च कालान्तरे फलस्य अन्यत् प्रत्यक्षं कारणमस्तीति । नैष दोषः । तच्चैव हि तत्र कारणम्, शब्दश्चेति ।

यत्तु प्रत्यक्षविरुद्धं वचनमुपन्यस्तम् 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरकं व्यपदिशति इति । तदुच्यते । शरीरसंबन्धात् । यस्य तत् शरीरम्, सोऽपि तैर्यज्ञायुधैः यज्ञायुधी इति उच्यते ( पृ. ५८–६० ) । यदुक्तं न चैष याति इति विधिशब्द इति । मा भूद्विधिशब्दः 'स्वर्गकामो यजेत' इति वचनान्तरेण अवगतमनुवदिष्यते तस्मादविरोधः ( पृ. ७२ ) ।

'ननु प्रत्यक्षादीनि – अतो नेष्टिः पशुफला' ( भा. पृ. ३९–४० ) बृहती— प्रत्यक्षादीनि अन्यानि भवन्तु प्रमाणानि, शब्दस्तु न प्रमाणम् इति, कोऽभिप्रायः ? अयमभिप्रायः, यदुक्तमनपेक्षत्वात् इति प्रमाणान्तरानवगम्यमर्थमवगमयति इति एतावन्मृषा । कुतः ? भविष्यंश्च एषोऽर्थः इति भाव्यतया प्रामाण्यमुक्तम् । तदत्र न संभवति । कथं पुनरसंभवः ? किमनियोगकं वाक्यमस्तीति । ( अनियोगकं नियोगानभिधायकम् । नियुज्यते अनेन इति व्युत्पत्त्या नियोगशब्दाभिधेयलिङादिरहितं वाक्यमस्ति ? येनासंभवः । यावता सर्वमेव सनियोगकं वाक्यम् । तथा च सति कार्याभिधायकत्वात् संवभत्येव प्रामाण्यम् । अत्रोत्तरम्– ) किमत्र नियोगः करिष्यति, प्रमाणान्तरावगम्ये हि तस्य दर्शनात्, स्मृत्यादौ । तस्मात् विनियोगावगम्यमेव अर्थमालोच्य विषयो वक्तव्यः । ( फलसाधनतानिबन्धनामेव कार्यतां यागस्य लिङादिर्वदति । एवं खलु अभ्युपगम्यमाने शब्दस्वातन्त्र्यमदृष्टं न कल्पितं भविष्यति, पारतन्त्र्यं च दृष्टं न परित्यक्तं भविष्यति ) स चायं विनिश्चयः असौ विद्यमानोपलम्भनविषय एवोपलभ्यते 'चित्रया यजेत पशुकामः' इत्यादौ । का चात्र विद्यमानोपलम्भनता ? (उत्तरम्–) क्रियाऽनन्तरफलभाविता । दृष्टार्थत्वाच्च वृष्ट्यादेः अनन्तरफलभावितया प्रमाणान्तरावगम्यतैव अस्य वक्तुं शक्यते । ( शुष्यत्सु व्रीह्यादिषु वृष्ट्यादि काम्यमानमनन्तरभावितयैव काम्यते इत्यनयाऽपि युक्त्या अनन्तरभाविता युक्ता ) । संभवति च प्रमाणान्तरविषयत्वे को हि नाम अदृष्टं लोके स्वातन्त्र्यं शब्दस्य कल्पयितुं क्षमः । तस्मात् नियोगः प्रैषाद्यर्थतुल्य एवेति प्रतिपत्तव्यम् । ( यथा प्रैषादिषु लौकिकेषु नियोगः प्रमाणान्तरपूर्वकः, तथा विध्युद्देशगतोऽपि इति ) । तदिदं कुत इत्येतस्य प्रश्नस्य विद्यमानोपलम्भनत्वात् इत्युत्तरम् ।

ननु एवं ग्रन्थे व्याख्यायमाने 'पशवो नोपलभ्यन्ते' ( भा. पृ. ३९ पं. ७ ) इत्यादिः अनर्थको ग्रन्थः । उपलभ्यन्तां मा वा पशवः, सर्वथा प्रमाणान्तरसापेक्षं शाब्दम् इत्येतावदत्र साध्यम् । ( परिहरति– ) सत्यमेतावत् साध्यम्, केन चोक्तम् अन्यत् साध्यमिति । ( अपर आह– ) तदनन्तरफलानुपलब्ध्युपन्यासो न घटते ( अनर्थकत्वात् ) इत्युक्तम् । ( समाधत्ते– ) न



घटते एव । प्रमाणान्तरसद्भावपरीक्षया प्रामाण्यं वक्तव्यम्, न स्वतः इत्येवंपरो ग्रन्थः । ( अस्यार्थः– यदेतत् प्रमाणान्तरानुपलम्भेन अप्रामाण्याभिधानं तत् प्रमाणान्तरसापेक्षत्वप्रतिपादनपरम् । निरपेक्षस्य हि प्रमाणान्तरानुपलब्धेऽपि प्रामाण्यं स्वातन्त्र्येणोपपद्यते एव । सापेक्षस्य च प्रमाणान्तरायत्तं प्रामाण्यम् । तच्च प्रमाणान्तरमेवं स्यात् यदि क्रियाऽनन्तरं फलं स्यात् । तदभावे प्रमाणान्तरेण अयमर्थः प्रत्येतुं न शक्यते इति तदपेक्षस्य अप्रामाण्यं युक्तमेव । तस्मात् प्रमाणान्तरसापेक्षत्वप्रदर्शनार्थत्वे अस्य [भाष्य–] ग्रन्थस्य, न किञ्चिदनुपपन्नम् ) । तच्चात्र प्रमाणान्तरं दृष्टम् । कथं पुनरत्र दृष्टावगतिः ? क्रियाऽनन्तरभावित्वात् फलस्य । कथं तर्हि कृष्यादेः ? ( उत्तरं विकल्प्य आह ) किं कृष्यादेः नानन्तरं फलमवगम्यते ? किं क्रियाफलं नावगम्यते उत प्रयोजनफलम् । पाटनादि तावत् क्रियाफलमवगम्यते । व्रीह्युत्पत्तिस्तु प्रयोजनम् । न च प्रयोजनानवगमात् अदृष्टता उच्यते । अत्र हि प्रयोजनं फलं च पशव एवावगम्यन्ते फलान्तरानवगमात् । यच्च किञ्चित् हविर्विकारादि अवगम्यते न तत् पाटनादिवत् व्रीह्याद्युत्पत्तेः पशोः कारणतया शक्यते वक्तुम्, अदर्शनात् । तस्मात् प्रमाणान्तरपरीक्षैवात्र धर्मजिज्ञासुभिः कर्तव्या । न पुनरध्ययनात् धर्मावगतिः ।

कथं पुनः स्वर्गकामादिषु विद्यमानोपलम्भनता । ( स्वर्गं प्रति साध्यसाधनभावस्य अदृष्टप्रमाणसमधिगम्यत्वात् । ततश्च स्वर्गकामादिचोदनानां स्वातन्त्र्येण प्रामाण्यं स्यात् – इति सिद्धान्ती । आक्षेप्ता तत्राह– ) नियोगस्य तावत् नियोगत्वं पश्वादौ अपह्नुतम् । एकश्चायं नियोगः अनुबन्धभेदात् भिद्यते इति स्थितम् । तस्मात् सर्वत्र सापेक्ष इत्युक्तं भवति । ( नियोगस्य नियोजकत्वं तावत् नास्ति । प्रमाणान्तरसमधिगम्या फलसाधनतैव कर्मणां नियोक्त्री । तदनुवादकास्तु लिङादयः इति यदा पश्वादावुक्तम्, तदा स्वर्गादावपि, एकत्वात् नियोगस्य अधिकारविषयानुबन्धमात्रेण भिन्नस्य सर्वत्र नियोजकत्वं नास्ति । तेन तत्रापि सापेक्षत्वात् सर्वत्र सापेक्षः शब्दः इत्युक्तं भवति ) । अतो यत्र प्रमाणान्तरमस्ति भवतु तत्र तथात्वम्, यत्र नास्ति तत्र मा भूत् । तस्मात् सुष्ठु उक्तं शब्दस्तु न प्रमाणमिति । ( भवतु तत्र तथात्वं सापेक्षत्वम्, न पुनः प्रामाण्यम्, अनुवादकत्वात् । यत्र नास्ति प्रमाणान्तरं तत्र तथात्वमपि मा भूत्, दूरत एव प्रामाण्यम् । अत्र च मूलयुक्तिः पारतन्त्र्यदर्शनात् सापेक्षत्वमिति । विद्यमानोपलम्भनता तु सापेक्षत्वे एव अभ्युच्चययुक्तिः इति स्वर्गकामाधिकारेऽपि सापेक्षत्वात् अप्रामाण्यमिति स्थितम् ) ।

दृष्टविरुद्धं च किञ्चित् वैदिकं वचनम् । पात्रचयनं विधायाह 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकं याति' इति प्रत्यक्षं शरीरं व्यपदिशति । न च तत् स्वर्गं याति इति । प्रत्यक्षं हि तद्दह्यते । न चैष याति इति विधिशब्दः । एवंजातीयकं च प्रमाणविरुद्धमप्रमाणम् ( इति भाष्यम्, पाठभेदः क्रियांश्चिदत्र ) । कथं पुनरिदं प्रमाणविरुद्धम् । अर्थवादोऽयम् । अर्थवादेषु च सर्वे प्रमाणविरोधाः गुणवादेन व्याख्याताः । अथायमभिप्रायः, 'नाद्यापि अर्थवादा व्याख्याताः' इति । बालिशभाषितमेतत् । नहि उक्तस्य उच्यमानस्य वा व्यवस्थितस्य आक्षेपो युक्तः, अन्यत्र विशेषाभिधानात् । उक्तोच्यमानताविशेषे विवक्ष्यमाणे सर्वमनवस्थितं स्यात् । तस्मात् स्थितत्वास्थितत्वमेव वक्तव्यावक्तव्यकारणम् । किञ्च अत्र उपन्यस्तस्य परिहृतस्य तत्र ( अर्थवादाधिकरणे ) पुनरुपन्यासो न घटते प्रत्यक्षविरोधात् इति । ( समाधानमाह– ) उच्यते । स्थिते एवार्थवादानां गुणवादेन व्याख्याने इदं वचनमाक्षिप्यते । अत्र हि तदुक्ता गुणवादतैव न संभवति । गुणवादा हि प्रमाणान्तरप्रतिपत्तिबलेन उपजायन्ते । अत्र च प्रमाणान्तरप्रतिपत्तिः शरीरे एव । न शरीरव्यतिरिक्तं किञ्चिदुपलभामहे । तच्च 'एषः' इति व्यपदिष्टम्, 'याति' इत्यनेन विरुद्धम्, दह्यमानत्वाच्छरीरस्य । तस्मात् विधितः ( विध्यालोचनया ) अर्थवादतश्च अयथाऽर्थता अवसीयते । किञ्च विधौ हि सति नियोगतोऽपि तावत् स्वातन्त्र्यशङ्का जायते । अर्थवादे तदपि नास्ति इति प्रकटयति ( भाष्यम् ) 'न चैष यातीति विधिशब्दः' इति ( विधिपक्षे हि नियोगस्य प्रमाणान्तराविषयत्वात् स्वातन्त्र्यशङ्का स्यादपि । अर्थवादे तु

सिद्धार्थत्वात्, सिद्धस्य च प्रमाणान्तरापेक्षायां विवादाभावात्। तदपि स्वातन्त्र्यं शङ्क्यमानमपि नास्ति इति 'न चैष याति' इत्यनेन भाष्यकारः प्रकटयति)। उच्यते। न प्रमाणान्तरापेक्षः शब्दस्यार्थेन संबन्धः ? कस्तर्हि ? औत्पत्तिकः। (अनेन ग्रन्थेन पूर्वोक्तमाक्षेपं परिहर्तुमुपक्रमते। यदि हि प्रमाणान्तरापेक्षः शब्दस्य अर्थेन सह वाच्यवाचकभावः संबन्धः स्यात्, तदा चित्राऽऽदिवाक्येषु लिङादयः प्रमाणान्तरानुभूतफलसाधनतानिबन्धनां कार्यतां वदन्ति इति स्यादेव अप्रामाण्यम्। औत्पत्तिके स्वाभाविके निरपेक्षे तु वाचकत्वे स्वातन्त्र्येण अर्थपरिच्छेदात् प्रामाण्यं युक्तम्)।

ननु च लोके प्रमाणान्तरापेक्षितैव सर्वस्य वचसो दृष्टा। सत्यं व्यवहारे, न तु अभिधाने। यथा लोकेऽपि औत्पत्तिकमेव अभिधानम्, तथा संबन्धाक्षेपपरिहारे वक्ष्यामः। (व्यवहारे शब्दप्रयोगलक्षणे सत्यं सापेक्षत्वम्, प्रमाणान्तरेण अर्थं प्रतीत्य लोकः शब्दं प्रयुङ्क्ते यतः, न पुनरभिधाने सापेक्षता, अर्थशक्तौ च अर्थाभिधानात्। न च व्यवहारे सापेक्षता वेदे दोषमावहति, अपौरुषेयत्वात्। पुरुषो हि प्रमाणान्तरप्रतीतिमपेक्षते शब्दं प्रयोक्तुम्। तदभावे तु अपेक्षा नास्ति। यदि पौरुषेयः संबन्धः स्यात्, स्यात् सापेक्षता। यदा पुनः अपौरुषेयत्वं वक्ष्यति तदा सेत्स्यत्यनपेक्षत्वम्)। पृ. ९६–१०२

'अथ यदुक्तं अनिमित्तं शब्दः' (भा. पृ. ५८–६०) इति किमिदं चोद्यते। परिहृतमेतत् औत्पत्तिकत्वाभिधानेन संबन्धस्य। कस्य वा अन्यस्य परिहारोऽवगम्यते औत्पत्तिकतया। किमिति नैवान्यदुपन्यस्तम्। विद्यमानोपलम्भनतयैव हि विषयान्तराभावो दर्शितः ('चित्रया यजेत पशुकामः' इत्यादौ। विद्यमानोपलम्भनत्वात् भवत्येव इष्टेः पशूनां च साध्यसाधनभावस्य प्रमाणान्तरग्राह्यता। अतः प्रमाणान्तरगम्यमेव साध्यसाधनपूर्वकं कार्यत्वं नियोगस्य लिङादेर्विषयः, न विषयान्तरमिति पूर्वं दर्शितम्। अतः तस्यैव औत्पत्तिकत्वेन परिहारो दत्तः। किमपरमपरिहृतमिव उपन्यस्यते) सत्यम्, तस्यैवायम् औत्पत्तिकत्वपरिहार उक्तः। किन्तु औत्पत्तिकेऽपि संबन्धे विषयान्तरविवेकोऽनुक्त इव प्रतिभाति। तद्विवेकाय इदं पुनरुपन्यस्यते। (पौरुषेये संबन्धे सति बलादापद्यमानं वेदानां पौरुषेयत्वं सापेक्षत्वापादकम् औत्पत्तिकसंबन्धाभिधानेन निरस्तम्। लोके तु स्वातन्त्र्यदर्शनेन शब्दस्य या प्रमाणान्तरगोचरैकविषयत्वशङ्का, सा निराक्रियते। औत्पत्तिके संबन्धे विषयान्तरं स्वतन्त्रं शब्दस्य इत्ययं विवेकः अनुक्त इव प्रतिभाति। तद्विवेकाय इदं चोद्यं पुनरुपन्यस्यते)।

'कर्मकाले फलादर्शनात् कालान्तरे च कर्माभावात्' (भा. पृ. ५८) इति। ननु चानेन किं प्रयोजनम्। विषयान्तराभावात् प्रमाणान्तरविषयतया च सापेक्षत्वात् तदभावे च अप्रामाण्यं दर्शितम् (चित्राऽऽक्षेपे)। इहापि तदेव। किं पुनस्तदनुक्तमिव (० दयुक्त ०) प्रतिभाति। (समाधत्ते–) इदं तत्। प्रमाणान्तराविषयत्वे हि 'अनेनेदम्' इत्यस्मिन् सति नियोगः। तत्र च अनुपलब्धेः स्फुटमेवाप्रामाण्यम् (स्फुटमप्रा०) इति प्रागुक्तमेव। न चास्मिन्नर्थे संभवति नियोगादेव नियोगसिद्धिः इति शक्यते कल्पयितुम्। (इदं तत् अनुक्तम् उक्तमेतेन भाष्येण इति संबन्धः। यद्यपि कर्मानन्तरं फलं न सिध्यति कालान्तरे च नास्ति कर्म, तथापि नियोगादेव कालान्तरे फलं भविष्यति इति, तदनेन–आक्षेपभाष्येण–परिह्रियते। यस्मात् अस्मिन्नर्थे प्रमाणान्तरविषयत्वात्मके संभवति नियोगादेव सिद्धिः इति न शक्यते कल्पयितुम्, नियोगस्य तदानीमप्रमाणकत्वात्। नियोगो हि प्रमाणान्तरावेद्यरूपः कथं प्रमाणान्तरसापेक्षशब्दप्रमेयः स्यात्। तस्मात् कर्मानन्तरं फलादर्शनात् कालान्तरे च कर्माभावात् नास्ति प्रमाणं पशुफला इष्टिः इति। तस्मादनुपलब्धेः स्फुटमप्रामाण्यं चोदनायाः इति) तदिदानीं निराक्रियते। स्यादेतदेवम्, यदि औत्पत्तिकता न स्यात्। साधिता चासौ। ततः किम् ? इदं तत् नानेन इत्यमुमर्थम् अपेक्षते नियोगः (यदि हि पौरुषेयः संबन्धः स्यात्, तदा बलात् पौरुषेयता चोदनाया आपद्येत। तथा च सति प्रमाणान्तरविषयत्वापत्तेः साध्यसाधनभावापेक्ष एव नियोगार्थः स्यात्। साधिते तु अपौरुषेये संबन्धे स्वातन्त्र्याविरोधात् नाप्रामाण्यं शक्यते वदितुम्)। प्रमाणान्तरावगम्येऽपि हि लौकिकेऽर्थे नैव नियोगस्य



साध्यसाधनसिद्ध्यपेक्षा अवसीयते (प्रवृत्तिदर्शनेन लिङादीनां कार्यार्थप्रतिपादकत्वं तावत् अवगम्यते लोके। तथा व्युत्पन्नास्ते स्वार्थाभिधाने न प्रमाणान्तरमपेक्षन्ते। अतो यद्यपि वक्ता प्रमाणान्तरप्रतीतामेव कार्यतां विवक्षति, तथापि शब्दः स्वसामर्थ्येनैव तां प्रतिपादयति। तेन वेदेऽपि न साध्यसाधनावगमपूर्वकः अर्थोऽभिधीयते। दर्शितं च भाष्ये— आचार्यचोदितः करोमि इति हि दृश्यते नानेनास्य सिद्धिरिति। एतदुक्तं भवति, यतः प्रतिपत्ता कार्यमेव प्रतिपद्य अनुतिष्ठति, न पुनः साध्यसाधनभावम्। अतः कुर्वाण आपृष्टः 'आचार्यप्रेरितः करोमि' इति व्यपदिशति, न साध्यसाधनभावावगमम्। यदि पौरुषेयेऽपि वाक्ये प्रतिपत्ता निरपेक्षत्वमेव कार्यं बुध्यते, तदा किमिति पुरुषापेक्षा संबन्धस्य निराक्रियते। भवतु पौरुषेयः संबन्धः, वेदाश्च पौरुषेयाः। तथापि निरपेक्षार्थप्रतिपादकतया प्रामाण्यं भविष्यति। अत्रोत्तरम्—) कारणदोषसंभावनानिराकरणाय निराक्रियते। (न पुनरात्मसंवित्तौ। अस्यार्थः— यदि पौरुषेयत्वं न निराक्रियते तदा उत्पन्नाऽपि कार्यप्रतीतिः कारणदोषात् मिथ्या स्यात्। प्रामाण्यप्रतीतं हि स्वयमर्थं पुरुषः परस्मै प्रतिपादयति। तत्र च पौरुषेयस्य वचनस्य, कार्यस्य कारणानुमापकता। यदि च वेदानां पौरुषेयता स्यात् तदा प्रमाणान्तरेण वेदार्थं प्रतीत्य पुरुषेण उपदेशः कार्यः। न च प्रमाणान्तरमस्ति इति कारणदोषसमुत्पन्नाऽपि प्रतीतिः मिथ्या स्यात् 'चैत्यं वन्देत स्वर्गकामः' 'संघाय भक्तं दद्यात् स्वर्गकामः' इति। एवमर्थं निराक्रियते) तस्मात् स्वातन्त्र्यं नियोगस्य इत्यनेन विवेकः प्रदर्श्यते। पुरुषं हि नियुञ्जानः साध्यसिद्धिम् अवगमयति इति षष्ठे प्रतिपादयिष्यति।

किमेवं सति अनन्तरानुपलब्धिर्निरस्ता भवति ? बाढं निरस्ता। नहि अस्मिन् पक्षे क्रियाशक्तिनिरूपणा साध्यसिद्धिः, किं तर्हि नियोगार्थवशात्। अतश्च अस्मात् अस्य सिद्धिः इत्येतावदेव गम्यते, नानन्तरं व्यवहितं वेति। तच्च अनपेक्षत्वं यत्नतः प्रतिपादितम्। (यदि क्रियाशक्तिनिरूपणा साध्यसिद्धिः, तदा अनन्तरमेव फलेन भवितव्यमिति शास्त्रार्थः स्यात्। न च अस्मिन् पक्षे– स्वातन्त्र्येण कार्याभिधानपक्षे– यस्मादियं क्रियाफलं साधयितुं शक्नोति, तस्मात् कार्यात् फलसिद्धिः इत्येवं क्रियाशक्तिं निरूप्य साध्यसिद्धिः। किं तर्हि, यस्मात् कामी कार्यं बोध्यते तस्मात् कार्यं फलमिति। न च क्षणभङ्गुरां क्रियां नियतदेहान्तरभोग्यस्वर्गसाधनाशक्तां स्वर्गकामः कार्यतया बोद्धुमलम् इत्यपूर्वं कालान्तरस्थायि फलसिद्धिसमर्थं लिङादयः कार्यतया बोधयन्ति, इति तस्य स्थास्नुतया कालान्तरेऽपि फलसाधनत्वाविरोधः। यस्मात् प्रामाण्यापादकम् अनेनेदं सिध्यति इत्येतदर्थानपेक्षत्वम्, तच्च यत्नतः साधितम् अपौरुषेयत्वप्रतिपादनेन)। पृ. १५६–१६०

'न चैष विधिशब्दः' इत्यपि प्रत्युक्तम्। ननु च 'स एषः' इत्युपपन्नार्थम्। 'स्वर्गं लोकं याति' इति कथम् ? अधिकृतकामसिद्धेः सिद्धम्। (एतदपि सिद्धम्, यस्मात् अधिकृतस्य कामः स्वर्गादिः सिध्यति इति स्थापितम्) यदुक्तम् 'अहंकारममकारौ अनात्मनि आत्माभिमानौ' इति मृदितकषायाणामेव एतत् कथनीयम्, न कर्मसङ्गिनाम् इत्युपरम्यते। आह च भगवान् द्वैपायनः 'न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्' (गीता ३।२६) इति रहस्याधिकारे। तस्मान्न विवृतमत्र भाष्यकारेण भगवता वचनान्तरानुरोधात्, नाज्ञानात् इति। बृहती. पृ. १८७। (श्लोकवार्तिकार्थस्य भाष्ये एव स्पष्टत्वात् श्लोकवार्तिकं नात्र पृथक् संगृह्यते)।

* **चित्रिणी वज्रिणी** इत्यादयः इष्टकाः अप्रकरणे समाम्नाताः। तासामपि अग्न्यर्थत्वात् अखण्डत्वम् अकृष्णत्वं भस्मसंयोगः इति इष्टकाधर्माः कर्तव्याः, प्रकरणात् वाक्यस्य बलवत्त्वात्। भा. ३।६।१२।३५, * चित्रिणी वज्रिणी भूतेष्टकाः इत्यादय इष्टकाः अग्निशेषः न तु चितिशेषः। तेन ताः सकृदुपधातव्याः, न तु प्रतिचिति। ५।३।६।१५–१६. * **चित्रिण्यादीनां** ब्राह्मणविहितानामिष्टकानां मध्यमचितावुपधानम्, नोत्तमायां पञ्चम्याम्। वि. ५।३।७, * चित्रिण्यादीनां लोकंपृणातः पूर्वं मध्यमचितौ उपधानम्। ५।३।८.

* **चिनोतिवाक्यार्थः** तत्प्रख्यान्यशास्त्रात् अग्निशब्दस्य गुणविधित्वानुपपत्तेः यागनामत्वावसायात् अग्नि-

संज्ञकं यागं करोति इति अवगम्यते। किंवा अग्निशब्द-समानाधिकरणयज्यनुवादान्यथाऽनुपपत्त्या अग्निसंज्ञकयाग-विधायित्वं चिनोतिवाक्यस्य अवसीयते। सु. पृ. ९४६.

**चिन्तामणिं परित्यज्य काचमणिं गृह्णातीति न्यायः**। यथा यत्र ब्रह्मावबोधहेतुविचारं विहाय अन्यत्र रतिं कुर्वन्ति, तत्रायं चरितार्थः। साहस्री. ३८८.

* **चुश्चुषाकारम्** इक्षुभक्षणे चुष्चुष्शब्दपूर्वकं रसपानं क्रियते, तादृशं शब्दं कृत्वा तया रीत्या शत-कृष्णलचरौ शेषभक्षणं कर्तव्यम् ('चुक्षुषाकारम्' इति भाष्ये 'चुच्छुषाकारम्' इति भाट्टे।)। वि. १०।२।३.

**चेतनस्य यत्नहीनस्योर्ध्वगतिः चेतनान्तरा-धीना इति लौकिकन्यायेन** यत्नहीनानां गन्तॄणां गम-यितारोऽर्चिरादयश्चेतनाः स्युः। श्रीकर. ४।२।४ ब्रसू.

* **चेतनाधिष्ठितत्वं** सर्वस्य जगतः अभ्युपगम्यते। सु. पृ. १०८, * **चेतनशब्दवाच्याः**। चिती संज्ञाने इति सम्यग्ज्ञानाख्यसंज्ञानवाचिचेतयतिधातूत्पन्नचेतनशब्द-वाच्याः प्रकृष्टधिय एव न मन्दधियः। पृ. १३८.

* **चैतन्येनानुगताः** ऋग्वेदादयः। 'तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्पृथक्। भोग्यत्वेनात्मनां तेऽपि चैतन्यानुगताः सदा॥' वा. ३।१।७।१३ पृ. ७०३. * **चैतन्याख्यं** ज्ञानम्। सु. पृ. १००९.

* **चैत्यवन्दनादिषु** तु पौरुषेयत्वेन स्मरणम् (तद्विधिवाक्यस्य)। ऋजु. पृ. २३.

* **चैत्ररथः द्विरात्रः**। तत्र उत्तरमहः अतिरात्रः। कु. १०।५।१३।४८ (५३).

* **चोदकः** अनुमेयतया उपदेशाद्दुर्बलः। वि. १०। ८।८. * चोदकः गुणान् प्रापयितुं प्रभुः। भा. १०।३। १।८. * चोदकः द्विविधः शब्दचोदकः अर्थचोदकश्च। तत्र अर्थचोदकः शब्दचोदकात् बलवान्। अर्थाभिधानाय हि शब्दचोदकः प्रवर्तते, न पृथक् अदृष्टकल्पना-भयात्। टुप्. ९।३।१।१. * चोदकः प्रतिकर्मावसायी। प्रत्यक्षवचनात्तु क्व चित् बाधितः। भा. १०।६।१७।६३. * चोदकः प्रयोगविध्यपेक्षया बलवान्। प्रयोगविधेरौप-देशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात्, कल्प-नायां चापेक्षामूलत्वेन प्रयोगविध्युपजीव्यप्राथमिकातिदेश-प्रापितपाठक्रमेणैवाकाङ्क्षाया उच्छेदात् आतिदेशिकपाठ-क्रमप्रापितक्रमस्यैव बलीयस्त्वम्। भाट्ट. ५।१।१०. * चोदकः मन्त्रार्थमनुरुध्यते, न मन्त्राक्षराणि। अर्थ-पराणि हि तानि, न स्वरूपप्रधानानि। भा. ९।३।२।६, * चोदकः लुप्तप्राकृतप्रयोजनमङ्गं विकृतौ न चोदयति। १०।१।१।३. * चोदकः सक्रमानेव पदार्थान् अति-दिशति। वि. ५।१।१०. * चोदकः समाख्याया बलवान्। भा. ३।७।२३।५१, * न च अर्थात् कृतं चोदकः प्रापयति। ५।२।५।८, * न च संभवति चोदके प्रयोग-वचनं प्रति आदर्तव्यम्। बलीयान् हि चोदकः। स हि धर्माणामुत्पादकः प्रापकश्च। प्रयोगवचनः प्राप्तानामुपसंग्रा-हकः। स उत्तरकालः अर्थविप्रकर्षात् दुर्बलः। ९।४।१।५, * **चोदकेन** अङ्गभूतं गृह्यते। ३।६।६।१७, * चोदकेन यस्यापूर्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्मकरे भक्षः। एवं हि तस्योपकारको भवतीति। १०।७।८।२३, * चोदकेन विकृतिं प्राप्नोति (अङ्गम्), प्रकृतौ चेदस्ति। ३।६।१।२. * चोदकेन विकृतौ अर्थः अतिदिश्यते, न शब्दो वाचकः इत्येतद् वक्ष्यामः। टुप्. ९।१।१३।२९ वर्णकं २. * **चोदकात्** अनारभ्यविधिर्बलीयान् इति के चित्। भा. ३।६।१।४. * चोदकात् कर्मभेदः संख्याऽ-धिकरणे उक्तः सप्तदशप्राजापत्यपशुषु। चोदकाभावे कर्मभेदापवादः अश्वमेधे 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इति। बाल. पृ. ८६.

**चोदकात् नामधेयशब्दो बलवत्तरः इति न्यायः** 'श्रपणं चाग्निहोत्रस्य' (१२।१।६।१३) इत्यधिकरणसिद्धः तद्भाष्ये सूचितः। के. * चोदकात् नामधेयशब्दो बलवत्तर इत्युक्तम् 'न वा क्रत्वभिधानात्' (७।४।२।१५) इत्यत्र। भा. १२।३।१।१. * चोदकात् प्रयोगवचनो दुर्बलः चोदकप्रापिताङ्गग्राहित्वात्, प्रात्यात्मि-कोपदेशरूपविधिप्रापिताङ्गग्राहित्वाच्च। सु. पृ. ११८६. * चोदकात् लिङ्गक्रमयोः उपदेशप्रमाणत्वात् आनर्थक्य-प्रसङ्गाच्च प्राबल्यम्। सोम. १०।७।१५. * चोदकात् श्रुतिर्बलीयसी। लक्षणेन उपाकर्तव्यमिति प्रत्यक्षा श्रुतिः, अभिधानेन उपाकर्तव्यमिति चोदकः। भा. १०।४।१।२ वर्णकं ३.



* **चोदकाभावे** प्राजापत्यन्यायाभावः। (५।२।१)। बाल. पृ. ८७. * **चोदकावगतक्रमानुरोधेन** तदन्ता-पकर्षः तदाद्युत्कर्षश्च न्याय्यः। ज्योतिष्टोमे अग्नीषोमीये, सवनीये च पूर्वोत्तरपदार्थयोः क्रम एव तदन्तत्वतदादित्व-नियामकः। सोम. ५।१।१२. * **चोदकाश्रितत्वात्** श्रुत्यर्थपाठकाण्डानां बलीयस्त्वम्, प्रयोगवचनाश्रितत्वात्तु मुख्यप्रवृत्तिक्रमयोर्दुर्बलत्वम्। टुप्. ५।१।१०।१८. * **चोदकप्राप्तं** द्व्यहकालत्वं विकृतिषु 'य इष्ट्या पशुना॰' इति वचनेन बाध्यते। वि. ५।४।७. * **चोदकप्राप्तस्य** यस्य प्रत्यक्षश्रुतेन कार्यमभिनिर्वर्त्यते, तत् तेन निवर्त्य-ताम्। भा. १०।२।२८।६७ (६८). * **चोदकप्राब-ल्यात्** पूर्वं बार्हस्पत्यस्य धर्माः, ततः सारस्वतस्य। अध्वरकल्पायाम्। रत्न. ५।१।१०।१८.

* **चोदकव्यापारौ**। भावयेत्। किम् ? पशूपकारम्। केन ? पुरोडाशयागेन। कथम् इत्यनेन यागगतो व्यापारः (अभिलषितः)। स च उपमितलक्षितप्रापणेन अग्नी-षोमीयस्य (पौर्णमासिकस्य) यो यागगतो व्यापारः, तं सादृश्येन आकाङ्क्षति। तत्र यदेतत् अग्नीषोमीययाग-गतव्यापारविशेषनियमनम् अष्टमलक्षणसिद्धम्, तदुत्प-त्तिरिव उत्पत्तिः। तस्य च व्यापारस्य यत् इतरेण संबन्ध-करणम्, सा प्राप्तिः (विनियोग इत्यर्थः)। द्वावपि चेमौ चोदकव्यापारौ। टुप्. १२।१।१।३.

* **चोदना** इति अपूर्वं ब्रूमः (चोदना पुनरारम्भः इत्यत्रेदम्)। भा. २।१।२।५, * चोदना इति क्रियायाः प्रवर्तकं वचनमाहुः। आचार्यचोदितः करोमि इति हि दृश्यते। १।१।२।२ पृ. १२. * चोदना। 'क्रिमाद्य-पेक्षितैः पूर्णः समर्थः प्रत्ययो विधौ। तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते॥' श्लोवा. १।१।२।३. * 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः।' बाल. पृ. ४. * चोदना च क्रियायाः अभिधायकं वाक्यम्। भा. २।१।१।१ पृ. ३७२. * चोदना धर्मे प्रमाणमेव न वा इति संशये शब्दस्य सर्वत्र प्रमाणान्तरापेक्षयैव प्रामाण्यदर्शनात् चोदनात्मकशब्दस्य मूलभूतप्रमाणान्तरा-भावात् तस्या अपि अप्रामाण्यात् धर्मो निष्प्रमाणक इति पूर्वपक्षः। शब्दस्य प्रमाणान्तरनिरपेक्षत्वेन स्वतः प्रामा-ण्यात् धर्मश्चोदनाप्रमाणक एव इति सिद्धान्तः। वैद्यनाथी. १।१।५।५ पृ. २३.

**चोदना पुनरारम्भः। २।१।२।५॥**

अपूर्वं कथमवगम्यते तदाह। चोदना इति अपूर्वं ब्रूमः। चोद्यते फलार्थं कर्मणश्चोदनात् आक्षिप्यते इति। अस्तीति शेषः। अपूर्वम् अस्ति। पुनःशब्दः यतः इत्यर्थे इति कुतूहलम्। यतः फलार्थे कर्मणः आरम्भः शिष्यते। अपूर्वाभावे विधानमनर्थकं स्यात्। तस्मात् फलजनकत्वेन कर्मविधानान्यथाऽनुपपत्त्या अपूर्वस्य सिद्धिः। अपूर्वम् आत्मनि समवैति। अपूर्वस्य सत्त्वात् विहितद्रव्यगुणापचारे प्रतिनिधिना प्रयोगोऽनुष्ठातव्यः। इदं चापूर्वं कर्मजन्या शक्तिर्वा सूक्ष्मं फलमेव वा। के.

* चोदना पुनरारम्भः। यच्च वृत्त्यन्तरकारैः आरभतेर्णिजन्तात् अच्-प्रत्ययमुत्पाद्य आरम्भयति प्रवर्त-यति इति आरम्भः प्रवर्तकं वाक्यं चोदना इति चोदना-स्वरूपकथनार्थतया एतत्सूत्रं व्याख्यातम्, तत् प्रकृता-पूर्वप्रतिपत्त्युपायशब्दचिन्तानौपयिकत्वात्, चोदनास्वरूप-कथनार्थत्वे च अस्य सूत्रस्य चोदनासूत्रानन्तरं (१।१।२) कर्तव्यत्वापत्तेरयुक्तम्।

'आरम्भः शिष्यते' इति भाष्येण आरम्भप्राति-पदिकात् फलोत्पादनवाचिनः 'तत्करोति तदाचष्टे' (पा॰ धातुपाठे चुरादौ गणसूत्रमिदम्) इति स्मृतेः आरम्भ-माचष्टे इत्यस्मिन्नर्थे णिचमुत्पाद्य अच्-प्रत्ययकरणेन आरम्भं फलोत्पादनम् आचष्टे इत्यारम्भशब्दव्याख्यानात् आरम्भः चोदना, इत्यारम्भशब्दार्थो लभ्यते। सु. पृ. ६१३.

**चोदना पुनरारम्भः। २।१।२।५॥**

कथं पुनरिदमवगम्यते ? अस्ति तावदपूर्वमिति कृत्वा न नामार्थेभ्यः, किन्तु भावार्थेभ्य एवेति निरूपितम्। इदानीमपूर्वमेव किमस्ति नास्तीति विचार्यते। अत्रायं पूर्वपक्षिणोऽभिसंधिः— न तावदपूर्वं प्रत्यक्षेणोपलभ्यते। नाप्यनुमानेन, तत्प्रतिबद्धलिङ्गाभावात्। न च शब्देन। न च लोके अपूर्वप्रतिपादकं किञ्चित्पदमवगम्यते। अपूर्वपदं तु अन्वर्थनामतया अभावप्रतिपादकमेव। न च अपदार्थीभूतस्य वाक्यार्थत्वमस्ति। नाप्युपमानेन,

तस्य सादृश्यमात्रविषयत्वात् । नापि दृष्टार्थापत्त्या, जगद्वैचित्र्यस्य स्वभावादेव उपपत्तेः । नापि श्रुतार्थापत्त्या, श्रुतस्य यागफलसाधनत्वस्य अन्यथैवोपपत्तेः । नहि सर्वत्र कार्यसमसमयभाविनः कारणत्वम्, कार्यकारणयोर्यौगपद्याभावात् । किं तर्हि पूर्वभाविन एव । अतः पूर्वभावित्वमात्रेण कर्मणः साधनत्वं भविष्यतीति किमपूर्वेण ? न च वाच्यम्, भवतु अनन्तरपूर्ववृत्तस्य साधनत्वम्, चिरातिवृत्तस्य तु कथमपूर्वेण विना साधनत्वमुपपद्यतामिति । यतः प्रकल्प्यापि अपूर्वं चिरातिवृत्तस्यैव कर्मणः साधनत्वं वाच्यम् । नहि अपूर्वं साधनम्, कर्मणः एव साधनत्वात् । नापि फलम्, स्वर्गस्यैव फलत्वात् । अथ अपूर्वद्वारेण कर्मणः एव साधनत्वमित्युच्यते, ततः किमपूर्वं कर्मणः शक्तिः व्यापारो वा ? न तावच्छक्तिः, शक्तिर्हि शक्तिमदाश्रया भवति । न च शक्तिमति अतिक्रान्ते शक्तिः समस्ति । नापि व्यापारः, सर्वत्र खलु व्यापाराविष्टस्य व्यापारिण एव साधनत्वं भवति, न तु व्यापारमात्रस्य । **ननु** घृतपानपूर्वानुभवयोरपि धातुसाम्यं संस्कारो वा प्रत्यक्षादिभिरवगम्यते । कल्पनाहेतुत्वं लोके दृष्टमेव, तथा अत्रापि अतीतस्यैव कर्मणः अपूर्वान्तरव्यापारद्वारेण फलसाधनत्वं भविष्यतीति । मैवम् । तत्रापि अतीतयोरेव घृतपानपूर्वानुभवयोः अपूर्वकल्पनावत् अत्रापि अन्यथैवोपपत्तेः निरस्तमेवेति । यत्तु कृष्यादौ दृश्यते एव अन्तरालकार्यम्, तत्र व्यवहितपितामहप्रपितामहादिवत् कारणत्वमेव, न तु अन्येषां तद्व्यापारत्वम् । तेन सर्वत्र पूर्वभाविन एव कारणत्वम् । इयांस्तु विशेषः कस्य चित् अनन्तरपूर्वभाविनः, कस्य चित् चिरपूर्वभाविनस्तत्, इति यथाप्रमाणमङ्गीकरणीयम् इति नास्ति अपूर्वं किञ्चित् प्रमाणम् । तदुक्तम् '**तस्मात् कृतत्वमात्रेण प्रधानं पुरुषे फलम् । अङ्गानि च प्रधानेषु जनयन्तीति गम्यते ॥**' इति । ( वा. पृ. ३९३ ).

अत्र **केचित्** शब्दाभिधेयमेव अपूर्वमिति समाधानमभिदधति । तथाहि, लोके तावत् स्तनपानादिप्रवृत्तिप्रभृतिसकलव्यवहारेष्वेव कार्यावगतिः प्रवृत्तिनिमित्तमिति स्वसंताने समधिगतम् । तेन वृद्धव्यवहारेषु हि श्रवणानन्तरं चेतनप्रवृत्तिमवगम्य स्वर्गकामानुसारेण एतदेव तावत् व्युत्पाद्यमानेनावगतं यत् कार्यावगतिरेव प्रवृत्तिनिमित्तम्, सा च तद्भावभावितया लिङ्शब्देन कृतेति । तत्र यथा लोके क्रियाकार्यमेव प्रवृत्तिहेतुतया समधिगतम्, तथा यो हि यत्कामः स खलु अव्यवहितमेव तदुपायं कार्यतया अवगच्छति । यथा तृप्तिकामो भोजनम्, ओदननिष्पत्तिकामश्च पाकम् । एवं सर्वत्र कृष्यादावपि ऊहनीयम् । तेन यथायथा कामना संभवति, तथातथा तदव्यवहितोपाये एव कार्यतां संभावयतीति व्युत्पत्तिः । एवं च सति 'स्वर्गकामो यजेत' इत्यादिषु स्वर्गकामनाविशिष्टपुरुषसंबन्धिकार्ये लिङादिभिः प्रतिपादनीयम् । न च स्वर्गकामः कालान्तरभाविनः स्वर्गस्य व्यवहितां यागादिक्रियां तदुपायतया कार्यत्वेन बोद्धुं शक्नोति । अव्यवहितोपायस्यैव लोके कार्यत्वेन अवगमस्य उक्तत्वात् । तेन अव्यवहितोपायकार्यत्वव्युत्पत्त्यनुरोधेन क्रियाऽतिरिक्तं कालान्तरस्थायि मानान्तरवेद्यं पुमांसमाश्रितं नियोज्यान्वययोग्यं लिङादिशब्दाभिधेयमपूर्वमेव कार्यम् अर्थापत्त्या कल्प्यते इति । तच्च यागस्य फलसाधनत्वनिर्वाहाय परैरपि कल्पनीयम् । अस्माभिश्च अव्यवहितकाम्योपायकार्यव्युत्पत्तिबलात् तदेव प्रधानं फलोपायभूतं लिङ्शब्दाभिधेयं स्वीकृतमिति नानुपपन्नम् । नन्वेवं सति अर्थापत्तिप्रमाणकत्वेन अपूर्वत्वव्याहतिः स्यात् । सत्यं यदि अपूर्वं अर्थापत्तिः प्रमाणं भवेत्, किं तर्हि तद्विषयलिङादिशब्देन तात्पर्यविषयतया तदुपस्थितौ न तत्र प्रामाण्यम् । यथा परमते एव विश्वजिदादौ यद्यपि स्वर्गकामादिपदे श्रुतार्थापत्त्या कल्प्यमाने तदर्थोऽपि विशेषणतया उपस्थित एव, तथापि न तत्रार्थापत्तिः प्रमाणं भवेत्, किं तर्हि ? वाचकशब्दः एव । तद्वाचकशब्दे तु सा प्रमाणम् । तद्वदिहापि नापूर्वरूपेऽर्थे अर्थापत्तिः प्रमाणम् । किं तर्हि ? तद्गोचरलिङादिशब्दतात्पर्ये एव । अवधृततात्पर्यश्च लिङादिशब्दः एव तत्र प्रमाणमिति । एवं च तत्रैव लिङ्शब्दस्य मुख्यत्वम् । नहि सति संभवे अनेकार्थत्वं शब्दस्य युक्तमिति लिङ्शब्दस्य क्रियाकार्यत्वं लाक्षणिकमेव ।

ननु अवगतमुख्यार्थस्य अन्वयानुपपत्तिर्हि लक्षणाकारणम् । न च लोके लिङ्शब्दस्य मुख्यभूतः अपूर्वोऽर्थो



विदितपूर्वः । तदनवगमे च कथं लक्षणेति । मैवम् । प्रामाणिकानाम् उत्तरकालमयं विवेकः, इतरेषां तु अपभ्रंशादिवत् । न च लिङ्शब्दातिरिक्तप्रमाणम् अपूर्वमवगम्यते । क्रिया तु प्रमाणान्तरावगतेति सैव लक्षणाविषयः, नापूर्वम् । संबन्धश्च यद्यपि लौकिकभोजनादिक्रियया सह साक्षादपूर्वस्य नास्ति, तथापि यागादिक्रिया तावत् अपूर्वसंबद्धा, तद्गतं च क्रियात्वं भोजनादिक्रियास्वपि अस्तीति परस्परसंबन्धात् लक्षणोपपत्तिरिति । **ननु** काम्यस्वर्गविशिष्टः पुरुषो व्यवहितोपायतया क्रियां विहाय अव्यवहितोपायमपूर्वरूपं कार्यं प्रवृत्तिहेतुतया लिङभिधेयं चेन्मन्यते, एवं तर्हि इष्टोपायतैव प्रवृत्तिहेतुरस्तु लिङभिधेया च, किमानुषङ्गिककार्यावगमेनेति । **उच्यते** । कस्य इष्टोपायता प्रवृत्तिहेतुः, लिङभिधेयता च भवदभिमता । न तावत् यागस्य, नापि कृतेः, न द्वयोरपि, व्यवहितत्वेन अव्यवहितकाम्योपायत्वाभावात् । अव्यवहितकाम्योपायस्यैव कार्यत्वेन लिङभिधेयत्वस्वीकारात् । अथ अव्यवधानात् अपूर्वस्यैव, तदयुक्तम् । परमतेऽपि विधितः पूर्वम् अपूर्वस्य अनवगतत्वात् । लिङादिशब्देनैव अपूर्वमभिधातव्यं तद्गतेष्टोपायत्वं च । अस्मन्मते तु अपूर्वमात्रमेव कार्यरूपेण अभिधीयते इति महानयं विशेषः । अतः शब्दाभिधेयमेव अपूर्वमिति ।

( **प्रभाकरमतखण्डनम्** ) अत्रोच्यते । भवेदेवं यदि व्युत्पत्तिविरहमहानलज्वालापरम्परापरिहारो न भवेत् । तथाहि, यत्तावदुक्तं स्तनपानादिप्रभृति सकलव्यवहारेष्वेव कार्यावगतिः प्रवृत्तिनिमित्तं स्वसंताने समधिगतमिति । तदयुक्तम्, व्यभिचारात् । कृतिसाध्यं हि कार्यमित्यवगतं लोके, कृत्यनन्तरम् उत्पत्तुमर्हत्वं लोके विषभक्षणकण्टकमर्दनादिष्वपि अविशिष्टम् । नहि विषभक्षणे कण्टकमर्दने वा कृत्यनन्तरोत्पत्त्यर्हत्वं न संभवति । न च तस्य स्वसंताने प्रवृत्तिहेतुत्वम् अनवगतम् । अथ अनिष्टोपायतया न तत्र प्रवृत्तिः, एवं तर्हि तदागमन्यायेन इष्टोपायतैव प्रवृत्तिहेतुरस्तु, किं कार्येणेति ।

**यदपि केनाप्युक्तं** न कृत्यनन्तरोत्पत्त्यर्हत्वं कार्यत्वम्, किन्तु कृतिप्रयोजनत्वे सति कृत्यनन्तरोत्पत्त्यर्हत्वम् । प्रयोजनं च तदेवोच्यते, यदवगतमिच्छाप्रवृत्तौ कारणम् । न च इष्टोपायतैव परमवगता सती इच्छाप्रसवकारणम्, किन्तु इष्टतदुपायानिष्टपरिहारतदुपायानां चतुर्णामेव इच्छाप्रसवहेतुत्वम् । सकलकार्यस्यैव च अनियतकारणत्वासंभवात् एतच्चतुष्टयानुगतमेव इच्छोत्पत्तिकारणं वक्तव्यम्, चतुर्ष्वन्यतमत्वमेव······एतदेव वा कृतिप्रयोजनत्वम् । नहि विषभक्षणे कण्टकमर्दने वा एवम्भूतकृतिप्रयोजनत्वे सति कृत्यनन्तरोत्पत्त्यर्हत्वमस्ति इति न तेन व्यभिचार इति । **तदेतदर्थशून्यं** भ्रामकमेव परं वचनम् । नहि इष्टोपायातिरिक्ता अन्या कोटिः समस्ति, अनिष्टपरिहारस्यापि इष्टत्वात् अनिष्टपरिहारोपायस्यापि इष्टोपायत्वात् । तत्र च इच्छाप्रसवहेतुत्वं स्वभावसुन्दरत्वात् इति इष्टस्यैव परम्, न तु इष्टोपायस्य, अप्रियत्वेन स्वतो दुःखहेतुतया इच्छोत्पादकत्वासंभवात् । किन्तु फलमेव स्वगतामिच्छामुत्पाद्य स्वोपायतया तत्रापि इच्छामुत्पादयति । एतच्च लिप्साधिकरणे एव (४।१।२।२) प्रपञ्चितम् । तेन साधनस्य इच्छाजनकत्वान्न प्रयोजनत्वम् । अतः कथं कृतिप्रयोजनत्वविशेषितमपि कार्यत्वं प्रवृत्तिजनकमिति । अथ तन्मा भवतु इष्टोपायस्य इच्छाजनकत्वम्, इच्छाविषयत्वं तावदस्ति । न च विषभक्षणकण्टकमर्दनयोः इच्छाविषयत्वमस्ति । तेन इच्छाविषयत्वविशेषितमेव कार्यं प्रवृत्तिहेतुर्भविष्यतीति । तदप्ययुक्तम् । साधनस्य हि इच्छाविषयत्वं फलजन्यमित्युक्तम् । तच्च फलसाधनत्वावगमाधीनमेव इति तदेव प्रवृत्तिनिमित्तम् । तेन इच्छाद्वारेण इष्टोपायताया एव प्रवृत्तिहेतुत्वं लोकेऽपि इति कार्यस्य प्रवृत्तिहेतुत्वे व्युत्पत्तिविरहः एवेति । भवतु वा लोके कार्यस्य प्रवृत्तिहेतुत्वम्, तथापि वेदे अपूर्वरूपकार्योपस्थितिस्तु कुतः ? तथाहि, किमत्र लिङभिधेयं प्रवृत्तिनिमित्तं कार्यशब्देनाभिमतम् ? किं कृत्युद्देश्यं प्रधानं परम्परया कृतिसाध्यम्, अथ साक्षादेव अन्योद्देशप्रवृत्तकृत्युत्पाद्यम् ? अत्र न तावत् पूर्वः, तथात्वे फलस्यैव कार्यत्वात् । नहि कृत्युद्देश्यं प्रधानं परम्परया कृतिसाध्यं फलातिरिक्तं लोके दृष्टम् । नापि द्वितीयः, तथात्वे च धात्वर्थस्यैव कार्यत्वात् । नहि साक्षादन्योद्देशप्रवृत्तकृत्युत्पाद्यं धात्वर्थातिरिक्तं लोके समधिगतम् । अपूर्वं तु एतदुभयरूपाभावात् कुतः कार्यम् ? अतो यदुक्तम् अव्यवहितकाम्यो-

पायत्वमेव कार्यत्वमिति लोके समधिगतमिति, तन्निरस्तम्। एतदुभयरूपरहितस्य कार्यत्वासंभवात्। यदपि लोके स्वसंतानानुसारेण कार्यावगमः प्रवृत्तिहेतुः इति असत् हि आरोप्याभिहितम्, तदपि साक्षात् अन्योद्देशप्रवृत्तकृत्युत्पाद्यक्रियारूपकार्यमेव। वेदेऽपि यदि तथाभूतकार्यावगमः प्रवृत्तिहेतुरभिधीयते, तदिष्यते एव। न च वाच्यम् ' यदनन्तरं यन्निष्पद्यते तदेव तदुद्देशप्रवृत्तकृतिनिष्पाद्यं भवति, तृप्त्युद्देशप्रवृत्तकृतेरिव भोजनम्। न च यागानन्तरं फलं निष्पद्यते। अतो न यागस्य फलोद्देशप्रवृत्तकृतिसाध्यत्वमिति।' यतो लक्ष्यवेधक्षणोद्देशप्रवृत्ता हि कृतिः ज्याकर्षणविमोकमात्रनिवृत्ता, न च तदनन्तरं लक्ष्यवेधो निष्पद्यते। किं तर्हि ? वेगाख्यसंस्कारपरम्परया चिरेणैव। तेन क्व चिदनन्तरस्य, क्व चित् व्यवहितोपायस्यापि लोके कार्यस्य दृष्टत्वात् अव्यवहितोपायत्वमेव कार्यत्वमिति नास्ति व्युत्पत्तिः। अथ तत्रापि लक्ष्यवेधाव्यवहितक्रियाक्षणस्यैव कार्यत्वमित्युच्यते, तत् किं कृत्युद्देश्यत्वेन कृत्युत्पाद्यत्वेन वा ? न तावदुद्देश्यत्वेन लक्ष्यवेधस्यैव उद्देश्यत्वात्। नापि साक्षात्कृत्युत्पाद्यत्वेन, आद्यक्रियाक्षणमात्रोत्पादनिवृत्तत्वात् कृतेः। तेन यथा अवान्तरव्यापारद्वारेण व्यवहितोपायस्यापि लक्ष्यवेधस्य कार्यत्वम्, तथा यागस्यापि स्वीक्रियताम्, किमपूर्वकार्यस्वीकारव्यसनेनेति। तेन फलधात्वर्थातिरिक्तापूर्वाख्यकार्यस्वरूपे व्युत्पत्तिविरहः। भवतु वा अपूर्वमेव कार्यम्, तथापि विधिशब्दाभिधेयत्वं तस्य कुतः ? तथाहि, स्वर्गकामपदसमभिव्याहारान्यथाऽनुपपत्त्या अव्यवहितकाम्योपायरूपे कार्ये लिङ्शब्दस्य शक्तिः कल्पनीया। तथा च सति अर्थापत्तिविषयत्वात् तस्य अपूर्वत्वव्याहतिर्दुर्निवारैव। यदुक्तम् अर्थापत्तेः उपस्थापकत्वमात्रम्, अपूर्वप्रामाण्यं पुनर्लिङ्शब्दवाच्यत्वे एव। यथा विश्वजिदादौ स्वर्गकामपदकल्पनायामिति। तदयुक्तम्। विश्वजिदादिषु हि स्वर्गरूपस्य सर्वान् प्रति अविशिष्टत्वेन अवगतपूर्वतया उपस्थितस्य तत्साध्यत्वाभिधायकं स्वर्गकामपदं विश्वजिद्वाक्यशेषत्वेन श्रुतार्थापत्त्या कल्प्यते इति युक्तम्। अत्र पुनः अपूर्वकार्यस्य अन्यतः अनुपस्थितत्वात् अपूर्वत्वात् अर्थापत्तिप्रमाणेनैव उपस्थितिर्वक्तव्या। प्रमाणं चोपस्थापयति, अथ च न तत्र प्रमाणम् इति हास्यास्पदमेव। तत्र यदि अर्थापत्तिः अपूर्वे प्रमाणम्, तत्र लिङ्गोऽनुवादकत्वात् अप्रामाण्यमेव। अर्थापत्तिप्रमाणात् अनुपस्थिते अपूर्वकार्ये हि लिङादिभिः सह वाच्यवाचकसंबन्धानवधारणात्। न च शब्दसहायात् तर्कादेव अपूर्वोपस्थितिरिति वाच्यम्। यतः प्रमाणोपस्थिते खल्वर्थे तद्विपरीतार्थान्तरगतानिष्टप्रसङ्गः तर्कः। यथा ' श्येनेनाभिचरन् यजेत ' इति। अत्रैव अवगते भावार्थस्य फलसाधनत्वे नामार्थस्यापि फलसाधनत्वे अदृष्टान्तरकल्पनाप्रसङ्गः। न चात्र अन्यथाऽनुपपत्तेः प्राक् शब्दात् अपूर्वस्योपस्थितिरिति सत्यपि अपूर्वकार्यत्वे संबन्धाग्रहरूपः अपरो व्युत्पत्तिविरहः। तदयं संक्षेपार्थः,
'प्रवर्तकत्वे कार्यस्य तथाऽपूर्वस्वरूपके। विधिशब्दाभिधेयत्वे व्युत्पत्तिविरहस्त्रिधा ॥'
दूषणान्तराणि तु विस्तरभयान्नोक्तानि। तदेतत् सर्वथा अपूर्वकार्याभिधानं विधिशब्दस्य अभिधानतो यथायथा निरूप्यते, तथातथा कदलीकाण्डे अन्तस्सारविचारसमानमेव इत्यलमतिस्वप्नस्य विकत्थनेन इति यथावार्तिकमेव अपूर्वप्रमाणं प्रस्तूयते।

अर्थापत्तिरेव अपूर्वे प्रमाणमिति। तथाहि, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' इत्यत्र विध्यवरुद्धा भावना स्वर्गकामपदोपनीतं पुरुषार्थीभूतं स्वर्गमेव साध्यं परिगृह्य साधनाकाङ्क्षिणी यागमेव समानपदोपात्तं साधनतया गृह्णती कालान्तरभाविनि स्वर्गे भङ्गिनो यागस्य साधनत्वमवगतम् अनुपपद्यमानमपूर्वरूपं यागजन्यमवान्तरव्यापारभूतं चिरस्थायि कल्पयति। न च वाच्यम् 'सर्वत्र व्यापारविशिष्टस्यैव व्यापारिणः साधनत्वं भवति, न तु निवृत्ते व्यापारिणि व्यापारमात्रस्य' इति। यतो धनुर्ज्याऽऽकर्षणमोक्षणस्य अतिक्रान्तस्यापि अवान्तरव्यापारपरम्पराद्वारेण चिरेणापि लक्ष्यवेधसाधनत्वदर्शनात्। अत एव यत् केनाप्युक्तम्, यत् विद्यमानव्यापारिजनितः एव अवान्तरव्यापारः इत्युत्पत्त्यपूर्वव्यवहितस्य परमापूर्वस्य नावान्तरव्यापारत्वमिति, तदपि परास्तम्। येन अनेकव्यापारपरंपरया व्यवहितस्यापि अन्तिमवेगाख्यसंस्कारजन्यस्य क्रियाक्षणस्य लक्ष्यवेधोद्देशप्रवृत्तधनुर्ज्याऽऽकर्षणमोक्षणावान्तरव्यापारत्वदर्शनात्। किञ्च अर्थापत्तेः



अन्यथाऽपि उपपत्तिः, अन्यथैवोपपत्तिः इति दूषणद्वयम्। तेन अनुमानदूषणं विशेषविरोधम् अभिदधतः अर्थापत्तिदूषणापरिज्ञानमेव आत्मनः प्रकटितमिति।

यदप्युक्तम्, कार्यकारणयोः अयौगपद्यात् सर्वत्र पूर्वभाविनः एव कारणत्वम्, तेन यथा अनन्तरपूर्वभाविनः तथा अर्थापत्त्या क्व चित् चिरपूर्वभाविनोऽपि यागस्य भविष्यतीति। तदयुक्तम्। कारणत्वं हि कार्योत्पत्तिशक्तियोगित्वम्। न च अतीतस्य शक्तियोगित्वं संभवति। कथं तर्हि पूर्वभाविनः कारणत्वमिति चेत्, उच्यते। द्वयी हि कार्यस्यावस्था उत्पन्नावस्था, उत्पद्यमानावस्था च। तत्र उत्पन्नावस्थायां कारणस्य पूर्वभावित्वमेव। तदभिप्रायेणोच्यते अनन्तरपूर्वभावि कारणमिति। उत्पद्यमानदशायां तु कार्योत्पत्तिशक्तियोगि कारणं विद्यते एव, सर्वत्र उत्पद्यमानदशायां कारणस्य विद्यमानत्वात्। कथं चिरातिवृत्तस्य कारणत्वमिति ? तेनैव शब्दावबोधितसाधनत्वानुपपत्त्या तदुपपादकम् अपूर्वं कल्प्यते इति। तदुक्तम् ' **फलाय विहितं कर्म क्षणिकं चिरभाविने। तत्सिद्धिर्नान्यथेत्येवमपूर्वमपि कल्प्यते ॥**' इति ( वा. पृ. ३९० )।

नन्वेवं भवतु क्षणिकस्य यागस्य चिरभाविफलकरणत्वान्यथाऽनुपपत्त्या फलापूर्वमेकम्। अपूर्वान्तराणि तु कुतः ? उच्यते। ' दर्शपूर्णमासाभ्यां यजेत ' इत्यत्र करणतया परस्परसहिता भङ्गिनः षड् यागाः प्रतीयन्ते। तेन यथा फलकरणत्वानुपपत्त्या फलापूर्वमेकं कल्प्यम्, तथा क्षणिकानां साहित्यानुपपत्त्या उत्पत्त्यपूर्वाण्यपि कल्प्यन्ते एवेति नानुपपन्नम्। ते च षड् यागाः कालसंबन्धितया समुदायद्वयापन्नाः ' दर्शपूर्णमासाभ्याम् ' इति करणविभक्त्या विवक्षितसाहित्याः करणतया प्रतीयन्ते। तेषां च समुदायद्वयापन्नानाम् अङ्गानि उदीच्यानि यथा प्रयाजादीनि साधारणानि, असाधारणान्यपि तथा बहूनि सन्त्येव। तद्यथा ' चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम् ' इति चतुर्होतृपञ्चहोतृमन्त्राणाम् असाधारणाङ्गत्वम् ( ' पृथिवी होता ' इत्यादिको मन्त्रश्चतुर्होता। ' अग्निर्होता ' इत्यादिको मन्त्रः पञ्चहोता। ) तथा ' संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति ' इति वैमृधस्य कर्मणः पौर्णमास्यङ्गत्वमिति। अङ्गं च तत् भवति, यत् स्वरूपे कार्ये वोपकरोति। तत्र उदीच्याङ्गानां स्वरूपोपयोगाभावात् कार्ये एवोपयोगो वक्तव्यः। तेन साङ्गा पौर्णमासी एकं समुदायापूर्वं जनयति। तथैव अमावास्या अपरं समुदायापूर्वमिति। न च फलापूर्वे एव कार्ये उदीच्याङ्गोपयोगः इति वक्तव्यम्। असाधारणाङ्गोपदेशस्य असाधारणकार्यव्यतिरेके अनुपपत्तेः। अन्यथा एकफलापूर्वप्रयुक्तत्वेन प्रयाजादिवत् तेषामपि साधारणत्वप्रसङ्गात्। किञ्च यत्र विभिन्नसमुदायसाध्यमेकं कार्यम्, तत्र प्रात्यात्मिकसमुदायसाध्यावान्तरकार्यद्वारेणैव। यथा पदात्मकवर्णसमुदायानां पदार्थज्ञानावान्तरकार्यद्वारेण वाक्यार्थज्ञानमिति व्युत्पत्तिवशात्। उत्पत्त्यपूर्वाणां फलापूर्वसाधनत्वानुपपत्त्या साङ्गसमुदायद्वयजन्यमपूर्वद्वयमेव कल्प्यते इति।

नन्वेवं तर्हि समुदायापूर्वद्वयमेव अव्यवहितफलसाधनमस्तु, किं परमफलापूर्वस्वीकारेण ? उच्यते। कर्तुः इष्टफलनिष्पादकता फलाव्यवहितैककार्यद्वारेणैव, यथा कुविन्दस्य तन्तुसंयोगनिष्पादनद्वारेण पटनिष्पादकत्वमिति व्युत्पत्त्या समुदायापूर्वद्वयस्य अव्यवहितफलसाधनत्वानुपपत्त्या फलापूर्वमेकं कल्प्यते इत्यपूर्वनवकसिद्धिः।
' तदपूर्वनवकशाखिनि ( चारोपचारबालवलमीभुजङ्गः ) सङ्क्तसोपानकं चक्रे। '

अत्र न प्रतिपदाधिकरणापूर्वाधिकरणयोः भावार्थाधिकरणपरिकरत्वात् भावार्थाधिकरणप्रयोजनेनैव प्रयोजनवत्त्वम्। भावार्थाधिकरणप्रयोजनं चैवम्—यदि द्रव्यगुणयोः फलसंबन्धः तदा अप्रतिनिधानम्, अदृष्टकार्यत्वेन तत्सदृशस्य द्रव्यादेस्तत्कार्यत्वानवधारणात्। भावार्थस्य तु फलसाधनत्वे, द्रव्याभावे तत्सदृशद्रव्यान्तरस्य दृष्टकार्यत्वेन प्रतिनिधानमिति।

**सूत्रं तु** — अपूर्वं पुनरस्ति, यदारम्भश्चोदना। आरभ्यते इत्यारम्भः फलभावनैवोच्यते। सैव चोद्यमाना अपूर्वसद्भावे प्रमाणमित्यर्थः। **तौता.**

* **चोदना** 'प्रवर्तेऽहमिति ज्ञानं येन शब्देन जन्यते। सा चोदनोच्यते यद्वा प्रवर्तनफला मतिः ॥'

सु. पृ. ९७. * चोदना । 'प्रवृत्तौ वा निवृत्तौ वा या शब्दश्रवणेन धीः । सा चोदनेति सामान्यं लक्षणं हृदये स्थितम् ॥' श्लोवा. १।१।२।२।२१०–२११. * चोदना यद्यपि कार्यमर्थं प्रतिपादयति, तथापि पौरुषेयी चोदना प्राप्नोति, वचनस्य स्वातन्त्र्यदर्शनात् ततश्च प्रत्ययान्तरसापेक्षत्वात् अप्रामाण्यमापद्यते ( इति चेन्न )। यदि चोदना कार्यमर्थं प्रतिपादयति तदा न पौरुषेयी । पुरुषा हि प्रमाणान्तरप्रतीतार्थप्रतिपादनाय वाक्यं प्रयुञ्जते । न च कार्यं प्रमाणान्तरप्रमेयम् । तेन तत्प्रतिपादकस्य न पौरुषेयत्वम् । अतः अदृष्टमपि स्वातन्त्र्यं कल्प्यते कार्यप्रतीतिबलेन । चैत्यवन्दनादिषु तु पौरुषेयत्वेन स्मरणम् । तेन अनपेक्षत्वं चोदनायाः । ऋजु. पृ. २३.

**⌛ चोदना वा गुणानां॰** इत्यनेन न्यायेन ( २।२।३।६ ) अनेकार्थोपादानलक्षणादपि गुणात् कर्मान्तरविधिसिद्धिः ( यदि रथंतरसामा सोमः स्यात् इत्यादौ ) । सु. पृ. ८८९, * 'चोदना वा गुणानां युगपत् शास्त्रात्' इत्यनेन न्यायेन विष्ण्वादिवाक्यैः ( विष्णुरुपांशुयष्टव्यः इत्यादिभिः ) यागविधावपि अन्तरालवाक्येन कर्मान्तरविधानापत्तिः । पृ. ७५३. * चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टम् इत्येवंजातीयकमर्थं शक्नोत्यवगमयितुं नान्यत् किञ्च, नेन्द्रियं (वा) । भा. १।१।२।२ पृ. १३, * यत्र भूयांसो गुणाः समाम्नाताः तत्र क्रियार्था चोदना इति गम्यते । ३।३।३।१०, * चोदनाः न पौरुषेय्यः इति सिद्धान्तः । १।१।८।२७–३२. * चोदनायाः प्रामाण्यम् । न तावदुपलम्भकारणान्तरं शक्यानुमानं परिगणितप्रमाणसामग्रीव्यतिरिक्तस्य अभावनिश्चयात् । उपदेशस्तु व्यामोहादपि उपपद्यते । असति व्यामोहे वेदादपि उपपद्यते । अतः प्रमाणान्तरस्य अनपेक्षणात् न तद्विपर्ययेण अप्रामाण्यं चोदनायाः । स्वतश्चार्थप्रतिपादकतया अर्थसंस्पर्शिता । ऋजु. पृ. २४.

**⌛ चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत, नह्यशब्दं प्रतीयते । ४।३।५।१० ॥**

'तस्मात् पितृभ्यः पूर्वेद्युः करोति' इति श्रूयते, 'यः सत्रायागुरते, स विश्वजिताऽतिरात्रेण सर्वपृष्ठेन सर्वस्तोमेन सर्ववेदसदक्षिणेन यजेत' इति च । इदं पितृकर्म विश्वजिद्यागो वा किं निष्फलं कर्ममात्रम्, उत सफलमिति संशये पूर्वपक्षमाह । अस्यां चोदनायां विधिवाक्ये फलाश्रुतेः फलस्य अश्रवणात् कर्ममात्रं निष्फलमेव कर्म विधीयेत । नहि अशब्दं शब्देन अप्रतिपादितं फलं प्रतीयते प्रत्येतुमर्हति । तस्मात् फलाश्रवणात् पितृकर्म विश्वजिच्च निष्फलः सन्नेव विधीयते ।

**अपिवाऽऽम्नानसामर्थ्याच्चोदनाऽर्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्तेऽर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धस्तस्माच्छ्रुत्येकदेशः सः । ११ ॥**

पूर्वपक्षं निरसितुम् अपिवा–शब्दः । न तत् कर्म निष्फलम् । तत्र कर्मणि फलस्य चोदना, करोति यजेत इति अर्थेन कर्तव्यतावचनेन गम्येत । आम्नानसामर्थ्यात् । आम्नायते इति आम्नानं विधियुक्ता भावना । आम्नानसामर्थ्यात् विधिभावनासामर्थ्यात् फलचोदना गम्यते । ननु फलवाचकः शब्दोऽत्र नास्ति । सत्यम् । परन्तु लोके श्रुतानामर्थानाम् अर्थवत्त्वेन उपपत्तिमत्त्वेन कारणेन वचनानि व्यवहितान्यपि अध्याहारादिभिः संबन्धीनि प्रतीयन्ते । अन्यथा तु अर्थतः यानि असमर्थानि पदार्थं बोधयितुम्, तेषामर्थतः असमर्थानाम् आनन्तर्येऽपि सति असंबन्धः न संबन्धः नान्वयो भवति । 'देवदत्तस्य भार्या राज्ञः पुरुषः' इत्यत्र भार्यापदस्य राज्ञः इति पदेन आनन्तर्ये सत्यपि न तयोः संबन्धः कश्चित् । तस्मात् सः दूरस्थोऽपि फलबोधकः शब्दः, श्रुत्येकदेशः श्रुतस्य वाक्यस्य एकदेशः इति ध्येयम् । अर्थतः संबद्धस्य दूरस्थस्यापि अन्वयो ज्ञातुं शक्यते अव्यवहितस्यापि च अर्थतः असंबद्धस्य अन्वयो ज्ञातुं न शक्यते । प्रकृते 'पितृभ्यः पूर्वेद्युः करोति' इत्यादावपि दूरस्थेन फलपदेन अन्वये सति कर्मणः सफलता सिध्यति ।

**वाक्यार्थश्च गुणार्थवत् । १२ ॥**

सिद्धान्ती एव आह । चशब्दः शङ्कानिरासार्थः तुशब्दस्य स्थाने निविशमानः । गुणार्थवत् वाक्यार्थः संपद्यते । यथा 'इन्द्राय राज्ञे सूकरः' इति वाक्यस्य स्वतः आख्यातशून्यस्यापि 'अश्व आलभ्यते' इति वाक्यान्तरस्थे आख्यातपदे समुपलब्धे अर्थः संपन्नो भवति, एवं प्रकृतवाक्यमपि अन्यतः फलपदे समुपलब्धे तेन फलरूपेण गुणेन अर्थवत् सार्थकं परिपूर्णं भवेत् । तथा च वाक्यार्थः परिपूर्णः संपद्येत । तस्मात् पितृकर्म विश्वजिच्च कर्म सफलमेव विधीयते । के.



* चोदनायां सत्याम् अग्निहोत्रात् स्वर्गो भवतीति गम्यते । भा. १।१।२।२ पृ. १४.

**⌛ चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् । १०।५।४।१२ ॥**

'द्विरात्रेण यजेत' 'त्रिरात्रेण यजेत' इत्येवमादिषु चोदनासु प्रायणीयोदयनीयौ वर्जयित्वा द्वादशाहगतस्य दशाहस्य आदित आरभ्य विध्यन्तः प्रवर्तते अपूर्वत्वात्, न पूर्वा प्रकृतिः यस्य सः अपूर्वः प्रकृतिरूपः दशाहः, तस्य भावः अपूर्वत्वं तस्मात् । अपूर्वत्वात् दशाहस्य धर्मनियमः स्यात् धर्माणां नियमः स्यात् दशाहधर्मा नियताः स्युः । दशाहविध्यन्तः स्यात् इत्यर्थः । लिङ्गेन । किं लिङ्गम् ? 'यत् प्रथमं तद् द्वितीयम्, यद् द्वितीयं तत् तृतीयम्, जगतीमन्तर्गच्छति' इति । इदं यत् प्रथमं द्विरात्रस्य, तद् द्वितीयं द्वादशाहस्य गायत्रम् । यत् द्वितीयमहः द्विरात्रस्य, तत् तृतीयं द्वादशाहस्य त्रैष्टुभम् । 'जगतीमन्तर्गच्छति' इति षडहतृतीयं जागतमहः द्विरात्रे अन्तरीयमाणं दर्शयत् दशरात्रस्य प्रवृत्तिं दर्शयति । अत्र लिङ्गवाक्ये यत्प्रथममिति द्विरात्रस्य वादः प्रकरणात् । तत्तृतीयमिति द्वादशाहस्य, द्विरात्रे तृतीयाभावात् । अपरं लिङ्गम् 'गायत्रं प्रथममहः, त्रैष्टुभं द्वितीयम्, जगतीमन्तर्गच्छति' इति ।

अत्र भाष्यम्— चोदनासु तासु प्रायणीयोदयनीययोः पूर्वत्वेन असंभवात् दशरात्रस्य विध्यन्तः प्रवर्तते– इति । द्वादशाहसंबन्धिप्रथमचरमयोः अपूर्वत्वात् प्रकृतित्वात्– इति **सुबोधिनी** । प्रायणीयोदयनीययोः अपूर्वत्वात् प्रकृतित्वासंभवात्–इति **कुतूहलं सोमनाथी** च । सूत्रे तुशब्दः पूर्वोक्तस्य आद्योपादानस्य अपवादं सूचयति ।

**प्राप्तिस्तु रात्रिशब्दसंबन्धात् । १३ ॥**

लिङ्गमुक्तम्, अत्र प्राप्तिं दर्शयति । अत एव तुशब्दः । रात्रिशब्दसंबन्धात् दशरात्रविध्यन्तस्य प्राप्तिः । द्विरात्रादिशब्दे रात्रिशब्दः द्वादशाहीयदशरात्रशब्देऽपि रात्रिशब्दः । एवमुभयत्र रात्रिशब्दस्य संबन्धः । तदेतत् प्रकृतिलिङ्गम् । तस्मात् दशरात्रस्य विध्यन्तः इति सिद्धान्तः । के.

* द्वादशाहविकृतिषु द्वादशाहस्य प्रायणीयोदयनीयौ वर्जयित्वा मध्यमदशरात्रस्य धर्माः प्रवर्तन्ते इति 'चोदनासु॰' इत्यधिकरणे निर्णीतम् । द्विरात्रादयो द्वादशाहविकृतयः । परिमल. ३।३।२९।४४–४५ ब्रसू. * यश्चार्थादर्थः, न स चोदनाऽर्थः । भा. ११।३।६। १४ ( १६ ).

**⌛ चोदनैकत्वाद् राजसूयेऽनुक्तदेशकालानां समवायात् तन्त्रमङ्गानि । ११।४।१।१ ॥**

राजसूये त्रिसंयुक्तद्वयादीनां यानि प्रधानानि अनुक्तदेशकालानि, तत्र अङ्गानां तन्त्रभावः, उत भेद इति विचारे पूर्वपक्षमाह । चोदनैकत्वात् राजसूयेन इत्येकवचनान्तेन शब्देन चोदितत्वात् चोदनाया एकत्वात्, समवायात् फलनिर्वर्तने सर्वेषां समवायात् राजसूये अनुक्तदेशकालानां त्रिसंयुक्तद्वयादीनामङ्गानि तन्त्रं स्युः ।

**प्रतिदक्षिणं वा कर्तृसंबन्धादिष्टिवदङ्गभूतत्वात्, समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् । २ ॥**

नाङ्गानां तन्त्रम्, किन्तु भेदेन, प्रतिदक्षिणं कर्तृसंबन्धात् । दक्षिणाभेदात् कर्तृसंबन्धभेदः, तस्माच्च प्रयोगभेदः, प्रयोगभेदात् अङ्गभेदः । इष्टिवत् । यथा पौर्णमासकालानि अङ्गानि कालभेदात् न दर्शस्योपकुर्वन्ति, तद्वत् । तस्मात् न तन्त्रम् । यत्तु चोदनैकत्वात् इत्यादि, तत्राह । हि यस्मात् तन्निर्वृत्त्या एकफलनिष्पादनेन समुदायो भवति । तेन तदेकत्वात् फलैकत्वात् एकशब्दोपदेशः एकवचनान्तेन एकेन 'राजसूयेन' इति शब्देन सर्वेषां प्रधानानामुपदेशः स्यात् । इष्टिवत् इति अत्रापि संबध्यते । यथा दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समुदायः, तद्वत् । तस्मात् न तन्त्रम् । वाशब्दः पूर्वोक्तस्य अङ्गतन्त्रस्य निरासार्थः ।

**तथा चान्यार्थदर्शनम् । ३ ॥**

'यत् पूर्वं त्रिसंयुक्तं वीरजननं तत्, यदुत्तरं पशु-

जननं तत्' इति अन्यार्थदर्शनं तन्त्रभेदं दर्शयति। साङ्गयोर्हि फलसंबन्धः, तेन साङ्गयोः प्रधानयोः पौर्वापर्यं ज्ञायते। तस्मात् राजसूये पृथग्दक्षिणायुक्तानाम् आग्नावैष्णवादीनां भेदेन अङ्गानुष्ठानमिति सिद्धान्तः। के.

* **चोदनागतं** यत्, तदन्तरङ्गं भवति, बहिरङ्गमितरत्। भा. ८।२।६।३१, * चोदनागतं लिङ्गं प्रापकम्, मन्त्रगतं प्राप्तस्य द्योतकम्। ८।१।१६।३१, * **चोदनानिमित्तं** धर्मस्य ज्ञानम् इत्युक्तमस्माभिः (चोदनासूत्रे)। १।१।३।३. * **चोदनायाथात्म्यम्**। एकपुरुषपाठस्य अविश्रम्भणीयत्वेन चोदनायाथात्म्यनिश्चायकत्वायोगात् पारंपर्याविच्छेदेनैव निश्चायकत्वम् अङ्गीकार्यम्। अनादित्वाच्च अनवस्थादोषाभावः। सु. पृ. १२३.

* **चोदनालक्षणं** कर्तव्यतया उपदिश्यते। यच्च कर्तव्यतया उपदिश्यते न तदनर्थः। कर्तव्यताऽवगमादेव अनर्थत्वनिवृत्तेः। ऋजु. पृ. २८.

* **चोदनालक्षणोऽर्थो धर्मः** (१।१।२।२)। अनेन सूत्रेण धर्मस्वरूपं तत्प्रमाणं चोच्यते। (तत्र सामान्यतो धर्मे वेदः प्रमाणम्। विशेषतश्च विधयः अर्थवादाः मन्त्राः नामधेयानि च प्रमाणम्)। **मणि.** पृ. ७. * चोदना०। धर्मे प्रमाणस्य विधेः प्रतिज्ञाऽर्थे चोदनासूत्रम्। तदुक्तम् 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति। तच्चेदं धर्मलक्षणद्वारा सामान्यतो धर्मस्वरूपोक्त्यर्थमपि। तच्चेदमर्थद्वयं वचनव्यक्तिद्वयतः एकेनापि सूत्रेणोच्यते। तत्र अन्यतरा शाब्दी अन्यतरा आर्थी (वचनव्यक्तिः)। तत्र 'यो धर्मः' इत्युद्दिश्य 'स चोदनालक्षणः चोदनाप्रमाणकः' इति प्रमाणवचनव्यक्तिः। 'यः चोदनालक्षणः' इत्युद्दिश्य 'स धर्मः' इति स्वरूपवचनव्यक्तिः। तत्र चोदनाप्रमाणकत्वस्य धर्मलक्षणत्वात् निषेधेऽपि च प्रवर्तनाविषयत्वेनेव विधेये निवर्तनाविषयत्वेन चोदनालक्षणत्वात् अतिव्याप्तिं वारयितुम् अर्थः इति अनर्थसाधनत्वाभावोऽपि विशेषणम्। श्येनयागव्यावृत्त्यर्थं तत् इति भाष्ये। तस्य हि फलं हिंसेति। तत्रोत्तरस्यां (वचनव्यक्तौ) तावतैव पर्यवसानम्। आद्यायां तु द्वौ नियमौ विवक्षितौ। यो धर्मः तत्र चोदनैव प्रमाणम् इत्येकः प्रत्यक्षानुमानबुद्धवाक्यादिव्यावृत्त्यर्थः। यो धर्मस्तत्र चोदना प्रमाणमेव इत्यपरः नास्तिकाभिमतवेदाप्रामाण्यनिरासार्थः। इति चोदनासूत्रार्थः। बाल. पृ. ४–५.

**§ चोदनालक्षणोऽर्थो धर्मः। १।१।२।२॥**

को धर्मो नाम इत्याकाङ्क्षायां धर्मस्य लक्षणमुच्यते। चोदना इति क्रियायाः प्रवर्तकं वचनम्, विधिवाक्यमित्यर्थः। चोदनया लक्ष्यते ज्ञायते स चोदनालक्षणः। अर्थः पुरुषस्य इष्टफलार्थः। तथा च विधिबोधितत्वे सति पुरुषार्थोपयोगित्वम् इति धर्मस्य लक्षणम्। विशेषणानुपादाने भोजनादौ अतिव्याप्तिः, विशेष्यानुपादाने परंपरया अनिष्टहेतौ श्येनादौ अभिचारकर्मणि अतिव्याप्तिः, तदुभयनिरासार्थं पदद्वयम्। तथा च धर्मस्य लक्षणसत्त्वात् तज्ज्ञानार्थं मीमांसा कर्तव्या इत्यधिकरणार्थः। के.

* चोदना०। न च अस्मिन् सूत्रे 'धर्मे चोदनारूपस्य वेदशब्दस्यैव प्रामाण्यम्' इति नियमकरणात् व्रीह्याद्यर्थस्य प्रामाण्याङ्गीकारे च तद्भङ्गापत्तिः इति वाच्यम्। तत्रत्यचोदनाशब्दस्य 'चोदनेति क्रियायाः प्रवर्तकं वाक्यम्' (भाष्यम्) 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' (श्लोवा पृ. २११।११) इति भाष्यवार्तिकस्वरसात् विधिमात्रवचनत्वेन तस्मिन् सूत्रे ईदृशनियमाकरणात्। अत एव तत् सूत्रं न प्रथमाध्यायार्थप्रतिज्ञापरम्, अपितु प्रथमपादव्युत्पाद्यविधिप्रामाण्यप्रतिज्ञापरमेव इति स्मृत्यधिकरणे वक्ष्यामः (१ पृष्ठे। परन्तु अत्रत्यात् न्यूनमेव किञ्चित्तत्रोक्तं नाधिकं किमपि)। नियमोऽपि तेन ईदृश एव क्रियते 'धर्मे एव प्रमाणं चोदना' इति। यद्यपि च 'चोदनैव प्रमाणम्' इत्यपि नियमः क्रियेत, तथापि 'प्राधान्येन सैव प्रमाणम्' इत्येवंपरो द्रष्टव्यः। न तु एतावता अन्येषां प्रामाण्यनिषेधः। कौ. १।२।४।४२ पृ. ७६. * चोदना०। सूत्रस्यैवं योजना—चोदनालक्षणः कार्यरूपः वेदार्थः नेन्द्रियादिलक्षणः क्रियाकारकसंसर्गादिः। तत्रार्थो यो निःश्रेयसफलः स धर्मः, नानर्थः श्येनादिनियोगः। ऋजु. पृ. २७. * चोदनालक्षणः अर्थः श्रेयस्करः। भा. १।१।२।२ पृ. १७, * चोदनालक्षणः सम्यक् संप्रत्ययः। १।१।५।५ पृ. ४२. * **चोदनालक्षणसूत्रेण** कार्ये अर्थे



प्रमाणं चोदना इति प्रतिज्ञातम्। ऋजु. पृ. ३७, * चोदनालक्षणसूत्रेण चोदनालक्षणः कार्यरूपः एवार्थः, न सिद्धरूप इति प्रतिज्ञातम्। पृ. १६.

* **चोदनालिङ्गम्** अतिदेशकरं द्रव्यदेवतासंबन्धप्रतिपादकतद्धितान्तपदाक्षरसाम्यम्। यथा 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः' इत्यत्र 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति अग्निमुखत्वसाम्यम् अग्निमुखतद्धितान्तपदवत्त्वं वा पञ्चाक्षरतद्धितान्तपदवत्त्वं वा चोदनालिङ्गम्। एवम् 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः, आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः' इत्यत्रापि। बाल. पृ. ११९–२०

* **चोदनासामान्येन** च धर्मप्राप्तिरिष्यते। भा. ८।४।४।१२. * **चोदनासामान्यात्** आग्नेयधर्माः सौर्ये अतिदिश्यन्ते यथा आग्नेये उपकृतम्, तथा सौर्येऽप्युपकर्तव्यम्। वा. ९।१।१।१ पृ. १६३७. * **चोदनासामान्यातिदेशः** आनुमानिकवचनातिदेशभेदः। बाल. पृ. ११७–११९.

* **चोदनासूत्रं** कृत्स्नाध्यायार्थप्रतिज्ञापरम्। 'चोदनैव प्रमाणम्' इति साक्षाद्धर्मप्रतितिकारणस्य चोदनावाक्यस्य प्रामाण्यप्रतिज्ञायां तच्छेषतया तन्मूलतया च प्रमाणानामर्थवादस्मृत्यादीनाम् अर्थात् प्रामाण्यं प्रतिज्ञातं भवति, अवधारणव्यवच्छेद्यास्तु चोदनानिरपेक्षा बौद्धाद्यागमा एव। सोम. १।२।१, * चोदनासूत्रं न कृत्स्नाध्यायार्थप्रतिज्ञापरं किन्तु प्रथमपादार्थप्रतिज्ञापरम् (शास्त्रदीपिकामतेन)। १।२।१, * **चोदनासूत्रे** साक्षात्प्रवर्तकविध्युद्देशमात्रपरतया तान्त्रिकव्यवहारसिद्धः चोदनाशब्दः। १।२।१. * समस्तः प्रथमपादः **चोदनासूत्रप्रतिज्ञातार्थप्रतिपादकः**। शा. १।१।२.

**§ चोदितं तु प्रतीयेताविरोधात् प्रमाणेन। १।३।५।१०॥**

अथ यान् शब्दान् न आर्याः कस्मिंश्चित् आचरन्ति म्लेच्छास्तु कस्मिंश्चित् प्रयुञ्जते यथा पिक–नेम–सत–तामरसशब्दाः। तेषु किं निगम–निरुक्त–व्याकरणवशेन धातुतः अर्थः कल्पयितव्यः, उत यत्र म्लेच्छा आचरन्ति, स शब्दार्थः इति। इमं तु संदेहं संगतिलोभात् प्रभाकरो नानुमन्यते। अयं च तस्याभिसंधिः। न तावत् निगमनिरुक्तव्याकरणवशेन पिकाद्यर्थावधारणं संभवति, यतो मन्त्रार्थवादेषु क्व चिदर्थविशेषे प्रयुक्तानां शब्दानां निगमादिवशेन अवयवव्युत्पत्तिः प्रतिपाद्यते। न च पिकादिशब्दानां क्व चिदर्थविशेषे वेदे प्रयोगोऽपि दृश्यते, इति न तावत् तद्वशेन अर्थावधारणं नापि म्लेच्छप्रसिद्धिवशेन, तस्याः पूर्वाधिकरणे एव वेदार्थावधारणं प्रति अनङ्गत्वस्य उक्तत्वात्। अतः अनध्यवसायात् अप्रामाण्यमिति। तदयुक्तम्। उभयथाऽपि अध्यवसायसंभवात्। तथाहि, निगमादिवशेनापि तावत् इह अर्थावधारणं संभवत्येव। न च मन्त्रार्थवादेषु क्व चित् अर्थविशेषे प्रयोगे सत्येव परं निगमादिभिः अर्थावधारणमिति वक्तव्यम्। अप्रसिद्धशब्दार्थावधारणेऽपि निगमादेः उपयोगदर्शनात्। तथाहि, 'बर्हिर्देवसदनं दामि' इत्यत्र लवनसामानाधिकरण्येन अप्रयुक्तस्यापि 'दामि' इत्यस्य पदस्य व्याकरणवशेनैव लवनार्थत्वमवधार्यते। एवं भक्षानुवाकेऽपि (सोमभक्षमन्त्राः यस्मिन् अनुवाके आम्नाताः, स भक्षानुवाको नाम 'भक्षेहि माऽऽविश' इत्यादिः) ग्रहणसामानाधिकरण्येन अप्रयुक्तस्यापि 'सघ्यासम्' इति पदस्य निरुक्तावगतेन अवयवान्वयेन ग्रहणार्थत्वमवधार्यते इति। तथा म्लेच्छप्रसिद्धिवशेनापि पिकाद्यर्थावधारणं संभवत्येव। न च पूर्वाधिकरणन्यायेन म्लेच्छादिप्रसिद्धेः शब्दार्थावधारणं प्रति अनङ्गत्वमिति वक्तव्यम्। यतो बलवदार्यप्रसिद्धिविरोधेन हि तत्र अनङ्गत्वमुक्तम्। इह तु विरोधाभावात् निष्प्रतिपक्षम्लेच्छप्रसिद्धेरपि निर्णायकत्वमुचितमेवेति। अतः अनध्यवसायात् अप्रामाण्याभिधानम् अप्रामाणिकस्यैवेति। तेन यथावार्तिकमेव अधिकरणं प्रस्तूयते।

अत्रायं पूर्वपक्षिणः अभिप्रायः। (अभिसंधिः इति मुद्रिते) यद्यपि अत्र पिकादिशब्देषु पील्वादिपदेषु इव आर्यप्रसिद्धिविरोधो नास्ति, एवम् अवयवप्रसिद्धेः विलम्बितार्थप्रतीतिहेतुत्वेन च समुदायप्रसिद्धिर्बलीयसी, तथापि निगमादिशास्त्रार्थवत्त्वात् विलम्बिनी अपि अवयवप्रसिद्धिरेव बलीयसी, न तु म्लेच्छरूपाश्रयदूषिता असन्मूला

समुदायप्रसिद्धिः । तदुक्तम् '**सन्मूलस्य प्रमाणत्वं साध्यस्यापि वरं श्रितम् । न सिद्धमप्यसन्मूलमाश्रयेणाभिदूषितम् ॥**' (वा. पृ. २२४) इति । किञ्च म्लेच्छप्रसिद्धार्थपरिग्रहे सति द्रविडकर्णाटसिंहलादिदेशभेदेन म्लेच्छभाषावैचित्र्यात् सर्वेष्वेव आर्याप्रसिद्धशब्देषु कदा चित् क चित् देशे केनापि म्लेच्छेन अयं शब्दः क चिदर्थे प्रयुक्त इति शङ्कायां निगमादिवैयर्थ्यप्रसङ्गः । अतो निगमादिवशेनैव पिकादिशब्दानाम् अर्थनिर्णयः इति । **एवं प्राप्ते, अभिधीयते** । भवेदेवं यदि आर्यप्रसिद्ध्यविरोधेऽपि म्लेच्छप्रसिद्धिः प्रमाणं न भवेत् । तथाहि, पिकादिशब्दास्तावत् वेदेषु अनुष्ठेयार्थतया श्रूयन्ते । तेन नैतेषां पदापभ्रंशरूपत्वं संभवति, नापि अनर्थकत्वम् । न चैते आर्यव्यवहारे क चिदर्थविशेषे प्रसिद्धाः प्रत्यभिज्ञायन्ते । ज्ञायन्ते च कोकिलाद्यर्थविषयाः म्लेच्छप्रयोगेषु । न च शब्दार्थसंबन्धावधारणे कश्चित् आर्यम्लेच्छयोः विशेषोऽस्ति । यत्र पुनः आर्यैः अन्यत्र प्रयुक्तः शब्दो म्लेच्छैः अन्यत्र प्रयुज्यते, तत्र आर्याणां शब्दार्थनिरूपणेषु अभियुक्ततरत्वात् तद्वशेन म्लेच्छप्रसिद्धेः गौणत्वेनैव उपपत्तेः भवतु आर्यप्रसिद्धार्थस्य मुख्यत्वेन बलीयस्त्वम् । न च अत्र म्लेच्छप्रसिद्धेः गौणत्वं संभवति, मुख्यभूतार्थान्तराभावात् । न च निरुक्तादिवशेनैव अत्र मुख्यार्थनिरूपणमिति युक्तम् । निरुक्तवशेनापि अर्थविशेषावधारणासंभवात् । तथाहि, पिकशब्दस्य तावत् निगमवशेन अर्थविशेषकथनं नास्त्येव, तथा सति संदेहाभावात् । किन्तु अवयवव्युत्पत्त्यनुसारेण ऊहनीयः असौ अर्थः । तत्र पिबति पाति पचति इत्यनेकधातुसाधारणत्वात् अवयवान्वयस्य निरुक्तवशेनापि नार्थविशेषावधारणम् । अतो निरुक्तप्रसिद्धिरपि न म्लेच्छप्रसिद्धिविरोधिनी, किन्तु कोकिलः पिबति पाति पचति इत्येवं म्लेच्छप्रसिद्ध्यनुसारेणैवेति । यत्र पुनः अन्विष्यमाणाऽपि म्लेच्छप्रसिद्धिरपि नोपलभ्यते 'सप्यासम्' इत्यादिपदेषु, तत्र निरुक्तादीनामेव निर्णायकत्वम् । तदुक्तम् '**यस्य चान्विष्यमाणाऽपि प्रसिद्धिर्न भविष्यति । कामं प्रदर्शितद्वारा तत्र कल्प्याऽऽश्रयिष्यते ॥ विक्षिप्ता बहुरूपा च सा संदेहप्रदायिनी । अनन्योपायतामात्रे क चिदेव ग्रहीष्यते ॥**' इति (वा. पृ. २२८) । या तु अभियुक्तैः अन्विष्यमाणाऽपि अनुपलब्धार्थान्तरप्रसिद्धिः, सा कदा चित् क चिद्देशे समस्ति इति शङ्क्यमाना धूमस्य अग्निसंदेहेऽपि साधारणी इत्युपेक्षणीयैवेति । न च एवं सति प्रसिद्धार्थपदगोचरस्य निरुक्तस्य वैयर्थ्यमिति वक्तव्यम् । 'षडङ्गो वेदोऽध्येतव्यः' इति विधिबलात् सर्वत्रैव निगमनिरुक्तव्याकरणावबोधितपदार्थस्यैव अनुष्ठितस्य फलापूर्वसाधनत्वाभ्युपगमात् । तदुक्तम् '**न चार्थप्रत्ययानङ्गं निरुक्ताद्यध्यनर्थकम् । षडङ्गवेदविज्ञानपूर्वकर्मक्रियाफलात् ॥**' (वा. पृ. २२८) । अतो म्लेच्छप्रसिद्धानामपि पिकादिपदार्थानां ग्रहणं युक्तमेवेति । **प्रयोजनम्**–पूर्वपक्षे अनियमः, सिद्धान्ते कोकिलस्यैव उपादानमिति । **सूत्रं तु**– म्लेच्छप्रसिद्धमपि वेदे चोदितं प्रतीयेत प्रमाणेन विरोधाभावात् इति । **तौता.**

❖ **चोदितं तु प्रतीयेताविरोधात् प्रमाणेन । १।३।५।१० ॥**

पिक–नेम–सत–तामरसशब्दान् आर्याः न कस्मिंश्चिदर्थे प्रयुञ्जते । तत्र विचारः । अशिष्टैः म्लेच्छैः चोदितम् उक्तं पिकनेमादिशब्दानामर्थजातं प्रतीयेत । प्रमाणेन श्रुतिस्मृतिसदाचारेण अविरोधात् विरोधाभावात् । तस्मात् म्लेच्छप्रसिद्ध्या पिकः कोकिलः, नेमः अर्धम्, तामरसं पद्मम्, सत इति परिमण्डलं शतच्छिद्रं दारुमयं पात्रम् । इति ज्ञातव्यम् । **के.**

* तुल्यश्च अन्त्यजनपदवासिनामपि दृष्टार्थत्वात् शब्दव्यवहारे प्रमाणभावः इत्युक्तम् '**चोदितं तु प्रतीयेत०**' इति । **वा.** २।३।२।३ पृ. ५८६.

❖ **चोदिते तु परार्थत्वाद् विधिवदविकारः स्यात् । ९।१।१४।४० ॥**

दर्शपूर्णमासयोः 'इडोपहूतेडोपहूता' इत्यादौ इडानिगदे 'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान्, ये च यज्ञपतिं वर्धान्' इत्याम्नायते । तत्र यज्ञपतिशब्दः बहुयजमानके कर्मणि ऊहितव्यो न वा, किं समवेताभिधायी यज्ञपतिशब्दः, न वा इति विचारे सिद्धान्तमाह । तुशब्दः धान्यशब्दात् पूर्वोक्तात् यज्ञपतिशब्दे वैलक्षण्यमाह । चोदिते पठिते यज्ञपतिशब्दे परार्थ-



त्वात् इडास्तुत्यर्थत्वात् अविकारः न विकारः न ऊहः । विधिवत् । यथा 'शुक्रं यजमानोऽन्वारभते' इत्यत्र विधौ सत्रे एकेन केनचिद्यजमानेन अन्वारम्भेऽपि चारितार्थ्यम्, तथा एकयजमानस्तुतिद्वाराऽपि इडास्तुतिसंभवः, हे इडे त्वया उपहूताः सन्तः दैव्या मानुषाश्च अध्वर्यवः यज्ञं यज्ञपतिं च वर्धयन्ति इति । ततश्च यज्ञपतिशब्दः इडास्तावकत्वात् न समवेताभिधायी विकृतौ नोहितव्यः इति सिद्धान्तः । **के.**

* '**चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत**' (२।२।३।६) । यदि हि अष्टाकपालवाक्यं जुहोतिवाक्येन उपसंहृतम्, ततोऽनेनैव कर्मोत्पत्तिः क्रियेत । ततश्च आग्नेयवाक्ये 'चोदिते हि०' इत्येवं वाक्यभेदः प्राप्नोति । (आग्नेयोऽष्टाकपालोऽमावास्यायाम्, द्वयवदानं जुहोति इति) । **वा.** ३।४।१४।४०. * विधित्वस्य यो देशो भावनाख्यः, स सर्वेषां विशेषणानां यद्यपि समानः, तथापि भावनातः प्रचलितस्य फलालोचनहेतुकत्वात् एकस्य च विधेः अनेकफलत्वायोगात् एकत्रैव विशेषणे विधित्वं पर्यवसितमिति '**चोदिते हि तदर्थत्वात्०**' इत्यत्र दर्शितम् । **सु.** पृ. ७७३.

❖ **चोरापहार्यन्यायः** । यथा चोरापहार्यौ मित्रौ, तथा जीवेश्वरौ मित्रौ इति । सर्वसंग्रहे पूर्णप्रज्ञदर्शने । **साहस्री.** ८२०.

* **चोष्यं** यस्य ओष्ठदशनरसनादिभिर्निष्पीडितस्य ससूत्कारेण मुखमारुतेन रसो निष्पीयते तत् । यथा इक्षुखण्डादिकम् । **बाल.** पृ. १६८.

❖ **चौरापराधान्माण्डव्यनिग्रहन्यायः** । एवं हि पुराणकथा–कदा चित् कैश्चित् राजदूतैश्चौरान्वेषणपरैः तपस्यतो माण्डव्यस्य ऋषेः समीपगतान् तान् चौरान् प्राप्य माण्डव्यसमेतान् तान् चौरान् बद्ध्वा राज्ञे निवेद्य तदाज्ञया ऋषिसहिताश्चोराः शूले समारोपिताः । ततश्च तेषु माण्डव्यं विज्ञाय शूलात् मोचयामास राजा प्रणामादिभिश्च प्रसादयामास । एवं दुष्टसङ्गात् दुर्गतिर्भवति इति भावः । **साहस्री.** १२३.

* **चौर्यशब्दः** परस्वहरणे । **सु.** पृ. ८९९.

* **चौलोपनयनादिसंस्काराणां** दैविकानां च कर्मणां शुक्लपक्षोत्तरायणपुण्यदिनानि अनुष्ठानकालः । 'उदगयने आपूर्यमाणपक्षे पुण्ये नक्षत्रे' इति कल्पसूत्रम् । **वि.** ६।८।५.

* **च्यवनाः** पञ्चावत्तिनः इति गोभिलः । **वि.** टिप्पणी. १०।७।२०.

---

## छ.

* '**छत्रिणो गच्छन्ति**' इति एकेनापि छत्रिणा बहूनां छत्रित्वोपचारदर्शनात् । एवमेकेनापि पिबता द्वौ पिबन्तौ उच्येते 'ऋतं पिबन्तौ' इत्यत्र । **शांभा.** १।२।११ ब्रसू. * छत्रिणो गच्छन्ति इत्येकेनैव छत्रिणा सर्वे लक्ष्यन्ते । छत्रिशब्देन सार्थलक्षणाऽर्थेन सोऽपि च्छत्री गृह्यते । **भा.** १।४।१२।२३ (६), * छत्रिणो गच्छन्ति, ध्वजिनो गच्छन्ति इति लिङ्गसमवायात् शब्दप्रवृत्तिः । ३।८।२२।४४. * एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि '**छत्रिणो गच्छन्ति**' इतिवत् तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते । **वि.** १४।१८.

❖ **छत्रिन्यायः** । यथा लोके छत्रिणो यान्तीति प्रयोगे सपरिवारे राज्ञि गच्छति छत्र्यच्छत्रिसमुदाये छत्रिशब्दो वर्तते । अयं न्यायः शारीरकसूत्रशाङ्करभाष्ये १।२।११, १।२।१२, ३।३।३४ सूत्रत्रयविवृतौ व्यवहृतः । तत्र हि 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥' इति कठवल्लीश्रुत्यर्थे । तत्र किमिह बुद्धिजीवौ निर्दिष्टौ, उत जीवपरमात्मानौ इति बहुधा संमीमांस्य ऋतं पिबन्तौ इत्यत्र जीवे पिबति अशनाद्यतीतः परमात्माऽपि तत्साहचर्यात् छत्रिन्यायेन पिबतीत्युपचर्यते इत्याद्युक्तम् । **साहस्री.** ६७०.

* **छत्रिन्यायेन** धानादीनां सर्वेषां पुरोडाशत्वोपचारः । **ऐब्रासा.** ८।५।१, * अजहल्लक्षणा एकसार्थवाहित्वेन । वारवन्तादिपदवन्ति सामानि इति (कल्पतरुस्थम्) बहुवचनं **छत्रिन्यायेन** (वारवन्तीययज्ञायज्ञीयवामदेव्येषु) योज्यम् । **परिमल.** ३।३।२०।३३ **ब्रसू.** * अयनेषु (२।३।४।५) इत्येकदेशग्रहणं छत्रिन्यायेन साकंप्रस्था-

यीयाद्युपलक्षणम् इति बहुवचनोपपत्तिः। कु. २।३।४।५, * अर्थवादगतघृतशब्दस्तु विध्यनुसारेण छत्रिन्यायेन घृताघृतलक्षकः इति पूर्वपक्षः। १।४।१९।२०. * आमिक्षायागे विश्वेषां देवानामिज्यमानतया तत्सहचरितार्थानां सर्वेषां छत्रिन्यायेन वैश्वदेवत्वम्। वि. १।४।११. * उभयोर्भोक्तृत्वमेकत्र ( ऋतं पिबन्तौ इत्यत्र ), एकस्य भोक्तृत्वमन्यस्य चाभोक्तृत्वमन्यत्र ( द्वा सुपर्णा इत्यत्र ), इति विद्याभेदमुक्त्वा छत्रिन्यायेन अविरोधात् जीवोपादानस्य तादात्म्यप्रतिपादनार्थत्वाच्च रूपाभेदाद् विद्यैक्यमुक्तम्, तत्र छत्रिन्यायादिभिरैर्थकत्वस्य 'गुहां प्रविष्टौ०' इत्यत्र सिद्धत्वात्। श्रीकर. ३।३।३४ ब्रसू. * एकस्तत्र कर्मफलं पिबति भुङ्क्ते नेतरः, तथापि पातृसंबन्धात् पिबन्तौ इत्युच्यते छत्रिन्यायेन। कठोप. शांभा. ३।१. * चातुर्मास्येषु 'वैश्वदेवेन यजेत' इत्युक्ते आग्नेयादियागसमुदायस्य ग्रहणम् इत्युक्ते न चाग्नेयादियागसमुदायस्य कथं वैश्वदेवशब्दो नामधेयं स्यात्, आमिक्षायागमात्रस्य विश्वदेवदेवत्यत्वात् इति वाच्यम्। छत्रिन्यायेन वैश्वदेवावैश्वदेवेषु लक्षणया तदुपपत्तेः। कु. १।४।११।१४. * ज्योतिष्टोमे च छत्रिन्यायेन पृष्ठशब्दप्रयोगात् लक्षणा सप्तदशानि पृष्ठानि इति ( ज्योतिष्टोमे एकमेव वस्तुतः पृष्ठम् )। वा. ७।३।३।७. * फलवाक्ये ( ज्योतिष्टोमेन स्वर्गकामो यजेत ) यजिः प्रकृतसर्वधात्वर्थोपलक्षकः ज्योतिष्टोमपदं च छत्रिन्यायेन सर्वनामधेयमिति प्राप्ते। भाट्ट. २।२।१.

* छन्दः वेदाङ्गमेकम्। इदं पौरुषेयमपि ( स जयति पिङ्गलनागः, पैङ्गले त्रिलघुम् इति तत्रोक्तत्वात्। ) अविच्छिन्नपारंपर्येणानुवर्तनात् वेदमूलकत्वाच्च प्रमाणम्। वि. १।३।७. * छन्दसा समानास्वेव तिसृषु ऋक्षु गानं ज्योतिष्टोमे। भा. ९।२।४।२१–२२. * छन्दसां वैदिकवाक्यपरिमाणज्ञानद्वारा वेदोपकारकत्वम्। मणि. पृ. ५. * छन्दसि तु यथादृष्टम् ( पाशन्यायस्थं सूत्रम्। यावद्दर्शनं प्रामाण्यमभ्युपगन्तव्यं छन्दसि, न दर्शनमतिक्रमितव्यम्। भा. ) सूत्रम्. ९।३।४।१४

ⓧ छन्दसि यथेष्टं पदानामन्वयो वर्णनीयः इति न्यायात् श्रुतेरर्थस्य ( च ) विचारो युक्तः। श्रीकर. ३।३।२८ ब्रसू.

ⓧ **छन्दश्च देवतावत्। ३।२।१८।४२ ॥**

ज्योतिष्टोमे सोमशेषभक्षमन्त्रे 'गायत्रच्छन्दसः' इति सोमविशेषणं श्रुतम्। गायत्रमेव छन्दो यस्य स्तोत्रशस्त्रादौ इति बहुव्रीहिः। किमयं भक्षमन्त्रः केवलगायत्रीछन्दस्के प्रदाने भवति, किंवा छन्दोऽन्तरसहितगायत्रीछन्दस्केऽपि प्रदाने इति विचारे पूर्वपक्षमाह। छन्दश्च 'गायत्रच्छन्दसः' इत्यादि पदमपि यत्र स्तोत्रशस्त्रादौ केवलगायत्रीछन्दस्का एव ऋचः, तत्रैव यागे समन्वेति बृहस्पतिसवादौ। देवतावत्, यथा केवलेन्द्रदेवताके एव यागे इन्द्रपीतस्य इति पदं समन्वेति, नान्यदेवतासहितेन्द्रदेवताके ऐन्द्राग्नादौ, तद्वत्।

**सर्वेषु वा भावादेकच्छन्दसः। ४३ ॥**

सिद्धान्तमाह। वाशब्दः पक्षं व्यावर्तयति। सर्वेषु छन्दोऽन्तरसहितगायत्रच्छन्दस्केष्वपि यागेषु ज्योतिष्टोमादौ भक्षमन्त्रे 'गायत्रच्छन्दसः' 'त्रिष्टुप्छन्दसः' इत्यादि पदं प्रवर्तेत। एकच्छन्दसः एकमात्रच्छन्दस्कस्य क्रतोः अभावात्। बृहस्पतिसवेऽपि सवनमुखीये ऋगन्तरस्य पठितत्वात्। 'गायत्रमेतदहर्भवति' इति तु भूम्ना प्रयोगः। तस्मात् सर्वत्र प्रातःसवनीये भक्षे गायत्रच्छन्दसः इति पदम्, माध्यंदिने त्रिष्टुप्छन्सः इति पदं प्रयोक्तव्यमेव। के.

* छन्दश्च देवतावत्। यथा अन्यसहितेन्द्रदेवत्यकर्मणि भक्षमन्त्रो न लिङ्गेन विनियुज्यते, तथा अन्यसहितया गायत्रच्छन्दस्कयाऽपि इति प्रयोजनाक्षेपसूत्रव्याख्या। सु. पृ. ११६२.

* **छन्दःप्रतिषेधस्तु सर्वगामित्वात्।** ३।२।११।३९ ॥ यागधर्मत्वाभ्यासद्वारा यागोपकारित्वात् ऐन्द्रप्रदानमात्रद्वाराऽपि च यागोपकारित्वोपपत्तेः प्रदानानां भेदात् सोमफलचमसयोरिव कर्मैक्येऽपि प्रकृतिविकृतित्वोपपत्तिशङ्कानिरासार्थत्वेन सर्वगामित्वात् इति सूत्रावयवस्य सर्वाभ्यासगामित्वात् सोमस्य तद्धर्माणां च इत्यर्थः। ( इन्द्रपीताधिकरणस्थं सूत्रम् )। सु. पृ. ११५७.



* छन्दोगाः। 'ब्राह्मणानि हि यान्यष्टौ सरहस्यान्यधीयते। छन्दोगास्तेषु सर्वेषु न कश्चिन्नियतः स्वरः। तेन तेष्वप्यवेदत्वं स्वराभावात् प्रसज्यते ॥' वा. १।३।६।१३ पृ. २४०, * छन्दोगैरेव गौतमगोभिलीये धर्मगृह्यसूत्रे परिगृहीते। १।३।७।१५ पृ. २४४, * छन्दोगप्रवचनं हि औद्गात्रशब्देनाभिधीयते तत्प्रवचनस्थं कर्म औद्गात्रम्, तत्संबन्धाच्च पुरुषाः प्रवक्तृत्वेन अनुष्ठातृत्वेन च उद्गातारः। ३।५।८।२६ पृ. १००३. * छन्दोगसूत्रकृता 'तरसपुरोडाशमन्नसंरोधात्' इति सूत्रेण ( शाक्यानामयने ) अन्नमिश्रणेन मांसस्य पुरोडाशनिष्पादनसामर्थ्यमुक्तम्। सु. पृ. ६३८.

* छन्दोगणो जगत्यन्तः। ( देवच्छन्दांसि सप्त गायत्र्यादीनि जगत्यन्तानि )। रत्न. १०।५।२५।८५.

* छन्दोग्रन्थः सामाधारऋक्प्रतिपादको ग्रन्थः। अयमेव 'वेदसामग्रन्थः' योनिग्रन्थश्चोच्यते। वि. ९।२।५.

ⓧ **छन्दोऽधिकरणम्।** गायत्रच्छन्दसः इत्यादेर्मन्त्रस्य नानाछन्दस्केऽपि विनियोगः ॥

**छन्दश्च देवतावत्। ३।२।१८।४२ ॥**

**भाष्यम्**— अस्मिन् मन्त्रे 'गायत्रच्छन्दसः' इत्युच्यते। तत्र संदेहः किं एकच्छन्दसि सोमे मन्त्रः, उत नानाच्छन्दस्यपीति। उच्यते। छन्दश्च देवतावत्। यथा अन्यसहितेन्द्रे न मन्त्रः, एवम् अनेकच्छन्दस्के सोमे न स्यात् मन्त्रः इति। अत्रापि हि गायत्रच्छन्दसः इति सविशेषणस्य समासो नावकल्पते।

**वा**— इदमपवादाधिकरणम्। तत्र पूर्ववदेव तावत् सापेक्षगायत्रच्छन्दःसाधनके समासाभावात् गायत्रच्छन्दस्त्वानुपपत्तेः यत्र केवला गायत्री उपयुक्ता, स एव मन्त्रेण अभिधातव्यो नान्यः।

**सर्वेषु वाऽभावादेकच्छन्दसः। ४३ ॥**

**भाष्यम्**— सर्वेषु वा मन्त्रः स्यात्। कुतः ? अभावात् एकच्छन्दसः। नैव कश्चित् एकच्छन्दाः सोमोऽस्ति। तेन यथाभूतोऽयम्, तथाभूतस्य छन्दो विशेषणम्। तस्मात् अनेकच्छन्दस्के सोमे मन्त्रः स्यादिति।

**वा**— इति प्राप्ते, अभिधीयते '**यत्र नामोपपद्येत निरपेक्षं विशेषणम्। सापेक्षस्याग्रहस्तत्र न तु यत्रापि नास्ति तत्** ॥' उक्तमेतत् चतुर्थाऽधिकरणेऽपि। यदि केवलाग्निदेवत्यः प्रकरणे न स्यात्, ततः सापेक्षदेवत्योऽपि गृह्येतेति। तदिह केवलेन्द्रदैवत्यसद्भावात् इन्द्रपीतत्वं सापेक्षेन्द्रदेवत्यात् निवृत्तम्, न तु केवलगायत्रच्छन्दस्त्वं कस्य चिदस्ति। त्रयाणामपि वेदानां क्व चित् साधनांशे छन्दोऽन्तराणां अवश्यम्भावित्वात्। अतो रथंतरसामत्वमिव नानाच्छन्दस्कास्तु एव गायत्रच्छन्दस्त्वम्। अत एव नित्यसापेक्षेषु नैतत् भविष्यति सापेक्षमसमर्थमिति। तस्मात् नानाच्छन्दस्केऽपि मन्त्रः इति सिद्धम्।

**सुधा**— पूर्वाधिकरणोक्तसापेक्षसमासायोगापवादार्थत्वेन अधिकरणस्य **अवान्तरसंगतिः**।

**सोम**— **सूत्रार्थस्तु** देवतावत् छन्दोऽपि अन्यसाहित्येन स्यादिति।

**वि**— 'ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽयथेतरैः। छन्दोभिरपि युक्ते स्या, दाद्यो मन्त्रे तथोक्तितः ॥, द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न कचित्। नानाछन्दस्यैन्द्र एव, कृत्वाचिन्तेयमीरिता ॥ सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितम्। तेन सर्वप्रदानेषु मन्त्रपाठो यथा स्थितः ॥'

**भाट्ट**— तत्रैव मन्त्रे 'गायत्रच्छन्दसः' इति श्रुतम्। तच्चेदं सोमविशेषणमेवास्मिन् पूर्वपक्षे। अतश्च केवलमेव यत्र ऐन्द्रप्रदाने गायत्रीछन्दो यथा बृहस्पतिसवादौ 'गायत्रमेतदहर्भवति' इति श्रुतः, तत्रैवास्योत्कर्षः, न तु ज्योतिष्टोमे निवेशः, केवलगायत्रीछन्दस्कप्रदानाभावात्। न च सामान्यसंबन्धबोधकप्रमाणाभावः, इन्द्रदेवत्यत्वप्रातःसवनादीनामन्यत्र लोके अभावेन पारिशेष्यादेव बृहस्पतिसवोपस्थितिसंभवात्। इति प्राप्ते, बृहस्पतिसवेऽपि सवनमुखीये ऋगन्तरस्य पठितत्वात् 'गायत्रमेतत्' इत्यादेश्च भूम्नाऽपि व्याख्यानोपपत्तेः प्रकृतौ विकृतौ वा केवलगायत्रछन्दस्कत्वाभावात्, नित्यसापेक्षत्वेन समासोपपत्तेः प्रकृतावेव निवेशः। वस्तुतस्तु गायत्र्याः प्रत्येकमेव साधनत्वात् सत्यपि ऋगन्तरे न समासभङ्गाशङ्काऽपि।

**मण्डन**— 'छन्दोऽन्तरेऽप्यस्ति च भक्षमन्त्रः।'

**शंकर**—'नानाच्छन्दस्ययं मन्त्रः।'

* छन्दोमाः । छन्दोमशब्देन चतुर्विंशः चतुश्चत्वारिंशः अष्टाचत्वारिंशः इत्येते त्रयः स्तोमा उच्यन्ते। गायत्री –त्रिष्टुप्– जगती– छन्दोमिर्मीयमानत्वात्। गायत्रीछन्दसः चतुर्विंशत्यक्षरात्मकत्वेन गायत्रीपदं चतुर्विंशतिसंख्यां दर्शयति, चतुर्विंशतिसंख्यत्वाच्च चतुर्विंशं स्तोमं गायत्रीशब्दो दर्शयति। एवं त्रिष्टुप्जगत्योर्द्रष्टव्यम्। वि. १।४।१६, * छन्दोमाः त्रयो द्वादशाहे अष्टमादीनि त्रीण्यहानि। 'प्रायणीयोऽतिरात्रः पृष्ठ्यः षडहः त्रयश्छन्दोमाः अविवाक्यमहः उदयनीयोऽतिरात्रः' इत्येवमहर्गणो द्वादशाहः। ८।२।९.

* छन्दोमसंज्ञकानां त्रयाणामह्नां मध्ये द्वितीयेऽह्नि मरुत्वतीयसंज्ञके शस्त्रे 'महसि त्वमिन्द्र यत एतानीति सूक्तम्' इति श्रुत्या 'सृण्येव जर्भरी' (ऋसं. १०।१०६।६) इत्यृक् विहिता। सु. पृ. ११२. * छन्दोमस्तुत्यर्थः 'असत्रं वा एतत्, यदच्छोमम्' इति असत्रशब्दः। (छन्दोमरहितं सत्रं न भवति सम्यक् सत्रम्। छन्दोमसहितमेव सत्रं सम्यक् सत्रमिति श्रुत्यर्थः)। वि. १।४।१६.

※ छन्दोवत् कवयः कुर्वन्ति इति न्यायः। 'यू स्त्र्याख्यौ नदी' (पा० १।४।३) इति सूत्रभाष्ये उक्तः। ("न तर्हि इदानीम् इदं भवति? [यदि उपसर्गे सति धातोः क– प्रत्ययो न भवति तर्हि] 'यस्मिन् दशसहस्राणि पुत्रे जाते गवां ददौ। ब्राह्मणेभ्यः प्रियाख्येभ्यः सोऽयमुञ्छेन जीवति॥' छन्दोवत् कवयः कुर्वन्ति।" इति महाभाष्यम्। अत्र कैयटः– 'शिष्टप्रयोगात् अस्मिन् विषये साधुत्वमेष्टव्यमिति भावः'–इति। प्रियाख्येभ्यः इत्यत्र आङि उपसर्गे सत्यपि ख्याधातोः कः प्रत्ययः कृतः। के.) साहस्री. २३.

* छन्दोविचित्यामपि (पिङ्गलेन) गायत्र्यादिविवेको लोकवेदयोः प्रत्यक्षः। तज्ज्ञानपूर्वकप्रयोगात्तु फलमिति श्रौतम्। वा. १।३।१।२ पृ. १६७. * छन्दोविचित्यां गायत्र्यादिविवेककथनं लोकवेदमूलं तद्विज्ञानपूर्वकस्य क्रत्वर्थपुरुषार्थत्वकथनं वेदमूलम्। सु. पृ. १२९.

* छन्दोव्यतिक्रमः भक्षपवमानपरिधिकपालमन्त्राणां तदर्थानां च न भवति, किन्तु मन्त्रगतानां छन्दसामेव द्वादशाहे व्यूढे; प्रातःसवने जगतीशब्दः, माध्यंदिने गायत्रीशब्दः, तृतीयसवने त्रिष्टुप्शब्दः वक्तव्यः। भा. १०।५।२६।८८.

※ **छन्दोव्यतिक्रमाद् व्यूढे भक्षपवमानपरिधिकपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात्। ८८॥**

व्यूढे द्वादशाहे 'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति, गायत्री त्रिष्टुभः, त्रिष्टुप् जगत्याः, जगती गायत्र्याः' इति छन्दोव्यतिक्रमः छन्दसां व्यतिक्रमः उक्तः। तस्मात् भक्षपवमानपरिधिकपालस्य भक्षाणां पवमानानां परिधीनां कपालानां च ये मन्त्राः, तेषां मन्त्राणां यथोत्पत्ति यथाम्नानं वचनं स्यात्। न तु मन्त्राणां मन्त्रार्थानां च कश्चिदपि व्यतिक्रमः कर्तव्यः। किन्तु केवलं मन्त्रगतस्य गायत्रशब्दस्य स्थाने जागतशब्दः, त्रिष्टुप्शब्दस्य स्थाने गायत्रीशब्दः, जगतीशब्दस्य स्थाने त्रिष्टुप्शब्दः इति विपर्यासमात्रं कार्यम्। यथोत्पत्तिवचनम् ऊहवत् उक्तरीत्या ऊहविशिष्टं स्यात्। (ऊहवत् इति मतुप्।) इति सिद्धान्तः। के.

* छलम् अर्थान्तरविवक्षया प्रयुक्तस्य शब्दस्य अर्थान्तरकल्पनया प्रत्यवस्थानम्। सु. पृ. ७१३, * छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनं परवाक्ये च पर्यनुयोगः इत्यनेन स्वयम् अप्रयोगाय परप्रयुक्तस्य च छलादेः उत्तराभासत्वोद्भावनाय न्यायविस्तरे छलादिव्युत्पादनम्, न तु प्रयोगाय इति न्यायभाष्ये उक्तम्। पृ. ९८७.

* छागः। अश्वः छागो भविष्यति। यः छिन्नगमनः अश्वः स छागः। छिदेर्गमेश्च छागशब्दः प्रसिद्धः। (इति चेन्न)। नहि छागशब्दः छिन्नगमनवचनः। समुदायो ह्यसौ पृथगर्थान्तरे प्रसिद्धो नासौ अवयवप्रसिद्धः, नासौ अवयवप्रसिद्ध्या बाधितव्यः। तस्मान्नाश्वश्छागः। किन्तु जातिशब्दः स्यात्। भा. ६।८।१०।३७–४०. * 'छागस्य वपाया मेदसोऽनुब्रूहि' इति मन्त्रः जातिविधिः। बाल. पृ. ६४.



※ छागन्यायः। छागपशुन्यायः। अग्नीषोमीयः पशुश्छाग एव॥

**पशुचोदनायामनियमोऽविशेषात्। ६।८।१०।३०॥**

भाष्यम्— ज्योतिष्टोमे श्रूयते 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र संदेहः किं यःकश्चित् पशुरालम्भनीयः, उत छाग इति। वक्ष्यमाणेनाभिप्रायेण भवति संशयः। ननु एकेषामाम्नायते 'अजोऽग्नीषोमीयः' इति। सर्वशाखाप्रत्ययं चैकं कर्मेति। अत्रोच्यते। प्रतिशाखं भिन्नानि कर्माणि इति कृत्वा चिन्ता। किं तावत् प्राप्तम्? पशुचोदनायामनियमः। उत्सर्गे कर्तव्ये द्रव्यं शक्यते उत्स्रष्टुम्, न पशुत्वम्। द्रव्यं हि साधकम्। अतोऽत्र द्रव्यान्तरेणोत्सर्गो न संभवति इति द्रव्यमुपादीयते। तस्मिन् उपादीयमाने अनियमः यत्किञ्चित् उत्स्रष्टव्यमिति। कुत एतत्? अविशेषात्। नहि पशुत्वसंबद्धेषु कश्चित् विशेष उपलभ्यते। तस्मात् यःकश्चित् पशुरिति।

टुप् — 'पशुमालभेत' इति नोभयथा प्रतिभातो वाक्यात् संशयः। (किन्तु) वक्ष्यमाणेन कारणेन (तदेव कारणमाह–) मन्त्रवर्णात्। (कथमित्यत आह–) यदि नियतो मन्त्रवर्णः, (ततः) छाग एव (आलम्भनीयः)। अथ पाक्षिकः (मन्त्रः, ततः) यःकश्चित् (पशुः)। गोऽश्वादीनां पशुत्वं सामान्यमत्र सूत्रे पश्वर्थः।

**छागो वा, मन्त्रवर्णात्। ३१॥**

भाष्यम्— वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति, यत्रक्वचन द्रव्ये पशुत्वमुपादेयमिति। अस्ति उत्स्रष्टव्यस्य नियमकारणं मन्त्रवर्णः। 'छागस्य वपाया मेदसोऽनुब्रूहि' इति छागप्रकाशनसमर्थो मन्त्रवर्णः समाम्नायते। यदि छागो नोपादेयः, ततः तत्प्रकाशनसमर्थस्य (मन्त्रस्य) उपादानमनर्थवत्। तेनावगम्यते छागमधिकृत्य उत्सर्गं विदधातीति। मान्त्रवर्णिको द्रव्यनियमविधिरिति।

टुप्टीका अत्र सूत्रे नास्ति। तन्त्ररत्नं तु 'एतत् निगदेनैव व्याख्यातम्। तस्य चायमर्थः, विधिस्तुत्योः समानविषयत्वात् मन्त्रवशेन चोदनार्थनिर्णयो युक्तः इति' इति।

**न, चोदनाविरोधात्। ३२॥**

भाष्यम्— नैतदेवम्। न शक्नोति मन्त्रवर्णः चोदनायां प्रत्यर्थिन्याम् (सत्याम्) द्रव्यं नियन्तुम्। यत्र हि द्रव्यस्य प्रकाशकं न श्रूयते, तत्र अप्रकाशितमेव तत् कर्तव्यमिति। तस्मात् न मन्त्रवर्णात् प्रकाश्यनियमविधिः कल्प्यते 'एवमत्र प्रकाश्यं प्रकाशयितव्यम्' इति। अत्र पुनः शब्देनावगम्यते 'पशुत्वेन प्रकाशयितव्यम्' इति तस्मान्न मन्त्रवर्णः तत्सद्भावे समर्थः। मन्त्रवर्णात् हि कल्प्या प्रयोगवचनेन श्रुतिः। इह क्लृप्ता प्रयोगवचनेन उपसंहर्तव्या। अन्य एव पशुशब्दस्यार्थः पशुत्वम्, अन्यो मन्त्रवर्णेन नियम्यते छागः। तस्मान्न मन्त्रवर्णः चोदनाविरोधेन नियन्तुमर्हतीति।

टुप्— नहि विधायकाविधायकगतयोः विशेषणविशेष्यभावेन एकवाक्यता। 'छागस्य वपायाः' इति वपाविशेषणं छागशब्दः।

**आर्षेयवदिति चेत्। ३३॥**

भाष्यम्— इति चेत् पश्यसि, न पशुत्वमन्येभ्यः पशुभ्य आच्छेत्तव्यमिति। यथा 'आर्षेयं वृणीते' 'त्रीन् वृणीते' इति सामान्यश्रुतिः त्रिष्वेव अवतिष्ठते इति त्रित्वविशेषो विवक्षितः, नान्ये विवक्षिता इति। एवमिहापि पशुत्वं छागं प्रकल्पयितुं विवक्षितम्, नान्यान् विशेषान् इति।

तन्त्ररत्नम्— सिद्धान्तवादिनश्चोद्यम् आर्षेयवदिति चेत् इति। तस्य चायमर्थः, यथैव आर्षेयवरणं वाक्यान्तरगतेनापि त्रित्वेन विशेष्यते, तथैव मन्त्रगतेन छागशब्देन पशुशब्दस्य विशेषणं युक्तमिति।

**न, तत्र ह्यचोदितत्वात्। ३४॥**

भाष्यम्— नैतदेवम्। तत्र हि अचोदितं द्रव्यमुत्स्रष्टव्यं मन्त्रवर्णे। वरणे पुनश्चोदितम्। तत्र त्रित्वसंख्यासंबन्धस्य वरणे चोदितत्वात् नान्या संख्या क्रियते, आर्षेयशब्दादपि न अनार्षेयम्। त्रिशब्दस्य हि तत् सामर्थ्यम्, येन आर्षेयशब्दो विशिष्टसंख्याविषयो नियम्यते। इह न मन्त्रस्य सामर्थ्यम्। तस्मादनियम इति।

**टुप्**— आर्षेयवरणे तु उभौ विधी । तत्र एकेन ( आर्षेयं वृणीते इत्यनेन ) वरणं विधीयते । अपरेण (एकं वृणीते द्वौ वृणीते त्रीन् वृणीते इत्यनेन ) अवयवसंख्यास्तुतिमता वाक्येन वरणे त्रित्वम् ( विधीयते ) ।

**नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः, पृथक्त्वेनाभिधानात् । ३५ ॥**

**भाष्यम्**— नियमो वा । ऐकार्थ्ये हि पशुच्छागशब्दयोः । सामान्यं पशुरिति, छागादयो विशेषा उच्यन्ते । कथम् ? तैः सामानाधिकरण्यात् । पशुश्छागः, पशुरुष्ट्रः, पशुर्मेषः, पशुरश्वः इति । एवं सति न मन्त्रवर्णः पशुशब्देन विरुध्यते । तेन छागोऽपि आलब्धव्यश्चोदितः । मन्त्रवर्णे उपादीयमाने इदमवगम्यते, छागं विवक्षित्वा अयं पशुशब्दः उच्चरित इति, नान्यान् विशेषान् ( उष्ट्रादीन् ) इति । छागोपकरणम् अस्योपदर्शितम् । यदुपदर्शने पशुशब्दः छागाभिप्राय इति गम्यते । यथा युगवरत्रोपदर्शिते ईषाचक्रादिसंनिधाने च 'अक्षमानय' इत्युक्ते यानाक्षम् अधिकृत्य ब्रूते इति गम्यते, न तु विदेवनाक्षमिति । यदि हि अर्थभेदो भवेत् पशुच्छागशब्दयोः पृथक्त्वेनाभिधानम्, ततो भेदः स्यात्, न छाग एव नियम्येत, अविहितश्छागार्थं इत्यश्वोपादानम् । अपिच छागपक्षे तं मन्त्रवर्णः प्रकाशयेत् । छागार्थाभिधाने पुनः पशुशब्दस्य, छागप्राप्तौ अन्येषामप्राप्तिः, इत्यन्यस्मिन् प्राप्ते, लिङ्गेन नियमः क्रियते इति ।

**टुप्**— ( सिद्धान्तैकदेशिवचनं व्याचष्टे- ) अत्र सूत्रे पशुशब्दः छागाश्वादीनाम् ( विशेषाणाम् ) बोधकः । पूर्वस्मिन् ( पूर्वपक्षवाद्युक्ते सामान्ये ) शब्दार्थे ( अभ्युपगम्यमाने ) न शक्नोति विशेष्टुं मन्त्रवर्णः स्वार्थोऽपि । व्यक्तिविषयत्वे तु मन्त्रगतोऽपि ( छागशब्दः ) संनिधानात् छागविषयं ( चोदनागतं पशुशब्दं ) करोति ।

**अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम् । ३६ ॥**

**भाष्यम्**— अनियमो वा, यःकश्चित् पशुरुपादेयः अर्थान्तरत्वात् । अर्थान्तरं पशुत्वम्, अर्थान्तरं छागत्वम् । अर्थयोः अत्र सामानाधिकरण्यम्, न शब्दयोः । कथं पुनरर्थान्तरं गम्यते ? व्यतिरेकात् शब्दभेदाच्च । व्यतिरेको हि भवति, कश्चित् पशुर्न छागः । तथा 'छागः' 'पशुः' इति शब्दभेदः । शब्दभेदादेव अर्थभेदो न्याय्यः, एकस्मिन् वाक्ये समवायात् पशुं छागमानयेति । इतरथा अन्यतरेण कृतार्थत्वात्, अन्यतरो वाक्ये न समवेयात् । समवैति च । तस्मात् अन्यत् पशुत्वम्, अन्यत् छागत्वम् । तस्मादनियमो यःकश्चित् पशुरुपादेय इति ।

**टुप्**— (सिद्धान्तैकदेशिमतं पूर्वपक्षवादी दूषयति–) छागादीनां सामान्यं पशुत्वं पशुशब्देनोच्यते इति स एव शब्दार्थः, न छागत्वादीनि ।

**न वा, प्रयोगसमवायित्वात् । ३७ ॥**

**भाष्यम्** — तत्र उत्सूत्रिका पक्षव्यावृत्तिः । ( उत्तरः भाष्यत्वेन उपलभ्यमानो ग्रन्थस्तु अन्येन केन चित् विरचितः, न भाष्यकारप्रणीतः इति ध्येयम् 'उत्सूत्रिका' इत्युक्तत्वात् । के. ) अन्यत्वेऽपि सति नियम एव । कुतः ? मन्त्रस्य प्रयोगवचनेन गृहीतत्वात् । मन्त्रसाधनं हि कर्म इति गम्यते । यदि छागमुपादास्यामहे, सगुणं कर्म शक्ष्यामः कर्तुं मन्त्रमुपाददानाः, मन्त्रस्यापाक्षिकत्वात् । अथ अन्यमुपादास्यामहे, मन्त्रस्य विषयाभावात् मन्त्रमपजहतो न सगुणं कर्म निर्वर्तयेम । अतो न च श्रुतिं बाधामहे अन्यस्मिन् पशुशब्दो वर्तते इति । न वा अन्यमुपादास्यामः वैगुण्यात् बिभ्यतः । तस्मात् छागः एवोपादातव्यः इति ।

**टुप्**— एवमेव ( पूर्वपक्षवाद्युक्तेन न्यायेन सामान्ये ) शब्दार्थे ( व्यवस्थिते ) 'न वा प्रयोगसमवायित्वात्' (इत्यनेन सिद्धान्तसूत्रेण) प्रयोगवचनोपसंग्रहार्थं छागनियमः (अभिधीयते । इदं च सूत्रं भाष्यकारेण अदृष्टत्वात् उत्सूत्रिका पक्षव्यावृत्तिः इत्युक्तम् । वार्तिककारेण तु अनपभ्रष्टेषु पुस्तकेषु दृष्ट्वा पठितमिति वेदितव्यम् । तदयमर्थः प्रयोगवचनेन नित्यवत् मन्त्रस्योपसंग्रहः । स मा बाधि इति छाग एव नियम्यते ) । एवम् ( उक्तेन न्यायेन प्रयोगवचनसंग्रहादेव छागपशुशब्दयोः ) विशेषणविशेष्यभावः । विशेषणविशेष्यभावो हि ( नैकविधः । ) स हि पदेऽपि ( एकस्मिन् ) प्रकृतिप्रत्यययोर्भवति ( यथा ) अश्वः इति ( प्रकृतिप्रत्ययाभ्यां जातिलिङ्गसंख्याविशिष्टैकद्रव्यप्रतीतेः । तथा ) वाक्ये ( द्वयोः ) पदयोरपि भवति ( यथा ) 'शुक्लः पटः' इति । ( तथा ) वाक्यान्तरस्थयोरपि ( शब्दयोः ) भवति ( यथा ) 'आर्षेयं वृणीते' ( 'त्रीन् वृणीते' ) इति । इहापि प्रकरणवशेन प्रयोगवचनवशेन वा ( 'छागेन पशुना यजेत' इति छागपशुशब्दयोः विशेषणविशेष्यभावः सिद्धो भवति ) इति ।



**रूपाल्लिङ्गाच्च । ३८ ॥**

**भाष्यम्**— ननु अश्वमपि उपाददानाः नैव मन्त्रवर्णमपहास्यामः । स एवाश्वः छागो भविष्यति । यः छिन्नगमनोऽश्वः, स छागः । छिदेर्गमेश्च छागशब्दः प्रसिद्धः । क्वचित् 'मुष्करा भविष्यन्ति' ( भवन्ति ) इति श्रूयते । यदि अन्तरेण वचनम् अमुष्कराः, तदा इदमुपपद्यते । तस्मात् छिन्नगमनोऽश्वोऽपि छागः इति कर्माख्या भविष्यतीति ।

**छागे न कर्माख्या, रूपलिङ्गाभ्याम् । ३९ ॥**

**भाष्यम्**— अत्रोच्यते । छागे कर्माख्या रूपलिङ्गाभ्यां नावकल्पते । नहि छागशब्दः छिन्नगमनवचनः । समुदायो हि असौ पृथगर्थान्तरे प्रसिद्धः । नासौ अवयवप्रसिद्ध्या बाधितव्यः । तस्मात् नाश्वः छागः ।

**रूपान्यत्वान्न जातिशब्दः स्यात् । ४० ॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम् । अथ कस्मान्न वयोवचनो भवति ? वयोवचना ह्येते शब्दाः, छागश्छागलो वत्स इति । तेन अश्वोऽपि वयोवचनो भविष्यतीति । उच्यते । नैतदेवम् । सत्यं वयोवचनः, अजजातिगतं तु वयो वदितुं शक्नोति । यथा शोणः इति वर्णवचनः अश्वजातिगतं वर्णं वदति, नान्यम् । तस्मात् रूपान्यत्वात् न वयोमात्रवचनः, किन्तु जातिशब्दः स्यात् । जात्याश्रयं वयो वदेत् । अतश्छाग एव नियम्यते ।

**विकारो नौत्पत्तिकत्वात् । ४१ ॥**

**भाष्यम्**— इदमपि पदोत्तरम् । इह अश्वादीनां विकारः छागशब्दः । किञ्चिदत्र अश्वादीनामुच्चार्यते, किञ्चिदन्यदेव । तस्मात् अश्वोऽपि छाग इति । न । औत्पत्तिकत्वात् । औत्पत्तिको हि नामिनाम्नोः संबन्धः इत्युक्तम् ( १।१।५।५ इत्यत्र ) । नाख्याविकारः संभवतीति । तस्मात् नाश्वश्छागः । अतश्छाग एवोपादातव्यः इति ।

**स नैमित्तिकः, पशोर्गुणस्याचोदितत्वात् । ४२ ॥**

**भाष्यम्**— पदोत्तरमेवेदं सूत्रम् । अथ कस्मान्न छिद्रनिमित्तः छागशब्दो भवति ? एवं श्रूयते 'सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति' इति । नेत्युच्यते । छिद्रत्वस्य गुणस्य पशोरचोदितत्वात् । अच्छिद्रं पशुमालभेत इति चोद्यते । तस्मादच्छिद्रः पशुः । न च अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्बाध्यते इत्युक्तमेव । तस्मात् छाग एव उपादेयः, नाश्वादयः इति ।

**जातेर्वा, तत्प्रायवचनार्थवत्त्वाभ्याम् । ४३ ॥**

**भाष्यम्**— वाशब्दः अवधारणायाम् । यस्मात् अवयवप्रसिद्ध्या समुदायप्रसिद्धिर्न बाध्यते, तस्मात् जातेरेव छागशब्दो वाचकः । एवं समुदायस्य अर्थवत्ता अनुगृहीता भविष्यति । तस्मात् तत्प्रायवचनमुपपद्यते । 'विश्वेषां देवानामुस्राणां छागानां मेषाणां वपानां मेदसोऽनुब्रूहि' इति जातिप्राये वचनमुपपद्यते । प्रायेणापि हि नियमः क्रियते यथा अग्न्यप्राये लिखितं दृष्ट्वा अग्न्योऽयम् इति बुद्धिर्भवति । तस्मात् छाग एवोपादातव्य इति । कृत्वाचिन्तायां प्रयोजनं च वक्तव्यम् ।

**शा**— 'सामान्यावसिता तावच्चोदना वाक्यभेदतः । मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा ॥' उच्यते । 'चोदनापशुसामान्यमङ्गत्वेनावबोधयेत् । छागेऽप्यविकलं तत्तु प्रतिव्यक्तिसमाश्रितः ॥ मन्त्रप्रकरणाम्नानान्नित्यमङ्गं प्रतीयते । क्लृप्तया रूढिशक्त्या च स च्छागस्यैव वाचकः ॥ तेन तं तादृशं गृह्णन् विधिरात्माविरोधिनम् । विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥'

**सोम**— पूर्ववत् इहापि मन्त्रस्यानित्यत्वम् इति प्रत्यवस्थानात् **संगतिः** । उत्पत्तिविधेः मन्त्रेण विना पर्यवसानेऽपि प्रयोगवचनात् मन्त्रस्य नित्यग्रहणात् अनेन मन्त्रेण प्रकाशितम् 'पशुमालभेत' इत्येवमुभयोरेकवाक्यतापर्यवसानात् मन्त्रानुरोधेऽपि विधिवाक्यविरोधाभावात् कांस्यभोजिन्यायेन विधेश्छागविषयत्वम् ।

**वि—** 'अग्नीषोमीयकः कोऽपि च्छाग एवोत, चोदिते । अविशेषेण कोऽपि स्यात्, छागो मन्त्रे विशेषणात् ॥ ९.

**भाट्ट—** 'अग्नीषोमीयं पशुमालभेत' इत्यादौ पशुशब्दो न सामान्यवचनः । नहि पशुत्वं जातिः प्रमाणाभावात् । कार्यतायाः कारणताया वा अनवच्छेदकत्वात् । नापि पुच्छादिमत्त्वम्, तस्यानुगतत्वाभावेन सामान्यत्वाभावात् । अतः पशुशब्दो व्यक्तिवाची । ततश्च सर्वासाम् अश्वादिव्यक्तीनामपि उक्तत्वात् नायं संदिग्धः । अतश्च नार्थवादवत् अत्र 'छागस्य वपायाः' इति मन्त्रस्य निर्णायकत्वम् । यद्यपि चायं सामान्यवाची भवेत्, तथापि मन्त्रस्य भिन्नवाक्यत्वात् तद्–व्यतिरेकेणैव विधेः सर्वविषयतया पर्यवसानात् न तत्संकोचकत्वम् । एवं सत्यपि यदि मन्त्रस्य विधायकता भवेत्, तदा 'आर्षेयं वृणीते, त्रीन् वृणीते' इतिवत् भवेदपि विशेषणविशेष्यभावः, न तु एतदस्ति । अतो मन्त्रस्थच्छागपदं छिन्नपुंस्त्वाख्यगमनवत्त्वयोगेन वयोविशेषवचनत्वेन वा सर्वपशुपरम् । छागपक्षे वा अयं मन्त्रः । इति प्राप्ते, छागशब्दस्य अजे रूढत्वेन यौगिकत्वानुपपत्तेः पुंस्त्ववतो विहितत्वेन यौगिकार्थग्रहणानुपपत्तेश्च न तावत् यौगिकत्वम् । वयोऽवस्थाविशेषवचनत्वेऽपि वा शोणादिशब्दवत् अजगतस्यैव वयसो वाच्यत्वात् अश्वादिग्रहणानुपपत्तेः । छागग्रहणेनापि पशुत्वस्य अविरोधोपपत्तौ मन्त्रस्य पाक्षिकत्वकल्पनाऽनुपपत्तेः छागस्यैव ग्रहणम् । यद्यपि च पशुशब्दो व्यक्तिवचनः स्यात्, तथापि युगपत् सर्वव्यक्तिग्रहणाभावेन एकव्यक्तिग्रहणे मन्त्रस्य निरवकाशत्वाच्च छागव्यक्तिमात्रग्रहणेऽपि न किञ्चिद् बाधकम् । वस्तुतस्तु सामान्यवाची एवायम् । तदपि च यद्यपि पुच्छवत्त्वादि, तथापि लोमवत्पुच्छत्वावच्छिन्नवत्त्वस्यैव अनुगतस्य वक्तुं शक्यत्वात् न विरोधः । वस्तुतस्तु पुच्छाद्यप्रतीतावपि पशुत्वप्रतीतेः पशुत्वं जातिरेव, इति सामान्यवचनत्वमभ्याहतम्, तेन युक्त एव मन्त्रेण निर्णयः । भिन्नवाक्यत्वेऽपि च पशुच्छागशब्दयोः विशेषणविशेष्यभावो वाक्यैकवाक्यतया न विरुध्यते । इदं च सर्वम् 'अजोऽग्नीषोमीयः' इति शाखाऽन्तरवाक्यं नास्तीति कृत्वाचिन्तया बोध्यम् । तत् सिद्धं छागवत एवाधिकारः । ९.

**मण्डन—** 'छागो मन्त्राद् दीक्षितोक्तः पशुः स्यात् ।' दीक्षितस्य उक्तः । ११.

**शंकर—** 'मन्त्रश्छागनियामकः । ११.

*** छागो वा मन्त्रवर्णात्** ( ६।८।१०।३१ ) इति न्यायः । 'अग्नीषोमीयं पशुमालभेत' इति न कश्चित् पशुजातिविशेषः श्रूयते । तत्र अवश्यं जातिविशेषो ग्रहीतव्यः । स यदि अनियमेन गृह्यते ततो यद्यपि चोदना न विरुध्यते, यत्तु नित्यवच्छ्रुतं मन्त्राम्नानम्, तत् पाक्षिकं कृतं स्यात् । तस्मात् यैषा नियमेन चोदना, सा मन्त्रवर्णालोचनेन जातिविशेषपरा कल्प्यते । छागन्यायः । टुप्. १०।८।१०।२०. * ऋभु– सौधन्वनसात्वताद्यपरनामधेयस्य रथकारजातिविशेषस्य **'छागो वा मन्त्रवर्णात्'** इति न्यायेन 'वर्षासु रथकारः' इत्यत्र ग्रहणम् । **सोम.** ६।१।१२. * न चात्र छागो वा मन्त्रवर्णादिति न्यायः । कथम् ? तत्र यावदग्नीषोमीयापूर्वं तावन्मन्त्रः प्रयोक्तव्यः । 'अग्नीषोमीयं पशुमालभेत' इति न क्व चित् पशुजातिविशेषः श्रूयते, तत्रावश्यं जातिविशेषो ग्रहीतव्यः । **टुप्.** १०।८।१०।२०.

*** छागपशुन्यायेन** सदात्मादिशब्दानां नारायणादिशब्दानामपि शिवपरत्वमेव 'सर्वो वै रुद्रः' इति श्रुतेः । छागन्यायः । **श्रीकर.** १।१।२ ब्रसू., * छागपशुन्यायेन सामान्यविशेषयोः एकत्वसिद्धिवत् । १।१।२ **ब्रसू.** * **न च** निर्गुणवाक्यस्य **छागपशुन्यायेन** 'त्रैगुण्यवर्जितम्' 'विना हेयैर्गुणादिभिः' इत्यादिविशेषोपसंहार इति **वाच्यम्** । नेतिनेति इति वीप्साबलेन प्रसक्तसर्वनिषेधे प्रतीते कतिपयविशेषपरिशेषस्य वक्तुमशक्यत्वात् । **अद्वैत.** २।४।३८८–३८९ प०. * स्थितेऽपि अक्ताधिकरणे अपर्यवसितं सामान्यं श्रुतिविशेषे पर्यवस्यतु, पर्यवसितं तु न संकोचनीयम् इत्यधिकाशङ्कायां **छागपशुन्यायावतारः** । दृष्टं च पर्यवसितस्यापि 'अग्निहोत्रं जुहोति' इति विधेः अनियतद्रव्यदेवताऽऽक्षेपं विना 'पयसा जुहोति' 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादिवाक्यान्तरविधेयद्रव्यदेवताग्राहकत्वम् । **पराक्रमः.** ४२।१, * सामान्य-



विशेषविषययोः उपक्रमोपसंहारयोः उपसंहारानुसारेण न तत्प्राबल्यवर्णनमयुक्तम् । एतेन **छागपशुन्यायोदाहरणमपि** निराकृतम् । तत्रापि अनुष्ठानाय विधेर्विशेषाकाङ्क्षयैव मन्त्रार्पितविशेषे पर्यवसानाभ्युपगमात् । ४१।२.

*** छान्दोग्ये** तलवकारादिशाखाभेदेन गीतिहेतवः अक्षरविकारादयः विलक्षणाः । ते चानुष्ठाने विकल्प्यन्ते, न तु समुच्चीयन्ते । **वि.** ९।२।७. *** छान्दोग्यानुपदे** जैमिनिकृते सूत्रग्रन्थे जैमिनिनैव **'औदुम्बरीप्रकरणे** च शाट्यायनिनां तामूर्ध्वदशेन उभयत्र वाससी दर्शयति' इति स्वग्रन्थेन शाट्यायनिब्राह्मणगतश्रुतिमूलत्वेन सर्ववेष्टनमन्वाख्यातम् । शाट्यायनिनां शाखिनां औदुम्बरीप्रकरणे 'तामूर्ध्वदशेन' इति श्रुतिः उभयत्र विष्टुत्याम् औदुम्बर्यां च वाससी दर्शयति इति जैमिनिग्रन्थस्यार्थः । **सु. पृ.** १६०, *** छान्दोग्यब्राह्मणेषु** स्वरनियमाभावः । पृ. ३३३.

**छायोपसेवनन्यायः** । 'यावद्दोग्धनपानाच्च यावच्छायोपसेवनात्' इत्यारण्यके । छायोपसेवनं प्रतिमाद्वारको भोगः शत्रुकृतानां स्वदेहप्रतिमायामपि कण्टकेन तुन्नो व्यथते । **मोक्षधर्मे नीलकण्ठः** १।१, * चैतन्यस्य **छायोपसेवनन्यायेन** परकल्पितसंबन्धेनापि व्यवहारनिर्वाहे सति तत्सत्यत्वकल्पनाऽनौचित्यात् । **मोक्षधर्मे नीलकण्ठः** १।१.

*** छायाशब्दः** ( क्व चित् ) प्रक्रियाऽर्थः । **सु. पृ.** ७७६.

**छिद्रेष्वनर्था बहुलीभवन्ति इति न्यायः** । यत्र दुःखाद्दुःखान्तरप्राप्तिरिति विवक्ष्यते, तत्रायमवतरतीति । उक्तं च 'एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य । तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥' इति । किञ्च— 'क्षते प्रहारा निपतन्त्यभीक्ष्णं धनक्षये दीप्यति जाठराग्निः । आपत्सु वैराणि समुल्लसन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥' इति विष्णुशर्मा ( पञ्चतन्त्रे ) । **साहस्री.** ६४७.

**छिन्ने पुच्छे लूने कर्णे श्वा श्वैव नाश्वो न गर्दभः इति न्यायः** । प्रागपि जीवस्य ब्रह्मत्वे श्रवणमननादीनां वैफल्यं छिन्ने०... इति न्यायात् । **श्रीकर.** २।१।९ ब्रसू.

*** छेदनं** शाखायाः अग्रार्थम्, न तु मूलार्थम् । **भा.** ४।२।३।८–९. * छेदनं शाखाऽर्थमेव वाक्यात्, न उपवेषार्थम् । **वा.** ४।२।३।८. * **शाखाछेदनस्य** वत्सापाकरणं प्रयोजकम्, न कपालोपधानं दर्शपूर्णमासयोः । **भा.** ४।२।३।८–९, *** छेदनादिप्रयोजको** न स्वरुः । यूपं निष्पद्यमानमनु निष्पन्नोऽसौ । ४।२।१।१–६.

---

## ज.

*** जगत् अनादि** । न च तस्य कश्चित् स्रष्टा । 'सर्गादौ च क्रिया नास्ति, तादृक् कालो हि नेष्यते ।४२॥ यदि त्वादौ जगत् सृष्ट्वा धर्माधर्मौ ससाधनौ । यथाशब्दार्थसंबन्धान् वेदान् कश्चित् प्रवर्तयेत् । ४३ ॥ जगद्धिताय वेदस्य तथा किञ्चिन्न दुष्यति । सर्वज्ञवत्तु दुःसाधमित्यत्रैतन्न संश्रितम् । ४४ ॥ यदा सर्वमिदं नासीत् क्वाऽवस्था तन्न गम्यताम् । प्रजापतेः क्व वा स्थानं किंरूपं च प्रतीयताम् । ४५ ॥ ( रत्नाकरः—यश्चायं समस्तस्य स्रष्टा प्रजापतिः, स तदा क्वावतिष्ठते, नापि तस्याधारः संभवति पृथिव्यादीनामसंभवात् । किमाकृतिश्चासौ ? न तावदशरीरः, तथा सति सिसृक्षया प्रयत्नादेरसंभवात् । नापि शरीरी, तस्य भौतिकत्वात्, भूतादीनां च तदानीमभावात् इत्यर्थः ) । ज्ञाता च कस्तदा तस्य यो जनान् बोधयिष्यति । ( तस्य प्रजापतेः ज्ञाता श्रोता कः, यः श्रोता स्वयं बुद्ध्वा इतरान् जनान् बोधयिष्यति ) । उपलब्धेर्विना चैतत् कथमध्यवसीयताम् । ४६ ॥ प्रवृत्तिः कथमाद्या च जगतः संप्रतीयते । शरीरादेर्विना चास्य कथमिच्छाऽपि सर्जने । ४७ ॥ शरीराद्यथ ( दि–अ ) तस्य स्यात् तस्योत्पत्तिर्न तत्कृता । तद्वदन्यप्रसङ्गोऽपि, 'नित्यं यदि तदिष्यते' ( तद्वत् प्रजापतेः जगत्स्रष्टृशरीरवत् तच्छरीरोत्पादनार्थम् अन्यस्य शरीरस्य प्रसङ्गः इत्यनवस्था । शङ्कते नित्यम् इत्यादि ) । ४८ ॥ ( उत्तरम् — ) पृथिव्यादावनुत्पन्ने किम्मयं तत् पुनर्भवेत् । ( तद् नित्यं शरीरं किम्मयं भवेत् । किञ्च—) प्राणिनां प्रायदुःखा च सिसृक्षाऽस्य न युज्यते । ( अस्य प्रजापतेः ) ४९ ॥

साधनं चास्य धर्मादि तदा किञ्चिन्न विद्यते । न च निःसाधनः कर्ता कश्चित् सृजति किञ्चन ।५०॥ नाधारेण विना सृष्टिरूर्णनाभेरपीष्यते । प्राणिनां भक्षणाच्चापि तस्य लाला प्रवर्तते । ( तस्य ऊर्णनाभेः ) ५१ ॥ अभावाच्चानुकम्प्यानां नानुकम्पाऽस्य जायते । सृजेच्च शुभमेवैकमनुकम्पाप्रयोजितः । ५२ ॥ अथाशुभाद्विना सृष्टिः स्थितिर्वा नोपपद्यते । आत्माधीनाभ्युपाये हि भवेत् किं नाम दुष्करम् । ५३ ॥ तथा चापेक्षमाणस्य स्वातन्त्र्यं प्रतिहन्यते । जगच्चासृजतस्तस्य किं नामेष्टं न सिध्यति ? । ५४ ॥ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते । एवमेव प्रवृत्तिश्चेत् ( प्रयोजनं विनैव ) चैतन्येनास्य किं भवेत् । ५५ ॥ क्रीडाऽर्थायां प्रवृत्तौ च विहन्येत कृतार्थता । बहुव्यापारतायां च क्लेशो बहुतरो भवेत् । ( इति न क्रीडा संभवति )।५६॥ संहारेच्छाऽपि चैतस्य भवेदप्रत्ययात् पुनः । ( संहारेच्छा न संभवति, प्रत्ययं ज्ञानं विनैव वा सा स्यात् । तच्चायुक्तम् )। न च कैश्चिदसौ ( प्रजापतिः ) ज्ञातुं कदा चिदपि शक्यते । ५७ ॥ स्वरूपेणोपलब्धेऽपि स्रष्टृत्वं नावगम्यते । सृष्ट्याद्याः प्राणिनो ये च बुध्यन्तां किं नु ते तदा । ( न बुध्यन्ते इति भावः )। ५८ ॥ ( तदेवाह– ) कुतो वयमिहोत्पन्ना इति तावन्न जानते । प्रागवस्थां च जगतः स्रष्टृत्वं च प्रजापतेः । ५९ ॥ न च तद्वचनेनैषां प्रतिपत्तिः सुनिश्चिता । ( तत्र कारणमाह– ) असृष्ट्वाऽपि ह्यसौ ब्रूयादात्मैश्वर्यप्रकाशनात् ( प्रकाशनार्थम् )। ६० ॥ ( ननु वेदात् तथा ज्ञानं स्यात् आद्यप्राणिनाम् । तत्राह– ) एवं वेदोऽपि तत्पूर्वस्तत्सद्भावादिबोधने । साशङ्को , न प्रमाणं स्यान्नित्यस्य व्यापृतिः कुतः ( तत्पूर्वः प्रजापतिपूर्वकः तेन कृतश्चेत् वेदः, तदा वेदेऽपि साशङ्कतैव )। ६१ ॥ यदि प्रागप्यसौ तस्मादर्थादासीत् , न तेन सः । संबद्ध इति तस्यान्यस्तदर्थोऽन्यप्ररोचना ( यदि वेदः नित्यः स्यात् प्रजापतेः प्राचीनः स्यात् तदा ' प्रजापतिर्वा इदमेक एवासीत् सोऽकामयत प्रजाः पशून् सृजेयेति , ततो वै स प्रजाः पशूनसृजत ' इत्यसौ वेदः तस्मात् प्रजापतेः प्रागपि अर्थात् यदि आसीत्, तदा स प्रजापतिः तेन वेदेन संबद्धो न स्यात् । नहि पश्चात्तनं व्यापारं पूर्वतरो वेदः प्रकाशयितुं समर्थः । इति हेतोः तस्य वेदस्य तदर्थः सोऽर्थः अन्यप्ररोचनारूपः अन्य एव स्यात् । न यथाश्रुतः )। ६२ ॥ स्तुतिवाक्यकृतश्चैष ( प्रजापतिः स्रष्टेति ) जनानां मतिविभ्रमः । पौर्वापर्यापरामृष्टः शब्दोऽन्यां कुरुते मतिम् । ६३ ॥ उपाख्यानादिरूपेण वृत्तिर्वेदवदेव नः । धर्मादौ भारतादीनां भ्रान्तिस्तेभ्योऽप्यतो भवेत् । ६४ ॥ आख्यानानुपयोगित्वात्तेषु सर्वेषु विद्यते । स्तुतिनिन्दाऽऽश्रयः कश्चिद्वेदस्तच्चोदितोऽपि वा । ६५ ॥ ( रत्नाकरः—भारतादिष्वपि हि अस्त्येव अध्ययनविधिस्थानीयो विधिः 'श्रावयेच्चतुरो वर्णान् ' इति । अतोऽवश्यं प्रयोजनवदर्थपरत्वात् उपाख्यानमात्रस्यानुपयोगात् अन्यस्तुत्यर्थत्वम् अङ्गीकर्तव्यम् । तत्र क्व चिद्वैदिका एव विषयोऽग्निहोत्रादयो भारतादिषु श्रूयन्ते , क्व चित् भारतादिचोदिताः स्मार्तविषयः, तेन अन्यपरा एव तत्रापि सृष्टयादिवादाः ) वेदस्यादिप्रवृत्तौ च ( प्रवृत्तौ उत्पत्तौ ) नाकृतत्वमतिर्भवेत् । प्रलयेषु स्थितिश्चास्य साशङ्का स्यात् प्रजापतौ । ६६ ॥ कर्तृसर्गविनाशानामथानादित्वकल्पना । सैवं युक्ता यथेदानीं भूतानां दृश्यते क्रमात् । ६७ ॥ प्रलयेऽपि प्रमाणं नः सर्वोच्छेदात्मके नहि । न च प्रयोजनं तेन स्यात् प्रजापतिकर्मणा । ६८ ॥ न च कर्मवतां युक्ता स्थितिस्तद्भोगवर्जिता । कर्मान्तरनिरुद्धं हि फलं न स्यात् क्रियाऽन्तरात् । ६९ ॥ सर्वेषां तु फलापेतं न स्थानमुपपद्यते ( स्थानं स्थितिः )। न चाप्यनुपभोगोऽसौ कस्यचित् कर्मणः फलम् । ७० ॥ अशेषकर्मनाशे वा पुनः सृष्टिर्न युज्यते । कर्मणां वाऽप्यभिव्यक्तौ किं निमित्तं तदा भवेत् । ७१ ॥ ईश्वरेच्छा यदीष्येत सैव स्यात् लोककारणम् । ईश्वरेच्छावशित्वे हि निष्फला कर्मकल्पना । ७२॥ न चानिमित्तया युक्तमुत्पत्तुं हीश्वरेच्छया । यद्वा तस्या निमित्तं यत् तद् भूतानां भविष्यति ( उत्पत्तौ निमित्तम् , माऽस्तु ईश्वरेच्छा )। ७३ ॥ संनिवेशविशिष्टानामुत्पत्तिं यो गृहादिवत् । साधयेत् चेतनाधिष्ठां देहानाम्, तस्य चोत्तरम् । ( विशिष्टानां देहानां चेतनाधिष्ठितत्वं यो वादी साधयेत् , तस्येदमुत्तरमुच्यते ) ७४ ॥ कस्य चिद्धेतुमात्रत्वं यद्यधिष्ठातृतेष्यते । कर्मभिः सर्वजीवानां तत्सिद्धेः सिद्धसाधनम् ( जीवानां कर्मभिरेव तत्सिद्धेः सृष्टिप्रलयसिद्धेः माऽस्तु ईश्वरः )। ७५ ॥ इच्छापूर्वकपक्षेऽपि तत्पूर्वत्वेन कर्मणाम् । इच्छाऽनन्तरसिद्धिस्तु दृष्टान्तेऽपि न विद्यते ( गृहादिदृष्टान्तेऽपि )। ७६ ॥ अनेकान्तश्च हेतुस्ते तच्छरीरादिना भवेत् । ( ईश्वरशरीरादिना । उत्पत्तिमत्त्वे सति संनिवेशविशिष्टत्वात् इति हेतुः ) उत्पत्तिमांश्च तद्देहो देहत्वादस्मदादिवत् । ७७ ॥ अथ तस्याप्यधिष्ठानं तेनैवेत्यविपक्षता ( ईश्वरशरीरं न विपक्षः तस्यापि ईश्वराधिष्ठितत्वात् )। अशरीरो ह्यधिष्ठाता नात्मा मुक्तात्मवद्भवेत् । ७८ ॥ कुम्भकाराद्यधिष्ठानं घटादौ यदि चेष्यते । नेश्वराधिष्ठितत्वं स्यादस्ति चेत् साध्यहीनता ( नहि घटादौ अस्माकम् ईश्वराधिष्ठानं सिद्धम् )। ७९ ॥ यथासिद्धे च दृष्टान्ते भवेद्धेतोर्विरुद्धता । ( विरोधमेवाह– ) अनीश्वरविनाश्यादिकर्तृमत्त्वं प्रसज्यते । ( देहादिकं नेश्वरकर्तृकं चेतनोपादानत्वात् घटादिवत् इति ईश्वरभिन्नविनाशिकर्तृकत्वं प्रसज्येत )। ८० ॥ कुलालवच्च नैतस्य ( ईश्वरस्य ) व्यापारो यदि कल्प्यते । अचेतनः कथं भावस्तदिच्छामनुरुध्यते ( अशरीरस्य चेतनाशून्यस्य इच्छाम् )। ८१ ॥ तस्मान्न परमाण्वादेरारम्भः स्यात्तदिच्छया । ( इच्छाया असंभवात् । आत्मैवैको जगदादौ तिष्ठति । स एव स्वेच्छया व्योमानिलानलजलभूमिरूपेण परिणममानः सर्वं प्रपञ्चमारभते इति मतं निराकरोति– ) पुरुषस्य च शुद्धस्य नाशुद्धा विकृतिर्भवेत् । ८२ ॥ स्वाधीनत्वाच्च धर्मादेस्तेन क्लेशो न युज्यते । तद्वशेन प्रवृत्तौ वा व्यतिरेकः प्रसज्यते । ( व्यतिरेकः अभावः मतस्य )। ८३ ॥

( आत्मा अपरिणत एव अविद्यावशेन परिणतमिव प्रपञ्चरूपेण आत्मानं स्वप्नवत् पश्यति इति मतं निरस्यति— ) स्वयं च शुद्धरूपत्वादसत्त्वाच्चान्यवस्तुनः । स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता । ८४ ॥ अन्येनोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते । स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति । ८५ ॥ विलक्षणोपपाते हि नश्येत् स्वाभाविकी क्व चित् । ( श्यामतेव पार्थिवाणूनामग्निसंयोगेन ) । न त्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ( एकात्माभ्युपायानां एकमात्मानं स्वीकुर्वताम् )। ८६ ॥

( सांख्यपक्षं प्रतिक्षिपति — ) पुमानकर्ता येषां तु तेषामपि गुणैः क्रिया । कथमादौ भवेत्तत्र कर्म तावन्न विद्यते । ८७ ॥ मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा । मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं तदा मनः । ८८॥ कर्मणां शक्त्यवस्थानां यैरुक्ता बन्धहेतुता । सा न युक्ता, न कार्यं हि शक्तिस्थात् कारणाद् भवेत् । ८९ ॥ दधिशक्तिर्नहि क्षीरे दाधिकारम्भमर्हति । दध्यारम्भस्य सा हेतुस्ततोऽन्या दाधिकस्य तु । ९० ॥ कारणाच्छक्त्यवस्थाच्च यदि कार्यं प्रजायते । बन्धः पुनः प्रसज्येत फले दत्तेऽपि कर्मणा । ९१ ॥ शक्त्यवस्थत्वमेवेष्टं विनाशेऽपि हि कर्मणाम् । प्राक् चापि शक्तिसद्भावादनुष्ठानं वृथा भवेत् । ९२ ॥ शक्त्यवस्थं च रागादि किं नेष्टं बन्धकारणम् ! कर्मादत्तफलत्वाच्चेत्राभ्यक्तिमपि तद् व्रजेत् । ९३ ॥ तच्छक्त्यप्रतियोगित्वान्न ज्ञानं मोक्षकारणम् । कर्मशक्त्या नहि ज्ञानं विरोधमुपगच्छति । ९४ ॥ यद्यप्यज्ञानजन्यत्वं कर्मणामवगम्यते । रागादिवत् , तथाप्येषां न ज्ञानेन निराक्रिया । ९५ ॥ कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणवत् । फलस्याल्पस्य वा दानं राजपुत्रापराधवत् ( राजपुत्रेणापराधे कृते यथा तस्य अल्पो दण्डः, तद्वत् )। ९६ ॥ अद्यत्वेऽपि हि शक्तिस्थं यदि स्यात् कर्म कारणम् । ततः प्रधानकालेऽपि ( प्रलयकालेऽपि ) युज्यते कारणाऽभिधा । ९७ ॥ मनोवृत्तिरिदानीं तु हेतुर् , नास्ति च सा तदा । मनसां संकराच्चापि तदा स्यात् कर्मसंकरः । ९८ ॥ तस्मान्नैषोऽधिकाराख्यो बन्धहेतुः प्रकल्पते । योग्यत्वेऽप्यधिकाराख्यो विप्रयोगो न युज्यते । ९९ ॥ चैतन्यं योग्यता पुंसः प्रकृतेस्तदनात्मता । भोक्तृभोग्यत्वयोस्ते च न ताभ्यामपगच्छतः । १०० ॥ उत्पत्तौ कर्मणां चेष्टमज्ञानं कारणं यदि । तन्नाशात् स्यादनुत्पत्तिस्तेषां न फलवर्जनम् । १०१ ॥ ज्ञानं मोक्षनिमित्तं च गम्यते नेन्द्रियादिना । न च सांख्यादिविज्ञानात् मोक्षो वेदेन चोद्यते । १०२ ॥ आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् । कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते । १०३ ॥ विज्ञाते

चास्य (आत्मज्ञानस्य) पारार्थ्ये याऽपि नाम फलश्रुतिः। साऽर्थवादो भवेदेव ( अर्थवाद एवेत्यन्वयः ) न स्वर्गादेः फलान्तरम् ( स्वर्गादेः सकाशात् ) । १०४ ॥ सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते । स्वर्ग एव भवेदेष पर्यायेण , क्षयी च सः । १०५ ॥ नहि कारणवत् किञ्चिदक्षयित्वेन गम्यते । तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यते । १०६ ॥ नह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम् । न च क्रियायाः कस्याश्चिदभावः फलमिष्यते । १०७ ॥ तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये । उत्तरप्रचयासत्त्वाद् देहो नोत्पद्यते पुनः । १०८ ॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते । तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते । १०९ ॥ मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया । ११० ॥ प्रार्थ्यमानं फलं ज्ञातं न नानिच्छोर्भविष्यति । आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपयुज्यते । १११ ॥ सर्गप्रलयविज्ञानं समस्तजगदाश्रयम् । स्वशरीरविदां पुंसां नाधिक्येनोपयुज्यते । ११२ ॥ तस्माद्यवदेवात्र सर्गप्रलयकल्पना । समस्तक्षयजन्मभ्यां न सिध्यत्यप्रमाणिका । ११३ ॥ सर्वज्ञवन्निषेध्या च स्रष्टुः सद्भावकल्पना । "न च धर्मादृते तस्य ( ईश्वरस्य ) भवेल्लोकाद् विशिष्टता । ११४ ॥ न चाननुष्ठितो धर्मो नानुष्ठानमृते मितेः ( ज्ञानात् ऋते ) । न च वेदादृते सा स्याद् वेदो न च पदादिभिः ( ऋते ) । ११५ ॥ तस्मात् प्रागपि सर्वेऽमी स्रष्टुरासन् पदादयः । स्यात् तत्पूर्वकता चास्य चैतन्यादस्मदादिवत् ( स्रष्टुरपि वेदपूर्वकता स्यात् ) । ११६ ॥" एवं ये युक्तिभिः प्राहुस्तेषां दुर्लभमुत्तरम् । अन्वेष्यो व्यवहारोऽयमनादिर्वेदवादिभिः । ( स्रष्टुः वेदपूर्वत्वं साधयतां न किञ्चिदुत्तरं भवति । तेन सत्यपि सर्गे सुप्तप्रतिबुद्धन्यायेन अनादिरेव वेदव्यवहार इत्यर्थः) । ११७॥ श्लोवा. १।१।५।५ संबन्धाक्षेपपरिहारः.

* 'जगतः कर्ता' इयं कर्मणि षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । बाल. पृ. ४५, * जगत्कारणं सुखदुःखमोहात्मकसत्त्वरजस्तमोरूपं प्रधानमिति प्रक्रिया स्थितिसिद्धान्तापरपर्याया सांख्यैरुक्ता , पुरुष इति ब्रह्मविद्भिः, ईश्वर इति पातञ्जलैः, परमाणव इति औलुक्यैः ( काणादैः ) । सु. पृ. १३१.

* यदि जगत्सामा ( सोमः स्यात् ) आग्रयणाग्रान् ( ग्रहान् गृह्णीयात् ) । जगत्यामुत्पन्नं साम यस्य स जगत्सामा । तच्च साम महादिवाकीर्त्ये विषुवति पृष्ठम् । [विभ्राड् बृहत् पिबतु इति सा जगती ] । वि. १०।५।१५ वर्णकं २ । ज्योतिष्टोमे आर्भवपवमाने कावं साम जगत्यामुत्पन्नमस्ति इत्यादि सोमनाथेनोक्तम् । तच्च अभिप्रियाणि पवते चनोहितः इति जगत्यामुत्पन्नम् । तत् नात्र गृह्यते इत्यन्यदेतत् । के.

**⌛ जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् । १०।५।१५।५८ ॥**

ज्योतिष्टोमे ' यदि जगत्सामा आग्रयणाग्रान् ' ग्रहान् गृह्णीयात् इति श्रुतम् । अस्या आग्रयणाग्रतायाः किं प्रकृतौ निवेशः, उत विकृतौ इति विचारे प्रकरणानुग्रहात् प्रकृतौ इति पूर्वपक्षे सिद्धान्तयति । जगत्साम्नि श्रूयमाणेऽपि तदाख्यं जगदाख्यं साम ऋक्तः स्यात् जगतीछान्दस्कयोनिऋग्द्वारा स्यात् सामाभावात् । नहि कृत्स्नेऽपि सामवेदे जगन्नाम साम अस्ति । तस्माद्यत्र ' विभ्राड् बृहत् पिबतु ' इति जगत्यामुत्पन्नं महादिवाकीर्त्ये नाम साम , स विषुवान् जगत्सामा । तस्मात् आग्रयणाग्रतायाः विकृतौ विषुवति निवेशः इति सिद्धान्तः । अथवा अनेनैव सूत्रेण जगत्सामशब्दनिर्वचनं भाष्ये वर्णकान्तरेण कृतम् । अक्षरार्थस्तु स एव । के.

**⌛ जगत्सामाधिकरणम्** । जगत्सामशब्दः जगत्यामुत्पन्नस्य साम्नो वाचकः , ततश्च जगत्सामनिमित्तकाग्रयणाग्रता विषुवति निवेश्या ॥

**जगत्साम्नि सामाभावादृक्तः साम तदाख्यं स्यात् । १०।५।१५।५८ वर्णकं २ ॥**

**भाष्यम्**— एवं वा यदि जगत्सामा आग्रयणाग्रान् इत्येतदेवोदाहरणम् । तत्र संशयः किमन्यतरसामा जगत्सामा रथंतरसामा बृहत्सामा वा , किमुभयसामा जगत्सामा, किं रथंतरसामा जगत्सामा, किं यत्र जगत्यामुत्पन्नं साम , स जगत्सामेति । किं प्राप्तम् ? अन्यतरसामेति । कुतः ? विशेषानवगमात्, ज्योतिष्टोमस्य प्रकृतत्वात् ,



तस्य चान्यतरसामत्वात् । एवं प्राप्तम् । अथवा , उभयसामा जगत्सामा । जगच्छब्दः कृत्स्नवाची । कृत्स्नपृष्ठता च ज्योतिष्टोमे उभयसामत्वे । अन्यतरसामत्वे जगच्छब्दस्य अविशेषणत्वात् अविवक्षा प्रसज्येत । तस्मात् उभयसामा । अथवा रथंतरसामा जगत्सामा । तत्र हि ऋचि जगच्छब्दो विद्यते ' ईशानमस्य जगतः स्वर्दृशम् ' इति । यदि चोभयसामा जगत्सामा भवेत्, कृतकरो विधिरनर्थकः स्यात् , तेन नैतयोः समुच्चयः प्रकृतौ । तस्माद्रथंतरसामैव जगत्सामेति । एवं प्राप्ते , ब्रूमः । यत्र जगत्यामुत्पन्नं साम, स जगत्सामेति । तथाहि श्रुतिः । इतरथा रथंतरसामनि अध्यवसीयमाने ऋचा पदं लक्ष्यते, पदेन साम , सैषा लक्षितलक्षणा स्यात् । तस्मात् जगत्यां यत्र साम , स जगत्सामा । ऋक्तो जगदाख्यं साम स्यात् विषुवति । ननु शुक्राग्रो विषुवान् इत्युच्यते । नैष दोषः । स कामाय भविष्यति । तस्मात् विषुवति विकृतौ निवेशः इति ।

**टुप्**— ' कृतकरो विधिरनर्थकः स्यात् ' इति ( भाष्यम् ) । कोऽर्थः ? रथंतरसामत्वे ऐन्द्रवायवाग्रता विहिता , बृहत्सामत्वे तु शुक्राग्रता । उभयसामत्वे आग्रयणाग्रतैव विधातव्या जगत्सामशब्दे अनुच्यमानेऽपि लभ्यते ( इति ) ।

**शा**— पूर्वव्याख्यायाम् ( प्रथमे वर्णके इत्यर्थः ) नैमित्तिकम् आग्रयणाग्रत्वं विचारितम्, तद्धेतुत्वेन तु जगत्सामशब्दप्रस्तावः । इह तु स एव साक्षात् विचारितः इति भेदः ।

**वि**— ' बृहद् रथंतरैकं किं द्वयं वोत रथंतरम् । यद्वा जगत्यामुत्पन्नं जगत्सामा,ऽग्रिमो भवेत् ॥ ज्योतिष्टोमस्य तादृक्त्वादविकल्पाय तु द्वयम् । जगत्त्वं सर्वताऽत्रास्ति तदुक्तिर्व्यर्थता तदा ॥ , रथंतरं जगच्छब्दाद् विप्रकृष्टाऽत्र लक्षणा । जगत्यृचि स्थितं सामेत्येतत् स्यात् संनिकर्षतः ॥ '

**भाट्ट**— ज्योतिष्टोमे रथंतरसामकत्वनिमित्तम् ऐन्द्रवायवाग्रत्वं बृहत्सामकत्वनिमित्तं च शुक्राग्रत्वं च विधाय ' यदि जगत्सामा आग्रयणाग्रान् ' इति श्रुतम् । तत्र न तावत् जगत्संज्ञकं साम प्रकृतौ विकृतौ वा कस्यामपि सामशाखायां प्रसिद्धम् , येन तन्निमित्तकमिदमाग्रयणाग्रत्वं तत्र निविशेत । अतो जगत्सामशब्दार्थः कः, इति जिज्ञासायां जगच्छब्दस्य कृत्स्नवाचित्वात् प्रकृतः सामद्वयकार्त्स्न्यापरपर्यायो यत्र समुच्चयस्तत्र निविशते ; स च यद्यपि न प्रकृतौ, बृहद्रथंतरसाध्यस्तोत्रयोरदृष्टार्थयोरपि वचनेन विकल्पावगतेः साम्नोरपि विकल्पात् । तथापि यत्र संस्रवादौ उभयोर्वाचनिकः समुच्चयः, तत्रोत्कर्षः इत्याद्यपक्षः । न जगच्छब्दः कृत्स्नवाची, तथात्वे कृत्स्नस्य जगतः इत्यादिसहप्रयोगानुपपत्तेः । अपितु वस्तुमात्रवाची । अतश्च जगच्छब्दयुक्तं साम जगत्साम । योगश्च तद्घटितऋगाश्रयत्वसंबन्धेन । अतश्च रथंतरयोनौ ' ईशानमस्य जगतः स्वर्दृशम् ' इति जगत्पदपाठात् रथंतरमेव जगत्सामपदेनोच्यते, इति तत्रैव ऐन्द्रवायवाग्रत्वेन सह विकल्पेन निवेशः इति द्वितीयः । सिद्धान्तस्तु परम्पराघटितसंबन्धाङ्गीकारेऽपि साक्षाद्रथंतरसामत्वपुरस्कारेण विहितैन्द्रवायवाग्रत्वस्य विलम्बोपस्थितिकाग्रयणाग्रत्वेन सह विकल्पायोगात् जगतीछन्दस्कायामृचि उत्पन्नं सामैव जगत्साम , तस्य च विषुवति सत्त्वात् तत्र आग्रयणाग्रत्वस्योत्कर्षः । तत्र हि पृष्ठे महादिवाकीर्त्ये साम ' विभ्राट् बृहत् पिबतु ' इति जगत्यामुत्पन्नम् । न च एवमपि प्रकृतावेव पवमाने ' कावमन्त्यं जगतीषु ' इति जगतीस्थकावसत्त्वात् निवेशोपपत्तौ उत्कर्षकल्पने प्रमाणाभावः इति वाच्यम् । तस्य नित्यत्वेन यदिशब्दोपात्तनिमित्तत्वानुपपत्तेः । स्वमते तु यदि (इत्यस्य) यत्रेत्यर्थः । ऐन्द्रवायवाग्रत्वादिना विकल्पस्यापि अयुक्तत्वाच्च । न च एवं जगतीसामेत्यापत्तेः ईकारलोपः अननुशिष्टः कल्प्यः इति वाच्यम् । ' बहुलं छन्दसि ' इत्यनेन छन्दसि सर्वेषां विधीनां वैकल्पिकत्वस्योक्तत्वेन ईकारस्यापि वैकल्पिकत्वात् । अत एव भक्षमन्त्रे तृतीयसवनस्य इत्येतद्विशेषणत्वेन ' जगतीछन्दसः ' इति वक्तव्ये ' जगच्छन्दसः ' इति कस्यां चिच्छाखायां श्रवणम् । अतो विषुवति आग्रयणाग्रत्वं स्यात्, न प्रकृतौ । तेन ऐन्द्रवायवाग्रत्वादेः पक्षे बाधः ।

**मण्डन**— ' गानं जगत्साम यतो जगत्याम् । ' १६.

**शंकर**— ' जगत्सामा च विषुवान् । ' १७.

* जगत्सामत्वे आग्रयणाग्रत्वं विषुवति । भा. १०।५।१५।५८.

* जगत्सृष्टौ ब्रह्मणोऽपि कालादृष्टादिसापेक्षत्वम्, 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' ( ब्रसू. ) इति न्यायात् । पराक्रमः. ६।३।२.

* जगती । पादेषु अक्षराणि १२।१२।१२।१२ उदा० प्र देवमच्छा मधुमन्त ( ऋसं. ९।६८।१ )। के.

* जगत्यां 'विभ्राड् बृहत् पिबतु' इत्यस्याम् उत्पन्नस्य महादीवाकीर्त्यस्य साम्नः विषुवति पृष्ठसाधनत्वेन 'महादिवाकीर्त्यं पृष्ठं भवति' इति विधानम् । सु. पृ. ८९२.

* जगतीचितं ( चिन्वीत ) पशुकामस्य ( संवत्सरम् )। संकर्ष. २।१।३७.

* 'जज्ञभ्यमानः अनुब्रूयात्' इत्यत्र मन्त्रपाठः क्रत्वर्थः क्रतुसंयुक्तपुरुषधर्मः इति वा । दर्शपूर्णमासयोः ( जज्ञभ्यमानः जृम्भां कुर्वन् पुरुषः)। भा. ३।४।५।१४—१६ * जज्ञभ्यमानः गात्रविनामेन विदारितमुखः पुरुषः ( जभी जृभि गात्रविनामे इति धातुः )। वि. ३।४।९.

जज्ञभ्यमानाधिकरणम् । दर्शपूर्णमासयोः जृम्भायां दक्षक्रतुमन्त्रपाठः क्रतुयुक्तपुरुषधर्मः ॥

**अहीनवत् पुरुषस्तदर्थत्वात् । ३।४।५।१४ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'अङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन्, तेऽप्सु दीक्षातपसी प्रावेशयन्, तीर्थे स्नाति, तीर्थमेव हि सजातानां भवति' इति । दर्शपूर्णमासयोराम्नायते 'तस्माज्जज्ञभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवात्मन् धत्ते' इति । तत्र संदेहः किमयं धर्मः प्रकरणे निविशते, उत पुरुषस्योपदिश्यते इति । किं तावत्प्राप्तम् ? अहीनवत् पुरुषस्तदर्थत्वात् । एष विधिः प्रकरणादुत्कृष्येत । कुतः ? पुरुषश्रुतेः । ब्रूयादिति पुरुषप्रयत्नस्य विवक्षितत्वात् । ननु प्रकरणं बाध्यते । उच्यते । बाध्यतां प्रकरणम्, वाक्यं तु अस्य बाधकम्, जज्ञभ्यमानसंयोगात् । प्रकरणात् दर्शपूर्णमासयोरुपदिश्यते इति गम्यते, वाक्यात् जज्ञभ्यमानस्य । वाक्यं च प्रकरणात् बलीयः । तस्मात् उत्कृष्येतेति । फलमपि आमनन्ति 'प्राणापानावेवात्मन् धत्ते' इति । स च संयोगो बाध्यते । तस्मात् पुरुषधर्मः प्रकरणादुत्कृष्येत अहीनवत्, यथा अहीनसंयोगात् द्वादशोपसत्ता प्रकरणादुत्कृष्यते; एवं जज्ञभ्यमानसंयोगात् 'मयि दक्षक्रतू' इति वचनम् ।

वा— पूर्वत्र श्रुत्या सह प्रकरणं विरुध्यते, न विरुध्यते इति विचारितम् । इदानीं लिङ्गवाक्याभ्यां सह विचार्यते । तत्र ज्योतिष्टोमप्रकरणविहितस्य तीर्थस्नानस्य दर्शपूर्णमासप्रकरणविहितस्य जृम्भिकानिमित्तस्य मन्त्रोच्चारणस्य किमर्थत्वं पुनः स्यात् इति निवीताधिकरणवदेव ( ३।४।१ ) पक्षा रचयितव्याः । तेषामपि सारवत्तरत्वात् अनन्तराधिकरणे त्रय उपन्यस्ताः पुरुषमात्रधर्मः, प्रकरणयुक्तपुरुषधर्मः, क्रतुधर्मः इति । ते एव अत्राप्यनुवर्तन्ते । तत्र पूर्वाधिकरणेनैव प्रकरणात् क्रत्वर्थत्वे प्राप्ते पूर्वपक्षः परिगृह्यते । '**यथा प्रकरणं हित्वा द्वादशत्वं वशीकृतम् । अहीनेन, तथा पुंसा धर्मावेतौ वशीकृतौ ॥**' ( तीर्थस्नानं मन्त्रोच्चारश्च धर्मौ )। स्नानं तावत् योग्यतयैव मलापकर्षणार्थत्वात् पुरुषार्थं गम्यते । तीर्थविशेषणं च सुखावतरत्वात् ( तीर्थं नाम नदीतीरे सुखेन जलसमीपे गमनार्थं कृतो निम्नो मार्गः ) दुःखावतरह्रदादि व्यावर्तयत् पुरुषस्योपकरोति, न क्रतोः । यदपि च स्मरणम् ( अस्नाताशी मलं भुङ्क्ते इत्यादिरूपम् ) भोजनादिपूर्वभाविनियमरूपेण, तदपि तदर्थस्यैव नियमादृष्टं पुरुषगाम्येव करोति । तेन अवधारितप्रयोजनेन संबध्यमानः तीर्थनियमोऽपि पुरुषार्थो विज्ञायते । तत्रापि एषां तावत् दृष्टमेव प्रयोजनम् अवतरणसुखम् । अथापि उद्धृतोदकादिनिवृत्तिरूपो नियमो न दृष्टं साधयति इत्यदृष्टं कल्प्यते, तथापि अस्त्येव फलम् 'तीर्थमेव हि सजातानां भवति' इति । न च एवं वाक्यात् पुरुषसंयुक्तस्य प्रकरणमीश्वरम्, 'असंयुक्तं प्रकरणात्' इति स्थितत्वात् । तथा यद्यपि 'ब्रूयात्' इत्यनेन कर्ता नोपात्तः, तथापि जज्ञभ्यमानशब्दः कृदन्तत्वात् 'कर्तरि कृत्' ( पा० ३।४।६७ ) इति च अनन्यपरस्मरणात् कर्तृविशेषणं पुरुषमुपादत्ते । तेन स्ववाक्योपात्तेन संयुक्तं मन्त्राभिधानं प्रकरणग्राह्यत्वं न प्रतिपद्यते । पुरुषसंयोगे च अस्त्येव तत्फलं प्राणापानयोरात्मनि धारणात्



चिरजीवित्वम् । तस्मात् पुरुषमात्रधर्माः एवंजातीयका इति ।

**प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् । १५ ॥**

**भाष्यम्**— न वा उत्कृष्टव्यम् । कुतः ? प्रकरणविशेषात् । प्रकरणयुक्त एव जज्ञभ्यमानो वचनेन संस्क्रियते यथा यवादि द्रव्यं प्रोक्षणादिना । ननु न शक्नोति प्रकरणं जज्ञभ्यमानशब्दमेकदेशे अवस्थापयितुम् । वाक्यं हि प्रकरणात् बलवत्तरमिति । उच्यते । न ब्रूमो जज्ञभ्यमानशब्दः प्रकरणेन अप्राकरणिकात् पुरुषान्निवर्त्यते इति । किन्तु फलं तत्र कल्पनीयम् । ननु प्रत्यक्षं श्रूयते फलम् 'प्राणापानावेवात्मन् धत्ते' इति । नेति ब्रूमः । नात्र विधायकं शब्दमुपलभामहे । य एषः 'प्राणापानावेवात्मन् धत्ते' इति वर्तमानापदेश एषः, न विधायकः । स्तावकस्तु भवति मन्त्रवचनस्य । तस्मात् दर्शपूर्णमासाभ्यामन्यत्र एतत् न फलवत् । अतः पुरुषस्य दर्शपूर्णमासौ कुर्वतः संस्कारकर्म इति गम्यते । आह । पुरुषसंस्कारकर्म इति गृह्यते, दर्शपूर्णमासावेव कुर्वतः इत्येतन्न । कथम् ? योऽपि हि अन्यत्र दर्शपूर्णमासाभ्यां जज्ञभ्यते, सोऽपि जज्ञभ्यमानशब्देन उच्यते एव । न च प्रकरणेन व्यावर्त्यते इत्येतदुक्तम् । तस्मादुत्कृष्यते । अत्रोच्यते । नैव व्यावर्त्यते । संस्कृतेन तु तेन नास्ति प्रयोजनम् । ननु प्रकरणे पुरुषसंस्कारेणापि नास्ति प्रयोजनम् । उच्यते । संस्कृतपुरुषो दर्शपूर्णमासौ अनुष्ठास्यति । आह, उत्कर्षेऽपि सति संस्कृतः अन्यदनुष्ठास्यति । उच्यते । नान्यस्य संस्कारो गुणो भवति, अप्रकृतत्वात् । आह, प्रकृतस्यापि न गुणः । वाक्येन पुरुषधर्मः इत्यवगमात् । उच्यते । आनर्थक्यात् न पुरुषधर्मोऽवगम्यते । तस्मादस्य प्रकृताभ्यां दर्शपूर्णमासाभ्यामेकवाक्यता, नान्येन फलवताऽपि कर्मणा, प्रकरणाभावात् । तस्मात् नोत्कर्षः । यत्तु प्रकरणे निवेशः इत्येतस्मिन् पक्षे 'ब्रूयात्' इत्यनुष्ठानवचनम् अविवक्षितस्वार्थमिति, एवं सति अनुवादो भविष्यति, न पुरुषसंबन्धविधानस्य प्रयोजनमस्तीति ।

वा— पुरुषधर्म इत्येतावत् गृह्णीमः । यत्तु पुरुषमात्रधर्मः ततश्च उत्कर्षः इति, एतदसह्यम् । कुतः ? '**अविरोधात् समावेशे लभ्यमाने प्रमाणयोः । बाधो न युज्यते कर्तुं न च दूरात् फलश्रुतिः ॥**' पुरुषमात्रसंयोगे हि विना कारणेन प्रकरणं बाध्येत । ननु इतरत्रापि लिङ्गवाक्ये बाध्येयाताम् । सत्यं बाध्येयाताम्, यदि अपुरुषेण संबन्धोऽभ्युपगम्येत । वयं तु प्रकरणगतपुरुषधर्मं ब्रुवाणाः न किञ्चिदपि बाधिष्यामहे । न प्राकरणिके जज्ञभ्यमाने स्नातरि च सकलशब्दार्थो योग्यत्वं वा नास्ति । ननु अविशेषबुद्धिः बलवत्प्रमाणप्रभूता दुर्बलप्रमाणमूलया विशेषबुद्ध्या न युक्ता निवर्तयितुम् । एषा तावत् अवश्यमेव निवर्तनीया । नहि अविदुषः असमर्थस्य वा अधिकारः संभवति । ननु एवं प्रकरणं विशेषकमभ्युपगतं भवति । नैतदेवम् । ग्राहकमेव अत्रापि प्रकरणम्, येन उद्दिश्यमानजज्ञभ्यमानविशेषणत्वं प्रतिपद्यते । नहि तस्यैव व्यापारोऽवकल्पते, कथम्भावस्य इत्थम्भावादन्येन असंबन्धात् । योऽपि प्रकरणगृहीतपुरुषमपेक्षमाणः प्रकरणात् विशेषलाभं मन्यते, तस्यापि व्यावृत्ते प्रकरणव्यापारे तद्-गृहीतत्वापेक्षा भवति इति ( तथापीत्यर्थः ) नैव तद्विशेषणमवकल्पते । कथं तर्हि प्रकृतपुरुषप्रत्ययः ? उच्यते । विनैव विशेषणत्वेन अत्र प्रकरणस्थपुरुषग्रहणसिद्धिः । तथाहि, '**व्रीहीणां प्रोक्षणं यद्वल्लौकिकानामनर्थकम् । तद्वदेतदपीत्येवं फलाय प्रकृतं गतम् ॥**' यथा हि व्रीह्यादि प्रोक्षणादिभिः संबध्यमानं न च तावत् प्रकरणेन विशेष्यते, अथ च आनर्थक्यभयात् विप्रकृष्टफलकल्पनाप्रमाणाभावाच्च क्रतुसाधनत्वेन प्रयोजनवत्त्वाच्च प्रकृतं गृह्यते, तथाऽत्र फलकल्पनाभयात् प्रत्यासत्त्यनुरोधेन प्राकरणिकजज्ञभ्यमानग्रहणं क्रियते । नहि तत्संभवे अन्यफलकल्पनाप्रमाणं लभ्यते । ननु च क्लृप्तमेव अनयोः फलमित्युक्तम्, सत्यमुक्तम्, न तु ईदृशेन शब्देन फलमुच्यते, कामशब्दोपबन्धाभावात् । एतदेव च 'नात्र विधायकं शब्दमुपलभामहे' इत्याह ( भाष्यकारः )। फलविधानं हि ईदृशेन शब्देन न क्रियते इति वक्ष्यामः ( ४।३।१ )। इतरथा पुनः 'ब्रूयात्' इत्यत्रापि अस्त्येव विधिविभक्तिः इति अयुक्तमेव विधायकाभाववचनम् । नहि 'धत्ते' इत्येतस्य अविधायकत्वात् उपालम्भो भवति, सर्वत्रैव

फलांशस्य अविधेयत्वात् । तस्मात् यथोक्तमेव योजनीयम् । 'द्रव्यसंस्कारकर्मसु' इत्यनेन च अर्थवादत्वं वक्ष्यते । 'फलं तु तत्प्रधानायाम्' इति च कामपदोपबद्धायां तदर्थत्वम् ( वक्ष्यते ) ।

**'आह, पुरुषस्य संस्कारकम् इति गृह्णीमः'** इति संस्कारशब्दोच्चारणात् क्रतुयुक्तपुरुषधर्मत्वमभ्युपगच्छति ( भाष्यकारः ) । नहि स्वतन्त्रः फलवत्त्वात् संस्कारः इत्यभिधीयते । '**दर्शपूर्णमासावेव कुर्वतः** इत्येतन्न' ( इति भाष्यस्य ) इति कोऽभिप्रायः ? सर्वथा तावत् जञ्जभ्यमानधर्मत्वेन एष गम्यमानः आनर्थक्येन लौकिकान्निवर्त्येत । यस्तु ज्योतिष्टोमादौ जञ्जभ्यमानः, स दर्शपूर्णमासिकवदेव सप्रयोजनः इति अशक्यो वर्जयितुमिति । अतः क्रतुमात्रयुक्तपुरुषधर्मो भवति । अस्योत्तरं गूढाभिप्रायम् '**संस्कृतेन तु तेन प्रयोजनं नास्ति**' इति । कुतः ? '**न संबन्धो निर्वीतस्य यथैवातिथ्यकर्मणा । श्रुत्यादिभिरसंयोगात् तथैवास्य क्रियाऽन्तरैः ॥**' यदि सर्वत्र विहितः सन् अनर्थकत्वेन लौकिकात् निवर्त्येत, तत एतदेवं स्यात् । न तु असौ एवं निवर्तयितुं शक्यते । नहि प्रवृत्तानि शास्त्राणि केन चिन्निवर्त्यन्ते । किं तर्हि ? आदित एव एषां प्रवृत्तिप्रतिबन्धोऽवधार्यते । सा च एवं प्रतिबध्यते, यदि 'द्रव्यसंख्याहेतुसमुदायं वा' इत्यधिकरणन्यायेन स्वरूपसंगतौ अनर्थकत्वात् जञ्जभ्यमानशब्देन अपूर्वसाधनत्वं लक्ष्यते, तल्लक्षणा च न प्रकरणादृते लभ्यते ! न च दर्शपूर्णमासापूर्वं मुक्त्वा अन्यस्य प्रकरणमस्ति । तस्मात् तदपूर्वसाधनं यो जञ्जभ्यमानः तस्यैवैष संस्कारः । एवं तीर्थस्नानमपि वक्तव्यम् । एतौ च परिचोदनापरिहारौ सूत्रकार एव वक्ष्यति 'आरादपीति चेत्' 'न तद्वाक्यं हि तदर्थत्वात्' इति । यत्तु प्रयोगवचनेन सिद्धेः विध्यानर्थक्यम् इति, तत्राह, वरं तस्यानुवादत्वं न च निष्फलपुरुषमात्रधर्मविधानमिति ।

इह भाष्यकारेण निरन्तरयोर्द्वयोरधिकरणयोः एकस्याः परिचोदनायाः परस्परविरुद्धपरिहारद्वयमुक्तम् । 'अङ्गं सत् प्रयोगवचनेन गृह्यते, न चाविहितमङ्गं भवति' इत्येकः । 'एवं सति अनुवादो भविष्यति' इत्यपरः । तत्र कस्य सत्यत्वं कस्यानृतत्वमिति विवेक्तव्यम् । यथा तावत् पूर्वत्र व्याख्यातम्, तथा विधित्वमेव सत्यम् । अनुवादाभिधानं तु अभ्युपेत्यवादमात्रमिति गम्यते ( इति केचित् ) । शक्यं तु अनुवादत्वं समर्थयितुम् (इत्यन्ये) । कुतः ? '**अपर्यायविधायित्वादेकोऽङ्गानां विधिर्यतः । प्रात्यात्मिकानुवादत्वं शक्यते भाषितुं ततः ॥**' 'विधेस्त्वेकश्रुतित्वादपर्यायविधानात्' इत्यत्र सर्वेषामेव अङ्गानाम् एकप्रयोजनकल्पनया एकं विधिं वक्ष्यति । स च प्रयोगवचनेन विधीयमानानां भविष्यति, प्रात्यात्मिकविधीनां पर्यायप्रवृत्तेः । पुरुषश्च येन प्रवर्त्यते स विधिः । अङ्गप्रधानवत्यां च भावनायां युगपत्पुरुषनियोगः । तस्मात् प्रात्यात्मिकानामनुवादत्वम् । **अत्राभिधीयते** । द्वावपि एतौ ग्रन्थौ साधू । कथम् ? पूर्वस्तावत् 'न चाविहितमङ्गं भवति' इत्यनया चोपपत्त्या न विरुद्धः । उक्तं हि एतत् विधौ अनाश्रीयमाणे धात्वर्थमात्रस्य साध्यत्वात् निष्प्रयोजनत्वे सति न शक्यमङ्गत्वं कल्पयितुम् । तेन तावत् विधिः । अथ च अनुवादः कथम् ? पूर्वेण विधिना अङ्गत्वं प्रकल्प्य प्रयोगवचनं यावन्नीयते, तावन्तं च कालम् असौ विधिरूपेण अवतिष्ठते । प्रयोगवचनग्रहणे तु सति तद्गतविधिसंस्पर्शादेव पुरुषप्रवृत्तिसिद्धेः अनुवादत्वम् । अतः प्राक् प्रयोगवचनसमर्पणात् विधित्वेन विना न व्यवहारः सिध्यति इति विधिः । उत्तरकाले तु तत एव प्रवृत्तिसिद्धेः अनुवादः, इति उभयमपि साधूक्तम् ।

व्यपदेशादपकृष्येत । १६ ॥

**भाष्यम्**— अथ यदुपवर्णितम्, द्वादशोपसत्ता यथा उत्कृष्यते, तथा इदमपि उत्कष्टव्यमिति । उच्यते । तद्धि वाक्येन अहीनानां व्यपदिश्यते । फलवन्तश्च अहीनाः । न च तत्र ज्योतिष्टोमे अहीनशब्दः, गौणत्वात् । व्यपदेशाच्च 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य' इति । ततो युक्तं द्वादशोपसत्ता यत् प्रकरणादुत्कृष्यते । न तु इह पुरुषसंबन्धो निष्प्रयोजनत्वात्, अन्यस्य च प्रयोजनवतः प्रकरणे अभावात् ।



वा— प्रकरणे अहीनस्य अत्यन्तमविद्यमानत्वात् वाक्यसंयुक्तद्वादशोपसत्त्वं प्रकरणेन अनुगृह्यमाणमुत्कृष्यते इति अदृष्टान्तः ।

शा— '**जञ्जभ्यमानधर्मोऽयं वाक्यात्, प्रकरणेन तु । क्रत्वङ्गम्, दुर्बलं तच्च तेनास्य पुरुषार्थता ॥ सत्यं यदि विरोधः स्याद् वाक्यप्रक्रिययोरिह । ततः फलं प्रकल्प्येत, न त्वत्रास्ति विरोधिता ॥ जञ्जभ्यमानः पुरुषः क्रतावपि हि विद्यते । तत्संस्कारमुखेनैव क्रत्वर्थत्वं भविष्यति ॥ अवश्यं हि फलं कल्प्यं तत्राध्याहारतो वरम् । प्रकृतेनैव संबन्ध इति क्रत्वर्थता स्थिता ॥**' एकदेशिनां तु ( प्राभाकराणाम् ) नात्र क्रत्वर्थता सिध्येत् । निमित्तं हि जृम्भिका । निमित्तं चाधिकारिविशेषणम् । अतो जृम्भिकानिमित्तयुक्तस्य पुरुषस्य अधिकारिणः अत्र वाक्ये श्रुतस्य लाभात्, कार्यस्य च फलानपेक्षत्वात् अनपेक्षं संपूर्णं वाक्यं न प्रकृतसंबन्धमुपेयात्, स्वतन्त्रमेव पुरुषार्थं स्यात् इत्यास्तां तावत् । ९.

सोम—पूर्वोक्तशुद्धक्रतुधर्मत्वस्य इह अपवादकरणात् **संगतिः** । भाष्यस्थोदाहरणान्तरे तु स्नानस्य मलापकर्षणार्थत्वात् सुखावतरणार्थतीर्थविशेषणबलाच्च लिङ्गात् स्नानस्य तत्कर्तृपुरुषार्थत्वं बोध्यम् । **सूत्रार्थस्तु**— यथा द्वादशाहीनस्य इति उपसद्द्वादशत्वं वाक्येन अहीनधर्मस्तथा मन्त्रवचनं तीर्थस्नानं च वाक्येन लिङ्गेन च पुरुषार्थत्वावगमात् शुद्धपुरुषधर्मः स्यात् इति ।

**वि**—'जञ्जभ्यमानमन्त्रोक्तिः पुंसो धर्मः क्रतोरुत ।, वाक्यादाद्यः, प्रक्रियया द्वितीयोऽस्त्वविरुद्धया ॥' ९.

**भाट्ट**— ज्योतिष्टोमे 'तीर्थे स्नाति, तीर्थमेव हि समानानां भवति' इत्यत्र तीर्थस्नानस्य प्रकरणादेव पूर्ववत् आरादुपकारकत्वं प्राप्तं पशुपुरोडाशन्यायेन दृष्टरूपमलापकरणार्थत्वलिङ्गेन बाधित्वा क्रतुयुक्तपुरुषधर्मत्वम् । 'अप्सु दीक्षातपसी प्रावेशयन्' इत्यर्थवादे अप्सु दीक्षावत्त्वसंकीर्तनात्, दीक्षायाश्च यमनियमपरिग्रहरूपायाः पुरुषसंस्कारकत्वस्य 'गृहपतिं दीक्षयति' इत्यादिना स्पष्टत्वादपि स्नानस्य क्रतुयुक्तपुरुषधर्मत्वम् । अत एव कर्तृत्वांशे वैयर्थ्यादनुपयोगेऽपि फलाधानांशे उपयोगकल्पनात् अस्य याजमानत्वमिति स्पष्टत्वादेव इदं मूले उदाहृतमपि न विचार्यते । दर्शपूर्णमासयोस्तु 'जञ्जभ्यमानो ब्रूयात् मयि दक्षक्रतू इति, प्राणापानावेव आत्मन् धत्ते' इति श्रुतो मन्त्रपाठः किं शुद्धक्रतुधर्मः, उत शुद्धपुरुषधर्मः, आहोस्वित् क्रतुयुक्तपुरुषधर्मः इति चिन्तायाम्, पूर्ववत् पुरुषस्य शानजुपात्तस्यापि सर्वप्रधानभूतायां भावनायां चैत्रादिवत् विशेषणत्वेन उपादानात् प्रवर्ग्यन्यायेन ( ३।३।१२ ) प्राधान्यकल्पनाऽनुपपत्तेः 'लक्षणहेत्वोः क्रियायाः' ( पा० ३।२।१२६ क्रियायाः परिचायके, हेतौ च अर्थे वर्तमानात् धातोर्लटः शतृशानचौ स्तः । हेतुः फलं कारणं च ) इत्यनेन अनुवचनक्रियायां लक्षणत्वेन अवगतस्य जृम्भणस्य भाव्यत्वादिना लक्षणत्वायोगात् निमित्तत्वप्रतीतेः जृम्भायां निमित्ते अनुवचनं भेदनहोमवत् आरादुपकारकम् । शानजुपात्तकर्ता तु अर्थप्राप्तत्वादनुवादः । वस्तुतस्तु, अनुवचनस्य आरादुपकारकत्वे समाख्यया आध्वर्यवत्वापत्तेः यजमानान्यपुरुषजृम्भायामपि तत्कर्तृकमन्त्रपाठापत्तेः शानजुक्तजृम्भाकर्तृकर्तृकत्वानुवादानुपपत्तेः अवश्यं जृम्भायाः पुरुषविशेषणत्वमङ्गीकृत्य जञ्जभ्यमानकर्तृविशिष्टमनुवचनमेव आध्वर्यवं विधीयते आरादुपकारकत्वेन । ततश्च जृम्भायाः क्रियां प्रति निमित्तत्वेन अन्वयायोगात् आर्थिकमेव अस्याः वषट्कारादिवत् निमित्तत्वमिति **प्रथमः पक्षः** ।

**द्वितीयस्तु**, जञ्जभ्यमानस्य कर्तृत्वेन अनुवचनं प्रति गुणत्वाङ्गीकारे गुणानुरोधेन प्रधानभूतानुवचनस्य क्रतौ पाक्षिकत्वापत्तेः जञ्जभ्यमानस्य क्रियां प्रति शब्दतो विशेषणस्यापि स्वर्गादिवदेव प्राधान्यम् । तदा हि प्रधानानुरोधेन पाक्षिकत्वेऽपि न दोषः । यद्यपि च तिङभिहितकारकत्वमेव प्रथमाऽर्थः, न तु संस्कार्यत्वम्, तथापि कर्तृत्वस्य फलसमानाधिकरणत्व- तद्व्यधिकरणत्ववैशिष्ट्यभेदेन भिन्नत्वात् उक्तयुक्त्या इह फलसमानाधिकरणकर्तृत्वस्यैव प्रथमाऽर्थत्वात् फलभोक्तृत्वरूपसंस्कार्यत्वसिद्धिः अविकलैव । एतदभिप्रायेणैव कौस्तुभे अधिकारित्वस्य प्रथमाऽर्थत्वोक्तिः इति ध्येयम् । अतो जञ्जभ्यमानोद्देशेन अनुवचनविधानात्, प्रकरणानुरोधेन च वाक्यसंकोचे प्रमाणाभावात् शुद्धपुरुषधर्मत्वम् । न च फलकल्पना, प्राणा-

पानधारणरूपस्य फलस्य स्ववाक्य एव क्लृप्तत्वेन तदभावात् । यद्यपि चायमर्थवादः स्यात्, तथापि प्रकरणावगतक्रतूपकारापेक्षया अस्यैव स्ववाक्योपस्थितस्य तद्वाचकपदान्तरकल्पनया फलत्वस्य औचित्याच्च । अतः शुद्धपुरुषधर्मत्वम् । इति प्राप्ते, न तावत् फलं क्लृप्तम्, धत्ते इति वर्तमानत्वनिर्देशेन योग्यानुपलब्धिबाधितत्वात् । अतोऽस्य स्तुत्यर्थत्वेनैव अन्वयमङ्गीकृत्य फलापेक्षायां कामपदयुक्तपदान्तरकल्पनया अस्यैव वा भविष्यदर्थकत्वकल्पनया फलपरत्वं परिकल्प्य तस्य कथञ्चित् जज्झभ्यमानकर्तृभोग्यत्वं वाच्यम् । तथा सति फलम्, तज्जनकत्वम्, तद्व्यापाररूपापूर्वकल्पनं च इत्यनेककल्पनातो वरं प्रकरणानुरोधेन क्लृप्तक्रतुफलाधानयोग्यताजनकत्वमात्रं क्रत्वपेक्षितत्वात् कल्पयितुमुचितम्, इति क्रतुयुक्तपुरुषधर्म एवायम् । फलाधानयोग्यतासंपादकत्वाच्च याजमानः इति प्रयोजनम् ।

**मण्डन**— ‘ जज्झभ्यमानः प्रकृतोऽधिकारी । ’

**शंकर**— ‘ जृम्भामन्त्रः क्रतोरङ्गम् । ’ ११.

* एतेन कर्त्रधिकरणे आख्यातार्थत्वं कर्तुर्निरस्य **जज्झभ्यमानाधिकरणे** शानजर्थत्वं स्वीकुर्वन्तो मीमांसका अपि ( नैयायिकवत् ) परास्ताः । **शब्दकौ.** स्फोटविचारे. * **जज्झभ्यमानाधिकरणन्यायेन** क्रतुयुक्तपुरुषसंस्कारत्वसिद्धिः । **सु.** पृ. ३२०, * जज्झभ्यमानाधिकरणन्यायेन लोहितोष्णीषादीनामपि वपनादिवत् संस्कारत्वावगमात् । ३।७ पृ. ५९.

* **जज्झभ्यमानन्यायेन** ( जज्झभ्यमानाधिकरणोक्तेन ) क्रतुयुक्तपुरुषधर्मत्वापत्तेः । **सु.** पृ. १३८९. * **जज्झभ्यमानमन्त्रोक्तिः** नैमित्तिकः सन् अदोषनिर्घातार्थः क्रत्वर्थः अधिकारविधिः । **बाल.** पृ. १४. * **जज्झभ्यमानमन्त्रवचनं** दर्शपूर्णमासप्रकरणे एव व्यवतिष्ठते । ( मन्त्रश्च ‘ मयि दक्षक्रतू ’ इति । **रत्न.** ६।१।५।२२.

**जतुकाष्ठन्यायः** । यथा जतु काष्ठं च समवेतं प्रयत्नभेदेन जतुनः काष्ठं काष्ठाच्च जतु पृथक् क्रियते, तथा यत्र वस्तुतो भिन्नयोः केन चिदुपाधिना श्लिष्टयोः पुनः प्रयत्नान्तरेण पृथक्करणम्, तत्रास्य प्रवृत्तिः । यथा चोक्तं साहित्यदर्पणे दशमपरिच्छेदे श्लेषालङ्कारप्रकरणे— ‘ इह केचिदाहुः सभङ्गश्लेष एव शब्दश्लेषविषयः । यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः ’ इति । **साहस्री.** ६१८.

* **जनकसप्तरात्रः** कुसुरुबिन्दादिषु अष्टसु सप्तरात्रेषु अष्टमः । स च द्वादशाहगतदशाहान्तर्गतसप्ताहविकारः । **सोम.** ८।३।२. * **जनकसप्तरात्रे** ‘ चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुख्यानि ’ इति । तत्र प्रथमस्याह्नोऽग्निष्टोमत्वम् । शेषाणां त्रयाणाम् अग्निष्टोमविकृतित्वम् । चतुर्णामपि त्रिवृत्त्वं विशेषः । आद्येषु चतुर्षु अहःसु द्वादशाहगतपृष्ठ्यषडहस्थत्रिवृत्पञ्चदशसप्तदशैकविंशानां चतुर्णामह्नां धर्माः पञ्चदशत्वादि वर्जयित्वा अतिदेष्टव्याः गणत्वसाम्यात्, न तु प्रथमस्याह्नः उत्तरेषु त्रिषु । **वि.** ८।३।२.

**जनकसप्तरात्रन्यायः** । जनकसप्तरात्रे द्वादशाहिकसप्ताहधर्माणां क्रमेणातिदेशः ॥

**गणचोदनायां यस्य लिङ्गम्, तदावृत्तिः प्रतीयेताग्नेयवत् । ८।३।२।३ ॥**

**भाष्यम्**— जनकसप्तरात्रे श्रूयते ‘ चत्वारि त्रिवृन्त्यहानि भवन्ति ’ इति । तथा अन्यत्र श्रूयते ‘ नव त्रिवृन्ति अहानि भवन्ति ’ इति । तत्र संदेहः किं पार्ष्ठिकस्य ( पृष्ठ्यषडहगतस्य ) प्रथमस्यायमभ्यासः, उत नानाऽह्नां द्वादशाहिकानां स्तोमविधिः इति । किं प्राप्तम् ? गणचोदनायां यस्य लिङ्गम्, तदावृत्तिः प्रतीयेत, आग्नेयवत् । गणचोदनायामेवंविधायाम्, यस्य लिङ्गं पार्ष्ठिकस्य प्रथमस्य अह्नः त्रिवृत्त्वम्, तस्यैव आवृत्तिः प्रतीयेत, चोदनासामान्यात् । आग्नेयवत् । तद्यथा ‘ अग्नये पावकाय, अग्नये शुचये ’ इति देवतैक्यात् चोदनासामान्यात् आग्नेयस्य विध्यन्ताभ्यासः ( विध्यन्तस्य अभ्यासः ), एवमिहापि ।

**नानाऽहानि वा, संघातत्वात्, प्रवृत्तलिङ्गेन चोदनात् । ४ ॥**

**भाष्यम्**— नाना अहानि वा द्वादशाहिकानि प्रवर्तेरन्, न पार्ष्ठिकं प्रथममहः । कस्मात् ? संघातत्वात् । संघात एष उच्यते ‘ चत्वारि त्रिवृन्ति अहानि ’ इति । पृथक्त्वनिवेशिनी हि चत्वारि इति संख्या पृथक्त्वेन



अह्नां भवतीति । सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नाना अहानि द्वादशाहिकानि चत्वारि । तानि अनूद्य त्रिवृत्त्वं विधातुं शक्यते । न तु त्रिवृन्ति बहूनि अहानि अनूद्य तत्र चतुःसंख्या विधीयते ।

**टुप्**— सन्ति तत्र ( गण- ) चोदनया ( जनकसप्तरात्रेण यजेत इत्यनया ) प्रवृत्तानि ( उत्पादितानि ) नाना अहानि द्वादशाहिकानि चत्वारि । तानि अनूद्य ( ‘ चत्वारि त्रिवृन्त्यहानि ’ इत्यनेन ) त्रिवृत्त्वं विधातुं शक्यते इति ( त्रिवृत्त्वं विधीयते इति रत्ने टुप्-पाठः ) । एतत् ( भाष्यम् ) अयुक्तम् । ( कुतः ? उच्यते ) ‘ जनकसप्तरात्रेण यजेत ’ इति प्रयोगचोदनेयम् ( फलश्रवणात् ) प्रयोगश्च उत्पत्तिमपेक्षते ( अन्यत्र व्यापृतत्वात् ) [ प्रयोगचोदना तु उत्पत्तिमपेक्षते इति रत्ने पाठः । उत्पत्तिं न त्यजति इति आनन्दाश्रमीयः पाठः ] । अहःशब्दो यागविशेषवचनः ( सोमयागवचनः, सः ‘ चत्वारि अहानि ’ इत्यत्र श्रूयमाणः ) अश्रुतमपि ( यागम् ) विशेष्यमनुमापयति । नहि इदं विशेषणम् ( सोम- ) यागमन्तरेण ( संभवति ) । यथा वज्री इति ( विशेषणम् ) इन्द्रमनुमापयति ( तथेदमपि । तत्र- ) बहुवचनात् अनियतबहुत्वेषु ( प्राप्तेषु ) चत्वारि इति नियम्यते । तेषां त्रिवृत्त्वम् अग्निष्टोममुखत्वं च विधीयते । तत्र ‘ चत्वारि त्रिवृन्ति अहानि ’ ( अग्निष्टोममुखानि ) इत्यनेन उत्पन्नानि ( कर्माणि अनूद्य ) ‘ जनकसप्तरात्रेण यजेत ’ इति फले विधीयन्ते । ( न तु अनेन उत्पन्नानामितरेण गुणविधानम् । कथं तर्हि अधिकरणमतमाह- ) पूर्वपक्षे त्रिवृत्त्वेन लिङ्गेन ( पार्ष्ठिकस्य ) प्रथमस्याह्नः विध्यन्तः चतुर्ष्वपि । सिद्धान्ते ( तु प्रधान- ) यागानां गुणः संघातः । तदीयेन ( तेन ) गुणेन ( प्रधानसंबन्धिना संघातस्थेन ) नाना अह्नाम् ( द्वादशाहिकानाम् ) यो धर्मः, सः अतिदिश्यते, संघातसामान्यात् । त्रिवृत्त्वं पुनः अङ्गावस्थितं ( स्तोत्रीयापरिमाणत्वात् । अतः- ) तत् बहिरङ्गत्वात् ( अन्तरङ्गसंघातलिङ्गात् ) दुर्बलम् । एवं वर्णयितव्यमधिकरणम् ( न तु यथाभाष्यम् ) । यथा तु भाष्यकारेण वर्णितम्, तथा बहवो दोषाः ( स्युः ) । कथं चत्वारि इत्यनूद्य त्रिवृत्त्वं विधीयते ( इत्युक्तम् ? ) न च सप्तरात्रे चत्वारि सन्ति, अविधीयमानत्वात् ( चतुर्णाम् ), यानि अनूद्येरन् । अभ्युपेत्य ब्रूमः, सन्तु वा चत्वारि, तत्रापि अग्निष्टोममुखानि इति द्वितीयो गुणो विधेयः, तत्र ( प्राप्ते कर्मणि अनेकगुणविधानात् ) वाक्यं भिद्येत । ( तस्मात् इयमेव उत्पत्तिचोदना ) इति सिद्धम् ।

**तन्त्ररत्नम्**— यत्र गुणरूपेणैव चोदना तत्र प्रथमद्वितीयादिभावस्य सापेक्षप्रतीतिकत्वात् अनपेक्षं त्रिवृत्त्वमेव बलवत् । अतो जनकसप्तरात्रस्य आद्यानि चत्वारि अहानि त्रिवृत्त्वसामान्यात् पार्ष्ठिकप्रथमाहःप्रकृतीनि ।

**शा**— चतुर्णामपि पृष्ठाद्यानां चतुर्षु प्रवृत्तिः । एवं च अग्निष्टोममुखानि इत्येष वादो युज्यते आद्यस्य अग्निष्टोमत्वात् । ( अत्र चतुर्णां प्रवृत्तावपि वाचनिकत्रिवृत्त्वविरोधात् पञ्चदशत्वादयो न प्रवर्तन्ते, किन्तु तद्व्यतिरिक्तो विध्यन्तः इति ध्येयम् ) ।

**सोम**— कुसुरुबिन्दादयः अष्टौ सप्तरात्राः, तेष्वयं अष्टमो जनकसप्तरात्रः । पूर्ववदुत्थितेः **संगतिः** । **सूत्रार्थस्तु**— चत्वारि त्रिवृन्ति इत्यादिगणचोदनायां यस्य त्रिवृत्त्वादेर्लिङ्गं तस्यैवावृत्तिः प्रतीयते, आग्नेयवत् यथा पूर्वत्र बार्हस्पत्यस्य आग्नेयविध्यन्तः, तद्वत् इति ।

**वि**— ‘ त्रिवृत्त्वहःस्वादिमस्य द्वादशाहस्य वा, ऽग्रिमः । शाब्दत्रिवृत्त्वतो, ऽन्त्यः स्यादहःसंघानुसारतः ॥ ’

**भाट्ट**— जनकसप्तरात्रे ‘ चत्वारि त्रिवृन्त्यहानि अग्निष्टोममुखानि ’ इति श्रुतम् । तत्र चतुर्ष्वपि अहःसु द्वादशाहिकदशाहान्तर्गतप्राथमिकस्य त्रिवृत्स्तोमकस्य अह्नः प्रवृत्तिः, त्रिवृत्त्वलिङ्गात्, न तु क्रमसहकृतगणत्वसामान्येन अन्यापेक्षेण दशाहान्तर्गतानामाद्यानां चतुर्णामह्नां प्रवृत्तिः, तत्तदहर्वृत्तित्रिवृत्त्वस्य अन्यानपेक्षत्वेन बलवत्त्वात् । इति प्राप्ते, ‘ स्वर्गकामो जनकसप्तरात्रेण यजेत ’ इति वचनेन उत्पन्नानां सप्तानां मध्ये चत्वारि अनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्य उत्पन्नशिष्टत्वेन दुर्बलत्वात् उत्पत्तिशिष्टेन गणत्वेनैव ‘ प्रथमस्य प्रथमम् ’ इत्यादिक्रमसहकृतेन सप्तानामपि अह्नां द्वादशाहिकदशाहान्तर्गतसप्ताहविकारत्वम् । न च प्राप्तकर्मानुवादेन त्रिवृत्त्वविधिः अग्निष्टोममुखत्वस्य च विधिः इति वाक्यभेदः, दशाहान्तर्गतचतुर्णां मध्ये प्रथमस्य अग्निष्टोमसंस्थाकत्वेन अग्निष्टोममुखत्वस्य

प्राप्तत्वात् । न च आद्येष्वेव चतुर्षु त्रिवृत्त्वविधौ प्रमाणाभावेन अग्निष्टोममुखत्वस्यापि विधिः आवश्यक इति वाच्यम् । प्रथमातिक्रमे कारणाभावात् त्रयाणामन्येषां विध्यन्तरेण स्तोमविधानाच्च आद्येष्वेव चतुर्षु त्रिवृत्त्वप्राप्तेः । इति भाष्यकाराभिप्रायः । वस्तुतस्तु चतुःसंख्याकोद्देशेन त्रिवृत्त्वविधौ योग्यतया सप्तस्वपि अहःसु आद्येषु चतुर्षु स्तोत्रेषु त्रिवृत्त्वविध्यापत्तेः, अहर्मात्रोद्देशेन तद्विधौ च सर्वत्र तदापत्तेः, चतुःसंख्याविशिष्टाहरुद्देशेन वाक्यभेदापत्तेः अयमेव संख्याभिन्नत्रिवृत्त्वविशिष्टकर्मोत्पत्तिविधिः । त्रयाणां चान्येषां विध्यन्तरेण विधिः । सर्वेषां च फलवाक्येन फलसंबन्धमात्रकरणम् । एवं च उत्पत्तिवाक्ये चतुर्णां गणत्वप्रतीतेः तस्य उत्पत्तिगतत्ववत् त्रिवृत्त्वस्यापि उत्पत्तिगतत्वेन साम्येऽपि त्रिवृत्त्वस्य अङ्गभूतस्तोत्रवृत्तित्वात् प्रधानवृत्तिगणत्वापेक्षया दुर्बलत्वेन गणत्वसादृश्येनैव आद्यानां चतुर्णाम् अतिदेशः प्रसाध्यः । सर्वथा नाद्यस्यैव चतुर्षु अतिदेशः । एवं च 'अग्निष्टोममुखानि' इत्यनुवादोपपत्तिः । इतरेषां त्रयाणां अन्यसंस्थाकत्वात् । इतरथा 'अग्निष्टोमानि' इत्येवावक्ष्यत् सर्वेषु अग्निसंस्थाकत्वस्यैव अतिदेशेन प्राप्तेः ।

**मण्डन**— 'नानाऽहिकानां विहिता त्रिवृत्ता ।'

**शंकर**— 'त्रिवृत्साम्यान्नातिदेशः ।'

* यत्तु 'पञ्चोक्थ्यम्' इत्यत्र गणचोदनयैव प्राप्तानामह्नां संस्थामात्रं विधीयते ( विधायिष्यते—भाष्यपाठः ) इति भाष्यकारेणोक्तम्, तदेवमपि संभवति इत्यतिशयार्थमुक्तम् । परमार्थतस्तु गणचोदनायाः फलसंबन्धस्य अन्यावृत्तत्वात् अन्यत उत्पत्तिमपेक्षमाणायां स्वयमुत्पत्तिपरत्वायोगात् इयमेवोत्पत्तिचोदना इति **जनकसप्तरात्रन्यायेन** द्रष्टव्यम् । **रत्न.** ८।३।४।८–९.

☒ '**जन्मान्तरसहस्रेषु बुद्धिर्या भाविता पुरा । तामेव भजते जन्तुरुपदेशो ह्यनर्थकः** ॥' इति न्यायः । यत्र तु नानाविधश्रुतिस्मृतिप्रभृत्युपदेशसत्त्वेऽपि तमनादृत्य स्वाभीष्टमते प्रवृत्तिर्भवेत् तत्रायमवतरति । **साहस्री.** ५३५.

* **जन्मत्वम्** असिद्धस्य कर्तुः स्वात्मलाभफलकव्यापारसामान्यम् । सु. पृ. ३४३.

* **जपः** अदृष्टार्थः इति 'इतरे ( अधिका मन्त्राः ) जपवत् अदृष्टार्था भवन्ति' इति भाष्ये ( १२।३।१४। ३० ) दृष्टान्तीकरणम् । **के.** * जपः अविवक्षितार्थकम् उच्चारणमात्रमेव । यत्र सन्तमप्यर्थमविवक्षित्वा उच्चारणमात्रमदृष्टार्थे क्रियते, यथा–वैष्णवीमृचमनूच्य इति स जपः इति उक्तं द्वादशे । **बाल.** पृ. ७१. * जपः इति कः पदार्थः 'जप व्यक्तायां वाचि' इति । जप्यते इति जपः । वचनं जपनम् इति समानोऽर्थः । यस्मात् 'जप व्यक्तायां वाचि' इति स्मर्यते, तेन यत्र वचनमात्रं मन्त्रस्य क्रियते, न स्तूयते नाशास्यते स जपः । **भा.** १२।४।१।१. **टुप्**–वैष्णव्यामृचि ये वर्णाः, तेषामुच्चारणं कर्तव्यम् अदृष्टार्थम् । इदं हि जपशब्देनोच्यते । यः पुनस्तत्र पदैरुच्चार्यमाणैः स्वाभाविकोऽर्थप्रत्ययः सः अचोदितत्वात् अविवक्षित एव । अथवा अयमर्थप्रत्ययः संयुक्तत्वात् वर्णोच्चारणस्यैवाङ्गम् । * जपः ( मन्त्रस्य ) 'घोषान्तोच्चारणं जपः' । कु. १।२।४।४३ पृ. ४६. * जपाः जपतिचोदनाचोदिता मन्त्राः । **भाट्ट.** ९।३।८ वर्णकं ३ । जपतिचोदनाचोदितत्वं जपत्वम्, न तु उपांशुप्रयोज्यत्वम्, नापि अर्थाविवक्षया अदृष्टार्थोच्चारणकत्वम् अर्थाविवक्षायां प्रमाणाभावात् । १२।४।१. * **जपस्य याजमानस्य** लोपः अक्षियज्ञस्य मृताधिकारिकत्वपक्षे । **भा.** १२।२। १८।५०. * **जपमन्त्राणां** दीक्षितस्य समुच्चयः कार्यनानात्वात् । आग्नावैष्णवी सारस्वती बार्हस्पत्या चेति ऋक्त्रयं जपमन्त्राः ( एवमन्येऽपि ) । **वि.** १२।४।१, * **जपमन्त्रेषु** त्रैस्वर्यम् । ९।२।८ वर्णकं ३. * जपमन्त्रादिव्यतिरिक्तेषु करणमन्त्रादिरूपेषु 'अग्नये जुष्टं निर्वपामि' इत्यादिषु आध्वर्यवयाजमानेषु आधुनिकानां याज्ञिकानां चातुःस्वर्येण प्रयोगे मूलं मृग्यम् । **सोम.** ९।२।८. * **जपसंस्कारेष्टीनां** लोपः अक्षियज्ञस्य मृताधिकारिकत्वपक्षे । **भा.** १०।२।१८।४९.

☒ **जपस्तुत्याशीरभिधानमन्त्राणां समुच्चयः** ॥

**जपाश्चाकर्मयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात्** । १२।४।१।१॥

**भाष्यम्**— जपाः 'वैष्णवीमनूच्य वाग् यन्तव्या' ( इदं विष्णुर्वि चक्रमे ), 'सारस्वतीमनूच्य वाग् यन्तव्या' (प्र णो देवी ) 'बार्हस्पत्य(त्या)मनूच्य वाग् यन्तव्या' ( बृहस्पते अति यदर्यः ) इति । **स्तुतयः** 'अग्निर्मूर्धा दिवः' इति । **आशिषः** 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इति । **अभिधानार्थाः** 'एषोऽसि' इति । अथ जप इति कः शब्दार्थः ? 'जप व्यक्तायां वाचि' इति । जप्यते इति जपः । यद्येवम्, अयमपि जपः 'अग्निर्मूर्धा दिवः' इति । अयमपि जप्यते । सत्यम् अयमपि जपः । स्तुतिरपि तु इष्यते । अयं तु जप एव केवलः । इतरैः स्तुत्यादिभिः समुच्चार्यमाणे एतस्मिन्, जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्चेति केवला जपाः प्रतीयन्ते । यथा 'ब्राह्मणाः परिव्राजका ब्रह्मचारिणश्च निर्गच्छन्ति' इत्युक्ते केवलब्राह्मणा ब्राह्मणशब्देनोच्यन्ते, तद्वत् । ननु 'इदं विष्णुर्वि चक्रमे' इति स्तुतिरियम् । न खलु । नास्त्यत्र स्तुतिशब्दः । नापि किञ्चित् स्तोतव्यमस्ति । ननु विष्णुः ? न च विष्णुना स्तुतेन कश्चिदर्थोऽस्ति । न स्तुत्यो विष्णुः क्व चिदङ्गीक्रियते । नापि स्तुतिः कर्तव्या चोदिता । वचनमात्रं तु चोदितम्, वैष्णवीमनूच्येति । तत् कर्तव्यम् । वचनं जपनमिति समानार्थः, यस्मात् 'जप व्यक्तायां वाचि' इति स्मर्यते । तेन यत्र वचनमात्रं मन्त्रस्य क्रियते न स्तूयते नाशास्यते, स जपः । अथ जपस्य अभिधानार्थस्य च को विशेषः ? जपे वचनमात्रं मन्त्रस्य क्रियते, न स्तूयते । अभिधानेन तु परः सताऽसता वा गुणेन आदिश्यते 'एषोऽसि त्वेषोऽसि' इति । तेषां तत्रतत्रैकार्थत्वात् विकल्पे प्राप्ते, उच्यते । समुच्चयः । कुतः ? आशीःपृथक्त्वात्, जपपृथक्त्वात्, स्तुतिपृथक्त्वात्, अभिधानपृथक्त्वाच्च । नहि इदं विष्णुरिति योऽर्थोऽभिधीयते, स एव पावका नः सरस्वतीत्यनेन । एवं सर्वत्र । तस्मात् नानाऽर्था एते । अतस्तेषां समुच्चयः स्यात् ।

**टुप्**— 'वैष्णवीमनूच्य वाग् यन्तव्या' एवमादीनि उदाहरणानि । एतेषां मन्त्राणां विकल्पः समुच्चयो वा इति चिन्त्यते । (तत्र) पूर्वेण न्यायेन विकल्पे प्राप्ते उच्यते, समुच्चयः इति । कुतः ? अन्यकार्यत्वात् । ( तथाहि, ) वैष्णव्यामृचि ( इदं विष्णुर्वि चक्रमे इत्यस्याम् ) ये वर्णाः, तेषामुच्चारणम् ( अदृष्टार्थम् ) कर्तव्यम् । इदं हि जपशब्देन उच्यते । यः पुनस्तत्र पदैः उच्चार्यमाणैः स्वाभाविकः अर्थप्रत्ययः, सः अचोदितत्वात् अविवक्षित एव । अथवा अयमर्थप्रत्ययः संयुक्तत्वात् वर्णोच्चारणस्यैव अङ्गम् । ( कः पुनर्जपादीनां विशेषः ? तत्र जपः उच्चारणमात्रम् । स्तुतिमाह— ) यत्र पुनः 'आज्यैः स्तुवते' इति चोदना ( तत्र स्तुतिः ) । तत्र कानि चित् पदानि गुणं प्रत्याययन्ति, कानि चित् गुणिनम् । तत्र गुणगुण्युच्चारणेन स्तुतिर्भवति । ( अभिधानस्य स्तुतितो विशेषं दर्शयति–) स्तुतिचोदनासु स्तुतिमात्रस्य ( गुणाभिधानात्मकस्य ) चोदितत्वात् विपरिवृत्त्या न गुण्यर्थव्याप्तिः विवक्ष्यते । करणेषु ( अभिधानेषु तु ) विपरिवृत्त्या स्तुतिः गुणिनं व्यापयति । ( आशीःस्वरूपमाह— ) गुणी व्याप्तो यत्र प्रार्थ्यते, ते मन्त्रा आशिषः उच्यन्ते ।

**समुच्चयं च दर्शयति । २ ॥**

**भाष्यम्**— समुच्चयं दर्शयति शास्त्रानुवचनयोः, 'त्रिः प्रथमामन्वाह' इति 'त्रिरुत्तमामन्वाह' इति । समुच्चये च सति प्रथमा चोत्तमा च विद्यते, न विकल्पे । तस्मादपि समुच्चयः । याजमानेष्विति प्रायिको निर्देशः । एकस्मिंश्च मन्त्रे त्रितयमपि संभवति, स्तुतिरभिधानं जपश्च । यथा 'इदं विष्णुर्वि चक्रमे' इति, यदि विष्णुर्बोध्यते ततः स्तुतिः, अथान्यस्मै वृत्तान्तः आख्यायते ततोऽभिधानम् । अथ आत्मनाऽवधार्यते, ततो जपः ।

**शा**—यत्र सन्तमपि अर्थप्रत्ययम् अविवक्षित्वा उच्चारणमात्रमदृष्टाय क्रियते स जपः । गुणसंकीर्तनं स्तुतिः । आशासनम् अभीष्टप्रार्थनम् आशीः । गुणविशिष्टगुणिकीर्तनमदृष्टार्थमभिधानम् ।

**सोम**—सूत्रार्थस्तु– याजमानेषु मन्त्रेषु अकर्मसंयुक्ताः कर्मणि करणत्वेन संयोगरहिता ये जपाः ये च आशीरादयः, तेषु समुच्चयः स्यात्, आशीरादिसाध्यादृष्टपृथक्त्वात् इति ।

**वि**— 'सारस्वतीमनूच्येति विकल्पोऽथ समुच्चयः।, जपैक्यादादिमो, ऽन्त्यः स्यात् प्रकारस्य विभेदतः ॥'

**भाट्ट**— सन्ति जपसंज्ञकाः के चिन्मन्त्राः 'वैष्णवीमृचं जपति' इत्येवं जपतिचोदनया विनियुक्ताः । तत्र

जपत्वं नाम जपतिचोदनाचोदितत्वम्, न तु उपांशुप्रयोज्यत्वं जपत्वम्, तथात्वे उपांशुयाजाङ्गभूतयाज्यायामपि जपत्वापत्तौ चातुःस्वर्यापत्तेः। नापि अर्थाविवक्षया अदृष्टार्थोच्चारणकत्वं तत्, मन्त्रजन्यार्थप्रकाशनस्यैव दृष्टाभावे अदृष्टार्थत्वकल्पनोपपत्तौ अर्थाविवक्षायां प्रमाणाभावात्। अत एव 'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।' ( पा० शिक्षा ५२ ) इति स्वरयुक्ते जपादौ अर्थप्रकाशनं दर्शयति। अत एव जपतिचोदनाचोदितेष्वपि न सर्वत्रादृष्टार्थत्वं करणमन्त्रत्वादेरपि संभवात्। स्तुतिस्तु गुणतात्पर्यकमभिधानम् अदृष्टार्थकमित्युक्तमेव स्तोत्रशस्त्राधिकरणे। फलाशासनमाशीः। तेषामपि श्रद्धाजननादिद्वारा कर्मण्युपयोगः। गुणविशिष्टगुणिप्रकाशनमभिधानम्। एतेषां च क्वचित् साङ्कर्येऽपि न दोषः, तत्तदुपाधेः असाङ्कर्यात्। तत्र ये तावदनुष्ठेयार्थप्रकाशकाः जपादयः तेषां करणमन्त्रत्वादेव विकल्पः, ये तु अननुष्ठेयसमवेतप्रकाशनार्थाः, तेषां प्रकाश्यैकत्वेऽपि श्रद्धाजननादिद्वारा कर्मण्युपयोगात् अधिकतरश्रद्धाजननार्थं समुच्चयः एव। ये तु अदृष्टार्थासमवेतप्रकाशनार्थाः, तेषां प्रयाजादिवदेव समुच्चयः। न च एकजपादिसमाख्यायोगात् एककार्यत्वावगतेः विकल्पाशङ्का, दृष्टार्थजपादौ कार्यभेदस्य आवश्यकत्वेन सकलजपसाधारणैककार्यकल्पनाऽनुपपत्तेः।

मण्डन— 'समुच्चयो जपादीनाम्।'

शंकर— 'जपाशीरादिषु च सः।' सः समुच्चयः।

* जपादिमन्त्रेषु मन्त्रसमाम्नायसिद्धस्वरनियमः। भाषास्वराधिकरणे द्रष्टव्यम्। भा. १२।३।८।२०–२२.

* जपाश्चाकर्मसंयुक्ताः। यत्तु द्वादशे जपादीनामदृष्टार्थत्वमुक्तम्, तत् मन्त्रसाध्यार्थाभिधानस्य अदृष्टार्थत्वाभिप्रायेण। अस्तु वा जपादीनां कर्मासमवेतार्थाभिधायिनामुच्चारणमात्रार्थत्वम्, नैतावता कर्मसमवेतार्थाभिधायिनामपि करणमन्त्रादीनां दृष्टविधया उपयोगसंभवे अदृष्टार्थोच्चारणार्थत्वकल्पना युक्ता। कौ. १।२।४।४२ पृ. ७१.

卐 **जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात्। १२।४।१।१॥**

जपाः 'वैष्णवीमनूच्य वाग् यन्तव्या' इत्याद्युक्तत्वात् 'इदं विष्णुर्वि चक्रमे' इत्यादयो जपमन्त्राः, 'अग्निर्मूर्धा दिवः' इत्यादयः स्तुतिमन्त्राः, 'आयुर्दा अग्नेऽस्यायुर्मे देहि' इत्यादयः आशीर्मन्त्राः, 'एषोऽसि त्वेषोऽसि' इत्यादयः अभिधानमन्त्राः। अकर्मसंयुक्ताः ये कर्मसंयुक्ता न भवन्ति, तादृशाः जपमन्त्राः स्तुत्याशीरभिधानार्थाश्च मन्त्राः, तेषां याजमानेषु कर्मसु समुच्चयः स्यात् पृथगर्थत्वात्। आशीःपृथक्त्वात् आशिषां पृथक्त्वात्, एवं स्तुतीनां पृथक्त्वात्, अभिधानानां च पृथक्त्वात्। इति सिद्धान्तः।

**समुच्चयं च दर्शयति। १२॥**

शस्त्रानुवचनयोः 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति मन्त्राणां समुच्चयं दर्शयति। पूर्वसूत्रे याजमानेषु इत्युक्तं तत् प्रायिकम्। के.

* 'जमदग्निं' इत्युपक्रम्य 'स एतं पञ्चमवदानमपश्यत्, तन्निरवपत्' इत्युक्तम्। तस्मात् जमदग्नीनां पञ्चावत्तम्। संकर्ष. २।२।६.

* जयाः नाम मन्त्राः 'चित्तं च चित्तिश्च आकूतं चाकूतिश्च' इत्यादयः। संकर्ष. २।४।२१. * जयाः नाम होमाः। 'यदजयन् तज्जयानां जयत्वम्' इत्युक्तेः 'चित्तं च स्वाहा' इत्यादिमन्त्रकरणकहोमाः जयाः। सोम. ३।४।१३. * जयाधिकरणम्। जयादिन्यायः द्रष्टव्यः। भा. ३।४।९।२५–२७. * जयाभ्यातानाधिकरणम् जयादिन्यायः। के.

* जयाभ्यातानराष्ट्रभृद्धोमः वैदिकेष्वेव कर्मसु। जयादिन्यायः। भा. ३।४।९।२५–२७. * जयाभ्यातानराष्ट्रभृन्नारिष्ठादिहोमाः दर्विहोमाः। वि. ८।४।४.

卐 **जयादिन्यायः।** जयाभ्यातानाधिकरणम्। जयाभ्यातानराष्ट्रभृद्धोमाः वैदिककर्मणां शेषः॥

**शेषोऽप्रकरणेऽविशेषात् सर्वकर्मणाम्। ३।४।९।२५॥**

**भाष्यम्**— इह कर्मसंयुक्ता होमा जयादय उदा-



हरणम्। 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' 'राष्ट्रभृतो जुहोति' इति 'अभ्यातानान् जुहोति' इति। तत्रैते किं सर्वकर्मणां कृष्यादीनां शेषभूताः, उत वैदिकानामग्निहोत्रादीनामिति। शेषत्वं तु निर्ज्ञातकर्मसंबन्धात् फलाश्रवणाच्च। किं तावत् प्राप्तम्? सर्वकर्मणां शेषाः, विशेषानभिधानादिति।

**वा**— इह वाक्यावधारितकर्मशेषत्वानां तद्विशेषसंबन्धश्चिन्त्यते। पूर्वपक्षवादी तत्र पश्यन्नपि आहवनीयसंयोगं होमानां प्राधान्यात् तद्वशेन आहवनीयप्रवृत्तेः कृषिसेवादीनामपि ऋद्धिसाधनकर्मत्वाविशेषात् शक्यते 'येन कर्मणा ऋद्धिमिच्छेत्' इत्येवमुपलक्षणं कर्तुम् इति मन्यमान आह सर्वकर्मणां शेषो जयादिरिति। तेन सेवादिनाऽपि ऋद्धिमिच्छन् आहवनीये जयादीन् जुहुयात्। न चाहवनीयस्य एते न प्रयोजकाः, होममात्रोद्देशेन आहवनीयविधानात्। तेन अनाहिताग्नेः मा नाम भूवन्, आहिताग्निना तु वर्णानुरूपं लौकिकमपि कर्म अनुतिष्ठता कर्तव्याः। एवं च अनारभ्यवादस्वरसो न भग्नो भविष्यति। न च एवमादयः साक्षात् कर्मसंबन्धिनः प्रकृत्यर्थाः स्यास्यन्ति, कामं वा पुनरुक्तभयात् विकृतिं वर्जयेयुः, कृष्यादिषु तु न का चित् पुनरुक्तताशङ्का इत्यवर्जनमेव युक्तम्।

**होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात्। २६॥**

**भाष्यम्**— न चैतदस्ति सर्वकर्मणां कर्षणादीनामपि अङ्गभूता इति। होमा एते, अतो व्यवतिष्ठेरन्। आहवनीयसंयोगो भवति होमेषु 'यदाहवनीये जुहोति, तेन सोऽस्याभीष्टः प्रीतो भवति' इति। तेन यस्याहवनीयः तस्यैते अङ्गम्। न च कृष्यादीनि आहवनीये वर्तन्ते। न चैषां गार्हपत्योऽस्ति, यतः प्रणीते आहवनीयः स्यात्। तस्मात् न कर्षणादीनां जयादयः।

**वा**— व्यवतिष्ठेरन् एते होमा वैदिकेष्वेव, न सर्वत्र भवेयुः। कुतः? '**समानदेशता नित्यमिष्यतेऽङ्गप्रधानयोः। न च कृष्यादिभिः साकमेषां स्यात् तुल्यदेशता॥**' कर्षणं हि भूमौ क्रियते, राजकुले च सेवा। जयादयश्च होमत्वात् अविहिताधिकरणान्तराः एकान्तेन आहवनीये कर्तव्याः। तत्र विना वचनेन अङ्गप्रधानवैदेश्यम् आपद्यमानं वैगुण्यं जनयेत्। अस्ति चैषामन्यो विषयः, यत्र अविगुणा भवन्ति। तस्मिंश्च सति नार्थापत्त्या वैदेश्यम् अभ्यनुज्ञास्यते। न च शास्त्रेण अनभ्यनुज्ञातं कृतं फलं ददाति। अतः सगुणसंपादनायैव अनाहिताग्नीनामविदुषाम् अमनुष्याणां च एते न भवन्ति। तथा कर्मान्तराणामपि। ननु क्षेत्रमेव आहवनीयं नीत्वा होष्यते। न, तथापि विलेखनहोमयोः देशभेदापरिहारात्। सामीप्यमात्रं हि तत्रानुगृह्येत, न तु समानदेशत्वम्। नहि एकैकस्मिन् विदारणे आहवनीयं निक्षिप्य होतुं शक्यते। न च तावताऽपि समानदेशत्वं भवति। होमास्तु इति च ( सूत्रे ) हेतुव्यपदेशः। यतोऽमी होमाः, तस्मात् व्यवतिष्ठेरन्।

**शेषश्च समाख्यानात्। २७॥**

**भाष्यम्**— इतश्च पश्यामो वैदिकानां शेषभूता इति। कुतः? समाख्यानात्। आध्वर्यवमिति हि समाख्याते वेदे जयादयः समाम्नाताः सन्तः अध्वर्युणा करिष्यन्ते। कर्षणादिषु अध्वर्योरभावात् अनध्वर्युणाऽपि क्रियमाणाः समाख्यां बाधेरन्। तस्मात् वैदिकानां शेषभूता इति।

**वा**— इतश्च वैदिकानामेव जयादिः शेषः। यतः समाख्याऽनुग्रहो भवति। दर्शपूर्णमासादिषु अध्वर्युर्विद्यते। तदङ्गभूताः सन्तः एते तत्कर्तृकतां प्रतिपद्यन्ते। कृष्यादीनां तु ऋत्विगभावात् भेदेन च जयादीनां वरणादीनामनाम्नानात् अपूर्वत्वात् चोदकेन प्राप्तिर्नास्ति। यदि च तदर्थमेव अध्वर्युर्व्रियते, ततः कर्तृभेदोऽपि आपद्यते। नहि कृषिमध्वर्युः करोति। तेन समाख्यानात् यो वाक्यशेषः, अध्वर्युणा कर्तव्यम् अध्वर्युर्वा यः कर्तृत्वेन शेषभूतः, स एवमनुगृहीतो भवति इति व्यवस्थासिद्धिः।

**शा**— क्रत्वर्थपुरुषार्थविचारप्रसङ्गात् पूर्वाधिकरणे अनारभ्यवादः प्रस्तुतः। तत्प्रस्तावादेव अनारभ्याम्नातानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते। '**तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते। तस्मात् कृष्यादिनाऽपीर्त्सेत् तत्राग्नौ जुहुयाज्जयान्॥ तस्मात् तत्राप्यवैगुण्यात् सर्वार्थाः स्युर्जयादयः।, नैवं प्रधानवैदेश्याद् वैगुण्यं जायते यतः॥**' १३.

सोम-- 'यदजयन् तज्जयानां जयत्वम्' इत्युक्तः 'चित्तं च' इत्यादिमन्त्रकरणकहोमाः जयाः। **सूत्रार्थस्तु**-यः प्रकरणाधीतो वाक्यात् कर्मशेषः सः अविशेषात् सर्वकर्मणां शेषः इति।

वि-- 'येनेर्त्सेत् कर्मणा तत्र जयहोमेऽखिलार्थता। वैदिकेष्वेव वा, सर्वशेषोऽसंकोचकत्वतः ॥, होम आहवनीये स्यात् कृष्यादिषु न सोऽस्ति हि। तेनानारम्य पाठेऽपि वैदिकेष्वेव ते जयाः ॥' १३.

**भाट्ट**-- अनारभ्यैव अधीतम् 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' इति। कर्मणा ऋद्धिं स्वफलाधिक्यं प्राप्तुमिच्छेदित्यर्थः। अतश्च यथाऽवस्थितफलार्थे विनैव जयादीन् कर्माणि। कर्मभ्यः फलाधिक्येच्छायां तु जयादयः कर्माङ्गम्। तत्र च कर्मत्वस्य क्रतुव्यभिचरितत्वात् न तावत् जुह्वादिवत् तदुपस्थितिः। न च लौकिकस्य कर्मणः कृषिभोजनादेः दृष्टार्थत्वेन अदृष्टार्थजयादिग्राहकत्वायोगः, 'रोहिण्यां कृषिकर्माणि कारयेत्' 'पुरस्तात् कृषिकर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत्' इत्यादिवत् अस्यापि निर्विघ्नपरिसमाप्त्यर्थत्वेन फलोपचयार्थत्वेन वा ग्रहणोपपत्तेः। न च तथापि जयादेः आहवनीयसाध्यत्वात् कृष्यादौ तदभावात् अनङ्गत्वम्, जयादेरेव होमत्वेन आहवनीयप्रणयनप्रयोजकत्वोपपत्तेः। न च प्रधानसादेश्यासंभवात् अनङ्गत्वम्, अङ्गगुणविरोधन्यायेन तदसंभवेऽपि अङ्गत्वोपपत्तेः। कृषिदेशे अग्निनयनेन समानदेशसंभवाच्च। वस्तुतस्तु कृष्यादेर्दृष्टार्थतया विधेयत्वाभावेन प्रयोगविध्यभावात् अङ्गप्रधानयोः एकदेशत्वे एव प्रमाणाभावः। अस्तु वा तत्, तथापि तस्य लिङ्गादिरूपप्रमाणत्वाभावेन वाक्यसंकोचकत्वानुपपत्तेः लौकिकवैदिकसाधारणसर्वकर्मार्थत्वमेव जयादीनाम्। इति **प्राप्ते**, अग्निमद्वैदिककर्मांशे तस्य परप्रयुक्ताग्नितप्रणयनोपजीवित्वम्, तदन्यकर्मांशे च तत्प्रयोजकत्वकल्पनम् इति गौरववैरूप्यादिभिया कामश्रुतीनां आहिताग्न्यादिमात्रविषयत्ववत् (६।१।७) जयादिविधिनैव स्वलाघवार्थम् अग्निमत्कर्मार्थतयैव जयादिविधानात् नेतरकर्मार्थत्वम्। १३.

**मण्डन**-- 'जयादयो वैदिकहोमशेषाः।'

**शंकर**-- 'जयाश्चेतावत् कर्माङ्गम्।' १५.

* **जयादिन्यायेनैव** लौकिके फलकल्पना वैदिके न इत्येवम्, विहितेऽपि अग्निरहिते तत्प्रणयनादिप्रयोजकत्वम् इतरत्र न, इत्येवं च वैरूप्यापत्तेः विधिलाघवानुरोधेनैव स्वसंकोचं कामश्रुतिवदेव अनुमन्यते, अतश्च अग्निमत्कर्मसंबन्धश्रवणमेव उद्देश्यम्। तदपि च न शेषितया, अपितु निमित्ततयैव। **भाट्ट**. ३।४।१४.

* **जयमन्त्रेषु** चित्तादिशब्दानां चतुर्थ्यन्तपाठो न कर्तव्यः, किन्तु यथासमाम्नानमेव प्रयोगः। **संकर्ष**. २।४।२१. * **जयहोमाः** 'चित्तं च स्वाहा' इत्यादयः। राष्ट्रभृत्-होमाः 'ऋताषाट्' इत्यादयः। अभ्यातानहोमाः 'अग्निर्भूतानाम्' इत्यादयः। ते च न कृष्यादिषु लौकिककर्मसु, किन्तु वैदिकेष्वेव कर्तव्याः। **वि**. ३।४।१३. * **जयहोममन्त्राणां** प्रथमान्तचतुर्थ्यन्तपाठयोः समुच्चयः इति चेन्न, किन्तु विकल्प एव। **संकर्ष**. २।४।२२.

* **जरणम्**-- (सम्यग्जरणम्) गात्रप्रीणन-इन्द्रियगणवितृषीकरण-प्राणाख्यससर्पुपस्थान-नाभ्यधस्तादगमन-रूपानेकार्थहेतुः। **मु. पृ**. ११३८. * जरणं भक्षव्यापारविशेषः। तत्र सोमे 'हिन्व मे गात्रा' इत्यादिर्मन्त्रः। जरणार्थं च सम्यगुपवेशनादिकं कर्तव्यम्। जरणान्तं च भक्षणम्। **वि**. ३।२।९. * **जरणस्यापि** 'भुक्त्वा वै सुखमास्थाय तदन्नं परिणामयेत्' इति सुखासनादिप्रयत्नसाध्यत्वम्। **कु**. ३।२।९।२३। 'भुक्त्वा राजवदासीत यावदन्नमदात्ययः। ततः पदशतं गच्छेद् वामे कुक्षौ शयीत च ॥' इति च वैद्यके। **के**.

* **जराऽऽदिशब्दानां** यदागमपरिभाषया लक्षणाग्रहणात् प्राक् जराशब्दत्वाद्यवच्छिन्नोपस्थापकत्वेन निरुक्तविशिष्टरूपोपादानत्वस्य (साक्षादानुपूर्व्यवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वरूपविशिष्टरूपोपादानत्वस्य) सुवचत्वात्। **भूति**. पृ. ६७.

* **जर्तिलाः** आरण्यास्तिलाः। 'अनाहुतिर्वै जर्तिला गवीधुकाश्च'। **वि**. १०।८।४. * जर्तिलाः कृष्णतिलाः (कारळे इति भाषा), गवेधुकाः तृणतण्डुलाः, इति भट्टभास्करः। जर्तिलाः अरण्यतिलाः, गवेधुकाः वन-



गोधूमाः इति केचित्। **सोम**. १०।८।४. * **जर्तिलगवीधुकाधिकरणम्**। जर्तिलयवागून्यायः द्रष्टव्यः। **के**.

* 'जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान्। अथो खल्वाहुः अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च, पयसाऽग्निहोत्रं जुहुयात्' इति विधेः, 'अनाहुतिः' इति च निन्दया निषेधानुमानात्, विधिनिषेधौ। इति **प्राप्ते**, **सिद्धान्तः**। 'न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च' इति। 'शिष्ट्वा तु प्रतिषेधः स्यात्' इति पूर्वाधिकरणसूत्रानुषङ्गेण योज्यम्। न चेदन्यं विधिं प्रकल्पयेत्, यदि अत्र प्रत्यक्षो विधिः संनिहितो न स्यात् ततः षोडशिग्रहणवाक्यवत् एकेन शिष्ट्वा परेण प्रतिषेधः स्यात्। इह तु 'पयसाऽग्निहोत्रं जुहुयात्' इति विध्यन्तरस्य प्रक्लृप्तत्वात् तच्छेषभूतोऽयमर्थवादः स्यात्। अन्यथा निषेधैकवाक्यत्वं विना निन्दात्वानवधारणेन अनाहुतित्वकीर्तनस्य निषेधकल्पकत्वासंभवात् आनर्थक्यापत्तेः। कथञ्चित् कल्पितस्यापि वा निषेधस्य षोडशिग्रहणनिषेधवत् विकल्पार्थत्वात् तस्य चात्र पयःप्रभृतिद्रव्यान्तरविधानादेव सिद्धेः आनर्थक्यापरिहारात्। यवागूस्तुतिनिन्दयोः कथं पयःस्तुत्यर्थत्वम् इत्याशङ्क्य परसामर्थ्याच्च इत्युक्तम्। ग्राम्यारण्यपशुहिंसानापादकत्वेन प्रशस्तानामपि जर्तिलगवीधुकानां पयःप्रयोगापेक्षया दुष्टत्वात् पयः प्रशस्ततरम् इति परेण पयोविधिना अन्वये सामर्थ्यात् इत्यर्थः। एवं च एकवाक्यत्वे संभवति अनेकादृष्टानुबन्धिवाक्यभेदापादकविधित्वाङ्गीकरणायोगात् जुहुयात् इति लिङोऽपि स्तुत्यर्थत्वसिद्धिः। **मु. पृ**. ६१-६२. * **जर्तिलयवाग्वादि**-निषेधस्य पयोहोमविध्यर्थवादत्वम्। **भा**. १०।८।४।७.

## जर्तिलयवागून्यायः। अग्निहोत्रे जर्तिलयवाग्वादिनिषेधः पयोहोमविध्यर्थवादः ॥

**न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च। १०।८।४।७ ॥**

**भाष्यम्**--इदं समाम्नायते अग्निहोत्रे 'जर्तिलयवाग्वा वा जुहुयात्, गवीधुकयवाग्वा वा जुहुयात्, न ग्राम्यान् पशून् हिनस्ति नारण्यान्। अथो खल्वाहुः, अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च, पयसाऽग्निहोत्रं जुहुयात्' इति। अत्र संदेहः किं 'जर्तिलयवाग्वा गवीधुकयवाग्वा वा जुहोति' इति विधिः, 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च' इति प्रतिषेधः, अथवा उभावेतौ अर्थवादार्थौ, 'पयसाऽग्निहोत्रं जुहोति' इति विधिः इति। **किं प्राप्तम्**? 'जर्तिलयवाग्वा' इति विधिः, विधिशब्दस्य प्रत्यक्षत्वात्। 'अनाहुतिः' इत्यपि प्रत्यक्षः प्रतिषेधः। 'पयसाऽग्निहोत्रं जुहोति' इत्यपरो विधिः प्रत्यक्षत्वादेव। एवं सति विकल्पः। जर्तिलयवाग्वा गवीधुकयवाग्वा वा होतव्यम्, न वा ताभ्याम्, पयसा होतव्यम् इति। न चात्र पर्युदासोऽवकल्पते। नहि नञ्शब्दस्य जर्तिलयवाग्वा गवीधुकयवाग्वा वा सामर्थ्यमस्ति। आहुतिशब्देन सह समस्तत्वात्। कल्प्यमाने वा सामर्थ्ये संबन्ध एव न स्यात् अजर्तिलयवाग्वा जर्तिलयवाग्वा जुहोति इति। अनर्थकश्च पर्युदासे विधिर्भवेत्। कृत्स्नस्य पर्युदस्तत्वात्। क्षीरविधाने च पर्युदासानर्थक्यम्। जर्तिलगवीधुकानामप्राप्तत्वात्। तस्मात् विकल्प इति। **एवं प्राप्ते**, **ब्रूमः**। भवेदयं प्रतिषेधेन विकल्पः, न चेदन्यं विधिं प्रकल्पयेत्। पयसाऽग्निहोत्रं जुहोति इत्यस्य विधेः प्रक्लृप्तौ जर्तिलगवीधुकहोमवचनम् अनाहुतिवचनमपि अर्थवादार्थे स्यात्। आनर्थक्यात्। अनर्थको हि भवति तदा प्रतिषेधः। यदा हि पयसा जुहोति, अर्थादेव तदा अनाहुतिर्जर्तिला गवीधुकाश्च भवन्ति। अथ कथमसौ अनाहुतिः, या यज्ञे हूयते। परसामर्थ्याच्च परेण च पयसा अग्निहोत्रं जुहोति इत्यनेन विधिना सामर्थ्यं जर्तिलगवीधुकविधेः प्रतिषेधस्य च भवति। तस्मात् सर्वमिदमेकं वाक्यम्। कथम्? जर्तिलयवाग्वा जुहुयात् गवीधुकयवाग्वा वा इति साक्षात् निन्दावचनेन एतत् संबध्यते अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति। सा च निन्दा पयोविधिप्रशंसार्था। कथम्? जर्तिलगवीधुकाहुतिर्गुणवती, न तत्र ग्राम्याः पशवो हिंस्यन्ते नारण्याः। एवमपि गुणवती पयोहोमं प्रति अनाहुतिरेव। एवं पयोहोमो गुणवत्तरः इति। जर्तिलयवाग्वा जुहुयात् इति न कर्तव्यार्थे कीर्त्यते। किं तर्हि? प्रतिषेद्धुम्। कर्तव्योपदेशे हि कल्पनीयं किञ्चित्। प्रतिषेधसंबन्धे प्रत्यक्षनिन्दया इतरस्तुतिः। आनन्तर्यानु-

ग्रहश्च । यथा 'विषं भक्षयितव्यं न कदाचित्' इति विषभक्षणस्य कर्तव्यता प्रतिषेधसंबन्धार्थं कीर्त्यते, नानुष्ठानाय । एवमिहापि द्रष्टव्यमिति ।

**टुप्**— [ अत्र असदीयलिखितायाः, आनन्दाश्रमीयायाः मुद्रितायाः, लिखिततन्त्ररत्नानुसारिण्याश्च टुप्टीकायाः, पाठा भिन्ना भवन्ति अंशतः । तत्रादौ तन्त्ररत्नानुसारेण रत्नपूरणेन पाठो निवेश्यते ] ( पूर्वपक्षमाह– ) चतुर्थेऽपि [ अधिकरणे तृतीये इव ] नास्ति पर्युदासः । ( तत्र तावत् ) अजर्तिलयवाग्वा जुहुयात् इति संबन्धेन पर्युदासाभावः । यदि होमे ( पयोविधेरयं शेषः ) ततो जर्तिलविधानम् अनर्थकम् ( स्यात् ) । अथ एवमुच्येत अनाहुतिः कर्तव्येति, तथा ( सति ) होमस्यैव अभावात् सर्वमेव ( जर्तिलविधानं पयोविधानं च ) न घटते । तस्मात् 'जर्तिलयवाग्वा जुहुयात्' इति ( विधिना ) विहिता यवागूः अनेन प्रतिषिध्यते, निषिध्य ( च ) पयो विधीयते । तस्मात् ( जर्तिलयवाग्वा पयसा वा इति ) विकल्पः । [ इति पूर्वः पक्षः । अथ यथालिखितं यथामुद्रितं च टुप्टीका निवेश्यते ] चतुर्थेऽपि नास्ति पर्युदासः । अजर्तिलयवाग्वा जुहुयात् इति संबन्धेन पर्युदासाभावः । यदि होमे ( यदि पयोविधेः होमे–इति मुद्रिते ) पयश्च जर्तिलयवागूश्च प्राप्नुयात् ( तथा सति–इति मुद्रिते अधिकम् ) पर्युदासः स्यात् । न चैतयोः प्राप्तिः, पयसस्तु केवलस्य । अथ एवमुच्येत ( अजर्तिलयवाग्वा जुहुयादिति, ततो जर्तिलविधानमनर्थकम्–इत्यधिकं लिखिते ) । अथ एवमुच्येत अनाहुतिः कर्तव्येति [ इत्यादिः अवशिष्टः पूर्वपक्षः समानः त्रितयेऽपि । अथ सिद्धान्तग्रन्थः प्रायो भेदाभावात् रत्नपूरणेन एकधैव निवेश्यते ]

उच्यते । अर्थवादोऽयम् ( पयोहोमस्तुतये । कथमित्याह– ) 'अनाहुतिर्वै जर्तिलाश्च' इति अनाहुतिवचनेन प्रतिषिद्धस्य विकल्पमिच्छसि ( त्वं पूर्ववादी ) स च 'पयसा जुहुयात्' इत्यनेनैव लभ्यते विकल्पो विनाऽपि प्रतिषेधवचनेन । तस्मात् प्रतिषेधो न घटते । सर्वस्तु अयम् 'पयसा जुहुयात्' इत्यस्य (विधीयमानस्य) वाक्यशेषत्वेन ( एव ) घटते । यथा 'देवदत्तः शोभनो विद्वान्' इति । 'एवंगुणविशिष्टोऽपि यज्ञदत्तमपेक्ष्य अविद्वान् अशोभनश्च' इति । तत्र ये देवदत्तस्य निन्दास्तुती, न ते देवदत्तार्थे ( देवदत्तं विधातुं निषेद्धुं वा उच्चार्येते ) किं तर्हि यज्ञदत्तार्थे । एवमत्रापि निन्दास्तुती पयोविधानार्थे ।

**सोम**— जर्तिलाः कृष्णतिलाः ( कारळे ) गवेधुकाः तृणतण्डुलाः इति **भट्टभास्करः** । जर्तिलाः आरण्यतिलाः, गवेधुका वनगोधूमाः इति केचित् ( वनगोधूमा नाम वेणुयवाः स्युः । अन्येषां वनगोधूमानामनुपलब्धत्वात् । परन्तु वेणुयवानामाग्रयणं पृथक् विहितम् । के. ) ।

**सूत्रार्थस्तु**— यदि अन्यत् न विधीयेत, तदानीमेव शिष्ट्वा श्रूयमाणो नञ् प्रतिषेधार्थः स्यात् अन्यविधौ तु अर्थवादः तद्विधिनैव जर्तिलादिविकल्पस्य सिद्धत्वात् विकल्पार्थे प्रतिषेधानर्थक्यात् परद्रव्यान्तरविधानासमर्थत्वात् स्तुत्या एकार्थत्वादिति ।

**वि**— 'जर्तिलोक्तौ चतुर्था किं विकल्पोऽथ पयःस्तुतिः ।, विकल्पः पूर्ववत्, मैवं वाक्यैक्यात् पयसा सह ॥' तस्मादर्थवादः । विकल्पे पक्षद्वयम् । होमाभावस्तृतीयः पक्षः । पयोविधिश्चतुर्थः ।

**भाट्ट**— अग्निहोत्रे 'जर्तिल॰' ( भाष्यवत् ) इति श्रुतम् । तत्र जर्तिलगवीधुकयोः प्रथमवाक्येन विहितयोः अनाहुतिः इत्यनेन प्रतिषेधः, उत सर्वोऽयं पयोहोमविधेरर्थवादः इति चिन्तायाम्, आख्यातभेदश्रवणेन भिन्नवाक्यत्वस्यैव प्रतीतेः स्तुतिलक्षणया एकवाक्यत्वकल्पने प्रमाणाभावात्, प्रथमवाक्यद्वये च स्पष्टविधिश्रवणेन जर्तिलगवीधुकयवाग्वोः विधेयत्वावश्यकत्वात्, अनाहुतिः इत्यनेन च निन्दोन्नीततन्निषेधकल्पनात् तयोर्विहितप्रतिषिद्धत्वात् विकल्पः । अन्त्यस्तु पयस एव विधिः । इति प्राप्ते, यद्यपि आद्यो जर्तिलगवीधुकयोः विधिः स्यात्, तथापि अनाहुतिः इति निन्दया न स्वतन्त्रनिषेधोन्नयनम् । तत्फलस्य विकल्पस्य व्रीहियवन्यायेन पयोविधिबलेनैव सिद्धत्वात् । अत एव अनाहुतिः इति निन्दा नहिनिन्दान्यायेन पयोविधिस्तुत्यर्थैव । वस्तुतस्तु जर्तिलगवीधुकविधिरपि पशुनिन्दाद्वारेण पयःप्रशंसार्थ एव । न तु तद्विध्यर्थः । पश्वपेक्षया प्रशस्तयोरपि



अनयोः पयोऽपेक्षया निन्द्यत्वमेव, अतः पय एव प्रशस्ततरम् इति स्तुतिः । श्रूयमाणोऽपि च विधिः वाशब्देन विधिशक्तिप्रतिबन्धात् न विधायकः । नहि अयं वाशब्दो विकल्पविधायकः, तस्य न्यायादेव सिद्धेः । अपितु 'विषमपि वा भक्षयेत् न तु परान्नं भुञ्जीथाः' इतिवत् अन्यविधानतात्पर्यक एव । अतः सर्वोऽयं स्तुतिलक्षणया पयोविध्येकवाक्यतापन्नः स्तुत्यर्थः । एवं च एकवाक्यताऽपि लभ्यते ।

**मण्डन**— 'स्तुतिर्जर्तिलवाक्यं तु ।' ५.

**शंकर**— 'जर्तिलादेर्विधिर्न च ।' ५.

* **जर्तिलयवागून्यायेन** एकवाक्यतालाभार्थं पूर्वस्य विधेः अर्थवादत्वं प्रकल्प्य ... । **भाट्ट.** १०।५।११, * जर्तिलयवागून्यायेन पदैकवाक्यतालाभार्थं तच्छेषत्वस्यैव कल्पनात् । ११।५।२१, * जर्तिलयवागून्यायेन सर्वमिदमेकवाक्यम् इति तावदविवादम् । अतः चतुरहे ( पुरस्तात् पौर्णमास्यै दीक्षेरन्) इत्येव विधिः । ६।५।१०. * यूपैकादशिन्याम् 'यत्पक्षसंमितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात्... वेदिसंमितां मिनोति' इत्यत्र स्तुतिपूर्वकस्तद्विधिरपि न विधानार्थः, अपितु **जर्तिलयवागून्यायेन** यश्चैकादशिनीवृत्तियूपैक्यविधिस्तुत्यर्थः, एकवाक्यतालाभात् । **कस्तूरि.** २।४।२।२६. * **जर्तिलवाक्यादौ** विधिप्रत्ययस्य अविधायकत्वम् । **संकर्ष.** ४।३।५.

**जलानयनन्यायः** । यथा जलमानीयतामित्युक्ते अचोदितमपि पात्रानयनं जलानयनेऽन्तर्भवतीति, तथा प्रकृतेऽपि । **साहस्री.** १७०.

**जलालोकपवनन्यायः** । जागरे गजादिमत्सु देशेषु रथाद्युपलम्भस्य च स्वप्नार्थानां जागरितार्थानां च जलालोकपवनन्यायेन मूर्तत्वेऽपि मिथःप्रतिघातकत्वाभावकल्पनयोपपत्तेः ( जलालोकपवनानां परस्परप्रतिघातकत्वं यथा नास्ति ) । **परिमल.** ३।२।१।५–६ ब्रसू.

**जलाशयतरङ्गचन्द्रन्यायेन** एक एव शुद्धः आत्मा जीवरूपेण बहुधा दृश्यते । **सनत्सुजातीय. नीलकण्ठः.** १।२०.

* **जलोदरम्** । स हि वरुणगृहीत इत्युच्यते जलोदरेण यो गृहीतः यस्योदरं जलवृद्ध्या श्वयति । जलोदरमित्येव लोके तत् प्रसिद्धम् । न च तस्य अश्वप्रतिग्रहो लौकिकः निदानमिति प्रतिज्ञायते, न चानेन विधीयते । तस्मात् न अश्वप्रतिग्रहात् जलोदरोपपातः । **भा.** ३।४।१०।२९, * **जलोदराख्यो** दोषः जलवृद्ध्या उदरवृद्धिलक्षणः । **सु. पृ.** १४९३. * **जलोदररोगः** पूर्वजन्मनि अश्वदातुः प्रायश्चित्ताकरणे अस्मिन् जन्मनि भवति ( आर्थिकमिदम् ) । **वि.** ३।४।१४, * **जलोदररोगप्रदा** वरुणदेवता । ३।४।१५.

**जलौष्ण्यन्यायः** । यथा 'शीतस्पर्शवत्य आपः' इति लक्षणतो जले स्वाभाविकं शैत्यं वर्तते, उष्णत्वं तु तेजःसंयोगादिति । एवं चायं न्यायः अन्यासाधारणधर्मस्य अन्यत्रारोपविवक्षायां प्रवर्तते इति भावः । **साहस्री.** २७१.

**जलकतकरेणुन्यायः** । अयं बाध्यं प्रबाध्य स्वयमेव बाधकनिवृत्तिविवक्षायां प्रवर्तते । यथा सपङ्कजले प्रक्षिप्ताः कतकस्यौषधिविशेषस्य 'निर्मली' इति भाषायां प्रसिद्धस्य रेणवो रजांसि तस्मात् सपङ्कजलात् पङ्कं विलाप्य स्वयमेव विलीयन्ते, तथा तत्त्वज्ञानं सविलासाज्ञानं निवर्त्य स्वयमेव निवर्तते इति । **साहस्री.** २६०.

**जलचन्द्रन्यायः** । यथा जलपात्रेषु चन्द्रप्रतिबिम्बानि चन्द्राद् दूरस्थानि भिन्नानि च नानाविधानि दृश्यन्ते । वस्तुतस्तु नैवम्, एवंविषयव्यवस्थायामयं प्रवर्तते । तथा च श्रुतिः– 'एक एव तु भूतात्मा भूतेभूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' इति । **साहस्री.** ९२५.

**जलतरङ्गन्यायः** । यथा जलगुणा माधुर्यद्रवशैत्यादयो जलस्योपरि वातवशात् तरङ्गे उत्पन्ने सति जलविवर्तत्वेन जलनिष्ठे तस्मिंस्तरङ्गे प्राप्य तरङ्गोत्पत्त्यनन्तरं तरङ्गविवर्तत्वेन तरङ्गनिष्ठे फेनेऽप्यनुगताः । जलम्, तरङ्गः, फेनः इति भेदव्यवहारे विद्यमानेऽपि जलादीनां माधुर्यद्रवशैत्यव्यतिरेकेण स्वरूपाभावतया तेषां माधुर्यद्रवशैत्यात्मकत्वात् पूर्वपूर्वाधिष्ठानस्यैव उत्तरोत्तरव्यावृत्ताकारेण विवर्तमानत्वात् । उत्तरोत्तरकार्यस्य पूर्वाधिष्ठानानन्यत्वं प्रदर्शितमनेन न्यायेन । उक्तं च– 'माधुर्यद्रव-

शैत्यादिनीरधर्मास्तरङ्गके । अनुगम्याथ तन्निष्ठे फेनेऽप्यनुगता यथा॥ ' इति **वादसुधाकरः** । **साहस्री**. ६३८.

⧗ **जलतरङ्गबुद्बुदन्यायः** । चेतनाचेतनप्रपञ्चस्य जलतरङ्गबुद्बुदन्यायेन तत्रैवोत्पत्तिप्रलययोः श्रवणात् ' एष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ' इति तदन्यत्वात् सर्वस्येति भाव इत्युक्तमिति । **साहस्री**. ७४३.

⧗ **जलताडनन्यायः** । यथा जलस्य ताडनं व्यर्थं तद्वत् अन्यत्रापि । **साहस्री**. २९७.

⧗ **जलतुम्बिकान्यायः** । यथा पङ्कलिप्ता तुम्बिका नदीसमुद्रादौ मज्जन्ती पङ्कक्षये अवकाशे आगत्य तिष्ठति, तथा जीवो देहक्षये लोकादाकाशे गत्वा तिष्ठति । अयमेव तस्य मोक्ष इति दिगम्बरजैना मन्यन्ते । अनेनैव न्यायेन रेफस्योर्ध्वगमनमिति ( सारस्वत– ) वैयाकरणाः । **साहस्री**. ८.

⧗ **जलतैलन्यायः** । जले प्रक्षिप्तस्य तैलस्य यथा जलोपरि गमनं भवति, तथा कर्मबन्धमुक्तस्य जीवस्य लोकाकाशात् उपरि गमनं भवति, स एव मोक्षः जैनमते । **साहस्री**. ८.

⧗ **जलनिमज्जनन्यायः** । व्यवहारे दिव्यविशेषोऽयम् । **संग्रह**. । अत्र **याज्ञवल्क्यः** '**सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम् । नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्** ॥ ' २।१०८ । **मिताक्षरा**– हे वरुण सत्येन माम् अभिरक्ष त्वम् इत्यनेन मन्त्रेण कम् उदकम् अभिशाप्य अभिमन्त्र्य नाभिदघ्नोदकस्थस्य नाभिप्रमाणोदकस्थितस्य पुरुषस्य ऊरू गृहीत्वा शोध्यो जलं प्रविशेत् जले निमज्जेत् । एतच्च वरुणपूजायाम् ( कृतायां ) सत्याम् । ततः किं कर्तव्यम् इत्यत आह– ( याज्ञ० ) '**समकालमिषुं मुक्तमानीयान्यो जवी नरः । गते तस्मिन् निमग्नाङ्गं पश्येच्चेच्छुद्धिमाप्नुयात्** ॥ ' १०९ । **मिता**– ( निमज्जनात् प्राक् ) त्रिषु शरेषु मुक्तेषु एको वेगवान् ( पुरुषः ) मध्यमशरपातस्थानं गत्वा तमादाय तत्रैव तिष्ठति । अन्यस्तु पुरुषो वेगवान् शरमोक्षस्थाने तोरणमूले तिष्ठति । एवं स्थितयोः ( तयोः ) तृतीयस्यां करतालिकायां शोध्यो निमज्जति, तत्समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपातस्थानं गच्छति, ( तत्रत्यः ) शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूलं प्राप्य अन्तर्जलगतं यदि न पश्यति, तदा ( शोध्यः ) शुद्धो भवति इति । **के**.

⧗ **जलबिन्दुनिपातन्यायः** । यथा जलकणिकापातेन घटः क्रमशः पूर्यते, एवं विद्यानां धर्मस्य धनस्य च क्रमशः संचयो भवतीति विषयेऽस्य प्रवृत्तिरिति । उक्तं च– ' जलबिन्दुनिपातेन क्रमशः पूर्यते घटः । स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥ ' इति । **साहस्री**. ६४८.

⧗ **जलमन्थनन्यायः** । यथा जलस्य मन्थनं व्यर्थम्, न नवनीतप्रदम्, तद्वदपि । **साहस्री**. २९८.

⧗ **जलमौक्तिकन्यायः** । अयं देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तमत्वं जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनादिति । म० भा० अनु० १२ अ० श्लो० ९ टीकायामुक्तः इति । **साहस्री**. ७६३. * ( स्वातीजलमेव मौक्तिकं भवति ) स्वाभाविकभेदनिवृत्तिः भ्रमरकीटक–लोहरस–जलमौक्तिकादिनानाविधदृष्टान्तानुसारेण ( इति ) जिज्ञासाऽधिकरणे स्पष्टमुक्तम् । **श्रीकर**. २।१।८ ब्रसू.

⧗ **जलूकान्यायः** । सा हि स्तनलग्नाऽपि क्षीरमगृहीत्वा रक्तमेव गृह्णाति तथा खलः । **संग्रहः**. । अन्योऽपि जलूकान्यायः बृहदारण्यकोपनिषदि उक्तः ' तद्यथा तृणजलायुका ( तृणस्थः कीटकः ) तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरति ( तृणान्तरं गच्छति ), एवमेव अयमात्मा इदं शरीरं निहत्य अन्यमाक्रममाक्रम्य ( वासनया अन्यं देहं गृहीत्वा ) आत्मानमुपसंहरति ' इति । ४।४।३.

* जहदजहल्लक्षणा तृतीया ( लक्षणा ) ' तत्त्वमसि ' इत्यादौ इति वेदान्तिनः । **मणि**. पृ. ७६.

⧗ **जहदजहत्स्वार्थवृत्तिन्यायः** । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः, तत्रायं प्रवर्तते । यथा ' सोऽयं देवदत्तः ' इत्यादौ तत्ताऽशस्येदानीमसंभवात् हानम् इदन्तांऽशस्य संभवादहानमिति भावः । **साहस्री**. ४३७.

* **जहत्स्वार्था** अजहत्स्वार्थया बाध्यते । ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति । इदं प्रकृतिरूप–एकशब्द-



विषयम् । ' प्रोद्गातृणाम् ' इति च प्रकृतिप्रत्ययरूपशब्दभेदविषयम् । बाल. पृ. १४२. * जहत्स्वार्था लक्षणा स्वशक्यार्थाविशेष्यकान्वयप्रयोजिका ' गङ्गायां घोषः ' इत्यादौ । **मणि** पृ. ७६. * जहत्स्वार्था वृत्तिः अर्थवादेषु इति प्राभाकराः । अजहत्स्वार्था इति भाट्टाः । **कु**. १।२।१।१८ पृ. ३०.

⧗ **जहत्स्वार्थवृत्तिन्यायः** । यथा जहति पदानि उपसर्जनीभूतानि स्वार्थं यस्यां सा जहत्स्वार्था । परार्थाभिधानं वृत्तिः । परस्य शब्दस्य योऽर्थः तस्याभिधानं शब्दान्तरेण यत्र सा वृत्तिरित्यर्थः । एवं हि दृश्यते लोके पुरुषोऽयं परकर्मणि प्रवर्तमानः स्वं कर्म जहाति तद्यथा, तक्षा राजकर्मणि प्रवर्तमानः स्वं तक्षकर्म जहातीत्यादि ' समर्थः पदविधिः ' ( पा० २।१।१ ) इति सूत्रमहाभाष्ये स्पष्टम् । किञ्च यत्र वाच्यार्थस्य अन्वयाभावः, तत्र जहत्स्वार्था वृत्तिः प्रवर्तते । यथा ' मञ्चाः क्रोशन्ति ' । अत्र मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम्, वाच्यार्थस्य क्रोशनकर्तृत्वान्वयासंभवादिति भावः । **साहस्री**. ४३५.

* जागरणं दर्शपूर्णमासयोरौपवसथ्यां रात्रौ कर्तव्यम् । ज्योतिष्टोमे च दीक्षाजागरणात् ऐष्टिकं जागरणं पृथक् कर्तव्यम् । तच्च रक्षार्थमदृष्टार्थं वा । सद्यस्कालत्वे तु जागरणलोप एव । वि. १२।१।८. * जागरणं रात्रौ ज्योतिष्टोमे दीक्षाकालम् । तच्च यज्ञाङ्गानां रक्षणाय अप्रमादार्थम् । किंवा अदृष्टार्थम् । **भा**. १२।१।८।१७, * जागरणं रात्रौ दर्शपूर्णमासयोः औपवसथ्ये अहनि एकेषाम् । १२।१।८।१७, * **जागरणेन** दीक्षाकालीनेन सौमिकेन प्रायणीयाऽऽदिषु न प्रसङ्गसिद्धिः । १२।१।८।१७. * **जागरणस्य** आधाने रात्रौ पदार्थरक्षणार्थत्वेन कातीये निषेधः । अयम् अपूर्वगतप्रतिपत्तिकारितदृष्टार्थसंनिपातिक्रियानिषेधः । **बाल**. पृ. ३७.

⧗ **जागरणन्यायः** । ज्योतिष्टोमे सौमिकेन दीक्षाकालीनेन जागरणेन दार्शिकजागरणस्य न प्रसङ्गः ॥

**तदुक्तं च, कालभेदात्** । १२।१।८।१७ ॥

**भाष्यम्**— सोमे दीक्षाकाले रात्रिजागरणमाम्नातम्, ' यां प्रथमां दीक्षितो रात्रिं जागर्ति, तया स्वप्नेन व्यावर्तते ' इति । दर्शपूर्णमासयोरपि औपवसथ्ये अहनि एकेषामाम्नातम् । तत् प्रायणीयाऽऽदिषु चोदकेन प्राप्यते । तेषां तन्त्रमध्यपातात् दीक्षाकालेनैव जागरणेन प्रसङ्गात् कार्यसिद्धौ प्राप्तायामिदमुच्यते । तदुक्तं च दीक्षायुक्तं च जागरणम्, नेतरेषु प्रसज्येत । कुतः ? कालभेदात् । यदि तावत् यज्ञाङ्गानां रक्षणाय अप्रमादार्थम्, ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्तीति तद्रक्षणार्थं प्रायणीयाऽऽदिषु उपवसथकाले भेदेन कर्तव्यम् । अथापि अदृष्टार्थम्, तथापि औपवसथ्यौ रात्रिस्तस्य निमित्तम् । निमित्तप्राप्तौ नैमित्तिकं कर्तव्यम् । तस्माद्भेदेन कर्तव्यम् ।

**सोम**—यदि निर्वापे हविर्धानस्य न प्रसङ्गः, जागरणे तर्हि अस्तु प्रसङ्गः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— दीक्षाकालयुक्तं जागरणं न प्रसज्येत कालभेदात् इति ।

**वि**— ' दीक्षाजागरणं प्रायणीयाऽऽदौ तद् भवेन्न वा ।, अदृष्टार्थे ततस्तत् स्या, न्न रक्षार्थत्वतोऽन्यदा ॥ '

**भाट्ट**— सोमे एव दीक्षाकाले रात्रिजागरणमाम्नातम्, दर्शपूर्णमासयोरपि औपवसथ्येऽहनि जागरणमाम्नातम्, तदतिदेशेन सोमाङ्गेष्टिष्वप्युप्राप्तं सोमाङ्गजागरणेन प्रसज्यते । इति **प्राप्ते**, यदि तावज्जागरणं यज्ञसाधनरक्षाद्वारा अप्रमादार्थम्, तदा अन्यकालीनजागरणेन अन्यकालीनेष्टयङ्गभूतपदार्थरक्षणासंभवान्न प्रसङ्गः । नहि क्वापि सोमाङ्गभूता इष्टिर्दीक्षा रात्रावस्ति, दीक्षणीयायाः सद्यस्कालायाः दिने एव सत्त्वात् । प्रायणीयाऽऽदौ तु भिन्नकालता स्पष्टैव । अथ ' दीक्षित एतां रात्रिं जागर्ति तया स्वप्नेन व्यावर्तते ' इत्यर्थवादानुसारात् स्वप्नव्यावृत्तिफलकजागरणस्य अदृष्टार्थत्वप्रतीतेः तदङ्गस्य ज्योतिष्टोमपरमापूर्वोत्पत्त्यवधिस्थायित्वात् तेनैव प्रसङ्गसिद्धेः नेष्टिषु पृथग्जागरणमिति चेत्, तथात्वेऽपि दार्शिकजागरणस्य दृष्टार्थत्वेन प्रसङ्गानुपपत्तेः, तस्यापि अदृष्टार्थत्वेऽपि प्रकरणान्तरन्यायेन विजातीययोर्जागरणयोरेकादृष्टजनकत्वे प्रमाणाभावेन विजातीयादृष्टेन विजातीयादृष्टजनकक्रियाप्रसङ्गानुपपत्तेः । न च अदृष्टवैजात्येऽपि दर्शश्राद्धेन व्यतीपातश्राद्धस्य प्रसङ्गसिद्धिरिति **कालादर्शोयुक्तं युक्तम्** । तत्र अगृह्यमाणविशेषतया कालैक्येन निमित्त-

द्वयसंनिपाते तन्त्रत्वस्यैव उचितत्वात् । एतेन अदृष्टसाजात्येऽपि नित्यकाम्यदर्शादिस्थलेऽपि अगृह्यमाणविशेषतया तन्त्रत्वमेव, न तु काम्येन नित्यप्रसङ्गः, मानाभावात् । कामे सति तस्येव निमित्तस्यापि प्रयोजकत्वस्य प्रामाणिकत्वेन तदभावकल्पनायां प्रमाणाभावात् । इतरथा कामनायाः फलोत्पत्तिं प्रत्येव कारणत्वकल्पनेन वैपरीत्यस्यापि वक्तुं शक्यत्वात् । व्यक्तिभेदे परं काम्येन गोदोहनादिना नित्यचमसकार्यसिद्धिः प्रसङ्गेनेति तद्विषयोऽयं काम्येन नित्यसिद्धिः प्रसङ्गेनेति प्रवादः । अस्तु वा तादृशस्थलेऽपि प्रसङ्गः । तथापि अदृष्टवैजात्येन क्व चित् प्रसङ्गः । अत एव 'अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने । कृच्छ्रातिकृच्छ्रावसृक्पाते' ( अत्र तृतीयपादे छन्दोभङ्गः । स्मृतौ तु अत्र 'विप्रदण्डोद्यमे कृच्छ्रस्त्वतिकृच्छ्रो निपातने । कृच्छ्रातिकृच्छ्रोऽसृक्पाते' इति पाठः । याज्ञ० ३।२९२ ) इत्यत्र असृक्पातरूपव्याप्यनिमित्तकप्रायश्चित्तेन व्यापकनिमित्तरूपावगूरणशस्त्रपातनिमित्तकप्रायश्चित्तयोः सजातीययोरेव प्रसङ्गसिद्धिः विज्ञानेश्वरेणोक्ता । तत्रापि तन्त्रं प्रसङ्गो वेति तु स्वयमूह्यम् । विजातीये तु नैव क्व चिद्वचनं विना प्रसङ्गः इति प्रकृते अदृष्टार्थत्वेऽपि जागरणयोर्न प्रसङ्गः । वस्तुतस्तु, दर्शपूर्णमासयोरपि यदि रात्रिजागरणं विहितम्, तदा दीक्षणीयाऽऽदेः सद्यस्कालत्वात् तत्र तल्लोप एवेति क्व प्रसङ्गः ।

**मण्डन—** 'स्यात् प्रायणीयाऽऽदिषु जागृतिः पृथक् ।'

**शंकर—** 'दीक्षार्थाज्जागरः पृथक् ।' ९.

* पत्नीसंनहनं दीक्षणीयायामपि नेत्युक्तं **बौधायनेन** । नहि तददृष्टार्थम्, येन **जागरणन्यायेन** पुनः क्रियेत । भाट्ट. १२।१।१३.

* **जाग्रद्भ्रमाणां** बाह्यार्थविषयत्वम् । 'अलातचक्रेऽलातं स्याच्छीघ्रभ्रमणसंस्कृतम् । १०९ ॥ गन्धर्वनगरेऽभ्राणि पूर्वदृष्टं गृहादि च । पूर्वानुभूततोयं च रश्मितप्तोषरं तथा ॥ ११० ॥ मृगतोयस्य विज्ञाने कारणत्वेन कल्प्यते ॥ १११ ॥ श्लोवा. निरालम्बनवादे.

**जाग्रद्वासनाऽनुयुक्तः स्वप्नः इतिन्यायेन** स्वप्नस्यापि जाग्रद्वासनाहेतुत्वोपदेशात् । श्रीकर. २।२।२९ ब्रसू.

* **जाघनी** अग्नीषोमीयपशौ पत्नीसंयाजेषु नियता । सा च न प्रतिपत्तिः किन्तु अर्थकर्मैव । वि. १२।४।६.

**जाघनी चैकदेशत्वात् । ३।३।१०।२० ॥**

'जाघन्या पत्नीः संयाजयन्ति' इति दर्शपूर्णमासयोः श्रूयते । इयं जाघनी प्रतिपद्वत् दर्शपूर्णमासप्रकरणात् पशौ उत्कृष्यते, जाघन्याः पशोरेकदेशत्वात् । जाघनी हि पुच्छभागः पशोः अवयवः । तस्याः दर्शपूर्णमासयोरसंभवः, तत्र पशोरभावात् । तस्मात् यत्र पशुस्तत्र उत्कष्टव्या । चशब्दो दृष्टान्तार्थः । इति पूर्वः पक्षः ।

**चोदना वाऽपूर्वत्वात् । २१ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्ती आह । पत्नीसंयाजानुद्दिश्य अत्र वाक्ये जाघनी विधीयते इति दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन विकल्पितायाः जाघन्याः चोदना विधिरेव । पत्नीसंयाजानां पूर्वत्वात् प्राप्तत्वात् जाघन्याश्च अपूर्वत्वात् अप्राप्तत्वात् । सूत्रे प्राप्तत्वात् अप्राप्तत्वात् इति उभयथा छेदः । तस्मान्नोत्कर्षः । इति सिद्धान्तः ।

**एकदेश इति चेत् । २२ ॥**

'जाघन्या पत्नीः संयाजयन्ति' इत्युक्ता जाघनी यस्मात् पशोरेकदेशः, दर्शपूर्णमासयोश्च नास्ति पशुः, तस्मात् जाघनी पशौ उत्कष्टव्यैव इति चेत् । 'जाघनी चैकदेशत्वात्' इत्युक्तस्यैवानुभाषणार्थं सूत्रम् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, प्रकृतावशास्त्रनिष्पत्तेः । २३ ॥**

परिहरति सिद्धान्ती । इति चेन्न । कुतः ? प्रकृतौ दर्शपूर्णमासात्मिकायाम् अङ्गत्वेन पशुजाघन्याः शास्त्रात् निष्पत्तेरभावात् । जाघन्याः निष्पत्तिः शास्त्रेण न विहिता, छागहरिणादेरपि कस्य चित् पशोर्जाघन्याः क्रयादिनाऽपि संपादयितुं शक्यत्वात् । **कस्तूरिरङ्गाचार्यैस्तु** प्रकृतेः इति पदं स्वीकृत्य जाघन्यवयविनः पशोः इति व्याख्यातम् । य-पुस्तके तु 'न प्रकृतौ शास्त्रनिष्पत्तेः' इति पाठः । परन्तु कुतूहले 'न प्रकृतेरशास्त्रनिष्पत्तेः इत्येव



पाठः । तत्र प्रकृतेः दर्शपूर्णमासयोरङ्गत्वेन शास्त्रतः अनिष्पत्तेः अविधानात्' इति व्याख्यातम् । के.

* **जाघनी** दर्शपूर्णमासयोः आज्येन विकल्प्यते । **सोम.** १२।४।६. * जाघनी दर्शपूर्णमासयोः पत्नीसंयाजेषु गुणत्वेन विधीयते । न तस्याः पशौ उत्कर्षः । न च जाघन्यां पत्नीसंयाजा विधीयन्ते । ( जाघनी पशोः पुच्छम् । वि. ३।३।५ ) । **भा.** ३।३।१०।२०–२३,

* **जाघनीनां** विकल्पः, न समुच्चयः पशुगणेषु पत्नीसंयाजेषु । जाघन्या पत्नीसंयाजनं च न प्रतिपत्तिकर्म किन्तु अर्थकर्म । १२।४।६।१०–१६.

* **जाघन्यधिकरणे** वक्ष्यति यत्रान्यतरदप्राप्तम्, तत्रैव इतरोद्देशेन इतरविधिः । अर्थात् संबन्धे उभयप्राप्तौ वा केवलसंबन्धविधानमिति । जाघनीन्यायोऽयम् । **वा.** २।२।५।१६ पृ. ५०३. * अन्यतर-( क्रियाकारकयोः ) प्राप्तौ च संबन्धविधेः **जाघन्यधिकरणे** निषेत्स्यमानत्वात् । **सु.** ८५२, * उभयप्राप्तौ संबन्धविधानस्य यत्रोभौ लक्षणत्वेन, तत्र स्वशब्देन संबन्धो विधीयते इति **जाघन्यधिकरणभाष्ये** वक्ष्यमाणत्वात् । पृ. ११३२.

* **जाघन्यपचारे** दर्शपूर्णमासयोः पशौ च सूनास्थजाघनीमुपादाय पत्नीसंयाजाः कर्तव्याः । **सोम.** १२।४।६.

**जाघनीन्यायः** । जाघन्यधिकरणम् । पत्नीसंयाजन्यायः । पशुजाघनीवाक्यन्यायः । दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन सह जाघन्याः विकल्पः ॥

**जाघनी चैकदेशत्वात् । ३।३।१०।२० ॥**

**भाष्यम्—** दर्शपूर्णमासयोः श्रूयते 'जाघन्या पत्नीः संयाजयन्ति' इति । तत्र संशयः किमेतद्विधानं दर्शपूर्णमासयोः, उत पशाविति । कथं दर्शपूर्णमासयोः, कथं च पशाविति । यदि जाघन्यां पत्नीसंयाजा विधीयन्ते, तत उत्कर्षः । अथ पत्नीसंयाजेषु जाघनी विधीयते, ततो दर्शपूर्णमासयोरेव । किं प्राप्तम् ? उत्कर्षः । कुत एतदुत्कृष्यते ? जाघन्यां पत्नीसंयाजा विधीयन्ते इति । कथम् ? शब्दात् पत्नीसंयाजानां विधानम्, वाक्येन जाघन्याः । शब्दश्च बलवान्, न वाक्यम् । ननु पत्नीसंयाजा विहिता एव । सत्यं विहिताः, जाघन्यामिदानीं पुनर्विधीयन्ते । सा तत्संबद्धा कर्तव्येत्युच्यते । एवं सति दर्शपूर्णमासयोः पत्नीसंयाजाः, विनाऽपि जाघन्या न विगुणाः । जाघनी तु तत्र प्रतिपाद्यते । तस्मात् यत्र जाघनी प्रयोजनवती, तत्र तस्याः प्रतिपत्तिः । पशौ च सा, न दर्शपूर्णमासयोः । एकदेशश्च जाघनी प्रतिपाद्यमाना न पशुं प्रयोक्ष्यते । तस्मादस्य विधानस्योत्कर्ष इति ।

**वा—** उत्कर्षबुद्धेरपवादः प्रस्तूयते । 'जाघन्या पत्नीः संयाजयन्ति' इति गुणप्रधानत्ववचनव्यक्तिद्वयात् संदेहः । यदि जाघनीं संस्कार्यत्वेन उद्दिश्य पत्नीसंयाजाः संस्कारका विधीयन्ते, ततः संस्कार्यस्य प्राधान्यात् स्वस्थानापरित्यागे सति यत्र जाघनी तत्र पत्नीसंयाजाः, न यत्र ते तत्रासौ । सा च लोकस्था निष्प्रयोजनत्वान्न संस्क्रियते इति अग्नीषोमीयगता कृतार्थत्वात् संस्कर्तव्या । यदि तु पत्नीसंयाजोद्देशेन जाघनी विधीयते, ततः प्रकृतानुवादबुद्ध्यनपायात् दर्शपूर्णमासयोरेव जाघनीविधानम् । किं प्राप्तम् ? आरादुपकारकत्वात् सामवायिकत्वस्य अभ्यर्हितत्वात्, अन्यत्र धात्वर्थविधानात् विधिप्रत्यासत्तेः, एकदेशद्रव्याणां च अप्रयोजकत्वात् । तथा सति च परप्रयुक्तकृतार्थग्रहणेन प्रतिपत्तिलक्षणाऽऽपत्तेः अग्नीषोमीयजाघनीसंस्कारविधानात् उत्कर्ष इति । 'सा तत्संबद्धा कर्तव्या इति उच्यते' इति ( भाष्ये ) छेदः । ( उच्यते इति पूर्वान्वयि नोत्तरान्वयि इत्यर्थः ) परं च कर्मकथनम् 'एवं सति' इत्यादि । ( एवं सति इत्यादि परं च भाष्यं कर्मकथनम्, कर्म अनुष्ठानं कथ्यते अनेन इति कर्मकथनम् अनुष्ठानविशेषप्रदर्शनार्थमित्यर्थः ) । यदि पुनः 'उच्यते, एवं सति' इति योज्यते, ततः (उच्यते इत्यतः प्राक्तनग्रन्थस्य) परिचोदनाच्छायाऽऽपत्तिः । न च तत् युक्तम्, उत्तरानभिधानात् । तस्मात् आत्मवचनत्वेनैव योज्यम् । ननु एवं सति प्रतिपदादिवदेव ( यथा प्रतिपदोः उत्कर्षः, तद्वत् ) उत्कर्षात् प्रकृतौ पत्नीसंयाजानामकरणं प्राप्नोति । प्राप्नुयादेवम्, यदि पशौ पत्नीसंयाजा न स्युः । ते तु अतिदेशप्राप्ताः तत्र विद्यमाना एव केवलं जाघनीसंबन्धित्वेन विधीयन्ते । नैव तर्हि उत्कर्ष इति वक्तव्यम् । सत्यम् । न कस्य चित् पदार्थस्य उत्कर्षः, इदमेव तु वाक्यम्

( जाघन्या पत्नीः इति वाक्यम् ) विकृतौ कार्ये कुर्वत् उत्कृष्यते इत्युच्यते ।

**चोदना वाऽपूर्वत्वात् । २१ ॥**

**भाष्यम्**— जाघनी वा पत्नीसंयाजानां गुणत्वेन विधीयते । कुतः ? अपूर्वत्वात् । अप्राप्ता जाघनी पत्नीसंयाजानां गुणत्वेन । तत्र स्वशब्देन पत्नीसंयाजा विहिताः, जाघनीसंबन्धः तेषामविहितः । यत्र च संबन्धो विधीयते, तत्र अन्यतरस्यान्यत्र विधानम्, संबन्धो नान्तरीयकः । यद्वा संबन्धस्य विधानम्, नान्तरीयकौ संबन्धिनौ । यत्रोभौ लक्षणत्वेन, तत्र स्वशब्देन संबन्धो विधीयते । यत्र तु अन्यतरो लक्षणत्वेन, तत्रैकं लक्षयित्वा अन्यतरो विधीयते । लक्षणत्वेन चात्र पत्नीसंयाजाः । कथमवगम्यते ? पत्नीसंबन्धान्न सर्वो यागः कश्चिदेव तु लक्ष्यते, यस्य पत्न्यः साधनत्वेन । अथ कस्मान्न जाघनीं लक्षयित्वा पत्नीसंयाजा विधीयन्ते ? नास्य अपूर्वस्य यागस्य पत्न्यः शक्यन्ते विधातुम् । जाघन्यां तु लक्ष्यमाणायां यागे सपत्नीके विधीयमाने वाक्यं भिद्येत । अस्ति तु अत्र विहितः सपत्नीको यागः, यः पत्नीभिर्लक्ष्यते । तस्मात् यागं लक्षयित्वा जाघनी विधीयते । यत्तु वाक्येन जाघनीविधानं श्रुत्या यागस्येति । तदिह यागविधानं न संभवतीत्युक्तम्, वाक्यभेदप्रसङ्गात् । तस्माज्जाघनीविधानम् । एवं चेत् दर्शपूर्णमासयोर्विना जाघन्या विगुणः पत्नीसंयाजयागः स्यात् । तस्मादनुत्कर्षः इति ।

**वा**— न वा अस्य विधेरुत्कर्ष इति । कुतः ?
**' जाघन्युद्दिश्यमाना स्यात् संस्कार्योत्कर्षकारणम् ।**
**इहोपादीयतेऽङ्गत्वाद् यागेष्वाज्यवदेव सा ॥'**
सर्वत्र एवंविधे वाक्ये गुणे विधिशक्तिः संचरतीत्युक्तम् । पत्नीसंयाजाश्च अनन्तरविहिता मनसि वर्त्तंते, इति न विधातुं शक्यन्ते । न चेह स्थितेन पशुगतपत्नीसंयाजानुवादो युक्तः, तद्बुद्ध्यभावात् । न च जाघन्याः कालादिवत् अनुपादेयत्वम्, येनेमं विधिमाकर्षेत् । संस्कार्यत्वादिति चेत् । न, तृतीयाऽवगतगुणत्वातिक्रमप्रमाणाभावात् । यदि च कृतार्थां जाघनीं प्रस्तुत्य अयं विधिः प्रवर्तेत, तथापि तावत् कदाचित् प्रयाजशेषवत् द्वितीयाऽर्थे ( जाघन्या इति ) तृतीया इति व्याख्यायेत । सा तु अपूर्वा विधीयते । तस्मात् नोत्कर्षमर्हति । न च प्रकरणबद्धत्वात् एते पत्नीसंयाजा उत्कर्षं सहन्ते । वाक्यबलीयस्त्वात् इति चेन्न, वाक्यस्यापि एवमादेः अधिकृतापेक्षित्वेन प्रकरणात् दुर्बलतरत्वात् । यदि हि एतदेव पत्नीसंयाजानां उत्पत्तिवाक्यं भवेत्, ततः प्रकरणात् आच्छिन्द्यात् । एते तु वाक्यान्तरोत्पत्तित्वात् संनिधिवशेन यावता कालेन एतेन वाक्येन संगृह्यन्ते, तावता दर्शपूर्णमासाभ्यामपि शक्या ग्रहीतुम् । न च जाघन्याः फलवत्त्वं विज्ञातम्, येन एतेषां प्रयोजनाकाङ्क्षामपनयेत् । अतो यावत् ' असौ किमर्था ' इत्यालोच्यते, तावत् फलवद्दर्शपूर्णमासप्रसूतेन कथम्भावेन अङ्गत्वमापादितम् । न च इह अपूर्वयागविधानम्, यजिमात्रत्वेन अश्रवणात् । पत्नीसंबद्धयागश्रवणं हि एतत् । तत्र यदि जाघन्युद्देशेन च कर्म विधीयते, पत्न्यश्चास्य विधीयन्ते, ततः अनेकार्थविधानात् ' ऐकशब्द्ये परार्थवत् ' इति वैरूप्यलक्षणो वाक्यभेदः स्यात् । अल्पार्थविधिसंभवाच्च न विशिष्टविधानेन परिहारो घटते । तस्मात् विशिष्टं यागमुद्दिश्य द्रव्यं विधीयते । ननु एवमपि विशिष्टानुवादात् सुतरां वाक्यं भिद्येत । नैष दोषः । प्रकरणप्राप्तेः पत्नीशब्दस्य अतन्त्रत्वात् । यथैव ' अभिक्रामं जुहोति ' इति सामान्यशब्दोऽपि अधिकारात् प्रयाजविषयो भवति, तथैव ' यत् संयाजयन्ति ' इत्येतावतैव अधिकृताः पत्नीसंयाजाः प्रत्येष्यन्ते । तस्मादनुत्कर्षः ।

**एकदेश इति चेत् । २२ ॥**

**भाष्यम्**— अथ यदुक्तम् एकदेशो जाघनी न पशुं प्रयोक्ष्यते, तस्मादुत्कर्ष इति, तत् परिहर्तव्यम् ।

**वा**— यदुक्तम् ' एकदेशद्रव्यश्चोत्पत्तौ विद्यमानसंयोगात् अप्रयोजकः इति ' तत्रोच्यते । ( यद्यपि एकदेशो द्रव्यं यस्य यागस्य इति चतुर्थाऽधिकरणसूत्रस्थैकदेशद्रव्यशब्दार्थः, तथापि अत्र जाघनीशब्दबोधकतया स्वीक्रियते इति सुधायां सूचितम् । तन्त्ररत्ने तु एकदेशद्रव्यम् इति कर्मविशेषणत्वेन चतुर्थाऽधिकरणे नपुंसकः स्वीकृतः )।



**न प्रकृतावशास्त्रनिष्पत्तेः । २३ ॥**

**भाष्यम्**— न प्रकृतौ दर्शपूर्णमासयोः जाघनी शास्त्रेणोच्यते । एवं पशोर्निष्पन्नया जाघन्या पत्नीसंयाजा यष्टव्याः इति । अविशिष्टा जाघनी विधीयते । सा संभवति दर्शपूर्णमासयोः क्रीत्वाऽपि आनीयमाना । तस्मादनुत्कर्ष इति । ( अस्मात् भाष्यात् ' न प्रकृतावशास्त्रनिष्पत्तेः ' इति सूत्रस्य पाठः सिध्यति । भाष्यस्थो नञ् तु अशास्त्रनिष्पत्तेः इति समासगतस्य नञो व्याख्या । सूत्रस्थो नञ् तु चेदन्तसूत्रोक्तशङ्कानिरासाय । के. )

**वा**— स नाम अप्रयोजको भवति, यस्य प्रकृतग्रहणात् विना अर्थो न ज्ञायते यथा ' उत्तरार्धात् स्विष्टकृते समवद्यति ' इति । जाघनीशब्दस्तु हृदयादिशब्दवत् आकृतिवचनः । सा च अन्तरेणापि पशूपादानं परप्रयुक्तपशूपजीवनं वा, शक्या उपादातुम् । ' रूपं वाऽशेषभूतत्वात्' इति यथाकथञ्चित् उत्पन्ना येनकेनचित् उपादाय शक्या अनुष्ठातुम् । न चेयं अवयवभूता लोके न प्रचरति । मांसविक्रयिणो हि प्रत्यङ्गविभक्तानेव पशून् विक्रीणते । तत्र शक्या जाघनी क्रयादिना उपादातुम् । न च अवश्यमियं छागादेव ग्रहीतव्या, जघनावयवमात्रत्वेन श्रवणात् । अग्नीषोमीयेऽपि हृदयादीनां संभवत्येव लोकादुपादानम्, तथा सत्यपि तु तेषां भेदेनैव जातिविशेषः उत्पत्तिप्रकारश्च संज्ञपनादिर्नियतः, इति क्रयाद्यनाश्रयणम् । न तु इह तथा शास्त्रकृता निष्पत्तिः । ( सूत्रे- ) प्रकृतिग्रहणं च दर्शपूर्णमासप्रतिपत्त्यर्थम् । तस्मात् दार्शपौर्णमासिकपत्नीसंयाजाङ्गभूतेन आज्येन सह विकल्प्यमाना जाघनी इति सिद्धम् ।

**शा**— ( सिद्धान्तः- ) **'जाघनी हि गुणत्वेन तृतीयोक्त्या-( जाघन्या इति )ऽवगम्यते । पत्नीसंयाजयागाश्च द्रव्यापेक्षाव्यवस्थिताः ॥ तेन तेषां गुणत्वेन जाघन्यत्र विधीयते । न च सापेक्षवृत्तित्वमुत्तरार्धादिशब्दवत् ॥ '** अतो जाघन्याः दर्शपूर्णमासयोरेव निवेशः ।

**सोम**— उत्कर्षापवादात् **संगतिः** । सूत्रे चशब्दः उत्कर्षापकर्षकः ।

**वि**— ' संयाजयन्ति जाघन्या पत्नीरेतत् पशावुत । दर्शादौ, तत् पशौ युक्तं जाघन्याः समवायतः ॥ , जाघनी नाम भागोऽसौ दर्शादौ समवैति हि । नोत्क्रष्टव्यं न संस्कार्या साधनत्वात् तृतीयया ॥ ' १५.

**भाट्ट**— दर्शपूर्णमासयोः पत्नीसंयाजावान्तरप्रकरणे ' जाघन्या पत्नीः संयाजयन्ति ' इति श्रुतम् । तत्र किमनेन वाक्येन अग्नीषोमीयपश्वनुनिष्पन्नजाघन्युद्देशेन पत्नीसंयाजा विधीयन्ते ततश्चैतस्य विधानस्य प्रकरणादुत्कर्षः, उत पत्नीसंयाजोद्देशेन जाघनी द्रव्यत्वेन विधीयते, इति चिन्तायाम्, जाघनीशब्दस्य उत्तरार्धादिशब्दवत् एकदेशद्रव्यवाचित्वेन जाघन्याः परप्रयुक्तत्वावगमात् प्रयोजनवत्त्वावगमेन प्रयाजशेषवत् उद्देश्यत्वावगतेः तृतीयायाः द्वितीयाऽर्थलक्षणामङ्गीकृत्य पत्नीसंयाजा एव तदुद्देशेन विधीयन्ते । एवं द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम्, इतरथा तृतीयविधिप्रकारापत्तेः । एवं च वाक्येन प्रकरणबाधात् पत्नीसंयाजानां पश्वङ्गत्वमात्रप्रसक्तावपि ' आज्येन पत्नीः संयाजयन्ति' इति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगात् तेन च आरादुपकारकतया दर्शपूर्णमासाङ्गत्वावगमेऽपि अनेन वचनेन संनिपत्योपकारकतया अग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः । न च जाघन्याः परप्रयुक्तपश्वनुनिष्पन्नत्वस्य लोकेऽपि संभवात् अन्यभिचरितक्रतुसंबन्धाभावेन कथं यागीयत्वोपस्थितिः, अग्नीषोमीयप्रकरणे श्रुतेन 'जाघन्या पत्नीः संयाजयन्ति ' इति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधायकेन यागसंबन्धोपस्थितौ ' अंशुं गृह्णाति ' इतिवत् अनारभ्याधीतेऽपि अस्मिन् क्रतुसंबन्धावगमोपपत्तेः ।

यत्तु कैश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसंबन्धावगमात् प्राकरणिकवाक्यं तद्धर्मककर्मान्तरविधायकं पूर्वपक्षे इत्युक्तम्, तत् अतिदेशेन पत्नीसंयाजानाम् आरादुपकारकत्वविधया पशुयागसंबन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीतवाक्ये जाघन्यास्तदीयत्वोपस्थितौ प्रमाणाभावात्, अतिदेशेन संनिधाने प्रकरणान्तरासंभवेन कर्मान्तरत्वानुपपत्तेश्च उपेक्षितम् । तस्माद्वाक्येन प्रकरणं बाधित्वा इदं विधानमग्नीषोमीये उत्कृष्यते । इति प्राप्ते,

जाघनीशब्दस्य पश्ववयववाचित्वेऽपि उत्तरार्धादिशब्दवत् ससंबन्धिकत्वाभावात् लोकसिद्धहट्टस्थजाघन्या एव आज्यवत् पत्नीसंयाजोद्देशेन विधिसंभवे तृतीयाया लक्षणाऽङ्गीकरणे प्रमाणाभावः। अतिदेशात् प्राप्तानां पत्नीसंयाजानाम् आराढुपकारकत्वबाधेन पशुप्रकरणस्थवाक्येनैव संनिपत्योपकारकत्वलाभे दर्शपूर्णमासप्रकरणस्थवाक्यवैयर्थ्यापत्तिश्च । अतः पत्नीसंयाजोद्देशेनैव जाघनीविधिः। न च प्राप्तकर्मानुवादेन पत्नीनामपि विधाने, देवतात्वेन प्राप्त्युद्भावनेऽपि च, विशिष्टोद्देशे वाक्यभेदापत्तिरिति वाच्यम् । अवान्तरप्रकरणादेव कर्मविशेषोद्देशसंभवेन अवाक्यभेदात् । अतो नास्य प्रकरणादुत्कर्षः। अग्नीषोमीयप्रकरणस्थवाक्यं तु विकल्पेन प्राप्ताया नियमार्थमिति वक्ष्यते। न चैवं तत्र हट्टस्थजाघन्या एव नियमसंभवेन पश्वनुनिष्पन्नाया ग्रहणे प्रमाणाभावः, प्रतिपत्त्यन्तराभावेन उपस्थितायास्तस्यास्त्यागे प्रमाणाभावादिति तत्रैव वक्ष्यमाणत्वात् ।

**मण्डन**-- 'विधेया जाघनी यागे'। १५.

**शंकर**— ' जाघन्युत्कर्षणं नैव । ' १५.

* **जाघनीसमुच्चयन्यायः** । विकृतौ अतिदिष्टमात्रविषयस्तु भावयोर्विकल्पो यथा । 'जाघन्या पत्नीः संयाजयन्ति आज्येन वा' इति विहितम्। पशौ पुनः श्रुतम् 'जाघन्या पत्नीः संयाजयन्ति' इति, तत् पत्नीसंयाजानां जाघन्यर्थताऽर्थे न भवति अप्राकृतकार्यताऽऽपत्तेः, किन्तु प्रकृतितो वैकल्पिक्याः प्राप्ताया जाघन्याः नियमार्थम्। तत्र च उपादेयत्वात् जाघन्येकत्वं विवक्षितम्। ततश्च पशुगणे प्रतिसंस्कार्ये संस्कारावृत्तिः इति जाघनीसमुच्चयन्यायाप्रवृत्तेः याकाचित् जाघनी उपादेया इति विकल्पः। इदं च द्वादशे 'द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात्...' ( १२।४।६।१० ) इत्यधिकरणे उक्तम्। ( इदं न्यायस्य नामधेयं पूर्वपक्षानुसारेण भवेत् । विकल्प एव तु सिद्धान्तः )। बाल. पृ. १६२.

* '**जातमञ्जलिना गृह्णाति**' अग्निं मथनोत्तरम्। **संकर्ष**. ४।३।६, * '**जातमभिप्राणिति**' अग्निं मथनोत्तरम्। ४।३।६.

**जातेष्टिः जातकर्मानुष्ठानोत्तरं कर्तव्या ॥**

**फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् । ४।३।१६।३८ वर्णकं २ ॥**

**भाष्यम्**— एवं वा। 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति। तत्र संदेहः किं जातमात्रे, उत कृते जातकर्मणि इति। जातमात्रे इति ब्रूमः। संप्राप्ते हि निमित्ते नैमित्तिकेन भवितव्यम्। **एवं प्राप्ते, ब्रूमः**। कृते जातकर्मणि इति। कुतः? सामर्थ्यात्। कृते हि जातकर्मणि प्राशनं तस्य विधीयते। यदि प्राक् जातकर्मणः इष्टिः क्रियते, प्राशनकालो विप्रकृष्येत, तत्रास्य शरीरधारणं न स्यात्।

**अङ्गानां तूपघातसंयोगो निमित्तार्थः । ३९ ॥**

**भाष्यम्**--- अथ यदुक्तं संप्राप्ते निमित्ते हि नैमित्तिकेन भवितव्यमिति। उच्यते। अङ्गानामुपघातसंयोगो निमित्तार्थः। उपघातः पुत्रजन्म, तत् भूतं निमित्तम्। न तत्कालः अङ्गम्। तच्च निमित्तं कृतेऽपि जातकर्मणि नापैति। इतरस्मिन् पक्षे कालः अपेयात्। लक्षणा च अस्मिन् पक्षे स्यात्। तस्मात् कृते जातकर्मणि इति।

**सोम**-- यदर्थे पुत्रगतत्वं फलस्योक्तं तन्निरूपणात् संगतिः। १७.

**वि**-- 'जन्मानन्तरमेवेष्टिर्जातकर्मणि वा कृते।, निमित्तानन्तरं कार्यं नैमित्तिकमतोऽग्रिमः ॥, जातकर्मणि निर्वृत्ते स्तनप्राशनदर्शनात्। प्रागेवेष्टौ कुमारस्य विपत्तेरूर्ध्वमस्तु सा ॥'

**भाट्ट**— एवं वा। इयमिष्टिः पुत्रजननानन्तरमेव कार्या, सप्तम्या जननस्य निमित्तत्वावगमेन निमित्तानन्तरं नैमित्तिकस्योचितत्वात्। न चात्र सप्तम्या जननोत्तरकालविधिरिति तन्त्रसारोक्तं युक्तम्, 'पुत्रे' इति सामानाधिकरण्यानुपपत्तेः। अतो 'भिन्ने' इतिवत् निमित्तपरैव सप्तमी। सापेक्षत्वाच्च हविरार्तिन्यायेन उभयविवक्षा। यद्यपि पुत्रमात्रं निमित्तं स्यात्, तथापि निमित्तानन्तर्यलाभेन नैमित्तिकस्य शौचकालबाधेनापि अनन्तरमेव करणम्। न च स्तन्यपानाभावे पुत्रमरणेन शेषिविरोधापत्तिः, जातकर्माङ्गभूतस्य घृतमधुप्राशनपूर्वकवैधप्राथमिकदक्षिणस्तनप्राशनस्य उत्तरकालत्वेऽपि रागतो



यत्किञ्चित्प्राशनस्य संभवेन मरणानापत्तेः। न च जननानन्तर्यस्य जातकर्मण्यपि आवश्यकत्वात् विनिगमनाविरहः, प्रत्यक्षश्रुतिविहितस्यैव नियामकत्वात्। **इति प्राप्ते**, जातकर्मणो नालच्छेदपूर्वभावविधानात् अच्छिन्ननालस्य प्राशननिषेधात् इष्टेर्जननानन्तरमेव करणे मरणापत्तेः शेषिविरोधापत्त्या उत्कर्षः। न च निमित्तश्रुत्यनुरोधेन स्मार्तनिषेधस्य अनाहिताग्निपरत्वम्, भूतनिमित्तस्थले निमित्तस्य नैमित्तिकानुष्ठापनमात्रे विधेस्तात्पर्येण अनन्तरानुष्ठानस्य असति बाधके उत्सर्गसिद्धत्वेन निमित्तश्रुत्यविरोधान्निषेधसंकोचानुपपत्तेः। वस्तुतस्तु— निमित्तत्वम् अनन्तरमवश्यानुष्ठापकत्वरूपमेव। अन्यथा भेदनहोमादेरपि पदार्थगतक्लृप्तक्रमबाधानुरोधेन अन्ते करणापत्तेः। जातकर्मनामकरणादौ मलमासादावनुष्ठानानुपपत्तेश्च। अतो निमित्तश्रुतिविरोधेऽपि जातकर्मणोऽपि निमित्तानन्तर्यश्रवणात् अवश्यमन्यतरस्य तद्बाधे निषेधस्यापि संकोचापत्त्या जातेष्टावेव तद्बाधः। वरं हि स्मार्तानामपि अनेकेषां बाधे श्रौतस्याप्येकस्य बाधः, प्रमेयबलाबलस्य बलवत्त्वात्। अतो यत्रैव एतादृशं बलवद्बाधकं विशिष्य कालविधिर्वा, तत्रैव अगत्या आनन्तर्यघटितमेव निमित्तत्वं लक्षणया आश्रीयते। अतश्च तत्रातिदेशेन प्राप्तानां सामान्यविहितानां वा आशौचकालादीनां बाधे प्रमाणाभावात् आशौचापगमे मलमासादिरहिते शुद्धे पर्वणि जातेष्टिः कार्या। १७.

**मण्डन**-- 'नैषा प्राग् जातकर्मणः।' १८.

**शंकर**— 'जातकर्मोत्तरं सेष्टिः।' १८.

**जातेष्टिः पत्न्याः भाण्डस्पर्शानर्हत्वापगमे पौर्णमास्यादौ स्वकाले कर्तव्या ॥**

( उत्सूत्रं तृतीयं वर्णकम् )। )

**भाष्यम्**-- अथ किमन्तर्दशाहे यस्मिन्कस्मिन् वा अहनि, उत स्वकाले इति। किं प्राप्तम्? यस्मिन्कस्मिन् वा अहनि इत्येवमनियमः प्राप्तः। कुतः? नियामकाभावादिति। **अत्रोच्यते**। पौर्णमास्याममावास्यायां वा। कुतः? श्रुतेः। एवं हि श्रूयते। 'य इष्ट्या पशुना सोमेन वा यजेत, स पौर्णमास्याममावास्यायां वा यजेत' इति। नातिभारो वचनस्य। इतरस्मिन् पक्षे कालोऽपेयात्। लक्षणाऽपि अस्मिन् पक्षे स्यात्। अन्यस्यां तिथौ अन्तर्दशाहे वा कुर्वन् सर्वाण्यङ्गानि उपसंहर्तुं न शक्नुयात्। कालं शौचं च नोपसंगृह्णीयात्। तस्मादतीते दशाहे पौर्णमास्याममावास्यायां वा कुर्यादिति।

**टुप्**-- एवं वा '**इतरस्मिन् पक्षे कालोऽपेयात्, लक्षणा च स्यात्**'। निष्ठा हि ( जाते इति क्तः ) भूतसामान्ये उत्पद्यते। तस्य यः श्रुत्यर्थः, स च कृतेऽपि जातकर्मणि विद्यते एव। जातानन्तरता निमित्तमिति यो ब्रवीति, तेन सामान्यवचनो विशेषे लक्षणया स्थापितः। जातानन्तरं त्रुटिः न शक्यते संभावयितुम्। क्षणिकी हि सा। अत आह-'कालोऽपेयात्' इति। अन्तर्दशाहेऽपि न क्रियेत अशौचस्य अपरिसमाप्तत्वात्। तस्मात् दशाहोत्तरकालायां पौर्णमास्याममावास्यायां वा कर्तव्या। 'भिन्ने जुहोति' इति अनन्तरमेव क्रियते। नैमित्तिको हि पाठक्रमः इतरं पाठक्रमं बाधित्वा निविशते इति।

**शा**—'**निमित्तानन्तरं प्राप्ता प्रयोजनविरोधतः। उत्कृष्टा, तदभावात्तु पुनर्नोत्क्रष्टुमर्हति ॥ शौचाङ्गेन विनाऽप्येषा कर्तव्यैव निमित्ततः। अपिवाऽप्येकदेशे स्यात् इति षष्ठे हि वक्ष्यते ॥**' उच्यते। '**निमित्तस्वरसात् प्राप्तिर्या तावत्, सा निवारिता। प्रयोजनविरोधेन तावदङ्गोपसंग्रहः ॥**' अवैगुण्याय शौचकालप्रतीक्षया आशौचापगमे पौर्णमास्यादिकाले कर्तव्या।

**सोम**— पूर्ववैधर्म्येण प्रत्यवस्थानात् **संगतिः**। आशौचापगमे पत्न्याः भाण्डस्पर्शानर्हत्वापगमे इत्यर्थः।

**वि**-- 'जातकर्मानन्तरं स्यादाशौचेऽपगतेऽथवा।, निमित्तसंनिधेराद्यः, कर्तृशुद्ध्यर्थमुत्तरः ॥'

**भाट्टस्तु** द्वितीयवर्णकान्तर्गत एव।

**मण्डन**— 'शुद्धे पर्वणि सा कार्या।' १९.

**शंकर**-- 'नाशौचे सा स्वकालगा।' १९.

* **जातेष्टिः** पुत्रगतपूतत्वादिफलप्रयुक्ता। फलसंयोगाधिकरणम्। भा. ४।३।१६।३८-३९. * जातेष्टिः 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति विहिता। वि. १।४।१२, * **जातेष्ट्याः** जातकर्मोत्तरं कर्तव्यता, न तु जन्मनः अव्यवहितोत्तरकाले जातकर्मणः प्राक्।

वि. ४।३।१८, तत्रापि आशौचादूर्ध्वं जातेष्टिः कर्तव्या । ४।३।१९, * जातेष्टयाः फलं पुत्रस्यैव, न तु कर्तुरपि पितुः । 'यस्मिन् जाते निर्वपति स पूतः' इति वाक्यात् । पुत्रे फलं पितुरीप्सितमेव । ४।३।१७.

जातेष्टिन्यायः । वैश्वानराधिकरणम् । वैश्वानरवाक्यन्यायः । वैश्वानरेष्टौ अष्टाकपालादिभिः द्वादशकपालस्य स्तुतिः, न गुणविधिः ॥

**पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये । १।४।११।१७ ॥**

**भाष्यम्**— 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इति श्रूयते । तत्र 'यदष्टाकपालो भवति गायत्र्यैवेनं ब्रह्मवर्चसेन पुनाति' इत्येवमादयः कपालविकल्पाः श्रूयन्ते । तेषु संदेहः किम् अष्टत्वादयो गुणविधयः, उत अर्थवादा इति । तत्र गुणविधयः इत्येव ब्रूमः । कथम् ? ये हि पूर्ववन्तो विदितपूर्वमर्थं अभिवदन्ति, ते अविधानार्थाः । तदेतत् अस्य वाक्यस्य समाम्नाये सामर्थ्यम्, यत् अविदितपूर्वकाभिधानम् । किं तत् ? विधानसामर्थ्यम् । एवमविहितमर्थं विधास्यति । इतरथा अर्थवादाः सन्तः अनर्थकाः स्युः । न च द्वादशकपालस्य शेषभावमुपगन्तुमर्हति । प्रत्यक्षा हि अष्टानां कपालानां स्तुतिः, परोक्षा द्वादशानाम् । प्रत्यक्षाभावे च परोक्षा स्यात् । तस्मात् गुणविधयः ।

**वा**— गुणविधिनामधेयविचारे पर्यवसिते अधुना केवलगुणविधित्वमेव अस्ति न वा इति विचार्यते । अथवा अष्टाकपालत्वस्य वैश्वानरसामानाधिकरण्यात् द्वादशत्वान्तर्गतः तत्प्रख्यत्वेन नामधेयत्वमाशङ्क्य गुणविधिः प्रसिद्ध्यादिभिः प्रकृतयजिबुद्धेः तत्प्रख्यत्वाभावाच्च समर्थनीयः । तमपि निराकृत्य अर्थवादता पूर्वसिद्धैव उपसंहरिष्यते । ( भाष्यकारान्तरकृत-अकारप्रश्लेषरहितसूत्रव्याख्यानत्यागेन अकारप्रश्लेषेण भाष्यकृतः [ शबराचार्यस्य ] व्याख्याने कारणं वक्तुम् उपन्यासपूर्वकं तत् दूषयति- ) तत्र पूर्ववतां विधानेन अर्थवत्त्वम्, अपूर्वाणां नामधेयत्वावधारणात् 'यदुत्पत्तावपूर्वम्' इति । तस्मात् गुणविधयः अष्टत्वादयः इति केचित् । तदयुक्तम् । नहि अपूर्वत्वात् नामधेयत्वं सिद्धम् । अपूर्वत्वात् हि यथैव लौकिकार्थापरिज्ञानात् न गुणविधित्वम्, एवं वैदिककर्माभिधायित्वं सुतरामप्रसिद्धम् इति नामधेयत्वमपि न स्यात् । सत्येव च सर्वत्र लौकिकेऽर्थे समभिव्याहारादिभिः नामधेयता उक्ता । तस्मात् यथाभाष्यमेव सूत्रार्थः '**पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादने । अप्राप्तत्वादिहैते स्युर्वैश्वदेवविकल्पवत् ॥**' यदि हि वैश्वानरयागे अष्टत्वादयः कुतश्चित् प्राप्ता भवेयुः, ततः संवादद्वारेण नामधेयत्वम् अर्थवादता वा स्यात् । न तु प्राप्तिरस्ति, केवलद्वादशत्वविधानात् । तथाहि '**यद्यप्यर्थात्मनाऽस्त्येव महासंख्यास्ववान्तरा । अपरिच्छेदकत्वात्तु नासौ कर्मविशेषणम् ॥**' नहि सत्तामात्रेण संख्या व्याप्रियते । किं तर्हि ? संख्येयपरिच्छेदेन । द्वादशत्वेन च कपालेषु परिच्छिद्यमानेषु न अष्टत्वादीनां परिच्छेदकत्वम् इत्यविद्यमानता । यद्यपि च यथाकथञ्चित् अस्तित्वमाश्रीयते, तथापि एतावन्मात्रं भवेत् 'अष्टौ भवन्ति' इति, न तु 'यदष्टाकपालः' इति । संस्कृततद्धितो ह्येषः । ( तत्र इत्यनुवर्तमाने 'संस्कृतं भक्षाः' [ पा० ४।२।१६ सप्तम्यन्तात् अण् स्यात् संस्कृते अर्थे, यत् संस्कृतं भक्षाः चेत् ते स्युः । अष्टसु कपालेषु संस्कृतः अष्टाकपालः पुरोडाशः ] इत्यनेन अष्टसु कपालेषु संस्कृतम् इत्यस्मिन्नर्थे संख्यापूर्वसमासत्वेन द्विगुसंज्ञा इष्टा कपालप्रातिपदिकात् विहितस्य अण्प्रत्ययस्य 'द्विगोर्लुगनपत्ये' [ पा० ४।१।८८ द्विगोर्निमित्तं यस्तद्धितः अजादिरनपत्यार्थः, तस्य लुक् स्यात् ] इति द्विगुपरतद्धितलुक्स्मरणेन लोपात् अष्टाकपालशब्दसिद्धिः ) तद्धितार्थनिमित्तश्च समासः । ( 'तद्धितार्थोत्तरपदसमाहारे च' इति तद्धितार्थे विषयभूते दिक्संख्ययोः सामानाधिकरण्यसमासस्मृतेः संस्कारकत्वस्य उपाधित्वावसायात् द्वादशत्वपरिच्छिन्नानां च संस्कारकाणां अष्टत्वेन परिच्छेत्तुमशक्यत्वात् अष्टाकपालशब्दानुपपत्तिः ) तौ च ( तद्धितसमासौ ) सति सामर्थ्ये भवतः । सामर्थ्यं च अन्यनिरपेक्षत्वे भवति । सापेक्षाश्च द्वादशत्वेन अष्टत्वादयः, इति न द्वादशकपालः अष्टाकपालादिशब्दाभिधानीयकं लभते । तेन स्वरूपसंकीर्तनस्य असत्त्वात् प्ररोचनम् असंबद्धतरमापद्येत । न च द्वादशत्वविलक्षणः अष्टत्वादेः



कर्मोपयोगः संभवति, संख्यात्वात् । यद्यपि च अष्टत्वस्तुत्या द्वादशत्वं स्तूयते, न तु अष्टाकपालस्तुत्या द्वादशकपालस्य स्तुतिः, विशेषणविशेष्ययोः अत्यन्तभेदात् । अपिच अस्त्येव द्वादशत्वस्य आत्मीया स्तुतिः 'जगत्यैवास्मिन्' इति । तस्मात् द्वादशत्वेन सह विकल्पमानाः गुणविधय एवैतेऽपि । सर्वं चेदं वैकल्पिकानेकसंख्याविशिष्टवैश्वानरविधानात् एकमेव उत्पत्तिवाक्यम्, इति न बलाबले विशेषः । ( 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते । यदष्टाकपालो भवति, गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति । यन्नवकपालो भवति, त्रिवृतैवास्मिन् तेजो दधाति । यत् दशकपालो भवति, विराजैवास्मिन् अन्नाद्यं दधाति । यदेकादशकपालो भवति, त्रिष्टुभैवास्मिन् इन्द्रियं दधाति । यद् द्वादशकपालो भवति जगत्यैवास्मिन् पशून् दधाति । यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति एकमेव उत्पत्तिवाक्यम् ) तस्मात् 'सामर्थ्यम्' इति च पूर्वप्रकृतयोग्यापेक्षत्वात् वैश्वदेवपूर्वपक्षातिदेशः । तदीयं हि सामर्थ्यम् अस्मिन् समाम्नायेऽस्ति, न च तदुक्तः परिहारः । तस्मात् विधानार्था इति ।

**गुणस्य तु विधानार्थे तद्गुणाः प्रयोगे स्युरनर्थकाः, नहि तं प्रत्यर्थवत्ताऽस्ति । १८ ॥**

**भाष्यम्**— नैतदस्ति गुणविधयः इति । गुणस्य विधानार्था एते सन्तः पुरोडाशस्य कपालेषु संख्यां विदध्युः । न शक्नुवन्ति यागप्रयोगस्य विधातुम् । द्वादशकपालता हि यागस्य वाक्येन, अष्टाकपालादयः प्रकरणेन । तेन ते यागे न भविष्यन्ति । अपिच अष्टत्वादयः पुरोडाशेन एकवाक्यभूताः प्रकरणं बाधित्वा न यागस्य भविष्यन्ति । यागासंबन्धे च अनर्थकाः, पुरोडाशसंबन्धे फलाभावात् । अर्थवादत्वेन तु वैश्वानरयागस्य स्तुतिरुपपद्यते । तस्मात् अर्थवादा इति ।

**वा**— '**प्रकृताप्रकृते यागे तथा द्रव्येऽपि वा गुणः । द्रव्यं गुणवदेवं च न कथञ्चिद् विधीयते ॥**' प्रकृते तावत् द्वादशत्वावरोधात् नाष्टत्वादयो विधीयन्ते, न च दूरस्थे तदुपादानशब्दाभावात् । न च कर्मान्तरं केवलाष्टत्वादिगुणकं संभवति, द्रव्यदेवतासंयोगप्रत्यक्षयागाश्रवणात् । एतेन पुरोडाशे संख्याविधिः त्रेधाऽपि प्रत्युक्तः ( प्रकृतयागसंबन्धिनि, दूरस्थयागसंबन्धिनि, अपूर्वयागसंबन्धिनि वा गुणविधिः इति त्रेधाऽपि प्रत्युक्तः ) । तथा अष्टाकपालादिपुरोडाशविधानम् ( त्रेधाऽपि प्रत्युक्तम् । तत्र प्रकृते यागे असंभवमाह—) नहि द्वादशकपालपुरोडाशावरुद्धो यागः पुरोडाशान्तरं गृह्णाति । ( दूरस्थे असंभवमाह— ) नापि अननूदिते कर्मणि स्वशब्देन अप्रकृते पुरोडाशविधानं फलतत्साधनासंबद्धं क्वचिदुपयुज्यते । नापि अव्यापारात्मकत्वात् द्रव्यं विधातुं शक्यते । अत एव विश्वजिदादिवदपि नाध्याहारेण फलं कल्प्यते । ( अपूर्वे यागे विध्यसंभवमाह— ) '**वैश्वानरपदं नापि यागायात्रानुषज्यते । विभक्त्यन्तरयोगित्वात् न चर्तेऽ ( च ऋते ) स्मादनर्थकम् ॥**' ( पदोत्तरत्वेन श्लोकं व्याचष्टे— ) स्यादेतत् । वैश्वानरपदानुषङ्गात् अष्टाकपालादिद्रव्यदेवतासंबन्धविधेः यागान्तरसिद्धिरिति, तन्नास्ति । प्रथमाऽन्तेषु द्वितीयाऽन्ताननुषङ्गात् । न च विभक्तिविपरिणामः, अन्यथाऽपि उपपद्यमानत्वात् । यदि हि अनुषङ्गविपरिणामौ अन्तरेण अष्टत्वादिश्रवणमनर्थकं स्यात्, ततः किं वा न क्रियेत, तत्तु स्तुत्यर्थत्वेन उपपन्नतरत्वात् नानर्थकम् । तदा च अनुवादत्वात् विपरिणतविभक्तिसंबन्धेऽपि अदोषः । ( त्रेधाऽपि पुरोडाशविधानं न संभवतीत्युपसंहरति— ) तस्मात् न पुरोडाशविधानम् । न च द्वादशकपाले अष्टाकपालादयः पुरोडाशाः स्वात्मभिर्विभक्ता विद्यन्ते, अष्टत्वादिमात्रविशेषदर्शनात् । ते च अष्टत्वादयः न यागे, नापि पुरोडाशे विधीयन्ते इत्युक्तम् । न च अष्टत्वादीनां द्वादशकपालेन एकवाक्यता तव ( न च इत्यादिशङ्कितुः ) उपपद्यते, नानाविधेय— ( नानाविध— ) प्रयोजनवशेन अर्थैकत्वाभावात् । न च नानाविधानां विभज्यमानानां साकाङ्क्षत्वं विद्यते । यदि च एकं वाक्यं भवेत्, ततः सर्वविशिष्टैकभावनाविधानात् न विकल्पः स्यात् । अष्टत्वादीनां च गुणत्वात् न प्रत्येकं वाक्यपरिसमाप्त्या पृथगनुष्ठानोपपत्तिः । न च संख्यानां समुच्चयः संभवति, संख्यान्तरोपजननेन सर्वाभावप्रसङ्गात् । संख्यान्तरानुपजननसमुच्चयस्तु द्वादशत्वे अष्टत्वाद्यन्तर्भावात् । तथाभूतानां च

द्वादशत्वविधिनैव प्राप्तेः अनुवादत्वापत्तिः। तेन एतै-र्भिन्नैर्वाक्यैः स्वतन्त्रा विधीयन्ते इत्यवश्यं भवता अभ्यु-पगन्तव्यम्। ततश्च द्वादशत्वम् उत्पत्तिवाक्यशिष्टम्, इतराणि तु वाक्यान्तरैः प्रकरणापेक्षैः दुर्बलानि सन्ति न संबध्यन्ते। एवं तावत् वैश्वानरयागो बलवत्तरगुणावरोधात् न अष्टत्वादीन् प्रति इच्छति। अपिच अष्टत्वादयोऽपि नैव अतिसोढाः। (सोढशब्दः सहेः कर्तरिक्ते सिद्धः)। तेऽपि पुरोडाशेन एकवाक्यभूतत्वात् नैव वैश्वानरयागस्य प्राप्नुवन्ति। तत्प्रकरणं बाधित्वा न तस्य भविष्यन्ति। तथा च अतद्गुणाः केवलपुरोडाशसंबन्धे प्रयोगे स्यु-रनर्थकाः। 'नहि तं पुरोडाशं प्रति अर्थवत्ता अस्ति'। (एवं भाष्य—व्याख्यानेन सूत्रं व्याख्याय स्वयमन्यथा व्याचष्टे—) **अथवा** कथमतद्गुणाः, इत्यत आह—(सूत्रम्) नहि तं यागम् अन्यावरुद्धं प्रति अर्थवत्ता अस्ति इति।

**तच्छेषो नोपपद्यते। १९॥**

**भाष्यम्**— इति यदुक्तं तत् परिहर्तव्यम्। इति आभाषाऽन्तं सूत्रम्।

(वार्तिकं तु उत्तरसूत्रे द्रष्टव्यम्।)

**अविभागाद् विधानार्थे स्तुत्यर्थेनोपपद्येरन्। २०॥**

**भाष्यम्**— यदा तु अष्टाकपालादिप्ररोचनार्था अन-र्थका इत्यवगतम्, तदा लक्षणया द्वादशकपालस्य स्तुतिः वैश्वानरयागप्ररोचनार्था भविष्यति। सन्ति हि द्वादश-संख्यायामष्टत्वादयः संख्याविशेषा अविभक्ताः। अतो द्वादशकपालस्य स्तुत्यर्थत्वेन अवयवस्तुतिरुपपद्यते यथा 'शोभनमस्य चक्रस्य नेमितुम्बारम्' 'शोभनमस्याः सेनायाः हस्त्यश्वरथपादातम्' इति। तस्मात् उपपन्ना स्तुतिरिति।

**वा**— (अत्र **सुधा**— 'इति यदुक्तम्' इति भाष्येण 'आभाषाऽन्तमेतत् सूत्रम्' इत्युक्त्वा 'अवि-भागाद्० येरन्' इति सूत्रं परिहारार्थत्वेन भाष्यकृता पृथक् पठितमपि 'यदा तु' इति भाष्यावयवेन आभाषा-सूत्रार्थस्य परिहारसूत्रार्थेन सह एकीकृत्य व्याख्यानात् स्वयमपि तथा व्याख्यातुम् एकीकृत्य पठति। 'इति चेत्' इति पदद्वयं भाष्यकारेण अपठितमपि वृत्त्यन्तरे दृष्टत्वात् वार्तिककृता पठितम्।) **'तच्छेषो नोपपद्यत इति चेदविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन्।'** (यद्यपि अत्र उत्तरवाक्ये नञ् क्वापि न पठ्यते तथापि अर्थानुसारात् 'इति चेन्नाविभागात्' इति नञ्घटितं सूत्रं पठितुं युक्तम्)। **'अष्टत्वाद्यविधानत्वाद् व्यर्थेयं तत्प्ररोचना। तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते॥'** (यद्यपि आनन्दाश्रमीये एतस्य श्लोकस्य पूर्वार्धे तच्छेषसूत्रविवरणत्वेन, उत्तरार्धे च अविभागसूत्र-विवरणारम्भकत्वेन मुद्रितम्, तथापि वार्तिकमते ऐकसूत्र्ये सति प्रकृतश्लोकोऽपि अभिन्नत्वेनैव स्वीकर्तव्यः इति तथा कृतमस्माभिः) यत् विधेयमवधार्यते, तदेव स्तोतव्यम्। द्वादशत्वं चात्र विधेयम्। तस्मात् यथाकथञ्चित् तदेव स्तोतव्यम्। (सौत्रम् अविभागपदं सामीप्यार्थकत्वेन व्याचष्टे—) तत्सामीप्याच्च शक्नुवन्ति अष्टादिशब्दाः तदेकदेशप्रतीतिं कर्तुम्। एकदेशस्तुतिद्वारेण च एकदेशी स्तुतो भवति। तेन एतदुक्तं भवति 'ईदृशोऽयं द्वादशकपालो महाभागः, यस्मिन् क्रियमाणे अष्टाकपाला-दयोऽपि संभाविता भवन्ति। ते च अष्टत्वादयो ब्रह्मवर्च-सादिसिद्धिप्रशस्ताः, तस्मात् प्रशस्तोऽयम्' इति। यत्तु अस्त्येव द्वादशत्वस्य अन्या स्तुतिरिति, **नैष दोषः**। कुतः? **'स्तुतेरपरिमाणत्वाद् यावती हि प्रतीयते। तां सर्वामेकरूप्येण विध्युद्देशः प्रतीच्छति॥'** सर्वत्र हि अल्पैर्बहुभिर्वा अक्षरैः स्तुतयो दृश्यन्ते, श्रोतृप्रकारानेकत्वाच्च क्व चित् काश्चित् अर्थवत्यो भवन्ति। यथैव केषां चित् विध्युद्देशमात्रेण प्रवृत्तौ सिध्यन्त्याम् अन्यार्था स्तुतिराश्रीयते, तथैव अल्पस्तुत्युप-पन्नेऽपि कार्ये महास्तुत्याश्रयणमिति।

**कारणं स्यादिति चेत्। २१॥**

**भाष्यम्**— इति चेत् भवान् पश्यति अर्थवादा इति, कारणमष्टत्वादीनां ब्रह्मवर्चसादि कस्मान्न भवति? ब्रह्मवर्चस-कामस्य अष्टाकपालः। एवमुत्तरेषु यथाकामम्। किमेवं भविष्यति? पुरोडाशस्य गुणविधानेऽपि आनर्थक्यं न भविष्यति। न च लक्षणया द्वादशकपालस्य स्तुतिः कल्पिता भविष्यति। तस्मात् कामेभ्यो विधयो भविष्यन्ति।



**वा**— (स्वयं सूत्रं व्याचष्टे—) **'जनकत्वेन पूता-देरष्टत्वादीनि कारणम्।** (भाष्यकारीयं व्याख्यान-मुपपादयति—) **तेषां कारयितृत्वाद्वा पूतादेः कारणा-भिधा॥'** यदुक्तं द्वादशत्वावरोधात् अनर्थकमष्टत्वादि-विधानं स्तवनं चेति। तत् नानर्थकम्। नित्यं हि द्वादश-कपालता। यस्तु गुणफलानि ब्रह्मवर्चसादीनि प्रार्थयते, तस्य अष्टत्वादीनि द्वादशत्वोपमर्देन निवेक्ष्यन्ते। तथाहि, **'पुरुषार्थसमासत्तेः काम्यं नित्यस्य बाधकम्। विशेषतश्च सामान्ये पूर्वप्राप्ते प्रवर्तनात्॥'** ('नैमित्तिकं तु प्रकृतौ' ३।६।३।१० इति न्यायः पूर्वार्धेनोक्तः। विशेषतः इत्यनेन 'अविशेषेण यच्छा-स्त्रम्' १०।८।८।१६ इति न्यायेनोक्तम्। पूर्व-प्राप्ते इत्यादिना तु 'पौर्वापर्ये' ६।५।१९।५४ इति न्यायेनोक्तम्) पुरुषार्थसिद्ध्यर्थो हि सर्वः प्रयासः इति तत्प्रत्यासन्नं वस्तु बलीयो भवति। दूरे च द्वादशत्वं पुरुषार्थस्य तत्साधनयागद्रव्यसंस्कारार्थकपालपरिच्छेदात्। अष्टत्वादयस्तु तदाश्रिताः सन्तः साक्षात् ब्रह्मवर्चसादि साधयन्ति इति प्रत्यासत्तेर्बलीयांसो भवन्ति। तस्मादर्थ-वन्तः इति। ननु च **'ब्रह्मवर्चसयोगादि फलत्वेन यदीष्यते। स्तुत्यभावाद् विधिः केन वर्तमाना-पदेशिनाम्॥'** तत्र के चिदाहुः 'औदुम्बराधिकरण-पूर्वपक्षन्यायेन अत्र प्रत्यवस्थानम्' इति। **तन्न युक्तम्**, तत्रैव दत्तोत्तरत्वात्। अतः अयमभिप्रायः, 'पूत एव स तेजस्वी' इत्यादिना फलमुच्यते। 'गायत्र्यैवैनम्' इत्यादिस्तुतेः प्रायामिको विधिः। 'यदष्टाकपालः' इत्यादिभिः सार्थवादकैः प्रत्येकं विहितानां यथासंख्येन 'पूत एव' इत्यादिभिः फलसंबन्धः क्रियते।

**आनर्थक्यादकारणम्, कर्तुर्हि कारणानि, गुणार्थो हि विधीयते। २२॥**

**भाष्यम्**—यदि कामाय विधयः, भिन्नानि वाक्यानि भवेयुः। एकं चेदं वाक्यम्, 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्येवमुपक्रान्तम् 'यद् द्वादश-कपालो भवति जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव स तेजस्व्यन्नाद इन्द्रि-यावी पशुमान् भवति' इत्येवमन्तम्। तस्य मध्ये अष्ट-त्वादयः श्रूयमाणा यदि न संबध्येरन्, ततो वाक्यान्तराणि भवेयुः। कर्तुर्हि कारणानि पूतत्वादीनि भवेयुः। स एष गुणार्थोऽत्र विधीयते वैश्वानरयागे 'पूत एव' इत्येव-मादिः। तेन चैते अष्टत्वादयः साक्षाद्धेतुत्वेन संबध्यन्ते। यस्मात् 'गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति' तेन पूत एव सः। यस्मात् 'त्रिवृतैवास्मिँस्तेजो दधाति' तेन तेजस्वी। यस्मात् 'विराजैवास्मिन्नन्नाद्यं दधाति' तेनान्नादः। यस्मात् 'त्रिष्टुभैवास्मिन् इन्द्रियं दधाति' तेन इन्द्रियावी। यस्मात् 'जगत्यैवास्मिन् पशून् दधाति' तेन पशुमा-निति। ततः कामाय विधयः असंभवन्तो यदि अर्थवादा अपि न भवेयुः आनर्थक्यमेवैषां स्यात्। तस्मादकारणं ब्रह्मवर्चसत्वादयः अष्टत्वादीनाम्। तस्मात् अष्टत्वादयो-ऽर्थवादा इति।

**वा**— **'वाक्यानि यावदर्थं स्युर्गुणेभ्यः फल-कल्पने। एकोपक्रमसंहारादेकं चेदं प्रतीयते॥'** पुत्रे जाते द्वादशकपालमिति यदेव उपक्रान्तम्, तदेव अष्टत्वादीनामन्ते 'यत् द्वादशकपालो भवति' इति, 'यस्मिन् जाते एताम्' इति च उपसंह्रियमाणं पश्यामः। तावति च न अष्टत्वादयः पृथक् भवितुं लभन्ते। तदेक-वाक्यता च न स्तुत्या विना उपपद्यते, अर्थान्तरपरताया-मानर्थक्यात्। यदि हि कर्तृसंबन्धीनि एतानि भवेयुः, ततस्तस्य कारणानि प्रयोजकानि स्युः। वैश्वानरसंबन्धीनि तु एतानि। तस्मात् गुणार्थैः अन्यासंभवात् इति स्तुत्यर्थो विधीयते। 'पूत एव सः' इत्येवमादीनां च तच्छब्द-युक्तानाम् 'यस्मिन् जाते' इत्यनेन अपेक्षितत्वात्, न पूर्वैः सह फलत्वेन संबन्धः। न चात्र अनुपयोगः, येन बलात् आच्छिद्य नीयेरन्। न च अष्टत्वादिब्रह्म-वर्चसादीनां एभिर्विभागेन संबन्धः। यत्र तु विभागो 'गायत्र्यैवैनम्' इत्यादौ, तत्र स्तुतित्वमभ्युपगतमेव। अतो या नाम 'पूतः' इत्येवमादीनां फलकल्पना, सा यागमेव प्रति, नाष्टत्वादीन्। प्रथमोपनिपाते तु यागस्यापि स्तुतिरेव, एवं कामकारहितत्वेन फलविध्य-सरूपत्वात्। एतैरेव स्तूयमाने 'यदष्टाकपालः' इत्या-दीनामुपपत्त्यर्थता। तस्मात् न गुणविधयः इति सिद्धम्।

**शा—** गुणविधिः इति चेत्, उच्यते। '**उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते। सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते॥ न चाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत्। न द्वादशकपालस्य ह्यविवक्षोपपद्यते॥**' इति प्राप्ते, अभिधीयते। '**फलार्थेषु गुणेषु स्याद् वाक्यभेदोऽर्थभेदतः। उपक्रमोपसंहारसाम्याच्चात्रैकवाक्यता॥**' तस्मादर्थवादः। १२.

**सोम—** वैश्वदेवादिशब्दवैषम्येण प्रत्यवस्थानात् **संगतिः**। **सूत्रार्थस्तु—** पूर्ववन्तः पूर्वप्राप्तिमन्तः वैश्वदेवादिशब्दाः खलु गुणविधानार्थाः न भवन्ति, अस्मिंस्तु अष्टाकपालादिसमाम्नाये तत्सामर्थ्यं स्यात् इति।

**वि—** 'यद् द्वादशकपालेष्टेर्वैश्वानर्या अनन्तरम्। श्रुतमष्टाकपालादि तद् गुणो नाम वा स्तुतिः॥, अन्तर्भावादष्टताऽऽदेर्नाम स्यादग्निहोत्रवत्। द्रव्यं द्रव्यान्तरे नो चेद् गुणस्तर्हि फले त्वसौ॥, वाक्यैक्यमुपसंहाराद् विस्पष्टं तत्तु बाध्यते। नानागुणविधौ तस्मादंशद्वाराऽशिसंस्तुतिः॥'

**गुरुमतमाह—** 'अगुणत्वादनामत्वादमन्त्रत्वादनन्वये। अष्टत्वादप्रमाणं, चेन्नार्थवादतया ऽन्वयात्॥' १२.

**भाट्ट—** 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते' इत्यनेन यागं विधाय 'यदष्टाकपालो भवति, गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति' इत्यादिना अष्टाकपालनवकपालदशकपालैकादशकपालद्वादशकपालान् अनूद्य 'यस्मिन् जाते एतामिष्टिं निर्वपति, पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इति श्रुतम्। तत्र द्वादशत्वे अष्टत्वादेः प्राप्तत्वात् अष्टाकपालशब्दः वैश्वानरयागनामधेयम् इत्येकः पक्षः। स्वरूपेण प्राप्तावपि परिच्छेदकत्वेन प्राप्त्यभावात् गुणविधयः एव एते। अष्टत्वमष्टाकपालं द्रव्यं वा पूर्वयागे विधीयते। उपक्रमोपसंहारैक्येन चैकवाक्यत्वप्रतीतेः, न द्वादशकपालस्योत्पत्तिशिष्टता। अथवा अस्तु वाक्यनानात्वम्। तथापि 'यद् द्वादशकपालो भवति' इत्यनेनैव तद्विधिः। वैश्वानरवाक्ये तत्पदमनुवाद एव इति द्वितीयः पक्षः। ब्रह्मवर्चसादिरूपफलोद्देशेन प्रकृतयागाश्रिता गुणा एव अष्टाकपालादयो विधीयन्ते इति तृतीयः। सिद्धान्ते तु संभवत्येकवाक्यत्वे तद्भेदस्य अन्याय्यत्वात् प्रकृतयागस्यैवेयं सर्वा स्तुतिः। यदङ्गभूतद्वादशकपालावयवः अष्टाकपालादिरपि एकैकफलसाधनम्, तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कः संदेह इति यागस्तुतिः। अष्टाकपालपदम् आग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्या अष्टत्वाश्रयकपालाश्रयित्वसादृश्येन द्वादशकपालावयवे गौणम्। तेन च अवयवद्वारा अवयवी द्वादशकपालो लक्ष्यते। तेन लक्षणया यागस्तुतिरिति। इदं चाधिकरणम् औदुम्बराधिकरणन्यायेन पुनरुक्तमपि शिष्यशिक्षाऽर्थमुक्तमिति ध्येयम्। १२.

**मण्डन—** 'अष्टसंख्याऽवयुत्योक्ता।'

**शंकर—** 'अष्टत्वाद्यर्थवादत्वम्।' १२.

* आहाराद्यावश्यककार्यानुरोधेन सातत्यबाधावश्यम्भावेन **जातेष्टिन्यायेन** प्राकरणिककालोपसंग्रहस्यापि सिद्धान्ते इव उपपत्तेः 'मासमग्निहोत्रं जुहोति' इत्यत्र। कौ. २।३।११।२४ पृ. ७६, * दाक्षायणयज्ञे निमित्तश्रुत्या सातत्यानुष्ठाने प्रसक्ते आहारविहारादिवशेन तद्बाधात् जातेष्टिमासाग्निहोत्रन्यायेन पौर्णमास्याद्यनुग्रहेऽपि सातत्यस्य अत्यन्तबाधायोगात् पुनःपुनरनुष्ठानोपपत्तिः। २।३।४।९ पृ. ४१, * 'मासमग्निहोत्रं जुहोति' इत्यत्र अत्यन्तसंयोगवाचिद्वितीयान्तमासपदोपदिष्टसातत्यानुरोधेन आतिदेशिककालबाधात् सर्वदैव कर्तव्यत्वापत्तिरिति न च वाच्यम्, आहारविहाराद्यावश्यककार्यानुरोधेन सातत्यबाधावश्यम्भावे जातेष्टिन्यायेन आतिदेशिककालानुरोधेनापि तत्संपादनस्य संकर्षे वक्ष्यमाणत्वात्। २।२।५।१६ पृ. २०५.

* **जातकर्मणि** तात्कालिकी शुद्धिः शास्त्रेण दर्शिता बालकविपत्तिपरिहाराय। **वि.** ४।३।१९, * **जातकर्मानन्तरं** स्तनप्राशनं विहितम्, तदुत्तरं जातेष्टिः कर्तव्या। ४।३।१८, तत्रापि आशौचादूर्ध्वमिष्टिः कर्तव्या। ४।३।१९.

* **जातपुत्रः** कालं न शौचं च निमित्ते पुत्रजन्मनि उपसंहृत्य दशरात्रस्य परस्तात् अमावास्यायां पौर्णमास्यां वा जातेष्टिं कुर्वन् नातिपतति अधिकारम्। **कणिका.**



पृ. ३२६. * 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इति वयोऽवस्थाविशेषो लक्ष्यते। **व्यवहारमयूखः.** पृ. ५१.

* **जातिः** अनुगतैकाकारप्रत्ययवेद्या। **सु.** पृ. ३४४. * जातिः अपि ब्राह्मणत्वादिः सत्तममनुपादेयम्। **बाल.** पृ. ९७.

☒ जातिः। १।४।१२।२३-२॥

'आग्नेयो वै ब्राह्मणः' 'अग्निर्वै ब्राह्मणः' 'ऐन्द्रो राजन्यः' 'वैश्यो वैश्वदेवः' इति श्रूयते। तत्र आग्नेयशब्दः ब्राह्मणस्य स्तावकोऽर्थवादः। आग्नेयादिशब्दश्च ब्राह्मणादौ गौणः। गुणश्च जातिः प्रजापतेर्मुखात् जन्म, इन्द्रराजन्ययोश्च बाहुभ्यां जन्म, विश्वेषां देवानां वैश्यस्य च ऊरुभ्यां जन्म इति। **के.**

* जातिः एव मीमांसकानां आकृतिः पदार्थः। **बाल.** पृ. ७. * जातिः गुणद्वारकशब्दप्रवृत्तिहेतुः। जातिर्जननम्। सृष्टिकाले अग्निब्राह्मणौ ब्रह्मणो मुखाज्जातौ। तेन मुखजत्वेन गुणेन 'अग्निर्वै ब्राह्मणः' 'आग्नेयो ब्राह्मणः' इत्यादिः प्रयोगः। **वि.** १।४।१४. * जातिः गोत्वादिः 'पिण्डव्यङ्ग्यैव गोत्वादिर्जातिर्नित्यं प्रतीयते। तेन भिन्नेषु पिण्डेषु जातिरेका प्रतीयते॥' **श्लोवा.** स्फोटवादे ३७. * जातिः नास्त्येवेति चार्वाकैकदेशिनः। **मणि.** पृ. २२. * जातिः न संस्कार्या अमूर्तत्वात्। **वि.** ३।१।७. * जातिर्नित्या। **सु.** पृ. ८९८. * जातिः व्यक्तिलक्षणार्था। **टुप्.** ११।३।१५।४८. * जातिः संस्थानविशेषविशिष्टव्यक्त्याश्रया। **सु.** पृ. १३२६. * जातिः सर्वगता न वा इति विचारः 'आकृतिवादः' इति विन्दौ शास्त्रदीपिकाप्रघट्टके द्रष्टव्यः। तत्र उभयथाऽपि स्वीकृतम्। **के.**

* '**जातिमेवाकृतिं** प्राहुर्व्यक्तिराश्रीयते यया' (**श्लोवा.** आकृतिवादे ३.)। **बाल.** पृ. ७. * **जातेः** अनुपादेयत्वात्। **सु.** पृ. ९१४, * जातेः अपि जात्याश्रयत्वं संभवति, निःसामान्यानि सामान्यादीनि इति वैशेषिकपरिभाषायाः प्रतीतिविरोधेन अयुक्तत्वात्। पृ. ३५१, * जातेः जात्याश्रितत्वाभावः इति वैशेषिकाः। पृ. ३५१, * जातेः सिद्धत्वेन, काम्यतया अधिकारिविशेषणत्वायोगः। पृ. ९१४. * **जातौ** एव शक्तिः (अनोवासःशब्दयोः)। जातिस्तु तक्षणादिक्रियाभिव्यङ्ग्या तज्जानितसंयोगविशेषादिरूपफलव्यङ्ग्या वा इति तदुत्तरमेव शब्दप्रयोगः। **भाट्ट.** ७।३।९. * जातौ एव शक्तिः, व्यक्तिलाभस्तु आक्षेपात् इति विवेचनम् 'प्रातिपदिकार्थः' इति विन्दौ द्रष्टव्यम्। **के.** * **जातौजातौ गुणान्तरम्।** '**सर्वपुंसां स्वसंवेद्यं प्रतिजाति गुणान्तरम्। क चित्तस्य विशेषेण क चित् सामान्यतोऽभिधा॥**' सर्वजातिषु तावत् स्वव्यक्तिमात्रानुसारिणः शुक्लकृष्णरक्तत्वादयो विलक्षणाः प्रत्यक्षमुपलभ्यन्ते। तत्र क्वचित् सतो विशेषस्य वाचकः शब्दो नास्तीति प्रमाणान्तरगम्यविशेषणमङ्गीकृत्य सामान्यमात्रेणाभिधेयत्वम्। क्वचित् पुनः शोणादिविशेषसद्भावात् विशेषरूपेणाभिधानम्। तथा क्वचिदपभ्रंशेन कश्चिद्विशेषः प्रतिदेशमभिधीयते यथा रौहिणिका गौरिति, न कदाचिदश्वायां शाट्यां वा रक्तगुणायाम् एवमभिधानं भवति। तस्माज्जात्यन्तराण्येव शोणत्वकर्कत्वगौरत्वादीनि अश्वमनुष्यादिसंबन्धीनि अभिधीयमानानि तेष्वपि प्रत्ययमादधति। **वा.** ३।४।४।१३ पृ. ९१९.

☒ **जात्यधिकरणम्।** 'आग्नेयो वै ब्राह्मणः' इत्यादयः अर्थवादाः, न गुणविधयः॥

**जातिः। १।४।१२-२।२३-२॥**

**भाष्यम्—** 'आग्नेयो वै ब्राह्मणः' 'ऐन्द्रो राजन्यः' 'वैश्यो वैश्वदेवः' इत्येवमादयः श्रूयन्ते। तत्र किं गुणविधयः, अर्थवादा इति संदेहः। गुणविधय इति ब्रूमः। एवमपूर्वमर्थं विधास्यन्ति, इतरथा अर्थवादाः सन्तोऽनर्थकाः स्युः। न विधिः, विध्यन्तरस्य भावात्। तस्मात् संवादः। तस्य संकीर्तनं विधिस्तुत्यर्थम्। अनाग्नेयादिषु आग्नेयादिशब्दाः केन प्रकारेण? गुणवादेन। को गुणवादः? अग्निसंबन्धः। कथम्? एकजातीयकत्वात्। किमेकजातीयकत्वम्? 'प्रजापतिरकामयत प्रजाः सृजेयमिति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दः, रथंतरं साम, ब्राह्मणो मनुष्याणामजः पशूनाम्, तस्मात्ते मुख्याः, मुखतो ह्यसृज्यन्त। उरसो बाहुभ्यां पञ्चदशं निरमिमीत, तमिन्द्रो देवताऽन्वसृज्यत, त्रिष्टुप् छन्दः, बृहत् साम, राजन्यो

मनुष्याणाम्, अविः पशूनाम्, तस्मात्ते वीर्यवन्तः, वीर्याद्धि असृज्यन्त। ऊरुभ्यां मध्यतः सप्तदशं निरमिमीत, तं विश्वे देवा देवता अन्वसृज्यन्त, जगती छन्दः, वैरूपं साम, वैश्यो मनुष्याणाम्, गावः पशूनाम्' एवमुक्ते सति एकस्मिन् एवंजातीयके विज्ञाते अन्योऽपि तज्जातीयको हृदयमागच्छति। तस्मादर्थवादाः।

**वा—** **जातिः**। तत्र आग्नेयादिशब्दानां ब्राह्मणादिषु मुख्यत्वमेव, येनकेनचित्संबन्धेन तद्धितोत्पादात्। देवतासंबन्धः एव वाऽस्ति। नहि यदेव त्यज्यते तस्यैव केवलं देवतासंबन्धः, त्यक्तुरपि तेनैव संबन्धेन सैव देवता भवति। यथा च वक्ष्यति 'भवति पुरुषस्यापि यष्टुः सा देवता' (भा. ५।४।६।१९) इति। तस्मादनुदाहरणत्वम्। अतो यत्र अग्निर्वै ब्राह्मण इत्यादिप्रयोगाः तदुदाहर्तव्यम्। अग्निर्हि प्रतीतो मुखप्रभवत्वसामान्येन ब्राह्मणादीन् उपस्थापयति। जातिरिति चात्र जन्मोपादानं विवक्षितम्। यद्यपि च तथा वस्तु नास्ति, तथापि अर्थवादान्तरे तथोक्तत्वात् इह तच्छन्दनिमित्तता प्रतिपत्स्यते।

**शा—** 'अग्निर्वै ब्राह्मणः' इत्यादिष्वपि पूर्ववत् नामधेयत्वं गुणविधित्वं च उद्भाव्य अर्थवादत्वं साधनीयम्। निमित्तान्तरकथनार्थं तु सूत्रान्तरम्। एवमुत्तरसूत्राण्यपि द्रष्टव्यानि। १४.

**सोम—** पूर्वन्यायातिदेशात् **संगतिः**। न च प्रपञ्चस्य अनादित्वेन सृष्ट्याद्यभावात् अयमर्थो न सिद्ध इति **वाच्यम्**। इतिहासपुराणप्रामाण्यबलेन सृष्ट्यादेः प्रामाणिकत्वात्। अस्यार्थस्य असत्यत्वेऽपि संकीर्तनमात्रेण जननस्य निमित्तत्वोपपत्तेश्च। अनेनैवाभिप्रायेण तदर्थसद्भावे नात्यन्तं यत्नः कर्तव्यः।

**वि—** 'आग्नेयो ब्राह्मणोऽत्रापि पूर्ववत् सर्वनिर्णयः। द्वारं तु मुखजन्यत्वमाग्नेयत्वेन संस्तवे॥' ब्राह्मणस्य संस्तवे। १४.

**भाट्ट—** 'अग्निर्वै ब्राह्मणः' इत्यत्र पूर्ववदेव अग्निशब्दो ब्राह्मणे गौणः द्वयोरपि अग्निब्राह्मणयोरेकब्रह्ममुखप्रभवत्वात्। अग्निजननसमानजातीयजननमेवात्र गुणः। १४.

**मण्डन—** 'अग्निर्वै ब्राह्मणो जात्या।' १३.

**शंकर—** 'जात्याऽपि क्वापि गौणीष्टा।' १४.

जात्या जन्मना।

* अर्थवादानाम् अवयवार्थपरत्वाभावे **जात्यधिकरणविरोधः**। तत्र मुखजातत्वगुणयोगात् गौण्या वृत्त्या ब्राह्मणे अग्निशब्दस्य वृत्तेर्व्यवस्थापनात्। **कु.** १।२।१।१८ पृ. ३१.

**Ⅲ जात्यन्तरेषु भेदः स्यात्, पक्तिवैषम्यात्।** ११।४।१०।४०॥

जात्यन्तरेषु भिन्नजातीयेषु पशुषु सत्सु यथा ऐकादशिनेषु कुम्भीशूलवपाश्रपणीनां भेदः स्यात्। पक्तिवैषम्यात् पाकवैषम्यात्। अविमांसानि अल्पेन कालेन पच्यन्ते, अजमांसानि तु ततो विलम्बेन। तस्मात् जातिभेदे कुम्भ्यादिभेदः इति सिद्धान्तः।

**वृद्धिदर्शनाच्च।** ४१॥

सिद्धान्ती हेत्वन्तरमाह। सौत्रामण्यां गोऽजाविषु पशुषु शूलानां वृद्धेः आधिक्यस्य दर्शनात् 'शूलैश्च मासरेण चावभृथमभ्यवयन्ति' इति बहुवचनात्। तस्मात् जातिभेदे कुम्भ्यादिभेदः। **के.**

* **जात्यभावो** वैयाकरणपक्षे। **सु.** पृ. १४२१.

* **जात्याद्यवभासीनि** तावत् (जातिनामगुणक्रियाद्रव्याणि) एतानि ज्ञानानि उत्पद्यन्ते। न च अविद्यमानमेव आकारं ज्ञानमवगमयति। स्वलक्षणरूपवत् सत्त्वेनावभासनात्। तत्र विद्यमानता कदाचित् बहिरर्थरूपतया, कदाचित् ज्ञानाकारतया। तत्र यदा विज्ञानं प्रत्यक्षं न भवति इति स्थितम्, तदा पारिशेष्यात् अर्थाकारतैव अवशिष्यते। तथा च विद्यमानार्थाकारग्रहणात् न कल्पनारूपता (इति निरालम्बनखण्डनम्)। **ऋजु.** पृ. ४५. * **जातिगुणयोः** प्रातिपदिकार्थत्वम्। **सु.** पृ. ७३९. * **जातिगुणक्रियाद्रव्येषु** न साधारणाकारावमर्शोऽस्ति। **ऋजु.** पृ. १२०.

* **जातिग्रहणे** वृक्षत्वादिजातिग्रहणे आलोक–इन्द्रिय–अनेकपिण्डानुस्यूति–शब्दस्मरण–व्यक्ति–महत्त्व–संनिकर्ष–आकारविशेषादयः कारणम्। **वा.** १।२।१।२. पृ. १०९.



**Ⅲ जातिनैमित्तिकं यथास्थानम्।** ५।३।२।३॥

अन्तरागर्भिण्यधिकरणम्। 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इत्याम्नायते। तत्र 'पौण्डरीकाणि बर्हींषि भवन्ति' इति विहितम्। प्रकृतौ बर्हिःस्तरणमन्त्रः 'स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरमुया शयाना। दर्भैः स्तृणीत हरितैः सुपर्णैर्निष्का इमे यजमानस्य ब्रध्ने॥' इति। स चोदकेन मौद्गे प्राप्तः। तत्र दर्भैः इति जातिशब्दः, हरितैः इति नैमित्तिको गुणशब्दः। इमौ नोहितव्यौ, ऊहितव्यौ वेति विचारे सिद्धान्तमाह। जातिनैमित्तिकं जातिश्च नैमित्तिकश्च तयोः समाहारद्वंद्वे जातिनैमित्तिकं इदं शब्दद्वयं यथास्थानम् ऊहितव्यम्। जातिशब्दं स्तरणे, नैमित्तिकं स्तरणसाधने द्रव्ये। 'पुण्डरीकैः स्तृणीत रक्तैः सुपर्णैः' इति ऊहः। इति सिद्धान्तः। **के.**

* जातिनैमित्तिकं यथास्थानम् इत्यधिकरणे 'मौद्गं चरुं निर्वपेच्छ्रियै श्रीकामः' इति कर्मणि 'पौण्डरीकाणि बर्हींषि भवन्ति' इति विहितेषु पुण्डरीकेषु प्राकृते हारित्यगुणप्रकाशके 'दर्भैः स्तृणीत हरितैः सुपर्णैः' इति मन्त्रे अतिदिष्टे हरितपदस्थाने रक्तपदमूहितव्यम् इत्युक्तम्। **बाल.** पृ. ६४.

* **जातिन्यायेन** अग्निष्टोमशब्दः संस्थावचनोऽपि **व्यक्तिन्यायेन** ज्योतिष्टोममेव प्रचुरप्रयोगादभिधत्ते पार्थशब्द इवार्जुनम्। **भाट्ट.** २।३।१०.

* **जातिव्यक्त्योः** भेदाभेदः। **मणि.** पृ. २३.

* जातिव्यक्त्योः भेदाभेदविचारः 'आकृतिवादः' इति बिन्दौ शास्त्रदीपिकाप्रघट्टके द्रष्टव्यः। **के.**

* ननु प्रभातदाश्रययोरिव जीवब्रह्मणोर्जातियोगमात्रेण गजाश्वगवादिवत् **जातिव्यक्तिन्यायेन** श्रुतिस्मृतियुक्त्यनुभवव्यवहारबलात् देशकालभेदाभेदः सिद्धः इति यदुक्तं तदसंगतम्, तत्संसारदशाविषयत्वात्। **श्रीकर.** ३।२।२७ ब्रसू.

* अग्निष्टोमशब्दस्य **जातिशक्तिन्यायेन** संस्थावाचकस्यापि व्यक्तिन्यायेन स्वसंबन्धिक्रतूपस्थापकत्वात् ज्योतिष्टोमपरत्वम्। (जातिशक्तिन्यायः आकृत्यधिकरणम्)। **कौ.** २।३।१०।२२ पृ. ६८. * **जातिशाखानां** व्यक्तिलक्षणाऽर्थत्वं व्यक्त्यनपेक्षाया जातेः साधनत्वायोगात्। **सु.** पृ. १५२२.

* **जातिसाधनम्** (जातिनिर्णयः। प्रकरणपञ्चिका) '**बहुधा जातिविषये विवदन्ते विपश्चितः। प्रभाकरमतेनायं तेषां प्रत्यास उच्यते॥ १॥**' केचिदाचक्षते जातिरिति विकल्पविलसितमिति। एके तु सतीमपि जातिमाश्रयेभ्योऽभिन्नामनुमन्यन्ते। अन्ये तु भिन्नामप्यनुमेयामाहुः। अपरे तु भिन्नाभिन्नामिच्छन्ति। तथा च अजातावपि जातिव्यवहारो बहुलमुपलभ्यते केषांचिदिति। तन्निराकरणायेदमारभ्यते।

**जातिराश्रयतो भिन्ना प्रत्यक्षज्ञानगोचरा। पूर्वाकारावमर्शेन प्रभाकरगुरोर्मता। २॥** नन्वाश्रय एव द्रव्यम्, जातिरसदिति **सौगताः**। तथाहि, न परमाणुषु चतुर्विधेषु पार्थिवाप्यतैजसवायवीयेषु जातिराश्रिता अभिमता, अनुवृत्ताकारप्रत्ययवियोगात्। भिन्नेषु यदभिन्ना जातिरुपेयते तत्र अनुवृत्ताकारावभासिनी मतिराविर्भवति। याऽपि चेयं परमाणुरिति मतिः, साऽपि परिमाणलक्षणगुणकारणिका **मीमांसकैरपि** संगीर्यते। पृथिवीत्वादिकमपि तत्तदसाधारणगन्धादिगुणसमवायमात्रलब्धात्मलाभायां पृथिव्यादिबुद्धौ निबन्धनम्। न च स्थूलेषु द्रव्येषु जातिः समवेयात्? तेषामेव दुरुपगमत्वात्। न खलु स्थूलद्रव्यसंभवो घटते। तथाहि, द्व्यणुकादिक्रमेण स्थूलद्रव्यान्तरारम्भकत्वाऽनुपपत्तेः। नचैव एकैकद्रव्यव्यतिरिक्तम् अपरमारम्भकमस्ति। संयोगोऽपि च तयोरनुपपन्न एव, स हि नैकैकद्रव्यसमवेतः। नाप्येकद्रव्यसमवेतः, एकैकातिरेकेण अनेकस्यानुपपत्तेः। अनेनैव मार्गेण त्र्यणुकस्य त्रिभिर्द्व्यणुकैरारम्भणीयस्य महिमगुणशालिनः संभवो निरस्तः। तदेवं दूरीभूता स्थवीयसामवयविनाम् आरम्भसंकथा। अपि च अवयविनः किमवयवेषु प्रत्येकं कार्त्स्न्येन वृत्तिर्यासङ्गेन वेति चिन्तनीयम्। न तावत् कार्त्स्न्येन वृत्तिमुपलभामहे, एकैकावयवगतस्य तस्य अप्रतिपत्तेः। एकैकावयवगते च कम्पे रागे वा सकलस्यावयविनः कम्परागप्रतीतिप्रसङ्गात्। तथा अवयवान्तरे च कम्परागविरहे कम्परागविरहसमासक्तिः। अवयवी च कम्पेत न कम्पेत, रज्येत न रज्येत चेति विषमां दशामाविशेत।

नापि व्यासङ्गेन अवयविनो वृत्तिः, अवयवान्तरविरहात्। अवयवशालिनो हि (न) केन चिदवयवेन क चन, केन चित् क चनेति व्यासङ्गिनी वृत्तिरुपपत्तिमती। किञ्च एकैकत्रावृत्तेः अवृत्तिरेव, एकैकातिरिक्तानेकाभावात्। किञ्च सकलावयवग्रहणे एव नियमेन अवयवी ज्ञायेत, न च तथा संभवति ? अवयवान्तरेण अवयवान्तरतिरस्कारात्। न च प्रकारान्तरेण वृत्तिरिति वदितुं शक्यम्, अनुपपत्तेः प्रकारान्तरस्य। अवयवेभ्यश्च अवयवी व्यतिरिच्यमानः अव्यतिरिच्यमानो वा न प्रमाणेन संगच्छते। व्यतिरिक्तो हि तद्ग्रहेऽपि ग्रहणं कदाचिदनुभवेत्। न खलु भिन्नयोः सहोपलम्भनियमो घटयोरिव, तद्वदवयव्यपि भिद्यमानो नावयवैरेव सहोपलभ्येत। कस्यां चिदपि दशायामननुभूयमानेषु अप्यवयवेष्वनुभूयेत। न चावयविनमवयवानुभवमन्तरेण केचिदुपलभन्ते। अव्यतिरिच्यमानस्तु नास्त्येवेति वचनभङ्गिमात्रेणोक्तं भवति। तदेवम् अवयविद्रव्यमुपपत्तिभिः अनुसंधीयमानमेकान्ततो लीयते। कथं तर्हि स्थूलावभासिनी मनीषा समर्थनीया ? इत्थम्, उत्तराधरभावेन निरन्तरमुत्पन्नाः परमाणवः एव समधिगतैन्द्रियकज्ञानजननयोग्यदशाविशेषाः प्रत्यक्षमीक्ष्यन्ते। तांस्तथानुभवतः तद्बलभावी मानस एव स्थूलविकल्पो विजृम्भते, दूरादिव तरुषु निरन्तरेषु समनुभूयमानेषु वनमिति मतिः। अतः स्थवीयसां द्रव्याणामाश्रयाभिमतानामयोगात् जातिरपि तदाश्रिता नाभ्युपगमर्महति। अपिच जातिरपि नेन्द्रियज्ञानेन प्रतीयते, तस्या नित्यत्वेनाभ्युपगमात्। नहि नित्यं कस्मै चित् कार्याय पर्याप्तम्। तद्धि न शक्यस्वभावम्, नित्यं कार्योदयप्रसङ्गात्। अशक्तस्वभावं तु नित्याविचिकित्सनाय अशक्तिकं न किञ्चित् कुर्यात्। न च अजनकमिन्द्रियज्ञानमनुभवति ? यो हि विषयः स्वस्य अन्वयव्यतिरेकौ ज्ञानमनुकारयति स प्रत्यक्षः। किञ्च, समुन्मिषितचक्षुषः चिराय विषयान्तरानुसंधानव्यापृतस्य चित्तस्य पुरोवर्तिनीं स्वस्तिमतीं कामाक्षीं वा (गां) साक्षात्कुर्वाणस्य न जातिरपरा अवभासते। अन्यच्च जातिरसौ पिण्डैः सहोत्पद्यते विनश्यति वा, तथोपगमे स्वरूपहानिप्रसङ्गात्। एका हि जातिरनेकाधिष्ठाना प्रतिज्ञायते। उत्पत्तिमती विनाशिनी चान्याऽन्या स्यात्, विरुद्धधर्माध्यासस्य भेदापादकत्वात्। सेयं नित्या जातिरुदितवत्यां व्यक्तौ प्रतीयमाना नान्यत आगता, निष्क्रियत्वात्। न च तत्रैवासीत्, प्रागप्रतीतेः। न च स्थितिरपि युक्तिमती, व्यक्तिरेव हि तस्या देशो नाकाशादिः। अनुत्पन्ना च व्यक्तिरिति क्वाऽवतिष्ठताम् आकृतिः। न चोत्पाद्येऽपि अवतिष्ठते। तदेषा जातिरवतिष्ठते नावतिष्ठते चेति संकटमापतितम्। किञ्च व्यक्तेरभिन्ना भिन्ना वा उभयरूपा वा जातिरास्थेया। तत्र नाभिन्ना, तथाभावे व्यक्त्या सहोत्पादे विनाशे वा स्वरूपापहारापत्तिरिति पुरस्तादुपन्यस्तम्। व्यक्तिमात्राङ्गीकारे च कोऽस्मत्पक्षस्य भेदः इत्यपि चिन्तया अन्तः सीदन्तु बहवः। अतो व्यक्तिमात्रमेव तत्त्वमिति वदतां साहायकमेवाचरितम् अनतिरेकिणीं जातिमुररीकुर्वाणैः। भिन्नत्वेऽपि पिण्डग्रहणमन्तरेण ग्रहणापत्तिः उभयप्रतीतौ च संबन्धप्रतीतिसमासक्तिः अस्त्येवेति चेत् ? महदिदं वैयात्यम्। कः खल्विह गवि गोत्वमिति मतिमभ्युपगच्छेत्, अन्यत्र निरस्तत्रपायन्त्रणात्। भिन्नत्वे च वृत्तिप्रकारो दुर्निरूप एव, किं व्यासङ्गिनी वृत्तिरुत प्रत्येकपरिसमाप्तिमतीति ? एकत्र परिसमाप्तौ अन्यत्र न वर्तेतेति पुनरपि स्वरूपापहारः। अव्यासङ्गोऽपि कालत्रयवर्तिनीषु व्यक्तिष्वनुपपन्न एव। प्रत्येकं च गौरिति प्रत्ययो विकल्पमात्रमित्यङ्गीकृतं स्यात्। न चोभयरूपता, विरोधात्। न चोपलम्भबलेन विरोध एव नास्तीति चतुरस्रम्, तथाविधस्योपलम्भस्यैव असंभावनीयत्वात्। अभिन्नाकारबुद्धिबोध्यं हि वस्तु अभिन्नमिति लौकिकाः, विलक्षणाकारबोधविषयश्च भिन्नः, तत्र यदि विलक्षणाकारप्रतीतिसमये द्वे वस्तुनी विलक्षणेनाकारेण अवभातः, तदा अभेदप्रतीतिदशायामेक आकारः अनुभवनीयः ! स जातिभागस्य पिण्डभागस्य वा तत्रैकद्विरवभासोऽयं स्यात् न तु जातिजातिमतोरभेदावभासः। अथ विलक्षणावपि आकारौ तादात्म्येन अवसीयेते इति मतम्। तत्रापि पर्यनुयोजनीयः किमिदं तादात्म्यं नामेति ? यद्येकाकारतेति ब्रूयात् तर्हि पूर्वोक्तमेव दूषणमात्मसात् कृतम्। शब्दयोः सामानाधिकरण्यम्, तादात्म्यमिति चेत्, अयुक्तमेतत् 'गौर्वाहीकः' इत्यादौ अतादात्म्येऽपि



दर्शनात्। उपचारस्तत्रेति चेत्, अत्रापि भिन्नजातिवादिन उपचारमेव मन्यन्ते। वयं तु विवक्षामात्रपरतन्त्राः शब्दा न वस्तुव्यवस्थापनाय ईशत इति सर्वत्र मन्यामहे। कथं तर्हि नानाभूतासु व्यक्तिषु बुद्धिरनुवृत्तमाकारम् उल्लिखन्ती समुपजायते ? तेनास्या एव बुद्धेर्द्रढिम्नः कारणमनुमास्यामहे, अस्ति तद्विशेषणं यदुपरागवशेन इयम् अभिन्नाकारानुसंधायिनी धीरुदीयते इति। तदपि न जातिसाधनसमर्थम्। कार्यभूता हि बुद्धिरेषा कारणमाक्षिपन्ती यदनन्तरमेवोपजायते तदेव कारणं कल्पयति, न पुनरप्रतीतमपरमपि किञ्चिदुपस्थापयति। सा चेयं स्वलक्षणविषयदर्शनसमनन्तरभाविनीति ता एव व्यक्तयः स्वनिर्भासाः बुद्धीरुपजनय्य तन्मुखेन तामेकाकारानुभासिनीं धियमाविर्भावयन्ति। नितान्तभेदवतीनां च व्यक्तीनां कासां चिदेव महिमा, न सर्वासामिति किमनुपपन्नम् ? यथा हि भिन्ना अपि चक्षुरालोकमनस्का एव सामग्रीसमुपनिपतिताः एकविज्ञानोदयलक्षणं कार्यमारभन्ते, तथा व्यक्तयोऽपि किं नारभन्ते इति नेदं प्रतिपत्तिकठिनम्। सा चेयं स्वाकारेण अभेदेन आत्यन्तिकभेदयोगिनीनामपि व्यक्तीनाम् अभेदं संपृचन्ती संपृक्तिरित्यनुगीयते। एषा च मनीषा न स्वलक्षणं विषयीकरोति, तस्य विशदावभासित्वात्, अस्याश्च अभिलापसंसर्गयोग्यार्थप्रतिभासत्वात्, अभिलापानां च विशदाकारमवभासितुमशक्तेः, अभिलापमात्रेण तथाविधप्रतिपत्त्यभावात्। तेनैषा न स्वच्छाकारावभासिनी। ननु एतत् प्रतीतिपराहतमुदितम्, गौरयमिति बुद्धौ विशदावभासात्। उच्यते, न विशदावभासित्वमवजानीमहे। तत्तु समानकालभाविनो निर्विकल्पप्रत्ययस्य स्वलक्षणावलम्बिनः प्रसादात्, तदभावे तथात्वानुपलम्भात्। न चैतद्वाच्यम् एकमेव वस्तु इन्द्रियैर्निराकारमनुभूयते, शब्दैश्चाविशदावभासमिति। भिद्यमानेऽपि बोधोपाये बोध्याभेदे बोधवैलक्षण्यानुपपत्तेः। नियताकारं च स्वलक्षणम्, नियताकारश्च अस्यां बुद्धौ चकास्ति, तदेवं विशदाविशदतया नियतानियततया च स्वलक्षणस्य विकल्पाकारस्य च भेदे सत्यपि विकल्पाः साक्षात् परम्परया वा स्वलक्षणविषयदर्शनप्रभवतया स्वलक्षणग्रहणाभिमानिनो जायन्ते। तत एव तत्र प्रवर्तयन्तः पुरुषं व्यवहाराङ्गभावमनुभवन्ति पारम्पर्येण। वस्तुनि प्रतिबन्धात् अवस्त्वपि प्रतिबद्धं भवति, मणिप्रभायां मणिबुद्धिवत्। यथा हि खलु मणिप्रभायां मणिविषयायां मणिकिरणविषयिणी मणिबुद्धिः अयथार्थतया भेदमजुषमाणाऽपि मणिमनुप्रतिबद्धेति मणिसमधिगमनिमित्तं भवेत्, तथेयमपि वस्तुतः स्वलक्षणमगृह्णत्यपि स्वलक्षणात् दर्शनम्, दर्शनतो विकल्पः, इति स्वलक्षणप्रतिबद्धा सती तत्प्राप्तये प्रभवति। निर्विकल्पकप्रत्ययसमधिगतस्वलक्षणप्रापकतया च स्मृतिरियमुच्यते। तत एव च गृहीतग्राहित्वादप्रमाणम्। अन्यथा वस्तुविषयतया वस्तुप्रापकतया च अनुमानमिव प्रमाणमेव स्यात्। स चायं तस्याकारः प्रथमानो न ज्ञानस्यैव, बहिष्ट्वेनावभासात्। न चार्थगत एव, उक्तेन न्यायेन निरस्तत्वात्। किन्तु अयमसन्नेव ज्ञानमनुभासते शब्दमिव प्रतिशब्दः। एतत्तु शास्त्रचिन्तका विवेचयन्ति, प्रतिपत्तारस्तु दृश्यविकल्प्यौ अर्थौ एकीकृत्य ताभ्यामेव अनुमन्यमाना व्यवहारेषु प्रवर्तन्ते, प्रवृत्ताश्च अर्थप्रतिलम्भेनाविसंवादं मन्यन्ते। कथं पुनः एकत्वाध्यवसायो दृश्यविकल्प्ययोः ? अतद्व्यावृत्ततया तत्सदृशत्वात्। यथा दृश्यस्य अतद्व्यावृत्तता, तथा विकल्पस्यापि। तस्मात् जातिप्रत्ययो विकल्पमात्रम्, परमार्थतस्तु न जातिर्नाम किञ्चित्। अपिच द्रव्यसमवायिनी जातिरभिमता, न च गन्धादिव्यतिरिक्तं द्रव्यमुपलभामहे चक्षुरादीनां प्रत्येकं रूपादिष्वेव व्यापारादिति पूर्वपक्षसंक्षेपः।

**अत्रोच्यते**, संविदेव हि भगवती विषयसत्त्वावगमे शरणम्, गवादिषु च स्थूलाकारावलम्बिनी बुद्धिरुदीयते इति निर्विवादम्, नयवीथ्यां च निर्णीतम् 'प्रमाणं स्मृतिश्च प्रत्ययः' इति। ननु तदेव असदिति मन्यते, अवयव्यादीनामेकान्ततः अनुपपन्नत्वात्। उच्यते, न दृष्टे का चिदनुपपत्तिः। ननूक्ता अवयविनोऽनुपपत्तिः आरम्भकाभावात्, अनुपपन्नेयमनुपपत्तिः, कार्ये प्रतीते कारणकल्पनायां प्रमाणम्। न पुनः स्फुटाबाधितं कार्यं कारणानिरूपणाय अपह्नवमर्हति। तेनावयवा एव समासादितसंयोगलक्षणसाधारणगुणा अवयविन उत्पादका भविष्यन्ति। संयोगश्चैक एवानेकत्र वर्तते, एकैकत्र संयुक्तप्रत्यया-

नुदयात्, एकातिरिक्तानेकाभावेऽपि एक एव सद्वितीयः
आश्रयः संयोगस्येति न दोषः । **ननु** द्रव्ये एव तयो-
त्पन्ने संयोगविकल्पमाविर्भावयतः, न तु तदतिरेकी संयोगो
नाम कश्चिद् गुणविशेषः । तन्न, प्रत्यभिज्ञायेते हि द्रव्ये
अनुवृत्ते, कादाचित्की च तयोरपरेयं दशा दृश्यते, इति
भवत्येव भेदसिद्धिः । स्थापिता **मीमांसाजीवरक्षायां**
प्रत्यभिज्ञा । अतः संयोगलक्षणसाधारणगुणासमवायि-
कारणोपगृहीता अवयवा एव समवायिकारणमवयविन उप-
पद्यन्ते । यश्चायमवयविनो वृत्तिविकल्पे दोष उक्तः, सोऽ-
प्यवयविनः प्रतीतौ स्थितायामनुपपन्नः । व्यासक्त एवा-
वयवेषु अवयवी, नैकत्र जातिवत् परिसमाप्तः । अवयवा-
न्तरैरपि च विना स तस्य कोऽपि महिमा, य एक एव
अनेकावयवानुस्यूत इति किं न कल्प्यते, यद्यपि चावय-
विन एकैकत्र अवृत्तिः, तथापि नावृत्तिदोषः, संयोग-
सचिवा एवावयवा जनकाणव आश्रयभूता यतः, जनक-
तयैव आश्रयत्वात् समवायिकारणानाम् । अत एव
संयोगः सद्वितीयाश्रय इति न दोषः, न च सकलावयवो-
पलम्भसापेक्षा तदुपलब्धिः अवयविनः, तेभ्यो भिन्नत्वात् ।
नचैतावता एकावयवग्रहणमात्रेऽपि ग्रहणपर्यनुयोगो युक्तः ?
कार्यानुगुणत्वात् कारणकल्पनायाः, कार्यसिद्ध्यर्थं हि
कारणं परिकल्प्यते, न कार्यविनाशाय । तेन यावताम-
वयवानां ग्रहणे तदुपलम्भः तावतामेवावगमः तदवगम-
निबन्धनमिति दर्शनबलेनाभ्युपेयते । भिन्नत्वेऽपि तत एव
सहोपलम्भनियमः उपेयोपायभावात् । उपेयभूतोऽवयवी
उपायवर्तिनश्च अवयवाः । प्रत्येकं तु तेषां शक्यते एव
असहोपलम्भोऽपि वक्तुम्, अवयवान्तरयोगिनः अव-
यविनोऽपि परिग्रहे । इतरावयवव्यतिरेकाभ्यां हि वस्त्व-
न्तरत्वमवसीयते, अवगम्यमानोऽपि चावयवी विलक्षणो
बुद्धिगोचरतामाचरत्येव । अवयवी हि स्थवीयान् एको
हृदयमागच्छति, अवयवास्तु क्षोदीयांसो भूयांसश्च । स
चायमवयवी महत्त्वाद्रूपवत्त्वाच्च चाक्षुषः स्पार्शनो वा,
पार्थिवो वा अम्भसीयो वा तैजसो वा । वायवीयस्तु मह-
त्त्वात् स्पर्शवत्त्वाच्च स्पार्शन एव । द्व्यणुकस्तु चातुर्भौति-
कोऽपि अमहत्त्वादप्रत्यक्ष एव च । अमहत्त्वम् अवयव-
बहुत्वमहत्त्वप्रचयविशेषाणां महिमगुणकारणानामभावात् ।

गगनादीनां तु महतामपि रूपस्पर्शविधुरतया न प्रत्यक्ष-
गोचरतेत्यलमतिविस्तरेण । **ननु** सकलावयवसमाश्रितत्वात्
अवयविनः तिरोहितैरवयवैः सह इन्द्रियासंनिकर्षे कथम-
वयविना समागमः ? न चासंगतमेव बहिरिन्द्रियम् अव-
बोधकमिति प्रतिज्ञा युज्यते, अवयवानामपि असंनिकृष्टे-
न्द्रियबोध्यत्वापत्तेरिति । **उक्तोत्तरमेतत्**, भिन्नत्वादव-
यविनः अवयवान्तरसंयोगेऽपि संयोगबुद्धेः पटादिषूपपन्न
एवेन्द्रियसंनिकर्षोऽवयविनः । तदनया दिशा तावदुप-
पन्नम् आश्रयद्रव्यम् आकृतेः पृथुलम् । ननूक्तं रूपा-
दिव्यतिरेकि द्रव्यं नोपलभते इति, किमिदं पश्यतोहर-
त्वम्, प्रतीयते हि महानवयवी रूपादिव्यतिरेकी ।
अत एव जपाकुसुमसंनिधानाभिभूतरूपमपि स्फटिकद्रव्यं
प्रत्यभिज्ञायते । कथं नामागृहीतं प्रत्यभिज्ञायेत । अपिच
दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् रूपस्पर्शव्यतिरेकि द्रव्यं
स्फुटतरप्रतीतं नापह्नोतुमुचितम् । वनादिषु बाधकप्रत्यय-
बलेन कल्पनेयं प्रसरति दूरतया अन्तरालाग्रहणनिबन्धनो-
ऽयम् अभेदग्रहव्यवहारः प्रवर्तते इति । अवयविनि तु
बाधकज्ञानं नास्तीति पुरस्तादावेदितम् । तेनाश्रयद्रव्या-
भावात् जातेरपलापः प्रलापमात्रमिति स्थितम् ।

यच्चेदमुदितं नित्यतया जातेः आत्मविज्ञानजननेऽपि
न शक्ततेति, तदपि क्षणभङ्गनिराकरणपर्वणि विस्तरेण
नित्यानामर्थक्रियाकारित्वसमर्थनेन प्रत्यूढम् । मा वा
स्वविज्ञानमपि जातिर्जीजनत्, तथापि कथङ्कारमसौ
अप्रत्यक्षा ? न खल्वियमाज्ञा राज्ञः 'कारणभूते एव
प्रत्यक्षेण प्रचरितव्यम्' इति । यत्तु यतः प्रतीयते स
तस्य विषयः इति सार्वलौकिकम् । **ननु** प्रत्यक्षमपि अवि-
संवादादेव प्रमाणम्, अविसंवादश्च तस्मादात्मलाभात्,
अन्यतस्तु भवतो नित्यभूतस्य वा अभावेऽपि भावसंभ-
वात् नियमेन संवादायोगादिति बलादभ्युपेयम् 'प्रत्यक्षस्य
कारणमेव विषयः' इति । अत एव च प्रत्यक्षमनुमानं च
द्वे एव प्रमाणे, तयोरेव अर्थाविसंवादकत्वात् । प्रत्यक्षं
साक्षादर्थेन प्रतिबद्धम् । अनुमानं तु अर्थप्रतिबद्धलिङ्ग-
जन्मतया पारम्पर्येण प्रतिबद्धम् । यस्य तु न साक्षात्
नापि परम्परया अर्थप्रतिबन्धः, न तस्य प्रामाण्यमुचितम्,
तस्य तदविसंवादनियमाभावात् । अर्थाविसंवादि च प्रमाणं



व्यवजिहीर्षमाणा लौकिका आद्रियन्ते । **सिद्ध्येदयं**
मनोरथो यदि ज्ञानान्तरनिबन्धनो विसंवादः प्रार्थनीयः ।
यद्विषयमेव च यत् ज्ञानम्, तस्मिन् विषये पर्युपस्थापिते
नास्ति प्रत्ययान्तरनिबन्धना अविसंवादप्रार्थना । अर्थेन
अप्रतिबद्धमपि च ज्ञानं स्वमहिमपर्युपस्थापितार्थम् अवि-
संवादकमेव संप्रवर्तते । तेनोत्पत्तिमात्रे एव विज्ञानस्य
परापेक्षा, न प्रामाण्ये अर्थाविसंवादलक्षणे । अतः सिद्धं
शास्त्रादीनामपि अर्थप्रतिबन्धविरहिणां प्रामाण्यम् । एत-
दर्थमेव **नयवीथ्यां** सर्वं ज्ञानं विषयाऽव्यभिचारीति
प्रतिपादितम् । अतो नित्यायामपि जातौ भवत्येव प्रत्य-
क्षस्य प्रामाण्यम् । **यत्** पुनरुक्तम् एकभावेन मनसा
समाकलयतः कालाक्षीं स्वस्तिमतीं वा ( गां ) नास्ति
जातिप्रतीतिरिति, **तदसिद्धम्**, आकारो हि सा ।
प्रतीते चाकारे यदि परमर्थान्तरानुसंधानविकलतया
तस्यानुवृत्तिर्नावसीयते । अनुवृत्ता च जातिर्नानुवृत्तिः ।
अग्रहणेऽपि च धर्मस्य धर्मिणो ग्रहणं नानुपपन्नम् ।
अत एव च पिण्डान्तरसमभिगमे पूर्वाकारपरामर्शिनी
मनीषा प्रत्यभिज्ञासमाख्याता उदीयते । **यच्चोक्तम्** अना-
श्रयतया तत्रैव प्रागनवस्थिता निष्क्रियतया नान्यस्माद-
नागच्छन्ती स्वरूपहानिप्रसङ्गेन व्यक्त्या सहानुपजायमाना
कथं संबन्धमनुभवति जातिरिति ? **तदिदं** मायामोहजननं
यथाजातजनोद्वेजनमात्रम् । संयोगो हि उभयकर्मजो
भवति मल्लयोरिव, अन्यतरकर्मजो वा स्थाणुश्येनयोरिव,
संयोगजो वा यथा तन्तुतुरीसंयोगादुत्पन्नमात्रस्य पटस्य
तुरीसंयोगः । स च कर्म प्राक्संनिधानं वा अपेक्षते, सम-
वायस्तु संयोगाद्विभिन्नो न कर्म वा तत्र वा प्राक्सत्ता-
मपेक्षते । यत एव तु पिण्डस्योदयः समवायिकारणात्,
तत एव जातिसमवायोऽपि तस्य संपद्यते । समवायं च
न वयं काश्यपीया इव नित्यमुपेमः, विनष्टायामपि व्यक्तौ
न जातिरन्यत्र याति, न च तत्रावतिष्ठते, न विनश्यति,
केवलं तद्व्यक्तिसमवायस्तस्या निवर्तते, तेन तस्यानुप-
लम्भनम् । तथाहि न याति निष्क्रियत्वात्, नावतिष्ठते
व्यक्तिमात्राश्रयत्वात्, तदभावे अवस्थानासंभवात्, न विन-
श्यति पिण्डान्तरेऽपि प्रत्यभिज्ञायमानत्वादिति । विनाशो
हि नामात्यन्तिकोऽनुपलम्भ इति **अमृतकलायामुक्तम्**,

अतो न संकटं किञ्चित् । यच्च पिण्डेभ्यो जातेरभिन्नत्वमु-
भयरूपत्वं च दूषितम्, तदस्माकं साहायकमेवाचरितम् ।
को हि नाम सचेतनः पदार्थान्तरप्रत्यभिज्ञानम् अभेदा-
श्रयेण साधयेत्, को वा परस्परविरोधिनी एकस्य द्वे रूपे
प्रतिजानीते । भेदवादः पुनरस्माकमपि संमत एव । न च
तत्र इहप्रत्ययापत्तिदोषः । प्रतीत्य हि आधारमाधेयं च
संबन्धं च प्रतीयात्, सर्वं च रूपं रूपिग्रहणमन्तरेण न
प्रतीयते । अतो न समानेन्द्रियग्राह्यतया जातिरपि व्यक्ति-
प्रत्ययानुप्रवेशिनी इति नेहप्रत्ययसंभवः, कर्मणि तु अनु-
मेये भवत्येव इहप्रत्ययः । वृत्तिविकल्पे तु कृत्स्नसमाप्ति-
रेवाङ्गीकरणीया, न चान्यत्रावृत्तिदोषः, प्रत्यक्षावगमात्
वृत्तेः प्रत्यभिज्ञायाः स्थापितत्वात् । पृथग् ग्रहणं तु जाते-
रसिद्धमेव । व्यक्त्यन्तरे हि जातिः प्रतीयमाना प्राच्य-
पिण्डपरिहारेण प्रकाशते । उदीच्यपरिहारस्तु प्राक्तनसम-
धिगमसमये सिद्धमेवेति परिहृतनिखिलानुपपत्तिकमुप-
पादितं गवादिषु साधारणाकारानुभवसिद्धं जातितत्त्वमुप-
पन्नम् । प्रत्यक्षवेद्यत्वं जातेः इन्द्रियव्यापारानुविधानेन
प्रतीतेः । संयुक्तसमवायलक्षणश्च संनिकर्षोऽपि नानुपपन्नः ।
**गौरयमिति** च मतिर्विशदतरार्थनिर्भासिनी न शक्यते
अपवदितुम् । समसमयसंभवनिर्विकल्पकदर्शनबलेन इत्थ-
मियं प्रथते इति तथाभावे प्रमाणाभावात् । शब्दमात्रे तु
केवलाकारपरिगृहीताकारिप्रतीतेः रूपान्तरानवभासाच्च
अविशदावभासः । ऐन्द्रियके तु संवेदने प्रचुरतररूपाव-
भासात् विशदावगमः इति नाबाह्यविषयत्वापत्तिः ।
**नन्वेषा** जातिप्रतीतिः भिन्नामेव व्यक्तिम् अभेदेन अव-
गमयन्ती जायते इति भ्रान्तिरेषा न प्रत्यक्षं प्रमाणम् ।
इयं तु भ्रान्तिर्निर्बीजा न युज्यते इति बीजभावेन जाति-
रनुमीयते तत्समवायश्च । दृष्टा हि संतापसंचारितदहन-
परमाणुसंवलितायोगोलके दहनाकारानुकारिणी प्रतीति-
रिति । **तदिदमुक्तोत्तरमपि** पुनः पर्यनुयोज्यामहे विस्मर-
णापराधादिति मन्यामहे । भिन्ना हि जातिरवगम्यते ।
न खल्वाकारमाकारिणं चैकमेव मन्यन्ते । केवलं शब्द-
प्रयोगे समाधिर्वक्तव्यः । तत्र च लौकिकः प्रयोग एव
शरणम् । प्रयोगश्च श्रुत्या लक्षणया गौण्या वा वृत्त्या
नानुपपन्नः । समवायस्तु भवतु वस्त्वन्तरे सिद्धं अनुमेयः,

प्रत्यक्षेण तदनवगमात् । आकृतिस्तु न प्रत्यक्षप्रमाणसिद्धा अनुमेया । न चानुमानमपि शक्यं शाक्येषु प्रतिबद्धृषु । इत्यलमतिविस्तरेण ।

अत्र केचित् गवादितुल्यतया द्रव्यगुणकर्मस्वपि सत्ताजातिमङ्गीकुर्वन्ति । भवति हि सर्वेष्वेव सत्सदिति प्रत्ययानुवृत्तिरिति संवदन्तः । तदिदमपरामृष्टजातितत्त्वानामुपर्युपरिकल्पितम् । पूर्वरूपानुकारिणी यदि धीरुदीयते, ततोऽभ्युपेयेतैव जातिः । न च नानाजातीयेषु द्रव्येषु सर्षपमहीधरादिषु, गुणेषु गन्धरसादिषु समानाकारानुभवो भवति । केवलं तु सत्सदिति शब्दमात्रमेव प्रयुज्यते । भवति च विनाऽपि जात्या पाचकमीमांसकादिशब्दप्रवृत्तिः । नन्वेकशब्दप्रवृत्तिरपि नैकनिबन्धनमन्तरेणोपपद्यते । सत्यमस्त्येव उपाधिरेकः प्रमाणसंबन्धयोग्यता नाम । तत्रान्यः **पण्डितम्मन्यो मन्यते** । ननु इदमसमञ्जसमुच्यते सर्वत्र हि उपाधिमेवमवगम्य औपाधिकशब्दानुविद्धः प्रत्ययो भवति, न पुनः प्रागेव सह वा । इह च प्रमाणमेव जायमानमस्तीत्येवमेव जायते । प्रमाणोदयोत्तरकालं हि अनया भवितव्यम् । किञ्च सत्यपि प्रमाणयोगे किञ्चिद् अस्तीति गम्यते, किञ्चिच्च आसीदिति, तथा अन्यद्भविष्यतीति । तत्र प्रमाणसंबन्धस्य वर्तमानत्वात् सर्वत्र वर्तमानसत्ताप्रत्ययेन भवितव्यम् । तदतिरेकिणि तु सत्त्वे तस्य त्रेधा व्यवस्थानात् युक्तस्त्रिधाऽवभासः । अपिच भूमितलनिखातेषु चिरतरकालवर्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्तमानसत्तासंदेहः । स च प्रमाणसंबन्धातिरेकिणीं सत्तामन्तरेण अनुपपन्न इति । तदिदमनाकलितपरवचनस्य केवलं गलगर्जितम् । उक्तमस्माभिः प्रमाणसंबन्धयोग्यता उपाधिः । यदि हि प्रमाणसंबन्ध उपाधिरिति वदेम, तत इत्थमुपालभ्येमह्यपि । योग्यता तु प्रमाणसंबन्धातिरिक्ता प्रमाणेनावसीयते इति युक्त एवास्तीति प्रमाणोदयः । तस्याश्च त्रैकाल्यात् त्रैकाल्यावगमोऽपि समर्थित एव । तस्याश्च संशयितताऽपि युक्तैव । का पुनरियं प्रमाणसंबन्धयोग्यता नाम ? ननु नामान्तरेण महासामान्यमेवेदमुरीकृतम् । नैतदेवम्, यो हि महासामान्यं सत्तां संगिरते, सोऽपि स्वरूपमात्रं पदार्थानां मन्यते एव । अन्यथा शशशृङ्गादीनामनुत्पन्नातिवृत्तानां च किमिति महासामान्येन संबन्धः एव न स्यादिति पर्यनुयोगे कः परिहारः ? तेन स्वरूपवत्त्वैव प्रमाणसंबन्धयोग्यता । यस्य हि स्वरूपमस्ति, तत् प्रमाणेन परिच्छिद्यते । त्रैकाल्यमपि स्वरूपस्यैव युक्तम् । न च महासामान्यस्य, नित्यत्वात् । तथा संशयितताऽपि तस्यैव, न पुनरसंशयिते स्वरूपे अपरः सत्तासंदेहो भवति । अथ नित्याया अपि सत्तायाः कः संबन्धः, यः स त्रिकालः । तस्यैव त्रैकाल्यं कुतः ? नान्यदत्रोत्तरं स्वरूपत्रैकाल्यादितः । तस्मात् स्वरूपसत्तोपाधिक एव सच्छब्दो न पुनरेक आकारः सत्ता नाम द्रव्यगुणकर्मणाम् । अपि च काश्यपीयानां जातिसमवायविशेषेषु स्वरूपसत्तोपाधिक एव सच्छब्द इत्यभ्युपगमः । तस्य च द्रव्यगुणकर्मस्वपि तथाभावोऽस्तीति । तदेवमपाकृते पदार्थस्वरूपातिरेकिणि महासामान्ये यत् स्वमनीषानिर्मितकुतर्कबलेन सन्मात्रविषयं प्रत्यक्षमिति साधितम्, तदतिदूरोत्सारितम् । एतेनैव न्यायेन शब्दत्वमपि निरस्तं वेदितव्यम् । नहि ककारगकारयोरेकाकारमनुगतं परामृशन्ती मनीषा समुन्मिषति । योऽपि चायं शब्दशब्दः सोऽपि श्रोत्रग्रहणोपाधिबललब्धप्रवृत्तिरिति न जातु जातिकल्पनायै विभवति । तत इदमपहस्तितम्, यदाहुः ' शब्दत्वमेव तत्तदभिव्यञ्जकध्वनिनिबन्धनया नानावर्णरूपया विषयीभवत् तत्तदर्थावगमाय कल्पते ' इति ।

अनयैव च दिशा ब्राह्मणत्वादिजातिरपि निवारिता । नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वाद्यर्थान्तरभूतम् एकमाकारम् आत्मसात् कुर्वती मतिराविर्भवति । नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेषु अनुवर्तमानमेकमाकारम् अतिचिरमनुसंदधतोऽपि बुद्ध्यन्ते । यदप्याहुः, यद्यपि आपातसंजातया धिया ब्राह्मण्यं नावसीयते, तथापि ब्राह्मणभूतमातापितृसंबन्धानुसंधानप्रभवायां बुद्धौ तच्चकास्तीति । तदपि च स्वमानसविसंवादि । अनुसंदधानोऽपि मातापितृसंबन्धं को जातु एकमाकारमवबोद्धुं प्रभवति । यच्चोपदर्शितम्, यथा विलीनमाज्यं तैलादव्यतिरिच्यमानं गन्धग्रहणसहकारिणा चक्षुषैव भिन्नमवगम्यते इति । तदपि न सुन्दरम् । नहि तदानीं चाक्षुषस्य



संवेदनस्य विषयातिरेकः, किन्तु अनुमानमेव तत्र सर्पिषः । यस्तु निपुणदर्शी सूक्ष्ममपि रूपमीक्षितुं क्षमः, स चक्षुषैवाज्यजातिमपि प्रत्येति । न गन्धग्रहणमपेक्षते । नन्वेवं बहु अवहीनम्, किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषां चित् अधिकारो नान्येषाम्, किंनिबन्धना च ब्राह्मणशब्दस्य प्रवृत्तिव्यवस्था । अत्रोच्यते । अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चिदेव स्त्रीपुरुषसंततयः सन्ति, तासामन्योन्यव्यतिकरजाताः स्त्रीपुंसव्यक्तयो ब्राह्मणशब्दवाच्याः । अनिदंप्रथमतया च संततेः सर्वेषां तत्संततिपतितत्वात् सिद्धा ब्राह्मणशब्दवाच्यता । तेन संततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः । तत्प्रभवानामेव कर्मस्वधिकार इति न किञ्चिदवहीनम् । के पुनस्ते संततिविशेषाः ? न ते परिगणय्य निर्देष्टुं शक्यन्ते, किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः । तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः । कथं पुनस्तज्जन्यत्वमेव शक्यमवगन्तुम्, स्त्रीणामपराधसंभवात् । संभवन्ति हि पुंश्चल्योऽपि स्त्रियः परिणेतारं व्यभिचरन्त्यः । उच्यते । उक्तमेतत् दृश्यादर्शनमेवाभाव इति । यत्र यावदुपलब्धिसामग्री, तावत्यां सत्यामपि यासां व्यभिचारो न दृश्यते, तासां नास्त्येव व्यभिचार इति लोकप्रमाणकमेतत् । अपिच अप्रमत्तैः स्त्रियो रक्षणीयाः, तासु नास्त्येव व्यभिचारसंभावनाऽवकाशः । यासु त्वस्ति, मा भूत् तदपत्येषु तत्संततिप्रभवत्वनिश्चयः । न चैतावता यत्रापि निश्चयः शक्यः, तत्राप्यनिश्चय इति युक्तमिति । यश्च बह्वीषु ज्वालासु एकवर्तिवर्तिनीषु ज्वालात्वं सामान्यं प्रत्यभिज्ञागोचरः कैश्चिदिष्यते, तदपि गुरुरस्माकं न मृष्यति । स खल्वेवं निरीक्षांचक्रे अन्यथासिद्धा बुद्धिः सामान्यकल्पनाबीजम् । इयं तु भेदाग्रहणेन शुक्तिकारजतप्रत्ययवदुपपद्यते इति नालं सामान्यमुपस्थापयितुम् । तेन भेदग्रहणपुरस्सरमभेदज्ञानं भिन्नेषु जात्यभ्युपगमे शरणमिति निरवद्यम् । ' शालिकनाथेन कृतं कृतमतिना जातिनिर्णयाख्यमिदम् । बहुविधविवादहरणं प्रकरणमुरुणाऽवधानेन ॥ ३ ॥' प्र. पञ्जिका. पृ. १७-३२.

* ' **जानामि** ' इत्याद्यनुभवानाम् ' अनुभवामि ' इत्युपनीतभानत्वम् ( उपनीतभानं नाम ज्ञानसंनिकर्षेण जायमानं ज्ञानम् ) । **मणि.** पृ. १५.

* **जानुदघ्नं** चिन्वीत प्रथमं चिन्वानः । **संकर्ष.** २।१।१२.

* **जामदग्न्याः** पञ्चावत्तिनः । **वि.** १०।७।२०.
* **जामदग्न्यानां** पञ्चावत्तविधिः । **संकर्ष.** २।२।६ । तत्रापि प्रधानभूतादौषधादिद्रव्यादेव पञ्चममवदानम्, न तु अभिघारणवर्धनेन । २।२।७ । तत्रापि उपस्तीर्य त्रीण्यवदानानि क्रमेण गृहीत्वा अभिघारणम् इति पञ्चावत्तता, न तु उपस्तरणम् अवदानद्वयम् अभिघारणं ततः पश्चार्धादवदानम् इति क्रमः । २।२।८.

※ **जामात्रर्थं प्रस्तुतस्य सूपादेरतिथ्युपकारकत्वमिति न्यायः** । यथा साङ्ख्याभिमतप्रधानकारणवादनिरासाय प्रयुक्ताः वेदान्तसूत्रोक्तयुक्तयो योगाभिमतप्रधानकारणमपि निराकुर्वन्तीति दिक् इत्यन्यत्र विस्तरः । **साहस्री.** ४२४.

* **जामि**— सोदर्यवाचिजामिशब्दलक्षितस्य साहश्यस्य नैरन्तर्यानुष्ठाने सति आलस्यापादकत्वेन दोषत्वम् । ( तथा च जामित्वमालस्यमेव ) । सु. पृ. ७४७.

* जायतेः उत्पत्त्यनुकूलक्रिया अर्थः । **मणि.** पृ. १४१.

* **जिज्ञासाऽधिकरणम्** ( १।१।१।१ ) । अध्ययनविधिर्विषयः । वेदाध्ययनोत्तरं धर्माधर्मज्ञानफलकविचारविधायको न वा इति संशयः । अध्ययनस्य गुरुमुखोच्चारणपूर्वकोच्चारणरूपत्वात् तस्य विश्वजिद्वत् स्वर्गार्थत्वात् ' अधीत्य स्नायात् ' इति स्नानविधिना विचारो न कर्तव्यः इति पूर्वपक्षः । अध्ययनविधेः अर्थज्ञानपर्यन्ततया तस्य विचारमन्तरेण असंभवात् कर्तव्यः इति सिद्धान्तः । ( अथातो धर्मजिज्ञासा ) । **मणि.** पृ. ५, * **जिज्ञासाऽधिकरणे** विश्वजिन्न्यायात् स्वर्गकल्पनस्य प्रथमसूत्रे एव निराकरणात् ( अध्ययनस्य ) । **सोम.** १।२।१. * **जिज्ञासाऽधिकरणोक्त**रीत्या स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ ...। **भाट्ट.** १।२।१.

* **जिज्ञासापदं** विचारं न लक्षयति, किन्तु धर्मज्ञानेच्छा इत्येव । **बाल.** पृ. १.

⧗ **जित्वरीवदुपाचरेदिति न्यायः।** अयम् 'विदूराञ्ञ्यः' ४।३।८० इति सूत्रमहाभाष्ये व्यवहृतः। तत्रत्यभाष्याभिप्रायस्त्वेवम्, अयुक्तोऽयं निर्देशः। नह्यसौ मणिर्विदूरात् प्रभवति, किं तर्हि ? वालवायाख्यपर्वतविशेषात् प्रभवति। तत्पर्वतसमीपे विदूरनगरे संस्क्रियते। एवं तर्हि 'वालवायो विदूरं च प्रकृत्यन्तरमेव वा। न वै तत्रेति चेत् ब्रूयाज्जित्वरीवदुपाचरेत्॥' यथा वणिजो वाराणसीं जित्वरीत्युपाचरन्ति, एवं वैयाकरणा वालवायं विदूर इत्युपाचरन्ति इत्युक्तम्। **साहस्री.** ८४०.

⧗ **जीवत्यवचनमायुराशिषस्तदर्थत्वात्** । १०।२।२५।६१ ॥

सर्वस्वारे क्रतौ प्रायणीयाऽऽदौ यजमाने जीवति सूक्तवाके आयुराशिषः 'आयुराशास्ते' इति आयुषः कामनायाः अवचनं वचनं न कर्तव्यम्, तन्न पठनीयम्। तदर्थत्वात् यजमानायुःप्राप्त्यर्थत्वात् तस्य वाक्यस्य। सर्वस्वारे तु यजमानो मरणकामः न आयुष्कामः। तस्मात् तन्न पठनीयम्।

**वचनं वा, भागित्वात् प्राग् यथोक्तात्।** ६२॥

सर्वस्वारे प्रायणीयाऽऽदौ यजमाने जीवति सूक्तवाके 'आयुराशास्ते' इति आयुषः आशिषः वचनं कर्तव्यम्। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। यथोक्तात् प्राक् भागित्वात्। आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति। अस्मात् यथोक्तात् प्राक् तु आयुराशीः भागिनी युक्तैव 'आर्भवकालं यावत् जीव्यासम्' इति। भागः अवसरः अस्ति अस्या इति भागिनी। तस्मात् सर्वस्वारे प्रायणीयाऽऽदौ सूक्तवाके आयुराशीर्वक्तव्या इति सिद्धान्तः। **के.**

* जीवत्यवचनमायुराशिषस्तदर्थत्वात्। अस्थियज्ञे कृत्वाचिन्तयोक्तेन 'ईहार्थाश्चाभावात् सूक्तवाकवत्' (१०।२।२१।५३) इति न्यायेन सर्वस्वारेऽपि सर्वेषामेव सूक्तवाकफलानाम् अकाम्यमानत्वेन अवचने प्राप्ते, 'जीवत्यवचनम्॰' इत्यत्र आयुर्मात्रे अर्थवादोक्तेः इतरसूक्तवाकफलस्य काम्यमानस्यैव फलत्वमिष्टमिति गम्यते। **बाल.** पृ. १७५.

* **जीवनं** नाम प्राणधारणमुच्यते। **कणिका.** पृ. ३६४. * जीवनं निमित्तम् अशेषिभूतं दर्शादिकं स्वार्थे न प्रयुङ्क्ते, किन्तु पापक्षयरूपशेष्यर्थे प्रयुङ्क्ते। **बाल.** पृ. १०७. * **जीवने** सति भोजनवत् नित्यकर्म अवश्यमनुष्ठेयम्। **वि.** ६।३।२.

⧗ **जीवितोऽपि ( जीवन्नपि ) न जीवेत् स, यदि लोकेन दूष्यते इति न्यायः।** स्पष्टार्थः। **साहस्री.** ९०२.

* '**जुषाणो** अग्न आज्यस्य वेतु' 'जुषाणः सोम आज्यस्य हविषो वेतु' इति आज्यभागयाज्यामन्त्रौ। **संकर्ष.** ४।३।११.

* **जुहूः** अन्यभिचरितक्रतुसंबन्धवती। **वि.** ३।६।१, * **जुहूः** पर्णमयी अनारभ्यविहिता। सा प्रकृतौ निविशते, विकृतौ तु चोदकात्। ३।६।१, * **जुहूः** 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' पर्णमयत्वं क्रत्वर्थम्, क्रतुसंबन्धश्च वाक्येन, फलश्रवणं चार्थवादः। पर्णमयत्वं पलाशकाष्ठमयत्वम्। ४।३।१. * **जुहूमभिमृशति** 'युनज्मि वाचं सह दिवा सूर्येण' इति (मन्त्रेण)। **भा.** १२।१।५।११, * **जुह्वा** वसुरसीत्येवमादिभिः अञ्जनं परिधिधर्मः। १२।२।१०।२६. * **जुह्वाः** आकारो द्विविधो लौकिकः शास्त्रीयश्च। अरत्निमात्रदैर्घ्यहंसमुखत्वग्बिलत्वादिरूपो दृश्यमानो लौकिकः। (हंसस्य मुखमिव मुखं यस्याः सा हंसमुखी, तस्या भावो हंसमुखत्वम्। अरत्निः कनिष्ठिकान्तपर्यन्तो हस्तः। त्वग्देशे बिलं यस्याः सा त्वग्बिला) अपूर्वीयत्वाकारस्तु शास्त्रीयः। अत्र अपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति, अतः पर्णः क्रतौ प्रविष्टः। **वि.** ३।६।५. * **जुह्वाः** द्व्यवदानस्य अग्निसंबन्धापादनद्वारा प्रधानसाधनत्वात् अन्यपेक्षया प्रधानविप्रकर्षः। **सु.** पृ. ६२६. * **जुह्वामाज्यं** चतुर्वारं ग्राह्यम् आज्यग्रहणकाले। 'चतुर्जुह्वां गृह्णाति'। तत्र प्रतिग्रहणं मन्त्रावृत्तिः। मन्त्रश्च 'शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि' इत्यादिः। **वि.** ११।४।१५.



⧗ **जुह्वादीनामप्रयुक्तत्वात् संदेहे यथाकामी प्रतीयेत।** ६।६।६।३३ ॥

सत्रे जुह्वादीनां यज्ञपात्राणामप्रयुक्तत्वात् 'स्वैरेव पात्रैः प्रयोगः कर्तव्यः' इति प्रयुक्तत्वस्य अभावात् तथा विधेरभावात् कैः पात्रैः प्रयोगः कर्तव्यः इति संदेहे सति यजमानो यथाकामी प्रतीयेत। यथा अयं कामयते तथा कर्तव्यम्। स्वस्य अन्यस्य वा पात्रैः प्रयोगः स्यात्। इति पूर्वः पक्षः। याथाकामी (इच्छा) प्रतीयेत इति पाठस्तु सूत्रानुसारीति गम्यते। यथाकामी भवेत् इति तु भाष्ये पठितम्।

**अपिवाऽन्यानि पात्राणि साधारणानि कुर्वीरन् विप्रतिषेधाच्छास्त्रकृतत्वाच्च।** ३४ ॥

पूर्वपक्षं सूत्रेण प्राप्तम् अपिवा इतिशब्देन विपरिवर्त्य सिद्धान्तमाह। साधारणानि सप्तदशानामपि यजमानानां साधारणानि नवीनान्येव अन्यानि पात्राणि कुर्वीरन् सत्रिणः। अन्यतमस्य पात्राणां ग्रहणे तु विप्रतिषेधः स्यात्। यस्य पात्राणि गृहीतानि स्युः, तस्य सत्रमध्ये दैवान्मरणे तेन सह तानि पात्राणि दह्येरन्। तथा सति सत्रप्रयोगलोपः स्यात्। पात्राणामदाहे तु मृतस्य दाहो विगुणः स्यात् इति विप्रतिषेधः। साधारणानि च पात्राणि शास्त्रकृतानि शास्त्रतात्पर्यविषयाणि। न च जीवतः अन्यस्य पात्रैः क्रतुनिर्वृत्तिरस्तु इति वाच्यम्। तथापि प्रयोगप्राग्भावस्य शास्त्रकृतत्वात् क्रतुवैगुण्यमवर्जनीयमेव स्यात्। तस्मात् विप्रतिषेधात् शास्त्रकृतत्वाच्च साधारणानि पात्राणि स्वतन्त्राणि कर्तव्यानि। इति सिद्धान्तः। **के.**

* **जुहूस्थमाज्यं** प्रयाजश्रितयार्थम्। **वि.** ४।१।१५.

* **जुहोतिः** प्रक्षेपरूपफलवाची। देवतोद्देश्यकप्रक्षेपफलको द्रव्यत्यागः जुहोतिपदवाच्यः। **मधि.** पृ. १०२. * **जुहोतेः** अकर्मकत्वात् सक्तूनां द्वितीयया करणत्वलक्षणा इत्युक्तं तन्त्ररत्ने तन्त्रसारन्यायसुधयोश्च। तत्र, 'हुतोहुतः पर्यावर्तते' इत्यादौ कर्मणि निष्ठादर्शनेन जुहोतेरकर्मकत्वासिद्धेः, होः कर्मणि तृतीया चकारात् द्वितीया च स्यात् इत्यर्थकेन 'तृतीया च होश्छन्दसि' (पा॰ २।३।३ जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च) इति सूत्रकारव्यवहारेण सकर्मत्वावगतेश्च। **कौ.** २।१।१२ पृ. ७८. * जुहोतेः देवतोद्देशद्रव्यत्यागपूर्वकप्रक्षेपात्मकहोमसमाप्तिभूतप्रक्षेपांशप्रधानता। **सु.** पृ. १५२७. * **जुहोतिचोदनानामेव** दर्विहोम इति नामधेयम्, होमशब्दस्य तत्र मुख्यत्वात्, न यजतिचोदनानाम्। **वि.** ८।४।३.

⧗ **जुहोतिचोदनानां वा तत्संयोगात्।** ८।४।३।४॥

दर्विहोमशब्दः स्मार्तानां श्रौतानां च कर्मणाममिधानमित्यवगतम्। अथ किं यजतिचोदनानां जुहोतिचोदनानां चेति सर्वेषां नामधेयम्, किंवा जुहोतिचोदनानामेवेति विचारे सिद्धान्ती आह। जुहोतिचोदनानामेव दर्विहोमशब्दो नामधेयम्। उभयचोदनानां व्यावर्तको वाशब्दः। तत्संयोगात् दर्विहोमः इति होमशब्दसंयोगात्। यजतौ तु लक्षणा स्यात्। तस्मात् दर्विहोमशब्दो जुहोतिनामधेयम्। द्वितीये अन्तरार्गाभिण्यधिकरणे सूत्रमिदम्। **के.**

* **जुहोतिचोदितानां** सर्वेषां दर्विहोमाख्यत्वस्य अपूर्वत्वस्य च वक्ष्यमाणत्वात्। **सु.** पृ. ८३६.

* **जृम्भा** जृम्भिका नाम मुखव्यादानफलको निद्राऽऽलस्यादिकारणप्रयुक्तो वायुविकारभेदः। **सोम.** ३।४।९.

* **जृम्भायां** सत्याम् 'मयि दक्षक्रतू' इति मन्त्रस्य पाठः कर्तव्यः। क्रतुयुक्तजञ्जभ्यमानपुरुषसंस्कारोऽयम्। **वि.** ३।४।९। लौकिके च 'छिक्कापतनजृम्भासु जीवोत्तिष्ठाङ्गुलिध्वनिः। शत्रोरपि च कर्तव्या सर्वदा शुभमिच्छता॥' इति शिष्टोक्तिः प्रसिद्धा। छिक्कायां सत्याम् 'जीव' इति शब्दः उच्चार्यः, पतने 'उत्तिष्ठ' इति शब्दः उच्चार्यः, जृम्भायां च अङ्गुलिध्वनिः कर्तव्यः इति श्लोकार्थः। **के.**

* **जेमना** जेमनौ। उदकवाचिनो जेमशब्दस्य पामाऽऽदिषु पाठात् 'लोमादिपामाऽऽदिपिच्छादिभ्यः शनेलचः' इति यथासंख्यन्यायेन पामादिभ्यः परो विहितो नप्रत्ययो जेमशब्दात् परो भवति। (पा॰ ५।२।१०० लोमादिभ्यः मत्वर्थीयः शः लोमशः। पामाऽऽदिभ्यः नः पामनः जेमनः। पिच्छादिभ्यः इलः पिच्छिलः)। **सु.** पृ. ११२.

※ **जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्** । १२।१।२७ ॥

पशुपुरोडाशे प्रयाजादिकं पशुप्रयाजादेः प्रसङ्गात् सिद्धम् इति पृथक् न कर्तव्यम्, परन्तु आज्यभागौ पशुपुरोडाशे कर्तव्यौ इति जैमिनेराचार्यस्य मतम् । यतः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् । यस्य पदार्थस्य स्वीयस्य तन्त्रस्य कार्ये परस्य तन्त्रम् आपद्यते, तस्य प्राप्तेः परतन्त्रापत्तेः परस्य परकीयस्य तन्त्रस्य आपत्तेः हेतोः स्वतन्त्रप्रतिषेधः स्वस्य स्वीयस्य तन्त्रस्य प्रतिषेधः स्यात् यथा पौरोडाशिकानां पाशुकम् । यस्य तु न किञ्चित् परकीयं कार्यमापद्यते तत्प्रतिषेधो न युक्तः यथा आज्यभागयोः । तस्मात् तयोः न निवृत्तिः । न च पशौ आज्यभागौ विद्येते इति पाशुकेन तन्त्रेण सिद्धिः । ततः पशुपुरोडाशे आज्यभागौ कर्तव्यौ इति सिद्धान्तः । **के.**

* **जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात्** ( १२।१।२७ ) इत्यधिकरणे प्रयोगवचनश्रोदकापेक्षया दुर्बलः इति वक्ष्यते । **सोम.** ५।१।१०.

* **जैमिनिप्रणीता** धर्ममीमांसा षोडशभिरध्यायैः षट्सप्ततिपादैः युक्ता । ( 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'विद्यते वाऽन्यकालत्वाद् यथा याज्यासंप्रैषो यथा याज्यासंप्रैषः' इत्यन्तैः सूत्रैः ) । **संकर्ष.** ४।४।१०. * **जैमिनिप्रोक्तं** सूत्रजातम् ( द्वादशाध्यायात्मकं ) 'चोदनालक्षणोऽर्थो धर्मः' इत्यारभ्य 'अन्वाहार्ये च दर्शनात्' इत्येतदन्तम् । **वि.** १।१।१.

* **जैमिनीयाः** महाप्रलयं न स्वीकुर्वन्ति, अवान्तरप्रलयं तु स्वीकुर्वन्ति । 'प्रलयः' इति बिन्दौ मणौ द्रष्टव्यम् । **के.**

* **जोषणं** प्रीतिपूर्वको यूपीयवृक्षस्य लक्षणलक्षिततया सेव्यत्वनिश्चयः । तच्च यूपधर्मः । **वि.** १०।२।३२.

* **जोषणनिगमः** 'अग्निरिदं हविरजुषत' इत्यादिः दर्शपूर्णमासयोः । **वि.** १०।४।२७.

* **जौहवमाज्यं** प्रयाजार्थम्, औपभृतं तु प्रयाजानुयाजोभयार्थम् । भा. ४।१।१६।४३.

* **ज्ञातम्** इति प्रमेयमनुसरन्ति प्रमाणविदः । **बृहती.** पृ. ६६. * **ज्ञातस्यैव** भावस्य परोक्षार्थज्ञापकत्वम् । **सु.** पृ. १२१०.

※ **ज्ञाते च वाचनं, नह्यविद्वान् विहितोऽस्ति** ( ३।८।८।१८ ) इति न्यायः । ( ज्ञातमस्यास्ति ज्ञातः यजमानः । यजमाने क्लृप्तिमन्त्रज्ञानयुक्ते सत्येव 'क्लृप्तीर्यजमानं वाचयति' इति वाचनं विहितम् । हि यस्मात् अविद्वान् वैदिके कर्मणि न विहितः । किन्तु विद्वानेव विहितः । इति न्यायसूत्राक्षरार्थः । **के.** ) ज्ञाते — इति न्यायेन अविदुषो याजमानवत् आर्त्विज्येऽपि अनधिकारात् । **सु.** पृ. ९९.

※ **ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्ति** । ३।८।८।१८ ॥

वाजपेये 'क्लृप्तीर्यजमानं वाचयति' इति, 'उज्जितीर्यजमानं वाचयति' इति च श्रुतम् । 'आयुर्यज्ञेन कल्पताम्, प्राणो यज्ञेन कल्पताम्' इत्यादयो मन्त्राः क्लृप्तयो नाम । उज्जितिमन्त्रास्तु 'अग्निरेकाक्षरेण वाचमुदजयत्' ( तैसं. १।७।११ ) इत्यादयः । तत्र वाचयति इत्युक्त्या अनधीतस्वाध्यायो यजमानः अध्वर्युणा कर्मकाले वाचनीयः इति गम्यते इति उत्सूत्रे पूर्वपक्षे प्राप्ते सिद्धान्तयति । ज्ञातम् अस्यास्ति इति ज्ञातो यजमानः । 'पीता गावः भुक्ता ब्राह्मणाः' 'पीतप्रतिबद्धवत्साम्' इत्यादिवत् मत्वर्थीयेन अच्प्रत्ययेन प्रयोगः । ज्ञाते च ज्ञाते एव यजमाने सति वाचनं मन्त्राणां कर्तव्यम् । किंवा यथाश्रुत एव ज्ञातशब्दः । यजमानेन ज्ञाते एव मन्त्रजाते सत्यपि वाचनं कर्तव्यम् । वाचनं च खण्डशो वा समर्पणम्, 'ब्रूहि' इति अभिधानं वेति यथेष्टम् । अथ कस्मात् ज्ञाते एव वाचनम् ? हि यस्मात् अविद्वान् अनधीतस्वाध्यायः कर्मसु न विहितोऽस्ति न अधिकृतो भवति इति । तस्मात् अधीतोऽपि सन् अध्याय वाचयितव्य इति सिद्धान्तः । **के.**

* **ज्ञातताया:** विषयज्ञानातिरिक्ताया: आवश्यकत्वात् । **मणि.** पृ. १६. * **ज्ञाततालिङ्गकानुमानेनैव** बुद्धेः ग्रहणाङ्गीकारः ( मीमांसकमते ) । ज्ञातता च ज्ञानजन्यो ज्ञेयनिष्ठः अतिशयविशेषः । स च मानस-



प्रत्यक्षविषयः । **वैद्यनाथः** पृ ३३. * **ज्ञाततासाधनम्** । 'प्रामाण्यवादः' इति बिन्दौ द्रष्टव्यम् । **मणि.** पृ. १६.

* **ज्ञातुः** ज्ञानजन्यप्राकट्यरूपफलवत्तया ज्ञानकर्मत्वे बाधकाभावः इति जीर्णाः । **मणि.** पृ. ५४.

※ **ज्ञानमज्ञानस्यैव निवर्तकमिति न्यायः** । द्विविधा हि निवृत्तिः विरोधिना, सामग्रीनिवृत्त्या च । यथा वातेन दीपनाशः, यथा वा तैलवर्त्यादिनाशे दीपनिवृत्तिः । तत्र आद्या निवृत्तिरज्ञानस्य, द्वितीया कार्यवर्गस्येति । **साहस्री.** ३७८.

* **ज्ञानम्** आत्मसमवेतत्वात् आत्माधारम् । **सु.** पृ. ६६०. * ज्ञानं न प्रत्यक्षम्, किन्तु विषयज्ञाततया अनुमेयम् । इदम् 'प्रामाण्यवादः' इति बिन्दौ द्रष्टव्यम् । **के.** * ज्ञानं सर्वं मिथ्याविषयकमेवेति न काचित् प्रमा इति निरालम्बनवादिनां मतं तत्खण्डनं च 'निरालम्बनवादिनः' इति बिन्दौ द्रष्टव्यम् । **मणि.** पृ. २३–२४.

※ **'ज्ञानं हि पुरुषाधारं तद्भेदान्न विरोत्स्यते । पुरुषान्तरसंस्थं च नाज्ञानं तेन बाध्यते ॥'** इति न्यायः । **श्लोवा.** संबन्धाक्षेपपरिहारे ३५ । **रत्नाकरः**— सापेक्षं ज्ञाताज्ञातत्वम्, तदेकस्यापि भिन्नपुरुषापेक्षया ज्ञातत्वमज्ञातत्वं वा विरुद्धम् । नहि एकपुरुषगतं ज्ञानम् इतरगतेनाज्ञानेन विरुध्यते । नापि अज्ञानं ज्ञानेन विरुध्यते । * उत्पद्यमानमुत्तरं **ज्ञानं** स्वविरुद्धस्य पूर्वज्ञानस्य बाधेनैव उत्पद्यते । **वि.** ६।५।१९. * न च कार्यजननावस्थं ज्ञानं ज्ञानेन ज्ञायते, किन्तु अतिवृत्तजनकभावम् । **ऋजु.** पृ. ६६. * यथा द्वादशशतज्ञानमुत्पन्नं पाश्चात्येनैव नैमित्तिकेन सर्ववेदसदानादिज्ञानेन बाध्यते । **शा.** ६।५।१९. * **ज्ञानस्य** असन्मते स्वतःप्रमाणत्वेन दोषाद्यभावे प्रमात्वस्यैव सिद्धिः । **रहस्य.** पृ. १४. * ज्ञानस्य आनुमानिकत्वं वक्ष्यति । **बृहती.** पृ. ४५. * ज्ञानस्य ज्ञेयाभिव्यक्तिफलत्वात् फलान्तरानभ्युपगमात् । **विवि.** पृ. २७१. * ज्ञानस्य ज्ञेयनिरूपणाधीनस्य ज्ञेयभेदेन भेदः । **सु.** पृ. ७०४. * ज्ञानस्य निरवयवत्वात् । पृ. १०८२. * प्रधानाश्रितकर्मभेदेनैव गुणभूतस्य **ज्ञानस्य** कर्मणः भेदो युक्तः । **ऋजु.** पृ. १८६.

* **ज्ञानानुमेयता** । अत्र केचित् ज्ञानमनुमेयमिच्छन्ति, तेषां मते ज्ञानस्यैवाभावः प्रसज्जते । तथाहि, ज्ञानानुमानं हि नार्थसत्तामात्रेण भवितुमर्हति, तस्य तदविनाभावनियमाभावात्, युधिष्ठिराद्यर्थाभावेऽपि ज्ञानं परं वर्तते एव । अथ अर्थज्ञानं लिङ्गमित्युच्यते, तदपि नोत्पत्तिमात्रेण लिङ्गम् अनवभासमानेऽपि उत्पन्नानुत्पन्नयोरविशेषात्, न हि अनवभासमानं लिङ्गमनुमापकं भवति । न चार्थज्ञानस्य ज्ञानान्तराधीनमवभासनम्, ज्ञानान्तरानवगमात् उक्तरीत्या अनवस्थापातात् । तस्मादर्थज्ञानं स्वयंप्रकाशमेवाभ्युपगन्तव्यम् । **प्रवि.** पृ. ३३.

※ **ज्ञानादेर्निष्कर्षवदुत्कर्षोऽप्यङ्गीकार्यो बाधकाऽभावात् इति न्यायः** । यथा ज्ञानापकर्षावसानभूमित्वं स्थावराणाम्, तथा तदुत्कर्षावसानभूमित्वमीशस्य इत्यङ्गीकार्यम् । तच्चोत्कृष्टत्वं ज्ञानस्य सर्वविषयत्वमेवेति भावः इत्यन्यत्र विस्तरः । **साहस्री.** ७९०.

* **ज्ञानेच्छाकृतिसंस्काराणां** समानविषयकत्वेनैव कार्यकारणभावः । **मणि.** पृ. १७, * **ज्ञानेच्छाप्रवृत्तीनां** समानप्रकारकत्वसमानविशेष्यकत्वेन हेतुहेतुमद्भावः । पृ. ८३.

* **ज्ञानकर्मणोः** समुच्चयः मोक्षसाधनम् । 'मोक्षवादः' इत्यत्र बिन्दौ मणिग्रन्थे द्रष्टव्यम् । **के.** * ज्ञानकर्मणोः समुच्चयेन जनकता, अतः सिद्धो ज्ञानकर्मसमुच्चयः । **मणि.** पृ. ५७. * **ज्ञानजालमिदं** वासनानिबन्धनमेव ( इति ज्ञाननिरालम्बनवादिनः ) । **बृहती.** पृ. ५३. * **ज्ञानधर्मवैराग्यादयः** बुद्धिधर्मतयैव प्रसिद्धाः सांख्यानाम् । **ऋजु.** पृ. १६४. * **ज्ञानभिन्नो** विषयः । तन्निष्ठविषयत्वं च ज्ञानजन्यफलभागित्वम् । **मणि.** पृ. २६, * **ज्ञानमात्रं** मनोजन्यम् । पृ. १९.

* **ज्ञानमात्रात्मवादिनोऽपि** जन्मान्तरमभ्युपयन्ति । 'जन्मान्तरेऽभ्युपेतेऽपि ज्ञानमात्रात्मवादिनाम् ।' **श्लोवा.** आत्मवादे ३३.

* **ज्ञानलक्षणा** प्रत्यासत्तिः । ज्ञानलक्षणाऽनङ्गीकारे ज्ञातस्य सुरभिचन्दनखण्डस्य चक्षुषा 'सुरभि चन्दनम्' इति ज्ञानं न स्यात् । सौरभांशे सौरभत्वांशे वा प्रत्यासत्तेरभावात् । अतस्तत्र तज्ज्ञानमेव प्रत्यासत्तिः । **मणि.**

पृ. २९, * **ज्ञानवतोऽपि** विहिताननुष्ठाननिषिद्धाचरणाभ्यां प्रत्यवायोत्पत्तिः । पृ. ५७.

* **ज्ञानसाकारवादिभिः** ‘ज्ञानातिरिक्तस्य वेदनाऽनुपपत्तेः अन्यव्यावृत्तिरूपं सामान्यं ज्ञानाकारः’ इति निरूपितम् । **कणिका.** पृ. १८६.

* **ज्ञापनं** ज्ञानहेतुर्व्यापारः । स च अक्षराणामभिधानाख्यः पुरुषस्यापि अभिधायकाक्षरोच्चारणाख्यः । **सु.** पृ. ६६०.

* ‘**ज्येष्ठो** वा एष ( दधिग्रहः ) ग्रहाणाम् ।’ ज्येष्ठः प्रशस्तः, न तु प्रथमः । **संकर्ष.** ३।३।८, * ‘**ज्येष्ठा** वा एते ब्राह्मणाः पुरा विदामक्रन् ।’ अत्र ज्येष्ठशब्दः प्राथम्यवाचको न भवति, किन्तु प्राशस्त्यवाचकः । ३।३।८. * **ज्येष्ठस्य** ( बन्धुषु ज्येष्ठस्य ) विषुवदतिरात्रः कातीये । **बाल.** पृ. ३४.

* **ज्येष्ठमासस्य पौर्णमास्यां** बलीवर्दानभ्यर्च्य धावयन्ति, सोऽयं उद्वृषभयज्ञः ( स च उदीच्यैः क्रियते । वस्तुतः सर्वसाधारणोऽयम् । सातारप्रान्ते तु आषाढपूर्णिमायां पूर्वोत्तरदिने वा वर्तमाने मूलनक्षत्रे कुर्वन्ति । तस्य च बेंदूर इति संज्ञा । विदर्भादौ तु तस्यैव ‘पोळा’ इति संज्ञा । स तत्र भाद्रपदादिमासे क्रियते ) । **वि.** १।३।८.

* **ज्यैष्ठिनेयस्य** ( ज्येष्ठायाः पत्न्याः अपत्यस्य ) विषुवदतिरात्रः कातीये । **बाल.** पृ. ३४.

* ‘**ज्योतिः** । अथैष विश्वज्योतिः । अथैष सर्वज्योतिः, एतेन सहस्रदक्षिणेन यजेत’ इत्यत्र एभिर्नामधेयैः प्रकृतं ज्योतिष्टोमं संकीर्त्य तत्र वक्ष्यमाणविशेषाणि कर्मान्तराणि उपदिश्यन्ते । **भा.** २।२।८।२२.

**ज्योतिश्चरणाभिधानात्** ( १।१।२४ ब्रसू. ) इति **न्यायेन** मन्त्रराजं प्राकरणिकमन्त्राणां राजानं प्रधानभूतम् । **नृ. पू. भा.** १।१.

* **ज्योतिः** । द्योततेर्धातोः ‘द्युतेः सिन् आदेश्च जः’ इति औणादिके ( २७५ ) सिन् प्रत्ययविधेः दकारस्य च जकारादेशविधेः ऋद्धिसाधनत्वकारितं द्योतनं मत्वर्थलक्षणया वा ज्योतिष्मत्त्वं प्रवृत्तिनिमित्तम् इति ज्योतिःशब्दप्रवृत्तिः । **सु.** पृ. ८२५. * **ज्योतिः** नाम अग्निप्लवः षडहः ज्योतिष्टोमस्य विकृतिः अष्टरात्रे । **वि.** १२।३।१, * **ज्योतिः** नाम एकाहो यागः । गवामयने च ज्योतिर्नामको यागः । तत्र ऐकाहिकेतिकर्तव्यता ग्राह्या, न तु द्वादशाहिकी । ७।४।३. * **ज्योतिर्नाम** सोमयागः । ‘यस्त्रिरात्रे विभ्रंशेत्, तेन तस्मिन् पुनरस्ति । अथ यो ज्योतिष्टोमे प्रायश्चित्तिरभूत्, अपि ह्येतेन एकविंशतिदक्षिणेन पुनर्यजेत’ इति अग्निष्टोमविभ्रंशनिमित्तकप्रायश्चित्तार्थत्वेनापि ज्योतिषो विधानम् । **सु.** पृ. ८२४. * **ज्योतिः**, विश्वज्योतिः, सर्वज्योतिः इत्यत्र संज्ञया कर्मभेदः । संज्ञाऽधिकरणम् । **भा.** २।२।८।२२.

* **ज्योतिरतिरात्रः** ऋद्धिकामस्य कातीये । **बाल.** पृ. ३४.

**ज्योतिरधिकरणन्यायेन** ‘सत्यः सो अस्य महिमा’ ( ऋसं. ८।३।४ ) इति सूक्तस्य परमेश्वरपरत्वं तत्र च जगद्रूपमहिम्नः सत्यत्वोक्तिः इति चेन्न । निर्गुणत्वश्रुतिविरोधेन स्वरूपमहत्त्वस्यैव सत्यत्वोक्तेः षष्ठ्या उपचरितत्वात् । ( ज्योतिः ब्रह्म, पूर्ववाक्ये चरणाभिधानात् ‘पादोऽस्य विश्वा भूतानि’ इति सर्वभूतानां पादत्वेन अभिधानात् इत्यक्षरार्थः । अत्र **चन्द्रिका—** ‘यद्यपि नात्र ज्योतिश्चरणाभिधानात् इति ज्योतिरधिकरणन्यायावकाशः ‘अथ यदतः परो ज्योतिर्दीप्यते’ इत्यादिवाक्ये ‘पादोऽस्य विश्वा भूतानि’ इत्यादिपूर्ववाक्योक्तचतुष्पाद्ब्रह्मपरामर्शियच्छब्दानुसारेण भौतिकज्योतिषः दिविवर्तमानदीप्त्यनुपलब्ध्या च ज्योतिःशब्दस्य रूढित्यागात् ।... तथापि परोक्तमनुसृत्याह— न निर्गुणत्वेत्यादि । इति ) । **अद्वैत.** २।४।२७२ सू.

* **ज्योतिरादिनाम्ना** ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन अग्निष्टुन्नाम आग्नेयीसुब्रह्मण्याप्रवर्तकं बाध्यते पञ्चदशरात्रे । **बाल.** पृ. १३२.

* **ज्योतिःशास्त्रे** एवमुक्तम् । कल्पादौ एकनक्षत्रे स्थिताश्चन्द्रादयः, ततः प्रभृति आत्मनो गतिविशेषेण शीघ्रमन्दत्वरूपेण अन्यान्यन्यानि नक्षत्राणि उपसंक्रामन्ति । तेषां च नक्षत्रचक्रे संचरतां शीघ्रमन्दत्वविशेषेण गतिपर्यायवैलक्षण्यं भवति । चन्द्रादित्यगतिविशेषावच्छिन्नस्य च कालस्य तिथिनक्षत्रव्यपदेश्यत्वात् चन्द्रादित्यगतिविभागज्ञानेन तिथिनक्षत्रज्ञानं भवति । एतावन्तः चन्द्रादित्ययोर्गतिपर्यायाः एकस्मिन् युगे भवन्ति इत्यवगतेषु तद्भागेषु संवत्सरादिषु ‘इह इदानीं चन्द्रमाः, इहेदानीमादित्यः’ इत्येवं चन्द्रादित्यादिगतिविभागज्ञानस्य तिथ्यादिज्ञानोपयोगित्वम् । एतावद्भिर्युगपर्यायैः एतावन्तः चन्द्रादित्यगतिपर्यायाः इति च युगपरिवर्तपरिमाणद्वारेण चन्द्रादित्यादिगतिविभागो ज्ञायते । एतावन्तो युगपरिवर्ता जाताः इति ज्ञाते ‘अस्य युगस्य एतावन्ति अहोरात्राणि अस्य एतावन्ति’ इति समस्तातीताहोरात्रसंख्यानात्मकमहर्गणं कृत्वा ‘अस्य ग्रहस्य इदानीम् ईदृशी गतिर्वर्तते अस्य ईदृशी’ इति ज्ञानं भवति इति युगपरिवर्तपरिमाणज्ञानस्य चन्द्रादित्यादिगतिविभागज्ञानोपयोगित्वम् । दिवसस्याष्टमोऽयं मुहूर्तः, तेन अस्मिन्मुहूर्ते नभोमध्ये सूर्यः इति मुहूर्तसंख्यानेन आदित्यस्य गतिविशेषज्ञानं भवति । **सु.** पृ. १२९–१३०, * **ज्योतिःशास्त्रे** ग्रहदौःस्थित्ये शान्तिविधानात् सौस्थित्ये च उपनयनादिविधानात् तस्य च वेदमूलत्वात् कर्मफलविपाकसूचनं वेदमूलम् । पृ. १३०, * **ज्योतिःशास्त्रे** तिथ्यादिकथनं गणितानुमेयत्वात् लोकमूलम्, ग्रहसौस्थ्यादिनिमित्तेष्टानिष्टफलविपाकसूचनं तु वेदमूलम् । पृ. १२९.

* **ज्योतिःशास्त्रविषयः** ग्रहाणां सौस्थित्यदौःस्थित्यरूपः संनिवेशः । **सु.** पृ. १३०, * **ज्योतिःशास्त्रव्यवहारसिद्ध्यर्थं** चन्द्रसूर्यान्तरालादिदेशपरिमाणं युगादिकालपरिमाणं च गणितविषयसंप्रदायोत्थानुमानपूर्वकम् । पृ. १२८.

* **ज्योतिषं वेदाङ्गम्** । पौरुषेयमपि अविच्छिन्नपारंपर्येणानुवर्तनात् वेदमूलकत्वाच्च प्रमाणम् ( ‘पञ्चसंवत्सरमयम्’ इत्यादि ज्योतिषं **लगधाचार्यप्रणीतमिति** वदन्ति ) । **वि.** १।३।७.

* **ज्योतिष्टोमः** अभिषेचनीयस्य प्रकृतिः । अभिषेचनीयो राजसूयान्तर्गतः सोमः । **वि.** ३।३।१०, * **ज्योतिष्टोमः** । ‘एकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते, सर्वेभ्यो ज्योतिष्टोमः’ । अत्रोत्पत्तिवाक्यस्थे विधिभावने आश्रित्य ‘सर्वेभ्यो ज्योतिष्टोमः’ इति फले विधिः । ४।३।१०, * **ज्योतिष्टोमः** । ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोमः ‘त्रिवृत् पञ्चदशः सप्तदशः एकविंशः, एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः’ स्तोमानां ज्योतिष्ट्वं यज्ञप्रकाशकत्वम् । स्तोमवत्त्वं च सोमयागानामेव, नेष्टिपशूनाम् । ४।४।१२.

**ज्योतिष्टोमः दर्शपूर्णमासोत्तरं कर्तव्यः इति कालार्थः संयोगः ॥**

**उत्पत्तिकालविशये कालः स्याद्, वाक्यस्य तत्प्रधानत्वात् । ४।३।१५।३७ ( ३८ के. ) ॥**

**भाष्यम्—** इदमाम्नायते ‘दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत’ इति । तत्र संदेहः किमेतत् अङ्गस्य विधानम्, उत कालस्येति । किं प्राप्तम् ? श्रुतेः अङ्गस्य । इति प्राप्ते, उच्यते । अस्मिन् कालाङ्गविधानसंशये कालः स्यात्, वाक्यस्य तत्प्रधानत्वात् । कालप्रधानं हि एतत् वाक्यम्, न यागविधानपरम् । कथमतत्परता अस्य ? रूपावचनात् । कथं रूपावचनम् ? देवताऽभावात् । कथमभावः ? अश्रुतत्वात् । या हि यस्य श्रूयते, सा तस्य देवता भवति । श्रुत्या हि देवता गम्यते, न प्रत्यक्षादिभिः । तस्मात् नापूर्वस्य यागस्य विधानम् । कालार्थे अनुवादे नायं दोषः । विहितदेवताको हि अनूद्यते । तस्मादत्र कालार्थः संबन्धः इति । तच्च दर्शयति ‘एष वै देवरथो यद् दर्शपूर्णमासौ, यद् दर्शपूर्णमासाविष्ट्वा सोमेन यजते, रथस्पष्ट एव अवसाने वरे देवतानामवस्यति’ इति । प्रदर्शिते मार्गे रथेन यातुः सुखं भवति, एवं दर्शपूर्णमासौ इष्ट्वा सोमेन यष्टुः सुखं भवति । दर्शपूर्णमासप्रकृतीनि तस्य दीक्षणीयाऽऽदीनि स्वभ्यस्तानि भवन्ति । एवम् अर्थवादः अर्थवान् भवति ।

वा— ‘कथं रूपावचनम् ? देवताऽभावात्’ इत्ययुक्तमिदम् ( भाष्यम् ) । ‘वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत’ इति सत्यामपि पूर्वकालतायां न कालार्थः संयोगः, किं तर्हि ? अङ्गाङ्गिसंबन्धः । अविपरिवर्तमानत्वात् न शक्यते वाक्यान्तरेण ( विधीयते इत्यन्वयः ) यो बृहस्पतिसवः अवगतः, स एव काले विधीयते इति । तस्मात् प्रकरणान्तरे श्रूयमाणं कर्मान्तरत्वं प्रतिपद्यते बृहस्पतिसवधर्मकम् । एवमिहापि प्रकरणान्तरे श्रूयमाणं कर्मान्तरम् । यथा सोमोद्भिदादयः ऐन्द्रवायवा-

दिभिः रूपवन्तः, एवं रूपवान् भविष्यति । तस्मात् अन्यथा वर्ण्यते ।

ज्योतिष्टोमप्रकरणे इदमाम्नातम् । ननु तत्रापि प्रकरणान्तरत्वात् दर्शपूर्णमासयोरङ्गता । उच्यते । 'दर्शपूर्णमासाभ्यामिष्ट्वा' इति नामधेयमिदम् आख्याताभावात् स्वतन्त्रम् । स्वातन्त्र्याच्च यत् पूर्वं विज्ञातम्, तत् अभिधत्ते । आख्याते हि सति तदनुसारि एतत् । यदि आख्यातं प्रकृते वर्तते, ततः प्रकृते । अथ अप्रकृते, ततः तदपि अप्रकृते । तस्मात् दर्शपूर्णमासोत्तरकालः सोमः कर्तव्यः इत्येतत् विधीयते । स च विपरिवर्तमानत्वात् न कर्मान्तरम् । दर्शपूर्णमासौ नैव विधीयेते । अतस्तयोः कर्मान्तरशङ्कैव नास्ति ।

**शा**—'**दर्शोपलक्षिते काले सोमयागो विधीयते । स च प्रकृत एवेति न कर्मान्तरसंभवः ॥**' तस्मात् सोमस्यायं कालविधिः । १६.

**सोम**— पूर्ववत् इह विपरिवृत्त्यभावेन कर्मान्तरत्वात् अङ्गप्रयोजनसंबन्धपरत्वम् इति प्रत्यवस्थानात् **संगतिः** । **प्रयोजनम्**— पूर्वपक्षे सोमारम्भे दर्शपूर्णमासधर्मकं कर्मान्तरमनुष्ठेयम्, सिद्धान्ते तु नेति । **सूत्रार्थस्तु**—कर्मान्तरोत्पत्तिकालविधिसंदेहे कालः स्यात्, 'दर्शपूर्णमासाभ्यामिष्ट्वा' इति वाक्यस्य कालप्राधान्यात् इति ।

**वि**—'किं दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यागकः । अङ्गाङ्गिभावः कालो वा, ह्यपारार्थ्याय चाङ्गता ॥, दर्शादिलक्षिते काले सोमयागो विधीयते । स्वतन्त्रफलवत्त्वेन न युक्ताऽङ्गाङ्गिता तयोः ॥' १६

**भाट्ट**— सोमप्रकरणे एव 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति श्रुतम् । तत्र यद्यपि फलार्थतया सोमयागस्य क्लृप्तत्वात् प्रकृतप्रत्यभिज्ञाबलेन न कर्मान्तरत्वाशङ्का, तथापि प्रकरणान्तरन्यायेन दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य फलवत्सोमयागोद्देशेन विधेयपूर्वकालविशेषणतया विधानम् । न चात्र वाक्यभेदः, परस्परान्वयस्य व्युत्पन्नत्वात् । इति प्राप्ते, 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ आख्यातासमानाधिकरणत्वेन व्यवहितपरामर्शकत्वस्य कौस्तुभादौ स्थापितत्वात् कर्मान्तरत्वानुपपत्तेः स्वफलप्रयुक्तदर्शपूर्णमासपूर्वकालकत्वस्यैव सोमयागोद्देशेन विधानम्, इति कालार्थ एवायं संयोगः । **प्रयोजनं** पूर्वपक्षे सोमारम्भात् पूर्वस्मिन् पर्वणि दर्शपूर्णमासधर्मकं कर्मान्तरं सद्यस्कालं कृत्वा द्व्यहकालं दर्शो वा पूर्णमासो वा कार्यः, सिद्धान्ते नेति । १३.

**मण्डन**— 'कृतेष्टिः सोमकालवान् ।' (कृता इष्टिर्येन स कृतेष्टिः पुरुषः सोमकालवान् भवति) । १७.

**शंकर**— 'दर्शोत्तरं सोमयागः ।' १६.

* ज्योतिष्टोमः द्वादशाहस्य प्रकृतिः । वि. १०।६।१४, * ज्योतिष्टोमः न दर्शपूर्णमासाङ्गम् । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति क्त्वाप्रत्ययस्य तु कर्त्रैक्यम् उत्तरकालत्वं चार्थः । ४।३।१६, * ज्योतिष्टोमः नित्यः न काम्यः, 'वसन्तेवसन्ते ज्योतिषा यजेत' इति वीप्सया विधानात् । ६।२।११. * ज्योतिष्टोमः मूलप्रकृतिः सोमानाम् । ८।१।३ वर्णकं २. * ज्योतिष्टोमः यागाभ्यासात्मकः । **सु.** पृ. ८००. * ज्योतिष्टोमः याजुर्वेदिकः । वि. ३।३।३, * ज्योतिष्टोमः सर्वकामार्थः 'सर्वेभ्यो ज्योतिष्टोमः' इत्युक्तत्वात् । ४।३।११, * ज्योतिष्टोमः सर्वकामार्थोऽपि नैकेनैव प्रयोगेण सर्वफलावाप्तिः, किन्तु प्रतिफलं पृथक् प्रयोगः । ४।३।११. * ज्योतिष्टोमः । सामवेदे ज्योतिष्टोमोत्पत्त्यभावात् यजुर्वेदोत्पन्नज्योतिष्टोमप्राथम्यप्रतीतेः । **सु.** पृ. ९८३ । गुणमुख्यव्यतिक्रमाधिकरणे (३।३।२) ज्योतिष्टोमस्य याजुर्वेदिकताया वक्ष्यमाणत्वात् औद्गात्रे ज्योतिष्टोमानुत्पत्तेः तदङ्गभूतस्तोत्राद्याशया ज्योतिष्टोमोक्तिः । पृ. ९८४. * ज्योतिष्टोमः साह्नः, एकेनाह्ना निष्पाद्यमानत्वात् । वि. ३।३।१३, * ज्योतिष्टोमः स्वयमेकोऽपि समाप्तिभेदाद्भिद्यते । यज्ञायज्ञीयेन स्तोत्रेण समाप्तौ अग्निष्टोमः । तत ऊर्ध्वम् उक्थ्यस्तोत्रैः त्रिभिः समाप्तौ उक्थ्यः । एवंरीत्या सप्त भेदाः । तत्राग्निष्टोमः प्रकृतिः उत्तरसंस्थाः अग्निष्टोमस्य विकृतयः । ३।६।१६, * ज्योतिष्टोमः स्वर्गहेतुः देहान्तरस्योत्पादकः । ४।३।१२. * **ज्योतिष्टोमं** प्रकृत्य समामनन्ति 'तिस्र एव साह्नस्योपसदः द्वादशाहीनस्य' इति । वाक्येन प्रकरणं बाधित्वा द्वादशोपसत्ता अहीनस्य धर्मः, न तु ज्योतिष्टोमस्य । भा. ३।३।८।१५–१६. * '**ज्योतिष्टोमेन** स्वर्गकामो यजेत'



अयं लिङ् श्रौतः विधौ । बाल. पृ. ३९. * ज्योति**ष्टोमात्** प्राक् ब्राह्मणेन दर्शपूर्णमासे अग्नीषोमीयपुरोडाशः तद्विकारो वा न कर्तव्यः । सोमोत्तरं तु कर्तव्यः । वि. ५।४।८, * ज्योतिष्टोमस्य द्वादशाहो विकृतिः । सत्रत्वात्तु द्वादशाहसत्रे कर्तृबहुत्वम् । १०।६।१४.

**ज्योतिष्टोमस्य याजुर्वेदिकत्वात् उपांशुः प्रयोगः ॥**

**भूयस्त्वेनोभयश्रुति । ३।३।३।१० ॥**

**भाष्यम्**— यजुर्वेदे ज्योतिष्टोमं समामनन्ति 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तथा सामवेदेऽपि अस्य एवमेव समाम्नानम् । सकृच्च कृतायां बुद्धौ द्वितीयं गुणार्थं श्रवणं भवति । तत्र संदेहः किं याजुर्वेदिकमाम्नानं क्रियाऽर्थं सामवेदिकं गुणार्थम्, उत विपरीतमिति । यतरच्च आम्नानं क्रियाऽर्थम्, तद्धर्मा भविष्यन्ति । किं तावत् प्राप्तम् ? सामवेदिकं क्रियाऽर्थं याजुर्वेदिकं वा इत्यनिश्चयो विशेषानवगमादिति । एवं प्राप्ते, ब्रूमः । भूयस्त्वेन गुणानां परिच्छिद्येत । यत्र भूयांसो गुणाः समाम्नाताः, तत्र क्रियाऽर्था चोदनेति गम्यते । यत्र हि कर्तव्यतया चोदना, तत्रेतिकर्तव्यता आकाङ्क्ष्यते । यत्र आकाङ्क्षिता इतिकर्तव्यता, तत्र इतिकर्तव्यतावचनं न्याय्यम् । ये च भूयांसो गुणाः, सा इतिकर्तव्यता । तदितिकर्तव्यतालिङ्गेन कर्तव्यताचोदनामनुमिमीमहे । यथा बहुषु राजप्रतिमेषूपविष्टेषु यस्य श्वेतं छत्रं वालव्यजनं च, स राजा इत्यवगम्यते अनाख्यातोऽपि राजलिङ्गेन । एवं कर्तव्यतालिङ्गेन गुणानां भूयस्त्वेन ज्योतिष्टोमस्य याजुर्वेदिकस्य चोदना अनुमीयते । तस्मात् ज्योतिष्टोमस्य उपांशुप्रयोगः । यजुर्वेदेन हि ज्योतिष्टोमः क्रियते, यत्तेन चोद्यते । अचोदितं न शक्यते कर्तुमिति ।

**वा**— इदानीं यानि वेदान्तरेषु श्रूयन्ते प्रधानानि, तानि केन (वेदेन) व्यपदेष्टव्यानि इति विचार्यते । तत्र एष निर्णयः, यत्रोत्पद्यन्ते, न यत्र गुणार्थं श्रूयन्ते । (परमतेन व्याचष्टे–) किं प्राप्तम् ? शाखाऽन्तरवत् सर्वत्रोत्पद्यन्ते, ततश्च धर्मविकल्पः । (स्वमतेन उत्पत्तिविकल्पार्थत्वेन व्याचष्टे–) अथवा उभयत्र स्वरूपस्य गुणानां च श्रवणात् कदाचित् किञ्चिदुत्पत्त्यर्थम् । एवं विकल्पप्राप्तौ उच्यते । '**न शाखाऽन्तरवद् युक्तो विकल्पो वेदगोचरः । तस्मादेको गुणार्थोऽत्र, कश्चिदेको विधायकः ॥**' स तु ज्योतिष्टोमादेः कतमः इति । '**गुणानां यत्र भूयस्त्वमितिकर्तव्यताऽऽत्मकम् । तत्र तेनैव लिङ्गेन तस्य कर्तव्यतेष्यते ॥**' (परमतेनाह– ) यजुर्वेदज्योतिष्टोमस्य दीक्षणीयादिका इतिकर्तव्यता बह्वी । तस्मात् तत्रैव अस्योत्पत्तिः । अतश्चासौ यजुर्वेदेन क्रियते इत्युच्यते । तेन प्रमीयमाणत्वात्, तेन प्रमाणेन क्रियते इत्यर्थः । अथवा तेनैव व्यापारेण (कर्तव्यत्वकरणाख्येन) अनुष्ठानमपि (यद्वेदात् भवति) तेनैव क्रियते इति व्यपदिश्यते । न तु एतत् भूयस्त्वव्याख्यानं युक्तम् । कुतः ? '**यद् यस्य गमकत्वेन स्वशक्तेरवधारितम् । तदल्पं बहु वा तस्य प्रतीतौ न विशिष्यते ॥ यादृशस्य हि धूमस्य गमकत्वावधारणा । स तादृग् बहुरल्पो वा वह्निं गमयति ध्रुवम् ॥**' तथा इहेतिकर्तव्यता लिङ्गत्वेनोपन्यस्ता । सा यत्रापि अल्पा, तत्रापि कर्तव्यतया विना अनुपपद्यमाना शक्नोत्येव गमयितुम् । '**नैव हीहाङ्गभूयस्त्वमितिकर्तव्यता मता । किं तर्ह्यङ्गं यदेवाहुरितिकर्तव्यताऽपि सा ॥**' तत्र यदि वेदान्तरस्थप्रधानानुवादेन अल्पा विधीयते इति । उच्यते । शक्यं वक्तुं बह्व्यपि तथैव विधास्यते इति । तत्रैतत् स्यात् । अल्पा सुखं वेदान्तरस्थस्य विधीयते, बह्वी तु दुःखमिति । नैतदेवम् । बह्वृचामपि वाक्यबहुत्वस्य क्षमत्वात् । (स्वमतेन कर्मनिष्पत्त्युपयोगिद्रव्यदेवतारूपाङ्गसाकल्यार्थतया भूयस्त्वं व्याख्यातुं प्रतिजानाति– ) तस्मात् अकारणम् इति एवं वर्णनीयम् । (व्याचष्टे– ) इह हि द्रव्यदेवताक्रियं कर्मस्वरूपत्वेन अवधार्य तच्च यजुर्वेदे सकलमाम्नायते । वेदान्तरे तु (ऋक्सामवेदयोः) क्रियामात्रं संकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते । ततश्च द्रव्यदेवताऽऽकाङ्क्षित्वमपनीतम् इत्यशक्यं स्वतन्त्रक्रियाविधानम् । तथा च शाखाऽन्तराधिकरणे व्याख्यातम् । यजुर्वेदे तु समस्तस्वरूपाम्नानात् विनाऽपि स्तोत्रादिभिः शक्यते यागो निर्वर्तयितुम् । वचनसामर्थ्यात् अदृष्टार्थानां स्तोत्रादीनां ग्रहणम् । अतोऽयं सूत्रार्थः, यत् उभयवेदश्रुति (उभयोर्वेदयोः श्रुतिः

श्रवणं यस्य तत् ) कर्म तद्रूपभूयस्त्वेन सामस्त्येन निराकाङ्क्षीकरणसमर्थेन निर्णेतव्यमिति । ऋक्सामवेदयोश्च तुल्यधर्मत्वात् तद्गतभेदोपादानं निष्फलम्, इति मत्वा ' उभयश्रुति ' इत्युक्तम् ( सूत्रे ) ।

**सोम**— यत्र विधिः, तद्धर्मत्वे उक्ते तत्प्रसङ्गात् ज्योतिष्टोमस्य क्व विधिः इति विचारणात् **संगतिः** । **सूत्रार्थस्तु**– वेदद्वयश्रुतं कर्म रूपभूयस्त्वेन विधेयतया अवगन्तव्यमिति ।

**वि**— ' ज्योतिष्टोमो यजुःसामवेदयोरस्ति तत्र किम् । उच्चैस्त्वमुत नीचैस्त्वम्, हेत्वभावादनिर्णयः ॥, यजुष्यधिगते द्रव्यदेवते तत्र तद्विधिः । तद्वशात् स्वरनिर्णीतिरुपांशु स्यादनुष्ठितिः ॥ '

**भाट्ट**— यत्र एकमेव कर्म अनेकेषु वेदेषु श्रुतम्, तत्र क्व उत्पत्तिः क्व च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायाम्, यत्र अङ्गबाहुल्यं तत्र उत्पत्तिः सेवकबाहुल्येन राजावस्थाननिर्णयवत् । वस्तुतस्तु कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यस्यैव निर्णायकत्वम् । तत्रापि द्वैविध्ये बहिरङ्गत्वेऽपि अव्यभिचारात् देवताया एव, न तु द्रव्यस्येत्याद्यूह्यम् । अतश्च एवंविधनिश्चायकसत्त्वे तत्रैवोत्पत्तिः, अन्यत्र तदनुवादेन अविरोधिगुणान्तरविधानम् । विरोधिनि तु गुणाद्भेद एव । एवं यत्र कस्यचिदपि नियामकस्याभावः, तत्रापि अभ्यासाद्भेदः । नह्यत्र शाखाऽन्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वम्, तद्वदिह अध्येतृभेदाभावात् । अतो नियामकबलेन यत्रैवोत्पत्तिः, तद्वेदनिबन्धन एव स्वर इति सिद्धम् ।

**मण्डन**—' ज्योतिष्टोमो यजुर्वेदे । '

**शंकर**— ' उभयश्रुति भूयस्त्वात् । ' उभयश्रुति कर्म भूयस्त्वात् निर्णेयम् ।

* **ज्योतिष्टोमस्य** सप्त संस्थाः अग्निष्टोमः अत्यग्निष्टोमः उक्थ्यः षोडशी अतिरात्रः अप्तोर्यामः वाजपेयश्चेति । तत्राग्निष्टोमसंस्थैव निजं रूपं ज्योतिष्टोमस्य । वि. ५।३।१३. * ज्योतिष्टोमस्य समस्तस्य द्रव्यदेवतात्मकस्य कर्मस्वरूपस्य यजुर्वेदे आम्नानात् स्तोत्रादिभिर्विनाऽपि यागनिष्पत्तिशक्तेः स्तोत्रादिनिरपेक्षक्रियाविधानं शक्यम् । सु. पृ. ११९०, * ज्योतिष्टोमस्य सामवेदे उत्पत्त्यभावात् । पृ. ९९७. * **ज्योतिष्टोमे** अंश्वदाभ्ययोरपि ग्रहधर्माः कर्तव्याः, तयोरपि ज्योतिष्टोमार्थत्वात् । भा. ३।६।११।३२–३४, * ज्योतिष्टोमे अंश्वदाभ्यादयो ग्रहाः क्रतुशेषत्वात् धाराग्रहेभ्यः पूर्वं सकृदेव कर्तव्याः । चित्रिण्यादयश्च इष्टकाः अग्निशेषत्वात् सकृदेव उपधातव्याः । ५।३।६।१५–१६. * ज्योतिष्टोमे अंश्वदाभ्यरूपगुणविधिः । वि. २।३।९, * ज्योतिष्टोमे ' अग्नीदग्नीन् विहर ' इति मन्त्रः अग्निविहरणप्रैषे अन्वितः, न तु उत्थाने । ' उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर ' इति तु उत्थानकालो विधीयते । ३।२।४, * ज्योतिष्टोमे अग्नीषोमप्रणयनस्य दीक्षाकाले नापकर्षः । यूपच्छेदापकर्षेऽपि तदन्ताङ्गसमूहस्यापकर्षाभावात् । ५।१।१४. * ज्योतिष्टोमे अग्नीषोमीयः पशुः । अग्नीषोमीयपशुविषयकं प्रायः सर्वम् ' अग्नीषोमीये पशौ ' इति शब्दे द्रष्टव्यम् । के. * ज्योतिष्टोमे अग्नीषोमीयः पशुः औपवसथ्ये सुत्यापूर्वदिने आलभ्यते, सवनीयपशुः सुत्यादिने प्रातःसवने आश्विनग्रहादूर्ध्वमालभ्यते, अनुबन्ध्यपशुस्तु अवभृथादूर्ध्वमालभ्यते । ( तत्स्थाने आमिक्षा वा क्रियते । ) वि. ५।१।६. * ज्योतिष्टोमे ' अग्नीषोमीयं पशुमालभते ' इत्यत्र एकत्वं विवक्षितमेव । भा. ४।१।५।११–१६, * ज्योतिष्टोमे अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य स्वरोः सोमान्ते प्रहरणम्, नानुबन्ध्याकाले । ११।३।५।८–१२, * ज्योतिष्टोमे अग्नीषोमीये पशौ ' बर्हिषा यूपावटमवस्तृणाति ' । अत्र बर्हिषि, ' आज्येन यूपमनक्ति ' इत्यत्र आज्ये च प्राकृता धर्मा न कर्तव्याः । ३।८।१६।३१, * ज्योति० पशौ यूपम् ' अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि ' इति देशलक्षणा, न तु अर्धमन्तर्वेदि इति यूपाङ्गभावेन । ३।७।६।१३–१४, * ज्योति० पशौ यूपपरिव्याणार्था रशना रशनाधर्माश्च श्रूयन्ते, ते पशुत्रयार्थाः नाग्नीषोमीयार्थाः एव । ३।६।१०।२१, * ज्योति० पशौ शेषभक्षा मैत्रावरुणस्यापि । १०।७।६।१८–१९ । परन्तु एकभागत्वम् । १०।७।७।२०–२१. * ज्योतिष्टोमे अग्नीषोमीयपशुप्रक्रमस्था ' वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाति ' इति स्मृतिः न प्रमाणम् । वि. १।३।२, * ज्योतिष्टोमे अग्नीषोमीय–सवनीय–अनुबन्ध्याः



त्रयः पशवः । तेषां त्रयाणामर्थे एक एव यूपः तन्त्रेण संपाद्यः । ११।३।३. * ज्योतिष्टोमे अञ्जनस्य वपनस्य दन्तधावनस्य नखनिकृन्तनस्य स्नानस्य च फलश्रुतिः फलार्थवादः, न तु फलविधिः ! भा. ४।३।१।१–३, * ज्योतिष्टोमे अतिग्राह्या नाम ग्रहाः विहिताः । ते च विकृतिषु अतिदिश्यन्ते । ' पृष्ठ्ये गृह्णीयात् ' ' उक्थ्ये गृह्णीयात् ' इति पुनर्वचनं तु प्रकृतिसाम्यार्थम् । वि. १०।८।११. * ज्योतिष्टोमे अधिषवणफलके प्रकृत्य श्रूयते ' दीर्घसोमे संतृद्यात् धृत्यै ' इति । इदं संतर्दनं ज्योतिष्टोमसंस्थासु गृह्यते, अग्निष्टोमे तु संतर्दनम् असंतर्दनम् इति विकल्पः । न च ज्योतिष्टोमादुत्कर्षः संतर्दनस्य । भा. ३।३।११।२४–३१. * ज्योतिष्टोमे अध्वर्युरेव चमसैर्जुहुयात् । ग्रहहोमव्यापृतत्वेन तदशक्तौ चमसाध्वर्यवः चमसैर्जुहुयुः । वि. ३।७।२२, * ज्योतिष्टोमे अनशनरूपं तपो याजमानम्, वचनविशेषात्तु ऋत्विजामपि । तपोऽधिकरणम् । ३।८।४, * ज्योतिष्टोमे अनारभ्याधीतानाम् अदाभ्यादिग्रहाणां सकृदेव प्रातःसवने अनुष्ठानम् । ग्रहेष्टकाधिकरणम् । ५।३।६, * ज्योतिष्टोमे अनुबन्ध्यानिगदेषु उस्राशब्द एव, वनस्पतियागे च वनस्पतिशब्द एव पठनीयः । १०।४।१८. * ज्योतिष्टोमे अनुयाजोत्कर्षेऽपि दाक्षिणाग्निकयोः पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः । भा. ५।१।१५।२८.

**ज्योतिष्टोमे अनुष्टुभो गायत्र्योश्च प्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानम् ।**

**प्रागाथिकं तु । ९।२।६।२५ वर्णकं ३ ॥**

**भाष्यम्**— एवं वा । ' पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा, गायत्रसंहिते गायत्रे तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे, उष्णिहि सफम्, ककुभि पौष्कलम्, कावमन्त्यं जगतीषु ' इति । यदेतत् श्यावाश्वमान्धीगवं च द्वे सामनी तयोः पूर्वा अनुष्टुप् ' पुरोजिती वो अन्धसः सुताय मादयिष्णवे । अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् । ' ( इति ) । उत्तरे द्वे गायत्र्यौ, ' यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्व्यः ॥ तं दुरोषमभी नरः सोमं विश्वाच्या धिया । यज्ञं हिन्वन्त्यद्रिभिः ॥ ' इति । तत्रैषोऽर्थः सांशयिकः किं अन्ययोः उत्पत्त्यनुष्टुभोः आगमं कृत्वा समासु गानं कर्तव्यम् अथवा याऽसौ पूर्वाऽनुष्टुप् उत्तरे च गायत्र्यौ, तयोः प्रग्रथनेन तृचकर्म कृत्वा अनुष्टुप्कारं गानं कर्तव्यमिति । किं प्राप्तम् ? अन्ये अनुष्टुभौ आगमयितव्ये इति । कुत एतत् ? एवं तासामुत्पत्तिरर्थवती भविष्यति । एवं प्राप्ते, ब्रूमः । ' प्रागाथिकं तु । ' प्रागाथिकं गानं कर्तव्यम् । एवं हि स्मरन्ति 'आनुष्टुभः प्रगाथः' इति । प्रगाथता स्मर्यमाणा नापह्नोतव्या ।

**स्वे च । २६ ॥**

**भाष्यम्**— एवं स्वे गानं भविष्यति । तत्र प्रकृतमनुग्रहीष्यते, नाप्रकृतप्रक्रिया भविष्यति ।

**प्रगाथे च । २७ ॥**

**भाष्यम्**— प्रगाथशब्दश्च उपपत्स्यते पुनःपादे गीयमाने ।

**लिङ्गदर्शनाव्यतिरेकाच्च । २८ ॥**

**भाष्यम्** — अव्यतिरेकेण च लिङ्गं भवति । एवमाह, ' चतुर्विंशतिर्जगत्यस्तृतीयसवनम् । एका ककुप् ' इति । तन्निर्दिश्यते पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा । गायत्रसंहिते गायत्रे तृचे भवतः, ताः षड् गायत्र्यः तिस्रो जगत्यो भवन्ति । श्यावाश्वान्धीगवे आनुष्टुभे तयोः पूर्वा अनुष्टुप् उत्तरे गायत्र्यौ तत्र प्रग्रथनेन क्रियमाणे द्वयोः साम्नोः षडनुष्टुभः, ताश्चतस्रो जगत्यः, पूर्वाभिः सह सप्त । उष्णिहि सफं ककुभि पौष्कलम् एकमपि एकस्यामृचि अपरमप्येकस्याम् । ते द्वे उष्णिक्ककुभौ, सैका जगती गायत्रीपादश्च । पूर्वाभिः सह अष्टौ जगत्यः । कावे तिस्रो जगत्यः, ताभिः सह एकादश भवन्ति । एकविंशं यज्ञायज्ञीयम्, तत्र पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिः । ततः ककुभावुत्तरे कृत्वा प्रगाथः क्रियते । एकविंशे च स्तोमे क्रियमाणे सप्त बृहत्यो भवन्ति, चतुर्दश ककुभः । याः सप्त बृहत्यः, ताः पञ्च जगत्यः । पूर्वाभिः सह षोडश । एकश्चात्र जगतीपादः पूर्वेण गायत्रीपादेन सह विंशतिरक्षराणि । अथ चतुर्दशसु ककुप्सु या द्वादश ककुभः, ताः सप्त जगत्यः,

पूर्वाभिः सह त्रयोविंशतिः । ये द्वे ककुभौ शिष्टे सैका जगती गायत्रीपादश्च, पूर्वाभिः सह चतुर्विंशतिर्जगत्यः । गायत्रीपादः, पूर्वैर्विंशत्यक्षरैः एका ककुप् भवति । एवं प्रगाथे क्रियमाणे चतुर्विंशतिर्जगत्यः एका च ककुप् । अथ प्रगाथो न क्रियते ततः श्यावाश्वान्धीगवयोः उत्पत्त्यनुष्टुभोरागमात् यज्ञायज्ञीये उत्पत्तिककुभोरागमात् नैषा संख्या संपद्यते । तस्मात् प्रग्रथनेन गानं कर्तव्यमिति । (अत्र यत् अनेकवारं जगतीत्वमुक्तम्, तत् केवलमक्षरगणनया कल्पनामात्रम्, न तु तथा पठनमिति ध्येयम् । के.)

शा— 'श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः' इति तयोः पूर्वाऽनुष्टुप् उत्तरे द्वे गायत्र्यौ, तत्रापि अन्ययोः अनुष्टुभोरागमनं पठितानामेव वा प्रग्रथनेन अनुष्टुप्त्र्यं संपाद्यमिति विचारः । लिङ्गान्तरप्रदर्शनार्थं तु इदं व्याख्यानान्तरम् (भाष्ये) नात्र का चित् अधिका शङ्काऽस्ति ।

सोम— 'पुरोजिती वो अन्धसः' इत्यस्यां यथापाठं गानं कृत्वा चतुर्थं पादं पुनरुपादाय 'यो धारया पावकया' इत्यनया संयोज्य गेयम्, तस्याश्च अन्तिमं पादं पुनरुपादाय 'तं दुरोषम्' इत्यनया संयोज्य गेयम् इत्येवं प्रग्रथनेन अनुष्टुप्-त्र्यं संपाद्यम् ।

वि— 'श्यावाश्वान्धीगवेऽनुष्टुबानेया ग्रथ्यतेऽथवा ।, पुरेव, लिङ्गं जगतीचतुर्विंशतिकीर्तनम् ॥' तृतीयसवने आर्भवः पवमानः । तस्मिन् पञ्च सूक्तानि, सप्त सामानि । 'स्वादिष्ठया मदिष्ठया' इत्येकं सूक्तम्, तस्मिन् गायत्र्यः तिस्र ऋचः । तासु गायत्रं संहितं चेति द्वे सामनी । 'पुरोजिती वो अन्धसः' इति सूक्तान्तरम्, तत्र एका अनुष्टुप् उत्तरे द्वे गायत्र्यौ । तासु श्यावाश्वम् आन्धीगवं चेति द्वे सामनी । 'इन्द्रमच्छ सुता इमे' इत्यपरं सूक्तम्, तस्मिन् उष्णिहस्तिस्रः । तासु सफं साम । 'पवस्व मधुमत्तमः' इति प्रगाथः, तस्मिन् पूर्वा ककुप् उत्तरा सतोबृहती । तत्र पौष्कलं साम । 'अभि प्रियाणि पवते चनोहितः' इत्यन्यत् सूक्तं तत्र तिस्रो जगत्यः । तासु कावं साम ।

भाट्ट— एवं वा । 'पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा' इत्येतद्विवरणार्थेषु 'गायत्रसंहिते गायत्रे तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे तृचे भवतः, उष्णिहि सफम्, ककुभि पौष्कलम्, कावमन्त्यं जगतीषु' इत्येतेषु श्यावाश्वान्धीगवयोः पूर्वा अनुष्टुप् उत्तरे गायत्र्यौ श्रुते । तत्र किं तास्वेव प्रग्रथनं विनैव तृचे गानम्, उत प्रग्रथनेन इति चिन्तायाम्, पूर्वत्र लक्षणां विनैव तृचत्वसामानाधिकरण्येन बृहतीछन्दस्कत्वोपपत्तावपि एकस्या एवोत्तरायाः पाठेन तृचगानानुपपत्तेः युक्तं प्रग्रथनम् । प्रकृते तु उत्तराद्वयस्यापि पाठात् तृचगानोपपत्तेः प्रग्रथने प्रमाणाभावः । इति प्राप्ते, प्रमाणान्तराभावेऽपि प्रगाथस्मरणसमाख्ययोरेव प्रमाणत्वात् प्रग्रथनम् । तच्च न पूर्ववत् द्विरावृत्त्या, अपितु अन्त्यान्त्यपादस्य सकृदावृत्त्यैव । तावतैव तृचस्य आनुष्टुभतोपपत्तेः । अष्टाक्षरेण हि (अधिकेन) पादेनान्विता गायत्री द्वात्रिंशदक्षरा अनुष्टुप् भवति । स्मरणवशादपि चैवं प्रग्रथनम् । लिङ्गं च 'चतुर्विंशतिर्जगत्यस्तृतीयसवने एका च ककुप्' इति प्रग्रथने एवोपपद्यते । तथाहि, तृतीयसवने स्तोत्रद्वयम् । सप्तदश आर्भवः पवमानः, एकविंशं च अग्निष्टोमस्तोत्रम् । आर्भवे आद्यसाम्नः षड् गायत्र्यः, तास्तिस्रो जगत्यः अष्टाचत्वारिंशदक्षरात्मिकाः । ततः तृतीयचतुर्थसाम्नोः षडनुष्टुभः, ताश्चतस्रो जगत्यः । पञ्चमषष्ठसाम्नोः उष्णिक्ककुभौ द्वे ऋचौ अष्टाविंशत्यक्षरे सैका जगती, अष्टौ अक्षराण्यत्रशिष्यन्ते । सप्तमे साम्नि तिस्रो जगत्यः । अग्निष्टोमस्तोत्रे च प्रग्रथनपूर्वाभ्यासे सप्त बृहत्यः चतुर्दश ककुभः । तत्र सप्त बृहत्यः पञ्च जगत्यः, द्वादशाक्षराणि अवशिष्यन्ते । चतुर्दशानां च ककुभां अष्टौ जगत्यः । अष्टौ अक्षराण्यत्रशिष्यन्ते । तदेवं चतुर्विंशतिर्जगत्यः अवशिष्टाक्षरैश्च मिलितैः एका ककुप् । तदिदं प्रग्रथने एवोपपद्यते । न तु यथाश्रुतगायत्रीपाठे अल्पाक्षरत्वापत्तेः । तस्मादपि प्रग्रथनम् ।

यत्तु भाष्यकारेण पूर्ववत् अन्ययोर्वा अनुष्टुभोः समानयनं प्रग्रथनं वेति चिन्तितं तत् पौनरुक्त्यापत्तेरुपेक्षितम् ।



यदपि तन्त्ररत्नादौ लिङ्गान्तरप्रदर्शनार्थं वर्णकान्तरमित्युक्तम्, तदपि भाष्योक्तविचारे लिङ्गानुपपत्तेः पूर्ववर्णके एव प्रदर्शितत्वादयुक्तम् ।

मण्डन— 'नान्याऽनुष्टुविहोत्तरा ।'

शंकर— 'श्यावाश्वान्धीगवेऽप्येषः' एष प्रगाथः ।

**⧗ ज्योतिष्टोमे अनैन्द्राणां चमसानां अमन्त्रकं भक्षणम् ॥**

**छन्दःप्रतिषेधस्तु सर्वगामित्वात् । ३।२।१६।३९ (३८ वि.) ॥**

इदं सूत्रम् एकादशाधिकरणस्य गुणसूत्रम् । अतो नेदं पृथगधिकरणम् । विस्तरे तु पृथगधिकरणमारचितम् । तदित्थम्— सप्तदशाधिकरणमारचयति— 'अमन्त्रपक्षमाश्रित्य कृत्वाचिन्तान्तरत्रयम् ।' (इत्युपक्रम्य) 'ऊहोऽस्ति नो वा, सोऽस्त्यत्र विकृतौ तस्य संभवात् ।, सोमेनेति विधेः सर्वप्रदानेषु समत्वतः ; अविकारेऽप्यनूहोऽतो नैन्द्रे निर्मन्त्रभक्षणम् ॥' ...... अनैन्द्रेषु उक्तरीत्या विकृतित्वेन ऊहसंभवात् अस्त्यूहः । इति चेत्, न । अनैन्द्राणां विकृतित्वासंभवात् । 'सोमेन यजेत' इत्युत्पत्तिश्रुतः सोमः कर्मणः अङ्गम्, न तु प्रदानविशेषस्य कस्यचिदङ्गम् । स एव सोमः सर्वप्रदानेषु अभ्यस्यते इति सर्वाणि समप्रधानानि । अतः ऐन्द्राणामनैन्द्राणां च प्रकृतिविकृतिभावासंभवात् नास्त्यत्र ऊहः । 'रुद्राय त्वा वसुमते' इत्यादिमन्त्रो लिङ्गात् ऐन्द्रविषयोऽस्तु । नैतावता प्रकृतिविकृतिभावः सिध्यति । तस्मादुक्तमन्त्रस्य लिङ्गात् ऐन्द्रविषयत्वात् अनैन्द्रेषु अमन्त्रकं भक्षणम् । इति ।

**⧗ ज्योतिष्टोमे अपररात्रे व्रतं न नित्यम् ॥**

**अनर्थकं त्वनित्यं स्यात् । ६।८।९।२९ ॥**

भाष्यम्— ज्योतिष्टोमे श्रूयते 'मध्यंदिनेऽपररात्रे च व्रतं व्रतयति' इति । तत्र संदेहः किं नियतमपररात्रे व्रतम्, उत अनियतमिति । किं प्राप्तम् ? नियतं वाऽर्थवत्त्वात् स्यात् (६।८।७।२७) इति । एवं प्राप्ते, ब्रूमः । अनर्थकं त्वनित्यं स्यात् । यदा एवं मन्येत अस्मिन् काले व्रतं मे जरिष्यतीति, तदा व्रतयेत् । यदा तु खलु मन्येत न सम्यग् जरिष्यतीति, तदा तद् व्रतं क्रियमाणमनर्थकं स्यात् । यदि हि अजीर्णेन यजमानो म्रियेत, तदा सर्वतन्त्रलोपः स्यात् । तस्मान्न नियतं तस्मिन् काले व्रतं व्रतयितव्यमिति ।

सोम— पूर्वप्रत्युदाहरणत्वात् **संगतिः** । **सूत्रार्थस्तु**— यत्तु प्रधानलोपप्रसङ्गात् अनर्थकम्, तत् अनित्यं स्यात् इति ।

वि — 'अजीर्णसंभवे कार्यं व्रतं नो वा, ऽग्रिमो विधेः ।, रोगोत्पत्त्या प्रधानस्य विरोधान्न पयोव्रतम् ॥'

भाट्ट— पयोव्रतं यदि रोगोत्पत्त्यादिना मरणादिहेतुः संभाव्यते, तदा क्रतुविरोधप्रसङ्गात् न कार्यमिति । जातेष्टिन्यायेन गतार्थमपीदं शिष्यहितार्थमुक्तम् ।

मण्डन— 'न स्यान्नित्यं रात्रिशेषाशनादि ।'

शंकर— 'अनित्यं जरणाभावे ।' व्रतम् । १०.

* ज्योतिष्टोमे अमेध्यप्रतिमन्त्रणे 'अबद्धं चक्षुः' इति मन्त्रः यदाऽपि एककालम् अनेकममेध्यं पश्यति, तदाऽपि सकृदेव पठनीयः । **भा. ११।४।१७।५०.** * ज्योतिष्टोमे 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति आरुण्यगुणः स्वयं क्रयहेतुः सन्नपि क्रयहेतुमेकहायनीमेव भजते, न तु नानाद्रव्येषु संकरः । **वि. ३।१।६.** * ज्योतिष्टोमे 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति, षट् पदान्यनुनिष्क्रामति, सप्तमं पदं गृह्णाति, यर्हि हविर्धानं प्रवर्तयेयुः तर्हि तेनाक्षमुपाञ्ज्यात्' अत्र सोमक्रयण्यानयनं क्रयप्रयुक्तम्, न तु पदपांसुप्रयुक्तम् । **भा. ४।१।१०।२५,** * ज्योतिष्टोमे अवभृथः अपूर्वं कर्म । १०।७।१५।४७–५०, * ज्योतिष्टोमे अवभृथादुदेत्य अहतं वासः परिधत्ते । 'यन्त्रमुक्तं सकृद्धौतमपाटितमभुक्तकम्' अहतं वासः । १२।३।१।१, * ज्योतिष्टोमे अवभृथे प्रधानम् अङ्गानि च अप्सु एव । ११।२।८।३०–३४, * ज्योतिष्टोमे अवभृथे सोमलिप्तानां नयनं प्रतिपत्तिकर्म । ४।२।८।२०–२२, * ज्योतिष्टोमे अवभृथे स्विष्टकृद्यागीयनिगमादिषु अग्नीवरुणयोः सस्विष्टकृच्छब्दकयोरभिधानम् । १०।४।१७।३४–३५, * ज्योतिष्टोमे 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति कालार्थः संयोगः । ४।३।१४।३६. * ज्योतिष्टोमे आग्नीध्रमण्डपोपस्थानम् 'अग्न आ याहि वीतये' इति प्रकृतया आग्नेय्या

ऋचैव कुर्यात्, न तु दाशतयीस्थया कयाचित्। वि. ३।२।८. * ज्योतिष्टोमे आग्नीध्रमण्डपसंमर्शनं हिरण्यकेशिनः 'अयं नो अग्निः' इत्यनया ऋचा कुर्वन्ति, बौधायनाश्च 'अग्निर्मूर्धा' इत्यनया। के. * ज्योतिष्टोमे आग्नीध्र–सदो–हविर्धानमण्डपोपस्थानेषु क्रमेण प्रकृता काचित् आग्नेयी ऐन्द्री वैष्णवी च ऋक् ग्राह्या। आग्नेयीन्यायः। वि. ३।२।८. * ज्योतिष्टोमे आग्रयणाग्रता श्रुता विकृतिरूपे विषुवति निवेश्या। भा. १०।५।१५।५८ वर्णकं १, * ज्योतिष्टोमे आज्यानि पञ्चदशानि इति आज्यशब्दः शस्त्रविशेषाणां नामधेयम्, न गुणविधिः। १।४।२।३. * ज्योतिष्टोमे 'आज्यैः स्तुवते, पृष्ठैः स्तुवते'। आज्यपृष्ठादिस्तोत्रैः रथंतरवामदेव्यादीनां प्राकृतानां न बाधः, किन्तु समुच्चयः। वि. १०।४।९, * ज्योतिष्टोमे आतिथ्याबर्हिषा उपसदग्नीषोमीययोर्बर्हिषः प्रसङ्गसिद्धिः। १२।१।१९. * ज्योतिष्टोमे आतिथ्याबर्हिषि अग्नीषोमीयदेशे स्तरणार्थे संनह्य आह्रियमाणे संनहनहरणमन्त्रयोर्नावृत्तिः। संनहनहरणमन्त्राधिकरणम्। भा. १२।१।२१।४६–४७. * ज्योतिष्टोमे आत्रेयाय हिरण्यदानम् ऋतुयाज्यावरणं चादृष्टार्थे कर्तव्यम्। वि. १०।२।२६. * ज्योतिष्टोमे आर्भवकाले सवनीयपशोः प्रचारः। भा. ११।३।१५।४६. * ज्योतिष्टोमे आश्विनग्रहः दशमो गृह्यते, तृतीयो हूयते। वि. ५।४।१.

**ज्योतिष्टोमे इष्ट्यादौ हविर्धानशकटाभ्यां भिन्ने शकटे हविर्निर्वापः ॥**

**हविर्धाने निर्वपणार्थं साधयेताम्, प्रयुक्तत्वात्। १२।१।७।१४ ॥**

**भाष्यम्**— कृते हविर्धाने यानि औषधगुणकानि ऐष्टिकानि कर्माणि वर्तन्ते, यथा पशुपुरोडाशः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः, तेषु विचार्यते किं तेषां निर्वापो हविर्धाने कर्तव्यः, अथवा अनोऽन्तरमुपादेयमिति। किं प्राप्तम्? हविर्धाने निर्वपणार्थं साधयेताम्, एकं वा। कुतः? प्रयुक्तत्वात्। प्रयुक्तमस्ति, शक्नोति च तेषां निर्वापं साधयितुम्। अन्यस्योपादाने केवलमनर्थको व्यापार आपद्यते। तस्मात्तयोरन्यतरेण निर्वापः कर्तव्यः।

**असिद्धिर्वाऽन्यदेशत्वात् प्रधानवैगुण्यादवैगुण्ये प्रसङ्गः स्यात्। १५ ॥**

**भाष्यम्**— असिद्धिर्वा हविर्धानाभ्यां निर्वापस्य। न ताभ्यां साधयितव्यः। कुतः? प्रधानवैगुण्यात्। निर्वापस्य देशः, अपरेण गार्हपत्यं प्रागीषम् अनोऽवस्थितं भवति, तस्य दक्षिणचक्रमारुह्य अनसोऽधि निर्वपति इति। यदि हविर्धाने निर्वापः क्रियते तद्देशं तन्नीयेत। तथा प्रधानं सोमकर्म विगुणं भवेत्। हविर्धानयोर्मन्त्रवच्च नियमवच्च प्रवर्तनं स्थापनं (च) कृतम्, तत्सर्वमनर्थकं स्यात्। अथ च पुनः क्रियेते, तथापि आवृत्तिरश्रुता अनुष्ठीयेत। अवैगुण्ये च प्रधानस्य प्रसङ्गो युक्तः। यत् कारणं प्रधानस्य यो धर्मः, तमितरे यथाश्रुतमुपजीवन्तीति परवशत्वात्। यदि यथाश्रुतेन अस्य कार्यं न सिध्यतीति, ततः कामं कार्यलोपो भवेत्, स्वं वा साधनं प्रयुञ्जीत, न शक्नुयात् प्रधानकार्ये व्याहत्य स्वार्थे साधयितुम्। अथ कस्मात् हविर्धानदेशे निर्वापो न क्रियते? एवमपि तेषां कर्मणां वैगुण्यं भवेत्। अस्तु परतन्त्रोपजीवीनि एतानि यथावस्थितं परतन्त्रमुपजीवितुमर्हन्ति। यथा पाशुकान् प्रयाजान् अन्यकालानपि पशुपुरोडाशः उपजीवति। उच्यते। युक्तं तत्र, कृतास्ते प्रयाजाः। न च कृतस्य क्रमानुग्रहार्थे पुनःक्रिया न्याय्या। अयं पुनः करिष्यमाणो निर्वापः शक्यते कर्तुम्। स यदि सगुणः शक्यते कर्तुम्, तथा सगुणः कर्तव्यः। शक्यते च अनोऽन्तरमुपादाय। तस्मान्न हविर्धानयोर्निर्वापः।

**अनसां च दर्शनात्। १६ ॥**

**भाष्यम्**—अनोबहुत्वं च दृश्यते। अनांसि प्रवर्तयन्ति इति। तस्मादपि अनोऽन्तरमुपादेयमिति।

**सोम**—'अनसोऽधि निर्वपति' इति अनस्त्वाकारेणैव अङ्गत्वात् हविर्धानयोर्निर्वापे अनस्येव निर्वापस्य सिद्ध्या वैगुण्याभावः, इति पूर्ववैषम्येणोत्थितेः **संगतिः**। सूत्रे निर्वपणार्थे निर्वपणरूपकार्यार्थमित्यर्थः।

**वि**— 'हविर्धानोर्ध्वकाले किमौषधार्थमनोऽन्तरम्। नास्त्यस्ति वा, न शक्तत्वाद्, देशभेदादिनाऽन्तिमः ॥'

**भाट्ट**— सोमे सोमधारणार्थे द्वे शकटे हविर्धानसंज्ञके प्रणीय हविर्धानमण्डपे समन्त्रकं स्थापिते। तदुत्तरं च



यानि इष्टिविकाराणि तेष्वतिदेशप्राप्तः अनोऽधिकरणको निर्वापः सोमार्थयोरेव अनसोरन्यतरत्र कर्तव्यः, अनस्त्वावच्छिन्नस्य साधनत्वेन विहितस्य परप्रयुक्तस्य लाभे स्वतन्त्रानोऽन्तराक्षेपकल्पनाऽनुपपत्तेः। इति प्राप्ते, न तावत् मन्त्रवन्नियमेन स्वदेशस्थापितस्य अनसो निर्वापदेशशालामुखीयपश्चाद्भागे नयनं संभवति, तयोर्द्वयोर्हविर्धारणव्यापृतयोः हविषः उत्तारणे तन्त्रिण एव वैगुण्यापत्तेः। अथ प्रसङ्गिन एव देशाभावकृतं वैगुण्यं लाघवानुरोधेन सोढ्वा हविर्धानदेशे एव तदुपरि एकदेशावस्थिते सोमे सत्यपि निर्वापोऽपि क्रियेत, ततः अनोऽन्तरग्रहणेऽपि यजमानगृहे कार्यान्तरार्थम् अनोऽन्तरसत्त्वे लाघवस्य तुल्यत्वात् न देशाभावकृतवैगुण्यसहनम्। यदाऽपि तदभावः, तदाऽपि तदाक्षेपकल्पनमेव अनुपादेयदेशबाधापेक्षया युक्तमाश्रयितुम्। नह्ययं देशः अनसोऽङ्गम्, अपितु निर्वापाङ्गम्। अतः पदार्थत्यागापेक्षया पदार्थाक्षेपस्यैव पाक्षिकस्य न्याय्यत्वात् न प्रसङ्गः।

**मण्डन**— 'निर्वापकर्मार्थमनोऽन्तरं भवेत्।'

**शंकर**— 'हविर्धानं न निर्वापे।' ८.

* ज्योतिष्टोमे इष्टिपश्वादिषु दार्शिकं होतृवरणं कर्तव्यम्, ब्रह्मवरणं तु न कर्तव्यम्। भा. १२।१।१८।३६–४२, * ज्योतिष्टोमे इष्टिपश्वादिषु सौमिकवेद्या दार्शिकवेद्याः प्रसङ्गसिद्धिः। १२।१।३।८–९.

* ज्योतिष्टोमे उक्थ्यानां सौभरं ब्रह्मसाम। तत्र हीष् ऊर्क् ऊ इति निधनानां वृष्टि–अन्नाद्य–स्वर्गार्थं क्रमेण व्यवस्था, न तु सौभरात् निधनानां पृथक् फलम्। भा. २।२।१३।२८–२९. * ज्योतिष्टोमे उक्थ्यग्रहः प्रातःसवने गृह्यते। वि. २।३।१, * ज्योतिष्टोमे उक्थ्यग्रहस्य अस्तमयोत्तरमुत्कर्षे षोडशिग्रहस्यापि सस्तोत्रस्य ततः परमुत्कर्षः। ५।१।१८. * ज्योतिष्टोमे उक्थ्यस्तोत्राणां त्रयाणां मध्यमं सौभरं ब्रह्मसाम। सोम. २।२।१३. * ज्योतिष्टोमे 'उच्चैर्ऋचा' इत्यादिना श्रुतेन विहितमुच्चैस्त्वादिकं वेदधर्मः। वि. ३।३।१, * ज्योतिष्टोमे 'उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना'। अत्र ऋगादिशब्दा वेदपराः, न तु मन्त्रपराः उपक्रमानुसारात् 'त्रयो वेदा अजायन्त' इत्युपक्रमः। तथा च यजुर्वेदोत्पन्ना ऋचोऽपि उपांश्वेव पठनीयाः। ३।३।१.

**ज्योतिष्टोमे 'उत यत् सुन्वन्ति' इत्यादिना श्रुतेन वाक्येन सामिधेन्यनुवचनार्थं हविर्धानदेशो लक्ष्यते ॥**

**सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात् सामिधेनीनाम्। ३।७।७।१५ ॥**

**भाष्यम्**— ज्योतिष्टोमे श्रूयते 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति। हविर्धानयोर्यस्मिन् हविर्धाने सुन्वन्ति, तत् सामिधेनीभिः संबन्धयेदित्यर्थः। तत्र संदेहः किं सामिधेनीनामङ्गभावेन हविर्धानं चोद्यते, हविर्धानविशिष्टाः सामिधेन्योऽनुवक्तव्याः, उत हविर्धानेन अमूषामनूच्यमानानां देशो लक्ष्यते इति। किं तावत् प्राप्तम्? सामिधेनीनामङ्गत्वेन हविर्धानं चोद्यते। यस्मिन् हविर्धाने सुन्वन्ति, तत् सामिधेनीभिः संबन्धयेदिति। तेन हविर्धानसंबद्धाः सामिधेन्योऽनुवक्तव्या इति वचनात् सामिधेन्यङ्गभावे सति हविर्धानश्रुतिरनुग्रहीष्यते। इतरथा देशं लक्षयेदिति। तस्मात् सामिधेन्यङ्गं हविर्धानम्।

**वा**— 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रूयते। पूर्ववदेव संदेहविचारनिर्णयाः। कथं न गतार्थमिति चेत्, विस्पष्टार्थद्वयानुपादानात्। न तु अत्रैवं दृश्यते, इदं परस्य अशिष्यमिति, मम तु शिष्यमिति। कथं तर्हि सिद्धान्तसिद्धिः उच्यते।

**देशमात्रं वा, प्रत्यक्षं ह्यर्थकर्म सोमस्य। १६ ॥**

**भाष्यम्**— देशलक्षणार्थे वा एतदुच्यते। यस्मिन् सुन्वन्ति, तस्मिन् देशे सामिधेन्योऽनुवक्तव्या इति। प्रत्यक्षं ह्यर्थकर्म सोमस्य तेन क्रियते। दक्षिणे हविर्धाने सोममासादयन्तीति सोमासादनार्थं तावदेतदुपादेयम्। सामिधेन्योऽपि अग्निसमिन्धनार्थमुपादेया इति। इह तु एतावत् श्रूयते, यस्य हविर्धानस्य समीपे सुन्वन्ति, तत्संबद्धाः सामिधेन्यः अग्निसमिन्धनार्थमुपादेयाः इति। तत्र न ज्ञायते किं सामिधेन्यः संबद्धा हविर्धानस्योपकुर्वन्ति, किं हविर्धानं सामिधेनीनामिति। तदुच्यते। सामिधेन्यस्तावत् हविर्धानस्य नोपकुर्वन्ति। नहि तावत्

विधीयन्ते सामिधेन्योऽनुवक्तव्या इति । किं तर्हि ? हविर्धानविशेषसंबन्धस्तासां विधीयते । न चाविहितमङ्गं भवति । नाप्येवं विधीयते, हविर्धानम् आसामनूच्यमानानाम् उपादातव्यं संबन्धयितुमिति । कथं तर्हि ? हविर्धानविशेषसंबन्धोऽत्र सामिधेनीनां श्रूयते, न हविर्धानसंबन्धो विधीयते । न च सामिधेनीसंबन्धो हविर्धानस्य प्राप्तः, यो विशेषार्थमनूद्येत । केन तर्हि हविर्धानस्य संबन्धः ? प्रत्यक्षं हि अर्थकर्म सोमस्य, न तु सामिधेनीकर्म प्रत्यक्षं हविर्धानस्य । भवति तु देशस्य सामिधेनीसंबन्धः । अपरेण वेदिमिति होतुर्देशो लक्षितः, स उत्तरस्य दक्षिणस्य वा हविर्धानस्य समासन्नः । तत्र यत् सुन्वन्ति, तदन्वाहुः इत्युपपद्यते वचनम् । तस्माद्देशलक्षणार्थं हविर्धानग्रहणम् । अथ एवमभिसंबन्धः कस्मान्न भवति 'यस्मिन् हविर्धाने सुन्वन्ति, तस्य हविर्धानस्य सामिधेनीसंबन्धः' इति ? नैवं शक्यम् । एवं द्वावर्थौ विधातव्यौ भवतः । हविर्धानसंबन्धः, हविर्धानविशेषसंबन्धश्च, तत्र वाक्यं भिद्यते । तस्मात् नैवमभिसंबन्धः इति ।

**वा**— सोमधारणेन तावत् प्रत्यक्षं नैरपेक्ष्यं हविर्धानस्य, सामिधेनीनां पुनः प्रकृतावेव अग्निसमिन्धनार्थत्वात् क्लृप्तं प्रयोजनमिति नास्ति अङ्गाङ्गित्वापेक्षा । हविर्धानविशेषसंबन्धपरे वाक्ये सामान्यसंबन्धशक्तिमपि कल्पयतः आग्नेय्यधिकरणोक्तो वाक्यभेदो योज्यः । विशेषेण सामान्याक्षेपात् वाक्यभेदं परिहरतः सिद्धसामान्यसंबन्धेन सिद्धान्तपक्षेण अर्थापत्तिश्रयो दर्शयितव्यः । अस्ति हि प्राकृतदेशोपलक्षणत्वेन हविर्धानयोरन्यतरस्य प्राप्तिः । तत्र विशेषमात्रं सुखेन विधीयते । तस्मादपि देशलक्षणा ।

**समाख्यानं च तद्वत् । १७ ॥**

**भाष्यम्**— समाख्यानं च तद्वदेव भवति । यथा अस्माभिः न्याय उपदिष्टः सोमार्थं हविर्धानमिति ।

**वा**— हविर्धानमिति, (न्यायमाह-) अनन्यप्रयोजनस्य तादर्थ्यव्यपदेशोऽवकल्पते । अन्यथा हि सामिधेनीधानमित्यपि स्यात् । (सामिधेन्यः लक्षणया तत्कर्ता होता धीयते यस्मिन् इति सामिधेनीधानम्, यथा हविर्धानम्) ।

**सोम**— पूर्ववत् वाक्यभेदाभावात् सामिधेन्यङ्गतया हविर्धानं विधेयम् इत्युत्थितेः संगतिः । **प्रयोजनम्**— पूर्वपक्षे हविर्धानाख्ये (दक्षिणे) शकटे स्थित्वा सामिधेन्यनुवचनं कर्तव्यम्, सिद्धान्ते तु तत्समीपदेशे इति । **सूत्रार्थस्तु**— 'सामिधेनीः तत् (तत्र) अन्वाहुः' इति वचनात् हविर्धानयोर्मध्ये यस्मिन् (दक्षिणे) अभिषवः, तत् हविर्धानं सामिधेन्यङ्गं स्यात् इति ।

**वि**— 'हविर्धाने स्थितो ब्रूयात् सामिधेनीरिहाङ्गता । हविर्धानस्य तास्वाहो तद्देशोऽनेन लक्ष्यते ॥, वाक्यात् स्यादङ्गता, मैवं प्रकृत्या पश्चिमेऽमितः । देशः प्राप्तो लाघवेन लक्ष्यः शकटसंनिधिः ॥'

**भाट्ट**— सोमे 'उत यत् सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रुतम् । यत् यत्र दक्षिणहविर्धाने अभिषवः, तत्र अग्नीषोमीयादिसामिधेनीः अनुब्रूयादित्यर्थः । तत्र हविर्धानशकटः सामिधेन्यङ्गम्, उत तल्लक्षितो देशविशेषः इति चिन्तायाम्, पूर्ववत् परिसंख्यावाक्यभेदाद्यभावात् लक्षणापरिहाराय सोमधारणेन कृतार्थस्यापि हविर्धानस्यैव पुरोडाशकपालन्यायेन सामिधेन्यङ्गत्वम् । **इति प्राप्ते**, हविर्धानस्य अत्यन्ताप्राप्तस्य सामिधेन्यङ्गत्वेन विधौ अपूर्वविधित्वापत्तेः, प्रकृतितः आहवनीयप्रत्यग्देशस्य अतिदेशप्राप्तस्य अनियमेन दक्षिणोत्तरहविर्धानसमीपवर्तितया प्राप्तेः, दक्षिणहविर्धानलक्षितदेशस्य नियमविधौ लाघवमिति तदनुरोधेन लक्षणाऽपि न दोषः । वस्तुतस्तु लाघवस्य प्रमाणानुग्राहकत्वात् निषादस्थपत्यधिकरणन्यायेन औत्तरकालिकत्वाच्च तदनुरोधेन लक्षणाऽनुपपत्तेः, यत् यत्र देशे सुन्वन्ति अभिषुण्वन्ति, तत् तस्मिन् अभिषवदेशे सामिधेनीरनुब्रूयात् इत्यर्थावगमेन हविर्धानस्याप्रतीतेः अभिषवदेशस्यैव श्रौतत्वेन विधेयत्वात् न लक्षणाऽपि । **प्रयोजनं** पूर्वपक्षे हविर्धानोपरि सामिधेनीपाठः । सिद्धान्ते अभिषवदेशे दक्षिणहविर्धानसमीपे ।

**मण्डन**— 'हविर्धानं गुणो नर्चाम् ।'

**शंकर**— 'हविर्धानं देशपरम् ।'

* ज्योतिष्टोमे 'उत्तिष्ठन्नन्वाह अग्नीदग्नीन् विहर' इति, तथा 'व्रतं कृणुत इति वाचं विसृजति' इति च श्रूयते । तत्र उत्थानं वाग्विसर्गश्च कालार्थः संयोगः । न तु उत्थाने वाग्विसर्गे च मन्त्रयोरुपदेशः । उत्थानवाग्विसर्गाधिकरणम् । भा. ३।२।४।१०, * ज्योतिष्टोमे उत्सर्गमात्रं (यजमानः) स्वयं कुर्यात्, शेषस्य चान्य एव स्यात् कर्ता । ३।७।८।१८–२०, * ज्योतिष्टोमे उद्गात्रपच्छेदस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानम् । ६।५।२०।५५. * ज्योतिष्टोमे उद्गातृचमसः ससुब्रह्मण्यानामुद्गातॄणाम् इति भाष्यमतम्, अपसुब्रह्मण्यानाम् इति वार्तिकमतम् । के. ३।५।८।२३–२६. * ज्योतिष्टोमे उद्गातृप्रतिहर्त्रोः अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः । भा. ६।५।१८।५१–५३, * ज्योतिष्टोमे उपगाः उक्तानामेव ऋत्विजामन्यतमे । ३।७।१४।३०.



**ॐ ज्योतिष्टोमे उपरवेषु 'किमत्र, भद्रम्, तन्नौ सह' इति श्रुतं फलमृत्विजोऽपि ॥** विस्तरे इदम् ।

**व्यपदेशाच्च । ३।८।१४।२९ ॥ (३० के.)**

**भाष्यम्**— यत्र च व्यपदेशो भवति, तत्र आर्त्विजम् (फलम्) । दक्षिणस्य हविर्धानस्याधस्तात् चत्वारः उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः । तत्र हस्तौ प्रवेश्य अध्वर्युर्यजमानमाह 'किमत्र' इति, स आह 'भद्रम्' इति, 'तन्नौ सह' इति अध्वर्युः प्रत्याह इति व्यपदेशो भवति अध्वर्योर्यजमानस्य च । तन्नौ सह इत्युभयोर्वचनमध्वर्युयजमानयोः । तस्मादध्वर्युफलमाशासितव्यमत्रेति ।

**वा**— व्यपदेशादितरेषाम् (३।८।५।१४) इत्यत्र ब्राह्मणगतमुदाहृतम्, इह तु प्रस्तावबशेन मन्त्रगतम् । तद्धि क्लेशेन कल्प्यमानं कदाचिदुभयोर्न शक्यते कल्पयितुम् इत्याशङ्का स्यात् । कल्पनाहेतुस्तु युगपत्प्रवृत्तेः अविशिष्टः, इति न किञ्चित् गौरवम् । अथ कस्माच्चोभौ एवं प्रयुञ्जाते ? यदा एकेनापि प्रयुज्यमानः शक्नोत्येव उभयगामि फलं प्रकाशयितुम्, तदा सिद्धेऽर्थे न किञ्चिदुभयकर्तृकत्वेन प्रयोजनमस्ति इत्यध्वर्युनियमः इति ।

**वि**— 'भद्रं तन्नौ सहेत्येतत् कस्मिन्, स्वामिनि युज्यते ।, द्वित्वश्रुत्या द्वयोरेतदध्वर्युयजमानयोः ॥' ज्योतिष्टोमे हविर्धानमण्डपे सोमाभिषवाधारयोः फलकयोः अधस्तात् चतसृषु आग्नेयादिविदिक्षु चत्वारः उपरवनामकाः गर्ताः अरत्निमात्रखाताः अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता वर्तन्ते । तेषु एकस्मिन्नुपरवे यजमानो दक्षिणहस्तं प्रसारयति, तथैवाध्वर्युः अन्यस्मिन् स्वहस्तं प्रसार्य अधस्तात् यजमानहस्तं गृह्णाति । तदा यजमानः 'किमत्र' इत्यनेन मन्त्रेण फलं पृच्छति । अध्वर्युश्च 'भद्रम्' इत्यनेन मन्त्रेण उत्तरं ब्रूते । ततो यजमानः 'तन्नौ सह' इत्यनेन मन्त्रेण तत् फलम् उभयगामितयैव स्वीकरोति ।

**मण्डन**— 'द्वयोः फलं भद्रपदाभिधेयम् ।'

**शंकर**— 'व्यपदेशे च तद् भवेत् ।' तत् फलम् ।

* ज्योतिष्टोमे उपरवमन्त्रः 'रक्षोहणो वलगहनो वैष्णवान् खनामि' इति ; तस्य प्रत्युपरवे आवृत्तिः । उपरवन्यायः । भा. ११।४।१९।५५–५६. * ज्योतिष्टोमे 'उपवती रथंतरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रवती बृहत्पृष्ठस्य' । अत्रैकं पृष्ठम् इतरनिरपेक्षं तत्तत्प्रतिपदो निमित्तम् (उपास्मै गायत इति उपवती, प्रयुजो वाचो अग्रियः इति अग्रवती) । वि. १०।५।१६. * ज्योतिष्टोमे उपसदग्नीषोमीययोः वेद्याम् आतिथ्याबर्हिषः स्तरणकाले स्तरणमन्त्रस्यावृत्तिः । भा. १२।१।२०।४५–४७ (४६–४७), * ज्योतिष्टोमे उपसदिष्टिः अपूर्वं कर्म यावदुक्तमनुष्ठेयम् । उपसन्न्यायः । १०।७।१४।४३–४६, * ज्योतिष्टोमे उपसन्मन्त्रेषु अनुषङ्गेण मन्त्रपूरणम् । अनुषङ्गाधिकरणम् । २।१।१६।४८, * ज्योतिष्टोमे ऋतुग्रहयागेषु यजमानस्य स्वयं याज्यापाठपक्षे भक्षवषट्कारौ यजमानस्यैव, न होतुः । ३।५।१८।४४–४६. * ज्योतिष्टोमे ऋतुयाज्यावरणम् 'इन्द्रं होत्रात् सजूर्दिव आ पृथिव्याः' इत्यादिभिर्ऋतुयाज्यावयवैर्होत्रादिवरणं क्रियते । वि. १०। २।२६. * ज्योतिष्टोमे ऋत्विजः स्वामिसप्तदशाः । भा. ३।७।१८।३८, * ज्योतिष्टोमे 'एकस्मै वा अन्ये क्रतवः कामाय आह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः' इति श्रुतम् । सोऽयं फलोपदेशः । ४।३।१०।२५–२६ । सर्वकामत्वेऽपि प्रतिफलं पृथगनुष्ठानं कर्तव्यम् । योगसिद्ध्यधिकरणम् । ४।३।११।२७–२८. * ज्योतिष्टोमे एकस्याश्वस्य अवश्यं विधेयत्वात् सामान्यप्राप्तनिषेधबाधात् न दोषो विज्ञायते (इति न तत्र दातुः वारुणेष्टिः) । वा. ३।४।१०।२८ पृ. ९६१.

**ज्योतिष्टोमे एकादीनां दीक्षाणां विकल्पः। द्वादशाहे तु दीक्षा द्वादशैव ॥**

**दीक्षापरिमाणे यथाकाम्यविशेषात्। ६।५।८।२८॥**

**भाष्यम्**— ज्योतिष्टोमं प्रकृत्य श्रूयते 'एका दीक्षा, तिस्र उपसदः, पञ्चमीं प्रसुतः' इति, तिस्रो दीक्षाः, द्वादश दीक्षाः, इति बहूनि दीक्षापरिमाणानि आम्नातानि। तेषु संदेहः किमनियमः, यद्वा तद्वा परिमाणमुपादेयम्, उत द्वादश दीक्षा इति। किं प्राप्तम् ? दीक्षापरिमाणे यथाकामी स्यात्। नास्ति नियमः। कुतः ? अविशेषात्। न कश्चन विशेष उपादीयते। तस्मात् यत्किञ्चित् परिमाणमुपादेयमिति।

**टुप्**-- **दीक्षापरिमाणे यथाकाम्यविशेषात् ॥** ( अस्य उत्तरसूत्रेण एकाधिकरणत्वमङ्गीकृत्य द्वादशपरिमाणत्वमेव भाष्यकारः सिद्धान्तितवान्। तदाक्षिपति– ) अत्रायुक्तः सिद्धान्तो वर्णितः ( भाष्यकारेण )। सत्यमत्र नित्यवदाम्नानं हेतुः, न तु 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' (द्वादशदिनेषु दीक्षायुक्तः स्यात्। तदा च यज्ञोपयोगि द्रव्यं याचेत। वनु याचने ) इत्यस्य वाक्यस्य। कस्य तर्हि ? 'एका दीक्षा' इत्येवमादीनाम्। तानि हि नित्यवदाम्नातानि प्रकरणे किमिति उत्कृष्यन्ते ? तुल्यप्रमाणवतां च विकल्पः। आह, न तर्हि नित्यानि। ( पाक्षिकत्वात् )। उच्यते। प्रकृत्यपेक्षं नित्यत्वम् ( ज्योतिष्टोमे नित्यवदाम्नातानि इति कृत्वा नित्यत्वमुक्तम्, न प्रयोगापेक्षमित्यविरोधः )। यदि विकल्प्यते, कथम् ( तर्हि ) भृतिवननवाक्यम् ? ( परिहरति– ) आह, उत्कृष्यताम्। ( स एव ब्रवीति– ) को वा हेतुरत्र भवत., येन बहूनि उत्कृष्यन्ते, एकं नोत्कृष्यते। वरं बहूनामनुत्कर्षः, प्रकरणानुग्रहात्। ( वस्तुतस्तु न कस्यापि उत्कर्षः इत्याह– ) अपिच एकादिवाक्यान्यपि प्रकरणात् ज्योतिष्टोमस्य (शेषभूतानि) भृतिवननवाक्यमपि ( शेषभूतम् )। न च तुल्ये प्रकरणे अन्यतममुत्क्रष्टुं शक्यते ( अत्र आनन्दाश्रमीये 'तुल्यप्रकरणेन अन्यतमेन अन्यतममुत्क्रष्टुम्' इति पाठः। अस्मदीये लिखिते 'न च तुल्ये प्रकरणोत्पन्नमेव अन्यतमदुत्क्रष्टुम्' इति। तन्त्ररत्ने तु 'न च तुल्ये प्रमाणे प्रकरणे अन्यतमदुत्क्रष्टुम्' इति पाठः )। अयं चाप्यनुवाद एव ( द्वादश रात्रीः इति )। यदि अयं विधीयेत, वाक्यं भिद्येत। कथम् ? भृतिवननम् ( द्रव्यार्जनम् ) तावत् अर्थप्राप्तम्, नहि तेन विना परिक्रयः संभवति। इति तत् तावन्न विधेयम् ( अर्थसिद्धत्वात् )। द्वादश रात्रीः इत्येतदपि ( दीक्षायाः द्वादशपरिमाणम् ) नैव ( विधेयम् )। सन्त्येव हि तस्य ( दीक्षितस्य ) द्वादश रात्रयः, 'द्वादश दीक्षाः' इति वचनात्। नित्यवत् द्वादश रात्रयः ( एव न एकादशरात्रादयः ) इत्येतदपि नैव ( विधातुं शक्यम् ), एकादिवाक्यानर्थक्यभयात्। (दीक्षितशब्दोऽपि नैव स्वार्थविधानार्थः इत्याह–) दीक्षितः दीक्षा अस्य संजाता, इत्येतदपि नैव ( विधेयम् ), संजातैव हि तस्य दीक्षा आग्नावैष्णवादिभिः। किं तर्हि ( विधेयम्, तदाह– ) भृतिवननस्य उपपदस्य च संबन्धो विधीयते। ( तत्रापि उपपदद्वये सति कस्य भृतिवननेन संबन्धो विधीयते इति चिन्त्यम् )। तत्र यदि तावत् '( यत् ) भृतिवननं कुर्यात् ( तत् ) द्वादश रात्रीः' इति ( विधीयते ) ततः नित्यानित्यसंयोगः ( प्रसज्येत ), नित्यवत् भृतिवचनम्, अनित्या द्वादश रात्रयः। अथ ( अहःपर्युदासेन ) रात्रावेव भृतिवननं कस्मान्न विधीयते ? उच्यते। वाक्यं भिद्येत, 'रात्रिषु भृतिवननं कुर्यात्, तच्च द्वादशसु' इति। अथ 'यत् रात्रिषु भृतिवचनम्, तत् द्वादशसु' इति ( विधीयते ) ततो विशिष्टानुवादः ( दोषः )। यदि तु अन्यः पक्षः 'यत् भृतिवननं कुर्यात्, तत् दीक्षितः' इति, ततो न ( कश्चित् ) दोषः। विधेयं चैतत्, तद्धि ( वननम् ) दीक्षितस्य न प्राप्नोति। द्वादश रात्रीः इति चानुवादः पाक्षिकः ( कालमात्रस्य ) लक्षणा वा दीक्षाकालसमकालं ( भृतिवननं कार्यम् ) इति ( अत्र दीक्षितकालसंबन्धेन इति मुद्रितपाठः। दीक्षितसमकाले इति रत्नपाठः )। तस्मात् इयमेव अवधारणा दीक्षापरिमाणे यथाकामी इति।

**द्वादशाहस्तु लिङ्गात् स्यात्। २९ ॥**

**भाष्यम्**— द्वादशाहे एव परिमाणमुपादीयेत। कुतः ? लिङ्गात्। सामर्थ्यादित्यर्थः। किं सामर्थ्यम् ?



'द्वादश रात्रीर्दीक्षितो भृतिं वन्वीत' इति नित्यवदाम्नायते, न पाक्षिकम्। तदेव नित्यं कुर्वन्न शक्नोति अन्यत् परिमाणमुपादातुम्। तस्मात् द्वादशाहे एव परिमाणं नियम्येत। अन्यानि परिमाणानि विकृतौ भविष्यन्तीति नैषामानर्थक्यमिति।

**टुप्**-- **द्वादशाहस्तु लिङ्गात् स्यात्।** ( इदम् अधिकरणसिद्धान्तसूत्रम् इति तन्त्ररत्नम्। 'दीक्षापरिमाणे' इति सूत्रं भाष्यमनादृत्य उत्सूत्रपूर्वपक्षेण सिद्धान्तपरत्वेन व्याख्याय 'द्वादशाहस्तु' इत्येतत् सूत्रम् अधिकरणान्तरपरतया व्याचष्टे वार्तिककारः। इति भाटिप्पणी ) द्वादशाहे ज्योतिष्टोमीयदीक्षापरिमाणे याथाकाम्यं प्राप्तम्। तत्र संदेहः तथैव इह, उत नियमः। अविशेषात् याथाकामी ( यथाकामी इति रत्नपाठः ) इति प्राप्तम्। 'द्वादशाहस्तु लिङ्गात् स्यात्'। किं लिङ्गम् ? 'षट्त्रिंशदहो वा एषः, यद् द्वादशाहः' इति। न चायं विधिः अन्यस्तुतित्वात्। अपिच दीक्षावाक्ये 'द्वाभ्यां लोमावद्यति' ( 'द्वाभ्यां त्वचम्, द्वाभ्यामसृक्, द्वाभ्यां मांसम्, द्वाभ्यामस्थि, द्वाभ्यां मज्जानम्' ) इति षड् द्विकान् अनुक्रम्य द्वादशत्वं स्तौति। तस्मात् द्वादश द्वादशाहे दीक्षाः।

**वि**—'ज्योतिष्टोमे द्वादश स्युर्दीक्षा एकादयोऽथवा।, स्याद् भृतेर्वननादाद्यः, प्रत्यक्षश्रुतितोऽन्तिमः ॥' तस्मात् सर्वे पक्षा ज्योतिष्टोमे विकल्पिताः।

**भाट्ट**-- सोमे 'एका दीक्षा, तिस्रो दीक्षाः' इत्येवं बहवो दीक्षापक्षाः श्रुताः। तत्र सोमे द्वादशदीक्षापक्षः एव 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वीत' इति विहितस्य भृतिपदवाच्यदक्षिणाद्रव्यार्जनानुकूलयाच्ञारूपस्य भृतिवननस्य पक्षान्तरेष्वसंभवात् अतोऽन्ये पक्षाः विकृतिविषयाः 'एकं वृणीते' इत्यादिवदवयुत्यानुवादा वेति भाष्यकाराभिप्रायः। वार्तिककाराशयस्तु भिन्नप्रदेशस्थत्वेन 'एकं वृणीते' इतिवदर्थवादत्वायोगात् सर्वे एव विधय इति तावदविवादम्। प्रकरणानुरोधाच्च नानेकेषामुत्कर्षकल्पना। तद्वरमेकस्यैव भृतिवननवाक्यस्य पाक्षिकत्वकल्पना। द्वादशरात्रिशब्दो वा दीक्षापरिमाणमात्रपरः यावतीषु रात्रिषु दीक्षा भवति तत्परः। वस्तुतस्तु लक्षणाऽपीयं न विधौ, दीक्षितकर्तृकभृतिवननस्यैव पक्षप्राप्तस्य प्रयोगमध्ये अत्यन्ताप्राप्तस्यैव वा विधेयत्वात् द्वादशरात्रिशब्दस्यानुवादत्वोपपत्तेः। अतो नैतस्य पाक्षिकत्वकल्पनाऽपि। दीक्षापक्षाणामेव परं व्रीहियववद्विकल्पः। अस्तु वा तस्य विधेयत्वेऽपि लक्षणा, तथापि न दोष इति।

**मण्डन**— 'दीक्षामानं विकल्पतः।' ज्योतिष्टोमे।

**शंकर**– 'दीक्षाविकल्पः प्रकृतौ।'

**ज्योतिष्टोमे एकपात्रे अनेकैः सोमभक्षणे अनुज्ञाप्यैव भक्षयितव्यम् ॥**

**वचनादनुज्ञातभक्षणम्। ३।५।१४।४० ॥**

**भाष्यम्**— अथ यः एकपात्रे सोमः अनेकेन भक्ष्यते, किं तत्रानुज्ञाप्य अननुज्ञाप्य वा भक्षयितव्यम्, उतानुज्ञाप्यैवेति। लाघवादनियमे प्राप्ते, उच्यते। अनुज्ञाप्य भक्षयितव्यमिति। कस्मात् ? वचनात्। इदं वचनं भवति, 'तस्मात् सोमो नानुपहूतेन पेयः' इति। उपह्वानं चानुज्ञापनम्। प्राप्तिसूत्रमेतत्।

**वा**-- 'तस्मात्सोमो नानुपहूतेन' इत्येतस्य अर्थकथनार्थम् उत्तरविवक्षार्थं च एतत्सूत्रम्।

**सोम**-- अत्रापि प्रसङ्ग एव संगतिः।

**वि**— 'नानुज्ञापूर्वको भक्षस्तत्पूर्वो वा, ऽत्र लाघवात्। आद्यो, नानुपहूतेन पेय इत्युक्तितोऽन्तिमः ॥'

**भाट्ट**-- इदं च भक्षणम् 'नानुपहूतेन सोमः पातव्यः' इति वचनात् अनुज्ञाप्यैव। तदपि न लौकिकेन शब्देन, अपितु आम्नानवशात् 'उपहूत उपह्वयस्व' इत्यनेनैव मन्त्रेण। तत्रापि लिङ्गेन वाक्यं बाधित्वा विभज्यैव एकोऽनुज्ञापने, अपरश्च अनुज्ञायाम्। निषेधबलाच्च अनुज्ञापनानुज्ञयोर्विधिकल्पना, मन्त्रबलाच्च। तत्रापि अर्थक्रमेण पाठक्रमं बाधित्वा 'उपह्वयस्व' इति प्रथममनुज्ञाग्रहणे, 'उपहूतः' इति पश्चादनुज्ञादाने विनियोक्तव्यम्। १२. ( अत्र भाष्यस्थानां १४–१५–१६ इति त्रयाणामपि अधिकरणानामन्तर्भावः )।

**मण्डन**— 'पानं चोपह्वेन हि।'

**शंकर**— 'अनुज्ञाप्य च भक्षः स्यात्।'

**ज्योतिष्टोमे एकपात्रे बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः ॥**

**एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत्। ३।५।१३। ३६ ॥**

**भाष्यम्**— अथ यत्र एकस्मिन् पात्रे बहवो भक्षयन्ति, कस्तत्र क्रम इति ? उच्यते 'एकपात्रे०' (सूत्रम्) तस्य हि क्रमो भक्षयितुम्, यस्य हस्ते सोमः।

**वा**— एकस्मिन् पात्रे अनेको भक्षयिता साधितः। इदानीं तद्गताः क्रमादिविशेषाः प्रतिपाद्यन्ते। तत्र अध्वर्यौ प्रथमं भक्षयति (सति) न समर्पणभूयस्त्वेन प्रयोगो विक्षेप्स्यते। अन्यथा पुनः अध्वर्युणा समर्पिते पुनरपि तस्मै समर्पणात् विक्षेपः स्यात्, इति मत्वा क्रमात् अध्वर्युः पूर्वः इत्याह (सूत्रकारः)।

**होता वा मन्त्रवर्णात्। ३७ ॥**

**भाष्यम्**— होता वा पूर्वो भक्षयेत्। मन्त्रवर्णात्। मन्त्रवर्णो हि तथा 'होतुश्चित् पूर्वे हविरद्यमाशत' ('एते वदन्ति शतवत् सहस्रवदभि क्रन्दन्ति हरितेभिरासभिः। विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया' इति त्रयः पादाः पूर्वे। ऋसं. १०।९४।२) इति। तथा 'होतेव नः प्रथमः पाहि' (अध्वर्यवश्चकृवांसो मधूनि प्र वायवे भरत चारु शुक्रम्। होतेव नः प्रथमः पाह्यस्य देव मध्वो ररिमा ते मदाय ॥ ऋसं. ५।४३।३)।

**वा**— बलवति प्रमाणे विहिते दुर्बलोपन्यासः क्लिष्टो भवति इति मन्त्रवर्णं तावदुपन्यस्यति। तत्र ग्रावस्तुतिपरो मन्त्रो हौत्रकारिणां प्रथमं भक्षं दर्शयति। (मन्त्रार्थमाह—) एते वदन्ति—अभिषवे क्रियमाणे (ग्रावाणः) शब्दं कुर्वन्ति। शतवत् सहस्रवत् अभिक्रन्दन्ति— वदनमेव उत्तरेण अभिक्रन्दनेन विशेषितम्। हरितेभिः आसभिः— सोमसंपर्कात् नीलाकृतैर्मुखैः। (आस्यशब्दस्य आसन् आदेशः)। विष्ट्वी—कर्मणि। ग्रावाणः सुकृतः— शोभनकारिणः। सुकृत्यया—सुकृत्त्वेन। होतुः चित्— होतुरपि पूर्वे हविः अद्यं— होतुः यत् प्रथमं अदनीयम्। तत् आशत—भुक्तवन्तः। इति ब्रुवन् (मन्त्रः) वषट्कर्तुः प्रथमभक्षः इति दर्शयति। एवम् 'होतेव नः प्रथमः पाहि' इति। यथा होता प्रथमं पिबति इति उपमानात् प्रसिद्धिर्गम्यते।

**वचनाच्च। ३८ ॥**

**भाष्यम्**—वचनमिदं भवति 'वषट्कर्तुः प्रथमभक्षः' इति। वचनमेवेदम्। न मन्तव्यम् अनेकगुणविधानात् अविवक्षितं प्राथम्यमिति। अप्राप्तत्वात् प्राथम्यस्य नायमनुवादः, विधिरेव। समासेन च विदधतो नानेकगुणविधानं दुष्करम्।

**वा**— 'वषट्कर्तुः प्रथमभक्षः' इति विशिष्टविधानं पूर्वमेवोक्तम्। अपूर्वत्वाच्च नानेकविधिदोषः। समासश्चाधिकः। समासेन एकपदीभूतैककारकविधानात् 'तस्यतस्योपदिश्येत' (५।३।१।१) इत्येतन्नास्ति।

**कारणानुपूर्व्याच्च। ३९ ॥**

**भाष्यम्**— प्रथमं हि वषट्करणं निमित्तं होतुः। ततो होमः अध्वर्योर्निमित्तम्। निमित्तानुपूर्व्याच्च नैमित्तिकानुपूर्व्ये क्रमानुरोधः।

**वा**— यथानिमित्तं नैमित्तिकोपनिपातात् 'वषट्कृते जुहोति' इति प्रथमं होतृव्यापारो निमित्तम्, पश्चादध्वर्योर्होमः। ननु च तस्यापि अभिषवः प्रथमतरमासीत्। सत्यमासीत्, न तु तावतो निमित्तत्वम् उभाभ्यां वा, 'नहि तयोर्धर्मशास्त्रम्' (६।४।७।२५) इत्येवं सहितयोर्निमित्तत्वात्। यस्य च नाम 'होतुश्चित् पूर्वे हविरद्यमाशत' इत्येतस्मात् होतुरेव केवलस्य प्रथमं भक्षभ्रान्तिः, तस्यापि एतेन सूत्रद्वयेन वषट्कर्तृमात्रे होतृशब्दः इति प्रतिपादितं भवति।

**शा**— सिद्धे अनेकेषां भक्षणे क्रमश्चिन्त्यते (इति **संगतिः**। प्राभाकरास्तु वषट्कर्तुः प्रथमभक्षः इति वचनं न प्राथम्यविधायकम्, किन्तु भक्षमात्रविधायकमित्याहुः, तन्मतमनूद्य दूषयति—) ये तु 'वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्तुः प्रथमं भक्षणं भवति इति प्रतिपादयितुमिदमधिकरणम्, वचनोपन्यासस्तु कृत्वाचिन्तोद्घाटनार्थम्' इत्याहुः, तेषां स्वव्यवहारविरोधः। (व्यवहारमाह—) तार्तीयः क्रमः अभिधेयो विधेयश्च इति विस्रब्धं व्यवहरन्ति। अत एव 'असौ तृतीये चिन्त्यते' इत्याहुः। अत्रैवाधिकरणे क्रमचिन्ता।



वषट्काराच्च भक्षयेत् इत्यत्र वषट्कारोऽपि भक्षनिमित्तमित्युक्तं न क्रमः। स तु इहैव चिन्त्यते। स चेत् वचनमनादृत्य न्यायादेव चिन्त्यते, सोऽपि अनभिधेयः पाञ्चमिकवत् अविधेयश्च स्यात् इति सिद्धान्तहानिः, पञ्चमे चासौ चिन्त्यः स्यात्। प्रसङ्गादिह चिन्त्यते युष्माकमिव इति चेत्, तर्हि तथैव ब्रूहि। विधेयत्वादसौ तृतीये चिन्त्यते इति पाञ्चमिकात् विशेषाभिधानं प्रलापः। किञ्च यदि 'वचनात्' इति सूत्रं कृत्वाचिन्तोद्घाटनार्थम्, तर्हि तदधिकरणं समाप्य कर्तव्यम्। इदं तु 'कारणानुपूर्व्यात्' इति सूत्रात् प्रागेव कृतम्, इति न कृत्वाचिन्तोद्घाटनं युज्यते। यदि च न्यायादेव प्राथम्यं लभ्यते, ततो वचनमेवेदं न्यायानुवादमात्रम्, तत्र 'वचनात्' इति सूत्रानुपपत्तिः।

**सोम**— सूत्रे क्रमात् हस्तस्थिततया पात्रस्य संनिधानात् इति।

**वि**— 'एकपात्रे किमध्वर्युरद्यात् पूर्वमुतेतरः।, तद्धस्ते पात्रसंस्थानात् तस्य प्रथमभक्षणम् ॥, पाहि होतेव नः पूर्वमिति मन्त्रेण पूर्वता। वषट्कर्तुस्तदुक्तेश्च न्यायबाध्यं वचो नहि ॥'

**भाट्ट**— भक्षसमुच्चये चिन्तिते अधुना प्रसङ्गात् तत्क्रमो निरूप्यते। तत्रैकस्मिन् पात्रे कर्तृभेदेन भक्षभेदे 'वषट्कर्तुः प्रथमभक्षः' इति वचनात् 'होतेव नः प्रथमः पाहि' इत्यादिमन्त्रवर्णाच्च वषट्कर्तुः तन्निमित्तः प्रथमो भक्षः। न च होमकर्तुरध्वर्योर्हस्ते पात्रसत्त्वात् अर्पणप्रत्यर्पणकल्पने गौरवापत्तेः, तस्यैव न्यायेन भक्षप्राथम्यावगतेः, तदपेक्षया च वषट्कर्तुः प्राथम्यविधाने अपूर्वविधित्वापत्तेः समाख्यानिमित्तभक्षापेक्षयैव तेन प्राथम्यविधिः (विधानं) नियमविधिलाघवानुरोधेन युक्तमिति **वाच्यम्**। नियामकन्यायप्रवृत्तेः पूर्वमेव एतस्य वचनस्य प्रवृत्तत्वेन नियमविधित्वानपायात् न्यायेन संकोचानुपपत्तेः। अतो वषट्कारनिमित्तः प्रथमं भक्षः। मैत्रावरुणादिचमसेषु सवनमुखीये ऐन्द्रप्रदाने होत्रा वषट्कारात्, मित्रावरुणादिभ्यश्च प्रदाने मैत्रावरुणादिभिर्वषट्कारात्। वषट्कर्त्रनेकत्वे तु प्रदानक्रमेणैव क्रमः। वषट्कर्तृभक्षानन्तरं च होमाभिषवोभयकर्तृसत्त्वे तस्य भक्षः, तन्निमित्तभक्षस्य वाचनिकत्वात् ततो दुर्बलसमाख्याप्रमाणकः। होमाभिषवकर्तृकभक्षाभावे तु तदनन्तरं भिन्नकर्तृकसमाख्याप्रमाणक एव। समानकर्तृके तु होमाभिषवकर्तृकभक्षाभावे द्विरनुष्ठानमात्रं न क्रमाभिव्यञ्जकं किञ्चित्। तत्सत्त्वे तु पूर्वोक्तः एव क्रम इति ध्येयम्।

**मण्डन**— 'भक्षक्रमो यथाप्राप्ति।'

**शंकर**— 'वषट्कर्ताऽऽदितः पिबेत्।'

**ज्योतिष्टोमे एकपात्रे सोमभक्षे अनुज्ञापनाऽनुज्ञे वैदिकमन्त्रेणैव ॥**

**तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्। ३।५।१५।४१ ॥**

**भाष्यम्**— अथ अनुज्ञातेन भक्षयितव्यमिति स्थिते, किं लौकिकेन वचनेन अनुज्ञापयितव्यम्, उत वैदिकेनेति। अनियमात् लौकिकेन। इति प्राप्ते, उच्यते। तदुपहूत० (सूत्रम्) अनुज्ञापनलिङ्गोऽयं मन्त्रः, लिङ्गात्। अनुज्ञापने समाम्नातः सामर्थ्यात् विनियुज्यते। तत्र कृतेऽर्थे लौकिको निवर्तते।

**वा**— तत् उपह्वानं केन कर्तव्यम्? अत आह 'उपहूत उपह्वयस्व इत्यनेन' इति (सूत्रम्)। उभयोः अनुज्ञाप्यानुज्ञापकयोः व्यापारप्रदर्शनार्थं सकलोच्चारणम्। सर्वथा लौकिकेन तावत् न कर्तव्यमित्यर्थः।

**सोम**— सूत्रार्थस्तु— तत् अनुज्ञानम् 'उपहूत उपह्वयस्व' इत्यनेन मन्त्रेण अनुज्ञापयेत्। णिजर्थो न विवक्षितः अनुजानीयात्। न च सूत्रे णिजर्थाविवक्षायां प्रमाणाभावात् अनुज्ञापनमेव अत्र विषयः किं न स्यात् इति वाच्यम्। एतत्सूत्रगततच्छब्देन 'वचनादनुज्ञातं भक्षणम्' इति पूर्वसूत्रोपात्तानुज्ञानपरामर्शस्यैव वक्तव्यत्वात्, 'उपह्वानं केन कर्तव्यम्' इति वार्तिकानुसाराच्च उपह्वानापरपर्यायानुज्ञानस्यैव अत्र विषयत्वौचित्यात् इति।

**वि**— 'किमनुज्ञा लौकिकोक्त्या वेदोक्त्या वा, यथातथा। अविशेषा, दुपह्वानमन्त्रलिङ्गात्तु वैदिकी ॥' उक्तिः।

**मण्डन**— 'मन्त्रेणोपहवः कार्यः।'

**शंकर**— 'मन्त्रेण च तदिष्यते।'

* ज्योतिष्टोमे एव अंश्वदाभ्यौ विधीयेते, न तु कर्मान्तरम्। भा. २।३।९।२०. * ज्योतिष्टोमे 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽन्येन यजेत गर्तपत्यमेव हि तज्जीर्यते, प्र वा मीयते'। अत्र य एतेन इति अग्निष्टोम एवोक्तः प्रकरणात्। 'अथान्येन' इत्यन्यशब्देन सोमविकाराः सर्वे यज्ञा गृह्यन्ते अत्यग्निष्टोमादयः एकाहाः अहीनाः सत्राणि चेति। वि. ५।३।१३. * ज्योतिष्टोमे 'ऐन्द्रवायवाग्रान् ग्रहान् गृह्णाति' इत्यादिना ग्रहाग्रतागुणविधिः। रथंतराधिकरणम्। भा. २।३।१।१.

* ज्योतिष्टोमे ऐन्द्रवायवादिग्रहेषु आश्विनः तृतीयस्थाने पठितः। 'आश्विनो दशमो गृह्यते' इति शब्देन तु तस्य दशमत्वं सिध्यति तत् ग्रहणे ज्ञेयम्, तृतीयत्वं तु यागे। वि. ५।४।१. * ज्योतिष्टोमे ऐन्द्रवायवादिपात्रेषु प्रकृतपुरोडाशशकलादीनामेव निधानम्। भा. ३।८।१८।३३, * ज्योतिष्टोमे ऐन्द्रवायवग्रहे द्विर्भक्षयितव्यम् 'द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोति' इति वचनात्। ऐन्द्रवायवन्यायः। ३।५।५।१८, * ज्योतिष्टोमे ऐन्द्राग्नसोमभक्षणममन्त्रकम्। ३।२।१७।४०-४१. * ज्योतिष्टोमे ऐष्टिको निर्वापः प्रोक्षणादि च प्रातरनुवाकोत्तरं कर्तव्यं पश्चाच्च सौमिकाः प्रचरणीहोमादयः कर्तव्याः। वि. ५।१।१३, * ज्योतिष्टोमे ऐष्टिको निर्वापः सौमिकहविर्धानशकटाभ्यां भिन्ने शकटे कर्तव्यः। न तु हविर्धानशकटयोरन्यतरस्मिन्। १२।१।७.

ॐ ज्योतिष्टोमे ऐष्टिकाः प्रोक्षणादयः पूर्वमनुष्ठेयाः प्रचरणीहोमादयः सौमिकास्तु पश्चात्॥

**प्रवृत्त्या कृतकालानाम्। ५।१।१३।२५॥**

भाष्यम्-- ज्योतिष्टोमे श्रूयते प्रातरनुवाककाले, 'प्रतिप्रस्थातः सवनीयान्निर्वपस्व इति प्रेष्यति' इति सवनीयानां निर्वापकालः। अस्ति च बहिष्पवमाने स्तुते 'अग्नीदग्नीन् विहर, बर्हिस्तृणीहि, पुरोडाशानलंकुरु' इति। तत्र संदेहः किं प्रातरनुवाककाले सवनीयान्निरुप्य प्रचरणीहोमादयः सौमिकाः पदार्थाः, उत पौरोडाशिकाः प्रागलंकरणादिति। किं प्राप्तम्? अनियमः, नियमकारिणः शास्त्रस्याभावादिति। एवं प्राप्ते, ब्रूमः। प्रवृत्त्या कृतकालानाम्। ज्ञातकालानां पदार्थानां प्रवृत्त्या नियमः स्यात्। प्रयुज्यमानमेव हि पूर्वपदार्थमभिनियच्छति। स तस्य परस्तात् समाम्नातः परस्तात् कर्तव्यः। सौमिकस्य तु पदार्थस्य प्रचरणीहोमस्य वचनात् क्रमो बाधितः। अलंकरणं च बहिष्पवमानस्य परस्तात् समाम्नातम्। तस्मात्तस्य पूर्वः पदार्थो निर्वपणादीनामन्तः, तत उत्तरे सौमिकाः पदार्थाः कर्तव्या इति।

टुप्-- (अध्वर्युणा 'प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि' इति होत्रे) प्रातरनुवाकप्रैषं प्रदाय अनन्तरं 'प्रतिप्रस्थातः सवनीयान् निर्वपस्व' इति प्रैषः (प्रतिप्रस्थात्रे) दत्तः। बहिष्पवमाने स्तुते 'अग्नीदग्नीन् विहर' इति (अग्नीधे) पुनः प्रैषः। तत्र प्रैषसंबोधितो होता प्रातरनुवाके प्रवृत्तः। अध्वर्युः उपास्त्याम् (होतृसमीपस्थितौ) व्यापृतः वचनात् आ प्रातरनुवाकपरिसमाप्तेः (तेन हि मनसा प्रातरनुवाकं प्रतिगृणता होतुः समीपे आसितव्यम्। अतः) तस्य व्यापृतत्वात् प्रोक्षणादिषु (निर्वापात् पश्चात् भाविषु अलंकरणात् प्राग्भाविषु पौरोडाशिकेषु) असंभवः। तस्मिन् काले (उपास्त्या सह) एककालोपनिपातात् अन्यकर्तृकत्वे अवगते कर्तृविशेषः चिन्त्यते। किं प्रतिप्रस्थाता प्रागलंकारात् ये पदार्थाः (प्रोक्षणादयः), तेषु (कर्तृत्वेन निर्वपस्व इति प्रैषेण) विधीयते निर्वापेण तान् (पदार्थान्) लक्षयित्वा। स निर्वापः अध्वर्युकर्तृकत्वासंभवात् लक्षणावृत्तः आश्रीयमाणो यावदेव अध्वर्योः व्यापृतता तावदेव (प्रागलंकरणात्) लक्षयति। (अलंकरणं तु अग्नीत्कर्तृकम्) अलंकरणादूर्ध्वं क्षणिकत्वात् अध्वर्योः न लक्षयति। (क्षणशब्दात् अवसरपर्यायात् 'अत इनिठनौ' इति ठनि, ठस्येके क्षणिकशब्दः। अध्वर्योः अवसरवत्त्वादित्यर्थः) तस्मात् निर्वापादीनां किं प्रतिप्रस्थाता कर्ता, उत अलंकरणात् प्राक् ये पदार्थाः ऊर्ध्वं निर्वापात्, तान् अलंकरणेन (अग्नीत्कर्तृकेण) लक्षयित्वा अग्नीत् कर्ता विधीयते। (इति)। किं प्राप्तम्? लक्षणाऽविशेषात् अनियमः। प्रतिप्रस्थाता आग्नीध्रो वेति। एवं प्राप्ते, ब्रूमः। समकालौ उभौ पदार्थौ (प्रोक्षणादिः उपास्तिश्च समाख्यानात्) अध्वर्युकर्तृकौ। तत्र विरोधात् एकत्र अध्वर्युर्नियतः उपासने। प्रोक्षणादिषु 'इतरमन्यस्तेषां



यतो विशेषः स्यात्' इति (न्यायात् अध्वर्युपुरुषः एव) प्रतिप्रस्थाता स्यात् (न तु ब्रह्मपुरुषः अग्नीत्)। किञ्च निर्वापेण प्रोक्षणमुपस्थाप्यते, न अलंकरणेन। (तस्मान्निर्वाप एव प्रोक्षणादीनां लक्षकः नालंकरणम्, इति प्रतिप्रस्थातैव कर्ता नाग्नीत्)। किं प्रातरनुवाककाले सवनीयान् निरुप्य प्रचरणीहोमादयः सौमिकाः पदार्थाः कर्तव्याः, उत पौरोडाशिकाः प्रागलंकरणात् इति फलेनायं संशयः (भाष्यकारेण दर्शितः) [एतदुत्तरं एतत्सूत्रस्था टुप्टीका अस्मदीयलिखिते नास्त्येव। उत्तरं सूत्रं तत्रत्या टुप्टीका च अस्त्येव। तथापि मुद्रिते तन्त्ररत्ने च विद्यमानत्वात् एतत्सूत्रस्था उत्तरा टुप्टीका संगृह्यते]।

(तदिदम् एकदेशीयमधिकरणव्याख्यानं दूषयति-) अयुक्तमिदं व्याख्यानम्। (कुतः?) समाख्यानात् सर्वस्य (शास्त्रोपास्तेः प्रोक्षणादेश्च) अध्वर्युकर्तृकता। यथा वा 'सहावघ्नन्ति' 'सह पिंषन्ति' इति (कचित् अश्वमेधादौ बहुपशुषु, नानाबीजेषु च) एककालत्वात् (इतरमन्यः) इति प्राप्नोति। ईदृशमपि (इह वचनमेककालत्वप्रापकम्) नास्ति। नहि प्रातरनुवाकः प्रोक्षणादयश्च प्रागलंकरणात् सहानुष्ठेयाः इति वचनमस्ति। येन अध्वर्योः उपास्त्यां नियतत्वात् इतरेषां कर्ता चिन्त्यते (चिन्त्येत। अध्वर्युणैव उपास्त्युत्तरं प्रोक्षणादीनां कर्तुं शक्यत्वात्)। अभ्युपेत्य ब्रूमः। अस्तु समानकालता, तथापि प्रागलंकरणात् नैव प्रतिप्रस्थाता (स्यात्)। कथम्? पौरोडाशिकाः पदार्थाः चिरेण समाप्यन्ते, शीघ्रं प्रातरनुवाकः। तत्र येषु (प्रातरनुवाकोपास्त्या सह) समानकालता नास्ति, तेषु अविरोधात् समाख्यानात् अध्वर्युरेव कर्ता (युक्तः। किञ्च) निर्वापस्य प्रोक्षणादीन् लक्षयतः किंकृतः अवधिः? साक्षादेव हि सः (निर्वापः) प्रयोगं लक्षयति। (तत्र सर्वः प्रयोगः प्रतिप्रस्थातृकर्तृकः स्यात्। तच्चानिष्टम्)। अथ विरोधात् कांश्चिदेव लक्षयिष्यति (अन्यथा समाख्याविरोधः स्यात्) इति चेत्, न। नास्त्यस्य लक्षयतः परिमाणम् (एतावत् लक्षयति, नापरमिति)। संबन्धात् लक्षणा प्रवर्तते, स च संबन्धः सर्वेषु अविशिष्टोऽस्य। (तस्मात् न कर्तृविशेषनिरूपणार्थमिदमधिकरणम्। ततश्च भाष्यग्रन्थोऽपि-) 'किं प्रातरनुवाककाले सवनीयान् निरुप्य' इत्येवमादिः फलत्वेन (अभ्युपगम्यमानः) नोपपद्यते (फलाभिप्रायं ग्रन्थवर्णनं न संभवतीत्यर्थः। कीदृशं तर्हि संभवति, तदाह-) किं प्रथमं प्रचरणीहोमादीन् अध्वर्युः करोति (ततः प्रोक्षणादीन्), उत प्रोक्षणादीन् (पौरोडाशिकान् प्रथमं करोति पश्चात् सौमिकान् प्रचरणीहोमादीन्) इति ईदृशं संभवति (क्रमविशेषस्य) निरूपणम्। (न कर्तृविशेषनिरूपणम्)।

प्रतिप्रस्थातृ-आग्नीध्रकर्तृत्वे अविद्यमाने (अविद्यमानत्वात् इत्यर्थः) प्रयोगवचनपरिगृहीतानां पौर्वापर्यक्रम एव चिन्त्यते। (एकेषां मतमाह-) प्रातरनुवाकानन्तरकालं प्रोक्षणादीन् करोति, उत प्रचरणीहोमादीन् इत्ययं संशयः। तत्र उभयोरपि (सौमिकपौरोडाशिकयोः) अध्वर्युकर्तृकत्वात् (नियमकारिणः शास्त्रस्य अभावात्) अनियमः इति। एवं प्राप्ते, ब्रूमः। 'निर्वपस्व' इत्यनेन प्रैषो दत्तः (अध्वर्युणा)। तस्मात् प्रैषे स्वतन्त्रः कर्ता (अध्वर्युः)। प्रैषार्थे तु (निर्वापे प्रतिप्रस्थातृकर्तृकेऽपि अध्वर्योरेव-) हेतुकर्तृत्वात् द्वितीयः पदार्थः प्रोक्षणादिः बुद्धौ संनिधीयते (अतः स एव प्रथमं क्रियते। सौमिकानां तु) प्रचरणीहोमादीनां नास्ति संनिधापकः पदार्थः (इति ते तदानीं न कर्तव्याः)। ननु 'अभूदुषा रुशत्पशुः' इत्यनेन (प्रातरनुवाकान्त्येन मन्त्रेण) प्रचरणीहोमः पर्युपस्थाप्यते। (तत्काले स विहितः इति)। उच्यते। भिन्नकर्तृकावेतौ (मन्त्रहोमौ)। भिन्नकर्तृकत्वाच्च पूर्वः पदार्थः नोत्तरमभिनियच्छति। न चानयोः अङ्गाङ्गिसंबन्धः, येन इयमृक् प्रचरणीहोमस्य करणभूता स्यात् (करणत्वे च सति समानकर्तृकता स्यात्, न तु तदस्ति)। अतः 'अभूदुषा रुशत्पशुः' इत्यस्याः (ऋचः) प्रचरणीहोमस्य च कालार्थः संबन्धः। तस्मात् प्रैषः प्रातरनुवाककाले (अध्वर्युणा देयः) प्रोक्षणादयः प्रातरनुवाकादुत्तरत्र (कर्तव्याः, ततः प्रचरणीहोमादयः इति)।

एतदपि (एकेषां मतं) अयुक्तम्। (कुतः?) होतुः प्रैषं दत्त्वा अनन्तरमेव निर्वापप्रैषो दत्तः, तस्य च

( अध्वर्योः ) उपास्तिं कुर्वतः निर्वापसंस्कारः अपैति ( चिरवृत्तत्वात् ) । अतो नासौ प्रोक्षणादीन् उपस्थापयति । 'अभूदुषा' ( इति प्रातरनुवाकपरिधानीयामन्त्रः ) तु कालार्थेऽपि संबन्धे 'अस्मिन् काले प्रचरणीहोमः' इति शक्नोति अवगमयितुम् । यदि अस्मिन् ( अभूदुषाकाले ) प्रचरणीहोमादयो न क्रियेरन् ( अभूदुषा– ) कालसंबन्धः ( श्रुतः ) बाध्येत । ( तेन वचनादपि प्रचरणीहोमादयः तदानीं कर्तव्याः, न प्रोक्षणादयः इति सिद्धान्तानुपपत्तिः स्यात् ) अतः अन्यथा वर्ण्यते । पाक्षिकी अध्वर्योः उपास्तिः । ( ततोऽसौ ) यतरस्मिन् पक्षे नास्ति , तत्र विचार्यते । किम् ( निर्वापानन्तरम् ) प्रचरणीहोमादिषु ( सौमिकेषु ) प्रवर्तताम्, उत प्रोक्षणादिषु ( पौरोडाशिकेषु ) इति । तत्र ( स्थापकम् ) प्रमाणम् । ( अतो निरुप्य प्रोक्षणादयः कर्तव्याः, ततः सौमिकाः इति ) ।

**शब्दविप्रतिषेधाच्च । २६ ॥**

**भाष्यम्**—शब्दश्च विप्रतिषिध्यते । अलंकुरु इत्युक्तः प्रोक्षणादीन् प्रतिपद्येत । अस्मत्पक्षे तु अलंकुरु इत्युक्ते अलंकरणमेव प्रतिपत्स्यते । तत्रालंकरणे प्राप्तकाले प्राप्तकालवचनो लोडन्तः अनुग्रहीष्यते । तस्मादत्र प्रावृत्तिकः क्रम इति ।

**टुप्**— 'अलंकुरु इत्युक्तः प्रोक्षणादीन् प्रतिपद्येत' ( अस्य भाष्यस्य ) न 'प्रोक्षणादीन् कुर्यात्' ( इत्यर्थः ) । किं तर्हि ? अध्वर्युणा क्रियमाणान् प्रतीक्षेत इत्यर्थः । नास्ति अग्नीधः कर्तृत्वे प्रमाणम् । 'तत्र अलंकरणे ( प्राप्तकाले ) प्राप्तकालतावचनः लोडन्तः ( अलंकुरु इति शब्दः ) अनुग्रहीष्यते' अयुक्तमिदम् ( भाष्यम् । कुतः ? ) एवं हि पूर्वमुक्तम् (३।८।११।२२) प्रैषे लोट्, न प्राप्तनिर्वापे प्रतिप्रस्थाता कर्ता, अतः निर्वापः अध्वर्योः न प्रोक्षणमुपस्थापयति, भिन्नकर्तृकत्वात् । ( तथा ) प्रचरणीहोमस्यापि प्रैषेण व्यवधानात् नास्ति उपस्थापकम् । तस्मात् द्वयोरपि उपस्थापकाभावात् अनियमः इति । एवं प्राप्ते , ब्रूमः । प्रैषे स्वतन्त्रः कर्ता, प्रैषार्थे ( तु निर्वापे ) हेतुकर्ता ( अध्वर्युः ) । तस्मात् निर्वापे हेतुकर्तृत्वात् प्रोक्षणमुपतिष्ठते । इतरत्र ( सौमिकेषु ) नास्ति ( उपकालतायाम् । इति आर्थिकोऽनुवादः । कथम् ? ) 'अलंकरणस्य प्राप्तः कालः', 'तत्र च ( अग्नीधः )' इति वाक्यं भिद्येत । उच्यते । यदि असावर्थः वर्तमानकालेऽस्ति, ततः प्रैषेण संस्कृतः अनन्तरमेव अनवभ्रष्टसंस्कारः प्रैषार्थे प्रवर्तते, एवं प्रैषस्य दृष्टार्थता ( भवति ) । इतरथा प्रैषस्य आनर्थक्यम् ( अदृष्टार्थता च स्यात् ) । अतः प्रैषसामर्थ्यात् ( प्रैषस्य दृष्टार्थतासामर्थ्यात् अनभिधेयाऽपि ) प्राप्तकालता अवगम्यते । सा बाध्येत अकृतेषु प्रोक्षणादिषु । ( ततश्च आदौ प्रोक्षणादयः, ततः प्रचरणीहोमादयः इति सिद्धम् ) ।

**सोम**— पूर्वत्र अनूयाजानन्तरं सूक्तवाकाद्युपस्थितिनियमात् तेषामनूयाजानन्तरं कर्तव्यतानियमेऽपि , नेह निर्वापानन्तर्यनियमः उपस्थितिनियमाभावात् इति प्रत्यवस्थानात् **संगतिः** । प्रातरनुवाकोपास्तिः अध्वर्योः विकल्पिता । इदं चाधिकरणं प्रातरनुवाकोपास्त्यभावपक्षे , न तदुपास्तिपक्षे । 'यदाऽस्य होतुर्विजानाति अभूदुषारुशत्पशुः इति तत् प्रचरण्या जुहोति' इति विधिश्च अनुपास्तिपक्षाभिप्रायः । **सूत्रार्थस्तु**– कृतकालानां ज्ञातकालानां पदार्थानां प्रकृत्या नियमः स्यात् । प्रयुज्यमान एव पूर्वः पदार्थः उत्तरमुपस्थापयति । प्रचरणी जुहूसदृशः पात्रविशेषः , तेन 'शृणोत्वग्निः समिधा' इत्यादिमन्त्रकरणको होमः प्रचरणीहोमः । 'देवस्त्वा सविता मध्वानक्तु' इत्यभिघारणं पुरोडाशालंकरणम् ।

**वि**— 'सावनेष्वैष्टिकानां किं सौमिकेभ्यो न पूर्वता । पूर्वता वा , ऽत्र नियमो नास्ति तद्धेतुवर्जनात् ॥, प्रतिप्रस्थातृकर्तृत्वे ह्यध्वर्योरपि कर्तृता । प्रोक्षणाद्याः पुरा पश्चात् सौमिकाः स्युः प्रवृत्तितः ॥'

**भाट्ट**—सोमे सुत्यायां प्रातरनुवाकप्रैषम् 'प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि' इत्येवंविधं होत्रे दत्वा 'प्रतिप्रस्थातः सवनीयान्निर्वपस्व इति प्रैष्यति' इति प्रैषं विधाय होत्रा प्रातरनुवाके अनूच्यमाने अध्वर्योरुपास्तिर्विहिता आ प्रातरनुवाकसमाप्तेः । सा च वचनादेव वैकल्पिकी । ततः 'अथ यत्र होतुरभिजानाति अभूदुषारुशत्पशुः इति प्रचरण्यां स्रुचि चतुर्गृहीतं जुहोति' इत्यादिना प्रचरणीहोमादिकान् सौमिकान् पदार्थान् विधाय सवनीयहविः



र्विधिः । ततो बहिष्पवमानाद्यन्ते 'अग्नीदग्नीन् विहर बर्हिः स्तृणीहि पुरोडाशानलंकुरु' इति प्रैषः समाम्नातः । तत्र सवनीयहविःषु धानादिषु दार्शिकविध्यन्ते निर्वापप्रोक्षणालंकरणादिरूपे प्राप्ते निर्वापान्तस्य प्रैषविधानादपकर्षः, अलङ्करणादेश्चोत्कर्षो निर्विवाद एव । मध्यतनानां प्रोक्षणादीनां तु अलङ्करणात् प्रागेव करणम्, न तु निर्वापोत्तरम् , प्रधानाङ्गानां प्रचरणीहोमादीनां क्लृप्तकालकत्वेन तैर्व्यवधानात् । इति प्राप्ते, प्रोक्षणादीनां निर्वापरूपपूर्वपदार्थोपस्थापितानामतिक्रमे प्रमाणाभावात् निर्वापोत्तरमेव करणम् । न च सौमिकैर्व्यवधानम् , उपास्तिपक्षे तावत् प्रधानाङ्गभूतायामुपास्तौ अध्वर्युकर्तृकत्वस्य आवश्यकत्वात् अतिदेशप्राप्तनिर्वापसमानकर्तृकत्वानुरोधाच्च प्रोक्षणादौ 'इतरमन्यः' इति न्यायेन प्रतिप्रस्थातृकर्तृकत्वावगतेः , सौमिकस्य व्यवधायकत्वानुपपत्तेः । न चैवं सति 'निर्वपस्व' इति प्रैषे प्रोक्षणादिलक्षणाऽऽपत्तिरित्यादितन्त्ररत्नोक्तदूषणावकाशः, न्यायेनैव तत्प्राप्त्यङ्गीकारेण लक्षणाऽऽदौ आपादकाभावात् । उपास्त्यभावपक्षे तु यद्यपि अध्वर्युरेव अतिदेशप्राप्तप्रोक्षणादौ कर्तेति निर्वापेण भिन्नकर्तृकेण न शक्यते प्रोक्षणादिकमुपस्थापयितुम् , तथापि अध्वर्योरपि निर्वापे प्रैषद्वारा प्रयोजककर्तृत्वेन समानकर्तृकत्वोपपत्तेर्युक्तमेव निर्वापोपस्थापितत्वं प्रोक्षणादौ । न चास्मिन् पक्षे प्रधानाङ्गप्रचरणीहोमादिभिर्व्यवधानम् , तस्य 'अभूदुषा' इत्यादिप्रातरनुवाकपरिधानीयाकालकत्वेन प्रोक्षणाद्युत्तरत्वात् , प्रातरनुवाकर्चामपि बहुतरत्वेन तन्मध्ये एवैष्टिकपदार्थसमाप्त्युपपत्तेश्च ।

यत्त्वत्र तन्त्ररत्नस्वरसात् अन्यैरपि वक्ष्यमाणामैष्टिकपदार्थानां बहुत्वात् प्रचरणीहोमकालविधिः उपास्तिपक्षाभिप्रायेणेत्युक्तम् , तत् प्रचरणीहोमस्योपास्त्यभावपक्षे कालविध्यभावे 'प्रतिप्रस्थातः' इत्यादिप्रैषोत्तरभाविपाठक्रमेण क्लृप्तक्रमकाणां प्रचरणीहोमादीनां प्रधानाङ्गतया क्रमबाधे प्रमाणाभावात् प्रोक्षणादीनां सौमिकपदार्थोत्तरत्वस्य प्रतिप्रस्थातृकर्तृकत्वस्य वा आपत्तेरुपेक्षितम् । इतरथा उपास्तिपक्षेऽपि तस्या एव प्रतिप्रस्थातृकर्तृकत्वापत्त्या प्रोक्षणादौ तदनापत्तेश्च । यत्तु ऐष्टिकानां बहुत्वात् 'अभूदुषा' इत्येतदुत्तरमपि तदापत्तेः प्रचरणीहोमकालवाक्यस्य संकोच इत्युक्तम्, तत् अस्तु नाम तथा , तथापि यावन्तः एवैष्टिकाः तत्कालावधि कर्तुं शक्याः, तावतां पूर्वं करणापत्तेः, अन्येषां च तदुत्तरं प्रतिप्रस्थात्रा वा करणोपपत्तेर्वाक्यसंकोचे प्रमाणाभावः । वस्तुतस्तु सर्वे पूर्वं कर्तुं शक्या एवेत्युक्तम् ।

**मण्डन**— 'सौमिकोऽलंकृतेः पश्चात् ।' १५.

**शंकर**— 'सौमिकः प्रोक्षणाद्यनु ।' १७.

* ज्योतिष्टोमे ऐष्टिकैरेव पात्रैः सौम्यचरोः सवनीयपुरोडाशादीनां च होमः, न तु सौमिकैर्ग्रहचमसैः । **वि.** १२।१।४. * ज्योतिष्टोमे ऐष्टिकेषु अग्न्यन्वाधानं देवतापरिग्रहार्थमपि न कर्तव्यम् । **भा.** १२।१।१२।२४–२८. * ज्योतिष्टोमे ऐष्टिकेषु अग्न्यन्वाधानं सौमिकविहरणेन प्रसङ्गसिद्धं पृथङ् न कार्यम् । **वि.** १२।१।१०. * ज्योतिष्टोमे ऐष्टिकेषु अन्वाहार्यदक्षिणा नास्ति । आनतिस्तु सोमदक्षिणयैव सिद्धा । सौमिकदक्षिणान्यायः । **भा.** १२।१।१६।२३. * ज्योतिष्टोमे ऐष्टिकेषु इडाऽऽदिभक्षाः ऋत्विजां सन्त्येव प्रतिपत्त्यर्थत्वात् । **वि.** १२।१।१७, * ज्योतिष्टोमे ऐष्टिकेषु इडाऽऽदिभक्षा यजमानस्यापि । १२।१।१५. * ज्योतिष्टोमे ऐष्टिकेषु जागरणं दीक्षाजागरणस्य रक्षाऽर्थत्वे अदृष्टार्थत्वेऽपि वा पृथक् कर्तव्यम् । तच्च रक्षाऽर्थमदृष्टार्थं वा । प्रकृतौ औपवसथी रात्रिः जागरणनिमित्तम् । **शा.** १२।१।८. * ज्योतिष्टोमे ऐष्टिकेषु दार्शिकमारण्यभोजनं चोदकप्राप्तमपि न कर्तव्यम् । सौमिकेन पयोव्रतादिना प्रसङ्गसिद्धत्वात् । **भा.** १२।१।१४।३०, * ज्योतिष्टोमे ऐष्टिकेषु दार्शिकः ऐडाऽऽदिःशेषभक्षः चोदकप्राप्तः कर्तव्यः एव संस्कारार्थत्वात् । १२।१।१५।३१. * ज्योतिष्टोमे ऐष्टिकेषु पत्नीसंनहनं सौमिकसंनहनेन प्रसङ्गसिद्धं पृथङ् न कार्यम् । **वि.** १२।१।१३. * ज्योतिष्टोमे ऐष्टिकेषु परिक्रयः अन्वाहार्यः चोदकप्राप्तो न कर्तव्यः , सौमिकेन परिक्रयेण प्रसङ्गसिद्धत्वात् । **भा.** १२।१।१६।३२. * ज्योतिष्टोमे ऐष्टिकेषु व्रतोपायनं सत्यवचन–ब्रह्मचर्यादिसंकल्परूपं सौमिकव्रतोपायनेन प्रसङ्गसिद्धं पृथङ् न कार्यम् । **वि.** १२।१।११, * ज्योतिष्टोमे ऐष्टिकेषु हविःसादनार्थं महावेदिकरणोत्तरम् ऐष्टिकी वेदिः पृथङ् न कार्या । आसादनं

सौमिक्यामेव । ऐष्टिकवेद्याः सौमिक्या महावेद्या प्रचारार्थया प्रसङ्गसिद्धिः । १२।१।३, * ज्योतिष्टोमे ऐष्टिकेषु होतृवरणं सौमिकवरणात् पृथक् कर्तव्यमदृष्टार्थत्वात् । १२।१।१८.

**ज्योतिष्टोमे औत्तरवेदिकप्रणयनोत्तरं शालामुखीयः गार्हपत्यः, प्राजहितश्च ॥**

शालामुखीयोऽप्याहवनीय एव । आहवनीयात् इत्यपादानस्य व्यवहारात् । वरुणप्रघासेष्विव वेदिभेदेन विभागमात्रम्। इति प्राप्ते, 'आहवनीयापादानकोत्तरवेद्यधिकरणकप्रणयनेन आहवनीयं कुर्यात्' इति विधौ प्रणयनाव्यवहितपूर्वक्षणे अपादानस्याहवनीयत्वानपायेन तथा व्यवहारसंभवेऽपि तज्जनकत्वेन तदुत्तरक्षणमारभ्य तस्य गार्हपत्यत्वमेव । अत एव 'संमार्ष्टि गार्हपत्यौ' इति प्राजहितशालामुखीययोः गार्हपत्यत्वेनैव व्यपदेशः श्रुत्यन्तरे उपपन्नः । 'एषोऽत ऊर्ध्वं गार्हपत्यो भवति' इति स्मृतिश्च । यत्तु भाष्ये वर्णकान्तरम्, तत् अस्यैवाधिकरणस्य पुनरपि वाक्यान्तरेण वर्णनं सिद्धान्तसूत्रे पाठभेदप्रदर्शनैकफलकम् । **संकर्ष.** ३।२।१२.

* ज्योतिष्टोमे कण्डूयनमन्त्रः 'कृषिषु स्यामकृषे' इति ।('कृषिं सुसस्यामुत्कृषे' इति पाठ एव आवश्यकः, आनन्दाश्रमीयः पाठस्तु साक्षाद्वा परंपरया वा मूलग्रन्थवाचनप्रमादात् संपन्नः, मूलग्रन्थेऽपि च लिखिते कस्यचिदर्धविदुषः 'कृषिसु इति रूपमशुद्धम्, षत्वं कस्मान्न' इति शङ्का । सस्याम् इति तु सत्यशब्दस्य नपुंसकत्वात् अशुद्धमेव इति तस्य निश्चितिः, इति तेन पाठान्तरमारचितम् ) यदा एकस्मिन्नङ्गे युगपत् कण्डूरुत्पद्यते तदाऽपि सकृदेव प्रयोज्यः, नावृत्तिः । भा. ११।४।१६। ४८–४९. * ज्योतिष्टोमे कर्मारम्भे यजमानेन स्वीयं धनं त्रेधा व्यवस्थाप्यते 'इदं मे भुक्त्यर्थम्, इदं मे यज्ञार्थम्, इदं मे दक्षिणाऽर्थम्' इति । अयं च विभागो विश्वजिति अतिदिश्यते । वि. ६।७।७, * ज्योतिष्टोमे काम्यं शुक्रादिकं गृहीत्वा 'हस्ते धारयेयुस्तम्, यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्' इति । १०।५।२१. * ज्योतिष्टोमे 'कृष्णविषाणया कण्डूयति' 'नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति'। अत्र कण्डूयनं प्रयोजकम्, प्रासनं तु प्रतिपत्तिः । प्रासनाधिकरणम् । भा. ४।२।७।१९, * ज्योतिष्टोमे क्रयामिषवादयो धर्माः सोमे एव कर्तव्याः, न फलचमसे । सोमधर्मासामानविध्याधिकरणम् । ३।६।१६।४१–४७, * ज्योतिष्टोमे 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति' 'दण्डी प्रैषानन्वाह' अत्र मैत्रावरुणेन दण्डधारणम् अर्थकर्म, न प्रतिपत्तिः । दण्डदानन्यायः । ४।२।६।१६–१९.

**ज्योतिष्टोमे 'गायत्रछन्दसः' इत्यादिपदघटितमन्त्रो नानाछन्दस्के ऐन्द्रप्रदाने सोमे एव, नान्यत्र ।** ( कृत्वाचिन्ता । अत्र केवलो विस्तरग्रन्थ एवोदाहर्तव्यः )। 'ऐन्द्रदानेऽपि गायत्रमात्रयुक्तेऽथवेतरैः। छन्दोभिरपि युक्ते स्या, दाद्यो मन्त्रे तथोक्तितः ॥, द्वयोः समो बहुव्रीहिरेकच्छन्दास्तु न क्वचित् । नानाछन्दस्यैन्द्र एव कृत्वाचिन्तेयमीरिता ॥ सवनार्थेन्द्रपीतोक्तिरित्युद्घाटनमीरितम् । तेन सर्वप्रदानेषु ( नानाछन्दस्केषु ) मन्त्रपाठो यथा स्थितः ॥' वि. ३।२।१९.

**ज्योतिष्टोमे गार्हपत्यकर्माणि शालामुखीये एव ॥**

यानि च गार्हपत्यकार्याणि 'द्वाभ्यां गार्हपत्ये जुहोति' इत्यादिसौमिकाङ्गानि, यानि चैष्टिकानि पत्नीसंयाजादीनि, तानि सर्वाण्यपि विकल्पेनोभयत्र क्रियेरन्नविशेषात् । इति प्राप्ते, 'प्राञ्चमग्निं प्रणयन्ति' इत्यादिना 'तर्हि तस्य पशुश्रपणं हरेत्तेनैवैनं भागिनं करोति' इत्यन्तेन प्राजहितस्य पशुश्रपणैककार्यकत्वश्रवणात्तदितराणि शालामुखीये एव भवन्ति । **संकर्ष.** ३।२।१३.

* ज्योतिष्टोमे 'ग्रहं संमार्ष्टि' इत्येकत्वमविवक्षितम् । तेन सर्वे ग्रहाः संमार्जनीयाः । ग्रहाधिकरणम् । भा. ३।१।७।१३–१५, * ज्योतिष्टोमे ग्रहाणाम् ऐन्द्रवायवाग्रत्वे विहिते ऐन्द्रवायवस्य स्वस्थाने ग्रहणम्, न तु उपांशोः पूर्वम् । १०।५।१७।६२–६४. * ज्योतिष्टोमे ग्रहाग्रतासु ग्रहणापकर्षे सादनस्याप्यपकर्षः। वि. १०।५।२१, * ज्योतिष्टोमे ग्रहपात्रनिष्ठस्य सोमस्य पयःप्रभृतिभिर्मिश्रणम् 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनम्, धानाभिर्हारियोजनम्, हिरण्येन शुक्रम्, आज्येन पात्नीवतम्' इति विहितम् । अत्र पयःप्रभृतीनां संस्कारकत्वात् क्रयादयः



सोमधर्माः न कर्तव्याः, किन्तु प्रणीताऽऽदिधर्माः । ९।४।१३. * ज्योतिष्टोमे ग्रावस्तुत्सहिताः सर्वे हारियोजने भक्षयितारः । भा. ३।५।९।२७–३०. * ज्योतिष्टोमे 'घृतं देवानाम्' इत्यादि श्रुतम् 'नवनीतेनाभ्यङ्क्ते' इत्यस्य विधेरर्थवादः । वि. ३।४।७. * ज्योतिष्टोमे चमसानां न दशापवित्रेण संमार्गः । चमसाधिकरणम् । दशापवित्रं नाम खण्डपटः कश्चित् । स च दशाभागसहित इति शब्दो वक्ति । लोके न तादृङ्नियमः । भा. ३।१।८।१६–१७,* ज्योतिष्टोमे चमसाध्वर्यवः ऋत्विग्भ्यो यजमानपुरुषेभ्यश्चान्ये । ३।७।१०।२५. * ज्योतिष्टोमे चमसाध्वर्यवो दश वरीतव्याः । चमसाध्वर्युदशत्वन्यायः । वि. ३।७।१२. * ज्योतिष्टोमे चमसाध्वर्यवो बहवो वरीतव्याः । चमसाध्वर्युबहुत्वन्यायः। भा. ३।७।११।२६, * ज्योतिष्टोमे चमसिनां समाख्याभक्षोऽस्ति। ३।५।७।२२.

**ज्योतिष्टोमे चमसिनां सोमशेषभक्षः ॥**

**चमसेषु समाख्यानात्, संयोगस्य तन्निमित्तत्वात् । ३।५।७।२२ ॥**

**भाष्यम्—** ज्योतिष्टोमे एव श्रूयते 'प्रैतु होतुश्चमसः, प्र ब्रह्मणः, प्रोद्गातॄणाम्, प्र यजमानस्य, प्र यन्तु सदस्यानाम्' इति । तत्र संदेहः किं चमसिनामस्ति भक्षः, नेति ! किं प्राप्तम् ? नेति ब्रूमः । भक्षो नातिप्रसज्यते इत्युक्तम् । **एवं प्राप्ते, ब्रूमः** । चमसेषु अस्ति भक्ष इति । कुतः ? समाख्यानात् । होतुश्चमसो ब्रह्मणश्चमस उद्गातुश्चमस इति समाख्यया निर्दिश्यते । होता यत्र चमति चमिष्यति अचमीद्वा, स होतुश्चमसः । यद्यत्र होता न चमेत् न होतुश्चमसो भवेत् । तस्माच्चमतीति । आह । का अस्य लिङ्गस्य प्राप्तिरिति । सामर्थ्यमिति ब्रूमः । होतुश्चमसेन प्रैतव्यम् । यदि चात्र होता न चमेत्, न शक्यं भवेत् होतुश्चमसेन प्रैतुम् । न च अन्यत् होता ओदनादि चमिष्यति । सोमचमस इति हि तं समाचक्षते । अपिच न तद्धोतुर्द्रव्यम्, यजमानस्य तत् द्रव्यम्, होतुस्तत्र चमनं कर्तव्यम् । सोमे च भक्ष्यमाणे तेन होमोऽवकल्पते । पवित्रं हि सोमः, न तस्मिन् भक्षिते पात्रं व्यापद्यते । तत्र चमसेन शक्यते होतुम् । वचनप्रामाण्यात् उच्छिष्टेन होष्यतीति चेत् । नैतदेवम् । असति अवकाशे वचनं बाधकं भवति । अस्ति चावकाशः सोमभक्षणम् । तस्माच्चमसिभिर्भक्षयितव्यः सोम इति । अथ तक्षणादीनि आश्रीयेरन् । तथा संबन्धापह्नवात् अतच्चमसतैव स्यात्, द्रव्यान्तरं स्यात् । तस्माच्च अब्राह्मणस्य सोमं प्रतिषेधति । 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमम्' इति भक्षनिवृत्तिं दर्शयति । सैषा भक्षाशङ्का एवं सति उपपद्यते, यदि चमसिनोऽस्ति भक्षः । तस्मादस्तीति मन्यामहे ।

**वा—**गृह्णीम एतत् यथोपदेशमिति । स तु समाख्याऽऽदिभेदभिन्न उपदेशः अनुसर्तव्यः, न तु श्रुतविशेषमात्रनिष्ठः । तत्र चमसेषु तावत् यद्यपि ब्राह्मणगतः प्रत्यक्षोपदेशो नोपलभ्यते, तथापि प्रैषगतया समाख्यया अनुमीयते । होतृचमसत्वादिविशिष्टं हि द्रव्यानयनप्रेषणं न कथञ्चिदुपपद्यते, यदि तेषु होत्रादयः सोमं न चमन्ति । कथम् ? चमस इति अदनार्थस्य चमेः औणादिके अधिकरणसाधने असन्प्रत्यये कृते प्रैषवेलायां भूतभविष्यद्वर्तमानानां क्वचित् संबन्धे अपेक्ष्यमाणे भूतवर्तमानयोरदर्शनात् भविष्यत्त्वमनुमीयते । नहि अन्यथा 'होतुश्चमसः प्रैतु' इत्येतस्य अनुष्ठानं शक्यते । तस्मात् चमितव्यं होत्रादिभिः । सोमशेषवन्तः चमसाः प्रेषिताः इति तस्यैव अपेक्षितप्रतिपत्तिविशेषस्य प्रत्यासत्तेः भक्ष्यत्वं गम्यते । सशेषः चमसो हूयते 'अल्पं जुहोति' इति वचनात् । न च अन्यत् ओदनादिद्रव्यं प्रतीयते, यस्य चमनात् चमसत्वमुपपद्यते । न च तच्चमनस्य कर्माङ्गभावः स्यात्, तत्र प्रकरणं बाध्येत, प्रैषोऽपि च उत्कृष्येत, सोमचमससमाख्या च बाध्येत । यदि च ओदनादि भक्ष्येत, ततः उच्छिष्टेन पात्रेण पुनर्होमो न क्रियेत । शुद्ध्यर्थं तत्र तक्षणाद्याश्रयणे, यस्य होतृचमसत्वादि अवधारितम्, तस्य विनाशात् द्रव्यान्तरं तत्समाख्यं न भवति, इति समाख्यातद्रव्यसाधनकहोमविधानबाधः स्यात् । एतेन चमसान्तरोपादानं प्रत्युक्तम् । तदुत्पादने च श्रुतचमससंख्याऽतिक्रमः स्यात् । न च वचनसामर्थ्यात् उच्छिष्टेन होतुं शक्यम्, वचनस्य अन्तरेणापि

आचारभङ्गं सोमभक्षे सावकाशत्वात् । सोमभक्षेऽपि सर्वमेतत् तुल्यमिति चेत्, नैतदेवम् 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुतेः । तस्मात् चमसिभिर्भक्षयितव्यः सोमः इति । भाष्यमपि अनेनैव क्रमेण नेतव्यं न यथालिखितम् । उपपत्त्यन्तराणाम् उपपत्त्यन्तरव्यवधानेन क्लिष्टत्वात् । तस्माच्च अब्राह्मणस्य सोमभक्षणं प्रतिषेधति । यदि च 'प्र यजमानस्य' इति समाख्यया न सोमभक्षः प्राप्यते, ततः फलचमसविधौ 'स यदि सोमं विभक्षयिषेत्' इति 'न सोमम्' इति च प्रतिषेधसंकीर्तनं नावकल्पेत । तस्मात् अस्ति चमसिनां सोमभक्ष इति ।

शा–सोमयोः भाट्टे च इदमधिकरणं पूर्वाधिकरणे एव अन्तर्भावितम् ।

वि—'किं प्रैतु होतुश्चमस इत्यभक्षोऽथ भक्षणम् ।, अभक्षोऽनुक्तितो, होतुश्चमसेत्याख्ययाऽस्तु तत् ॥'

मण्डन—'समाख्या कल्पयेद् भक्षम् ।'

शंकर—'स समाख्यानिमित्तकः ।'

* ज्योतिष्टोमे तपः 'द्व्यहं नाश्नाति त्र्यहं नाश्नाति' इति याजमानमेव । वचनात्तु क्व चित् ऋत्विजामपि । भा. ३।८।३।९–१०, * ज्योतिष्टोमे तार्तीयसवनिकपुरोडाशादिषु हविष्कृदाह्वानं न कर्तव्यम् । १२।२।४। १२–१३, * ज्योतिष्टोमे 'तीर्थे स्नाति' इत्युक्तं तीर्थे स्नानम्, क्रतुयुक्तपुरुषधर्मत्वात् ज्योतिष्टोमप्रकरणे एव निविशते । ३।४।५।१४–१६.

ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् । ४।४।१२।३९ ॥

तुल्यानि अविशिष्टम् इति पदच्छेदः । ज्योतिष्टोमे दीक्षणीयाप्रायणीयाऽऽदयो ऐष्टिकाः पाशुकाश्च यागाः सुत्यायां सोमयागाश्च भवन्ति । तत्र किं सर्वे यागाः प्रधानम्, सोमयाग एव वा प्रधानम् इतरदङ्गमिति विचारे पूर्वपक्षयति । ज्योतिष्टोमे सर्वाणि तुल्यानि प्रधानानि । हि यस्मात् प्रधानत्वे यत् कारणं फलवत्त्वम्, तत् सर्वेषां यागानामविशिष्टं समानं यागत्वात् । तस्मात् सर्वे यागाः प्रधानम् । इति पूर्वः पक्षः ।

**गुणानां तूत्पत्तिवाक्येन संबन्धात् कारणश्रुतिस्तस्मात् सोमः प्रधानं स्यात् । ४० ॥**

पूर्वपक्षं तुशब्देन निरस्यन् सिद्धान्तमाह । उत्पद्यते इत्युत्पत्तिः फलम् उत्पत्तिवाक्यम् । 'स्वर्गकामो यजेत' इति फलवाक्यम् । गुणाः त्रिवृत्पञ्चदशसप्तदशैकविंशरूपाः स्तोमाः ज्योतिःशब्दबोध्याः । गुणानाम् उत्पत्तिवाक्येन संबन्धस्य विद्यमानत्वात् कारणश्रुतिः पूर्वपक्षोक्तकारणस्य फलसंबन्धस्य बोधिका श्रुतिः संभवति । ज्योतिष्टोमस्य फलेन संबन्धात् ज्योतीरूपाणां स्तोमशब्दितानां गुणानां फलेन संबन्धः । स्तोमाश्च सोमार्थाः । तस्मात् ज्योतिष्टोमे सोमः प्रधानं स्यात् । सोमयागा एव प्रधानं दीक्षणीयाऽऽदयो यागास्तु अङ्गम् ।

**तथा चान्यार्थदर्शनम् । ४१ ॥**

सिद्धान्ते हेत्वन्तरमाह । 'शिरो वा एतद्यज्ञस्य यद्दीक्षणीया' इत्येवमादेः अन्यार्थस्य लिङ्गस्य दर्शनं भवति । एवं 'चतुर्विंशतिमानं हिरण्यं दीक्षणीयायां दद्यात्' 'प्रायणीयायां द्वे चतुर्विंशतिमाने' इति च ज्योतिष्टोमदक्षिणायाः सकाशात् भिन्ना दक्षिणा दृश्यते, तदपि लिङ्गं भवति । तेन दीक्षणीयाऽऽदीनामङ्गत्वं सिध्यति न प्रधानत्वम् । के.

*** ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ।**

'ज्योतींषि वा एतानि य एतस्य स्तोमाः' इत्यर्थवादे त्रिवृदादिस्तोमेषु ज्योतिष्ट्वव्यपदेशात् 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति च विधौ सोमयागस्य त्रिवृदादिस्तोमयोगावगमात् प्रसिद्धार्थेन नाम्ना यज्यर्थो विशेष्यते इति । सु. पृ. ७२४.